# उपनिषद्भाष्यम्

## खण्डः १



सं. एस. सुब्रह्मण्यशास्त्री




श्रीशङ्करभगवत्पादाचार्यविरचितम्

# उपनिषद्भाष्यम्

**खण्डः १**

**(आदितः ८ उपनिषदाम्)**

समग्रभाष्यस्य

**श्रीमदानन्दगिर्याचार्यकृतटीकया**

**कठ-माण्डूक्य-तैत्तिरीयभाष्याणां प्रसिद्धाचार्यान्तरटीकाभिः**

**सटीकतैत्तिरीयवार्तिकेन च**

**समलङ्कृतम्**

श्रीदक्षिणामूर्तिपीठाधीश्वरमहामण्डलेश्वर-

**श्रीमन्महेशानन्दगिरिमहाराजानां**

निदेशेन

पण्डितराजशास्त्ररत्नाकरादिपदभाजा

**श्री एस्. सुब्रह्मण्यशास्त्रिणा**

महेश-अनुसन्धान-संस्थान-निदेशकेन

संशोध्य पाठभेदटिप्पण्यादिभिः

सम्पादितम्

**महेश-अनुसन्धान-संस्थानम्**

**(श्रीदक्षिणामूर्ति मठ प्रकाशन)**

*Advaita Grantha Ratna Manjusha Ratna 21—*



Shri Shankarabhagavatpada's

# UPANIṢADBHĀṢYAM

**VOLUME-1**

(For the first 8 Upaniṣads)

With the commentaries of

**Shri Anandagiriacharya for all, and in addition commentaries for Katha, Mandukya and Taittiriya by great acharyas and Taittiriyavartika of Shri Sureshvaracharya with Commentary**

Edited with notes etc.

By

Panditaraja, Shastraratnakara etc.

**S. Subrahmanyashastri M.A.**

Director

Mahesh Research Institute of Indian Philosophy,
under directions from

**Shri Swami Maheshanandagiri Maharaja**

Mahamandaleshwara

Pontiff of Shri Dakshinamurti Peetha

**Mahesh Research Institute**

**(SHRI DAKSHINAMURTI MATH PRAKASHANA)**

Published by
SHRI DAKSHINAMURTI MATHA PRAKASHAN
D, 49/9 Mishra Pokhara, Varanasi (INDIA)
Ph : 0542-2410654
On behalf of
Mahesh Research Institute



Copies & Information may be had of
Mahesh Research Institute
Shri Dakshinamurti Matha
D, 49/9 Mishra Pokhara, Varanasi-221010 (INDIA)



भगवत्पादाब्दः १२१६
वैक्रमाब्दः २०६१
खैष्टाब्दः २००४




Second Edition
Edited by
Dr. Mani Dravid



Price : 500.00



Printed by
SHREEJEE Printers
Nati Imli, Varanasi ● PH # 0542-2201104

| उपनिषदः | : | टीकाकृतः |
| --- | --- | --- |
| ईशावास्योपनिषत् | १ | आनन्दगिरिः |
| केनोपनिषत् ( पदवाक्यभाष्ययुता ) | २ | आनन्दगिरिः |
| काठकोपनिषत् | ३ | आनन्दगिरिः, गोपालयतीन्द्रश्च |
| मुण्डकोपनिषत् | ४ | आनन्दगिरिः |
| प्रश्नोपनिषत् | ५ | आनन्दगिरिः |
| माण्डूक्योपनिषत् | ६ | अनुभूतिस्वरूपाचार्यः, आनन्दगिरिश्च |
| ( गौडपादकारिकायुता ) | | गौडपादाचार्यः |
| तैत्तिरीयोपनिषत् | ७ | आनन्दगिरिः, अच्युतकृष्णानन्दतीर्थश्च |
| ( सटीकवार्तिकयुता ) | | सुरेश्वराचार्यः, वार्तिकटीकाकारः आनन्दगिरिः |
| ऐतरेयोपनिषत् | ८ | आनन्दगिरिः |

# निदेशिका


| | |
|---|---|
| शुभाशीः | ७ |
| Preface | 9 |
| द्वितीयसंस्करणसम्बन्धि निवेदनम् | ११ |
| उपोद्घातः | १-११ |
| विषयसूचिका | १३-२३ |
| उपनिषद्भाष्यम् | १-६७५ |
| परिशिष्टानि | ६७९-७४५ |
| मन्त्रानुक्रमणिका | ६७९-६८२ |
| माण्डूक्यकारिकासूची | ६८३-६८५ |
| तैत्तिरीयवार्तिकश्लोकसूचिका | ६८६-६९९ |
| उपनिषच्छब्दवाक्यकोषः | ७००-७२७ |
| आकरग्रन्थनिदेशिका | ७२८-७३५ |

श्रीदक्षिणामूर्त्तिर्विजयतेतमाम्

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारीण-शमदमोपरतितितिक्षासमाधानश्रद्धाचरणनिष्ठ-
ब्रह्मविद्वरिष्ठ-यतिचक्रवर्तित्वाद्यनाद्यनवच्छिन्नगुरुपरम्पराप्राप्तब्रह्मात्मैक्यज्ञानवैभवानुभवप्रद्योतितान्तः-
करण-वेदान्तमार्गप्रवर्तक-श्रीकाशीक्षेत्रस्थितश्रीकेवलाद्वैतव्याख्यानसिंहासन-दक्षिणामूर्तिपीठाधीश्वर-
शङ्करधर्मसंस्थापनाचार्य-श्रीशङ्करभगवत्पादारविन्दोपासक-तोटकाचार्यानन्दगिरि-परम्पराप्राप्त-
महामण्डलेश्वरस्थानवैभव-सर्वतन्त्रस्वतन्त्र-अनन्तश्रीविभूषित-नृसिंहगिरिस्वामि-करकमल-
सञ्जात-श्रीदक्षिणामूर्ति-निरञ्जनपीठाचार्य-महेशानन्दगिरिमहामण्डलेश्वरस्वामिभिः
क्रियन्ते नारायणस्मृतयः

वेदान्तमञ्जूषायाः एकविंशं रत्नं प्रकाश्यत इति ज्ञात्वा हर्षिता वयम्। घोरेऽस्मिन् कलौ श्रीशङ्करभगवत्पूज्यपाद-प्रदर्शितं मार्गं विहाय नान्यमुपायं शान्तिकरमुत्पश्यामः। मुमुक्षूणां कृते तु पूर्वमपि नासीद्ब्रह्मज्ञानादृते किमप्युपायान्तरम्। वैदिककर्मणा तु आपेक्षिकी शान्तिरासीदपि। अधुना तु द्रव्यादेरनुपलभ्यता, वर्णाश्रमादिसाङ्कर्यादधिकारिणोऽप्यनुपलभ्यता जरीजागर्ति। तस्माद्भाष्यकारप्रदर्शितं विधुराधिकरणमनुसृत्य पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिरन्तःकरणस्यापि संशुद्धिः सम्भवति। तदनुकूलस्तोत्रदेवमन्दिरादीनामपि सौलभ्यं कृतं शङ्करभगवत्पूज्यपादैः, तदनुसारिभिश्च दशनामसम्प्रदायाचार्यैस्तत्र तत्र तदा तदा। एवं बहिरङ्गं संसाध्य निर्गतनिखिलकल्मषान्तःकरणैस्तु बाह्याभ्यन्तरिकालिङ्गसलिङ्गपारिव्राज्यं गृहीत्वा सभाष्यं सवार्तिकं प्रस्थानत्रयं श्रोतव्यम्। संशयविप्रतिपत्तिनिवारणाय प्रकरणग्रन्थानां लघुचन्द्रिकापर्यन्तानां विचारणं विधेयम्। कृते चित्तैकाग्र्येण श्रवण-मनने पर्याप्ते ब्रह्मवेदने। प्रारब्धदोषतो नानुभूयते जीवन्मुक्तिश्चेज्जीवन्मुक्तिमिच्छता प्रबलदोषनिवृत्त्यै संयमाभ्यासादिकमेकान्तसेवनादिकं च कार्यम्। अल्पदोषनिवृत्त्यै तु वेदान्तपाठनं शिष्यबोधायेति। तत्र च शिष्यसन्देहनिवृत्तियत्नजनितेनापूर्वेण जीवन्मुक्तेर्लाभो भविता। अयमेव राजमार्गः श्रेयस्करः शान्तिप्राप्त्यै।

किन्तु ग्रन्थानामभावे कथं पठनं पाठनं वा सिद्ध्येदिति भृशं चिन्तयन्तः खिन्ना वयं भगवन्तं भूतभावनं शङ्करं प्रार्थितवन्तः। भिक्षुभिरस्माभिर्द्रव्यानर्हैर्न तादृशी चिन्ता कार्येति श्रीदक्षिणामूर्तिना विष्णुदासमेहताख्यः कश्चिच्छ्रेष्ठिप्रवरः प्रेरितः। तन्मुखात् सर्वप्रकाशनं स्वकीयद्रव्येण करिष्यामीति प्रतिज्ञां श्रुत्वा निश्चिन्ता अभूम। पारिव्राज्यधर्ममनुसरद्भिर्नैकत्र स्थातव्यमस्माभिः। सम्पादनं तु नैवं भवेदिति कृत्वा पण्डितराजादि-बिरुदान्विता एकविंशतिविक्रमशताब्दे वेदान्तज्ञाने मार्तण्डवदुद्भासिताः शास्त्रिप्रवराः श्रीसुब्रह्मण्यशास्त्रिणोऽस्य सम्पादने संयोजिताः। अल्पीयसैव कालेन महता श्रमेण सत्यपि वार्धक्ये श्रीशङ्करानुरागमात्रेण कृतसङ्कल्पाः एकविंशं रत्नं प्रकटयन्तीति प्रमोदान्वितास्सञ्जाता वयमपि। प्रार्थये शङ्करं यच्छास्त्रिसुब्रह्मण्यमहोदयाः जीवन्मुक्तिसुखं सम्प्राप्नुयुरिति।

विशेषोऽयमस्मिन् सम्पुटे यच्छ्रीमच्छङ्करभगवत्पादैर्लोकानुग्रहाय भाषितमीशाद्युपनिषदष्टकस्य भाष्यं श्रीमदानन्दगिर्याचार्यकृतटीकोज्ज्वलितं श्रद्धावतां पठितॄणामानन्दावहं सकृदनुसन्धानेनापि सकलदुरितापनोदनपटु क्रमेण च जीवन्मुक्तिप्रदमत्र मुद्रितं विराजते। अयमन्यो विशेषो यदागमशास्त्रस्य श्रीमदनुभूतिस्वरूपाचार्यविरचिताऽप्रकाशितपूर्वा टीका, काठकभाष्यस्य श्रीमद्गोपालेन्द्रविरचिता टीका, तैत्तिरीयभाष्यस्य श्रीमदच्युतकृष्णानन्दविरचिता वनमाला, सटीकं श्रीमत्सुरेश्वराचार्यविरचितं वार्तिकं चात्र निवेशितमस्ति, येनाध्येतारः विना पुस्तकसम्पादनक्लेशं तत्तद्ग्रन्थगतान् विशेषानवगाह्य कृतार्था भवेयुरिति।

ग्रन्थस्यास्य पाठकाः श्रीशङ्करभगवत्पादप्रसादानुगृहीता ब्रह्मलोकं गत्वा क्रममुक्तिभाजना भवेयुः। एषां समेषां ग्रन्थानां आङ्ग्लहिन्दीभाषानुवादोऽपि प्रकाशयिष्यते सत्वरमेव। तेनासंस्कृतज्ञा अपि श्रवणमननादिसिद्धिं कृत्वा प्राप्स्यन्ति शान्तिं ज्ञानं च।

ग्रन्थप्रकाशने शारदानन्दशास्त्रिमहोदया अस्मदन्तेवासिनो बहुश्रमं कृतवन्तः। तत्सर्वं 'भक्तिं मयि परां कृत्वा मामेवैष्यती'ति शास्त्रेण ब्रह्मानुभूतेरुपायत्वेन तैरनुष्ठितोऽपि पाठकानधमर्णीकरोति।

उमारमणं रमारमणं च प्रार्थये यत्समेषां बुद्धौ स्फुरतु ब्रह्मात्मैक्यम्। येषां गृहे च शाङ्करवचनरूपा ग्रन्थाः स्थिता मन्ये तेषां गृहाद्भूतग्रहपिशाचगदाकालमृत्युशान्त्यभावादीनि च निर्गच्छेयुरिति।

वैक्रमाब्दे षट्त्रिंशदुत्तरद्विसहस्रतमे व्यासपूर्णिमायाम्। —नारायणस्मृतयः

# PREFACE

This volume contains the first eight Upaniṣads with Śrī Śaṅkarācārya's Bhāṣyas and all the available ṭīkās thereon. In our search for unpublished Bhāṣya-ṭīkās we came across Anubhūtiswarūpācārya's gloss on Āgamaśāstra Bhāṣya and Narendrapurī's gloss on Cāndogyabhāṣya in the Govt. Oriental Library, Madras. These were found very ancient and scholarly and so we determined to publish them in our edition. Anubhūtiswarūpācārya was a teacher of Ānandagiri as shown by himself in his Tatvāloka, written in his former āśram. Narendrapurī's commentry is also very scholarly though brief. It will be published in the next volume. Gopāla ṭīkā on Katha, Vanamālā and Taittirīya Vārtika, ṭīkās on Taittirīya-Bhāṣya are reprints. We have published the Vārtika also along with the Bhāṣya to help paṇḍits and scholars who are in pursuit of allround knowledge in the subject. This edition is based upon manuscripts of Bhāṣyas and ṭīkās preserved in Dakṣiṇāmūrti Matha, Vārānasī in addition to the printed texts of Ānandāsram.

Very good and appropriate readings were found in these manuscripts and they have been incorporated in the texts of Bhāṣya and Ānandagiri.

Another interesting freature in this edition is that we have analysed in the notes the views of Dwaitins and Viśiṣṭadvaitins in the subject, in our endeavour to make a comparative study of the three schools of philosophy.

Our thanks are due to the Curator, Oriental Mss. Library Madras for allowing us to get copies of the manuscripts in their possession. *Śrī Śāradānanda Śāstrī* and *Śrī Vaṁsapati Dwivedī Śāstrī* are to be highly congratulated for helping us to edit and also getting the book printed without delay.

*S. Subrahmanya Shastri*
*Director*
Mahesh Research Institute

श्रीः

# द्वितीयसंस्करणसम्बन्धि निवेदनम्

अथेदं प्रकाश्यते महेशानुसंधानसंस्थानेन अद्वैतग्रन्थरत्नमञ्जूषायाः एकविंशरत्नभूतस्य उपनिषद्भाष्यप्रथमखण्डस्य द्वितीयं संस्करणम्। अत्र च ईशाद्युपनिषदष्टकस्य श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम् आनन्दगिरिकृतव्याख्यासमेतं काठक-माण्डूक्य-तैत्तिरीयोपनिषत्सु क्रमेण श्रीमद्गोपालयतीन्द्र—श्रीमदनुभूतिस्वरूपाचार्य-श्रीमदच्युतकृष्णानन्दैर्विरचितटीकाभिः, श्रीमदानन्दगिरिकृतटीकोपेतेन श्रीसुरेश्वराचार्यविरचिततैत्तिरीयोपनिषद्भाष्यवार्तिकेन चोपबृंहितं विराजते।

अस्य ग्रन्थरत्नस्य प्रथमं संस्करणं श्रीगुरुवर्यैः पण्डितराजशास्त्ररत्नाकरादिबिरुदभाग्भिः **एस्. सुब्रह्मण्यशास्त्रिभिः** मतान्तरविमर्शपूर्णस्वकीयटिप्पण्यादिभिरुपस्कृत्य सम्पादितम्। तत्र च माण्डूक्यभाष्यस्य श्रीमदनुभूतिस्वरूपाचार्यविरचिता टीकाऽमुद्रितपूर्वा प्रथमं मुद्रणावसरमलभत। मद्रपुरीस्थराजकीयहस्तलिखितग्रन्थागारस्थितामेकामेव मातृकामवलम्ब्य तस्याः सम्पादनं सम्पन्नम्।

ततः मद्रपुरीस्थ-संस्कृतविद्यासमित्या माण्डूक्योपनिषद्भाष्यम् अनुभूतिस्वरूपाचार्यविरचितव्याख्योपेतं मातृकाद्वयसाहाय्येन परिष्कृत्य प्रकाशितं दृष्टिपथं प्राप्तम्। तद्दर्शने सति अस्मदीयसंस्करणस्थटीकापाठे भूयस्यः पद-वाक्य-वाक्यांशत्रुटयः परिलक्षिताः।

उपनिषद्भाष्यप्रथमखण्डस्य पुनः प्रकाशनप्रस्तावे सति मयाऽयं विषयः महामण्डलेश्वराणां **श्रीमन्महेशानन्दगिरिमहाराजानां** सकाशे निवेदितः। तेषामादेशेन माण्डूक्योपनिषद्भागः पुनरक्षरसंयोजनेन परिष्कृत्यास्मिन् संस्करणे निवेशितः। भाष्ये व्याख्यायां च तत्र तत्र परिलक्षिताः मुद्रणाशुद्धयः अत्र यथासम्भवं दूरीकृताः। टिप्पण्यः सर्वा अपि पूर्वसंस्करणस्थिता एवेह यथापूर्वं स्थापिताः। अतः परिष्कृतमिदं संस्करणं विदुषां प्रमोदावहं भवेदिति शम्।

विदुषां विधेयः

**मणिद्राविडः**

# उपोद्घातः

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शङ्करं लोकशङ्करम् ॥

इह खलु वेदानां तात्पर्यस्य दुर्ग्रहत्वेन वेदार्थस्य कर्मणः यथावदनुष्ठानं दुष्करं प्रतिलभ्य यथा भगवान् जैमिनिः वेदगतकर्मप्रतिपादकभागस्य तात्पर्यनिर्णायकसूत्राणि निबबन्ध केवलं लोकानुग्रहकाम्यया, तथा वेदान्तशब्दितस्योपनिषद्भागस्य तात्पर्यमसर्वज्ञदुर्ज्ञेयमुपलभ्य भगवान् वेदव्यासः तात्पर्यं तेषां बोधयितुं ब्रह्मसूत्राणि प्रणिनाय। सूत्राणि चातीव संक्षिप्तानि दुरवबोधानि। तेषां तात्पर्यं यः उपनिषदां तात्पर्यं सम्प्रदायानुसारेण गुरुमुखादधिजगाम उपनिषत्प्रतिपाद्यं ब्रह्म स्वयमनुभवति च स एव लिखितुं प्रभवति नैतिह्यमात्रेणोपनिषदर्थवित् । "अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञानस्य" इत्यभियुक्तभाष्यकारोक्तेः । "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनादि"ति सूत्रकारोक्तेश्च ।

श्रीशङ्करभगवत्पादेभ्यः पूर्वं ब्रह्मसूत्राणि उपवर्षाचार्यैः व्याख्यातानि उपनिषदश्च भर्तृप्रपञ्चादिभिः व्याख्याताः तथापि भेदाभेदवादेन उपनिषदर्थमेव ते व्याकुलीचक्रुः । भगवत्पादास्तु गुरुमुखादेवोपनिषत्तात्पर्यं सूत्राणामैदंपर्यं च गृहीत्वा स्वयमपि शिवावतारत्वात् सर्वज्ञाः सर्वदैवाद्वैतानुभवपरमानन्दभरिताः चक्रुः उपनिषदां ब्रह्मसूत्राणां भगवद्गीतायाश्च तात्पर्यप्रकाशकानि भाष्याणि । प्राचीनव्याख्यातारः द्वैतग्राहिप्रत्यक्षेणाद्वितीयब्रह्मवादविरोधं परिजिहीर्षन्तः ब्रह्मेत्यभेदं जगदिति भेदं चोररीचक्रुः प्रत्यक्षादिप्रमाणानां भेदांशविषयतया प्रामाण्यं चोपपादयामासुः।

भगवत्पादास्तु "अद्वैतं चतुर्थं मन्यन्ते" "सलिल एकोऽद्रष्टाद्वैतो भवती"त्यादिश्रुतिषु शुद्धाद्वैतपदं दृष्ट्वा "एकमेवाद्वितीयमि"त्यादिना उपनिषत्प्रतिपाद्यं ब्रह्मणि प्रपञ्चाभावं तथैवेत्यनुमोदमानाः "मृत्तिकेत्येव सत्यमि"त्यनेन सूचितं कार्यमृषात्वं च श्रौतं परिगृह्य द्वैतग्राहिप्रत्यक्षादीनां व्यावहारिकं प्रामाण्यमुपगम्याद्वैतश्रुतिं यथार्थतया व्याचख्युः । श्रुतिप्रत्यक्षयोर्विरोधोऽस्त्येव । श्रुतेः द्वैताभावबोधित्वात् "नेह नानास्ति किञ्चने"त्यादौ; प्रत्यक्षस्य च घटस्सन् इत्यादेः द्वैतसत्यत्वावगाहनात् । अयं च विरोधः श्रुत्या प्रत्यक्षबाधाङ्गीकारात्परिहार्यः बाधितमपि प्रत्यक्षं लोकव्यवहारौपयिकं व्यावहारिकं सत्यत्वं विषयीकृत्य निर्वृणोतीत्याहुः ।

रामानुजाचार्यदयस्तु प्रत्यक्षं सर्वप्रमाणेभ्यः उत्तमं प्रमाणं, ततः श्रुतिरेव विरोधस्थलेऽन्यथा नेयेत्याहुः । ते च "सर्वं खल्विदं ब्रह्मे"त्यस्य सर्वशरीरकं ब्रह्मेत्यर्थः अन्तर्यामिब्राह्मणेन सर्वप्रपञ्चस्यापि ब्रह्मशरीरत्वप्रतिपादनात् त्वमादिपदानां तत्तच्छरीरके ब्रह्मणि तात्पर्येण तद्वाचकत्वकल्पनादित्याहुः ।

शरीरशरीरिभावं तेन शरीरवाचकपदानां शरीरिवाचकत्वं च विमृशन्तः श्रीरामानन्दसरस्वत्यः स्वीये अद्वैतश्रुतिभेदनिरासे वर्णयन्ति—

तथाहि—यत्तु "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्वमि"त्यादौ सामानाधिकरण्योपपादनम्—देवदत्तादिशब्दानां शरीरवाचकानां शरीरिपर्यन्तत्वस्य लोकवेदयोर्दर्शनात् अपृथक्सिद्धविशेषणवाचिपदानां विशेष्यपरत्वव्युत्पत्तेश्च शरीरशरीरिणोश्चापृथक्सिद्धत्वात् विश्वस्य च सर्वस्यान्तर्यामिब्राह्मणे परमात्मशरीरत्वश्रुतेः सर्वेषां प्रपञ्चवाचकशब्दानां ब्रह्मवाचकत्वे च ब्रह्मसामानाधिकरण्यश्रुतयः सर्वा अपि लक्षणां विनैव साधु सङ्गच्छन्त इति । तन्न विचारसहम्, देवदत्तादिशब्दानां शरीरविशिष्टात्मवाचकत्वे यथा देवदत्तः सुखी दुःखीत्यादिः आत्ममात्रविषयव्यवहारः, देवदत्तः कृशः स्थूलः सुन्दरः इत्यादिः शरीरमात्रविषयव्यवहारः शब्दान्तरानपेक्ष एव दृश्यते यथा वा इन्द्रः सुखी इन्द्रः सहस्राक्षः विष्णुः सर्वज्ञः विष्णुः नीलमेघश्यामः इत्यादौ निष्कृष्टात्मशरीरवाचकशब्दान्तरसामानाधिकरण्याभावेऽपि आत्ममात्रविषयकः शरीरमात्रविषयकश्च व्यवहारः तथा पृथिव्यादौ व्यवहारादर्शनात् न पृथिव्यादीनां मुख्यशरीरत्वम् । अवयवसंस्थानविशेषविशिष्टशरीरवाचकानामेव तद्विशिष्टात्मपरत्वव्युत्पत्तेः । अन्यथा घटः जगत्कर्तेत्यपि विष्णुविषयकः अनौपचारिको व्यवहारः प्रसज्येत । अत्र चेष्टापत्तौ सर्वेषां

शब्दानां विष्णुवाचकत्वमेवाङ्गीक्रियताम् किं प्रपञ्चस्य तच्छरीरत्वमङ्गीकृत्य शरीरवाचकपदानां शरीरिपरत्व-व्युत्पत्तिक्लेशेन।

एवं च पृथिव्यादीनामीश्वरनियम्यत्वात् तच्छरीरत्वव्यपदेशः औपचारिक एव। तथा चौपचारिकशरीर-वाचकशब्दैः नात्मसामानाधिकरण्यमुपपादयितुं शक्यम्। अतिप्रसङ्गस्योक्तत्वात्।

किञ्च न शरीरमात्रवाचकस्य शरीरिपरत्वव्युत्पत्तिः कल्पयितुं शक्या। देह आत्मा शरीरमात्मा इत्यादि-प्रयोगस्यापि साधुतापत्तेः। वैदिकैश्च तत्रेष्टापत्तेर्वक्तुमशक्यत्वात्। एवं च निष्कृष्टदेहवाचकानां शरीरकलेवरादि-शब्दानां कथञ्चिदप्यात्मसामानाधिकरण्यं वक्तुं न शक्यम्। एवमेव प्रपञ्चवाचकशब्दानामपि मुख्यवृत्त्या न ब्रह्मसामानाधिकरण्यं वक्तुं शक्यमित्यादि। य एव लौकिकाः शब्दास्त एव वैदिकाः त एव तेषामर्थाः इति मीमांसान्यायविरोधश्च।

एवं तन्मते जीवेश्वरभेदो जीवपरस्परभेदो जीवजगद्भेद ईश्वरजगद्भेद इत्यादिकं सर्वं सत्यमेव। विशिष्टा-द्वैतमिति तु चिदचिद्विशिष्टं ब्रह्म एकमित्यर्थकमेव न त्वत्राद्वैतशब्दस्य मुख्यार्थः सम्भवति। अद्वैतपदं हि न विद्यते द्वैतं यस्मिन्निति व्युत्पत्त्या द्वैतशून्यब्रह्मपरम्। बुद्धोऽप्यद्वयवादीत्युच्यते, तन्मते न द्वैतमद्वैतमिति तत्पुरुषस्तेन प्रपञ्चाभावः शून्यत्वं सिद्ध्यति।

अद्वैतविशिष्टाद्वैतद्वैतभाष्यकाराणां भाष्यलेखनरीतिरपि विलक्षणा दृश्यते। तथा हि—जिज्ञासासूत्रे शाङ्करीये भाष्ये तत्पुनर्ब्रह्म प्रसिद्धं वा अप्रसिद्धं वेति शङ्कायाः समाधाने—तद्विशेषं प्रति विप्रतिपत्तेः इत्यारभ्य प्रसिद्धानि मतानि शरीरमात्रं चैतन्यविशिष्टमात्मेति लोकायतिका मन्यन्ते इत्यनुक्रम्य "अस्ति तद्व्यतिरिक्तः सर्वज्ञः सर्वशक्तिः इत्यन्ये" इति योगमतमुक्त्वा "आत्मा स भोक्तुः इत्यपरे" स्वमतमन्ते उदाजह्रुः।

रामानुजाचार्यास्तु "अत्ता चराचरग्रहणादि"त्यधिकरणे "सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टो जानीयां—तथाहि बहुधा प्रतिपद्यन्ते केचित् वित्तिमात्रस्य स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। केचित् वित्तिमात्रस्य सतः अविद्यास्तमयम्, परे पाषाणकल्पस्यात्मनो वैशेषिकगुणोच्छेदम्, अपरे अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्यानतिशयावधिकासंख्येयकल्याणगुणाकरस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नरूपस्य परमात्मानुभवैकरसिकस्य जीवस्यानादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविक-परमात्मानुभवमेव मोक्षमाचक्षते।" इति मतान्तरानुक्रमणपूर्वकं स्वमतमुपस्थापयन्तः स्वस्य त्रय्यन्तनिष्णातत्वमाहुः। विचार्यं निर्णेतव्योऽयं विषयः कः त्रय्यन्तनिष्णातः कश्च नेति। अस्मिन् सन्दर्भे स्वस्य त्रय्यन्तनिष्णातत्वं स्वयमेव वदन् अयमितरान् तूष्णीकरोतीति गम्यते। भगवत्पादास्तु स्वमतमितरमतवदेव निर्दिशन्तो विनयं सूचयन्ति। अपि च "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रे भगवत्पादाः—केचित्तु पारमार्थिकं जैवं रूपं मन्यन्ते। अस्मदीयाश्च केचित् इति जीवपृथक्सत्तादिनं द्वैतिनमस्मदीयत्वेन निर्दिशन्तः उपनिषद्व्याख्यातृत्वेन तस्मिन्नभिमानं प्रदर्शयन्ति।

परमतनिराकरणप्रधानं पादमारभमाणाश्च भगवत्पादाः "ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शन-निरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तं, किं परपक्षनिराकरणेन परविद्वेषकारणेन" इति परमतनिराकरणे स्वस्यानाग्रहं प्रदर्शयन्ति।

रामानुजाचार्यास्तु औपनिषदं भगवत्पादमतं दूषयिष्यन्तः पूर्वपक्षान्ते—तदिदमौपनिषदपरमपुरुष-वरणीयताहेतुगुणविशेषविरहिणां अनादिपापवासनादूषिताशेषशेमुषीकाणां अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्य-प्रत्यक्षादिसकलप्रमाणवृत्त-तदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिः अनादरणीयम्। इति वदन्तः केवलं अचिकित्स्यं मत्सराख्यं पित्तं प्रदर्शयन्ति। एतादृशानि परदूषणप्रकाराणि श्रीशाङ्करेषु ग्रन्थेषु दुर्लभानि। अपि च बौद्धैः मात्सर्यादेव नाशिते श्रीबदरीक्षेत्रे नारदकुण्डे बौद्धप्रक्षिप्तश्रीनारायणबिम्बमुद्धृत्य देवालयं निर्माप्य पुनर्देवप्रतिष्ठां विधाय प्रत्ययामं पूजां निर्वर्तयितुं केरलीयान् शिष्टान् आनाय्य "भवद्भिः कुलक्रमेणाचन्द्रार्कं यथाशास्त्रं पूजा कर्तव्ये"ति नियुज्य

भारतमण्डले प्रधानभूतं तत्क्षेत्रं उदजीवयन्निति कथा तत्र प्रसिद्धा श्रूयते। इदं परमपुरुषवरणीयताहेतुगुणविशेष-साहित्यसूचकं वा राहित्यसूचकं वेति प्रियपाठकैरेव निर्धारणीयम्। अवशिष्टविशेषणानि वक्तारमेव परिवृत्य धावन्ति। शरीरवाचकानां शरीरिपर्यन्तत्वादि सकलशास्त्रन्यायविरुद्धवादित्वादिति कृतमधिकेन।

मध्वाचार्यास्तु इतोऽपि कटुतरभाषिणः यत एते स्वीयगीताभाष्यान्ते—

सङ्कराख्यस्य दुर्योनेः निस्सृतेन रजस्वला। गीतानारी समीरेण शोधिता हंसरूपिणा॥

इति बहु असम्बद्ध वदन्तः।

## उपनिषद्भाष्यम्

श्रीशङ्करभगवत्पादानां उपनिषद्भाष्याण्यधिकृत्य किञ्चिद्विचारयामः—केवलं लोकानुग्रहैकप्रयोजनाय धृतशरीराणां तेषां यद्यपि लीलामात्रमिदं भाष्यरचनं तथापीमानि भाष्याणि प्रसन्नगम्भीराणि सुविशदं उपनिषदर्थप्रकाशनपराणि पठितॄणामानन्ददायकानि लोकव्यवहारे शब्दादिविषयेषु च वैराग्यप्रदानि विराजन्ते इत्येतन्न परोक्षं समेषां पण्डितानाम्। भाष्यव्याख्यातारश्च श्रीआनन्दगिर्याचार्याः प्रतिवाक्यमवतरणव्याजेन भाष्याशयं सम्यग्व्याकुर्वन्तः पण्डितानानन्दभरितान् वितन्वतः लोकानुग्रहतत्परा इत्येतदपि नाप्रत्यक्षं समेषां सहृदयानाम्।

श्रीआनन्दगिर्याचार्यस्य प्राक्कालीनाः उपनिषद्भाष्यव्याख्याने मार्गप्रदर्शका अनुभूतिस्वरूपाचार्याः, श्रीनरेन्द्रपुरीसंज्ञाः यतिप्रवराश्च। ते च स्वकृतयोः माण्डूक्यटिप्पणीछान्दोग्यटिप्पण्योः भाष्यकारं सम्पूज्य तदाशयं मधुरया वाण्या विदुषां श्रोत्राणि सन्तर्पयन्ति। अन्ये च यतिप्रवराः बालगोपालयतीन्द्राः, अच्युतकृष्णानन्दतीर्थाः, अभिनवनारायणानन्देन्द्रसरस्वत्यश्च अर्वाक्कालिकाः मूलभाष्ययोः प्राचीनैरचुम्बितानर्थान् प्रदर्श्य सर्वानाह्लाद-यन्ति। एवमेव विशिष्टाद्वैतद्वैतभाष्यकारा अपि स्वमतानुसारेणोपनिषद्व्याख्यानानि विरचय्य तन्मतावलम्बिनो भक्तानन्वगृह्णन्।

इदानीं सर्वाभिलषितमोक्षस्वरूपविषये तत्साधनविषये जीव-ईश्वरप्रपञ्चप्राणादिविषयेषु कीदृशं तात्पर्य-मुपवर्णयन्ति भाष्यरचयितारः श्रीशङ्कराचार्यरामानुजाचार्यमध्वाचार्यादय इति विनाऽभिनिवेशं विचारयितु-मवसरः। यद्यपि मोक्षस्वरूपे मुक्तस्य पुनरावृत्त्यभावे मोक्षतत्साधनादिविषये उपनिषदामेव प्रामाण्यमित्यत्र च न विवादः सर्वेषामुपनिषद्भाष्यकृतां तथाप्यान्तरालिकभेदस्य स्पष्टं प्रतिभासमानत्वात् उपनिषदां स्वरस-सिद्धस्यार्थस्य प्रकाशनार्थमयमारम्भः।

उदयनाचार्याः यद्यपि तर्कशास्त्रप्रवर्तकाः तत्रैवाभिनिवेशवन्तस्तथापि औपनिषदं मतमेव परमार्थं इति वदन्ति। "नित्यबुद्धमुक्तस्वभाव इत्यौपनिषदाः" इत्यद्वैतमतमेव औपनिषदमिति स्पष्टं कुसुमाञ्जलावुदाहरन्ति। आत्मतत्त्वविवेके च—

"न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः, तद्बाधके बलिनि वेदनये जयश्रीः।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥" (पृ० २३०) इति

एवं प्रपञ्चसत्यत्ववादिनस्तार्किका औपनिषदं मतमेव परमार्थं इति वदन्ति। तत्काले अद्वैतमेवौपनिषद-पदप्रतिपाद्यमासीत्। द्वैतविशिष्टाद्वैतपरतया उपनिषदां व्याख्यानमर्वाचीनं न प्राचीनं विद्वद्गोष्ठ्यां न प्रसिद्ध-मित्यप्यनेन सूच्यते।

इदं तु सर्वैर्वेदप्रामाण्यवादिभिः ऐककण्ठ्येनाङ्गीकृतं यत् पूर्वतन्त्रे सर्वशाखाप्रत्ययमेकं कर्मेतिवत् सर्ववेदान्त-वेद्यं ब्रह्म; सर्वासामुपनिषदामेकवाक्यत्वं न त्वाधुनिकग्रन्थवत् उपनिषदः भिन्नभिन्नकर्तृकत्वात् नैकवाक्यतापत्रा इति। अत्रापि सूत्रं "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति।

## मोक्षस्वरूपविचारः

उपनिषदां मोक्षशास्त्रत्वप्रसिद्धेः कीदृशो मोक्ष उपनिषत्प्रसिद्ध इति प्रथमं निर्धारणीयम्। तत्र भाष्यकाराद्यः—अविद्यानिवृत्त्युपलक्षितः आनन्दो मोक्ष इत्याहुः, तत्राविद्यानिवृत्तिः आत्मतत्त्वज्ञानसाध्या। आनन्दश्चात्मस्वरूपमेव "विज्ञानमानन्दं ब्रह्मे"ति श्रुतेः। तच्चात्मस्वरूपमविद्यावृतत्वादिदानीं न प्रकाशते अविद्यानिवृत्तौ प्रकाशते, अविद्यानिवृत्तिश्चात्मस्वरूपैव अभावानामधिकरणात्मकत्वात्।

तत्र प्रमाणं "पुरुष एवेदं विश्वं तपो ब्रह्म परामृतम्। एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरतीह सोम्य॥" इत्यत्र "पुरुष एवेदं विश्वमि"ति प्रपञ्चमिथ्यात्वं विधायाद्वितीयपुरुषज्ञानादविद्यानिवृत्ति कथयति। क्वचिदीशावास्ये 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति जीवब्रह्मैकत्वज्ञानात् शोकमोह-निवृत्तिमाचष्टे। शोकमोहयोः अविद्याकार्यत्वात् तन्निवृत्तौ निवृत्तिः। "क्षीयन्ते चास्य कर्माणि" इत्यस्यापि अविद्या-मूलकं कर्म अविद्यानिवृत्तौ निवर्तते इत्यभिप्रायः।

आनन्दस्वरूपप्राप्तिः अप्राप्तत्वभ्रमनिवृत्तिरेव न त्वपूर्वा। अत एव जीवस्य "ब्रह्मैव सन् ब्रह्माप्येति" इति पूर्वमेवानन्दात्मकब्रह्मरूपत्वमाचष्टे। अयमेव मोक्षः बहुषु स्थलेषु भिन्नभिन्नरूपेण कीर्त्यते। यथा "सोऽमृतः समभवत्" "ततो न विजुगुप्सते" "ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युः" "ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते सदा" "तरति शोकमात्मवित्"। सर्वमेतदविद्याकार्यनिवृत्तौ ब्रह्मप्राप्तौ वाऽन्तर्भावनीयम्। "ब्रह्मवेदब्रह्मैव भवती"त्यस्य मतान्तरयोः ब्रह्मसदृशो भवतीत्यर्थः। "अत्र ब्रह्म समश्नुते" ब्रह्मानुभवतीत्यर्थं इत्याहुः। इदं सर्वमपदार्थकथन-मुपेक्षणीयम्। विशिष्टाद्वैतिनः मोक्षे जीवस्य ब्रह्मभावं नाभ्युपगच्छन्ति। तन्मते जीवब्रह्मणोरत्यन्तभेदात्। अपितु अस्मन्मते अहंग्रहोपासकानां यत्फलं ब्रह्मलोकप्राप्तिरूपं स्वीक्रियते, तदेव मुख्यं मोक्षमिच्छन्ति। तत्रैव च ब्रह्म-विचारान्निर्गुणप्राप्तिरिति तु अद्वैतिनामभिप्रायः। येषूपासनेषु क्रममुक्तिसूचकं नास्ति तदुपासकानाम् "इमं मानव-मावर्तं नावर्तन्ते" इति श्रुत्याऽस्मिन् मन्वन्तरे नास्ति पुनरावृत्तिः। उत्तरकल्पेषु पुनरावृत्तिरस्तीति भगवत्पादै-रेवोक्तम्। ब्रह्मलोकस्य "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्युक्तेरनित्यत्वात्।

## जीवन्मुक्तिः

"अत्र ब्रह्म समश्नुते" "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते अथायमशरीरो ब्रह्मैव तेज एव" इति श्रुतौ प्राप्तब्रह्मसाक्षात्कारस्य शरीरं त्यक्ताभिमानं शेते। अयं तु ब्रह्मणि लीन इत्युक्तत्वात् अन्यत्र च "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव" इत्यादिना अचक्षुरपि स चक्षुरिव व्यवहरति इत्यभिधानात् जीवन्मुक्तिरस्त्येव। भगवद्गीतासु स्थितप्रज्ञलक्षणं गुणातीतलक्षणं च जीवन्मुक्तलक्षणमेव। "इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मन" इति गीता च। परे तु "सोऽविद्याग्रन्थि विकिरति" इत्यस्य कर्मरूपां ग्रन्थि नाशयतीत्यर्थं इत्याहुः, तन्न, अज्ञानस्य ज्ञानैकनिवर्त्यत्वात्। अविद्यापदस्य कर्मपरत्वे लक्षणापत्तेश्च। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते" इति छान्दोग्यश्रुतिरपि जीवन्मुक्तिसद्भावे प्रमाणम्। "तस्य तावदेव चिरमि"त्यादेरयमर्थः। यदा देहारण्ये प्रविष्टः संसारदुःखमनुभवन् अनुदिनं शोचन् कथञ्चित् पुण्यातिशयवशात् परमकारुणिकं ब्रह्मात्मविदं कञ्चिदुपसर्पति तदा तेन ब्रह्मविदा कारुण्यात् दर्शितसंसारविषयदोषदर्शनमार्गः विरक्तः "नासि त्वं संसारी अमुष्यपुत्रत्वादिधर्मवान् किं तर्हि तद्यत् सत् तत् त्वमसी"ति बोधितः स्वं सदात्मानमुपसम्पद्य स्वस्थो निर्वृतो भवति तस्य जीवत एव मुक्तस्य तावानेव विलम्बः यावत् प्रारब्धकर्माधीनमिदं शरीरं पतति इति।

रामानुजीयास्तु "अत्र ब्रह्म समश्नुते" इत्यस्य अत्रैवोपासनवेलायां ब्रह्मानुभवतीत्यर्थं इत्याहुः। तन्न "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिषु एवकारयुक्ततया सावधारणमुक्तस्य ब्रह्मभावस्य लक्षणया ब्रह्मानुभवपरत्वायोगात्। अनुभवोऽपि भवदुक्तः न प्रत्यक्षरूपः भगवतो रूपाद्यभावेन चक्षुराद्ययोग्यत्वात्, नाप्यनुमानादि दूरनिरस्तत्वाद् भवद्भिरेव। नापि मानसं तस्य भ्रान्तित्वसम्भवात् कामिनीसाक्षात्कारवत्। अत्रैवाशरीर इत्यस्य अशरीरकल्प इत्यर्थं इत्यपि न साधुः सशरीरत्वस्याभिमाननिमित्ततया वस्तुत एवाशरीरत्वसम्भवात्। "प्राणो ब्रह्मैव" इत्यस्य ब्रह्मरूप इवेत्यर्थं इत्यप्ययुक्तं सर्वशास्त्रविप्लवप्रसङ्गात्। "सुवर्णं लोकमेतो"त्यादौ एतीवेत्यर्थकरणापत्तेः।

## जीवस्वरूपम्

जीवो नाम कः इति प्रश्ने भगवान् श्रीकृष्णः "क्षेत्रज्ञं चापि मां विद्धि" इतीश्वराभिन्नमाह। उपनिषत्सु च "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्युक्तत्वात् जीवरूपेण पूर्वकल्पानुभूतेन शरीरं प्रविष्टः परमात्मैव जीवः। "तत्सृष्ट्वा तदेवानुप्राविशत्" "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इत्यादिषु परमात्मन एवाविकृतस्य शरीरे प्रवेशः आम्नायते "सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते" इति पुरुषसूक्ते नामानि कृत्वा प्रविष्टः इत्यध्याहार्यम् अन्यथा तत्र स्थित्वा वदनासम्भवात्।

विशिष्टाद्वैतिनस्तु परमात्मनः सर्वगतस्य निष्क्रियस्य शरीरे प्रवेशमनुपपन्नं मन्यमानाः जीवविशिष्टब्रह्मणः प्रवेशं जीवप्रवेशपर्यवसितं कल्पयन्ति। तन्न, तथा सति "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यत्र स्रष्टृप्रवेष्ट्रोः समानकर्तृकत्वं क्त्वाप्रत्ययोक्तं भज्येत समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानात्।

आत्मा स्वयं ज्योतिःस्वभावो न तु ज्ञानाश्रयः। तथा हि "कतम आत्मेति" इति प्रकृत्य बृहदारण्यकचतुर्थे "हृद्यन्तर्ज्योतिः पुरुष" इति "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" इति चाभिधानात्। ब्रह्मसूत्रे "ज्ञोऽत एवे"ति ज्ञानस्वरूप इत्यर्थः। धर्मभूतज्ञानसद्भावे प्रमाणाभावात् मनोवृत्तिषु "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरि"ति धीरूपज्ञानस्योक्तत्वात् तद्बलेनैव जीवस्य ज्ञानाश्रयत्वव्यवहारसम्भवात्। जीवः सर्वव्यापी विभुः अविकृतस्यैव ब्रह्मणः शरीरे प्रवेशोक्तेः, मुक्तस्य "ब्रह्म वेद ब्रह्मैव भवति" इत्यभेदोक्तेश्च। न च "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यत्र अणुत्वं जीवस्योक्तमिति शङ्कनीयम्। अत्र हि अणुत्वं न परिणामः तथा सति "स य एषोऽणिमा" इत्यस्यापि अणुपरिमाणार्थत्वप्रसङ्गात्। अपि तु दुर्ज्ञेयत्वं, अत एव चेतसा वेदितव्यः इत्युक्तमणुत्वेन इन्द्रियागोचरत्वात्। न च "बालाग्रशतभागस्य शतधाकल्पितस्य च भागो जीवस्य विज्ञेयः" इति स्पष्टमणुत्वमुच्यते इति वाच्यम्। तत्रैव "स चानन्त्याय कल्पते" इति विभुत्वाम्नानात्। अत एव "स वा एष महानज आत्मा" "नित्यः सर्वगतः स्थाणुः" इति तस्मिन् महत्त्वमाम्नायते। न च "स वा एष" इति ईश्वरपरं स चाकाशशब्दिते जीवे शेत इत्युक्तमिति वाच्यम्। तच्छब्दस्यास्मिन् प्रकरणे प्राधान्येन प्रकृतजीवपरामर्शित्वात् परमात्मा जीवे शेते इत्यस्यासम्बद्धत्वात् जीवे आकाशशब्दप्रयोगादर्शनाच्च। "नित्यस्सर्वगत" इति गीताश्लोके रामानुजभाष्यटीकायां नात्र जीवविभुत्वं सर्वगतशब्देनोच्यते, अपितु अनुप्रवेशविशेषयोग्यतेत्युक्तम्। यदपि सर्वगतस्थश्चासौ अणुश्चेति मध्वव्याख्यानं तदपि पूर्वत्रोत्तरत्र वा हेतुत्वेनान्वयायोगात् असम्बद्धमिति वेङ्कटनाथीये। उत्क्रान्त्यादिस्तु तद्गुणसाराधिकरणे उपपादित एव।

## शरीरव्यतिरिक्तात्मनिर्णयः

यद्यपि कर्मानुष्ठानं जन्मान्तरीयस्वर्गादिफलोद्देशेन क्रियमाणं जन्मान्तरास्तित्वं शरीरादिव्यतिरेकं च जीवस्य सूचयत्येव तथापि हितैषिवचनादिलब्धस्यास्यैव विश्वासस्य दृढीकरणाय देहात्मवादनिरासदृढीकरणाय चोत्तरमीमांसायामेक आत्मनः इत्याद्यधिकरणं दृश्यते। अतः अयमपि विषयः अत्र निर्णेयः। अत एव नचिकेताः आस्तिकश्रेष्ठोऽपि मृत्युना दत्तवरः "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं—वरस्तृतीयः" इत्यनेन जीवस्य तात्त्विकस्वरूपपर्यवसायि प्रश्नं देहव्यतिरेकविषयमुपचिक्षेप।

अत्र विशिष्टाद्वैतिनः मुक्तात्मा अस्ति वा न वेति प्रश्नः न तु देहव्यतिरिक्तात्ममात्रविषयः तस्य स्वर्गसाधनाग्निविद्याप्रष्टुः आस्तिकाग्रेसरस्य नचिकेतसो ज्ञातत्वात् इत्याहुः। आचार्यास्तु प्रेतशब्दस्य मुक्तात्मपरत्वं न दृष्टम्, उत्तरे च "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा भवति गौतम ॥" इति "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतमि"त्यादिना च शरीरनाशे आत्मनो नाशाभावम्, मरणान्तरं तस्य कर्मानुसारिदेहान्तरप्राप्तिं च पश्यन्तः शरीरव्यतिरिक्तविषय एवायं प्रश्नः तस्यास्तिकत्वेऽपि स्वनिर्णयार्थं स्वस्य मुमुक्षुतया आत्मयाथात्म्यजिज्ञासुत्वेऽपि मुखत आदावनुक्त्वा तत्पीठिकारूपेण देहव्यतिरेकं पप्रच्छ। मृत्युस्तु देहव्यतिरेकमात्रनिरूपणे अयं न तुष्येत्। तस्य तद्विषये विश्वाससद्भावस्यात्मविद्याप्रश्नेनैव सूचितत्वात्। अतः अयं प्रश्नः शुद्धात्म-

निरूपणपर्यन्तं गच्छेत्। तत्र च वैराग्यस्य मुख्यकारणत्वात् तत्परीक्षणाय "शतायुषः पुत्रपौत्रान् वृणीष्वे"त्यादिना प्रलोभयामास, तेन च यदा नचिकेता न चचाल तदा तस्य बुद्धिमत्तां प्रशस्य एतद्बुध्वा "....स मोदते मोदनीयं हि लब्ध्वा" "तं दुर्दर्शं....देवं मत्वा हर्षशोकौ जहाति" इत्यात्मज्ञानस्य मोक्षसाधनत्वमुपचिक्षेप। नचिकेताश्च लब्धविश्वासः "अन्यत्र धर्मादि"त्यादिना शुद्धात्मानं पप्रच्छ इति ग्रन्थसन्दर्भं नयन्ति। अपि च मोक्षेऽपहत-पाप्मत्वादिलाभो भवतीति ज्ञाता मुक्तसद्भावं जानात्येव। तस्य स्वरूपादिप्रश्नः अप्रकृतः अशब्दार्थश्च। मुक्तस्वरूपज्ञाने वैराग्यपरीक्षाप्यकाण्डताण्डवायिता। अतश्च भगवत्पादोक्तरीत्या देहव्यतिरिक्तात्मप्रश्न एवायम्। प्रतिवचनं च तदनुकूलमिति स्थितम्। मुक्तानामपुनरावृत्तिः—अद्वैतसिद्धान्ते हि ब्रह्मसाक्षात्कारेणाविद्यानिवृत्तौ तत्कार्यभूतः संसारो न भवति, जीवश्च आनन्दरूपं शुद्धं ब्रह्म भवतीति सुष्ठु संगच्छते। वैकुण्ठमुक्तिप्राप्तानाम-पुनरावृत्तिः कथं सङ्गच्छते ? तत्रापि जयविजययोः सनगादिषु द्वेषेण भगवद्दर्शनप्रतिबन्धस्तेषां कोपस्तेन शापः शापेन तयोः भूमौ पतनं च भागवतोक्तं सर्वं ब्रह्मलोकाख्यवैकुण्ठगतानां रागद्वेषप्राप्तिस्तेनाकृत्ये प्रवृत्तिस्ततः पुनर्भूमौ जननं भगवति द्वेषो भगवता युद्धमित्यादिकं सर्वेषामपि सम्भाव्यते।

## प्रपञ्चमिथ्यात्वम्

शास्त्रेषु आरम्भवादः, सङ्घातवादः, परिणामवादः, विवर्तवादः इति प्रसिद्धाश्चत्वारो वादाः। तत्रारम्भ-वादो नैयायिकानाम्—तन्मते उत्पत्तेः पूर्वमसदेव घटादिकमुत्पद्यते नवम्। सङ्घातवादो बौद्धानाम्—तन्मते आकार-विशेषविशिष्टः परमाणुसमूह एव घटादिबुद्धिगोचरः। परिणामवादः साङ्ख्यानाम्—तन्मते मृत् घटाकारेण परिणमते क्षीरं वा दध्याकारेण। विवर्तवादः सिद्धान्तिनामौपनिषदानाम्—कारणसमसत्ताकोऽन्यथाभावः परिणामः, कारण-विषमसत्ताकोऽन्यथाभावो विवर्त इति भेदः। मिथ्यात्वे श्रुतयः "नेह नानास्ति किञ्चन" "यथा सोम्यैकेन मृत्पिण्डेने"त्यादि। मिथ्यात्वं नाम स्वाभाववति प्रतीयमानत्वं ज्ञाननिवर्त्यत्वं वा सदसद्विलक्षणत्वं वा। तत्र "मनसैवेदमाप्तव्यम् नेह नानास्ति किञ्चन। मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति" इति कठवल्ल्यां बृहदारण्यकषष्ठे च श्रूयते। इह प्रपञ्चवद्ब्रह्मणि नाना ब्रह्मभिन्नं किञ्चन वस्त्वन्तरं नास्ति। यः इह ब्रह्मणि नानेव कल्पितं नानात्वं पश्यति स मरणान्मरणं पुनः पुनर्गच्छतीत्यर्थो भाष्यकारसम्मतः।

विशिष्टाद्वैतिनस्तु—ईश्वरभेदो नास्ति "यदेवेह लोके अनुसन्धीयते तदेव परलोके अनुसन्धीयते" इत्यर्थोपपत्तेः जगन्मिथ्यात्वपरतया व्याख्यानमनुचितमिति। एवं भगवान् यथा परमपदे वैकुण्ठे वर्तते तथैवावतारेषु अजहत्स्वभाव इत्यर्थ इत्याहुः, तदसमञ्जसम्, यतः रामकृष्णाद्यवतारा वा भवन्तु अर्चावतारो वा भवतु, सर्वत्र भगवानेवावतीर्ण इति स्मृतिपुराणेभ्योऽवगम्यते। तथा च तस्यैवात्र सद्भावे भेदशङ्का वा स्वभावभेदशङ्का कुतः?। भगवत एवार्चादौ आवाहनादवतारेषु पूर्णत्वार्धत्वादिभेदेऽपि अवतारत्वेनाभेदात्। पूर्णत्वं श्रीकृष्णे ज्ञानक्रियाशक्त्योः प्रकाशनात्, अर्धत्वं श्रीरामस्य ज्ञानशक्तेः अप्रकाशनात्। तथा चेदं वाक्यं तन्मते व्यर्थमेव। अस्मद्रीत्या तु ब्रह्मणो निष्प्रपञ्चत्वसिद्धिस्तेनाद्वितीयत्वसिद्धिश्च फलम्। "यथा सोम्यैकेन—एवं स आदेशो भवति" इति श्रुतिरपि प्रपञ्चमिथ्यात्वे प्रमाणम्। सर्वासूपनिषत्सु भगवद्गीतासु च ब्रह्मविज्ञानेन सर्वज्ञत्वं प्रतिज्ञायते। यथा छान्दोग्ये "उत तमदेशमाप्राक्ष्यो येनाश्रुतं श्रुतं" इत्यादि; मैत्रेयीब्राह्मणे "आत्मनि खल्वरे दृष्टे श्रुते मते इदं विदितं भवती"ति। मुण्डके "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति। गीतासु च "ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते"। भगवत्तत्त्वविज्ञानादेव सर्वज्ञत्वं कथं भवेदित्यस्योप-पादनं छान्दोग्यषष्ठ एव वर्तते नान्यत्र, अन्यत्रेदमेव नेतव्यम्। तथाहि—वाचाया आरम्भणं आलम्बनं विकारो घटशरावादि। तर्हि वाक् तदालम्बनं च विकार इति द्वयं प्राप्तं नेत्याह नामधेयं घटः शराव इति, नाममात्रं न तु वस्तुसदस्ति, नामधेयपदमाभासद्योतकं यथा "यजन्ते नामयज्ञैस्ते" इत्यादौ मृत्तिकेत्येव सत्यं मृत्तिकात्मनैव घटादिकं सत्यं विवर्तवादे अधिष्ठानसत्तयैवारोपितं सत्यं यथा शुक्त्यात्मना रजतम् इतिशब्दस्य आदिरर्थस्तेन मृत्तिकादि सत्यं घटं प्रति मृत् मृदं प्रति जलमितिक्रमेण ब्रह्मैव सत्यमित्यर्थः। इममर्थमजानन्तः रामानुजीयाः वाचारम्भणमित्युक्तेर्मिथ्येत्यश्रुतकल्पनं पुनरुक्तिर्नामधेय पदं इतीत्यस्य निरर्थतेति ब्रुवन्ति वाचारम्भणपदस्य विवरणं नामधेयमिति तेन च मिथ्यात्वसिद्धिः। इतिशब्दार्थश्चोक्तः एकविज्ञानेन सर्वं तत्त्वतो विज्ञातमित्यर्थः। "इदं सर्वं

यदयमात्मा" इति मैत्रेयीब्राह्मणे, "पुरुष एवेदं सर्वमि"ति मुण्डके च एकविज्ञानेन सर्वविज्ञानस्य प्रतिज्ञातस्योपपादनाय प्रयुक्तम्। तत्रोभयत्रापि बाधायां सामानाधिकरण्यं ततश्च ब्रह्मरूपज्ञानज्ञातस्वीयतत्त्वकत्वं प्रपञ्चे उक्तं भवति। "येन विज्ञातेने"त्यत्र तृतीयाऽभेदे तस्य विज्ञानेऽन्वयः। ब्रह्मज्ञानाभिन्नं यत्तत्वतो ज्ञानं तद्विषयं स्वीयतत्त्वज्ञानाभिन्नज्ञानविषयब्रह्मकं सर्वमित्यर्थः। अयमेवार्थः उत्तरत्र छान्दोग्ये—"यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"त्युक्त्वा "त्रीणि रूपाणीत्येव सत्यं" इत्यनेनात्रिवृत्कृतपृथिव्यादिकं यत् त्रिवृत्कृतस्य कारणं तदेव सत्यं न तु त्रिवृत्कृतं तेज आदीत्युक्तं तेन च कारणसत्यत्वं कार्यस्य मिथ्यात्वं च श्रुत्यभिमतं स्पष्टं ज्ञायते। यत्तु विशिष्टाद्वैतिनो वाचा (फले हेतौ तृतीया) उदकाहरणादिव्यवहारसिद्धयर्थं विकारः संस्थानविशेषः तत्प्रयुक्तं घट इत्यादिनामधेयम्। अतो घटाद्यपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृत्तिका द्रव्यमित्येवोपलभ्यते न तु द्रव्यान्तरत्वेन। अतश्च कार्यस्य कारणावस्थान्तरत्वात् तदभेदात् कारणविज्ञानेन विज्ञाततेत्यर्थं इत्यूचुः, तन्न। तन्मते, प्रकृतेरेवोपादानत्वात् ब्रह्मण उपादानत्वं प्रकृतिशरीरकत्वेन ततश्च प्रकृतेरेवोपादानत्वं न ब्रह्मणः इत्यापन्नं ब्रह्मण उपादानत्वे विकारवत्वापातेनानित्यत्वापातात्। तथा च प्रकृतिज्ञानेन विकाराः ज्ञायन्ताम्। केवलब्रह्मज्ञानेन विकारज्ञानं तु न भवेदेव भेदात्। अपि च मृद्घटयोः परिणामिपरिणामयोरभेदे भिन्नशब्दप्रतिपाद्यता न स्यात् भेदे मृज्ज्ञानेन घटज्ञानं न स्यादिति एकविज्ञानेन सर्वविज्ञानाभावः। भेदाभेदस्तु विरुद्धः भेदांशस्य मृज्ज्ञानेन ज्ञानाभावात्। अवस्थान्तरत्वेऽपि मृज्ज्ञानेन तस्य ज्ञानं दुर्लभम्।

माध्वास्तु ब्रह्मणो निमित्तत्वमेव नोपादानत्वमिति ब्रुवते। तन्मते यथा सादृश्यादेव मृत्पिण्डविज्ञानात् सर्वे मृन्मया विज्ञायन्ते तथा विष्णुसादृश्याज्जगत् ज्ञायते। अथवा विष्णोः प्राधान्यात् प्रपञ्चज्ञानमित्याहुः। तन्मते परिणामिदृष्टान्तानुपपत्तिः। न चाद्वैतमतेऽपि परिणामिदृष्टान्तानुपपत्तिः। परिणामानां विचारणे विवर्तत्वात् परिणामवादस्यासम्भवदुक्तिकत्वात्। तथा हि भामत्याम् "आत्मकृतेः परिणामादि"त्यत्र—"न तावद् घटो मृदो भिन्नः मृद्घट इति प्रत्ययायोगात्, नाप्यभिन्नः मृत् मृत् इत्यप्रतीतेः, नापि भिन्नाभिन्नो भेदाभेदयोरेकत्राभावात् अतोऽनिर्वचनीया एव" इति।

## महावाक्यविचारः

"तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादीनि जीवब्रह्मणोरैक्यबोधकानि वाक्यानि महावाक्यानीत्युच्यन्ते।

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्। उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥

इत्युक्ताखण्डार्थत्वमपि [illegible]वाक्यानां दृश्यते। स्वघटकपदार्थसंसर्गाविषयकशाब्दबोधजनकवाक्यम् अखण्डार्थं, यथा "सत्यं ज्ञानमनन्तं ब्रह्म" इति लक्षणवाक्यम्। तद्धि स्वरूपमात्रजिज्ञासानिवर्तनाय प्रवृत्तत्वात् सत्यज्ञानादिपदार्थसंसर्गागोचरं ब्रह्मव्यक्तिमात्रगोचरं ज्ञानं जनयति। इदं पदार्थमात्रनिष्ठमखण्डार्थम्। वाक्यार्थनिष्ठं तु तत्त्वमसीत्यादिकं तत्र त्वंपदार्थेन तत्पदार्थैक्यबोधनात् भिन्नपदार्थत्वाभावाच्च एकव्यक्तिमात्रबोधकमिदं वाक्यम्।

जीवस्य ब्रह्मणा ऐक्यं कथमुच्यते? एकः संसारी किञ्चिज्ज्ञः दुःखी, अपरः असंसारी सर्वज्ञः आनन्दरूप इति चेदुच्यते—न केवलं महावाक्यमवलम्ब्य जीवब्रह्माभेदं वदामः, अपितु ब्रह्मैव शरीरं सृष्ट्वा शरीरे प्राविशदिति सर्वासूपनिषत्सु तात्पर्येणोच्यते "अनेन जीवेनात्मनाऽनुप्रविश्य" इति छान्दोग्ये, "तत्सृष्ट्वा तदेवानुप्राविशत्" इति तैत्तिरीये, "एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इत्यैतरेयके, "स एष इह प्रविष्ट आनखाग्रेभ्यः" इति बृहदारण्यके इति। न च जीवस्य पृथक् प्रवेशो वा पूर्वमेव तत्र स्थितिर्वा उच्यते। येन जीवोऽन्यः स्यात्। अपि च "स एष इह प्रविष्ट" इत्युक्त्वा "स प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः" इत्यादिना तस्यैव वदनादिव्यवहारं दर्शयति। "अनेन जीवेनात्मना" इति प्रवेष्टृब्रह्माभिन्नत्वं जीवे उच्यते। तेनापि अभेदो ज्ञायते। ऐतरेये च "स एतमेव ब्रह्म ततममपश्यत्" इति प्रविष्टस्य ब्रह्मरूपत्वं वदति।

अपि च बृहदारण्यके "तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वमभवत्" इत्युक्त्वा "य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" इति अभेदो बोध्यते। तैत्तिरीयके च "स यश्चायं पुरुष यश्चासावादित्ये स एकः"

इत्यभेद उच्यते। छान्दोग्ये च "तत्त्वमसि" इति तत्तच्छङ्कामपोह्य नवकृत्वः जीवब्रह्माभेदमाह। तत्र त्वंपदार्थ जीवमुद्दिश्य तत्पदार्थब्रह्माभेदो बोध्यते। नवकृत्वः उपदेशात् तत्रैवोपनिषदस्तात्पर्यमवगम्यते। "अभ्यासे हि अर्थस्य भूयस्त्वं भवति" इत्युक्तेः।

अत्र माध्वा अतत्त्वमसीति पदं छित्वा त्वं न ब्रह्मासि इति ब्रह्मभेदो नवकृत्वो बोध्यते इत्याहुः। अत्र च जीवे ब्रह्माभेदः प्रत्यक्षः नाहं ब्रह्मेति सर्वजनसाधारण्येन प्रतीतेः। अत एव भेदबोधनपरत्वेन शास्त्रस्यापूर्वार्थत्वाभावः वैयर्थ्यं च।

विशिष्टाद्वैतिनस्तु तत्त्वमसिवाक्यस्य विशेषोपदेशपरत्वं नास्ति। त्वंशब्दस्य सम्बोध्यचेतनशरीरकं ब्रह्मैवार्थः, तच्च ब्रह्माभिन्नम्। न च त्वंपदस्य ब्रह्मपरत्वे असिपदानन्वयः; प्रथमपुरुषेण अस्तीति भाव्यमिति शङ्क्यं "छन्दसि बहुलमि"त्युक्तेः मध्यमपुरुषोपपत्तेः। अथवा त्वंपदस्य सम्बोध्यचेतनपरत्वे यो मध्यमपुरुषप्रयोगः स एव अन्तर्यामिपरत्वेऽपि साधुरिति श्रीभाष्यटीकायां समर्थितम्।

## अहं ब्रह्मास्मिवाक्यार्थः

परमात्मा स्वस्य धारकत्वात् नियन्तृत्वाच्चात्मा इत्युपास्यः यः परमात्मानं धारकत्वनियन्तृत्वादिना स्वस्मादन्यः स्वस्यात्मभूतः अहं च धार्यनियम्यभूतोऽन्यः इति वेद स देवानां पशुवद्भवति इति व्याख्यातं विशिष्टाद्वैतिभिः। अयं तु अशब्दार्थः स्वमतपरिभाषया व्याख्यातः आत्मा ह्येषां स भवति नियन्ता भवति इत्यशब्दार्थः। मध्वाचार्यस्तु अहं=अहेयं ब्रह्म=परिपूर्णम्। अस्मि=सर्वदा अस्तीति ज्ञेयम्। यदि अहं शब्दोऽस्मच्छब्दार्थवाचो अस्मिशब्दश्चोत्तमपुरुषे तदात्मानमिति व्यर्थं स्यात्। अतः अहं शब्दः अस्मिशब्दश्चोक्तार्थावेवेति व्याचक्रुः। तन्न, आत्मशब्दस्य न वैयर्थ्यम्। अहं ब्रह्मास्मीति ज्ञानाकारः तद्विषयश्च आत्मैव जीवब्रह्मणोरभेदात्। अभेदस्य च न संसर्गत्वमभेदे संसर्गाभावात् अपि तु आत्मैवाभेदः इत्यर्थं प्रकाशयितुमात्मपदप्रयोगात्। अहंशब्दस्य यथाश्रुतार्थपरित्यागः अप्रसिद्धार्थपरिकल्पनं च। ब्रह्मणः सर्वगतत्ववचनैरेवाहेयत्वसिद्धेः अहमिति व्यर्थं च। अस्मिशब्दस्य चाप्रसिद्धार्थकल्पनं दोषः।

## मुक्तस्योत्क्रान्तिविचारः

भगवत्पादमते ब्रह्मसाक्षात्कारवतः शरीरादुत्क्रान्तिर्नास्त्येव "स यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति" इत्यार्तभागप्रश्ने याज्ञवल्क्यः "अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इति श्रुतेः। अत्र भगवत्पादैः अस्मिन्नेव ब्रह्मणि लीयन्ते शरीरं तु बाह्यवायुना पूर्यते उच्छूनतां गच्छतीति व्याख्यातम्।

अत्र रामानुजीयाः प्राणाः मुक्तजीवात् नोत्क्रामन्ति तस्मिन्नेव संयुज्यन्ते न तं विहायोत्क्रामन्ति सहैवोत्क्रामन्तीत्यर्थः। न च "स उच्छ्वयति" इत्यादिना उच्छूनत्वादिविशिष्टदेहधर्मश्रवणेन देहापादनकोत्क्रमणप्रतिषेध एवायमिति शङ्कनीयम्। चतुर्थे "न तस्मात् प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति जीवादुत्क्रमणनिषेधप्रतीतेरिति व्याख्यातम्। इदमापाततः स्वमतसमर्थनाय क्लिष्टकल्पनं च। यतो हि चतुर्थे "न तस्मात्प्राणा उत्क्रामन्ति" इत्यतः पूर्वतरे खण्डे "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य इति मनः यत् ध्यायति तदेव गच्छति शरीरादुत्क्रम्येति शेषः। ततः पूर्वं "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति शरीरादुत्क्रान्तिरेव प्रकृता। तच्च कामिनः संसारिणः। तत्समाप्य अथाकामयमानः योऽकामो निष्काम आत्मकाम आप्तकामो न तस्मात् प्राणा उत्क्रामन्ति इति वचनं शरीरापादानकमेवोत्क्रमणं ब्रूयात् नात्मनः प्राणानामात्मानः सकाशात् उत्क्रान्तेः अप्रसक्तत्वात्। प्राणा अकामेन विदुषा सहैव भवन्तीत्यनुक्तिसिद्धत्वात्। अपि च ब्रह्मैव सन् इति वाक्यवैयर्थ्यं; यदि मुक्तः प्राणेन सह वैकुण्ठं गच्छतीत्यर्थे वेदतात्पर्यं तदा ब्रह्माप्येति इत्युक्त्यैव तत्सिद्धेः ब्रह्मैव सन् इति व्यर्थम्। अस्मन्मते तु विदुषो ब्रह्मरूपत्वात् ब्रह्मज्ञानेनाज्ञाननिवृत्तौ अत्रैव ब्रह्म समश्नुते। संसारदशायां प्राणाः सहैव गताः इदानीं मुक्तस्य गमनाभावात् ते अत्रैव विलीयन्ते इत्यर्थः स्वरसः। अत एव काण्वपाठो न तस्य प्राणा उत्क्रामन्तीति माध्यन्दिनपाठेऽपि तस्मात् शरीरादित्यर्थः। मुक्तस्योत्क्रान्तिः मध्वमतेऽपि समाना।

## अन्यानि महावाक्यानि

ऋग्वेदीयमहावाक्यं "प्रज्ञानं ब्रह्म" इत्यैतरेयके श्रूयते, तत्र च "संज्ञानमाज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मनीषा" इत्यादिना पूर्वमन्तःकरणवृत्तीरनुक्रम्य "सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ती"त्युक्तम्। "यथा स प्राणन्नेव प्राणो नाम भवति वदन् वाक्" इति बृहदारण्यके तथा तत्तदन्तःकरणवृत्तिवाचकाः शब्दाः तत्तद्वृत्तिविशिष्टान्तःकरणोपहिते जीवे प्रयुज्यन्त इति पर्यवसितम्। प्रज्ञानस्य नामधेयानि इत्युक्तेः प्रज्ञानं न केवलं मनोवृत्तिः, अपितु तादृशवृत्तिप्रकाशः स्वप्रकाशः आत्मा वृत्तीनां जडत्वात्। उत्तरत्र "एष ब्रह्मैष इन्द्र" इत्यादिना तत्तज्जीवानां परामर्शात्। तथा च ब्रह्मादिस्तम्बपर्यन्तस्यात्रानुक्रान्तस्य जीवस्य नाम प्रज्ञानमिति प्राप्तम्। ततः प्रज्ञानं ब्रह्मेतिवाक्यं सर्वजीवानां ब्रह्माभेदं बोधयति। अतः इदमेव महावाक्यं ऋग्वेदीयम्। फलं च "अमृतः समभवदि"त्युक्तो मोक्षः। "अस्माल्लोकादुत्क्रम्ये"ति शरीरादिषु आत्मभावं परित्यज्येत्यर्थः, न तु तस्योत्क्रान्तिः "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति बृहदारण्यके दर्शनात्।

"स जातो भूतान्यभिव्यैख्यत्" इत्यादिना शरीरान्तः प्रविष्टो जीवो भूतानि विचारयामासेति त्वंपदार्थशोधनमुक्त्वा "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इत्यनेन तस्य शोधितजीवस्य ब्रह्माभेदं दर्शयति इति जीवब्रह्मैक्यबोधकमिदमपि महावाक्यमेव।

अत्र रामानुजीयाः—स जीवः एतमेव जीवशरीरकं पुरुषं वासुदेवं ब्रह्मापश्यत् नारायणमेव ब्रह्मभूतं ज्ञातवानित्यर्थः इति व्याचक्रुः। तदिदमशब्दार्थविवरणं श्रेयोमार्गविघातकम्। नारायणो ब्रह्मेत्येतदपेक्षया अत्र तत्त्वान्तरानुक्तेः तस्य च पुरुषसूक्तेनैव सिद्धेः। ब्रह्मैव शरीरे प्रविष्टं स्वस्वरूपं विस्मृत्य संसारे निमग्नं पुनः विचारात् गुर्वनुग्रहात् आत्मानं ब्रह्मेति विज्ञातवदित्यर्थस्य स्पष्टतयोपलभ्यमानस्य प्रच्छादनेन लोकस्य श्रेयोमार्गविघातः।

एवं प्रज्ञानं ब्रह्मेत्यस्य पूर्वं एष ब्रह्मैष इन्द्र इत्यादिना सर्वेषां जीवानां प्रज्ञानपदवाच्यत्वमुक्त्वा तस्यैव जीवस्य प्रज्ञानं ब्रह्मेत्यभेदे स्पष्टे एष ब्रह्मैष इत्यादयो ब्रह्मशरीरभूताः सर्वान्तर्यामी प्रज्ञानपदवाच्यः ब्रह्मेत्यर्थः इति ब्रुवन्ति। स्पष्टमिदमपि स्वारसिकार्थप्रच्छादनमेव।

एवं तैत्तिरीयके "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति महावाक्यं आध्यात्मिकोपाधिगतस्य जीवस्य आधिदैविकोपाधिगतस्येश्वरस्य च एकत्वोपदेशात्। ऐक्यं तूभयत्रोपाध्यंशपरित्यागेन बाच्यमिति स्पष्टमेव विशिष्टयोरभेदायोगात्।

अत्रापि विशिष्टाद्वैतवादिनः पुरुषस्य नरस्य हृदयाकाशे उपास्यमानः कीदृशविग्रहविशिष्ट इति जिज्ञासायां आदित्यान्तः उपास्यो यः हिरण्यश्मश्रुत्वादिविशिष्टः परमात्मा स एवेत्यर्थः इति व्याचक्रुः। अत्रेयमनुपपत्तिः सर्ववेदान्तप्रत्ययन्यायेन परमात्मा सर्वत्र विद्यते तत्तद्गुणविशिष्ट इति ज्ञानसम्भवात् व्यर्थमिदं वाक्यं तन्मते। अस्माकं तु जीवब्रह्मैक्यं तत्फलं च अस्माल्लोकात्प्रेत्येत्यारभ्य आनन्दमयान्तस्योपसंक्रमणेन तत्तदात्मभावनिराकरणेन स्वरूपावस्थानलक्षणं मोक्षं च प्रतिपादयत् शास्त्रं महावाक्यफलमिति। "अशरीरं शरीरेषु" "अशब्दमस्पर्शमरूपमव्ययं" "अस्थूलमनणु" इत्यादौ भगवतः अशरीरत्वमुक्तम्। तद्विरुद्धमेतेषां ईश्वरस्य सशरीरत्ववर्णनं "यस्य पृथिवी शरीरमि"त्यादौ समस्तस्य प्रपञ्चस्य भगवच्छरीरत्वं नियाम्यत्वगुणयोगात् गौणम्।

ईशावास्ये "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्येकत्वज्ञानात् शोकमोहोपलक्षितसंसारनाश इत्युक्तम्। अत्रैकत्वं निष्प्रपञ्चं जीवाभिन्नं ब्रह्मैव "द्वितीयाद्वै भयं भवति" इति तद्ब्राह्मण एव द्वितीयवत्ताज्ञानस्य संसारजनकत्वोक्तेः। न च ब्रह्मैकमिति ज्ञानान्मोक्षः कस्यापि मते इष्यत इत्यतोऽद्वैतपरमिदं वाक्यम्। "यस्मिन् सर्वाणि भूतानि" यस्मिन् काले आत्मनि सर्वाणि भूतानि सर्वे जीवा एकं भवन्ति, जडप्रपञ्चश्चात्मव्यतिरेकेण नास्तीति दृष्ट इत्यर्थः। "आत्मैवाभूदि"ति विधेयप्राधान्येनैकवचनं द्रष्टव्यम्। चैत्यं हि यत्सा प्रकृतिर्जलस्येति तु विधेयप्राधान्य एव स्त्रीलिङ्गनिर्देश इति भेदः। तत्रैव "योऽसावसौ पुरुषः सोऽहमस्मी"ति आदित्यान्तर्गतपरमात्मनो जीवाभेदपरं

वाक्यम् । रामानुजीयास्तु—अहं = मदन्तर्यामी परमात्मेत्यर्थ इत्याहुः । तन्न, तथासति अस्मीत्युत्तमपुरुषानन्वयात् । माध्वास्तु—योऽसौ विष्णुः मुख्यप्राणेऽस्तीति शेषः सोऽहमहेय इत्यर्थः । इदं तु "य एव लौकिकाः शब्दास्त एव वैदिकाः त एव तेषामर्था" इति सिद्धान्तविरुद्धम् । एवं काठके "यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति मन्त्रे माध्वैः य एवावताराख्यकृष्णशरीरे विष्णुः स एव वैकुण्ठवासीत्यर्थः इत्युक्तम् । तदयुक्तम्, अवतारशरीरे विष्णुरस्ति न वा ? अस्ति चेत् येन प्रमाणेन भारतादिना अस्तित्वमवगतं तेनैव वैकुण्ठस्थविष्णुरेवात्र क्रीडतीत्यवगमात् विष्ण्वन्तरस्याप्रसिद्धत्वात् वाक्यवैयर्थ्यम् । रामानुजीयैः विष्णौ अवयवादिभेदं गुणभेदञ्च ये पश्यन्ति मृत्योर्मृत्युं प्राप्नुवन्तीत्यर्थ इत्युक्तम् । तन्न, "निष्कलं निष्क्रियमि"त्यनेनैव तत्सिद्धेः वाक्यवैयर्थ्यात् । अपि च गुणावयवादिभेददर्शनमात्रस्य संसारहेतुत्वे तदपनयाय तदभेददर्शनमेवालं न तु श्रवणमननादीत्यापतेत् । अल्पदोषस्य संसारहेतुत्वे अनौचित्यं च ।

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य" इति मन्त्रे जीवे ईश्वराभेद उच्यते । यत्तु तस्येश्वरपरत्वमङ्गुष्ठमात्रत्वस्य हृदयस्थानापेक्षयेति "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति सूत्रात् इति । तन्न, यथाश्रुतमर्थमादाय हृद्यपेक्षयेति सूत्रम् । अङ्गुष्ठमात्रस्येश्वराभेदः स्वरसः उत्तरत्र "तं विद्यात् शुक्रममृतमि"त्यादिस्वारस्यात् । अत्रेशान इत्युक्तेः व्यासाभिमतसगुणं ब्रह्म शिव एव तत्रेशानशब्दरूढेः । न च भूतभव्यस्येति सम्बन्ध्युपादानाद्योग एव न रूढिरिति वाच्यम्, सम्बन्ध्युपादानेऽपि रूढ्युन्मेषस्यानिवार्यत्वात् । अपि च "कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये" इत्यत्र पिनाकपाणिपदस्य योगार्थमादाय पर्यवसानेन नियमेन शिवस्य बोधो न भवेत् इत्याशङ्क्य हरस्यापीतिविशेषणदर्शनात् अत्रापि "भूतभव्यस्येशान" इत्यनेन पर्यवसानवारणायैव ईशानपदं; तेन च रूढ्युन्मेषात् ।

अस्यां कठवल्ल्यां "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्मेति" स्वप्नावस्थजीवस्य ब्रह्माभेदबोधकम् । "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ।" इति शुद्धजीवे शुद्धब्रह्माभेदबोधने दृष्टान्तोऽपि घटते । तत्र हि शुद्धजले शुद्धजलप्रक्षेपे संसर्गिद्रव्यत्वाज्जलस्य एकमेव जलं परिशिष्यते । तत्र जलस्य सावयवत्वात् परिमाणाधिक्यं भवति । अत्र तूभयोः निरवयवत्वात् अत्यन्ताभेद इति । "चेतनश्चेतनानामि"ति बहुवचनात् जीवबहुत्वं नाशङ्कनीयं जडाः शरीरेन्द्रियादयः लोके चेतनवद्भान्ति तेषां चैतन्यं यदधीनं तत् ब्रह्मेत्यर्थः । अयःपिण्डस्य दग्धृत्वमग्न्यधीनमिति यथा । "तदेतदिति मन्यन्ते" इत्यपि जीवब्रह्मैक्यं बोधयति । अन्ते च "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ट" इति जीवमुपस्थाप्य "तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतमि"त्यनेन जीवस्य शरीरात्पृथक्करणं तस्य ब्रह्मत्वेनाधिगमनञ्च स्पष्टमेवाद्वैताभिप्रायमुपोद्बलयति । पृथक्करणञ्च पञ्चकोशविवेचनम् । अत्र स्वाच्छरीरात् इत्यत्र ब्रह्मशरीराज्जीवाद्ब्रह्म पृथक्कुर्यादिदेन जानीयादित्यर्थ इति विशिष्टाद्वैतिव्याख्या न हृदयङ्गमा स्वशब्दस्य यः पृथक्करणकर्ता तद्वाचित्वमेव । तदुक्तं शक्तिवादे गदाधरैः—"स्वशब्दस्य तत्पदघटितवाक्यार्थविशेष्यपरत्वमि"ति । अपि च तन्मते जीवेश्वरभेदज्ञानं न मोक्षसाधनमपि तु जीवजडशरीरकब्रह्मज्ञानं, ब्रह्मशरीराद्ब्रह्मणः पृथक्करणमशक्यमनुपयुक्तं च । धैर्यपेक्षावैयर्थ्यं च तन्मते । इत्थं च विशिष्टाद्वैतिभिश्च भूयान् विप्लवः कृत इति स्पष्टम् । मुण्डकोपनिषदि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "पुरुष एवेदं सर्वं" इत्यनेनोपपादयति । तत्र पुरुषः सर्वमिति बाधायां सामानाधिकरण्यं तेन पुरुषव्यतिरेकेण प्रपञ्चाभावबोधनात् पुरुषस्याधिष्ठानत्वबोधनेन च पुरुष एव प्रपञ्चतत्त्वमित्यवगमात् पुरुषज्ञानेन प्रपञ्चस्य तत्त्वतो ज्ञानं भवतीत्याविष्कृतं भवति ।

## एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा

छान्दोग्यषष्ठे श्रूयते "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती"त्यादि । मुण्डकेऽपि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति । मैत्रेयीब्राह्मणद्वयेऽपि—"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि"ति । भगवद्गीतासु—"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते" इति । अस्य विवरणरूपेण छान्दोग्यवाक्यं "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति । अस्यायं निष्कृष्टोऽर्थः ब्रह्मविज्ञानेन सर्वं तत्त्वतो ज्ञातं भवति ।

ब्रह्मज्ञानेनेत्यभेदे तृतीया अभेदस्य च विज्ञातमित्यत्र विज्ञाने अन्वयः तथा च ब्रह्मज्ञानाभिन्नं तत्त्वतो ज्ञानं स्वीयतत्त्वज्ञानाभिन्नज्ञानविषयब्रह्मकं सर्वमिति पर्यवसितार्थः। "येनाश्रुतं श्रुतं भवती"त्यस्य यदभिन्नश्रुत-व्यतिरिक्तस्वीयतात्त्विकरूपशून्यमित्यर्थः। मुण्डकादावेवं विवरणाभावेऽपि "पुरुष एवेदं विश्वमि"ति दृश्यते। मैत्रेयीब्राह्मणे—"आत्मैवेदं सर्वमि"ति उभयत्रापि बाधायां सामानाधिकरण्यं श्रुत्याऽभिप्रेतं ब्रह्मव्यतिरेकेण प्रपञ्चो नास्ति। अतः प्रपञ्चस्य ब्रह्मैव तात्त्विकं रूपमतः ब्रह्मविज्ञानेन प्रपञ्चस्तत्त्वतो ज्ञातो भवति। सुवर्णविकाराणां सुवर्णोपादानकत्वज्ञानेन ज्ञानवत् विकाराणामनृतत्वात् तज्ज्ञानमज्ञानमेव। अतो विकाराणां प्रत्येकं ज्ञानाभावे न दोषः।

एवं तत्र तत्र मतान्तरपरिशीलनं टिप्पण्यां द्रष्टव्यम्। मतान्तरविमर्शो न परदूषणाभिप्रायेण। अपितु भगवदवतारभूतानां द्वात्रिंशद्वर्षमध्येऽमानुषकार्यकृतां भगवत्पादानां श्रुत्यनुसारि ऋजु शिवविष्ण्वादिपक्षपातरहित-मन्यतरद्वेषरहितं व्याख्यानमादरणीयं श्रेयस्कामैरित्यभिप्रेत्येति सर्वं समञ्जसम्।

महदिदं प्रमोदस्थानं पण्डितमण्डलस्य यत् काशीस्थश्रीदक्षिणामूर्तिपीठाधीश्वराणां महामण्डलेश्वराणां श्रीमन्महेशानन्दगिरिमहाराजानामाज्ञया संस्थापितेन महेशानुसन्धानसंस्थानेन प्रकाश्यमानायाः अद्वैतग्रन्थरत्न-मञ्जूषायाः एकविंशतितमे रत्ने ईशाद्युपनिषदष्टकस्य समुपलभ्यमानटीकाभिस्सह श्रीमच्छङ्करभगवत्पादाचार्य-प्रणीतं भाष्यं पुनस्संस्कृत्य प्रकाशितम्। अस्मिन् संस्करणेऽयं विशेषः यत् माण्डूक्योपनिषद्भाष्यस्य श्रीमदनुभूति-स्वरूपाचार्यकृता अमुद्रितपूर्वा टीका श्रीमदानन्दगिर्याचार्यस्य मार्गप्रदर्शिनी संयोजितेति। अपि च श्रीदक्षिणामूर्तिमठस्थः सटीकभाष्यस्य लिखितग्रन्थकोशः सम्वादायावलोकितः बहुषु स्थलेषु समीचीनपाठसूचनेन साहाय्यमकरोत्। अपि च टिप्पण्यामुपनिषद्वाक्यानां मतान्तरीयव्याख्याऽत्र सम्यग्विमृष्टा वर्तते, येन भगवत्पादीयव्याख्याया आर्जवं सौष्ठवं च सूर्यप्रकाशवद्विद्योतते। अन्यच्च तत्तदुपनिषद्वाक्यानां तात्पर्यनिर्णायकानि ब्रह्मसूत्रभाष्यस्थान्याधिकरणानि लेशेनात्र सूचितानीति।

अत्र ग्रन्थसंशोधनादिना कठिनतरेऽस्मिन् समारम्भेऽत्यन्तश्रद्धया बहूपकृतवतां श्रीशारदानन्दशास्त्रि-महोदयानां तथा साहित्यवेदान्ताचार्यश्रीवंशपतिद्विवेदिमहोदयानां च कार्तज्ञ्यं प्रकाश्य तेषां सप्रमोदं धन्यवादान् समर्पयामि।

तथा च देववाणीमुद्रणालयस्य प्रभवः संस्कृतैकानुरागिणः श्रीरवीन्द्रनाथद्विवेदिमहोदयाः सोद्योगं विशेष-परिश्रमपुरस्सरमल्पीयसैव कालेनेदं मुद्रितवन्तः। तेभ्यो बहुशो धन्यवादा भवन्त्विति।

विदुषां वशंवदः
**एस. सुब्रह्मण्यशास्त्री**
महेशानुसन्धानसंस्थाननिदेशकः

# विषयसूचिका

## १. ईशावास्योपनिषत्


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| ईशावास्यमित्यादिमन्त्राणां कर्मस्वविनियोगनिरूपणम् । | भा० | १ |
| ईशावास्यमितिपदमेव जीवब्रह्मैक्यबोधकम् । | भा० | ३ |
| एतन्मन्त्रस्य मतान्तरीयविवरणपर्यालोचनम् । | ,, | ३ |
| कुर्वन्नेवेतिमन्त्रेण ज्ञाननिष्ठायामसमर्थस्य कर्मवि..ानं न तु ज्ञानिनः । | भा० | ५ |
| ब्रह्मस्वरूपनिरूपणम् । | ,, | ६ |
| आत्मैकत्वज्ञानान्मोक्षः । | ,, | ७ |
| उपासनाकर्मणोस्समुच्चयः । | ,, | ९ |
| विद्यां चाविद्यां चेतिमन्त्रे मतान्तराभिप्रायाः । | भा० | ११ |
| सम्भूतिं च विनाशं चेति मन्त्रार्थविमर्शः । | ,, | १२ |
| योऽसावसौ पुरुषस्सोऽहमिति महावाक्यार्थः । | ,, | १३ |
| अत्रमतान्तराणि । | भा० | १३ |
| विद्यां चाविद्यां चेत्यस्य ज्ञानकर्मसमुच्चयतात्पर्यनिराकरणम् । | भा० | १५ |


## २. केनोपनिषत्

### पदभाष्यम्

प्रथमः खण्डः १७–२४


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| अस्या उपनिषदः कर्मकाण्डेन सम्बन्धः । | भा० | १८ |
| केनेषितमन्त्रेण शिष्यप्रश्नः तत्तात्पर्यं च । | ,, | १९ |
| मन्त्रकृतसमाधानस्य तात्पर्यनिरूपणम् । | ,, | २० |
| ब्रह्मणः इन्द्रियागोचरत्वम् । | ,, | २१ |
| ब्रह्मणो विदिताविदितान्यत्वे तात्पर्यम् । | ,, | २२ |


द्वितीयः खण्डः २४–२९


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| अहं ब्रह्म सुवेदेति शिष्यभ्रान्तिनिवारणं सम्यग्ज्ञानेन शिष्यस्य गर्जनं च । | भा० | २४ |
| प्रतिबोधविदितमितिमन्त्रव्याख्या । | ,, | २७ |
| आत्मनः ज्ञानविषयत्ववादिमतनिराकरणम् । | ,, | २८ |


तृतीयः खण्डः २९–३१


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| ब्रह्मण अलौकिकज्योतिरूपेण देवेष्वाविर्भावः तत्कथायास्तात्पर्यं च । | भा० | २९ |
| अग्निवाय्वोर्ब्रह्मणा संवादः प्रत्यागमनं च । | मू० | ३० |
| इन्द्रेण देव्या उमाया उपदेशेन ब्रह्मसाक्षात्कारः । | ,, | ३१ |


चतुर्थः खण्डः ३१–३४


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| मन्दाधिकारिणामनुग्रहाय ब्रह्मोपासनविधिः । | भा० | ३२ |
| ज्ञानाङ्गसत्यादिविधिः । | ,, | ३४ |

### वाक्यभाष्यम्

प्रथमः खण्डः ३५–४२


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| केनोपनिषद्वाक्यभाष्यारम्भः । | भा० | ३५ |
| वाक्यभाष्यरचने भाष्याकाराशयः । | भा० | ३५ |
| कर्मकाण्डेनास्य सम्बन्धकथनम् । | भा० | ३६ |
| प्रवृत्तिलिङ्गाधिगतस्य चेतनस्य विशेषप्रश्नः केनेति । | ,, | ३७ |
| श्रोत्रस्य श्रोत्रमित्यादेः निर्विकारस्यात्मनः प्रवर्तकत्वे तात्पर्यम् । | ,, | ३८ |
| सर्वथापि ब्रह्मबोधयेत्युक्ते–अन्यदेवेत्यादिना प्रतिवचनम् । | ,, | ३९ |
| यद्वाचेति मन्त्रानुवादः दृढप्रतीतेः । | ,, | ४१ |
| द्वितीयः खण्डः ४२–४५ | | |
| यदि मन्यस इति शिष्यबुद्धिविचालना स्थैर्याय । | भा० | ४२ |
| नाहं मन्य इति शिष्यस्य दृढप्रतीतेः । | ,, | ४३ |
| बोधावभासप्रत्यगात्मतया वेदनं प्रतिबोधेत्यादिमन्त्रार्थः । | ,, | ४१ |
| तृतीयः खण्डः ४६–५२ | | |
| ईश्वरसिद्धये अनुमानं भाष्योक्तम् । | भा० | ४६ |
| अनुमाने पक्षसाध्यहेतुघटकदलानां सार्थक्यनिरूपणम् । | ,, | ४८ |
| भेदवादिनां मतनिराकरणम् । | ,, | ५० |
| चतुर्थः खण्डः ५२–५४ | | |


## ३. काठकोपनिषत्

### प्रथमोऽध्यायः

प्रथमा वल्ली ५५–७२


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| उपनिषच्छब्दार्थनिर्वचनम् । | भा० | ५६ |
| पित्रा नचिकेतसः यमं प्रति प्रेषणम् । | ,, | ६० |
| यमदर्शनं यमेन वरत्रयोपच्छन्दनं पितृसौमनस्य प्रार्थनम् । | ,, | ६३ |
| नाचिकाग्निचयनोपदेशप्रार्थनं तदुपदेशश्च । | ,, | ६५ |
| येयं प्रेत इतिप्रश्नस्य मुक्तात्मविषयत्ववादिमतात्तरोपपादनं तद्विमर्शश्च । | टि० | ६७ |
| यमेन वरान्तरं वरयेति प्रार्थनं नचिकेतसा आत्मस्वरूपप्रश्न एव निर्भरप्रकाशनम् । | ,, | ६९ |
| द्वितीया वल्ली ७३–८८ | | |
| नचिकेतसः बुद्धिमत्ताप्रशंसा यमेन । | टि० | ७५ |
| आत्मनः केवलोपदेशगम्यत्वं नानुमानैः | ,, | ७८ |
| यद्वात्मस्वरूपस्य शुद्धस्य ज्ञानं मोक्षहेतुः तदेव ब्रूहीति अन्यत्र धर्मादित्यादिना प्रश्नः । | ,, | ८१ |
| प्रणवे ब्रह्मोपासनोपदेशः । | ,, | ८३ |
| आत्मस्वरूपकथनम् । | ,, | ८४-८८ |
| तृतीया वल्ली ८९–९९ | | |
| रथिरथादिरूपककल्पनया आत्मद्वयकल्पनं तेन जीवस्य ब्रह्मप्राप्त्युपपादनम् । | टि० | ९१ |
| ब्रह्मसंसदि श्राद्धकाले वा नचिकेतोपाख्यानश्रावकस्य ब्रह्मलोकावाप्तिः । | ,, | ९९ |

## द्वितीयोऽध्यायः

### प्रथमा वल्ली. १००–१०७


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| जनानां बहिर्मुखत्वमेव मृत्युवशताकारणं विषयविमुखानां तु ध्रुवममृतत्वम्। | टि० | १०१ |
| आत्मनो विभुत्वं स्वप्नजागरितद्रष्टृत्वं गुहाहितत्वं च। | „ | १०२ |
| आध्यात्मिकाधिदैविकोपाध्योः एक एवात्मेति निरूपणम्। | „ | १०४ |
| उपाधिना अङ्गुष्ठमात्रस्य जीवस्य ब्रह्माभेदकथनम्। | „ | १०६ |


### द्वितीया वल्ली १०८–११५


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| शरीरं पुरसदृशं पुरं; तत्स्वामिनो जीवस्य ध्यानाद्यनुष्ठानं शोकनिवर्तकम्। | टि० | १०८ |
| आत्मनः शरीरधारकत्वादिगुणाः। | „ | १०९ |
| जागरादिद्रष्टुरेव ब्रह्मत्वम्। | „ | १११ |
| अन्तरात्मनो दर्शनादेव सुखम्। | „ | ११३ |
| आत्मनः स्वयंज्योतिष्ट्वं तद्भासा सूर्यादीनां प्रकाशश्च। | „ | ११५ |


### तृतीया वल्ली ११६–१२६


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| संसारस्य वृक्षत्वेन रूपणं, विस्तरेण वृक्षसादृश्यप्रतिपादनञ्च। | भा० | ११६ |
| जीवलोकेऽत्रैवात्मदर्शनस्य सुलभत्वम्। | „ | ११८ |
| आत्मन इन्द्रियगोचरत्वं ध्यानलभ्यत्वं च। | „ | १२० |
| आत्मनास्तिकानां आत्मदौर्लभ्यम्। | „ | १२२ |
| मुञ्जादिषीकामिव शरीरादेरात्मानं पृथक् कृत्वा तं ब्रह्मेति विद्यात्–इत्युपदेशसारः। | „ | १२५ |


## ४. मुण्डकोपनिषत्

### प्रथमं मुण्डकम्

#### प्रथमः खण्डः १२७–१३४


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| ब्रह्मविद्यास्तुतये ब्रह्मादीनां अङ्गिरःपर्यन्तानां ब्रह्मविद्यासम्प्रदाय-कर्तॄणामनुक्रमणम्। | भा० | १२७ |
| कस्मिन्विदिते सर्वं विदितं भवतीति प्रश्नः भाष्ये तदौचित्यप्रदर्शनं च। | „ | १३० |
| अपरविद्यानां ऋग्वेदादीनामनुक्रमणम्। | „ | १३१ |
| परविद्याविषयं निर्गुणं ब्रह्म प्रतिपद्यते। | „ | १३२ |
| अचेतनप्रपञ्चस्य चेतनात् सृष्टौ दृष्टान्तः। | „ | १३३ |


#### द्वितीयः खण्डः १३५–१४०


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| कर्मानुष्ठानस्यावश्यकत्वं कर्मफलं स्वर्गं च विस्तरेणोक्त्वा तस्य नश्वरत्वमाह। | भा० | १३७ |
| ब्रह्मज्ञानाय ब्रह्मवित्समीपं गच्छेत्। | „ | १३९ |


### द्वितीयं मुण्डकम्

#### प्रथमः खण्डः १४१–१४५


| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| परविद्याया विस्तरेण निरूपणारम्भः। | भा० | १४१ |
| जगत्सृष्टिवर्णनम्। | „ | १४२ |
| पुरुष एवेदमित्यादिना एकविज्ञानेन सर्वविज्ञाननिरूपणम्। | „ | १४४ |

द्वितीयः खण्डः १४६–१५०


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| प्रणवसहायेन तदुपासनेन जीवस्य ब्रह्मणि योजनम् । | .... | मू० भा० | .... | १४७ |
| ब्रह्मविद्याफलं हृदयग्रन्थिभेदादि । | .... | ,, | .... | १४९ |
| अविद्यावासनाप्रचयस्य भाष्योक्तस्य भेदः बुद्धौ विद्यमानायां उत तन्नाशानन्तरमिति विचारः । | .... | आ० | .... | १४९ |


तृतीयं मुण्डकम्

प्रथमः खण्डः १५१–१५६


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| जीवेश्वरयोः एकशरीरवृत्तिपक्षिरूपेण वर्णनं जीवस्य कर्मफलभोगः संसारः । | .... | आ० | .... | १५१ |
| परमात्मदर्शनेन तत्साम्यप्राप्तिरभेद एव । | .... | ,, | .... | १५३ |
| ब्रह्मविदुपासनेन शुश्रूषादिना अभीष्टप्राप्तिः । | .... | ,, | .... | १५६ |


द्वितीयः खण्डः १५६–१६१


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| आत्मलाभो न प्रवचनादिना, अपितु अभेदानुसन्धानेन बलाप्रमादतपोभिः । | .... | आ० | .... | १५८ |
| मुक्तस्य शरीरारम्भकभूतादीनि ब्रह्मणि लीयन्ते जीवो ब्रह्मैव भवति । | .... | ,, | .... | १५९ |
| एतद्ग्रन्थाध्ययने शिरोव्रतस्यावश्यकत्वं । | .... | ,, | .... | १६० |
| शिरोव्रतं नाम भस्मरुद्राक्षधारणमेवेति स्कान्दे सौरसंहितावचनमिति वादनक्षत्रमाला । | .... | ,, | .... | १६० |


## ५. प्रश्नोपनिषत्

प्रथमः प्रश्नः १६३–१७०


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| भारद्वाजादिषडृषीणां परब्रह्मविद्यार्थं पिप्पलादसमीपगमनम् । | .... | आ० | .... | १६३ |
| अस्याः उपनिषदः मन्त्रात्मकमुण्डकोपनिषत्प्रतिपाद्यपरापरविद्याद्वयस्य विस्तरेण प्रतिपादकत्वम् । | .... | ,, | .... | १६३ |
| प्रजानामुत्पत्तिः कुत इति कबन्धिप्रश्नः । | .... | ,, | .... | १६४ |
| प्रजापतेः संवत्सरायनमासपक्षाहोरात्राद्यात्मना अन्नभावं प्राप्तस्य रेतोरूपेण प्रजोत्पादकत्वमिति समाधानम् । | .... | ,, | .... | १६४ |


द्वितीयः प्रश्नः १७०–१७४


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| मार्गविप्रश्नः इष्टापूर्तपरस्य गतिश्रवणेन विरक्तस्यापि चित्तैकाग्र्यार्थं प्राणोपासनं विधातुं द्वितीयतृतीयप्रश्नौ । तत्रापि श्रेष्ठत्व-अत्तृत्वादि-गुणनिर्धारणार्थं द्वितीयः प्रश्नः । उपासनाविधानार्थं तृतीयः प्रश्नः । | .... | आ० | .... | १७१ |
| प्राणस्य श्रेष्ठत्वनिर्धारणमितरेषां गौणप्राणानां मुख्यप्राणस्तुतिः । | .... | ,, | .... | १७२ |
| प्राणस्योत्पत्तिः शरीरं प्रत्यागमनं तत्र स्थितिः उत्क्रमणं इत्यादिविषयप्रश्नाः । | .... | ,, | .... | १७४ |


तृतीयः प्रश्नः १७४–१७९


| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| प्राणस्यात्मनस्सकाशादुत्पत्तिः प्रतिबिम्बन्यायेन । | .... | आ० | .... | १७५ |
| इतरप्राणानां शरीरगतस्थानविशेषेषु नियोजनं अन्तकाले जीवेन यत्स्थानं स्मृतं तत्प्रतिगमनं च । | .... | ,, | .... | १७६ |

चतुर्थः प्रश्नः १८०–१८९

| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| अक्षरात्सर्वे अग्निविस्फुलिङ्गन्यायेन जायन्त इति मुण्डकोक्तस्य विस्तरानुवादी प्रश्नः। | .... | भा० | .... | १८० |
| आद्यप्रश्नेन जागरितधर्मी पृष्टः, द्वितीयेन अवस्थात्रयेऽपि शरीररक्षणं कस्य धर्मः, तृतीयेन स्वप्नधर्मी पृष्टः, चतुर्थेन सुषुप्तिधर्मी, पञ्चमेन अवस्थात्रयनिर्मुक्तं तुरीयमक्षरं पृष्टम्। | .... | ,, | .... | १८१ |
| विदुषः स्वापोऽप्यग्निहोत्रमिति सूचयितुं प्राणादिषु गार्हपत्याद्यग्नित्वरूपणं तेन विद्यास्तुतिरेव | .... | भा० | .... | १८३ |
| अत्रैष देव इत्यनेन मनसोऽनुभवितृत्वं कथमुच्यते इति शङ्कायां स्वप्ने मनसः प्राधान्यात् तस्यैव स्वप्नदर्शनमुक्तं वस्तुतः मनसो वासनायुक्तस्य स्वाप्नविषयरूपेण परिणामात् साक्षी आत्मा द्रष्टा। अत एव तस्य स्वयंज्योतिष्ट्वं स्वप्नकाले निरूपितं जागरे मनआदिज्योतिरन्तरव्यतिकरात् आत्मनः स्वयंज्योतिष्ट्वस्य दुरुपपादत्वात्। अक्षरे सुषुप्तौ सर्वे प्रतिष्ठिताः। | .... | ,, | .... | १८५ |
| तदक्षरवेत्ता सर्वज्ञः सर्वो भवति तदभेदात्। | .... | ,, | .... | १८८ |

पञ्चमः प्रश्नः १८९–१९३

| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| प्रणवस्य परापरब्रह्मरूपेणोपासनं परापरब्रह्मप्राप्तिसाधनं परं ब्रह्म शुद्धम्। अपरं हिरण्यगर्भः। | .... | भा० | .... | १९० |
| एकमात्रद्विमात्रप्रणवोपासकस्यार्वाचीनं फलमुक्त्वा सम्पूर्णप्रणवोपासकस्य ब्रह्मलोकप्राप्तिमाह। ततस्तत्र कृतब्रह्मविचारस्य निर्गुणब्रह्मभाववर्णनम्। | .... | ,, | .... | १९२ |

षष्ठः प्रश्नः १९४–२०५

| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| षोडशकलः पुरुषः क्वेति प्रश्नः इहैवास्मिन्नन्तःपुरुषे स इति समाधानं च। | .... | भा० | .... | १९४ |
| षोडशकलः पुरुषो जीवः पुरुषायणा इति तु परमात्मेतिमतान्तरविमर्शः | .... | आ० | .... | १९४ |
| नित्यचैतन्यरूप आत्मा न क्षणिकं विज्ञानमिति सिद्धान्तयितुं तन्मतनिराकरणम्। | .... | ,, | .... | १९६ |
| प्राणसृष्टिः। | .... | ,, | .... | १९९ |
| साङ्ख्यपक्षोपपादननिरासौ। | .... | ,, | .... | २०० |
| पुरुषो भोक्ता न कर्ता प्रकृतिः कर्त्री न भोक्त्रीति मतखण्डनेन आत्मनः उभयरहितशुद्धब्रह्मरूपत्वसमर्थनम्। | .... | ,, | .... | २०० |
| कलाप्रलयपूर्वकं ब्रह्मविदः ब्रह्मभावः। | .... | ,, | .... | २०५ |
| शिष्याणां गुरौ भक्तिप्रदर्शनम्। | .... | ,, | .... | २०५ |

## ६. माण्डूक्योपनिषत्

आगमप्रकरणम् २०७–

| विषयः | | ग्रन्थः | | पृष्ठाङ्कः |
|---|---|---|---|---|
| तत्पदार्थेनोपक्रम्य त्वंपदार्थे पर्यवसानेन भाष्यकारीयं प्रथममङ्गलम्। | .... | भा० | .... | २०८ |
| श्रीमदनुभूतिस्वरूपाचार्यस्य श्रीमदानन्दगिर्याचार्यस्य च मङ्गलानि। | .... | आ० | .... | २०८ |

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| अत्र विधुशेखरभट्टाचार्याभिप्रायस्य भ्रान्तिमूलत्वम् । .... | टि० .... | २०८ |
| यद्वा विधिमुखेन निषेधमुखेन च ब्रह्मप्रतिपादनमिति प्रक्रियाद्वैविध्यं श्लोकाभ्यां सूच्यते, द्वितीयश्लोकस्य लक्षणदुष्टत्वशङ्कापरिहारौ । .... | आ० .... | २०९ |
| त्वंपदार्थमुपक्रम्य तदर्थे परिसमाप्तिप्रतिपादकद्वितीयश्लोकः । .... | ,, .... | २१० |
| भाष्यकारैः अनुबन्धचतुष्टयोक्तिः । .... | भा० .... | २११ |
| ओङ्कारस्य सर्वात्मत्वप्रतिपादनम् । .... | ,, .... | २१२ |
| आत्मनः चतुष्पात्त्वेन विभजनम् । .... | ,, .... | २१८ |
| वैश्वानरस्य प्रथमपादस्य सप्ताङ्गत्वादिनिरूपणम् । .... | ,, .... | ११८ |
| अत्र मतान्तरव्याख्या तद्विमर्शश्च । .... | ,, .... | २१९ |
| स्वप्नस्थानस्य तैजसस्य तन्निरूपणम् । .... | ,, .... | २२३ |
| सुषुप्तस्थानस्य प्राज्ञस्य स्वरूपम् । .... | ,, .... | २२४ |
| प्राज्ञस्येश्वराभेदनिरूपणम् । .... | ,, .... | २२५ |
| आगमप्रकरणस्य गौडपादीयकारिकारम्भः । .... | का० .... | २२६ |
| विश्वतैजसप्राज्ञानां स्वरूपं भोगः तृप्ति इत्यादयः । .... | ,, .... | २३१ |
| सत्कार्यवादोपक्षेपः । .... | ,, .... | २३२ |
| सृष्टिविषये मदभेदाः, चतुष्पादात्मनः चतुर्थपादनिरूपणम् । .... | ,, .... | २३५ |
| तुरीयपादविषयाः कारिकाः । .... | ,, .... | २४१ |
| तुरीयस्य इतरापेक्षया वैलक्षण्यं सर्वज्ञत्वं च । .... | ,, .... | २४३ |
| प्रपञ्चमिथ्यात्वोपपादनम् । .... | ,, .... | २४४ |
| मात्राणां पादानां चाभेदध्यानविधानम् । .... | ,, .... | २४६ |
| अत्र कारिकाः । .... | ,, .... | २४८ |
| तुरीयः अमात्रः, तत्र मात्रात्रयं प्रविलाप्य तदभेदेन आत्मानं ध्यायतो ब्रह्मभावः फलम् । .... | ,, .... | २४९ |
| अस्य विवरणपराः कारिकाः । .... | ,, .... | २५१ |
| ओङ्कारस्वरूपवित् स मुनिः तस्य न शोकादयः । .... | ,, .... | २५१ |


### वैतथ्यप्रकरणम् २५२–२७८


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| ज्ञाते द्वैतं न विद्यते—इत्यागमः तदर्थस्योपपत्त्या द्रढयितुं वैतथ्यप्रकरणम् । .... | आ० .... | २५२ |
| प्रपञ्चो मिथ्या दृश्यत्वात् स्वाप्नपदार्थवत् इत्यनुमानं वक्तुमादौ दृष्टान्तस्य मिथ्यात्वं साधयति । .... | ,, .... | २५३ |
| स्वाप्नपदार्थमिथ्यात्वे हेतुः अन्तःसंवृतस्थानत्वात् इति । .... | ,, .... | २५३ |
| विमतं मिथ्या आद्यन्तवत्त्वात् स्वप्नवत् इत्यनुमानम् । .... | ,, .... | २५६ |
| प्राणादिभिरनन्तैर्विकल्पैरात्मा विकल्प्यते तत्सर्वं देवस्य माययेत्याह । .... | ,, .... | २६४ |
| प्रपञ्चमिथ्यात्वनिरूपणस्य फलं न निरोध इति श्लोकेन शुद्धब्रह्मप्रतिपत्तिः । .... | ,, .... | २७१ |
| द्वैताभावे शून्यवादप्रसक्तिरिति पूर्वपक्षः । .... | ,, .... | २७२ |
| शास्त्रस्यारोपितसुखित्वादिनिवर्तनपरत्वं न स्वरूपे । भ्रमनिवृत्तौ स्वरूपेणावस्थानं मोक्षः । .... | ,, .... | २७३ |
| अविकल्पितरज्ज्वंशवत् विकल्पयितृपुरुषवच्च आत्मसत्यत्वम् । .... | ,, .... | २७४ |
| अत्र सिद्धं तु निवर्तकत्वादिति द्रविडाचार्यसूत्रं प्रमाणयति । .... | ,, .... | २७४ |

| विषय। | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| नानाभूतं द्वैतं किमात्मतादात्म्येन सिद्ध्यति उत स्वातन्त्र्येणेति विकल्प्य खण्डनं । .... | अनु० .... | २७६ |
| अद्वैतं प्राप्तस्य योगिनः लोकव्यवहारः । .... | " .... | २७८ |
| **अद्वैतप्रकरणम् २८०–३१२** | | |
| अजातिवादस्य निरूपणीयत्वप्रतिज्ञा । .... | आ० .... | २८१ |
| घटाकाशादिवत् अवच्छिन्नः परमात्मा जीवः अतो न तस्य जन्म । .... | " .... | २८२ |
| पुरुषभेदकल्पनायां प्रमाणाभावः । .... | " .... | २८४ |
| आत्ममनः संयोगानुपपत्तिः द्रव्यगुणादीनां भेदानुपपत्तिश्च । .... | " .... | २८५ |
| तैत्तिरीयब्रह्मवल्ल्याः परब्रह्मात्मपरत्वम् । .... | " .... | २९० |
| मधुब्राह्मणस्य जीवपरैक्यपरता । .... | " .... | २९० |
| जीवपरभेदवाक्यानां अभेद एव तात्पर्यं भेदस्य स्वाभाविकत्वेना-शास्त्रार्थत्वात् । .... | " .... | २९२ |
| सृष्टिवाक्यानां जीवब्रह्माभेदे तात्पर्यम् । .... | " .... | २९४ |
| उपासनानां मन्दबुद्ध्यनुग्रहार्थता । .... | " .... | २९५ |
| द्वैतिनां परस्परं कलहेऽपि अद्वैतिनः कुत्रापि कलहो नास्ति सर्वाविरुद्धोऽयं समयः । .... | " .... | २९७ |
| सम्भूतिं च विनाशं चेति वाक्यमर्थान्तरे योजयति । .... | " .... | ३०१ |
| स एष नेतिनेतीत्यस्य द्वैतनिषेधपरत्वम् । .... | " .... | ३०३ |
| अस्पर्शयोगेऽस्मिन् न भेतव्यम् । .... | " .... | ३११ |
| मनोनिग्रहोपायकीर्तनम् । .... | " .... | ३१२ |
| **अलातशान्तिप्रकरणम् ३१७–३६२** | | |
| अस्पर्शयोगनमस्कारः । ... | आ० .... | ३१८ |
| आरम्भपरिणामवादयोः परस्परदूषणेन उभयोरप्ययुक्तत्वनिश्चयाद्द्वैतस्य परमार्थतानिश्चयः । .... | " .... | ३१९ |
| सांख्यमतदूषणम् । .... | का० .... | ३२१ |
| कार्यकारणभावानुपपत्तिप्रदर्शनम् । .... | " .... | ३२३ |
| सच्चेन्न जायत इतिपक्षस्य विस्तरः । .... | अनु० .... | ३२७ |
| प्रपञ्चस्य सत्यत्वं, शब्दादिज्ञानस्य सनिमित्तत्वात् सुखाद्युपलब्धेश्चेति पूर्वपक्षः । .... | " .... | ३२८ |
| अस्य निराकरणम् । .... | " .... | ३२९ |
| चित्ताख्यस्य ब्रह्मणः विषयासम्बन्धः नित्यता च । .... | " .... | ३३१ |
| जगन्मिथ्यात्ववादे जन्माद्यस्य यत इत्यादि जगदुत्पत्तिहेतुत्वपरं सूत्रमनुपपन्नमिति न। मन्दबुद्धीनामजातेः त्रसतां श्रोत्रियाणां कृते तत्प्रणयनात् । .... | " .... | ३३७ |
| अलातगत ऋजुवक्रादिभाववदेव चैतन्यस्य ग्रहणग्राहकाभासता । .... | " .... | ३३९ |
| हेतुफलाविशसद्भाव एव हेतुफलसत्त्वं नान्यदा अतस्तदाग्रहस्त्याज्यः । .... | " .... | ३४३ |
| तत्त्वानुभूतिः प्रमेति उदयनलक्षणनिरासः । .... | अनु० .... | ३४६ |
| केवलव्यतिरेक्यनुमानं लक्षणमिति उदयनमतदूषणं । .... | " .... | ३४६ |

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| षड्पदार्था इत्युक्तेरनुपपत्तिः । | अनु० | ३४८ |
| अनिमित्ततासत्या चेत् कथं चित्तप्रवृत्तिः ? | ,, | ३५१ |
| ब्राह्मणानां प्राप्यं कैवल्यपदमेव । | ,, | ३५३ |
| हेयज्ञेयाप्यवाक्यानां विज्ञेयत्वनिरूपणम् । | ,, | ३५५ |
| वेदान्तदर्शनमिदं बुद्धेन न ज्ञातम् । | ,, | ३५९ |
| मूलकर्तुः ब्रह्माभेदचिन्तनम् । | ,, | ३६० |
| भाष्यकर्तुर्ब्रह्माभेदचिन्तनम् । | मू० | ३६० |
| भाष्यकर्तुः परमगुरुवन्दनम् । | भा० | ३६१ |
| भाष्यकर्तुः गुरुवन्दनम् । | ,, | ३६२ |


## ७. तैत्तिरीयोपनिषत्

### शीक्षाध्यायारम्भः ३६३–४३८


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| मङ्गलम् । उपोद्घातः । कर्मोपासनहेतुपरिहाराय ब्रह्मविद्यारम्भः । | भा० | ३६५ |
| ऐकभविकमतं तन्निरासश्च शन्नो मित्र इत्यादि शान्तिमन्त्रव्याख्या । | ,, | ३७१ |
| तैत्तिरीयभाष्यवार्तिकारम्भः । | वा० | ३७३ |
| वार्तिककारीयमङ्गलम् । | ,, | ३७३ |
| ऐकभविकभाष्यवार्तिकम् । | ,, | ३७५ |
| शान्तिमन्त्रवार्तिकम् । | ,, | ३७८ |
| शीक्षाध्यायभाष्यं तद्वार्तिकं च । | | ३८१ |
| संहितोपनिषद्भाष्यं । | ,, | ३८२ |
| तद्वार्तिकम् । | ,, | ३८६ |
| मेधाकामस्य जप्या मन्त्राः श्रीकामस्य होमार्थाश्च मन्त्राः । | ,, | ३८८ |
| तद्वार्तिकम् । | ,, | ३९२ |
| व्याहृत्यात्मनो ब्रह्मणः अन्तरुपासनं स्वाराज्यफलाय विधीयते तद्भाष्यम् । | ,, | ३९८ |
| तद्वार्तिकम् । | , | ४०० |
| पूर्वोक्तोपासनस्य स्थानं फलं च तत्प्राप्तये मार्गश्च । | ,, | ४०२ |
| अत्र परं ब्रह्मोपास्यमपरं वेति विचारः । | वन० | ४०५ |
| तत्रैव वार्तिकम् । | | ४०६ |
| पाङ्क्तरूपेण हिरण्यगर्भोपासनम् । | ,, | ४०८ |
| तत्र वार्तिकम् । | वा० | ४१० |
| ओङ्कारोपासनविधिः तत्प्रशंसा च । | ,, | ४११ |
| तत्रैव वार्तिकम् । | ,, | ४१३ |
| वेदाध्ययनस्यावश्यकताविधिः । | ,, | ४१४ |
| तत्रैव वार्तिकम् । | ,, | ४१६ |
| ब्रह्मविद्याप्राप्त्यर्था जप्या मन्त्राः । | ,, | ४१७ |
| तद्वार्तिकम् । | ,, | ४१८ |
| ब्रह्मज्ञानात्प्राक् कर्तव्योपदेशः | , | ४२० |
| तद्वार्तिकम् । | , | ४२५ |

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
| --- | --- | --- |
| किं कर्मभ्य एव मोक्षः उत विद्यासहितेभ्यः, विद्याकर्मभ्यां उत केवलविद्ययेति विचारः। | भा० | ४२७ |
| विद्याकर्मभ्यामिति पक्षनिराकरणम्। | " | ४३० |
| विरोधात्समुच्चयानुपपत्तिः। | " | ४३२ |
| उत्तरशान्तिमन्त्रव्याख्या। | " | ४३९ |

ब्रह्मवल्ल्यारम्भः ४४०–५८१

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
| --- | --- | --- |
| ब्रह्मविद्याप्रयोजनम्। | भा० | ४४१ |
| ब्रह्मलक्षणविवेचनम्। | " | ४४३ |
| सत्यादिशब्दानां साक्षाद्ब्रह्मणि सम्बन्धः। | " | ४४५ |
| सर्वेषामितरनिवृत्त्यर्थत्वे शून्यवादापत्तिः तन्निरासश्च। | " | ४४८ |
| फलवाक्यविवरणम्। | " | ४५३ |
| अनन्तविशेषणविवरणार्थं सृष्टिकथनम्। | " | ४५७ |
| इदमेव शिर इत्यादेः तात्पर्यम्। | " | ४५९ |
| प्रथमानुवाकवार्तिकम्। | " | ४६१ |
| यो वेद निहितमित्यादेरर्थः। | वा० | ४७३ |
| आनन्त्यस्य त्रैविध्यम्। | " | ४७५ |
| अन्नात्पुरुष इत्यस्य विस्तरेण व्याख्या। | " | ४७९ |
| गर्भस्थशिशोः विवेकोत्पत्तिः प्रलापश्च। | " | ४८१ |
| शिशोर्भूतभौतिकपीडा। | " | ४८२ |
| मरणवेदनाः। | " | ४८३ |
| कोशदशकनिरूपणम्। | " | ४८५ |
| अन्नाद्वै—इत्यादिद्वितीयानुवाकभाष्यम्। | " | ४८८ |
| द्वितीयानुवाकवार्तिकम्। | " | ४९१ |
| प्राणं देवा इति तृतीयानुवाकभाष्यम्। | " | ४९४ |
| यजुरादीनां मनोवृत्तिरूपता। | " | ४९६ |
| तृतीयानुवाकवार्तिकम्। | " | ४९९ |
| यतो वाच इति चतुर्थानुवाकभाष्यम्। | " | ५०२ |
| विज्ञानमयमधिकृत्य विशेषविचारः। | वन० | ५०३ |
| चतुर्थानुवाकवार्तिकम्। | " | ५०५ |
| विज्ञानं यज्ञं तनुत इति पञ्चमानुवाकभाष्यम्। | भा० | ५०६ |
| आनन्दमय इति कार्यात्मा उच्यते न ब्रह्म। | " | ५०७ |
| प्रियमोदादयो विषयानन्दभेदाः। | " | ५०९ |
| पञ्चमानुवाकवार्तिकम्। | वा० | ५१२ |
| असन्नेव स भवतीत्यादि षष्ठानुवाकभाष्यम्। | " | ५१६ |
| अत्र मतान्तरटीकाविमर्शः। | " | ५१७ |
| तदेवानुप्राविशदित्यत्र कथमनुप्राविशदिति विचारः। | " | ५२३ |
| तत्रोपलभ्यमानत्वमेव प्रवेश इति सिद्धान्तः। | भा० | ५२६ |
| षष्ठानुवाकवार्तिकम्। | वा० | ५३० |
| असद्वा इदमिति सप्तमानुवाकभाष्यम्। | भा० | ५३६ |

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| सप्तमानुवाकवार्तिकम् । | वा० | ५४१ |
| भीषास्मादित्याद्यष्टमानुवाकभाष्यम् । | भा० | ५४८ |
| आनन्दमीमांसाफलोपसंहारः । | ,, | ५५३ |
| कोऽयमेवंवित् कथं वा उपसंक्रामतीति विचारः । | ,, | ५५६ |
| सिद्धान्तवर्णनम् । | ,, | ५५७ |
| द्वैतपक्षे सर्वदा भयप्रसक्तिः । | ,, | ५६१ |
| मुख्योपसंक्रमणासम्भवः । | ,, | ५६३ |
| अष्टमानुवाकवार्तिकम् । | वा० | ५६६ |
| यतो वाच इति नवमानुवाकभाष्यम् । | भा० | ५७८ |
| नवमानुवाकवार्तिकम् । | ,, | ५८१ |

भृगुवल्ल्यारम्भः ५९७–६२३

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| ब्रह्मणस्तटस्थलक्षणम् । | भा० | ५९८ |
| प्रथमानुवाकवार्तिकम् । | वा० | ६०१ |
| अन्नं ब्रह्मेति द्वियीयानुवाकभाष्यम् । | भा० | ६०३ |
| द्वितीयानुवाकवार्तिकम् । | वा० | ६०५ |
| द्वितीयादिपञ्चमानुवाकान्तं मूलम् । | मू० | ६०६ |
| आनन्दो ब्रह्मेति षष्ठानुवाकभाष्यम् । | भा० | ६०७ |
| षष्ठानुवाकवार्तिकम् । | ,, | ६०९ |
| अन्नं न निन्द्यादिति सप्तमानुवाकभाष्यम् । | ,, | ६१० |
| अष्टमनवमानुवाकयोः भाष्यवार्तिके । | ,, | ६१२ |
| न कञ्चनेति दशमानुवाकभाष्यम् । | ,, | ६१४ |
| स यश्चायं पुरुषे इत्यादेः मतान्तराभिप्रायः । | ,, | ६१७ |
| दशमानुवाकवार्तिकम् । | वा० | ६२३ |


## ८. ऐतरेयोपनिषत्

### प्रथमोऽध्यायः

प्रथमः खण्डः ६३०–६४५


| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| कर्मकाण्डेन सम्बन्धविचारः । | भा० | ६२९ |
| अत्र धर्मकोशकृतामभिप्रायभेदः । | आ० | ६२९ |
| देवताप्ययः पुरुषार्थः पूर्वग्रन्थार्थः । | भा० | ६३० |
| ज्ञानिनः कर्मासम्भवात् न कर्मणि अधिकारः । | ,, | ६३१ |
| विरक्तस्य गृहस्थस्य स्वगृहे निवासोऽस्त्वितिमतं तद्दूषणं च । | ,, | ६३५ |
| मुमुक्षोरज्ञस्य संन्यास आवश्यकः । | ,, | ६३६ |
| ऋणप्रतिबन्धनिराकरणम् । | आ० | ६३७ |
| विद्यां चाविद्यां चेत्यस्य ब्रह्मविद्याकर्मपरत्वेऽपि क्रमिकसमुच्चयपरत्वाशासङ्गतिः, आत्मा वा इदमित्यादेः भाष्यम् । | ,, | ६४० |

द्वितीयः खण्डः ६४६–६४८

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| प्रथमसृष्टानां देवानां संसारसमुद्रपातः । | भा० | ६४६ |
| संसारस्य समुद्रसाम्यनिरूपणम् । | ,, | ६४६ |

| विषयः | ग्रन्थः | पृष्ठाङ्कः |
|---|---|---|
| तृतीयः खण्डः ६४९–६५५ | | |
| लोकपालानामन्नसृष्टिः । .... | भा० .... | ६४९ |
| भगवतः स्वसृष्टदेहेषु मूर्ध्नि द्वारं कृत्वा प्रवेशः । .... | ,, .... | ६५२ |
| जीवभावेन प्रविष्टस्य ब्रह्मविचारः ब्रह्मसाक्षात्कारश्च । .... | ,, .... | ६५५ |
| द्वितीयोऽध्यायः ६५६–६६७ | | |
| सीमानं विदार्य शरीरप्रवेशानुपपत्तिः विभोरात्मन इति पूर्वपक्षः । .... | भा० .... | ६५६ |
| तत्समाधानम् । .... | ,, .... | ६५६ |
| अथ आत्मनः जीवः ईशः निर्गुणं ब्रह्मेति इति पूर्वपक्षः । .... | ,, .... | ६५७ |
| आत्मनः श्रोतृत्वाश्रोतृत्वयोः विरोधोद्भावनम् । .... | ,, .... | ६५९ |
| अत्र कणादसमाधानम् । .... | ,, .... | ६५९ |
| सिद्धान्तपक्षः । .... | ,, .... | ६६२ |
| जीवस्य पितृशरीरे स्थितिः ततो मातृशरीरे प्रथमं जन्म भूमौ मातृशरीरात्पतनं द्वितीयजन्मेति कथनम् । .... | ,, .... | ६६३ |
| पितुः भावि जन्म तृतीयम् । .... | ,, .... | ६६५ |
| जीवस्य वामदेववत् विचारेण मोक्षप्राप्तिः । .... | ,, .... | ६६७ |
| तृतीयोऽध्यायः ६६८–६७५ | | |
| त्वंपदार्थशोधनम् । .... | भा० .... | ६७१ |
| तत्पदार्थशोधनम् । .... | ,, .... | ६७३ |
| प्रज्ञानं ब्रह्मेति महावाक्यार्थनिरूपणम् । .... | ,, .... | ६७३ |
| वाङ्मे मनसीत्यादेः विद्यारण्यदीपिका । .... | टि० .... | ६७५ |
| मन्त्रमाण्डूक्यकारिकावार्तिकादीनामकारादिक्रमेण सूचीपत्रम् । .... | .... | ६७९ |

ॐ

काण्वशाखीया

# ईशावास्योपनिषत्

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः

ॐ ईशा वास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥

श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम् ५

ईशा वास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्याऽऽत्मनो याथात्म्यप्रकाशकत्वात् । याथात्म्यं चाऽऽत्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम् । तच्च कर्मणा *विरुध्येतेति युक्त

श्रीमदानन्दगिर्याचार्यकृता भाष्यटीका

येनाऽऽत्मना परेणेशा व्याप्तं विश्वमशेषतः ।
सोऽहं देहद्वयीसाक्षी वर्जितो देहतद्‌गुणैः ॥ १ ॥ १०

ईशा वास्यमित्यादिमन्त्रान्व्याचिख्यासुर्भगवान्भाष्यकारस्तेषां कर्मशेषत्वशङ्कां तावद्व्युदस्यति । तथाहि— कर्मजडाः केचन मन्यन्ते स्म । ईशा वास्यमित्यादयो मन्त्राः कर्मशेषा मन्त्रत्वाविशेषादिषेत्वेत्यादिमन्त्रवत् । अतः पृथक्प्रयोजनाद्यभावादव्याख्येया इति तान्प्रत्याह—ईशा वास्यमित्यादय इति । कर्मस्वविनियुक्ता इति । [1]इषे त्वेति शाखां छिनत्तीत्यादिवद्विनियोजकप्रमाणादर्शनात्प्रकरणान्तरत्वाच्चेत्यर्थः । [2]श्रौतविनियोगाभावेऽपि 'बर्हिर्देवसदनं दामी'त्यस्य बर्हिर्लवनप्रकाशनसामर्थ्याद्बर्हिर्लवने यथा विनियोगस्तथा कर्मशेषात्मप्रकाशनसामर्थ्येन कर्मस्वेषां विनियोग इत्यपि नाऽऽशङ्कनीयमित्याह—तेषामिति । शुद्धत्वादिविशेषणस्याऽऽत्मनः कर्मशेषत्वे प्रमाणाभावात्तद्याथात्म्यं न केवलं कर्मानुपयोगि किन्तु कर्मणा विरुध्यते चेत्याह—याथात्म्यं चेति । शुद्धोऽहं स्वभावतो नाऽऽगन्तुकेनापि पाप्मना विद्धः सर्वत्रैकोऽशरीर आकाशोपम इति जानन्न कटाक्षेणापि कर्म वीक्षते । किन्त्वापातप्रतिपत्तिरप्येतादृशी[3] निरुणद्ध्येव कर्मप्रवृत्तिमित्यर्थः । किञ्च यः कर्मशेषः स उत्पाद्यो दृष्टो यथा १५

---

१. इषे त्वा इति यजुर्मन्त्रः दर्शपूर्णमासयागे गोवत्सस्य मातृसकाशादपाकरणाय शाखाच्छेदनकाले पठनीयः । सिद्धान्ते उक्तानुमाने प्रकरणस्थत्वं विनियोजकप्रमाणवत्त्वं चोपाधिरित्यभिप्रायः । २०

२. व्रीहिभिर्यजेत इत्यादौ तृतीयाश्रुत्या व्रीहीणां दर्शपूर्णमासयागे साधनत्वेन विनियोगो दृष्टः । अत्र तु विभक्त्यादिश्रुतयो न सन्ति । न च यथा 'बर्हिर्देवसदनं दामी'ति मन्त्रस्य दर्शपूर्णमासप्रकरणस्थस्य श्रुत्या विनियोगाभावेऽपि बर्हिर्लवनप्रकाशनसामर्थ्यरूपेण लिङ्गेन श्रुतिकल्पनाद्वारा विनियोग दृष्टः, तथा ईशावास्यमित्यादिमन्त्राणां कर्माङ्गभूतकर्तृस्वरूपप्रकाशकत्वात् तेन सामर्थ्येन सर्ववैदिककर्मसु तेषां विनियोगो भवतु—इति वाच्यम् । तेषां शुद्धात्मप्रकाशकत्वेन कर्माङ्गभूतस्य कर्तृत्वादिगुणकस्यात्मनः प्रकाशकत्वाभावात् इत्यर्थः । २५

३. आपातप्रतिपत्तिः—आत्मा अकर्ता अभोक्ता इति परोक्षज्ञानमपि कर्मप्रवृत्तिं निवारयति यतः विविषु श्राद्धोऽधिकारीति निर्णीतत्वात् आत्मनः कर्तृत्वादिविषये श्रद्धारहितो न कर्माधिकारी किन्तु संन्यासे । (भामती १-१-१) * 'विरुध्यते' इति पा. । ३०

एवैषां कर्मस्वविनियोगः। न ह्येवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्यमाप्यं संस्कार्यं कर्तृभोक्तृरूपं वा येन कर्मशेषता स्यात्। सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्। गीतानां मोक्षधर्माणां चैवंपरत्वात्। तस्मादात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धं कर्माणि विहितानि। यो हि कर्मफलेनार्थी[1] दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना च द्विजातिरहं न काणकुब्जत्वाद्यनधिकारप्रयोजकधर्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो वदन्ति। तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनाऽऽत्मविषयं स्वाभाविकमज्ञानं[2] निवर्तयन्तः शोकमोहादिसंसारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति इत्येवमुक्ताधिकार्यभिधेयसम्बन्धप्रयोजनान्मन्त्रान्संक्षेपतो व्याख्यास्यामः ॥

पुरोडाशादिः[3]। विकार्यः सोमादिः। आप्यो मन्त्रादिः। संस्कार्यो व्रीह्यादिस्तदुत्पाद्यादिरूपत्वं व्यापकं व्यावर्तमानमात्मयाथात्म्यस्य कर्मशेषत्वमपि व्यावर्तयति। तथाऽऽत्मयाथात्म्यं कर्तृ भोक्तृ च न भवति। येन ममेदं समीहितसाधनं ततो मया कर्तव्यमित्यहङ्कारान्वयपुरःसरः कर्त्रन्वयः स्यादित्याह—नह्येवमिति। ननूपनिषदां [4]जपोपयोगित्वादन्यस्य च प्रमाणस्यादर्शनान्नास्त्येवैतादृशमात्मयाथात्म्यं तत्राऽऽह—सर्वासामिति। "यत्परः शब्दः स शब्दार्थः" इति मीमांसाप्रसिद्धेः सर्वासामुपनिषदां चैकात्म्ये [5]तात्पर्यदर्शनान्न जपोपयोगित्वमुपनिषदां शक्यं वक्तुम्।

तथाहि—ईशा वास्यमित्युपक्रम्य स पर्यगाच्छुक्रमित्युपसंहारादनेजदेकं तदन्तरस्य सर्वस्येत्यभ्यासदर्शनान्नैनद्देवा आप्नुवन्नित्यपूर्वतासङ्कीर्तनात् को मोहः कः शोक एकत्वमनुपश्यत इति फलवत्तासङ्कीर्तनात्कुर्वन्नेवेहेति जिजीविषोर्भेददर्शिनः कर्मकरणानुवादेनासुर्या नाम त इति निन्दयैकात्म्यदर्शनस्य स्तुतत्वात्तस्मिन्नपो मातरिश्वा दधातीति [6]युक्त्यभिधानाच्चास्यास्तावदुपनिषद ऐकात्म्यतात्पर्यं दृश्यते। एवमन्यासामप्युप-

---

१. कर्मफलेनार्थीत्यादिः। तदुक्तं मीमांसाभाष्ये—

( १ ) स्वर्गकामस्य यागकर्मोपदेशः स्यात् ( ६–१–१ )

( २ ) तस्मात् साङ्गयागोपदेशः न निरङ्गयागोपदेशः। असमर्थानां विगुणो यागः ( ६–१–२ )

( ३ ) तस्मादनधिकृतो अग्निहोत्रादिषु शूद्रः अग्न्यभावात् ( ६–१–४ )

२. अज्ञानं निवर्तयन्तः आत्मैकत्वादिविज्ञानमुत्पादयन्ति इत्यनेन ज्ञानसमकालमेवाज्ञानाभावः न तु अज्ञानस्य ज्ञानोत्तरक्षणे ज्ञानान्निवृत्तिः इति सूचितम्। अधिकारीति ज्ञानकामोऽधिकारी, अभिधेयं ब्रह्म, प्रयोजनं मोक्षः, सम्बन्धश्च यथायथम्मूह्यः।

३. पुरोडाशः पिष्टपिण्डः उष्णोदकसंयोजनेन पिष्टनिष्पाद्यः। सोमः लताविशेषः तस्य निष्पीडनेन रसो भवति स च सोमविकारः। मन्त्राः अध्ययनेन प्राप्याः स्वाधीनोच्चारणयोग्यतां प्रापणीयाः। व्रीहीणां प्रोक्षणादिकं संस्कारः।

४. जपोपयोगित्वात् = अत एव स्वप्रतिपाद्यार्थेऽप्रामाण्यात्।

५. तात्पर्याच्छब्दवृत्तिः इति प्रसिद्धेरेवायमनुवादः। षड्विधतात्पर्यलिङ्गान्याह—तथा हीति।

( १ ) उपक्रमोपसंहारौ, (२) अभ्यासः, (३) अपूर्वता, (४) फलं, (५) अर्थवादः, (६) उपपत्तिश्चेति तात्पर्यानुमापकानि लिङ्गानि षट्।

( १ ) विचार्यप्रकरणस्याद्यन्तवाक्ययोः एकार्थपर्यवसानं लक्ष्यते। ( २ ) अभ्यासः अनन्यपरपुनः श्रवणं। ( ५ ) अर्थवादः स्तुतिर्निन्दा वा। एतत् त्रयं शब्दनिष्ठम् तत्राद्यं एकार्थनिर्णायकत्वेन लिङ्गम्। अभ्यासः आदरद्वारा तात्पर्यनिर्णायकः। तेनार्थस्योत्कृष्टत्वज्ञानम्। उपपत्त्या प्रतिपाद्यस्याबाधितत्वं ज्ञायते। ततश्च अपूर्वताफलोपपत्तिभिः अनधिगताबाधितफलवदर्थबोधकत्वरूपं प्रामाण्यं ज्ञाप्यते। अर्थवादेन अर्थस्य बलवदनिष्टाननुबन्धित्वं ज्ञाप्यते।

६. युक्त्यभिधानात् = मातरिश्वहिरण्यगर्भस्य फलप्रदानसामर्थ्यं अन्याधीनं तस्य उत्पत्तिमत्त्वे सति फलदातृत्वात् अस्मदादिवत्—इत्यनुमानात्।

ईशा वास्यमित्यादि[1]। ईश ईष्ट इतीट् तेनेशा। ईशिता परमेश्वरः परमात्मा सर्वस्य। स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन्प्रत्यगात्मतया; तेन स्वेन रूपेणाऽऽत्मनेशा [2]वास्यमाच्छादनीयम्। किम्? इदं सर्वं यत्किञ्च यत्किञ्चि-

निषदामुपक्रमोपसंहारैकरूप्याभ्यासापूर्वताफलवत्तार्थवादयुक्त्युपपादनानि षट् तात्पर्यलिङ्गानि विकल्पेन समुच्च-येन चास्माभिस्तत्त्वालोके[3] दर्शितानीति नेह प्रतन्यन्ते।

किञ्च प्रत्ययसम्वादोऽपि बलवत्त्वे कारणं प्रसिद्धम्। विद्यते चोपनिषदर्थे गीतादिसम्वादस्तस्मादुपनिषत्पद- ५
समन्वयेनावगम्यमानमैकात्म्यं न प्रमाणान्तरानुपलम्भविरोधेनापलपनीयम्। यथेन्द्रियान्तरेणानवगम्यमानमपि रूपं चक्षुषाऽवगम्यमानं नापह्नूयते तथैकात्म्यमपि नापह्नवार्हमित्याह—गीतानामिति। "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति" इत्यादिगीतानाम्। 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिमोक्षशास्त्राणां चैकात्म्यपरत्वादित्यर्थः। यद्येतादृशमात्मतत्त्वं तर्हि निर्बाधकारित्वात्कर्मकाण्डमुच्छिद्येतेत्यपि नाऽऽशङ्कनीयमित्याह—तस्मादिति। औप- १०
निषदात्मयाथात्म्यविज्ञानवत इष्यत एव कर्मकाण्डाप्रामाण्यम्। [4]यथा 'न हिंस्यात्सर्वा भूतानी'ति निषेधशास्त्रार्थ-निश्चयवत इष्यत एव श्येनादिविध्यप्रमाण्यम्। यथा च तीव्रक्रोधाक्रान्तस्वान्तं प्रत्येव [5]श्येनादिविधिप्रामाण्यं तथा मिथ्यात्मदर्शिनं प्रत्येव कर्मविधिप्रामाण्यमित्यर्थः। अत्र जैमिनिप्रभृतीनां सम्मतिमाह—यो हीत्यादिना। अर्थित्वादियुक्तस्य कर्मण्यधिकारः षष्ठेऽध्याये प्रतिष्ठापितः। अर्थित्वादि च मिथ्याज्ञाननिदानम्। न हि नभोवह्नि-

---

१. ईशा ईश्वररूपेण इदं सर्वमाच्छादनीयम्। कारणात्मकेश्वररूपेण ज्ञातव्यं कार्यस्योपादानव्यतिरेकेणा- १५
भावात् चेतनानां च ब्रह्माभेदात् सकलमिदमहं च वासुदेवः इति ज्ञातव्यम् जगत्यां पृथिव्यां इदमुपलक्षणं सर्वत्र वर्तमानं स्थावरजङ्गमात्मकं जगत् ग्राह्यम्—सायणः।
त्यक्तेन—त्यागेन आत्मानं पालयेथाः त्याग एवात्मरक्षणोपायः संग्रहस्य बन्धहेतुत्वात्। अत्र संन्यास उक्तः। तेन त्यक्तेन मिथ्यात्वेन निश्चितप्रपञ्चेन आत्मानं ब्रह्मरूपेण विज्ञाय रक्ष। एषणात्रयसंन्यासेन च।

२. अत्र माध्वैः ईशस्य आवास्यं इति विगृह्य ईशप्रविष्टमित्यर्थः स्वीकृतः। ईशा इति पृथक्पदमिति २०
पदपाठविदः। तद्विरुद्धमिदम्। अपि च समस्तपदत्वे समासस्येत्यन्तोदात्तस्वरः स्यात्। ततः वा इत्यन्तं अनुदात्तं स्यात् 'पञ्चानां त्वा पञ्चजनानां' इतिवत्। अतो नेदं युक्तम्। तेन त्यक्तेन = ईश्वरदत्तेन इत्यर्थः कृतः। त्यागो न दानं अपि तु दानपदार्थैकदेशः, तेनात्र लक्षणा भवेत्। त्यक्तेन भोगासम्भवात् त्यागेनात्मानं पालयेदिति युक्तं 'त्यागेनैके अमृतत्वमानशुरि'ति श्रुतेः। वस्तुतो भोगे मोक्षे वा पुरुषप्रयत्नः कारणम्, अत्र तस्य निवारणं विधीयत इत्यनौचित्यम्। २५

मतान्तरे—ईशा इति यौगिकं विष्णुपरं न तु रूढ्या शिवपरं शिवस्य विष्णुकार्यत्वात् कर्म-वश्यत्वाच्चेति। तन्न। "ब्रह्मविष्णुरुद्रास्ते सम्प्रसूयन्ते। कारणं तु ध्येयः सर्वैश्वर्यसम्पन्न शम्भुरा-काशमध्ये" "यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः"। "मायिनं तु महेश्वरम्" स कारणं करणाधिपाधिप" इत्यादिश्रुतिसिद्धस्य यस्मिन्नीश्वर इत्यनन्यविषयः शब्द—इति रूढ्युपोद्बलितस्य शिवस्यैव शीघ्रोपस्थितेः। वास्यं न व्याप्यं तस्य उत्तरत्र सपर्यगादित्युक्तत्वात्। ३०

३. तत्त्वालोके जनार्दनकृते भारतीयविद्याभवने मुद्रिते छान्दोग्यषष्ठे प्रसिद्धानि षट् तात्पर्यलिङ्गानि प्रदर्शितानि नान्यत्रोपनिषत्सु।

४. यथा न हिंस्यादिति। यथा अहिंसाशास्त्रयागीयपशुहिंसाशास्त्रयोः द्वयोरपि प्रामाण्यात् द्वयोरेक वाक्यताङ्गीकारात् यागीयहिंसाभिन्नहिंसाया अधर्मत्वं तथा अत्र विद्याविद्ययोरुभयोः समुच्चयविधानात् एकवाक्यत्वं न कस्यापि बाधकमित्यर्थः। ३५

५. श्येनादिविधिः श्येनयागः शत्रुमरणकामाय विहितं आभिचारिकं कर्म। तेन अनुष्ठितेन वैरी म्रियते यज-मानस्य नरकं च जायते।

ज्जगत्यां पृथिव्यां जगत्तत्सर्वं स्वेनाऽऽत्मनेशेन प्रत्यगात्मतयाऽहमेवेदं सर्वमिति परमार्थसत्यरूपेणानृतमिदं सर्वं चराचरमाच्छादनीयं स्वेन परमात्मना। यथा चन्दनागर्वादेरुदकादिसम्बन्धजक्लेदादिजमौपाधिकं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाऽऽच्छाद्यते स्वेन पारमार्थिकेन गन्धेन तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्तृत्वभोक्तृत्वादि-लक्षणं जगद्द्वैतरूपं जगत्यां पृथिव्यां जगत्यामित्युपलक्षणार्थत्वात्सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थ-

५ सत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसंन्यास एवाधिकारो न कर्मसु। तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः पुत्रो वा भृत्यो वाऽऽत्मसम्बन्धितायाः अभावादात्मानं पालयत्य-तस्त्यागेनेत्ययमेव वेदार्थः। भुञ्जीथाः पालयेथाः। एवं त्यक्तैषणस्त्वं मा गृधः, गृधिमाकाङ्क्षां मा कार्षीर्धन-विषयाम्। कस्यस्विद्धनं कस्यचित्परस्य स्वस्य वा धनं मा काङ्क्षीरित्यर्थः। स्विदित्यनर्थको निपातः। अथवा मा गृधः। कस्मात्? कस्यस्विद्धनमित्याक्षेपार्थो न कस्यचिद्धनमस्ति यद्गृध्येत। आत्मैवेदं सर्व-

१० मितीश्वरभावनया सर्वं त्यक्तमत आत्मन एवेदं सर्वमात्मैव च सर्वमतो मिथ्याविषयां गृधिं मा कार्षी-रित्यर्थः॥ १॥

ष्क्रियस्य स्वत एव दुःखासंसर्गिणः परमानन्दस्वभावस्य सुखं मे स्याद्दुःखं मे मा भूदित्यर्थित्वं शरीरेन्द्रियसामर्थ्येन च समर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना सम्भवतीत्यर्थः। यस्मादात्मयाथात्म्यप्रकाशका मन्त्रा न कर्म-विधिशेषभूता न च मानान्तरविरुद्धास्तस्मात्प्रयोजनादिमत्त्वमपि तेषां सिद्धमित्याह—तस्मादेत इति। व्याख्येयत्व-

१५ मुक्त्वा प्रतिपदं व्याचष्टे—ईशेति। 'ईश' ऐश्वर्ये इत्यस्य धातोः क्विपि लुप्ते कृदन्तं रूपमीट् तस्य तृतीयैकवचनमीशेति। ननु कर्तरि क्विब्विधानात्परमात्मनश्चाविक्रियत्वात्कथं क्विबन्तशब्दवाच्यतेति तत्राऽऽह—ईशितेति। मायोपाधे-रीशनकर्तृत्वसम्भवात् क्विबन्तशब्दवाच्यता न विरुध्यते निरुपाधिकस्य च लक्ष्यत्वं भविष्यतीत्यर्थः। ईशित्रीशितव्य-भावेन तर्हि भेदः प्राप्त इत्याशङ्क्याऽऽह—सर्वजन्तूनामात्मा सन्निति। यथाऽऽदर्शादिषु प्रतिबिम्बानामात्मा सन् बिम्बभूतो देवदत्त ईशिता भवति तथा कल्पितभेदेनेशित्रीशितव्यभावसम्भवान्न वास्तवभेदानुमानं सम्भवतीत्यर्थः।

२० 'वस'-आच्छादने। अस्य रूपं वास्यम्। तत्त्वत ईश्वरात्मकमेव सर्वं भ्रान्त्या यदनीश्वररूपेण गृहीतं तत्सर्वमीश्वर एवाऽऽत्मैवेति ज्ञानेनाऽऽच्छादनीयम्। सर्वात्मक ईश्वरोऽस्मीति ज्ञातव्यमेष तत्त्वोपदेशश्छान्दोग्ये तत्त्वमसीतिव-दित्यर्थः। उक्तं च—

'ब्रह्मैव सर्वमात्मैव सत्प्रकाशाविशेषतः। हेयोपादेयभावोऽयं न सन्स्वप्नवदीर्यते॥'

२५ 'न बन्धोऽस्ति न मोक्षोऽस्ति न विकल्पोऽस्ति तत्त्वतः। नित्यप्रकाश एवास्ति विश्वाकारो महेश्वरः॥' इति।

यस्यौपदेशिकज्ञानमात्रेणानृतदृष्टिर्न तिरस्क्रियते तस्य विचारादिप्रयत्नेन तत्त्वप्रकाशे सत्यनृतदृष्टिस्तिर-स्क्रियेतेत्यभिप्रेत्य दृष्टान्तमाह—यथेति। चन्दनागर्वादेरुदकादिसम्बन्धादार्द्रीभावादिना जातं यद्दौर्गन्ध्यमौपाधिकं मिथ्या तद्यथा तत्स्वरूपनिघर्षणाभिव्यक्तेन स्वाभाविकेन गन्धेनाऽऽच्छाद्यते तद्वद्विचारादेः स्वरूपसद्भावान्मिथ्या-बुद्धेर्बाधकत्वं सम्भवतीत्याह—तद्वदेव हीति। स्वभावोऽनादिरविद्या तत्कार्यं स्वाभाविकमित्यादिबाधयोग्यत्व-

३० प्रदर्शनार्थं विशेषणम्। एवं विचारादिप्रयत्नवतोऽनृतदृष्टितिरस्कारसम्भावनामुक्त्वा युक्त्यनभिज्ञस्य सर्वमिदमहं चेश्वर एवेति भावनायामधिकृतस्य युक्तिकुशलस्य च विचारेऽधिकृतस्य सर्वकर्मसंन्यास एवाधिकार इह मन्त्रे विवक्षितस्तेन त्यक्तेनेत्यत्र त्यागपरामर्शात्। "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमि" त्यन्यत्राप्युक्तत्वात्पुत्राद्येषणा-याश्चित्तविक्षेपहेतुत्वेन प्रसिद्धत्वाच्चेत्यभिप्रेत्याऽऽह—एवमीश्वरात्मेति। चिकीर्षितं संन्यासं स्तौति—तेन त्यक्ते-नेति। त्यागेनाऽऽत्मा रक्षितः स्यान्निष्क्रियात्मस्वरूपावस्थानानुकूलत्वात्त्यागस्येत्यर्थः। संन्यासिनः शरीरसंधारणोप-

३५ युक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तेऽपि कथञ्चिद्द्रव्यपरिग्रहे रागश्चेत्प्राप्नोति तन्निरोधे यत्नः कर्तव्यः। तस्य प्रधानविरोधित्वादित्यभिप्रेत्य नियमविधिमाह—एवं त्यक्तैषण इति। स्विदिति निपातस्य सामान्यार्थत्वेऽपि कस्यस्विदिति वितर्कार्थत्वमन्यत्र प्रसिद्धं तदिह न गृह्यत इत्यनर्थकमित्युक्तम्। व्यवहारदृष्ट्याऽप्यात्मन एवेदं सर्वं शेषभूतं जडस्य-चित्परतन्त्रत्वादतोऽप्राप्ते विषये नाऽऽकाङ्क्षा कर्तव्या। परमार्थतस्त्वात्मैव सर्वमित्याकाङ्क्षाविषय एव नास्तीत्यर्थः॥ १॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनाऽऽत्मज्ञाननिष्ठतयाऽऽत्मा रक्षितव्य इत्येष वेदार्थः । अथेतरस्यानात्मज्ञतयाऽऽत्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः—कुर्वन्नेवेति । [1]कुर्वन्नेवेह निर्वर्तयन्नेव कर्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेच्छतं शतसंख्याकाः समाः संवत्सरान् । तावद्धि पुरुषस्य परमायुर्निरूपितम् । तथा च प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि तत्कुर्वन्नेव कर्माणीत्येतद्विधीयते । एवमेवंप्रकारेण त्वयि जिजीविषति नरे नरमात्राभिमानिनीत एतस्मादग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात्प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते कर्मणा न लिप्स्यस इत्यर्थः । अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् । कथं पुनरिदमवगम्यते पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेति । उच्यते । ज्ञानकर्मणोर्विरोधं पर्वतवदकम्प्यं यथोक्तं न स्मरसि किम् ? इहाप्युक्तं यो हि जिजीविषेत्स कर्म कुर्वन् । ईशा वास्यमिदं सर्वं तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनमिति च । "न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति च पदम् । ततो न पुनरियादि"ति संन्यासशासनात् । उभयोः फलभेदं च वक्ष्यति । "इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात्संन्यासश्चोत्तरेण" निवृत्तिमार्गेणैषणात्रयस्य त्यागः । तयोः

आद्यमन्त्रस्य पूर्वार्धेन तत्त्वोपदेशः कृतस्तृतीयपादेनापरिपक्वज्ञानस्य संन्यासविधिरुक्तश्चतुर्थपादेन संन्यासिनो नियमविधिरुक्त इति प्रतिपदं व्याख्याय संक्षिप्यार्थमनुवदत्युत्तरस्य सम्बन्धामिधित्सया—एवमात्मविद इत्यादिना । पूर्वमन्त्रेण ज्ञानं विहितं यस्य तस्यैवोत्तरमन्त्रेण कर्म विहितं ततः समुच्चयानुष्ठाने तात्पर्यं मन्त्रद्वयस्येत्येकदेशिशङ्कामुद्भावयति—कथं पुनरिति । शुद्धब्रह्मज्ञानकर्मणी नैकाधिकारे विरुद्धत्वादृतुगमनत्रिदण्डिधर्मवत् । अस्त्येव तत्रापि क्रमेणैककर्तृकत्वमिति चेन्न । विशिष्टरूपभेदाद्भिन्नाधिकारत्वात्[2] । यच्चोक्तं—ज्ञानकर्मणोर्वेदविहितत्वेन शुद्धिसाम्याद्विरोधोऽसिद्ध इति तदसत् । ऋतुगमनत्रिदण्डिधर्मयोरप्यविरोधप्रसङ्गात् । तदुभयं नैकस्य विहितमिति चेत्तुल्यमेतत् । प्रतिषेधात्तत्र न समुच्चय इति चेदिहापि 'न कर्मणा न प्रजया' 'नानुध्यायाद्बहूञ्छब्दानि'त्यादिप्रतिषेधस्तुल्यः । केवलकर्मविषयो निषेध इति न च वाच्यं केवलपदव्यवच्छेद्याभावात्समुच्चयविधेरद्याप्यनिश्चितत्वात्तस्मान्न समुच्चये तात्पर्यं मन्त्रद्वयस्येत्याह—ज्ञानकर्मणोर्विरोधमिति । कर्तृत्वाद्यध्यासाश्रयं कर्म शुद्धत्वाकर्तृत्वादिज्ञानेनोपमृद्यत इति सम्बन्धग्रन्थे यथोक्तं सहानवस्थानलक्षणं विरोधं किं न स्मरसि येनैकाधिकारत्वं तयोः कल्पयसीत्यर्थः । मन्त्रलिङ्गादपि तयोर्भिन्नाधिकारत्वं प्रतीयत इत्याह—इहाप्युक्तमिति । जिजीविषो रागिणः कर्म विहितं सर्वमीश्वर एवेति ज्ञानवतस्त्यागो विहितः । किञ्च धनसम्पन्नस्यैव कर्मण्यधिकारः । प्रथममन्त्रार्थाधिकारिणश्च धनाकाङ्क्षानिषेधेन कर्माधिकारनिषेधः प्रतीयत इत्यर्थः । जिजीविषा हि कर्माधिकारिण एव न ज्ञानाधिकारिण इत्यत्र प्रमाणमाह—न जीवित इति । अरण्यं स्त्रीजनासङ्कीर्णमाश्रममियाद्गच्छेदिति पदं वेदशास्त्रस्थितिस्ततोऽरण्यवासोपलक्षितात्संन्यासान्न पुनरियात्कर्मश्रद्धया न प्रत्यावृत्तिं कुर्यादिति जिजीविषादिरहितस्य संन्यासविधानादित्यर्थः । इतश्च नैकफलकामस्य ज्ञानकर्मणोरधिकारः प्रतिपत्तव्य इत्याह—उभयोरिति । को मोहः कः शोक एकत्वमनुपश्यत इति सनिदानानर्थप्रहाणं ज्ञानफलं वक्ष्यति । संसारमण्डलान्तर्गतमेव च देशान्तरप्राप्त्यायत्तं हिरण्यगर्भपदप्राप्त्यादिलक्षणं कर्मफलं वक्ष्यति । अग्ने नय सुपथेत्यन्तेनेत्यर्थः । नारायणोपनिषद्वाक्यमपि भिन्नाधिकारित्वे प्रमाणयति—इमौ द्वावेवेति ।

---

१. अत्र कुर्वन्नेव जिजीविषेदिति न विधिः, जीवनेच्छायाः रागप्राप्तत्वात् अपि तु यदि जिजीविषेत् तदा कुर्वन्नेव जिजीविषेदिति इच्छामनूद्य कर्मकरणं विधीयते । पूर्वमन्त्रस्य तु मा गृध इति इच्छानिषेधात् संन्यासिविषयत्वम् । अस्य तु इच्छानुवादात् गृहस्थविषयत्वं च स्पष्टमेव । ततो मन्त्रयोर्भिन्नविषयत्वात् ब्रह्मविद एव कर्मविधिरिति न युक्तम् ।

'स्तुतयेऽनुमतिर्वा' ( ३-४-१४ ) इति ब्रह्मसूत्रे तु यद्यप्यत्र प्रकरणसामर्थ्यात् विद्वानेव कुर्वन्नित्यभिसम्बध्यते तथापि विद्यास्तुतये कर्मानुज्ञानमेतदित्युक्तम् । तावता न ज्ञानकर्मसमुच्चयः सिद्ध्येत् ।

२. विशिष्टरूपभेदः गृहस्थत्वसंन्यासित्वविशिष्टयोर्भेदः ।

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः। ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ॥३॥**

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥**

संन्यासपथ एवातिरेचयति। "न्यास एवात्यरेचयदि"ति च तैत्तिरीयके। "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावितः" इत्यादि पुत्राय विचार्य निश्चितमुक्तं व्यासेन वेदाचार्येण भगवता। विभागं
५ चानयोर्दर्शयिष्यामः ॥ २ ॥

अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते—असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषां च स्वभूता लोका असुर्या नाम। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेनादर्शनात्मकेनाज्ञानेन तमसाऽऽवृता आच्छादितास्तान्स्थावरान्तान्प्रेत्य त्यक्त्वेमं देहमभिगच्छन्ति यथाकर्म यथाश्रुतम्। ये के चाऽऽत्महनः। आत्मानं घ्नन्तीत्यात्महनः[1]। के ते जना? येऽविद्वांसः। कथं त आत्मानं
१० नित्यं हिंसन्ति? अविद्यादोषेण विद्यमानस्याऽऽत्मनस्तिरस्करणात्। विद्यमानस्याऽऽत्मनो यत्कार्यं फलमजरामरत्वादिसंवेदनलक्षणं तद्धतस्येव तिरोभूतं भवतीति प्राकृता अविद्वांसो जना आत्महन उच्यन्ते। तेन ह्यात्महननदोषेण संसरन्ति ते ॥ ३ ॥

यस्याऽऽत्मनो हननादविद्वांसः संसरन्ति तद्विपर्ययेण विद्वांसो जना मुच्यन्ते ते नाऽऽत्महनः। तत्कीदृशमात्मतत्त्वमित्युच्यते—अनेजदिति। अनेजत्, न—एजत्। एजृ कम्पने। कम्पनं चलनं स्वावस्थाप्रच्युतिस्तद्वर्जितं सर्वदैक-
१५ रूपमित्यर्थः। तच्चैकं सर्वभूतेषु। मनसः सङ्कल्पादिलक्षणाज्जवीयो जववत्तरम्। कथं विरुद्धमुच्यते ध्रुवं निश्चलमिदं मनसो जवीय इति च? नैष दोषः। निरुपाध्युपाधिमत्त्वेनोपपत्तेः। तत्र निरुपाधिकेन स्वेन रूपेणोच्यतेऽनेजदेकमिति। मनसोऽन्तःकरणस्य सङ्कल्पविकल्पलक्षणस्योपाधेरनुवर्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरगमनं सङ्कल्पेन क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम्। तस्मिन्मनसि ब्रह्मलोकादीन्द्रुतं गच्छति सति प्रथमं प्राप्त इवाऽऽत्मचैतन्यावभासो गृह्यतेऽतो मनसो जवीय इत्याह। नैनद्देवा द्योतनाद्देवाश्चक्षुरादीनीन्द्रियाण्येतत्प्रकृतमात्मतत्त्वं

२० पुरस्तात्सृष्टिकालेऽनुनिष्क्रान्ततरौ भूतसृष्टिमनुप्रवृत्तौ भिन्नाधिकारित्वादुभयोः संन्यास एवातिरिक्तः श्रेष्ठो भवति परमपुरुषार्थाव्यवधानादित्यर्थः। व्यासवाक्यमपि सम्वादकमाह—द्वाविमाविति ॥ २ ॥

आद्यमन्त्रार्थं प्रपञ्चयितुं प्रथममविद्वन्निन्दा क्रियत इत्याह—अथेति। ते लोका इति तच्छब्दो यच्छब्दार्थे। यथाश्रुतमिति। येन यादृशं प्रतिषिद्धं विहितं वा देवतादिज्ञानमनुष्ठितं स तदनुरूपामेव योनिमाप्नोतीत्यर्थः। आत्महन्तृत्वस्योदरभेदिनि प्रसिद्धेः कथमविद्वांस आत्महन इत्याह—कथं त इति। उदरभेदिनोऽध्यात्माधिकारे
२५ प्रसङ्गाभावादशुद्धत्वाध्यासेन तिरस्कार एवाऽऽत्महन्तृत्वमित्याह—अविद्यादोषेणेति। यथा कस्यचिच्छुद्धस्य मिथ्याभिशापोऽशस्त्रवध उच्यते तद्वदात्मनि पापित्वाद्यध्यासोऽपि हिंसैवेत्यर्थः। अजरामरत्वादिलक्षणोऽहमिति सम्वेदनमभिधानं च यत्कार्यं तद्धतस्येव न दृश्यत इति हननमुपचर्यत इत्याह—विद्यमानस्येति। अस्याऽऽत्मघातस्य प्रायश्चित्तविधानादर्शनात्संसरणमेव फलमित्याह—तेन हीति ॥ ३ ॥

उत्तरमन्त्रमवतारयति—यस्याऽऽत्मन इत्यादिना। अविक्रियमेकं चेदात्मतत्त्वं कथं तर्हि केचन स्वर्गगामिनः
३० केचन नरकगामिन इति सांसारिकव्यवस्था स्यादिति चेन्मनउपाधिनिबन्धनेत्यभिप्रेत्याऽऽह—मनस इत्यादिना। उपाधेरनुवर्तनात् विक्रियादिव्यवहाराश्रयत्वमिति शेषः। ननु मनसो देहान्तःस्थत्वाद्बहिर्गमनायोग्यत्वात्कथं वेगवत्त्वमित्याशङ्क्याह—देहस्थस्येति। जवीयस्त्वादश्वादिवत्तर्हि चक्षुरादिग्राह्यत्वं प्राप्तमित्याशङ्क्याऽऽह—नैनद्देवा इति। चक्षुरादिप्रवृत्तेर्मनोव्यापारपूर्वकत्वात्तदविषयत्वे चक्षुरादिविषयत्वमप्यात्मनो न सम्भवतीत्यर्थः।

---

१. आत्महनः = आत्मनि पापित्वाद्यध्यासवन्तः तादृशाध्यासोऽपि हननमेव।

३५ यद्वा भगवद्गीताभाष्ये 'न हिनस्त्यात्मनात्मानं' इत्यत्र सर्वोहि अत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्य अनात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वा उपात्तमात्मानं हत्वा अन्यमात्मानमुपादत्ते नवं, एवं तमपि हत्वा अन्यमित्येवं उपात्तमुपात्तमात्मानं हन्तीति आत्महा सर्वोऽज्ञः यस्तु परमार्थात्मा असावपि सर्वदा अविद्यया हत इव विद्यमानफलाभावात् इति सर्वे अविद्वांसः आत्महनः इति द्रष्टव्यम्।

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥**
**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चाऽऽत्मानं ततो न विजुगुप्सते ॥ ६ ॥**

नाऽऽप्नुवन्न प्राप्नवन्तः। तेभ्यो मनो जवीयो मनोव्यापारस्यवह्रितत्वात् आभासमात्रमप्यात्मनो नैव देवानां विषयीभवति। यस्माज्जवनान्मनसोऽपि पूर्वमर्षत्पूर्वमेव गतम् । व्योमवद्व्यापित्वात् । सर्वव्यापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवाविवेकिनां मूढानामनेकमिव च प्रतिदेहं प्रत्यवभासत इत्येतदाह—तद्धावतो द्रुतं गच्छतोऽन्यानात्मविलक्षणान्मनोवागिन्द्रियप्रभृतीनत्येत्यतीत्य गच्छतीव । इवार्थं स्वयमेव दर्शयति—तिष्ठदिति । स्वयमविक्रियमेव सदित्यर्थः । तस्मिन्नात्मतत्त्वे सति नित्यचैतन्य-स्वभावे मातरिश्वा मातर्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः सर्वप्राणभृत्क्रियात्मको यदाश्रयाणि कार्यकरण-जातानि यस्मिन्नोतानि प्रोतानि च यत्सूत्रसंज्ञकं सर्वस्य जगतो विधारयितृ स मातरिश्वा । अपः कर्माणि प्राणिनां चेष्टालक्षणानि । अग्न्यादित्यपर्जन्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः। धारयतीति वा । "भीषाऽस्माद्वातः पवत" इत्यादिश्रुतिभ्यः । सर्वा हि *कार्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः ॥ ४ ॥　　　　१०

न मन्त्राणां [१]जामिताऽस्तीति पूर्वमन्त्रोक्तमप्यर्थं पुनराह—[२]तदेजतीति । तदात्मतत्त्वं यत्प्रकृतं तदेजति चलति तदेव च नैजति स्वतो नैव चलति स्वतोऽचलमेव सच्चलतीवेत्यर्थः । किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषाम-प्राप्यत्वाद्दूर इव । तत्, उ अन्तिक इति च्छेदः । तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वान्न केवलं दूरेऽन्तिके च । तदन्तरभ्यन्तरेऽस्य सर्वस्य । "य आत्मा सर्वान्तर" इति श्रुतेः । अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तदु अपि सर्वस्यास्य बाह्यतो व्यापकत्वादाकाशवन्निरतिशयसूक्ष्मत्वादन्तः । प्रज्ञानघन एवेति च शासनान्निरन्तरं च ॥५॥　　　　१५

यस्तु[३]। यः परिव्राड्मुमुक्षुः सर्वाणि भूतान्यव्यक्तादीनि स्थावरान्तान्यात्म[४]न्येवानुपश्यत्यात्मव्यतिरिक्तानि न

मनसो वा कथं न विषय आत्मेत्यत आह—यस्मादिति । यथा मनःस्थं परिमाणं मनसो न विषयोऽत्यन्ताव्यव-धानात्तथाऽऽत्माऽप्यन्ताव्यवधानान्मनसो न विषयस्तद्व्यापकत्वाच्चेत्यर्थः । उक्तात्मसम्भावनायोपपत्तिमाह—तस्मिन्नात्मतत्त्वे सतीति । श्रौतानि कर्माणि सोमाज्यपयःप्रभृतिभिरद्भिः सम्पाद्यन्त इति सम्बन्धाल्लाक्षणिकोऽ-प्शब्दः कर्मसु प्राणचेष्टायाश्चाब्निमित्तत्वप्रसिद्धेः; कारणवाचकः शब्दः कार्ये लक्षणया प्रयुक्त इत्यर्थः । ईश्वरस्यापि हिरण्यगर्भस्य नियतप्रवृत्त्यन्यथानुपपत्त्याऽधिष्ठाता परमेश्वरः सम्भाव्यत इत्युक्तमिदानीं मातरिश्वग्रहणमुपलक्षणार्थ-मादाय तात्पर्यमाह—सर्वा हीति ॥ ४ ॥　　　　२०

जामिता—आलस्यम् । व्यापित्वाद्बाह्यतोऽस्ति निरतिशयसूक्ष्मत्वादन्तश्चेदस्ति तर्हि निरन्तरमेकरसं न स्यान्मानाभावादित्याशङ्क्याऽऽह—प्रज्ञानघन एवेति ॥ ५ ॥　　　　२५

उक्तात्मज्ञानस्य फलं विधिनिषेधातीतजीवन्मुक्तस्वरूपेणावस्थानमित्याह—यस्त्विति ॥ ६ ॥

---

१. जामिता—जामितापदं इत्थं परिमले विवृतम्—सोदर्यवाची जामिताशब्दः तस्य सादृश्ये लक्षणेत्यभि-प्रेत्य शाबरभाष्ये सादृश्यमिति व्याख्यातः एकरूपायाः क्रियायाः पुनः पुनरनुष्ठाने तन्द्रा स्यादिति तस्य दोषत्वपर्यवसानं आलस्यमित्युक्त्या सूचितम् ( प० १–१–४ )　　　　३०

२. माध्वास्तु—तत् प्रपञ्चः एजति बिभेति । तत् ब्रह्म न एजति न बिभेति स्वतन्त्रत्वादिति व्याचख्युः । तन्न । 'तद्दूरे तद्वन्तिके' इत्यत्रैव एकस्यैव तत्पदाभ्यां ग्रहणं स्वरसम् । तत्परित्यागदोषः अत्र ।

३. अत्र आत्मा स्वात्मैव न तु परमात्मा सर्वभूतेषु च अहमेवात्मा । अतो द्वितीयाभावात् न स्वात्मान-मन्यतः गोपायितुमिच्छेत् । माध्वास्तु—आत्मा परमात्मैव ततो न विजुगुप्सते स्वात्मानं जीवं न गोपायितुमिच्छेदित्यर्थः; इत्याहुः, जीवाद्व्यतिरिक्तस्य परमात्मनः सत्त्वे ततो भयं भवत्येव 'द्वितीयाद्वै भयं भवति' 'भीषास्माद्वातः पवत' इत्याद्युक्तेः । न च वाते प्राणदेवे सर्वज्ञे भयनिमग्ने सति अस्माकं भयाभावः । अतः सर्वभूतेषु परमात्मानमन्तर्यामितया पश्यतीति नार्थः ।　　　　३५

४. आत्मन्येवानुपश्यति इत्युक्ते उपादानादन्यत्र कार्याभावात् आत्मा उपादानं लभ्यते तेन चात्मव्यतिरेकेण प्रपञ्चाभावः सूचितः । * कार्यकरणविक्रियाः (पा)।

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक [1]एकत्वमनुपश्यतः ॥ ७ ॥**

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्।**
**कविर्मनीषी परिभूः [2]स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः॥ ८ ॥**

पश्यतीत्यर्थः। [3]सर्वभूतेषु च तेष्वेव चाऽऽत्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन, यथाऽस्य देहस्य कार्यकरण-
५ सङ्घातस्याऽऽत्माहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमे-
वाऽऽत्मेति सर्वभूतेषु चाऽऽत्मानं निर्विशेषं यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते विजुगुप्सां घृणां
न करोति। प्राप्तस्यैवानुवादोऽयम्। सर्वा हि घृणाऽऽत्मनोऽन्यद्दुष्टं पश्यतो भवत्यात्मानमेवात्यन्तविशुद्धं निरन्तरं
पश्यतो न घृणानिमित्तमर्थान्तरमस्तीति प्राप्तमेव ततो न विजुगुप्सत इति ॥ ६ ॥

इममेवार्थमन्योऽपि मन्त्र आह—यस्मिन्सर्वाणि भूतानि[4]। यस्मिन्काले यथोक्तात्मनि वा तान्येव भूतानि
१० सर्वाणि परमार्थात्मदर्शनादात्मैवाभूदात्मैव संवृत्तः परमार्थवस्तु विजानतस्तत्र तस्मिन्काले तत्राऽऽत्मनि[5] वा को
मोहः कः शोकः। शोकश्च मोहश्च कामकर्मबीजमजानतो भवति न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः। को मोहः
कः शोक इति शोकमोहयोरविद्याकार्ययोराक्षेपेणासम्भवप्रदर्शनात्सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो
भवति ॥ ७ ॥

योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेण किंलक्षण इत्याहायं मन्त्रः—स[6] पर्यगात्स यथोक्त आत्मा

१५ निरतिशयानन्दस्वरूपमत एव दुःखास्पृष्टमात्मानमजानतः शोको भवति हा हतोऽहं न मे पुत्रोऽस्ति न मे
क्षेत्रमिति। ततः पुत्रादीन्कामयते तदर्थं देवताराधनादि चिकीर्षति न त्वात्मैकत्वं पश्यतस्ततोऽन्वयव्यतिरेकाभ्यां
शोकादेरविद्याकार्यत्वावधारणान्मूलाविद्यानिवृत्त्यैव शोकादेरात्यन्तिकी निवृत्तिर्विद्याफलत्वेन विवक्षिता लय-
मात्रस्य सुषुप्तेऽपि भावादित्याह—शोकश्च मोहश्चेत्यादिना ॥ ७ ॥

---

१. एकत्वं—परमात्माभेदं यद्वा मूलाज्ञाननिरासेन विशुद्धस्वात्मैक्यं—सायणः।
२० २. स्वयंभूः स्वयमेव भवति न तत्सत्तापादकमन्यदपेक्षितम्। अनन्याधीनसत्ताकं—सायणः।
३. सर्वभूतेषु चात्मानं कारणत्वेनानुस्यूतं पश्यति इति सायणः।
४. अत्र एवकारेणात्मव्यतिरेकेणाभाव उच्यते। स एव एकत्वमनुपश्यत इत्यनूद्यते। एकत्वज्ञानफलं शोक-
मोहनिवृत्तिश्च तत्र को मोह इत्यनेनोच्यते। इदं च 'तरति शोकमात्मवित्' इत्यादिश्रुतिसिद्धमेव।
विशिष्टाद्वैतिनः—आत्मपदं परमात्मपरं, एकत्वं च विभागानर्हसम्बन्धः न त्वभेद इत्यूचुः। तत्र
२५ सम्बन्धसत्त्वेऽपि भेदसद्भावात् द्वितीयाद्वै भयं इत्युक्तेर्न पूर्णमोक्षप्राप्तिः सिद्ध्येत्।
५. अत्र कल्पतरुः—यः सर्वात्मभावो विद्याभिव्यक्त उक्तः तत्रात्मनि। तत्र वा ज्ञानकाले आत्मैकत्वं पश्यतः
को मोहः। ( १-१-४ )
६. स पर्यगात्—मतान्तरयोः अकायं कर्मकृतशरीररहितमित्यर्थः कृतः। परमात्मनः शरीरमित्युक्ते स्वरूप-
मेव। न त्वस्मदादिवत् चक्षुरादिविशिष्टमसर्वज्ञत्वापातात्। तच्छरीरे अभिमानसत्त्वे भगवतो भ्रमापाताच्च,
३० अतो लीलाविग्रहसद्भावेऽपि स्वतः शरीरसामान्याभाववानिति ऋजुः पन्थाः। शीर्यत इति शरीरम्।
न हि भगवच्छरीरस्य क्षयोऽस्ति। 'अशरीरमकायं पश्यत्यचक्षुरि'त्यादिश्रुतिश्च यथार्था।
पर्यगात्–ब्रह्मवित् परमात्मानं स्वानुभवगोचरत्वेन प्राप्नुयादित्यर्थः रामानुजीये। नहीदं ब्रह्मविदः
फलोक्तिप्रकरणं फलं तु ततो न विजुगुप्सते तत्र को मोहः इत्यनेनोक्तमेव। स इति च पूर्वप्रकृतप्रधान-
ब्रह्मपरामर्शी न तु जीवपरामर्शी। यत्तु शुक्रमित्यादीनि शुद्धजीवपराणीति। शुद्धस्य ब्रह्माभेदात् तं
३५ स्वाच्छरीरात्प्रवृहेत् तं विद्याच्छुक्रममृतमिति काठकोक्तेः। माध्वमते–शुक्रं शोकरहितमित्यर्थः इत्युक्तम्,
तन्न; शुक्रं शुचेर्ज्वलतिकर्मणः इति निरुक्तम्। शुद्धं ज्योतिष्मदिति रूढ्यर्थसम्भवे शोकं रहति
त्यजतीति व्युत्पत्त्या शोकरहितमित्यर्थोऽयुक्तः शुक्रहमितिरूपापत्तेश्च।

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाᳪरताः ॥ ९ ॥**

पर्यगात्परि[1] समन्तादगाद्गतवानाकाशवद्व्यापीत्यर्थः। शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः। अकायमशरीरो लिङ्ग-शरीरवर्जित इत्यर्थः। अव्रणमक्षतम्। अस्नाविरं स्नावाः शिरा यस्मिन्न विद्यन्त इत्यस्नाविरम्। अव्रणमस्ना-विरमित्याभ्यां स्थूलशरीरप्रतिषेधः। शुद्धं निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेधः। अपापविद्धं धर्मा-धर्मादिपापवर्जितम्। शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना ५ पुंलिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्वदृक्। नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेः। मनीषी मनस ईषिता सर्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्वेषां पर्युपरि भवतीति परिभूः। स्वयंभूः स्वयमेव भवतीति। येषामुपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयंभूः। स नित्यमुक्त ईश्वरो याथातथ्यतः सर्वज्ञत्वाद्यथातथाभावो याथातथ्यं तस्माद्यथाभूतकर्मफलसाधनतोऽर्थान्कर्तव्यपदार्थान्व्यदधाद्विहितवान्यथानुरूपं व्यभजदित्यर्थः। शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यः इत्यर्थः ॥ ८ ॥ १०

अत्राऽद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमो वेदार्थः। ईशावास्यमिदं सर्वं मा गृधः कस्य-स्विद्धनमिति। अज्ञानां जिजीविषूणां ज्ञाननिष्ठाऽसम्भवे कुर्वन्नेवेह कर्माणि जिजीविषेदिति कर्मनिष्ठोक्ता द्वितीयो वेदार्थः। अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः, 'सोऽकामयत जाया मे स्यादि'त्यादिना अज्ञस्य कामिनः कर्माणीति, 'मन एवास्याऽऽत्मा वाग्जाये'त्यादिवचनात् अज्ञत्वं कामित्वं च कर्मनिष्ठस्य निश्चितमव-गम्यते। तथा च तत्फलं सप्तान्नसर्गस्तेष्वात्मभावेनाऽऽत्मस्वरूपावस्थानम्। जायाद्येषणात्रयसंन्यासेन चाऽऽत्मविदां १५ कर्मनिष्ठाप्रातिकूल्येनाऽऽत्मस्वरूपनिष्ठैव दर्शिता 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक' इत्यादिना। ये तु ज्ञाननिष्ठाः संन्यासिनस्तेभ्योऽसुर्या नाम त इत्यादिनाऽविद्वन्निन्दाद्वारेणाऽऽत्मनो याथात्म्यं स पर्यगादित्येतदन्तै-र्मन्त्रैरुपदिष्टम्। ते ह्यत्राधिकृता न कामिन इति। तथा च श्वेताश्वतराणां मन्त्रोपनिषदि "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमि"त्यादि विभज्योक्तम्। ये तु कर्मिणः कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते—अन्धं तम इत्यादि। कथं पुनरेवमवगम्यते न तु सर्वेषामिति? उच्यते—अकामिनः साध्यसाधनभेदोपमर्देन २० "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति यदात्मैकत्वविज्ञानं तन्न केनचित्कर्मणा ज्ञानान्तरेण वा ह्यमूढः समुच्चिचीषति। इह तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते। तत्र च

योऽयमिति। 'स्नु' प्रक्षरणे धातुः। स्नावयन्ति शरीरमिति स्नावाः शिराः। क्रान्तमतिक्रान्तं नष्टमित्युप-लक्षणं भूतभविष्यद्वर्तमानदर्शी ॥ ८ ॥

प्रकरणविभागं दिदर्शयिषुर्वृत्तमनुवदति—अत्राऽऽद्येनेति। यदुक्तं भास्करेण सर्वाऽप्युपनिषदेकं ब्रह्मविद्या- २५ प्रकरणं ततः प्रकरणभेदकरणमनुचितमिति। तदसत्। प्राणाद्युपासनविधानस्याप्युपनिषत्सु दर्शनात्। न च तदपि ब्रह्मज्ञानाङ्गमिति वाच्यम्। पृथक्फलश्रवणात्। तेनापि व्याकृताव्याकृतोपासनसमुच्चयविधानस्य प्रकरणभेदे-नैवेष्टत्वाद्व्याकृताव्याकृतोपासनस्य प्रकारान्तरत्वात्तस्माद्यथा कर्मकाण्डेऽग्निहोत्रादिप्रकरणं भिन्नमेवेष्यते भिन्नाधि-कारत्वात्तत्तत्कर्मणस्तथोपनिषत्स्वपि भिन्नाधिकारत्वात्कर्माविरुद्धतद्विरुद्धविद्याप्रकरणभेदो न विरुध्यते। मन्त्रार्थे ब्राह्मणसम्मतिं दर्शयितुमुपक्रमते—अनयोश्चेत्यादिना। तत्र वाक्ये कथमज्ञत्वमवगम्यत इत्याशङ्क्याऽऽह—मन ३० एवेति। 'जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीये'ति कामयमानस्य सर्वथैव बाह्यो जायादिर्यदा न सम्पद्यते तदाऽध्यात्मं जायादिसम्पत्तिं दर्शयति मन इत्यादिना। एतच्चाज्ञत्वलिङ्गं मनआदिष्वात्मत्वाद्यभिमानस्याज्ञानकार्य-त्वात्। यथा च बाह्यकामिन्यलाभे सुप्तो मनोविजृम्भितकामिनीमुपभुञ्जानोऽज्ञः प्रसिद्धस्तद्वदयमपीत्यर्थः। तेषां च कर्मणां फलं संसाराप्तिरेवेत्यपि तत्रैव दर्शितमित्याह—तथा चेति। एकं साधारणमन्नं यदिदमद्यते द्वे देवानां हुतप्रहुते दर्शपूर्णमासौ वा; त्रीण्यस्य भोगसाधनानि मनोवाक्प्राणलक्षणानि; पश्वर्थमेकं तत्पय इति सप्तान्नसर्गो ३५

1. स आत्मा परितः समन्तात् अगात् सर्वगतः शुक्रमित्यादयः शब्दाः पुंलिङ्गत्वेन परिणेयाः स इत्युप-क्रमात्। अकायः लिङ्गशरीरवर्जितः, अव्रणः अक्षतः, अस्नाविरः शिरारहितः आभ्यां स्थूलदेहराहित्य-मुक्तम्। शुक्रः बाह्याशुद्धिविरहितः। शुद्धे इति आन्तररागाद्यभावः। अपापविद्धः धर्माधर्मरहितः। ( कल्प–१.१.१४ )

'अन्यदेवाऽऽहुर्विद्ययाऽन्यदाहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

यस्य येन समुच्चयः सम्भवति न्यायतः शास्त्रतो वा तदिहोच्यते । यद्दैवं वित्तं देवताविषयं ज्ञानं कर्मसम्बन्धित्वेनो-पन्यस्तं न परमात्मज्ञानम् । 'विद्यया देवलोक' इति पृथक्फलश्रवणात् । तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैवैकैकस्य पृथक्फलश्रवणात् । 'विद्यया तदारोहन्ति' । 'विद्यया देवलोकः' । 'न तत्र

५ दक्षिणा यन्ति' । 'कर्मणा पितृलोक' इति । नहि शास्त्रविहितं किञ्चिदकर्तव्यतामियात् । तत्रान्धं तमोऽदर्शनात्मकं तमः प्रविशन्ति । के । येऽविद्यां विद्याया अन्याऽविद्या तां कर्मेत्यर्थः । कर्मणो विद्याविरोधित्वात् । तामविद्यामग्नि-होत्रादिलक्षणामेव केवलामुपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव ते तमः प्रविशन्ति । के कर्म हित्वा ये उ ये तु विद्यायामेव देवताज्ञान एव रता अभिरताः ॥ ९ ॥

तत्रावान्तरफलमेवं विद्याकर्मणोः समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितैव

१० स्यादित्यर्थः । अन्यदेवेत्यादि । अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुर्वदन्ति "विद्यया देवलोको" "विद्यया तदा-रोहन्ती"ति श्रुतेः । अन्यदाहुरविद्यया कर्मणा क्रियते "कर्मणा पितृलोक" इति श्रुतेः । इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनम् । य आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

दर्शितः श्रुत्या यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेत्यादिना । अत्रैकैको यजमान एव विहितप्रतिषिद्धज्ञान-

१५ कर्मानुष्ठानात्सर्वस्य संसारस्य साक्षात्पारम्पर्याभ्यां जनकत्वात्पितोच्यते । तेषु च सृष्टेष्वन्नेषु तस्य पितुरहमिदं ममेदमित्यात्मत्वाध्यासेन मनआदिष्वितरेषु च सम्बन्धाध्यासेनावस्थानं संसारः प्रसिद्ध इत्यर्थः ।

एवं मन्त्रप्रदर्शिते निष्ठाद्वये ब्राह्मणसम्मतिं दर्शयित्वा प्रकरणविभागं दर्शयति—ये तु ज्ञाननिष्ठा इत्यादिना । अत्याश्रमिभ्य इति । उत्तमाश्रमिभ्य इत्यर्थः । साध्यसाधनभेदोपमर्देन यदात्मैकत्वविज्ञानं यस्मिन्सर्वाणि भूतान्यात्मैवा-भूदित्यवधारणेनोक्तं पूर्वार्धेन, उत्तरार्धेन च संसारनिवृत्तिफलकमुक्तं तन्न श्रौतेन स्मार्तेन वा कर्मणा केनचिदमूढः

२० समुच्चिचीषति । अन्धं तम इत्यादौ तु समुच्चिचीषयाऽविद्वदादिनिन्दा दृश्यते । ततः किमित्यत आह—तत्र च यस्येति । कस्य तर्हि ज्ञानस्य कर्मसमुच्चयः सम्भवतीत्यत आह—यद्दैवं वित्तमिति ।

यच्चोक्तं भास्करेणेशा वास्यमिति मन्त्रे ब्रह्मविद्यायाः प्रक्रान्तत्वात्तस्या एव समुच्चिचीषया निन्दोच्यत इति । तदसत् । न हि प्रकृतमित्येतावता सम्बध्यते किं तु सम्बन्धयोग्यम् । शुद्धब्रह्मात्मैकत्वविद्यायास्तु कर्तृत्वाद्य-ध्यासोपमर्दकत्वान्नास्ति कर्मसम्बन्धयोग्यता । किञ्च यस्मिन्निष्पन्नेऽपि फलस्य व्यवधानं सम्भाव्यते तस्यैव

२५ सहकारिसमुच्चय इष्यते दर्शादेः, इह त्वेकत्वमनुपश्यतः को मोहः कः शोक इत्येकत्वदर्शनसमकालमेव मोहादि-निवृत्त्यभिधानान्न कालान्तरीयफलम् । ततो न सहकारिसमुच्चिचीषा । किञ्चास्या मन्त्रोपनिषदो ब्राह्मणे "ब्राह्मणा विविदिषन्ति यज्ञेने"त्यादौ तृतीयाश्रुत्या यज्ञादेरिष्यमाणवेदने करणत्वेन सम्बन्धः प्रतीयते । तत्कथं दुर्बलेन प्रकरणेन सहकारितया सम्बन्धः प्रकल्प्यते । प्रधानस्य च विद्यायाः सहकारिसम्बन्धविधित्सया निन्देत्यप्ययुक्तम् । अत एव चाग्नीन्धनाद्यनपेक्षेतिसूत्रविरोधश्च । समसमुच्चयश्च परेणापि नेष्यते । विरोधेन च परिजह्रे । तस्मात्कर्मा-

३० विरुद्धदेवताज्ञानस्यैवात्र समुच्चयो विधित्स्यते । ननु देवताज्ञानस्य कर्मफलातिरिक्तफलाभावात्समुच्चयो न सम्भवतीत्यत आह—विद्ययेति । ननु समुच्चिचीषया निन्देति किमिति व्याख्यायते । अध्ययनविधेर्मोक्षा-दर्वाक्पर्यवसानानुपपत्तेर्देवलोकादिप्राप्तेः फलाभासत्वात्प्रहाणार्थैव निन्दा किं नेष्यते तत्राऽऽह—तयोर्ज्ञानकर्मणो-रिति । न फलशब्दो मोक्षे रूढो मोक्षमनिच्छतामपि समीहिते फलव्यवहारदर्शनात्ततो यो देवलोकादिकमुपादित्सते तस्य तदपि फलं भवत्येवेत्यर्थः ॥ ९-१०-११ ॥

३५ १. ननु ज्ञानकर्मणोः पृथगनुष्ठानप्रसक्तिरेव नास्ति इति पृथगनुष्ठानं किमर्थं निन्द्यते अत आह—अन्यदेवेति । पृथक् फलश्रवणात् पृथगनुष्ठेयत्वं प्रसक्तमेव—सायणः ।

माध्वास्तु—यथावज्ज्ञानस्येव अन्यथाज्ञाननिन्दनस्यावश्यकर्तव्यत्वोपपादनाय अन्यथाज्ञानस्या-सुर्यलोकप्राप्तिसाधनत्वमनूद्य अन्यथाज्ञानानिन्दनस्य ततोऽधिकानर्थहेतुत्वमाह—अन्धं तम इति । तन्न । न नापं पापिनं ब्रूयादित्यादिशास्त्रविरोधात् । मिथ्याज्ञानं परिहर्तव्यमित्यनेनैवानिष्टनिवृत्तिसम्भवे

४० तन्निन्दाविधानं व्यर्थमेव । विद्यां चाविद्यां चेत्यत्र अपरविद्याकर्मणोः समुच्चयो भाष्ये उक्तः ।

**विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**
**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते । ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ १२ ॥**

यत एवमतो [1]विद्यां चाविद्यां च देवताज्ञानं कर्म चेत्यर्थः यस्तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयं वेद तस्यैवं समुच्चयकारिण एवैकपुरुषार्थसम्बन्धः क्रमेण स्यादित्युच्यते—अविद्यया कर्मणाऽग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म ज्ञानं च मृत्युशब्दवाच्यमुभयं तीर्त्वाऽतिक्रम्य विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति । तद्ध्य- ५
मृतमुच्यते यद्देवतात्मगमनम् ॥ ११ ॥

अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते—अन्धं तमः प्रविशन्ति येऽसम्भूतिं

चित्तन्त्रा माया परमेश्वरस्योपाधिः। "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि"त्यादिश्रुत्यन्तरप्रसिद्धाऽत्रा-

---

१. अत्र मतान्तरे—ज्ञानकर्मणोः समुच्चयोऽत्र विधीयत इत्यूचुः । तन्न । विद्या ह्यत्र निर्गुणब्रह्मविद्यैवोक्ता अनेजदेकं, स पर्यगाच्छुक्रमित्यादिना निर्गुणब्रह्मबोधनात् निर्गुणविद्यायाः कर्मसमुच्चयासम्भवात् । १०
यत्तु उपासनरूपविद्या कर्माङ्गत्वेन विधीयत इत्युक्तम्, तन्न, उपासनायाःअङ्गत्वे पृथक् फलोक्त्यनुपपत्तेः अङ्गेषु फलश्रुतेरर्थवादत्वात्, अतः उपासनाकर्मणोः समुच्चयविधानमेवेदम् ।

माध्वास्तु—अविद्या मिथ्याज्ञानस्य निन्दा साऽपि मोक्षप्राप्तये कर्तव्या । तयाऽनिष्टनिवृत्तिः । इदमपि चिन्त्यम् । मिथ्याज्ञानं परिहर्तव्यमित्यनेनैवनिष्टनिवृत्तिसम्भवे तन्निन्दाविधानं व्यर्थमेव ।
माण्डूक्यकारिकाभाष्ये तथा ऐतरेयभाष्ये च विद्यापदेन मुख्या ब्रह्मविद्यैव परिगृहीता । विद्याऽविद्ययोः १५ ज्ञानकर्मणोः समुच्चयस्तु क्रमेणैकपुरुषवृत्तित्वात् न तु एककालिकसमुच्चयः विरोधात् । ऐतरेयकेऽयं विशेषः यत् तपआदि गुरूपासनादि च विद्योत्पत्तिसाधनं कर्म अविद्यापदेनोच्यत इति । अत्रापि समुच्चयः क्रमिक एव ।
लोकमान्यतिलकस्तु—स्वीये गीतारहस्ये विद्यां चाविद्याञ्चेति शुद्धब्रह्मविद्यैव ग्राह्या नतूपासनं शङ्कराचार्योक्तं युक्तम् । शङ्कराचार्याः विद्यापदं ब्रह्मविद्यापरमिति जानन्तोऽपि ज्ञानकर्मसमुच्चयं विरुद्धं २० मन्यन्ते । वयं तु श्रुतीनामेकार्थत्वं न मन्यामहे । मोक्षं प्रति बहव उपाया बहुभिर्महर्षिभिस्तत्तदुपनिषत्सु विहिताः । तेषामेकवाक्यत्वं नावश्यकम् । अतो ज्ञानकर्मसमुच्चय एवास्या उपनिषदस्तात्पर्यम् । उव्वटभाष्ये अनन्ताचार्यभाष्ये च विद्यापदं ब्रह्मविद्यापरमित्युक्तम्, इत्याहुः । तन्न । भगवत्पादैरपि विद्यापदेन ब्रह्मविद्योक्तेति माण्डूक्यैतरेयकभाष्ययोः प्रदर्शनात् । समुच्चयश्च क्रमसमुच्चय इत्येवमेव उव्वटानन्ताचार्याभ्यां लिखितम् । उपनिषदां भिन्नवाक्यत्वं तु नानुमन्यामहे । "सर्वे वेदा यत्पदमा- २५ मनन्ति" "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति श्रुतिसूत्राभ्यामेकवाक्यत्वनिरूपणात् ।

उपासनापरतया अत्र व्याख्यानं तु ज्ञानकर्मणोः सहशब्दोक्तस्य एककालीनसमुच्चयस्यासम्भवादेव कृतं; उत्तरत्र श्रुतमार्गयाचनस्य सगुणोपासन एव सम्भवाच्च । निर्गुणविद्याया उत्क्रान्तिं विनाऽत्रैव मुक्तिसाधनत्वात् मुक्तेर्मार्गयाचनस्य सन्दर्भविरोधाच्च । अतः सगुणोपासनपरतया व्याख्यानं युक्तमेव । अपि च सहशब्दोऽत्र क्रमसमुच्चयपर एव । यत उत्तरत्र अविद्यया कर्मणा मृत्युं तीर्त्वा तदुत्तरकाल एव ३० विद्ययाऽमृतत्वप्राप्तिश्रवणं तथैव सङ्गच्छते । अपि च मा गृध इति ज्ञानिनः इच्छानिषेधः, जिजीविषेत् इति कर्मिणः इच्छानुवादश्च समकाले ज्ञानकर्मणोः समुच्चयाभावमेव सूचयतः ।

आर्यसमाजीये दयानन्दभाष्ये—अविद्या अशुद्धे शुद्ध इति अनात्मनि शरीरे आत्मेति बुद्धिश्च । विद्या तु ये सत्यभाषणन्यायाचरणरूपधर्मरहिताः अभिमानारूढाः संस्कृतभाषाभिज्ञाः केवलं शब्दार्थज्ञानवन्तः तेषां ज्ञानं इति अन्धं तम इत्यादिमन्त्रं व्याख्याय विद्यां चाविद्यां चोभयं सहेति मन्त्रे अन्यादृशे ३५ विद्याविद्ये प्रदर्शिते । तत्तु प्रक्रमोक्ते विद्याविद्यापरत्वे सम्भवति, अन्यादृशयोस्तयोः परिग्रहे कारणा- भावादयुक्तम् ।

**अन्यदेवाऽहुः सम्भवादन्यदाहुरसम्भवात् । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥**

**सम्भूतिं च विनाशं च यस्तद्वेदोभयꣳ सह । विनाशेन मृत्युं तीर्त्वाऽसम्भूत्याऽमृतमश्नुते ॥ १४ ॥**

सम्भवनं सम्भूतिः सा यस्य कार्यस्य सा सम्भूतिस्तस्या अन्या असम्भूतिः प्रकृतिः कारणमविद्याऽव्याकृताख्या तामसम्भूतिमव्याकृताख्यां प्रकृतिं कारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते ये ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं प्रविशन्ति । ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति य उ सम्भूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ॥ १२ ॥

अधुनोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह—अन्यदेवेति । अन्यदेव पृथगेवाऽहुः फलं सम्भवात्सम्भूतेः कार्यब्रह्मोपासनादणिमाद्यैश्वर्यलक्षणं व्याख्यातवन्त इत्यर्थः । तथा चान्यदाहुरसम्भवादसम्भूतेरव्याकृतादव्याकृतोपासनाद्यदुक्तमन्धं तमः प्रविशन्तीति प्रकृतिलय इति च पौराणिकैरुच्यते । इत्येवं शुश्रुम धीराणां वचनं ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफलं व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

यत एवमतः समुच्चयः सम्भूत्यसम्भूत्युपासनयोर्युक्त एवैकपुरुषार्थत्वाच्चेत्याह—सम्भूतिं[1] च विनाशं च यस्तद्वेदोभयꣳ सह । विनाशेन विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणाऽभेदेनोच्यते विनाश इति । तेन

सम्भूतिशब्देनोच्यते न ब्रह्म । तस्य निर्विकारस्य साक्षात्प्रकृतित्वानुपपत्तेः । भास्कराभिमतस्तु परिणाम-

[1] अत्र व्याकृताव्याकृतोपासनयोः समुच्चयो विधित्सितः । माध्यन्दिनपाठे आदौ अन्धं तमः प्रविशन्ति ये सम्भूतिमुपासते इति मन्त्रत्रयं पठित्वा तदनन्तरं अन्धं तमः प्रविशन्ति येऽविद्यामुपासते इत्यादिमन्त्राः पठिताः, तदनुसारेण माण्डूक्यकारिका तद्भाष्यं च प्रवृत्ते । तत्र च सम्भूतिरित्येव पदच्छेदो नाकारप्रश्लेषः, ततश्चायमर्थः—सम्भूतिर्नाम देवतोपासनं विनाशः कर्म तयोः समुच्चयविधानार्थमेकैकनिन्दा । कर्म वैदिकं स्वाभाविकाज्ञानप्रवृत्तिरूपमृत्योरतितरणार्थम् । देवतादर्शनरूपसम्भूतिः फलरागप्रवृत्तिरूपसाध्यसाधनैषणाद्वयतरणार्था । एवमुभयविधमृत्योरतिक्रान्तो विरक्त उपनिषच्छास्त्रार्थालोचनक्षमः । विद्यां ब्रह्मविद्यां प्राप्नोति । तदुक्तं भाष्ये—पूर्वभाविनीमविद्यामवेक्ष्य पश्चाद्भाविनी ब्रह्मविद्या अमृतत्वसाधना एकेन पुरुषेण क्रमेण समुच्चीयमाना अविद्यया समुच्चीयत इत्युच्यत इति । अतोऽमृतत्वसाधनब्रह्मविद्यामपेक्ष्य निन्दार्थः सम्भूत्यपवादः । भामत्यां तु—समन्वयाधिकरणान्ते वृत्तिरूपसाक्षात्कारः अविद्या सा मृत्युं नाशयति तया मृत्युं तीर्त्वा विद्यारूपब्रह्मोपलक्षितं अमृतमश्नुते । विद्यां चाविद्यां चेति साधनफलयोर्भिन्नकालिकयोः समुच्चय इत्युक्तम् ।

यत्तु माध्वव्याख्यानं—ये असम्भूतिमुपासते प्रलयकर्ता भगवान् ये सृष्टेरकर्त्तेत्युपासते ते नरकं यान्ति । ये सम्भूत्यां रताः भगवान् सृष्टेरेव कर्ता इति ज्ञानवन्तः तेऽपि तमः प्रविशन्ति अतो भगवान् सृष्टिप्रलययोः कर्तेत्युपासनीय इति । तन्न । एवं सति स्थितिकर्तृत्वानुपासनात् पुनः नरकप्राप्तिं को वारयेत् । किञ्च भगवत्तत्त्वज्ञानान्मोक्षप्राप्तिः तत्र तत्राभिहिता विरुध्येत ।

यच्च रामानुजीयानां व्याख्यानं—विद्यां चाविद्यां चेति ज्ञानकर्मसमुच्चयविधानम् । तत्र विद्या साक्षाद्भगवत्प्राप्तिसाधनं कर्म च तस्या अङ्गमित्युक्तम् । तन्न । अविद्याशब्दितस्य कर्मण अविद्यया मृत्युं तीर्त्वेति पृथक्फलश्रवणात्, अङ्गानां फलाभावात् । अतः कर्मणां न विद्याङ्गत्वम् । अङ्गत्वे विद्यापदेन साङ्गं पृथक् गृह्येत ।

यत्तु सम्भूतिं च विनाशं चेत्यत्र सम्भूतिः ब्रह्मानुभूतिः । विनाशः समाध्यन्तरायाणां विनाश इति; तत्राप्युक्तविनाशस्य समाध्यङ्गत्वात् विनाशेन मृत्युं तीर्त्वेति पृथक्फलकथनमयुक्तम्, अङ्गानां पृथक्फलाभावात् । अपि च येऽसम्भूतिमुपासते समाधिविरुद्धरागद्वेषादिनिवृत्तिमात्रनिष्ठाः ते अन्धं तमः प्रविशन्तीति चित्रं "न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छती"ति भगवद्वचनविरोधात् । ये ब्रह्मसमाधिमात्रनिष्ठास्ते तमः प्राप्नुवन्तीत्यपि न; यान्ति मद्याजिनोऽपि मामित्यनेन विरोधात् । अपि च सम्भूतिं च विनाशं चेत्यत्र सम्भूतिः समाधिरिति व्याख्यानमयुक्तम्, संभूतेरुत्पत्यर्थत्वात् । अपि च विनाशपदेन पूर्वोक्तसम्भूतिपरामर्शो न युक्तः उत्पन्नस्य विनाशित्वनियमात् अनुत्पन्नस्याविनाशित्वात् ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

तदुपासनेनानैश्वर्यमधर्मकामादिदोषजातं च मृत्युं तीर्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम् । तेनानैश्वर्यादिमृत्युमतीत्य असम्भूत्याऽव्याकृतोपासनयाऽमृतं प्रकृतिलयलक्षणमश्नुते । सम्भूतिं च विनाशं चेत्यत्रावर्णलोपेन निर्देशो द्रष्टव्यः प्रकृतिलयफलश्रुत्यनुरोधात् ॥ १४ ॥

मानुषदैववित्तसाध्यं फलं शास्त्रलक्षणं प्रकृतिलयान्तम् । एतावती संसारगतिः । अतः परं पूर्वोक्तमात्मैवाभूद्विजानत इति सर्वात्मभाव एव सर्वैषणासंन्यासज्ञाननिष्ठाफलम् । एवं द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र प्रकाशितः । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम् । निवृत्तिलक्षणस्य वेदार्थस्य प्रकाशनेऽत ऊर्ध्वं बृहदारण्यकमुपयुक्तम् । तत्र निषेकादिश्मशानान्तं कर्म कुर्वञ्जिजीविषेद्यो विद्यया सहापरब्रह्मविषयया; तदुक्तं "विद्यां चाविद्यां च यस्तद्वेदोभय सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत" इति तत्र केन मार्गेणामृतत्वमश्नुत इत्युच्यते—"तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुष" एतदुभयं सत्यं ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते हिरण्मयेन पात्रेण । हिरण्मयमिव हिरण्मयं ज्योतिर्मयमित्येतत् । तेन पात्रेणेवापिधानभूतेन [1]सत्यस्यैवाऽऽदित्यमण्डलस्थस्य ब्रह्मणोऽपिहितमाच्छादितं मुखं द्वारम् तत्त्वं हे पूषन्नपावृण्वपसारय सत्यधर्माय तव सत्यस्योपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मा तस्मै मह्यमथवा यथाभूतस्य धर्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उपलब्धये ॥ १५ ॥

वादस्तत्त्वालोके[2] निरस्त एवास्माभिः । सांसारिकदुःखानुभवाभावेन च सुषुप्तिवत्प्रकृतिलयस्य पुरुषेणार्थ्यमानताऽप्युपपद्यते । फलं च कार्योपासन इव प्रकृत्युपासनेऽपि परमेश्वर एव दास्यति । ततो जडत्वात्प्रकृतेः फलदातृत्वानुपपत्तेरुपास्यत्वानुपपत्तिरित्यपि कुचोद्यमेव ॥ १२-१३-१४ ॥

विस्तरेणोक्तमर्थजातं संक्षिप्योपसंहरति—मानुषदैववित्तसाध्यमित्यादिना । शरीरपाटवं गोभूहिरण्यादिसाधनसम्पत्तिश्च मानुषं वित्तम् । दैवं वित्तं देवताज्ञानम् । उत्तरग्रन्थस्य सम्बन्धाभिधित्सयाऽर्थविशेषमनुवदति—तत्र निषेकादीत्यादिना । तदुक्तमिति । तं प्रत्युक्तं मन्त्रेण विद्यां चेत्यादिनाऽऽपेक्षिकामृतत्वं फलमित्युक्तमस्माभिरिति ॥ १५ ॥

---

१. अत्र सत्यस्य जीवस्येति रामानुजीयं व्याख्यानमयुक्तं ब्राह्मणे 'तद्यत्तत् सत्यमसौ स आदित्य' इति आदित्यान्तर्गतसत्यब्रह्मण एवात्र प्रत्यभिज्ञानात् । तदुपासकस्य मार्गयाचनात् । सत्यशब्दश्च सत्यं ज्ञानमनन्तं तत्सत्यं स आत्मा इत्यादौ ब्रह्मणि प्रसिद्धो न जीवे । प्राजापत्यः प्रजापतिपुत्रः सूर्यः न तु विष्णुः । योऽसावसौ पुरुषः सोऽहमस्मीत्यस्य च अहं = मदन्तर्यामी परमपुरुषाभिन्नमिति व्याख्यानमयुक्तम्, अस्मीत्यनन्वयात् । नियमान्तरकरणं परिभाषामात्रं वेदव्याख्याने नोपयुज्यते । एवमेव तत्त्वमसीत्यत्रापि त्वदुक्तार्थे असिपदप्रयोगो विरुध्यते । अन्तर्यामिभेदाप्रसक्तेश्च ।

यत्तु माध्वव्याख्यानं—योऽसौ विष्णुः मुख्यप्राणे इति शेषः, सः अहं अहेयत्वात् अस्मि सर्वदा सन्नित्यर्थः । इदं च य एव लौकिकाः शब्दास्त एव वैदिकाः त एव तेषामर्था इति लोकवेदाधिकरणन्यायविरुद्धं व्याख्यानम् । एवं वायुरनिलमिति मन्त्रेऽपि क्लिष्टकल्पनमयुक्तम् ।

२. तत्र हि—'मायां तु प्रकृतिं विद्यात्' 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादौ मायायाः परिणामित्वं तत्सहकारेणेश्वरस्य स्वोपाधिमायापरिणामैः जगदाश्रयत्वं चोच्यते । स्मृतयोऽपि मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति प्रकृतेरेव परिणामित्वमाहुः । ब्रह्मणो जगत्प्रकृतित्वं च जगदध्यासाधिष्ठानत्वरूपं विवर्तोपादानत्वं, अन्यस्य मुख्यस्यासम्भवात् । न च सृष्टिश्रुतेः सत्यमेव परिणामित्वं तत्रापि सत्यशब्दाश्रवणात् स्वप्नसृष्टिश्रुतिवदुपपत्तेश्च । वाचारंभणश्रुतेः विकारानृतत्वनिर्णयात् ।

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥१७॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥

इति वाजसनेयसंहितोपनिषत्सम्पूर्णा

ॐ [1]पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः

पूषन्निति । हे पूषन् । जगतः पोषणात्पूषा रविस्तथैक एव ऋषति गच्छतीत्येकर्षिः । हे एकर्षे । तथा सर्वस्य संयमनाद्यमः । हे यम । तथा रश्मीनां प्राणानां रसानां च स्वीकरणात्सूर्यः । हे सूर्य प्रजापतेरपत्यं प्राजापत्यः । हे प्राजापत्य । व्यूह विगमय रश्मीन्स्वान् । समूह, एकी कुरु, उपसंहर ते तेजस्तापकं ज्योतिः । यत्ते तव रूपं कल्याणतममत्यन्तशोभनं तत्ते तवाऽऽत्मनः प्रसादात्पश्यामि । किञ्चाहं न तु त्वां भृत्यवद्याचे, योऽसावादित्यमण्डलस्थो व्याहृत्यवयवः पुरुषः पुरुषाकारत्वात् पूर्णं वाऽनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुषः पुरि शयनाद्वा पुरुषः सोऽहमस्मि भवामि ॥ १६ ॥

वायुरिति । अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदैवतात्मानं सर्वात्मकमनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः । लिङ्गं चेदं ज्ञानकर्मसंस्कृतमुत्क्रामत्विति द्रष्टव्यम् । मार्गयाचनसामर्थ्यात् । अथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात् । ओमिति यथोपासनमोंप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते । हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्तव्यं तस्य कालोऽयं प्रत्युपस्थितोऽतः स्मरैतावन्तं कालं भावितं कृतमग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर। क्रतो स्मर कृतं स्मरेति पुनर्वचनमादरार्थम् ॥१७॥

पुनरन्येन मन्त्रेण मार्गं याचते—अग्ने नयेति । हेऽग्ने नय गमय सुपथा शोभनेन मार्गेण । सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । निर्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेनातो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नय । राये धनाय कर्मफलभोगायेत्यर्थः । अस्मान्यथोक्तधर्मफलविशिष्टान्विश्वानि सर्वाणि हे देव वयुनानि कर्माणि प्रज्ञानानि वा विद्वाञ्जानन् । किं च युयोधि वियोजय विनाशयास्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकमेनः पापम् । ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः । किं तु वयमिदानीं ते न शक्नुम परिचर्यां कर्तुं, भूयिष्ठां बहुतरां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारेण परिचरेमेत्यर्थः ।

"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" । "विनाशेन मृत्युं तीर्त्वाऽसम्भूत्याऽमृतमश्नुत" इति श्रुत्वा केचित्संशयं कुर्वन्ति[2] । अतस्तन्निराकरणार्थं संक्षेपतो विचारणां करिष्यामः। तत्र तावत्किंनिमित्तः संशय इत्युच्यते। विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यतेऽमृतत्वं च । ननूक्तायाः परमात्मविद्यायाः कर्मणश्च विरोधात्समुच्चयानुपपत्तिः । सत्यम् । विरोधस्तु नावगम्यते, विरोधाविरोधयोः शास्त्रप्रमाणकत्वात् । यथाऽविद्यानुष्ठानं

व्याहृत्यवयव इति । तस्य भूरिति शिरः भुव इति बाहू सुवरिति प्रतिष्ठा पादावित्यर्थः ॥ १६-१७ ॥

मन्त्रान्पदशो व्याख्याय संक्षेपतो विचारमारभते—अविद्यया मृत्युं तीर्त्वेत्यादिना । अमृतत्वं चेति । अमृतत्वं च मुख्यमेव कस्मान्न गृह्यत इति सम्बन्धः । शास्त्रीययोर्ज्ञानकर्मणोर्विरोधाविरोधौ शास्त्रीयावेव ग्राह्यौ

---

१. अस्या उपनिषदः आरम्भे अन्ते च पूर्णमद इत्यादिमन्त्रः शान्त्यर्थत्वेन पठ्यते । तदर्थश्च—अदः परोक्षं ब्रह्म पूर्णम्=त्रिविधपरिच्छेदरहितम् । इदं शरीराद्युपाधिपरिच्छिन्नं ब्रह्म पूर्णं स्वेन रूपेण नतूपाधिपरिच्छिन्नेन इदं पूर्णं पूर्णात् परात्मनः एवोदच्यते उद्गच्छति । उपाध्युद्भवेनोद्भवति, पूर्णस्य कार्यात्मनः पूर्णत्वमादाय अविद्याकृतोपाधिपरिच्छेदं तिरस्कृत्य पूर्णमेव केवलं ब्रह्मावशिष्यते इत्यर्थः ।

२. संशयं कुर्वन्तीति मृदूक्तिः । पूर्वपक्षं कुर्वन्तीत्यर्थः

विद्योपासनं च शास्त्रप्रमाणकं तथा तद्विरोधाविरोधावपि। यथा च [1]'न हिंस्यात्सर्वा भूतानीति शास्त्रावगतं पुनः शास्त्रेणैव बाध्यते—अध्वरे पशुं हिंस्यादिति। एवं विद्याविद्ययोरपि स्यात्, विद्याकर्मणोश्च समुच्चयः।

न, "दूरमेते विपरीते विषूची अविद्या या च विद्ये"तिश्रुतेः हेतुस्वरूपफलविरोधात्। विद्यां चाविद्यां चेति वचनादविरोध इति चेन्न। विद्याऽविद्याविरोधाविरोधयोर्विकल्पासम्भवात्। समुच्चयविधानादविरोध एवेति चेन्न। सहसम्भवानुपपत्तेः। क्रमेणैकाश्रये स्यातां विद्याविद्ये इति चेन्न। विद्योत्पत्तावविद्याया ह्यस्तत्वात्तदाश्रयेऽविद्यानुपपत्तेः। न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्नेवाऽऽश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिर्नापि संशयोऽज्ञानं वा। "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति शोकमोहाद्यसम्भवश्रुतेः। अविद्याऽसम्भवात्तदुपादानस्य कर्मणोऽप्यनुपपत्तिमवोचाम। अमृतमश्नुत इत्यापेक्षिकममृतं, विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयेनेत्यादिना द्वारमार्गादियाचनमनुपपन्नं स्यात्तस्मादुपासनया समुच्चयो न परमात्मविज्ञानेनेति यथास्माभिर्व्याख्यात एव मन्त्रार्थ इत्युपरम्यते ॥ १८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ
वाजसनेयसंहितोपनिषद्भाष्यं सम्पूर्णम्।

न तर्कमात्रेणेति परेणोक्ते सिद्धान्ती शास्त्रसिद्ध एव विरोध इत्याह—न दूरमेते इति। विषूची नानागती विद्याविद्ये दूरं विपरीते अतिशयेन विरुद्धे इत्यर्थः। सहसम्भवानुपपत्तेरिति। काऽनुपपत्तिः ? काठके विरोधश्रवणात् तद्गतविद्याविद्ययोर्विरोधोऽस्तु। इह त्वविरोधश्रवणादविरोधो भविष्यतीति न वाच्यम्। विरोधाविरोधयोः सिद्धत्वेन विकल्पासम्भवात्। उदितानुदितहोमयोर्हि पुरुषतन्त्रत्वाद्युक्तो विकल्प इत्युक्तं, तर्ह्यविरोध एवास्तु समुच्चयविधिबलादिति चेन्न। मुख्यब्रह्मविद्याविद्ययोः शुक्तिविद्याविद्ययोरिव सहसम्भवानुपपत्तेः 'समुच्चयविधिरसिद्धः। सिद्धे समुच्चयविधौ तद्बलादविरोधावगमोऽविरोधावगमाच्च समुच्चयसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः। सहसम्भवानुपपत्तावपि क्रमेणैकाश्रये विद्याविद्ये स्यातामिति चेद्यदि पूर्वमविद्या पश्चात्तु विद्येति क्रमस्तर्हीष्यत एव। यदि पश्चात्तर्ह्यसम्भव इत्याह—न विद्योत्पत्ताविति। पूर्वसिद्धाया अविद्यायाः प्रध्वस्तत्वादन्यस्याश्चोत्पत्तौ कारणासम्भवान्मूलाभावेन भ्रमसंशयाग्रहणानामपि विदुषोऽनुपपत्तिरित्यर्थः। विद्योत्पत्तौ मा भूदविद्या कर्म तु भविष्यति विदुषोऽपि व्याख्यानभिक्षाटनादिदर्शनादित्याशङ्क्याह—अविद्याऽसम्भवादिति। चोदनाप्रयुक्तानुष्ठानं हि कर्म ज्ञानेन सह तव समुच्चिचीषितं ब्रह्मात्मैकत्वं तु साक्षादनुभवतो न चोदना सम्भवति कामाभावात्कामिनो हि सर्वाश्चोदनाः। 'अकामिनः क्रिया काचिद्दृश्यते नेह कस्यचित्। यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्', इति स्मरणात्। विद्वच्छरीरस्थितिहेत्वविद्यालेशाश्रयकर्मशेषनिमित्तं तु विदुषो भिक्षाटनादि न कर्म, चोदनाभावात्किन्तु यावत्प्राणशरीरसंयोगभावि तत्कर्माभासं तच्च विद्वान्न स्वगतं मन्यते कर्माध्यासोपादानाविद्याया असम्भवान्नैव किञ्चित्करोमीति प्रत्ययाच्चेति भावः। यदुक्तममृतशब्देन मुख्यमेवामृतत्वं किं न गृह्यते विद्याशब्देन च परमात्मविद्येति तत्राऽऽह—अमृतमिति। मुख्यामृतत्वग्रहणे हिरण्मयादिमन्त्रेण द्वारमार्गयाचनमनुपपन्नं स्यात्। न तस्य प्राणा उत्क्रामन्त्यत्र ब्रह्म समश्नुत इत्यादिश्रुतेः। ततो मुख्यार्थबाधाद्गौणार्थग्रहणं युक्तमित्यर्थः। यस्मादर्थान्तरं न सङ्गच्छते तस्मादित्युपसंहारः ॥ १८ ॥

ईशाप्रभृतिभाष्यस्य शाङ्करस्य परात्मनः।
मन्दोपकृतिसिद्ध्यर्थं प्रणीतं टिप्पणं स्फुटम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृता
वाजसनेयसंहितोपनिषद्भाष्यटीका समाप्ता

---

१. न हिंस्यादित्येकं शास्त्रं, अग्निषोमीयं पशुं हिंस्यादित्यपरं तयोः विरोधो दृश्यते। अतः रागप्राप्तहिंसाविषयत्वेन अहिंसाशास्त्रं सङ्कोच्यते, प्रकृते तु समुच्चयः शास्त्रेणैव प्रतिपाद्यते तत्र को विरोध इति पूर्वपक्षः। निर्गुणविद्यायाः कर्मणा समुच्चयासम्भवादेवात्र सगुणोपासनरूपा विद्या गृहीता। क्रमिकसमुच्चयस्तु सम्भवत्येवेत्यदोषः।

ॐ

सामवेदीयतलवकारशाखीया

# केनोपनिषत्

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः

आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मौपनिषदं
माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं
मे अस्तु, तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ५

ॐ शान्तिः शान्तिः शान्तिः

ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

## श्रीमच्छङ्करभगवत्पादाचार्यविरचितं पदभाष्यम्

केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्याऽऽरम्भः । प्रागेतस्मात्कर्माण्यशेषतः १० परिसमापितानि समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्माङ्गसामविषयाणि च । अनन्तरं च गायत्रसामविषयं दर्शनं वंशान्तमुक्तं कार्यं, सर्वमेतद्यथोक्तं कर्म च ज्ञानं च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति । सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति । स्वाभाविक्या त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ताऽधोगतिः स्यात् । "अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् ।" इति १५

## श्रीमदानन्दगिर्याचार्यकृता टीका

यच्छ्रोत्रादेरधिष्ठानं चक्षुर्वागाद्यगोचरम् ।
स्वतोऽध्यक्षं परं ब्रह्म नित्यमुक्तं भवामि तत् ॥ १ ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारोऽहंप्रत्ययगोचरस्याऽऽत्मनः संसारित्वादसंसारिब्रह्मभावस्योपनिषत्प्रतिपाद्यस्यासम्भवान्निर्विषयत्वादव्याख्येयत्वमित्याशङ्क्याहङ्कारसाक्षिणः संसारित्वग्राहकप्रमाणाविषयत्वाद्ब्रह्मत्वप्रतिपादने विरोधासम्भवात्सविषयत्वाद्व्याख्येयत्वं प्रतिजानीते–केनेषितमित्याद्येति । २० कस्तर्हि नवमस्याध्यायस्याष्टाध्याय्या सह नियतपूर्वोत्तरभावानुपपत्तिलभ्यः सम्बन्ध इत्याशङ्क्य हेतुहेतुमद्भावलक्षणसम्बन्धं दर्शयितुं वृत्तमनुवदति–प्रागेतस्मादित्यादिना । कर्माङ्गसाम पाञ्चभक्तिकं साप्तभक्तिकं च तद्विषयाण्युपासनानि पृथिव्यादिदृष्ट्योक्तानि । प्राणदृष्ट्या गायत्रसामोपासनं च । शिष्याचार्यसन्तानाविच्छेदो वंशस्तदवसानेन ग्रन्थेन कार्यरूपमेव वस्तूक्तं चेत्तर्हि प्राणाद्युपासनसहितस्य कर्मणः संसारफलत्वाद्ब्रह्मज्ञानानुपयोगात्कथं हेतुहेतुमद्भावः २५ सम्बन्धोऽभिधित्सित इत्याशङ्क्य नित्यकर्मणां तावज्ज्ञानोपयोगित्वं कथयति—सर्वमेतदिति । काम्यानां प्रतिषिद्धानां च फलं तद्दोषदर्शनेन वैराग्यार्थं कथयति—सकामस्य त्विति । एतयोः पथोर्ज्ञानकर्मणोर्मध्ये केनापि मार्गेण ये न प्रवृत्तास्ते प्रतिषिद्धानुष्ठायिन इत्यर्थः । जायस्व म्रियस्वेति । पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः । तिस्रः प्रजा जरायुजाण्डजोद्भिज्जलक्षणाः । पितृयाणदेवयानलक्षणमार्गद्वयगमनमतीत्य कष्टामेव गतिमीयुः प्राप्ता इत्यर्थः ।

श्रुतेः । "प्रजा ह तिस्रो अत्यायमीयुः" इति मन्त्रवर्णात् विशुद्धसत्त्वस्य तु निष्कामस्यैव बाह्यादनित्यात्साध्यसाधन-सम्बन्धादिह कृतात्पूर्वकृताद्वा संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्तते । तदेतद्वस्तु प्रश्न-प्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया । काठके चोक्तम्—"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मा-त्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥" इत्यादि । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्याद्याथर्वणे च । एवं हि विरक्तस्य प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुं च सामर्थ्यमुपपद्यते नान्यथा । एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात्संसारबीजमज्ञानं कामकर्मप्रवृत्तिकारणमशेषतो निवर्तते । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति मन्त्रवर्णात् । "तरति शोकमात्मवित्" इति, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ मुं. उ. २-२-८ ॥ इत्यादिश्रुतिभ्यश्च ।

कर्मसहितादपि ज्ञानादेतत्सिध्यतीति चेन्न । वाजसनेयके तस्यान्यकारणत्ववचनात्[1] । "जाया मे स्यात्" इति प्रस्तुत्य "पुत्रेणायं लोको जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तं वाजसनेयके । तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः—"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति । तत्रायं हेत्वर्थः—प्रजाकर्मतत्संयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोक-प्रतिपत्तिकारणैः किं करिष्यामो न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टं येषामस्माकं स्वाभाविकोऽजोऽजरोऽ-मृतोऽभयो न वर्धते कर्मणा नो कनीयान्नित्यश्च लोक इष्टः । स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधन-निष्पाद्यः, तस्मात्प्रत्यगात्मब्रह्मविज्ञानपूर्वकः सर्वैषणासंन्यास एव कर्तव्य इति । कर्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य । न ह्युपात्तकारकफलभेदविज्ञानेन कर्मणा प्रत्यस्तमितसर्वभेददर्शनस्य प्रत्यगात्मब्रह्म-विषयस्य सहभावित्वमुपपद्यते । वस्तुप्राधान्ये सत्यपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य ।

तस्माद्दृष्टादृष्टेभ्यो बाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं केनेषितमित्यादिश्रुत्या

एवं कर्मफलमुक्त्वा ततो विरक्तस्य विशुद्धसत्त्वस्य ब्रह्मज्ञानेऽधिकार इति दर्शयन्हेतुहेतुमद्भावमाह—विशुद्धसत्त्वस्य त्विति । साध्यसाधनसम्बन्धाद्विरक्तस्येति सम्बन्धः । तत्र निमित्तस्यादृष्टस्यानियतत्वमाह—इह कृतादिति । कर्मफला-द्विरक्तस्य ब्रह्मजिज्ञासा भवतीत्यत्रान्यसंवादमाह—काठके चेति । आवृत्तचक्षुरिति । साध्यसाधनभावादुपरतकरण-ग्रामः चक्षुर्ग्रहणस्योपलक्षणार्थत्वात् । अन्वयव्यतिरेकसिद्धत्वं चाऽऽह—एवं हीति । नान्यथेति । अविरक्तस्य बहिर्विषयाक्षिप्तचेतस आत्मजिज्ञासैवानुपपन्ना कथञ्चिज्जाताऽपि न फलावसाना स्याच्छूद्रयागादिवदित्यर्थः । यद्यप्येवमुपनिषदः कर्मकाण्डसम्बन्धोऽस्ति तथाऽप्युपनिषज्जन्यज्ञानस्य निष्प्रयोजनत्वान्नोपनिषदो व्याख्यारम्भः सम्भवतीत्याशङ्क्याऽऽह—एतस्माच्चेति । समुच्चयवादिनोऽभिप्रायं शङ्कते—कर्मसहितादपीति । एकाध्ययनविधि-गृहीतत्वात्कर्मज्ञानकाण्डयोरेकं फलं वाच्यं ततः कर्मसमुच्चिताज्ज्ञानात्सनिदानसंसारनिवृत्तिलक्षणं फलं सिध्यतीति न कर्मसु विरक्तस्योपनिषदारम्भ इत्यर्थः । अध्ययनविधिपरिग्रहमात्रेण कर्मकाण्डस्य न मोक्षफलत्वं कल्पयितुं शक्यं फलान्तरावगमविरोधादित्याह—न वाजसनेयक इति । किञ्च यदि श्रुतेः कर्मसमुच्चितज्ञानं विधित्सितं स्यात्तदा पारिव्राज्यं नोपदिश्येत श्रुत्या हेत्वभिधानेन, ततो न समुच्चयः श्रुत्यर्थ इत्याह—तत्रैव चेति । प्रजा-शब्दस्योपलक्षणार्थत्वमादाय हेत्वर्थमाह—तत्रायमिति । किं करिष्यामो न किमप्यात्मकामत्वादेवेति शेषः । तत्फलं भुक्त्वा क्रमेण मोक्षसंभवात्किमिति प्रजादिष्वनादर इत्याशङ्क्याह—न चेति । इष्टोऽप्ययमात्मलोकः कर्मणा विना न लभ्यते फलत्वान्मोक्षस्यान्यथास्वभावमुक्तत्वे बन्धमोक्षावस्थयोरविशेषापातादित्याशङ्क्याऽऽह—स चेति । कर्ममोक्षे कार्यस्योत्पाद्यादेरसम्भवात्सम्यग्ज्ञानादविद्यानिवृत्त्या फलप्रसिद्ध्युपपत्तेर्न कर्मकार्यो मोक्ष इत्यर्थः । ब्रह्मज्ञानस्यानुभवावसानतासिद्धये परोक्षनिश्चयपूर्वकः संन्यासः कर्तव्यः । सिद्धे चानुभवावसाने ब्रह्मात्मज्ञाने स्वभावप्राप्तः संन्यास इति द्रष्टव्यम् । इतश्च न कर्मब्रह्मात्मतानिश्चयसमुच्चयः शास्त्रार्थ इत्याह—कर्मसहभावि-त्वेति । ननु कर्मवद्ब्रह्मज्ञानस्य विधितोऽनुष्ठेयत्वाद्विधेश्च नियोज्यादिभेदापेक्षित्वात्कथं सर्वभेददर्शनप्रत्यस्तमय उच्यते ब्रह्मज्ञाने सतीत्याशङ्क्याऽऽह—वस्तुप्राधान्ये सतीति । विधिजन्यप्रयत्नभाव्यो हि विधिविषय उच्यते ज्ञानं न तथेति तद्विधेरसिद्धिरित्यर्थः । यस्मात्प्रत्यगात्मनो ब्रह्मतानिश्चयस्य परोक्षस्यापरोक्षस्य वा कर्मणा समुच्चयो

---

१. अन्यकारणत्वं अन्यफलत्वमित्यर्थः फलमपि हेतुः ।

प्रदर्श्यते। शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारणं भवति। केवलतर्का-
गम्यत्वं च दर्शितं भवति। "नैषा तर्केण मतिरापनेया" इति श्रुतेश्च। "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या
विदिता साधिष्ठं प्रापत्" इति। "तद्विद्धि प्रणिपातेन" इत्यादिश्रुतिस्मृतिनियमाच्च। कश्चिद्गुरुं ब्रह्मनिष्ठं विधिव-
दुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन्पप्रच्छेति कल्प्यते।

केनेषितमित्यादि। केनेषितमिति [1]केन कर्त्रेषितमिष्टमभिप्रेतं सन्मनः पतति गच्छति स्वविषयं प्रतीति ५
सम्बध्यते। इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासम्भवादिच्छार्थस्यैवैतद्रूपमिति गम्यते। इषितमितीट्प्रयोगस्तु
च्छान्दसः, तस्यैव प्रपूर्वस्य नियोगार्थे प्रेषितमित्येतत्। तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषणविशेषविषयाकाङ्क्षा
स्यात्। केन प्रेषयितृविशेषेण कीदृशं वा प्रेषणमिति। इषितमिति तु विशेषणे सति तदुभयं निवर्तते कस्येच्छामात्रेण
प्रेषितमित्यर्थविशेषनिर्धारणात्। यद्येषोऽर्थोऽभिप्रेतः स्यात्केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यम्।
अपि च शब्दाधिक्यादर्थाधिक्यं युक्तमितीच्छया कर्मणा वाचा वा केन प्रेषितमित्यर्थविशेषोऽवगन्तुं युक्तः। न। १०
प्रश्नसामर्थ्यात्। देहादिसङ्घातादनित्यात्कर्मकार्याद्विरक्तोऽतोऽन्यत्कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति
सामर्थ्यादुपपद्यते। इतरथेच्छावाक्कर्मभिर्देहादिसङ्घातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थक एव स्यात्। एवमपि
प्रेषितशब्दस्यार्थो न प्रदर्शित एव, न, [2]संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्यार्थविशेष उपपद्यते। किं यथाप्रसिद्ध-
मेव कार्यकरणसङ्घातस्य प्रेषयितृत्वं किंवा सङ्घातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्व-
मित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं पतति प्रेषितं मन इति विशेषणद्वयमुपपद्यते। ननु स्वतन्त्रं मनः स्वविषये स्वयं १५
पततीति प्रसिद्धम्। तत्र कथं प्रश्न उपपद्यत इति। उच्यते। यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्तर्हि
सर्वस्यानिष्टचिन्तनं न स्यादनर्थं च जानन् सङ्कल्पयति। अत्युग्रदुःखे च कार्ये वार्यमाणमपि प्रवर्तत एव
मनस्तस्माद्युक्त एव केनेषितमित्यादिप्रश्नः। केन प्राणो युक्तो नियुक्तः प्रेरितः सन् प्रैति गच्छति स्वव्यापारं प्रति।
प्रथम इति प्राणविशेषणं स्यात्तत्पूर्वकत्वात्सर्वेन्द्रियप्रवृत्तीनाम्। केनेषितां वाचमिमां शब्दलक्षणां वदन्ति लौकिकाः।
तथा चक्षुः श्रोत्रं च स्वे स्वे विषये क उ देवो द्योतनवान् युनक्ति नियुङ्क्ते प्रेरयति ॥ १ ॥ २०

न प्रामाणिकस्तस्मादित्युपसंहरति—तस्मादिति। प्रश्नप्रतिवचनरूपेण प्रतिपादनस्य तात्पर्यमाह—शिष्याचार्येति।
आपनेया प्रापणीया हन्तव्या वा न भवतीत्यर्थः। साधिष्ठं शोभनतमं फलं प्रापयतीत्यर्थः। इष आभीक्ष्ण्ये गतौ
चेति धात्वन्तरसम्भवे कथमिच्छार्थस्यैव व्याख्यानमित्याशङ्क्याऽऽह—इषेरिति। आभीक्ष्ण्यं पौनःपुन्यं तद्विषयताया
गतिविषयताया वा मनसोऽनभिप्रेतत्वान्मनःप्रवर्तकविशेषस्यैव बुभुत्सितत्वादित्यर्थः। इट्प्रयोगे सति गुणेन
भवितव्यम्। तदेषितमिति स्यात्तदभावाच्छान्दसत्वाभिधानं न तु धातोरनिट्त्वादनुबन्धस्य विकल्पविधाना- २५
दन्वेषितमन्विष्टं वेति वैकल्पिकप्रयोगादिदर्शनादिति। इषितं प्रेषितमिति पदद्वयस्यार्थवत्त्वमाह—तत्र प्रेषित-
मित्यादिना। इच्छामात्रेणेति। प्रयत्नमन्तरेण सन्निधिमात्रेणेति व्याख्यातं नेदं व्याख्यानमपि शोभते अपर्यायशब्द-
भेदस्यार्थभेदाव्यभिचारादित्याह—अपि चेति। त्वदुक्तोऽयमर्थविशेषो न घटते सङ्घातस्यैवेच्छादिभिः प्रवर्तकत्व-
सिद्धेः प्रश्नानुपपत्तिप्रसङ्गादित्याह—न प्रश्नेति। मनसः स्वातन्त्र्यात्स्वव्यतिरिक्तप्रवर्तकसम्भावनाभावात्प्रश्नो न
घटत इत्याक्षिप्य समाधत्ते—ननु स्वतन्त्रमित्यादिना। अत्युग्रदुःखे चेति। अद्यतनीनदुःखे द्यूतादिकार्ये ॥ १ ॥ ३०

---

१. कर्तरि तृतीयेत्यर्थः इषित पदस्य छान्दसत्वादाह—इष्टमिति, तदेव व्याचष्टे—अभिप्रेतं इति।
पततीत्येन पक्षिवत् मनो वेगेन स्वविषयं पततीति व्यज्यते।

२. मन इषितं वा पतति प्रेषितं वा पततीति संशयोऽभिप्रेतः। यद्यपि इषितप्रेषितयोः पर्यायतयैव वेदे तत्र
तत्र प्रयोगो दृश्यते, यथा ( १ ) इन्द्रस्य होतरिषितो यजीयात्–इन्द्रेण प्रेषिता उप ( २ ) इषितश्च
होतरसि भद्रवाच्याय प्रेषितो मानुष इत्यादौ; तथाप्यत्र उभयोः अर्थभेदोऽपि सम्भवति अणुरपि ३५
विशेषोऽध्यवसायकर इति न्यायात्। प्रशब्दरहितः इच्छामात्रेणेत्यर्थः प्रेषित इति वाचा कर्मणा वेति
विशेषार्थकथनात्। यत्तु इष्टं विषयं प्रति गच्छतीति विशिष्टाद्वैतिविवरणं तत् मन इष्टमनिष्टमुभयं
प्रति गच्छत्येव, इष्टं प्रति प्रेरक उक्ते अनिष्टं प्रति प्रेरकोऽन्य इति भ्रमः स्यात्। केनेषितां इत्यादौ इष्टां
वाचमित्यभिप्रायापत्तेश्च। इषितप्रेषितपदयोः भाष्यव्याख्यैव गरीयसी। वस्तुतस्तु सन्निधिमात्रेण प्रवर्त-
कत्वस्याभिप्रेतत्वात् इषितमिव प्रेषितमिव प्रवर्तत इत्यर्थः। अत एव वाक्यभाष्ये–प्रेषितमिवेत्यर्थ उक्तः। ४०

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः ।**
**अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**

एवं पृष्टवते योग्यायाऽऽह गुरुः—शृणु त्वं यत्पृच्छसि मनआदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता कथं वा प्रेरयतीति[1] । श्रोत्रस्य श्रोत्रं शृणोत्यनेनेति श्रोत्रं शब्दस्य श्रवणं प्रति करणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियं
५ तस्य श्रोत्रं स यस्त्वया पृष्टश्चक्षुः श्रोत्रं क उ देवो युनक्तीति । असावेवंविशिष्टः श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये नन्वेतदननुरूपं प्रतिवचनं श्रोत्रस्य श्रोत्रमिति । नैष दोषः । तस्यान्यथा विशेषानवगमात् । यदि हि श्रोत्रादिव्यापार-व्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्ताऽवगम्येत दात्रादिप्रयोक्तृवत्तदेवमननुरूपं प्रतिवचनं स्यात् । न त्विह श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते—श्रोत्रादीनामेव तु संहतानां व्यापारेणाऽऽलोचन-सङ्कल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते—अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादि-
१० कलापो गृहादिवदिति संहतानां परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता । तस्मादनुरूपमेवेदं प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादि । कः पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः । नह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः । यथा प्रकाशस्य प्रकाशान्तरेण । नैष दोषः, अयमत्र पदार्थः—श्रोत्रं तावत्स्वविषयव्यञ्जनसमर्थं दृष्टम् । तच्च स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्येऽसंहते सर्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते । तथा च श्रुत्यन्तराणि—"आत्मनैवायं ज्योतिषाऽऽस्ते" "तस्य भासा सर्वमिदं विभाति" "येन सूर्यस्तपति
१५ तेजसेद्धः" इत्यादीनि । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ १५–२ ॥ क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" ॥ १३-३३ ॥ इत्यादि गीतासु । काठके च—"नित्यो नित्यानां चेतनश्चेतनानाम्" इति ।

श्रोत्राद्येव सर्वस्याऽऽत्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्यते । अस्ति किमपि विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजरममृतमभयमजं श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तमिति प्रतिवचनं शब्दार्थश्चोपपद्यत एव । तथा मनसोऽन्तःकरणस्य मनः । न ह्यन्तःकरणमन्तरेण चैतन्यज्योतिषा दीपितं स्वविषयसङ्कल्पाध्यवसायादिसमर्थं
२० स्यात् । तस्मान्मनसोऽपि मन इति । इह बुद्धिमनसी एकीकृत्य निर्देशो मनस इति । यद्वाचो ह वाचं यच्छब्दो यस्मादर्थे श्रोत्रादिभिः सर्वैः सम्बध्यते । यस्माच्छ्रोत्रस्य श्रोत्रम् । यस्मान्मनसो मन इत्येवम् । वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते । प्राणस्य प्राण इति दर्शनात् । वाचो ह वाचमित्येतदनुरोधेन प्राणस्य प्राणमिति कस्माद्द्वितीयैव न क्रियते । न । बहूनामनुरोधस्य युक्तत्वाद्वाचमित्यस्य वागित्येतावद्वक्तव्यं स उ प्राणस्य प्राण इति शब्दद्वयानुरोधेन । एवं हि बहूनामनुरोधो युक्तः कृतः स्यात् । पृष्टं च वस्तु प्रथमयैव निर्देष्टुं युक्तम् ।

२५ स यस्त्वया पृष्टः प्राणस्य प्राणाख्यवृत्तिविशेषस्य प्राणस्तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम् । न ह्यात्मनाऽन-धिष्ठितस्य प्राणनमुपपद्यते । "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" इत्यादिश्रुतिभ्यः । इहापि च वक्ष्यते—"येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धि" इति । श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य ननु युक्तं ग्रहणम् । सत्यमेवं, प्राणग्रहणेनैव तु घ्राणप्राणस्य ग्रहणं कृतमेव मन्यते

प्रतिवचनस्य प्रश्नाननुरूपत्वमाशङ्क्य समाधत्ते—असावेवंविशिष्ट इत्यादिना । श्रोत्रादयः स्वविलक्षणशेषाः
३० संहतत्वाद्गृहादिवदित्यनुमानेन श्रोत्रादिशेषी तावदवगम्यते यदि सोऽपि संहतः स्यात्तर्हि गृहादिवदचेतनः स्यात् । ततस्तस्याप्यन्यः शेषी कल्प्यस्तस्याप्यन्य इत्यनवस्थाप्रसङ्गपरिहारायासंहतश्चेतनो गम्यते । अतः सर्वसाक्षिणं लक्षयितुं युक्तमेव प्रतिवचनमित्यर्थः । फलावसानं फलनिष्पत्तिर्लिङ्गं यस्मिन्, अवगत्या हि करणस्य व्यापारो लिङ्ग्यते नित्यावगतिव्यञ्जकत्वाद्वा फलावसानलिङ्गं व्यापारस्तेन तच्छेषी लक्ष्यत इत्यर्थः । प्रतिवचनस्य संक्षेपतस्तात्पर्यमाह—श्रोत्राद्येव सर्वस्येति । यस्मादस्ति श्रोत्रस्य श्रोत्रं तस्माच्छ्रोत्रादावात्मबुद्धिः संत्यक्तव्येतिशेषः
३५ प्राणचेष्टा चेतनाधिष्ठानपूर्विका अचेतनप्रवृत्तित्वात् रथादिप्रवृत्तिवदित्यभिप्रेत्याह— न ह्यात्मनाऽनधिष्ठितस्येति ।

---

१. प्रेरकस्य विशेषणं किञ्चित्स्याच्चेत् तदेवोच्येत नोक्तं तु अतः शुद्धमेव ब्रह्म प्रेरकमित्यभिप्रायः श्रोत्रस्य श्रोत्रम्—शब्दग्राहकत्वसामर्थ्यप्रदम् । अनेन श्रोत्रादिग्राह्यत्वं निरस्तम् ।

[1]न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः। न विद्मो न विजानीमो यथैतदनुशिष्यात्।
अन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

श्रुतिः। सर्वस्यैव करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विवक्षितः। तथा चक्षुषश्चक्षू रूप-प्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैवातश्चक्षुषश्चक्षुः। प्रष्टुः पृष्टस्यार्थस्य ज्ञातुमिष्ट-त्वाच्छ्रोत्रादेः श्रोत्रादिलक्षणं यथोक्तं ब्रह्म ज्ञात्वेत्यध्याह्रियते। [2]अमृता भवन्तीति फलश्रुतेश्च। ज्ञानाद्ध्यमृतत्वं प्राप्यते। ज्ञात्वाऽतिमुच्येति सामर्थ्याच्छ्रोत्रादिकरणकलापमुज्झित्वा। श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिः संस्तदात्मना जायते म्रियते संसरति च। अतः श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्माऽऽत्मेति विदित्वाऽतिमुच्य[3] श्रोत्राद्यात्म-भावं परित्यज्य, ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीरा धीमन्तः। नहि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम्। प्रेत्य व्यावृत्यास्माल्लोकात्पुत्रमित्रकलत्रबन्धुषु ममाहंभावसंव्यवहारलक्षणात् त्यक्तसर्वैषणा भूत्वेत्यर्थः। अमृता अमरणधर्माणो भवन्ति। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" "पराञ्चि खानि व्यतृणत्" "आवृत्तचक्षुरमृतत्वमिच्छन्" "यदा सर्वे प्रमुच्यन्ते" "अत्र ब्रह्म समश्नुते" इत्यादिश्रुतिभ्यः। अथ वाऽतिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्यास्माच्छरीरात्प्रेत्य मृत्वेत्यर्थः॥ २ ॥

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूतं ब्रह्मातो न तत्र तस्मिन्ब्रह्मणि चक्षुर्गच्छति। स्वात्मनि गमनासम्भवात्। तथा न वाग्गच्छति। वाचा हि शब्द उच्चार्यमाणोऽभिधेयं प्रकाशयति यदा तदाऽभिधेयं प्रति वाग्गच्छतीत्युच्यते। तस्य च शब्दस्य तन्निर्वर्तकस्य च करणस्याऽऽत्मा ब्रह्मातो न वाग्गच्छति। यथाऽग्निर्दाहकः प्रकाशकश्चापि सन्न ह्यात्मानं प्रकाशयति दहति च तद्वत्। नो मनो मनश्चान्यस्य सङ्कल्पयितृ अध्यवसायितृ च सत् नात्मानं सङ्कल्पयत्य-ध्यवस्यति च तस्यापि ब्रह्माऽऽत्मेति। इन्द्रियमनोभ्यां हि वस्तुनो विज्ञानं तदगोचरत्वान्न विद्मस्तद्ब्रह्मेदृशमित्यतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यादुपदिशेच्छिष्यायेत्यभिप्रायः। यद्धि करणगोचरं तदन्यस्मा उपदेष्टुं

ज्ञात्वेति पदाध्याहारे कारणमाह—प्रष्टुः पृष्टस्यार्थस्येति। सामर्थ्यादिति। श्रोत्राद्यात्मभावत्यागमन्तरेणामृतत्वा-सम्भवाज्ज्ञानबलाच्छ्रोत्राद्यात्मभावं त्यक्त्वाऽमृता भवन्तीति सम्बन्धः। एतत्स्फुटयति—श्रोत्रादौ हीत्यादिना। मृत्वेति। विदेहमुक्तिर्विवक्षिता प्रारब्धभोगक्षये शरीरान्तरोत्पादे कारणाभावादवश्यंभाविनी विदुषो मुक्ति-रित्यर्थः॥ २ ॥

सर्पाद्यध्यासाधिष्ठानरज्जुवच्छ्रोत्राद्यध्यासाधिष्ठानचैतन्यं श्रोत्रस्य श्रोत्रमित्यादिना लक्षितं तर्हि रज्जुवद-धिष्ठानत्वाद्विषयत्वप्रसङ्ग इति शङ्कां निवर्तयति—यस्माच्छ्रोत्रादेरपीत्यादिना। अध्यस्तस्य ह्यधिष्ठानमेव स्वरूप-माद्यन्तमध्येषु तदव्यभिचारात्स्वरूपविषयता च न पदार्थधर्मस्ततोऽप्रयोजकोऽयं हेतुरित्यर्थः। अविषयत्वात्तर्हि शास्त्राचार्योपदेश्यत्वमपि न स्यादित्याशङ्क्य नास्त्येव वास्तवमित्याह—इन्द्रियमनोभ्यां हीति। ब्राह्मणोऽयमित्यादि जातितः कृष्णोऽयमित्यादि गुणतः पाचकोऽयमित्यादि क्रियातो राजपुरुष इत्यादि सम्बन्धविशेषत उपदिश्यते।

---

१. अत्र माध्वाः—चक्षुरादिदेवताः सूर्यादयः तं न विदन्तीत्यर्थमाहुः। उत्तरत्र न विद्मो न विजानीम इति सर्वज्ञानागोचरोक्तेः चक्षुराद्यविषयत्वमेव तु युक्तम्। देवानामप्रकृतत्वाच्च। गच्छतीत्यस्य नावगच्छ-तीत्यर्थे क्लेशश्च।

२. न तस्य प्राणा उत्क्रामन्तीत्युक्तत्वात् इतः अर्चिरादिना गत्वेत्यध्याहारोऽनपेक्षितः।

मध्वास्तु—अत्र केनेषितमिति शिवः प्रष्टा विष्णुरुपदेष्टा इति कल्पयन्ति। तन्न। शिवस्य विष्णोर्वा पूर्वप्रकरणेषु अत्र वा अप्रकृतत्वात्। वस्तुतस्तु सा ब्रह्मेति होवाचेति उमया ब्रह्मोपदेशात् तत्सहचारी शिव एवोपदेष्टेति निर्णेतुं शक्यते।

३. अतिमुच्येत्यस्य प्रकृतत्वात् श्रोत्रादिकमित्यनुषज्यते। तेषां परित्यागः तेषु आत्मभावपरित्याग एव, न तु स्वरूपत्यागः। "धीरा" इत्यस्य: कश्चिद्धीरः प्रत्यगात्मानमैक्षत् इति श्रुत्यन्तरैकवाक्यात्, तेषु आत्मभावं परित्यज्येत्यर्थः। एतेनातिमुच्येत्यस्य ज्ञात्वेत्यर्थकरणमनपेक्षितम्। ज्ञानादेवामृतत्वस्य श्रुतिप्रसिद्धेः ज्ञात्वेत्यध्याहारः।

**यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥**

शक्यं जातिगुणक्रियाविशेषणैः । न तज्जात्यादिविशेषणवद्ब्रह्म । तस्माद्विषमं शिष्यानुपदेशेन प्रत्याययितुमिति उपदेशे तदर्थग्रहणे च यत्नातिशयकर्तव्यतां दर्शयति—न विद्म इत्यादि । अत्यन्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते । सत्यमेवं प्रत्यक्षादिभिः प्रमाणैर्न परः प्रत्याययितुं शक्यः । आगमेन तु शक्यत एव प्रत्याययितुम् । तदुपदेशार्थमागममाह—अन्यदेव तद्विदितादथो अविदितादधीति । [1]अन्यदेव पृथगेव तद्यत्प्रकृतं श्रोत्रादीनां श्रोत्रादीत्युक्तमविषयं च तेषाम् । तद्विदितादन्यदेव हि, विदितं नाम यद्विदिक्रिययाऽतिशयेनाऽऽप्तं[2] तद्विदिक्रिया-कर्मभूतम् । क्वचित्किञ्चित्कस्यचिद्विदितं स्यादिति सर्वमेव व्याकृतं विदितमेव तत्तस्मादन्यदित्यर्थः । अविदितमज्ञातं तर्हीति प्राप्त आह—अविदिताद्विदितविपरीतादव्याकृतादविद्यालक्षणाद्व्याकृतबीजात् । अधीत्युपर्यर्थे लक्षणयाऽन्यदित्यर्थः । यद्धि यस्मादध्युपरि भवति तत्तस्मादन्यदिति प्रसिद्धं, यद्विदितं तदल्पं मर्त्यं दुःखात्मकं चेति हेयम् । तस्माद्विदितादन्यद्ब्रह्मेत्युक्ते त्वहेयत्वमुक्तं स्यात् । तथाऽविदितादधीत्युक्तेऽनुपादेयत्वमुक्तं स्यात् । कार्यार्थं हि कारणमन्यदन्येनोपादीयतेऽतश्च न वेदितुरन्यस्मै प्रयोजनायान्यदुपादेयं भवतीत्येवं विदिताविदिताभ्यामन्यदिति हेयोपादेयप्रतिषेधेन स्वात्मनोऽनन्यत्वात् अन्यब्रह्मविषया जिज्ञासा शिष्यस्य निर्वर्तिता स्यात् । न ह्यन्यस्य स्वात्मनो विदिताविदिताभ्यामन्यत्वं वस्तुनः सम्भवतीत्यात्मा ब्रह्मेत्येष वाक्यार्थः । "अयमात्मा ब्रह्म" "य आत्माऽपहतपाप्मा" । "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्यादिश्रुत्यन्तरेभ्यश्चेति । एवं सर्वात्मनः सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यस्याऽऽचार्योपदेशपरम्परया प्राप्तत्वमाह—इति शुश्रुमेत्यादि । ब्रह्म चैवमाचार्योपदेशपरम्परयैवाधिगन्तव्यं न तर्कतः प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्चेत्येवं शुश्रुम श्रुतवन्तो वयं पूर्वेषामाचार्याणां वचनम् । य आचार्या नोऽस्मभ्यं तद्ब्रह्म व्याचचक्षिरे व्याख्यातवन्तो विस्पष्टं कथितवन्तस्तेषामित्यर्थः ॥ ३ ॥

अन्यदेव तद्विदितादथो अविदितादधीत्यनेन वाक्येनाऽऽत्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता तत्कथं न्वात्मा ब्रह्म । आत्मा हि नामाधिकृतः कर्मण्युपासने च संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान्स्वर्गं वा प्राप्तुमिच्छति, तत्तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति न त्वात्मा । लोकप्रत्ययविरोधात् । यथाऽन्ये तार्किका ईश्वरादन्य आत्मेत्याचक्षते । तथा कर्मिणः "अमुं यजामुं यज" इत्यन्या एव देवता उपासते । तस्माद्युक्तं यद्विदितमुपास्यं तद्ब्रह्म भवेत् । ततोऽन्य उपासक इति, तामेतामाशङ्कां शिष्यलिङ्गेनोपलक्ष्य तद्वाक्याद्वाऽऽह–मैवं शङ्किष्ठाः । यच्चैतन्यमात्रसत्ताकं वाचा वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्त-

ब्रह्म तु न जात्यादिमत् । "केवलो निर्गुणश्च" इत्यादिश्रुतेः । अज्ञेनाऽऽगमस्य भेदेन प्रतिपन्नत्वात्तद्दृष्ट्याऽऽचार्यस्याप्यविद्यालेशोत्थदृष्ट्या व्यावहारिक उपदेश उपपद्यत आगमतस्तस्यैवाऽऽत्मा[नं]ब्रह्मरूपेण लक्षयितुं योग्यतातिशयवत्त्वादित्यभिप्रेत्याह—अत्यन्तमेवेति । वाक्यस्य पदार्थान्व्याख्याय तात्पर्यं दर्शयितुमुपक्रमते—यद्विदितं तदल्पमित्यादिना । यद्वेदितुरन्यत्तद्विदितमविदितं चेति द्वयी गतिः । ततो विदितत्वाविदितत्वनिषेधेन वेदितुः स्वरूपं ब्रह्मेत्यत्र तात्पर्यमागमस्येत्याह—न ह्यन्यस्येति ॥ ३ ॥

उक्तवाक्यार्थे लौकिकतार्किकमीमांसकप्रतिपत्तिविरोधमाशङ्क्य परिहरति विदितादन्यत्वप्रपञ्चनाय—अन्यदेव तद्विदितादित्यादिना । अष्टसु स्थानेष्विति ।

---

१. अन्यदेवेति—विदिताविदिताभ्यामन्यत्वेन आत्मा ब्रह्मेति बोधयति । रामानुजीयास्तु ब्रह्म सर्वात्मना विदितमविदितं वा न भवतीति साध्याहारं व्याचख्युः । अत्राध्याहारदोष एव । यत्किञ्चिद्वेदने कार्यलिङ्गकानुमानेन ईश्वरोऽस्तीति वेदनेऽपि मोक्षः स्यादस्मिन् पक्षे । अविदितात् शशशृङ्गादेः अधीति माध्वाः तन्मते श्रोत्रस्य श्रोत्रमित्यादिना सद्भावोक्तेः इदमनपेक्षितम् । यद्यप्यव्याकृतमपि विदितं तथापि गोबलीवर्दन्यायेन तद्भिन्नत्वं ज्ञेयम् ।

२. मुख्यविषयतावत् । आत्मनः भानप्रयोज्यसंशयनिवृत्तिफलभाक्त्वमिष्यते । तच्च गौणं मुख्यं तु इदमेव भानभिन्नत्वघटितम् ।

**यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥**

माग्नेयं वर्णानामभिव्यञ्जकं करणं, वर्णाश्चार्थसङ्केतपरिच्छिन्ना एतावन्त एवंक्रमप्रयुक्ता इत्येवं तदभिव्यङ्ग्यश्च शब्दः पदं वागित्युच्यते । "अकारो वै सर्वा वाक्सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः । मितममितं स्वरः सत्यानृते एव विकारो यस्यास्तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्याऽनभ्युदितम-प्रकाशितमनभ्युक्तं येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत् । यद्वाचो ह वागित्युक्तं, "वदन्वाक्" "यो वाचमन्तरो यमयती"त्यादि च वाजसनेयके । "या वाक्पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित्तां वेद ब्राह्मणः" इति प्रश्नमुत्पाद्य प्रतिवचनमुक्तं "सावाग्यया स्वप्ने भाषते" इति । सा हि वक्तुर्वक्तिर्नित्या वाक्चैतन्यज्योतिःस्वरूपा । "न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते" इति श्रुतेः । तदेवाऽऽत्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्त्वाद्ब्रह्मेति विद्धि विजानीहि त्वं; यैर्वागाद्युपाधिभिः[1] वाचो ह वाक्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः कर्त्ता भोक्ता विज्ञाता नियन्ता प्रशासिता विज्ञानमानन्दं ब्रह्मेत्येवमादयः संव्यवहारा असंव्यवहार्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते तान्व्युदस्याऽऽत्मानमेव निर्विशेषं ब्रह्म विद्धीत्येवशब्दार्थः । नेदं ब्रह्म यदिद-मित्युपाधिभेदविशिष्टमनात्मेश्वराद्युपासते ध्यायन्ति । तदेव ब्रह्म त्वं विद्धीत्युक्तेऽपि नेदं ब्रह्मेत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते नियमार्थमन्यब्रह्मबुद्धिपरिसङ्ख्यानार्थं वा ॥ ४ ॥

यन्मनसा न मनुते । मन इत्यन्तःकरणं बुद्धिमनसोरेकत्वेन गृह्यते । मनुतेऽनेनेति मनः सर्वकरणसाधारणम् । सर्वविषयव्यापकत्वात् । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः कामादिवृत्तिमन्मनस्तेन मनसा यच्चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न सङ्कल्पयति नापि निश्चिनोति ।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥"

इत्येतेष्वाकाशप्रदेशेष्वाश्रितमित्यनेनाऽऽकाशोपादानत्वं सूचितम् । आग्नेयमिति । अग्निदेवताकमित्यर्थः । न केवलं करणं वागुच्यते वर्णाश्चोच्यन्त इत्याह—वर्णाश्चेति । तदुक्तम्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादकाः । वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥"

गौरिति पदं गकारौकारविसर्जनीया एव क्रमविशेषावच्छिन्ना इति मीमांसकाद्यनुसारेणोक्तम् । स्फोट-वादिनोऽनुसारेणाऽऽह—तदभिव्यङ्ग्यश्च इति । स्फुट्यते व्यज्यते वर्णैरिति स्फोटः पदादिबुद्धिप्रमाणकः । एकरूपाया बुद्धेरनेकवर्णावलम्बनत्वासम्भवादिति भावः । उक्तं वाक्यार्थे श्रुतिसम्मतिमाह—अकार इति । अकार-प्रधानोङ्कारोपलक्षिता स्फोटाख्या चिच्छक्तिः सर्वा वाक्सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना । कादयो मावसानाः स्पर्शा, यरलवा अन्तस्थाः, शषसहा ऊष्माणस्तैः क्रमविशेषावच्छिन्नैर्व्यज्यमाना नानारूपा विवर्तते । मितमृगादि पादावसाननियताक्षरत्वात् । अमितं यजुराद्यनियताक्षरपादावसानत्वात् । स्वरः साम । गीतिप्राधान्यात् । सत्यं यथादृष्टार्थवचनम् । अनृतं तद्विपरीतम् । करणं वागिन्द्रियं गुण उपसर्जनं यस्याः सा करणगुणवती पुरुषेषु चेतनेषु या वाक्शक्तिः सा घोषेषु वर्णेषु प्रतिष्ठिता तद्व्यङ्ग्यत्वादित्यर्थः । तदेवेत्येवकारस्य कृत्यमाह—यैर्वागाद्युपाधि-भिरिति । नियमार्थमिति । पक्षेऽनात्मन्यपि ब्रह्मबुद्धौ प्राप्तायामात्मैव ब्रह्मेति बुद्धिं नियन्तुमित्यर्थः । अन्यस्मिन्नुपास्ये या ब्रह्मबुद्धिस्तन्निवृत्त्यर्थं वा पुनरब्रह्मत्वमुच्यत इत्यर्थः ।

---

१. यद्वागादिप्रेरकं तदेव ब्रह्म न तु यद्वस्तु इदमिति विषयतया उपासते ईश्वरादिकं तत् इति भावः । वासिष्ठे—'न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः । अकृत्रिममनाद्यन्तं देवनं देव उच्यते ॥' इत्यादिना आत्मचैतन्यप्रकाशो ब्रह्मेत्युक्तम् । मनोवृत्तिसंयुक्तेन = श्रोत्रजन्यया मनोवृत्त्या संयुक्तेन ।

विशिष्टाद्वैतिनः—प्रतीकस्य ब्रह्मत्वनिषेधे तात्पर्यमिदं—यत् सालग्रामादि नामादि वा तत् न ब्रह्मेत्यर्थः । तत्र च तेषां प्रतीकानां सर्वात्मना विदितत्वेनैवाब्रह्मत्वस्य भवद्व्याख्यानरीत्या पूर्वमेवोक्त-त्वात् वाक्यवैयर्थ्यम् ।

माध्वास्तु—नेदं जीवरूपं ब्रह्म यत् तव उपसमीपे आस्ते नियामकतया वर्तते तदेव ब्रह्मेत्यर्थं इति व्याकुर्वन्ति । तत्र उपासनाशब्दरूढित्यागो जीवब्रह्मैक्यशास्त्रविरोधश्च, अप्रसक्तप्रतिषेधश्च ।

यच्चक्षुषा न पश्यति येन चक्षूंꣳषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳ श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥

इति प्रथमः खण्डः

५ [1]यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं
यदस्य त्वं यदस्य देवेष्वथ नु मीमाꣳस्यमेव ते मन्ये विदितम् ॥ ९–१ ॥

मनसोऽवभासकत्वेन नियन्तृत्वात् । सर्वविषयं प्रतिं प्रत्यगेवेति स्वात्मनि न प्रवर्ततेऽन्तःकरणम् । अन्तस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सवृत्तिकं मनो येन ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः कथयन्ति ब्रह्मविदः । तस्मात्तदेव मनस आत्मानं प्रत्यक्चेतयितारं ब्रह्म विद्धि । नेदमित्यादि पूर्ववत् ॥ ५ ॥

१० यच्चक्षुषा न पश्यति न विषयी करोत्यन्तःकरणवृत्तिसंयुक्तेन । येन चक्षूंष्यन्तःकरणवृत्ति भेदभिन्नाश्चक्षुर्वृत्तीः पश्यति लोकश्चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति ॥ ६ ॥

यच्छ्रोत्रेण न शृणोति दिग्देवताधिष्ठितेनाऽऽकाशकार्येण मनोवृत्तिसंयुक्तेन न विषयीकरोति लोको येन श्रोत्रमिदं श्रुतं यत्प्रसिद्धं चैतन्यात्मज्योतिषा विषयीकृतं तदेवेत्यादि पूर्ववत् ॥ ७ ॥

यत्प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तरवस्थितेनान्तःकरणप्राणवृत्तिभ्यां सहितेन यन्न प्राणिति गन्धवन्न
१५ विषयीकरोति येन चैतन्यात्मज्योतिषाऽवभास्यत्वेन स्वविषयं प्रति प्राणः प्रणीयते । तदेवेत्यादि सर्वं समानम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ केनोपनिषत्पदभाष्ये प्रथमः खण्डः

एवं हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्योऽहमेव ब्रह्मेति सुष्ठु वेदाहं मामिति गृह्णीयादित्याशङ्क्याऽऽचार्यः शिष्यबुद्धिविचालनार्थं यदीत्याह । नन्विष्टैव सुवेदाहमिति निश्चिता प्रतिपत्तिः, सत्यमिष्टा निश्चिता प्रतिपत्तिर्न हि सुवेदाहमिति । यद्धि वेद्यं वस्तु विषयीभवति तत्सुष्ठु वेदितुं शक्यं दाह्यमिव
२० दग्धुमग्नेर्दग्धुर्न त्वग्नेः स्वरूपमेव । सर्वस्य हि वेदितुः स्वात्मा ब्रह्मेति सर्ववेदान्तानां सुनिश्चितोऽर्थः । इह च तदेव

सर्वं स्पष्टमिति न व्याख्यातम् ॥ ५-६-७-८ ॥

इति प्रथमः खण्डः

वेदितुः स्वरूपत्वे ब्रह्मणो मा भूद्विषयत्वम् । स्वरूपत्वे मानाभावात् अतिरिक्तस्य विषयत्वे किमनुपपन्नमित्याशङ्क्याऽऽह—सर्वस्य हीति । यदिशब्दप्रयोगे किं कारणमित्यत आह—कदाचिदिति । अक्षिणि शरीरस्य

---

२५ १. अत्र रामानुजीयानां पन्थाः—अनेन सुवेद इत्यपि न युक्तं न वेद इत्यपि न युक्तं ब्रह्मस्वरूपं किञ्चिद्वेद किञ्चिन्न वेद इति । एवं व्याख्यानेन विज्ञातांशः कः अविज्ञातांशः कः इत्यंशे औदासीन्येन श्रुतिः अस्मान् वञ्चयति इत्युक्तं स्यात् । तन्न शोभनम् । विदिताविदिताभ्यामन्यत्वं यत् पूर्वमुक्तं तदर्थः सम्यग्ज्ञातो वा नवेति गुरुणा शिष्यः परीक्ष्यते—यदि मन्यसे इति ।

मन्ये विदितमित्यनेन शिष्यः संक्षेपेणोत्तरमुक्त्वा विवृणोति—नाहं मन्य इत्यनेन । ब्रह्म विदितमित्युक्ते
३० ज्ञानकर्मत्वेन कर्तुः जीवाद्भिन्नं परिच्छिन्नमुक्तं स्याद् ब्रह्म । न विदितमित्युक्ते गोपालादिवत् मन्दोऽयमिति गुरुः मन्येत अतः आत्मा ब्रह्मेति विदिताविदितान्यत्वेन ज्ञातवान् शिष्यः । संशयाभावात् विदितंचैतन्यभास्यत्वाभावादविदितं ब्रह्म इत्यत्र तात्पर्यम् ।

माध्वास्तु—ब्रह्म साकल्येन वेद इति मन्यसे, तन्न । अहमपि ब्रह्म विदितमिति न मन्ये साकल्येनावेदनात् । यः अहं ब्रह्म वेद इति मन्यते स न वेद परिच्छिन्नत्ववेदनात् । यः न वेदेति वदति स वेद
३५ अपरिच्छिन्नत्वेन वेदनात् ।

अत्रापि ब्रह्म अपरिच्छिन्नत्वेन ज्ञेयं न परिच्छिन्नत्वेन इत्युक्त्यैवोपपत्तौ मन्त्रद्वयं व्यर्थमापद्यते । यस्यामतमिति मननविषयम् । मन्दबुद्धिरिति अयं शिष्यो मन्दबुद्धिरित्याचार्यस्य ग्रहणं मा भूदिति ।

प्रतिपादितं प्रश्नप्रतिवचनोक्त्या श्रोत्रस्य श्रोत्रमित्याद्यया। यद्वाचाऽनभ्युदितमिति विशेषतोऽवधारितम्। ब्रह्मवित्सम्प्रदायनिश्चयश्चोक्तोऽन्यदेव तद्विदितादथो अविदितादधीति। उपन्यस्तमुपसंहरिष्यति चाविज्ञातं विजानतां विज्ञातमविजानतामिति। तस्माद्युक्तमेव शिष्यस्य सुवेदेति बुद्धिं निराकर्तुम्। न हि वेदिता वेदितुर्वेदितुं शक्योऽग्निरिव दग्धुमग्नेः दग्धुः। न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत्स्याद्ब्रह्म। "नान्यदतोऽस्ति विज्ञातृ" इत्यन्यो विज्ञाता प्रतिषिध्यते। तस्मात्सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव। तस्माद्युक्तमेवाऽऽहाऽऽचार्यो यदीत्यादि। ५

यदि कदाचिन्मन्यसे सुवेदेति सुष्ठु वेदाहं ब्रह्मेति। कदाचिद्यथाश्रुतं दुर्विज्ञेयमपि क्षीणदोषः सुमेधाः कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमाह—यदीत्यादि। दृष्टं च "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इत्युक्ते प्राजापत्यः पण्डितोऽप्यसुरराड्विरोचनः स्वभावदोषवशादनुपपद्यमानमपि विपरीतमर्थं शरीरमात्मेति प्रतिपन्नः। तथेन्द्रो देवराट् सकृद्द्विस्त्रिरुक्तं चाप्रतिपद्यमानः स्वभावदोषक्षयमपेक्ष्य चतुर्थे पर्याये प्रथमोक्तमेव ब्रह्म प्रतिपन्नवान्। लोकेऽप्येकस्माद्गुरोः शृण्वतां कश्चिद्यथावत्प्रतिपद्यते कश्चिदयथावत्कश्चिद्विपरीतं कश्चिन्न प्रतिपद्यते किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम्। अत्र हि विप्रतिपन्नाः सदसद्वादिनस्तार्किकाः सर्वे। तस्माद्विदितं ब्रह्मेति सुनिश्चितोक्तमपि विषमप्रतिपत्तित्वाद्यदि मन्यस इत्यादि साशङ्कं वचनं युक्तमेवाऽऽचार्यस्य। दहरमल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपम्। किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च येनाऽऽह दहरमेवेत्यादि। बाढम्। अनेकानि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः। स्वतस्तु "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति शब्दादिभिः सह रूपाणि प्रतिषिध्यन्ते। १५

ननु येनैव धर्मेण यद्रूप्यते तदेव तस्य (स्व)रूपमिति ब्रह्मणोऽपि येन विशेषेण निरूपणं तदेव तस्य रूपं स्यादत उच्यते। चैतन्यं पृथिव्यादीनामन्यतमस्य सर्वेषां विपरिणतानां वा धर्मो न भवति। तथा श्रोत्रादीनामन्तःकरणस्य च धर्मो न भवतीति ब्रह्मणो रूपमिति। ब्रह्म रूप्यते चैतन्येन। तथा चोक्तम्—"विज्ञानमानन्दं ब्रह्म" "विज्ञानघन एव" "सत्यं ज्ञानमनन्तम्" "प्रज्ञानं ब्रह्म" इति च ब्रह्मणो रूपं निर्दिष्टं श्रुतिषु। सत्यमेवं; तथाऽपि तदन्तःकरणदेहेन्द्रियोपाधिद्वारेणैव विज्ञानादिशब्दैर्निर्दिश्यते तदनुकारित्वाद्देहादिवृद्धिसङ्कोचच्छेदादिषु नाशेषु च न स्वतः। २० स्वतस्त्वविज्ञातं विजानतां विज्ञातमविजानतामिति स्थितं भविष्यति। यदस्य ब्रह्मणो रूपमिति पूर्वेण सम्बन्धः। न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं त्वमल्पं वेत्थ यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं देवेषु वेत्थ त्वं तदपि नूनं दहरमेव वेत्थेति मन्येऽहम्। यदध्यात्मं यदधिदैवं तदपि च उपाधिपरिच्छिन्नत्वाद्दहरत्वान्न निवर्तते। यत्तु विध्वस्तसर्वोपाधिविशेषं शान्तमनन्तमेकमद्वैतं भूमाख्यं नित्यं ब्रह्म न तत्सुवेद्यमित्यभिप्रायः। यत एवमथ नु तस्मान्मन्येऽद्यापि मीमांस्यं विचार्यमेव ते तव ब्रह्म। एवमाचार्योक्तः शिष्य एकान्त २५

प्रतिच्छाया दृश्यत इति प्रसिद्धवदुपदेशाच्छरीरमात्मेति प्रतिपन्नः। छायाया अव्यभिचारित्वं बुद्ध्वेत्यर्थः। सकृदिति। "य एषोऽक्षिणि पुरुषो दृश्यते" इत्येकवारमुक्तम्, "य एष स्वप्ने महीयमानश्चरति" इति द्वितीयेनोक्तम्, "तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः" इति त्रिरुक्तमप्यात्मानमप्रतिपद्यमान इन्द्रो ब्रह्मचर्येणाधर्मादिदोषक्षयमपेक्ष्य चतुर्थे पर्याये "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" इत्यत्र प्रथमपर्यायोक्तमेव ब्रह्म प्रतिपन्नवानित्यर्थः। अर्भकाणि चेति। अल्पानि। न स्वतो रूपमस्ति ब्रह्मण इत्युक्तं तदाक्षिपति—ननु ३० येनैवेति। केन तर्हि विशेषेण ब्रह्मणो निरूपणमित्याकाङ्क्षायां चैतन्यरूपेणेत्याह—चैतन्यमिति। भूतानां समस्तानां व्यस्तानां वा देहाकारपरिणतानां चैतन्यं धर्मो न भवति बहिरनुपलम्भात्तद्धर्मत्वे रूपादिवत्तत्साधकत्वाभावप्रसङ्गाच्च। तथा श्रोत्रादीनामपि भौतिकत्वाविशेषाच्चैतन्यं धर्मो न भवतीति पारिशेष्यात्स्वतन्त्रचैतन्यं ब्रह्मणो रूपम्। तत्र श्रुतिसम्मतिमाह—तथा चोक्तमिति। सत्यमेवं चैतन्यं पारमार्थिकं ब्रह्मरूपं श्रुतितात्पर्यगम्यं तथाऽपि यदुक्तं ब्रह्मणो रूपं कथं नास्तीति तदुपाधिद्वारेणैव ब्रह्मणः शब्देन निरूपणं निर्देशनं न स्वत इत्यभिप्रेत्य, अन्तः ३५ करणाद्यभिव्यक्तिमुपलभ्य हि यदुपाध्यभिव्यक्तिनिमित्तं चैतन्यं तद्ब्रह्मेति निर्दिश्यत इत्यर्थः। ननूपाधिरुपहितसम्बद्धो भवति चैतन्यस्य त्वसङ्गस्य कथं देहादिरुपाधिरित्याशङ्क्याऽऽह—तदनुकारित्वादित्यादिना। यथा जले कम्पमाने सविता कम्पत इव भिद्यमाने भिद्यत इवेति मिथ्यातद्धर्मभागित्वात्सवितुर्जलमुपाधिरित्युच्यते न तु सम्बन्धाद्दूरस्थयोः संयोगाद्ययोगात्। तद्वद्देहादेर्वृद्धिसङ्कोचच्छेदादिषु दाहादिषु नाशेषु चैतन्यस्य मिथ्यादेहधर्मभागित्वाद्देहादेरुपाधित्वमभिधीयते इत्यर्थः। ननु न स्वतश्चैतन्यतया निरूप्यते ब्रह्म कथं तर्हि तदनुभव ४०

**नाहं मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥१०–२॥**
**यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्॥११–३॥**
**प्रतिबोधविदितं मतममृतत्वं हि विन्दते। आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥१२–४॥**

उपविष्टः समाहितः सन्यथोक्तमाचार्येणाऽऽगममर्थतो विचार्य तर्कतश्च निर्धार्य स्वानुभवं कृत्वाऽऽचार्यसकाश-
५ मुपगम्योवाच—मन्येऽहमथेदानीं विदितं ब्रह्मेति ॥ ९–१ ॥

कथमिति। शृणुत। नाहं मन्ये सुवेदेति नैवाहं मन्ये सुवेद ब्रह्मेति। नैव तर्हि विदितं त्वया ब्रह्मेत्युक्त आह—नो न वेदेति वेद च। वेद चेति चशब्दान्न वेद च। ननु विप्रतिषिद्धं नाहं मन्ये सुवेदेति नो न वेदेति वेद चेति। यदि न मन्यसे सुवेदेति कथं मन्यसे वेद चेति। अथ मन्यसे वेदैवेति। कथं न मन्यसे सुवेदेति। एकं वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सुविज्ञायत इति विप्रतिषिद्धं संशयविपर्ययौ वर्जयित्वा। न च ब्रह्म
१० संशयितत्वेन ज्ञेयं विपरीतत्वेन वेति नियन्तुं शक्यम्। संशयविपर्ययौ हि सर्वत्रानर्थकरत्वेनैव प्रसिद्धौ। एवमाचार्येण विचाल्यमानोऽपि शिष्यो न विचचाल। "अन्यदेव तद्विदितादथो अविदितादधि" इत्याचार्योक्तागमसम्प्रदायबलादुपपत्त्यनुभवबलाच्च, जगर्ज च ब्रह्मविद्यायां दृढनिश्चयतां दर्शयन्नात्मनः। कथमित्युच्यते। यो यः कश्चिन्नोऽस्माकं सब्रह्मचारिणां मध्ये तदुक्तं वचनं तत्त्वतो वेद स तद्ब्रह्म वेद। किं पुनस्तद्वचनमित्यत आह—नो न वेदेति वेद चेति। यदेवान्यदेव तद्विदितादथो अविदितादधीत्युक्तं वस्त्वनुमानानुभवाभ्यां संयोज्य निश्चितं
१५ वाक्यान्तरेण नो न वेदेति वेद चेत्यवोचदाचार्यबुद्धिसम्वादार्थं मन्दबुद्धिग्रहणव्यपोहार्थं च[१]। तथा च गर्जितमुपपन्नं भवति यो नस्तद्वेदेति ॥ १०–२ ॥

शिष्याचार्यसम्वादात्प्रतिनिवृत्य स्वेन रूपेण श्रुतिः समस्तसम्वादनिर्वृत्तमर्थमेव बोधयति—यस्यामतमित्यादिना। यस्य ब्रह्मविदोऽमतमविज्ञातमविदितं ब्रह्मेति मतमभिप्रायो निश्चयः तस्य मतं ज्ञातं सम्यग्ब्रह्मेत्यभिप्रायः। यस्य पुनर्मतं ज्ञातं विदितं मया ब्रह्मेति निश्चयो न वेदैव स न ब्रह्म विजानाति सः। विद्वदविदुषोर्यथोक्तौ
२० पक्षाववधारयति—अविज्ञातममतमविदितमेव ब्रह्म विजानतां सम्यग्विदितवतामित्येतत्। विज्ञातं विदितं ब्रह्माविजानतामसम्यग्दर्शिनामिन्द्रियमनोबुद्धिष्वेवाऽऽत्मदर्शिनामित्यर्थः। न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम्। न हि तेषां विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति। इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनां तु ब्रह्मोपाधिविवेकानुपलम्भाद्बुद्ध्याद्युपाधेश्च विज्ञातत्वाद्विदितं ब्रह्मेत्युपपद्यते भ्रान्तिरित्यतोऽसम्यग्दर्शनं पूर्वपक्षत्वेनोपन्यस्यते विज्ञातमविजानतामिति। अथवा हेत्वर्थ उत्तरार्धोऽविज्ञातमित्यादिः ॥ ११–३ ॥

२५ [२]अविज्ञातं विजानतामित्यवधृतम्। यदि ब्रह्मात्यन्तमेवाविज्ञातं लौकिकानां ब्रह्मविदां चाविशेषः प्राप्तः।

---

इत्याशङ्क्याऽऽह—स्वतस्त्विति। अविषयतयैव विषयानुपरक्तचित्स्फुरणं ब्रह्मानुभव इत्यर्थः। तर्कतश्चेति। वेद्यत्वे घटादिवदनात्मत्वादिप्रसङ्गादित्यादितर्कतं आत्मनो वेद्यं ब्रह्म न भवत्येवेति निर्धार्याज्ञानसंशयाद्यभावेन स्वानुभवं कृत्वेत्यर्थः ॥ ९–१ ॥

आचार्यवचनादन्यदेव वचनं शिष्य उवाचेति नाऽऽशङ्कनीयमित्याह—यदेवान्यदेवेति। तथा चेति। आचार्य-
३० बुद्धिसम्वादे सत्यर्थान्तरानभिधाने सतीत्यर्थः ॥ १०–२ ॥

अथवा हेत्वर्थ इति। लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्याद्यविज्ञातं भवति। अजानतामेव त्वध्यस्तं विज्ञातं भवतीति प्रसिद्धम्। तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः ॥ ११–३ ॥

ज्ञातब्रह्मत्वादर्शने ब्रह्मास्मीति कथं व्यवहरतीति चेत्किमनयेष्टकावाहकानां रत्नपेटकचिन्तया। ज्ञातस्य
३५ व्यवहाराङ्गत्वं वदतोऽपि वस्तुप्रकाशस्य व्यवहाराङ्गत्वस्येष्टत्वाद्वास्तवज्ञाततानपेक्षत्वादित्यव्युत्पन्नव्युत्पादनाय चोद्यमुद्भावयति—अविज्ञातमित्यादिना। नीलपीताद्याकाराणां बुद्धिविकाराणां जडानां यच्चैतन्यव्याप्तत्वेना-

---

१. शिष्ये मन्दबुद्धित्वग्रहणनिवृत्तये।
२. विजानतां अविज्ञातमिति पक्षः अविजानतां विज्ञातमिति पक्षः–इति मूलं व्याख्येयमित्यर्थः। कल्पतरुः (१.१.४)।

अविज्ञातं विजानतामिति च परस्परविरुद्धम्। कथं तु तद्ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह—[1]प्रतिबोधविदितं बोधं बोधं प्रति विदितम्। बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते। सर्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधान्प्रतिबुध्यते सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः प्रत्ययेष्वविशिष्टतया लक्ष्यते नान्यद्द्वारमात्मनो विज्ञानायातः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म यदा तन्मतं तदा तत्सम्यग्दर्शनमित्यर्थः। सर्वप्रत्ययदर्शित्वे चोपजनापायवर्जितदृक्स्वरूपता नित्यत्वं विशुद्धस्वरूपत्वमात्मत्वं निर्विशेषतैकत्वं च सर्वभूतेषु सिद्धं भवेत्। लक्षणभेदाभावाद्व्योम्न इव घटगिरिगुहादिषु। विदिताविदिताभ्यामन्यद्ब्रह्मेत्यागमवाक्यार्थः एवं परिशुद्ध एवोपसंहृतो भवति। "दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता" इति हि श्रुत्यन्तरम्।

यदा पुनर्बोधक्रियाकर्तेति बोधक्रियालक्षणेन तत्कर्तारं विजानातीति बोधलक्षणेन विदितं प्रतिबोधविदितमिति व्याख्यायते। यथा यो वृक्षशाखाश्चालयति स वायुरिति तद्वत्। तदा बोधक्रियाशक्तिमानात्मा द्रव्यं न बोधस्वरूप एव। बोधस्तु जायते विनश्यति च। यदा बोधो जायते तदा बोधक्रियया सविशेषः। यदा बोधो नश्यति तदा नष्टबोधो द्रव्यमात्रं निर्विशेषः। तत्रैवं सति विक्रियात्मकः सावयवोऽनित्योऽशुद्ध इत्यादयो दोषा न परिहर्तुं शक्यन्ते। यदपि काणादानामात्ममनःसंयोगजो बोध आत्मनि समवैति। अत आत्मनि बोद्धृत्वं नतु विक्रियात्मक आत्मा। द्रव्यमात्रस्तु भवति घट इव रागसमवायी। अस्मिन्पक्षेऽप्यचेतनं द्रव्यमात्रं ब्रह्मेति "विज्ञानमानन्दं ब्रह्म" इत्याद्याः श्रुतयो बाधिताः स्युः। आत्मनो निरवयवत्वेन प्रदेशाभावान्नित्यसंयुक्तत्वाच्च मनसः स्मृत्युत्पत्तिनियमानुपपत्तिरपरिहार्या स्यात्। संसर्गधर्मित्वं चाऽऽत्मनः श्रुतिस्मृतिन्यायविरुद्धं कल्पितं स्यात्। "असङ्गो न हि सज्जते" "असक्तं सर्वभृत्" इति श्रुतिस्मृती द्वे। न्यायश्च गुणवद्गुणवता संसृज्यते नातुल्यजातीयम्। अतो निर्गुणं निर्विशेषं सर्वविलक्षणं केनचिदप्यतुल्यजातीयेन संसृज्यत इत्येतन्न्यायविरुद्धं भवेत्। तस्मान्नित्यालुप्तविज्ञानस्वरूपज्योतिरात्मा ब्रह्मेत्ययमर्थः सर्वबोधबोद्धृत्व आत्मनः सिद्ध्यति नान्यथा। तस्मात्प्रतिबोधविदितं मतमिति यथाव्याख्यात एवार्थोऽस्माभिः।

जडवदवभासस्तं साक्षिणमुपलक्ष्य सोऽहमात्मा ब्रह्मेति महावाक्यादविषयतयैव यो वेत्ति स ब्रह्मविदुच्यते। तेन नाविशेषप्रसङ्गादिचोद्यावकाश इत्याह—प्रतिबोधविदितमिति। प्रत्ययेष्वविशिष्टतयाऽनुगतरूपेणेत्यर्थः। येन चित्स्वरूपेणाहमत्र साक्षी तस्य सर्वत्राविशेषान्नैकस्मिन्नेव देहेऽहं साक्षी भेदोत्पत्त्यादीनां च साक्ष्यगतत्वेन साक्षिण एकत्वनित्यत्वादिकमपि सिध्यतीत्याह—सर्वप्रत्ययदर्शित्वे चेति। विदितत्वाविदितत्वयोः साक्ष्यगतत्वेन तदन्यत्वमप्यस्मिन्पक्षे सम्भवतीत्याह—विदिताविदिताभ्यामन्यदिति। एकदेशिव्याख्यानमुद्भाव्य दूषयति—यदा पुनरित्यादिना। अग्निसंयोगाद्घटे लौहित्यवन्मनःसंयोगादसमवायिकारणादात्मन्यचेतने चैतन्यमुत्पद्यत इत्येतन्न केवलं श्रुतिविरुद्धमसम्भावितं चेत्याह—आत्मनो निरवयवत्वेनेति। प्रदेशवता प्रदेशवतो लोके संयोगो दृष्टः आत्मनो निष्प्रदेशत्वान्मनसा संयोगो न सम्भवतीत्युक्तं तदयुक्तम्, युगपत्सर्वमूर्तसंयोगित्वं सर्वगतत्वमात्मनस्ततो मनसः संयोगोऽपीति चेत्तत्राऽऽह—नित्येति। ग्रहणकालादन्यकाल एव स्मृतीनां क्रमेणैवोत्पत्तिरिति नियमो वैशेषिकस्य नोपपद्यते ग्रहणकालेऽपि स्मृत्युत्पत्तिप्रसङ्गाच्च संस्कारवदात्ममनःसंयोगस्याविशेषादित्यर्थः। सर्वगतत्वं च सर्वाव्यवधानमात्रं न तु संयोगित्वं कल्पनीयमित्याह—संसर्गधर्मित्वं चेति। न्यायविरुद्धमित्युक्तं तत्स्फुटयति—न्यायश्चेति। एकदेशिव्याख्यानान्तरमनूद्य दूषयति—यत्पुनरित्यादिना। यद्वेद्यं तद्वेदितुर्वेदनाच्च भिन्नं यथा घटादीति व्याप्तिविरोधात्स्वसंवेद्यत्वं वास्तवं नोपपद्यते ततो बुद्ध्यादावात्मभावमारोप्याऽऽत्मना तस्य वेद्यत्वं

---

१. अत्र रामानुजीयाः प्रतिनियतो बोधः प्रतिबोधः। स च सत्यज्ञानानन्दत्वादिरूपासाधारणधर्मविशिष्टतया बोध इति व्याचख्युः। तन्न। तादृशधर्माणामत्राश्रुतत्वात् प्रतिशब्दस्य वीप्सायां रूढत्वेन तत्परित्यागानौचित्याच्च भगवत्पादीयं विवरणमेव साधु।

माध्वास्तु—प्रतिबोधः स्वस्वयोग्यतानुसारेण बोधः। तथा पुंभिः श्रुतं ब्रह्म अमृतत्वं विन्दते प्रापयतीत्यर्थः। अत्र ब्रह्मज्ञानस्य अनियतविषयस्य मोक्षसाधनत्वाभ्युपगमो विन्दत इत्यस्य णिजर्थाध्याहारश्च दोषौ। आत्मना ज्ञानोत्तरकालीनकर्मणेत्यर्थः। वीर्यं=आनन्दातिशयं प्राप्नोतीत्यर्थश्चाप्रसिद्धौ। इदं च स्वमतस्य कथञ्चिदुपनिषत्प्रवेशनमात्रम्।

यत्पुनः स्वसंवेद्यता प्रतिबोधविदितमित्यस्य वाक्यस्यार्थो वर्ण्यते । तत्र भवति सोपाधिकत्व-
मात्मनः । बुद्ध्युपाधिस्वरूपत्वेन भेदं परिकल्प्याऽऽत्मनाऽऽत्मानं वेत्तीति संव्यवहारः । "आत्मनैवाऽऽत्मानं पश्यति"
"स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम" इति । नतु निरुपाधिकस्याऽऽत्मन एकत्वे स्वसंवेद्यता परसंवेद्यता वा
सम्भवति। संवेदनस्वरूपत्वात्संवेदनान्तरापेक्षा च न सम्भवति यथा प्रकाशस्य प्रकाशान्तरापेक्षाया न सम्भवस्तद्वत्।
५ बौद्धपक्षे स्वसंवेद्यतायां तु क्षणभङ्गुरत्वं निरात्मकत्वं च विज्ञानस्य स्यात् । "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो
विद्यतेऽविनाशित्वात्" "नित्यं विभुं सर्वगतम्" "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयः" इत्याद्याः श्रुतयो
बाध्येरन् । यत्पुनः प्रतिबोधशब्देन निर्निमित्तो बोधः प्रतिबोधो यथा सुप्तस्येत्यर्थं परिकल्पयन्ति । सकृद्विज्ञानं
प्रतिबोध इत्यपरे। निर्निमित्तः सनिमित्तः सकृद्वाऽसकृद्वा प्रतिबोध एव हि सः। अमृतत्वममरणभावं स्वात्मन्यवस्थानं
मोक्षं हि यस्माद्विन्दते लभते यथोक्तात्प्रतिबोधात्प्रतिबोधविदितात्मकात्तस्मात्प्रतिबोधविदितमेव मतमित्यभिप्रायः ।
१० बोधस्य हि प्रत्यगात्माऽऽत्मविषयं च मतममृतत्वे हेतुः । न ह्यात्मनोऽनात्मत्वममृतत्वं भवत्यात्मत्वादात्मनोऽमृतत्वं
निर्निमित्तमेव । एवं मर्त्यत्वमात्मनो यदविद्ययाऽनात्मत्वप्रतिपत्तिः ।

कथं पुनर्यथोक्तयाऽऽत्मविद्ययाऽमृतत्वं विन्दत इत्यत आह—आत्मना स्वेन स्वरूपेण विन्दते लभते वीर्यं
बलं सामर्थ्यं, धनसहायमन्त्रौषधितपोयोगकृतं वीर्यं मृत्युं न शक्नोत्यभिभवितुमनित्यवस्तुकृतत्वात् । आत्मविद्याकृतं
तु वीर्यमात्मनैव विन्दते नान्येनेत्यतोऽनन्यसाधनत्वादात्मविद्यावीर्यस्य तदेव वीर्यं मृत्युं शक्नोत्यभिभवितुम् । यत
१५ एवमात्मविद्याकृतं वीर्यमात्मनैव विन्दतेऽतो विद्ययाऽऽत्मविषयया विन्दतेऽमृतम्, "नायमात्मा बलहीनेन लभ्यः"
इत्याथर्वणे । अतः समर्थो हेतुः, अमृतत्वं हि विन्दत इति ॥ १२–४ ॥

वाच्यमिति निरुपाधिकस्वरूपस्थितिर्न स्यादित्याह--तत्र भवति सोपाधिकत्वमिति । काणादस्य स्वसंवेद्यत्वानङ्गी-
कारबलात्परवेद्यत्वं प्रसज्यत इत्यपि न वाच्यमित्याह—संवेदनरूपत्वादिति । बौद्धेन स्वसंवेद्यं विज्ञानमिष्टं तव
किं न स्यादित्यत आह—बौद्धपक्ष इति । प्रत्यक्षस्य वर्तमानावभासकत्वात्क्षणान्तरविशिष्टे स्वात्मनि क्षणान्तर-
२० विशिष्टं तदेव विज्ञानं प्रत्यक्षं न सम्भवति । अतः स्वात्मनि स्वयमेव विज्ञानं प्रत्यक्षं चेद्वर्तमानक्षणमात्रं सत्त्वं
स्यात् । स्वसंवेद्यत्वेन साक्षिणोऽनङ्गीकारान्निरात्मत्वं च स्यादेव तच्छ्रुतिविरुद्धमित्यर्थः । प्रतिबोधवाक्यस्यार्थान्तरं
शङ्कते—यत्पुनरिति । ब्रह्माहमस्मीति चिन्तयतो यावच्चेतोव्यापृतिस्तावत्सम्प्रज्ञातसमाधिर्निवृत्ते चेतोव्यापारे
य परमानन्दसाक्षात्कारः सौषुप्तानन्दसाक्षात्कारवत्सोऽसम्प्रज्ञातसमाधिः प्रतिबोध उच्यते । तदुक्तं वार्तिककृता—
"अपरायत्तबोधो हि निदिध्यासनमुच्यते" इति । अथवाऽक्रियंब्रह्मात्मत्वानुभवे सति प्रमातृत्वानुपपत्तौ पुनर्ज्ञाना-
२५ सम्भवात्सद्योमुक्तिकारणं सकृद्विज्ञानं प्रतिबोध उच्यते ।

"सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत् । अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः ॥"

पक्षद्वयेऽप्यरुचिमाह—निर्निमित्त इति । अयमाशयः—न तावदविद्यानिवर्तकस्याऽऽगन्तुकस्य बोधस्य
निर्निमित्तत्वं सम्भवति । कार्यस्य सनिमित्तत्वव्याप्तेः । सौषुप्तस्यापि न निर्निमित्तत्वमविद्यायाः पूर्वपूर्वनिरोधा-
वस्थासंस्कारोद्भूततादृशवृत्त्यभिव्यक्तचैतन्यस्य तत्र सुखसाक्षात्कारोपगमात् । अत एव वृत्तिविशिष्टस्य विनाशे
३० स्मरणमुपपद्यते । अत्रापि तर्ह्यावृत्तिसंस्कारप्रचयान्निवृत्तेऽपि चित्ते ब्रह्माभिव्यक्तं स्यादिति चेन्न । तथा सत्यप्रमात्वेन
विनष्टपुत्रापरोक्षादिवाविद्यानिवृत्तिर्न स्यात् । शाब्दज्ञानसंवादात्प्रमात्वे परतन्त्रत्वप्रसङ्गः शब्दमूलत्वात्प्रमात्वे न
निर्निमित्ततेति । प्रवृत्तफलकर्मप्रतिबन्धाद्वर्तमानप्रमातृत्वाभासानिवृत्तेरसकृद्बोधोऽपि सम्भवतीति पक्षद्वयेऽपि
नाऽऽदरः । सर्वथाऽपि परमात्मा प्रतिबोध एव बोधं प्रति बोधं प्रति साक्षितया भातीति । लक्ष्यपदार्थविवेचनपूर्वकं
महावाक्योत्थं परमात्माऽस्मीति ज्ञानमेव सम्यग्ज्ञानं यस्मात्तत एवामृतत्वं लभत इत्याह—अमृतत्त्वमिति । उक्तमर्थं
३५ संक्षिप्याऽऽह—बोधस्य हीति। बुद्धिपरिणामस्य सर्वस्य भासकं प्रत्यक्चैतन्यं परमात्मा न भवति किन्तु ब्रह्माण्डाद्बहिः
स्थितस्तत्प्राप्तिश्च मोक्ष इत्याशङ्क्याह—न हीति। अनात्मप्राप्तेः कर्मफलवदनित्यत्वेनामृतत्वप्रसिद्धिर्न स्यादित्यर्थः।
यद्युक्तदोषपरिहारायौपाधिकभेदेन भिन्नत्वं ब्रह्मणः स्वतस्त्वात्मत्वमेवेति मन्यसे तत्राऽऽह—आत्मत्वादिति । ब्रह्मण
आत्मत्वादेवाऽऽत्मनोऽमृतत्वं स्वभावत एव सिद्धम् । तर्हि विद्याया आनर्थक्यं प्राप्तमित्याशङ्क्याऽऽह—एवं मर्त्यत्व-
मिति । अविद्यया देहाद्यात्मत्वप्रतिपत्तिरिति यत्तदात्मनो मर्त्यत्वं तन्निवृत्तिर्विद्याफलमित्यर्थः । वीर्यं विद्याकृतमुक्तं

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १३–५ ॥

इति द्वितीयः खण्डः

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त ।
त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १४–१ ॥ ५

कष्टा खलु सुरनरतिर्यक्प्रेतादिषु संसारदुःखबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसम्प्राप्तिरज्ञानादत इहैव चेन्मनुष्योऽधिकृतः समर्थः सन्यद्यवेदीदात्मानं यथोक्तलक्षणं विदितवान्यथोक्तेन प्रकारेण । अथ तदाऽस्ति सत्यं मनुष्यजन्मन्यस्मिन्नविनाशोऽर्थवत्ता वा सद्भावो वा परमार्थता वा सत्यं विद्यते । न चेदिहावेदीदिति । न चेदिह जीवंश्चेदधिकृतोऽवेदीन्न विदितवांस्तदा महती दीर्घाऽनन्ता विनष्टिर्विनाशनं जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा संसारगतिस्तस्मादेवं गुणदोषौ विजानन्तो ब्राह्मणा भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु चैकमात्मतत्त्वं ब्रह्म विचित्य विज्ञाय साक्षात्कृत्य धीरा धीमन्तः प्रेत्य व्यावृत्य ममाहंभावलक्षणादविद्यारूपादस्माल्लोकादुपरम्य सर्वात्मैकत्वभावमद्वैतमापन्नाः सन्तोऽमृता भवन्ति ब्रह्मैव भवन्तीत्यर्थः । "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ॥ १३–५ ॥ १०

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ केनोपनिषत्पदभाष्ये द्वितीयः खण्डः

'ब्रह्म ह देवेभ्यो विजिग्ये । 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्यादिश्रवणाद्यदस्ति तद्विज्ञातं [2]प्रमाणैर्यन्नास्ति तदविज्ञातं शशविषाणकल्पमत्यन्तमेवासद्दृष्टम् । तथेदं ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीनां व्यामोहो मा भूदिति तदर्थेयमाख्यायिकाऽऽरभ्यते । तदेव हि ब्रह्म सर्वप्रकारेण प्रशास्तृ देवानामपि परो देव ईश्वराणामपीश्वरो दुर्विज्ञेयो देवानां जयहेतुरसुराणां पराजयहेतुस्तत्कथं नास्तीत्येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचांसि दृश्यन्ते । अथवा ब्रह्मविद्यायाः स्तुतये । कथं ? ब्रह्मविज्ञानाद्धचग्न्यादयो देवा देवानां श्रेष्ठत्वं जग्मुस्ततोऽप्यतितरामिन्द्र इति । अथवा दुर्विज्ञेयं ब्रह्मेत्येतत्प्रदर्श्यते । येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तस्तथेन्द्रो देवानामीश्वरोऽपि सन्निति । वक्ष्यमाणोपनिषद्विधिपरं वा सर्वम् । ब्रह्मविद्याव्यतिरेकेण प्राणिनां कर्तृत्वाद्यभिमानो मिथ्येत्येतद्दर्शनार्थं वाऽऽख्यायिका । यथा देवानां जयाद्यभिमानस्तद्वदिति । ब्रह्म यथोक्तलक्षणं परं ह किल देवेभ्योऽर्थाय विजिग्ये जयं लब्धवद्देवानामसुराणां च सङ्ग्रामेऽसुराञ्जित्वा जगदरातीनीश्वरसेतुभेत्तॄन् देवेभ्यो जयं १५ २०

मुक्तत्वे दाढर्यं तच्च स्वाभाविकमेव मुक्तत्वं वास्तवं सर्वशरीराद्यसंसर्गित्वान्नभोवन्निरवयवत्वादेव । ततश्च नित्यमुक्त एवाहमित्यवष्टम्भो विद्याकृतं बलमित्यर्थः ॥ १२–४ ॥ २५

उत्तरवाक्यस्यापेक्षितमर्थमाह—कष्टा खल्विति । लौकिकमपि सत्यम् । चिरं जीवनं धनवत्त्वम् । सद्भावः साधुभावः ख्यातिः । एतदपि सर्वं ब्रह्मविदो भवतीति स्तुत्यर्थमुच्यते । परमार्थतो ब्रह्मरूपस्थितिस्तु फलमवश्यं भवतीत्यर्थः ॥ १३–५ ॥

इति द्वितीयः खण्डः

उत्तरग्रन्थस्य प्रतीकमादाय तात्पर्यमाह—ब्रह्मेत्यादिना । अभिप्रेतं तात्पर्यमाह—वक्ष्यमाणेति । उत्तमाधिकारिगोचरमविषयब्रह्मात्मताज्ञानं पूर्वत्रोक्तमुत्तरत्र तु मन्दाधिकारिगोचरं सगुणब्रह्मोपासनं वक्ष्यते । तत्परं ३०

---

१. अत्राग्नेः वायोः इन्द्रस्य च स्वयमवगन्तुमशक्यं ब्रह्म देव्या ब्रह्मविद्यास्वरूपिण्या उपदेशादेवावगतम् । इत्यनेन ब्रह्मविद्या उपदेशादेवावगन्तुं शक्येति सूचितम् । इयं कथा देवीभागवते शिवपुराणे च विस्तरतो वर्णिता ।

२. यद्विज्ञातं तदेवास्ति विपर्यये नास्ति अतः अविज्ञातत्वान्नास्ति ब्रह्मेति योजनीयम् । ३५

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ॥ १५–२ ॥
तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ १६–३ ॥
तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ १७–४ ॥
तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳसर्वं दहेयं यदिदं पृथिव्यामिति ॥ १८–५ ॥
५ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं
स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १९–६ ॥
अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ २०–७ ॥
तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ २१–८ ॥
तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीय यदिदं पृथिव्यामिति ॥ २२–९ ॥
१० तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽदातुं
स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥२३–१०॥

तत्फलं च प्रायच्छज्जगतः स्थेम्ने। तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादयोऽमहीयन्त महिमानं प्राप्नुवन्तस्तदाऽऽत्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसंयोजयितुः प्राणिनां सर्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्तेक्षितवन्तोऽग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं विजयोऽ-
१५ स्माकमेवायं महिमाऽग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इति ॥१४-१॥
एवं मिथ्याभिमानेक्षणवतां—

तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवद्ब्रह्म। सर्वेक्षितृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान्मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्यो देवेभ्यो ह किलार्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण
२० देवानामिन्द्रियगोचरे प्रादुर्बभूव। तत्प्रादुर्भूतं ब्रह्म न व्यजानत नैव विज्ञातवन्तो देवाः। किमिदं यक्षं पूज्यं महद्भूतमिति ॥ १५–२ ॥

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिणं जातवेदसं सर्वज्ञकल्पमब्रुवन्नुक्तवन्तो हे जातवेद एतदस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति। तथाऽस्त्विति तद्यक्षमभ्यद्रवत्तत्प्रति गतवानग्निः। तं च गतवन्तं पिपृच्छिषुं तत्समीपेऽप्रगल्भत्वात्तूष्णींभूतं तद्यक्षमभ्यवद-
२५ दग्निं प्रत्यभाषत कोऽसीति। एवं ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वा अग्निनामाऽहं प्रसिद्धो जातवेदा इति च नामद्वयेन प्रसिद्धतयाऽऽत्मानं श्लाघयन्। इत्येवमुक्तवंतं ब्रह्मावोचत्तस्मिन्नेवं प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यमिति। सोऽब्रवीदिदं जगत्सर्वं दहेयं भस्मीकुर्याम्। यदिदं स्थावरादि पृथिव्यामिति। पृथिव्यामित्युपलक्षणार्थं यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना। तस्मा एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवद्ब्रह्मैतत्तृणमात्रं ममाग्रतो दह न चेदस्य दग्धुं समर्थो मुञ्च दग्धृत्वाभिमानं सर्वत्रेत्युक्तस्तत्तृणमुपप्रेयाय तृणसमीपं गतवान्सर्वजवेन
३० सर्वोत्साहकृतेन वेगेन गत्वा न शशाक नाशकद्दग्धुं स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूष्णीं देवान्प्रति निववृते निवृत्तः प्रतिगतवान्। नैतद्यक्षमशकं शक्तवानहं विज्ञातुं विशेषतो यदेतद्यक्षमिति ॥ १६–३ ॥ १७–४ ॥ १८–५ ॥ १९–६ ॥

वक्ष्यमाणं सर्ववाक्यजातं, स्पष्टविधिदर्शनात्। अतोऽत्रैव तात्पर्यमर्थान्तरतात्पर्यप्रदर्शनं तु सम्भावनामात्रेणेति द्रष्टव्यम्। ईश्वरस्य सेतवो मर्यादा वर्णाश्रमादिधर्मास्तद्भेदकान्। जगतः स्थेम्ने स्थैर्याय। स्वयोगमाहात्म्य-
३५ निर्मितेन सत्त्वरजस्तमसां त्रयाणां गुणानां योगो युक्तिर्घटनं माया तन्माहात्म्ये [ न निर्मितं ते ]
.नेत्यर्थः ॥ १४–१ ॥ १५–२ ॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥ २४-११ ॥
स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमाꣳहैमवतीं
ताꣳ होवाच किमेतद्यक्षमिति ॥ २५-१२ ॥

इति तृतीयः खण्डः

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥२६-१॥ ५
तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते
ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ २७-२ ॥
तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श
स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८-३ ॥

अथ वायुमिति। अथानन्तरं वायुमब्रुवन्हे वायवेतद्विजानीहीत्यादि समानार्थं पूर्वेण। वानाद्गमनाद्गन्धनाद्वा वायुः। १० मातर्यन्तरिक्षे श्वयतीति मातरिश्वा। इदं सर्वमप्यादवीय गृह्णीयाम्। यदिदं पृथिव्यामित्यादि समानमेव ॥२०-७॥ २१-८ ॥ २२-९ ॥ २३-१० ॥

अथेन्द्रमिति। अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहीत्यादि पूर्ववत्। इन्द्रः परमेश्वरो मघवान्बलवत्त्वात्, तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपं गतात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रस्येन्द्रत्वाभिमानोऽतितरां निराकर्तव्य इत्यतः संवादमात्रमपि नादाद्ब्रह्मेन्द्राय। तद्यक्षं यस्मिन्नाकाश आकाशप्रदेश आत्मानं दर्शयित्वा तिरोभूतमिन्द्रश्च १५ ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाश आसीत्स इन्द्रस्तस्मिन्नेवाऽऽकाशे तस्थौ किं तद्यक्षमिति ध्यायन्न निववृतेऽन्याग्निवत्। तस्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्योमारूपिणी प्रादुरभूत्स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमां विद्यां तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव बहु शोभमानामित्यर्थः। अथवोमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तत इति ज्ञातुं समर्थेति कृत्वा तामुपजगाम। इन्द्रस्तां होमां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति ॥२४-११॥२५-१२॥ २०

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ केनोपनिषत्पदभाष्ये तृतीयः खण्डः

सा ब्रह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजये, ईश्वरेणैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमयमस्माकमेवायं विजयोऽस्माकमेवायं महिमेति। ततस्तस्मादुमावाक्याद्धैव विदाञ्चकार ब्रह्मेतीन्द्रोऽवधारणात्ततो हैवेति न स्वातन्त्र्येण ॥ २६-१ ॥ २५

यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मणः सम्वाददर्शनादिना सामीप्यमुपगतास्तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान्देवानतितरामतिशयेन शेरत इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकतमं प्रियतमं पस्पृशुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः सम्वादादिप्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतत्, विदाञ्चकुरित्येतद्ब्रह्मेति ॥ २७-२ ॥

यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रतुरिन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्मेत्यतस्तस्माद्वा इन्द्रोऽ- ३० तितरामतिशयेन शेत इवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श यस्मात्स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेत्युक्तार्थं वाक्यम् ॥ २८-३ ॥

तृतीयखण्डशेषभाष्यं स्पष्टमतो न विवृतमिति ॥ १६-३ ॥ १७-४ ॥ १८-५ ॥ १९-६ ॥ २०-७ ॥ २१-८ ॥ ॥ २२-९ ॥ २३-१० ॥ २४-११ ॥ २५-१२ ॥

इति तृतीयः खण्डः ३५

२६-१ ॥ २७-२ ॥ २८-३ ॥

तस्यैष आदेशो यदेतद्विद्युतो 'व्यद्युतदा३ इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥ २९-४ ॥

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ३०-५ ॥

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं

वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ३१-६ ॥

५ तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेशो निरुपमस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेश इत्युच्यते। किं तद्यदेतत्प्रसिद्धं लोके विद्युतो व्यद्युतद्विद्योतनं कृतवदित्येतदनुपपन्नमिति विद्युतो विद्योतनमिति कल्प्यते। आ इत्युपमार्थे। विद्युतो विद्योतनमिवेत्यर्थः। "यथा सकृद्विद्युत्तम्" इति श्रुत्यन्तरे च दर्शनाद्विद्युदिव हि सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्म देवेभ्यः। अथवा विद्युतस्तेज इत्यध्याहार्यम्। व्यद्युतद्विद्योतितवत्, आ इव। विद्युतस्तेजः सकृद्विद्योतितवदिवेत्यभिप्रायः। इतिशब्द आदेशप्रतिनिर्देशार्थ इत्ययमादेश इति। १० इच्छब्दः समुच्चयार्थः। अयं चापरस्तस्याऽऽदेशः। कोऽसौ? न्यमीमिषत्। यथा चक्षुर्न्यमीमिषन्निमेषं कृतवत्। स्वार्थे णिच्। उपमार्थ एवाऽऽकारः। चक्षुषो विषयं प्रति प्रकाशतिरोभाव इव चेत्यर्थः। इत्यधिदैवतं देवताविषयं ब्रह्मण उपमानदर्शनम् ॥ २९-४ ॥

अथानन्तरमध्यात्मं प्रत्यगात्मविषय आदेश उच्यते। यदेतद्गच्छतीव च मन एतद्ब्रह्म ढौकत इव विषयीकरोतीव यच्चाऽनेन मनसैतद्ब्रह्मोपस्मरति समीपतः स्मरति साधकोऽभीक्ष्णं भृशं सङ्कल्पश्च मनसो ब्रह्मविषयः। १५ मनउपाधिकत्वाद्धि मनसःसङ्कल्पस्मृत्यादिप्रत्ययैरभिव्यज्यते ब्रह्म विषयीक्रियमाणमिव चातः स एष ब्रह्मणोऽध्यात्ममादेशो विद्युन्निमेषणवदधिदैवतं द्रुतप्रकाशनधर्म्यध्यात्मं च मनः प्रत्ययसमकालाभिव्यक्तिधर्मीत्येष आदेशः। एवमादिश्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवतीति ब्रह्मण आदेशोपदेशः। नहि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितुं शक्यम् ॥ ३०-५ ॥

किञ्च तद्ब्रह्म ह किल [२]तद्वनं नाम तस्य वनं तद्वनं तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वाद्वननीयं सम्भजनीय- २० मतस्तद्वनं नाम प्रख्यातं ब्रह्म तद्वनमिति यतस्तस्मात्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं चिन्तनीयमिति। अनेन नाम्नोपासकस्य फलमाह—स यः कश्चिदेतद्यथोक्तं ब्रह्मैवं यथोक्तगुणं वेदोपास्तेऽभि हैनमुपासकं सर्वाणि भूतान्यभिसंवाञ्छन्ति ह प्रार्थयन्त एव यथा ब्रह्म ॥ ३१-६ ॥

विद्युतः सकाशाद्विद्योतनं कृतवदित्यनुपपन्नं ब्रह्मणः स्वयंज्योतिष्ट्वात्पराधीनप्रकाशानुपपत्तेर्विद्युत्सम्बन्धि द्योतनं कृतवदित्यनुपपन्नमन्याश्रयस्य विद्योतनस्यान्यकर्तृ[क]त्वानुपपत्तेरतो यथाश्रुतासम्भवादन्यत्र तात्पर्यं २५ वक्तव्यमित्यर्थः। प्रतिनिर्देशार्थ इति। परामर्शार्थः। चक्षुषो निमेषणं द्रुतं भवतीति प्रसिद्धं तद्वद्ब्रह्मणि क्षिप्रकारित्वं सृष्ट्यादौ प्रतिबन्धाभावेनाऽऽयासाभावेन च द्रुतकारित्वं धर्मोऽधिदैवतम्। यद्वचेयं ब्रह्म तद्यथा विद्युतः प्रकाशो युगपद्विश्वव्यापकस्तथा निरतिशयज्योतीरूपं द्रुतं सकलसृष्ट्यादिकारि पारमैश्वर्यसम्पन्नमित्युपमानोपदेशेनोक्तम् ॥ २९-४ ॥

अधुना प्रत्यगात्मतया ब्रह्मणो यथाऽभिव्यक्तिः स्यात्तथोपदिश्यत इत्याह—अथानन्तरमिति। एतत्प्रकृतं ३० ज्योतीरूपं ब्रह्म प्रति मदीयं मनो गच्छतीतं इति चिन्तयेदिति य उपदेशः स आध्यात्मिकोऽभीक्ष्णं पौनःपुन्येन मम मनसः सङ्कल्पो ब्रह्मविषय एवेति ध्यायतः प्रत्यग्भूतब्रह्माभिव्यक्तिः स्यादित्याह—मनउपाधिकत्वाद्धीति। उक्तमर्थं संक्षिप्याऽऽह—विद्युन्निमेषणवदिति। सगुणब्रह्मोपासनमैश्वर्यफलकमुक्तम् ॥ ३०-५ ॥ ३१-६ ॥

१. उभयत्र प्लुतिः आश्चर्यार्था—श्रीशङ्करानन्दीये एवमेव व्याख्यातम्।

२. तद्वनं इति तच्छब्दघटितं ब्रह्मणो नाम तस्य प्राणिजातस्य वननीयमित्यर्थः। रामानुजीये वनमित्येव ३५ नामेत्युक्तं तन्न। तद्ध तद्वनमिति तच्छब्दद्वयोपादानवैयर्थ्यप्रसङ्गात्।

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ३२-७ ॥**

एवमनुशिष्टः शिष्य आचार्यमुवाच—

उपनिषदं रहस्यं यच्चिन्त्यं भो भगवन्ब्रूहीत्येवमुक्तवति शिष्य आहाऽऽचार्यः—उक्ताऽभिहिता ते तवोपनिषत्। का पुनः सेत्याह—ब्राह्मीं ब्रह्मणः परमात्मन इयं तां परमात्मविषयत्वादतीतविज्ञानस्य। वावैव त उपनिषदमब्रूमेत्युक्तामेव परमात्मविद्यामुपनिषदमब्रूमेत्यवधारयत्युत्तरार्थम्। परमात्मविषयामुपनिषदं श्रुतवत उपनिषदं भो ब्रूहीति पृच्छतः शिष्यस्य कोऽभिप्रायः? यदि तावच्छ्रुतस्यार्थस्य प्रश्नः कृतस्ततः पिष्टपेषणवत्पुनरुक्तोऽनर्थकः प्रश्नः स्यात्। अथ सावशेषोक्तोपनिषत्स्यात्ततस्तस्याः फलवचनेनोपसंहारो न युक्तः "प्रेत्यास्माल्लोकादमृता भवन्ती"ति। तस्मादुक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एवानवशेषितत्वात्। कस्तर्ह्यभिप्रायः प्रष्टुरिति? उच्यते। किं पूर्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा। अथ निरपेक्षैव। सापेक्षा चेदपेक्षितविषयामुपनिषदं ब्रूहि। अथ निरपेक्षा चेदवधारय पिप्पलादवन्नातः परमस्तीत्येवमभिप्रायः। एतदुपपन्नमाचार्यस्यावधारणवचनमुक्ता त उपनिषदिति। ननु नावधारणमिदं यतोऽन्यद्वक्तव्यमाह—तस्यै तपो दम इत्यादि। सत्यं वक्तव्यमुच्यत आचार्येण नतूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तराभिप्रायेण वा। किन्तु ब्रह्मविद्याप्राप्त्युपायाभिप्रायेण वेदैस्तदङ्गैश्च सह पाठेन समीकरणात्तपःप्रभृतीनाम्। न हि वेदानां शिक्षाद्यङ्गानां च साक्षाद्ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वा। सहपठितानामपि यथायोग्यं विभज्य विनियोगः स्यादिति चेत्, यथा [1]सूक्तवाकानुमन्त्रणमन्त्राणां यथादैवतं विभागस्तथा तपोदमकर्मसत्यादीनां ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वेति कल्प्यते। वेदानां तदङ्गानां चार्थप्रकाशकत्वेन कर्मात्मज्ञानोपायत्वमिति, एवं ह्ययं विभागो युज्यतेऽर्थसम्बन्धोपपत्तिसामर्थ्यादिति चेत्। न, अयुक्तेः। न ह्ययं विभागो घटनां प्राञ्चति। न हि सर्वक्रियाकारकफलभेदबुद्धितिरस्कारिण्या ब्रह्मविद्यायाः शेषापेक्षा सहकारिसाधनसम्बन्धो वा युज्यते। सर्वविषयव्यावृत्तप्रत्यगात्मनिष्ठत्वाच्च ब्रह्मविद्यायास्तत्फलस्य च निःश्रेयसस्य—

"मोक्षमिच्छन्सदा कर्म त्यजेदेव ससाधनम्। त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥"

तस्मात्कर्मणां सहकारित्वं कर्मशेषापेक्षा वा न ज्ञानस्योपपद्यते। ततोऽसदेव सूक्तवाकानुमन्त्रणवद्यथायोगं

तत्र विरक्त उत्तमाधिकारी परमरहस्यं पृच्छतीत्याह—एवमनुशिष्ट इति।

परमरहस्यं श्रोत्रस्य श्रोत्रमित्यादिनोक्तमेवोत्तरार्थमित्युत्तरग्रन्थेन विद्याप्राप्त्युपायविधानार्थमुक्ता विद्या निरपेक्षैवेत्यवधारयति। अवधारणार्थत्वं प्रतिवचनस्य चोद्यमुखेन स्फुटयति—परमात्मविषयामित्यादिना। किं पूर्वोक्तोपनिषच्छेषतयाऽन्यदपेक्षते। शेषशब्देन फलोपकार्यङ्गं विवक्षितम्। सहकारिशब्देनानुपसर्जनमपि समुच्चयार्हं विवक्षितम्। एवं शिष्याभिप्रायमुपवर्ण्य समाधानमाह—एतदुपपन्नमिति। विद्याङ्गत्वहीनैः सह पाठात्तपःप्रभृतीनां विद्याङ्गत्वं नास्तीत्युक्तम्। तत्र योग्यतावशेन शेषशेषिभावः सहपाठस्त्वकिञ्चित्कर इति शङ्कते—सहपठितानामपीति। "अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यादिनैव सूक्तवाकेन सर्वयागसमाप्तौ देवतानुमन्त्रणं क्रियते। तत्र यद्यप्यस्मिन्सूक्तवाके बह्व्यो देवताः पठ्यन्ते तथाऽपि यस्मिन्यागे या देवताऽऽहूता तस्या एव विसर्जने योग्यतावशादस्य सूक्तवाकस्य यथा विनियोगस्तथा तपःप्रभृतीनामेव विद्याशेषत्वेन विनियोगो भविष्यतीत्यर्थः। भवेत्सूक्तवाकस्य विनियोगो योग्यतासम्भवात्। न कर्मणां विद्याविरुद्धत्वेन अयोग्यत्वादित्याह—नायुक्तेरिति। विद्यया विषयपर्यालोचनया फलपर्यालोचनया च नास्ति तत्त्वतः सम्बन्धयोग्यता कर्मणां प्रत्युत अनुपयोगात्कर्मणां त्याग एव मुमुक्षुणा कर्तव्य इत्याह—सर्वविषयेति।

---

[1] सूक्तवाकः। दर्शपूर्णमासयोः प्रधानयागसमाप्त्यनन्तरं हविर्धारणोपयुक्तस्य प्रस्तरस्याग्नौ प्रक्षेपरूपो होमो विहितः सूक्तवाकेन प्रस्तरं प्रहरति इति। अत्र प्रक्षेपः प्रतिपत्तिकर्म, द्रव्यत्यागः अदृष्टार्थः, सूक्तवाकपठितदेवतानां स्मरणं देवतोद्देशांशेन क्रियते तत्तु यागोपयुक्तदेवतासंस्कारार्थम्। संस्कारश्च स्मरणमेव। ततश्च दर्शगतानां पूर्णमासगतानां च देवतानां सूक्तवाके पठितत्वेऽपि या देवताः दर्शे इष्टाः ता एव दर्शाङ्गप्रहरणे पठनीयाः नान्ये। एवं पूर्णमासाङ्गदेवताः एव तत्र पठनीया इति विभज्य विनियोग उक्तः तन्न्यायेनेत्यर्थः। (पू० मी० ३-२-६)

तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गाणि सत्यमायतनम् ॥ ३३-८॥
यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति॥ ३४-९ ॥

इति चतुर्थः खण्डः

सह ना० आप्यायन्तु० इति शान्तिः

इति सामवेदीयतलवकारशाखीयोपनिषत्समाप्ता

५

विभाग इति । तस्मादवधारणार्थतैव प्रश्नप्रतिवचनस्योपपद्यते । एतावत्येवेयमुपनिषदुक्ताऽन्यनिरपेक्षाऽमृतत्वाय॥ ३२-७ ॥

यामिमां ब्राह्मीमुपनिषदं तवाग्रेऽब्रूम तस्यै तस्या उक्ताया उपनिषदः प्राप्त्युपायभूतानि तपआदीनि । तपः कायेन्द्रियमनसां समाधानम् । दम उपशमः । कर्माग्निहोत्रादि । एतैर्हि संस्कृतस्य सत्त्वशुद्धिद्वारा तत्त्वज्ञानो-
१० त्पत्तिर्दृष्टा। दृष्टा ह्यमृदितकल्मषस्योक्तेऽपि ब्रह्मण्यप्रतिपत्तिर्विपरीतप्रतिपत्तिश्च यथेन्द्रविरोचनप्रभृतीनाम्। तस्मादिह वाऽतीतेषु वा बहुषु जन्मान्तरेषु तपआदिभिः कृतसत्त्वशुद्धेर्ज्ञानं समुत्पद्यते यथाश्रुतम् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ श्वे. उ. ६-२३ ॥

इति मन्त्रवर्णात् । "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति स्मृतेः । इतिशब्द उपलक्षणप्रदर्शनार्थः । इत्येवमाद्यन्यदपि ज्ञानोत्पत्तेरुपकारकममानित्वमदम्भित्वमित्याद्युपदर्शितं भवति। प्रतिष्ठा पादौ पादाविवास्याः, तेषु
१५ हि सत्सु प्रतितिष्ठति ब्रह्मविद्या प्रवर्तते पद्भ्यामिव पुरुषः । वेदाश्चत्वारः सर्वाणि चाङ्गानि शिक्षादीनि षट् कर्मज्ञानप्रकाशकत्वाद्वेदानां तद्रक्षणार्थत्वादङ्गानां प्रतिष्ठात्वम् । अथवा प्रतिष्ठाशब्दस्य पादरूपककल्पनार्थत्वाद्वेदास्त्वितराणि सर्वाङ्गाणि शिरआदीनि । अस्मिन्पक्षे शिक्षादीनां वेदग्रहणेनैव ग्रहणं कृतं प्रत्येतव्यम् । अङ्गिनि गृहीतेऽङ्गानि गृहीतान्येव भवन्ति । तदायतनत्वादङ्गानाम् । सत्यमायतनं यत्र तिष्ठत्युपनिषत्तदायतनं, सत्यमिति अमायिताऽकौटिल्यं वाङ्मनःकायानां, तेषु ह्याश्रयति विद्या येऽमायाविनः साधवः । नासुरप्रकृतिषु मायाविषु ।
२० "न येषु जिह्ममनृतं न माया च" इति श्रुतेः । तस्मात्सत्यमायतनमिति कल्प्यते । तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयत्वज्ञापनार्थम् ।

"अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते ॥ इति स्मृतेः ॥ ३३–८ ॥

यो वा एतां ब्रह्मविद्यां केनेषितमित्यादिना यथोक्तामेवं महाभागां ब्रह्म ह देवेभ्य इत्यादिस्तुतां सर्वविद्याप्रतिष्ठां वेदाऽमृतत्वं हि विन्दत इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयति—अपहत्य पाप्मानमविद्याकामकर्मलक्षणं
२५ संसारबीजं विधूयानन्तेऽपर्यन्ते स्वर्गे लोके सुखात्मके ब्रह्मणीत्येतत् । अनन्त इति विशेषणान्न त्रिविष्टपे । अनन्तशब्द औपचारिकोऽपि स्यादित्यत आह—ज्येय इति—ज्येये ज्यायसि सर्वमहत्तरे स्वात्मनि मुख्य एव प्रतितिष्ठति । न पुनः संसारमापद्यत इत्यभिप्रायः ॥ ३४–९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ केनोपनिषत्पदभाष्ये चतुर्थः खण्डः

समाप्तमिदं तलवकारोपनिषदपरपर्यायकेनोपनिषत्पदभाष्यम् ।

३० सर्वेभ्य उत्पाद्यादिभ्यः कर्मगोचरेभ्यो व्यावृत्तो यः प्रत्यगात्मा स एव ब्रह्मरूपेण विद्याया व्यावर्तको विषयस्तन्निष्ठत्वाद्विद्यायास्तत्फलस्य च कर्मवैलक्षण्यादित्यर्थः ॥ ३२–७ ॥

तच्छब्दापेक्षितं यच्छब्दं पूरयति—यामिमामिति । प्राप्तिः सगुणविषया निर्गुणब्रह्मात्मविषया चेत्यर्थः । पादरूपककल्पनेति । प्रसिद्धपादसामान्यस्य कल्पितत्वादितरैरप्यङ्गैः कल्पनारूपैर्भवितव्यमित्यर्थः । तस्यै तपो दमः कर्मेत्यत्रत्येतिशब्दस्योपलक्षणार्थत्वात्सत्यमपि संग्रहीतव्यं कथं पृथगुच्यत इत्याशङ्क्याऽऽह—तपआदिष्वेवेति॥३३–८॥
३५ सगुणविद्यायाः क्रममुक्त्यर्थत्वात्क्रमेण प्राप्यं यत्कैवल्यं निर्गुणविद्याफलं तत्पूर्वोक्तमिहोपसंह्रियत इत्याह—यो वा एतामित्यादिना ॥ ३४–९ ॥

योऽसौ सर्वेश्वरो विष्णुः सर्वात्मा सर्वदर्शनः । शुद्धो बोधाम्बुधिः साक्षात्सोऽहं नित्योऽभयः प्रभुः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमदानन्दज्ञानकृतौ श्रीमच्छाङ्करतलवकारोपनिषदपरपर्यायकेनोपनिषत्पदभाष्यटिप्पणं सम्पूर्णम् ।

ॐ

सामवेदीयतलवकारशाखीया

# केनोपनिषत्

सह नाववतु० आप्यायन्तु० इति शान्तिः

ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं केनोपनिषद्वाक्यभाष्यम्

समाप्तं कर्मात्मभूतप्राणविषयं विज्ञानं कर्म चानेकप्रकारम् । ययोर्विकल्पसमुच्चयानुष्ठानाद्दक्षिणोत्तराभ्यां ५ सृतिभ्यामावृत्त्यनावृत्ती भवतः । अतः ऊर्ध्वं फलनिरपेक्षज्ञानकर्मसमुच्चयानुष्ठानात्कृतात्मसंस्कारस्योच्छिन्नात्मज्ञानप्रतिबन्धकस्य द्वैतविषयदोषदर्शिनो निर्ज्ञाताशेषबाह्यविषयत्वात्संसारबीजमज्ञानमुच्चिच्छित्सतः प्रत्यगात्मविषयजिज्ञासोः केनेषितमित्यात्मस्वरूपतत्त्वविज्ञानायायमध्याय आरभ्यते । तेन च मृत्युपदमज्ञानमुच्छेत्तव्यं तत्तन्त्रो हि संसारो यतः । अनधिगतत्वादात्मनो युक्ता तदधिगमाय तद्विषया जिज्ञासा । कर्मविषये चानुक्तिः । तद्विरोधित्वात् ।

### श्रीमदानन्दगिर्याचार्यकृता टीका १०

प्रयत्नाद्यन्तरेणैव मनआदेः प्रवर्तकम् ।
विदिताविदितान्यत्वसिद्धं ब्रह्माहमद्वयम् ॥ १ ॥

केनेषितमित्यादिकां सामवेदशाखाभेदब्राह्मणोपनिषदं पदशो व्याख्यायापि न तुतोष भगवान्भाष्यकारः शारीरकैर्न्यायैरनिर्णीतार्थत्वादिति न्यायप्रधानश्रुत्यर्थसंग्राहकैर्वाक्यैर्व्याचिख्यासुः पूर्वकाण्डेन सम्बन्धमभिधित्सुः पूर्वकाण्डार्थं संक्षेपतो दर्शयति—समाप्तमिति । कर्मणामात्मभूत आश्रयभूतः प्राणस्तस्य शुद्धत्वादिगुणविशिष्टस्योपासनं पूर्वत्रातिवृत्तं कर्म च नित्यनैमित्तिकाद्यनेकप्रकारमविदुषामतिक्रान्तमित्यर्थः । ताभ्यां ज्ञानकर्मभ्यामेव मोक्षसिद्धेर्न मुमुक्षोः पृथगुपनिषदारभ्येतिशङ्कानिरासाय ज्ञानकर्मणी विशिनष्टि—ययोरिति । ज्ञानमनादृत्य कर्मण एव निरपेक्षसाधनतयाऽनुष्ठानं विकल्पस्ततश्चन्द्रमण्डलं प्राप्याऽऽवर्तते । केवलस्य ज्ञानस्य कर्मसमुच्चितस्य वाऽनुष्ठानाद्ब्रह्मलोकं प्राप्य स्थित एव तस्मान्नाऽऽवर्तत इत्यापेक्षिक्यनावृत्तिर्भवति न पुनरात्यन्तिकी। कृतकत्वपरिच्छेदाभ्यामनित्यत्वानुमानात् । अतः संसारफलकमेव कर्मकाण्डमित्यर्थः । अस्त्वयं कर्मकाण्डार्थस्तथाऽपि नियतपूर्वोत्तरभावानुपपत्तिलभ्यः कथं हेतुहेतुमद्भावः सम्बन्धः कर्मकाण्डेन ज्ञानकाण्डस्येत्याकाङ्क्षायामाह—अत ऊर्ध्वमिति । कामिनाऽनुष्ठितं कर्म यद्यपि संसाराय भवति तदेव तु निष्कामेना[णा]नुष्ठितं सत्त्वशुद्धये स्यात् । शुद्धसत्त्वस्य चानात्मज्ञानाभिमुख्यं न जायते । अनात्माभिनिवेशस्यानर्थसाधनतयाऽवधारितत्वादात्मविषयैव जिज्ञासा जायते । जिज्ञासोश्चाऽऽत्मनिरूपणायोपनिषदारभ्यत इति हेतुहेतुमद्भावोऽत्र इत्यर्थः । आत्मस्वरूपब्रह्मतत्त्वविज्ञानायायमध्याय आरभ्यते चेत्किं तेन विज्ञानेन फलं स्यादित्यत आह—तेन चेति । यतोऽन्वयव्यतिरेकाभ्यामज्ञानतन्त्रा संसारप्रसिद्धिस्तदुच्छेदेनाऽऽत्यन्तिकसंसारोच्छेदः फलमित्यर्थः । मृत्युकारणमात्माज्ञानमुच्छेत्तुमिच्छत आत्मजिज्ञासा जायत इत्युक्तं; तदसत् । अहंप्रत्ययेनैवाऽऽत्मनोऽधिगतत्वादधिगते जिज्ञासानुपपत्तेरित्याशङ्क्याऽऽह—अनधिगतत्वादिति । अहंप्रत्ययस्य मनुष्यत्वादिसमानाधिकृतस्य व्यतिरिक्तात्मप्रमापकत्वासिद्धेर्वादिनां विप्रतिपत्तिदर्शनाच्च युक्ता जिज्ञासेत्यर्थः । तथाऽपि कर्मकाण्डे देहव्यतिरिक्तस्याऽऽत्मनो विध्यपेक्षितत्वेन निरूपितत्वात्पुनर्जिज्ञासानुपपत्तौ कथं जिज्ञासोरुपनिषदारभ्यत इत्याशङ्क्याऽऽह—कर्मविषय इति । अस्ति देहादिव्यतिरिक्तः परलोकसम्बन्ध्यात्मेत्येतावदेव ३०

अस्य विजिज्ञासितव्यस्याऽऽत्मतत्त्वस्य कर्मविषयेऽवचनम्। कस्मादिति चेदात्मनो हि यथावद्विज्ञानं कर्मणा विरुध्यते। निरतिशयब्रह्मस्वरूपो ह्यात्मा विजिज्ञापयिषितः। "तदेव ब्रह्म त्वं विद्धि नेदं यदिदम्" इत्यादिश्रुतेः। नहि स्वाराज्येऽभिषिक्तो ब्रह्मत्वं गमितः कञ्चन नमितुमिच्छत्यतो ब्रह्मास्मीति सम्बुद्धो न कर्म कारयितुं शक्यते। न ह्यात्मानमवाप्तार्थं ब्रह्म मन्यमानः प्रवृत्तिं प्रयोजनवतीं पश्यति। न च निष्प्रयोजना प्रवृत्तिरतो विरुध्यत एव कर्मणा ५ ज्ञानम्। अतः कर्मविषयेऽनुक्तिर्विज्ञानविशेषविषयैव जिज्ञासा। कर्मानारम्भ इति चेन्न। निष्कामस्य संस्कारार्थत्वात्। यदि ह्यात्मविज्ञानेनाऽऽत्माविद्याविषयत्वात्परितित्याजयिषितं कर्म ततः "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इत्यनारम्भ एव कर्मणः श्रेयानल्पफलत्वादायासबहुलत्वात्तत्त्वज्ञानादेव च श्रेयःप्राप्तेरिति चेत्, सत्यमेतत् अविद्याविषयं कर्माल्पफलत्वादिदोषवद्बन्धरूपं च सकामस्य। "कामान्यः कामयते" "इति नु कामयमानः" इत्यादिश्रुतिभ्यः। न निष्कामस्य। तस्य तु संस्कारार्थान्येव कर्माणि भवन्ति [२]तन्निर्वर्तकाश्रयप्राणविज्ञानसहितानि। "देवयाजी १० श्रेयानात्मयाजी वा" इत्युपक्रम्याऽऽ"त्मयाजी तु करोति इदं मेऽनेनाङ्गं संस्क्रियते" इति संस्कारार्थान्येव कर्माणीति वाजसनेयके।

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"। "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥" इत्यादिस्मृतेश्च।

प्राणादिविज्ञानं च केवलं कर्मसमुच्चितं वा सकामस्य प्राणात्मप्राप्त्यर्थमेव भवति। निष्कामस्य त्वात्मज्ञानप्रतिबन्धनिर्मार्ष्ट्यै भवति। आदर्शनिर्मार्जनवत्। उत्पन्नात्मविद्यस्य त्वनारम्भो निरर्थकत्वात्।

१५　"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥" इति।

"क्रियापथश्चैव पुरस्तात्संन्यासश्च तयोः संन्यास एवात्यरेचयत्" इति "त्यागेनैके" "नान्यः पन्था विद्यते" इत्यादिश्रुतिभ्यश्च, न्यायाच्च। उपायभूतानि हि कर्माणि संस्कारद्वारेण ज्ञानस्य, ज्ञानेन त्वमृतत्वप्राप्तिः, "अमृतत्वं हि विन्दते" "विद्यया विन्दतेऽमृतम्" इत्यादिश्रुतिस्मृतिभ्यश्च। नहि नद्याः पारगो नावं न मुञ्चति यथेष्टदेशगमनं

स्वर्गकामादिचोदनाभिरपेक्षितं ननु ब्रह्मात्मतत्त्वं तस्य. कर्मविरुद्धत्वात्ततस्तज्जिज्ञासा युक्तेत्यर्थः। सङ्ग्रहवाक्यं २० विवृणोति—अस्येत्यादिना। निरतिशयब्रह्मस्वरूप आत्मोपनिषदि विजिज्ञापयिषितोऽस्तु। कथमेतावता कर्मणा विरोध इत्याकाङ्क्षायामाह—न हीति। देवताराधनरूपो हि यागो ब्रह्मविच्च सर्वदेवतात्मभूतः [१]पशुभावाच्च व्यावृत्तः कथं देवतां प्रणमेदित्यर्थः। ब्रह्मात्मतत्त्वज्ञानं कर्मविरुद्धं चेत्तर्हि श्रुत्या ब्रह्मात्मत्वोपदेशेनार्थात्कर्म तित्याजयिषितमित्यननुष्ठानमेव प्रसज्येतातो जिज्ञासाहेतुत्वेनाभिमतः कर्मकाण्डेन सम्बन्धोऽसङ्गत इत्याशङ्का-मुद्भाव्याभिहितं सम्बन्धं समर्थयति—कर्मानारम्भ इत्यादिसूत्रेण। उत्पत्तिविधिविहितानां कर्मणां संस्कारार्थत्वे २५ प्रमाणमाह—देवयाजी श्रेयानित्यादिना। फलकामनया देवान्यो यजते स किं श्रेयानुताऽऽत्मशुद्ध्यर्थमेव स्वर्गाद्यासङ्गं हित्वा यो यजते स आत्मयाजी श्रेयानिति प्रश्नं कृत्वाऽऽत्मयाजी श्रेयानिति निरूपितं शतपथे कामानुपघातसहितं मे ममाङ्गमनेन कर्मणा संस्क्रियत इति संस्कारार्थत्वेनैव करोति न कामवशग इत्यर्थः। ब्राह्मी ब्रह्मज्ञानार्हा। क्रियते तनुरिति। तनुस्थ आत्मा लक्ष्यते। ननु प्राणाद्युपासनं प्राणादिभावप्राप्त्यर्थमेव, "तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" इति श्रुतेः। कथमुक्तं कर्मनिर्वर्तकाश्रयप्राणोपासनसहितानि कर्माणि संस्कारार्थानीति तत्राऽऽह—प्राणादि-३० विज्ञानं चेति। विविदिषावाक्येन यज्ञाद्युपलक्षितस्य सर्वस्य कर्मण आत्मज्ञानार्थत्वेन विनियुक्तत्वादुपासनस्य च मानसकर्मत्वादात्मज्ञानप्रतिबन्धकस्य कल्मषस्य निबर्हणद्वारेण स्यादात्मज्ञानार्थत्वमित्यर्थः। अज्ञाभिप्रायेण सप्रयोजनत्वात्तं प्रत्यनारम्भप्रसङ्ग आश्रयहीन इत्युक्तम्। ज्ञान्यभिप्रायेण त्वनिष्टापादनस्येष्टापादनरूपत्वात्प्रसङ्गस्याऽऽभासत्वमाह—उत्पन्नात्मविद्यस्येति। न केवलं श्रुतिप्रामाण्यादेव विवेकिनः कर्मानारम्भः साध्यसिद्धौ साधनं नाऽऽद्रियत इतिलौकिकन्यायाच्च कर्मानारम्भः सिद्ध इत्यर्थः। ज्ञानफले कैवल्येऽनुपयोगाच्च ज्ञानिनः कर्मनारम्भ इष्ट

३५　१. पशुभावाच्च व्यावृत्तः यथा पशुः क्षीरादिना स्वामिनं प्रीणयति। स्वामी च यवसादिदानेन पशुं पोषयति एवं इतः प्रदानं देवा उपजीवन्ति अमुतः प्रदानं मनुष्याः इति शास्त्रोक्तरीत्या देवेभ्यो हविर्दानेन तेभ्यो वृष्ट्यादिना उपकारस्वीकारेण च सर्वोऽनात्मज्ञः पशुः। ततो व्यावृत्तः। [२]तन्निवर्तकाश्रयः प्राणः कर्मनिवर्तकः तदाश्रयश्च प्राणः प्राणात्मप्राप्तिः प्राणः समष्टिरूपो हिरण्यगर्भः तद्भावप्राप्तिः।

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः ।
अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

प्रति स्वातन्त्र्ये सति । नहि स्वभावसिद्धं वस्तु सिषाधयिषति साधनैः स्वभावसिद्धश्चाऽऽत्मा तथा नाऽऽपिपयिषितः ।
आत्मत्वे सति नित्याप्तत्वात् । नापि विचिकारयिषितः आत्मत्वे सति नित्यत्वादविकारित्वादविषयत्वादमूर्तत्वाच्च ।
श्रुतेश्च "न वर्धते कर्मणा" इत्यादि । स्मृतेश्च "अविकार्योऽयमुच्यते" इति । न च सञ्चिकीर्षितः । "शुद्धमपापविद्धम्" ५
इत्यादिश्रुतिभ्यः । अनन्यत्वाच्च । अन्येनान्यत्संस्क्रियते ? न चाऽऽत्मनोऽन्यभूता क्रियाऽस्ति, न च स्वेनैवाऽऽत्मना
स्वमात्मानं सञ्चिकीर्षेत् । न च वस्त्वन्तराधानं नित्यं प्राप्तिर्वा वस्त्वन्तरस्य नित्या । नित्यत्वं चेष्टं मोक्षस्य । अत
उत्पन्नविद्यस्य कर्मारम्भोऽनुपपन्नः । अतो व्यावृत्तबाह्यबुद्धेरात्मविज्ञानाय केनेषितमित्याद्यारम्भः ।

प्रवृत्तिलिङ्गाद्विशेषार्थः प्रश्न उपपन्नः । [1]रथादीनां हि चेतनावदधिष्ठितानां प्रवृत्तिर्दृष्टा नानधिष्ठितानाम् ।
मनआदीनां चाचेतनानां प्रवृत्तिर्दृश्यते । तद्धि लिङ्गं चेतनावतोऽधिष्ठातुरस्तित्वे । करणानि हि मनआदीनि नियमेन १०
प्रवर्तन्ते । तन्नासति चेतनावत्यधिष्ठातर्युपपद्यते । तद्विशेषस्य चानधिगमाच्चेतनावत्सामान्ये चाधिगते विशेषार्थः
प्रश्न उपपद्यते । केनेषितं केनेष्टं कस्येच्छामात्रेण मनः पतति गच्छति स्वविषये नियमेन व्याप्रियत इत्यर्थः ।
मनुतेऽनेनेति विज्ञाननिमित्तमन्तःकरणं मनः । प्रेषितमिवेत्युपमार्थः । न त्विषितप्रेषितशब्दयोरर्थाविह सम्भवतः । न हि
शिष्यानिव मनआदीनि विषयेभ्यः प्रेषयत्यात्मा । विविक्तनित्यचित्स्वरूपतया तु निमित्तमात्रं प्रवृत्तौ [2]नित्यचिकित्सा-
धिष्ठातृवत् । प्राण इति नासिकाभवः । प्रकरणात् । प्रथमत्वं चलनक्रियायाः प्राणनिमित्तत्वात्स्वतो विषयावभासमात्रं १५
करणानां प्रवृत्तिः । चलिक्रिया तु प्राणस्यैव मनआदिषु तस्मात्प्राथम्यं[3] प्राणस्य । प्रैति गच्छति युक्तः प्रयुक्त इत्येतत् । वाचो
वदनं किन्निमित्तं प्राणिनां चक्षुःश्रोत्रयोश्च को देवः प्रयोक्ता । करणानामधिष्ठाता चेतनावान्यः स किंविशेषण इत्यर्थः ॥१॥

श्रोत्रस्य श्रोत्रमित्यादिप्रतिवचनं निर्विशेषस्य निमित्तत्वार्थम् । विक्रियादिविशेषरहितस्याऽऽत्मनो मनआदि-

इत्याह—नहि स्वभावसिद्धमित्यादिना । उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्चेति चतुर्विधं क्रियाफलं स्वरूपावस्थाने
कैवल्ये न सम्भवतीत्युक्तम् । यदि च परमानन्दगुणस्याऽऽत्मन्याधानं ब्रह्माण्डाद्बहिःस्थितब्रह्मप्राप्तिर्वा जीवस्य २०
कैवल्यं कल्प्यते तर्ह्यनित्यत्वं दुर्वारमित्याह—नच वस्त्वन्तराधानमिति ।

एवमुपनिषदारम्भं सम्भाव्य वाक्यस्यार्थं संगृह्णाति—प्रवृत्तिलिङ्गादिति । शिष्याचार्ययोः प्रश्नप्रतिवचनरूपा
श्रुतिः सुखप्रतिपत्त्यर्था प्रवृत्ता । तत्र प्रश्नः किं ज्ञातेऽज्ञाते वेतिचोद्यनिरासाय सामान्यतो ज्ञातेऽपि विशेषतश्चाज्ञाते
सम्भवति विकल्पकरणवदिति सूत्रितमेतद्विवृणोति—रथादीनां हीति । मनआदीनामेव चेतनत्वादचेतनप्रवृत्तित्वा-
दित्यसिद्धो हेतुरिति नाऽऽशङ्कनीयमित्याह—करणानि हीति । अन्यत्रमना अभूवं नादर्शमित्यादिलोकानुभवान्मन- २५
आदीनां करणत्वं सिद्धं ततः प्रदीपवदचेतनत्वं सिद्धमित्यर्थः । इच्छामात्रेणेति प्रयत्नाद्यभावो लक्ष्यते नत्विच्छास्तित्वं
निर्विकारताया विवक्षितत्वात् । प्रेषितमिवेतीवशब्दाध्याहारेण किमिति व्याख्यातम् । यथा राज्ञ इच्छामात्रेण काचिद्-
भृत्यप्रवृत्तिः काचिच्च वागादिव्यापारेण तद्वदिह किं न स्यादित्याशङ्क्याऽऽह—न त्विति । सक्रियस्य सर्वस्यानित्य-
तयाऽवधारितत्वान्निष्क्रियं वस्तु पिपृच्छिषितं ततो नार्थभेदः सम्भवतीत्यर्थः । विषयेभ्यः । विषयग्रहणार्थं; नित्य-
चिकित्सायामधिष्ठातुश्चकोरस्य सन्निधिमात्रेण यथा राजभोजनादिप्रवृत्तिनिमित्तत्वं तद्वदित्यर्थः । प्रकरणादिति । ३०
करणसन्निधानादित्यर्थः ॥ १ ॥

प्रतिवचनवाक्यार्थसंग्रहं विवृणोति—विक्रियादीत्यादिना । मनआदीनां यः प्रवर्तकः स किंविशेष इति
प्रश्नस्य निर्विशेषतैव विशेष इत्युत्तरम् । क्रियाया गुणस्य सम्बन्धस्य वा विशेषस्य व्यावर्तकधर्मस्य दर्शयितुमशक्यत्वा-

---

१. मनआदीनां प्रवृत्तिः चेतनाधिष्ठानपूर्विका अचेतनप्रवृत्तित्वात् रथादिप्रवृत्तिवदिति प्रयोगः । हेतौ
अचेतनप्रवृत्तित्वं असिद्धं मनसः चेतनत्वात् इतिशङ्कावारणाय मनआदीनामचेतनत्वमाह । ३५

२. प्रत्यहं राजादेः स्वभोज्यमन्नादिकं चकोरः पश्यति अन्नादौ विषमिश्रता भवेच्चेत् चकोरस्य चक्षुः
रक्तं भवति । न चेत् यथाभूतमेव भवति । अनया परीक्षया अन्नादेः शुद्धिं बुद्ध्वा राजा अश्नाति ।
अतः चकोरः सन्निधिमात्रेण राज्ञां भोजनादौ प्रवर्तक उच्यते तद्वत् ।

३. प्राणः प्रथमं चलति ततो मनः ततः इन्द्रियाणि चलन्ति अतः प्राथम्यं तस्य ।

प्रवृत्तौ निमित्तत्वमित्येतच्छ्रोत्रस्य श्रोत्रमित्यादिप्रतिवचनस्यार्थः। अनुगमात्। तदनुगतानि ह्यत्रास्मिन्नर्थेऽक्षराणि। कथं?
शृणोत्यनेनेति श्रोत्रं तस्य शब्दावभासकत्वं श्रोत्रत्वम्। शब्दोपलब्धृरूपतयाऽवभासकत्वं न स्वतः श्रोत्रस्याचिद्रूपत्वात्।
आत्मनश्च चिद्रूपत्वात्। यच्छ्रोत्रस्योपलब्धृत्वेनावभासकत्वं तदात्मनिमित्तत्वाच्छ्रोत्रस्य श्रोत्रमित्युच्यते। यथा क्षत्रस्य
क्षत्रं यथा वोदकस्यौष्ण्यमग्निनिमित्तमिति दग्धुरप्युदकस्य दग्धाऽग्निरुच्यते। उदकमपि ह्यग्निसंयोगादग्निरुच्यते तद्वत्।
५ अनित्यं यत्संयोगादुपलब्धृत्वं तत्करणं श्रोत्रादि। उदकस्येव दग्धृत्वमनित्यं हि तत्र तत्। यत्र तु नित्यमुपलब्धृत्वमग्ना-
विवौष्ण्यं स नित्योपलब्धिस्वरूपत्वाद्दग्धेवोपलब्धोच्यते। श्रोत्रादिषु श्रोतृत्वाद्युपलब्धिरनित्या नित्या चाऽऽत्मन्यतः
श्रोत्रस्य श्रोत्रमित्याद्यक्षराणामर्थानुगमादुपपद्यते निर्विशेषस्योपलब्धिस्वरूपस्याऽऽत्मनो मनआदिप्रवृत्तिनिमित्तत्वमिति।
मनआदिष्वेवं यथोक्तम्। वाचो ह वाचं प्राणस्य प्राण इति विभक्तिद्वयं सर्वत्रैव द्रष्टव्यम्। कथं?
पृष्टत्वात्स्वरूपनिर्देशः प्रथमयैव च निर्देशः। तस्य च ज्ञेयत्वात्कर्मत्वमिति द्वितीया। अतो वाचो ह वाचं प्राणस्य
१० प्राण इत्यस्मात्सर्वत्रैव विभक्तिद्वयम्। यदेतच्छ्रोत्राद्युपलब्धिनिमित्तं श्रोत्रस्य श्रोत्रमित्यादिलक्षणं नित्योपलब्धिस्वरूपं
निर्विशेषमात्मतत्त्वं तद्बुद्ध्वाऽतिमुच्यानवबोधनिमित्ताध्यारोपिताद्बुद्ध्यादिलक्षणात्संसारान्मोक्षणं कृत्वा धीरा
धीमन्तः प्रेत्यास्माल्लोकाच्छरीरात्प्रेत्य वियुज्यान्यस्मिन्नप्रतिसन्धीयमाने निर्निमित्तत्वादमृता भवन्ति। सति ह्यज्ञाने

त्क्रियादिमत्त्वे घटादिवदनात्मत्वप्रसङ्गादतो निर्विशेषचैतन्यात्मकोऽहमित्येवं ज्ञानं सम्यग्ज्ञानम्। न चाभावेन
सद्वयत्वप्रसङ्गः। तस्य पृथक्सत्त्वाभावात्स्वरूपेण व्यवहाराङ्गत्वादित्युक्तमन्यत्र;[1] यदि शौक्ल्यादिवत्कोऽपि
१५ विशेषोऽभविष्यत्तदा तमवक्ष्यत्। श्रुतिस्तूपलक्षणवृत्त्यैव प्रतिवचनं ब्रुवाणा निर्विशेषत्वं मन्यत इति श्रुत्यक्षरानु-
साराद्गम्यत इत्याह—अनुगमादिति। निर्विशेषत्ववाचकपदाभावात्कथं निर्विशेषेऽक्षरानुगम इत्याह—कथमिति।
निर्विशेषस्य वाचकशक्त्या वाक्यार्थत्वाभावेऽप्युपलक्षणवृत्त्या भविष्यतीत्यभिप्रेत्य श्रोत्रशब्दस्य तावन्मुख्यार्थमाह—
शृणोतीति। शब्दावभासकत्वं स्वशक्त्यैव भविष्यति श्रोत्रस्य कथं तस्य शब्दावभासकत्वेनाऽऽत्मोपलक्षयितव्य
इत्याकाङ्क्षायामाह—शब्दोपलब्धृरूपतयेति। शक्तिः सतः प्रकाशमानस्यैव वाच्या नासतोऽप्रकाशमानस्य नर-
२० विषाणायमानत्वेन शक्तिमत्त्वानुपपत्तेः। सत्ता प्रकाशश्चाऽऽत्मरूपं तद्भेदे मानाभावादत उपलब्धृतादात्म्येनैव
श्रोत्रस्यावभासकत्वं न स्वातन्त्र्येण जडत्वात्। जडस्य च सत्ताहीनत्वाच्छुक्तिरूप्यस्येवेत्यर्थः। श्रोत्रस्यावभासकत्व-
मुपलब्धृतादात्म्येनेति यद्युपलब्धोपलक्ष्यते तर्ह्युपलब्धुरप्यवभासकत्वमन्याधीनमित्यनवस्था प्राप्नोतीत्याशङ्क्याऽऽह–
आत्मनश्चेति ! स्वप्रकाशत्वादुपलब्धुः सत्ताप्रतीत्योरनन्यायत्तत्वान्नानवस्थेत्यर्थः। भवत्वेवमनवस्थाभावः। तथाऽपि
कथं श्रोत्रस्य श्रोत्रमित्यात्मोच्यत इत्याशङ्क्याऽऽह—यच्छ्रोत्रस्येति। तदात्मनिमित्तत्वादिति। तस्याऽऽत्म-
२५ निमित्तत्वाच्छ्रोत्रस्य श्रोत्रमित्युपलक्ष्यते निर्विशेषं चैतन्यमात्रमित्यर्थः। यथा क्षत्रस्येति। क्षत्रजातिनियामकं कर्म
क्षत्रमित्युच्यते यथेत्यर्थः। यदि श्रोत्रादिसाक्ष्यात्माऽस्ति कथं लोकायतिकादेः श्रोत्रादिष्वेवोपलब्धृत्वव्यवहार
इत्याशङ्क्याऽऽह—उदकमपीति। तद्वदुपलब्धृसम्बन्धाच्छ्रोत्रादिषूपलब्धृत्वव्यवहार इत्यर्थः। भवन्मते तर्हि नित्योप-
लब्धिस्वभाव आत्मेति श्रोत्रादेः करणत्वं न स्यात्। क्रियायां हि करणापेक्षेत्याकाङ्क्षायामाह—अनित्यं यदिति।
प्रमातुर्यत्सम्बन्धादनित्यमुपलब्धृत्वं भवति वुद्धिपरिणामैस्तच्छ्रोत्रादि करणं वुद्धिवृत्त्यपेक्षया भवतीत्यर्थः। श्रोत्रादि-
३० सङ्गते प्रमातर्यनित्योपलब्धृत्वसम्भवेऽपि तवासङ्गस्य साक्षिणः कथमुपलब्धृत्वव्यपदेश इत्याशङ्क्याऽऽह—यत्र
त्विति। उक्तमर्थं संक्षिप्याऽऽह—श्रोत्रादिष्विति। श्रोत्रादिषु निमित्तेषु सत्सु श्रोत्रादिसंहते प्रमातरि श्रोतृत्वादि-
रूपोपलब्धिरित्युपलब्धृत्वमित्यर्थः। मनसो मन इत्यादिष्वेवमतिदिशति—मनआदिष्वेवमिति। न्यायसामान्याद्यथोक्तं
व्याख्यानं द्रष्टव्यम्। नहि मनसो मनस्त्वं वाचो वाक्त्वं वा स्वातन्त्र्येण सम्भवति अध्यस्तत्वादतोऽधिष्ठानसत्ता-
प्रकाशाभ्यामेव सत्ताप्रकाशत्वं मनआदेः। तच्चाधिष्ठानं निर्विशेषमेवोपलक्षयितव्यम्। सविशेषत्वेऽध्यस्तत्वप्रसङ्गा-
३५ दिति भावः। विभक्तिद्वयनिर्देशतात्पर्यमाह—वाचो हेत्यादिना। मनआदेः प्रवर्तकः किंस्वभाव इति पृष्टत्वात्स्वरूप-
निर्देशः कर्तव्यः। स च प्रथमया। "निर्देशे प्रथमा प्रोक्ता" इति स्मरणादित्यर्थः। अतिमुच्य धीरा इत्युत्तरं वाक्यं
साध्याहारं योजयति—यदेतदित्यादिना। एतद्बुद्ध्वाऽमृता भवन्तीति सम्बन्धः। तादात्म्येनाध्यारोपितो यो
बुद्ध्यादिरनवबोधनिमित्तः संसारस्ततो मोक्षणं तादात्म्याध्यासनिवृत्तिर्दृष्टं फलम्। अमृता भवन्तीति विदेहमुक्तिर-
दृष्टं फलमित्यर्थः। कर्मणां सम्बन्धानुपपत्तिरिति शेषः। निमित्ताभावाच्छरीरान्तराद्यनारम्भेऽमृता भवन्तीति
४०

१. तत्त्वप्रदीपिकादौ।

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः। न विद्मो न विजानीमो यथैतदनुशिष्यात्।**
**अन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥**

कर्माणि शरीरान्तरं प्रतिसन्दधते। आत्मावबोधे तु सर्वकर्मारम्भनिमित्ताज्ञानविपरीतविद्याग्निविप्लुष्टत्वात्कर्मणामित्यनारम्भेऽमृता एव भवन्ति। शरीरादिसन्तानाविच्छेदप्रतिसन्धानाद्यपेक्षयाऽध्यारोपितमृत्युवियोगात्पूर्वमप्यमृताः सन्तो नित्यात्मस्वरूपत्वादमृता भवन्तीत्युपचर्यते ॥ २ ॥

न तत्र चक्षुर्गच्छतीत्युक्तेऽपि पर्यनुयोगे हेतुरप्रतिपत्तेः। श्रोत्रस्य श्रोत्रमित्येवमादिनोक्तेऽप्यात्मतत्त्वेऽप्रतिपन्नत्वात्सूक्ष्मत्वहेतोर्वस्तुनः पुनः पुनः पर्यनुयुयुक्षाकारणमाह—न तत्र चक्षुर्गच्छतीति। तत्र श्रोत्राद्यात्मभूते चक्षुरादीनि वाक्चक्षुषोः सर्वेन्द्रियोपलक्षणार्थत्वान्न विज्ञानमुत्पादयन्ति। सुखादिवत्तर्हि गृह्येतान्तःकरणेनात आह—नो मनः। न सुखादिवन्मनसो विषयस्तत्। इन्द्रियाविषयत्वात्। न विद्मो न विजानीमोऽन्तःकरणेन यथैतद्ब्रह्म मनआदिकरणजातमनुशिष्यादनुशासनं कुर्यात्प्रवृत्तिनिमित्तं भवेत्तथाऽविषयत्वान्न विद्मो न विजानीमः। अथवा श्रोत्रादीनां श्रोत्रादिलक्षणं ब्रह्म विशेषेण दर्शयेत्युक्त आचार्य आह—न शक्यते दर्शयितुं कस्मान्न तत्र चक्षुर्गच्छतीत्यादि पूर्ववत्सर्वम्, अत्र तु विशेषो यथैतदनुशिष्यादिति। यथैतदनुशिष्यात्प्रतिपादयेत्। अन्योऽपि शिष्यानितोऽन्येन विधिनेत्यभिप्रायः।

सर्वथाऽपि ब्रह्म बोधयेत्युक्त आचार्य आह, अन्यदेव तद्विदितादथो अविदितादधीत्यागमम्। विदिताविदिताभ्यामन्यत्वम्। यो हि ज्ञाता स एव सः। सर्वात्मकत्वात्। अतः सर्वात्मनो ज्ञातुर्ज्ञात्रन्तराभावाद्विदितादन्यत्वम्। "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इति च मन्त्रवर्णात्। "विज्ञातारमरे केन विजानीयात्" इति च वाजसनेयके। अपि च व्यक्तमेव विदितं तस्मादन्यदित्यभिप्रायः। यद्विदितं व्यक्तं तदन्यविषयत्वादल्पं सविरोधं ततोऽनित्यमत एवानेकत्वादशुद्धमत एव तद्विलक्षणं ब्रह्मेति सिद्धम्। अस्तु तर्ह्यविदितम्। न विज्ञानानपेक्षत्वात्। यद्ध्यविदितं तद्विज्ञानापेक्षं अविदितविज्ञानाय हि लोकप्रवृत्तिः। इदं तु विज्ञानानपेक्षं कस्माद्विज्ञानस्वरूपत्वात्। न हि यस्य यत्स्वरूपं तत्तेनान्यतोऽपेक्ष्यते। न च स्वत एवापेक्षा। अनपेक्षमेव सिद्धत्वात्। प्रदीपः स्वरूपाभिव्यक्तौ न प्रकाशान्तरमन्यतोऽपेक्षते स्वतो वा। यद्ध्यनपेक्षं तत्स्वत एव सिद्धं प्रकाशात्मकत्वात्प्रदीपस्यापेक्षितोऽप्यनर्थकः स्यात्। प्रकाशे विशेषाभावात्। नहि प्रदीपस्य स्वरूपाभिव्यक्तौ प्रदीपप्रकाशोऽर्थवान्। न चैवमात्मनोऽन्यत्र विज्ञानमस्ति येन स्वरूपविज्ञानेऽप्यपेक्ष्यते।

प्रयोगादागन्तुकत्वममृतत्वस्येतिशङ्कानिवृत्त्यर्थमाह—शरीरादीति। अनादिभवपरम्परया शरीर्यासं परस्ताच्च भविष्यामीति शरीरादिसन्तानाविच्छेदस्य प्रतिसन्धानं धर्माद्यधिकारित्वाध्यासः कामादिदोषकल्पनं चैतस्मादध्यारोपितो यो मृत्युस्तद्वियोगापेक्षयाऽमृतत्वस्य भवनमौपचारिकमित्यर्थः ॥ २ ॥

न तत्र चक्षुर्गच्छतीतिवाक्यार्थं संगृह्णाति—आचार्येणोक्तेऽपि तत्त्वे शिष्यस्याप्रतिपत्तेर्हेतोः पर्यनुयोगे हेतुर्न तत्र चक्षुर्गच्छतीति। एतद्विवृणोति—श्रोत्रस्य श्रोत्रमित्यादिना। आत्मा नेन्द्रियविषयोऽभौतिकत्वान्नरविषाणवत्। मनश्चेन्द्रियं प्रसिद्धं ततस्तस्याप्यविषय इत्याह—इन्द्रियाविषयत्वादिति। न विद्मो न विजानीम इत्याद्यभ्यासः सर्वथाऽन्तःकरणाविषयत्वख्यापनार्थः। आक्षेपपरतया व्याख्याय शङ्कोत्तरत्वेन व्याचष्टे—अथवेत्यादिना। इत उपलक्षणप्रकारादन्येन प्रकारेण न शक्यते दर्शयितुं क्रियागुणादिविशेषशून्यत्वादित्यर्थः। आगममित्युपदेशपारम्पर्यमाहेति सम्बन्धः। आगमस्यार्थमाह—विदिताविदिताभ्यामन्यत्वमिति। अन्यदात्मनो विदितमविदितं वा स्यादतो विदितत्वाविदितत्वनिषेधेनाऽऽत्मनोऽन्यत्र ब्रह्मत्वं विदुषां विनिवर्त्याऽऽत्मा ब्रह्मेत्युपदिष्टं भवतीत्यर्थः। विदितान्यत्वे युक्तिमाह—यो हीत्यादिना। विदितान्यत्ववचनस्याऽऽर्थिकमर्थमाह—अपि चेति। कार्याद्व्यावृत्तिः सिद्ध्यतीत्यर्थः। आत्मा यद्यप्यन्यतो विज्ञानं नापेक्षते तथाऽपि स्वग्राहकत्वात्स्वस्मादेव विज्ञानमपेक्षते तेन विज्ञानानपेक्षत्वमसिद्धमित्याशङ्क्याऽऽह—न च स्वत एवेति। स्वभावतयाऽनपेक्षमेव सिद्धत्वादपेक्षाशब्दार्थो न घटते स्वग्राहकत्वं चासिद्धं स्ववृत्तिविरोधादित्यर्थः। विज्ञानं सजातीयानपेक्षं प्रकाशत्वात्प्रदीपवदित्यनुमानमभिप्रेत्य दृष्टान्तमाह—नहीति। तमोध्वस्तये ह्यालोकापेक्षा तदभावश्चाऽऽलोके स्वत एव सिद्ध इत्यर्थः। प्रदीपस्य तैजसस्य तैजसान्तरानपेक्षत्वेऽपि विजातीयप्रकाशस्य ज्ञानस्यापेक्षा स्वव्यवहारेऽपि दृष्टा तथा ब्रह्मणोऽपि विजातीयज्ञानापेक्षा भविष्यतीति न च वाच्यमित्याह—न चैवमात्मन इति। ब्रह्मणोऽन्यस्य सर्वस्याज्ञानात्मकत्वाज्ज्ञानसम्भावनैव नास्त्यन्यत्र ततो न

विरोध इति चेन्नान्यत्वात्। स्वरूपविज्ञाने विज्ञानस्वरूपत्वाद्विज्ञानान्तरं नापेक्षत इत्येतदसत्। दृश्यते
हि विपरीतज्ञानमात्मनि सम्यग्ज्ञानं च न जानाम्यात्मानमिति। श्रुतेश्च "तत्त्वमसि" 'आत्मानमेवावेत्" "एतं
वै तमात्मानं विदित्वा" इति च सर्वत्र श्रुतिष्वात्मविज्ञाने विज्ञानान्तरापेक्षत्वं दृश्यते तस्मात्प्रत्यक्षश्रुतिविरोध इति
चेन्न। कस्मात्। अन्यो हि स आत्मा बुद्ध्यादिकार्यकरणसङ्घाताभिमानसन्तानाविच्छेदलक्षणोऽविवेकात्मको
५ बुद्ध्यवभासप्रधानश्चक्षुरादिकरणो नित्यचित्स्वरूपात्मान्तःसारो यत्रानित्यं विज्ञानमवभासते। बौद्धप्रत्ययानामाविर्भाव-
तिरोभावधर्मकत्वात्तद्धर्मतयैव विलक्षणमपि चावभासते। अन्तःकरणस्य मनसोऽपि मनः मनोऽन्तर्गतत्वात् सर्वान्तर-
श्रुतेः। अन्तर्गतेन नित्यविज्ञानस्वरूपेणाऽऽकाशवदप्रचलितात्मनाऽन्तर्गर्भभूतेन बाह्यो बुद्ध्यात्मा तद्विलक्षणोऽर्चिभिरि-
वाग्निः प्रत्ययैराविर्भावतिरोभावधर्मकैर्विज्ञानाभासरूपैरनित्यैरनित्यविज्ञान आत्मा सुखी दुःखीत्यभ्युपगतो लौकिकैर-
तोऽन्यो नित्यविज्ञानस्वरूपादात्मनः। तत्र हि विज्ञानापेक्षा विपरीतज्ञानत्वं चोपपद्यते न पुर्नानित्यविज्ञाने।
१० तत्त्वमसीति बोधोपदेशो नोपपद्यत इति चेत् आत्मानमेवावेदित्येवमादीनि च। नित्यबोधात्मकत्वात्। न ह्यादित्योऽ-
न्येन प्रकाश्यतेऽतस्तदर्थबोधोपदेशोऽनर्थक इति चेन्न। लोकाध्यारोपापोहार्थत्वात्। सर्वात्मनि हि नित्यविज्ञाने-

विजातीयज्ञानापेक्षमपि ब्रह्मेत्यर्थः। ज्ञानानपेक्षत्वे लौकिकानुभवविरोधं शास्त्रविरोधं चोद्भाव्य परिहरति—विरोध
इति चेन्नान्यत्वादिति। सूत्रस्य पूर्वपक्षभागं विभजते—स्वरूपविज्ञान इत्यादिना। विज्ञानानपेक्षत्वं ब्रह्मणोऽभाणि।
सापेक्षत्वं जीवशब्दवाच्यस्योपाधिविशिष्टस्यानुभूयतेऽतो भिन्नविषयत्वान्न विरोध इत्याह—न कस्मादित्यादिना।
१५ बुद्ध्यादौ कार्यकरणसङ्घाते य आत्माभिमानसन्तानोऽनादिभवपरम्पराप्रापितस्तस्याविच्छेदरूपमनिर्वाच्यमज्ञानलक्षणं
चिह्नं यस्य चित्प्रतिबिम्बस्य स तथोक्तः। चित्तन्त्रं ह्यनिर्वाच्यमज्ञानं चैतन्यमवच्छिद्य स्वावच्छिन्ने यथास्वरूपाव-
भासं प्रतिबध्य मौढ्याद्यध्यासहेतुर्भवति। तस्मादविवेकात्मको जीव इत्युच्यते बुद्धेरन्तःकरणस्य यथा यथा नील-
पीताद्याकारावभासा जायन्ते तथा तथा चित्प्रतिबिम्बः प्रमातृत्वादिरूपेण भातीति तत्प्रधानोऽध्यस्तस्य विशिष्टस्य
तत्सत्तयैव सत्त्वाद्विशिष्टान्तर्निविष्टो य आत्मा नित्यचित्स्वरूपः स एव सारो यस्मिन्स तथोक्तः। बुद्धिपरिणामरूपाणां
२० नीलपीतादिप्रत्ययानामुत्पन्नविनाशवत्त्वात्तदुपरक्तरूपेणानित्यं चैतन्यं यत्रावभासते सोऽन्यो जीवः। सर्वाण्येतानि
जीवविशेषणान्यन्यत्वस्फुटीकरणार्थानि। न केवलमनित्यत्वम् विशिष्टोपाधिरूढतया विज्ञानस्य तद्धर्मतैवावभासते
मनुष्योऽहं जानामीति प्रतिशरीरं विलक्षणमपि चैतन्यमवभासते विशिष्टभेदादित्यर्थः। परमार्थतः कीदृशं चैतन्यं
यस्य विशिष्टधर्मताऽवभासते तत्राऽऽह—अन्तःकरणस्येति। ननु विशेषणसम्बन्धात्स्वरूपे समारोपितो विशिष्टो भाति
तस्य मिथ्यात्वात्कथमात्मत्वव्यवहारास्पदत्वं तत्राऽऽह—अन्तर्गतेनेति। विशिष्टान्तर्गतेन चित्स्वरूपेण तादात्म्याद्बाह्य
२५ इत्यनात्माऽपि बुद्धिविशिष्ट आत्मेत्युपगतो लौकिकैरिति सम्बन्धः। अत इति। उक्तधर्मवत्त्वादित्यर्थः। अस्तु नित्य-
विज्ञानाद्विलक्षणो जीवः। कथमेतावता विरोधः परिहृत इत्याकाङ्क्षायामाह—तत्र हीति। एवं लोकानुभवविरोधे
परिहृतेऽपि शास्त्रविरोधो न परिहृत इत्याह—तत्त्वमसीति। विशिष्टस्य मिथ्यात्वाद्ब्रह्मास्मीत्यनुभवायोगान्मोक्षार्ह-
त्वायोगाच्च तत्त्वमसीत्युपदेशो न घटते चेत्तर्हि ब्रह्मण एवोपदेशोऽस्त्वित्याशङ्क्याऽऽह—आत्मानमेवावेदिति। एव-
मादीनि वाक्यानि ब्रह्मोपदेशपक्षे न सङ्गच्छन्ते तज्जनितफलाभावादित्यर्थः। विशिष्टस्य निरुपाधिकस्य च ब्रह्मण
३० उपदेशासम्भवेऽप्युपाधिविशिष्टचित्स्वरूपजीवपदलक्ष्यस्य वैशिष्ट्यद्वारेणोपदेशो भविष्यति फलं तस्याऽऽरोपितबन्ध-
निवृत्तिरित्याह—न लोकेति। ननु लोकशब्देनाऽऽत्मोच्यतेऽनात्मा वा। नाऽऽद्यः। आत्मनोऽधिष्ठानतयाऽध्यासकर्तृत्वा-
सम्भवाच्चैत्रो हि शुक्तिकायां रजतमध्यस्यति न शुक्तिकैव। अध्यासकर्तृत्वे चाऽऽत्मनः प्रागेवाध्यासात्कर्तृत्वं वाच्यम्।
कर्तृत्वस्य प्राग्भावनियमात्तथा चानिर्मोक्षप्रसङ्गः। कर्तृत्वस्याध्यासत्वे च न कर्तृत्वमात्मनस्तद्विषयकर्तृत्वान्तरा-
भावात्। भावे चानवस्थानात्। न द्वितीयः। जडत्वादनात्मनोऽध्यासकर्तृत्वानुपपत्तेः। चेतनो हि देवदत्तोऽध्यस्यतीति
३५ प्रसिद्धम्। अथ जडस्याध्यासकर्तृत्वं नाम भ्रान्त्याश्रयत्वं यद्यपि न सम्भवति तथाऽपि भ्रान्तिनिमित्तत्वं दृष्टं जपा-
कुसुमादेः। न, तस्य सत्यस्योपाधित्वसम्भवाद्भाष्यकारमते च जडस्य सर्वस्याध्यासात्मकत्वादध्यासहेतुत्वं न
सम्भवति तस्मादसम्बद्धमिदं भाष्यं लोकाध्यारोपापोहार्थत्वादिति।
न। लोकशब्देनाहङ्कारादय उच्यन्ते। तेषां व्यावहारिकसत्यत्वस्यार्थक्रियासमर्थत्वेनाभ्युपगमात्। स्वधर्मा-
रोपनिमित्तत्वेनोपाधित्वसम्भवात्परमार्थसत्यस्यैवोपाधित्वमित्यस्मान्प्रति दृष्टान्ताभावादहङ्कारादयश्च चित्तन्त्रानाद्य-
४० निर्वाच्याविद्यामयभूतसूक्ष्मविकारा अविद्यावच्छिन्न एव चैतन्ये निपतन्ति। उपाधिविकाराणामुपहिते पक्षपातिताया

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥

बुद्ध्याद्यनित्यधर्मा लोकैरध्यारोपिता आत्माविवेकतस्तदपोहार्थो बोधोपदेशो बोधात्मनः। तत्र च बोधाबोधौ समञ्जसौ। अन्यनिमित्तत्वादुदक इवौष्ण्यमग्निनिमित्तम्। रात्र्यहनी इवाऽऽदित्यनिमित्ते लोके नित्यावौष्ण्यप्रकाशावन्यादित्ययोरन्यत्र भावाभावयोर्निमित्तत्वादनित्याविवोपचर्यते। धक्ष्यत्यग्निः प्रकाशयिष्यति सवितेति तद्वत्। एवं च सुखदुःखबन्धमोक्षाद्यध्यारोपो लोकस्य। तदपेक्ष्य तत्त्वमस्यात्मानमेवावेदित्यात्मावबोधोपदेशेन श्रुतयः ५
केवलमध्यारोपापोहार्थाः। यथा सविताऽसौ प्रकाशयत्यात्मानमिति तद्वत्। बोधाबोधकर्तृत्वं च नित्यबोधात्मनि। तस्मादन्यदविदितात्। अधिशब्दश्चान्यार्थे। यद्वा यद्धि यस्याधि तत्ततोऽन्यत्सामर्थ्याद्ययाऽधि भृत्यादीनां राजा। अव्यक्तमेवाविदितं ततोऽन्यदित्यर्थः। विदितमविदितं च व्यक्ताव्यक्ते कार्यकारणत्वेन विकल्पिते ताभ्यामन्यद्ब्रह्म विज्ञानस्वरूपं सर्वविशेषप्रत्यस्तमितमित्ययं समुदायार्थः। अत एवाऽऽत्मत्वान्न हेय उपादेयो वा। अन्यद्ध्यन्येन हेयमुपादेयं वा। न तेनैव तदस्य कस्यचिद्धेयमुपादेयं वा भवति। आत्मा च ब्रह्म सर्वान्तरात्मत्वादविषयमतोऽन्यस्यापि न हेयमुपादेयं वा। अन्याभावाच्च। इति शुश्रुम पूर्वेषामित्यागमोपदेशः। व्याचचक्षिर इत्यस्वातन्त्र्यं तर्कप्रतिषेधार्थम्। ये नस्तद्ब्रह्मोक्तवन्तस्ते नित्यमेवाऽऽगमं ब्रह्मप्रतिपादकं व्याख्यातवन्तो न पुनः स्वबुद्धिप्रभवेन तर्केणोक्तवन्त इत्यागमपारम्पर्याविच्छेदं दर्शयति विद्यास्तुतये। तर्कस्त्वनवस्थितो भ्रान्तोऽपि भवतीति ॥ ३ ॥ १०

यद्वाचेति मन्त्रानुवादो दृढप्रतीतेः। अन्यदेव तद्विदितादिति योऽयमागमार्थो ब्राह्मणोक्तोऽस्यैव द्रढिम्ने मन्त्रा यद्वाचेत्यादयः पठ्यन्ते। यद्ब्रह्म वाचा शब्देनानभ्युदितमनभ्युक्तमप्रकाशितमित्येतत्। येन वागभ्युद्यत इति वाक्प्रकाशहेतुत्वोक्तिः। येन प्रकाश्यत इति वाचोऽभिधानस्याभिधेयप्रकाशकत्वस्य हेतुत्वमुच्यते ब्रह्मणः। उक्तं च १५

दर्शनात्। यथा जलचलनादीनाम्। तस्मान्नासङ्गतं भाष्यम्। ननु बोधात्मनो नाबोधः समञ्जसः प्रकाशाप्रकाशयोर्विरोधप्रसिद्धेः। बोधोऽपि च बोधात्मनो न समञ्जसः। निर्विकारत्वात्। कथं बोधात्मनो बोधोपदेशः सार्थकस्तत्राह—तत्र चेति। बोधादन्यस्याबोधात्मकत्वेनाबोधाश्रयत्वं न समञ्जसम्। आत्माश्रयत्वप्रसङ्गादनिवृत्तिप्रसङ्गाच्च तस्य बोधासम्भवात्। तस्माद्बोधात्मन एवाबोधः समञ्जसः। परिशेषाद्विरोधश्चासिद्धः साक्षिवेद्यत्वात्। २०
बोधोऽपि तत्रैव समञ्जसो घटादेर्बोद्धृत्वाप्रसिद्धेः। चिद्व्याप्त एव बुद्धिपरिणामे बोधशब्दव्युत्पत्तेः परिणाम्यन्तःकरणोपहितस्य बोधात्मनो बोधवत्त्वं समञ्जसमित्यर्थः। सामञ्जस्ये हेत्वन्तरमाह—अन्यनिमित्तत्वादिति। अन्यत्राहङ्कारादिसङ्घाते वादिनां लौकिकानां च बोधाबोधौ प्रसिद्धौ तौ चाऽऽत्मबोधाबोधसम्बन्धादित्यात्मनो मुख्यौ बोधाबोधौ। यत्सम्बन्धादन्यत्र यदुपचर्यते तत्तत्र मुख्यं यथाऽग्निसम्बन्धादुदकस्यौष्ण्यमुपचारेणाग्नौ तन्मुख्यमित्यर्थः। आत्मनिमित्तौ चेदन्यत्र बोधाबोधौ तर्हि निमित्तत्वादात्मनो व्यापारवत्त्वप्रसङ्गस्तत्राऽऽह—रात्र्यहनी २५
इवेति। यथाऽऽदित्यसन्निध्यसन्निधिमात्रनिमित्ते लोके रात्र्यहनी भवतः। नह्यादित्यः कञ्चन स्वापयत्युत्थापयति वा। अतो निमित्तत्वं न व्यापारवत्त्वाविनाभूतमित्यर्थः। नन्वात्मनि बोधस्य नित्यत्वे कथं कालावच्छेदव्यवहारः प्रागज्ञासिषं शास्त्रार्थमिदानीं च जानामि पुनर्ज्ञास्यामीति तत्राऽऽह दृष्टान्तम्—नित्यावौष्ण्यप्रकाशाविति। तद्विषयस्य कालावच्छिन्नत्वेन कालावच्छेदव्यवहारः स्वरूपेण नित्येऽपि बोधे न विरुध्यत इत्यर्थः। आत्मनि बोधाबोधयोः सामञ्जस्ये किं सिद्धमित्यत आह—एवं चेति। आगन्तुकविषयसम्बन्धात्तदुपरक्तरूपेण बोधस्याऽऽगन्तुकत्वेऽपीदानीं ३०
मया स्वात्मा बुध्यत इति नित्यबोधात्मनि कथं बोधकर्तृत्वव्यपदेश इत्याशङ्क्याऽऽवरकापनयस्याऽऽगन्तुकत्वेन भविष्यतीत्याह—यथा सविताऽसाविति। यस्मादन्योपाधिकमात्मनि बोधकर्तृत्वम्। स्वतः पुनर्विज्ञानानपेक्षत्वमेव। तस्माद्विज्ञानानपेक्षत्वादविदितादन्यत्वं सिद्धम्। कथमन्यत्वविवक्षायामधिशब्दः सङ्गच्छते तत्राऽऽह—अधिशब्दश्चेति। निपातानामनेकार्थत्वाल्लक्षणया चेत्यर्थः। अविदितादन्यत्रस्याऽऽधिकमर्थमाह—अव्यक्तमेवेति। विदितं न भवत्यविदितं च न भवतीत्येकैकनिषेधस्य तात्पर्यमुक्त्वा समुदायार्थमाह—विदितमविदितं चेति। व्याचचक्षिर ३५
इत्यस्वातन्त्र्यं तर्कप्रतिषेधार्थमित्येतत्सूत्रं विवृणोति—ये नस्तदिति ॥ ३ ॥

यद्वाचेति मन्त्रानुवादो दृढप्रतीतेरिति। सूत्रमेतद्विभजते—अन्यदेवेत्यादिना। येन वागभ्युद्यत इत्यनेन वाक्प्रकाशे हेतुत्वोक्तिर्ब्रह्मणः क्रियत इति योजना। एतत्सूत्रं विवृणोति—येनेत्यादिना। तदेव ब्रह्म त्वं विद्धीत्याद्याम्नाय

यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥
यच्चक्षुषा न पश्यति येन चक्षूꣳषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳश्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥

५ इति प्रथमः खण्डः

यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं
यदस्य त्वं यदस्य देवेष्वथ नु मीमाꣳस्यमेव ते मन्ये विदितम् ॥ ९–१ ॥

केनेषितां वाचमिमां वदन्ति यद्वाचो ह वाचमिति । तदेव ब्रह्म त्वं विद्धीत्यविषयत्वेन ब्रह्मण आत्मन्यवस्थापनार्थं आम्नायः । यद्वाचाऽनभ्युदितं वाक्प्रकाशनिमित्तं चेति ब्रह्मणोऽविषयत्वेन वस्त्वन्तरजिघृक्षां निवर्त्य स्वात्मन्येवाव-
१० स्थापयत्याम्नायस्तदेव ब्रह्म त्वं विद्धीति यत्नत उपरमयति । नेदमित्युपास्यप्रतिषेधाच्च ॥ ४ ॥

यन्मनसेत्यादि समानम् । मनो मतमिति । येन ब्रह्मणा मनोऽपि विषयीकृतं नित्यविज्ञानस्वरूपेणेत्येतत् । सर्वकरणानामविषयं तानि च सव्यापाराणि सविषयाणि नित्यविज्ञानस्वरूपावभासतया येनावभास्यन्त इति श्लोकार्थः । "क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति" इति स्मृतेः । "तस्य भासा" इति चाऽऽथर्वणे । येन प्राण इति । क्रियाशक्तिरप्यात्मविज्ञाननिमित्तेत्येतत् ॥ ५-६-७-८ ॥

१५ इति प्रथमः खण्डः

यदि मन्यसे सुवेदेति शिष्यबुद्धिविचालना गृहीतस्थिरतायै । विदिताविदिताभ्यां निवर्त्य बुद्धिं शिष्यस्य स्वात्मन्यवस्थाप्य तदेव ब्रह्म त्वं विद्धीति स्वाराज्येऽभिषिच्योपास्यप्रतिषेधेनाथास्य बुद्धिं विचालयति यदि मन्यसे सुवेदाहं ब्रह्मेति त्वं ततोऽल्पमेव ब्रह्मणो रूपं वेत्थ त्वमिति नूनं निश्चितं मन्यत इत्याचार्यः । सा पुनर्विचालना किमर्थेत्युच्यते पूर्वगृहीते वस्तुनि बुद्धेः स्थिरतायै । देवेष्वपि सुवेदाहमिति मन्यते यः सोऽप्यस्य ब्रह्मणो रूपं दहरमेव
२० वेत्ति नूनम् । कस्मात् । अविषयत्वात्कस्यचिद्ब्रह्मणः । अथवाऽल्पमेवास्याऽऽध्यात्मिकं मनुष्येषु देवेषु च आधिदैविक-मस्य ब्रह्मणो यद्रूपं तदिति सम्बन्धः । अथ न्विति हेतुर्मीमांसायाः । यस्माद्दहरमेव सुविदितं ब्रह्मणो रूपमन्यदेव तद्विदिताविदितादित्युक्तत्वात्सुवेदेति च मन्यसेऽतोऽल्पमेव वेत्थ त्वं ब्रह्मणो रूपं यस्मादथ नु तस्मान्मीमांस्यमेवाद्यापि ते तव ब्रह्म विचार्यमेव यावद्विदिताविदितप्रतिषेधागमार्थानुभव इत्यर्थः । "मन्ये विदितमि"ति शिष्यस्य मीमांसानन्तरोक्तिः प्रत्ययत्रयसङ्गतेः । सम्यग्वस्तुनिश्चयाय विचालितः शिष्य आचार्येण मीमांस्यमेव त इति चोक्त एकान्ते समाहितो

२५ आत्मन्येव बुद्धेरवस्थापनार्थं उपसंहारार्थः । अविषयत्वेन ब्रह्मणोऽतिरिक्तस्वरूपेण वेद्यत्वासम्भवादिति योजना । एतत्सूत्रं विभजते—यद्वाचेत्यादिना ॥ ४ ॥

मन्त्रसमुदायस्यार्थमाह—सर्वकरणानामित्यादिना । यत्सर्वकरणानामविषयं येन निर्विशेषेण सर्वाणि करणानि भास्यन्ते तद्ब्रह्मैव त्वं ततोऽतिरिक्तज्ञानाय यत्नो न कर्तव्य इति यत्नोपरम एव लक्ष्यते । विद्धीत्य-नेनातिरिक्तं मा विद्धीत्यभिप्रायः ॥ ५-६-७-८ ॥

३० इति प्रथमः खण्डः

यदि मन्यसे सुवेदेत्यनेन वाक्येन शिष्यबुद्धिविचालना क्रियते स्थूणानिखननन्यायेन गृहीतस्य दाढर्यार्थम् । एतत्संग्रहवाक्यं विवृणोति—विदिताविदिताभ्यामित्यादिना । अल्पमेव ब्रह्मणो रूपं नूनं त्वं वेत्थेति को मन्यत इत्याकाङ्क्षायामाह—मन्यत इत्याचार्य इति । यदिति । यादृशमस्य ब्रह्मणो रूपं त्वममंस्थास्तादृशं देवेष्वपि यो मन्यते सोऽपि दहरमेव नूनं मन्यत इति योजना । अथ न्विति हेतुर्मीमांसाया इति संग्रहवाक्यं विवृणोति—
३५ यस्मादित्यादिना । प्रतिवचनस्यार्थं संगृहीतं विवृणोति—सम्यगित्यादिना । विचार्येति । मया विदितं ब्रह्मेति किं प्रतिवचनं ददाम्युताविदितमिति वा । नाऽऽद्यः । आचार्यागमप्रत्ययविरोधाद्वेदनविषयतया च घटवदब्रह्मत्वप्रसङ्गा-

नाहं[1] मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥१०-२॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्॥११-३॥

भूत्वा विचार्य यथोक्तं सुपरिनिश्चितः सन्नाहाऽऽगमाचार्यात्मानुभवप्रत्ययत्रयस्यैकविषयत्वेन सङ्गत्यर्थम् । एवं हि सुपरिनिष्ठिता विद्या सफला स्यान्नानिश्चितेति न्यायः प्रदर्शितो भवति । मन्ये विवितमिति परिनिष्ठितनिश्चितविज्ञानप्रतिज्ञा हेतूक्तेः ॥ ९-१ ॥ ५

परिनिष्ठितं सफलं विज्ञानं प्रतिजानीते आचार्यात्मनिश्चययोस्तुल्यतायै । यस्माद्धेतुमाह नाहं मन्ये सुवेदेति । अहेत्यवधारणार्थो निपातो नैव मन्य इत्येतत् । यावदपरिनिष्ठितं विज्ञानं तावत्सुवेद सुष्ठु वेदाहं ब्रह्मेति विपरीतो मम निश्चय आसीत् । सोपजगाम भवद्भिर्विचालितस्य यथोक्तार्थमीमांसाफलभूतात्स्वात्मब्रह्मत्वनिश्चयरूपात्सम्यक्प्रत्ययाद्विरुद्धत्वात् । अतो नाहं मन्ये सुवेदेति । यस्माच्च तन्नैव न वेदेति मन्य इत्यनुवर्तते । अविदितब्रह्मप्रतिषेधात् । कथं तर्हि मन्यस इत्युक्त आह—वेद च[2] । चशब्दाद्वेद च न वेद चेत्यभिप्रायः । विदिताविदिताभ्यामन्यत्वाद्ब्रह्मणस्तस्मान्मया विदितं ब्रह्मेति मन्य इति वाक्यार्थः । अथवा वेद चेति नित्यविज्ञानब्रह्मस्वरूपतया नो न वेद वेदैव चाहं स्वरूपविक्रियाभावात् । विशेषविज्ञानं च पराध्यस्तं न स्वतः इति परमार्थतो न च वेदेति । यो नस्तद्वेद तद्वेदेतिपक्षान्तरनिरासार्थमाम्नाय उक्तार्थानुवादात् । यो नोऽस्माकं मध्ये यथाऽहं वेदेति स एव तद्ब्रह्म वेद नान्यः । उपास्यब्रह्मवित्त्वात् अतोऽन्यस्य । वेद चेति पक्षान्तरे ब्रह्मवित्त्वं निरस्यते । कुतोऽयमर्थोऽवसीयत इत्युच्यते । उक्तानुवादात् । उक्तं ह्यनुवदति नो न वेदेति वेद चेति ॥ १०-२ ॥ १०, १५

यस्यामतमिति श्रौतमाख्यायिकार्थोपसंहारार्थम् । शिष्याचार्योक्तिप्रत्युक्तिलक्षणयाऽनुभवयुक्तिप्रधान-

द्वेदितृत्वेन मम विकारित्वापाताच्च । न द्वितीयः । गोपालादिभ्योऽविशेषप्रसङ्गात्तूष्णीमवस्थाने वाऽप्रतिभाप्रसङ्गादिति विचार्यैकैकपक्षदोषपरिजिहीर्षया विदितमविदितं चेति समुच्चितं वच्मि । अज्ञानसंशयाद्यभावाद्विदितं वेदनविषयत्वाभावाच्चाविदितमिति सुपरिनिश्चितः सन्प्रतिवचनमाहेत्यर्थः । प्रत्ययत्रयस्य सङ्गतिः सङ्घटनमेकस्मिन्विषये किमर्थमुच्यते । सम्वादाधीनं प्रामाण्यमिति तार्किकस्थितेर्निश्चयार्थम् । स्वतःप्रामाण्यपक्षे त्वागमार्थे प्रत्ययान्तरसंवादस्तात्पर्यद्योतकः । प्रतिबन्धनिरासेनोपचारेण निश्चयहेतुरिति सर्वस्य प्रतिवचनवाक्यस्य तात्पर्यमुक्त्वा मन्ये विदितमित्येकदेशस्यार्थं संगृह्णाति ॥ ९-१ ॥ २०

संगृहीतं स्फुटयति—परिनिष्ठितमित्यादिना । विरुद्धत्वादिति । विपरीतप्रत्ययस्य सम्यग्ज्ञानविरुद्धत्वात्तदुदयमात्राद्विपरीतप्रत्ययोऽपगत इत्यर्थः । न केवलं विपरीतप्रत्ययस्य संशयस्य वाऽभावान्मम निश्चितं विज्ञानमज्ञानाभावाच्चेत्याह—यस्माच्चेति । अथवा वेद चेत्यस्यान्योऽर्थः कथ्यते । यद्यनित्यमात्मविज्ञानं स्यात्तर्हि तस्य प्रागभावकाले प्रध्वंसाभावकाले वाऽज्ञानं संभाव्येत नतु तदस्ति । नित्यं हि विज्ञानं ब्रह्म मम स्वरूपं ततो नो न वेद । यदि च वेदनं मम विक्रिया भवेत्तदा विक्रियायाः कादाचित्कत्वात्कदाचिदहं न वेदेति शङ्क्येत नतु तदस्ति स्वरूपविज्ञानस्यान्यथात्वासम्भवात्सदा वेदैवाहम् । यथा स्वाभाविकाचलतया पर्वतास्तिष्ठन्तीति व्यपदेशस्तद्वदित्यर्थः । स्वसत्तायां स्वयं प्रमेति स्वप्रकाशत्वमादाय व्याख्यातम् । चशब्दार्थमाह—विशेषविज्ञानं चेति । आगमाद्विचारसहकृताज्जातं ब्रह्मात्मकताव्यञ्जकमन्तःकरणपरिणामरूपं ब्रह्मास्मीति विशेषविज्ञानं तत्परेणान्तःकरणेनोपाधिनाऽन्मन्यध्यस्तं न परमार्थतो ज्ञानवत्त्वमात्मन इति न वेद चेति घटत इत्यर्थः । प्रकारान्तरेणापि ब्रह्मविज्ञानं सम्भवतीति शङ्कानिरासार्थं वाक्यैकदेश इत्याह—यो नस्तद्वेद तद्वेदेति । इदं सूत्रवाक्यं विवृणोति—यो नोऽस्माकमिति । यो नोऽस्माकं मध्ये तद्विदिताविदितान्यत्वं वेदेति शेषः । यथाऽहं वेदातोऽन्येन प्रकारेण विदुष उपास्यब्रह्मवित्त्वादिति योजना । उक्तानुवादादिति । अभ्यासाख्यतात्पर्यलिङ्गदर्शनादविषयतयैव ब्रह्मविज्ञानं विवक्षितमित्यर्थः ॥ १०-२ ॥ २५, ३०

यस्यामतमितिवाक्यार्थं संगृहीतं व्याख्याति—शिष्याचार्येत्यादिना । श्रौतमिति शिष्यस्याऽऽचार्यस्य चोक्तिर्न ३५

---

१. अहेति पाठः वाक्यभाष्ये धृतः ।

२. वेद च इत्यनेन नित्यविज्ञानस्वरूपत्वमुक्तं न वेद चेति वृत्तिज्ञानविरहः । अहं ब्रह्मास्मीति ब्रह्मात्मताव्यञ्जकमन्तःकरणवृत्तिरूपं ज्ञानं न परमार्थतो मय्यस्ति अपितु अन्तःकरणेनोपधिनाऽऽत्मन्यध्यस्तमित्यर्थः ।

**प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥१२–४॥**

याऽऽख्यायिकया योऽर्थः सिद्धः स श्रौतेन वचनेनाऽऽगमप्रधानेन निगमनस्थानीयेन संक्षेपत उच्यते । यदुक्तं विदिताद्न्यद्वागादीनामगोचरत्वात् । मीमांसितं चानुभवोपपत्तिभ्यां ब्रह्म तत्तथैव ज्ञातव्यं; कस्मात् ? यस्यामतं यस्य विविदिषाप्रयुक्तप्रवृत्तस्य साधकस्यामतमविज्ञातमविदितं ब्रह्मेत्यात्मतत्त्वनिश्चयफलावसानावबोधतया विविदिषा
५ निवृत्तेत्यभिप्रायः । तस्य मतं ज्ञातं तेन विदितं ब्रह्म येनाविषयत्वेनाऽऽत्मत्वेन प्रतिबुद्धमित्यर्थः । स सम्यग्दर्शी यस्य विज्ञानानन्तरमेव ब्रह्मात्मभावस्यावसितत्वात्सर्वतः कार्याभावः । विपर्ययेण मिथ्याज्ञानो भवति । कथं, मतं विदितं ज्ञातं मया ब्रह्मेति यस्य विज्ञानं स मिथ्यादर्शी विपरीतविज्ञानो विदितादन्यत्वाद्ब्रह्मणो न वेद स न विजानाति । ततश्च सिद्धमवैदिकस्य विज्ञानस्य मिथ्यात्वम् । अब्रह्मविषयतया निन्दितत्वात्तथा कपिलकणभुगादिसमयस्यापि विदितब्रह्मविषयत्वादनवस्थिततर्कजन्यत्वाद्विविदिषाऽनिवृत्तेश्च मिथ्यात्वमिति । स्मृतेश्च—

१० "या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः ॥"

इति विपरीतमिथ्याज्ञानयोरनष्टत्वादिति । अविज्ञातं विजानतां विज्ञातमविजानतामिति पूर्वहेतूक्तिरनुवादस्याऽऽनर्थक्यात् । अनुवादमात्रेऽनर्थकं वचनमिति पूर्वोक्तयोर्यस्यामतमित्यादिना ज्ञानाज्ञानयोर्हेत्वर्थत्वेनेदमुच्यते । अविज्ञातमविदितमात्मत्वेनाविषयतया ब्रह्म विजानतां यस्मात्तस्मात्तदेव ज्ञानं यत्तेषां विज्ञातं विदितं व्यक्तमेव बुद्ध्यादिविषयं[1] ब्रह्माविजानतां विदिताविदितव्यावृत्तमात्मभूतं नित्यविज्ञानस्वरूपमात्मस्थमविक्रियममृतमजरमभय-
१५ मनन्यत्वादविषयमित्येवमविजानताम् । बुद्ध्यादिविषयात्मतयैव नित्यं विज्ञातं ब्रह्म । तस्माद्विदिताविदितव्यक्ताव्यक्तधर्माध्यारोपेण कार्यकारणभावेन सविकल्पमयथार्थविषयत्वात् । शुक्तिकादौ रजताद्यध्यारोपणज्ञानवन्मिथ्याज्ञानं तेषाम् ॥ ११–३ ॥

प्रतिबोधविदितं मतमिति । वीप्सा प्रत्ययानामात्मावबोधद्वारत्वात् । बोधं प्रति बोधं प्रतीति वीप्सा सर्वप्रत्ययव्याप्त्यर्था । बौद्धा हि सर्वे प्रत्ययास्तप्तलोहवन्नित्यविज्ञानस्वरूपात्मव्याप्तत्वाद्विज्ञानस्वरूपावभासास्तदन्यावभासश्चाऽऽत्मा तद्विलक्षणोऽग्निवदुपलभ्यत इति तेन ते द्वारीभवन्त्यात्मोपलब्धौ । तस्मात्प्रतिबोधावभासप्रत्यगात्म-
२० तया यद्विदितं तद्ब्रह्म तदेव मतं ज्ञातं तदेव सम्यग्ज्ञानं यत्प्रत्यगात्मविज्ञानं न विषयविज्ञानम् । आत्मत्वेन

भवतीति ख्यापनार्थम् । तेन श्रौतेन वचनेन कथमुच्यत इत्याकाङ्क्षायामाह—यदुक्तमिति । यद्ब्रह्म विदितादन्यदुक्तमिति सम्बन्धः । गोपालादीनामिवाऽऽत्मतत्त्वं न विवक्षितं किन्तु ब्रह्मण आत्मत्वफलावसानो योऽबोधो यस्य स तथोक्तस्तस्य भावस्तत्ता तया बुभुत्सा निवृत्ता । विचार्यमाणे ब्रह्मण आत्मत्वेन पर्यवसानादतिरिक्तमन्तव्याभावाद-
२५ मतमित्यर्थः । अविज्ञातं विजानतामित्युत्तरार्धस्यार्थं संगृहीतं विवृणोति—अनुवादमात्र इत्यादिना । हेत्वर्थत्वेनेति । अयमर्थः—पूर्वेषां ब्रह्म विजानतामविज्ञातत्वेनैव ब्रह्मणः प्रसिद्धत्वादिदानीमप्यविषयतया ज्ञानं सम्यग्ज्ञानं तथा पूर्वेषामविदुषां विज्ञातत्वेनैव ब्रह्मणः प्रसिद्धत्वादिदानीमपि विषयतया ज्ञानमसम्यग्ज्ञानमिति । बुद्ध्यादिविषयं सद्रूपतया बुद्धिरात्मा मन आत्मेन्द्रियमात्मेति विज्ञानं वेदबाह्यानां ब्रह्म बौद्धादीनां प्रसिद्धं तत इदानीमपि तन्मतानुसारिणां भ्रान्तानामेव बुद्ध्यादिविषयमनात्मरूपमात्मतयाऽभिमतमित्यर्थः ॥ ११–३ ॥

३० केन द्वारेण तर्ह्यविषयतयाऽऽत्माऽवगम्यतामित्याकाङ्क्षायामाह—प्रतिबोधेति । संग्रहवाक्यं विवृणोति—बोधं प्रतीत्यादिना । यथाऽस्मिञ्शरीरे बुद्धिपरिणामा जडा अपि चिद्व्याप्ततया संवेदनवदवभासन्त इति सम्भाव्यते । जडानां स्वाभाविकप्रकाशानुपपत्तेः तथा सर्वशरीरेषु बौद्धाः प्रत्यया यद्व्याप्ततया संवेदनवद्भासन्ते सोऽस्तीति सम्भाव्यते । एतदुक्तं भवति । श्रोतृशरीरावच्छिन्नबौद्धप्रत्ययसाक्ष्येकस्त्वमर्थः । तदितरसर्वशरीरावच्छिन्नबौद्धप्रत्ययसाक्ष्येकस्तदर्थः । चिन्मात्रे व्यावर्तकधर्मानुपलम्भाद्विभक्तत्वे चानात्मत्वादिदोषप्रसङ्गात्सम्भावितमेकत्वं तदेव
३५ ब्रह्म त्वमितिवाक्यजबुद्धिवृत्तावविषयतया प्रकाशते ब्रह्मास्मीति । यस्मात्तदन्याञ्जडानवभासयतीति तदन्यावभास आत्मा सर्वजडविलक्षणोऽवगन्तुं शक्यते तस्मादित्युपसंहारः । प्रतिबोधमवभासाश्चित्प्रतिबिम्बास्तेषां प्रत्यगात्मतयाऽव्यभिचरितस्वरूपेण बिम्बस्थानीयेनैकेन रूपेण यद्ब्रह्मवेदनं तत्सम्यग्दर्शनमित्यर्थः । विषयविज्ञानं सम्यग्ज्ञानं न भवतीत्यत्र हेतुमाह—आत्मत्वेनेति । ब्रह्मण आत्मत्वेन विषयत्वासम्भवादित्यर्थः । अद्वयानन्दरूपस्य सर्वज्ञत्वादि-

१. विषयशब्दस्य नित्यपुंस्त्वात् बुद्ध्यादेः विषयत्वं यस्येति विग्रहो बोध्यः ।

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १३–५ ॥

इति द्वितीयः खण्डः

प्रत्यगात्मानमैक्षदिति च काठके । अमृतत्वं हि विन्दत इति हेतुवचनं विपर्यये मृत्युप्राप्तेः । विषयात्मविज्ञाने हि मृत्युः प्रारभत इत्यात्मविज्ञानममृतत्वनिमित्तमिति युक्तं हेतुवचनममृतत्वं हि विन्दत .इति । आत्मज्ञानेन किममृतत्व-मुत्पाद्यते । न । कथं तर्हि । आत्मना[1] विन्दते स्वेनैव नित्यात्मस्वभावेनामृतत्वं विन्दते । नाऽऽलम्बनपूर्वकम् । विन्दत इत्यात्मविज्ञानापेक्षम् । यदि हि विद्योत्पाद्यममृतत्वं स्यादनित्यं भवेत्कर्मकार्यवत् । अतो न विद्योत्पाद्यम् । यदि चाऽऽत्मनैवामृतत्वं विन्दते किं पुनर्विद्यया क्रियत इत्युच्यते । अनात्मविज्ञानं निवर्तयन्ती सा तन्निवृत्त्या स्वाभाविकस्यामृतत्वस्य निमित्तमिति कल्प्यते । यत आह वीर्यं विद्यया विन्दते । वीर्यं सामर्थ्यमनात्माध्यारोप-मायास्वान्तध्वान्तानभिभाव्यलक्षणं बलं विद्यया विन्दते । तच्च किंविशिष्टम् । अमृतमविनाशि । अविद्याजं हि वीर्यं विनाशि । विद्ययाऽविद्यया बाध्यत्वात् । न तु विद्याया बाधकोऽस्तीति विद्याजममृतं वीर्यम् । अतो विद्याऽमृतत्वे निमित्तमात्रं भवति । "नायमात्मा बलहीनेन लभ्यः" इति चाऽऽथर्वणे । लोकेऽपि विद्याजमेव बलमभिभवति न शरीरादिसामर्थ्यं यथा हस्त्यादेः । अथवा प्रतिबोधविदितं मतमिति सकृदेवाशेषविपरीतनिरस्तसंस्कारेण[2] स्वप्न-प्रतिबोधवद्यद्विदितं तदेव मतं ज्ञानं भवतीति । अथवा गुरूपदेशः प्रतिबोधस्तेन वा विदितं मतमित्युभयत्र प्रतिबोध-शब्दप्रयोगोऽस्ति । सुप्तप्रतिबुद्धो गुरुणा प्रतिबोधित इति । पूर्वं तु यथार्थम् ॥ १२–४ ॥

इह चेदवेदीदित्यवश्यकर्तव्यतोक्तिर्विपर्यये विनाशश्रुतेः । इह मनुष्यजन्मनि सत्यवश्यमात्मा वेदितव्य इत्येतद्विधीयते । कथमिह चेदवेदीद्विदितवान् । अथ सत्यं परमार्थतत्त्वमस्त्यवाप्तं तस्य जन्म सफलमित्यभिप्रायः ।

धर्मकस्य ब्रह्मणः शास्त्रैकसमधिगम्यत्वात्तटस्थस्यापरोक्षत्वं न सम्भवति किन्तु प्रत्यग्रूपेणैवेत्यभिप्रेत्य काठकेऽपि विशेषणमित्यर्थः । प्रत्यक्तयाऽपरोक्षब्रह्मज्ञानं तदेव सम्यग्ज्ञानमित्यत्र को हेतुरित्याशङ्क्यापरोक्षबन्धाध्यासस्य परोक्ष-ज्ञानान्निवृत्त्यसम्भवादपरोक्षज्ञानस्य च तन्निवर्तनेनामृतत्वसाधनत्वादित्युत्तरवाक्यार्थं संगृह्णाति—अमृतत्वं हीति । सूत्रं विभजते—विषयात्मेति । विषयेषु बुद्ध्यादिष्वात्मविज्ञाने विषयतया वा व्यतिरिक्तस्योपास्यतया ज्ञाने मृत्युः प्रारभते भयमिति प्रसिद्धं बुद्ध्यादिसङ्घातमात्मानं मन्यमानस्योपासकस्य च कर्तृत्वभ्रमानिवृत्तेः । "अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति" इत्यादिश्रुतिभ्यश्च "तरति शोकमात्मवित्" इत्यादिश्रुतिषु चाऽऽत्मज्ञानम-मृतत्वनिमित्तं प्रसिद्धमित्यर्थः । नाऽऽलम्बनपूर्वकमिति । किञ्चिदुपास्यमालम्बनीकृत्य तदुपासनसाध्यतया न विन्दत इत्यर्थः । कथं तर्हि विन्दत इति प्रयोग इत्याकाङ्क्षायामाह—आत्मविज्ञानापेक्षमिति । आत्मविज्ञानेन मर्त्यत्वभ्रम-निवृत्तिमपेक्ष्यामृतत्वमुपचर्यत इत्यर्थः । मुख्यार्थे बाधमाह—यदि हीत्यादिना । अनात्मा विज्ञायते येन तदनात्म-विज्ञानमनाद्यनिर्वाच्यमात्माज्ञानमित्यर्थः । पुनरज्ञानान्तरोदयेन बन्धशङ्कायां कथं सकृदज्ञाननिवृत्तिमात्रेणामृतत्व-निमित्तत्वं ज्ञानस्येत्याशङ्क्याऽऽह—यत आहेति । स्वस्यान्तोऽवच्छेदो भवति येन ध्वान्तेन तत्स्वान्तध्वान्तमनात्मा-ध्यारोपो मनुष्यत्वाद्यभिमानः पारमेश्वरी शक्तिर्माया जीवत्वनिमित्तमज्ञानं स्वान्तध्वान्तम् । एतैः सर्वैरभिभवनीयो न भवत्यात्मा येन विद्याकृतेनातिशयेन तद्वीर्यं विद्वाल्लँभते । पूर्वसिद्धस्याज्ञानादेर्नाशान्मायायाश्च स्वतो जीवबन्ध-कत्वाभावादभिनवस्याज्ञानस्योत्पत्तौ कारणाभावात् । प्रवृत्तफलकर्माक्षिप्तस्य चाज्ञानलेशस्य द्वैतावभासस्य च विद्वदनभिभावकत्वाद्दुर्बलत्वान्निश्चीयते सम्यग्ज्ञानस्यामृतत्वहेतुत्वमित्यर्थः । ननु विद्याजं चेत्कथमविनाशि कृतकस्य विनाशित्वनियमादित्याशङ्क्याह—न तु विद्याया इति । यावद्देहपातं जायमानो द्वैतावभासो विद्यया बाध्यत एव न मामभिभवितुं शक्नोतीत्यवष्टम्भो वीर्यं तस्याविनाशोऽमृतत्वं तत्कारणविद्याया अबाध्यत्वाभिप्रायेणोच्यते न स्वरूपनाशाभावाभिप्रायेणेत्यर्थः । प्रतिबोधपदस्य यौगिकमर्थं व्याख्याय रूढ्यभिप्रायेण व्याचष्टे—अथवेति । अशेषतया विपरीतो निरस्तः संस्कारो येन बोधेन स प्रतिबोधो युगपत्कृत्स्नाविद्यातत्कार्यनिवर्तकः सद्योमुक्तिहेतु-रित्यर्थः । प्रतिबोधशब्दस्त्रेधा व्याख्यातस्तत्राऽऽद्यं व्याख्यानं युक्तमित्याह—पूर्वं त्विति । गुरूपदेशे सत्यपि प्रतिबोधव्यापकात्मानुसन्धानं विनाऽपरोक्षावगमासम्भवात्सद्योमुक्तेश्चाशास्त्रीयत्वादित्यर्थः ॥ १२–४ ॥

---

१. आत्मना इत्यस्य पूर्वेणान्वयः । २. निरस्ताशेषविपरीतसंस्कारेण ।

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त ।**
**त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १४—१ ॥**

न चेदिहावेदीन्न विदितवान्वृथैव जन्म । अपि च महती विनष्टिर्महान्विनाशो जन्ममरणप्रबन्धाविच्छेदप्राप्तिलक्षणः स्यादतस्तस्मादवश्यं तद्विच्छेदाय ज्ञेय आत्मा । ज्ञानेन तु किं स्यादित्युच्यते—भूतेषु भूतेषु । चराचरेषु सर्वेष्वित्यर्थः ।
५ विचित्य । पृथङ्निष्कृष्यैकमात्मतत्त्वं संसारधर्मैरस्पृष्टमात्मभावेनोपलभ्येत्यर्थः । अनेकार्थत्वाद्धातूनाम् । न पुनश्चित्वेति सम्भवति विरोधात् । धीराः धीमन्तो विवेकिनो विनिवृत्तबाह्यविषयाभिलाषाः । प्रेत्य मृत्वाऽस्माल्लोकाच्छरीराद्यनात्मलक्षणाद्व्यावृत्तममत्वाहङ्काराः सन्त इत्यर्थः । अमृता अमरणधर्माणो नित्यविज्ञानामृतत्वस्वभावा एव भवन्ति ॥ १३—५ ॥

इति द्वितीयः खण्डः

१० ब्रह्म ह देवेभ्य इति ब्रह्मणो दुर्विज्ञेयतोक्तिर्यत्नाधिक्यार्था । समाप्ता ब्रह्मविद्या यदधीनः पुरुषार्थः । अत ऊर्ध्वमर्थवादेन ब्रह्मणो दुर्विज्ञेयतोच्यते । तद्विज्ञाने कथं नु नाम यत्नमधिकं कुर्यादिति । शमाद्यर्थो वाऽऽम्नायोऽभिमानशातनात् । शमादि वा ब्रह्मविद्यासाधनं विधित्सितं तदर्थोऽयमर्थवादाम्नायः । न हि शमादिसाधनरहितस्याभिमानरागद्वेषादियुक्तस्य ब्रह्मविज्ञाने सामर्थ्यमस्ति । व्यावृत्तबाह्यमिथ्याप्रत्ययग्राह्यत्वाद्ब्रह्मणः । यस्माच्चाग्न्यादीनां जयाभिमानं शातयति । ततश्च ब्रह्मविज्ञानं दर्शयत्यभिमानोपशमे । तस्माच्छमादिसाधनविधानार्थोऽयमर्थवाद
१५ इत्यवसीयते । सगुणोपासनार्थो वाऽपोदितत्वात् । नेदं यदिदमुपासत इत्युपास्यत्वं ब्रह्मणोऽपोदितमपोदितत्वादनुपास्यत्वे प्राप्ते तस्यैव ब्रह्मणः सगुणत्वेनाधिदैवमध्यात्मं चोपासनं विधातव्यमित्येवमर्थो वा, इत्यधिदैवतं तद्वनमित्युपासितव्यमिति हि वक्ष्यति । ब्रह्मेति परो लिङ्गात् । नह्यन्यत्र परादीश्वरान्नित्यसर्वज्ञात्परिभूयाग्न्यादींस्तृणं वज्रीकर्तुं सामर्थ्यमस्ति तन्न शशाक दग्धुमित्यादिलिङ्गाद्ब्रह्मशब्दवाच्य ईश्वर इत्यवसीयते । नह्यग्न्यथाऽग्निस्तृणं दग्धुं नोत्सहते वायुर्वाऽऽदातुम् । ईश्वरेच्छया तृणमपि वज्रीभवतीत्युपपद्यते ।
२० तत्सिद्धिः जगतो नियतप्रवृत्तेः । श्रुतिस्मृतिप्रसिद्धिभिर्नित्यसर्वविज्ञान ईश्वरे सर्वात्मनि सर्वशक्तौ सिद्धेऽपि शास्त्रार्थनिश्चयार्थमुच्यते । तस्येश्वरस्य सद्भावसिद्धिः कुतो भवतीत्युच्यते । यदिदं जगद्देवगन्धर्वयक्षरक्षःपितृपिशाचादिलक्षणं द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्रविचित्रं विविधप्राण्युपभोगयोग्यस्थानसाधनसम्बन्धि तदत्यन्तकुशलशिल्पिभिरपि दुर्निर्माणं देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रममेतद्भोक्तृकर्मविभागज्ञप्रयत्नपूर्वकं भवितुमर्हति ।

इह चेदवेदीदित्यादिवाक्यार्थं संगृहीतं विवृणोति—इह मनुष्यजन्मनीत्यादिना । विरोधादिति ।
२५ एकस्मिन्निरंशे चिन्मात्रे चयनस्योर्ध्वाधोदेशनिवेशनस्येष्टकानामिवासम्भवादित्यर्थः ॥ १३—५ ॥

इति द्वितीयः खण्डः

"यः सुराणां जये हेतुरसुराणां पराजये । सत्त्वप्रधानया शक्त्या सम्पन्नः सोऽहमीश्वरः ॥"

इति । ब्रह्म हेत्याद्याख्यायिकायास्तात्पर्यं संगृहीतं विवृणोति—समाप्तेत्यादिना । तात्पर्यान्तरमाह—शमाद्यर्थो वेति । संग्रहवाक्यं विवृणोति—शमादि वेति । अभिप्रायान्तरमाख्यायिकायाः संगृह्णाति—सगुणेति ।
३० संगृहीतं विवृणोति—नेदमित्यादिना । कृत्स्नाख्यायिकायास्तात्पर्यमुक्त्वा ब्रह्मशब्दार्थमाह—ब्रह्मेति परो लिङ्गादिति । एतद्व्याख्याति—नह्यन्यत्रेत्यादिना ।

कथं तर्हीश्वरसिद्धिरित्याकाङ्क्षायामाह—तत्सिद्धिरिति । ननु श्रुत्यादिभिरेवेश्वरे सिद्धे किमिति जगतो नियतप्रवृत्तिलिङ्गकानुमानं सूत्रितं तत्राह—श्रुतिस्मृतिप्रसिद्धिभिरिति । यावत्तर्केण सम्भवो नानुगृह्यते तावच्छास्त्रप्रतिपन्नोऽपीश्वरो न निश्चीयतेऽर्थवादत्वशङ्काप्रतिबन्धादतः शास्त्रार्थस्येश्वरस्य निश्चयाय नियमाय सामान्यतो
३५ दृष्टमनुमानं शास्त्रानुग्राहकरूपं सूत्रेणोच्यते । एतद्व्याख्यति—तस्येश्वरस्येत्यादिना । अनादिप्रसिद्धकर्तृव्यतिरिक्तं जगद्धर्मीकृत्य यद्यपीश्वरः सिषाधयिषितस्तथापि जगतो बहूनि विशेषणानि संसारिविलक्षणकर्तृसम्भावनाय, नैयायिकास्तु व्याप्यस्य पक्षधर्मताबलाद्व्यापकविशेषः पक्षधर्मः सिध्यति ततः स्वतन्त्रमनुमानमीश्वरनिश्चायकमाहुः ।

कार्यत्वे सति यथोक्तलक्षणत्वात्। गृहप्रासादरथशयनासनादिवद्विपक्ष आत्मादिवत्। कर्मण एवेति चेत्। न, परतन्त्रस्य निमित्तमात्रत्वात्। यदिदमुपभोगवैचित्र्यं प्राणिनां तत्साधनवैचित्र्यं च देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रमं च तन्न नित्यसर्वज्ञकर्तृकम्। किं तर्हि कर्मण एव, तस्याचिन्त्यप्रभावत्वात्सर्वैश्च फलहेतुत्वाभ्युपगमात्। सति कर्मणः फलहेतुत्वे किमीश्वराधिककल्पनयेति न नित्यस्येश्वरस्य नित्यसर्वज्ञशक्तेः फलहेतुत्वं चेति चेत्। न कर्मण एवोपभोगवैचित्र्याद्युपपद्येत। कस्मात्। कर्तृतन्त्रत्वात्कर्मणः। चितिमत्प्रयत्ननिर्वृत्तं हि कर्म तत्प्रयत्नोपरमादुपरतं सद्देशान्तरे कालान्तरे वा नियतनिमित्तविशेषापेक्षं कर्तुः फलं जनयिष्यतीति न युक्तमनपेक्ष्यान्यदात्मनः प्रयोक्तृ। कर्तैव फलकाले प्रयोक्तेति चेत्, मया निर्वर्तितोऽसि त्वां प्रयोक्ष्ये फलाय यदात्मानुरूपं फलमिति। न, देशकालनिमित्तविशेषानभिज्ञत्वात्। यदि हि कर्ता देशविशेषाभिज्ञः सन्स्वातन्त्र्येण कर्म नियुञ्ज्यात्ततोऽनिष्टफलस्याप्रयोक्ता स्यात्। ५

[1]तद्दूषणं प्रकटार्थे द्रष्टव्यम्। सामान्यतो दृष्टं रचयति। एतज्जगद्भोक्तृणां कर्मणां च विभागं यो जानाति तत्पूर्वकं भवितुमर्हतीति प्रतिज्ञा। अत्र जगन्निमित्तादृष्टनिष्पत्त्यर्थो यो जीवानां प्रयत्नस्तत्पूर्वकत्वं जगतः सिद्धमिति सिद्धसाधनत्वं वदतां निरीश्वरवादिनां निरासाय विशेषणं भोक्तृकर्मविभागज्ञेति। न हि जीवानामेते भोक्तारोऽस्मिन्देशे काले वाऽस्य कर्मफलस्येति विभागज्ञानं सम्भवति। विशेषानभिज्ञत्वादित्यर्थः। यथोक्तलक्षणत्वादिति। विचित्रत्वादित्युक्ते व्यभिचारः स्यात्। आत्मादिस्वभाववैचित्र्यस्य प्रयत्नपूर्वकत्वाभावात्तदर्थं कार्यत्वे सतीति विशेषणम्। कार्यत्वादित्युक्तेऽबुद्धिपूर्वकारिकार्ये विभागज्ञप्रयत्नपूर्वकत्वं नास्तीत्यनैकान्तिकत्वं स्यात्तदर्थं यथोक्तलक्षणत्वादिति। यद्विचित्रं तद्विभागज्ञप्रयत्नपूर्वकं यथा गृहादि। जानात्येव हि तक्षादिरयं गृहादिरस्य स्वामिनो द्रव्यदानादिपूर्वकं चाऽस्य निर्माणमित्थं चेति। ततो न साध्यवैकल्यं यथाशब्दं हि साधनदूषणे। नाभिप्रायवशात्। विपक्षे व्यतिरेक आत्मादिवदित्युदाहरणम्। यद्विभागज्ञप्रयत्नपूर्वकं न भवति तद्विशिष्टकार्यमपि न भवति। यथाऽऽत्माकाशादीत्यन्वयव्यतिरेकिप्रयोग इत्यर्थः। विचित्रकार्यत्वमस्तु विभागज्ञप्रयत्नपूर्वकत्वं न भविष्यति किं बाधकं जगद्वैचित्र्यस्य कर्मवैचित्र्यादेव सम्भवादतः पक्ष एव साध्याभावशङ्कया शङ्कितविपक्षे वर्तमानो हेतुः शङ्कितव्यभिचार इत्यभिप्रेत्याऽऽह—कर्मण एवेति चेदिति। परिहरति—न परेति। कर्तृपरतन्त्रस्य कर्मणो निमित्तमात्रत्वात्स्वातन्त्र्येण निमित्तत्वासम्भवात्कार्यवैचित्र्यस्य भङ्गप्रसङ्गो बाधकः कर्तारमन्तरेण। अतः पक्षे साध्याभावशङ्कानुपपत्तेर्न शङ्कितव्यभिचारित्वमिति भावः। संग्रहवाक्यस्य पूर्वपक्षभागं विवृणोति—यदिदमित्यादिना। यदिदमीश्वरवादिभिरपि वैषम्यनैर्घृण्यदोषपरिहाराय कर्मणो जगद्वैचित्र्यहेतुत्वमिष्टं तत्सम्प्रतिपन्नं विहायापूर्वं ईश्वरः कल्प्यते धर्मी तस्य फलहेतुत्वं च धर्मः कल्पनीय इति गौरवं स्यादित्याह—न नित्यस्येश्वरस्येति। सति लाघवे गौरवं दूषणं स्यान्नेह तदस्तीत्यभिप्रेत्य सिद्धान्तं विवृणोति—न कर्मण एवेत्यादिना। आत्मनोऽन्यत्प्रवर्तकमनपेक्ष्य कर्म चेन्न फलं जनयति तर्हि कर्ता जीव एव प्रयोजकोऽस्त्विति शङ्कित्वा परिहरति—कर्तैवेत्यादिना। अनिष्टफलभोगसिद्ध्यन्यथानुपपत्त्या कर्तुः कर्मनियोक्तृत्वं न सम्भवति चेत्तर्हि निर्निमित्तमेव कर्म फलाकारेण परिणमत इति जरत्कर्ममीमांसकानां मतमाशङ्क्याऽऽह—न च निर्निमित्तमिति। कर्तुरनिच्छया कर्म विकरोतीत्यत्र दृष्टान्ताभावाच्चर्मणोऽपि विकारस्य सनिमित्तत्वादित्यर्थः। यच्च सौगतेनोच्यते फलकालपर्यन्तं कर्तुरवस्थानाभावान्न कर्तृसमवेतं कर्म किन्तु क्षणिकविज्ञानेनाऽऽत्मना कृतं कदाचित्फलस्याऽऽकृष्टृ भवति। यथाऽयस्कान्तो मणिः कदाचिच्चेतनेन प्रयुक्तोऽन्यदाऽपि १० १५ २० २५ ३०

---

1. प्रकटार्थे जन्माद्यधिकरणे उक्तम्। न कार्यमात्रस्य तद्विशेषस्य वा सर्वज्ञशरीरकर्त्रा व्याप्तिः क्वाप्युपलब्धा। अतः पक्षधर्मताबलादपि पृथिव्यादेः कार्यता कथङ्कारं सर्वज्ञशरीरकर्तृकत्वं साधयेत्। विमतं सकर्तृकं कार्यत्वात् कुम्भवत् इति सिद्धसाधनम्। यथाशब्दं हि अनुमाने साधनदूषणे नाभिप्रायवशात् अन्यथाप्रसिद्धिर्ध्वंमात्। कर्तृजन्यत्वापि तथा। अदृष्टद्वारेण जीवजन्यत्वात्। कार्यत्वं सप्रतियोगिकं तन्निश्चयं विना न निश्चीयते भेद इव प्रत्यक्षेण। अतः सन्दिग्धासिद्धो हेतुः—यश्चायं व्यतिरेकी क्षित्यादिकं सर्वज्ञकर्तृकं कार्यत्वात् न यदेवं न तदेवं यथा नभ इति तत्र सर्वज्ञकर्तृत्वाभावप्रमितेः सर्वज्ञमिति सापेक्षत्वात् इतरेतराश्रयः। ततश्च व्यतिरेकानवधारणम् इति सन्दिग्धानैकान्तः। ३५

किञ्चाप्रसिद्धविशेषणः पक्षः अन्यथा शशविषाणकर्तृकत्वप्रसाधनेऽपि व्यतिरेकिणो निवारकानुपलम्भात् इत्यादि।

न च निर्निमित्तं तदनिच्छयाऽऽत्मसमवेतं सच्चर्मवद्विकरोति कर्म। नचाऽऽत्मकृतमकर्तृसमवेतमयस्कान्तमणिवदाकृष्टृ भवति, प्रधानकर्तृसमवेतत्वात्कर्मणः।

भूताश्रयमिति चेन्न साधनत्वात्। कर्तृक्रियायाः साधनभूतानि भूतानि क्रियाकालेऽनुभूतव्यापाराणि समाप्तौ च हलादिवत्कर्त्रा परित्यक्तानि न फलं कालान्तरे कर्तुमुत्सहन्ते। न हि हलं क्षेत्राद्व्रीहीन्गृहं प्रवेशयति भूतकर्मणोश्चा-
५ चेतनत्वात्स्वतःप्रवृत्त्यनुपपत्तिः। वायुवदिति चेन्नासिद्धत्वात्। न हि वायोरचितिमतः स्वतःप्रवृत्तिः सिद्धा रथादिष्व-दर्शनात्। शास्त्रात्कर्मण एवेति चेत्, शास्त्रं हि क्रियातः फलसिद्धिमाह—नेश्वरादेः स्वर्गकामो यजेतेत्यादि। न च प्रमाणाधिगतत्वादानर्थक्यं युक्तम्। न चेश्वरास्तित्वे प्रमाणान्तरमस्तीति चेत्। न, दृष्टन्यायहानानुपपत्तेः। क्रिया हि द्विविधा दृष्टफलाऽदृष्टफला च। दृष्टफलाऽपि द्विविधाऽनन्तरफलाऽऽगामिफला[1] च, अनन्तरफला गतिभुजिलक्षणा। कालान्तरफला च कृषिसेवादिलक्षणा। तत्रानन्तरफला फलापवर्गिण्येव कालान्तरफला तूत्पन्नप्रध्वंसिनी। आत्म-
१० सेव्याद्यधीनं हि कृषिसेवादेः फलं यतः। न चोभयन्यायव्यतिरेकेण स्वतन्त्रं कर्म ततो वा फलं दृष्टम्। तथा च कर्म-फलप्राप्तौ न दृष्टन्यायहानमुपपद्यते। तस्माच्छान्ते यागादिकर्मणि नित्यः कर्तृकर्मफलविभागज्ञ ईश्वरः सेव्यादिवद्या-गाद्यनुरूपफलदातोपपद्यते। स चाऽऽत्मभूतः सर्वस्य सर्वक्रियाफलप्रत्ययसाक्षी नित्यविज्ञानस्वभावः संसारधर्मैरसंस्पृष्टः। श्रुतेश्च। "न लिप्यते लोकदुःखेन बाह्यः" 'जरामृत्युमत्येति" "विजरो विमृत्युः"। "सत्यकामः सत्यसङ्कल्पः" "एष सर्वेश्वरः पुण्यं कर्म कारयति"। "अनश्नन्नन्यो अभिचाकशीति"। "एतस्य वा अक्षरस्य प्रशासने" इत्याद्या असंसारिण
१५ एकस्याऽऽत्मनो नित्यमुक्तस्य सिद्धौ श्रुतयः।

लोहस्य प्रेरको भवति तद्वदिति तत्राऽऽह—न चाऽऽत्मकृतमिति। करणादीनि कारकाणि यः प्रेरयन्करोति स प्रधानकर्ता। तत्समवेतं कर्म प्रसिद्धं तस्य च फलकालपर्यन्तं स्थायित्वमेष्टव्यम्। अन्यथाऽकृताभ्यागमकृतविप्रणाश-प्रसङ्गात्प्रत्यभिज्ञाप्रामाण्याच्चेत्यर्थः।

लोकायतिकाभिप्रायमुद्भाव्य दूषयति—भूताश्रयमित्यादिना। आधुनिककर्ममीमांसकानां मतमुद्भावयति—
२० शास्त्रादित्यादिना। यजेतेत्याख्यातपदात्सामान्येन समीहितसाधनं यागः प्रतीयते। कस्य समीहितस्य साधनमिति विशेषाकाङ्क्षायां स्वर्गकामपदसन्निधानात्काम्यमानस्वर्गसाधनत्वं यद्यप्यवगम्यते तथाऽपि क्षणिकस्य यागस्य कालान्तरीयस्वर्गसाधनत्वासम्भवान्निष्फलत्वशङ्केत्याशङ्क्याऽऽह—न चेति। औषधपानादेः कर्मणः स्थायिसंस्कार-द्वारेण कालान्तरीयारोग्यादिफलहेतुत्वप्रसिद्धेर्यागस्य श्रुतसाधनत्वनिर्वाहाय स्थाय्यवान्तरापूर्वं परिकल्प्यते तेन न त्वानर्थक्यं निर्दोषवाक्याधिगतत्वादित्यर्थः। श्रुतसाधनत्वसिद्ध्यन्यथानुपपत्त्या किमितीश्वर एव नेष्यते तत्राऽऽह—
२५ न चेश्वरेति। नेयमर्थापत्तिरीश्वरास्तित्वे प्रमाणमन्यथाऽप्युपपन्नत्वात्। न च मानान्तरमस्ति। तद्विषयश्रुत्यादेरर्थ-वादत्वादित्यर्थः। नापूर्वद्वारेण श्रुतनिर्वाहः कल्पनीयः। यद्व्यवहितफलं कर्म तच्चैतन्यप्रयुक्तफलमिति दृष्टाया व्याप्तेर्हानिप्रसङ्गादतः श्रुतसाधनत्वसिद्ध्यन्यथानुपपत्त्येश्वरः फलदाता कल्पनीय इत्याह—न दृष्टेति। संग्रहवाक्यं विवृणोति—क्रिया हीत्यादिना। फलोदयेनापवर्गो नाशो यस्याः सा फलापवर्गिणी न फलदातारं पृथगपेक्षत इत्यर्थः। उत्पन्नप्रध्वंसिनीति। उत्पन्ना सती फलमदत्त्वैव प्रध्वंसते ततस्तत्र फलदातारं कालान्तरेऽपेक्षत इत्यर्थः। यगादिफलं
३० कर्माद्यभिज्ञेन दीयमानं व्यवहितफलत्वात्सेवाफलवदित्याह—तस्माच्छान्ते यागादीति। ननु जीवस्तावत्स्वोपभोग-साधननियन्ता, तस्यापीश्वरः फलंदानेन नियन्ता चेदिष्यते तर्हि नियन्तुः स्वव्यतिरिक्तनियम्यत्वाङ्गीकारादीश्वरस्या-प्यन्यो नियन्ता प्रसज्येत नियन्तृत्वाविशेषात्। अतोऽनवस्थाप्रसङ्गबाधितमनुमानमित्याशङ्क्याऽऽह—स चाऽऽत्मभूतः सर्वस्येति। कल्पितभेदमात्रेण नियम्यनियामकभावोपपत्तेर्न तात्त्विकभेदावकाशः। तात्त्विकभेदवत्त्वे च घटादिव-त्कार्यत्वादिप्रसङ्गस्ततोऽतिरिक्तनियम्यत्वव्याप्त्यभावान्नानवस्थाप्रसङ्ग इत्यर्थः। राजवदीश्वरः फलदाता चेत्तर्हि
३५ निग्रहानुग्रहकर्तृत्वाद्रागादिमान्स्यात्तत्राऽऽह—सर्वक्रियाफलेति। यथा लौकिकसाक्षी कस्यचिज्जयहेतुरन्यस्य पराजय-हेतुरपि न रागादिमान्कथ्यते। यथोपलब्धभाषित्वात्। तथेश्वरः क्रियादिसाक्षी रागादिमान्न भविष्यति। अननुरूपा-दातृत्वात्। राजाऽप्यसाधून्दण्डयन्साधून्परिरक्षन्न रागादिमान्कथ्यत इति भावः। साक्षित्वे तर्हीश्वरस्येक्षणक्रिया स्यात्तत्राऽऽह—नित्येति। नित्यविज्ञानस्वभावस्यानिर्वाच्यविषयावच्छेदेन साक्षित्वं कल्पितमित्यर्थः। सर्वस्य जीवस्याऽऽत्मभूतश्चेदीश्वरस्तर्हि संसारधर्मैर्लिप्येत संसार्यभेदादित्याशङ्क्याऽऽह—संसारेति। न केवलमुपपत्तेरीश्वर-
४० सिद्धिः श्रुतेरपीत्युक्तं ताः श्रुतीरुदाहरति—न लिप्यत इत्यादिना।

१. 'कालान्तरफला' पा.।

स्मृतयश्च सहस्रशो विद्यन्ते। न चार्थवादाः शक्यन्ते कल्पयितुम्। अनन्यशेषत्वे सति विज्ञानोत्पादकत्वात्।
न चोत्पन्नं विज्ञानं बाध्यते। अप्रतिषेधाच्च। न चेश्वरो नास्तीति निषेधोऽस्ति। प्राप्त्यभावादिति चेन्न, उक्तत्वात्।
न हिंस्यादितिवत्प्राप्त्यभावात्प्रतिषेधो नाऽऽरभ्यत इति चेन्न। ईश्वरसद्भावे न्यायस्योक्तत्वात्। अप्रतिषेधादिति
कर्मणः फलदान ईश्वरकालादीनां न प्रतिषेधोऽस्ति। न च निमित्तान्तरनिरपेक्षं केवलेन कर्मणा प्रयुक्तं फलं दृष्टम्।
न च विनष्टोऽपि यागः कालान्तरे फलदो भवति। सेव्यबुद्धिवत्सेवकेन सर्वज्ञेश्वरबुद्धौ तु संस्कृतायां यागादिकर्मणा ५
विनष्टेऽपि कर्मणि सेव्यादिवेश्वरात्फलं कर्तुर्भवतीति युक्तम्। न तु पुनः पदार्था वाक्यशतेनापि देशान्तरे कालान्तरे
वा स्वं स्वं स्वभावं जहति। नहि देशकालान्तरेषु चाग्निरनुष्णो भवति। एवं कर्मणोऽपि कालान्तरे फलं द्विप्रकार-
मेवोपलभ्यते। बीजक्षेत्रसंस्कारपरिरक्षाविज्ञानवत्कर्त्रपेक्षफलं कृष्यादि विज्ञानवत्सेव्यबुद्धिसंस्कारापेक्षफलं च सेवादि।
यागादेः कर्मणस्तथाऽविज्ञानवत्कर्त्रपेक्षफलत्वानुपपत्तौ कालान्तरफलत्वात्कर्मदेशकालनिमित्तविपाकविभागज्ञबुद्धि-
संस्कारापेक्षं फलं भवितुमर्हति। सेवादिकर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलस्येव। तस्मात्सिद्धः सर्वज्ञ ईश्वरः १०
सर्वजन्तुबुद्धिकर्मफलविभागसाक्षी सर्वभूतान्तरात्मा। "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर" इति श्रुतेः।

स एव चात्राऽऽत्मा जन्तूनां "नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता" "नान्यदतोऽस्ति विज्ञात्रि"त्याद्या-
त्मान्तरप्रतिषेधश्रुते"स्तत्त्वमसी"ति चाऽऽत्मत्वोपदेशात्। न हि मृत्पिण्डः काञ्चनात्मत्वेनोपदिश्यते। ज्ञानशक्तिकर्मो-
पास्योपासकशुद्धाशुद्धमुक्तामुक्तभेदादात्मभेद एवेति चेन्न। भेददृष्टचपवादात्।

स्मृतयश्च—"यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते"। "समं सर्वेषु भूतेषु"। "ईश्वरः सर्वभूतानाम्" १५
इत्याद्याः। यदुक्तमर्थवादत्वादप्रामाण्यं तत्राऽऽह—न चेति। ईश्वरविषयाणि वाक्यानि न कर्मविधिसन्निधिसमाम्ना-
तानि। अतोऽनन्यशेषत्वे सति बोधकत्वात्स्वार्थे प्रमाणानि कर्मविधिवाक्यवदित्यर्थः। किञ्चार्थवादत्वेपि नाप्रामाण्यं
पदसमन्वयबलेन जायमानस्य ज्ञानस्य बाधादर्शनात्स्वतःप्रामाण्यादस्य बाधयिता नोपलभ्यत इत्याह—न चोत्पन्न-
मिति। इतश्च नाप्रामाण्यमित्याह—अप्रतिषेधाच्चेति। यथा "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे"ति प्रस्तुत्य "नेति
नेती"ति परस्तात्प्रतिषेधति नैवमीश्वरं प्रस्तुत्य प्रतिषेध उपलभ्यत इत्यर्थः। प्रतिषेधाभावः सत्त्वान्न भवति किन्त्व- २०
प्राप्तत्वात्। यथा रागतः प्राप्ता भूतहिंसा निषिध्यते नैवमीश्वरस्य प्राप्तिरस्तीत्यन्यथासिद्धिमाशङ्क्य परिहरति—
प्राप्तीत्यादिना। अप्रतिषेधादितिसंग्रहवाक्यं प्रकारान्तरेण व्याचष्टे—अथवेति। स्वर्गकामो यजेतेत्यादिशास्त्रं यागस्य
फलदायिनीं शक्तिं द्योतयति न सहकार्यन्तरं निषेधयति। वाक्यभेदप्रसङ्गादित्यर्थः। इतश्च शास्त्रमयोगव्यवच्छेदकं
वाच्यं नान्ययोगव्यवच्छेदकम्। स्रक्चन्दनवनितादिनिमित्तनिरपेक्षस्य कर्मणः फलहेतुत्वानुपलम्भात्। अतो यथा
मानान्तरसिद्धं स्रक्चन्दनवनितादेर्निमित्तत्वमिष्टं तथेश्वरस्याप्येष्टव्यमित्याह—न च निमित्तान्तरनिरपेक्षमिति। २५
इतश्चेश्वरः फलदाता वक्तव्यः प्रध्वस्तस्य यागस्य कारणत्वासम्भवात्। नियतपूर्वक्षणसत्त्वं हि कारणत्वम्। न
चापूर्वद्वारेणोपपद्यते। असति द्वारवति द्वारत्वानुपपत्तेः। न चौषधपानादिदृष्टान्तः। औषधाद्यवयवानां संस्कृतानां
फलकालपर्यन्तमनुवर्तमानानामेव कालान्तरीयफलहेतुत्वादित्यभिप्रेत्याऽऽह—न च विनष्ट इति। कथं तर्हीश्वरो
वाऽपि नष्टस्य फलदातोपपद्यते तत्राऽऽह—सेव्यबुद्धिवदिति। एतत्कर्मानेनानुष्ठितमिति कर्मणेश्वरस्य बुद्धावस्येह
एव कर्मणा संस्कारस्तद्वशाद्विनष्टेऽपि कर्मणीश्वरात्फलं युक्तम्। यथाऽनेनाहं सेवित इति सेव्यबुद्धौ संस्कृतायां ३०
कालान्तरे विनष्टायामपि सेवायां सेव्याद्राजादेः फलं भवति तद्वदित्यर्थः। यद्यपि लौकिकानां कर्मणां फलसाधनत्वं
चेतनाधीनं दृष्टं तथाऽपि वैदिकस्य यागादेः फलं दातारं विनाऽपि वाक्यप्रामाण्याद्भविष्यतीति नाऽऽशङ्कनीय-
मित्याह—न तु पुनरिति। अन्वययोग्यानां पदार्थानां संसर्गबोधकमेव वाक्यं नतु तद्बलाद्दृष्टः पदार्थस्वभावस्त्यक्तुं
शक्यत इत्यर्थः। बीजक्षेत्रयोः संस्कारस्तत्परिरक्षा च तद्विज्ञानवान्यः कर्ता तदपेक्षफलं कृष्यादि दृष्टम्। सेवादिकं
च विज्ञानवान्यः सेव्यस्तद्बुद्धिसंस्कारापेक्षफलं दृष्टम्। तथा यागादेः कर्मणः कालान्तरफलत्वादविज्ञानवत्कर्त्रपेक्ष- ३५
फलत्वानुपपत्तौ कर्मादिविभागज्ञकर्त्रपेक्षफलत्वं भवितुमर्हतीत्यर्थः। लौकिककर्मस्वनेकविधेष्वपि मध्ये सेवा यागादेरनु-
रूपो दृष्टान्त इत्यभिप्रेत्य पुनराह—सेवादीति। सेवादिकर्मानुरूपं फलं जानाति यः सेव्यस्तद्बुद्धौ यः संस्कारस्तद-
पेक्षफलस्य सेवादेर्यथा न स्वातन्त्र्यं तद्वदित्यर्थः। एवं तावन्निरीश्वरवादिनं प्रतीश्वरं प्रसाध्य सेश्वरवादिनामभि-
मतवास्तवभेदनिरासाय प्रक्रमते—स एवेति। जीव ईश्वराद्भिन्नस्तद्विरुद्धधर्माक्रान्तत्वात्। यो यद्विरुद्धधर्माक्रान्तः
स ततो भिन्नः। यथाऽश्वान्महिष इत्यनुमानमुद्भाव्य तस्य भेदनिन्दानुपपत्त्यनुगृहीताभेदश्रुतिविरोधात्कालात्यया- ४०

यदुक्तं संसारिण ईश्वरादनन्या इति। तन्न, किं तर्हि भेद एव संसार्यात्मनाम्। कस्मात्, लक्षणभेदादश्व-
महिषवत्। कथं लक्षणभेद इत्युच्यते। ईश्वरस्य तावन्नित्यं सर्वविषयं ज्ञानं सवितृप्रकाशवत्। तद्विपरीतं संसारिणां
खद्योतस्येव। तथैव शक्तिभेदोऽपि। नित्या सर्वविषया चेश्वरशक्तिर्विपरीतेतरस्य। कर्म च चित्स्वरूपात्मसत्तामात्र-
निमित्तमीश्वरस्य। औष्ण्यस्वरूपद्रव्यसत्तामात्रनिमित्तदहनकर्मवत्। राजायस्कान्तप्रकाशकर्मवच्च स्वात्माविक्रिया-
५ रूपम्। विपरीतमितरस्य। उपासीतेतिवचनादुपास्य ईश्वरो गुरुराजवत्। उपासकश्चेतरः शिष्यभृत्यवत्। अपहत-
पाप्मादिश्रवणान्नित्यशुद्ध ईश्वरः। पुण्यो वै पुण्येनेतिवचनाद्विपरीत इतरः। अत एव नित्यमुक्त एवेश्वरो नित्याशुद्धि-
योगात्संसारीतरः। अपि च यत्र ज्ञानादिलक्षणभेदोऽस्ति तत्र भेदो दृष्टः। यथाऽश्वमहिषयोस्तथा ज्ञानादिलक्षण-
भेदादीश्वरादात्मनां भेदोऽस्तीति चेत्।

न, कस्मात्। "अन्योऽसावन्योऽहमस्मीति न स वेद" "ते क्षय्यलोका भवन्ति"। "मृत्योः स मृत्युमाप्नोती"ति
१० भेददृष्टिर्ह्यपोह्यते। एकत्वप्रतिपादिन्यश्च श्रुतयः सहस्रशो विद्यन्ते। यदुक्तं ज्ञानादिलक्षणभेदादिति। अत्रोच्यते, न,
अनभ्युपगमात्। बुद्ध्यादिभ्यो व्यतिरिक्ता विलक्षणाश्चेश्वराद्भिन्नलक्षणा आत्मानो न सन्ति। एक एवेश्वरश्चाऽऽत्मा
सर्वभूतानां नित्यमुक्तोऽभ्युपगम्यते। बाह्यश्चक्षुर्बुद्ध्यादिसमाहारसन्तानाहङ्कारममत्वादिविपरीतप्रत्ययप्रबन्धाविच्छेद-
लक्षणो नित्यशुद्धबुद्धमुक्तविज्ञानात्मेश्वरगर्भो नित्यविज्ञानावभासश्चित्तचैत्यबीजबीजिस्वभावः कल्पितोऽनित्यविज्ञान
ईश्वरलक्षणविपरीतोऽभ्युपगम्यते। यस्याविच्छेदे संसारव्यवहारः। विच्छेदे च मोक्षव्यवहारः। अन्यश्च मृत्प्रलेपव-
१५ त्प्रत्यक्षप्रध्वंसो देवपितृमनुष्यादिलक्षणो भूतविशेषसमाहारो न पुनश्चतुर्थोऽन्यो भिन्नलक्षण ईश्वरादभ्युपगम्यते।
बुद्ध्यादिकल्पितात्मव्यतिरेकाभिप्रायेण तु लक्षणभेदादित्याश्रयासिद्धो हेतुः।

ईश्वरादन्यस्याऽऽत्मनोऽसत्त्वात्। ईश्वरस्यैव विरुद्धलक्षणत्वमयुक्तमिति चेत्सुखदुःखादियोगश्च। न, निमित्तत्वे
सति लोकविपर्ययाध्यारोपणात्सवितृवत्। यथा हि सविता नित्यप्रकाशरूपत्वाल्लोकाभिव्यक्त्यनभिव्यक्तिनिमित्तत्वे
सति लोकदृष्टिविपर्ययेणोदयास्तमयाहोरात्रादिकर्तृत्वाध्यारोपभाग्भवत्येवमीश्वरे नित्यविज्ञानशक्तिरूपे लोकज्ञानापोह-
२० सुखदुःखस्मृत्यादिनिमित्तत्वे सति लोकविपरीतबुद्ध्याऽध्यारोपितं विपरीतलक्षणत्वं सुखदुःखादयश्च न स्वतः।
आत्मदृष्ट्यनुरूपाध्यारोपाच्च। यथा घनादिविप्रकीर्णेऽम्बरे येनैव सवितृप्रकाशो न दृश्यते स आत्मदृष्ट्यनुरूप-

पदिष्टत्वमाह—ज्ञानशक्तीत्यादिना। संग्रहवाक्यं विवृणोति—यदुक्तमित्यादिना। स्वात्मनोऽविक्रियारूपं जगदु-
पादानादिलक्षणं कर्मेश्वरस्येत्यर्थः।

दूषणान्तराभिधित्सयाऽनुवदति—यदुक्तमिति। जीवाः किं बुद्ध्यादिविशिष्टाश्चित्प्रतिबिम्बा धर्मित्वेन
२५ गृह्यन्ते किंवा देवमनुष्यादिशब्दवाच्याः सचितिका देहाः किंवा तृतीयो विलक्षणः निरुपाधिकभेदभिन्नश्चेतनः। आद्ये
सिद्धसाधनत्वमाह—नानभ्युपगमादित्यादिना। चित्तं ज्ञानं चैत्याः सुखादयो बीजमविद्यादि बीजि शरीरं तत्स्वभाव-
विशिष्टस्य विशेषणतादात्म्यादित्यर्थः। यस्य विशिष्टरूपस्याविच्छेदे तत्प्रविष्टचित्स्वरूपस्य संसारव्यवहारो यस्य च
विच्छेदे प्रतिबिम्बरूपस्य बिम्बसम्पत्त्या मोक्षव्यवहारो भवति स कल्पितरूपः पृथगभ्युपगम्यतेऽतः सिद्धसाधन-
मित्यर्थः। द्वितीयविकल्पेऽपि सिद्धसाधनत्वमाह—अन्यश्चेति। तृतीयविकल्पे बुद्ध्यादिकल्पितेभ्यो विशिष्टात्मभ्यो
३० व्यतिरेकेण निरुपाधिकस्वरूपाभिप्रायेण पक्षीकरणे हेतुराश्रयासिद्धस्तादृशस्याऽऽश्रयस्य मानविकलत्वादित्यर्थः।

ईश्वरादन्य आत्मा नास्तीति वदता सर्वोपाधिस्थ ईश्वर एवाऽऽत्मेत्युक्तं भवति। तदा च बद्धत्वमुक्तत्वादिविरुद्ध-
धर्मत्वं सुखदुःखादियोगश्चासङ्गस्य विरुद्धः प्रसज्येतेत्यतो वास्तवमसंसारित्वं कल्पितेन संसारित्वेन न विरुध्यत
इति दर्शयितुं यस्य यस्यान्तःकरणादिविकारस्योदयादेः सन्निधिमात्रेणाऽऽत्मा निमित्तं तस्य तस्य लोकैरहङ्कारादिभि-
र्विपरीतरूपस्याध्यारोपणादात्मनः संसारित्वमित्याह—न निमित्तत्वे सतीत्यादिना। ईश्वरे सुखाद्यारोप इत्युक्ते
३५ मायोपाधिके ब्रह्मणीश्वरशब्दवाच्ये सुखाद्यध्यासशङ्का स्यात्तन्निवृत्त्यर्थमाह—नित्यविज्ञानशक्तिरूप इति।
यथाऽन्यादिशक्तिः शक्त्यन्तरमन्तरेण स्वस्वभावादेव कार्योत्पादनानुकूला तथा नित्यविज्ञानं स्वभावसन्निधि-
मात्रेणान्तःकरणादिप्रवृत्तिनिमित्तमिति शक्तिरूपमुच्यते। तस्मिन्स्वातन्त्र्यादीश्वरपदलक्ष्ये विरुद्धानेकधर्माध्यासो
न विरुध्यत इत्यर्थः। लोकस्य ज्ञानापोहो विस्मरणम्। न स्वत इति। न परमार्थतो विरुद्धानेकधर्मवत्त्वमित्यर्थः।
भ्रान्तस्य स्वदृष्ट्यनुरूपाध्यासारोपदर्शनाच्च नाध्यासो वस्तुक्षतिकर इत्याह—आत्मदृष्टीति। बौद्धादिवृत्तीना-

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ॥ १५–२ ॥

मेवाध्यस्यति सवितेदानीमिह न प्रकाशयतीति सत्येव प्रकाशेऽन्यत्र भ्रान्त्या। एवमिह बौद्धादिवृत्त्युद्भवाभिभवाकुलभ्रान्त्याऽध्यारोपितः सुखदुःखादियोग उपपद्यते। तत्स्मरणाच्च। तस्यैवेश्वरस्यैव हि स्मरणम्। "मत्तः स्मृतिर्ज्ञानमपोहनं च" "नाऽऽदत्ते कस्यचित्पापम्" इत्यादि। अतो नित्यमुक्त एकस्मिन्सवितरीव लोकाविद्याध्यारोपितमीश्वरे संसारित्वम्। शास्त्रादिप्रामाण्यादभ्युपगतमसंसारित्वमित्यविरोध इति।

एतेन प्रत्येकं ज्ञानादिभेदः प्रत्युक्तः। सौक्ष्म्यचैतन्यसर्वगत्वाद्यविशेषे च भेदहेत्वभावात्। विक्रियावत्त्वे चानित्यत्वात्। मोक्षे च विशेषानभ्युपगमादभ्युपगमे चानित्यत्वप्रसङ्गात्। अविद्यावदुपलभ्यत्वाच्च भेदस्य तत्क्षयेऽनुपपत्तिरिति सिद्धमेकत्वम्। तस्माच्छरीरेन्द्रियमनोबुद्धिविषयवेदनासन्तानस्याहङ्कारसम्बन्धादज्ञानबीजस्य नित्यविज्ञानान्यनिमित्तस्याऽऽत्मतत्त्वयाथात्म्यविज्ञानाद्विनिवृत्तावज्ञानबीजस्य विच्छेद आत्मनो मोक्षसंज्ञा विपर्यये च बन्धसंज्ञा। स्वरूपापेक्षत्वादुभयोः। ब्रह्म ह, इत्यैतिह्यार्थः। पुरा किल देवासुरसङ्ग्रामे जगत्स्थितिपरिपिपालयिषयाऽऽत्मानुशासनानुवर्तिभ्यो देवेभ्योऽर्थिभ्योऽर्थाय विजिग्येऽजैषीदसुरान्ब्रह्मण इच्छानिमित्तो विजयो देवानां बभूवेत्यर्थः। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजितेषु देवा वृद्धिं पूजां वा प्राप्तवन्तः ॥ १४–१ ॥

त ऐक्षन्तेति मिथ्याप्रत्ययत्वाद्धेयत्वख्यापनार्थमाम्नायः। ईश्वरनिमित्ते विजये स्वसामर्थ्यनिमित्तोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यात्मनो जयादिश्रेयोनिमित्तं सर्वात्मानमात्मस्थं सर्वकल्याणास्पदमीश्वरमेवाऽऽत्मत्वेनाबुद्ध्वा पिण्डमात्राभिमानाः सन्तो यं मिथ्याप्रत्ययं चक्रुस्तस्य पिण्डमात्रविषयत्वेन मिथ्याप्रत्ययत्वात्सर्वात्मेश्वरयाथात्म्यावबोधेन हातव्यताख्यापनार्थस्तद्धैषामित्याद्याख्यायिकाम्नायः। तद्ब्रह्म ह किलैषां देवानामभिप्रायं मिथ्याहङ्काररूपं विजज्ञौ विज्ञातवत्। ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया देवेभ्योऽर्थाय तेषामेवेन्द्रियगोचरे नातिदूरे प्रादुर्बभूव। महेश्वरशक्तिमायोपात्तेनात्यन्ताद्भुतेन प्रादुर्भूतं किल केनचिद्रूपविशेषेण। तत्किलोपलभमाना अपि देवा न व्यजानत न विज्ञातवन्तः। किमिदं यदेतद्यक्षं पूज्यमिति ॥ १५–२ ॥

मुद्भवाभिभवाभ्यामाकुलस्य। वैचित्र्यमापन्नस्य वृत्तीनामेवोद्भवाभिभवौ न तद्व्यापकचैतन्यस्येति विवेकशून्यलोकस्य भ्रान्त्येति योजना। चैतन्यस्य ज्ञानसुखाद्युत्पादे निमित्तत्वं न केवलमन्वयव्यतिरेकसिद्धम्। तत्स्मरणाच्च भगवद्वाक्याच्च सिद्धमित्यर्थः। ईश्वरे संसारित्वमीश्वरः संसारीतिप्रसिद्ध्यभावाद्विशिष्टानुगतचित्स्वरूप इति व्याख्येयम्।

एतेनेति। सिद्धसाधनत्वादिदूषणेन प्रतिशरीरं ज्ञानसुखादीनामाश्रयभेदस्तात्त्विकः प्रत्युक्तो मन्तव्यः। किञ्च व्यावर्तकधर्मवशाद्व्यावृत्तिः सिध्यति। सांख्यमते च पुरुषाणां चैतन्यमात्ररूपाणां न व्यावर्तको धर्मोऽस्ति। वैशेषिकमते त्वन्त्यविशेषकल्पनाऽन्योन्याश्रयपराहता। अतो निर्विशेषत्वात्पुंसां न भेदस्तात्त्विक इत्याह—सौक्ष्म्येति। कश्चिद्दुःखी कश्चित्सुखीति दुःखादिविक्रियाव्यवस्थान्यथानुपपत्त्याऽऽश्रयभेदस्तात्त्विकः कल्प्यते तत्राऽऽह–विक्रियावत्त्वे चेति। सुखादिविक्रियाणामुपाधिधर्मत्वान्नाऽऽत्मभेदसाधकत्वं व्यधिकरणासिद्धत्वादित्यर्थः[1]। किञ्च न सर्वैरेव मोक्षे विक्रियादिविशेष इष्यते। स्वरूपावस्थानं च मोक्षस्ततः सविशेषत्वं न स्वाभाविकमित्याह—मोक्षे चेति। किञ्च जाग्रत्स्वप्नयोरविद्यावद्भिः भ्रान्तैरुपलम्भात् सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽनुपलम्भात् मिथ्यात्वं भेदस्य सिद्धमित्याह—अविद्यावदिति। जीवानां क्रमेणानेकशरीरानुयायित्वात्प्रातिभासिकस्य शरीरादिसन्तानस्य मिथ्याभिमानविषयत्वाच्छुक्तिरूप्यवदज्ञानबीजस्य विच्छेद आत्मनो मोक्षसंज्ञेति सम्बन्धः। आत्मन इति कस्मादुच्यते विशिष्टस्य बन्धमोक्षौ किं नेष्येते तत्राऽऽह—स्वरूपापेक्षत्वादिति। विशिष्टस्य मोक्षेऽन्वयासम्भवादन्वये वा संसारानिवृत्तिप्रसङ्गादन्यस्य च बन्धेऽन्यस्य च मोक्षे साधनवैयर्थ्यादुपाधिवैशिष्ट्यद्वारेण स्वरूपस्यैवोपाधिप्रतिबिम्बकल्पस्य बन्धमोक्षौ। प्रतिबिम्बो हि वाच्यरूपेण मिथ्या लक्ष्यरूपेण तु बिम्बमेव स्वरूपावस्थानं मुक्तिरुपपद्यते। तदुक्तम्—

"उपाधिना सार्धमुपाधिजन्यमौपाधिकं सर्वमवेहि मिथ्या।
भागं मृषा चित्प्रतिबिम्बकेऽपि बिम्बं पुनः सत्यमशेषमेव" इति च ॥ १४–१ ॥

त ऐक्षन्तेति देवानामीक्षणस्य मिथ्याप्रत्ययत्वान्मिथ्याभिमानस्य हेयत्वख्यापनार्थो ब्रह्मणः प्रादुर्भाव

---

१. विरुद्धं अधिकरणं यस्य तत्, तच्च तत् असिद्धं चेति व्यधिकरणासिद्धम्।

तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ १६–३ ॥
तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ १७–४ ॥
तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳसर्वं दहेयं यदिदं पृथिव्यामिति ॥ १८–५ ॥
तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं
५ स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १९–६ ॥
अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ २०–७ ॥
तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ २१–८ ॥
तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीय यदिदं पृथिव्यामिति ॥ २२–९ ॥
तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽदातुं
१० स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥२३–१०॥
अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥२४–११॥
स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमाꣳहैमवतीं
ताꣳ होवाच किमेतद्यक्षमिति ॥२५–१२॥

इति तृतीयः खण्डः

१५ सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति॥ २६–१ ॥
तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते
ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ २७-२ ॥
तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श
स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८-३ ॥

२० तद्विज्ञानायाग्निमब्रुवन्। तृणनिधानेऽयमभिप्रायः, अत्यन्तसम्भावितयोरग्निमारुतयोस्तृणदहनादानाशक्त्याऽऽत्मसम्भावना शातिता भवेदिति। इन्द्र आदित्यो वज्रभृद्वा। अविरोधात्। इन्द्रोपसर्पणे ब्रह्म तिरोदध इत्यत्रायमभिप्रायः—इन्द्रोऽहमित्यधिकतमोऽभिमानोऽस्य सोऽहमग्न्यादिभिः प्राप्तं वाक्सम्भाषणमात्रमप्यनेन न प्राप्तोऽस्मीत्यभिमानं कथं नु नाम जह्यादिति। तदनुग्रहायैवान्तर्हितं तद्ब्रह्म बभूव ॥ १६–३ ॥ १७–४ ॥ १८–५ ॥ १९–६ ॥ २०–७ ॥
॥ २१–८ ॥ २२–९ ॥ २३–१० ॥ २४–११ ॥

२५ स शान्ताभिमान इन्द्रोऽत्यर्थं ब्रह्म विजिज्ञासुर्यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसीत्तिरोधानं च तस्मिन्नेव स्त्रियमतिरूपिणीं विद्यामाजगाम। अभिप्रायोद्बोधहेतुत्वाद्रुद्रपत्न्युमा हैमवतीव सा शोभमाना विद्यैव। विरूपोऽपि विद्यावान्बहु शोभते ॥ २५–१२ ॥

इति तृतीयः खण्डः

तां च पृष्ट्वा तस्या एव वचनाद्विदाञ्चकार विदितवान्। अत इन्द्रस्य बोधहेतुत्वाद्विद्यैवोमा। "विद्या-
३० सहायवानीश्वर" इति स्मृतिः। यस्मादिन्द्रविज्ञानपूर्वकमग्निवाय्विन्द्रास्ते ह्येनन्नेदिष्ठमतिसमीपं ब्रह्मविद्यया ब्रह्म प्राप्ताः इति योजना। सूत्रमिदं व्याख्याति—ईश्वरनिमित्त इत्यादिना। जयादि श्रेष्ठत्वे निमित्तं मन्यमाना इति शेषः ॥१५–२॥ १६–३ ॥ १७–४॥ १८–५॥१९–६॥२०–७॥ २१–८॥२२–९ ॥ २३–१०॥ २४–११॥ २५–१२॥

इति तृतीयः खण्डः

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥ २९-४ ॥
अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ३०-५ ॥
तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं
वेदाभिहैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ३१-६ ॥
उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ३२-७ ॥ ५
तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गाणि सत्यमायतनम् ॥ ३३-८ ॥

सन्तः पस्पृशुः स्पृष्टवन्तः। ते हि प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुरित्येतत्। तस्मादतितरामतीत्यान्यानतिशयेन दीप्यन्तेऽन्यान्देवांस्ततोऽप्यन्द्रोऽतितरां दीप्यते। आदौ ब्रह्मविज्ञानात् ॥ २६-१ ॥ ॥ २७-२ ॥ २८-३ ॥

तस्यैष आदेशस्तस्य ब्रह्मण एष वक्ष्यमाण आदेश उपासनोपदेश इत्यर्थः। यस्माद्देवेभ्यो विद्युदिव सहसैव प्रादुर्भूतं ब्रह्म द्युतिमत्तस्माद्विद्युतो विद्योतनं यथा यदेतद्ब्रह्म व्यद्युतद्विद्योतितवत्। आ इवेत्युपमार्थ आशब्दः। यथा १० घनान्धकारं विदार्य विद्युत्सर्वतः प्रकाशते एवं तद्ब्रह्म देवानां पुरतः सर्वतः प्रकाशवद्व्यक्तीभूतमतो व्यद्युतदिवेत्युपास्यम्। "यथा सकृद्विद्युत्तमि"ति च वाजसनेयके। यस्माच्चेन्द्रोपसर्पणकाले न्यमीमिषत्। यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति। इतीदित्यनर्थकौ निपातौ। निमिषितवदिव तिरोभूतमित्येवमधिदैवतं देवताया अधि यद्दर्शनमधिदैवतं तत् ॥ २९-४ ॥

अथानन्तरमध्यात्ममात्मनोऽध्यात्मविषयमुच्यत इति वाक्यशेषः। यदेतद्यथोक्तलक्षणं ब्रह्म गच्छतीव प्राप्नोतीव विषयीकरोतीवेत्यर्थः। न पुनर्विषयीकरोति मनः, मनसोऽविषयत्वाद् ब्रह्मणोऽतो मनो न गच्छति। 'येनाऽऽहुर्मनो मतमि' ति हि चोक्तम्। गच्छतीवेति तु मनसोऽपि मनस्त्वात्। आत्मभूतत्वाच्च ब्रह्मणस्तत्समीपे मनो वर्तते इत्युपस्मरत्यनेन मनसैव तद्ब्रह्म विद्वान्यस्मात्तस्माद्ब्रह्म गच्छतीवेत्युच्यते। अभीक्ष्णं पुनः पुनश्च। सङ्कल्पो ब्रह्मप्रेषितस्य मनसः। अत उपस्मरणसङ्कल्पादिभिर्लिङ्गैर्ब्रह्म मनआद्यात्मभूतमुपास्यमित्यभिप्रायः ॥३०-५॥ १५

तस्य चाध्यात्ममुपासने गुणो विधीयते तद्ध तद्वनं तदेतद्ब्रह्म तच्च तद्वनं च तत्परोक्षं वनं सम्भजनीयम्। २० वनतेस्तत्कर्मणस्तस्मात्तद्वनं नाम। ब्रह्मणो गौणं हीदं नाम। तस्मादनेन गुणेन तद्वनमित्युपासितव्यम्। स यः कश्चिदेतद्यथोक्तमेवं यथोक्तेन गुणेन वनमित्यनेन नाम्नाऽभिधेयं ब्रह्म वेदोपास्ते। तस्यैतत्फलमुच्यते। सर्वाणि भूतान्येनमुपासकमभिसंवाञ्छन्तीहाभिसम्भजन्ते सेवन्ते स्मेत्यर्थः। यथागुणोपासनं हि फलम् ॥ ३१-६ ॥

उपनिषदं भो ब्रूहीत्युक्तायामप्युपनिषदि शिष्येणोक्त आचार्य आह—उक्ता कथिता ते तुभ्यमुपनिषदात्मोपासनं च। अधुना ब्राह्मीं वाव ते तुभ्यं ब्रह्मणो ब्राह्मणजातेरुपनिषदमब्रूम वक्ष्याम इत्यर्थः। वक्ष्यति हि। ब्राह्मी २५ नोक्ता। उक्ता त्वात्मोपनिषत्। तस्मान्न भूताभिप्रायोऽब्रूमेत्ययं शब्दः ॥ ३२-७ ॥

तस्या वक्ष्यमाणाया उपनिषदस्तपो ब्रह्मचर्यादि दम उपशमः कर्माग्निहोत्रादीत्येतानि प्रतिष्ठाऽऽश्रयः। एतेषु हि सत्सु ब्राह्मोपनिषत्प्रतिष्ठिता भवति। वेदाश्चत्वारोऽङ्गानि च सर्वाणि। प्रतिष्ठेत्यनुवर्तते। ब्रह्माश्रया हि विद्या। सत्यं यथाभूतवचनमपीडाकरमायतनं निवासः सत्यवत्सु हि सर्वं यथोक्तमायतन इवावस्थितम् ॥ ३३-८ ॥

विद्येति सत्त्वप्रधाना शक्तिश्चित्तादात्म्यापत्त्या बोधहेतुः ॥ २६-१ ॥ २७-२ ॥ २८-३ ॥ ३०

तस्मादित्यस्यापेक्षितं पाठव्यत्यासेन व्याचष्टे—यस्मादित्यादिना। अर्थवादोपसंहारोऽयं विध्युपक्रमार्थश्च। विद्युद्दृष्टान्तेनात्यन्तदीप्तिमत्त्वं निमेषणदृष्टान्तेन देवैरपि दुर्ज्ञेयत्वमिति गुणद्वयं देवानधिकृत्य विवक्षितम्। अत एव तद्गुणद्वयविशिष्टोपासनमाधिदैविकमुच्यते ॥ २९-४॥

अहंग्रहेणैवैतत्कर्तव्यमित्यभिप्रेत्याऽऽध्यात्मिकब्रह्मरूपमाह—आत्मेत्यादिना ॥ ३०-५ ॥

वनतेस्तत्कर्मण इति। 'वन' संभजन इत्यस्य धातोः संभजनार्थस्य रूपं वनमिति। तत्प्रसिद्धं वनं न ३५ गृह्यत इत्यर्थः। गौणमिति। अवयवशक्तिलभ्यं न रूढ्या समुदायशक्त्येत्यर्थः ॥ ३१-६॥

ब्राह्मणजातेरुपनिषदमिति। ब्राह्मणजात्यनुष्ठेयां विद्यामात्मज्ञानसाधनभूतामित्यर्थः ॥ ३२-७ ॥

ब्रह्मेति वेदस्तन्मूलत्वात्तदाश्रया ॥ ३३-८ ॥

**यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ३४-९ ॥**

**इति चतुर्थः खण्डः**

**सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥**

**ॐ शान्तिः शान्तिः शान्तिः**

५ [1]आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु, तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

**ॐ शान्तिः शान्तिः शान्तिः**

**इति सामवेदीयतलवकारशाखीयोपनिषत्समाप्ता**

१० तामेतां तपआद्यङ्गां तत्प्रतिष्ठां ब्राह्मीमुपनिषदं सायतनामात्मज्ञानहेतुभूतामेवं यथावद्यो वेद अनुवर्ततेऽनुतिष्ठति । तस्यैतत्फलमाह—अपहत्य पाप्मानम् । अपक्षय्य धर्माधर्मावित्यर्थः । अनन्तेऽपारेऽविद्यमानान्ते । स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि । ज्येये महति सर्वमहत्तरे प्रतितिष्ठति सर्ववेदान्तवेद्यं ब्रह्माऽऽत्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यत इत्यर्थः ॥ ३४–९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्य-
१५ श्रीमच्छङ्करभगवत्पादकृतौ केनोपनिषद्वाक्यभाष्ये चतुर्थः खण्डः
समाप्तमिदं तलवकारोपनिषदपरपर्यायकेनोपनिषद्वाक्यभाष्यम् ।

तपआदीनि वेदाङ्गान्यन्याङ्गानि यस्याः ॥ ३४–९ ॥

सत्यकामः स्वयंसिद्धः सर्वेशो यः स्वशक्तितः । स एवान्तःप्रविष्टोऽस्त्युपास्यः सर्वदेहिनाम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृतौ
२० श्रीमच्छाङ्करतलवकारोपनिषदपरपर्यायकेनोपनिषद्वाक्यभाष्यविवरणं समाप्तम्

---

१. तदर्थश्च—मम अङ्गानि हस्तपादादीनि वाक्प्राणः चक्षुः श्रोत्रं, अथो अपि बलमिन्द्रियाणि सर्वाणि आप्यायन्तु = वर्धन्तामित्यर्थः । सर्वं ब्रह्मौपनिषदं इति पाठः, सर्वं पूर्वोक्तमुपनिषत्प्रतिपाद्यब्रह्मैव न तद्व्यतिरेकेण किञ्चिदस्ति । अहं ब्रह्म न निराकुर्याम्—ब्रह्म नास्तीति न वदेयम् तथा वदने असन्नेव सम्भवति असद्ब्रह्मेति वेद चेत्—इति स्वस्याप्यसत्त्वापत्तेः ।
२५ मा मा ब्रह्म निराकरोत् पुरुषार्थाद्भ्रंशयेत् ब्रह्म तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद इति मैत्रेयी ब्राह्मणोक्तरीत्या सर्वं ब्रह्मव्यतिरिक्तमिति यो मन्यते तं ब्रह्म पराकुर्यात् पुरुषार्थाद्भ्रंशयेदित्यर्थः । अनिराकरणमस्तु ब्रह्मणः सकाशात् मम सकाशाच्च इति पुनर्वचनमादरार्थम् ।

ॐ

कृष्णयजुर्वेदीयकठशाखीया

# काठकोपनिषत्

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः

## अथ प्रथमोऽध्यायः

ॐ उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम् ५

ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय नचिकेतसे च ।

अथ काठकोपनिषद्वल्लीनां सुखेनार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते । सदेर्धातोर्विशरणगत्यवसाद-

### श्रीमदानन्दगिर्याचार्यकृता टीका

धर्माधर्माद्यसंसृष्टं कार्यकारणवर्जितम् ।
कालादिभिरविच्छिन्नं ब्रह्म यत्तन्नमाम्यहम् ॥ १ ॥ १०

यः साक्षात्कृतपरमानन्दो यावदधिकारं याम्ये पदे वर्तमानोऽकर्तृब्रह्मात्मतानुभवबलतो भूतयातनानिमित्त-दोषैरलिप्तस्वभाव आचार्यो वरप्रदानेन परब्रह्मात्मैक्यविद्यामुपदिदेश यस्मै चोपदिदेश ताभ्यां नमस्कुर्वन्नाचार्य-भक्तेर्विद्याप्राप्त्यङ्गत्वं दर्शयति—ॐ नमो भगवते वैवस्वतायेति ।

अथशब्दो मङ्गलार्थः । चिकीर्षितं प्रतिजानीते—काठकेति । ननूपनिषदो वृत्तिर्नाऽऽरब्धव्या प्राणिनां कामकलुषितचेतसामुपनिषच्छ्रवणात्पराङ्मुखत्वाद्विशिष्टस्याधिकारिणो दुर्निरूपत्वाद्ग्रन्थस्य च सत्यस्य कर्मभ्य एव १५

### श्रीमद्गोपालयतीन्द्रकृता टीका

ब्रह्माद्वयं परानन्दं धर्मादीनामगोचरम् ।
कार्यकारणनिर्मुक्तं शिवं परमुपास्महे ॥ १ ॥
नत्वा देवमुमाजानिं स्मृत्वा गुरुपदाम्बुजम् ।
ध्यात्वा गौरीमहं कुर्वे कठभाष्यविवेचनम् ॥ २ ॥ २०
क्व भाष्यमतिगम्भीरं क्व चाहं मन्दबुद्धिगः ।
तथाऽपि गुरुवर्याणां पादसंस्मृतितो यते ॥ ३ ॥

भगवान्भाष्यकारो यमनचिकेतःसम्वादरूपेण प्रवृत्ताः कठवल्लीर्व्याचिख्यासुश्चिकीर्षितस्य भाष्यस्य निर्विघ्न-समाप्तिप्रचयगमनादिप्रयोजनाय ब्रह्मविद्याचार्यनतिलक्षणं मङ्गलमाचरन्नादौ यमं नमस्करोति—नम इति । मृत्यवे नम इत्यन्वयः । ननु न यमो नमस्कार्यो मारयतीति मृत्युरिति व्युत्पत्त्या भूतयातनादिकर्तृत्वेन दोषवत्त्वान्निर्दुष्टो २५ ह्याचार्यो नाम भवतीत्याशङ्क्याऽऽह—भगवत इति । "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" इतिस्मृतेर्यमः करतलीकृतब्रह्मतत्त्वोऽपि यावदधिकारं याम्ये पदे वर्तमानः प्रारब्धमतिवाहयन्नकर्तृब्रह्मात्मताऽनुभवबलतो भूतयातनादिदोषैरलिप्तस्वभाव इति युक्तं तस्य नमस्कार्यत्वमिति भावः । तस्य हिरण्यगर्भात्मकसूर्यप्रभवत्वेन महत्त्वं दर्शयति—वैवस्वतायेति । विवस्वतोऽपत्यं पुमान्वैवस्वतस्तस्मै वैवस्वताय भगवते ब्रह्मविद्याचार्याय मृत्यवे नम इत्यन्वयः । एवं यमनतिं कृत्वा वरप्रदानेन यस्मै यमो नचिकेतसे ३०

नार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इति, उच्यते। ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः

आनन्दगिरिटीका

५ निवृत्तेरुपनिषज्जन्यविद्याया निष्प्रयोजनत्वाज्जीवस्य चासंसारिब्रह्मात्मतायाः प्रतिपादयितुमशक्यत्वेन निर्विषयत्वाच्चेत्याशङ्क्योपनिषच्छब्दनिर्वचनेन विद्याया विशिष्टाधिकार्यादिमत्त्वप्रदर्शनेन तज्जनकस्य ग्रन्थस्यापि विशिष्टाधिकार्यादिमत्त्वेन व्याख्येयत्वं दर्शयितुं प्रथममुपनिषच्छब्दस्वरूपसिद्धिं तावदाह—उपनिपूर्वस्येति। ब्रह्मविद्यायामुपनिषच्छब्दस्यो'पनिषदं भो ब्रूही'त्यादिप्रयोगदर्शनाद्धात्वर्थमाह—उपनिषच्छब्देनेति। क्लृप्तावयवशक्त्यैव प्रयोगसम्भवे समुदायशक्तिरुपनिषच्छब्दस्य न कल्पनीयेत्याह—केन पुनरिति। 'षद्लृ' विशरणगत्यवसादनेष्विति धातो-
१० र्विशरणमर्थमादाय योगवृत्तिमाह—उच्यत इति। विषयेषु क्षयिष्णुत्वादिदोषदर्शनाद्विरक्ताः केचन मुमुक्षवः प्रसिद्धा न सर्वे भवादृशाः कामुका एनेति यच्छब्देन प्रसिद्धार्थद्योतकेन कथयति। आनुश्रविकाः शब्दप्रतिपन्नाः स्वर्गभोगादयः। उपसद्येति। आचार्योपदेशाल्लब्ध्वा यावत्साक्षात्कारं शीलयन्ति संसार्यसंसार्यैक्यासम्भावनादि निरस्यन्तीत्यर्थः।

गोपालयतीन्द्रटीका

ब्रह्मविद्यां प्राह यस्माच्च ब्रह्मविद्या लोके वृद्धिं गता तं नमस्करोति—नचिकेतस इति। नम इति सम्बन्धः। चकारो
१५ मङ्गलद्वयसमुच्चयद्वारा भक्तेर्विद्याप्राप्त्यङ्गत्वसूचकः।

यदर्थं मङ्गलाचरणं कृतं तत्प्रतिजानीते—अथेत्यादिना। अथशब्दो मङ्गलार्थः। काठकोपनिषद्वल्लीनां मृत्युनचिकेतः सम्वादपरिसमाप्तिपर्यन्ता काठकोपनिषत्। तदेकदेशा वल्ल्यो लताः कल्पलतावदभीष्टफलदाः। तासां वृत्तिर्भाष्यं तल्लक्षणसत्त्वादारभ्यते प्रक्रम्यत इत्यर्थः। ननु भर्तृप्रपञ्चादिभिरेव व्याख्यातत्वान्नाऽऽरम्भणीया वृत्तिरित्यत आह—अल्पग्रन्थेति। अन्येषां शब्दतो बहुत्वादर्थतश्च न्यूनत्वात्तैरगतार्थं भाष्यम्। अल्पा ग्रन्थाः
२० शब्दा यस्या सा तथोक्ता। ननु 'अत्ता चराचरग्रहणात्' इत्यादिभिरधिकरणैरेव निर्णीतार्थत्वादुपनिषन्न व्याख्येयेत्यत आह—सुखार्थेति। सुखेनानायासेनार्थस्य वाक्यार्थस्य प्रबोधनार्थं सम्यग्ज्ञानाय पदार्थज्ञानपूर्वकवाक्यार्थज्ञानायेति यावत्। ननूपनिषदो वृत्तिर्नाऽऽरब्धव्याऽधिकारिप्रयोजनविषयसम्बन्धानामभावात्। तथा हि—प्राणिनां कामकलुषितचेतसामुपनिषच्छ्रवणात्पराङ्मुखत्वेन विवेकादिमतोऽधिकारिणो दुर्लभत्वादुपनिषद्भिः कर्तृत्वादिविशिष्टजीवस्यासंसारिब्रह्मात्मताया प्रतिपादयितुमशक्यत्वेन ब्रह्मात्मैक्यविषयाभावादेव प्रयोजनमपि न लभ्यते बन्धस्य सत्यत्वेन
२५ विद्यायास्तन्निवर्तकत्वायोगात्कर्मभिरेव तन्निवृत्तेः सम्भवाच्चात एव सम्बन्धो नेत्याशङ्क्योपनिषच्छब्दनिर्वचनेन विद्याया विशिष्टाधिकार्यादिमत्त्वप्रदर्शनेन तज्जनकग्रन्थस्यापि विषयादिमत्त्वं दर्शयितुमादावुपनिषच्छब्दस्य रूपनिष्पत्तिप्रकारं तावदाह—उपनिपूर्वस्येति। शिथिलीकरणप्राप्तिनाशार्थकस्य क्विबिति प्रत्ययोऽन्ते यस्य स तथा। तस्य सदेर्धातोरुपपूर्वस्य निपूर्वस्य रूपं निष्पन्नशब्दस्वरूपमुपनिषदित्यर्थः। एवमुपनिषच्छब्दस्वरूपं निरुच्यो'पनिषदं भो ब्रूही'त्यादौ ब्रह्मविद्यायामुपनिषच्छब्दप्रयोगदर्शनादुपनिषच्छब्देन ब्रह्मविद्योच्यत इत्याह—उपनिषच्छब्देनेति।
३० उक्तश्रुतिप्रसिद्धिद्योतकश्चशब्दः। व्याख्यातुमिष्टो ग्रन्थ उपनिषद्रूपस्तस्य प्रतिपाद्यमधिकारिणश्च वेद्यं यद्वस्तु ब्रह्मात्मैक्यं तद्विषयो यस्याः सा तथा। ननूपनिषच्छब्देन विद्या किं समुदायशक्त्याऽभिधीयत उतावयवशक्त्या। नाऽऽद्यः। लोके विद्यायामुपनिषच्छब्दस्य प्रयोगाभावेन समुदायशक्तेरक्लृप्तत्वात्कल्प्यायाश्च क्लृप्तावयवशक्त्या बाध्यत्वात्। न द्वितीयः। योगवृत्तेरन्यत्रापि सम्भवादिति शङ्कते—केनेति। अर्थयोगोऽर्थसम्बन्धस्तेन कमर्थं सम्बन्धमादायोपनिषच्छब्देन विद्योच्यते इत्यर्थः। उक्तरीत्या न समुदायार्थो नाप्यवयवार्थ इति भावः। 'षद्लृ' विशरण-
३५ गत्यवसादनेष्विति स्मृतेरुपनिषच्छब्दस्यावयववृत्तिं विद्यायां दर्शयिष्यामीत्याह—उच्यत इति। प्रथममुपशब्दलक्ष्यार्थमाह—य इति। दृष्टाः प्रत्यक्षेण स्रक्चन्दनवनितादयः शब्दश्रवणमनुगम्या आनुश्रविकाः। ते च ते विषयाश्च तेभ्यः क्षयिष्णुत्वसातिशयत्वादिभिर्हेतुभिर्विगता तृष्णाऽऽशा येषां ते तथारूपाः सन्तः। इदमुपलक्षणं शमादेः। मुमुक्षवो मोक्षेच्छवः प्रसिद्धाः। शान्तो दान्त इत्यादौ वक्ष्यमाणलक्षणं स्वरूपं यस्याः सा तां विद्यामुपसद्योपगम्य प्राप्येत्यर्थः। निशब्दार्थमाह—तन्निष्ठतयेति। तस्यां निष्ठाऽनन्यव्यापारता येषां ते तन्निष्ठास्तेषां भावस्तन्निष्ठता तया

संसारबीजस्य विशरणाद्धिसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते। तथा च वक्ष्यति—"निचाय्य तन्मृत्युमुखात्प्रमुच्यते" इति।

पूर्वोक्तविशेषणान्मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत्। तथा च वक्ष्यति—"ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः" इति। लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याऽप्युपनिषदित्युच्यते। तथा च वक्ष्यति—"स्वर्गलोका अमृतत्वं भजन्ते" इत्यादि। ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति। उपनिषदमधीमहेऽध्यापयाम इति च। नैष दोषोऽविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद्विद्यायां च सम्भवात्। ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः। "आयुर्वै घृतमि"त्यादिवत्। तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्येति[1]। एवमुपनिषन्निर्वचनेनैव विशिष्टोऽधिकारी विद्यायामुक्तः। विषयश्च विशिष्ट उक्तो विद्यायाः परं ब्रह्म प्रत्यगात्मभूतम्। १०

### आनन्दगिरिटीका

गत्यर्थमादायाऽऽह—पूर्वोक्तेति। अग्निविद्यायामप्यवसादनमादायोपनिषच्छब्दस्य वृत्तिमाह—लोकादिरिति। भूरादिलोकानामादिः प्रथमजो ब्रह्मणो जातो ब्रह्मजः स एव जानातीति ज्ञः। ग्रन्थे तु भक्त्येति=उपचारेणोपनिषच्छब्दप्रयोग इत्यर्थः। उपनिषच्छब्दनिर्वचनेन सिद्धमर्थमाह—एवमित्यादिना। आत्यन्तिकी निदाननिवृत्त्या निवृत्तिर्विवक्षिता। निदानं चान्वयव्यतिरेकशास्त्रन्यायेभ्यः संसारस्याऽऽत्मैकत्वाविद्या। सा च न कर्मणा विनिवर्ततेऽतो १५ विद्यायाः प्रयोजनेन साध्यसाधनलक्षणः सम्बन्ध इत्यर्थः।

### गोपालयतीन्द्रटीका

निश्चयेन फलावश्यकत्वबुद्ध्या शीलयन्त्यसंसार्यैक्यासम्भावनां निरस्यन्ति साक्षात्कारपर्यन्तमित्यर्थः। धात्वर्थद्वयं संगृह्याऽऽह—तेषामिति। संसारबीजस्य कर्तृत्वादिकारणस्याविद्यादेरादिपदेन कामकर्मादिपरिग्रहः। विशरणादित्यस्य व्याख्यानं विशसनादिति। शिथिलीकरणादित्यर्थः। अवसादनार्थमाह—हिंसनादिति। उक्तार्थमुपसंहरति— २० इत्यनेनेति। उक्तेऽर्थे श्रुतिं प्रमाणयति—तथा चेति।

सदेर्गत्यर्थमादायाऽऽह—पूर्वोक्तेति। कर्तृत्वाद्यनर्थमूलाविद्यां निहत्य पूर्वोक्तविशेषणान्साधनचतुष्टयसम्पन्नान्सादयति परब्रह्म गमयतीति व्युत्पत्त्या ब्रह्मगमयितृत्वयोगेन योगात्सम्बन्धाद्ब्रह्मविद्योपनिषच्छब्देनोच्यत इत्यर्थः। उक्तेऽर्थे व्याख्येयश्रुतिवाक्यं प्रमाणयति—तथा चेति। विद्यया ब्रह्म प्राप्तो विगतं रजो यस्मात्स विरजोऽज्ञानशून्योऽभूत्। अत एव कार्यनिवृत्तिरित्याह—विमृत्युरिति। मृत्योर्मरणोपलक्षितसंसाराद्विगत इत्यर्थः। ननु २५ व्याचिख्यासितग्रन्थप्रतिपाद्यविद्योपनिषच्छब्देनोच्यत इत्ययुक्तम्। तथात्वेऽग्निविद्याऽप्रकाशनापत्तेरित्याशङ्क्य सदेरग्निविद्यायामवसादनविशरणार्थावादायोपनिषच्छब्दस्य वृत्तिमाह—लोकादिरिति। लोकानामादिः प्रथमजो ब्रह्मणो जातो ब्रह्मजः स एव जानातीति ज्ञस्तद्विषयायाः अग्निविषयायाः। जरादीत्यादिपदेन मरणादिसंग्रहः। वृन्दस्य समूहस्यावसादयितृत्वेन धात्वर्थयोगादग्निविद्याऽप्युपनिषच्छब्देनोच्यत इत्यन्वयः। इतरक्रियातो वैषम्यमाह—लोकान्तर इति। उक्तेऽर्थे वाक्यशेषं प्रमाणयति—तथा चेति। स्वर्गलोका यजमाना अमृतत्वं देवत्वं भजन्ते ३० प्राप्नुवन्तीत्यर्थः। उपनिषच्छब्दस्य ग्रन्थेऽध्यापकाध्येतृप्रसिद्धिविरोधं शङ्कते—नन्विति। प्रथमचकार एवकारार्थः क्रियान्वयी। द्वितीयः प्रयोगद्वयसमुच्चयार्थः। उपपादितयोगार्थस्य विद्यायामेव सम्भवात्सैव तच्छब्देनोच्यते इति परिहरति—नैष दोष इति। प्रतिज्ञायां हेतुमाह—अविद्येति। अविद्याकामकर्मेत्येवमादिर्यः संसारस्तस्य कर्तृत्वादेर्हेतुस्तस्य विशरणादेरादिपदेन गत्यवसादनयोर्ग्रहणं भवति। ननु ग्रन्थे प्रयोगः कथमित्यत आह—ग्रन्थस्यापीति। तादर्थ्येनेति सोऽर्थः प्रयोजनं यस्य स तदर्थस्तस्य भावस्तादर्थ्यं तज्जनकत्वेनेति यावत्। स शब्द उपनिषदिति ३५ यस्य स तच्छब्दस्तस्य भावस्तच्छब्दत्वं तस्योपपत्तेः सम्भवादित्यर्थः। तज्जनके तच्छब्दप्रयोगे दृष्टान्तमाह—आयुरिति। आयुष्प्रदे घृत आयुष्पदवदित्यर्थः। उपसंहरति—तस्मादिति। ग्रन्थे तु भक्त्येति लक्षणयोपनिषच्छब्दप्रयोग इत्यर्थः। उपनिषच्छब्देन सिद्धमर्थमाह—एवमित्यादिना। उपनिषन्निर्वचनमुपनिषच्छब्दस्य योगार्थकथनं

१. भज्यते मुख्यार्थात् च्याव्यते पदमनयेति भक्तिः गौणीवृत्तिरित्यर्थः।

**तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश सोऽमन्यत ॥ २ ॥**

प्रयोजनं चास्या उपनिषद आत्यन्तिकी संसारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा। सम्बन्धश्चैवंभूतप्रयोजनेनोक्तः। अतो यथोक्ताधिकारिविषयप्रयोजनसम्बन्धाया विद्यायाः करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसम्बन्धा एता वल्ल्यो भवन्तीति।

५ अतस्ता यथाप्रतिभानं व्याचक्ष्महे—तत्राऽऽख्यायिका विद्यास्तुत्यर्था। उशन्कामयमानो ह वा इति वृत्तार्थस्मरणार्थौ निपातौ। वाजमन्नं तद्दानादिनिमित्तं श्रवो यशो यस्य स वाजश्रवा रूढितो वा तस्यापत्यं वाजश्रवसः किल विश्वजिता सर्वमेधेनेजे तत्फलं कामयमानः। स तस्मिन्क्रतौ सर्ववेदसं सर्वस्वं धनं ददौ दत्तवान्। तस्य यजमानस्य ह नचिकेता नाम पुत्रः किलाऽऽस बभूव ॥ १ ॥

तं ह नचिकेतसं कुमारं प्रथमवयसं सन्तमप्राप्तप्रजननशक्तिं बालमेव [1]श्रद्धाऽऽस्तिक्यबुद्धिः पितुर्हितकाम-
१० प्रयुक्ताऽऽविवेश प्रविष्टवती। कस्मिन्काल इत्याह—ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु। स आविष्टश्रद्धो नचिकेता अमन्यत ॥ २ ॥

### आनन्दगिरिटीका

'वश' कान्तावित्यस्य शत्रन्तं रूपमुशन्निति। श्रवः कीर्तिः। सर्वमेधेन सर्वस्वदक्षिणेनेजे यजनं कृतवानित्यर्थः॥१॥ सदसि यज्ञसभायां येऽन्ये मिलिता ब्राह्मणास्तेभ्यस्च ॥ २ ॥

१५

### गोपालयतीन्द्रटीका

तेन विशरणावसादनार्थानुगमेन विद्याया विवेकादिविशेषणविशिष्टोऽधिकार्युक्तो गत्यर्थानुगमेन मुमुक्षुशब्दितत्वम्पदलक्ष्यप्रत्यगात्मभूतं परं ब्रह्म विद्याया विशिष्टोऽसाधारणो विषय उक्तोऽस्या विद्यायाः प्रयोजनं चाविद्यानिवृत्तिद्वारा संसारनिवृत्तिरात्यन्तिक्यारोपिताभावस्याधिष्ठानात्मकत्वेन ब्रह्मप्राप्तिलक्षणा निवृत्तिः। अथवा ब्रह्मप्राप्तेस्तद्रूपनिरतिशयानन्दप्राप्तेर्लक्षणा ज्ञापिकेत्यर्थः। सम्बन्धमाह—सम्बन्धश्चेति। एवंभूतप्रयोजनेन संसारनिवृत्त्यादि-
२० प्रयोजनेन। सम्बन्ध उक्तो ज्ञानादीनामिति शेषः। अयं भावः—न हि सर्वो लोकः कामादिपरतन्त्रस्तद्वदनेकजन्मार्जितसुकृतपरिपाकाच्छुद्धसत्त्वस्याधिकारिणः कस्यचित्सम्भवाद्बन्धस्य च मिथ्यात्वेनाविद्याकल्पितत्वात्कर्मभिर्निवृत्त्ययोगादन्वयव्यतिरेकाभ्यां शुक्तितत्त्वज्ञानेनेव रजतभ्रान्तेर्न्यायेन शास्त्रेण च ज्ञानेनैव बन्धनिवृत्तेरत एवाकर्तृब्रह्मात्मैक्यविषयस्यापि सम्भवः। एवं ज्ञानेनाविद्यानिवृत्तेर्जन्यजनकभावः सम्बन्ध इत्याद्युहनीयमित्यधिकारिविषयप्रयोजनसम्बन्धसत्वेन विद्यायास्तज्जनकवल्लीनामपि तैः सम्बन्धादधिकार्यादिमत्त्वमित्यभिप्रेत्याऽऽह—अत इति।
२५ प्रकाशकत्वेन जनकत्वेन। विशिष्टेति। विशिष्टान्यधिकारिविषयप्रयोजनानि तैः सम्बद्धा एता व्याख्येयत्वेन बुद्धिस्थाः। तासां व्याख्येयत्वमुपसंहरति—इत्यत इति।

औद्धत्यं परिहरति—यथेति। यथाप्रतिभानं यथाज्ञानं व्याचक्ष्महे व्याख्यानं कुर्महे। नन्वन्यच्छ्रेय इत्यारभ्यैवोपनिषद्व्याख्यानार्हा विद्याजनकत्वात्प्रथमायाश्चाऽऽख्यायिकारूपत्वेन विद्यानङ्गत्वादित्यत आह—आख्यायिकेति। विद्यायां प्रवृत्तिहेतुस्तुत्युपयोगित्वेन तदधिकारहेत्वग्निविद्याप्रतिपादकत्वेनाऽऽद्याया अपि व्याख्येयत्व-
३० मिति भावः। वश कान्तौ कान्तिरिच्छा। वशधातोः शतृप्रत्यय उशन्निति रूपं, वृत्तार्थो भूतार्थः। यशः कीर्तिः। रूढितो वा वाजश्रवा इत्यनुवर्तते। सर्वमेधेन सर्वस्वदक्षिणाकेनेजे यजनं कृतवानित्यर्थः। तत्फलं विश्वजितः फलम्। अर्थान्तरप्रसिद्धद्योती द्वितीयो निपातः ॥ १ ॥

अप्राप्तप्रजननशक्तिमप्राप्ता प्रजनने प्रजोत्पादने शक्तिर्येन स तं श्रद्धाऽऽविवेशेत्यन्वयः। ननु गुर्वधीनः स्वार्थं न व्यापारयेदिति न्यायात्कथं स्वेष्टानुकूला श्रद्धेत्यत आह—पितुरिति। काम्यत इति कामो हितश्चासौ कामश्च
३५ हितकामः स्वर्गादिरिति यावत्। तेन प्रयुक्ता जनिता जनकोद्देशज्ञानाधीनेत्यर्थः। प्रविष्टवतीति। स श्रद्धावाञ्जात इति भावः। दक्षिणास्वित्यादिवाक्यमाकाङ्क्षापूर्वकमपेक्षितं पूरयन्व्याकरोति—कस्मिन्निति। सदस्येभ्यश्चेति।

---

१. श्रद्धा—यथाशास्त्रं शास्त्रीयकर्मणः दक्षिणा दातव्या इति बुद्धिः। अयं तु पीता जीर्णा अफलाः गावः दक्षिणात्वे प्रतिषिद्धा ददाति इति चिन्ता।

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥**
**स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं तꣳहोवाच मृत्यवे त्वा ददामीति ॥ ४ ॥**

कथमित्युच्यते—पीतोदका इत्यादिना दक्षिणार्था गावो विशेष्यन्ते । पीतमुदकं याभिस्ताः पीतोदकाः । जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः । दुग्धः दोहः क्षीराख्यो यासां ता दुग्धदोहाः । निरिन्द्रिया अप्रजननसमर्था जीर्णा निष्फला गाव इत्यर्थः । यास्ता एवंभूता गा ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छन्ननन्दा अनानन्दा असुखा ५ नामेत्येतद्ये ते लोकास्तान्स यजमानो गच्छति ॥ ३ ॥

तदेवं क्रत्वसम्पत्तिनिमित्तं पितुरनिष्टं फलं मया पुत्रेण सता निवारणीयमात्मप्रदानेनापि¹ क्रतुसम्पत्तिं कृत्वेत्येवं मत्वा पितरमुपगम्य स होवाच पितरं हे तत तात कस्मै, ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसि प्रयच्छ-

आनन्दगिरिटीका

पीतमुदकं प्रागेव नोत्तरकालं पानशक्तिरप्यस्तीत्यर्थः ॥ ३-४ ॥ १०

गोपालयतीन्द्रटीका

ऋत्विग्भ्योऽन्ये सदसि यज्ञसभायां ये मिलितास्तेभ्यश्च विभागेनेत्येतस्यैतावदित्युपनीयमानासु दीयमानासु दक्षिणास्विति व्याचष्टे—दक्षिणार्थास्विति । विशेष्यं पूरयति—गोष्विति । ऋत्विगादिभ्यो गोषु दीयमानासु तं श्रद्धाऽऽविवेशेत्यन्वयः ॥ २ ॥

मननप्रकारं प्रश्नपूर्वकमवतारयति—कथमित्यादिना । विशेष्यन्ते पीतोदकत्वादिविशेषणेन संयुज्यन्ते । १५ पीतमुदकं प्रागेव नोत्तरकालं पानशक्तिरप्यस्तीत्यर्थः । एवं दानोत्तरकाले तृणभक्षणे दोहने च न शक्तिरित्यर्थो द्रष्टव्यः । अप्रजननसमर्थाः प्रजनने वत्सप्रसवे सामर्थ्यशून्याः । निष्फला इति । शकृदपि द्रवीभूतेति निष्फला इत्युच्यन्ते । यः प्रयच्छन्स गच्छतीत्यन्वयः । कानित्यपेक्षायामाह—त इति । तच्छब्दः प्रसिद्धार्थक इत्याह—य इति । प्रसिद्धा लोका इत्यर्थः । कीदृग्विधा इत्यपेक्षायामाह—अनन्दा इति । न नन्दा आनन्दयन्तीति नन्दाः सुखजनकास्ते न भवन्तीत्यनन्दास्तदाह—अनानन्दा असुखनामान इत्येतदिति ॥ ३ ॥ २०

मननप्रकारमुपसंहरन्नुत्तरवाक्यमुपसंहरति—तदेवमित्यादिना । एवं पूर्वोक्तगोदक्षिणया क्रतोरसम्पत्तिरसाङ्गता निमित्तं यस्य फलस्य तथा । पुत्रेण सता पुंनाम्नो नरकात् त्रायत इति व्युत्पत्तेः सत्पुत्रेणेति यावत् । अपिशब्दो द्रव्यान्तरस्वातन्त्र्याभावयोः सूचकः । आत्मप्रदानेनापि क्रतुसम्पत्तिं कृत्वा पुत्रेण सता मया पितुरनिष्टं फलं निवारणीयमित्यन्वयः । दीर्घाभावश्छान्दस इत्याह—ततेति । दास्यसीति स नचिकेताः पितरमुवाचेत्यन्वयः ।

---

१. यद्यपि भार्यापुत्रादीनां सर्वस्वदाने देयत्वेन ग्रहणं नास्ति तेषां यजमानस्वत्वेऽपि सर्वस्वं दद्यात् २५ इतिवचनेन धनादिकमेव ग्राह्यं न तु पितृपुत्रादय इति निर्णीतं षष्ठाध्याये सप्तमप्रथमाधिकरणे तथापि बालत्वात् पुत्रोऽपि देयः स्वत्वादिति मन्यते । यद्वा जानन्नपि जीर्णगोदानेनोत्पन्नं क्रतुवैगुण्यं आत्मप्रदानेनापि अपनेष्यामीति मत्वा पृच्छति पितरं तत कस्मै मां दास्यसीति । अत एव भाष्ये—"मया पुत्रेण सता पितुरनिष्टं फलं निवारणीमात्मप्रदानेनापि क्रतुसम्पत्तिं कृत्वा" इत्युक्तम् ।

नाचिकेतोपाख्यानमानुशासनिकपर्वणि भारतेऽपि श्रूयते । तत्रायं विशेषः । पिता उद्दालकः कदाचित् ३० पुत्रं नदीतीरे स्वेन प्रातर्निक्षिप्तं विस्मृतं च दर्भकलशादिकमानयेत्युक्तवान् । नदीतीरं गत्वा नचिकेताः नदीवेगसमाप्लुतं तत्सर्वमपश्यन् प्रतिनिवृत्तः दर्भादिकं नदीतीरे न पश्यामीत्यवोचत् । पिता तु कोपेन पुत्रं "यमं पश्ये"ति शशाप । पुत्रस्तु प्रसीदेति ब्रुवन्नेव भूमौ पतितः । पितापि किं मयोक्तमिति दुःखेन भूमौ पतितः । नचिकेताः परदिने सुप्त्वेवोत्थितः स्वस्य पित्राज्ञावशात् यमलोकदर्शनं यमेन सत्कारः पुण्यकृतां लोकानां दर्शनं, दर्शनेनैव पित्राज्ञा निर्वर्तितेति यमेनाभ्यनुज्ञातस्य पुनः पितृसमीपगमनं ३५ चोक्त्वा यमोक्तं गोदानफलं च प्रोवाच—इति ।

बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किꣳस्विद्यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥ ५ ॥
अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे । सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥ ६ ॥

सीत्येतत् । एवमुक्तेन पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमप्युवाच कस्मै मां दास्यसि कस्मै मां दास्यसीति । नायं कुमारस्वभाव इति क्रुद्धः सन्पिता तं ह पुत्रं किलोवाच मृत्यवे वैवस्वताय त्वा त्वां ददामीति ॥ ४ ॥

५ स एवमुक्तः पुत्र एकान्ते परिदेवयाञ्चकार । कथमित्युच्यते—बहूनां शिष्याणां पुत्राणां वैमि गच्छामि प्रथमः सन्मुख्यया शिष्यादिवृत्त्येत्यर्थः । मध्यमानां च बहूनां मध्यमो मध्यमयैव वृत्त्यैमि । नाधमया कदाचिदपि । तमेवंविशिष्टगुणमपि पुत्रं मां मृत्यवे त्वा ददामीत्युक्तवान्पिता । स किंस्विद्यमस्य कर्तव्यं प्रयोजनं मया प्रत्तेन करिष्यति यत्कर्तव्यमद्य । नूनं प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान्पिता ॥ ५ ॥

तथापि तत्पितुर्वचो मृषा मा भूदित्येवं मत्वा परिदेवनापूर्वकमाह पितरं शोकाविष्टं किं मयोक्तमिति । १० अनुपश्याऽऽलोचय निभालयानुक्रमेण यथा येन प्रकारेण वृत्ताः पूर्वेऽतिक्रान्ताः पितृपितामहादयस्तव । तान्दृष्ट्वा च तेषां वृत्तमास्थातुमर्हसि वर्तमानाश्चापरे साधवो यथा वर्तन्ते तांश्च प्रतिपश्याऽऽलोचय तथा । न च तेषु मृषाकरणं वृत्तं वर्तमानं वाऽस्ति । तद्विपरीतमसतां च वृत्तं मृषाकरणम् । न च मृषाकृत्वा कश्चिदजरामरो भवति । यतः

### आनन्दगिरिटीका

यथावसरं गुरोरिष्टं ज्ञात्वा शुश्रूषणे प्रवृत्तिर्मुख्या । आज्ञावशेन मध्यमा । तदपरिपालनेनाधमा । मया १५ दत्तेन यत्कर्तव्यमद्य यमस्य करिष्यति तत्किं कर्तव्यमासीन्नासीदेव विधानाभावात् । कथं तर्ह्युक्तवानित्यत आह—नूनमिति ॥ ५-६ ॥

### गोपालयतीन्द्रटीका

एवं पूर्वोक्तवचसोक्तेन प्रेरितेन द्वितीयं द्वितीयवारं तृतीयं तृतीयवारं पुनः पुनरप्युवाचेत्यर्थः । किमित्यत आह—कस्मा इति । अपेक्षितं पूरयन्नुत्तरमवतारयति—नायमिति ॥ ४ ॥

२० एवमुक्त इति । पित्रेति शेषः । परिदेवयाञ्चकार दीर्घचिन्तां कृतवानित्यर्थः । चिन्ताप्रकारं प्रश्नपूर्वकमवतारयति—कथमित्यादिना । बहूनां मुख्यवृत्तिमतामिति शेषः । मुख्यया यथावसरं ज्ञात्वा शुश्रूषणे प्रवृत्तिरूपयेत्यर्थः । शिष्यादीत्यादिपदेन पुत्रभार्यादयो गृह्यन्ते । मध्यमवृत्तिभाजां शिष्यादीनां मध्यमानाम् । चकारो वृत्तिद्वयं कालभेदेन नचिकेतसि विद्यत इति द्योतनार्थः । मध्यमयैवेति । आज्ञादिवशेन शुश्रूषणे प्रवृत्तिरूपयेत्यर्थः । नाधमया पित्रादिना कोपितः सञ्छुश्रूषणेऽप्रवृत्तिरूपया । पित्रादिना कोपितः कदाचिदप्यधमया नैमीति सम्बन्धः । एवंविशिष्टगुणं हीनवृत्ति-२५ रहितम् । मुख्यमध्यमवृत्तिभाजो गुणवतः पुत्रस्य मृत्यवे दानमनुचितमित्याह—अपि पुत्रमिति । मया प्रत्तेन दत्तेन द्वारा यत्कर्तव्यमद्य यमस्य करिष्यति तत्प्रयोजनं किं कर्तव्यमासीन्नाऽऽसीदेव विधानाभावात् । कथं तर्ह्युक्तवानत आह—नूनमिति । नूनं निश्चयः ॥ ५ ॥

अपेक्षितं पूरयन्नुत्तरमवतारयति—तथापीति । तद्वचः पितुर्मृषा मा भूदित्येवं परिदेवनापूर्वकं किं मयोक्तमिति शोकाविष्टं पितरमाहेत्यन्वयः । निभालयेति । दीर्घालोचनं कुर्वित्यर्थः । उपसर्गं व्याचष्टे—अन्विति । क्रमेण । ३० पितृपितामहाः क्रमेण वृत्ताः स्वधर्मे सत्यवचनादौ स्थिताः । तव पितृपितामहादयो येन प्रकारेण वृत्तास्तं प्रकारमालोचयेत्यन्वयः । तद्वृत्तालोचनेन मम किं स्यादित्यत आह—तानिति । वृत्तं सत्यवचनाद्यास्थातुं प्राप्तुमर्हसि योग्यो भवसीत्यर्थः । आलोचयेत्यनन्तरं तांश्च दृष्ट्वा तेषामपि वृत्तं प्राप्तुमर्हसीत्यनुषङ्गः । न च तद्वृत्तमसत्यवचनादिसहितमित्याह—न चेति । वृत्तं भूतम् । ननु भूताभावेऽपि वर्तमानं भावि वा स्यादित्यत आह—वर्तमानमिति । वाशब्दोऽनुक्तभविष्यदुपसंग्रहार्थः । प्रत्यक्षादिप्रमाणविरोधात्तेष्वसद्वृत्ते नेति भावः । ननु मृषाकरणं ३५ चेद्देवत्वादिप्राप्तिहेतुस्तदा तत्त्यागोऽनुचित इत्याशङ्क्य तदेव नेत्याह—न चेति । तत्र हेतुत्वेन वाक्यमवतारयति—यत इति । सस्यमिवेति । यथा सस्यं फलितं रसवियुक्तं नश्यत्येवं मनुष्योऽपि जीर्णो वृद्धावस्थां प्राप्य म्रियते देहं

**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥**

**आशाप्रतीक्षे संगतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।**
**एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥**

सस्यमिव मर्त्यो मनुष्यः पच्यते जीर्णो म्रियते । मृत्वा च [१]सस्यमिवाऽऽजायते आविर्भवति पुनः एवमनित्ये जीवलोके किं मृषाकरणेन । पालयाऽऽत्मनः सत्यम् । प्रेषय मां यमायेत्यभिप्रायः ॥ ६ ॥ ५

स एवमुक्तः पिताऽऽत्मनः सत्यतायै प्रेषयामास । स च यमभवनं गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते । प्रोष्याऽऽगतं यमममात्या भार्या वा ऊचुर्बोधयन्तो वैश्वानरोऽग्निरेव साक्षात्प्रविशत्यतिथिः सन् ब्राह्मणो गृहान्दहन्निव तस्य दाहं शमयन्त इवाग्नेरेतां पाद्यासनादिदानलक्षणां शान्तिं कुर्वन्ति सन्तोऽतिथेर्यतोऽतो हराऽऽहर हे वैवस्वतोदकं नचिकेतसे पाद्यार्थम् ॥ ७ ॥

यतश्चाकरणे प्रत्यवायः श्रूयते—आशाप्रतीक्षे अनिर्ज्ञातप्राप्येष्टार्थप्रार्थनाऽऽशा निर्ज्ञातप्राप्यार्थप्रतीक्षणं प्रतीक्षा ते आशाप्रतीक्षे । सङ्गतं तत्संयोगजं फलं सूनृतां च सूनृता हि प्रिया वाक् तन्निमित्तं च । इष्टापूर्ते इष्टं यागजं पूर्तमारामादिक्रियाजं फलम् । पुत्रपशूंश्च पुत्रांश्च पशूंश्च सर्वानेतत्सर्वं यथोक्तं वृङ्क्त आवर्जयति विनाशयतीत्येतत् । पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्य । यस्यानश्नन्नभुञ्जानो ब्राह्मणो गृहे वसति । तस्मादनुपेक्षणीयः सर्वावस्थास्वप्यतिथिरित्यर्थः ॥ ८ ॥ १०

### आनन्दगिरिटीका

१५

श्रुत्यनुक्तपूर्वभाषणादिकमपि कथायामपेक्षितं पूरयति—स एवमुक्तः पितेति ॥ ७-८ ॥

### गोपालयतीन्द्रटीका

त्यजतीत्यर्थः । न केवलं जरामरणवानेव किं तु जनिमानपीत्याह—मृत्वा चेति । अवस्थाद्वयसमुच्चयार्थश्चकारः । सस्यमिवेति । प्रावृट्काले वर्षधारासिक्तं सस्यं यथा प्रादुर्भवति तथा सञ्चितकर्मोद्भवे मनुष्योऽपि देहान्तरं प्राप्नोतीत्यर्थः । पुनराविर्भवति म्रियते च यतोऽतो न कश्चिन्मृषा कृत्वाऽजरोऽमरो भवतीत्यन्वयः । प्रतिपदं व्याख्याय तात्पर्यार्थमाह—एवमिति । किं प्रयोजनं न किमपीत्यर्थः । यमाय प्रेषय तदन्वात्मनः सत्यं पालयेत्यन्वयः ॥ ६ ॥ २०

श्रुत्यनुक्तपूर्वभाषणादिकं कथायामपेक्षितमिति पूरयति—स एवमुक्त इति । सत्यतायै वचःसत्यत्वाय । प्रोषिते ब्रह्मभवनं गते । स नचिकेता यमभवनं गत्वा तिस्रो रात्रीरुवासेत्यन्वयः । प्रोष्य ब्रह्मभवनं गत्वा तस्मादागतं यमं बोधयन्त ऊचुरित्यन्वयः । अतिथिः सन्ब्राह्मणः साक्षादग्निरिव दहन्निव गृहान्प्रविशति । तस्याग्नेर्दाहं शमयन्त इव सन्तोऽतिथेः शान्तिं कुर्वन्ति यत इत्यन्वयः । किमर्थमित्यपेक्षायामाह—नचिकेतस इति । नन्वतिथेः पूजा किमिष्टप्राप्तयेऽथानिष्टनिवृत्तये । नोभयं मानाभावादित्याशङ्क्य यस्याग्निहोत्रमित्यादिश्रुतेरकरणे प्रत्यवायान्नित्यकर्मवत्करणेऽभ्युदय इति मत्वाऽऽह—यत इति । चकारः शिष्टाचारावगताभ्युदयहेतुत्वे समुच्चयार्थः ॥ ७ ॥ २५

श्रवणमेव व्याकरोति—आशेत्यादिना । अनिर्ज्ञातोऽत्यन्तमज्ञातः प्राप्यः प्राप्तुं योग्यः कनकाचलादिस्तस्य प्रार्थना मम भूयादितीच्छा । नितरां प्रत्यक्षादिना ज्ञातः प्राप्योऽर्थो राज्यादिर्यस्याः सा प्रतीक्षेत्यर्थः । योगो देवताध्यानं तज्जं सङ्गतमित्यर्थः । तन्निमित्तमिति । सा प्रियवाङ्निमित्तं यस्य तत्तन्निमित्तं फलमित्यनुवर्तते । यागजं स्वर्गाद्यारामादिक्रियाजं पितृलोकादि । कीदृग्विधस्येत्यल्पमेधस इति । को नाशयतीत्यपेक्षायामाह—यस्येत्यादिना । यस्य ३०

---

१. एतदनन्तरं कर्मकाण्डगतोंऽशः पूरणीयः । तथाहि—अस्मिन्नवसरे काचिददृश्यमानशरीरा दैवीवाक् नचिकेतसं समनुजग्राह परतो गन्तुं सहसोत्थितं—हे नचिकेतः तव पिता मृत्यवे त्वां दत्तवानस्मि इत्युवाच अतः मृत्योर्गृहान् गच्छ । परं तु यदा प्रवासी मृत्युः तदा तद्गृहं गच्छ; तत्र च अनाश्वान् तिस्रो रात्रीः वस प्रत्यागत्य मृत्युः यदि पृच्छेत् "किं प्रथमां रात्रिमाश्ना इति । प्रजान्त इति ब्रूयाः । किं द्वितीयामिति पशूंस्ते इति, किं तृतीयामिति साधुकृत्यां त इति ।" अत एवोपनिषदि मृत्युर्वरं ब्रवीति तिस्रो दास्यन् 'रात्रीर्यदवात्सीर्गृहे मे' इत्यादि । ३५

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥

शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो ।
त्वत्प्रसृष्टं माऽभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥१०॥

५ यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखꣳरात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥११॥

एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुरःसरम् । तिस्रो रात्रीर्यद्यस्मादवात्सीरुषितवानसि गृहे मे ममानश्नन्हे ब्रह्मन्नतिथिः सन्नमस्यो नमस्कारार्हश्च तस्मान्नमस्ते तुभ्यमस्तु भवतु । हे ब्रह्मन्स्वस्ति भद्रं मेऽस्तु तस्माद्भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात्तत्प्राप्त्युपशमेन । यद्यपि भवदनुग्रहेण सर्वं मम स्वस्ति स्यात्तथाऽपि १० त्वदधिकसंप्रसादनार्थमनशनेनोपोषितामेकैकां रात्रिं प्रति त्रीन्वरान्वृणीष्वाभिप्रेतार्थविशेषान्प्रार्थयस्व मत्तः ॥ ९ ॥

नचिकेतास्त्वाह—यदि दित्सुर्वरान्शान्तसङ्कल्प उपशान्तः सङ्कल्पो यस्य मां प्रति यमं प्राप्य किन्नु करिष्यति मम पुत्र इति स शान्तसङ्कल्पः सुमनाः प्रसन्नमनाश्च यथा स्याद्वीतमन्युर्विगतरोषश्च गौतमो मम पिता माऽभि मां प्रति हे मृत्यो । किञ्च त्वत्प्रसृष्टं त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति मामभिवदेत्प्रतीतो लब्धस्मृतिः स एवायं पुत्रो ममाऽऽगत इत्येवं प्रत्यभिजानन्नित्यर्थः । एतत्प्रयोजनं त्रयाणां वराणां प्रथममाद्यं वरं वृणे प्रार्थयेयं यत्पितुः १५ परितोषणम् ॥ १० ॥

मृत्युरुवाच—यथा बुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसमन्विता पितुस्तव भविता प्रीतिसमन्वितस्तव पिता तथैव प्रतीतः प्रतीतवान्सन्नौद्दालकिः । उद्दालक एवौद्दालकिः । अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा मत्प्रसृष्टो

आनन्दगिरिटीका

प्रेतीभूतोऽयमागतो नावलोकनीय इति मत्वोपेक्षां यथा न करोति तथा प्रसादं कुर्वित्याह—किञ्च २० त्वत्प्रसृष्टमिति ॥ ९-१० ॥

औद्दालकिरिति तद्धितः स्वार्थे व्याख्यातोऽपत्यार्थे व्याख्येय इत्याह—द्व्यामुष्यायणो वेति । अमुष्य

गोपालयतीन्द्रटीका

गृहेऽभुञ्जानो ब्राह्मणो वसतीत्यन्वयः । तात्पर्यमाह—तस्मादिति । यस्मादनश्नन्नतिथिः सर्वं नाशयतीति प्रत्यवायः श्रूयते यस्माच्च वृद्धाः पाद्यादिभिरतिथिं पूजयन्ति तस्मादित्यर्थः । सर्वावस्थास्विति । कष्टायामप्यापदीत्यर्थः । २५ अपिशब्दात्स्वस्थायां किमु वक्तव्यमिति भावः ॥ ८ ॥

एवमुक्तो भार्याभिरमात्यैश्चेति शेषः। पूजापुरःसरं नचिकेतसमुपसङ्गम्य समीपं गत्वा मृत्युरुवाचेत्यन्वयः । वचनप्रकारमेव प्रतीकमादाय व्याचष्टे—तिस्र इति। यस्माद्गृहेऽनशनपूर्वकमुषितवान्नमस्कारयोग्यश्च तस्मादित्यर्थः । तस्मादित्युत्तरवाक्यादिपदोक्ताद्दोषादुपशमनं प्रार्थ्यते—स्वस्तीति । अनशनेनानशनपूर्वकम् । तत्प्राप्त्युपशमेन दोषप्राप्तेरुपशमो निरासस्तेनद्वा ( तद्द्वा )रा । नन्वतिथ्यनुग्रहेणैव सर्वं सम्पत्स्यते किं वरदानेनेत्याशङ्क्य परिहरति— ३० यद्यपीत्यादिना । प्रसादनं प्रार्थनम् । उषितां स्थिताम् । अभिप्रेता इच्छाविषयास्तान् ॥ ९ ॥

दित्सुर्दातुमिच्छुः । यमं प्राप्य किन्नु करिष्यति मत्पुत्र इति सङ्कल्पः शान्तो मां प्रति यस्य स शान्तसङ्कल्प इत्यन्वयः । मृत्यो मां प्रति शान्तसङ्कल्पः सुमनसा वीतमन्युश्च यथा स्यान्मत्पिता गौतमः एतत्प्रयोजनमित्यन्वयः । प्रेतीभूतो यमादागतोऽनवलोकनीय इति मत्वोपेक्षां यथा न करोति तथा प्रसादं कुर्वित्याह—किञ्च त्वत्प्रसृष्टमिति । माऽभि मां प्रति लब्धस्मृतिरित्येतद्व्याचष्टे—स एवेति । यत्पितुः परितोषणमेतत्त्वद्दत्तानां वराणामाद्यं वरं ३५ वृण इत्यन्वयः ॥ १० ॥

स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥
स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥१३॥

मयाऽनुज्ञातः सन्नितरा अपि रात्रीः सुखं प्रसन्नमनाः शयिता स्वप्ता वीतमन्युर्विगतमन्युश्च भविता स्यात्त्वां पुत्रं ५ ददृशिवान्दृष्टवान्सन् मृत्युमुखान्मृत्युगोचरात्प्रमुक्तं सन्तम् ॥ ११ ॥

नचिकेता उवाच—स्वर्गे लोके रोगादिनिमित्तं भयं किञ्चन किञ्चिदपि नास्ति । न च तत्र त्वं मृत्यो सहसा प्रभवस्यतो जरया युक्त इह लोकवत्त्वत्तो न बिभेति कुतश्चित्तत्र । किञ्चोभे अशनायापिपासे तीर्त्वाऽतिक्रम्य शोकमतीत्य गच्छतीति शोकातिगः सन् मानसेन दुःखेन वर्जितो मोदते हृष्यति स्वर्गलोके दिव्ये ॥ १२ ॥

एवंगुणविशिष्टस्य स्वर्गलोकस्य प्राप्तिसाधनभूतमग्निं स त्वं मृत्युरध्येषि स्मरसि जानासीत्यर्थः । हे मृत्यो १० ततस्त्वं प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्यं स्वर्गार्थिने । येनाग्निना चितेन स्वर्गलोकाः स्वर्गो लोको येषां ते स्वर्गलोका यजमाना अमृतत्वममरणतां देवत्वं भजन्ते प्राप्नुवन्ति तदेतदग्निविज्ञानं द्वितीयेन वरेण वृणे ॥ १३ ॥

### आनन्दगिरिटीका

प्रख्यातस्यापत्यमामुष्यायणः । द्वयोः पित्रोः पूर्वंभाषादिना सम्बन्धी चासावामुष्यायणश्च । न जारज इत्यर्थः ॥ ११ ॥ १५

स्वर्गसाधनमग्निज्ञानं प्रष्टुं स्वर्गस्वरूपं तावदाह—स्वर्गे लोक इति ॥ १२-१३ ॥

### गोपालयतीन्द्रटीका

प्रथमेन वरेण पितुः सौमनस्यं वृण्वते नचिकेतसे वरप्रदानपरत्वेनोत्तरमवतारयति—मृत्युरिति । पूर्वं वैवस्वतगमनात्त्वत्पिता यथा स्नेहसमन्वित आसीत्तथैव प्रीतिमान्प्रतीतवान्प्रत्यभिजानन्भवितेत्यन्वयः । यथा बुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसमन्विता भविता प्रीतिसमन्वितस्त्वत्पिता तथैव प्रतीतः । प्रतीतवान्सन्निति पाठे २० यथा पूर्वंस्नेहसमन्विता बुद्धिस्त्वय्यासीत्तथैव बुद्धिः पितुर्भवितेत्येकोऽन्वयः । द्वितीयस्तु यथा पूर्वं प्रीतिसमन्वितस्त्वत्पिता तथैव प्रतीतवान्सन्स एवायं पुत्र इति प्रत्यभिज्ञावान्संस्त्वत्पिता प्रीतिसमन्वितो भवितेति । प्रतीत इत्यस्य प्रतीतिमानिति क्वचित्पाठः । औद्दालकिरिति । तद्धितं स्वार्थे व्याख्यायापत्यार्थे व्याचष्टे—द्व्यामुष्यायण इति । अमुष्य प्रख्यातस्यापत्यमामुष्यायणः । उत्पन्नः पुत्रोऽस्यामुभयोरिति भाषादिना द्वयोः सम्बन्धी द्व्यामुष्यायणो न जारज इत्यर्थः । अनुज्ञातोऽनुग्रहसम्पन्नः । सुखमनायासं स्वप्ता स्वापकर्ता स्यात्प्रमुक्तं सन्तं त्वां दृष्टवान्वीतमन्युः स्यान्मया २५ यमाय प्रेरितो मद्वचनमुल्लङ्घ्य समागत इति बुद्धिरहितः स्यादित्यर्थः ॥ ११ ॥

पितुः सौमनस्ये दत्ते स्वर्गसाधनमग्निज्ञानं प्रष्टुं स्वर्गस्वरूपं तावदाह—स्वर्गे लोक इति । आदिपदादाधिभौतिकाधिदैविकचौरादिसंग्रहः । ननु रोगादिनिमित्तभयाभावेऽपि मन्निमित्तं स्यादित्यत आह—न चेति । सहसा प्रभवसि झटिति प्रभवसीत्यर्थः । यत एवमतो जरादियुक्तः सन्निह लोक इव तत्र कश्चिदपि त्वत्तो न बिभेतीत्यन्वयः। उभे तीर्त्वेति वाक्यमन्वयमुखेन व्याचष्टे—किं चेत्यादिना । अतिक्रम्याप्राप्येत्यर्थः । शोकातिगः सञ्शोकमति- ३० क्रान्तः सन् । शोकशब्दार्थमाह—मानसेनेति । चकाराद्बाह्यनिमित्तदुःखराहित्यमुच्यते । दुःखाभावे सुखस्य सम्भावितत्वादाह—मोदत इति ॥ १२ ॥

एवंगुणविशिष्टस्येति । भयमरणाशनायापिपासाशोकरहितत्वगुणेन विशिष्टस्येत्यर्थः । अवबोधहेतुमाह—हे मृत्यो इति । देवतात्वाज्ज्ञानमस्तीति भावः । ज्ञानफलं किमित्यपेक्षायामाह—यत इति । अत इत्यध्याहारः । अग्निज्ञानं श्रद्धारहिताय तत्फलेच्छाविरहिणे च न वाच्यमित्यत आह—श्रद्दधानायेति । श्रद्धया स्वर्गार्थित्वमुपलक्ष्यत ३५ इत्याह—स्वर्गार्थिन इति । देवत्वप्राप्तौ हेतुमाह—येनेति । चितेनोपासितेनेत्यर्थः । यस्मादमृतत्वसाधनमग्निस्तस्मादेतस्याग्नेर्विज्ञानं वृणे प्रार्थये ॥ १३ ॥

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥१४॥
[1]लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाऽऽह तुष्टः ॥१५॥

५ मृत्योः प्रतिज्ञेयम् । प्र ते तुभ्यं प्रब्रवीमि । यत्त्वया प्रार्थितं तदु मे मम वचसो निबोध बुध्यस्वैकाग्रमनाः सन्स्वर्ग्यं स्वर्गाय हितं स्वर्गसाधनमग्निं हे नचिकेतः प्रजानन्विज्ञातवान् सन्नहमित्यर्थः प्रब्रवीमि तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम् । अधुनाऽग्निं स्तौति—अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत् । अथो अपि प्रतिष्ठामाश्रयं जगतो विराड्रूपेण तमेतमग्निं मयोच्यमानं विद्धि जानीहि त्वं निहितं स्थितं गुहायां विदुषां बुद्धौ निविष्टमित्यर्थः ॥ १४ ॥

१० इदं श्रुतेर्वचनम् । लोकादिं लोकानामादिं प्रथमशरीरित्वादग्निं तं प्रकृतं नचिकेतसा प्रार्थितमुवाचोक्तवान्मृत्युस्तस्मै नचिकेतसे । किञ्च या इष्टकाश्चेतव्याः स्वरूपेण । यावतीर्वा संख्यया । यथा वा चीयतेऽग्निर्येन प्रकारेण सर्वमेतदुक्तवानित्यर्थः । स चापि नचिकेताः तन्मृत्युनोक्तं यथावत्प्रत्ययेनावदत्प्रत्युच्चारितवान् । अथ तस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः पुनरेवाऽऽह वरत्रयव्यतिरेकेणान्यं वरं दित्सुः ॥ १५ ॥

आनन्दगिरिटीका

१५ इयं च वक्ष्यमाणा मृत्योः प्रतिज्ञाऽवगन्तव्या । "स त्रेधाऽऽत्मानं व्यकुरुत" इति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिरूपो विराडेव व्यवस्थित इति । तेन विराड्रूपेणाग्निर्जगतः प्रतिष्ठेत्युच्यते ॥ १४ ॥

सप्रपञ्चमग्निज्ञानं चयनप्रकरणाद्द्रष्टव्यमिति श्रुतिरस्मान्बोधयतीत्याह—इदं श्रुतेर्वचनमिति ॥ १५-१६ ॥

गोपालयतीन्द्रटीका

प्रब्रवीमीत्यन्वयः । उ यदित्यर्थे । यत्त्वया प्रार्थितं तत्प्रब्रवीमि मे वचसो निबोधेत्यन्वयः । अस्मच्छब्दस्य २० वचने लक्षणेत्याह—वचस इति । वाक्यादेकाग्रमनाः सावधानचित्तः सन् । हितार्थे यत्प्रत्यय इत्याह—स्वर्गायेति । प्रतिज्ञायाः सम्बोधनस्य च किं प्रयोजनमित्यपेक्षायामाह—प्र त इति । समाधानं विषयान्तरव्यावृत्तिपूर्वकं चित्तस्यैकविषयत्वापादानं तदर्थमित्यर्थः । प्ररोचनायाः प्रवृत्तिहेतुत्वमित्यभिप्रेत्याऽऽह—अधुनेति । स त्रेधाऽऽत्मानं व्यकुरुतेति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिरूपो विराडेव व्यवस्थित इति तेन विराड्रूपेणाग्निर्जगतः प्रतिष्ठेत्युच्यते ॥ १४ ॥

सप्रपञ्चमग्निज्ञानं च येन प्रकारेण द्रष्टव्यमिति श्रुतिरस्मान्बोधयतीत्याह—इदं श्रुतेर्वचनमिति ।

२५ "स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥"

इति स्मृतेर्विराजोऽग्नेरादित्वं । प्रकृतत्वं व्याचष्टे—नचिकेतसेति । वक्ष्यमाणमपि श्रुतेर्वचनमित्याह—किञ्चेति । चेतव्या उपधातव्याः स्वरूपेणेति पूर्वेणान्वितम् । यथाशब्दार्थमाह—येनेति । तत्तदिष्टकाप्रकाशक तत्तन्मन्त्रोच्चारणेनेत्यर्थः । तदग्निज्ञानं; यथोक्तावधारणसामर्थ्यं नचिकेतस आह—यथावदिति । यथोक्तमग्निं यमं प्रति प्रत्युच्चारितवान्प्रतिपादितवानित्यर्थः । अथ नचिकेतसः प्रत्युक्त्यनन्तरमस्य नचिकेतसः प्रत्युच्चारणेन तुष्टो ३० मृत्युर्वरत्रयव्यतिरेकेणान्यं वरं दित्सुर्दातुमिच्छुः पुनरेवाऽऽहोक्तवानिति योजना ॥ १५ ॥

---

१. लोकादिः विराट्पुरुषः तदात्मना उपास्यत्वात् चयनसाध्याग्निरपि लोकादिरित्युक्तम् । या इष्टकाः । नाचिकेतचयनं तैत्तिरीयब्राह्मणान्तर्गतकाठकद्वितीयप्रश्ने समन्त्रकमुपदिष्टम् । एकविंशतिर्हिरण्येष्टकाः शर्करा वा आज्ये अभ्यक्ता नाभ्यां उपधीयन्ते चतुरश्रं परिमण्डलं वा कार्यम् ।

यत्तु विशिष्टाद्वैतभाष्ये "स्वर्ग्यमग्निं" स्वर्गलोका अमृतत्वं भजन्त इत्यादौ स्वर्गशब्दो मोक्षपर इति ३५ समर्थनं तत्र नाद्वैतिनां काचित्क्षतिः कर्मणां चित्तशुद्धिद्वारा परम्परया मोक्षसाधनत्वस्यास्मदिष्टत्वात् । साक्षात् मोक्षसाधनत्वं तु नेष्यते 'नास्त्यकृतः कृतेन' इति तन्निषेधात् । तेषामपि मते चयनस्य

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः।
तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥१६॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू।
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥१७॥

कथं, तं नचिकेतसमब्रवीत्प्रीयमाणः शिष्ययोग्यतां पश्यन्प्रीयमाणः प्रीतिमनुभवन्महात्माऽक्षुद्रबुद्धिर्वरं तव ५ चतुर्थमिह प्रीतिनिमित्तमद्येदानीं ददामि भूयः पुनः प्रयच्छामि। तवैव नचिकेतसो नाम्नाऽभिधानेन प्रसिद्धो भविता मयोच्यमानोऽयमग्निः। किञ्च सृङ्कां शब्दवतीं रत्नमयीं मालामिमामनेकरूपां विचित्रां गृहाण स्वीकुरु। यद्वा सृङ्कामकुत्सितां गतिं कर्ममयीं गृहाण। अन्यदपि कर्मविज्ञानमनेकफलहेतुं स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्मस्तुतिमेवाह—त्रिणाचिकेतस्त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतस्तद्विज्ञानस्तद-ध्ययनस्तदनुष्ठानवान्वा। त्रिभिर्मातृपितृआचार्यैरेत्य प्राप्य सन्धिं सन्धानं सम्बन्धं मात्राद्यनुशासनं यथावत्प्राप्येत्येतत्। १० तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते "यथा मातृमान्पितृमान्" इत्यादेः। वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा।

गोपालयतीन्द्रटीका

वदनमेव प्रश्नपूर्वकमाह—कथमित्यादिना। शिष्ययोग्यतां यथोक्तार्थग्रहणपूर्वकधारणाख्याम्। मदुक्तं ग्रहीष्यतीत्यतिलोभबुद्धिः क्षुद्रबुद्धिः सा न विद्यते यस्य सोऽक्षुद्रबुद्धिः। चतुर्थमिति। पितुः सौमनस्याग्निविद्यात्म-विद्यापेक्षया चतुर्थमित्यर्थः। इहेति व्याचष्टे—प्रीतिनिमित्तमिति। प्रीतिर्निमित्तं प्रयोजकं यस्य तत्। किं तत्प्रयोजक- १५ मित्यपेक्षायामाह—तवैवेति। प्रसिद्ध इति। नचिकेत इति त्वन्नाम्ना प्रसिद्धिं गमिष्यतीत्यर्थः। नैतावन्मात्रं वरमन्यदपीति नचिकेतसं प्रलोभयन्नाह—किञ्चेति। शब्दवत्त्वे हेतुमाह—रत्नवतीमिति। रत्नमयीमिति पाठान्तरम्। योग्यतयेदंशब्दस्य सन्निहितमालार्थकत्वमित्याह—मालामिति। अनेकरूपामनेकानि रूपाणि नीलादीनि यस्यां सा तामत एव विचित्रामित्यर्थः। सृजिधातोर्गत्यर्थमादायाऽऽह—यद्वेति। अकुत्सितां गतिमिति। अकुत्सिता गतिर्धूमादिनाऽर्चिरादिना च प्राप्यं फलं तामित्यर्थः। नन्वकृते कर्मणि लाभाभावात्कथं वरप्रदानेन कर्मफल- २० प्राप्तिरित्याशङ्क्य तात्पर्यार्थमाह—अन्यदपीत्यादिना। कर्मविज्ञानं सृङ्काशब्दलक्ष्यं फलतोऽनेकरूपं शास्त्रसिद्धं स्वीकुर्वित्यर्थः ॥ १६ ॥

प्रीतिनिमित्ताधिकवरदानानन्तरमवशिष्टमग्निज्ञानस्य फलं वदिष्यन्पुनरपि तत्स्तुतिमाह—पुनरपीति। त्रिःकृत्वस्त्रिवारं नाचिकेतोऽग्निश्चितो येन तद्विज्ञानवता स त्रिणाचिकेत इति। अर्थान्तरमभिप्रेत्याऽऽह—तद्विज्ञान-वान्वेति। यथावद्यथाकालमुपनयनपर्यन्तं मातृतो वेदाध्ययनपर्यन्तं पितृत आचार्यतः शिक्षां प्राप्येत्यर्थः। २५ तदनुशासनमनपेक्ष्य कर्मविज्ञानमात्रात्त्रिकर्मकृत्त्वस्यादित्याशङ्क्याऽऽह—तद्धीति। तदनुशासनम्। हिशब्दः स्मार्त-प्रसिद्धिद्योतकः। प्रामाण्यकारणं धर्मज्ञानस्येति शेषः। यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवी-

---

मोक्षसाधनत्वं ब्रह्मविद्याप्राप्तिद्वारेणेत्युक्तत्वात्। अत एव "स्वर्गकामो यजेत" इत्यत्रापि स्वर्गशब्दो मोक्षपर इति विवृण्वन्ति, परन्तु इन्द्राधिष्ठितस्वर्गलोकप्राप्तिसाधनं किमिति प्रश्ने सङ्कल्पे स्वर्गोल्लेखादिति कथञ्चित्समाधेयम्। ३०

स्वर्गे लोके न भयं किञ्चनास्ति इति प्रकृतमन्त्रे श्रूयमाणः स्वर्गशब्दः भोगभूमिपरः "न तत्र त्वं जरया बिभेति" इत्यादीनां त्रिदशानामावास एव प्रसिद्धेः। परे तु नचिकेता अत्यन्तविरक्तः, अतः स्वर्गं नाभिलष्येदिति वदन्ति। परन्तु स्वर्गे स्वस्य वैराग्येऽपि जनोपकाराय अग्निविद्यां प्रकाशयितुं यमं प्रार्थयामासेति श्लिष्यते। कर्मकाण्डे नाचिकेताग्निचयनप्रकरणे "स्वर्गं लोकमेति आदित्यस्य सायुज्यं योऽग्निं नाचिकेतं चिनुते" इति वाक्यैः नाचिकेताग्निचयनं रागिणमधिकृत्यैव ३५ प्रवृत्तम्। नचिकेतसा तदा यमसमीपे वैराग्याद्यप्रदर्शनात् तत्र स्वर्गं इत्यनेन इन्द्राधिष्ठितलोक एव ग्राह्य इति स्थिते अत्रापि तदैकार्थ्यं शोभनं भाति।

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् ।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥१९॥

५ तेभ्यो हि विशुद्धिः प्रत्यक्षा त्रिकर्मकृदिज्याध्ययनदानानां कर्ता तरत्यतिक्रामति जन्ममृत्यू । किञ्च ब्रह्मजज्ञं ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः सर्वज्ञो ह्यसौ । तं देवं द्योतनाज्ज्ञानादिगुणवन्तमीड्यं स्तुत्यं विदित्वा शास्त्रतो निचाय्य दृष्ट्वा चाऽऽत्मभावेनेमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिमत्यन्तमेत्यतिशयेनैति । वैराजं पदं ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः ॥ १७ ॥

इदानीमग्निविज्ञानचयनफलमुपसंहरति प्रकरणं च—त्रिणाचिकेतस्त्रयं यथोक्तं या इष्टका यावतीर्वा यथा १० वेत्येतद्विदित्वाऽवगम्य यश्चैवमात्मरूपेणाग्निं विद्वांश्चिनुते निर्वर्तयति नाचिकेतमग्निं क्रतुं स मृत्युपाशानधर्माज्ञान-रागद्वेषादिलक्षणान्पुरतोऽग्रतः पूर्वमेव शरीरपातादित्यर्थः । प्रणोद्यापहाय शोकातिगो मानसैर्दुःखैर्वर्जित इत्येतत् । मोदते स्वर्गलोके वैराजे विराडात्मस्वरूपप्रतिपत्त्या ॥ १८ ॥

एष ते तुभ्यमग्निर्वरो हे नचिकेतः स्वर्ग्यः स्वर्गसाधनो यमग्निं वरमवृणीथाः प्रार्थितवानसि द्वितीयेन वरेण सोऽग्निर्वरो दत्त इत्युक्तोपसंहारः । किञ्चैतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासो जना इत्येतदेष वरो दत्तो मया १५ चतुर्थस्तुष्टेन । तृतीयं वरं नचिकेतो वृणीष्व । तस्मिन्ह्यदत्ते ऋणवानहमित्यभिप्रायः ॥ १९ ॥

आनन्दगिरिटीका

विशुद्धिरिति धर्माद्यवगतिः । दृष्ट्वा चाऽऽत्मभावेनेति । अयमर्थः—विंशत्यधिकानि सप्त शतानीष्टकानां संख्या संवत्सरस्याहोरात्राणि च तावत्संख्याकान्येव संख्यासामान्यात्तैरिष्टकास्थानीयैश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति ॥ १६-१७-१८-१९ ॥

२० 　　　　गोपालयतीन्द्रटीका

दितिश्रुत्यन्तरात् मात्राद्यनुशासनं प्रामाण्यकारणमवगम्यत इति योजना । वेदाश्च स्मृतयश्च शिष्टाश्च तैः प्रत्यक्षं चानुमानं चाऽऽगमश्च तैः सन्धिमेत्येत्यर्थः । विशुद्धिर्धर्माद्यवगतिः । इज्या ज्योतिष्टोमादियागोऽध्ययनं वेदस्य, दानं बहिर्वेदि दीयमानम् । यथा त्रिकर्मकृत्तरति तथा त्रिणाचिकेत इति स्तुतिद्वारा फलं प्रदर्श्य फलान्तरमपि सविज्ञान-माह—किञ्चेति । हि यस्माद्धिरण्यगर्भांशस्तस्मादसौ सर्वज्ञ इत्यर्थः । द्योतनादिगुणवन्तमादित्यादिरूपत्वादिति २५ शेषः । ईड्यं प्रतिमासमृषिभिर्देवगन्धर्वैश्च स्तूयत इति पुराणे प्रसिद्धम् । दृष्ट्वा चाऽऽत्मभावेनेति । अयमर्थः—विंशत्यधिकानि सप्त शतानीष्टकानां संख्या संवत्सरस्य च प्रातःसायंकालयोरनुष्ठीयमानान्यग्निहोत्राणि तावत्संख्या-कान्येव तैरिष्टकास्थानीयैश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति स्वबुद्धिः=स्वेन कर्तव्या बुद्धिः उपासना; तया साक्षात्कृतां शान्तिं वैराजं फलम् । तात्पर्यार्थमाह—वैराजमिति । ज्ञानमुपासनं चयनं कर्म ॥ १७ ॥

चशब्द उपसंहरतीतिक्रियानुकर्षणार्थः । त्रयं किमित्यतो व्याचष्टे—यथोक्तमिति । इष्टकानां स्वरूपं ३० संख्या प्रकारश्चेतत्पूर्वोक्तम् । चशब्दः कर्मसमुच्चयार्थः । एवंशब्दार्थमाह—आत्मरूपेणेति । अग्निशब्देन तद्विषयक-ध्यानमुच्यत इत्याह—क्रतुमिति । सङ्कल्पं ध्यानमिति यावत् । यो ध्यानं निर्वर्तयति यत्नेन करोति स इत्यन्वयः । पाशशब्दो बन्धकत्वगुणयोगादधर्मादीनभिवक्त इत्याह—अधर्मेत्यादिना । कस्मादित्यपेक्षायामाह—शरीरेति । रागादिरहितो भूत्वाऽपहाय वैराजे पद इति शेषः । किंभूयेत्यपेक्षायामपेक्षितं पूरयति—विराडिति ॥ १८ ॥

उक्तमुपसंहरति—एष इति । स्वर्ग्यः स्वर्गसाधनमित्यर्थः । द्वितीयेन वरेण यमग्निं वृतवानस्येष ३५ तेऽग्निर्वरोऽग्निरुक्त इत्यन्वयः । पौनरुक्त्यं परिहरति—उक्त इति । इदमप्युक्तोपसंहार इत्याह—किञ्चेति । ननु प्रार्थनामन्तरेण स्वयमेव प्रेरणमनुचितमित्यत आह—अदत्त इति । तृतीये वर इति शेषः ॥ १९ ॥

'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥२०॥

एतावद्व्यतिक्रान्तेन विधिप्रतिषेधार्थेन मन्त्रब्राह्मणेनावगन्तव्यं यद्वरद्वयसूचितं वस्तु नाऽऽत्मतत्त्वविषय-

आनन्दगिरिटीका

पितापुत्रस्नेहादिस्वर्गलोकावसानं यद्वरद्वयसूचितं संसाररूपं तदेव कर्मकाण्डप्रतिपाद्यमात्मन्यारोपितं ५ तन्निवर्तकं चाऽऽत्मज्ञानमित्यध्यारोपापवादभावेन पूर्वोत्तरग्रन्थयोः सम्बन्धमाह—एतावद्धीति । प्रथमवल्लीसमाप्ति-

गोपालयतीन्द्रटीका

पितुः सौमनस्यमारभ्य स्वर्गलोकपर्यन्तं यद्वरद्वयसूचितं संसाररूपमेव कर्मकाण्डप्रतिपाद्यमात्मन्यारोपितं तन्निवर्तकं चाऽऽत्मज्ञानमित्यध्यारोपापवादत्वेन पूर्वोत्तरग्रन्थयोः सम्बन्धमाह—एतावद्धीति । यस्माद्वरद्वयसूचितं पितापुत्रस्नेहादि यद्वस्त्वेतावदेवावगन्तव्यमित्यन्वयः । हिशब्द एवकारार्थः । विधिप्रतिषेधार्थेन = प्रवृत्तिनिवृत्त्यर्थकेन १० मन्त्रब्राह्मणेनोपनिषद्व्यतिरिक्तेनावगन्तव्यम् । एवकारव्यावर्त्यमाह—नाऽऽत्मेति । आत्मतत्त्वविषयं विज्ञानम् ।

---

१. अत्र मुखतः नचिकेताः शरीरव्यतिरिक्तमेवात्मानं पृच्छति न तु धर्माधर्माद्यतिक्रान्तं स्वरूपं; परन्तु तस्य एवं प्रश्ने कृतेऽपि क्रमेण आत्मनः शुद्धस्य स्वरूपं यन्मोक्षसाधनं तद्वक्ष्यति इत्यभिप्रायः । स्वयमेव मोक्षसाधनमात्मज्ञानमुपपादयेत्यादिरीत्या प्रश्ने "यतो वाचो निवर्तन्ते" इत्यादिरीत्या वाङ्मनोगोचरत्वा-भावं यमो ब्रूयात् । तेन स्वस्य नात्मनि व्युत्पत्तिर्भवेत् । अतः शरीरव्यतिरेकमेव प्रक्ष्यामीत्यभिप्रेति १५ नचिकेताः । मृत्युस्तु तदीयगम्भीराभिप्रायं जानन्नेव अपरीक्षिताय न ज्ञानमुपदेष्टव्यमिति मत्वा तद्वैराग्यं परीक्ष्य तदनन्तरमेव शिष्यप्रशंसापूर्वकमात्मज्ञानोपदेशे प्रवर्तत इति श्लिष्यते ।

विशिष्टाद्वैतिनस्तु—अग्निविद्याप्रश्नादेव नचिकेताः आस्तिकाग्रेसरः शरीरव्यतिरिक्तः आत्मा परलोक-भागस्तीति जानाति । अतः नायं प्रश्नः शरीरातिरिक्तात्मविषयः अपि तु मोक्षस्वरूपद्वारेणोपेयस्वरूप-मुपेतृस्वरूपमुपायस्वरूपं चात्र पृष्टमिति वदन्ति । प्रेतशब्दो मुक्तात्मपर इति चाहुः । यथाश्रुतेऽपि २० भगवत्पादमते न काचनासङ्गतिः । आस्तिकानां कुले जातः नचिकेताः शरीरातिरिक्तात्मा देहान्तर-सम्बन्धी अस्तीत्याप्तमुखात् श्रुत्वा तत्र विश्वासेन परलोकफलानि कर्माणि कुर्महे श्रद्धामात्रेण । तत्र निश्चयस्तु भवतैव वक्तव्य इति पृच्छति यमम् । यमलोकं गतोऽपि यमं पश्यन्नपि अत्र यात्यमानाः भुवि दुष्कृतकारिण इति ज्ञातुं न प्रभवति, सूक्ष्मशरीराणामप्रत्यक्षत्वात् ।

वस्तुतस्तु शरीरव्यतिरिक्तजीवप्रश्न एवायमन्यथा "न जायते म्रियते वा विपश्चिदि"त्यादिना जन्म- २५ मरणनिषेधानुपपत्तेः परमात्मनो धर्मिग्राहकमानेन जन्ममरणादिरहितत्वेनैव सिद्धेः । यदि तस्यापि जन्मादिकं स्यात् तदा तद्धेतुरन्यो वाच्य इति स न परमात्मा स्यात् । अतः शुद्धजीवस्वरूपमेव समाधाने उक्तमिति शरीरातिरिक्तजीवप्रश्नः सुतरां सङ्गच्छते । मरणं मानुप्राक्षीरिति लिङ्गाच्च ।

माध्वास्तु—"तं वै प्रवसन्तं गन्तासीति होवाच तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात्" इत्यादिको नचिकेतसं प्रति कृतः शाप इत्युक्तवन्तः । तन्न । तैत्तिरीयब्राह्मणान्तर्गतकाठके—"तं ह स्मोत्थितं ३० वागभिवदति" इति श्रुत्या प्रस्थानायोत्थितमभिमुखीकृत्य तस्य हितैषिणी काचिदशरीरिवाग् आह इत्युक्तेः । अपि च माध्वाः लोकादिमग्निमित्यादिना विष्णोरेवोपासनं विहितमिति लिखन्ति । तत्र च अनन्तलोकाप्ति उरुगायं, निहितं गुहायामित्यादीनि लिङ्गानि । अग्निपदं अग्रयत्वगुणयोगात् विष्णु-परम्, ब्रह्मजः वेदेऽभिव्यक्तः ज्ञः सर्वज्ञ इति ब्रह्मजज्ञपदमपि विष्णुपरमेव । अस्योपासनस्य साक्षाद्-मोक्षसाधनत्वाभावेऽपि परम्परया तत्साधनत्वात् । अत एव अनन्तलोकाप्तिफलमुपपद्यत इत्याहुः । ३५ अद्वैतिनां तु परम्परया विष्णूपासनस्य मोक्षफलकत्वे न काप्यसम्प्रतिपत्तिः । परं तु अस्योपासनस्य प्रतीकोपासनत्वात् ब्रह्मलोकसाधनत्वानुपपत्तिः अप्रतीकालम्बनान्नयतीति सूत्रकारोक्तेः ।

याथात्म्यविज्ञानम्। अतो विधिप्रतिषेधार्थविषयस्याऽऽत्मनि क्रियाकारकफलाध्यारोपणलक्षणस्य स्वाभाविकस्याज्ञानस्य संसारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञानं क्रियाकारकफलाध्यारोपणलक्षणशून्यमात्यन्तिकनिःश्रेयस-प्रयोजनं वक्तव्यमित्युत्तरो ग्रन्थ आरभ्यते। तमेतमर्थं द्वितीयवरप्राप्त्याऽप्यकृतार्थत्वं तृतीयवरगोचरमात्मज्ञान-मन्तरेणेत्याख्यायिकया प्रपञ्चयति—यतः पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्याऽऽत्मज्ञानेऽधिकार
५ इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभनं क्रियते। नचिकेता उवाच तृतीयं वरं नचिकेतो वृणीष्वेत्युक्तः सन्। येयं विचिकित्सा संशयः प्रेते मृते मनुष्येऽस्तीत्येकेऽस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके नाय-मस्तीति चैके नायमेवंविधोऽस्तीति चैके। अतश्चास्माकं न प्रत्यक्षेण नापि वाऽनुमानेन निर्णयविज्ञानम्।

आनन्दगिरिटीका

पर्यन्ताख्यायिकाया अवान्तरसम्बन्धमाह—तमेतमर्थमिति। देहव्यतिरिक्तात्मास्तित्वे वादिविप्रतिपत्तेः संशयश्चेत्तर्हि
१० प्रत्यक्षादिना स्वस्यैव निर्णयज्ञानसम्भवात्तन्निर्णयस्य निष्प्रयोजनत्वाच्च न तदर्थः प्रश्नः कर्तव्य इत्याशङ्क्याह—अतश्चास्माकमिति। प्रत्यक्षेण स्थाणौ निर्णीते पुरुषो न वेति सन्देहादर्शनाद्व्यतिरिक्तात्मास्तित्वे च सन्देहदर्शनान्न

गोपालयतीन्द्रटीका

एवमारोपं प्रदर्श्य तस्य स्वरूपहेतुफलैरनुवादपूर्वकमपवादमाह—अत इति। यतो निवृत्त्यविषयत्वं कर्मकाण्डस्यात इत्यर्थः। विध्यर्थः प्रवृत्तिनिषेधार्थो निवृत्तिस्तद्विषयस्येत्यनेन प्रमाणोपन्यासः। स्वरूपमाह—आत्मनि क्रियेति।
१५ आदिशब्देन प्रमातृप्रमेयादिसंग्रहः। हेतुमाह—स्वाभाविकस्येति। अस्य व्याख्याऽज्ञानस्येति। तस्यानर्थहेतुत्वं स्फुटयति—संसारबीजस्येति। तस्माद्विपरीतं संसारभिन्नं ब्रह्मात्मैकत्वमेव वृत्त्यारूढविज्ञानम्। तद्विपरीतं स्फुटयति—क्रियेति। आत्यन्तिकनिःश्रेयसं सवासनाविद्यानिवृत्तिरानन्दावाप्तिश्च तदेव प्रयोजनं यस्य तत्तथा। प्रथमवल्ली-समाप्तिपर्यन्ताख्यायिकाया अवान्तरतात्पर्यमाह—तमेतमिति। तं श्रुत्यादिप्रसिद्धमेतं विद्वदनुभवप्रसिद्धम्। आत्म-ज्ञानमन्तरेण द्वितीयवरं प्राप्याप्यकृतार्थत्वमित्याख्यायिकया प्रपञ्चयतीत्यन्वयः। कामादिप्रलोभनाख्यायिकाया
२० विशेषमाह—यत इति। पूर्वस्मात्पूर्वकाण्डोदितात्। कर्मगोचरः कर्मसाध्यः तस्मात् अत एवानित्यत्वसातिशयत्वदोषेण दुष्टत्वात्तस्माद्विरक्तस्य। इति तस्मादित्यर्थे। तन्निन्दार्थं कर्मनिन्दार्थं निन्दा च निवृत्तावुपयुज्यते। आदिशब्दः पौत्रादिपरिग्रहार्थः प्रलोभनं रागानुकूलो व्यापारः। अपेक्षितं समर्पयन्नुत्तरमवतारयति—नचिकेता इति। उक्तः सन्नुवाचेत्यन्वयः। या सर्वसाधारणा। इयं प्रत्यक्षसिद्धा। मनुष्यग्रहणं प्राणिमात्रोपलक्षणार्थम्। शरीरे पतित आत्माऽस्ति वा न वेति संशयो यः प्रसिद्धस्तद्विषयात्मास्तित्वं विद्यामित्यन्वयः। संशयस्य वादिविप्रतिपत्ति-
२५ हेतुत्वात्तामाह—अस्तीति। शरीरव्यतिरिक्तो नेत्येका विप्रतिपत्तिः। इन्द्रियव्यतिरिक्तो नेत्यन्या। मनोव्यतिरिक्तो नेत्यन्या बुद्धिव्यतिरिक्तो नेत्यधिका। कर्ता भोक्ता वा न वेतिविप्रतिपत्तिमूलकोऽशनायाद्यतीतब्रह्माभेद-विषयः संशयोऽन्यत्र धर्मादित्यत्र द्रष्टव्यः। वादिविप्रतिपत्तिमूलकः संशयश्चेत्तर्हि प्रत्यक्षादिना स्वस्यैव निर्णय-सम्भवात्तन्निर्णयार्थं प्रश्नोऽनर्थक इत्यत आह—अतश्चेति। स्थाणौ निर्णीते पुरुषो न वेतिसन्देहादर्शनाद्देहादि-व्यतिरिक्तात्मास्तित्वे च संशयदर्शनान्न प्रत्यक्षेण तन्निर्णयः। परलोकसम्बन्ध्यात्मव्याप्यलिङ्गाभावान्नानुमानेन

---

३० परे तु येयं प्रेत इति तृतीयप्रश्नः मुक्तात्मनि नियामकतया ब्रह्मास्ति न वेति प्रश्नः अस्य समाधानं अणोरणीयानित्यादिना वक्ष्यतीत्याहुः। तन्न, शरीरे पञ्चत्वमापन्ने तद्व्यतिरिक्तजीवस्यैवासिद्धौ तन्नियामक-प्रश्नस्य दूरापास्तत्वात्। यदि उपनिषदन्तरात् मुक्तामुक्तजीवप्रसिद्धिः तदा तत्रैव तन्नियामकः ईश्वरोऽपि सिद्ध एव। यमेवैष वृणुते इत्यनेन मुक्तः सिद्धश्चेच्चेत् तन्नियामकोऽपि तस्यैष आत्मा विवृणुते 'तनूं स्वामि'त्यनेनैव तन्मन्त्रवाक्येन सिद्ध्येत्, इति नायं प्रश्न आवश्यकः। यत्तु अणुरेष धर्म इति
३५ परमात्मपरमिति। तन्न; एवं धर्मान् पृथक् पश्यन् इत्यत्र प्रकृतग्रन्थ एव धर्मपदस्य जीवपरस्य दर्शनात्। अपि च मुक्तात्मनः अनन्याधिपत्वं सूत्रकारैरेवोच्यते—अत एव चानन्याधिपतिरिति सूत्रेण। कुत्रापि मुक्तस्य मुक्त्यनन्तरं नियामकः उपनिषत्सु नोच्यते। दुःखाप्रसक्तेः। यथा—तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पस्ये—इत्यादौ। अतो मुक्तात्मनः नियामकप्रश्नस्य नावसरः।

देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः।
अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥२१॥
देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ।
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥२२॥
शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान्।
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥२३॥

एतद्विज्ञानाधीनो हि परः पुरुषार्थ इत्यत एतद्विद्यां विजानीयामहमनुशिष्टो ज्ञापितस्त्वया। वराणामेष वरस्तृतीयोऽवशिष्टः ॥ २० ॥

किमयमेकान्ततो निःश्रेयससाधनात्मज्ञानार्हो न वेत्येतत्परीक्षणार्थमाह—देवैरप्यत्रैतस्मिन्वस्तुनि विचिकित्सितं संशयितं पुरा पूर्वं न हि सुज्ञेयं सुष्ठु ज्ञेयं श्रुतमपि प्राकृतैर्जनैर्यतोऽणुः सूक्ष्म एष आत्माख्यो धर्मोऽतोऽन्यमसन्दिग्धफलं वरं नचिकेतो वृणीष्व मा मां मोपरोत्सीरुपरोधं मा कार्षीरधमर्णमिवोत्तमर्णः। अतिसृज विमुञ्चैनं वरं मा मां प्रति ॥ २१ ॥

एवमुक्तो नचिकेता आह—देवैरत्राप्येतस्मिन्वस्तुनि विचिकित्सितं किलेति भवत एव नः श्रुतम्। त्वं च मृत्यो यद्यस्मान्न सुज्ञेयमात्मतत्त्वमात्थ कथयस्यतः पण्डितैरुपदेशनीयत्वाद्वक्ता चास्य धर्मस्य त्वादृक्त्वत्तुल्योऽन्यः पण्डितश्च न लभ्योऽन्विष्यमाणोऽपि। अयं तु वरः निःश्रेयसप्राप्तिहेतुरतो नान्यो वरस्तुल्यः सदृशोऽस्त्येतस्य कश्चिदप्यनित्यफलत्वादन्यस्य सर्वस्यैवेत्यभिप्रायः ॥ २२ ॥

एवमुक्तोऽपि पुनः प्रलोभयन्नुवाच मृत्युः—शतायुषः शतं वर्षाण्यायूंषि येषां तान् शतायुषः पुत्रपौत्रान्वृणीष्व।

आनन्दगिरिटीका

प्रत्यक्षेण निर्णयः परलोकसम्बन्ध्यात्मना च कस्यचिल्लिङ्गस्याविनाभावादर्शनान्नानुमानेनापि निर्णय इत्यर्थः ॥ २०-२१-२२॥

गोपालयतीन्द्रटीका

निश्चय इत्यर्थः। ननु तद्विज्ञानं निष्फलमित्याशङ्क्याऽऽह—एतद्विज्ञानेति। यस्मात्तदधीनः परमपुरुषार्थोऽत इत्यर्थः। एतदात्मास्तित्वम्। ननु पितुः सौमनस्यमप्यग्न्यात्मविद्यापेक्षया तृतीयं तत्कथमेष वरस्तृतीय इत्याशङ्क्य पाठक्रमापेक्षयाऽवशिष्टार्थकस्तृतीयशब्द इत्याह—अवशिष्ट इति ॥ २० ॥

नन्वात्मास्तित्वे पृष्टे तद्वक्तव्यं तत्कथमन्यदुच्यत इत्याशङ्क्याऽऽशयमाह—किमयमिति। एकान्तो नियमेन, अर्थित्वेन विवेकादिकं संगृहीतम्। विवेकादिशालिन एव ज्ञानयोग्यतेति परीक्षणार्थमुत्तरो ग्रन्थ इत्यर्थः। अपिशब्दं भिन्नक्रमेण योजयति—देवैरपीति। देवा अप्येतद्विषयकसंशयवन्त इत्यर्थः। नन्वप्रतिहतज्ञाना देवा इति प्रसिद्धेः कथं संशयस्तत्राऽऽह—पुरेति। सृष्टिकाले। अपिशब्दादन्येषां संशयः सुप्रसिद्ध इति गम्यते। तैः श्रुतमपि दुर्ज्ञेयमित्याह—नहीति। तत्र हेतुमाह—यत इति। ननु नाणुपरिमाणस्तत्कथमणुरात्माऽत आह—सूक्ष्म इति। दुर्विज्ञेय इत्यर्थः। पूर्वं सुविज्ञेयमिति वस्तुशब्देन निर्देश इहाऽऽत्मशब्देनेति पुंलिङ्गनिर्देशः। अत इति। आत्मज्ञानादित्यर्थः। असन्दिग्धफलं पशुपुत्रादि। उपरोधं निर्बन्धम्। तत्र दृष्टान्तमाह—अधमर्णमिवेति। उत्तमर्णो धनदाता। अधमर्णः प्रतिग्रहीता ॥ २१ ॥

उपदेशनीयत्वादित्यनन्तरं त्वमुपदिशेति शेषो द्रष्टव्यः। ननु पण्डितैरुपदेशनीयत्वेऽन्ये पण्डिताः सन्ति तत्र याहीत्यत आह—वक्तेति। धर्मस्याऽऽत्माख्यस्य। न लभ्य इति कथमन्विष्यतां तत्राऽऽह—अन्विष्यमाणोऽपीति। यद्यपि लोके यमादन्ये ब्रह्मविदः सन्ति तथाऽपि यमस्य सन्निहितत्वादन्यत्र गमनमाशङ्क्यैवमुक्तम्। एतस्य कश्चिदपि तुल्यो वरो नेत्यन्वयः। तात्पर्यार्थमाह—अनित्येति ॥ २२ ॥

शिष्याय सम्यक्शोधिताय विद्या देयेत्यभिप्रायेण यमस्य पुनरुक्तिरित्याह—एवमित्यादिना। बहूनिति

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥२४॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामाँश्छन्दतः प्रार्थयस्व। इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः। आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः ॥२५॥

५ किञ्च गवादिलक्षणान्बहूनपशून्। हस्तिहिरण्यं हस्ती च हिरण्यं च हस्तिहिरण्यम्। अश्वांश्च। किञ्च भूमेः पृथिव्या महद्विस्तीर्णमायतनमाश्रयं मण्डलं साम्राज्यं वृणीष्व। किञ्च सर्वमप्येतदनर्थकं स्वयं चेदल्पायुरित्यत आह—स्वयं च जीव त्वं जीव धारय शरीरं समग्रेन्द्रियकलापं शरदो वर्षाणि यावदिच्छसि जीवितुम् ॥ २३ ॥

एतत्तुल्यमेतेन यथोपदिष्टेन सदृशमन्यमपि यदि मन्यसे वरं तमपि वृणीष्व। किञ्च वित्तं प्रभूतं हिरण्यरत्नादि चिरजीविकां च सह वित्तेन वृणीष्वेत्येतत्। किं बहुना महत्यां भूमौ राजा नचिकेतस्त्वमेधि भव।
१० किञ्चान्यत्कामानां दिव्यानां मानुषाणां च त्वा त्वां कामभाजं कामभागिनं कामार्हं करोमि। सत्यसङ्कल्पो ह्यहं देवः ॥ २४ ॥

ये ये कामाः प्रार्थनीया दुर्लभाश्च मर्त्यलोके सर्वांस्तान्कामांश्छन्दत इच्छातः प्रार्थयस्व। किञ्चेमा दिव्या अप्सरसो रमयन्ति पुरुषानिति रामाः सह रथैर्वर्तन्त इति सरथाः। सतूर्याः सवादित्रास्ताश्च न हि लम्भनीयाः प्रापणीया ईदृशा एवंविधा मनुष्यैर्मर्त्यैरस्मदादिप्रसादमन्तरेण। आभिर्मत्प्रत्ताभिर्मया दत्ताभिः परिचारिणीभिः
१५ परिचारयस्वाऽऽत्मानं पादप्रक्षालनादिशुश्रूषां कारयाऽऽत्मन इत्यर्थः। नचिकेतो मरणं मरणसम्बद्धं प्रश्नं प्रेतेऽस्ति नास्तीति काकदन्तपरीक्षारूपं माऽनुप्राक्षीर्मैवं प्रष्टुमर्हसि ॥ २५ ॥

आनन्दगिरिटीका

एकैकं पुत्रधनादीनां वरत्वेनोपन्यस्य समुच्चितमिदानीमुपन्यस्यति—किञ्च वित्तं प्रभूतमिति। 'अस्' भुवीति धातोर्लोण्मध्यमपुरुषैकवचनान्तस्य निपात एधीति ततो भवेति व्याख्यातम् ॥ २३-२४-२५-२६-२७ ॥

२० गोपालयतीन्द्रटीका

हस्त्यादिष्वप्यन्वेति। हस्ती चेति जात्येकवचनं हिरण्यमित्यपि। आयतनशब्दो जनपदरक्षणे लक्षणया वर्तत इत्याह—मण्डलेति। चत्वारिंशद्योजनमिते देशे सम्राजः कर्म साम्राज्यं जनपदरक्षणमित्यर्थः। धारणकर्म दर्शयति—शरीरमिति। इन्द्रियपाटवादिशून्यजीवनस्याप्रयोजनत्वादाह—समग्रेति। समग्राः सम्पूर्णा अविकला इति यावत्। जीवितुं यावदिच्छसि तावद्धारयेत्यन्वयः ॥ २३ ॥

२५ सदृशमित्यधिकोपलक्षणार्थम्। प्रथमोऽपिशब्दः पुत्रादिसमुच्चयार्थो द्वितीयो वरसमुच्चयार्थः। अत्र पुत्रधनादीनामेकैकपरत्वेनोपन्यस्य समुच्चितमिदानीमुपन्यस्यति—किञ्च वित्तं प्रभूतमिति। प्रभूतमधिकं हिरण्यं रत्नमादिर्यस्य तत्तथा। चशब्दार्थमाह—सहेति। क्रियापदानुषङ्गमाह—वृणीष्वेति। भवनक्रियायाः कर्तारमध्याहरति—राजेति। 'अस्' भुवीतिधातोर्लोण्मध्यमैकवचनान्तस्यैधीति। दिव्यानां दिवि भवा दिव्या रम्भोर्वशीकल्पवृक्षकामधेन्वादयस्तेषां मानुषाणां मनुष्यसम्बन्धिनो मानुषाः स्रक्चन्दनवनितादयस्तेषां च। कामार्हं कामयोग्यमित्यर्थः।
३० नन्वकृतकर्मणः पुंस इष्टप्रदाने तव सामर्थ्यं कुत इत्याशङ्क्याह—सत्यसङ्कल्प इति। हि यस्मादहं देवोऽप्रतिहतज्ञानैश्वर्यतेजोबलवांस्तस्मात्सत्यसङ्कल्पः। तस्मात्सामर्थ्यं यमस्येत्यर्थः ॥ २४ ॥

कामा इत्यस्य व्याख्या प्रार्थनीया इति। दिवि भवाः पुरुषा अननुकूला न भोग्या इत्याशङ्क्याऽऽह—रमयन्तीति। ननु पुरुषरमयितृत्वं भूलोकस्थानामपीत्याशङ्क्य भौमस्त्रीवैलक्षण्यमाह—सहेत्यादिना। तूर्यं वाद्यविशेषो वादित्रं हस्तवाद्यम्। ननु देवप्रसादादीदृशा अपि प्रापणीया इत्याह—अस्मदादीति। आभिः पूर्वोक्ताभिरात्मानं
३५ परिचारयस्वेत्यन्वयः। तात्पर्यार्थमाह—पादेति। मरणशब्दस्य तत्सम्बन्धिनि प्रश्ने लक्षणामभिप्रेत्याऽऽह—मरणसम्बद्धमिति। काकदन्तपरीक्षारूपं प्रश्नं माऽनुप्राक्षीर्मा कार्षीरित्यर्थः। माऽनुप्रयोगस्यार्थमाह—मैवमिति ॥ २५ ॥

श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥२६॥
न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥२७॥
अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ।
अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥२८॥

एवं प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्य आह—श्वो भविष्यन्ति न भविष्यन्ति वेति सन्दिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां ते श्वोभावाः। किञ्च मर्त्यस्य मनुष्यस्यान्तक हे मृत्यो यदेतत्सर्वेन्द्रियाणां तेजस्तज्जरयन्त्यपक्षपयन्त्यप्सरःप्रभृतयो भोगा अनर्थायैवैते । धर्मवीर्यप्रज्ञातेजोयशःप्रभृतीनां क्षपयितृत्वात् । यां चापि दीर्घजीविकां त्वं दित्ससि तत्रापि शृणु। सर्वं यद्ब्रह्मणोऽपि जीवितमायुरल्पमेव किमुतास्मदादिदीर्घजीविका। अतस्तवैव तिष्ठन्तु वाहा रथादयस्तथा नृत्यगीते च ॥ २६ ॥

किञ्च न प्रभूतेन वित्तेन तर्पणीयो मनुष्यः। न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टः। यदि नामास्माकं वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामह इत्येतद्वित्तमद्राक्ष्म दृष्टवन्तो वयं चेत्त्वा त्वाम्। जीवितमपि तथैव, जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसि ईशिष्यसे प्रभुः स्याः । कथं हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत् । वरस्तु मे वरणीयः स एव यदात्मविज्ञानम् ॥ २७ ॥

यतश्चाजीर्यतां वयोहानिमप्राप्नुवताममृतानां सकाशमुपेत्योपगम्याऽऽत्मन उत्कृष्टं प्रयोजनान्तरं प्राप्तव्यं

गोपालयतीन्द्रटीका

सर्वतो विरक्तस्य शमादिमतो ज्ञानाधिकार इत्याख्यायिकया सूचयन्नुत्तरमवतारयति—मृत्युनेति । एवं पुत्रादिना प्रकारेण त्वया यमेनोपन्यस्तानामुदाहृतानां येषां भवनं सन्दिह्यमानमेव त इत्यन्वयः। अपि च न ते पुरुषोपकारिण इति निन्दायामतिशयमाह—किञ्चेत्यादिना । अपक्षयं नाशं कुर्वन्ति । क इत्यपेक्षायामाह—अप्सरःप्रभृतय इति । हिशब्देन प्रत्यक्षानुमानाभ्यां विषयाणां तेजःक्षपयितृत्वं प्रसिद्धमेव द्योत्यते । अथवा हि यस्मादप्सरःप्रभृतयः क्षपयन्ति तस्मादेतेऽनर्थायैवेत्युत्तरेणान्वयः । तत्र पूर्वोक्तं तेजःक्षपयितृत्वमुपलक्षणीकृत्य हेतुमाह—धर्मेति । धर्म इष्टापूर्तादिर्वीर्यं सामर्थ्यं प्रज्ञा शास्त्रार्थावगहनशक्तिस्तेजः प्रागल्भ्यं त्वग्गता वा दीप्तिर्यशः कीर्तिः। ननु त्वयोक्तं सत्यं तथाऽपि चिरजीवने विषयोपभोगः पुरुषार्थ इत्याशङ्क्य तत्रापि दोषं शृण्वित्याह—यां चापीति । चकारापिकारौ विषयदोषसमुच्चयार्थौ। दित्ससि दातुमिच्छसि श्रुतिस्थापिशब्दापेक्षितं पूरयित्वा क्रियापदमध्याहरति—शृण्विति । सर्वशब्दप्रयोगाद्धिरण्यगर्भायुर्गृह्यते । सर्वायुषां तत्रान्तर्भावात् । एवकारद्योतितकैमुतिकन्यायमाह—किमुतेति । जीविका यत एवं जाताऽतस्तदधीनविषयभोगस्तुच्छ इत्याह—अत इति ॥ २६ ॥

दृढवैराग्यार्थं पूर्वोक्तं सर्वं निन्दनीयमित्याह—किञ्चेति । प्रभूतेनाधिकेन तर्पणीयः प्रीणनीयः। ननु वित्तं चेत्प्रीतिकरं भवत्येवेति चेन्नेत्याह—न हीति । हिशब्देन तृप्तिकरत्वाभावो लोके प्रसिद्ध इति द्योत्यतेऽर्थानामर्जने दुःखमिति न्यायात्। किञ्चातृप्तिकरे वित्ते तृष्णैव नास्ति। अथापि नामास्तु तथाऽपि वरं विनैव लप्स्यामह इत्याह—यदि नामेति । त्वां वयं दृष्टवन्तश्चेद्वित्तं लप्स्यामहे प्राप्स्यामह इत्यन्वयः। वित्तन्यायमन्यत्राप्यतिदिशति—जीवितेऽपीति। याम्ये यमस्य स्थानं याम्यं तस्मिन्स्थितस्त्वेति शेषः। ईशिष्यसीति। परस्मैपदं छान्दसमित्याह—ईशिष्यस इति। प्रभुरिति । पुण्यपापवतां नियामकः स्याः । यावत्कालं प्रभुः स्यास्तावत्कालं त्वद्दर्शनेन जीविष्याम इत्यन्वयः। त्वद्दर्शनेनैव सर्वं लप्स्यामहे किमुत त्वया समेत्य त्वत्समीपं प्राप्य सम्भाषणादिकं कृत्वेति कैमुतिकन्यायं मनसि निधायाऽऽह—कथं हीति । हिशब्देन देवतासमागमादिनाऽभीप्सितप्राप्तिः श्रुतिस्मृतिलोकसिद्धेत्युच्यते । अल्पेति धनायुषोर्विशेषणम् । किं तवेप्सितं तदाह—वर इति । किं तदाह—यदिति ॥ २७ ॥

किञ्चोत्कृष्टपुरुषार्थलाभे सम्भवत्यधमं कामयमानो मूर्ख एव स्यात्ततो मम स एव वर इत्याह—यतश्चाजीर्यतामित्यादिना । सकाशं निकटं तेभ्यो विनादिभ्यो देवेभ्यो वा प्रयोजनान्तरं प्राप्तव्यमित्यन्वयः । ननु सर्वे किमिति

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥२९॥

इति काठकोपनिषदि प्रथमा वल्ली समाप्ता

तेभ्यः प्रजानन्नुपलभमानः स्वयं तु जीर्यन्मर्त्यो जरामरणवान्क्वधःस्थः कुः पृथिव्यधश्चान्तरिक्षादिलोकापेक्षया तस्यां
५ तिष्ठतीति क्वधःस्थः सन्कथमेवमविवेकिभिः प्रार्थनीयं पुत्रवित्तहिरण्याद्यस्थिरं वृणीते। क्व तदास्थ इति वा पाठान्तरम्।
अस्मिन्पक्षे चाक्षरयोजना, तेषु पुत्राद्विष्वास्थाऽऽस्थितिस्तात्पर्येण वर्तनं यस्य स तदास्थस्ततोऽधिकतरं पुरुषार्थं
दुष्प्रापमपि प्रेप्सुः प्रापिपयिषुः क्व तदास्थो भवेन्न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थः। सर्वो ह्युपर्युपर्येव बुभूषति
लोकस्तस्मान्न पुत्रवित्तादिलोभैः प्रलोभ्योऽहम्। किञ्चाप्सरःप्रमुखान्वर्णरतिप्रमोदाननवस्थितरूपतयाऽभिध्यायन्नि-
रूपयन्यथावदतिदीर्घे जीविते को विवेकी रमेत ॥ २८ ॥

१० अतो विहायानित्यैः कामैः प्रलोभनं यन्मया प्रार्थितं यस्मिन्प्रेत इदं विचिकित्सनं विचिकित्सन्त्यस्ति
नास्तीत्येवंप्रकारं हे मृत्यो साम्पराये परलोकविषये महति महत्प्रयोजननिमित्त आत्मनो निर्णयविज्ञानं यत्तद्ब्रूहि
कथय नोऽस्मभ्यम्। किं बहुना योऽयं प्रकृत आत्मविषयो वरो गूढं गहनं दुर्विवेचनं प्राप्तोऽनुप्रविष्टस्तस्माद्वरादन्यम-
विवेकिभिः प्रार्थनीयमनित्यविषयं वरं नचिकेता न वृणीते मनसाऽपीति श्रुतेर्वचनमिति॥२९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ
१५ काठकोपनिषद्भाष्ये प्रथमाध्याये प्रथमवल्लीभाष्यं समाप्तम्

आनन्दगिरिटीका

किञ्चोत्कृष्टपुरुषार्थलाभे सम्भवत्यधमं कामयमानो मूर्ख एवाहं स्यां ततोऽपि मम स एव वर इत्याह—
यतश्चाजीर्यतामित्यादिना ॥ २८-२९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते
२० काठकोपनिषद्भाष्यव्याख्याने प्रथमा वल्ली समाप्ता

गोपालयतीन्द्रटीका

प्रार्थयन्ते वित्तादिदोषं पश्यन्त इत्याशङ्क्याविवेकित्वात्तेषां, विवेकिनो मम न प्रार्थनेत्याह—प्रजानन्निति। तेभ्यः
प्राप्तव्यं प्रयोजनं प्रजानन्नित्यन्वयः। एवमविवेकिवद्वृणीत इत्यन्वयः प्रजानन्प्रयोजनमुपलभमानः क्व तदास्थ
इत्यन्वयं मनसि निधाय पाठान्तरं व्याचष्टे—अस्मिन्पक्ष इति। नन्वधिकतरपुरुषार्थानवगमे तेषु पुत्रादिष्वास्था
२५ स्यादित्याशङ्क्यापेक्षितं पूरयति—तत इति। दुष्प्रापमपीतरजनैरिति शेषः। दुष्प्रापमप्यधिकतरं पुरुषार्थं प्रापिपयिषुः
क्व तदास्थो भवेदित्यन्वयः। तात्पर्यार्थमाह—न कश्चिदिति। तत्र हेतुमाह—सर्व इति। बुभूषति भवितुमिच्छति।
इयता प्रबन्धेनोक्तस्य प्रयोजनमाह—तस्मादिति। यस्मादहं विवेकादिमांस्तस्मादित्यर्थः। वर्णो गीतिः क्रिडा रतिः
प्रमोदस्तज्जं सुखं निरूपयन्यथावदुत्पत्तिस्थितिनाशैर्विचारयन्नित्यन्वयः। अतिदीर्घे बहुसम्वत्सरपरिमिते जीविते
जीवने प्राणधारणे ॥ २८ ॥

३० यतो जीवितेऽप्याशाऽपगताऽतो मम प्रलोभनां विहाय प्रार्थितं परं प्रदेहीत्याह—अत इति। परलोक-
विषयेऽस्ति नास्तीत्येवंप्रकारं यस्मिन्विचिकित्सनं विचिकित्सन्ति तस्याऽऽत्मनो निर्णयविज्ञानं यन्महत्प्रयोजननिमित्ते
मोक्षार्थे तद्ब्रूहीत्यन्वयः। नचिकेतसं विषयीकृत्यान्यस्याप्यधिकारनिर्णयार्थं सम्वादरहितं श्रुतेर्वचनमित्याह—
किं बहुनेति ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे
३५ प्रथमाध्याये प्रथमा वल्ली समाप्ता

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषँ सिनीतः।
तयो श्रेयः आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥

परीक्ष्य शिष्यं विद्यायोग्यतां चावगम्याऽऽह—अन्यत्पृथगेव श्रेयो निःश्रेयसं तथाऽन्यदुताप्येव प्रेयः प्रियतरमपि ते प्रेयःश्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषमधिकृतं वर्णाश्रमादिविशिष्टं सिनीतो बध्नीतस्ताभ्यामात्मकर्तव्यतया प्रयुज्यते सर्वः पुरुषः। श्रेयःप्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुषः प्रवर्तते। अतः श्रेयःप्रेयःप्रयोजनकर्तव्यतया ताभ्यां बद्ध इत्युच्यते सर्वः पुरुषः। ते यद्यप्येकैकपुरुषार्थसम्बन्धिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वाऽविद्यारूपं प्रेयः श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति। यस्त्वदूरदर्शी विमूढो हीयते वियुज्यतेऽस्मादर्थात् पुरुषार्थात्पारमार्थिकात्प्रयोजनान्नित्यात्प्रच्यवत इत्यर्थः। कोऽसौ ? य उ प्रेयो वृणीत उपादत्त इत्येतत् ॥ १ ॥

आनन्दगिरिटीका

अभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याऽविद्याविभागप्रदर्शनेन च केवलविद्यार्थितया शिष्यं प्रथमं स्तौतीत्याह—परीक्ष्येति। श्रेयःप्रेयसोरन्यतरपरित्यागेनैवान्यतरोपादाने हेतुमाह—ते यद्यपीति। ते यद्यप्येकैकपुरुषसम्बन्धिनी तथाऽपि विरुद्धे ॥ १-२-३-४-५ ॥

गोपालयतीन्द्रटीका

अभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याऽविद्याविभागप्रदर्शनेन च केवलविद्यार्थितया शिष्यं प्रथमं स्तौतीत्याह—परीक्ष्येति। अवगम्य तस्मिन्निति शेषः। पृथगेव प्रेयसः सकाशादित्यर्थः निःश्रेयसं मोक्षस्तत्साधनत्वाज्ज्ञानमत्र निःश्रेयसम्। तथेति। यथा श्रेयः पृथक्तथेत्यर्थः। प्रियतरमप्यभ्युदयसाधनं ज्योतिष्टोमाद्यन्यदित्यन्वयः। भिन्ने प्रयोजने ययोस्ते भिन्नप्रयोजने। अधिकृतमित्यस्य विशेषणं—वर्णाश्रमादीति। आदिपदेन वयोवस्थादिपरिग्रहः। वर्णविशिष्टस्याधिकारे—"ब्राह्मणो बृहस्पतिसवेन यजेत" इत्यादि शास्त्रं प्रमाणम्। आश्रमविशिष्टस्याधिकारे—"गृहस्थः सदृशीं भार्यामुपेयात्" इत्यादि। वयोविशिष्टस्याधिकारे—"जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादि। अवस्थाविशिष्टस्याधिकारे—"अप्रतिसमाधेयव्याधेरपां प्रवेशो वा" इत्यादि प्रमाणम्। 'षिञ् बन्धन' इति धात्वर्थमादाय व्याचष्टे—सिनीत इति। ननु विद्याविद्ययोः कथं बन्धकत्वमित्यत आह—ताभ्यामिति। सर्वः कर्मणि वर्णाश्रमादिविशिष्टोऽधिकृतो विद्यायां साधनचतुष्टयसम्पन्नस्ताभ्यां प्रयुज्यते प्रेर्यते। तयोः प्रेरकत्वं वा कथमित्याशङ्क्याऽऽह—आत्मकर्तव्यतयेति। आत्मनि विद्याविद्ययोः कर्तव्यता कृतिसाध्यता तया। विधितस्तद्विषयज्ञानेनेत्यर्थः। ननु वैधकर्तव्यताज्ञानद्वारा विद्याविद्याभ्यां पुरुषः प्रेर्यत इत्ययुक्तं विधेर्विशेषकर्तव्यताबोधित्वात्सामान्यतः सिद्धे केनचित्कर्तव्यताज्ञाने तत्स्यात्तदेव नास्तीत्याशङ्क्याऽऽह—श्रेयःप्रेयसोरिति। अभ्युदयार्थी प्रेयसि कर्मण्यमृतत्वार्थी श्रेयसि मोक्षसाधने प्रवर्तत इति यथासंख्यमन्वयः। एवं फलकामनया सामान्यतस्तत्साधनं कार्यमिति ज्ञानमभूदिति भावः। हिशब्दः प्रसिद्धिद्योतकः। यद्वोत्तरत्रान्वेति। हि यस्मात्सामान्येन कामनया कर्तव्यताज्ञानं सिद्धमत इत्युपसंहारेणान्वयः। श्रेयसे प्रेयसे च कर्तव्ये विद्याविद्ये तयोर्भावः कर्तव्यता तयेत्यर्थः। ताभ्यां विद्याविद्याभ्याम्। ननु कर्मणो जन्मादिहेतुत्वेन बन्धकत्वेऽपि विद्यायास्तन्निवर्तकत्वात्कथं बन्धकत्वमिति चेत्कर्मणो जन्मादिहेतुत्वेनालाभेन च विद्याया बन्धकत्वमिति भावः। तयोरन्यतरत्यागेनान्यतरपरिग्रहे हेतुमाह—ते यद्यपीति। तथाऽपि विरुद्धे। तत्र हेतुः—विद्येति। इति यस्मादर्थे। यस्माद्विद्याविद्ये विरुद्धे तस्मादन्यतरापरित्यागेनानुष्ठातुमशक्यत्वादित्यन्वयः। नन्वेकेनैका परेणापरा कर्तुं शक्येत्यत आह—एकेनेति। ननु क्रमेणानुष्ठातुं शक्येत्यत आह—सहेति। हेतुमुपन्यस्याक्षराणि गृहीत्वा व्याचष्टे—तयोरिति। निर्धारणे षष्ठी। अविद्यारूपं कर्म प्रेयो हित्वेत्यन्वयः। अपेक्षिताध्याहारेण सर्वं वाक्यं सावधारणमिति न्यायेनाऽऽह—श्रेय एवेति। शिवमानन्दरूपम्। विद्योपादातुः श्रेय इत्युक्त्वा तद्विपरीतस्यानर्थप्राप्तिमाह—यस्त्विति। तुशब्दोऽविद्योपादातुर्वैलक्षण्यार्थः। अदूरदर्शीत्यस्य व्याख्या विमूढ इत्यविवेकीत्यर्थः। ननु कर्मकर्तुः फलं स्यादिति शङ्कते—अस्मादिति। नन्वर्थान्न हीयत इत्युक्तमत आह—पारमार्थिकादिति। मोक्षादित्यर्थः। ननु मोक्षः स्वर्गाद्यन्यतम इत्यत आह—नित्यादिति।

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥
स त्वं प्रियान्प्रियरूपाँश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैताँ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥
५ दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥ ४ ॥

यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण किमर्थं प्रेय एवाऽऽदत्ते बाहुल्येन लोक इत्युच्यते—सत्यं स्वायत्ते तथाऽपि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यमेतः पुरुषमा इतः प्राप्नुतः श्रेयश्च प्रेयश्च । अतो हंस इवाम्भसः पयस्तौ श्रेयःप्रेयःपदार्थौ सम्परीत्य सम्यक्परिगम्य मनसाऽऽलोच्य गुरुलाघवं १० विविनक्ति पृथक्करोति धीरो धीमान् । विविच्य च श्रेयो हि श्रेय एवाभिवृणीते प्रेयसोऽभ्यर्हितत्वात् श्रेयसः । कोऽसौ? धीरः । यस्तु मन्दोऽल्पबुद्धिः स विवेकासामर्थ्याद्योगक्षेमाद्योगक्षेमनिमित्तं शरीराद्युपचयरक्षणनिमित्तमित्येतत्प्रेयः पशुपुत्रादिलक्षणं वृणीते ॥ २ ॥

स त्वं पुनः पुनर्मया प्रलोभ्यमानोऽपि प्रियान्पुत्रादीन्प्रियरूपांश्चाप्सरःप्रभृतिलक्षणान्कामानभिध्यायंश्चिन्तयं-स्तेषामनित्यत्वासारत्वादिदोषान्हे नचिकेतोऽत्यस्राक्षीरतिसृष्टवान्परित्यक्तवानस्यहो बुद्धिमत्ता तव ! नैतामवाप्तवानसि १५ सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तां वित्तमयीं धनप्रायाम् । यस्यां सृतौ मज्जन्ति सीदन्ति बहवोऽनेके मूढा मनुष्याः ॥३॥

तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीत इत्युक्तं तत्कस्मात् ?—यतो दूरं दूरेण

गोपालयतीन्द्रटीका

विमूढत्वमक्षरव्याख्यानेन दर्शयति—कोऽसाविति । उ एवोपादत्तेऽनुतिष्ठतीत्यर्थः । इत्येतत् = उपादत्त इत्युक्ते यावानर्थस्तावान्वृणीत इत्यर्थः ॥ १ ॥

२० नन्वधिकृतेन पुरुषेणोभे अपि विद्याविद्ये कर्तुमन्वायत्ते यदि तर्हि किमर्थं पुरुषो बाहुल्येन श्रेय एव न गृह्णतीत्याशङ्क्य सत्यं द्वे अपि स्वाधीने तथाऽपि फलतः साधनतो मन्दमतीनामशक्ये मिलिते इव प्रेयःश्रेयसी पुरुषमधिकृतं प्राप्नुत इत्याह—यद्युभे इत्यादिना । एत इत्याङ्पूर्वकेण्गताविति धातो रूपमित्याह—आ इत इति । तस्य व्याख्याऽनुत इति । तद्व्याचष्टे—प्राप्नुत इति । परस्परसमुच्चयार्थौ चकारौ व्यामिश्रद्योतकौ । यतः श्रेयः-प्रेयसोः स्वरूपतः फलतश्च विवेकाभावाल्लोकः प्रेय एवाऽऽदत्तेऽतो बुद्धिमान्हंसो यथाऽम्भसः सकाशात्क्षीरं विविच्य २५ भुङ्क्ते तथा प्रेयसः सकाशाद्विविच्य श्रेयो ज्ञात्वा तदेव साधनैः सम्पादनीयमित्याह—अत इत्यादिना । गुरुलाघव-मिति । कर्मणोऽनुष्ठाने महानायासः फलमपि दुःखसंवलितं विद्याप्राप्तावन्वयव्यतिरेकदृष्टानर्थनिवृत्तिरानन्दावासिर्यत्ना-भाव इति विविनक्ति विवेचयति गुरुलाघवमित्यर्थः । नियुक्तं दर्शयति—धीर इति । संस्कृतमतिरिति यावत् । गुरु-लाघवविचारस्य फलमाह—श्रेय इति । हिरेवार्थः । छन्दसि प्रादयो व्यवहिताश्चेत्याशयेनाऽऽह—अभिवृणीत इति । तत्र हेतुमाह—प्रेयस इति । कर्तृपदं साकाङ्क्षमाह—कोऽसाविति । यत्पदाध्याहारेण प्रेय इति व्याचष्टे—यस्त्विति । ३० तुशब्दो बुद्धिमद्वैलक्षण्यार्थः । अल्पबुद्धिरल्पाऽसंस्कृता बुद्धिर्यस्य सः । प्रेय एव वृणीत इत्यत्र हेतुमाह—विवेकेति । योगस्य प्राप्तस्य क्षेमो रक्षणं तन्निमित्तं तदाह—शरीरेत्यादिना । शरीरेत्यादिशब्देनेन्द्रियादिपरिग्रहः । उपचयो वृद्धिः । तल्लक्षणनिमित्तं तत्स्वरूपनिमित्तम् । प्रेयःशब्दार्थमाह—पश्विति । अत्र प्रेयःशब्दः फलपरः ॥ २ ॥

पुत्रादीनां गौणात्मत्वात्प्रियत्वम् । प्रियरूपान्प्रियं रूप्यते जन्यते यैस्तेऽप्सरःप्रभृतिलक्षणास्तदादिस्वरूपान् । चिन्तयन्नित्यपेक्षितं पूरयति—तेषामिति । वृत्तयमोक्तेस्तात्पर्यं दर्शयति—अहो इति । अनेन शिष्यस्तुतिः कृता । ३५ मूढजनेषु प्रवृत्ता मूढजनप्रवृत्ता तां धनप्रायां धनप्रचुरामित्यर्थः । सृतौ मार्गे । बहुशब्दस्य त्रित्वे न पर्यवसान-मित्याह—अनेक इति ॥ ३ ॥

पौनरुक्त्यमाशङ्क्य दूरमेते इति वाक्यस्य व्यावर्त्यां शङ्कामाह—तयोरिति । विशेषो न दृश्यत इति भावः । परिहारमवतारयति—यत इति । दूरमित्यस्य व्याख्या—दूरेणेत्यादि । अन्तरेण भेदेन । एते वक्ष्यमाणे । परस्पर-

¹अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥
न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

महताऽन्तरेणैते विपरीते अन्योन्यव्यावृत्तरूपे विवेकाविवेकात्मकत्वात्तमःप्रकाशाविव । विषूची विषूच्यौ नानागती भिन्नफले संसारमोक्षहेतुत्वेनेत्येतत् । के ते इत्युच्यते—या चाविद्या प्रेयोविषया विद्येति च श्रेयोविषया ज्ञाता निर्ज्ञाताऽवगता पण्डितैः। तत्र विद्याभीप्सिनं विद्यार्थिनं नचिकेतसं त्वामहं मन्ये। कस्मात्? यस्मादविद्वद्बुद्धिप्रलोभिनः कामा अप्सरःप्रभृतयो बहवोऽपि त्वा त्वां नालोलुपन्त न विच्छेदं कृतवन्तः श्रेयोमार्गादात्मोपभोगाभिवाञ्छा-सम्पादनेन । अतो विद्यार्थिनं श्रेयोभाजनं मन्य इत्यभिप्रायः ॥ ४ ॥ ५

ये तु संसारभाजनाः—अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमाना वेष्ट्यमानाः पुत्रपश्वादितृष्णा-पाशशतैः स्वयं वयं धीराः प्रज्ञावन्तः पण्डिताः शास्त्रकुशलाश्चेति मन्यमानास्ते दन्द्रम्यमाणा अत्यर्थं कुटिलामनेकरूपां गतिं गच्छन्तो जरामरणरोगादिदुःखैः परियन्ति परिगच्छन्ति मूढा अविवेकिनोऽन्धेनैव दृष्टिविहीनेनैव नीयमाना विषमे पथि यथा बहवोऽन्धा महान्तमनर्थमृच्छन्ति तद्वत् ॥ ५ ॥ १०

अत एव—मूढत्वान्न साम्परायः प्रतिभाति। सम्परेयत इति सम्परायः परलोकस्तत्प्राप्तिप्रयोजनः साधनविशेषः

गोपालयतीन्द्रटीका १५

भिन्नत्वे हेतुमाह—विवेकेति । तत्र दृष्टान्तः—तम इति । सुब्लोपश्छान्दस इत्याह—विषूच्याविति । भिन्नफलत्वं व्याचष्टे—संसारेति । संसारहेतुरविद्या मोक्षहेतुर्विद्येत्याकाङ्क्षापूर्वकं व्याचष्टे—के ते इति । या कर्मकाण्डे प्रसिद्धा प्रेयोविषया । इतिशब्दो वेदान्तप्रसिद्धयर्थः । परस्परसमुच्चयार्थश्चकारः । श्रेयो मोक्षो विषयः साध्यं यस्याः सा तथा । प्रसिद्धत्वात्कर्तृपदमाह—पण्डितैरिति । तत्र विद्याविद्ययोर्मध्ये । किमतोऽन्यं नचिकेतसं जानाति नेत्याह—त्वामिति । नचिकेतसो विद्यायोग्यतायामाकाङ्क्षापूर्वकमुत्तरवाक्यं हेतुपरत्वेन व्याचष्टे—कस्मादित्यादि । २० अविद्वद्बुद्धिप्रलोभिनोऽविवेकबुद्धिवशीकरणसमर्थाः । काम्यन्त इति कामाः । श्रेयोमार्गाज्ज्ञानमार्गान्न विच्छेदं कृतवन्तो विच्छिन्नसम्बन्धं न कृतवन्तः । सम्बन्धविच्छेदे हेतुमाह—आत्मेति । आत्मनाऽप्सरःप्रभृतिकामेन जनितो यो भोगः सुखं तस्य वाञ्छेच्छा तस्या उत्पादनद्वारा न विच्छेदं कृतवन्त इत्यन्वयः । तात्पर्यमाह—अत इति । यतस्तैर्न वशं नीतोऽत इत्यर्थः । भाजनं पात्रं योग्यमित्यर्थः ॥ ४ ॥

विद्याभिनिवेशायाविद्याधिकारिणो दर्शयति—ये त्वित्यादिना । संसारभाजनाः संसारयोग्याः । अन्तरं २५ कार्यकरणसङ्घातसारभूतो मध्यमो देशस्तत्र वर्तमानास्तादात्म्याभिमानवन्तः । वेष्ट्यमाना बध्यमानाः । कैरित्या-काङ्क्षायामाह—पुत्रेति । पुत्रादितृष्णा एव पाशशतानि तैरित्यर्थः । अत एव स्वयं धीराः प्रज्ञावन्तो वयमेव लौकिके प्रज्ञाशालिनः शास्त्रीयप्रज्ञाशालिन इति मन्यमाना इत्यर्थः । कार्यकरणाद्यभिमानशालिनां गतिमाह—त इति । यङन्तद्रम गताविति धात्वर्थमादाय दन्द्रम्यमाणा इति पदं व्याचष्टे—कुटिलामित्यादिना । अनेकरूपामुत्त-रायणादिरूपां गतिं मार्गमिच्छन्तः प्रार्थयन्तः । जराशब्दो दुःखहेत्ववस्थोपलक्षणार्थः । रोगो धातुवैषम्यम् । आदि- ३० शब्देन मनःपीडादिपरिग्रहः । तैर्जनितैर्दुःखैः परिगच्छन्ति परितः स्वर्गादिषु भ्रमन्तीत्यर्थः । अविवेकिनः संसारा-बध्यदर्शिनः । तत्र दृष्टान्तमाह—अन्धेनैवेति । नयनस्थानमाह—विषम इति । कण्टकपाषाणादिगर्तादिसहितः इत्यर्थः । यथाऽन्धा इति श्रुतिपदं व्याचष्टे—बहव इति । महान्तमनर्थं कण्टकतोदनपङ्गुत्वदेहविशीर्णत्वादिरूप-मृच्छति प्राप्नुवन्ति यथा तद्वद्भ्रमन्त्यविवेकिन इत्यन्वयः ॥ ५ ॥

पूर्वोक्तार्थं हेतुत्वेनाऽऽदायोत्तरं व्याचष्टे—अत एवेति । अतःशब्दार्थमाह—मूढत्वादिति । परे काले ३५

१. अविद्यायामन्तरे वर्तमानाः—इत्यस्य माध्वैः पुत्रपौत्रादिकमविद्येत्युक्तम् । तत् तत्राप्रयुक्तत्वादुपेक्ष्यम् । अविद्योपगमे तु तत्कार्यत्वादुपचरितुं शक्येत । विशिष्टाद्वैतिभिः कामकर्मादिलक्षणाविद्यायामिति व्याक्रियते तत्रापि विद्याविरुद्धाविद्यानभ्युपगमादसामञ्जस्यमेव । अस्मन्मते तु भावरूपाविद्योपगमात् सामञ्जस्यम् ।

[1]श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥

शास्त्रीयः साम्परायः स च बालमविवेकिनं प्रति न प्रतिभाति न प्रकाशते नोपतिष्ठत इत्येतत् । प्रमाद्यन्तं प्रमादं कुर्वन्तं पुत्रपश्वादिप्रयोजनेष्वासक्तमनसं तथा वित्तमोहेन वित्तनिमित्तेनाविवेकेन मूढं तमसाऽऽच्छन्नं सन्तमयमेव ५ लोको योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टो नास्ति परोऽदृष्टो लोक इत्येवं मननशीलो मानी पुनः पुनर्जनित्वा वशं मदधीनतामापद्यते मे मृत्योर्मम । जननमरणादिलक्षणदुःखप्रबन्धारूढ एव भवतीत्यर्थः । प्रायेण ह्येवंविध एव लोकः ॥ ६ ॥

यस्तु श्रेयोर्थी सहस्रेषु कश्चिदेवाऽऽत्मविद्भवति त्वद्विधो यस्मात्—श्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्य आत्मा बहुभिरनेकैः; शृण्वन्तोऽपि बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विदन्त्यभागिनोऽसंस्कृतात्मानो न विजानीयुः । १० किञ्चास्य वक्ताऽप्याश्चर्योऽद्भुतवदेवानेकेषु कश्चिदेव भवति । तथा श्रुत्वाऽप्यस्याऽऽत्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति । यस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाऽऽचार्येणानुशिष्टः सन् ॥ ७ ॥

आनन्दगिरिटीका

सम्यवपराक्काले देहपातादूर्ध्वमेवेयते गम्यत इति शेषः ॥ ६-७ ॥

गोपालयतीन्द्रटीका

१५ देहपतनादूर्ध्वं सम्यगीयते गम्यत इति सम्परायः । अथवा सम्यक्, पर इत्युपलक्षणम् । परापरब्रह्मप्राप्तिकाले प्रारब्धविगमानन्तरमित्यर्थः । तत्प्राप्तिप्रयोजनः परापरब्रह्मप्राप्तिः प्रयोजनं यस्य स तथा । साधनविशेषश्चोक्ताराध्यानादिः शास्त्रीयः प्रसिद्धो यः स बालं पुत्रपश्वादिष्वासक्तत्वादविवेकिनं प्रति नोपतिष्ठते बालो नानुतिष्ठतीत्यर्थः । प्रमादं कुर्वन्तं व्याचष्टे—पुत्रेति । पुत्रादिसाध्यप्रयोजनेषु न केवलमासक्तमनसं न भाति किं त्वन्यथाऽपीत्याह—तथेति । मूढमिति । वित्तातिरिक्तपुरुषार्थमपश्यन्तं तदर्जनादौ व्यासक्तचित्तमित्यर्थः । अत एव तमसाऽऽच्छन्नमित्याह—२० तमसेति । अविवेकेनेत्यर्थः । तमसा साम्परायो न भातीत्यन्वयः । ननु द्रव्यासक्ततयाऽयं लोको न भायात्परस्तु भातीत्याशङ्क्य कैमुतिकन्यायेनाऽऽह—अयमेवेति । लोकं विशिनष्टि—स्त्र्यन्नेति। इतिशब्द उक्तपरामर्शी। मानीति वित्ततृष्णयाऽभिमानवानित्यर्थः । सकृदुत्पन्नस्य पुनः पुनर्यमवश्यताऽनुपपन्नेत्यत आह—जनित्वेति । प्रबन्धः प्रवाहः । ननु धर्मार्थकामेषु सर्व एव लोक आसक्तश्चेद्विद्याधिकारिणोऽभावादुपनिषदां व्यर्थतेत्याशङ्क्याऽऽह—प्रायेणेति । उत्सर्गतः कामाद्यासक्त एव जन इत्यर्थः । हिशब्दः प्रसिद्धार्थकः ॥ ६ ॥

२५ यस्त्वनेकजन्मार्जितसुकृतप्रसादासादितशुद्धबुद्धिः कामादिविमुखो निरतिशयपुरुषार्थं ब्रह्म प्रत्यक्त्वेन जानाति सहस्रेषु नचिकेतःसदृशः कश्चिदेव भवतीत्याह—यस्त्विति । तत्र हेतुपरमुत्तरमाह—यस्मादिति । ननु मेघसन्देशाद्यसन्नप्यर्थः श्रूयत इत्याशङ्क्याऽऽह—श्रवणार्थमिति । तस्य व्याख्या—श्रोतुमपीति । अनेकैः श्रोतुमपि यो न लभ्य इत्यन्वयः । अयमाशयः—श्रवणस्य दृष्टफलत्वान्निर्विषयस्य च साक्षात्काराजनकत्वाज्जनितस्यापि प्रतिभाप्रत्ययवद्भ्रान्तित्वादात्माऽविषय एवेष्टव्य इति । केषाञ्चिच्छ्रोतुं दुर्लभोऽन्येषां ज्ञातुं दुर्लभ इत्याह—शृण्वन्तोऽपीति । अन्य ३० इति पूर्वोक्ताधिकारिभ्य इत्यर्थः । न विदन्तीत्येतद्धेतुपूर्वकं व्याचष्टे—अभागिन इति । तद्व्याचष्टे—असंस्कृतेति । नित्यनैमित्तिकैरसंस्कृत आत्माऽन्तःकरणं येषां ते तथोक्ताः । यस्माच्छ्रोतारश्च ज्ञातारश्च दुर्लभास्तस्मात्कश्चिदेवाधिकारी भवतीति पूर्वेणान्वयः । एवं श्रोतारं मह्रीकृत्य वक्तारं मह्रीकरोति—किञ्चेति । न केवलं श्रोता दुर्लभो वक्ताऽपीत्यर्थः । अस्याऽऽत्मनः । आश्चर्यशब्दोऽद्भुतवाचीति तत्सदृशे लक्षणेत्याह—अद्भुतवदेवेति । यथाऽनेकेषु पदार्थेषु कश्चिदेव पदार्थ आश्चर्यकर एवं वक्ताऽपि कश्चिदेव भवतीत्यर्थः । वक्तृत्वदौर्लभ्यानन्तरं ३५ श्रोतृष्वनेकेषु लब्धाऽप्यात्मनः कुशल एव कश्चिदेव भवतीत्याह—तथेति । यथा वक्ता दुर्लभस्तथेत्यर्थः । कुशल एव युक्त्यनुभवसमर्थ एव । तत्र हेतुमाह—यस्मादिति । निपुणेन साक्षात्कृतब्रह्मतत्त्वेनाऽऽचार्येणानुशिष्टो वेदान्तैः शिक्षितः सन् ज्ञाता साक्षात्कारवान्कश्चिदेव भवति यस्मात्तस्मात्कश्चिदेवाऽऽत्मनो लब्धेत्यन्वयः ॥ ७ ॥

---

१ अस्य श्लोकस्य गम्भीरार्थः गीतागूढार्थदीपिकायां श्रीमधुसूदनस्वामिभिर्व्याख्यातो द्रष्टव्यः (२-२९) ।

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।
अनन्यप्रोक्ते[1] गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥

कस्मात्—नहि नरेण मनुष्येणावरेण प्रोक्तोऽवरेण हीनेन प्राकृतबुद्धिनेत्येतत्, उक्त एष आत्मा यं त्वं मां पृच्छसि। न हि सुष्ठु सम्यग्विज्ञेयो विज्ञातुं शक्यो यस्माद्बहुधाऽस्ति नास्ति कर्ताऽकर्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमानो वादिभिः। कथं पुनः सुविज्ञेय इत्युच्यते—अनन्यप्रोक्तेऽनन्येनापृथग्दर्शिनाऽऽचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्त उक्त आत्मनि गतिरनेकधाऽस्तिनास्तीत्यादिलक्षणा चिन्ता गतिरत्रास्मिन्नात्मनि नास्ति न विद्यते सर्वविकल्पगतिप्रत्यस्तमितत्वादात्मनः। अथवा स्वात्मभूतेऽनन्यस्मिन्नात्मनि प्रोक्तेऽनन्यप्रोक्ते गतिरत्रान्यावगतिर्नास्ति ज्ञेयस्यान्यस्याभावात्। ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम्। अतोऽवगन्तव्याभावान्न गतिरत्रावशिष्यते। संसारगतिर्वाऽत्र नास्त्यनन्य आत्मनि प्रोक्ते नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य। अथवा प्रोच्यमानब्रह्मात्म-

आनन्दगिरिटीका

अणुत्वं परोक्षत्वम् ॥ ८-९ ॥

गोपालयतीन्द्रटीका

ननु वाक्यार्थव्युत्पत्तिमताऽप्याचार्येणानुशिष्टोऽधिकारी स्वाधिकारसामर्थ्याज्ज्ञास्यति लब्धा च भविष्यतीत्याशङ्कते—कस्मादिति। श्रोत्रियं ब्रह्मनिष्ठमितिश्रुत्यन्तरे व्युत्पत्तिव्यतिरेकेण ब्रह्मनिष्ठताया आचार्यविशेषणत्वेन श्रुतत्वात्तादृगाचार्योक्त आत्मा ज्ञातुं लब्धुं च शक्य इत्याशयेनाह—न नरेणेत्यादिना। मनुष्येण मनुष्यत्वाभिमानवताऽत एवावरेण। अवरपदार्थमाह—हीनेनेति। प्राकृतबुद्धिना प्रकृतित आगतेषु पश्वादिष्वभिमानरूपा बुद्धिर्यस्य स प्राकृतबुद्धिस्तेनेत्यर्थः। यं पृच्छसि येयमित्यादिनेति शेषः। तत्र हेतुमाह—यस्मादिति। शून्यवादिव्यतिरिक्तवादिभिरस्तीति चिन्त्यमानस्तैर्नास्तीति चिन्त्यमानोऽस्तीति पक्षे साङ्ख्यव्यतिरक्तैः कर्ताऽशुद्ध इत्यकर्ता शुद्ध इति वेदान्तिभिश्च स एव ब्रह्माभिन्न इति चिन्त्यमानो यस्मात्तस्माद्विप्रतिपत्तिमता ह्युपदिष्टोऽर्थो न लब्धुं शक्य इति भावः। केनाऽऽचार्येणोपदिष्ट आत्मा ज्ञातव्य इति पृच्छति—कथमिति। प्रतिपाद्यब्रह्मात्मभूतेन जीवन्मुक्तेन शिष्यबुद्धिपरिपाकप्रेरणावता ह्युपदिष्ट आत्मा लब्धुं शक्य इत्याह—उच्यत इति। नान्योऽनन्यस्तेन। ब्रह्मणः सकाशादिति शेषः। विषयेण विषयी लक्ष्यत इत्याह—अपृथग्दर्शिनेति। अभेददर्शिनेत्यर्थः। तदेव विवृणोति—प्रतिपाद्येति। वेदान्तैः प्रतिपाद्यो ज्ञेयो योऽभिन्नात्मा तत्स्वरूपेणेत्यर्थः। आत्मन्युक्ते सतीत्यन्वयः। गतिशब्दस्य पूर्वोक्तविकल्पविषयचिन्तापरत्वमादाय व्याचष्टे—गतिरिति। सर्वे च ते विकल्पाश्च सर्वविकल्पास्तद्विषया गतिश्चिन्ता प्रत्यस्तमिता लीना यस्मिंस्तस्य भावस्तत्त्वं तस्मात्। आचार्यपदाध्याहारेणार्थान्तरमाह—अथवेति। स्वात्मभूते ब्रह्मात्मभूतेऽनन्य इत्येवंरूपेणाऽऽत्मनि प्रोक्ते प्रकर्षेणोपदिष्टे सतीत्यन्वयः। अत्राऽऽत्मनि ब्रह्माहमस्मीत्यवगतेरन्येति शेषः। ज्ञेयस्यान्यस्याभावादिति। ब्रह्मात्मैक्याद्भिन्नस्याभावादित्यर्थः। आत्मैकत्वेन विज्ञप्तिरभिव्यक्तिरात्मैकत्वविज्ञानम्। फलितमाह—अत इति। यतो ब्रह्मात्मैकत्वमेव ज्ञेयं तज्ज्ञानं गतिरत इत्यर्थः। गन्तव्याभावाद्गन्तव्यान्तराभावाद्यतो न प्राप्तव्यान्तरमतो गतिर्ज्ञानान्तरं नावशिष्यत इत्यर्थः। गतिरत्र नास्तीत्यंशस्यार्थान्तरमाह—संसारगतिर्वेति। अनन्य आत्मनि गुरुणा प्रोक्त आत्मनि संसारगतिः संसारप्रतिभासः सत्यत्वेन नास्ति कर्तृत्वादेः संसारस्याभास एव प्रत्यय इति भावः। ननु विज्ञानस्य न संसारनिवृत्तिर्मुख्यं फलं तत्कथं संसारावगतिनिषेध इति। नेत्याह—नान्तरीयकत्वादिति। विज्ञानफलस्य मोक्षस्याऽऽनन्दावाप्तेः संसारनिवृत्तिनान्तरीयकत्वादित्यर्थः। अगतिरिति पदच्छेदेनार्थान्तरमाह—अथवेति। प्रोच्यमानं यद्ब्रह्म तदात्मभूतेनाऽऽचार्येण शिष्यबुद्ध्या बिम्बेश्वरभूतेनोपदिष्ट आत्मनि शिष्यस्याधिकारिणोऽनवबोध आत्मविषये नास्त्येव,

---

1 यत्तु अनन्यप्रोक्ते गतिरत्र नास्तीति ब्रह्माभिन्नेन जीवेन प्रोक्ते ज्ञानं न भवतीत्युक्तं। तन्न, अगतिः अज्ञानं नास्तीति पदच्छेदनात् अद्वैतिना प्रोक्त एव ज्ञानं भवतीति सिद्धत्वात्। युक्तं चैतत् अभिन्नश्चेत् स्वस्य यत् स्वरूपं तदेव ब्रह्मण इति ब्रह्म जानीयात् अन्यप्रोक्ते तु तस्य ब्रह्मतत्त्वज्ञानं भवति वेति सन्देह एव।

नैषा तर्केण मतिरापनेया [1]प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ।
यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥

भूतेनाऽऽचार्येण प्रोक्त आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति। भवत्येवावगतिस्तद्विषया श्रोतुस्तदस्म्यहमित्या-
चार्यस्येवेत्यर्थः। एवं सुविज्ञेय आत्माऽऽगमवताऽऽचार्येणानन्यतया प्रोक्तः। इतरथाह्यणीयानणुप्रमाणादपि सम्पद्यत
५ आत्मा। अतर्क्यमतर्क्यः स्वबुद्ध्याऽभ्यूहेन केवलेन तर्केण। तर्क्यमाणेऽणुपरिमाणे केनचित्स्थापित आत्मनि ततो
ह्यणुतरमन्योऽभ्यूहति ततोऽप्यन्योऽणुतममिति। न हि कुतर्कस्य निष्ठा क्वचिद्विद्यते ॥ ८ ॥
अतोऽनन्यप्रोक्त आत्मन्युत्पन्ना येयमागमप्रतिपाद्यात्ममतिः—नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेणाऽऽपनेया न
प्रापणीयेत्यर्थः। नापनेतव्या वा न हातव्या। तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कथयति। अत

गोपालयतीन्द्रटीका

१० बोधो भवत्येवेत्यर्थः। इदमुपलक्षणं प्रतिबद्धबोधस्यापि। बोधे प्रतिबन्धो न भवतीति भावः। श्रोतुर्बोधमभिनीय
दर्शयति—तदस्म्यहमिति। तत्प्रत्यगभिन्नमहमस्मीत्यर्थः। तदनन्योऽहमिति पाठेऽप्ययमेवार्थः। तत्रोपमानमाह—
आचार्यस्येवेति। वृत्तानुवादपूर्वकमुत्तरवाक्यमवतारयति—एवमिति। अनन्यतया स्थितेनाऽऽचार्येण प्रोक्त आत्मा
सुविज्ञेय इति प्रथमव्याख्यानुवादः। न केवलमाचार्येणोपदिष्ट आत्मा, अपि त्वागमेनापीत्याह—आगमवतेति।
अवगमवतेति पाठः सुगमः। द्वितीयव्याख्यान आचार्येणानन्यतयाऽनन्य इत्येवंरूपेण प्रोक्त आत्मा सुविज्ञेय
१५ इत्यनुवादः। तृतीये समः। चतुर्थ आचार्येणैव प्रोक्त आत्मा सुविज्ञेय इत्येवकाराध्याहारेणानुवादो व्याख्येयः।
पृथग्दर्शिना तूपदिष्ट आत्मा परोक्ष एवेत्याह—इतरथेति। पृथग्दर्शिनोपदिष्ट आत्माऽणुः परोक्षः परोक्षादपि
परोक्षोऽणीयानणुप्रमाणादप्यल्पपरिमाणादप्यणीयान्सम्पद्यत इत्यर्थः। हिरप्यर्थः। अल्पपरिमाणादप्यणुतरः सम्पद्यत
आत्मेत्यत्र हेतुमाह—अतर्क्यमिति। अणीयानित्युपक्रमे पुंलिङ्गनिर्देशादतर्क्यमिति नपुंसकः पुंलिङ्गत्वेन विपरिणेय
इत्याह—अतर्क्य इति। तर्केण ज्ञेयस्तर्क्यो न तर्क्योऽतर्क्यः। ननु तर्कस्यानुमानरूपत्वेन प्रमाणत्वाच्छ्रुतिवद्वस्त्ववबोध-
२० कत्वात्कथं तर्कागम्य आत्मेत्यत आह—स्वबुद्ध्याऽभ्यूहेनेति। स्वाधीना बुद्धिः स्वबुद्धिर्न गुर्वाद्युपदेशेन संस्कृता
तयाऽभ्यूह आरोपस्तेन तर्केणेत्यर्थः। तथा सत्यनुमानस्य मन्तव्य इति श्रुत्या वेदान्तसहायत्वमुक्तं बाधितं
स्यादित्याशङ्क्याऽऽह—केवलेति। श्रुत्यसहायेनेत्यर्थः। तथा च श्रुत्यनुकूलतर्कस्य समूलत्वात्प्रामाण्येऽपि केवलस्य
नार्थनिश्चायकतेति भावः। केवलेन तर्केणातर्क्य इत्यन्वयः। विपक्षे दण्डमाह—तर्क्यमाण इति। तर्क्यमाण
आत्मनि केनचित्तार्किकेणाणुपरिमाणे स्थापित इत्यन्वयः। एकेनाणुत्वेन स्थापित आत्मन्यन्योऽपि तार्किकं-
२५ मन्योऽन्यथाऽभ्यूहतीत्याह—तत इति। ततः पूर्वस्मात्परिमाणादणुतां ततोऽपि परोक्षतामन्यस्तार्किक ऊहति।
हि प्रसिद्धमेतत्। ततोऽपीति। पूर्ववत्। ननु कश्चित्तार्किकाग्रणीः परिमाणस्य निष्ठां वेत्स्यतीति नेत्याह—न हीति।
कुत्सिततर्कः कुतर्कः उत्प्रेक्षामात्रनिबन्धनस्तस्य निष्ठा कस्मिंश्चिद्विषये परिसमाप्तिः काचिदपि न विद्यत इत्यर्थः ॥८॥

फलितमाह—अत इति। यतस्तर्कानधीनाऽत इत्यर्थः। अनन्येनापृथग्दर्शिना प्रोक्त आत्मनि विषय आगम-
प्रतिपाद्या तरति शोकमात्मविदित्यागमेन फलत्वेन प्रतिपाद्या येयं मतिरेषा तर्केण न प्रापणीया न परिणेयेत्यर्थः।
३० पुनर्नकारग्रहणमन्वयार्थम्। अर्थान्तरमाह—नापनेतव्येति। न हातव्या न बाधनीया। वाशब्दः पक्षान्तरद्योती।

१. यच्च प्रोक्तान्येन भेदज्ञानवतेत्यर्थ इति, तन्न। नैषा तर्केणेति पूर्वं तार्किकोक्तेः तद्भिन्नेनेति स्वरस-
सिद्धार्थत्यागात्। यत्तु मृत्वा यमं प्राप्तस्य नचिकेतसः न शरीरव्यतिरिक्तात्मनि सन्देहः स्वस्यैव
तथात्वात्, इति। तन्न। अस्मिन्प्रकरणे अन्यत्र वा नचिकेतसो मरणानुक्तेः। मृत्वाऽऽगत इति कल्पनं
न सम्भवति, तथा सति मृत्वा यमलोके सद्य एवोत्पन्नस्य यमेन सम्वादो वा पूर्वजन्म स्मृत्वा पूर्वपितृ-
३५ सौमनस्यप्रार्थनं वा नैव सम्भवेत्। पितरमेव जीवन्नयानि इति च पितृसकाशात् वियुक्तो यमदर्शनान्तं
जीवतीति जीवन्नेव वर्तत इति स्फुटत्वाच्च। प्रथमं शरीरव्यतिरिक्तजीवास्तित्वं पृष्ट्वा पुनः अन्यत्र
धर्मादित्यादिना तस्यैव धर्माद्यतिक्रान्तं स्वरूपं पृष्टवतः शुद्धजीवप्रश्नोऽयं तेन कृत इति स्फुटमेव।
तस्यैव चाङ्गुष्ठमात्रः ईशानो भूतभव्यस्येति ईश्वराभेदः स्वयमेव यमेन प्रतिपाद्यत इति सुष्ठु।

जानाम्यहँ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥१०॥
कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् ।
स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥

एव च येयमागमप्रभूता मतिरन्येनैवाऽऽगमाभिज्ञेनाऽऽचार्येणैव तार्किकात्प्रोक्ता सती सुज्ञानाय भवति। हे प्रेष्ठ प्रियतम। का पुनः सा तर्कागम्या मतिरित्युच्यते। यां त्वं मतिं मद्वरप्रदानेनाऽऽपः प्राप्तवानसि। सत्याऽवितथविषया धृतिर्यस्य तव स त्वं सत्यधृतिर्बतासीत्यनुकम्पयन्नाह मृत्युर्नचिकेतसं वक्ष्यमाणविज्ञानस्तुतये। त्वादृक्त्वत्तुल्यो नोऽस्मभ्यं भूयाद्भवताद्भवत्वन्यः पुत्रः शिष्यो वा प्रष्टा। कीदृग्यादृक्त्वं हे नचिकेतः प्रष्टा॥ ९॥

पुनरपि तुष्ट आह—जानाम्यहं शेवधिर्निधिः कर्मफललक्षणो निधिरिव प्रार्थ्यत इति। असावनित्यमनित्य इति जानामि। न हि यस्मादनित्यैरध्रुवैर्नित्यं ध्रुवं तत्प्राप्यते परमात्माख्यः शेवधिः। यस्तु अनित्यसुखात्मकः शेवधिः स एवानित्यैर्द्रव्यैः प्राप्यते। हि यतस्ततस्तस्मान्मया जानताऽपि नित्यमनित्यसाधनैर्न प्राप्यत इति नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः पश्वादिभिः स्वर्गसुखसाधनभूतोऽग्निर्निर्वर्तितत इत्यर्थः। तेनाहमधिकारापन्नो नित्यं याम्यं स्थानं स्वर्गाख्यं नित्यमापेक्षिकं प्राप्तवानस्मि॥ १०॥

त्वं तु—कामस्याऽऽप्तिं समाप्तिम्, अत्रैवेहैव सर्वे कामाः परिसमाप्ताः, जगतः साध्यात्माधिभूताधिदैवादेः

आनन्दगिरिटीका

मया जानताऽपि बह्वायासं कर्म कृतं त्वं दीयमानमपि तत्फलं न गृह्णासि मत्तोऽधिकप्रज्ञोऽसीति सन्तोषात्स्तौतीत्याह—पुनरपि तुष्ट आहेति॥ १०-११॥

गोपालयतीन्द्रटीका

प्रथमपक्षे ह्यात्मविषया मतिर्न तर्केण जननीयेत्यर्थः। द्वितीये कुतर्कादिनाऽऽगमजनितमतिर्न बाधनीयेत्यर्थः। नन्वागमानुकूलतर्कस्यापि निषेधः स्यादित्याशङ्क्य कुतर्कस्यैव निषेध इत्याह—तार्किक इति। यत्किञ्चिदेव कथयतीत्यन्वयः। यत्किञ्चित्प्रत्यगभिन्नस्य तटस्थत्वादिकम्। तदपि प्रमाणमूलमिति चेन्नेत्याह—स्वबुद्धिपरिकल्पितमिति। तत्र हेतुः—अनागमज्ञ इति। हि यस्मादागमार्थानभिज्ञस्तार्किकस्तस्मात्स्वबुद्धिपरिकल्पितमेव यत्किञ्चित्कथयतीत्यन्वयः। अपृथग्दर्शिनाऽऽचार्येणोपदिष्ट आत्मा ज्ञातुं शक्य इत्युक्तमर्थं श्रुतिर्निगमयतीत्याह—अत एवेति। यतस्तर्कजन्या न भवतीत्यत इत्यर्थः। कस्मादन्येनेत्यपेक्षायां पूरयति—तार्किकादिति। प्रोक्ता प्रकर्षेणोपदिष्टेत्यर्थः सुज्ञानाय साक्षात्काराय। प्रियतमेति सम्बोधनं नचिकेतसः। आकाङ्क्षापूर्वकमुत्तरवाक्यमवतारयति—का पुनरिति। मतेरुत्तरक्षणे प्राप्स्यमाणत्वात्प्राप्तवानसीति निर्देशः वरप्रदानस्याग्निविद्यादिप्राप्तिपर्यन्तत्वाद्वाऽसीति निर्देशः। अवितथः परमार्थ आत्मा विषयो यस्याः सा तथा। अनुकम्पयन्दयां कुर्वन्नित्यर्थः। नचिकेतसमनुकम्पयन्वक्ष्यमाण विज्ञानस्तुतय आहेत्यन्वयः। हे नचिकेतो यादृक्त्वं प्रष्टा त्वत्तुल्योऽस्मभ्यं तादृक्पुत्रः शिष्यो वा भवत्वित्युत्तरवाक्यान्वयः॥ ९॥

मया जानताऽपि बह्वायासं कर्म कृतं तत्फलं दीयमानमपि न गृह्णासि ततो मत्तोऽप्यधिकतरप्रज्ञोऽसीति सन्तोषात्स्तौतीत्याह—पुनरपि तुष्ट आहेत्यादिना। शेवधिशब्देन निधिशब्दपर्यायेण कथं कर्मफलमुच्यते भूस्थापितहिरण्याद्यर्थकत्वान्निधिशब्दस्येत्याशङ्क्य कामनाविषयत्वगुणयोगाच्छेवधिशब्दः कर्मफले विद्यत इत्याह—निधिरिवेति। शेवधिशब्दस्य पुंलिङ्गत्वादाह—अनित्यमनित्य इतीति। तत्र प्राप्यत इत्यन्वयः। ध्रुवशब्दार्थमाह—परमात्मेति। तर्ह्यनित्यसुखप्राप्तिः केनेत्यत आह—यस्त्विति। हे नचिकेतो नित्यमनित्यसाधनैर्न प्राप्यत इति जानताऽपि मयाऽग्निश्चित इत्यन्वयः। पदार्थमुक्त्वा वाक्यार्थमाह—अनित्यैरिति। तेन चितेनाग्निनाऽधिकारापन्नो धर्माधर्मफलयोः प्रदानेन जन्तूनां नियन्तृत्वमापन्नः। याम्यमिति। यमयति नियच्छतीति यमस्तस्येदं याम्यं तेनाधिष्ठितमिति यावत्। ननु कर्मफलस्य तद्यथेहेत्यादिश्रुत्याऽनित्यत्वश्रवणात्कथं नित्यत्वं तत्राऽऽह—आपेक्षिकमिति। किञ्चित्कालावस्थायीत्यर्थः॥ १०॥

आहिरण्यगर्भपदाद्विरक्तस्य ब्रह्मविद्यायामधिकार इत्येतद्दर्शयितुं प्रष्टारं स्तौति—त्वं त्विति। अत्रैवेति पदं

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥
एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।
स मोदते मोदनीयँ हि लब्ध्वा विवृतँ सद्म नचिकेतसं मन्ये ॥१३॥

५ प्रतिष्ठामाश्रयं सर्वात्मकत्वात्, क्रतोः उपासनायाः फलं हैरण्यगर्भं पदमनन्त्यमानन्त्यम्। अभयस्य च पारं परां निष्ठाम्। स्तोमं स्तुत्यं, महदणिमाद्यैश्वर्याद्यनेकगुणसंहतं स्तोमं च तन्महच्च निरतिशयत्वात् स्तोममहत्। उरुगायं विस्तीर्णां गतिम्। प्रतिष्ठां स्थितिमात्मनोऽनुत्तमामपि दृष्ट्वा धृत्या धैर्येण धीरो धीमान् सन्नचिकेतोऽत्यस्राक्षीः परमेवाऽऽकाङ्क्षन्नतिसृष्टवानसि सर्वमेतत्संसारभोगजातम्। अहो बतानुत्तमगुणोऽसि।।११।।

यं त्वं ज्ञातुमिच्छस्यात्मानं—तं दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शोऽतिसूक्ष्मत्वात्। गूढं गहनमनुप्रविष्टं प्राकृत-
१० विषयविकारविज्ञानैः प्रच्छन्नमित्येतत्। गुहाहितं गुहायां बुद्धौ स्थितं तत्रोपलभ्यमानत्वात्। गह्वरेष्ठं गह्वरे विषमेऽनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम्। यत एवं गूढमनुप्रविष्टो गुहाहितश्चातो गह्वरेष्ठः। अतो दुर्दर्शः। तं पुराणं पुरातनमध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तस्याधिगमस्तेन मत्वा देवमात्मानं धीरो हर्षशोकावात्मन उत्कर्षापकर्षयोरभावाज्जहाति ॥ १२ ॥

किञ्चैतदात्मतत्त्वं यदहं वक्ष्यामि—एतच्छ्रुत्वाऽऽचार्यसकाशात् सम्यगात्मभावेन परिगृह्योपादाय मर्त्यो

१५

आनन्दगिरिटीका

यश्च त्वया देहव्यतिरिक्त आत्मा पृष्टस्तस्यैव परमार्थस्वरूपज्ञानं संसारनिवर्तकं परमानन्दप्राप्तिसाधनं धर्म्यं च नातः परं श्रेयःसाधनमस्तीति पृष्टस्य वस्तुनः प्रशंसया च प्रष्टारं प्रशंसति—यं त्वं ज्ञातुमिच्छसीत्यादिना ॥ १२-१३ ॥

गोपालयतीन्द्रटीका

२० व्याचष्टे—इहैवेति । हिरण्यगर्भपद इत्यर्थः । हिरण्यगर्भस्याध्यात्माधिभूतादिसहितसर्वजगदाश्रयत्वे हेतुमाह—सर्वात्मकत्वादिति । आनन्त्यपदापेक्षितक्रतुफलं हिरण्यगर्भपदमित्याह—क्रतोः फलमित्यादिना । क्रतुर्हिरण्यगर्भोपासना । आनन्त्यमापेक्षिकम् । एवमुत्तरपदेष्वपि द्रष्टव्यम् । भाष्ये प्रथमचकार आनन्त्याभयसमुच्चयार्थः द्वितीयः स्तोममहत्त्वगुणसमुच्चयार्थः । संहतमिति । विशिष्टमित्यर्थः । पदार्थमभिधाय तदनुवादेन हेतुं दर्शयति—स्तोमं चेत्यादिना । अनेककालावस्थायि हिरण्यगर्भपदं गम्यत इति व्युत्पत्त्या विस्तीर्णगतिरित्युच्यते । हे नचिकेत
२५ इति सम्बोधनमत्यस्राक्षीरित्यत्र द्रष्टव्यम् । किं त्यक्तवानसीत्यपेक्षायां प्रोक्तहिरण्यगर्भपर्यन्तसंसारभोगजातमित्याह—सर्वमेतदिति । उपक्रान्तश्रोतृप्रशंसामुपसंहरति—अहो बतेति ॥ ११ ॥

यश्च त्वया देहव्यतिरिक्त आत्मा पृष्टस्तस्यैव परमार्थस्वरूपविज्ञानं सनिदानसंसारनिवर्तकं परमानन्दप्राप्तिसाधनमतः परं श्रेयःसाधनं धर्मश्च नास्तीति पृष्टस्य वस्तुनः प्रशंसया च प्रष्टारं प्रशंसति—यं त्वं ज्ञातुमिच्छसीत्यादिना । यमात्मानं ज्ञातुमिच्छसि तमित्यन्वयः । यं च त्वमिति क्वचित्पाठः दुःखेनेति । अत्यन्तायासे-
३० नेत्यर्थः । तदुक्तं कश्चित्मां वेत्ति तत्त्वत इति । तत्र हेतुमाह—अतिसूक्ष्मत्वादिति । तमिति । परमसूक्ष्माकाशादेरपि कारणत्वादतिसूक्ष्ममतो दुर्दर्शमित्यर्थः । गूढमनुप्रविष्टमित्यस्य तात्पर्यार्थमाह—प्राकृतेति । विषयाः शब्दादयः । नन्वनन्तायामविस्तारस्य न बुद्धौ स्थितत्त्वमित्याशङ्क्याऽऽह—तत्रेति । बुद्धावित्यर्थः । अनर्था रागद्वेषादयस्तैः सङ्कटेऽत्यन्तायासजनके कार्यकारणसङ्घात इत्यर्थः । गूढमनुप्रविष्टत्वं गुहाहितत्वं च गह्वरेष्ठत्वे हेतुस्तच्च दुर्दर्शत्वे हेतुरित्याह—यत एवमित्यादिना । यतो गह्वरेष्ठोऽत इत्यर्थः । पुरातनं सनातनमित्यर्थः । अधिगमेनेति । प्राप्त्येत्यर्थः ।
३५ धीरोऽध्यात्माधिगमेन देवमात्मानं मत्वा हर्षशोकौ जहातीन्वयः । हर्षशोकोपलक्षितसंसारनिवृत्तौ हेतुमाह—आत्मन इति । स्वोत्कर्षप्रयुक्तं सुखादि परोत्कर्षप्रयुक्तं दुःखादि स्वापकर्षप्रयुक्तं दुःखादि परापकर्षप्रयुक्तं सुखादि तयोरभावस्तस्मादपगच्छत इत्यर्थः । अत्र धीरो बुद्धिमानिति श्रवणमननसत्त्वमुच्यते । अध्यात्मयोगशब्देन निदिध्यासनमुच्यते । मत्वेति साक्षात्कार उच्यते ॥ १२ ॥

आत्मतत्त्वज्ञानस्य सनिदानसंसारनिवर्तकत्वमादर्श्याऽऽनन्दावाप्तिसाधनतामाह—किञ्चेति । वक्ष्यामीति ।

अन्यत्र　धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
[१]अन्यत्र　भूताच्च　भव्याच्च　यत्तत्पश्यसि　तद्वद ॥१४॥

मरणधर्मा धर्मादनपेतं धर्म्यं प्रवृह्योद्यम्य पृथक्कृत्य शरीरादेरणुं सूक्ष्ममेतमात्मानमाप्य प्राप्य स मर्त्यो विद्वान्मोदते मोदनीयं हर्षणीयमात्मानं लब्ध्वा । तदेतदेवंविधं ब्रह्मसद्म भवनं नचिकेतसं त्वां प्रत्यपावृतद्वारं विवृतमभिमुखीभूतं मन्ये मोक्षार्हं त्वां मन्य इत्यभिप्रायः ॥ १३ ॥　५

यद्यहं योग्यः प्रसन्नश्चासि भगवन्मां प्रति अन्यत्र धर्माच्छास्त्रीयाद्धर्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूत-

आनन्दगिरिटीका

यदि देहव्यतिरिक्तस्याऽऽत्मनः प्रथमं पृष्टस्य परमार्थस्वरूपज्ञानमेव श्रेयःसाधनं तर्हि तदेव ब्रूहीत्याह—यद्यहं योग्य इत्यादिना । अत एव वरदानव्यतिरेकेणापूर्वोऽयं प्रश्न इति नाऽऽशङ्कनीयं पूर्वपृष्टस्यैव याथातथ्यप्रश्नः पृष्टस्य वस्तुनो विशेषणान्तरं ज्ञानसाधनं वक्तुमित्यर्थः ॥ १४ ॥　१०

गोपालयतीन्द्रटीका

न जायत इत्यारभ्येति द्रष्टव्यम् । स्वाधीनश्रवणं व्यावर्तयति—आचार्यप्रसादादिति । अथवाऽऽचार्यप्रसादात्संपरिगृह्येति योजना । आत्मभावेन परिगृह्येति मननेन ब्रह्मतत्त्वं श्रुतं प्रत्यगात्मत्वेन निश्चित्येत्यर्थः । प्रायेण मनुष्याधिकारत्वाच्छास्त्रस्येति मर्त्यग्रहणम् । तत्त्वज्ञानस्योत्तमधर्मत्वमाह—धर्मादिति । कस्मात्पृथक्कृत्येत्यपेक्षायामाह—शरीरादेरिति । पृथक्करणं निदिध्यासनम् । प्राप्तिः साक्षात्कारः । मोदनीयमात्मानं लब्ध्वा स विद्वान्मोदत इत्यनेनाऽऽनन्दावाप्तिरुक्ता । एवं वस्तुप्रशंसां कृत्वा प्रष्टारं प्रशंसतीत्याह—तदेवमित्यादिना । तदिति । तस्मादित्यर्थः । यस्माद्विद्वान्साक्षात्कारान्निरतिशयब्रह्म प्राप्नोति तस्मादित्यर्थः । एवंविधमिति । निरतिशयानन्दस्वरूपमित्यर्थः । ब्रह्मैव सद्म ब्रह्मसद्म भवनं गृहं प्राप्यस्थानमित्यर्थः । अभिमुखीभूतमिति । प्रसन्नमित्यर्थः । "यमेवैष वृणुत" इति श्रुतेः । पदार्थमुक्त्वा तात्पर्यार्थमाह—मोक्षार्हमिति ॥ १३ ॥　१५

यद्यादौ पृष्टस्य देहव्यतिरिक्तस्याऽऽत्मनः पारमार्थिकस्वरूपज्ञानमेव श्रेयःसाधनं तर्हि तदेव ब्रूहीति नचिकेता आह—यद्यहं योग्य इत्यादिना । अत एव वरदानव्यतिरेकेणापूर्वोऽयं प्रश्न इति नाऽऽशङ्कनीयम् । येयं प्रेत इत्यादिना पृष्टस्यैव देहव्यतिरिक्तस्याऽऽत्मनो याथात्म्यप्रश्नोऽयं पृष्टस्य वस्तुन ओङ्कारोपासनादिरूपविशेषणान्तरं ज्ञानसाधनं वक्तुमित्यर्थः । मां प्रति यदि प्रसन्नश्चासि मह्यं तद्वदेत्यन्वयः । किं तदित्यपेक्षायामाह—अन्यत्रेत्यादिना । धर्मत्वेन प्रसिद्धचैत्यवन्दनादेरधर्मत्वख्यापनाय शास्त्रीयादिति विशेषणम् । ननु धर्मानुष्ठानादन्यदित्युक्ते तत्फलं तत्कारकं चाऽऽत्मा स्यादित्याशङ्क्य धर्मग्रहणस्योपलक्षणत्वान्न दोष इत्याह—तत्फलादित्यादिना । अधर्मादन्यदित्यत्राप्युप-　२०　२५

१. अन्यत्र धर्मादित्यादि च शुद्धजीवपरत्वे सङ्गच्छते । अन्यत्रास्मात् कृताकृतात् इति "नैनं कृताकृते तपत" इत्यत्र पुण्यपापपरताया व्यक्तत्वात् तयोर्जीव एव प्रसक्तत्वात् । वेदप्रतिपाद्यत्वं प्रणवे उपास्यत्वं च शुद्धस्यैव ।

विशिष्टाद्वैतिभिः धर्मादन्यत्र प्रसिद्धोपायविलक्षणोपाय इत्यर्थः । अधर्मः धर्मेतरः उपेयः प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । अस्मात् इत्यनेन बुद्धिस्थसाधको विवक्षितः । स चोपेता—तथा च प्रसिद्धोपेतृविलक्षण इत्यर्थः । कृताकृतादिति धर्माधर्मविलक्षणं इत्यर्थः कृतः । अत्र परमात्मोपासनस्यापि धर्मत्वात् तद्विलक्षणत्वमसम्भवीति प्रसिद्धेत्याध्याहारः कृतः । स एव दोषः । अधर्मशब्दो धर्मविरुद्धे पापकर्मणि रूढः तत्परित्यज्य प्रसिद्धाधर्मादन्यः प्राप्य इत्यप्रसिद्धार्थकथनम् । अपि च "यत्पश्यसि तद्वदे"त्यत्र त्रयाणां यच्छब्देन परामर्शानुपपत्तिः यत्पदेन हि सर्वविलक्षमेकमेव वस्त्वभिधीयते तत्परित्यज्य उपायोपेयोपेतृत्रयविषयत्वमसम्भावितमेव स्वमतानुगुण्यार्थं स्वीकृतमिति व्यक्तं भवति । 'न जायते म्रियते' इत्यादिमन्त्रस्य भगवत्तैव जीवपरताया गीतासूक्तत्वात् तस्य भगवत्परत्वं गीताविरुद्धम् । भगवतो जन्मादिकमप्राप्तं तस्य तन्निषेधे अप्रसक्तप्रतिषेधश्च पूर्वमेवोक्तः ।　३०　३५

'सर्वे वेदा यत्पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदँ संग्रहेण ब्रवीम्योमित्येतत् ॥१५॥
एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१६॥

५ मित्यर्थः। तथाऽन्यत्राधर्मात्तथाऽन्यत्रास्मात्कृताकृतात्। कृतं कार्यमकृतं कारणमस्मादन्यत्र। किञ्चान्यत्र भूताच्चातिक्रान्तात्कालाद्भव्याच्च भविष्यतश्च तथा वर्तमानात्। कालत्रयेण यन्न परिच्छिद्यत इत्यर्थः। यदीदृशं वस्तु सर्वव्यवहारगोचरातीतं पश्यसि जानासि तद्वद मह्यम् ॥ १४ ॥

इत्येवं पृष्टवते मृत्युरुवाच पृष्टं वस्तु विशेषणान्तरं च विवक्षन्—सर्वे वेदा यत्पदं पदनीयं गमनीयमविभागेनाऽऽमनन्ति प्रतिपादयन्ति तपांसि सर्वाणि च यद्वदन्ति यत्प्राप्त्यर्थानीत्यर्थः। यदिच्छन्तो ब्रह्मचर्यं गुरुकुलवास-
१० लक्षणमन्यद्वा ब्रह्मप्राप्त्यर्थं चरन्ति तत्ते तुभ्यं पदं यज्ज्ञातुमिच्छसि संग्रहेण संक्षेपतो ब्रवीमि, ओमित्येतत्। तदेतत्पदं यद्बुभुत्सितं त्वया तदेतदोमित्योंशब्दवाच्यमोंशब्दप्रतीकं च ॥ १५ ॥

अतः—एतद्ध्येवाक्षरं ब्रह्मापरमेतद्ध्येवाक्षरं परं च। तयोर्हि प्रतीकमेतदक्षरम्। एतद्ध्येवाक्षरं ज्ञात्वोपास्य ब्रह्मेति यो यदिच्छति परमपरं वा तस्य तद्भवति। परं चेज्ज्ञातव्यमपरं चेत्प्राप्तव्यम् ॥ १६ ॥

आनन्दगिरिटीका

१५ सर्वे वेदा इति। वेदैकदेशा उपनिषदः। अनेनोपनिषदो ज्ञानसाधनत्वेन साक्षाद्विनियुक्तास्तपांसि कर्माणि शुद्धिद्वारेणावगतिसाधनानि। मन्दाधिकारिणो विचारासमर्थस्य क्रमेणावगतिसाधनं संक्षिप्याऽऽह—सङ्ग्रहेणेति।

गोपालयतीन्द्रटीका

लक्षणं तुल्यम्—अन्यत्रेति। अन्यदित्यर्थः। कार्यकारणपरिच्छेदकात्कालादप्यन्यदित्याह—किञ्चेति। प्रथमश्चकारोऽतिक्रान्तवस्त्वन्यत्वसमुच्चयार्थः। भविष्यतश्च कालादित्यनुवर्तते। द्वितीयश्चकारो भविष्यत्कालपरिच्छिन्न-
२० वस्त्वन्यत्वसमुच्चयार्थो वर्तमानकालान्यत्वतत्परिच्छिन्नवस्त्वन्यत्वसमुच्चयोपलक्षणार्थश्च। पदार्थमुक्त्वा वाक्यार्थमाह—कालेति। ईदृशं वस्त्विति व्याचष्टे—सर्वेति ॥ १४॥

उत्तरमवतारयति—एवमिति। विशेषणान्तरं चेति। ओङ्कारोपासनमित्यर्थः। सर्वे वेदा इति तदेकदेशा उपनिषद उच्यन्ते तं त्वौपनिषदमित्यादिश्रुत्या साक्षाज्ज्ञानसाधनत्वेन विनियुक्ताः। गमनीयमिति। प्राप्तव्यमित्यर्थः। अविभागेनाविप्रतिषेधेनैककण्ठ्येनेत्यर्थः। तपांसि कर्माणि। शुद्धिद्वारेण ज्ञानसाधनत्वात्प्रमाणत्वाभावाद्वदन्तीत्येत-
२५ दनुपपन्नमित्याशङ्क्य वदन्तिरत्र लक्षणयेत्याह—यत्प्राप्त्यर्थानीति। यदिति। गुरुकुलवासलक्षणमिति। नैष्ठिकं ब्रह्मचर्यमित्यर्थः। अन्यद्वेति। इन्द्रविरोचनाख्यायिकाभिहितब्रह्मविद्याङ्गं ब्रह्मचर्यमित्यर्थः। मन्दाधिकारिणोऽवगतिसाधनं संक्षिप्याऽऽह—संग्रहेणेति। यस्य शब्दस्योच्चारणे यत्स्फुरति तत्तस्य वाच्यम्। समाहितचित्तस्योङ्कारोच्चारणे यत्साक्षिसंवेदनं स्फुरति तदोङ्कारमवलम्ब्योङ्कारवाच्यं सत्त्वप्रधानमायावच्छिन्नमोङ्कारोपाधिकं ब्रह्माहमस्मीति ध्यायेदित्यर्थः। यदि तत्राप्यसमर्थस्तर्हि प्रणवे ब्रह्मदृष्टिं कुर्यादित्याह—ओंशब्दप्रतीकं चेति ॥ १५ ॥
३० तत्त्वविचारानधिकृतानामोङ्कारोपासनं विधाय तत्फलं दर्शयन्नोङ्कारं स्तौतीत्याह—अत इति। यत ओङ्कारो ब्रह्मवाचको ब्रह्मप्रतीकोऽत इत्यर्थः। एतदक्षरमपरं ब्रह्मैवेत्यन्वयः। हिद्वयमत इत्यर्थे। एतदक्षरं परं

१. विशिष्टाद्वैतिनां द्वैतिनां च "सर्वे वेदा यत्पदमामनन्ति" इत्यनेन शुद्धात्मस्वरूपं प्रतिपाद्यत्वेनोक्तमिति वक्तुं न शक्यते किन्तु सर्ववेदप्रतिपाद्यो विष्णुरेव तत्प्रतिपादकः प्रणव इति मतम्। तन्न। नमस्ताराय च नमश्शम्भवे चेति श्रीरुद्राध्याये प्रणवस्वरूपी तत्प्रतिपाद्यः शिव इति स्पष्टमभिधानात्। एतद्ध्येवाक्षरं ब्रह्म—अपरं इत्यर्थः उत्तरत्र परमित्युक्तेः एतद्वै सत्यकामपरं चापरं च ब्रह्म यदोङ्कार इति
३५ प्रश्नोपनिषद्वाक्येनैकार्थ्यात्। यत्तु रामानुजीयैः—ब्रह्म-ब्रह्मप्राप्तिसाधनमित्युक्त्वा यो यदिच्छति तस्य तत् यः यदभीष्टं फलमिच्छतीत्युक्तं तदपि न। तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीति इति श्रुतौ परापरान्यतरमन्वेतीत्यनेन विरोधात्।

एतदालम्बनँ श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१७॥
न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्[1] ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥

यत एवमतः—एतदालम्बनमेतद्ब्रह्मप्राप्त्यालम्बनानां श्रेष्ठं प्रशस्यतमम् । एतदालम्बनं परमपरं च परापर- ५
ब्रह्मविषयत्वात् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते, परस्मिन्ब्रह्मण्यपरस्मिंश्च, ब्रह्मभूतो ब्रह्मवदुपास्यो भवतीत्यर्थः ॥ १७ ॥

अन्यत्र धर्मादित्यादिना पृष्टस्याऽऽत्मनोऽशेषविशेषरहितस्याऽऽलम्बनत्वेन प्रतीकत्वेन चोङ्कारो निर्दिष्टः, अपरस्य ब्रह्मणो मन्दमध्यमप्रतिपत्तॄन्प्रति । अथेदानीं तस्योङ्कारालम्बनस्याऽऽत्मनः साक्षात्स्वरूपनिर्दिधारयिषयेद-
मुच्यते—न जायते नोत्पद्यते म्रियते वा न म्रियते च उत्पत्तिमतो वस्तुनोऽनित्यस्यानेका विक्रियास्तासामाद्यन्ते जन्म- १०

आनन्दगिरिटीका

यस्य शब्दस्योच्चारणे यत्स्फुरति तत्तस्य वाच्यं प्रसिद्धं समाहितचित्तस्योङ्कारोच्चारणे यद्विषयानुपरक्तं संवेदनं स्फुरति तदोङ्कारमवलम्ब्य तद्वाच्यं ब्रह्मास्मीति ध्यायेत्तत्राप्यसमर्थ ओंशब्द एव ब्रह्मदृष्टिं कुर्यादित्यर्थः ॥ १५-१६ ॥

साधनहीनायोपदेशोऽनर्थक इति मत्वोच्चावचमवगतिसाधनमुक्त्वा वक्तव्यस्वरूपं यत्पृष्टं तदभिधानायोप-
क्रमत इत्याह—अन्यत्र धर्मादित्यादिनेति । यद्यात्मनोऽन्यद्ब्रह्म स्यात्तत्र जन्मादिप्राप्त्यभावादप्राप्तनिषेधः स्यादतो १५

गोपालयतीन्द्रटीका

ब्रह्मैव । चकारः परापरात्मकत्वसमुच्चयार्थः । हिद्वयार्थं स्फुटयति—तयोर्हीति । हिशब्दो वाचकत्वसमुच्चयार्थः । अथवा प्रतीकपदेनैव वाचकत्वमुपलक्ष्य हिः वेदान्तेषु प्रणवस्य वाचकत्वप्रतीकत्वप्रसिद्ध्यर्थो व्याख्येयः । फलवचनं व्याचष्टे—एतदिति । हिशब्दो भवतीत्यत्रान्वेति । एतदक्षरमुपास्यं परमपरं ब्रह्मेति ज्ञात्वोपास्य योऽधिकारी
यत्परमपरं वेच्छति तद्भवति हीत्यर्थः । ननु परापरोपासनयोस्तत्प्राप्तिः फलमित्युक्तं चेत्सम्यग्ज्ञानं व्यर्थमित्या- २०
शङ्क्योपासनाद्वयस्य फलविभागमाह—परं चेदिति । परं चेत्तदालम्बनत्वेनोपास्यं स्थितमिति वा तदा ज्ञातव्यं सत्प्राप्तव्यम् । अपरं चेत्तदा प्राप्तव्यमेवेत्यध्याहारेण योज्यम् । अथवा तदालम्बनत्वेन स्थितं परं चेदिच्छति तदा तज्ज्ञातव्यं भवति अपरं चेत्तदालम्बनत्वेन स्थितमिच्छति तदा तत्प्राप्तव्यमेव भवतीत्यन्वयः ॥ १६ ॥

अत इति । परापरप्राप्तिसाधनत्वादित्यर्थः । एवमुक्तप्रकारेण । एतच्छ्रेष्ठमित्यन्वयः । केषां मध्य इत्यपेक्षायामाह—
ब्रह्मेति । प्राप्त्यालम्बनानामिति गायत्र्यादीनां मध्य इत्यर्थः । परशब्दोऽपरस्याप्युपलक्षणार्थं इत्याह—अपरं चेति । २५
तत्र हेतुमाह—परापरेति । ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन्महीयते पूज्यो भवतीत्यर्थमाह—परस्मिन्नित्यादिना ॥१७॥

साधनहीनायोपदेशोऽनर्थक इति मत्वा मन्दमध्यमाधिकारभेदेनोत्कृष्टापकृष्टसाधनमभिधायान्ते यत्स्वरूपं पृष्टं तदभिधानायोपक्रमत इत्याह—अन्यत्र धर्मादित्यादिनेति । परमार्थतः सर्वधर्मविनिर्मुक्तस्योपाधिमन्तर्भाव्य मन्दमध्यमं प्रत्यालम्बनत्वेन प्रतीकत्वेन चोङ्कारो निर्दिष्ट इत्यर्थः । अपरस्य च ब्रह्मण आलम्बनत्वेन प्रतीकत्वेन
चोङ्कारो निर्दिष्ट इत्यन्वयः । अथ साधननिरूपणानन्तरम् । इदानीमिति प्राप्तावसरत्वमुच्यते । तस्येति । ३०
उपासनार्थं सोपाधिकस्येत्यर्थः । ओङ्कारालम्बनस्योङ्कारोपाधिकस्यात्मन इत्यर्थः । साक्षादित्युपाध्यनन्तर्भावे-
णेत्यर्थः । निर्दिधारयिषया निर्धारयितुमिच्छयेदमुत्तरम् । ननु यद्यन्यत्र धर्मादित्यादिना पृष्टस्योत्तरं तर्ह्यस्तित्व-
प्रश्नस्य किमुत्तरं ? न चेदमेवेति चेद्भिन्नात्मनोरेकोत्तरासम्भवादिति चेन्नाऽऽत्मभेदासिद्धेर्यदि परमात्मनः सकाशा-
ज्जीवो भिन्नस्तर्हि परमात्मप्रश्नस्य न जायत इत्युत्तरं न स्याज्जन्मादिसम्बन्धस्य परमात्मन्यप्रसङ्गात्तयोरैक्ये
जीवांशप्रसक्तिमादाय निषेध उपपद्यत इति तयोरेकमेवोत्तरमिति भावः । नन्वन्येऽपि विकाराः सन्ति ते किमिति ३५
प्रथमं न निषिध्यन्त इति तत्राऽऽह—उत्पत्तिमत इत्यादिना । अनित्यस्य विनाशिन इत्यर्थः । विक्रियाः सन्तीति

---

१. "नायं कुतश्चिन्न बभूव कश्चित्" इत्यस्य परमात्मविषयत्वेन योजनं क्लिष्टम् । अस्यैव मन्त्रस्य गीतासु किञ्चिद्वर्णव्यत्यासेन जीवपरतया भगवता योजनात् । उभयत्र शरीरव्यतिरिक्तात्मन एव प्रक्रमात् ।

हन्ता चेन्मन्यते हन्तुँ हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायँ हन्ति न हन्यते ॥१९॥

विनाशलक्षणे विक्रिये इहाऽऽत्मनि प्रतिषिध्येते प्रथमं, सर्वविक्रियाप्रतिषेधार्थं न जायते म्रियते वेति। विपश्चिन्मेधावी, अविपरिलुप्तचैतन्यस्वभावत्वात् । किञ्च नायमात्मा कुतश्चित्कारणान्तराद्बभूव । स्वस्माच्चाऽऽत्मनो न बभूव
५ कश्चिदर्थान्तरभूतः। अतोऽयमात्माऽजो नित्यः। शाश्वतोऽपक्षयविवर्जितः। यो ह्यशाश्वतः सोऽपक्षीयते। अयं तु शाश्वतोऽत एव पुराणः पुराऽपि नव एवेति। यो ह्यवयवोपचयद्वारेणाभिनिर्वर्त्यते स इदानीं नवो यथा कुम्भादिस्तद्विपरीतस्त्वात्मा पुराणो वृद्धिविवर्जित इत्यर्थः। यत एवमतो न हन्यते न हिंस्यते हन्यमाने शस्त्रादिभिः शरीरे। तत्स्थोऽप्याकाशवदेव ॥ १८ ॥

एवंभूतमप्यात्मानं शरीरमात्रात्मदृष्टिः—हन्ता चेद्यदि मन्यते चिन्तयति हन्तुं हनिष्याम्येनमिति योऽप्यन्यो
१० हतः सोऽपि चेन्मन्यते हतमात्मानं हतोऽहमित्युभावपि तौ न विजानीतः स्वमात्मानं यतो नायं हन्ति अविक्रिय-

आनन्दगिरिटीका

जन्मादिप्रतिषेधेन ब्रह्मोपदिशन्नात्मस्वरूपमेवोपदिशतीति गम्यते। मरणनिमित्ता च नास्तित्वाशङ्कात्मनो मरणाभावेऽस्तित्वविषयप्रश्नस्याप्येतदेव प्रतिवचनं भवतीति द्रष्टव्यम् ॥ १७-१८ ॥

यद्यविक्रिय एवाऽऽत्मा तर्हि धर्माद्यधिकार्यभावात्तदसिद्धौ संसारोपलम्भ एव न स्यादित्याशङ्क्याह—
१५ अनात्मज्ञविषय एवेति। यदज्ञानात्प्रवृत्तिः स्यात्तज्ज्ञानात्सा कुतो भवेदिति न्यायाच्चाऽऽत्मज्ञस्य धर्मादि नोपपद्यतेऽत आत्मज्ञः सदा मुक्त एवेत्याह—न्यायाच्चेति। तदुक्तम्—

गोपालयतीन्द्रटीका

शेषः। समापद्यन्त इति पाठः कादाचित्कः। प्रथमं जन्मविनाशलक्षणे विक्रिये न जायते म्रियते वेतीहाऽऽत्मनि प्रतिषिध्येते इत्यन्वयः। प्रथमप्रतिषेधे प्रयोजनमाह—सर्वेति। क्रमेणेति द्रष्टव्यम्। मेधावीत्यनेन गुणगुणिसम्बन्धे
२० प्राप्ते प्रत्याह—अविपरिलुप्तेति। हेतुं पृच्छति—कुत इति। अथवा देवदत्तो जातो नष्ट इति प्रतीतेः कथं तत्प्रतिषेध इति शङ्कते—कुत इति। न बभूवेत्यन्वयः। न बभूवेत्यत्र हेत्वन्तरानुपादानात्स्वस्मादिति लभ्यत इत्याह—स्वस्माच्चाऽऽत्मन इति। तत्र हेतुमाह—अर्थान्तरेति। देहादिभ्यो भिन्न इत्यर्थः। तथा च पूर्वोक्तप्रतीतेर्देहादिविषयकत्वान्नाऽऽत्मन उत्पत्तिविनाशाविति फलमाह—अजो नित्य इति। शाश्वतत्वं व्यतिरेकमुखेनोपपादयति—यो हीति। अत एवेति। शाश्वतत्वादित्यर्थः। पुराणत्वमुपपादयति—यो हीति। अभिनिर्वर्त्यत इति। निष्पाद्यत
२५ इत्यर्थः। यत इति। एते धर्माः शरीरस्य नाऽऽत्मनो यस्मादत इत्यर्थः। ननु शरीरसंश्लिष्टगगनवच्छरीरे हन्यमान आत्माऽपि हन्यते इत्यत आह—तत्स्थोऽप्याकाशवदिति। यथाऽऽकाशः शस्त्रघातादिभिर्न व्यथामश्नुतेऽसङ्गस्वभावत्वादेवमात्मा शरीरस्थोऽपि शस्त्रादिभिः शरीरे हन्यमाने न हिंस्यत इत्यर्थः ॥ १८ ॥

एवंभूतमिति। असङ्गस्वभावमित्यर्थः। शरीरमेव शरीरमात्रं तस्मिन्नात्मत्वेन दृष्टिर्यस्य स तथोक्तः। इच्छामभिनीय दर्शयति—हनिष्याम्येनमितीति। मननं विज्ञानं तस्याऽऽकारं दर्शयति—हतोऽहमितीति। स्वमात्मानं
३० न विजानीतः शरीरमात्रदृष्टित्वादिति शेषः। तत्र हेतुमाह—यत इति। न हन्ति हननरूपाधर्मेण न संयुज्यते। तत्र हेतुमाह—अविक्रियत्वादिति। तथाऽधर्मविषयत्वमप्यात्मनो नेत्याह—तथा न हन्यत इति। पूर्वोक्तहेतुमाह—अविक्रियत्वादिति। यद्यविक्रिय एवाऽऽत्मा तर्हि धर्माद्यधिकार्यभावात्तदसिद्धौ संसारोपलम्भ एव न स्यादित्याशङ्क्याऽऽह—अतोऽनात्मज्ञविषय इति। देहादौ तादात्म्याद्यभिमानविषय इत्यर्थः। इति तु कामयमान इत्यनात्मज्ञस्य संसारमनुवदति। अथाकामयमान इत्यात्मज्ञस्य तदभावं दर्शयति—श्रुतिप्रामाण्यादिति। स्मृतिरप्यथ वर्णाश्रमा
३५ इत्याद्या संसारमज्ञस्यानुवदति। 'स्थितप्रज्ञस्य का भाषे'त्याद्या तदभावं दर्शयति। 'यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेदि"ति न्यायाच्चाऽऽत्मज्ञस्य धर्मादिर्नोपपद्यते स मुक्त एवेत्याह—न्यायाच्चेति। तदुक्तम्—

अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः[1] पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥२०॥
आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥२१॥

त्वावात्मनस्तथा न हन्यते आकाशवदविक्रियत्वादेव । अतोऽनात्मज्ञविषय एव धर्माधर्मादिलक्षणः संसारो नात्म(ब्रह्म)ज्ञस्य श्रुतिप्रामाण्यान्न्यायाच्च धर्माधर्माद्यनुपपत्तेः ॥ १९ ॥ ५

कथं पुनरात्मानं जानातीत्युच्यते—अणोः सूक्ष्मादणीयाञ्श्यामाकादेरणुतरः । महतो महत्परिमाणान्महीयान्महत्तरः पृथिव्यादेः । अणु महद्वा यदस्ति लोके वस्तु तत्तेनैवाऽऽत्मना नित्येनाऽऽत्मवत् सद् भवति । तदात्मना विनिर्मुक्तमसत्सम्पद्यते । तस्मादसावेवाऽऽत्माऽणोरणीयान्महतो महीयान्सर्वनामरूपवस्तूपाधिकत्वात्। स चाऽऽत्माऽस्य जन्तोर्ब्रह्मादिस्तम्बपर्यन्तस्य प्राणिजातस्य गुहायां हृदये निहित आत्मभूतः स्थित इत्यर्थः । तमात्मानं दर्शनश्रवणमननविज्ञानलिङ्गमक्रतुरकामो दृष्टादृष्टबाह्यविषयोपरतबुद्धिरित्यर्थः । यदा चैवं तदा मनआदीनि करणानि धातवः शरीरस्य धारणात्प्रसीदन्तीत्येषां धातूनां प्रसादादात्मनो महिमानं कर्मनिमित्तवृद्धिक्षयरहितं पश्यत्ययमहमस्मीति साक्षाद्विजानाति ततो वीतशोको भवति ॥ २० ॥ १०

अन्यथा दुर्विज्ञेयोऽयमात्मा कामिभिः प्राकृतपुरुषैः, यस्मात्—आसीनोऽवस्थितोऽचल एव सन्दूरं व्रजति

आनन्दगिरिटीका १५

"विवेकी सर्वदा मुक्तः कुर्वतो नास्ति कर्तृता । अलेपवादमाश्रित्य श्रीकृष्णजनकौ यथा" इति ॥ १९ ॥

अकामत्वादिसाधनान्तरविधानार्थमुत्तरवाक्यमवतारयति—कथं पुनरिति । एकस्याणुत्वं महत्त्वं च विरुद्धं कथमनूद्यत इत्याशङ्क्याणुत्वाद्यध्यासाधिष्ठानत्वादणुत्वादिव्यवहारो न तत्त्वत इत्यविरोधमाह—अणु महद्वेति ॥२०॥

गोपालयतीन्द्रटीका

"विवेकी सर्वदा मुक्तः कुर्वतो नास्ति कर्तृता । अलेपवादमाश्रित्य श्रीकृष्णजनकौ यथा" इति ॥ १९ ॥ २०

कामवर्जितत्वादिसाधनविधानार्थमुत्तरवाक्यमवतारयति—कथं पुनरिति । पृथिव्यादेर्महत्परिमाणादित्यन्वयः । नन्वेकस्याणुत्वं महत्त्वं च कथं विरुद्धमनूद्यत इत्याशङ्क्याणुत्वाद्यध्यासाधिष्ठानत्वादणुत्वादिव्यवहारो न तत्त्वत इत्याह—अणु महद्वेति । नित्येन तेनैवेत्यन्वयः । आत्मवत्स्वरूपवत्सत्प्रत्ययविषय इत्यर्थः । यस्मात्तदासमनैवाऽऽत्मवत्तद्विनिर्मोके न भवति तस्मादित्यर्थः । सर्वात्मकत्वे सर्वाधिष्ठानत्वं हेतुमाह—सर्वेति । वस्तुशब्देन कर्मोच्यते । तेषामुपाधित्वादाश्रयत्वादित्यर्थः । तस्य सर्वाधिष्ठानत्वेन सर्वरूपत्वं सहेतुकमाह—स चेति । हेतुमाह—गुहायामिति । आत्मभूतः प्रत्यक्त्वेन स्थित इत्यर्थः । प्रत्यग्ब्रह्मदर्शनसाधनं विदधाति—तमित्यादिना । तं पश्यतीत्यन्वयः । ननु दर्शने कामराहित्यमात्रं न कारणमत आह—दर्शनेति । दर्शनोद्देशेन विहितं यच्छ्रवणं मननं विज्ञानं निदिध्यासनं लिङ्गं साधनं प्रतिबन्धकनिरासद्वारा यस्य स तथा तम् । दृष्टा ऐहिका अदृष्टा आमुष्मिका विषयास्तेभ्य उपरतबुद्धिरित्यर्थः । कामराहित्यमिन्द्रियप्रसादे हेतुरित्याह—यदा चैवमिति । एवमुपरतबुद्धित्वम् । ननु धातुशब्दः कथमिन्द्रियवाची शुक्रादिवाचित्वादित्याशङ्क्य योगवृत्त्येत्याह—शरीरस्येति । धारणादिन्द्रियैरिति शेषः । कर्मनिमित्तौ वृद्धिक्षयौ शरीरादेर्नाऽऽत्मनोऽतस्तद्रहितम् । अक्रतुर्धातुप्रसादात्तमात्मनो महिमानं पश्यतीत्यन्वयः । दर्शनप्रकारमभिनीय दर्शयति—अयमहमस्मीति । दर्शनफलमाह—ततो वीतशोक इति ॥ २० ॥ २५ ३०

कामराहित्यमन्वयव्यतिरेकाभ्यां हेतुरित्याह—अन्यथेति । मोक्षकामिनो वारयति—प्राकृतेति । दुर्विज्ञेयत्वे विरुद्धधर्मवत्त्वेन प्रतिभासमानत्वं हेतुमाह—यस्मादिति । अचल एव सन्निति । जाग्रत्स्वप्नयोर्मनआदिव्यापार-

---

१. यत्तु—अक्रतुः अः विष्णुः तत्सङ्कल्पो वीतशोको भवतीति । तन्न । अशब्दार्थत्वात् । असङ्कल्प इति यथाश्रुतार्थस्य सम्भवात् । गीतासु "सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः । सर्वसङ्कल्पसंन्यासी" इत्यादौ सङ्कल्पपरित्यागान्मोक्षोक्तेश्च । ३५

अशरीरँ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२॥

शयानो याति सर्वत एवमसावात्मा देवो मदामदः समदोऽमदश्च सहर्षोऽहर्षश्च विरुद्धधर्मवानतोऽशक्यत्वाज्ज्ञातुं कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति।अस्मदादेरेव सूक्ष्मबुद्धेः पण्डितस्य कस्यचित् सुविज्ञेयोऽयमात्मा स्थितिगतिनित्या-
५ नित्यादिविरुद्धानेकधर्मोपाधिकत्वाद्विरुद्धधर्मवत्त्वाद्विश्वरूप इव चिन्तामणिवदवभासते। अतो दुर्विज्ञेयत्वं दर्शयति कस्तं मदन्यो ज्ञातुमर्हतीति। करणानामुपशमः शयनं करणजनितस्यैकदेशविज्ञानस्योपशमः शयानस्य भवति। यदा चैवं केवलसामान्यविज्ञानत्वात्सर्वतो यातीव यदा विशेषविज्ञानस्थः स्वेन रूपेण स्थित एव सन्मनआदिगतिषु तदुपाधिकत्वाद्दूरं व्रजतीव ।॥ २१ ॥

स चेहैव वर्तते तद्विज्ञानाच्च शोकात्यय इत्यपि दर्शयति—अशरीरं स्वेन रूपेणाऽऽकाशकल्प आत्मा तम-
१० शरीरं शरीरेषु देवपितृमनुष्यादिशरीरेष्वनवस्थेष्ववस्थितिरहितेष्वनित्येष्ववस्थितं नित्यमविकृतमित्येतत्। महान्तं;

### आनन्दगिरिटीका

विरुद्धानेकधर्मवत्त्वाद्दुर्विज्ञेयश्चेदात्मा कथं तर्हि पण्डितस्यापि सुज्ञेयः स्यादित्याशङ्क्याऽऽह—स्थिति-गतीति। विश्वरूपो मणिर्यथा नानारूपोऽवभासते परं नानाविधोपाधिसन्निधानान्न स्वतो नानारूपः, चिन्तामणौ वा यद्यच्चिन्त्यते तत्तच्चिन्तोपाधिकमेवावभासते न तत्त्वतः, तथा स्थितिगतिनित्यानित्यादयो विरुद्धानेकधर्मा येषां
१५ तदुपाधिवशादात्माऽपि विरुद्धधर्मवानिवावभासत इति योजना। इति तस्य सुविज्ञेयो भवति। उपाध्यविविक्त-दर्शिनस्तु दुर्विज्ञेय एवेत्यर्थः। स्वतो विरुद्धधर्मवत्त्वं नास्तीत्येतदेव श्रुतियोजनया दर्शयति—करणानामित्यादिना। एकदेशविज्ञानस्येति। मनुष्योऽहं नीलं पश्यामीत्यादिपरिच्छिन्नविज्ञानस्येत्यर्थः ॥ २१-२२ ॥

### गोपालयतीन्द्रटीका

साक्षित्वेन कूटस्थः सन्स्थित एवेत्यर्थः। दूरं व्रजतीति। मनआदिव्यापारेषु विषयदेशं गच्छत्सु तत्प्रतिबिम्बरूपेण
२० गच्छतीत्यर्थः। शयान इति। करणेषूपरतेषु विशेषविज्ञानरूपाभावाच्छयानो यातीति। सर्वत इति। विज्ञप्तिसामान्य-रूपेणावस्थानात्सर्वतो यातीत्युच्यते। एवमसाविति। विरुद्धधर्मवानित्यर्थः। इतश्च विरुद्धधर्मवानित्याह—देव इति। अतो विरुद्धधर्मत्वादित्यर्थः। अतो ज्ञातुमशक्यत्वात्तं मदन्यः को ज्ञातुमर्हतीत्यन्वयः। अनधिकारिणो ज्ञातुमशक्य इति तात्पर्यार्थमाह—अस्मदादेरेवेति। सूक्ष्मबुद्धित्वमन्वयव्यतिरेककुशलत्वं पाण्डित्यं श्रवणादि-परत्वम्। कस्यचिदिति। पुरुषधौरेयस्येत्यर्थः। मनुष्याणां सहस्रेष्विति स्मृतेः। नन्वनेकधर्मवत्त्वाद्दुर्विज्ञेयश्चेदात्मा
२५ कथं पण्डितस्यापि सुविज्ञेय इत्याशङ्क्याऽऽह—स्थितिगतीति। यथा विश्वरूपो मणिर्नानारूपोऽवभासते तथा परोऽपि नानाविधोपाधिसन्निधानान्नानारूपो भासते न स्वतो नानारूपता। चिन्तामणिर्वा यद्यच्चिन्त्यते तत्तच्चिन्तो-पाधिकमेवावभासते न तत्त्वतस्तथा स्थितिगतिनित्यानित्यादयो विरुद्धानेकधर्मा येषां तदुपाधिकत्वादात्माऽपि विरुद्ध-धर्मवानिवावभासत इति योजना। तस्य सुविज्ञेयो भवतीत्यर्थः। यस्तूपाध्यविवेकदर्शी स तु न जानातीत्याह—अतो दुर्विज्ञेयत्वमिति। अत उपाध्यविवेकदर्शनादित्यर्थः। आत्मनो न स्वतो विरुद्धधर्मत्वं किन्तूपाधित इत्येतच्छ्रुति-
३० योजनया दर्शयति—करणानामिति। एकदेशविज्ञानस्येति। मनुष्योऽहमिदं पश्यामीत्यादिपरिच्छिन्नविज्ञानस्येत्यर्थः। एवमिति। उपरतविशेषविज्ञानमित्यर्थः। तदेति शेषः। केवलेति। केवलं यत्सामान्यं सर्वोपाध्यनुस्यूतस्वरूपं विज्ञानं तत्स्वरूपत्वादात्मन इत्यर्थः। केवलं विशेषोपाधिशून्यमित्यर्थः। इवशब्दान्न वस्तुत इति भावः। यदेति। स्वेन रूपेण प्रत्यङ्मात्रतया स्थित एव सन्विशेषविज्ञानस्थो यदा भवति तदेति पदद्वयमध्याहृत्य योजनीयम्। तदुपाधिकत्वान्मन-आदिगत्युपाधित्वात्। दूरं व्रजतीव न वस्तुत इत्यर्थः।[१] इवशब्दार्थं स्फुटयति—स चेति। इहेति देहोक्तिः ॥ २१ ॥
३५ उत्तरवाक्यं व्याचिख्यासुर्भूमिकामारचयति—तद्विज्ञानाविति। आभिमानिकसशरीरत्वं व्यावर्तयति—स्वेनेति। ननु शरीराणां स्थितिमत्त्वात्कथमनवस्थितत्वमत आह—अनित्येष्विति। संश्लेषं वारयति—नित्यम-

---

१. स चेति वाक्यं पूर्वमन्त्रभाष्यगतमभिप्रेत्य।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
[1]यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥२३॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥२४॥

महत्त्वस्याऽऽपेक्षिकत्वशङ्कायामाह—विभुं व्यापिनमात्मानम्। आत्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थम्। आत्मशब्दः ५
प्रत्यगात्मविषय एव मुख्यस्तमीदृशमात्मानं मत्वाऽयमहमिति धीरो धीमान्न शोचति। न ह्येवंविधस्याऽऽत्मविदः
शोकोपपत्तिः ॥ २२ ॥

यद्यपि दुर्विज्ञेयोऽयमात्मा तथाऽप्युपायेन सुविज्ञेय एवेत्याह—नायमात्मा प्रवचनेनानेकवेदस्वीकरणेन
लभ्यो ज्ञेयो नापि मेधया ग्रन्थार्थधारणशक्त्या। न बहुना श्रुतेन केवलेन। केन तर्हि लभ्य इत्युच्यते यमेव स्वात्मानमेष
साधको वृणुते प्रार्थयते तेनैवाऽऽत्मना वरित्रा स्वयमात्मा लभ्यो ज्ञायत इत्येतत्। निष्कामस्याऽऽत्मानमेव प्रार्थयत १०
आत्मनैवाऽऽत्मा लभ्यत इत्यर्थः। कथं लभ्यत इत्युच्यते—तस्याऽऽत्मकामस्यैष आत्मा विवृणुते प्रकाशयति पार-
मार्थिकीं तनूं स्वां स्वकीयां स्वयाथात्म्यमित्यर्थः ॥ २३ ॥

किञ्चान्यत्—न दुश्चरितात्प्रतिषिद्धाच्छ्रुतिस्मृत्यविहितात्पापकर्मणोऽविरतोऽनुपरतः। नापीन्द्रियलौल्या-

आनन्दगिरिटीका

न बहुना श्रुतेनेति। आत्मप्रतिपादकोपनिषद्विचारातिरिक्तशास्त्रश्रवणेन न लभ्यः। उपनिषद्विचारेणापि १५
केवलेनेति। सिद्धोपदेशरहितेन न लभ्यत इत्यर्थः। परमेश्वराचार्यानुग्रहेण तु लभ्यत इत्याह—यमेवेति। स्वात्मान-
मेव साधकः श्रवणमननादिभिर्वृणुते संभजते श्रवणादिकालेऽपि सोऽहमित्यभेदेनैवानुसन्धत्त इत्यर्थः। तेनैवेति।
लक्षणया परमात्मानुग्रहेणैव वरित्राऽभेदानुसन्धानवता यथानुसन्धानमात्मतयैव परमात्मा लभ्यो भवतीत्यर्थः।
वैपरीत्येन वा योजना। आत्मा त्वेष प्रकरणी परमात्माऽन्तर्यामिरूपेणाऽऽचार्यरूपेण वा व्यवस्थितो यमेव मुमुक्षुं
वृणुते भजतेऽनुगृह्णाति तेनैव परमेश्वरानुगृहीतेनाभेदानुसन्धानवता लभ्यत इत्यर्थः ॥ २३ ॥ २०

गोपालयतीन्द्रटीका

विकृतमिति। स्वत इति न क्रियासाध्यं किन्तु स्वाभाविकं प्रत्यग्ब्रह्मैक्यमिति दर्शयितुम्। आत्मशब्दः प्रत्यगात्म-
वाचको मुख्य इत्यर्थः। मत्वेति। अहमेव परं ब्रह्मेति साक्षात्कृत्येत्यर्थः। अन्वयव्यतिरेकसिद्धं विज्ञानफलमाह—
न ह्येवमिति ॥ २२ ॥

ननूपायं विना पण्डितस्य सुज्ञेयश्चेदनात्मज्ञस्यापि तथा स्यादित्याशङ्क्योपायं विना न पण्डितस्यापि ज्ञेय २५
इत्याह—यद्यपीति। दुर्विज्ञेयः पण्डितस्यापीति शेषः। न ज्ञेय इत्यन्वयः। न बहुनेति। आत्मप्रतिपादकोपनिषद्विचाराति-
रिक्तशास्त्रेण न लभ्य इत्यर्थः। केवलेनेति। गुरूपदेशरहितेनेत्यर्थः। ईश्वराचार्यानुग्रहेणाऽऽत्मा लभ्य इत्याकाङ्क्षा-
पूर्वकमाह—केनेत्यादिना। स्वात्मानमेव प्रत्यक्चैतन्यमेवेत्यर्थः। साधकोऽधिकारी। प्रार्थयते भजते श्रवणादि-
कालेऽपि प्रत्यग्ब्रह्मैवाहमित्यनुसन्धत्ते। तेनैवाऽऽत्मना तदनुग्रहेण वरित्रा सम्परिज्ञात्रा पूर्वोक्तानुसन्धानवता यथानु-
सन्धानं स्वयं प्रत्यगात्मतयाऽऽत्मा परमात्मा लभ्य इत्यर्थः। अथवैष प्रकरणी परमात्माऽन्तर्यामिरूपेणाऽऽचार्यरूपेण ३०
वा व्यवस्थितो यमेव साधकं वृणुतेऽनुगृह्णाति तेन परमेश्वरानुग्रहलब्धप्रत्यग्ब्रह्मैक्यानुसन्धानवता मुमुक्षुणा लभ्य
इत्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—निष्कामस्येति। तेन लभ्य इतिवाक्यविवरणत्वेनोत्तरमवतारयति—कथ-
मित्यादिना। अधिकारिणः परमं तत्त्वमीश्वरानुग्रहात्प्रकाशत इत्यर्थः ॥ २३ ॥

इतश्चेश्वरानुग्रहलब्धप्रसादवताऽनेकसाधनवता च ज्ञातव्य आत्मेत्याह—किञ्चान्यदिति। दुश्चरितं काय-

१. एषः परमात्मा यमनुगृह्णाति तेन लभ्य इत्यर्थोऽस्माकमपेक्षित एव। "ईश्वरानुग्रहादेव पुंसामद्वैत- ३५
वासने"ति स्मृतेः। एषः साधकः यं परमात्मानं वृणुते अभेदेनानुसन्धत्ते तेन परमात्मना साधकरूपस्थितेन
लभ्य इत्यर्थे जीवब्रह्माभेदोऽपि व्यङ्ग्यः।

'यस्य ब्रह्म च क्षत्त्रं च उभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥२५॥

इति काठकोपनिषदि प्रथमाध्याये द्वितीया वल्ली समाप्ता

ब्शान्तोऽनुपरतः। नाप्यसमाहितोऽनेकाग्रमना विक्षिप्तचित्तः। समाहितचित्तोऽपि सन् समाधानफलार्थित्वान्नाप्यशान्त-
५ मानसः व्यापृतचित्तः। प्रज्ञानेन ब्रह्मविज्ञानेनैनं प्रकृतमात्मानमाप्नुयात्। यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च समाहितचित्तः समाधानफलादप्युपशान्तमानसश्चाऽऽचार्यवान्प्रज्ञानेन यथोक्तमात्मानं प्राप्नोतीत्यर्थः ॥ २४ ॥

यस्त्वनेवंभूतो यस्याऽऽत्मनो ब्रह्मक्षत्त्रे सर्वधर्मविधारके अपि सर्वत्राणभूते उभे ओदनोऽशनं भवतः स्याताम्। सर्वहरोऽपि मृत्युर्यस्योपसेचनमेवौदनस्य, अशनत्वेऽप्यपर्याप्तस्तं प्राकृतबुद्धिर्यथोक्तसाधनरहितः सन्क इत्था इत्थमेवं यथोक्तसाधनवानिवेत्यर्थः। वेद विजानाति यत्र स आत्मेति ॥ २५ ॥

१० इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ काठकोपनिषद्भाष्ये प्रथमाध्याये द्वितीयवल्लीभाष्यं समाप्तम्

आनन्दगिरिटीका

दुश्चरितं कायिकं पापम् ॥ २४ ॥

यस्त्वनेवंभूत उक्तसाधनसम्पन्नो न भवति स कथं वेदेति सम्बन्धः। अशनत्वेऽप्यपर्याप्त इति। अन्नत्वेऽप्य-
१५ समर्थः शाकस्थानीय इत्यर्थः। यत्र स्वे महिम्नि स विश्वोपसंहर्ता वर्तते तथाभूतं तं को वेदेति सम्बन्धः ॥ २५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते काठकोपनिषद्भाष्यव्याख्याने द्वितीया वल्ली समाप्ता

गोपालयतीन्द्रटीका

निवर्त्यं पापम्। अनुपरतः प्रज्ञानेनेनमाप्नुयादिति सम्बन्धः। एवमुत्तरत्र द्रष्टव्यम्। इन्द्रियाणां लौल्यं विषय-
२० प्रवणता। तद्विपरीत एव प्राप्नुयादित्याह—यस्त्विति। विषयेभ्य इन्द्रियसमाधाने पुण्यलोकः श्रूयते तस्मादपि समाहितचित्त इत्याह—समाहितेति ॥ २४ ॥

यस्त्वनेवंभूत इति। उक्तसाधनसम्पन्नो न भवति स कथं वेदेति सम्बन्धः। यद्ब्रह्म साधनवता विज्ञेयं तन्निर्दिशति—यस्येति। सर्वधर्मविधारकत्वं सर्वत्राणे हेतुः। सर्वत्राणभूते अपीत्यन्वयः। अशनत्वेऽप्यपर्याप्त इत्यन्नत्वेऽप्यपर्याप्तः शाकस्थानीय इत्यर्थः। क इतिशब्दार्थमाह—प्राकृतबुद्धिरिति। इत्थाशब्दार्थमाह—एवमिति।
२५ यत्र स्वमहिम्नि सोऽत्ता वर्तते तथाभूतं को वेदेत्यन्वयः ॥ २५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे प्रथमाध्याये द्वितीया वल्ली समाप्ता

---

१. एतद्वाक्यं विषयीकृत्य शारीरकमीमांसाप्रथमाध्यायद्वितीयपादे विचारितम्। अत्रौदनोपसेचनसूचितोऽत्ता जीवो वा ब्रह्म वेति। जीव इति पूर्वः पक्षः कर्मफलात्तृत्वस्य तस्मिन् सम्भवात् न परमात्मा "अनश्नन्नन्यः"
३० इति तस्यात्तृत्वप्रतिषेधात् इति। सिद्धान्तस्तु अत्ताचराचरग्रहणात्। अत्र मृत्यूपसेचनत्वश्रवणात् तदुपसिच्यमानं चराचरात्मकं जगत् ब्रह्मक्षत्रपदाभ्यां लक्षणीयम्। ततश्च सर्वजगद्भोक्तृत्वस्य संहर्तृत्वरूपस्यैव वक्तव्यत्वात् तस्य परमात्मन्येवोपपत्तेः अत्र परमात्मनि निर्गुणे समन्वय इति। तथा च सकलजगत्संहर्ता यत्राभेदकल्पनया वर्तते तं न कोऽपि वेदेत्यर्थः। अत्रोपसेचनमन्यादनहेतुत्वे सति स्वयमद्यमानं दध्यादि। जगत्संहारे हि मृत्युः भगवतः सहायः।

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥

ऋतं पिबन्तावित्यस्या वल्ल्याः सम्बन्धः। विद्याविद्ये नाना विरुद्धफले इत्युपन्यस्ते न तु सफले ते यथावन्निर्णीते। तन्निर्णयार्था रथरूपककल्पना, तथा च प्रतिपत्तिसौकर्यम्। एवं च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थं द्वावात्मानावुपन्यस्येते—ऋतं सत्यमवश्यम्भावित्वात्कर्मफलं पिबन्तौ। एकस्तत्र कर्मफलं पिबति भुङ्क्ते नेतरस्तथाऽपि ५

आनन्दगिरिटीका

रथरूपककल्पनेति। प्रसिद्धरथसादृश्यकल्पनेत्यर्थः। ऋतपानकर्ता जीवस्तावदेकश्चेतनः सिद्धो द्वितीयान्वेषणायां लोके संख्याश्रवणे समानस्वभावे प्रथमप्रतीतिदर्शनाच्चेतनतया समानस्वभावः परमात्मैव द्वितीयः

गोपालयतीन्द्रटीका

पूर्वोत्तरवल्लीनां सम्बन्धं दर्शयन्नुत्तरवल्ल्या अगतार्थत्वमाह—ऋतमित्यादिना। सम्बन्ध इति। पूर्वा- १० भ्यामभिधीयत इति शेषः। नानाफले इत्युक्ते पशुब्रह्मवर्चसादिवदविरुद्धत्वं स्यात्तद्वारयति—विरुद्धेति। इतिरुक्तपरामर्शी। उपन्यस्ते इति। पूर्वयोर्वल्ल्योरिति शेषः। न त्विति। सफले ते विद्याविद्ये यथावत्स्वरूपतः साधनतः फलतश्च न निर्णीते इत्यर्थः। ननु ते एव निर्णेतव्ये किमिति रथिरथादिकल्पनेत्यत आह—तन्निर्णयार्थेति। यद्यपि स्वरूपतो निरूप्येते तथाऽपि ज्ञाने सौकर्यमित्याह—तथा चेति। ननु रूपकेण विद्याविद्ये निरूप्ये किमिति द्वावृतपानकर्तारावभिधीयेते इत्यत आह—एवं चेति। रूपके रथी प्राप्ता प्राप्यं पदं गन्ता ज्ञाता गन्तव्यं विष्णोः १५ पदम्। कश्च गन्ता किञ्च पदं गन्तव्यमिति विवेकार्थं द्वावात्मानावुपन्यस्येते इत्यर्थः। नन्वात्मशब्दश्चेतनवाची न च द्वौ चेतनौ प्रतीयेते ऋतपानकर्तृमात्रप्रतीतेस्तत्कथमात्मानावित्युच्येते इति चेन्न। एकस्तावत्कर्मफलभोक्ता जीवश्चेतनः सिद्धो द्वितीयान्वेषणायां सत्यां संख्याश्रवणेऽस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वो लोक एवं चेतन एव द्वितीयो ऋतपानकर्ता प्रतीयत इति नाऽऽत्मशब्दे विरोध इति भावः। अत्रर्तशब्दः सत्यवचनोऽपि गुणयोगात्कर्मफलवाचीत्याह—ऋतमित्यादिना। नन्वस्मिन्वाक्ये जीवेश्वरावेव चेतनावुपन्यस्येते न च २०

१. एतद्वाक्यमधिकृत्यविचारः अत्रधिकरणोत्तराधिकरणे कृतः, तथाहि—ऋतं पिबन्तावित्यत्र किं बुद्धिजीवौ ग्राह्यौ उत जीवपरमात्मानौ इति संशयः। बुद्धिजीवाविति पूर्वपक्षः, परमात्मनः सर्वगतस्य प्रवेशानुपपत्तेः इति प्राप्ते सिद्धान्तः—गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। ऋतपानं कर्मफलभोगः तत्कर्ता च जीवस्तावत् सिद्धः चेतनः तस्य द्वितीयः क इति सन्देहे सङ्ख्याश्रवणे समानस्वभावस्य प्रतिपत्तिदर्शनात्—अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ गोत्वेन द्वितीयस्य गोरेव प्रतिपत्तिदर्शनादिति जीवद्वितीयश्चेतनं ब्रह्मैवेति २५ निर्णयः। गुहाप्रवेशश्च परमात्मनि सुतरामुपपद्यते 'गुहाहितमि'त्यादिश्रवणात् इति सिद्धान्तः।

यत्तु विशिष्टाद्वैतभाष्यकृता अन्तःकरणावच्छिन्नस्य जीवस्यान्तःकरणे प्रवेशसम्भवेऽपि अनवच्छिन्नस्य परमात्मनो गुहाप्रवेशः अद्वैतिनोपपादयितुमशक्य इत्युक्तं तन्न, जीवस्यापि अनवच्छिन्नब्रह्माभिन्नत्वात् प्रवेशो नास्ति। अपितु जीवः स्वोपाध्यन्तःकरणान्तरभिव्यक्तत्वेन तत्प्रविष्ट इत्युपचर्यते। एवमेवानवच्छिन्नः परमात्मापि स्वनियम्यान्तःकरणान्तरभिव्यज्यमानत्वात् तत्प्रविष्ट इत्युच्यते। अतः उभयोर्गुहाप्रवेश ३० उपपन्न एवेति मन्तव्यम्। प्रतिबिम्बपक्षेऽपि जीवः प्रतिबिम्बरूपेणान्तःकरणे वर्तते बिम्बरूपेण तत्र परमात्मापि वर्तत इति गुहाप्रवेशोपपत्तिः। रूपवत एव प्रतिबिम्ब इति नियमस्तु आकर एव निराकृतः। एवमेवान्तर्यामित्वमप्युपपद्यत इति ज्ञेयम्।

माध्वास्तु—ऋतं पिबन्ताविति विष्णोरेव आत्मान्तरात्मरूपेण स्थितं रूपद्वयमुच्यते न तु जीवेशौ इति। द्विवचनस्य कथञ्चिदुपपादनेऽपि कर्मफलभोक्तृत्वस्य ईश्वरेऽन्वयानुपपत्तेः नेदं साधु। सुकृतस्य ३५ ऋतं पिबन्तौ इति च मन्त्रः। ईश्वरस्य भोगोपगमे तस्यापरिच्छिन्नानन्दरूपत्वानुपपत्तिः कर्मफलस्य दुःखस्यापि सम्भवात् तद्भोगापत्तिश्च। अपि च जीवीयधर्मफलं नेश्वरो भुङ्क्ते व्यधिकरणत्वात्। यदि स्वयं धर्ममाचरति तदा तत्फलमन्यो ददातीति तस्यानीश्वरत्वप्रसङ्गश्च। छायातपौ इत्यत्र छायेव सुखकर इत्यर्थकरणे स्वप्रकाशब्रह्मणः छायादृष्टान्तासङ्गतिः।

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतँ शकेमहि ॥ २ ॥**

पातृसम्बन्धात्पिबन्तावित्युच्यते छत्रिन्यायेन । सुकृतस्य स्वयंकृतस्य[1] कर्मण ऋतमिति पूर्वेण सम्बन्धः । लोकेऽस्मि-
ञ्शरीरे । गुहां गुहायां बुद्धौ प्रविष्टौ । परमे बाह्यपुरुषाकाशसंस्थानापेक्षया परमम् । परस्य ब्रह्मणोऽर्धं स्थानं
परार्धम् । तस्मिन्हि परं ब्रह्मोपलभ्यते अतस्तस्मिन्परमे परार्धे ( तदर्हं पराध्यं ) हार्दाकाशे प्रविष्टावित्यर्थः । तौ च
५ च्छायातपाविव विलक्षणौ संसारित्वासंसारित्वेन ब्रह्मविदो वदन्ति कथयन्ति । न केवलमकर्मिण एव वदन्ति ।
पञ्चाग्नयो गृहस्थाः । ये च त्रिणाचिकेताः, त्रिःकृत्वो नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः ॥ १ ॥

यः सेतुरिव सेतुरीजानानां यजमानानां कर्मिणां दुःखसन्तरणार्थत्वान्नाचिकेतोऽग्निस्तं वयं ज्ञातुं चेतुं च
शकेमहि शक्तवन्तः । किञ्च यच्चाभयं भयशून्यं संसारपारं तितीर्षतां तर्तुमिच्छतां ब्रह्मविदां यत्परमाश्रयमक्षर-
मात्माख्यं ब्रह्म तच्च ज्ञातुं शकेमहि शक्तवन्तः । परापरे ब्रह्मणी कर्मिब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थः ।
१० एतयोरेव ह्युपन्यासः कृत ऋतं पिबन्ताविति ॥ २ ॥

आनन्दगिरिटीका

प्रतीयते । तस्य चोपचाराद्दतपातृत्वमित्यर्थः । बाह्यपुरुषाकाशसंस्थानं देहाश्रय आकाशप्रदेशः । पञ्चाग्नय इति ।
गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्य आवसथ्यश्चेत्येते पञ्चाग्नयो येषां ते यथोक्ताः । द्युपर्जन्यपृथिवीपुरुषयोषि-
त्स्वग्निदृष्टिं ये कुर्वन्ति तेऽग्निहोत्रादिकारिणस्ते वा पञ्चाग्नय इत्यर्थः ॥ १ ॥

१५ ननु न सन्ति ब्रह्मविदः पञ्चाग्निविदश्च साम्प्रतमनुपलम्भादित्याशङ्क्य पूर्वविद्वदनुभवविरोधमाह—
यः सेतुरिवेत्यादिना । पूर्वेषां यद्यपि ब्रह्मवित्त्वादि सम्भवति प्रभावातिशयात्तथाऽपि नाऽऽधुनिकानामल्पप्रज्ञानां
सम्भवतीत्याशङ्क्य चेतनत्वात्स्वाभाविकी ज्ञातृत्वयोग्यताऽस्तीत्यभिप्रेत्य तात्पर्यमाह—परापरे इति ॥ २ ॥

गोपालयतीन्द्रटीका

द्वयोः कर्मफलसम्बन्ध ईश्वरस्य तदसम्भवात्कथं पिबन्तावित्यत आह—एक इति । जीव इत्यर्थः । इतर ईश्वर इत्यर्थः ।
२० कथं पिबन्तावित्यत आह—तथाऽपीति । पातृसम्बन्धादिति । पाता जीवस्तत्सम्बन्धादित्यर्थः । छत्रिन्यायेनेति । यथा
लोके छत्रिणो गच्छन्तीति प्रयोगे सपरिवारे राज्ञि गच्छति छत्र्यच्छत्रिसमुदाये छत्रिशब्दो वर्तत एकसमूहवाचित्वेनैवं
पिबदपिबत्समुदाये पिबतिर्वर्तत इत्यर्थः । सुकृतस्य लोक इत्यन्वयभ्रमं वारयति—ऋतमितीति । बाह्यपुरुषा-
काशसंस्थानं देहाश्रय आकाशप्रदेशः । स्थानमित्यनन्तरमर्हतीति द्रष्टव्यम् । परार्ध इति क्वाचित्कः श्रुति-
पाठस्तस्मिन्पक्षे सुगमम् । पराध्यत्वमुपपादयति—तस्मिन्निति । अत इति । यतः परब्रह्मोपलब्धिस्थानमत
२५ इत्यर्थः । गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्य आवसथ्यश्चैते पञ्चाग्नयो येषां ते पञ्चाग्नयः । द्युपर्जन्यपृथिवीपुरुष-
योषित्सु येऽग्निदृष्टिं कुर्वन्ति ते वा पञ्चाग्नयः । पञ्चाग्नयस्त्रिणाचिकेतलक्षणा वदन्तीति सम्बन्धः ॥ १ ॥

ननु न सन्त्येव ब्रह्मविदः पञ्चाग्निविदश्चानुपलम्भादित्याशङ्क्य पूर्वविद्वदनुभवविरोधमाह—यः सेतुरिति ।
कर्मिणामिति । कर्मानुष्ठानवतामित्यर्थः, विराड्रूपाग्नेः सेतुत्वं व्युत्पादयति—दुःखेति । दुःखस्य सन्तरणं निवृत्तिः
सैवार्थः प्रयोजनं यस्य तस्य भावस्तत्त्वं तस्मादित्यर्थः । नाचिकेतोऽग्निरुक्तहेतोः सेतुरिव सेतुर्य इति पूर्वेण
३० सम्बन्धः । तं नाचिकेताग्निं न केवलं ज्ञातुं किन्तु कर्तुमपीत्याह—चेतुमिति । संकोचकप्रमाणाभावात्सर्वभयातीत-
मित्याह—संसारपारमिति । संसारातीतमित्यर्थः । तर्तुमिच्छतां प्राप्तुमिच्छताम् । आश्रयमवलम्बनम् । न क्षर-
तीत्यक्षरं षड्भावविकारशून्यं न परोक्षं किन्तु प्रत्यग्भूतमित्यर्थः । चकारादपरब्रह्मात्मकाग्निं ज्ञातुं चेतुं परब्रह्म
ज्ञातुमेव शक्नुवन्त इत्येतत्समुच्चयोऽवगम्यते । ननु यद्यपि पूर्वेषां ब्रह्मवित्त्वं सम्भवति महामहिमत्वात्तथाऽपि
नाऽऽधुनिकानामल्पप्रज्ञानामित्याशङ्क्य प्रमातृमात्रस्य चेतनत्वेन ज्ञातृत्वशक्तियोग्यतेश्वरानुग्रहादिना सम्भवतीत्यभि-
३५ प्रेत्य तात्पर्यमाह—परापरे इति । कर्मिविदाश्रयोऽपरं ब्रह्म, ब्रह्मविदाश्रयः परं ब्रह्मेति विभागः । ननु नर्तपानकर्त्रो-
र्ब्रह्मविल्प्रसिद्धत्वमन्ययोरेवेत्याशङ्क्याऽऽह—एतयोरिति । कर्मब्रह्मविदाश्रययोः परापरब्रह्मणोर्ऋतं पिबन्तावित्यत्रोप-
न्यासो यस्मात्कृतस्तस्मान्नान्यत्वाशङ्केत्यर्थः ॥ २ ॥

---

१. अनेन पापस्यापि संग्रहः । सुष्ठु कृतं सुकृतम् ।

आत्मानꣳरथिनं विद्धि शरीरꣳरथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥
इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

तत्र य उपाधिकृतः संसारी विद्याविद्ययोरधिकृतो मोक्षगमनाय संसारगमनाय च तस्य तदुभयगमने साधनो रथः कल्प्यते । तत्र—तमात्मानमृतपं संसारिणं रथिनं रथस्वामिनं विद्धि जानीहि । शरीरं रथमेव तु रथबद्धहयस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य बुद्धिं तु अध्यवसायलक्षणां सारथिं विद्धि बुद्धिनेतृप्रधानत्वाच्छरीरस्य । ५ सारथिनेतृप्रधान इव रथः । सर्वं हि देहगतं कार्यं बुद्धिकर्तव्यमेव प्रायेण । मनःसङ्कल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः ॥ ३ ॥

इन्द्रियाणि चक्षुरादीनि हयानाहू रथकल्पनाकुशलाः शरीररथाकर्षणसामान्यात् । तेष्वेवेन्द्रियेषु हयत्वेन परिकल्पितेषु गोचरान्मार्गान्रूपादीन्विषयान्विद्धि । आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति संसारीत्याहुर्मनीषिणो विवेकिनः । न हि केवलस्याऽऽत्मनो भोक्तृत्वमस्ति बुद्ध्याद्युपाधिकृतमेव तस्य १० भोक्तृत्वम् । तथा च श्रुत्यन्तरं केवलस्याभोक्तृत्वमेव दर्शयति—ध्यायतीव लेलायतीवेत्यादि । एवं च सति वक्ष्यमाणरथकल्पनया वैष्णवस्य पदस्याऽऽत्मतया प्रतिपत्तिरुपपद्यते नान्यथा स्वभावानतिक्रमात् ॥ ४ ॥

आनन्दगिरिटीका

तत्रेति । तयोः प्रथमग्रन्थोक्तयोरात्मनोर्मध्ये ॥ ३ ॥

आत्मा रथस्वामी यः कल्पितस्तस्य भोक्तृत्वं च न स्वाभाविकमित्याह—आत्मेन्द्रियमनोयुक्तमिति । १५ औपाधिके भोक्तृत्वेऽन्वयव्यतिरेकौ शास्त्रञ्च प्रमाणमित्याह—न हि केवलस्येति । वैष्णवपदप्राप्तिश्रुत्यनुपपत्त्याऽपि न स्वाभाविकं भोक्तृत्वं वाच्यमित्याह—एवं च सतीति ॥ ४-५-६-७-८-९ ॥

गोपालयतीन्द्रटीका

रथरूपकवाक्यमवतारयति—तत्रेति । जीवात्मपरमात्मनोर्मध्ये । उपाधिकृत उपाधिपरिच्छिन्न इत्यर्थः । ईश्वरं व्यावर्तयति—संसारीति । मुक्तजीवं व्यावर्तयति—विद्येत्यादिना । साक्षात्कारकर्मणोरित्यर्थः । कस्मै २० प्रयोजनायेत्याकाङ्क्षायामाह—मोक्षेति । विद्यायामधिकृतो मोक्षगमनायाविद्यायामधिकृतः संसारगमनायेति विभागः । तस्येति । विद्याविद्ययोरधिकृतस्य तदुभयगमनसाधनः संसारमोक्षगमनसाधनः । रथगमनागमनजन्मफलभोक्तृस्वामिसाम्यं विवक्षित्वा तमाह—तमिति । शुद्धचैतन्यं व्यावर्तयति—ऋतपमिति । ईश्वरं व्यावर्तयति—संसारिणमिति । रथस्वामिनमिति । रथतादात्म्याभिमानिनमित्यर्थः । शरीरस्य रथत्वसाम्ये हेतुमाह—रथबदिति । अन्तःकरणस्यैक्येऽपि वृत्तिभेदेन भेदं विवक्षित्वा सारथिप्रग्रहकल्पनेत्याह—बुद्धिं त्विति । अध्यवसायलक्षणाम् । अध्यवसायो २५ निश्चयो लक्षणं स्वरूपं यस्याः सा तामित्यर्थः । पूर्ववत्साम्ये हेतुमाह—बुद्धीति । बुद्धिर्नेता प्रापयित्री प्रधानं स्वतन्त्रभूता यस्य शरीरस्य तत्तथा तस्य भावस्तत्त्वं तस्मादित्यर्थः । तत्र दृष्टान्तमाह—सारथिनेतृप्रधान इव रथ इति । सारथिर्नेता प्रापयिता प्रधानः स्वतन्त्रो यस्य स इवेत्यर्थः । ननु मनआदीन्यपि शरीरनेतॄणि तत्कथं बुद्धेरेव नेतृत्वेन सारथित्वमत आह—सर्वं हीति । देहगतं सर्वं कार्यं गमनागमनादि प्रायेण बुद्ध्या कर्तव्यं हि यस्मात्तस्मात्प्रायिकाभिप्रायेण बुद्धेरेव नेतृत्वात्सारथित्वं युक्तमित्यर्थः । सारथिहस्ते विद्यमानं हयाकर्षणसूत्रं प्रग्रहशब्दितं मन इत्याह—मन इति । सङ्कल्प इदमेवं करिष्य इति वृत्तिः । आदिशब्देन विकल्पो गृह्यते स्थाणुर्वा ३० पुरुषो वेत्यादिः, तत्स्वरूपमित्यर्थः । तस्य रशनात्वं प्रसिद्धरशनासाम्येनोपपादयति—मनसेत्यादिना । प्रगृहीतान्याकृष्टानि । रशनयेति । यथा सूत्रेणाश्वा आकृष्यन्ते तद्वदित्यर्थः ॥ ३ ॥

प्रग्रहवत्सारथिस्वाम्यधिष्ठितरथाकर्षकहयतुल्यानीन्द्रियाणीत्याह—इन्द्रियाणीति । क इत्याकाङ्क्षायामाह—रथेति । रथत्वेन शरीरं कल्पयन्ति निरूपयन्ति येऽध्यात्मविदस्त इत्यर्थः । पूर्ववत्साम्ये हेतुमाह—शरीरेति । ३५ आकर्षणं हयधर्मस्तत्साम्यादित्यर्थः । यथा भद्रसेनस्य राज्ञो रथिनो रथहयगन्तव्यमार्गाः कुरवः एवमिन्द्रियहयगन्तव्यमार्गा विषया इत्याह—तेष्विति । तच्छब्दं व्याचष्टे—इन्द्रियेष्वित्यादिना । आदिशब्देन स्पर्शशब्दरसगन्धा गृह्यन्ते । रथस्वामित्वेन य आत्मा कल्पितस्तस्य भोक्तृत्वं च न स्वाभाविकमित्याह—आत्मेन्द्रियमनोयुक्तमिति । औपाधिकभोक्तृत्वेऽन्वयव्यतिरेकौ शास्त्रं च प्रमाणमित्याह—न हि केवलस्येति । उपाध्यपरिच्छिन्नस्येत्यर्थः । शास्त्र-

**यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥**
**यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥**
**यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति सँसारं चाधिगच्छति ॥ ७ ॥**
**यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥**

५ तत्रैवं सति—यस्तु बुद्ध्याख्यः सारथिरविज्ञानवानानिपुणोऽविवेकी प्रवृत्तौ च निवृत्तौ च भवति यथेतरो रथचर्यायामयुक्तेनाप्रगृहीतेनासमाहितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति तस्याकुशलस्य बुद्धिसारथेरिन्द्रियाण्यश्वस्थानीयान्यवश्यान्यशक्यान्यनिवारणीयानि दुष्टाश्वा अदान्ताश्वा इवेतरसारथेर्भवन्ति ॥ ५ ॥

यस्तु पुनः पूर्वोक्तविपरीतः सारथिर्भवति विज्ञानवान्प्रगृहीतमनाः समाहितचित्तः सदा तस्याश्वस्थानीयानीन्द्रियाणि प्रवर्तयितुं निवर्तयितुं वा शक्यानि वश्यानि दान्ताः सदश्वा इवेतरसारथेः ॥ ६ ॥

१० तस्य पूर्वोक्तस्याविज्ञानवतो बुद्धिसारथेरिदं फलमाह—यस्त्वविज्ञानवान्भवति अमनस्कोऽप्रगृहीतमनस्कः स तत एवाशुचिः सदैव । न स रथी तत्पूर्वोक्तमक्षरं यत्परं पदमाप्नोति तेन सारथिना । न केवलं कैवल्यं नाऽऽप्नोति संसारं च जन्ममरणलक्षणमधिगच्छति ॥ ७ ॥

यस्तु द्वितीयो विज्ञानवान्विज्ञानवत्सारथ्युपेतो रथी विद्वानित्येतत् । युक्तमनाः समनस्कः स तत एव सदा शुचिः । स तु तत्पदमाप्नोति । यस्मादाप्तात्पदादप्रच्युतः सन्भूयः पुनर्न जायते संसारे ॥ ८ ॥

१५ गोपालयतीन्द्रटीका

मुदाहरति—तथा चेति । ध्यायतीव लेलायतीवेत्यादिश्रुत्यन्तरमुपाध्यनवच्छिन्नस्यासंसारित्वमेव दर्शयति न संसारित्वमित्यर्थः । वैष्णवपदप्राप्तिश्रुत्यनुपपत्त्याऽपि न स्वाभाविकसंसारित्वमित्याह—एवं च सतीति । औपाधिके भोक्तृत्वे सतीत्यर्थः । वक्ष्यमाणा या रथकल्पना विज्ञानसारथिर्यस्त्वित्यादिना तया वैष्णवस्य पदस्य व्यापकस्वरूपस्याऽऽत्मतया प्रत्यगभिन्नत्वेन प्रतिपत्तिः प्राप्तिरवस्थानमुपपद्यत इत्यर्थः । नान्यथेति । अन्यथा संसारित्वस्य स्वाभाविकत्वेन
२० प्रतिपत्तिर्नोपपद्यत इत्यन्वयः । तत्र हेतुमाह—स्वभावानतिक्रमादिति । स्वभावस्य पारमार्थिकस्य संसारित्वस्यानतिक्रमादतिक्रमाभावात्त्यागाभावादसंसारिवैष्णवपदप्राप्तिर्नेत्यर्थः ॥ ४ ॥

पूर्वोक्तान्वयव्यतिरेकावुपसंहरति—तत्रेति । तत्र संसारित्वस्यास्वाभाविकत्वे । एवमुक्तप्रकारेण । यस्त्विति । यथा येन प्रकारेणेतरः सारथी रथगमने प्रग्रहेणायुक्तस्तथाऽसमाहितेन प्रग्रहस्थानीयेन मनसा युक्तो यस्तु कर्तव्याकर्तव्ययोरनिपुणो भवतीत्यर्थः । अविज्ञानवत्त्वेन न विज्ञानसामान्याभावः किन्तु बुद्धिगतातिशयाभावः । सोऽप्य-
२५ विवेकरूप इत्यर्थः । बुद्धिसारथेरविवेकसारथेः । अशक्यनिवारणानीति । विषयेभ्य इति शेषः । इतरसारथेर्लौकिकस्यादान्ताश्वाः कुमार्गाद्यथा निवर्तयितुं न शक्यन्ते तथा बुद्धिसारथेरसमाहितानीन्द्रियाण्यशक्यनिवारणानि भवन्तीत्यन्वयः ॥ ५ ॥

पूर्वोक्तविपरीत इति । अविवेकसारथेर्भिन्न इत्यर्थः । मनोनियतौ हेतुमाह—समाहितेति । विषयस्मरणवच्चित्तनिग्रहे विषयविकल्पात्मकं मनो निगृहीतं भवतीति भावः । शक्यानि कर्तव्याकर्तव्ययोरिति शेषः । सत्पद-
३० स्यार्थमाह—दान्ता इति । लौकिकसारथिशिक्षिताश्वा इव समाहितचित्ततया प्रगृहीतमनसः शक्यानीन्द्रियाणि कर्तव्याकर्तव्ययोर्निग्रहीतुमित्यर्थः ॥ ६ ॥

अविवेकबुद्धेरनियतेन्द्रियस्य फलपरत्वेनोत्तरं वाक्यमवतारयति—तस्येत्यादिना । मनोनिग्रहाभावेऽविवेकित्वादिन्द्रियपारवश्येन पाप्मोपचये दूषितान्तःकरणोऽशुचिरित्याह—तत एवेति । कार्यब्रह्मव्यावृत्त्यर्थमाह—परमिति । ननु चेतनस्य बन्धो यस्य बन्धस्तस्य मोक्षो बुद्धेश्च बन्धाभावात्तत्परं पदं तदक्षराख्यं सारथिर्नाऽऽप्नोतीति
३५ कथमुच्यते तत्राऽऽह—तेनेति । चेतन इति शेषः । कैवल्यं राजपुरप्रवेशस्थानीयमित्यर्थः । जन्ममरणादिलक्षणं कण्टकपाषाणाद्युपप्लुतदेशतुल्यम् ॥ ७ ॥

तद्विपरीतस्य पदप्राप्तिरित्याह—यस्त्विति । कर्तव्याकर्तव्यविवेको विज्ञानं तद्वान्यः सारथिर्बुद्धिरूपस्तेनोपेत इत्यर्थः । विद्वानिति । क्रमेणेति शेषः । तत एव निगृहीतमनस्कत्वादेव । सदा शुचिरिति । स्वच्छान्तःकरण इत्यर्थः । तच्च पदं न सातिशयमित्याह—यस्मादिति ॥ ८ ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥

किं तत्पदमित्याह—विज्ञानसारथिर्यस्तु यो विवेकबुद्धिसारथिः पूर्वोक्तो मनःप्रग्रहवान्प्रगृहीतमनाः समाहितचित्तः सञ्छुचिर्नरो विद्वान्सोऽध्वनः संसारगतेः पारं परमेवाधिगन्तव्यमित्येतदाप्नोति मुच्यते सर्वसंसारबन्धनैः । तद्विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं सतत्त्वमित्येतद्यदसावाप्नोति विद्वान् ॥ ९ ॥ ५

अधुना यत्पदं गन्तव्यं तस्येन्द्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतयाऽधिगमः कर्तव्य इत्येवमर्थमिदमारभ्यते—स्थूलानि तावदिन्द्रियाणि तानि यैरर्थैरात्मप्रकाशनायाऽऽरब्धानि तेभ्य इन्द्रियेभ्यः स्वकार्येभ्यस्ते परा ह्यर्थाः सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च । तेभ्योऽप्यर्थेभ्यश्च परं सूक्ष्मतरं महत्प्रत्यगात्मभूतं च

आनन्दगिरिटीका १०

प्रत्यगात्मभूताश्चेति । प्रत्यगनपायिस्वरूपभूता इत्यर्थः । नन्वर्थेभ्यो मनस आरम्भकं भूतसूक्ष्मं परम् तस्माद्बुद्ध्यारम्भकं भूतसूक्ष्मं परमिति न युक्तम् । कार्यापेक्षया ह्युपादानमुपचितावयवं व्यापकमनपायिस्वरूपं च प्रसिद्धम् । यथा घटादेर्मृदादिः । न चेह भूतसूक्ष्माणां परस्परकार्यकारणभावे मानमस्ति । सत्यम्, तथाऽपि विषयेन्द्रियव्यवहारस्य मनोधीनतादर्शनान्मनस्तावद्व्यापकं कल्प्यते । तच्च परमार्थत एवाऽऽत्मभूतमिति केषाञ्चिद्भ्रमस्तन्निरासायोक्तं मनःशब्दवाच्यं भूतसूक्ष्ममिति । 'अन्नमयं हि सोम्य मन' इत्यादिश्रुतेर्भौतिकत्वावगमादन्नभावाभावाभ्यामुपचयापचयदर्शनाद्भौतिकमेव तत् । तस्य च सङ्कल्पादिलक्षणस्याध्यवसायनियम्यत्वाद्बुद्धेस्ततः परत्व- १५

गोपालयतीन्द्रटीका

तत्र हेतुत्वेन पदस्वरूपमाकाङ्क्षापूर्वकं दर्शयति—किमित्यादिना । निगृहीतमनास्तत्त्वंपदार्थविवेकवानात्मनि समाहितचित्तः सन्निदिध्यासनवांस्तेन गतप्रतिबन्धः शुचिर्नरो विद्वानप्रतिबन्धेन साक्षात्कारवानध्वनः सोऽध्वनः संसारान्तर्भूतदेवयानदक्षिणायनाधोगतिरूपाया गतेः पारं तदप्राप्यं तदाप्नोतीत्यर्थः । नन्वात्मस्वरूपस्य नित्याप्तत्वादाप्नोतीति कथं तत्राऽऽह—मुच्यत इति । प्रत्यगितरयोरावरकाज्ञाननिवृत्तावाप्नोतीत्यौपचारिकमिति भावः । आकाशं व्यावर्तयति—ब्रह्मण इति । हिरण्यगर्भं व्यावर्तयति—वासुदेवाख्यस्येति । वासुदेव इत्याख्या यस्य सः । वासयति भूतानि स्वस्मिन्निति वासुः स चासौ देवश्च दीप्यत इति स्वप्रकाशः स वासुदेव इत्यर्थः । अनेन तत्पदवाच्यमभिहितम् । तस्य लक्ष्यमाह—परममिति । अथवा षष्ठी राहोः शिर इतिवदौपचारिकी । व्यापकं प्रकृष्टं पदमित्यर्थः । सतत्त्वं स्वरूपम् ॥ ९ ॥ २० २५

ननु तत्पदलक्ष्यविष्णोः प्रकृष्टं पदमाप्तव्यमित्युक्तं तत्किं केनचिन्मार्गेण देशविशेषे गन्तव्यं तदपि भिन्नतया ग्रामादिगमनवद्गन्तव्यं तथात्वे मोक्षस्यानित्यत्वापत्तिस्तस्य प्रकृष्टत्वं च कथमित्याशङ्कयाऽऽह—अधुनेत्यादिना । असावधिकारी यदाप्नोतीत्येतद्व्याचष्टे—यत्पदमिति । तस्य पदस्याधिगमः कर्तव्य इत्यन्वयः । कथं प्रकृष्टत्वमित्यस्योत्तरमाह—इन्द्रियाणीति । सूक्ष्मेति । विषयमनोबुद्ध्यादिक्रमेणेत्यर्थः । तत्किं केनचिन्मार्गेण देशविशेषे भिन्नतया प्राप्तव्यं तथा चानित्यत्वापत्तिः स्वर्गादिवदित्यस्योत्तरमाह—प्रत्यगात्मतयेति । न देशपरिच्छिन्नं फलं किन्तु मोहव्यवहितं तदपगमे प्रत्यग्रूपेणावस्थानमिति तद्रूपेण साक्षात्कारः सम्पद्यत इत्येवमर्थमुत्तरो ग्रन्थ आरभ्यत इत्यर्थः । तावच्छब्दः क्रमेणोत्तरोत्तरापेक्षया पूर्वपूर्वस्य स्थूलत्वज्ञापनपरः । इन्द्रियेभ्योऽर्थपरत्वे कारणत्वं सम्भावितहेतुमाह—यैरिति । आत्मप्रकाशनाय विषयज्ञानाय यैरर्थैरारब्धानि तानीन्द्रियाणि तेऽर्थाः परा इत्यन्वयः । केभ्य इत्याकाङ्क्षायां विषयकार्यभूतप्रकृतेन्द्रियेभ्य इत्याह—तेभ्य इति । त्रिधा परशब्दार्थं हिशब्दद्योतितमाह—सूक्ष्मा इत्यादिना । इन्द्रियानुस्यूतत्वात्ततः सूक्ष्मा महान्तश्च व्यापकाः । अत्र परस्परसमुच्चितं परत्वे विवक्षितमिति चशब्दद्वयम् । ननु विषयाणामनात्मत्वात्प्रत्यगात्मभूताश्चेति कथमिति चेद्यथा प्रत्यगवस्थाऽनपायिन्येवं विषया ३० ३५

**मनः। मनःशब्दवाच्यं मनस आरम्भकं भूतसूक्ष्मम्। सङ्कल्पविकल्पाद्यारम्भकत्वान्मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धिः बुद्धिशब्दवाच्यमध्यवसायाद्यारम्भकं भूतसूक्ष्मम्। बुद्धेरात्मा सर्वप्राणिबुद्धीनां प्रत्यगात्मभूतत्वादात्मा महान्सर्वमहत्त्वादव्यक्ताद्यत्प्रथमं जातं हैरण्यगर्भं तत्त्वं बोधाबोधात्मकं महानात्मा बुद्धेः पर इत्युच्यते ॥ १० ॥**

### आनन्दगिरिटीका

५

मिति। बुद्धिश्चाऽऽत्मेति केषाञ्चिदभिमानस्तदपनयार्थमाह—**बुद्धिशब्दवाच्यमिति**। करणत्वादिन्द्रियवत् बुद्धेर्भौतिकत्वं सिद्धम्। करणत्वं च स्वबुद्ध्याऽहमुपलभे इत्यनुभवात्सिद्धम्। ततो भूतावयवसंस्थानेष्वेवार्थादिषूत्तरोत्तरं परत्वं कल्प्यं परमपुरुषार्थं दिदर्शयिषया। न त्वर्थादीनां परत्वं प्रतिपिपादयिषितं प्रयोजनाभावाद्वाक्यभेदप्रसङ्गाच्चेति। सुरनरतिर्यगादिबुद्धीनां विधारकत्वात्सातत्यगमनादात्मोच्यते। सूत्रसंज्ञकं हैरण्यगर्भंतत्त्वमित्यर्थः। **बोधाबोधात्मक-**
१० **मिति।** ज्ञानक्रियाशक्त्यात्मकमित्यर्थः। अथवाऽधिकारिपुरुषाभिप्रायेण बोधात्मकत्वमव्यक्तस्याऽऽद्यः परिणाम उपाधिरपञ्चीकृतभूतात्मकस्तेन रूपेणाबोधात्मकत्वं हिरण्यगर्भस्येत्यर्थः ॥ १० ॥

### गोपालयतीन्द्रटीका

इन्द्रियेष्वनपायिन इति प्रत्यगात्मभूता इत्युच्यन्त इति भावः। **तेभ्योऽपीति**। इन्द्रियेभ्यः परत्वेनोक्तेभ्योऽपीत्यर्थः। ननु देहपरिच्छिन्नस्य मनसो न विषयान्प्रति व्यापकत्वसूक्ष्मत्वादिकमुपपद्यतेऽकारणत्वात्कारणस्य हि कार्या-
१५ पेक्षयोक्तत्रितयरूपत्वं यथेन्द्रियापेक्षया विषयाणां तथा च मनसः कथं सूक्ष्मत्वादिकमित्याशङ्क्य मनस आरम्भकं भूतसूक्ष्मं मनःशब्दवाच्यमेकदेशेन मनोरूपेण परिणामिविषयान्प्रति भूताकारेण कारणमतो मनसः परत्वं विषयेभ्यो युज्यत इत्याह—**मनःशब्दवाच्यमित्यादिना**। बुद्धेर्मनसः सकाशात्परत्वे हेतुं वदन्वाक्यमवतारयति—**सङ्कल्पेति**। तादृशस्य मनसोऽध्यवसायनियम्यत्वात्ततः परा बुद्धिरित्याह—**मनसोऽपीति**। अर्थेभ्यः परादपीत्यपेरर्थः। मनः-कारणत्वाभावाद्बुद्धेः कथं परत्वमित्याशङ्क्य परशब्दार्थकथनपूर्वकं बुद्धिशब्दार्थमाह—**सूक्ष्मेत्यादिना**। आदिशब्देन
२० बुद्धिवृत्त्यवान्तरविशेषा गृह्यन्ते। ननु मनस आरम्भकभूतसूक्ष्मं प्रति कथं बुद्ध्यारम्भकभूतसूक्ष्मस्य कारणता माना-भावाद्भेदाभावाच्च विज्ञानशक्तिमदन्तःकरणस्यापञ्चीकृतभूतसूक्ष्मसात्त्विकांशसमष्टितो विशेषेण जन्माङ्गीकारात्त-दारम्भकाणामैकात्म्येन भेदाभावादिति चेत्, अत्र न भूतसूक्ष्मशब्देनापञ्चीकृतानां ग्रहः किन्तु पञ्चीकृतान्नरूपभूत-सूक्ष्माणामिह ग्रहणं तेषामन्नमशितमित्यादिनाऽणिष्ठभागस्य प्रसिद्धेस्तस्य मनःशब्दवाच्यान्तःकरणोपचयहेतुत्वेनोप-चितान्तःकरणकारणत्वादन्तःकरणस्य च निश्चयसङ्कल्पशक्तिद्वयशालित्वेन निश्चयशक्तिमत्त्वात्साध्यत्वादितरस्यै-
२५ तदारम्भकभूतसूक्ष्मयोः कार्यकारणभावसम्भवान्मनःशब्दवाच्याणिष्ठभागस्य कारणत्वसम्भवात्परत्त्वमुपपद्यते। तर्हि बुद्धिमनसोरेव ग्रहे सम्भवति भूतसूक्ष्मपर्यन्तधावनं किमर्थमिति चेत्तद्ग्रहस्य तदारम्भकभूतसूक्ष्माधीनत्वात्ताव-त्पर्यन्तधावनमिति भावः। अथवा नन्वर्थेभ्यो मनस आरम्भकं भूतसूक्ष्मं परं तस्माद्बुद्ध्यारम्भकं भूतसूक्ष्मं परमिति न युक्तं कार्यापेक्षया हि कारणमुपचितावयवं व्यापकमनपायिस्वरूपं परं प्रसिद्धं यथा घटादेर्मृदादिः। न चेह भूत-सूक्ष्माणां परस्परकार्यकारणभावे मानमस्ति। सत्यम्। तथाऽपि विषयेन्द्रियव्यवहारस्य मनोधीनत्वात्ततो मनो
३० व्यापकं कल्प्यतेऽस्मिन्प्रकरणे यद्यदधीनं तत्तस्यापरमितरत्परमिति हि स्थितेः। ननु भाष्ये मनःशब्दवाच्यं भूतसूक्ष्मं परमिति कथमुक्तमिति चेत्केषाञ्चिन्मन आत्मेति भ्रमस्तन्निरासाय मनसो भौतिकत्वेनानात्मत्वं वक्तुं भूतसूक्ष्ममित्युक्त-मेवं बुद्धिस्थलेऽपि द्रष्टव्यम्। तस्य मनसोऽध्यवसायनियम्यत्वाद्बुद्धिः परा। भूतोपचयापचयाभ्यां मनसो भौतिकत्वेना-नात्मत्वं बुद्धेः करणत्वेनानात्मत्वं द्रष्टव्यम्। ततोऽर्थादिषु भूतसंस्थानेष्वेव परत्वं कल्प्यते परमपुरुषार्थं दिदर्शयिषया न त्वर्थादीनां परत्वं प्रतिपिपादयिषितं प्रयोजनाभावाद्वाक्यभेदप्रसङ्गाच्चेत्यपि द्रष्टव्यम्। आत्मशब्दस्य परशब्दार्थ-
३५ व्यापकत्वांशेन पौनरुक्त्यमाशङ्क्यापुनरुक्तमर्थमाह—**सर्वेति**। सुरनरतिर्यगादिबुद्धीनां विधारकत्वात्सातत्यगमना-दात्मोच्यत इत्यर्थः। आत्ममहच्छब्दयोः पौनरुक्त्ये सर्वबुद्धिव्यापकताऽऽत्मशब्दार्थः। बुद्धितदितरव्यापकता महच्छब्दार्थं इत्याह—**सर्वेति**। तत्र हेतुमाह—**अव्यक्तादिति**। **हैरण्यगर्भं तत्त्वमिति**। सूत्रसंज्ञितमित्यर्थः। **बोधाबोधात्मकं** ज्ञानक्रियाशक्त्यात्मकमित्यर्थः ॥ १० ॥

[1]महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥११॥

महतोऽपि परं सूक्ष्मतरं प्रत्यगात्मभूतं सर्वमहत्तरं चाव्यक्तं सर्वस्य जगतो बीजभूतमव्याकृतनामरूपसतत्त्वं सर्वकार्यकारणशक्तिसमाहाररूपमव्यक्ताव्याकृताकाशादिनामवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितं वटकणिकायामिव वटवृक्षशक्तिः। तस्मादव्यक्तात्परः सूक्ष्मतरः सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च महांश्च, अत एव पुरुषः सर्वपूरणात्। ततोऽन्यस्य परस्य प्रसङ्गं निवारयन्नाह—पुरुषान्न परं किञ्चिदिति। यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्परं किञ्चदपि वस्त्वन्तरं तस्मात्सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां सा काष्ठा निष्ठा पर्यवसानम्। अत्र हीन्द्रियेभ्य

आनन्दगिरिटीका

प्रलये सर्वकार्यकारणशक्तीनामवस्थानमभ्युपगन्तव्यं शब्दार्थसम्बन्धशक्तिलक्षणस्य नित्यत्वनिर्वाहाय। तासां शक्तीनां समाहारो मायातत्त्वं भवति ब्रह्मणोऽसङ्गत्वादिति शक्तिसमाहाररूपमव्यक्तमित्यर्थः। "तद्धेदं तर्ह्यव्याकृतमासीत्" "एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादिश्रुतिप्रसिद्धं चाव्यक्तम्। तस्य साङ्ख्याभिमतप्रधानाद्वैलक्षण्यमाह—परमात्मनीति। शक्तित्वेनाद्वितीयत्वाविरोधित्वमाह—वटकणिकायामिवेति। भाविवटवृक्षशक्तिमद्वटबीजं स्वशक्त्या न सद्द्वितीयं कथ्यते तद्वद्ब्रह्मापि न मायाशक्त्या

गोपालयतीन्द्रटीका

परमव्यक्तमित्यन्वयः। हिरण्यगर्भतत्त्वमेव सूक्ष्ममतिशयेन सूक्ष्मं सूक्ष्मतरमव्यक्तं प्रत्यग्वदनपायि सर्वस्माद्व्यापकमित्यर्थः। हिरण्यगर्भाद्वैलक्षण्यमाह—सर्वेति। आरम्भवादं निराकरोति—अव्याकृतेति। अव्याकृतयोर्नामरूपयोः सतत्त्वं स्वरूपमित्यर्थः। ननु सृष्टेः प्रागव्याकृतव्यतिरेकेणाभावात्कथं सर्वेषां कार्याणां कारणानां च शक्तिसमुदायरूपमव्यक्तमिति चेत्प्रलये सर्वशक्तीनामवस्थानं वक्तव्यं शब्दार्थसम्बन्धस्य शक्तिलक्षणस्य निर्वाहाय; तासां च शक्तीनां मायातत्त्वे समाहारो भवति ब्रह्मणोऽसङ्गत्वादिति समाहाररूपमव्यक्तमित्यर्थः। तत्र प्रमाणमाह—अव्याकृतेति। "तद्धेदं तर्ह्यव्याकृतमासीत्" "एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" "मायां तु प्रकृतिं विद्यात्" इत्यादिश्रुतिप्रसिद्धमित्यर्थः। साङ्ख्याभिमतप्रधानाद्वैलक्षण्यमाह—परमात्मनीति। ननु शक्तिरेकाऽऽत्मा चैक इति सद्वितीयत्वापत्तिरित्याशङ्क्याऽऽत्मव्यतिरेकेण तस्या असत्त्वं दृष्टान्तेनाऽऽह—वटेति। वटबीज इत्यर्थः। यदर्थं पूर्वपूर्वापेक्षयोत्तरोत्तरस्य परत्वं प्रतिपादितं तद्वैष्णवपदमवतारयति—तस्मादित्यादिना। पूर्वोक्तात्। नन्वात्मनः सूक्ष्मतरत्वं वक्तुं शक्यतेऽव्यक्तादपि दुर्विज्ञेयत्वात्कारणत्वरूपपरत्वं कथं? कारणत्वे वाऽव्यक्तवद्विकारित्वेनासत्त्वापत्तेरिति चेत्, अधिष्ठानपरतन्त्रत्वादारोपस्याधिष्ठानस्योपचारेणाऽऽत्मनः कारणत्वमुच्यत इति न दोषः। पारतन्त्र्यं चाव्यक्तस्य पृथक्सत्त्वे प्रमाणाभावादात्मसत्तयैव सत्तावत्त्वाच्चेति भावः। प्रत्यगात्मेति। पूर्वत्र सापेक्षप्रत्यक्त्वमत्र तु स्वाभाविकमेव दिदर्शयिषितं वस्तुतश्चादिति भावः। अत एव निरतिशयमहत्त्वादेवेत्यर्थोऽवध्रियत इत्याह—अत इति। प्रसङ्गं सत्त्वस्येति शेषः। पुरुषात्परं किञ्चिन्नेत्यर्थं हेतूकृत्य सेत्यादिवाक्यं व्याचष्टे—यस्मान्नास्तीत्यादिना। पर्यव-

---

१. अत्राव्यक्तपदेन साङ्ख्याः स्वाभिमतं जगत्कारणं प्रधानमेवाभिधीयत इत्याहुः, तत्खण्डनार्थं सूत्रं आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति चेति। अत्र 'आत्मानं रथिनं विद्धी'त्यादिना रथिरथादिरूपककल्पना परमपददिदर्शयिषया प्रोक्ता। तत्र च तत्प्रदर्शनं 'इन्द्रियेभ्यः परा ह्यर्था' इत्यारभ्य 'पुरुषान्न परं किञ्चित्' इति वाक्येन पुरुषस्य सर्वपरत्वमुक्तं तत्रैव चेन्द्रियादिभ्यः अर्थादीनां परत्वं पर्यवस्यति। न तु तेषां तेषां तत्परत्वे तात्पर्यमिति 'आध्यानाय प्रयोजनाभावात्' इति सूत्रे भगवता निर्णीतम्। य एवेन्द्रियादयः पूर्वस्यां रथिरथादिरूपककल्पनायां प्रकृताः त एवेन्द्रियादयः पूर्वपूर्वापेक्षया उत्तरोत्तरपरत्वकल्पनायां स्वीकार्याः प्रकृतत्वात्। पूर्वत्र रथत्वेन निर्दिष्टं शरीरं त्वत्र स्वशब्देन नोक्तं, इतरे तु स्वशब्देन निर्दिष्टा एव। तदिह प्रकरणात् परिशेषाच्चाव्यक्तपदेन पूर्वप्रकृतं शरीरं ग्राह्यं, व्यक्तस्यापि तस्याव्यक्तप्रकृतिकत्वात् अव्यक्तकारणरूपेणाव्यक्तत्वादव्यक्तपदेन ग्रहणमुचितमेवेति निर्णीतमानुमानिकमप्येकेषामिति चेत् इत्यधिकरणे।

**एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२॥**

आरभ्य सूक्ष्मत्वादिपरिसमाप्तिः। अत एव च गन्तृणां सर्वगतिमतां संसारिणां परा प्रकृष्टा गतिः। 'यद्गत्वा न निवर्तन्त' इति स्मृतेः॥ ११ ॥

ननु गतिश्चेदागत्याऽपि भवितव्यं कथं यस्माद्भूयो न जायत इति। नैष दोषः। सर्वस्य प्रत्यगात्मत्वादव-
५ गतिरेव गतिरित्युपचर्यते। प्रत्यगात्मत्वं च दर्शितमिन्द्रियमनोबुद्धिपरत्वेन। यो हि गन्ता सोऽगतमप्रत्यग्रूपं गच्छत्य-
नात्मभूतं न विपर्ययेण। तथा च श्रुतिः—"अनध्वगा अध्वसु पारयिष्णवः" इत्याद्या। तथा च दर्शयति प्रत्यगात्मत्वं
सर्वस्य—एष पुरुषः सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु भूतेषु गूढः संवृतो दर्शनश्रवणादिकर्माऽविद्यामायाच्छन्नोऽत एवाऽऽत्मा
न प्रकाशत आत्मत्वेन कस्यचित्। अहो अतिगम्भीरा दुरवगाह्या विचित्रा माया चेयं यदयं सर्वो जन्तुः परमार्थतः
परमार्थसतत्त्वोऽप्येवं बोध्यमानोऽहं परमात्मेति न गृह्णात्यनात्मानं देहेन्द्रियादिसङ्घातमात्मनो दृश्यमानमपि घटादिव-
१० दात्मत्वेनाहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति। नूनं परस्यैव मायया मोमुह्यमानः सर्वो लोको बम्भ्रमीति।

आनन्दगिरिटीका

सद्वितीयम्। सत्त्वादिरूपेण निरूप्यमाणे व्यक्तिरस्य नास्तीत्यव्यक्तम्। ततोऽव्यक्तशब्दादप्यद्वैताविरोधित्वं
द्रष्टव्यम्। सर्वस्य प्रपञ्चस्य कारणमव्यक्तम्। तस्य परमात्मपरतन्त्रत्वात्परमात्मन उपचारेण कारणत्वमुच्यते न
त्वव्यक्तवद्विकारितयाऽनादित्वादव्यक्तस्य पारतन्त्र्यं च पृथक्सत्त्वे प्रमाणाभावादात्मसत्तयैव सत्तावत्त्वाच्चेत्यर्थः ॥११॥
१५ पारयिष्णव इति। संसारपारं गन्तार इत्यर्थः। न प्रकाशते चेत्तर्हि नास्त्येवेति न वाच्यं लिङ्गदर्शनादि-
त्याह—दर्शनश्रवणादीनि। कर्माण्यस्येति तथोक्तः। जीवस्य प्रकाशत्वे ब्रह्मात्मत्वे सत्यपि योऽयं ब्रह्मस्वरूपानवभासः
स केनापि प्रतिबन्धेन कृत इति कल्प्यते। तच्च प्रतिबन्धकं न वस्तु ज्ञानान्मुक्तिश्रुतेर्बाधप्रसङ्गात्। ततोऽविद्यैव
प्रतिबन्धिकेत्याह—अविद्यामायाछन्न इति। निदिध्यासनप्रचयेनैकाग्र्यमापन्नमन्तःकरणं यदा सहकारि सम्पाद्यते

गोपालयतीन्द्रटीका

२० सानमुपपादयति—अत्र हीति। आत्मनीत्यर्थः। अत एव सूक्ष्मत्वादिपर्यवसानभूमित्वादेव। प्रकृष्टगतित्वे प्रमाण-
माह—यदिति। "तद्धाम परमं ममे"ति वाक्यशेषः॥ ११॥

गतिशब्दस्य यथाश्रुतमर्थं गृहीत्वा शङ्कते—नन्विति। परिहरति—नैष दोष इति। प्रत्यग्भिन्नस्य हि
गत्याऽवाप्तिर्मुख्या तस्य तूपचारेणेत्यत्र पूर्वोक्तं हेतुमाह—प्रत्यगात्मत्वं चेति। तर्हि प्रतीचः प्राप्तत्वेन ज्ञानादि-
वैयर्थ्यमित्याशङ्क्याविद्ययाऽनात्मरूपमापन्नो यः सोऽधिकारी तं प्रत्यगात्मानमनात्मव्युदासेन प्राप्नोतीत्याह—यो
२५ हीति। हिशब्दसूचितां श्रुतिमाह—तथा चेति। अनध्वगा मार्गरहिताः। पारयिष्णवः संसारपारं गन्तार इत्यर्थः।
गतेरौपचारिकत्वे सर्वस्य प्रत्यगात्मत्वं श्रुतिर्दर्शयतीत्यवतारयति—तथा चेति। संवृतो न प्रकाशत इत्यन्वयः। न
प्रकाशते चेत्तर्हि नास्त्येवेति न वाच्यं लिङ्गदर्शनादित्याह—दर्शनेति। दर्शनश्रवणादीनि कर्माण्यस्येति तथा। ननु
जीवस्य प्रकाशे ब्रह्मात्मत्वे कुतोऽनवभासस्तत्राऽऽह—अविद्यामायाछन्न इति। अविद्येति ज्ञाननिरस्यत्वमुच्यते।
मायेति मिथ्यात्वमुच्यते। अत एव यतश्छन्नः कस्यचिदप्यात्माऽऽत्मत्वेन न प्रकाशतेऽहं पर एवेति व्यवहारयोग्यो
३० न भवतीत्यर्थः। एष इत्यादिश्रुतेरक्षरार्थमुक्त्वा प्राणिष्वनुकम्पां दर्शयञ्श्रुतेस्तात्पर्यार्थमाह—अत इति। यतः
स्वप्रकाशप्रत्यक्चैतन्यावरिकाऽविद्याऽतोऽतिगम्भीरा नक्रादिसंवलितगङ्गाह्रद इवाविमर्शनीयस्वरूपा यत एवमतो
दुरवगाह्या मायायां स्थित्वा मायाकृता विभूतिरियतीति निर्धारयितुं न शक्यते केनचिदतः सा। एवंभूतमायायाः
सविलासकत्वं प्रदर्श्य स्वरूपावरकत्वे हेतुमाह—विचित्रा चेति। इयमहमज्ञ इत्यनुभवसिद्धा नानाशक्तियुक्ताऽघटन-
घटनापटीयसी। तत्र हेतुमाह—यदिति। यस्मादित्यर्थः। अयं संसरन्दृश्यमानः सर्वप्राणी वस्तुतः परमार्थ-
३५ स्वरूपोऽप्येवं बोध्यमानः पर एवाऽऽत्मा नासि संसारीत्यहं पर एवाऽऽत्मेति न गृह्णाति, घटादिवदात्मनो दृश्यमान-
मपि देहेन्द्रियादिसङ्घातमनात्मानं त्वं देवदत्तपुत्रो विष्णुमित्र इत्यनुच्यमानोऽप्यनुपदिश्यमानोऽप्यहममुष्य पुत्र
इत्यात्मत्वेन गृह्णातीत्यन्वयः। स्वस्वरूपमखण्डाद्वितीयमुच्यमानमपि न गृह्णातीत्यनुक्तमप्यनात्मस्वरूपमात्मत्वेन
गृह्णातीत्यत्र को हेतुरिति विचार इदं निश्चितमित्याह—नूनमिति। मोमुह्यमानः पुनः पुनरतिशयेन वा मोह्

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥१३॥
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥

तथा च स्मरणम्—"नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इत्यादि। ननु विरुद्धमिदमुच्यते मत्वा धीरो न शोचति न प्रकाशत इति च। नैतदेवम्। असंस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युक्तम्। दृश्यते तु संस्कृतयाऽग्र्ययाऽग्रमिवाग्र्या तयैकाग्रतयोपेतयेत्येतत्सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया। कैः सूक्ष्मदर्शिभिरिन्द्रियेभ्यः परा ह्यर्था इत्यादि- ५ प्रकारेण सूक्ष्मतापारम्पर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषां ते सूक्ष्मदर्शिनस्तैः सूक्ष्मदर्शिभिः पण्डितैरित्येतत् ॥ १२ ॥

तत्प्रतिपत्त्युपायमाह—यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी। किम्। वाग्वाचम्। वागत्रोपलक्षणार्था सर्वेषामिन्द्रियाणाम्। क्व। मनसी मनसीति च्छान्दसं दैर्घ्यम्। तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि। बुद्धिर्हि मनआदिकरणान्याप्नोतीत्यात्मा प्रत्यक्तेषाम्। ज्ञानं बुद्धिमात्मनि महति प्रथमजे नियच्छेत्। प्रथमजवत्स्वच्छस्वभावकमात्मनो विज्ञानमापादयेदित्यर्थः। तं च महान्तमात्मानं यच्छेच्छान्ते सर्वविशेषप्रत्यस्तमितरूपेऽविक्रिये १० सर्वान्तरे सर्वबुद्धिप्रत्ययसाक्षिणि मुख्य आत्मनि ॥ १३ ॥

एवं पुरुष आत्मनि तत् सर्वं प्रविलाप्य नामरूपकर्मत्रयं यन्मिथ्याज्ञानविजृम्भितं क्रियाकारकफललक्षणं

### आनन्दगिरिटीका

तदा तत्सहकृतान्महावाक्यादहं ब्रह्मास्मीति या बुद्धिवृत्तिरुत्पद्यते तस्यामभिव्यक्तो ब्रह्मभाव इति स्वतोऽपरोक्षतया व्यवह्रियत इति दृश्यत्वमुपचर्यते। यो हि यत्प्रयुक्तव्यवहारः स तद्दृश्य इति प्रसिद्धम् ॥ १२-१३ ॥ १५

क्रमेणैवं विषयदोषदर्शनेनाभ्यासेन च बाह्यकरणान्तःकरणव्यापारप्रविलापने सति प्रविलापनकर्तुः कः पुरुषार्थः सिद्ध्यतीत्यत आह—एवं पुरुष इत्यादिना ॥ १४ ॥

### गोपालयतीन्द्रटीका

मापद्यमानो बंभ्रमीति पुनः पुनरतिशयेन भ्रमतीत्यर्थः। मायाधीनमोहादात्मा प्रकाशे संसरणे च भगवतः स्मरणं प्रमाणयति—तथा चेति। योगमायासमावृत इति वाक्यशेषः। चोद्योत्तरवाक्यं व्याचष्टे—नन्वित्यादिना। एतद्विरुद्धत्व- २० मेवं त्वदुक्तप्रकारेण न भवति श्रुत्योर्विषयभेदात्। न प्रकाशत इत्यस्यार्थं दर्शयति—असंस्कृतेति। निदिध्यासनप्रचयजन्यसंस्काररहिताया बुद्धेरित्यर्थः। मत्वा धीरो न शोचतीत्यस्याऽऽशयं श्रुतिः स्वयमेव दर्शयति—दृश्यते त्विति। संस्कृतया निदिध्यासनप्रचयजन्यसंस्कारयुक्तया। एवं ब्रह्मात्मैक्यमग्रं मुख्यं लक्ष्यं यस्यास्तस्या भाव एकाग्रता तया सहितयेत्येतत्। सूक्ष्मं दुर्विज्ञेयं वस्तु ब्रह्मात्मैक्यं तस्य निरूपणे निश्चये तात्पर्यवत्या। कर्तृपदमाकाङ्क्षापूर्वकं व्याचष्टे—कैरिति। सूक्ष्मदर्शिभिः पण्डितैः सूक्ष्मयाऽग्र्यया बुद्ध्याऽऽत्मा दृश्यत इति योजना ॥१२॥ २५

ब्रह्मज्ञानसाधनत्वेनोत्तरं वाक्यं व्याचष्टे—तदिति। तस्याऽऽत्मनः प्राप्तिस्तत्साधनीभूतं ज्ञानं तदुपायमित्यर्थः। ननूपसंहारेऽपि वाच इतरेन्द्रियाणां सव्यापाराणामनुपसंहारे तन्मात्रं न ज्ञानसाधनमित्याशङ्क्याह—वागत्रोपलक्षणार्थेति। आकाङ्क्षापूर्वकमधिकरणं निर्दिशति—क्वेति। दैर्घ्यस्य गतिमाह—मनसीतीति। सङ्कल्पविकल्पात्मकमनसो बुद्धितन्त्रत्वात्तस्य तस्यां लयस्य कर्तव्यतया प्रकाशसामान्यं ज्ञानशब्देन मनआदिकरणव्याप्त्या तेषां प्रत्यगात्मा बुद्धिस्तच्छब्देनोच्यत इत्याह—ज्ञान इत्यादिना। हि यस्मादर्थे। नन्वात्ममहच्छब्दाभ्यां व्यापक- ३० प्रत्यगात्मनोऽभिधानात्कथं प्रथमजे हिरण्यगर्भे बुद्धौ व्यष्टिबुद्धेः प्रविलापनमित्याशङ्क्य तदुत्तरपर्याये शान्त आत्मेति विशेषणात्प्रत्यस्तमितसर्वविशेषणवत्येतस्य लयप्रतिपादनात्तस्य ग्रहणं न विरुध्यते। न च व्यष्टिबुद्धेः समष्टौ लयश्चेत्तस्याः परमकारणे लयो वाच्यस्तद्विना निर्विशेषे लयः कथमिति वाच्यम्, आत्ममहच्छब्दाभ्यां सकारणससूत्रहैरण्यगर्भबुद्धेर्ग्रहान्न दोष इति भावः। समष्टिव्यष्ट्योः साम्ये लयनिमित्तमाह—स्वच्छेति। स्वच्छस्वभावकं प्रथमजं विज्ञानं प्रत्यगात्मोपाधिभूतविज्ञानमापादयेदित्यर्थः। सर्वेति। सर्वे विशेषाः प्रत्यस्तमिता लीना यस्मिंस्तत्तच्च तद्रूपं च ३५ तस्मिन्। तत्र हेतुः—अविक्रिय इति। एवमुत्तरोत्तरं हेतुत्वेन व्याख्येयम्। मुख्य आत्मनि तं यच्छेदित्यन्वयः ॥१३॥

विषयदोषदर्शनेन बाह्यान्तःकरणव्यापारप्रविलापने तत्कर्तृकः कः पुरुषार्थः सेत्स्यतीत्याशङ्क्याऽऽह—एवं पुरुष इत्यादिना। एवं यच्छेदित्यादिक्रमेण प्रत्यगात्मस्वरूपसाक्षात्कारेण समस्तं प्रकर्षेण विलाप्य कृतकृत्यो

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥

स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तात्मा कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तव आत्मज्ञानाभिमुखा भवत, जाग्रताज्ञानानिद्राया ५ घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कुरुत। कथम्। प्राप्योपगम्य वरान्प्रकृष्टानाचार्यांस्तद्विदस्तदुपदिष्टं सर्वान्तरमात्मानमहमस्मीति निबोधतावगच्छत। न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पयाऽऽह मातृवत् अतिसूक्ष्मबुद्धिविषयत्वाज्ज्ञेयस्य। किमिव सूक्ष्मबुद्धिरित्युच्यते। क्षुरस्य धाराऽग्रं निशिता तीक्ष्णीकृता दुरत्यया दुःखेनात्ययो यस्याः सा दुरत्यया। यथा सा पद्भ्यां दुर्गमनीया तथा दुर्गं दुःसम्पाद्यमित्येतत्पथः पन्थानं तत्त्वज्ञानलक्षणं मार्गं कवयो मेधाविनो वदन्ति। ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दुःसम्पाद्यत्वं वदन्तीत्यभिप्रायः ॥ १४ ॥

१० तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते। स्थूला तावदियं मेदिनी शब्दस्पर्शरूपरसगन्धोपचिता सर्वेन्द्रियविषयभूता तथा शरीरम्। तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति ते गन्धादयः सर्व एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति किमु तस्य सूक्ष्मत्वादि-

आनन्दगिरिटीका

यावद्यावद्गुणापचयस्तावत्तावत्तारतम्येन सौक्ष्म्यं दृष्टं पृथिव्यादिषु परमात्मनि तु गुणानामत्यन्ताभावान्नि-
१५ रतिशयं सौक्ष्म्यं दृष्टं सिध्यतीत्याह—स्थूला तावदित्यादिना ॥ १५-१६-१७ ॥

इति काठकोपनिषद्भाष्यटीकायां प्रथमाध्याये तृतीया वल्ली समाप्ता

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते
काठकोपनिषद्भाष्यव्याख्याने प्रथमोऽध्यायः समाप्तः

गोपालयतीन्द्रटीका

२० भवतीत्यन्वयः। आत्मव्यावृत्त्यर्थं सर्वं विशिनष्टि—नामेति। शब्दार्थक्रियात्रयमित्यर्थः। तस्य सत्यत्वं व्यावर्तयति—यदिति। मिथ्या च तदज्ञानं च मिथ्याज्ञानं तेन विजृम्भितं निष्पादितं यत्तत्सर्वमित्यन्वयः। ज्ञानफलं न कर्मसाध्यमिति ज्ञापयितुं कर्मफलं संसारान्तर्गतमेवेति दर्शयति—क्रियेति। सम्यग्ज्ञानेन सर्वविलापने कृतकृत्यतेत्यत्र दृष्टान्तमाह—मरीचीति। मरीच्यादिदर्शनेन तदुदकादि प्रविलाप्य लौकिकः पुमान्यथा स्वस्थस्तथा स्वस्थः सर्वबाह्येन्द्रियव्यापाररहितः प्रशान्त आत्माऽन्तःकरणं यस्य सर्वमनोव्यापाररहितः प्रशान्तात्मा कर्तव्याभावात्कृतकृत्यो भवती-
२५ त्यर्थः। उक्तमर्थं हेतूकृत्योत्तरं वाक्यमवतारयति—यतोऽत इति। तद्दर्शनार्थं कृतकृत्यताहेतुदर्शनार्थम्। अनाद्यविद्यायां प्रसुप्तास्तत्तन्त्राः। आत्मज्ञानाभिमुखा इति। ईश्वरार्पितकर्मतश्चित्तशुद्धिविविदिषाक्रमेण श्रवणादिपरा इत्यर्थः। घोरो दुःखबहुलः संसारदावो रूपं यस्या सा। तस्या घोररूपत्वं विवृणोति—सर्वेति। क्षयं कुरुत साक्षात्कारेणेति शेषः। तत्साक्षात्कार आचार्याधीन इत्याकाङ्क्षापूर्वकं दर्शयति—कथमित्यादिना। तेषां वरत्वं व्याचष्टे—तद्विद इति। निबोधतेत्यस्यापेक्षितं कर्म पूरयति—तदित्यादिना। अक्षरार्थमुक्त्वा तात्पर्यार्थमाह—न
३० हीति। तदुपेक्षणेऽनर्थप्राप्तिसूचको हिशब्दः। इतिर्वक्ष्यमाणप्रकारार्थः। आदरेण श्रुत्यभिधाने हेतुः—अतिसूक्ष्मेति। आकाङ्क्षापूर्वकमुत्तरवाक्यं व्याचष्टे—किमिवेति। तीक्ष्णीकृता पाषाणादाविति शेषः। पदार्थमुक्त्वा विवक्षितं वाक्यार्थमाह—यथेति। छान्दसत्वाद्वचनव्यत्यय इत्याह—पन्थानमिति। ननु वस्तुनः सुज्ञेयत्वे ज्ञानस्यापि तथात्वाद्दुर्गमत्वमसिद्धमित्याशङ्क्य कवयो वदन्तीत्यस्य तात्पर्यार्थमाह—ज्ञेयस्येति ॥ १४ ॥

तदेवासिद्धमित्याशङ्क्ते—कथमिति। स्थूलसूक्ष्मतारतम्यविश्रान्तिस्थानत्वादतिसूक्ष्मं ज्ञेयं ब्रह्मेत्याह—उच्यत
३५ इति। यावद्यावद्गुणापचयस्तावत्तावत्तारतम्येन सौक्ष्म्यं पृथिव्यादिषु दृष्टं परमात्मनि गुणानामत्यन्तमभावान्निरतिशयं सौक्ष्म्यं सिध्यतीति पृथिव्यादिषु तारतम्येन सौक्ष्म्यमुपपादयति—स्थूलेत्यादिना। शब्दादिरूपेण वृद्धौ हेतुमाह—सर्वेति। पृथिव्युक्तं न्यायं पार्थिवे शरीरेऽतिदिशति—तथेति। तत्र पृथिवीतच्छरीरयोरपकर्षोपगमेऽबादिषु सूक्ष्मत्वादितारतम्यं दृष्टमित्यन्वयः। तारतम्यदृष्टाववधिमाह—यावदाकाशमिति। यावच्छब्दोऽभिव्याप्तौ।

नाचिकेतमुपाख्यानं मृत्युप्रोक्तँ सनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥
य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥

इति काठकोपनिषदि प्रथमोऽध्यायः समाप्तः

निरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। एतद्व्याख्यातं ब्रह्माव्ययम् । यद्धि शब्दादिमत्तद्व्येतीदं त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयते, अत एव च नित्यं यद्धि व्येति तदनित्यमिदं तु न व्येत्यतो नित्यम् । इतश्च नित्यमनाद्यविद्यमान आदिः कारणमस्य तदिदमनादि । यद्धयादिमत्तत्कार्यत्वादनित्यं कारणे प्रलीयते यथा पृथिव्यादि । इदं तु सर्वकारणत्वादकार्यमकार्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिन्प्रलीयेत । तथाऽनन्तमविद्यमानोऽन्तः कार्यमस्य तदनन्तम् । यथा कदल्यादेः फलादिकार्योत्पादनेनाप्यनित्यत्वं दृष्टं न च तथाऽप्यन्तवत्त्वं ब्रह्मणोऽतोऽपि नित्यम् । महतस्तत्त्वाद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्वसाक्षि हि सर्वभूतात्मत्वाद्ब्रह्म । उक्तं ह्येष सर्वेषु भूतेष्वित्यादि । ध्रुवं च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम् । तदेवंभूतं ब्रह्मात्मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्मलक्षणात्प्रमुच्यते वियुज्यते ॥१५॥

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः—नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं मृत्युना प्रोक्तं मृत्युप्रोक्तमिदमाख्यानमुपाख्यानं वल्लीत्रयलक्षणं सनातनं चिरन्तनं वैदिकत्वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वाऽऽचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन्महीयत आत्मभूत उपास्यो भवतीत्यर्थः ॥ १६ ॥

यः कश्चिदिमं ग्रन्थं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेद्ग्रन्थतोऽर्थतश्च ब्राह्मणानां संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेद्भुञ्जानानां तच्छ्राद्धमस्याऽऽनन्त्यायानन्तफलाय कल्पते सम्पद्यते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥

इति काठकोपनिषदि प्रथमाध्याये तृतीयवल्लीभाष्यं समाप्तम्

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ
काठकोपनिषद्भाष्ये प्रथमोऽध्यायः समाप्तः

गोपालयतीन्द्रटीका

आत्मनो निरतिशयं सूक्ष्मत्वादि कैमुतिकन्यायेनोपपादयति—त इति । ते गन्धादयः शब्दान्ताः स्थूलत्वादिकारणाः स्थूलत्वसूक्ष्मत्वसूक्ष्मतरत्वसूक्ष्मतमत्वादिकारणा ज्ञापकाः सर्वे एव यत्र न सन्ति प्रतीचि तस्य सूक्ष्मत्वादेर्निरतिशयत्वं किमु वक्तव्यमित्यन्वयः । उक्तेऽर्थे श्रुतिं योजयति—इत्येतदिति । शब्दादिराहित्यमव्ययत्वेऽव्ययत्वं नित्यत्वे हेतुरिति पाठक्रममविवक्षित्वाऽऽह—यद्धीति । नित्यत्वे हेत्वन्तरमाह—इतश्चेति । उक्तमर्थमुपपादयति—यद्धीति । नन्वात्मनोऽपि लयोऽस्ति कारणसंसर्गलक्षण इत्याशङ्क्य न तस्य कार्यं करणं च विद्यत इति श्रुत्यन्तरान्न कारणे लय इत्याह—न तस्येति । स्वतो लयाभावेऽपि कार्यद्वारा लयमाशङ्क्याऽऽह—तथेति । फलितं दर्शयति—अतोऽपीति । विलक्षणत्वे हेतुमाह—नित्येति । तच्च नास्तीति वक्तुं न शक्यत इत्याह—सर्वभूतेति । न ह्यात्मनः प्रतिषेधः सम्भवतीति भावः । ब्रह्म निरतिशयमहदित्यर्थः । उक्तेऽर्थे श्रुतिं प्रमाणयति—उक्तं हीति । तच्च न पृथिव्यादिवत्परिणामिनित्यमित्याह—ध्रुवमिति । एवं ब्रह्मात्मनोऽतिसूक्ष्मत्वेन दुर्विज्ञेयत्वात्तज्ज्ञानस्यापि दुःसम्पाद्यतामुक्त्वा ब्रह्मात्मज्ञानं सफलमुपसंहरति—तमित्यादिना ॥ १५ ॥

ननु विज्ञानस्य सफलस्योक्तत्वादुत्तरग्रन्थः किमर्थ इत्याह—प्रस्तुतेति । प्रकृतब्रह्मात्मविज्ञानसाधनस्तुत्यर्थमाख्यायिकामाह—श्रुतिरित्यर्थः । चिरन्तनत्वे हेतुमाह—वैदिकत्वादिति । षष्ठीसमासभ्रमं व्यावर्तयति—ब्रह्मैवेति । वाक्यार्थमाह—आत्मेति ॥ १६ ॥

प्रयत इत्युभयत्रान्वेति । अनन्तफलाय क्रमेणेति शेषः ॥ १७ ॥

इति प्रथमाध्याये तृतीया वल्ली समाप्ता

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे प्रथमाध्यायः समाप्तः

## अथ द्वितीयोऽध्यायः

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते दृश्यते त्वग्र्यया बुद्ध्येत्युक्तम् । कः पुनः प्रतिबन्धोऽग्र्याया
५ बुद्धेर्येन तदभावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ल्यारभ्यते । विज्ञाते हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धुं शक्यते नान्यथेति—पराञ्चि परागञ्चन्ति गच्छन्तीति खानि तदुपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते । तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्तन्ते । यस्मादेवंस्वभावकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः । कोऽसौ । स्वयम्भूः परमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति । तस्मात्पराङ्पराग्रूपाननात्मभूताञ्शब्दादीन्पश्यत्युपलभत उपलब्धा नान्तरात्मन्नान्तरात्मानमित्यर्थः । एवंस्वभावेऽपि
१० सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतः प्रवर्तनमिव धीरो धीमान्विवेकी प्रत्यगात्मानं प्रत्यक्चासावात्मा चेति प्रत्यगात्मा । प्रतीच्येवाऽऽत्मशब्दो रूढो लोके नान्यस्मिन् । व्युत्पत्तिपक्षेऽपि तत्रैवाऽऽत्मशब्दो वर्तते ।

### आनन्दगिरिटीका

अनादिरविद्याप्रतिबन्धः प्रागुक्तोऽधुनाऽऽगन्तुकप्रतिबन्धदर्शनायोत्तरवल्ल्यारम्भ इति सम्बन्धमाह—एष सर्वेष्वित्यादिना । यदीन्द्रियाण्यन्तर्मुखानि स्युस्तदा तान्यात्मनिष्ठतयाऽमृतत्वमीयुरत इन्द्रियाणि बहिर्मुखानि
१५ सृष्टानीति यत्तत्तेषां हननमेव कृतमित्यर्थः । 'आप्लृ' व्याप्ताविति धात्वर्थानुसारेण व्यापक आत्मशब्दार्थः । यद्यस्मादा-

### गोपालयतीन्द्रटीका

अनाद्यविद्याप्रतिबन्धः प्रागुक्तोऽधुनाऽऽगन्तुकप्रतिबन्धप्रकाशनायोत्तरवल्ल्यारम्भ इति सम्बन्धमाह—एष इति । इत्युक्तमनेन वाक्येनानाद्यविद्याप्रतिबन्धस्वरूपमिति शेषः । कः पुनरिति । पुनः कीदृशोऽनाद्यविद्याया अन्यः प्रतिबन्धः, यस्य प्रतिबन्धस्य कादाचित्कस्याभावादात्माऽग्र्यया बुद्ध्या दृश्यते स प्रतिबन्धोऽग्र्याया बुद्धेः कः कीदृशः
२० किंस्वरूपः किंकार्यक इत्यर्थः । इत्येवमाकाङ्क्षायां तद्दर्शयति—तद्दर्शनेति । कादाचित्कप्रतिबन्धस्य दर्शनं ज्ञानं तस्य कारणं लिङ्गं निमित्तं तस्य प्रदर्शनायेत्यर्थः । कादाचित्कप्रतिबन्धश्चाध्यास इति भावः । ननु प्रतिबन्धकतन्निमित्तनिरूपणमनर्थकं निवर्तकोपदेशात्तन्निवृत्तेरित्याशङ्क्याऽऽह—विज्ञात इति । हि यस्मादध्यासनिमित्ते सम्यग्ज्ञाते निमित्तस्यं निवृत्तये यत्न आस्थातुं शक्यत इत्यर्थः । नान्यथेत्यनन्तरं तस्मादध्यासनिमित्तनिरूपणमुचितमिति शेषः । अक्षराणि व्याचष्टे—पराञ्चीत्यादिना । खशब्दोपात्तश्रोत्रभेदशङ्कां वारयति—तदिति । खोपलक्षितानीत्यर्थः ।
२५ खोपलक्षितानीत्यपि पाठः । तेषां पराक्त्वं विवृणोति—तानीति । पराञ्च्येव पराग्विषयप्रकाशनसमर्थान्येवेत्यर्थः । फलमाह—शब्दादीति । एवंस्वभावकानि पराग्विषयाभिमुखत्वस्वभावानि तानीन्द्रियाणि । हननं कृतवानिति कथम् । तेषां हननं नाशो नष्टानां च न विषयोपनयनद्वाराऽनर्थहेतुतेति चेद्यदैवेन्द्रियाण्यन्तर्मुखानि स्युस्तदा तान्यात्मनिष्ठतयाऽमृतत्वसाधनानीत्यत इन्द्रियाणि बहिर्मुखानि सृष्टानीति यत्तत्तेषां हननमेव कृतमिति भावः । कर्तृपदमाकाङ्क्षापूर्वकं व्याचष्टे—कोऽसाविति । हिरण्यगर्भशङ्कां प्रकरणेन वारयति—परमेश्वर इति । स्वयं भवति
३० प्रभवतीति योगवृत्तिमर्थतस्तस्मिन्दर्शयति—स्वयमेवेति । एवकारव्यावर्त्यं दर्शयति—नेति । तस्मादिति । यस्मात्खानि पराञ्चि व्यतृणत्तस्मादित्यर्थः । उपलब्धोपलभत इन्द्रियैरिति शेषः । विभक्तिलोपश्छान्दस इत्याह—नेत्यादिना । ननु इन्द्रियाणां प्रत्यक्प्रावण्याभावादात्मदर्शनमेव मृग्यमधिकार्यभावादित्याशङ्क्याऽऽह—एवमिति । अनात्मभूतशब्दादिविषयोपलब्धृस्वभावत्वेऽपीत्यर्थः । कश्चिदित्यधिकारिदौर्लभ्यं द्योतयति । यथा कश्चित्कार्तवीर्यादिर्नद्या नर्मदादिरूपायाः प्रतिस्रोतः प्रवर्तनं करोति एवमनेकजन्मसंसिद्धेन्द्रियप्रवृत्तिनदीप्रतिस्रोतःप्रवर्तनं कृत्वा गुरु-
३५ मुपगतो विवेकी तत्त्वंपदार्थविवेकवान्प्रत्यगात्मानं स्वं स्वभावं पश्यतीति सम्बन्धः । प्रत्यगात्मपदं व्याचष्टे—प्रत्यक्चेति । नन्वात्मशब्दवाच्यः प्रत्यग्देहादिरपि भवतीत्याशङ्क्याऽऽह—प्रतीच्येवेति । अन्यस्मिन्देहादावात्मशब्दप्रयोगस्तु तादात्म्याभिमानादिति भावः । यौगिकी वृत्तिस्तत्रैवेत्याह—व्युत्पत्तीति । तत्रैव प्रत्यगात्मन्येव । 'आप्लृ'

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

"यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते" ॥

इत्यात्मशब्दव्युत्पत्तिस्मरणात् । तं प्रत्यगात्मानं स्वं स्वभावमैक्षदपश्यत्पश्यतीत्यर्थः । छन्दसि कालानियमात् । कथं पश्यतीत्युच्यते—आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुः श्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स ५ आवृत्तचक्षुः । स एवं संस्कृतः प्रत्यगात्मानं पश्यति । न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणं चैकस्य सम्भवति । किमर्थं पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते—अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः ॥ १ ॥

यत्तावत्स्वाभाविकं परागेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वात्या च पराक्ष्वेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो बहिर्गतानेव १० कामान्काम्यान्विषयाननुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाशं पाश्यते बध्यते येन तं पाशं देहेन्द्रियादिसंयोगवियोगलक्षणम् । अनवरतजन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः । यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपा-

### आनन्दगिरिटीका

दत्ते संहरति स्वात्मन्येव सर्वमिति जगदुपादानं लभ्यते विषयानत्तीत्यात्मेति व्युत्पत्त्या स्वचैतन्याभासेनोपलब्धृत्व- १५ मात्मशब्दार्थः । येन कारणेनास्याऽऽत्मनः सन्ततो निरन्तरा भावः कल्पितस्याधिष्ठानसत्तामन्तरेण सत्ताभावाद्यथा रज्ज्वामध्यस्ते सर्पे रज्ज्वाः सातत्यं तथा कल्पितं सर्वं येन स्वस्वरूपवत्स आत्मेत्यर्थः ॥ १-२ ॥

### गोपालयतीन्द्रटीका

व्याप्ताविति धात्वर्थानुगमादात्मा व्यापक इत्याह—यच्चाऽऽप्नोतीति । यच्छब्दाः सर्वे यस्मादर्थे द्रष्टव्याः । आदत्ते संहरति स्वात्मन्येव सर्वमिति लयाधिष्ठानमुच्यते । कार्यस्य च कारणे लय इत्यात्मनोऽनया व्युत्पत्त्योपादानकारणत्वं २० लभ्यते । इह लोके । विषयानत्तीत्यनेन योगेनोपलब्धृत्वमात्मनो लभ्यते । अस्य जगतः सन्ततो निरन्तरो भावः सत्ता येनाधिष्ठानसत्तातिरिक्तसत्ताशून्यत्वादारोपितस्य रजतस्येव तस्मादात्मेत्यधिष्ठातृत्वं लभ्यते । नन्वपश्यदिति भूतकालनिर्देशान्नाधुनातनानां दर्शनमित्याशङ्क्याऽऽह—पश्यतीति । कथं भूतलकारो वर्तमानार्थक इति तत्राऽऽह—छन्दसीति । दर्शनप्रकारमाकाङ्क्षापूर्वकं दर्शयति—कथमित्यादिना । चक्षुर्ग्रहणमुपलक्षणमित्याह—श्रोत्रादिकमिति । व्यावृत्तत्वं कस्मादित्याकाङ्क्षायामपेक्षितं पूरयति । अशेषेति । सोऽधिकारी, एवं संस्कृतो विषयेभ्य इन्द्रियनियमन- २५ संस्कारसंस्कृतान्तःकरण इत्यर्थः। ननु बाह्येषु विषयेषु शोभनाध्यासरूपालोचनपरस्यापि तत्त्वमसीति वाक्यादात्मेक्षणं सेत्स्यतीत्याशङ्क्याऽऽह—न हीति । ननु विषयालोचनपरस्यापरोक्षभ्रमनिवर्तकज्ञानानुदयेऽपि तन्नियमनसंस्कृतस्योत्पन्नमपि ज्ञानं व्यर्थमित्याशङ्कते—किमर्थं पुनरिति । परिहरति—उच्यत इति । अमरणधर्मत्वं मरणादिसंसाराभावोपलक्षितस्वरूपत्वमत एव नित्यस्वभावत्वमात्मन इच्छन्नित्यन्वयः ॥ १ ॥

पराचः कामानिति व्याख्यातुं भूमिकामारचयति—यदिति । स्वाभाविकं शास्त्रानपेक्षम् । परागेवेत्यस्य ३० व्याख्याऽनात्मदर्शनमिति। प्रतिबन्धकस्य दुरदृष्टादेः कारणमनात्मदर्शनमित्यत्र हेतुमाह—प्रतिकूलत्वादिति। अविद्येति शेषः । तृष्णास्वरूपं दर्शयति—या चेति । पराक्ष्वेवेत्यस्य व्याख्या दृष्टेत्यादि । पराक्त्वे हेतुमाह—अविद्येति । भुज्यन्त इतिं भोगास्तेषु । ताभ्यामनात्मदर्शनभोगेच्छारूपाभ्याम् । प्रतिबुद्धमात्मनः परात्मत्वेन दर्शनं येषां ते तथा । पराच इत्यस्य व्याख्या बहिरित्यादि । अल्पज्ञानामनुगमनं नामानात्मदर्शनतृष्णाप्रेरिताः सन्तः कामानां लब्धारो भवन्तीत्येतत् । तेन कारणेन विषयानुगमेन कारणेन । विततस्य मृत्योः पाशं यन्तीत्यन्वयः । मृत्युशब्दार्थ- ३५ माह—अविद्येति । विततशब्दार्थमाह—विस्तीर्णस्येत्यादि । अवयवव्युत्पत्तिपूर्वकं पाशशब्दार्थमाह—पाश्यन्त इति । अर्थान्तरमाह—अनवरतेति । अनवरतेत्यादि तु पूर्वविशेषणं वा । अनर्थस्य व्रातो यस्मिन्निति विशेषणपक्षे विग्रहो भवति । यन्तीत्यस्यार्थमाह—प्रतीति । अथवा पदार्थमुक्त्वा वाक्यार्थमाह—अनवरतेति । एवमनात्मप्रवणस्य संसार

**येन रूपं रसं गन्धं शब्दान्स्पर्शाँश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वै तत् ॥ ३ ॥**
**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥**

वस्थानलक्षणममृतत्वं ध्रुवं विदित्वा। देवाद्यमृतत्वं ह्यध्रुवमिदं तु प्रत्यगात्मस्वरूपावस्थानलक्षणं न कर्मणा वर्धते नो कनीयानिति ध्रुवम्। तदेवंभूतं कूटस्थमविचाल्यममृतत्वं विदित्वाऽध्रुवेषु सर्वपदार्थेष्वनित्येषु निर्धार्य ब्राह्मणा इह
५ संसारेऽनर्थप्राये न प्रार्थयन्ते किञ्चिदपि प्रत्यगात्मदर्शनप्रतिकूलत्वात्। पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यर्थः ॥२॥

यद्विज्ञानान्न किञ्चिदन्यत्प्रार्थयन्ते ब्राह्मणाः कथं तदधिगम इति। उच्यते—येन विज्ञानस्वभावेनाऽऽत्मना रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्मैथुननिमित्तान्सुखप्रत्ययान्विजानाति विस्पष्टं जानाति सर्वो लोकः। ननु नैवं प्रसिद्धिर्लोकस्याऽऽत्मना देहादिविलक्षणेनाहं विजानामीति। देहादिसङ्घातोऽहं विजानामीति तु सर्वो लोकोऽव-गच्छति। न त्वेवम्। देहादिसङ्घातस्यापि शब्दादिस्वरूपत्वाविशेषाद्विज्ञेयत्वाविशेषाच्च न युक्तं विज्ञातृत्वम्। यदि
१० हि देहादिसङ्घातो रूपाद्यात्मकः सन्रूपादीन्विजानीयाद्बाह्या अपि रूपादयोऽन्योन्यं स्वं स्वं रूपं च विजानीयुः। न चैतदस्ति। तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनाऽऽत्मना विजानाति लोकः। यथा येन लोहो दहति सोऽग्निरिति तद्वत्। आत्मनोऽविज्ञेयं किमत्रास्मिँल्लोके परिशिष्यते न किञ्चित्परिशिष्यते सर्वमेव त्वात्मना विज्ञेयम्। यस्याऽऽत्मनोऽविज्ञेयं न किञ्चित्परिशिष्यते स आत्मा सर्वज्ञः। एतद्वै तत्। किं तद्यन्नचिकेतसा पृष्टं देवादिभिरपि विचिकित्सितं धर्मादिभ्योऽन्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वा एतदधिगतमित्यर्थः ॥ ३ ॥
१५ अतिसूक्ष्मत्वाद्दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह—स्वप्नान्तं स्वप्नमध्यं स्वप्नविज्ञेयमित्यर्थः। तथा

### आनन्दगिरिटीका

कथं तदधिगम इति किं वैदिकत्वाद्धर्मवत्परोक्षत्वेन किंवा घटादिवत्सिद्धत्वादपरोक्षत्वेनापीत्याकाङ्क्षाया-मात्मत्वाद्ब्रह्मणोऽपरोक्षत्वेनैवावगमः सम्यगवगम इत्युच्यते—येनेत्यादिना। मूढानां व्यतिरिक्तेनाऽऽत्मना देहादेर्वेद्यत्वं यद्यपि न प्रसिद्धं तथाऽपि विचारकाणां व्यतिरिक्तेनैव वेद्यत्वं प्रसिद्धं ततो यच्छब्देन प्रसिद्धवत्परामर्शो न विरुध्यत
२० इति परिहरति—न त्वेवं देहादीत्यादिना। दैहिकाः शब्दादयो न स्वात्मानमन्यं च विजानीयुः शब्दादित्वाद्-दृश्यत्वाच्च बाह्यवत्। विपक्षे बाधकमाह—यदि हीति ॥ ३-४-५ ॥

### गोपालयतीन्द्रटीका

उक्तप्रकारेण यत इत्यर्थः। प्रत्यक्स्वरूपावस्थानरूपं ध्रुवत्वमुपपादयति—देवादीति। प्रत्यक्स्वरूपममृतत्वं ध्रुव-मित्यत्र श्रुतिमुदाहरति—नेति। अविचाल्यमकार्यमध्रुवेषु सर्वपदार्थेषु निर्धार्येत्यन्वयः। ब्राह्मणा ब्रह्मविदः, किञ्चिदपि
२५ न कामयन्त इत्यत्र हेतुमाह—प्रत्यगात्मेति। तात्पर्यार्थमाह—पुत्रेति ॥ २ ॥

किं धर्मवत्परोक्षत्वेनोत घटवत्प्रत्यक्षत्वेन वाऽऽत्मनोऽधिगम इत्याकाङ्क्षापूर्वकमुत्तरं व्याचष्टे—यद्विज्ञाना-दित्यादिना। देहादिविलक्षणविज्ञानस्वभावत्वमात्मनोऽप्रसिद्धमित्याक्षिपति—नन्विति। विजानामीति। शब्दा-दीनिति शेषः। सार्वलौकिकप्रतीतिं दर्शयति—देहादीति। तथा च येनेति प्रसिद्धार्थकयच्छब्दप्रयोगोऽनुपपन्न इति भावः। यद्यप्यात्मनो लोकतोऽविलक्षणत्वप्रसिद्धिस्तथाऽपि विचारकाणां व्यतिरिक्तत्वेनैवाऽऽत्मस्वरूपप्रसिद्धेर्यच्छब्द-
३० विरोधो नास्तीति परिहरति—नेत्यादिना। देहादेर्विज्ञातृत्वाभावे हेतुद्वयमाह—शब्दादीत्यादिना। गुणगुणिनोर-भेदाच्छब्दादिस्वरूपत्वं सङ्घातस्य द्रष्टव्यम्। कार्यकारणसम्बन्धिनः शब्दादयः स्वात्मानमन्यं च न जानीयुः शब्दादित्वाद्दृश्यत्वाद्वाह्यशब्दादिवत्। विपक्षे दोषमाह—यदि हीति। एतच्छब्दादेः स्वरूपविज्ञानं नास्तीत्युक्ते फलितमाह—तस्मादिति। लोकः सङ्घातात्मा। व्यतिरिक्तस्वभावेन सङ्घातस्य विज्ञातृत्वे दृष्टान्तमाह—यथेति। येनोष्णप्रकाशात्मना तद्वद्व्यतिरिक्तात्मना सङ्घातो जानातीत्यर्थः। शब्दादिकतिपयविज्ञेयोपादानादसर्वज्ञत्वमा-
३५ शङ्क्याऽऽह—आत्मन इति। अविज्ञेयमिति च्छेदः। सर्वस्य विज्ञेयत्वे फलितमाह—यस्येति। तत्त्वविज्ञान-मुपसंहरति—एतदिति। तदैक्यविषयमिति, प्रकृतमनुद्रवति—यदित्यादिना। यदित्यादिवाक्याभ्यां त्वंपदलक्ष्य-निर्देशोऽन्यदिति तत्पदलक्ष्यनिर्देशः। नास्तीत्यन्तेन वाक्यार्थनिर्देशः। वैशब्दः सर्वोपनिषदैकरूप्यप्रदर्शनार्थः ॥ ३ ॥

विज्ञेयपरिसमाप्तेरुत्तरग्रन्थवैयर्थ्यशङ्कायामाह—अतिसूक्ष्मत्वादिति। आह—प्रकारान्तरेणेति शेषः। त्रिपुटी-

[1]य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥
[2]यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै तत् ॥ ६ ॥

जागरितान्तं जागरितमध्यं जागरितविज्ञेयं च । उभौ स्वप्नजागरितान्तौ येनाऽऽत्मनाऽनुपश्यति लोक इति सर्वं पूर्ववत् । तं महान्तं विभुमात्मानं मत्वाऽवगम्याऽऽत्मभावेन साक्षाद्ब्रह्मस्मि परमात्मेति धीरो न शोचति ॥ ४ ॥

किञ्च—यः कश्चिदिमं मध्वदं कर्मफलभुजं जीवं प्राणादिकलापस्य धारयितारमात्मानं वेद विजानात्यन्तिका- दन्तिके समीप ईशानमीशितारं भूतभव्यस्य कालत्रयस्य, ततस्तद्विज्ञानादूर्ध्वमात्मानं न विजुगुप्सते न गोपायितु- मिच्छत्यभयप्राप्तत्वात् । यावद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते तावद्गोपायितुमिच्छत्यात्मानम् । यदा तु नित्यम- द्वैतमात्मानं विजानाति तदा किं कः कुतो वा गोपायितुमिच्छेदेतद्वै तदिति पूर्ववत् ॥ ५ ॥

यः प्रत्यगात्मेश्वरभावेन निर्दिष्टः स सर्वात्मेत्येतद्दर्शयति—यः कश्चिन्मुमुक्षुः पूर्वं प्रथमं तपसो ज्ञानादि- लक्षणाद्ब्रह्मण इत्येतज्जातमुत्पन्नं हिरण्यगर्भम् । किमपेक्ष्य पूर्वमित्याह अद्भ्यः पूर्वमप्सहितेभ्यः पञ्चभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्रायः । अजायत, उत्पन्नो यस्तं प्रथमजं देवादिशरीराण्युत्पाद्य सर्वप्राणिगुहां हृदयाकाशं प्रविश्य तिष्ठन्तं शब्दादीनुपलभमानं भूतेभिर्भूतैः कार्यकरणलक्षणैः सह तिष्ठन्तं यो व्यपश्यत यः पश्यतीत्येतत् । य एवं पश्यति स एतदेव पश्यति यत्तत्प्रकृतं ब्रह्म ॥ ६ ॥

### आनन्दगिरिटीका

यः कश्चित्पूर्वं तपसो जातं पश्यति स प्रकृतं ब्रह्मैव पश्यतीति सम्बन्धः । अद्भ्यः पूर्वमित्यादिना हिरण्य- गर्भस्य विशेषणान्तःकरणांशेन जीवावच्छेदकत्वाज्जीवतादात्म्यविवक्षया विशेषणं शब्दादीनुपलभमानमिति । यदिति । यस्माल्लोके सुवर्णाज्जातं कुण्डलं सुवर्णमेव भवति तद्वद्ब्रह्मणो जातो हिरण्यगर्भोऽपि ब्रह्मात्मक एवेत्यर्थः ॥ ६ ॥

### गोपालयतीन्द्रटीका

संग्रहार्थमाह—स्वप्नविज्ञेयमिति । एवमुत्तरत्र । पूर्ववदिति । यच्छब्दाक्षेपसमाधानादि सर्वं पूर्ववदित्युच्यते । महान्तं व्यापकम्, विभुं विविधं भवत्यस्मादिति विभुं सर्वकल्पनाधिष्ठानमित्यर्थः । इति साक्षान्मत्वेति सम्बन्धः । साक्षात्कार एव धैर्यं तद्वानित्यर्थः ॥ ४ ॥

कर्मफलभोक्तृत्वप्राणादिकलापधारयितृत्वोपलक्षितमात्मानं त्वंपदलक्ष्यं कालत्रयपरिच्छेद्यवस्त्वीशितृत्वोप- लक्षिततत्पदलक्ष्यं यः कश्चिदधिकारी वेद साक्षात्करोति स तस्मादनन्तरमात्मानं नरकपातादिभयान्न रक्षितुमिच्छ- तीति प्रकारान्तमाह—किञ्चेति । मधु कर्मफलमत्तीति मध्वदस्तमिति व्युत्पत्त्याऽऽह—मध्वदमिति । सामीप्यं चात्रा- भेदः । अभेदेन वेदेत्यर्थः । अरक्षणे हेतुमाह—अभयप्राप्तत्वादिति । उक्तमर्थं व्यतिरेकेणोपपादयति—यावद्धीति । आत्मन इति कर्मणि षष्ठी । अन्वयमाह—यदेति । नित्यस्यापि द्वितीयसम्बन्धाद्भयशङ्का तन्नेत्याह—अद्वैतमिति । पूर्ववदिति । यन्नचिकेतसा पृष्टं देवादिभिर्विचिकित्सितं धर्मादिभ्योऽन्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वा एतदधिगतमित्यर्थः ॥ ५ ॥

उत्तरसन्दर्भस्य तात्पर्यमाह—य इति । यः पूर्वं तपसो जातं हिरण्यगर्भं पश्यति स यत्तत्प्रकृतं ब्रह्म तदेव पश्यतीति सम्बन्धः । आकाङ्क्षापूर्वकं हिरण्यगर्भं विशिनष्टि—किमित्यादिना । 'प्रथमजं पश्यतीत्यन्वयः । तस्यैव विशेषणान्तरमाह—देवादीति । शब्दादीनुपलभमानमिति । ननु हिरण्यगर्भस्य प्रतिदेहं भोगाभावात्कथं शब्दादीनुप- लभमानमितीति चेद्धिरण्यगर्भस्यान्तःकरणांशेन जीवोपाधित्वाज्जीवतादात्म्यविवक्षया विशेषणं शब्दादीनुपलभ- मानमितीति भावः । ननु हिरण्यगर्भदर्शनं प्रकृतब्रह्मदर्शनं कथमिति चेत्सुवर्णाज्जातं कुण्डलं सुवर्णं यथा तद्वद्ब्रह्मणो जातो हिरण्यगर्भोऽपि ब्रह्मात्मक एवेति बोध्यम् ॥ ६ ॥

---

१. य इमं मध्वदं वेदेति । अन्तिकात् अन्तिके समीपे हृदये स्थितं मध्वदं जीवं ईशानं ईश्वराभिन्नं वेदेत्यर्थः, अङ्गुष्ठमात्रः ईशानो भूतभव्यस्येति वक्ष्यमाणेनैकार्थ्यात् । जीवसमीपे वर्तमानं इत्यर्थकरणम- युक्तं द्वैतिनामपि जीवान्तस्स्थः अन्तर्यामीत्युक्तेः समीपस्थत्वोक्त्ययोगात् ।
२. यः पूर्वं तपसो जातं—इति हिरण्यगर्भपरं—स च ब्रह्मैवेति एतद्वै तत् इति सङ्गच्छते ।



The side line numbers (५, १०, १५, २०, २५, ३०, ३५) are printed in the margin.

[1]या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत। एतद्वै तत् ॥ ७ ॥
अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः। एतद्वै तत् ॥ ८ ॥
यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति। तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन। एतद्वै तत् ॥ ९ ॥
५ [2]यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

किञ्च—या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मणः सम्भवति शब्दादी-नामदनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठन्तीमदितिम्। तामेव विशिनष्टि—या भूतेभिर्भूतैः समन्विता व्यजायत, उत्पन्नेत्येतत् ॥ ७ ॥

किञ्च—योऽधियज्ञ उत्तराधरारण्योर्निहितः स्थितो जातवेदा अग्निः पुनः सर्वहविषां भोक्ताऽध्यात्मं च
१० योगिभिर्गर्भ इव गर्भिणीभिरन्तर्वत्नीभिरगर्हितान्नपानभोजनादिना यथा गर्भः सुभृतः सुष्ठु सम्यग्भृतो लोके इत्थमेव-र्त्विग्भिर्योगिभिश्च सुभृत इत्येतत्। किञ्च दिवे दिवेऽहन्यहनीड्यः स्तुत्यो वन्द्यश्च कर्मिभिर्योगिभिश्चाध्वरे हृदये च जागृवद्भिर्जागरणशीलवद्भिरप्रमत्तैरित्येतद्धविष्मद्भिराज्यादिमद्भिर्ध्यानभावनावद्भिश्च मनुष्येभिर्मनुष्यैरग्निरेतद्वै तत्तदेव प्रकृतं ब्रह्म ॥ ८ ॥

किञ्च—यतश्च यस्मात्प्राणादुदेत्युत्तिष्ठति सूर्योऽस्तं निम्लोचनं यत्र यस्मिन्नेव च प्राणेऽहन्यहनि गच्छति तं प्राण-
१५ मात्मानं देवा अग्न्यादयोऽधिदैवं वागादयश्चाध्यात्मं सर्वे विश्वेऽरा इव रथनाभावर्पिताः सम्प्रवेशिताः स्थितिकाले। सोऽपि ब्रह्मैव। तदेतत्सर्वात्मकं ब्रह्म। तदु नात्येति नातीत्य तदात्मकतां तदन्यत्वं गच्छति कश्चन कश्चिदपि। एतद्वै तत् ॥ ९ ॥
यद्ब्रह्मादिस्थावरान्तेषु वर्तमानं तत्तदुपाधित्वादब्रह्मवदवभासमानं संसार्यन्यत्परस्माद्ब्रह्मण इति मा भूत्कस्य-

आनन्दगिरिटीका

हिरण्यगर्भस्यैव विशेषणान्तरमाह—किञ्चेति ॥ ७-८-९ ॥
२० सर्वात्मकं ब्रह्मोक्तं तदसत्, उपाध्यवच्छिन्नचैतन्यस्य जीवस्य संसारित्वाद्विरुद्धधर्माक्रान्तयोरैक्यायोगादित्याऽऽ-शङ्क्य विरुद्धधर्मत्वस्योपाधिनिबन्धनत्वात्स्वभावैक्ये न किञ्चिदनुपपन्नमित्याह—यद्ब्रह्मादीत्यादिना। अमुष्मिञ्जग-

गोपालयतीन्द्रटीका

हिरण्यगर्भस्यैव विशेषणान्तरमाह—किञ्चेति। अदनाद्भक्षणात्। पूर्ववदन्तःकरणद्वारा जीवतादात्म्या-पन्नत्वाद्गुहायां स्थितिरित्यर्थः ॥ ७ ॥
२५ कटुकषायवर्जितं पानं श्लेष्मवातकरभिन्नस्य भोजनमगर्हितम्। दार्ष्टान्तिकमाह—इत्थमिति। यत्प्रकृतं ब्रह्म तदेतदग्निर्विराड्रूपमित्यर्थः ॥ ८ ॥
प्राणाद्धिरण्यगर्भात्। सर्वात्मकं ब्रह्मोपसंहरति—तदेतदिति। उशब्द एवार्थोऽत्येतीत्यनेन सम्बध्यते। कश्चिदप्यज्ञोऽपि जनः, सुषुप्तौ प्राधान्येन तदात्मकतां जाग्रत्स्वप्नयोस्तत्सम्बन्धितां च गच्छतीत्यर्थः। अथवा फलार्थी ज्ञानेन सम्भृतकर्मानुष्ठाता तत्सम्बन्धिहिरण्यगर्भात्मकतां गच्छति निरतिशयपुरुषार्थी केवलात्मज्ञानेन
३० तदात्मकतां गच्छतीत्यर्थः। एतद्वै तदिति पूर्ववद्व्याख्येयम् ॥ ९ ॥
ननु सर्वात्मकं ब्रह्मोक्तं तदसत्। तत्तदुपाध्यवच्छिन्नचैतन्यस्य संसारित्वादब्रह्मणश्चासंसारित्वाद्विरुद्धधर्मा-क्रान्तयोरैक्यायोगादित्याशङ्क्ते—यद्ब्रह्मादिष्विति। तत्तदुपाधिकत्वात्स्थावरान्तोपाधिमत्त्वादब्रह्मवदवभासमानं तच्चै-

---

१. या प्राणेन—अत्रापि हिरण्यगर्भपरत्वमेव, रामानुजीयास्तु—अदितिः—अन्नादीनामदनात् जीवः देवतामयी—इन्द्रियाधीनभोगा—इति जीवपरमित्युक्त्वा एतद्वै तत्—ब्रह्मात्मकं ब्रह्मशरीरत्वादित्युक्तम्। अत्र हिरण्य-
३५ गर्भपक्षे तस्य सर्वदेवात्मकत्वात् देवतामयीति सुष्ठु उपपद्यते। अस्मन्मते जीवो ब्रह्मैवेति एतत्—जीव-स्वरूपं तत् ब्रह्मेति सङ्गतम्। तन्मते शरीरवाचकस्य शरीरिपरत्वाभावात् लक्षणा दुर्वारा।
२. अत्र रामानुजीयैः—ईश्वरभेदो नास्ति, यदेवेह लोके अनुसन्धीयते तदेव परलोकस्थैरप्यनुसन्धीयते। देशकालभेदेनात्मभेदो नास्ति इत्यर्थोपपत्तौ जगन्मिथ्यात्वपरतया 'मृत्योस्स मृत्युमाप्नोति' इत्यादेः

चिदाशङ्क्येतीदमाह—यदेवेह कार्यकरणोपाधिसमन्वितं संसारधर्मवदवभासमानमविवेकिनां तदेव स्वात्मस्थममुत्र नित्यविज्ञानघनस्वभावं सर्वसंसारधर्मवर्जितं ब्रह्म। यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदन्विह तदेवेह नामरूपकार्यकरणोपाधिमनु विभाव्यमानं नान्यत्। तत्रैवं सत्युपाधिस्वभावभेददृष्टिलक्षणयाऽविद्यया मोहितः सन्य इह ब्रह्मण्यनानाभूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते स मृत्योर्मरणान्मरणं मृत्युं पुनः पुनर्जन्ममरणभावमाप्नोति प्रतिपद्यते। तस्मात्तथा न पश्येत्। विज्ञानैकरसं नैरन्तर्येणाऽऽकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति ५
पश्येदिति वाक्यार्थः ॥ १० ॥

### आनन्दगिरिटीका

त्कारणत्वोपाधौ। उपाधिस्वभावश्च भेददृष्टिश्च ताभ्यां कारणतया लक्ष्यत इत्युपाधिस्वभावभेददृष्टिलक्षणा। न ह्यन्तःकरणाद्युपाधेर्भेददृष्टेश्चानिर्वाच्याविद्यामन्तरेण सम्भवः कार्यकारणभावस्य संवित्सम्बन्धस्य च दुर्निरूपत्वात्। नानेवेत्युपमार्थ इवशब्दः। यथा स्वप्ने नानात्वाभावेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन व्यवहरति तथा १०
जागरितेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन यो व्यवहरति तस्य निन्दितत्वादेकरसं ब्रह्मैवास्मीति प्रतिपत्तव्यमित्यर्थः ॥ १० ॥

### गोपालयतीन्द्रटीका

तन्यं संसारी स च परस्माद्ब्रह्मणोऽन्य इति सम्बन्धः। उत्तरमाह—मा भूदिति। इत्याशङ्क्य कस्यचिन्मा भूदितीदं विरुद्धधर्मवत्त्वस्योपाधिनिबन्धनत्वान्न स्वभावैक्ये किञ्चिदनुपपन्नमित्युत्तरमाहेत्यर्थः। इह जीवोपाधौ। अवभास- १५
मानमिति विशेषणद्वयान्वयि। ननु प्रत्यक्चैतन्यं यच्छब्दवाच्यं विवेकिनां नैवं भासते तत्राऽऽह—अविवेकिनामिति। तदेवामुत्र कारणोपाधावित्यन्वयः। ननु विशिष्टजीवचैतन्यस्य कथं तत्पदार्थरूपत्वं तत्राऽऽह—स्वात्मस्थमिति। लक्षितमित्यर्थः। ब्रह्म भवतीति शेषः। व्यतिहारमाह—यच्चेति। अमुष्मिन्कारणोपाधौ। अन्वित्यस्यार्थमाह—अनु विभाव्यमानमिति। अभेददार्ढ्यार्थे भेदनिन्दामवतारयति—तत्रेति। जीवेश्वरोपाध्योर्मध्ये। एवं सति तद्गत-
चैतन्यैकत्वे सति। उपाधिस्वभावश्च भेददृष्टिश्च ताभ्यां कारणतया लक्ष्यत इत्युपाधिस्वभावभेददृष्टिलक्षणा तया। २०
न ह्यन्तःकरणाद्युपाधेर्भेददृष्टेश्चानिर्वाच्याविद्यामन्तरेण सम्भवः कार्यकारणभावस्य संवित्सम्बन्धस्य च दुर्निरूपत्वादिति भावः। भिन्नदर्शनमनुकरोति—परस्मादिति। नानेवेत्युपमार्थ इवशब्दः। यथा स्वप्नेऽनानात्वस्वभावे प्रत्यगात्मनि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन व्यवहरति तथा जागरितेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन यो व्यवहरति तस्य निन्दितत्वादेकरसं ब्रह्मास्मीति प्रतिपत्तव्यमित्यर्थः। मरणग्रहणमुपलक्षणमिति व्याचष्टे—
पुनः पुनरिति ॥ १० ॥ २५

---

व्याख्यानमनुचितं सर्वप्रमाणविरोधादित्युक्तम्। यथा मिथ्यात्वे न किमपि प्रमाणं विरुध्यते तथोपपादितं भाष्ये तदनन्यत्वाधिकरणे, अद्वैतसिद्धौ च विशदीकृतं प्रत्यक्षाद्यविरोधनिरूपणे। त्वन्मते देशकालभेदेनेश्वरभेदस्याप्रसक्तत्वात् मन्त्रस्य वैयर्थ्यम्। देशकालभेदेन जीवभेदनिषेधकमन्त्रानपेक्षा च जीवनित्यत्वात्। आकाशादिस्रष्टृत्वनित्यत्वादिवचनैः परमात्मन एकत्वं देशकालभेदेन भेदराहित्यं च
स्पष्टमुक्तमेव। ३०

यत्तु माध्वैः य एवावताररूपः कृष्णादिशरीरो विष्णुः स एव वैकुण्ठवासी तयोरभेदः यदेवेहेति मन्त्रार्थ इति, तन्न। अवतारशरीरस्थो विष्णुरिति येन प्रमाणेन ज्ञायते तेन वैकुण्ठस्थविष्णुरेवायमिति ज्ञायत एव अपरविष्णोरप्रसक्तत्वात्। एवं सत्यस्य वचनस्य वैयर्थ्यमेव। अस्माकं तु जीवे ईश्वराभेदः ईश्वरस्य परोक्षत्वव्यावृत्त्यर्थः। ईशे जीवाभेदो जीवस्याब्रह्मत्वव्यावृत्त्यर्थ इत्युभयमावश्यकम्। अत्र
जीवेश्वराभेदे उक्ते उपाधीनां मिथ्यात्वसिद्ध्यर्थं नेह नानास्ति इति प्रपञ्चमिथ्यात्वकथनं समञ्जसम्। ३५

यत्तु य इह नानेव पश्यति इत्यस्य विष्णौ अवयवगुणादिभेदं यः पश्यति सः मृत्योर्मृत्युं गच्छतीत्यर्थ इति, तन्न। निष्कलं निष्क्रियमित्यनेनैव तत्रावयवादिभेदव्युदासात्तदप्रसक्तेः। अपि च गुणगुणिभेददर्शनमात्रस्य संसारहेतुत्वे मोक्षं प्रति ब्रह्मज्ञानानपेक्षत्वापत्तेः केवलमीश्वरे अवयवा न सन्ति तद्गुणास्तदभिन्ना इति ज्ञानादेव मोक्षापत्तेः।

मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥११॥
[1]अङ्गुष्ठमात्रः [2]पुरुषो मध्य आत्मनि तिष्ठति। ईशानं भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत् ॥१२॥

प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसैवं ब्रह्मैकरसमाप्तव्यमात्मैव नान्यदस्तीति। आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किञ्चनाणुमात्रमपि। यस्तु पुनरविद्यातिमिरदृष्टिं
५ न मुञ्चति नानेव पश्यति स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥ ११ ॥

पुनरपि तदेव प्रकृतं ब्रह्माऽऽह—अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणः। अङ्गुष्ठपरिमाणं हृदयपुण्डरीकं तच्छिद्रवर्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रोऽङ्गुष्ठमात्रवंशपर्वमध्यवर्त्यम्बरवत्। पुरुषः पूर्णमनेन सर्वमिति। मध्य आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशानं भूतभव्यस्य विदित्वा न तत इत्यादि पूर्ववत् ॥ १२ ॥

### आनन्दगिरिटीका

१० एकरसं चेद्ब्रह्म कथं ज्ञातृज्ञेयविभाग इत्याशङ्क्याज्ञं प्रति कल्पितभेदेनेत्याह—प्रागेकत्वविज्ञानादिति ॥११॥

अङ्गुष्ठपरिमाणं जीवमनूद्य ब्रह्मभावविधानाद्विधीयमानविरोधादङ्गुष्ठमात्रस्याविवक्षितत्वाद्ब्रह्मपरमेव वाक्यमित्याह—पुनरपि तदेवेति ॥ १२-१३-१४-१५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते काठकोपनिषद्भाष्यव्याख्याने द्वितीयाध्याये प्रथमवल्ली समाप्ता

१५
### गोपालयतीन्द्रटीका

एकरसं चेद्ब्रह्म कथं ज्ञातृज्ञेयविभाग इत्याशङ्क्याज्ञं प्रति कल्पितभेदेनेत्याह—प्रागेकत्वविज्ञानादिति। इति यस्मान्नान्यदस्ति तस्माद्ब्रह्मैवेत्यन्वयः। ज्ञानानन्तरं फलमाह—आप्ते चेति। नानादर्शननिन्दामुपसंहरति—यस्त्विति ॥ ११ ॥

अङ्गुष्ठपरिमाणं जीवमनूद्य ब्रह्मभावविधानाद्विधीयमानविरोधादङ्गुष्ठमात्रत्वस्य चाविवक्षितत्वाद्ब्रह्मपरमेव
२० वाक्यमित्याह—पुनरपीति। तस्य पुण्डरीकस्य च्छिद्रं तत्प्राधान्येनाऽऽधारोऽस्येति तच्छिद्रवदन्तःकरणमुपाधिर्यस्य स तथोक्तः। उपाधिप्रयुक्तमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्र दृष्टान्तमाह—अङ्गुष्ठमात्रेति। अङ्गुष्ठपरिमितवेणुवर्त्याकाशस्योपाधिवशादङ्गुष्ठपरिमाणत्वं यथा तद्वदात्मन इत्यर्थः। प्रत्यगात्मानमनूद्य तस्य सामानाधिकरण्यलब्धतत्पदलक्ष्यस्वरूपतामाह—य इति। ततस्तद्विज्ञानादूर्ध्वमात्मानं न गोपायितुमिच्छतीत्यभयस्य प्राप्तत्वादिति व्याख्यानं तत इत्यादेः पूर्ववदित्याह—न तत इति ॥ १२ ॥

---

२५ १. अत्र मन्त्रे श्रूयमाणः पुरुषः ईशानशब्दादेव परमेश्वर इति निर्णीतं 'शब्दादेव प्रमित' इत्यधिकरणे। अङ्गुष्ठमात्र ईश्वर इति यथाश्रुतमादाय "हृद्यपेक्षये"त्यादि सूत्रम् ( १.३ )। अत्राङ्गुष्ठमात्रो जीव एव तस्य ईशानाभेदः प्रतिपाद्यत इति भाष्यकाराः, 'न ततो विजुगुप्सते' इति चास्मिन् व्याख्याने सङ्गतम्। यतो जुगुप्सा स्वात्मापेक्षयाऽन्यं दुष्टं पश्यतो भवति। अहं ब्रह्मास्मीति ज्ञानवतस्तु द्वितीयाभावादेव जुगुप्सानवसर इत्यर्थः। यत्तु ईशानशब्दः केवलयौगिको विष्णुपर इति, तन्न।
३० ईश्वरः शर्व ईशान इत्यादिकोशात् तस्य शिवपरत्वात्। तत्र योगार्थस्यापि "जगतां पतये नम" इति श्रीभागवतवाक्यादुपपन्नत्वात्। विष्णुपरत्वे प्रमाणाभाव एव। अत एव सूत्रगत'शब्दात्' इत्यस्य शब्दश्रवणजन्यस्वरसप्रतीतिवशादित्यर्थकरणमयुक्तम्। सूत्रेषु तल्लिङ्गादित्याद्युक्तेः, तत्सहचरितशब्दपदे श्रुतिपरत्वस्य युक्तत्वात्।

२. तात्पर्यविषयविधेयानुरोधेन उद्देश्यवाचकपदे लक्षणा उक्त्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यादित्यधि-
३५ करणे निर्णीता ( पू० मी० १०.५.१२ )।

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥१३॥
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥१४॥
[1]यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥

इति काठकोपनिषदि द्वितीयाध्याये प्रथमवल्ली समाप्ता

किञ्च—अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकोऽधूमकमिति युक्तं ज्योतिष्परत्वात् । यस्त्वेवं लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स नित्यः कूटस्थोऽद्येदानीं प्राणिषु वर्तमानः स उ श्वोऽपि वर्तिष्यते नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थः । अनेन नायमस्तीति चैक इत्ययं पक्षो न्यायतोऽप्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभङ्गवादश्च ॥ १३ ॥

पुनरपि भेददर्शनापवादं ब्रह्मण आह—यथोदकं दुर्गे दुर्गमे देश उच्छ्रिते वृष्टं सिक्तं पर्वतेषु पर्ववत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति एवं धर्मानात्मनोऽभिन्नान्पृथक्पश्यन्पृथगेव प्रतिशरीरं पश्यंस्तानेव शरीरभेदानुवर्तिनोऽनुविधावति । शरीरभेदमेव पुनः पुनः प्रतिपद्यत इत्यर्थः ॥ १४ ॥

यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैकरसमद्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्याऽऽत्मस्वरूपं कथं सम्भवतीत्युच्यते—यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्नमासिक्तं प्रक्षिप्तमेकरसमेव नान्यथा तादृगेव भवत्यात्माऽप्येवमेव भवत्येकत्वं विजानतो मुनेर्मननशीलस्य हे गौतम । तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिं चोज्झित्वा मातृपितृसहस्रेभ्योऽपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः ॥ १५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ
काठकोपनिषद्भाष्ये द्वितीयाध्याये प्रथमवल्लीभाष्यं समाप्तम्

गोपालयतीन्द्रटीका

नायमस्तीति द्वितीयपक्षस्योत्तरत्वेनोत्तरं वाक्यमवतारयति—किञ्चेति । युक्तं पठनमिति शेषः । तत्र हेतुमाह—ज्योतिरिति । परत्वाद्विशेषणत्वादित्यर्थः । यः प्रत्यगात्मा भूतभव्यस्येशानः सल्लँक्षित इत्यन्वयः । उरप्यर्थे व्याख्यातः । एवकारार्थमाह—नान्य इति । यदर्थं वाक्यमवतारितं तमाह—अनेनेति । नन्वस्य कृतहानाकृताभ्यागमादिदोषात्प्राप्तिरेव नेत्यत आह—न्यायत इति । प्रत्युक्तो दाढर्यार्थमिति शेषः । प्रत्युक्त इत्यन्वयार्थश्चकारः ॥१३॥

पौनरुक्त्यं परिहरन्सम्बन्धमाह—पुनरपीति । उच्छ्रित उन्नते । दधत इति धर्मा इत्याह—आत्मन इति । अनुविधावतीत्यस्य तात्पर्यार्थमाह—शरीरेति ॥ १४ ॥

यथोदकं शुद्ध इति वाक्यमपेक्षितं पूरयन्व्याचष्टे—यस्येत्याविना । उपाधिरविद्यादिः । सम्पूर्णवल्ल्यास्तात्पर्यार्थमाह—तस्मादिति । यस्माद्बहुशो भेदो निन्दितस्तस्मादित्यर्थः । नास्तिकभेददृष्टिः क्षणिकविज्ञानसन्तानात्मभेददृष्टिस्ताम् । सर्वापेक्षया पित्रोर्हितकृत्त्वं प्रसिद्धम् । श्रुतितोऽन्यस्य सम्यग्घितैषित्वं नेति श्रुत्युक्तमद्वैतदर्शनमेवाऽऽदरणीयं श्रद्धाभक्तिभ्यामित्यर्थः ॥ १५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे
द्वितीयाध्याये प्रथमवल्ली समाप्ता

---

१. यथा शुद्धमुदकं शुद्धे सिक्तं तत्सदृशमेव भवति न तु तदेवेति द्वैतविशिष्टाद्वैतिभिरुक्तं, तन्न । सदृशत्वस्य निर्मलत्वस्य पूर्वमेव जलद्वयेऽपि सत्वात् तदनन्तरं तत्सदृशं भवतीत्यस्यायुक्तत्वात् । अतस्तदेव भवतीत्यर्थः । जीवेश्वरस्वरूपयोः शोधनेनोभयोश्शुद्धत्वज्ञानेऽभेदः स्पष्ट इत्यर्थः ।

**पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥ १ ॥**

पुनरपि प्रकारान्तरेण ब्रह्मतत्त्वनिर्धारणार्थोऽयमारम्भो दुर्विज्ञेयत्वाद्ब्रह्मणः—**पुरं** पुरमिव पुरम् । द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसम्पत्तिदर्शनाच्छरीरं पुरम् । पुरं च सोपकरणं स्वात्मनाऽसंहतस्वतन्त्रस्वाम्यर्थं दृष्टम् । तथेदं पुरसामान्यादनेकोपकरणसंहतं शरीरं स्वात्मनाऽसंहतराजस्थानीयस्वाम्यर्थं भवितुमर्हति । तच्चेदं शरीराख्यं
५ पुरमेकादशद्वारमेकादश द्वाराण्यस्य सप्त शीर्षण्यानि नाभ्या सहार्वाञ्चि त्रीणि शिरस्येकं तैरेकादशद्वारं पुरं कस्याजस्य जन्मादिविक्रियारहितस्याऽऽत्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य । अवक्रचेतसोऽवक्रमकुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानमस्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः । यस्येदं पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा । ध्यानं हि तस्यानुष्ठानं सम्यग्विज्ञानपूर्वकम् । तं सर्वैषणाविनिर्मुक्तः सन्समं सर्वभूतस्थं ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्तेः शोकावसराभावात्कुतो
१० भयेक्षा । इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः ॥ १ ॥

आनन्दगिरिटीका

पौनरुक्त्यं परिहरन्सम्बन्धमाह—**पुनरपीति** । भूयोऽपि पथ्यं वक्तव्यमिति न्यायेनोपायान्तरेण ब्रह्म ज्ञाप्यते तत्रोपाया एव भिद्यन्ते नोपेयस्य भेदोऽस्तीति । पुरेणासंहतत्वं स्वामिनः पुरोपचयापचयाभ्यामुपचयापचयराहित्यम् ।
१५ तत्सत्ताप्रतीतिमन्तरेण सत्ताप्रतीतिमत्त्वं स्वातन्त्र्यम् ॥ १ ॥

गोपालयतीन्द्रटीका

नन्वनेकप्रकारमात्मतत्त्वं प्रतिपादितं किमर्थमुत्तरवल्ल्यारम्भ इति चेदात्मतत्त्वस्य दुर्विज्ञेयत्वात्प्रकारान्तरेण तदुक्तिरिति पौनरुक्त्यं परिहरन्सम्बन्धमाह—**पुनरपीति** । भूयोऽपि पथ्यं वक्तव्यमिति न्यायेनोपायान्तरेणापि ब्रह्म ज्ञाप्यते । तत्रोपाया एव भिद्यन्ते नोपेयस्य भेदोऽस्तीति भावः । अक्षराणि व्याचष्टे—**पुरमिति** । पुरं शरीरमिति
२० सम्बन्धः । पुरसादृश्यमाह—**द्वारेति** । दृष्टान्ते द्वारपाला भटाः, तेषामधिष्ठातारोऽधिपतयः । आदिशब्देन मन्त्रिबन्दिसप्तप्राकारयन्त्राट्टालिकादिर्गृह्यते । दार्ष्टान्तिके तु मूर्धनाभिसहितचक्षुःश्रोत्रनासिकामुखाधोरन्ध्राणि द्वाराणि द्वारपालाश्चक्षुरादीन्द्रियाणि । नाभेः समानो, मूर्ध्नः प्राणस्तेषामधिष्ठातारो दिग्वातादयः । आदिशब्देन त्वङ्मांसरुधिरमेदोमज्जास्थिस्नायवः प्राकारसदृशाः । मूलाधाराद्याज्ञान्तान्यट्टालिकासदृशानि, सन्धयो यन्त्राणि रोमाणि प्राकारोपरिस्थितविशाखसदृशानीत्यादि द्रष्टव्यम् । शरीरस्य पुरस्वरूपकोक्तेः प्रयोजनमाह—**पुरं चेति** । स्वात्मना
२५ पुरेणासंहतत्वं स्वामिनः पुरोपचयापचयाभ्यामुपचयापचयराहित्यम्, पुरसत्ताप्रतीतिमन्तरेण सत्ताप्रतीतिमत्त्व स्वातन्त्र्यम् । **तथेति** । यथा पुरेणासंहतः स्वतन्त्रो यः स्वामी तच्छेषतया पुरं दृष्टं तथा पुरसादृश्यादनेकोपकरणसहितं प्रत्यक्षं शरीरं शरीरेणासंहतो राजस्थानीयः स्वतन्त्रो यः स्वामी तदर्थं भवितुमर्हतीत्यर्थः तत्स्वाम्यर्थम् । विशेषणसमुच्चयार्थश्चकारः । विशेषणमेव व्याचष्टे—**एकादशेति** । पुरस्वामिनमाकाङ्क्षापूर्वकं सविशेषं सन्निदिशति—**कस्येति** । **जन्मादीति** । षड्भावविकाररहितस्येत्यर्थः । दृष्टान्ते राज्ञोऽवक्रचेतस्त्वं सर्वप्रकृत्यनुकूलत्वम् । प्रकृते
३० तु यथा सविता स्वाविनाभूतप्रकाशवानित्युच्यते तथा जन्मादिरहिताखण्डरूपेणावस्थितनित्यविज्ञप्तिरूपत्वमित्याह—**अवक्रमित्यादिना** । अनुष्ठायेत्यादिवाक्यमपेक्षितं पूरयन्व्याचष्टे—**यस्येति** । ननु पुरस्वामिनो जीवत्वात्तस्येश्वरत्वनिर्देशः कथमिति चेत्, अजस्येति जीवस्यावक्रचेतस इतीश्वरत्वनिर्देशात्सामानाधिकरण्यादभेदे प्रत्यगभिन्नेश्वरस्य पुरस्वामित्वनिर्देशो घटत इति भावः । आत्मनः क्रियाविषयत्वाभावादनुष्ठानमात्मनि ध्यानमेव योग्यतावशादित्याह—**ध्यानं हीति** । **सम्यग्विज्ञानपूर्वकमिति** । अप्रतिबद्धापरोक्षसाक्षात्काररूपं विज्ञानं पूर्वमुद्देश्यं यस्य तत्तथा । अन्यथा
३५ सम्यग्विज्ञानानन्तरं ध्यानायोगात्साक्षात्कारार्थत्वे ध्यायतेर्लक्षणार्थत्वापत्तेस्तद्विज्ञानादभयप्राप्तिरित्युत्तरभाष्यविरोधादिति । अधिकारिणं निर्दिशति—**सर्वेति** । भयेक्षा भयस्य दर्शनमित्यर्थः । विमुक्तश्च विमुच्यत इति पदयोः पौनरुक्त्यं परिहरति—**इहैवेति** ॥ १ ॥

हँ्सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥
ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

स तु नैकशरीरपुरवर्त्येवाऽऽत्मा किं तर्हि सर्वपुरवर्ती । कथम्—हंसो हन्ति गच्छतीति, शुचिषच्छुचौ दिव्यादित्यात्मना सीदतीति । वसुर्वासयति सर्वानिति । वाय्वात्मनाऽन्तरिक्षे सीदतीत्यन्तरिक्षसत् । होताऽग्निः, ५
अग्निर्वै होतेति श्रुतेः। वेद्यां पृथिव्यां सीदतीति वेदिषत्, "इयं वेदिः परोऽन्तः पृथिव्या" इत्यादिमन्त्रवर्णात्[1] । अतिथिः सोमः सन्दुरोणे कलशे सीदतीति दुरोणसत् । ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति । नृषन्नृषु मनुष्येषु सीदतीति नृषत् । वरसद्वरेषु देवेषु सीदतीति । ऋतसदृतं सत्यं यज्ञो वा तस्मिन्सीदतीति । व्योमसद्व्योम्न्याकाशे सीदतीति व्योमसत् । अब्जा अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति । गोजा गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति । ऋतजा यज्ञाङ्गरूपेण जायत इति । अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति । सर्वात्माऽपि १०
सन्नृतमवितथस्वभाव एव । बृहन्महान्सर्वकारणत्वात् । यदाऽप्यादित्य एव मन्त्रेणोच्यते तदाऽप्यात्मस्वरूपत्वमादित्यस्येत्यङ्गीकृतत्वाद्ब्राह्मणव्याख्याने[2]ऽप्यविरोधः। सर्वव्याप्येक एवाऽऽत्मा जगतो नाऽऽत्मभेद इति मन्त्रार्थः॥२॥

आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते—ऊर्ध्वं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयत्यूर्ध्वं गमयति । तथाऽपानं प्रत्यगधोऽस्यति क्षिपति य इति वाक्यशेषः । तं मध्ये हृदयपुण्डरीकाकाश आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशं

आनन्दगिरिटीका १५

या यज्ञे प्रसिद्धा वेदिः पृथिव्याः परोऽन्तः, परस्वभाव इति वेद्याः पृथिवीस्वभावत्वसङ्कीर्तनात्पृथिवी वेदिशब्दवाच्या भवतीत्यर्थः । असौ वा आदित्यो हंसः शुचिषदिति ब्राह्मणेनाऽऽदित्यो मन्त्रार्थतया व्याख्यातः कथं तद्विरुद्धमिदं व्याख्यातमित्याशङ्क्याऽऽह—यदाऽप्यादित्य एवेति । सूर्य आत्मा जगतस्तस्थुषश्चेति मन्त्रान्मण्डलोपलक्षितस्य चिद्धातोरिष्यत एव सर्वात्मत्वमित्यर्थः ॥ २ ॥

येयं प्रेते विचिकित्सा मनुष्य इति या पूर्वं विचिकित्सा प्रश्नमूलत्वेनोद्भाविता साऽपि निर्मूलेत्येतद्दर्शयितुं २०
देहव्यतिरिक्तात्मास्तित्वं साधयति—आत्मनः स्वरूपाधिगम इत्यादिना । सर्वे प्राणकरणव्यापाराश्चेतनार्थास्तत्प्रयुक्ता भवितुमर्हन्ति जडचेष्टात्वाद्रथचेष्टावदित्यर्थः ॥ ३ ॥

गोपालयतीन्द्रटीका

ननु पुरमिति विशेषणादेकपुरवर्तित्वमुक्तं तथात्वे परिच्छिन्नत्वापत्तिरित्याशङ्क्याऽऽकाङ्क्षापूर्वकमुत्तरमवतारयति—स त्विति । तुशब्देनाऽऽशङ्का निवर्त्यते । हंसः, सन्नित्युत्तरेष्वपि द्रष्टव्यमिति । व्युत्पत्त्या शुचिषदादित्यः २५
सन्नात्मेत्यर्थः । ननु वेदिशब्देन चतुरङ्गुलखाता भूमिरुच्यते कथं पृथिव्यभिधीयते तत्राऽऽह—इयमिति । या यज्ञे प्रसिद्धेयं वेदिः पृथिव्याः परोऽन्तः परः स्वभाव इति वेद्याः पृथिवीस्वभावत्वकीर्तनात्पृथिवी वेदिशब्दवाच्या भवतीत्यर्थः । सोमरसाधारबृहत्पात्रं द्रोणकलशशब्देनोच्यते । अतिथिशब्दस्य रूढ्यर्थमादायार्थान्तरमाह—ब्राह्मण इति । इति दुरोणसदित्यन्वयः । इति वरसदित्यन्वयः । एवमुत्तरत्र । ननु सर्वात्मत्वे सप्रपञ्चत्वेन मिथ्यात्वं स्यादात्मनः इत्याशङ्क्याऽऽह—सर्वेति । पारमार्थिकनिरतिशयस्वभावमेवेत्यत्र हेतुः—बृहदिति । तत्र हेतुः—सर्वेति । निरधिष्ठान- ३०
भ्रमायोगाद्द्वैतभ्रमाधिष्ठानभूतात्मनो न मिथ्यात्वमिति भावः । नन्वसौ वा आदित्यो हंसः शुचिषदित्यादित्यो मन्त्रार्थतया व्याख्यातः कथं तद्विरुद्धमिदं व्याख्यातमित्याशङ्क्याऽऽह—यदाऽप्यादित्य एवेति । अस्याऽऽदित्यस्येति सम्बन्धः । "सूर्य आत्मा जगतस्तस्थुषश्चे"ति मन्त्रवर्णान्मण्डलोपलक्षितचिद्धातोरिष्यत एव सर्वात्मत्वमित्यर्थः । सर्वव्यापीति । प्रतीचः केवलस्य मण्डलोपलक्षितचैतन्यस्य वा मन्त्रार्थत्वमित्यर्थः ॥ २ ॥

येयं प्रेत इति या पूर्वं विचिकित्सा प्रश्नमूलत्वेनोद्भाविता साऽपि निर्मूलेत्येतद्दर्शयितुं देहव्यतिरिक्तास्तित्व- ३५
मात्मनः साधयति—आत्मनः स्वरूपाधिगम इत्यादिना । बुद्धेः प्राधान्येन हृदयाकाशवृत्तित्वात्तत्राभिव्यक्त आत्माऽऽसीन इत्युच्यत इत्याह—हृदयेति । सम्भजनीयं मुमुक्षुभिरिति शेषः । उपासत इत्यस्य तात्पर्यार्थमाह—

---

1. तै० ब्रा० ९-५ । 2. श० ब्रा० ६-७-३-११ ।

**अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहाद्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वै तत् ॥ ४ ॥**
**न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥**

वामनं सम्भजनीयं सर्वे विश्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाहरन्तो विश इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः। यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः॥३॥

५ किञ्च—अस्य शरीरस्थस्याऽऽत्मनो विस्रंसमानस्यावस्रंसमानस्य भ्रंशमानस्य देहिनो देहवतः। विस्रंसनशब्दार्थमाह—देहाद्विमुच्यमानस्येति। किमत्र परिशिष्यते प्राणादिकलापे न किञ्चन परिशिष्यतेऽत्र देहे पुरस्वामिनो विद्रवण इव पुरवासिनां यस्याऽऽत्मनोऽपगमे क्षणमात्रात्कार्यकरणकलापरूपं सर्वमिदं हतबलं विध्वस्तं भवति विनष्टं भवति सोऽन्यः सिद्धः ॥ ४ ॥

स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु तद्व्यतिरिक्तात्मापगमात्प्राणादिभिरेव हि मर्त्यो १० जीवतीति। नैतदस्ति—न प्राणेन नापानेन चक्षुरादिना वा मर्त्यो मनुष्यो देहवान्कश्चन जीवति न कोऽपि जीवति। न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते। स्वार्थेनासंहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टं, यथा गृहादीनां लोके, तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हति। अत इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति। यस्मिन्संहतविलक्षण आत्मनि सति परस्मिन्नेतौ प्राणापानौ

## आनन्दगिरिटीका

१५ शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वाद्राजपुरवदित्याह—किं चास्येति ॥ ४ ॥

अन्यथासिद्धिं शङ्कते—स्यान्मतमिति। ननु जीव प्राणधारण इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं प्राणसंयोगश्च प्राणधारणं कुण्डे दधिधारणवत्तत्र च प्राणस्यैव हेतुत्वं संयोगाश्रयत्वात्। कथमुच्यते जीवनहेतुत्वं प्राणादीनां न सम्भवतीति तत्राऽऽह—स्वार्थेनासंहतेनेति। कादाचित्कस्य प्राणशरीरसंयोगस्य स्वभावतोऽनुपपत्तेः सङ्घातस्य च लोके परप्रयुक्तस्यैव दर्शनाद्भवितव्यमन्येन सङ्घातप्रयोजकेनेत्यर्थः ॥ ५ ॥

२०

## गोपालयतीन्द्रटीका

तादर्थ्येनेति। आत्मार्थत्वेनानुपरतव्यापाराः कार्याभिव्यक्तिकाल इति शेषः। यदर्था इत्यनेनानुमानं सूचितम्। तथा हि सर्वे प्राणकरणव्यापाराश्चेतनार्थास्तत्प्रयुक्ताश्च भवितुमर्हन्ति जडचेष्टात्वाद्रथादिचेष्टावदिति। अन्यः प्राणेभ्य इति शेषः ॥ ३ ॥

करणव्यतिरेकं साधयित्वा कार्यव्यतिरेकमाह—किञ्चेति। पौनरुक्त्यं परिहरति—विस्रंसनेति। विमुच्य-२५ मानस्य प्रारब्धक्षय इति शेषः। प्राणादिकलाप इति। कार्यकरणसङ्घात इत्यर्थः। यथा पुरस्वामिनो राज्ञोऽपगमे पुरवासिनो जना अन्यत्रापगच्छन्ति तद्वत्प्राणादय इति दृष्टान्तेनाऽऽत्मनो व्यतिरेकं साधयति—अत्र देह इत्यादिना। हतबलमिति। चेतना चैतन्यस्य सामान्यवृत्तिः सङ्घातस्य बलं तच्छून्यमित्यर्थः। अत एवाधः पततीत्याह—विध्वस्तमिति। अनेनेदमनुमानं सूचितम्—शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वाद्राजपुरवदिति ॥ ४ ॥

हेतोरन्यथासिद्धिं शङ्कते—स्यान्मतमिति। तद्व्यतिरिक्तेतिशब्दः प्राणादिव्यतिरिक्तार्थः। अन्वयमुक्त्वा ३० व्यतिरेकमाह—प्राणादिभिरेवेति। लोकप्रसिद्धद्यर्थको हिशब्दः। शङ्कासमाप्तिद्योतक इतिशब्दः। शङ्कोत्तरत्वेन वाक्यं योजयति—नैतदिति। एतत्प्राणाद्यपगमाच्छरीरस्य हतबलत्वम्। प्राणेनापानेन वा न जीवति चेच्चक्षुरादिना जीविष्यतीत्याशङ्क्य तयोर्ग्रहणमुपलक्षणार्थमित्याह—चक्षुरादिनेति। न जीवतीत्यत्र हेतुमाह—न हीति। संहत्य मिलित्वा कारित्वात्कार्यजनकत्वाच्चैतन्यसम्बन्धमन्तरेण न जीवनहेतुत्वसम्भव इत्यर्थः। जीव प्राणधारण इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं तत्संयोगश्च धारणं कुण्डे दधिधारणवत्तत्र प्राणस्यैव हेतुत्वं, कथ-३५ मुच्यते जीवनहेतुत्वं प्राणादीनां न सम्भवतीति तत्राऽऽह—स्वार्थेनेति। स्वप्रयोजनोद्देशेनेत्यर्थः। असंहतेन गृहपदार्थाप्रविष्टेन संहतानां सङ्घातापत्ति प्राप्तानाम्। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—तथेति। कादाचित्कस्य प्राणशरीरसंयोगस्य स्वभावतोऽनुपपत्तेः सङ्घातस्य च लोके परप्रयुक्तस्य दर्शनाद्भवितव्यमन्येन सङ्घातस्य प्रयोजकेने-

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । [1]यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥
[2]य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥

चक्षुरादिभिः संहतावुपाश्रितौ, यस्यासंहतस्यार्थे प्राणापानादिः स्वव्यापारं कुर्वन्वर्तते संहतः सन्स ततोऽन्यः सिद्ध इत्यभिप्रायः ॥ ५ ॥ ५

हन्तेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरन्तनं प्रवक्ष्यामि । यद्विज्ञानात्सर्वसंसारोपरमो भवति, अविज्ञानाच्च यस्य मरणं प्राप्य यथाऽऽत्मा भवति यथा संसरति तथा शृणु हे गौतम ॥ ६ ॥

योनिं योनिद्वारं शुक्रबीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढाः प्रपद्यन्ते शरीरत्वाय शरीरग्रहणार्थं देहिनो देहवन्तः, योनिं प्रविशन्तीत्यर्थः । स्थाणुं वृक्षादिस्थावरभावमन्येऽत्यन्ताधमा मरणं प्राप्यानुसंयन्त्यनुगच्छन्ति । १० यथाकर्म यद्यस्य कर्म तद्यथाकर्म यैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत् । तथा च यथाश्रुतं यादृशं च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः । "यथाप्रज्ञं हि सम्भवा" इति श्रुत्यन्तरात् ॥ ७ ॥

यत्प्रतिज्ञातं गुह्यं ब्रह्म वक्ष्यामीति तदाह—य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति । कथम् ? कामं

आनन्दगिरिटीका

येयं प्रेत इति प्रष्टुः परलोकेऽस्तित्वेऽपि सन्देह आसीत् । विशेषतस्तन्निवृत्त्यर्थमुच्यत आह— १५ हन्तेदानीमिति ॥ ६-७-८ ॥

गोपालयतीन्द्रटीका

त्यर्थः । अत इति संहतत्वं परामृश्यते । उपाश्रितपदस्यार्थकथनपूर्वकं तात्पर्यार्थमाह—यस्येति । संहतः सन्प्राणापानादिरित्यन्वयः ॥ ५ ॥

येयं प्रेत इति प्रष्टुः परलोकास्तित्वेऽपि सन्देह आसीद्विशेषतस्तन्निवृत्त्यर्थमुच्यत इत्याह—हन्तेदानीमिति । २० जीवः संसरतीत्यर्थे चशब्दार्थं हेतुं व्याचष्टे—यद्विज्ञानादिति । यस्याविज्ञानादिति सम्बन्धः ॥ ६ ॥

अविद्यावत्त्वादविवेकिन इत्याह—मूढा इति । देहिन इति विशेषणादसकृद्देहग्रहणं तत्प्रापककर्मानुष्ठानं च सूच्यते । तात्पर्यार्थमाह—योनिमिति । अत्यन्ताधमा इति महापातकिनो गृह्यन्ते । अनुगच्छन्तीति प्राप्नुवन्तीत्यर्थः । उक्तमर्थं स्पष्टयति—यैरिति । विज्ञानमुपासनं नग्नस्त्रीदर्शनादि च । यथाविज्ञानं शरीरग्रहणे प्रमाणमाह—यथेति । प्रज्ञामनतिक्रम्य यथाप्रज्ञम् । सम्भवन्त्युत्पद्यन्त इति सम्भवाः प्रजा इति शेषः ॥ ७ ॥ २५

प्रसङ्गादागतं परिसमाप्य प्रकृतप्रतिपादनपरमुत्तरं वाक्यमित्याह—यत्प्रतिज्ञातमिति । सुप्तेषु प्रलीनेषु

---

१. येयं प्रेते—इति पृष्टस्य शरीरव्यतिरिक्तात्मास्तित्वस्य प्रतिवचनं भवति । यत्तु रामानुजीये मरणं मोक्षमित्यर्थ इति तन्न । मरणपदे प्रश्नगतप्रेतपदवदेव लक्षणादोषः । यत्तु "योनिं ब्रह्माणं स्थाणुं शिवमि"त्यर्थ इति तन्न । यथाकर्म यथाश्रुतमिति कर्मज्ञानाधीनत्वोक्तेः । योनिं स्थाणुं शरीरत्वायेत्युक्तेश्च स्थावरजङ्गमादिभाव एवार्थो नायम् । ३०

२. अत्र विशिष्टाद्वैतिनो द्वैतिनश्च ईश्वर एव स्रष्टा जीवेषु सुप्तेषु यथेष्टं स्वाप्निकपदार्थान् सृजतीत्यूचतुः, तन्न । स्वप्नकाले जीवानां स्वापाभावात् इन्द्रियाणामेव निर्व्यापारत्वात् । 'अत्रैष देवः स्वप्ने महिमानमनुभवति यद्दृष्टं दृष्टमनुपश्यति' इत्यादिना जीवजागरणोक्तेः । "कानि स्वपन्ती"त्यत्र प्रश्नोपनिषदि इन्द्रियाणां स्वापोक्तेश्च । निर्मातृत्वं च "स हि कर्ता" इति बृहदारण्यके जीवस्यैव स्वाप्नपदार्थसृष्टिकर्तृत्वमाह । तस्मात् जीवमुद्दिश्य ईश्वराभेदपरमेवेदं वाक्यम् । अपि च ईश्वरस्रष्टृत्वं जागरणं च ३५ सर्वदा वर्तते इति सुप्तेष्वित्यस्य वैयर्थ्यम् । "इदं सर्वमसृजत" इत्यादौ स्वप्नस्रष्टृत्वस्यापि सिद्धेः. जीवीयादृष्टनिमित्तकत्वादेव जीवस्रष्टृत्ववर्णनमिति चिन्त्यम् ।

अग्निर्यथैको भुवनं प्रविष्टो [1]रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्मिमाणो निष्पादयञ्जागर्ति पुरुषो यस्तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति। तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु। किञ्च पृथिव्यादयो लोकास्तस्मिन्नेव सर्वे ब्रह्मण्याश्रिताः सर्वलोक-
५ कारणत्वात्तस्य। तदु नात्येति कश्चनेत्यादि पूर्ववदेव ॥ ८ ॥

अनेकतार्किककुबुद्धिविचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाऽऽधीयत इति तत्प्रतिपादन आदरवती पुनः पुनराह श्रुतिः—अग्निर्यथैक एव प्रकाशात्मा सन्भुवनं भवन्त्यस्मिन्भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः। रूपं रूपं प्रति दार्वादिदाह्यभेदं प्रतीत्यर्थः। प्रतिरूपः प्रतिरूपवान्दाह्यभेदेन बहुविधो बभूव। एक एव तथा सर्वभूतान्तरात्मा सर्वेषां भूतानामभ्यन्तर आत्माऽतिसूक्ष्मत्वा-
१० द्दार्वादिष्विव सर्वदेहं प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेणाऽऽकाशवत् ॥ ९ ॥

आनन्दगिरिटीका

ननु जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चेति। नानात्मानो व्यवस्थात इत्यनेकतार्किकबुद्धिविरोधात्सर्वपुरवर्त्येक एवाऽऽत्मेत्यत्र न चित्तस्थैर्यं सम्भवतीत्याशङ्क्यौपाधिकभेदसाधने सिद्धसाधनं स्वाभाविकभेदसाधने चानैकान्तिकत्वं दर्शयितुं प्रक्रमत इत्याह—अनेकतार्किकेत्यादिना।
१५ प्रतिरूपः उपाधिसदृशश्चतुष्कोणत्वादिधर्मके हि दारुणि तद्रूपो वह्निरपि लक्ष्यत इत्यर्थः ॥ ९-१० ॥

गोपालयतीन्द्रटीका

प्राणेष्वन्तःकरणव्यतिरिक्तेषु। अन्यथा साक्षिणः सन्निधिमात्रेण कामाद्याकारपरिणाम्यन्तःकरणप्रेरणानुपपत्तेरिति। काम्यत इति कामस्तम्। अविद्यया निद्रान्तःकरणरूपेणाभिव्यक्तया। य इत्यन्वयार्थं पुनरुच्यते। तद्ब्रह्मेत्यत्रैवकारानुषङ्गं सिद्धवत्कृत्य व्यावर्त्यमाह—नान्यदिति। स्वप्नावस्थायामतिस्फुटं साक्षिणः सकाशादन्यद्भिन्नं गुह्यं गोप्यतमं ब्रह्म
२० परिवृढं नास्तीत्यर्थः। तद्ब्रह्माविनाशीति क्वोच्यत इत्याकाङ्क्षायामाह—सर्वेति। सर्ववेदेष्वित्यर्थः। भूरादिलोकानां प्रकृतब्रह्माश्रितत्वे हेतुमाह—सर्वलोकेति। पूर्ववदिति। तदेतत्सर्वात्मकं ब्रह्म, उ एव नात्येति नातिक्रामतीत्यर्थः ॥८॥

ननु जन्ममरणकारणानां प्रतिप्राणिनियमाद्युगपत्तेषामप्रवृत्तेश्च पुरुषबहुत्वं सिद्धं सत्त्वरजस्तमोगुणानां वैपरीत्याच्च नानात्मानो व्यवस्थिता इत्यनेकतार्किकबुद्धिविरोधात्सर्वपुरवर्त्येक आत्मेत्यत्र न चित्तस्थैर्यं सम्भवतीत्याशङ्क्यौपाधिकभेदसाधने सिद्धसाधनत्वं स्वभावभेदसाधने चानैकान्तिकत्वं दर्शयितुं प्रक्रमत इत्याह—अनेक-
२५ तार्किकेत्यादिना। अनेके कुतार्किकाः पाखण्डाश्च तर्कागमावष्टम्भास्तदधीना या बुद्धिस्तयाऽऽकलितमाकुलितमन्तःकरणं येषां ते तथा तेषामित्यर्थः। अनेकतार्किककुबुद्धिविचालितान्तःकरणानामिति पाठे तार्किका एव कुबुद्धयस्तैः स्वमतोपन्यासादिना विचालितं श्रेयोमार्गादन्तःकरणं येषां ते तथा तेषामित्यर्थः। प्रमाणोपपन्नं तत्त्वमस्यादिवाक्यप्रतिपाद्यम्। प्रत्यग्ब्रह्मैक्यरूपविज्ञानमात्मैकत्वविज्ञानम्। प्रमाणेऽभ्यासादिलिङ्गसाहित्यं दर्शयति—असकृदिति। अनृजुबुद्धीनामिति पूर्वषष्ठ्यर्थे हेतुः। नाऽऽधीयते सम्यग्विज्ञानात्मकवृत्त्यारूढं न भवतीत्यर्थः। ऋजुबुद्धीनां ब्राह्मणानां
३० चेतसीवेति पाठो व्यतिरेकदृष्टान्तार्थः। तत्प्रतिपादने विज्ञसिस्वभावप्रत्यग्ब्रह्मप्रतिपादने। आदरवती तात्पर्यवती। दाह्यभेदं काष्ठादिविशेषम्। प्रतिरूप इति उपाधिरूपेण प्रतीयमानः, चतुष्कोणत्वादिधर्मके हि दारुणि तद्रूपो वह्निरपि लक्ष्यत इत्यर्थः। तत्र तत्र दार्वादौ, दाह्यभेदेन दार्वादिविशेषेण। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एक एवेति। अभ्यन्तरत्वेऽतिसूक्ष्मत्वं हेतुः। सदृष्टान्तं रूपं रूपमित्यादि व्याचष्टे—दार्वादिष्विवेत्यादिना। रूपं रूपमित्यस्य सर्वदेहमिति व्याख्यानम्। विकारे प्रविष्टस्य विकृतिमाशङ्क्य बहिश्चेति पदेन परिहार इत्याह—बहिश्चेति। स्वेना-
३५ विकृतेन स्वरूपेणासंस्पृष्टस्वरूपेणेत्यर्थः ॥ ९ ॥

१. अत्र माध्वैः जीवो ब्रह्मप्रतिबिम्ब इत्युक्तं तथा सति बिम्बप्रतिबिम्बयोरभेदात् जीवब्रह्मैक्यरूपेऽद्वैते पर्यवसानं, यदि प्रतिबिम्बः पदार्थान्तरं बिम्बाद्भिन्नं तथा आभासवादः तदा च जीवः प्रातिभासिक इति पक्षः स्वीकृतः स्यात्।

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । ५
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

तथाऽन्यो दृष्टान्तः—वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टो रूपं रूपं प्रतिरूपो बभूवेत्यादि समानम् ॥ १० ॥

एकस्य सर्वात्मत्वे संसारदुःखित्वं परस्यैव स्यादिति प्राप्तमत इदमुच्यते—सूर्यो यथा चक्षुष आलोकेनोपकारं कुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिनः सर्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्यात्मिकैः १० पापदोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैः। एकः संस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः । लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भवं दुःखमनुभवति । न तु सा परमार्थतः स्वात्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदकमलानि न रज्ज्वादीनां स्वतो दोषरूपाणि सन्ति । संसर्गिणि विपरीतबुद्ध्यध्यासनिमित्तात्तद्दोषवद्विभाव्यन्ते । न तद्दोषैस्तेषां लेपो विपरीतबुद्ध्यध्यासबाह्या हि ते । तथाऽऽत्मनि सर्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस्थानीयं विपरीतमध्यस्य तन्निमित्तं जन्ममरणादिदुःखमनुभवति न त्वात्मा सर्वलोकात्माऽपि सन्विप- १५ परीताध्यारोपनिमित्तेन लिप्यते लोकदुःखेन। कुतः। बाह्यः। रज्ज्वादिवदेव विपरीतबुद्ध्यध्यासबाह्यो हि स इति॥११॥

किञ्च—स हि परमेश्वरः सर्वगतः स्वतन्त्र एको न तत्समोऽभ्यधिको वाऽन्योऽस्ति। वशी सर्वं ह्यस्य जगद्वशे

### आनन्दगिरिटीका

परमात्मा दुःखी स्याद्दुःख्यभिन्नत्वाल्लोकवदित्याह—एकस्य सर्वात्मकत्व इति । अविद्यायां प्रतिबिम्बितश्चिद्धातुरज्ञो भ्रान्तो भवति। भ्रान्तश्च कामादिदोषप्रयुक्तः कर्म कुरुते तन्निमित्तं च दुःखं स्वात्मन्यध्यस्यति। २० परमात्मा तु निरविद्यत्वाद्दुःखसाधनशून्यत्वान्न दुःखी ततो न प्रयोजको हेतुरित्याह—लोको ह्यविद्ययेति। स्वरूपेण भ्रमाविषयत्वं विपरीतबुद्ध्यध्यासबाह्यत्वं रज्ज्वादीनां तथा चैतन्यस्योपाधिस्वरूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकबिम्बकल्पब्रह्मरूपेणाध्यासानाश्रयत्वान्न दुःखित्वप्राप्तिरित्यर्थः ॥ ११ ॥

परोत्कर्षदर्शनं पारतन्त्र्यं च स्वस्य हीनत्वं दुःखकारणं प्रसिद्धं तदभावान्न परमात्मा दुःखी ततस्तत्प्राप्तिः परः पुरुषार्थो भविष्यतीत्याह—किञ्च स हीत्यादिना ॥ १२ ॥ २५

### गोपालयतीन्द्रटीका

वायोरस्मिँल्लोके कथं प्रवेशो दार्वादिष्वनुपलम्भादित्याशङ्क्याऽऽह—प्राणात्मनेति । इत्यादि समानमिति । एकस्तथेत्यादिवाक्यव्याख्यानं पूर्ववदित्यर्थः ॥ १० ॥

ननु परमात्मा दुःखी स्याद्दुःख्यभिन्नत्वाल्लोकवदित्याह—एकस्य सर्वात्मत्व इति । तमेव परमात्मानमेव । परस्यैवेत्यपि पाठः । इदमुच्यते दृष्टान्तपूर्वकमुत्तरमुच्यते । अविद्यायां प्रतिबिम्बितश्चिद्धातुरज्ञो भ्रान्तो भवति ३० भ्रान्तश्च कामादिदोषप्रयुक्तः कर्म कुरुते तन्निमित्तं च दुःखं स्वात्मन्यध्यस्यति, परमात्मा तु निरविद्यत्वाद्दुःखसाधनशून्यत्वान्न दुःखी ततोऽप्रयोजको हेतुरित्याह—लोको ह्यविद्ययेति । स्वरूपेण भ्रमाविषयत्वं विपरीतबुद्ध्यध्यासबाह्यत्वं रज्ज्वादीनां यथा तथा चैतन्यस्याप्युपाधिस्थतारूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकबिम्बकल्पब्रह्मरूपेणाध्यासानाश्रयत्वान्न दुःखित्वप्राप्तिरित्यर्थः । विपरीतबुद्ध्यारोपनिर्मितेन लोकदुःखेन न लिप्यत इत्यन्वयः । तत्राऽऽकाङ्क्षापूर्वकं हेतुमाह—कुत इत्यादिना । इति यस्मात्तस्मान्न लिप्यत इत्यन्वयः ॥ ११ ॥ ३५

स्वापेक्षया परस्योत्कर्षदर्शनं पारतन्त्र्यं च स्वस्य हीनत्वं दुःखकारणं प्रसिद्धं लोके तदभावान्न परमात्मा दुःखी ततस्तत्प्राप्तिः परंपुरुषार्थो भविष्यतीत्याह—किञ्च स हीत्यादिना। हिशब्दो "न तत्समश्चाभ्यधिकश्च दृश्यत"

[1]नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

वर्तते। कुतः। सर्वभूतान्तरात्मा। यत एकमेव सदेकरसमात्मानं विशुद्धविज्ञानरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधाऽनेकप्रकारं यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् । तमात्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि शरीरस्याऽऽधारत्वमात्मनः । आकाशवदमूर्तत्वात् । आदर्शस्थं मुखमिति यद्वत् । तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनस्तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानन्दलक्षणं भवति नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमप्यविद्याऽऽव्यवधानात् ॥ १२ ॥

किञ्च—नित्योऽविनाश्यनित्यानां विनाशिनाम्। चेतनश्चेतनानां चेतयितृणां ब्रह्मादीनां प्राणिनामग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम्। किञ्च स सर्वज्ञः सर्वेश्वरः कामिनां संसारिणां कर्मानुरूपं कामान्कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान्य एको बहूनामनेकेषामनायासेन विदधाति प्रयच्छतीत्येतत्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥ १३ ॥

आनन्दगिरिटीका

इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह—किञ्च नित्य इति । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिश्रुतेरकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिहाराच्च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे सजातीयरूपेणोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात् । ततः प्रलये विनश्यत्सर्वं यत्र शक्तिशेषं विलीयते सोऽभ्युपगन्तव्य इत्यर्थः। बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमानन्दाभिमुख्यं हित्वा या बहिर्मुखा चेतनोपलभ्यते साऽपि नियन्तारं गमयतीत्याह—चेतनश्चेतनानामिति । ब्रह्मादिशब्दवाच्यानां सङ्घातानां वा चेतयितृत्वं यच्चैतन्यनिमित्तं सोऽस्ति पर आत्मेत्यर्थः। विमतं कर्मफलं तत्स्वरूपाद्यभिज्ञेन दीयमानं व्यवहितफलत्वात्सेवाफलवदित्याह—किञ्च स इति ॥ १३ ॥

गोपालयतीन्द्रटीका

इतिश्रुतिप्रसिद्धत्वद्योतनार्थः। वशित्वे हेतुमाह—कुत इत्यादिना। अन्तरात्मत्वे हेतुत्वेनोत्तरवाक्यं व्याचष्टे—यत इत्यादिना। स्वात्मसत्तामात्रेणोपाधिभेदमादाय बहुधाकरणे हेतुमाह—अचिन्त्येति । यत एवं करोत्यतः सर्वभूतान्तरात्मा यस्तमित्यन्वयः। नन्वात्मशब्दः शरीरवाच्यप्यतस्तत्स्थत्वं किमिति न व्याख्यायत इत्यत आह—न हीति । तर्हि तत्स्थत्वव्यवहारः कथमित्याशङ्क्याऽऽदर्शे प्रतीतिमात्रेणाऽऽदर्शस्थं मुखमितिवच्छरीरस्थ इत्युपचर्यत इत्याह—आदर्शस्थमित्यादिना। तमात्मस्थमिति। तत्त्वंपदयोः सामानाधिकरण्यादैक्यं विवक्षित्वाऽऽह—तमेतमीश्वरमात्मानमिति । निवृत्ता बाह्येभ्यो विषयेभ्यो वृत्तिर्हेद्धियेषां ते तथा । उपाधिबहुत्वाभिप्रायेण बहुवचनं नाऽऽत्मापेक्षयेत्याह—परमेश्वरभूतानामिति । बाह्यासक्तबुद्धीनां बाह्येषु विषयेष्वासक्ता बुद्धिर्येषां तेषाम् । स्वात्मभूतमपीति । सुखमित्यनुवर्तते । अविदुषामात्मभूतं सुखं नेत्यत्र हेतुमाह—अविद्याव्यवधानादिति ॥ १२ ॥

इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह—किञ्चेति । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदितिश्रुतेरकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिहाराय च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे सजातीयरूपेणोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात्ततः प्रलये विनश्यत्सर्वं यत्र शक्तिशेषं विलीयते सोऽभ्युपगन्तव्य इत्यनित्यानां नित्य इत्यस्यार्थः। बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमानन्दाभिमुख्यं हित्वा बहिर्मुखा चेतनोपलभ्यते साऽपि नियन्तारं गमयतीत्याह—चेतनश्चेतनानामिति । अनग्नीनामुदकादीनामग्निनिमित्तं दाहकत्वं यथा तथाऽन्येषां ब्रह्मादीनां प्राणिनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमित्यन्वयः। ब्रह्मादिसङ्घातानां चेतयितृत्वं यच्चैतन्यनिमित्तं सोऽस्ति परमात्मेत्यर्थः। विस्तृतं कर्मफलं कर्मस्वरूपाद्यभिज्ञेन दीयमानं भवितुमर्हति व्यवहितफलत्वात्सेवाफलवदित्याह—किञ्च स सर्वज्ञ इति । ननु कर्मवशादेव तत्फलसिद्धेरीश्वरोऽकिञ्चित्कर इत्यत आह—स्वानुग्रहेति । कर्मणामीश्वरप्रसादद्वारा फलहेतुत्वान्न दोष इति भावः ॥ १३ ॥

---

१. अस्य नित्यानां नित्यत्वप्रदः चेतनानां चैतन्यप्रद इत्यर्थो द्वैतिभिः कृतः, तदप्यद्वैते पर्यवस्यति । अयसोऽपि दग्धा अग्निरित्युक्ते अग्निः अयसि स्थितः दग्धेत्यर्थः तद्वत् जीवे स्थितं चैतन्यं ब्रह्मैवेत्यर्थः।

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥
[1]न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

इति काठकोपनिषदि द्वितीयाध्याये द्वितीया वल्ली समाप्ता

यत्तदात्मविज्ञानसुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते तदेतत्प्रत्यक्षमेवेति मन्यन्ते, कथं नु केन प्रकारेण तत्सुखमहं विजानीयाम् । इदमित्यात्मबुद्धिविषयमापादयेयं यथा निवृत्तैषणा यतयः । किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किं वा नेति ॥ १४ ॥ ५

अत्रोत्तरमिदं भाति च विभाति चेति । कथम्—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः । किं बहुना यदिदमादित्यादिकं सर्वं भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत् । तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च । कार्यगतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्यम् । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणां चाऽऽदित्यादीनां तद्दर्शनात् ॥ १५ ॥ १०

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ काठकोपनिषद्भाष्ये द्वितीयाध्याये द्वितीयवल्लीभाष्यं समाप्तम् १५

आनन्दगिरिटीका

विद्वदनुभवोऽपि परमानन्दे प्रमाणमित्याह—यत्तदात्मविज्ञानमिति । तस्मादसम्भावितत्तया न जिज्ञासितव्यं परमात्मदर्शनं किन्तु श्रद्दधानतया विचारयितव्यमेवेत्याह—कथं न्विति ॥ १४-१५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते काठकोपनिषद्भाष्यव्याख्याने द्वितीयाध्याये द्वितीयवल्लीभाष्यटीका समाप्ता २०

गोपालयतीन्द्रटीका

विद्वदनुभावोऽपि परमानन्दे प्रमाणमित्याह—यत्तदात्मविज्ञानमिति । तदात्मसुखं परमनिर्देश्यमप्येतदिति मन्यन्त इत्यन्वयः । के त इत्याकाङ्क्षायामाह—निवृत्तेति । त इति पदमध्याहर्तव्यम् । एतदित्यस्य प्रत्यक्षमेवेति व्याख्यानम् । विद्वत्प्रत्यक्षत्वादात्मसुखस्यासम्भावितत्तया न जिज्ञासितव्यं परमात्मदर्शनं किन्तु श्रद्दधानतया विचारयितव्यमेवेत्याह—कथं न्विति । यथा निवृत्तैषणा यतयो विचारेणाऽऽत्मबुद्धिविषयमात्मसुखमापादयन्ति तद्वदात्मसुखमात्मबुद्धिविषयं कथमापादयेयमिति विचारयितव्यमित्यर्थः । ननु वाङ्मनसातीतस्यासम्भावितत्वेन प्रकाशमानत्वाभावात्कथं बुद्ध्यारोह इति शङ्कते—किम्विति । उ इति वितर्के । यत इति यदित्यर्थे यत्प्रकाशात्मकमात्मज्योतिस्तदस्मद्बुद्धिगोचरत्वेन विस्पष्टं दृश्यते किमित्यन्वयः । वाशब्दं व्याचष्टे—नेति । अथवा यतः प्रकाशात्मकं तदात्मज्योतिरतोऽस्मद्बुद्धिविषयत्वेन विस्पष्टं दृश्यते किमिति सम्बन्धः । वाशब्दं व्याचष्टे—किं वा नेति ॥ १४ ॥ २५ ३०

इदंशब्दव्याख्यानं भातीत्यादि । कुत इति । अल्पवीर्यत्वादित्यर्थः । जलं तप्तजलमुल्मुकमलातं तदादीत्यादिशब्देनायःपिण्डादि गृह्यते । ननु प्रकाशविशिष्टघटादेः स्ववृत्तिघटादिप्रकाशकत्वं दृष्टं तद्वदन्याधीनप्रकाशस्य ब्रह्मणः सूर्यादिप्रकाशकत्वमित्याशङ्क्याऽऽह—न हीति । अविद्यमानेति पदच्छेदः । प्राप्ताप्राप्तविवेकेन प्रकाशस्यैव भासकत्वात्स्वतो घटादेर्भासकत्वं तद्वदप्रकाशत्वे ब्रह्मणो नाऽऽदित्यादिप्रकाशकत्वं स्यादिति भावः ॥ १५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे द्वितीयाध्याये द्वितीया वल्ली समाप्ता ३५

१. अत्र "अनुकृतेस्तस्य च"त्यधिकरणे निर्णीतरीत्या तं सूर्यादयो न भास्यन्तीत्यर्थः । सूत्रं यद्यपि मुण्डकस्थं एतत्समानजातीयं वाक्यमधिकृत्य प्रवृत्तं, कठोपनिषदि अग्निजीवपरमात्मनामेव प्रश्नप्रतिवचनविषयत्वात्, विजातीयतेजोविषयतया पूर्वपक्षासम्भवात्, तथापि वाक्यार्थः स एवात्रापि इति बोध्यम् ।

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद्वै तत्॥ १॥

तूलावधारणेनैव मूलावधारणं वृक्षस्य क्रियते लोके यथैवं संसारकार्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः
स्वरूपावदिधारयिषयेयं षष्ठी वल्ल्यारभ्यते—ऊर्ध्वमूलः ऊर्ध्वं मूलं यत्तद्विष्णोः परमं पदमस्येति सोऽयमव्यक्तादि-
५ स्थावरान्तः संसारवृक्षः ऊर्ध्वमूलः। वृक्षश्च व्रश्चनात्। जन्मजरामरणशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथास्वभावो
मायामरीच्युदकगन्धर्वनगरादिवद्दृष्टनष्टस्वरूपत्वात्, अवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारोऽनेकशत-
पाषण्डबुद्धिविकल्पास्पदस्तत्त्वविजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदान्तनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्त-
बीजप्रभवः अपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्वप्राणिलिङ्गभेदस्कन्धः तृष्णाजलावसेकोद्भूतदर्पो

आनन्दगिरिटीका

१० शाल्मल्यादितूलदर्शनेनादृष्टमपि वृक्षमूलं यथाऽस्तीत्यवधार्यते तद्वददृष्टस्यापि ब्रह्मणोऽवधारणाय प्रक्रमत
इत्याह—तूलावधारणेनेति। वृक्षशब्दप्रवृत्तिनिमित्तमाह—व्रश्चनादिति। "व्रश्चू छेदने" अस्य धातोः सप्रत्ययान्तस्य
रूपं वृक्ष इति। छेद्यत्वे युक्तिमाह—जन्मजरेत्यादिना। प्रसिद्धवृक्षसाम्याद्वा वृक्षशब्दप्रयोग इत्यभिप्रेत्याऽऽह—अवसाने
चेत्यादिना। प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेति विकल्पास्पदो दृष्टस्तथाऽयमपि सङ्घातो वा परिणामो वाऽऽरब्धो
वा सद्वाऽसद्वेत्यादीनामनेकेषां शतसंख्याकपाषण्डबुद्धिविकल्पानां विषय इत्यर्थः। किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसाय-
१५ गोचरः कश्चिद्वृक्षो दृष्टस्तथाऽयमपीति साम्यम्। साम्यान्तरमाह—तत्त्वविजिज्ञासुभिरिति। अपरब्रह्मणो विज्ञान-
क्रियाशक्तिद्वयात्मको हिरण्यगर्भः प्रथमोऽवस्थाभेदोऽङ्कुरोऽस्येति तथोक्तः। बुद्धीन्द्रियाणां विषयाः शब्दादयः
प्रवालाङ्कुराः किसलयान्यस्येति स तथोक्तः। श्रुत्यादीनि पलाशानि पत्राण्यस्येति। सुखदुःखे प्राणिवेदना एवानेको

गोपालयतीन्द्रटीका

शाल्मल्यादितूलदर्शनाददृष्टमपि वृक्षमूलं यथाऽस्तीत्यवधार्यते तद्वददृष्टस्यापि ब्रह्मणोऽवधारणाय प्रक्रमत
२० इत्याह—तूलावधारणेनेति। स्वरूपावदिधारयिषया स्वरूपनिश्चयेच्छया। स्वरूपावधारणविषयेति पाठे विषयशब्दो
निमित्तवाची। इयमन्तिमा वल्ली। ऊर्ध्वमित्युत्कृष्टमित्यर्थः। यद्विष्णोः परमं पदं तदस्य सोऽयमूर्ध्वमूल इत्यन्वयः।
इदंशब्दार्थं स्फुटयति—अव्यक्तादीति। अव्यक्तमज्ञातचैतन्यमादिर्यस्य सोऽयं तथा। स्थावरो वृक्षादिरन्तः यस्य
सोऽयं तथा। स चासौ स चेति पुनः कर्मधारयः। संसार एव वृक्षः संसारवृक्षः। वृक्षशब्दप्रवृत्तिनिमित्तमाह—
व्रश्चनादिति। "ओव्रश्चू छेदन" इत्यस्य धातोः सप्रत्ययान्तस्य रूपं वृक्ष इति। छेद्यत्वे युक्तिमाह—जन्मजरेत्यादिना।
२५ क्वचिदवच्छिन्नजन्मजरेत्यादिपाठष्टिप्पणकारैर्गृहीतः। जन्म च मरणं च शोकश्च त एवाऽऽदिर्येषां ते तथा।
तेऽनेकेऽनर्था आत्मा स्वरूपं यस्य वृक्षस्य स तथा। अनेकानर्थात्मकत्वादेव प्रतिक्षणमन्यथास्वभावत्वं सात्त्विक-
राजसतामसवृत्तिभेदेनेत्याह—प्रतिक्षणमिति। प्रतिक्षणमन्यथास्वभावत्वे दृष्टान्तमाह—मायेत्यादिना। मायैन्द्र-
जालिकमाया। मायादिवत्प्रतिक्षणमन्यथास्वभावत्वे हेतुमाह—दृष्टेति। दृष्टं दर्शनं तत्समय एव प्रतीयते नोत्तर-
कालमित्यर्थः। अवयवार्थमादाय संसारो वृक्ष इत्युक्तम्। वृक्षसादृश्याद्वा वृक्षशब्दप्रयोगो भवति संसार इत्याह—
३० अवसाने चेत्यादिना। चशब्दः पक्षान्तरद्योतकः। प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेतिविकल्पास्पदो दृष्टः। तथाऽय-
मपि संघातो वा परिणामो वाऽऽरब्धो वा न वेत्यादीनामनेकेषां शतसंख्याकपाषण्डबुद्धिविकल्पानामास्पदो विषय
इत्यर्थः। किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायगोचरः कश्चिद्वृक्षो दृष्टस्तथाऽयमपीति साम्यान्तरमाह—तत्त्व-
विजिज्ञासुभिरिति। स्वतोऽसारत्वे संसारस्य किं तस्य सारमित्यपेक्षायामाह—वेदान्तेति। वेदान्तैर्निर्धारितं परं
ब्रह्मैव मूलं सारो यस्य स तथा। अविद्याऽध्यासः कामकर्माण्यव्यक्तमज्ञातचैतन्यमेतानि बीजं तस्मात्प्रभव उत्पत्तिर्यस्य
३५ स तथा। अपरस्य ब्रह्मणो विज्ञानक्रियाशक्तिद्वयात्मको हिरण्यगर्भः प्रथमोऽवस्थाभेदोऽङ्कुरोऽस्येति तथोक्तः। सर्वेषां
प्राणिनां लिङ्गशरीरविशेषास्त एव स्कन्धाः शाखामूलस्थानानि यस्य स तथोक्तः। तृष्णैव सलिलं तेन सेकः
सेचनं तेनोद्भूतो दर्पो गर्वं उच्छ्रायो यस्य स तथोक्तः। बुद्धीन्द्रियाणां ये विषयाः शब्दादयस्ते प्रवालाङ्कुराः
किसलयान्यस्येति तथोक्तः। श्रुत्यादीनि पलाशानि पत्राण्यस्येति तथा। यज्ञदानाचारादीन्यनेकाः क्रिया एव

**यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । [1]महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥**

बुद्धीन्द्रियविषयप्रवालाङ्कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः प्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताक्रुष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतोच्छेद एष संसारवृक्षोऽश्वत्थोऽश्वत्थवत्कामकर्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरकतिर्यक्प्रेतादिभिः शाखाभिरवाक्शाखः । सनातनोऽनादित्वाच्चिरप्रवृत्तः । यदस्य संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं तदेव ब्रह्म सर्वमहत्त्वात् । तदेवामृतमविनाशस्वभावमुच्यते कथ्यते सत्यत्वात् । वाचारम्भणं विकारो नामधेयमनृतमन्यदतो मर्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि लोका गन्धर्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगमनाः श्रिता आश्रिताः सर्वे समस्ताः । उत्पत्तिस्थितिलयेषु तदु तद्ब्रह्म नात्येति नातिवर्तते मृदादिमिव घटादिकार्यं कश्चन कश्चिदपि विकारः । एतद्वै तत् ॥ १ ॥     १०

यद्विज्ञानादमृता भवन्तीत्युच्यते जगतो मूलं तदेव नास्ति ब्रह्मासत एवेदं निःसृतमिति । तन्न । यदिदं किञ्च यत्किञ्चेदं जगत्सर्वं प्राणे परस्मिन्ब्रह्मणि सत्येजति कम्पते तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते । यदेवं

आनन्दगिरिटीका

रसोऽस्येति । फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्मवासनादीनि सात्त्विकादिभावेन मिश्रीकृतानि दृढबन्धनान्यवान्तरमूलान्यस्य वटवृक्षस्येव तथोक्तः । सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडं     १५
यस्मिन् । प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां यथासंख्येन जातानि नृत्यादीनि रुदितादिशब्दाश्चैतैः कृतस्तुमुलीभूतो महारवो यस्मिन्निति विग्रहः ॥ १ ॥

कार्यस्य शून्यतापर्यन्तं नष्टस्यासत्त्वपूर्वकमेव जन्म ततो नास्ति मूलमिति शङ्कते—यद्विज्ञानादिति । तन्न । शशविषाणादेरसतः समुत्पत्त्यदर्शनात्सत्पूर्वकत्वप्रसिद्धेश्चास्ति सद्रूपं वस्तु जगतो मूलं तच्च प्राणपदलक्ष्यं प्राणप्रवृत्तेरपि हेतुत्वादित्यर्थः ॥ २ ॥     २०

गोपालयतीन्द्रटीका

शोभनानि पुष्पाण्यस्येति तथा । क्वचिद्यज्ञदानतपआदीति पाठः । सुखदुःखे प्राणिवेदना एवानेको रसोऽस्येति तथा । प्राणिभिरुपजीव्यमनन्तत्वेन फलं यस्मिन्स तथा । फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्मवासनादीनि जडीकृतानि सात्त्विकादिभावेन मिश्रीकृतानि दृढबद्धान्यवान्तरमूलानि यस्येति स तथोक्तः । सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडमास्पदं यस्मिन्स तथोक्तः । प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां     २५
यथासंख्येन जातानि नृत्यं च गीतं च गानं च वादित्रं च वाद्यसामान्यं क्ष्वेलितं च केलिविशेष आस्फोटितं च भुजाबन्धो हसितं चाऽऽमोदविशेषस्तज्जन्यपरहस्ताद्याकर्षणमाकृष्टं[2] च तानि तथा तानि च रुदितादयोऽनेके शब्दाश्च तैः कृतस्तुमुलीभूतो महारवो यस्मिन्स तथेति विग्रहः । आस्फोटहसितेत्यपि पाठः सुगमः । वेदान्तैस्तत्त्वमस्यादिभिर्विहितं जनितं यत्प्रत्यगभिन्नब्रह्मज्ञानं तदेवासङ्गशस्त्रमप्रतिबध्यमानशस्त्रं तेन कृत उच्छेदो नाशो यस्य स तथोक्तः । अश्वत्थशब्दस्य संसारे गौणीं वृत्तिमाह—अश्वत्थवदिति । कामकर्मणी एव वातस्तेनेरितो नित्यप्रचलितः स्वभावो     ३०
यस्य स तथोक्तः । तिर्यक्शुनकादिजन्म । प्रेतोऽनग्निसंस्कृताज्ञजन्तूनामवस्थाविशेष आन्तरालिकः । आदिशब्देन स्वेदजादयो ग्राह्याः तादृशैः शाखाभिरवाक्शाखः । सनातनश्चिरं प्रवृत्त इत्यन्वयः । तत्र हेतुः—अनादित्वादिति । तदेवेत्यादिवाक्यमपेक्षितं पूरयन्व्याचष्टे—यदिति । अविनाशिस्वभावत्वे हेतुमाह—सत्यत्वादिति । प्रपञ्चस्य तद्वैपरीत्यमाह—वाचेत्यादिना । कदेत्यपेक्षायामाह—उत्पत्तीति ॥ १ ॥

कार्यस्य शून्यपर्यन्तं नाशादसत्पूर्वकमेव जन्म ततो नास्ति मूलमिति शङ्कते—यद्विज्ञानादिति । परिहरति—     ३५
तन्नेति । शशविषाणादेरसत उत्पत्त्यदर्शनात्कार्यस्य सत्पूर्वकत्वप्रसिद्धेश्चास्ति सद्रूपं वस्तु जगतो मूलं तच्च प्राणपदलक्ष्यं प्राणवृत्तेरपि हेतुत्वादित्यर्थः । धात्वर्थं प्रकटयति—तत एवेति । नात्र वाक्येषु ब्रह्मणो विच्छेदोऽस्तीत्यभि-

---

१. महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति । इत्यत्र भयहेतुः उद्यतवज्रसदृशं वस्तु परमात्मैव न अशन्यादिः इत्युक्तम्—"कम्पनात्" इत्यधिकरणे ।     २. आक्रुष्टेति—पा० ।

भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥
इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः।[1] ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥
यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके।
यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

५ जगदुत्पत्त्यादिकारणं ब्रह्म तन्महद्भयम्। महच्च तद्भयं च बिभेत्यस्मादिति महद्भयम्। वज्रमुद्यतमुद्यतमिव वज्रम्। यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं दृष्ट्वा भृत्या नियमेन तच्छासने वर्तन्ते तथेदं चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षणं जगत्सेश्वरं नियमेन क्षणमप्यविश्रान्तं वर्तत इत्युक्तं भवति। य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेकं ब्रह्मामृता अमरणधर्माणस्ते भवन्ति ॥ २ ॥

कथं तद्भयाज्जगद्वर्तत इत्याह—भयाद्भीत्या परमेश्वरस्याग्निस्तपति भयात्तपति सूर्यो भयादिन्द्रश्च वायुश्च
१० मृत्युर्धावति पञ्चमः। न हीश्वराणां लोकपालानां समर्थानां सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते ॥ ३ ॥

तच्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सञ्जानात्येतद्भयकारणं ब्रह्म बोद्धुमवगन्तुं प्राक्पूर्वं शरीरस्य विस्रसोऽवस्रंसनात्पतनात्संसारबन्धनाद्विमुच्यते। न चेदशकद्बोद्धुं ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय कल्पते शरीरं गृह्णातीत्यर्थः।
१५ तस्माच्छरीरविस्रंसनात्प्रागात्मबोधाय यत्न आस्थेयः ॥ ४ ॥

यस्मादिहैवाऽऽत्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र। स च दुष्प्रापः। कथमित्युच्यते—यथाऽऽदर्शे प्रतिबिम्बभूतमात्मानं पश्यति लोकोऽत्यन्तविविक्तं तथेहाऽऽत्मनि स्वबुद्धावादर्शवन्निर्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः। यथा स्वप्नेऽविविक्तं जाग्रद्वासनोद्भूतं तथा पितृलोकेऽविविक्तमेव दर्शनमात्मनः कर्मफलोपभोगासक्तत्वात्। यथाचाप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परिदृश्यत इव
२० तथा गन्धर्वलोकेऽविविक्तमेव दर्शनमात्मनः। एवं च लोकान्तरेष्वपि शास्त्रप्रामाण्यादवगम्यते। छायातपयोरि-

आनन्दगिरिटीका

सूर्यादीनां नियतप्रवृत्त्यनुपपत्त्या नियामकत्वेन सम्भावितं यत्पारमेश्वरं रूपं तदवगमायेहैव यत्नः कर्तव्य इत्याह—तच्चेति। इहैव बोद्धुं शक्तः सन्निहैव चेज्जानाति तदा मुच्यत एवेति सम्बन्धः ॥ ३-४-५ ॥

गोपालयतीन्द्रटीका

२५ प्रश्नोत्तरं वाक्यं व्याचष्टे—यदेवमित्यादिना। उद्यतं वज्रमिव वज्रमुद्यतम्। पदार्थमभिधाय तात्पर्यमाह—यथेत्यादिना। एतच्छब्दार्थमाह—स्वात्मेति। स्वसम्बन्ध्यन्तःकरणप्रवृत्तीनां साक्षिभूतमित्यर्थः। य एतद्विदुः तेऽमृता भवन्तीत्यन्वयः ॥ २ ॥

सूर्यादीनां नियतप्रवृत्त्यनुपपत्त्या नियामकत्वेन सम्भावितं यत्पारमेश्वरं रूपं तदवगमायेह यत्नः कर्तव्य इत्याकाङ्क्षापूर्वकमाह—कथं तदित्यादिना। न हि नियता प्रवृत्तिरुपपद्यत इति सम्बन्धः ॥ ३ ॥

३० तच्चेहैव बोद्धुं शक्तः सन्निहैव चेज्जानाति तदा मुच्यत एवेति सम्बन्धः। तत इत्यस्य व्याख्यानमनवबोधादिति। परमात्मावगमाय यत्नः कार्य इत्युक्तमुपसंहरति—तस्मादित्यादिना ॥ ४ ॥

यथाऽऽदर्श इत्यादिवाक्यं व्याख्यातुं पातनिकामाह—यस्मादित्यादिना। इहैव मनुष्यदेह एव। यथाऽऽदर्शस्थस्य मुखस्य स्पष्टमुपलब्धिस्तथाऽऽत्मा यस्मादात्मनि स्पष्टमुपलभ्यते तस्मादिहैवाऽऽत्मनो दर्शनमित्यन्वयः। एवकारव्यावर्त्यमाह—नेति। तर्हि ब्रह्मलोकेऽपि तद्दर्शनं न स्यादित्याशङ्क्याऽऽह—ब्रह्मेति। ननु तर्हि ब्रह्मलोक एवाऽऽत्मनो दर्शनं
३५ स्यादित्याशङ्क्याऽऽह—स चेति। आकाङ्क्षापूर्वकमवतारितवाक्यं व्याचष्टे—कथमित्यादिना। स्वप्न इत्यत्राविविक्तमिति पदच्छेदः। पितृलोक आत्मदर्शनमिति शेषः। पितृलोके दर्शनस्याविविक्तत्वे हेतुमाह—कर्मफलेति।

१. न चेदशकत् इत्यध्याहारः।

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥
इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

वात्यन्तविविक्तं ब्रह्मलोक एवैकस्मिन् । स च दुष्प्रापोऽत्यन्तविशिष्टकर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्नः कर्तव्य इत्यभिप्रायः ॥ ५ ॥　　५

कथमसौ बोद्धव्यः किं वा तदवबोधे प्रयोजनमित्युच्यते—इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्यः पृथगुत्पद्यमानानामत्यन्तविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भावं स्वभावविलक्षणात्मकतां तथा तेषामेवेन्द्रियाणामुदयास्तमयौ चोत्पत्तिप्रलयौ जाग्रत्स्वापावस्थापेक्षया नाऽऽत्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान्न शोचति । आत्मनो नित्यैकस्वभावस्याव्यभिचाराच्छोककारणत्वानुपपत्तेः । तथा च श्रुत्यन्तरं "तरति शोकमात्मविद्" इति ॥ ६ ॥　　१०

यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगन्तव्यो यस्मात्प्रत्यगात्मा स सर्वस्य, तत्कथमित्युच्यते—इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिह ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात् । अलिङ्गो लिङ्ग्यते गम्यते

आनन्दगिरिटीका　　१५

'इन्द्रियेभ्यः परा ह्यर्था' इति पूर्वमुक्तमिह त्वर्थानामग्रहणात्सर्वप्रत्यगात्मत्वं न सम्भवतीत्याशङ्क्याऽऽह—अर्थानामिहेति ॥ ६-७ ॥

बुद्धिसुखदुःखादिः साश्रयो गुणत्वाद्रूपवदिति वैशेषिका अनुमिमते । तदसत् । साश्रयत्वमात्रसाधने सिद्धसाधनत्वान्मनस एव कामादिगुणवत्त्वश्रवणादात्माश्रयत्वकल्पने च निर्गुणत्वशास्त्रविरुद्धत्वादात्मना सह बुद्ध्यादेरविनाभावाग्रहणाच्च बुद्ध्यादि नाऽऽत्मलिङ्गमित्याह—लिङ्ग्यते गम्यते येनेति ॥ ८ ॥　　२०

गोपालयतीन्द्रटीका

गन्धर्वलोकग्रहणमुपलक्षणमित्याह—एवमिति । एकस्मिन्नात्मदर्शनमित्यनुवर्तते । दुष्प्रापत्वे हेतुमाह—अत्यन्तेति । विशिष्टं कर्माश्वमेधादि तत्सहितं ज्ञानमुपासनं तत्साध्यत्वादित्यर्थः । पदतात्पर्यमाह—तस्मादिति । इहैव मनुष्यशरीर एव ॥ ५ ॥

उत्तरं वाक्यमाकाङ्क्षापूर्वकं योजयति—कथमित्यादिना । इन्द्रियग्रहणमुपलक्षणमित्याह—स्वविषयेति । विषयाः शब्दादयस्तेषां ग्रहणमेव प्रयोजनं तेन सहेत्यर्थः । इन्द्रियाणां नित्यत्वं व्यावर्तयति—आकाशेति । पृथग्भावप्रतियोगिनं निर्दिशति—अत्यन्तेति । विलक्षणात्मकतां मत्वेत्यन्वयः । एवमुत्पत्तिप्रलयौ मत्वेत्यन्वयः । मननप्रकारं दर्शयति—जाग्रदिति । नाऽऽत्मनस्ताविति मत्वेति सम्बन्धः । उत्पत्तिप्रलयौ जाग्रत्स्वप्नावस्थापेक्षया नाऽऽत्मन इति पाठान्तरं सुगमम् । ज्ञाने साधनमाह—विवेकत इति । धीमान्प्रत्यग्ब्रह्मैक्यपर्यवसन्नमतिः । शोकाभावे हेतुमाह—आत्मन इति ॥ ६ ॥　　२५ ३०

साध्याहारमुदयास्तमयौ च यदित्यत्र यच्छब्दं व्याचष्टे—यस्मादिति । तस्मान्नासौ बहिरधिगन्तव्य इत्यर्थः । प्रकारान्तरेण व्याचष्टे—यस्मादिति । सर्वस्येति । तस्मान्न बहिरधिगन्तव्यः । किन्तु प्रत्यक्त्वेनैवावगन्तव्य इति शेषः । तदिति पृथग्भावप्रत्यक्त्वे । 'इन्द्रियेभ्यः परा ह्यर्था' इति पूर्वमुक्तमिह त्वग्रहणात्सर्वप्रत्यगात्मत्वं न सम्भवतीत्याशङ्क्याऽऽह—अर्थानामिहेति । पूर्ववदन्यदिति । अन्यत्परत्वाद्युपवर्णनम् । पूर्ववदिन्द्रियेभ्यः परा ह्यर्था इतिव्याख्यानवदित्यर्थः ॥ ७ ॥　　३५

व्यापकत्वे हेतुमाह—व्यापकस्येति । बुद्ध्यादि साश्रयं गुणत्वाद्रूपादिवदिति वैशेषिका अनुमिमते । तदसत्, साश्रयत्वसाधने सिद्धसाधनत्वान्मनस एव कामादिगुणवत्त्वश्रवणादात्माश्रयत्वकल्पने च निर्गुणत्वप्रतिपादकशास्त्रविरोधा-

न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥९॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥

येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति सोऽयमलिङ्ग एव । सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वाऽऽचार्यतः
५ शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव पतितेऽपि शरीरेऽमृतत्वं च गच्छति । सोऽलिङ्गः परोऽव्यक्ता-त्पुरुष इति पूर्वेणैव सम्बन्धः ॥ ८ ॥

कथं तर्ह्यलिङ्गस्य दर्शनमुपपद्यतं इत्युच्यते—न सन्दृशे सन्दर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम् । अतो न चक्षुषा सर्वेन्द्रियेण । चक्षुर्ग्रहणस्योपलक्षणार्थत्वात् । पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम् । कथं तर्हि तं पश्येदित्युच्यते—हृदा हृत्स्थया बुद्ध्या । मनीषा मनसः सङ्कल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया
१० हृदा मनीषाऽविकल्पयित्र्या । मनसा मननरूपेण सम्यग्दर्शनेन । अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्यत इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥ ९ ॥

सा हृन्मनीट्कथं प्राप्यत इति तदर्थो योग उच्यते—यदा यस्मिन्काले स्वविषयेभ्यो निवर्तितान्यात्मन्येव पञ्च

आनन्दगिरिटीका

कथं दर्शनमुपपद्यत इति प्रष्टुः कोऽभिप्रायः किं विषयतया दर्शनं वक्तव्यमुताविषयतयैव दर्शनोपायो वाच्यः,
१५ प्रथमं प्रत्याह—न संदृश इति । रूपादिमत्तद्विशेषणं च दर्शनविषययोग्यं भवति तदभावादित्यर्थः । द्वितीयं प्रत्याह—कथं तर्हीति । बाह्यकरणग्रामोपरमेऽपि यदा मनो विषयान्सङ्कल्पयते तदा मुमुक्षोर्बुद्धिस्तस्य नियन्त्री भवति । हे मनः किमर्थं त्वं पिशाचवत्प्रधावसि । न तावत्स्वप्रयोजनार्थम् । तव जडत्वात्प्रयोजनसम्बन्धानुपपत्तेर्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां सम्बन्धेन प्रयोजनानुपपत्तेः । नापि चेतनार्थम् । तस्यासङ्गत्वात्परमानन्दस्वभावत्वाच्चेति नियन्तृत्वेन बुद्धिर्मनीडुच्यत इत्याह—मनस इति । अविकल्पयित्रेति । विषयकल्पनाशून्यया ब्रह्मास्मीत्यविषयतयैव
२० ब्रह्मभावव्यञ्जिकया महावाक्योत्थया बुद्धिवृत्त्या ज्ञातुं शक्यत इति सम्बन्धः । कथंभूत आत्मेत्यत आह—मननेति । यद्यन्मया दृश्यते बाह्यं घटादि तत्तदहं यथा न भवामि तथाऽस्मिन्नपि संघाते यद्यद्दृश्यं तत्तदहं न भवामि किन्तु योऽत्र ज्ञोंऽशः सोऽपि सर्वशरीरेष्वेकलक्षणलक्षितत्वादेक एवेति विचारेण प्रथमं सम्भावित इत्यर्थः ॥ ९ ॥

श्रुतवेदान्तानामपि केषाञ्चिद्ब्रह्मास्मीतिबुद्धिस्थैर्यादर्शनादस्ति किञ्चित्प्रतिबन्धकान्तरं तदपनयोपायोऽप्यन्यो वक्तव्य इत्यभिप्रेत्याऽऽह—सा हृदिति । श्रवणमननाभ्यां प्रमाणप्रमेयासम्भावनानिरासेऽपि चित्तस्यानेकाग्रतादोषः
२५

गोपालयतीन्द्रटीका

दात्मना सह बुद्ध्यादेरविनाभावाग्रहणाच्च न बुद्ध्याद्यात्मलिङ्गमित्याह—लिङ्ग्यते गम्यते येनेति । मुच्यतेऽमृतत्वं च गच्छतीति वाक्ययोः पौनरुक्त्यं परिहरन्व्याचष्टे—यं ज्ञात्वेत्यादिना ॥ ८ ॥

अलिङ्गत्वे दर्शनमनुपपन्नमिति पृच्छति—कथमिति । प्रष्टुः कोऽभिप्रायः किं विषयतया दर्शनं वक्तव्यमुताविषय-तयैव दर्शनोपायो वाच्य इति । प्रथमं प्रत्याह—न संदृश इति । अस्य प्रत्यगात्मनो रूपं न सन्दर्शनविषये तिष्ठतीत्य-
३० न्वयः । रूपादिमद्दर्शनयोग्यं भवति तदभावादिति भावः । द्वितीयं प्रत्याह—कथं तर्हीति । बाह्यकरणग्रामोपरमेऽपि यदा मनो विषयान्सङ्कल्पयते तदा मुमुक्षोर्बुद्धिस्तस्य नियन्त्री भवति । 'हे मनः ! किमर्थं त्वं पिशाचवद्धावसि न तावत्स्वप्रयोजनार्थं जडत्वात्प्रयोजनसम्बन्धानुपपत्तेर्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां सम्बन्धेन प्रयोजनानुपपत्तेः । नापि चेतनार्थं तस्यासङ्गत्वात्परमानन्दस्वभावत्वाच्चेति नियन्तृत्वेन बुद्धिर्मनीडित्युच्यत इत्याह—मनस इति । अभिप्रकाशित इति । योऽत्र संघाते ज्ञोंऽशः सोऽस्मिन्सर्वशरीरेष्वेकलक्षणलक्षितत्वादेक एवेति विचारेण प्रथमं
३५ सम्भावित इत्यर्थः ॥ ९ ॥

श्रुतवेदान्तानामपि केषाञ्चिद्ब्रह्मास्मीतिबुद्धिस्थैर्यादर्शनादस्ति प्रतिबन्धान्तरं तदपनयनायान्योऽप्युपायो वक्तव्य इत्याह—सा हृन्मनीडिति । श्रवणमननाभ्यां प्रमेयासम्भावनानिरासेऽपि चित्तस्यानेकाग्रतादोषः प्रतिबन्धकः

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ॥ ११ ॥

ज्ञानानि। ज्ञानार्थत्वाच्छ्रोत्रादीन्द्रियाणि ज्ञानान्युच्यन्ते। अवतिष्ठन्ते सह मनसा यदनुगतानि तेन सङ्कल्पादि-व्यावृत्तेनान्तःकरणेन। बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न व्याप्रियते तामाहुः परमां गतिम्॥१०॥

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम्। सर्वानर्थसंयोगवियोगलक्षणा ह्येयमवस्था योगिनः। एतस्यां ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा। स्थिरामिन्द्रियधारणां स्थिरामचला-मिन्द्रियधारणां बाह्यान्तःकरणानां धारणमित्यर्थः। अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नवांस्तदा तस्मिन्काले यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते। न हि बुद्ध्यादिविचेष्टाभावे प्रमादसम्भवोऽस्ति। तस्मात्प्रागेव बुद्ध्यादिविचेष्टोपरमादप्रमादो विधीयते। अथवा यदैवेन्द्रियाणां स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्व-मित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति। कुतः। योगो हि यस्मात्प्रभवाप्ययावुपजनापायधर्मक इत्यर्थः। अतोऽपाय-परिहारायाप्रमादः कर्तव्य इत्यभिप्रायः॥ ११ ॥

आनन्दगिरिटीका

प्रतिबन्धकः सम्भवति तदपनयाय योगोऽनुष्ठातव्य उपदिश्यत इत्यर्थः। यदनुगतानीति। येन येन मनसाऽधिष्ठितानि तेन तेन सहावतिष्ठन्ते निवृत्तव्यापाराणि भवन्तीत्यर्थः॥ १० ॥

वियोगमेव सन्तं योगमिति विरुद्धलक्षणया मन्यन्त इत्युक्तं तत्स्फुटयति—सर्वानर्थेति। उपसंहृतं मनो यदि सुषुप्तिं गच्छेत्तदा साऽनर्थबीजावस्था भवति। तद्व्यावृत्तये पूर्णं ब्रह्मास्मीत्यावृत्तौ योजयेदावृतौ नियुक्तं विषयेषु विक्षिप्तं चेत्स्यात्तद्दोषदर्शनेन ततोऽपि व्यावर्तयेत्। व्यावृत्तमपि ततस्तटस्थं चेत्स्यात्साऽपि तावत्कषायावस्था; ततो निरुद्धं मनो यदा न जागर्ति न स्वपिति न चान्तरालावस्थं भवति पूर्णब्रह्मावभासकतयैव क्षीणं भवति तदा सर्वानर्थवियोगलक्षणा साऽवस्था भवतीत्यर्थः। योगारम्भकाले प्रमादवर्जनं विधेयतया व्याख्यायानुवादपरतया व्याचष्टे—अथवेति। विधिपक्षे हेतुं पृच्छति—कुत इति॥ ११ ॥

गोपालयतीन्द्रटीका

सम्भवति। तदपनयनाय योगोऽनुष्ठेय उपदिश्यत इत्यर्थः। ज्ञायतेऽनेनार्थ इति व्युत्पत्त्या ज्ञानशब्देन श्रोत्राद्युच्यत इत्याह—ज्ञानेति। यदनुगतानि सङ्कल्पाद्यात्मकं यदन्तःकरणं तेनानुगतानि तेनान्तःकरणेन सहावतिष्ठन्ते निवृत्तव्यापाराणि भवन्तीत्यन्वयः। बुद्धिश्चेति। येन येनेन्द्रियेण सहकृता विषयपरिच्छेदाय प्रभवति तेन तेन सहावतिष्ठते निवृत्तव्यापारा भवतीत्यर्थश्चकाराद्गम्यते। परमां गतिमिति। उत्कृष्टफलसाधनत्वा-त्परमत्वम्॥ १० ॥

वियोगमेव सन्तं योगमिति विरुद्धलक्षणया मन्यन्त इत्युक्तं तत्स्फुटयति—सर्वानर्थेति। यद्यद्वाह्यं घटादि तत्तदहं न भवामि यथा तथाऽस्मिन्नपि संघाते यद्यद्दृश्यं तत्तदहं न भवामि किन्तु पूर्णं ब्रह्मास्मीत्येवमाकारवृत्तौ चित्तं योजयेत्तच्चित्तं विषयेषु विक्षिप्तं चेत्स्याद्विषयदोषदर्शनेन व्यावर्तयेद्व्यावृत्तं रागादिमच्चेत्स्यात्साऽपि कषाया-वस्था ततो निरुद्धं मनो यदा न जागर्ति न स्वपिति न चान्तरालावस्थं भवति न च रसास्वादयुक्तं पूर्णब्रह्माव-भासकतयैव क्षीणं भवति तदा सर्वेभ्योऽनर्थेभ्यो वियोगोऽसम्बन्ध एव लक्षणं स्वरूपं यस्याः सा तादृशी भवतीत्यर्थः। हिशब्दो वेदान्तप्रसिद्धद्योतकः। अस्या अवस्थायाः प्रयोजनमाह—एतस्यामिति। लयविक्षेपकषाय-रसास्वादवर्जितायाम्। आत्मा ज्ञातुं शक्यत इति शेषः। कथंभूत आत्मेत्यत आह—अविद्याध्यारोपणेति। क्वचिद-विद्याध्यारोपणवर्जिता स्वरूपप्रतिष्ठाऽऽत्मन इति पाठान्तरम्। पूर्वोक्तामवस्थां विशिनष्टि—स्थिरामिति। योगारम्भ-काले प्रमादवर्जनं श्रुतिर्विधत्त इत्याह—अप्रमत्त इति। सामर्थ्यादिति। प्रमादवर्जनमन्तरा योगस्य दुष्प्रापत्वादि-त्यर्थः। ननु योगोत्तरकालमेवाप्रमादो विधीयतामित्याशङ्क्याह—न हीत्यादिना। अभाव इति पदच्छेदः। योगा-रम्भकाले प्रमादवर्जनं विधेयतया व्याख्यायानुवादपरतया व्याचष्टे—अथवेति। विधिपक्षे हेतुं पृच्छति—कुत इति॥ ११ ॥

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

बुद्ध्यादिचेष्टाविषयं चेद्ब्रह्मैवं तदिति विशेषतो गृह्येत बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं
नास्त्येव ब्रह्म । यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके विपरीतं चासदित्यतश्चानर्थको योगः, अनुपलभ्यमानत्वाद्वा
नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्त इदमुच्यते । सत्यम्—नैव वाचा न मनसा न चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्यत
५ इत्यर्थः । तथाऽपि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात् । तथा
हीदं कार्यं सूक्ष्मतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति । यदाऽपि विषयप्रविलापनेन प्रविलाप्य-
माना बुद्धिस्तदाऽपि सा सत्प्रत्ययगर्भैव विलीयते । बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे । मूलं चेज्जगतो न
स्यादसदन्वितमेवेदं कार्यमसदित्येवं गृह्येत न त्वेतदस्ति सत्सदित्येव तु गृह्यते । यथा मृदादिकार्यं घटादि मृदाद्यन्वितम् ।
तस्माज्जगतो मूलमात्माऽस्तीत्येवोपलब्धव्यः । कस्मात् । अस्तीति ब्रुवतोऽस्तित्ववादिन आगमार्थानुसारिणः
१० श्रद्दधानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा निरन्वयमेवेदं कार्यमभावान्तं प्रविलीयत इति मन्यमाने
विपरीतदर्शिनि कथं तद्ब्रह्म तत्त्वत उपलभ्यते न कथञ्चनोपलभ्यत इत्यर्थः ॥ १२ ॥

आनन्दगिरिटीका

उत्तरमन्त्रमवतारयितुं शङ्कामुद्भावयति—बुद्ध्यादिचेष्टाविषयं चेदिति । घटोऽस्तीति प्रतिपन्नस्य घटस्य
मुद्गराभिघाताद्विलापने घटाकार एव विलीयते नास्तित्वांशस्तस्य कपालादावप्यनुवृत्तिदर्शनात् । अतः कार्य-
१५ विलापनस्यास्तित्वनिष्ठत्वान्न शून्यतापर्यवसायी लय इत्युक्तमेतत्स्फुटयति—तथा हीति । स्थूलस्य कार्यस्य विलये
सूक्ष्मं तत्कारणमवशिष्यते तस्यापि विलये ततः सूक्ष्ममिति यावद्दर्शनं व्याप्तिमुपलभ्य यत्र न दृश्यते तत्रापि मूर्त-
विलयस्यावश्यम्भावित्वात्सन्मात्रमेवामूर्तमवतिष्ठत इति कार्यमेव सूक्ष्मतारतम्यपारम्पर्येणानुस्रियमाणं सद्बुद्धि-
निष्ठां पुरुषस्य गमयतीत्यर्थः । ननु यद्दृश्यं तदसद्यथा स्वप्नदर्शनमिति व्याप्तिदर्शनादस्तित्वेन दृश्यस्या-
सत्त्वात्सद्बुद्धिरपि नास्त्येवेत्याशङ्क्याऽऽह—यदाऽपीति । सद्बुद्धिरपि नास्तीत्येवम्भूतः प्रत्ययोऽवश्यमस्तीत्यभ्युप-
२० गन्तव्यम् । अन्यथा निषेधव्यवहारायोगात् । अतोऽन्ततो गत्वा सद्बुद्धिः स्वीकृता स्यादित्यर्थः । ततः किमित्यत
आह—बुद्धिर्हीति । व्यभिचारिष्वपि विषयेषु सन्मात्रबुद्धेरव्यभिचारदर्शनाद्बुद्धेश्च स्वतः प्रामाण्यात्सन्मात्रं वस्त्वभ्युप-
गन्तव्यमित्यर्थः । इतश्च सदेव मूलं जगतो वाच्यमित्याह—मूलं चेदिति । नास्ति जगतो मूलं ब्रह्मेत्यवगमेऽपि
प्रतियोगितया ब्रह्मज्ञानसम्भवात्किमिति मुमुक्षुणा ब्रह्मज्ञानकामेनास्तीत्येवोपलब्धव्यमित्याह—कस्मादिति । प्रति-
योगितया ज्ञानस्य निषेध्यत्वादात्मतया ज्ञानं न स्यादतो ब्रह्मज्ञानकामेनास्ति जगन्मूलमित्यवगन्तव्यमेवेत्याह—
२५ अस्तीति ब्रुवत इत्यादिना ॥ १२ ॥

गोपालयतीन्द्रटीका

उत्तरमन्त्रमवतारयितुं शङ्कामुद्भावयति—बुद्ध्यादिचेष्टाविषयं चेदिति । घटोऽस्तीति प्रतिपन्नस्य घटस्य
मुद्गरप्रहाराद्विलापने घटाकार एव प्रविलीयते नास्तित्वांशस्तस्य कपालादावप्यनुवृत्तिदर्शनादतः कार्यप्रवि-
लापस्यास्तित्वनिष्ठत्वान्न शून्यतापर्यवसायी लय इत्युक्तम् । एतत् स्फुटयति—तथा हीति । स्थूलस्य कार्यस्य विलये सूक्ष्मं
३० तत्कारणमवशिष्यते तस्यापि विलये ततः सूक्ष्ममिति यावद्दर्शनं व्याप्तिमुपलभ्य यत्र न दृश्यते तत्रापि मूर्त-
विलयस्यावश्यम्भावित्वात्सन्मात्रमेवामूर्तमवतिष्ठत इति कार्यमेव सूक्ष्मतारतम्यपारम्पर्येणानुभूयमानं सद्बुद्धिनिष्ठां
पुरुषस्य गमयतीत्यर्थः । ननु यद्दृश्यं तदसद्यथा स्वप्नदृश्यमिति व्याप्तिदर्शनादस्तित्वेन दृश्यस्य सर्वस्यासत्त्वा-
त्सद्बुद्धिरपि नास्त्येवेत्याशङ्क्याऽऽह—यदाऽपीति । सद्बुद्धिरपि नास्तीत्येवं प्रत्ययोऽवश्यमभ्युपगन्तव्योऽन्यथा
निषेधव्यवहारायोगात् । अन्ततो गत्वा सद्बुद्धिः स्वीकृता स्यादित्यर्थः । ततः किमित्यत आह—बुद्धिर्हीति ।
३५ व्यभिचारिष्वपि विशेषेषु सन्मात्रबुद्धेरव्यभिचारदर्शनाद्बुद्धेश्च स्वतः प्रामाण्यात्सन्मात्रं वस्त्वभ्युपगन्तव्यमित्यर्थः ।
इतश्च सदेव जगतो मूलं वाच्यमित्याह—मूलं चेदिति । ननु नास्ति यज्जगतो मूलं ब्रह्मेत्यवगमेऽपि प्रतियोगितया
ब्रह्मज्ञानसम्भवात्किमिति मुमुक्षुणा ब्रह्मज्ञानकामेनास्तीत्येवोपलब्धव्यमित्यत आह—कस्मादिति । प्रतियोगितया
ज्ञानस्य निषिद्धत्वादात्मतया ज्ञानं न स्यादतो ब्रह्मज्ञानकामेनास्ति मूलं जगत इत्यवगन्तव्यमित्याह—अस्तीति
ब्रुवत इत्यादिना । तस्मादस्तीति ब्रुवत इति पाठस्त्वनारूढः ॥ १२ ॥

[1]अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥
[2]यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

तस्मादपोह्यासद्वादिपक्षमासुरमस्तीत्येवाऽऽत्मोपलब्धव्यः सत्कार्यो बुद्ध्याद्युपाधिः । यदा तु तद्रहितोऽविक्रिय आत्मा कार्यं च कारणव्यतिरेकेण नास्ति "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति श्रुतेस्तदा तस्य निरुपाधिकस्यालिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्याऽऽत्मनस्तत्त्वभावो भवति । तेन च रूपेणाऽऽत्मोपलब्धव्य इत्यनुवर्तते । तत्राप्युभयोः सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयोः । निर्धारणार्था षष्ठी । पूर्वमस्तीत्येवोपलब्धस्याऽऽत्मनः सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थः । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभावो नेति नेतीत्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्येऽनिरुक्तेऽनिलयन इत्यादिश्रुतिनिर्दिष्टः प्रसीदत्यभिमुखी भवति आत्मप्रकाशनाय । पूर्वमस्तीत्युपलब्धवत इत्येतत् ॥ १३ ॥

एवं परमार्थदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्यन्ते येऽस्य प्राक्प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिताः । बुद्धिर्हि कामानामाश्रयो नाऽऽत्मा । 'कामः सङ्कल्प' इत्यादिश्रुत्यन्तराच्च । अथ तदा मर्त्यः प्राक्प्रबोधादासीत्स प्रबोधोत्तरकालमविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो भवति, गमनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्तेरत्रेहैव प्रदीपनिर्वाणवत्सर्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥१४॥

आनन्दगिरिटीका

सोपाधिकस्याऽऽत्मनो ज्ञानान्मुक्त्यसम्भवान्निरुपाधिकज्ञानायापि प्रयतितव्यमित्याह—यदा त्विति । सोपाधिके प्रथमं स्थिरीभूतस्य तद्द्वारेण लक्ष्यपदार्थावगमे सति क्रमेण वाक्यार्थावगतिः सम्भाव्यत इत्याह—तत्राप्युभयोरित्यादिना । सदुपलभ्यमानं कार्यमुपाधिर्यस्य कारणत्वस्य तत्कृतो योऽस्तित्वप्रत्ययः कारणत्वादस्ति पर आत्मेति तेनोपलब्धस्येति योजना ॥ १३ ॥

सर्वे कामा इति । प्रवृत्तफलकर्मोपस्थापिते शरीरस्थितिनिमित्तान्नपानादौ प्रवृत्तिकारणेच्छाव्यतिरिक्ताः सर्वे कामाः काम्येन ज्योतिष्टोमादिना स्वर्गं प्राप्स्यामि त्रैपुर्याराधनेन जनं वशीकरिष्यामीत्येवमादयः; स्वर्गादिदेहेष्वप्यहमेव तिष्ठामि तद्भोगाश्च प्राप्ता एवाप्राप्तविषयश्च कामो व्यर्थो मिथ्या चासाविति विचारेण विशीर्यन्त इत्यर्थः । कामाश्रय आत्मेति वैशेषिकमतं श्रुतिबाह्यत्वान्नाऽऽदरणीयमेवेत्याह—बुद्धिर्हीति ॥ १४ ॥

गोपालयतीन्द्रटीका

सोपाधिकस्याऽऽत्मनो ज्ञानान्मुक्त्यसम्भवान्निरुपाधिकज्ञानाय प्रयतितव्यमित्याह—यदा त्विति । सोपाधिके प्रथमं स्थिरीभूतस्य तद्द्वारेण लक्ष्यपदार्थावगमे सति क्रमेण वाक्यार्थावगमः सम्भवतीत्याह—तत्राप्युभयोरित्यादिना । सदुपलभ्यमानं कार्यमुपाधिर्यस्य कारणत्वस्य तत्कृतोऽस्तित्वप्रत्ययः कारणत्वादस्ति पर आत्मेत्युपलब्धस्येति योजना ॥ १३ ॥

सर्वे कामा इति । प्रवृत्तकर्मतत्फलोपस्थापिते शरीरस्थितिनिमित्तान्नपानादौ प्रवृत्तिकारणेच्छाव्यतिरिक्ताः सर्वे कामाः काम्येन ज्योतिष्टोमादिना स्वर्गं प्राप्स्यामीति त्रिपुर्याराधनेन जनं च वशीकरिष्यामीत्येवमादयः । स्वर्गादि-

१. अस्तीत्येवोपलब्धव्यः सविशेषरूपेणात्मा ज्ञातव्यः तत्प्रसादात् तत्त्वभावेन पारमार्थिकब्रह्मरूपेण चेति भाष्यम् । अत्र रामानुजीयाः—भावरूपेण हेयप्रत्यनीकाभावरूपेण चेति । भावरूपेणोपलब्धस्याभावरूपं प्रसीदतीत्यर्थः इत्यूचुः । सत्यज्ञानादिभावरूपेणोपलब्धौ इतरव्यावृत्तिः अर्थादेव सिध्यति, अतः तत्त्वभावेनेति वैयर्थ्यम् तन्मते । तत्त्वं भावयति सम्पादयतीति तत्त्वभावः स विष्णुः प्रसीदतीति माध्वव्याख्यानं तु अशब्दार्थत्वाच्चिन्त्यम् ।

२. 'अत्र ब्रह्म समश्नुत' इत्यस्यानुभवतीति रामानुजीयव्याख्यानं न युक्तम् । 'ब्रह्मविद् ब्रह्मैव भवती'ति श्रुत्यनुरोधात् ब्रह्मणः विभुत्वाच्च अत्रैव ब्रह्मप्राप्तेरभिप्रेतत्वात् । 'ब्रह्मैव सन् ब्रह्माप्येती'त्यपि अत्रैव ब्रह्मप्राप्तिबोधकं श्रुत्यन्तरम् । यदपि माध्वव्याख्यानं—अत्र श्वेतद्वीपे ब्रह्म प्राप्नोतीति तदपि न, इदमः प्रत्यक्षविषयार्थकत्वेन परोक्षश्वेतद्वीपार्थत्वाभावात् ।

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ १५ ॥
[1]शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

कदा पुनः कामानां मूलतो विनाश इत्युच्यते—यदा सर्वे प्रभिद्यन्ते भेदमुपयान्ति विनश्यन्ति हृदयस्य
५ बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवदृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थः। अहमिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमादिलक्षणास्तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्यसंसारीति। विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ताः कामाः मूलतो विनश्यन्ति। अथ मर्त्योऽमृतो भवत्येतावद्ध्येतावदेवैतावन्मात्रं नाधिकमस्तीत्याशङ्का कर्तव्या। अनुशासनमनुशिष्टिरुपदेशः सर्ववेदान्तानामिति वाक्यशेषः ॥ १५ ॥

निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न
१० गतिर्विद्यत इत्युक्तमत्र ब्रह्म समश्नुत इत्युक्तत्वात् 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येती'ति श्रुत्यन्तराच्च। ये पुनर्मन्दब्रह्मविदो विद्यान्तरशीलिनश्च ब्रह्मलोकभाजो ये च तद्विपरीताः संसारभाजस्तेषामेष गतिविशेष उच्यते प्रकृतोत्कृष्टब्रह्मविद्याफलस्तुतये। किञ्चान्यदग्निविद्या पृष्टा प्रत्युक्ता च। तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः। तत्र—शतं च शतसंख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्धानं भित्त्वाऽभिनिःसृता निर्गता सुषुम्ना नाम। तयाऽन्तकाले हृदय आत्मानं वशीकृत्य योजयेत्। तया
१५ नाड्योर्ध्वमुपर्यायन्गच्छन्नादित्यद्वारेणामृतत्वममरणधर्मत्वमापेक्षिकम्। 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत' इति

आनन्दगिरिटीका

कामप्रविलयस्य सुषुप्तेऽपि भावादमृतत्वचिह्नत्वं न भवतीति मत्वाऽऽह—कदा पुनरिति ॥ १५ ॥

प्रकरणविच्छेदेनोक्तस्य सम्बन्धं दर्शयति—निरस्ताशेषेत्यादिना। यदभाणि भास्करेण प्रकरणाद्ब्रह्मविद्विषयैवेयं गतिरिति। तदसद्। गतिश्रवणेन लिङ्गेन परिच्छिन्ने गमनयोग्येऽस्या गतेः सम्बन्धावगमे सति दुर्बलेन
२० प्रकरणेन प्रकृतब्रह्मवित्सम्बन्धानुपपत्तेः। नाड्यन्तराणामपि तत्सम्बन्धप्रसङ्गाच्छ्रुतिविरुद्धत्वप्रसङ्गाच्च। विस्तरश्च [2]प्रकटार्थे द्रष्टव्यः ॥ १६ ॥

गोपालयतीन्द्रटीका

देहेष्वहमेव तिष्ठामि भोगश्च प्राप्ते विषयेऽप्राप्तविषयश्च कामो व्यर्थो मिथ्या चासाविति विचारेण विशीर्यन्त इत्यर्थः। कामाद्याश्रय आत्मेति वैशेषिकमतं श्रुतिबाह्यत्वादनादरणीयमित्याह—बुद्धेरिति ॥ १४ ॥
२५ कामप्रविलयस्य सुषुप्तेऽपि भावादमृतत्वज्ञापकत्वं न सम्भवतीति मत्वाऽऽह—कदा पुनरिति। अविद्याप्रत्ययान्विशिनष्टि—अहमिदमित्यादिना। आत्मप्रत्ययेन तन्नाशं दर्शयन्कामोच्छित्तिमाह—तद्विपरीतेत्यादिना। इति प्रत्ययोपजननादिति सम्बन्धः। अथ तदेत्यर्थः। उपदिश्यत इति व्युत्पत्त्या प्रत्यगभिन्नः परमात्माऽभिधीयते ॥ १५ ॥

प्रकरणविच्छेदोक्तस्य सम्बन्धं दर्शयति—निरस्ताशेषेत्यादिना। निरस्ता अशेषविशेषा यस्मात्तथा तच्च

---

१. अस्यामुपनिषदि निर्गुणब्रह्मविद्यैव मृत्युना प्रोक्ता। नचिकेतास्च श्रुत्वा ब्रह्मप्राप्तः विरजोऽभूदित्युच्यते
३० न तु नाडीद्वारा ब्रह्मलोकं गत इति। अत एव शतं चैका चेति सुषुम्नानाडीद्वारा मूर्धानं भित्वा ऊर्ध्वं गच्छन् अमृतत्वमेतीति श्रुतं ब्रह्मलोकप्राप्तिरूपममृतत्वं सगुणब्रह्मोपासकविषयमेव। अत्र अग्निविद्याशेषत्वेन स्तुत्यर्थत्वेन वा उच्यते। सगुणोपासकानां सुषुम्नाद्वारा गमनं तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया इति मार्गपादगतसूत्रे विवृतम्।

२. तत्र हि उक्तम्—मुख्यब्रह्मविदः ब्रह्मलोकप्राप्त्युपगमे पञ्चाग्निविद्याविदामपि ब्रह्मलोकप्राप्तौ तमेवविदित्वेत्यादिशास्त्रविरोधः। अप्राप्तौ स एनान् ब्रह्मगमयतीति शास्त्रविरोधः। अपि च परब्रह्मप्राप्तानां
३५ ब्रह्मलोकगतोपचितापचितैश्वर्ये ब्रह्मणः सर्वेश्वरत्वबाधः। एकरूपैश्वर्ये गुणप्रत्ययवृत्त्युपचयापचयसाधनवैषम्यवैयर्थ्यम्। अपि च परब्रह्मभूतस्य मनः शरीरवत्तया भोगाभ्युपगमे 'अथायमशरीरोऽमृतः' इति श्रुतिविरोधः। अशरीरत्वे 'स एकधा भवति त्रिधा' 'मनसैतान् कामान् पश्यन् रमते' इत्यादि श्रुतिविरोधः इत्यादि (ब्र० सू० ४.३.७)।

[1]अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥

मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

स्मृतेः । ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान्ब्रह्मलोकगतान् । विष्वङ्नानाविष- ५
गतयोऽन्या नाड्य उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः ॥ १६ ॥

इदानीं सर्ववल्ल्यर्थोपसंहारार्थमाह—अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां सम्बन्धिनि हृदये संनिविष्टो यथाव्याख्यातस्तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेन्निष्कर्षेत्पृथक्कुर्यादित्यर्थः । किमिवेत्युच्यते—मुञ्जादिवेषीकामन्तस्थां धैर्येणाप्रमादेन । तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रममृतं यथोक्तं ब्रह्मेति । द्विर्वचनमुपनिषत्परि-
समाप्त्यर्थमितिशब्दश्च ॥ १७ ॥ १०

विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते—मृत्युप्रोक्तां यथोक्तामेतां ब्रह्मविद्यां योगविधिं च कृत्स्नं समस्तं सोपकरणं सफलमित्येतत् । नाचिकेतो वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः । किम् । ब्रह्मप्राप्तोऽभून्मुक्तोऽभव-
दित्यर्थः । कथम् । विद्याप्राप्त्या विरजो विगतधर्माधर्मो विमृत्युर्विगतकामाविद्यश्च सन्पूर्वमित्यर्थः । न केवलं नाचिकेत एवान्योऽपि नाचिकेतवदात्मविदध्यात्ममेव निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तत्त्वमेवेत्यभिप्रायः । नान्यद्रूपमप्रत्यग्रूपम् ।
तदेवमध्यात्ममेवमुक्तप्रकारेण वेद विजानातीत्येवंवित्सोऽपि विरजः सन्ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः॥१८॥ १५

आनन्दगिरिटीका

आत्मानं देहमधिकृत्य वर्तत इत्यध्यात्मम् । प्रत्यक्स्वरूपमेव ब्रह्म प्राप्य विमृत्युर्भवति नान्यद्रूपमर्चिरादि-
मार्गगम्यं प्राप्य संयोगस्य वियोगावसानत्वादित्यर्थः । एवंशब्दस्य विच्छब्देन सह सबन्ध एवंविदिति ॥१७-१८-१९॥

इति काठकोपनिषद्भाष्यटीकायां द्वितीयाध्याये तृतीया वल्ली समाप्ता

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते २०
काठकोपनिषद्भाष्यव्याख्याने द्वितीयाध्यायः समाप्तः

गोपालयतीन्द्रटीका

तद्यथापि च तदेव ब्रह्म तस्याऽऽत्मत्वेन प्रतिपत्तिरुपलब्धिस्तया, प्रभिन्नाः समस्ता अविद्याकामकर्मादय एव ग्रन्थयो यस्मात्स तथोक्तस्तस्य ॥ १६ ॥

आत्मानं देहमधिकृत्य वर्तत इत्यध्यात्मम् । प्रत्यक्स्वरूपं ब्रह्म प्राप्य विमृत्युर्भवति नान्यद्रूपमर्चिरादि- २५
मार्गगम्यं प्राप्य संयोगस्य वियोगावसानत्वादित्यर्थः ॥ १७-१८ ॥

---

१. अत्राङ्गुष्ठमात्रो न परमात्मा अपितु जीव एवं तं स्वाच्छरीरात् प्रवृहेत् इत्युत्तरत्र स्वीयाच्छरीरादित्युक्तेः। नहीश्वरस्येदं शरीरम् । अतः पूर्वत्राप्यङ्गुष्ठमात्रो जीव एवेति सिद्धम् । जीवस्य शरीरात् पृथक्करणं शरीराद्विभिन्नत्वेन ज्ञानम् । एवं विविक्तस्य शुक्रब्रह्माभेदज्ञानमन्ते उक्तम् । यत्तु स्वात् इत्यनेन पूर्व-
प्रकृतान्तरात्मनिर्देशः तदीयशरीरात् जीवात् तं भेदेन जानीयादित्यर्थ इति । तन्न । देवदत्तः स्वगृहात् ३०
गच्छेत् इत्युक्ते स्वपदस्य तद्घटितवाक्यार्थविशेष्यपरामर्शकत्वदर्शनात् । तेन यः प्रवृहणकर्ता जीवः तमेव परामृशेत्, जीवः स्वशरीरादात्मानं पृथक्कुर्यादित्यर्थः तदुक्तं गदाधरीये शक्तिवादे—"साक्षा-
त्परम्परया वा यः स्वार्थस्य विशेष्यः यश्च समभिव्याहृतक्रियाकारकपदार्थः तदुभयत्र स्वपदशक्तिः" इति। अन्तरात्मा यो हृदये संनिविष्टः सः न स्वार्थस्य विशेष्यः अपितु जीव एव, यः विशेष्यः पृथक्करणकर्ता।
नापि अन्तर्यामी तस्याः क्रियायाः कारक इति, न स्वपदेन ग्रहीतुं शक्यः, अतो जीव एव स्वशरीरा- ३५
दात्मानं पृथग्ज्ञात्वा तं ब्रह्मेति विजानीयादित्यर्थः ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ १९ ॥

ॐ शान्तिः शान्तिः शान्तिः

इति काठकोपनिषदि द्वितीयाध्याये तृतीया वल्ली समाप्ता

शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रशमनार्थेयं शान्तिरुच्यते—सह नावावामवतु
५ पालयतु विद्यास्वरूपप्रकाशनेन । कः । स एव परमेश्वर उपनिषत्प्रकाशितः । किञ्च सह नौ भुनक्तु तत्फलप्रकाशनेन
नौ पालयतु । सहैवाऽऽवां विद्याकृतं वीर्यं सामर्थ्यं करवावहै निष्पादयावहै । किञ्च तेजस्विनौ तेजस्विनोरावयोर्यदधीतं
तत्स्वधीतमस्तु । अथवा तेजस्वि नावावाभ्यां यदधीतं तदतीव तेजस्वि वीर्यवदस्त्वित्यर्थः । मा विद्विषावहै शिष्या-
चार्यावन्योन्यं प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्तं द्वेषं मा करवावहा इत्यर्थः । शान्तिः शान्तिः शान्तिरिति
त्रिर्वचनं सर्वदोषोपशमनार्थमित्योमिति ॥ १९ ॥

१० इति काठकोपनिषद्भाष्ये द्वितीयाध्याये तृतीया वल्ली समाप्ता

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ
काठकोपनिषद्भाष्ये द्वितीयोऽध्यायः समाप्तः

गोपालयतीन्द्रटीका

विद्याग्रहणनिमित्तः शिष्यस्य दोषो विद्याप्रतिपादनं प्रदानं शिष्येभ्यस्तन्निमित्त आचार्यस्य दोषस्तदुभय-
१५ प्रशमनार्थेत्यर्थः । कर्ता क इत्याकाङ्क्षायां प्रकरणादीश्वर इत्याह—स एवेति । तेजस्विनावित्येकं पदं षष्ठ्यर्थे
व्याख्याय नावितिपदं छित्वा तृतीयार्थे व्याख्यानपूर्वकं तेजस्विपदमधीतमित्यस्य विशेषणं करोति—अथवेत्यादिना ।
सर्वदोषेति । आध्यात्मिकाधिभौतिकाधिदैविकदोषप्रशमनार्थमित्यर्थः । ओंशब्दो मङ्गलप्रयोजनः कृत्स्नोपनिषदर्थ-
स्मारकः । इतिशब्दो भाष्यसमाप्तिद्योतनप्रयोजन इति बोध्यम् ॥ १९ ॥

कठवल्लीभाष्यटीका कृता गोपालयोगिना ।
२० अनया प्रीयतां देवो दक्षिणाशामुखः शिवः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते काठकोपनिषद्भाष्यविवरणे
द्वितीयाध्याये तृतीयावल्ली समाप्ता

ॐ

अथर्ववेदीया

# मुण्डकोपनिषत्[1]

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः॥

ॐ शान्तिः शान्तिः शान्तिः

ॐ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह॥ १॥ ५

## श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

[2]ॐ ब्रह्मा देवानामित्याद्याथर्वणोपनिषत्। अस्याश्च विद्यासम्प्रदायकर्तृत्वपारम्पर्यलक्षणसम्बन्धमादावेवाऽऽह स्वयमेव स्तुत्यर्थम्; एवं हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति। श्रोतृबुद्धिप्ररोचनाय

## श्रीमदानन्दगिर्याचार्यकृता टीका

यदक्षरं परं ब्रह्म विद्यागम्यमितीरितम्। यस्मिन् ज्ञाते भवेज्ज्ञातं सर्वं तत्स्यामसंशयम्॥ १॥ १०

ब्रह्मोपनिषद्गर्भोपनिषदाद्या अथर्वणवेदस्य बह्वय उपनिषदः सन्ति। तासां शारीरकेऽनुपयोगित्वेनाव्याचिख्यासितत्वाददृश्यत्वादिगुणको धर्मोक्तेरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्यासितस्य प्रतीकमादत्ते—ब्रह्मा देवानामित्याद्याथर्वणोपनिषदिति। व्याचिख्यासितेति शेषः। नन्वियमुपनिषन्मन्त्ररूपा मन्त्राणां चेषे त्वेत्यादीनां कर्मसम्बन्धेनैव प्रयोजनवत्त्वम्। एतेषां च मन्त्राणां कर्मसु विनियोजकप्रमाणानुपलम्भेन तत्सम्बन्धासम्भवान्निष्प्रयोजनत्वाद्व्याचिख्यासितत्वं न सम्भवतीति शङ्कमानस्योत्तरम्। सत्यं, कर्मसम्बन्धाभावेऽपि ब्रह्मविद्याप्रकाशन- १५ सामर्थ्याद्विद्यया सम्बन्धो भविष्यति। ननु विद्यायाः पुरुषकर्तृकत्वात्तत्प्रकाशकत्वेऽस्या उपनिषदोऽपि पौरुषेयत्वप्रसङ्गात्पाक्षिकपुरुषदोषजत्वशङ्कयाऽप्रामाण्याद्व्याचिख्यासितत्वं नोपपद्यत इत्याशङ्क्याऽऽह—अस्याश्चेति। विद्यायाः सम्प्रदायप्रवर्तका एव पुरुषा न तूत्प्रेक्षया निर्मातारः। सम्प्रदायकर्तृत्वमपि नाधुनातनं येनानाश्वासः स्यात्। किंत्वनादिपारम्पर्यागतम्। ततोऽनादिप्रसिद्धब्रह्मविद्याप्रकाशनसमर्थोपनिषदः पुरुषसम्बन्धः सम्प्रदायकर्तृत्वपारम्पर्यलक्षण एव तमादावेवाऽऽहेत्यर्थः। विद्यासम्प्रदायकर्तृत्वमेव पुरुषाणां यथा विद्यायाः पुरुषसम्बन्धस्तथैवोप- २० निषदोऽपि। यदि पुरुषसम्बन्धो विवक्षितः, पौरुषेयत्वपरिहाराय तर्हि तथाभूतसम्बन्धाभिधायकेनान्येन भवितव्यं स्वयमेव स्वसम्बन्धाभिधायकत्वे [3]स्ववृत्तिप्रसङ्गादित्याशङ्क्याऽऽह—स्वयमेव स्तुत्यर्थमिति। विद्यास्तुतौ तात्पर्यान्न

---

1. यद्यपि प्रश्नानन्तरं मुण्डकोपनिषदन्यत्र मुद्रिता। प्राचीनश्लोके च ईशकेनकठप्रश्नमुण्डकेति क्रमो वर्तते तथापि प्रश्नस्य मुण्डकव्याख्यारूपत्वादस्मिन् संस्करणे मन्त्ररूपमुण्डकस्यादौ निवेशः कृतः। अयमेव क्रमो युक्तः। मन्त्रपठनानन्तरमेव तद्व्याख्यारूपब्राह्मणपठनात्। २५
2. आरम्भे ओमिति मङ्गलार्थम्।
3. स्ववृत्तिप्रसङ्गात् आत्माश्रयेत्यर्थः। यथा सुशिक्षितोऽपि नटः स्वस्कन्धमारोढुं स्वस्मिन् वर्तितुमशक्तस्तथात्र "कस्मिंन्नु भगवो विज्ञाते" इत्यारभ्य प्रवृत्तब्रह्मविद्यायाः ब्रह्माऽऽदयः प्रवर्तकाः। तेषामत्र पठने के प्रवर्तका? इति प्रश्ने स्वयमेवेति वक्तव्यं यथा "स्वाध्यायोऽध्येतव्य" इति विधिः स्वस्वेतरसकलवेदाध्ययने प्रवर्तयति। एतद्विधौ किं प्रवर्तकमिति पृष्टे स्वयमेवेति वक्तव्यं तथाचागतं स्वस्यैव स्वप्रवर्त- ३० कत्वरूपं स्ववृत्तित्वम्। एवमत्र स्वसिद्ध्यधीनसिद्धिकत्वं स्ववृत्तिः पुरुषसम्बन्धाभिधानप्रामाण्यमुपनिषत्प्रामाण्ये सति निर्वहति। उपनिषत्प्रामाण्यं ब्रह्मादिसम्प्रदायकर्तृप्रोक्तत्वे सति भवतीत्यात्माश्रय इत्यर्थः। विद्यास्तुतावस्य तात्पर्यं न तु प्रामाण्ये, अतो न दोषः।

विद्यां महीकरोति। स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्निति। प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षण-
सम्बन्धमुत्तरत्र वक्ष्यति—"भिद्यते हृदयग्रन्थिः" इत्यादिना। अत्र चापरशब्दवाच्यायामृग्वेदादिलक्षणायां विधि-
प्रतिषेधमात्रपरायां विद्यायां संसारकारणाविद्यादिदोषनिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा परापरविद्याभेदकरण-
पूर्वकमविद्यायामन्तरे वर्तमाना इत्यादिना तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसादलभ्यां
५ ब्रह्मविद्यामाह—परीक्ष्य लोकानित्यादिना। प्रयोजनं चासकृद्ब्रवीति ब्रह्म वेद ब्रह्मैव भवतीति। परामृताः परिमुच्यन्ति
सर्वे इति च। ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारस्तथाऽपि संन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति
भैक्षचर्यां चरन्तः संन्यासयोगादिति च ब्रुवन्दर्शयति। विद्याकर्मविरोधाच्च। न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म
स्वप्नेऽपि सम्पादयितुं शक्यम्। विद्यायाः कालविशेषाभावादनियतनिमित्तत्वात्कालसङ्कोचानुपपत्तिः। यत्तु गृहस्थेषु

स्ववृत्तिर्दोष इत्यर्थः। स्तुतिर्वा किमर्थेत्यत आह—श्रोतृबुद्धीति। [1]प्रवर्तेरन्निति पाठो युक्तः। 'वृतु'धातोरात्मने-
१० पदित्वात्। विद्याया यत्प्रयोजनं तदेवास्या उपनिषदोऽपि प्रयोजनं भविष्यतीत्यभिप्रेत्य विद्यायाः प्रयोजनसम्बन्ध-
माह—प्रयोजनेन त्विति। संसारकारणनिवृत्तिर्ब्रह्मविद्याफलं चेत्तर्ह्यपरविद्ययैव तन्निवृत्तेः सम्भवान्न तदर्थं ब्रह्म-
विद्याप्रकाशकोपनिषद्व्याख्यातव्येत्याशङ्क्याऽऽह—अत्र चेति। संसारकारणमविद्यादिदोषस्तन्निवर्तकत्वमपरविद्यायाः
कर्मात्मिकाया न सम्भवत्यविरोधात्। न हि शतशोऽपि प्राणायामं कुर्वतः शुक्तिदर्शनं विना तदविद्यानिवृत्ति-
र्दृश्यते। ततोऽपरविद्यायाः संसारकारणाविद्यानिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा ब्रह्मविद्यामाहेति सम्बन्धः।
१५ किञ्च परमपुरुषार्थसाधनत्वेन ब्रह्मविद्यायाः परविद्यात्वं निकृष्टसंसारफलत्वेन च कर्मविद्याया अपरविद्यात्वम्। ततः
[2]समाख्याबलादपरविद्याया मोक्षसाधनत्वाभावोऽवगम्यत इत्यभिप्रेत्याऽऽह—परापरेति। यच्चाऽऽहुः कर्मजडाः केवल-
ब्रह्मविद्यायाः कर्तृसंस्कारत्वेन कर्माङ्गत्वात्स्वातन्त्र्येण पुरुषार्थसाधनत्वं नास्तीति तदनन्तरश्रुत्यैव निराकृतमित्याह—
तथा परप्राप्तिसाधनमिति। ब्रह्मविद्यायाः कर्माङ्गत्वे कर्मणो निन्दा न स्यात्। न खल्वङ्गविधानाय प्रधानं विनिन्द्यते
अत्र तु सर्वसाध्यसाधननिन्दया तद्विषयवैराग्याभिधानपूर्वकं परप्राप्तिसाधनं ब्रह्मविद्यामाह—अतो ब्रह्मविद्यायाः
२० स्वप्रधानत्वात्तत्प्रकाशकोपनिषदां न कर्तुः स्तावकत्वमित्यर्थः। यद्युपनिषदां स्वतन्त्रब्रह्मविद्याप्रकाशकत्वं स्यात्तर्हि
तदध्येतॄणां सर्वेषामेव किमिति ब्रह्मविद्या न स्यादित्याशङ्क्याह—गुरुप्रसादलभ्यामिति। गुर्वनुग्रहादिसंस्कारा-
भावात्सर्वेषां यद्यपि न भविष्यति तथाऽपि विशिष्टाधिकारिणां भविष्यतीति भावः। ननु स्वतन्त्रा चेद्ब्रह्मविद्या
तर्हि प्रयोजनसाधनं न स्यात्। सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिनिवृत्तिसाध्यतावगमात्तत्राऽऽह—प्रयोजनं चेति।
स्मरणमात्रेण विस्मृतसुवर्णलाभे सुखप्राप्तिप्रसिद्धेः रज्जुतत्त्वज्ञानमात्राच्च सर्पजन्यभयकम्पादिदुःखनिवृत्तिप्रसिद्धेश्च
२५ न प्रवृत्तिनिवृत्तिसाध्यत्वं प्रयोजनस्यैकान्तिकम्। अतो विश्रब्धं श्रुतिः प्रयोजनसम्बन्धं विद्याया असकृद्ब्रवीति।
तस्मात्तत्प्रकाशकोपनिषदो व्याख्येयत्वं सम्भवतीत्यर्थः। [3]यच्चाऽऽहुरेकदेशिनः स्वाध्यायाध्ययनविधेरर्थावबोधफलस्य
त्रैवर्णिकाधिकारत्वादधीतोपनिषज्जन्ये ब्रह्मज्ञानेऽस्त्येव सर्वेषामधिकारः। ततः सर्वाश्रमकर्मसमुच्चितैव ब्रह्मविद्या
मोक्षसाधनमिति तत्राऽऽह—ज्ञानमात्र इति। सर्वस्वत्यागात्मकसंन्यासनिष्ठैव परब्रह्मविद्या मोक्षसाधनमिति वेदो
दर्शयति। तादृशसंन्यासिनां च कर्मसाधनस्य स्वस्याभावान्न कर्मसम्भवः। आश्रमधर्मोऽपि शमदमाद्युपबृंहित-
३० विद्याभ्यासनिष्ठत्वमेव। तेषां शौचाचमनादिरपि तत्त्वतो नाऽऽश्रमधर्मो लोकसंग्रहार्थत्वात्। ज्ञानाभ्यासेनैवापावनत्व-
निवृत्तेः। "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति स्मरणात्। त्रिषवणस्नानविध्यादेरज्ञसंन्यासिविषयत्वात्।
अतः कर्मनिवृत्त्यैव साहित्यं ज्ञानस्य न कर्मणेत्यर्थः। इतश्च न कर्मसमुच्चिता विद्या मोक्षसाधनमित्याह—विद्या-
कर्मविरोधाच्चेति। अकर्तृ ब्रह्मैवास्मीति करोमि चेति स्फुटो व्याघात इत्यर्थः। यदा ब्रह्मात्मैकत्वं विस्मरति
तदोत्पन्नविद्योऽपि करिष्यति ततः समुच्चयः सम्भाव्यत इति न वाच्यमित्याह—विद्याया इति। ननु गृहस्थाना-

---

३५ १. प्रवर्तेयुरिति पाठं दृष्ट्वेदमुक्तम्।
२. समाख्या—अपरविद्येति यौगिकः शब्दः, तत्रापरत्वं विद्याया मोक्षापेक्षया न्यूनफलकत्वम्।
३. एकदेशिनो भास्करादयः, अधीतेन स्वाध्यायेन प्रयोजनवदर्थज्ञानं सम्पादयेदिति मीमांसकैरुक्तः। केवल-
वेदस्य निष्प्रयोजनत्वात् अनुष्ठानद्वारा स्वर्गादिसाधनमर्थज्ञानमेवोद्देश्यं तथा च वेदान्तानां वेदत्वात्
तदर्थज्ञानं सर्वैः त्रैवर्णिकैः प्रयोजनान्तरमनुद्दिश्यैव सम्पादनीयमित्यर्थः।

ब्रह्मविद्यासम्प्रदायकर्तृत्वादि लिङ्गं न तत्स्यितन्यायं बाधितुमुत्सहते। न हि विधिशतेनापि तमःप्रकाशयोरेकत्र सद्भावः शक्यते कर्तुं किमुत लिङ्गैः केवलैरिति। एवमुक्तसम्बन्धप्रयोजनाया उपनिषदोऽल्पाक्षरं ग्रन्थविवरणमारभ्यते। [1]य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषत्। उपनिपूर्वस्य सदेरेवमर्थस्मरणात्।

ब्रह्मा परिवृढो महान्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिशेत इति। देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः ५ प्रधानः सन्प्रथमोऽग्रे वा सम्बभूवाभिव्यक्तः सम्यक्[2]स्वातन्त्र्येणेत्यभिप्रायः। न तथा यथा धर्माधर्मवशात्संसारिणोऽन्ये जायन्ते। "योऽसावतीन्द्रियोऽग्राह्यः" इत्यादिस्मृतेः। विश्वस्य सर्वस्य जगतः कर्तोत्पादयिता। भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये। स एवं प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्याम् 'येनाक्षरं पुरुषं वेद सत्यम्' इति विशेषणात्परमात्मविषया हि सा। ब्रह्मणा वाऽग्रजेनोक्तेति ब्रह्मविद्या। तां [3]सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात्सर्वविद्याश्रयामित्यर्थः। सर्वविद्यावेद्यं वा वस्त्वनयैव विज्ञायत इति। १०

अङ्गिरःप्रभृतीनां विद्यासम्प्रदायप्रवर्तकत्वदर्शनाद्गृहस्थाश्रमकर्मभिः समुच्चयो लिङ्गादवगम्यत इत्याशङ्क्याऽऽह—यस्त्विति। [4]लिङ्गस्य न्यायोपबृंहितस्यैव गमकत्वाङ्गीकारात्समुच्चये च न्यायाभावात्प्रत्युत विरोधदर्शनान्न लिङ्गेन समुच्चयसिद्धिः। सम्प्रदायप्रवर्तकानां च गार्हस्थ्यस्या[5]ऽऽभासमात्रत्वात्तस्यानुसन्धानेन मुहुर्मुहुर्बाधात्।

[6]"यस्य मे चास्ति सर्वत्र यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते॥"

इत्युद्गारदर्शनात्कर्माभासेन न समुच्चयः स्यात्तत्र च विधिर्न दृश्यत इति भावः। साधितं व्याख्येयत्वमुपसंहरति—एवमिति। ग्रन्थे कथमुपनिषच्छब्दप्रयोग इति शङ्कायामुपनिषच्छब्दवाच्यविद्यार्थत्वाल्लाक्षणिक इति दर्शयितुं विद्याया उपनिषच्छब्दार्थत्वमाह—य इमामिति। आत्मभावेनेति। प्रेमास्पदतयेत्यर्थः। अनर्थपूगं क्लेशसमूहं निशातयति शिथिलीकरोत्यपरिपक्वज्ञानाद्द्वित्रैर्जन्मभिर्मोक्षसम्भवादित्यर्थः। १५

"ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्॥"

इति स्मरणाद्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिक्रम्य वर्तत इति परिवृढत्वं सिद्धमित्यर्थः। २०

---

१. य इमामिति—'षद्लृ' विशरणगत्यवसादनेषु इत्युक्तेः क्रमेणार्थत्रयमपि ब्रह्मविद्यायां योजयति।

२. स्वातन्त्र्येण—न कर्मवश्यतया, आधिकारिकपुरुषो ब्रह्मा, स च स्वातन्त्र्येण गृहादिव गृहान्तरं शरीराणि गच्छति।

३. अत्र विशिष्टाद्वैतिनः सर्वविद्याप्रतिष्ठां सर्वविद्याश्रयां ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानानि अन्तर्भूतानीत्यर्थः इत्यूचुः ( श्रुत. प्र ) तथापि ब्रह्मशरीरभूतचिदचितोः प्रत्येकविशेषज्ञानाभावादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः। अस्मन्मते तु ब्रह्मणि ज्ञाते सर्वस्यापि तत्त्वतो ज्ञातत्वात् ज्ञातव्यान्तराभावात् सर्वविद्यापरिसमाप्तिरेव ब्रह्मज्ञाने सति। २५

माध्वास्तु—सर्वविद्यासाफल्यहेतुः इति व्याचक्रुः। तत् ब्रह्मविद्यां विनापि लौकिकविद्यायाः फलदर्शनात् चिन्त्यम्।

४. केवलं लिङ्गमर्थवादगतत्वसंशयाक्रान्तं न श्रुतिकल्पकमतो न्यायोऽप्यपेक्षितः, विरोधदर्शनात् न समुच्चयप्राप्तिः, अत एवात्र न्यायाभावः। ३०

५. आभासमात्रत्वात् तेषां जनकादीनां गार्हस्थ्यं आभास एव प्रतिभासमात्रं न तु वास्तविकम्। तत्र गमकमाह—"यस्य मे नास्ती"ति। श्रीजनकमहाराजस्येदं वचनं विषयेषु मम सङ्गो नास्ति, असङ्गोऽहमित्यर्थः।

६. "अनन्तं वत मे वित्तं यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते॥" इति श्रीभीष्मेणानूदितम्—अत्र नीलकण्ठी टीका—अनन्तं देशकालवस्तुपरिच्छेदरहितं वित्तमिव गूढं कोशपञ्चकलक्षणगुहास्थं प्रत्यक्त्वमेव मे स्वरूपम्। अत एव सर्वस्य मदनन्यत्वात् रज्जुसर्पवत् मयि कल्पितत्वाच्च मे मम न किञ्चन। तदाह—मिथिलायामिति। न हि अध्यस्तदोषैः अधिष्ठानं स्पृश्यते। ३५

( महाभारते शान्तिपर्वणि १७७ सर्गे )

अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥
शौनको ह वै महाशालोऽङ्गिरसं [1]विधिवदुपसन्नः पप्रच्छ ।
[2]कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

५ "येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्" इति श्रुतेः । सर्वविद्याप्रतिष्ठामिति च स्तौति । विद्यामथर्वाय ज्येष्ठपुत्राय प्राह । ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वमथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राहोक्तवान् ॥ १ ॥

यामेतामथर्वणे प्रवदेतावदद्ब्रह्मविद्यां ब्रह्मा तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरेऽङ्गिर्नाम्ने ब्रह्मविद्याम् । स चाङ्गिर्भारद्वाजाय भरद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने प्राह प्रोक्तवान् । भारद्वाजोऽङ्गिरसे १० स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावरसर्वविद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः ॥ २ ॥

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्यं विधिवद्यथाशास्त्रमित्येतत् । उपसन्नः उपगतः सन्पप्रच्छ पृष्टवान् । शौनकाङ्गिरसोः सम्बन्धादर्वाग्विधिवद्विशेषणादुपसदनविधेः पूर्वेषामनियम इति गम्यते । मर्यादाकरणार्थं मध्यदीपिकान्यायार्थं वा विशेषणम् । [3]अस्मदादिष्वप्युपसदनविधेरिष्टत्वात् । किमित्याह—कस्मिन्नु १५ भगवो विज्ञाते[4] नु इति वितर्के । भगवो हे भगवन्सर्वं यदिदं विज्ञेयं विज्ञातं विशेषेण ज्ञातमवगतं भवतीति । एकस्मिन्

"योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ ।" ( मनु० १.७ )

स्वयमुद्भूतः[5]-शुक्रशोणितसंयोगमन्तरेणाऽऽविर्भूतः—इति स्मृतेः स्वातन्त्र्यं गम्यत इत्यर्थः । वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं ब्रह्मैव ब्रह्मविद्या । तच्च ब्रह्म सर्वाभिव्यञ्जकम् । ततः सर्वविद्यानां व्यञ्जकतयाऽऽश्रीयत इति सर्वविद्याश्रया, अथवा सर्वविद्यानां प्रतिष्ठा पारंसमाप्तिर्भवतियस्यामुत्पन्नायां ज्ञातव्याभावात्सा सर्वविद्याप्रतिष्ठेत्याह— २० सर्वविद्यावेद्यं वेति ॥ १-२ ॥

प्रश्नबीजमाह एकस्मिन्निति । उपादानात्कार्यस्य पृथक्सत्त्वाभावादुपादाने ज्ञाते तत्कार्यं ततः पृथङ्-

१. 'समित्पाणिः' इत्युक्तरीत्या "अधीहि भगव" इति मन्त्रेण च ।

२. एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा छान्दोग्यषष्ठे सम्यगुपपादिता शिष्यप्रश्नोत्तरत्वेन । तत्र हि "येनाश्रुतं श्रुतं भवति" इत्यादिना पित्रा उद्दालकेन एकविज्ञानेन सर्वा ज्ञानमुपक्षिप्तम् । शिष्यः श्वेतकेतुः २५ "कथं नु भगवः स आदेशो भवती"ति पप्रच्छ । तदुत्तरत्वेन "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि"त्यादिना उपादानज्ञानेनोपादेयं सर्वं विज्ञातं भवति । उपादेयं मिथ्या उपादानमेव तु सत्यं तदेव चोपादेयस्य तत्त्वं, ततश्चोपादानज्ञानेनोपादेयं सर्वं तत्त्वतो विज्ञातं भवतीत्युक्तम् ।

अत्रापि "पुरुष एवेदं विश्वम्" इति पुरुषव्यतिरेकेण वस्त्वन्तराभावात् ब्रह्मज्ञानेन सर्वज्ञानमुपपादितम् । मतान्तरे तु घटशरावादयः मृदः अवस्थाविशेषाः पृथक्सत्ताप्रतिपत्तिरहिताः । अतः मृत्सत्तया ३० सत्तावन्तः मृदः ज्ञानेन ज्ञाता भवन्ति । एवमेव जगद्ब्रह्मणोः । न चैवमद्वैतप्रवेशः गुणादिषु द्वित्वादिप्रतीतेर्द्रव्यगतद्वित्वादिविषयत्वेऽपि न रूपादिषु संख्याप्रतीतेर्भ्रमत्वम् । एवं विकारगतसत्ताया न भ्रमसिद्धत्वमित्याहुः । तत्रेदं वक्तव्यं—रूपादिषु संख्याप्रतीतेः साक्षात्सम्बन्धविषयत्वे भ्रमत्वमेव न्यायमते । स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धविषयत्वे प्रपञ्चे ब्रह्मसत्ता परम्परया भातीत्यागतम् । स्वतस्सत्ता नास्तीति च । अद्वैतिनोऽपि प्रपञ्चे सत्ता नास्ति ब्रह्मसत्तैव तत्र भातीति वदन्ति । सम्बन्धस्तु भिन्नः ३५ सत्ता प्रपञ्चे नास्तीति समानम् । मध्वमतेऽप्येवमेव ।

३. मर्यादायामस्वरसादाह ।

४. सर्वविद्यावेद्यवस्त्वधिष्ठानत्वाच्च ( कल्प० ) ।

५. 'उद्भात' इति पाठो युक्तः ।

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥
[1]तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं
निरुक्तं छन्दो ज्योतिषमिति[2] । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

ज्ञाते सर्वविद्भवतीति शिष्टप्रवादं श्रुतवाञ्शौनकस्तद्विशेषं विज्ञातुकामः सन्कस्मिन्निति वितर्कयन्पप्रच्छ । अथवा लोक-सामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ । सन्ति लोके सुवर्णादिशकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः । ५ तथा किन्वस्ति सर्वस्य जगद्भेदस्यैकं कारणम् । यदेकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति । नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः । किमस्ति तदिति तदा प्रश्नो युक्तः । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा कस्मिन्निधेयमिति । न । अक्षरबाहुल्यादायासभीरुत्वात्प्रश्नः सम्भवत्येव किन्वस्ति तत् यस्मिन्नेकस्मिन्विज्ञाते सर्ववित्स्यादिति ॥ ३ ॥

तस्मै शौनकायाङ्गिरा ह किलोवाच । किमित्युच्यते । द्वे विद्ये वेदितव्ये इति । एवं ह स्म किल यद्ब्रह्म-विदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वदन्ति । के ते इत्याह । परा च परमात्मविद्या । अपरा च धर्माधर्मसाधन- १० तत्फलविषया । ननु कस्मिन्विदिते सर्वविद्भवतीति शौनकेन पृष्टं तस्मिन्वक्तव्येऽपृष्टमाहाङ्गिरा द्वे विद्ये इत्यादि । नैष दोषः। क्रमापेक्षत्वात्प्रतिवचनस्य । अपरा हि विद्याऽविद्या सा निराकर्तव्या । तद्विषये हि विदिते न किञ्चित्तत्त्वतो विदितं स्यादिति । निराकृत्य हि पूर्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायात् ॥ ४ ॥

तत्र काऽपरेत्युच्यते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः शिक्षा [3]कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षडेषाऽपरा विद्या । अथेदानीमियं परा विद्योच्यते यया तद्वक्ष्यमाणविशेषण- १५ मक्षरमधिगम्यते प्राप्यते । अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात् । न च परप्राप्तेरवगमार्थस्य भेदोऽस्ति । अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम् । ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनं च । "या वेद-बाह्याः स्मृतय" इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वादनादेया स्यात् । उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् ।

नास्तोति ज्ञातं भवतीति सामान्यव्याप्तिस्तद्बलाद्वा पप्रच्छेत्याह—अथवेति । प्रश्नाक्षराञ्जस्यमाक्षिप्य समाधत्ते—नन्वविदिते हीत्यादिना । किमस्ति तदिति प्रयोगेऽक्षरबाहुल्येनाऽऽयासः स्यात्तद्भीरुतया कस्मिन्नित्यक्षराज्ञस्ये २० लाघवात्प्रश्न इत्यर्थः ॥ ३-४ ॥

कल्पः सूत्रग्रन्थः । अनुष्ठेयक्रमः कल्प इत्यर्थः । अविद्याया अपगम एव परप्राप्तिरुपचर्यते । अविद्यापगमश्च ब्रह्मावगतिरेवेति व्याख्यातमस्माभिर्ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा[4]ऽविद्यानिवृत्तिरित्येतद्व्याख्यानावसरे । अतोऽधिगमशब्दोऽत्र प्राप्तिपर्याय एवेत्याह—न च परप्राप्तेरिति । साङ्गानां वेदानामपरविद्यात्वेनोपन्यासात्ततः पृथक्करणाद्वेदबाह्यतया ब्रह्मविद्यायाः परत्वं न सम्भवतीत्याक्षिपति—नन्विति । २५

---

१. यद्यपि ऋग्वेदादिशब्दरूपेत्युक्तं भाष्ये तथापि तद्गतकर्मकाण्डप्रतिपाद्यकर्मविद्याप्यत्र ग्राह्या । अत एव तदेतत्सत्यमित्यादिना कर्माण्युच्यन्ते अपरविद्याप्रतिपाद्यानि । तदन्ते च 'प्रोवाच तां तत्त्वतो ब्रह्मविद्यां' इत्युक्त्या उपरिष्टाद्ब्रह्मविद्या आरभ्यत इति सूचितं भवति । शब्दमात्रं चेत् इह तदप्रतिपादनदोषः स्यात् । ऋगादिपदं अजहल्लक्षणया ऋगादिवेदगतमन्त्रप्रतिपाद्यविषयविद्यापरमिति ज्ञेयम् । रामानु-जीयास्तु 'परोक्षब्रह्मज्ञानं अपराविद्ये'त्याहुः । तत्र कर्मकाण्डेन परोक्षब्रह्मज्ञानं जायत इति च । तद्दुरुप- ३० पादम् । अस्मन्मते सर्ववेदप्रतिपाद्यत्वं न तद्रीत्या अपितु वेद्यः प्राप्यः इत्यर्थात् कर्मकाण्डेन निष्कामकर्म-चित्तशुद्धिज्ञानोत्पत्त्यादिना प्राप्य इत्यर्थान्नास्माकं दोषः ।

माध्वास्तु—पराधिगतिहेतुत्वोपाधिना ऋग्वेदादिविद्या परा अमुख्यार्थबोधकत्वोपाधिना अपरेति व्याचक्षते । तत्र कर्मकाण्डस्य ब्रह्मपरत्वं विद्वद्रूढिशक्त्येति च, तन्मतं नान्ये स्वीकुर्वन्ति ।

२. शिक्षादीनां प्रवाहनित्यत्वात् अनादिवेदप्रतिपाद्यत्वोपपत्तिः । ३५

३. कल्पः—सिद्धरूपप्रयोगप्रतिपादकग्रन्थः ।

४. अविद्यानिवृत्तिः विद्यैव घटप्रागभावनिवृत्तेः घटरूपत्ववत् ।

¹यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं² परिपश्यन्ति धीराः ।। ६ ।।

ऋग्वेदादित्वे तु पृथक्करणमनर्थकम् । अथ कथं परेति । न । वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षर-विषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशि-
५ विवक्षितः । शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यं च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति कथनं चेति ।। ५ ।।

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण ³वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणो न तथेह परविद्याविषये । ⁴वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति । केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठा-व्यतिरिक्ताभावात् । तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि—यत्तदद्रेश्यमित्यादिना । वक्ष्यमाणं बुद्धौ
१० संहृत्य सिद्धवत्परामृश्यते—यत्तदिति । अद्रेश्यमदृश्यं सर्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत् । ⁵दृशेर्बहिष्प्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात् । अग्राह्यं कर्मेन्द्रियाविषयमित्येतत् । अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रमनन्वय-मित्यर्थः । न हि तस्य मूलमस्ति येनान्वितं स्यात् । वर्ण्यन्त इति वर्णा द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयो वा । अविद्य-माना वर्णा यस्य तदवर्णमक्षरम् । अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनां, ते अविद्यमाने यस्य

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ।।"

१५ इति स्मृतेः कुदृष्टित्वादनुपादेया स्यादित्यर्थः । विद्याया वेदबाह्यत्वे तदर्थानामुपनिषदामप्यृग्वेदादिबाह्यत्वं प्रसज्येतेत्यर्थः । वेदबाह्यत्वेन पृथक्करणं न भवति । किन्तु वैदिकस्यापि ज्ञानस्य वस्तुविषयस्य शब्दराश्य-तिरेकाभिप्रायेणेत्याह—न वेद्यविषयेति ।। ५ ।।

कर्मज्ञानाद्विलक्षणत्वाभिप्रायेण च पृथक्करणमित्याह—यथा विधिविषय इति । अप्राप्तप्रतिषेधप्रसङ्गान्न

---

१. यत्तदद्रेश्यं इत्यत्रोक्तं भूतयोन्यक्षरं प्रधानं शारीरः ब्रह्म वेति संशय्य "अदृश्यत्वादिगुणको धर्मोक्तेः"
२० इत्यधिकरणे ब्रह्मैवेति निर्णीतम् । "यस्सर्वज्ञः सर्ववित्" इत्यादेः प्रधाने जीवे चासम्भवात् । "तथा-क्षरात्सम्भवतीह विश्वं" इति जायमानप्रकृतित्वेन निर्दिष्टाक्षरस्य तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते इति सर्वज्ञब्रह्मणः उत्पत्तिश्रुतेः एकविज्ञानेन सर्वविज्ञानस्य प्रधाने जीवे चासम्भवाच्च । अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तं इति ( ३-३-३३ ) अधिकरणे अत्र वाक्ये श्रूयमाणा अक्षरब्राह्मणोक्ता अस्थूलत्वादयश्च सर्वत्रोपसंहर्तव्याः ज्ञेयस्य ब्रह्मणः एकत्वात् प्रतिपादनप्रकारस्य
२५ चैकत्वादित्युक्तम् ।

२. अत्र योनिपदमुपादानपरम् । अस्मन्मते ब्रह्मणो विवर्तोपादानतया प्रपञ्चस्य योनिः मृद्भावापन्नं ब्रह्मैव घटोपादानमिति मृदः घटोपादानत्वे न कापि हानिः । रामानुजीयानां ब्रह्मशरीररूपप्रकृतेरुपादानत्वात् ब्रह्मणः उपादानत्वोक्तिः । मध्वमते—ब्रह्म निमित्तमेव नोपादानम् । उभयत्रापि योनिशब्दो न सङ्गच्छते ।

३. कर्मकाण्डादर्थज्ञानं प्रयोगज्ञानं च सम्पाद्य ततः भार्यादिकं धनादिकं च सम्पाद्य कर्मानुष्ठेयम् । ज्ञानकाण्डे
३० तु शुद्धचित्तस्याधिकारिणः वाक्यादेव साक्षात्कारो जायते, तत एवाविद्यानिवृत्त्युपलक्षितानन्दरूपो मोक्ष इति भेदः । यद्यपि "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति श्रुतेः ज्ञानादपि फलप्राप्तिर्गम्यते तथापि सा मानसादिब्रह्महत्यापापनिवृत्तिरूपैवेति माधवाचार्या वेदभाष्ये । मानसपूजादीनामपि फलवत्त्वमिष्यत एव तद्वन्मानसप्रयोगज्ञानस्यापि फलवत्त्वमस्ति । वस्तुतस्तु "जाग्रत्प्रत्यया अपि मानसप्रत्ययाभिनिर्वृत्ता एव सदीक्षाभिनिर्वृत्ततेजोबन्नमयत्वात् जाग्रद्विषयाणाम्" इति भगवत्पादैः दहरविद्यायामभिधानात्
३५ मानसानामपि फलजनकत्वमस्त्येव । लोकव्यवहारानुरोधेन तु अत्रानुष्ठानापेक्षत्वोक्तिः ।

४. वाक्यार्थज्ञानम्—तत्त्वमसीत्यादि महावाक्यार्थज्ञानम् । अनेन च शाब्दः ब्रह्मसाक्षात्कार उक्तः, तदुपरि प्रसंख्यानादिकं नास्तीति च सूचितम् ।

५. दृशेः—अन्तःकरणवृत्तेः । इन्द्रियद्वारा बहिःप्रवृत्ता अन्तःकरणवृत्तिः विषयं व्याप्नोतीति प्रक्रिया ।

[1]यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥ ७ ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥

तदचक्षुःश्रोत्रम् । यः सर्वज्ञः सर्वविदित्यादिचेतनावत्त्वविशेषणत्वात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं तदिहाचक्षुःश्रोत्रमिति वार्यते । "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिदर्शनात् । किञ्च तदपाणिपादं कर्मेन्द्रियरहितमित्येतत् । यत एवमग्राह्यमग्राहकं चातो नित्यमविनाशि । विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम् । सर्वगतं व्यापकमाकाशवत्, सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात् । शब्दादयो ह्याकाशवाय्वादीनामुत्तरोत्तरं स्थूलत्वकारणानि तदभावात्सुसूक्ष्मम् । किञ्च तदव्ययमुक्तधर्मत्वादेव न व्येतीत्यव्ययम् । न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः सम्भवति शरीरस्येव, नापि कोशापचयलक्षणो व्ययः सम्भवति राज्ञ इव । नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात्[2] सर्वात्मकत्वाच्च । यदेवंलक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीरा धीमन्तो विवेकिनः । ईदृशमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः ॥ ६ ॥

भूतयोन्यक्षरमित्युक्तं तत्कथं भूतयोनीत्युच्यते प्रसिद्धदृष्टान्तैः । यथा लोके प्रसिद्धम् । ऊर्णनाभिर्लूताकीटः किञ्चित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून्बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवाऽऽपादयति । यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ता इत्यर्थः । स्वात्माव्यतिरिक्ता एव प्रभवन्ति । यथा च सतो विद्यमानाज्जीवतः पुरुषात्केशलोमानि केशाश्च लोमानि च सम्भवन्ति विलक्षणानि । यथैते दृष्टान्तास्तथा विलक्षणं सलक्षणं च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात्सम्भवति समुत्पद्यत इह संसारमण्डले विश्वं समस्तं जगत् । अनेकदृष्टान्तोपादानं तु सुखार्थप्रबोधनार्थम् ॥ ७ ॥

यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते । तपसा ज्ञानेनोत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयत उपचीयत उत्पिपादयिषदिदं जगदङ्कुरमिव बीजमुच्छूनतां गच्छति पुत्रमिव पिता हर्षेण । एवं सर्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञानवत्तयोपचितात्ततो

प्रधानपरत्वमपि शङ्कनीयमिति मत्वाऽऽह—यः सर्वज्ञ इति । अगुणत्वादिति । उपसर्जनरहितत्वादित्यर्थः । सर्वात्मकत्वाच्चेति । हेयस्यातिरिक्तस्याभावाच्चेत्यर्थः ॥ ६ ॥

ब्रह्म न कारणं सहायशून्यत्वात्कुलालमात्रवदित्यस्यानैकान्तिकत्वमुक्तमूर्णनाभिदृष्टान्तेन । ब्रह्म जगतो नोपादानं तदभिन्नत्वात्स्वरूपस्येवेत्यनुमानान्तरस्यानैकान्तिकत्वमाह—यथा च पृथिव्यामिति । जगन्न ब्रह्मोपादानकं तद्विलक्षणत्वात् । यत् यद्विलक्षणं तत्तदुपादानकं न भवति । यथा घटो न तन्तूपादनक इति । अस्य व्यभिचारार्थमाह—यथा च सत इति । एकस्मिन्नपि दृष्टान्ते सर्वानुमानानामनैकान्तिकत्वं योजयितुं शक्यमिति शङ्कमानं प्रत्याह—अनेकदृष्टान्तेति ॥ ७ ॥

ईश्वरत्वोपाधिभूतं मायातत्त्वं महाभूतादिरूपेण सर्वजीवैरुपलभ्यत इति सर्वसाधारण्येऽपि कथं जायतेऽनादि-

---

१. अत्र न विलक्षणत्वादस्य तथात्वं च शब्दात् इति सूत्रेण ( २।१।७ ) जगत् न ब्रह्मोपादानकं तद्विलक्षणत्वात् । यद्यद्विलक्षणं तत् न तदुपादानकं, यथा पटो न मृदुपादानः, इति सामान्यमुखव्याप्त्युपष्टब्धेनानुमानेन ब्रह्मणो जगदुपादानत्वाक्षेपे प्राप्ते दृश्यते तु ( २।१।९ ) इति सूत्रेण समाधानमुक्तं, दृश्यते हि विलक्षणयोरप्युपादानोपादेयभावः । यथोर्णनाभिः चेतनः तच्छरीरात् तन्तवः इति एतन्मन्त्रोदाहरणेन व्यभिचारदूषणमुक्तम् ।

२. अगुणत्वात्—अत्र शुक्लादिगुणो न ग्राह्यः अद्रेश्यमित्यनेन रूपाद्यभावसूचनात् । अपि तु गुणः= परतन्त्रः ।

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके प्रथमः खण्डः

ब्रह्मणोऽन्नमद्यते भुज्यत इत्यन्नमव्याकृतं साधारणं संसारिणां व्याचिकीर्षितावस्थारूपेणाभिजायत उत्पद्यते। ततश्चाव्याकृताद्व्याचिकीर्षितावस्थावतोऽन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्म-
५ भूतसमुदायबीजाङ्कुरो जगदात्माऽभिजायत इत्यनुषङ्गः। तस्माच्च प्राणान्मनो [१]मनआख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते। ततोऽपि सङ्कल्पाद्यात्मकान्मनसः सत्यं सत्याख्यमाकाशादिभूतपञ्चकमभिजायते। तस्मात्सत्याख्याद्भूतपञ्चकादण्डक्रमेण सप्त लोका भूरादयः। तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि। कर्मसु च निमित्तभूतेष्वमृतं कर्मजं फलम्। यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत्फलं न विनश्यतीत्यमृतम् ॥ ८ ॥

उक्तमेवार्थमुपसञ्जिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह—य उक्तलक्षणोऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति
१० सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य ज्ञानमयं ज्ञानविकारमेव सार्वज्ञ्यलक्षणं तपो नाऽऽयासलक्षणं तस्माद्यथोक्तात्सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम्। रूपमिदं शुक्लं नीलमित्यादि। अन्नं च व्रीहियवादिलक्षणं जायते। पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः ॥ ९ ॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डके प्रथमः खण्डः

१५ सिद्धत्वादित्याशङ्क्याह—व्याचिकीर्षितेति। कर्मापूर्वसमवायिभूतसूक्ष्ममव्याकृतमिति केचित्। [२]तन्न, तस्य प्रतिजीवं भिन्नत्वादीश्वरत्वोपाधित्वासम्भवात्। सामान्यरूपेण सम्भवेऽपि पृथिव्यादिसामान्यानां बहुत्वात्। प्रकृतावेकत्वश्रुतिव्याकोपापाताज्जाड्यमहामायारूपेणैकत्वसम्भवेऽपि न कर्मापूर्वसमवायित्वम्। तस्याकारकत्वाद्बुद्ध्यादी मेव कारकत्वाभिधानात्। कारकावयवेष्वेव क्रियासमवायाभ्युपगमात्। [३]किञ्च न कार्यस्य स्वकारणप्रकृतित्वं दृष्टमिति भूतसूक्ष्मस्यापञ्चीकृतभूतप्रकृतित्वं न स्यात्। तस्मान्महाभूतसर्गादिसंस्कारास्पदं गुणत्रयसाम्यं मायातत्त्वमव्याकृतादि-
२० शब्दवाच्यमिहाभ्युपगन्तव्यम्। पूर्वस्मिन्कल्पे हिरण्यगर्भप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भावस्थाकारेण विवर्तते। स च जीवः तदवस्थाभिमानी हिरण्यगर्भ उच्यत इत्यभिप्रेत्याऽऽह—ब्रह्मण इति। ज्ञानशक्तिभिः क्रियाशक्तिभिश्चाधिष्ठितं विशिष्टं जगद्व्यष्टिरूपं तस्य साधारणः समष्टिरूपः सूत्रसंज्ञक इत्यर्थः। मनआख्यमिति। समष्टिरूपं विवक्षितम्। व्यष्टिरूपस्य लोकसृष्ट्युत्तरकालत्वात् ॥ ८ ॥

वक्ष्यमाणार्थमिति। वक्ष्यमाणस्याविद्याविवरणप्रकरणस्याऽऽरम्भार्थमुक्तपरविद्यासूत्रार्थोपसंहार इत्यर्थः।
२५ सामान्येनेति। समष्टिरूपेण मायाख्येनोपाधिनेत्यर्थः। विशेषेणेति। व्यष्टिरूपेणाविद्याख्येनोपाधिनाऽनन्तजीवभावमापन्नः स एव सर्वं स्वोपाधितत्संसृष्टं च वेत्तीत्यधिदैवमध्यात्मं च तत्त्वाभेदः सूचितः। स्रष्टृत्वं प्रजापतीनां तपसा प्रसिद्धम्। तद्वद्ब्रह्मणोऽपि स्रष्टृत्वे तपोऽनुष्ठानं वक्तव्यम्। ततः संसारित्वं प्रसज्येतेत्याशङ्क्याऽऽह—यस्य ज्ञानमयमिति। सत्त्वप्रधानमायाया ज्ञानाख्यो विकारस्तदुपाधिकं ज्ञानविकारं सृज्यमानसर्वपदार्थाभिज्ञत्वलक्षणं तपो न तु क्लेशरूपं प्रजापतीनामिवेत्यर्थः ॥ ९ ॥

३० इति मुण्डकोपनिषद्भाष्यटीकायां प्रथममुण्डके प्रथमः खण्डः

---

१. मनः—ज्ञानशक्तिप्राधानो हिरण्यगर्भ एव। तस्य प्राणाज्जन्म तदवस्थाविशेषरूपत्वमेव।

२. यद्यपि तस्य लिङ्गशरीरान्तर्गतत्वेन जीवोपाधित्वात् तत्रापूर्वं समवैति तथाऽपि तस्य प्रतिजीवं भिन्नत्वात् नेश्वरोपाधित्वम्। सामान्यरूपेण—पृथिवीत्वादिरूपेण तस्याकारकत्वात्—सामान्यपृथिवीत्वाद्याश्रयस्य कर्मसु अकारणत्वात् सूक्ष्मभूतजन्यबुद्ध्यादीनामेव कारणत्वात् तेष्वेवापूर्वसम्बन्धः
३५ इत्यर्थः।

३. भूतसूक्ष्माः अपञ्चीकृतभूतकार्याः तेषां तत्कारणत्वाभावात् न तेष्वपूर्वसमवायः।

[१]तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥
यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाऽऽज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत् ॥ २ ॥

साङ्गा वेदा अपरा विद्योक्ता—ऋग्वेदो यजुर्वेद इत्यादिना । यत्तदद्रेश्यमित्यादिना नामरूपमन्नं च जायत इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाऽधिगम्यत इति परा विद्या [२]सविशेषणोक्ता। अतः परमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते। तत्रापरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः सामस्त्येन नदीस्रोतोवदव्यवच्छेदरूपसम्बन्धस्तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति । पूर्वं तावदपरविद्याया विषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्वेदोपपत्तेः । तथाच वक्ष्यति—"परीक्ष्य लोकान्कर्मचितान्" इत्यादिना। न ह्यप्रदर्शिते परीक्षोपपद्यत इति तत्प्रदर्शयन्नाह—तदेतत्सत्यमवितथम्। किं [३]तन्मन्त्रेष्वृग्वेदाद्याख्येषु कर्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन्दृष्टवन्तः। यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात्तानि च वेदविहितान्यृषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं सन्ततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि । त्रेतायां वा युगे प्रायशः प्रवृत्तानि । अतो यूयं तान्याचरथ निर्वर्तयत नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः। एष वो युष्माकं पन्था मार्गः सुकृतस्य स्वयं निर्वर्तितस्य कर्मणो लोके फलनिमित्तं लोक्यते दृश्यते भुज्यत इति कर्मफलं लोक उच्यते। तदर्थं तत्प्राप्तय एष मार्ग इत्यर्थः। यान्येतान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥

तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्शनार्थमुच्यते सर्वकर्मणां [४]प्राथम्यात् । तत्कथम् । यदैवेन्धनैरभ्याहितैः

अनादिरुपादानरूपेण, अनन्तो ब्रह्मज्ञानात्प्रागन्तासम्भवात्, प्रत्येकं शरीरिभिर्हातव्यो दुःखरूपत्वादित्यनेन यदाहुरेकजीववादिन एकं चैतन्यमेकयैवाविद्यया बद्धं संसरति । तदेव कदाचिन्मुच्यते नास्मदादीनां बन्धमोक्षौ स्त इति तदपास्तं भवति । [५]श्रुतिबहिष्कृतत्वात् । सुषुप्तेऽपि क्रियाकारकफलभेदरूपस्य प्रहाणं भवति, बुद्धिपूर्वकप्रहाणस्य ततो विशेषमाह—सामस्त्येनेति। स्वोपाध्यविद्याकार्यस्याविद्याप्रहाणेनाऽऽत्यन्तिकप्रहाणं विद्याफलमित्यर्थः। अमरोऽपक्षयरहितः। अमृतो नाशरहित इत्यर्थः। अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्वमपरविद्याया विषयप्रदर्शने श्रुतेरभिप्रायमाह—पूर्वं तावदिति । यदिष्टसाधनतयाऽनिष्टसाधनतया वा वेदेन बोध्यते कर्म तस्यासति प्रतिबन्धे तत्साधनत्वाव्यभिचारः सत्यत्वं न स्वरूपाबाध्यत्वं 'प्लवा ह्येत' इत्यादिना निन्दितत्वात्। स्वरूपबाध्यत्वेऽपि चार्थक्रियासामर्थ्यं स्वप्नकामिन्यामिव घटत इत्यभिप्रेत्याऽऽह—तदेतत्सत्यमिति। ऋग्वेदविहितः पदार्थो हौत्रम्। यजुर्वेदविहित आध्वर्यवम्। सामवेदविहित औद्गात्रम्। तद्रूपायां त्रेतायामित्यर्थः। सत्यकामा मोक्षकामा इति समुच्चयाभिप्रायेण व्याख्यानमयुक्तम् । 'एष वः पन्थाः सुकृतस्य लोके' इति स्वर्गफलसाधनत्वविषयवाक्यशेषविरोधादिति ॥१॥

आहवनीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागाविज्येते अग्नये स्वाहा सोमाय स्वाहेति दर्शपूर्णमासे । तयो-

---

१. अत्र मतान्तरे—अस्य पूर्वमन्त्रशेषत्वात् तदेतद्ब्रह्म सत्यं नित्यमित्यर्थः। माध्वमतेपि ब्रह्म सत्यं इतरेषां सत्यत्वप्रदर्मित्यर्थः इत्युक्तम्—उभयत्रापि एतत्पदस्य वक्ष्यमाणपरत्वस्य स्वारसिकत्वात् 'यथा सुदीप्तादि'ति वाक्योपक्रमस्थतदेतत्सत्यमित्यस्य वक्ष्यमाणपरत्वस्योभयसम्मतत्वात् इदमयुक्तमन्यथा तत्रापि कर्म सत्यमित्यर्थाङ्गीकारापत्तेः ।

२. सविशेषणा स्वविषयीभूताक्षरसहिता ।

३. एतेन ब्राह्मणवाक्यान्येव कर्मविधायकानि । मन्त्रास्तु प्रयोगसमवेतार्थस्मारका इति मीमांसकमतं प्रत्युक्तम्, इदं 'मन्त्रेषु कर्माणि' इति छान्दोग्यवाक्यभाष्यतट्टीकासु स्पष्टम् ।

४. आधानाख्ये श्रौतकर्मणि कृते त्रेताग्निसम्पत्तौ प्रथममग्निहोत्रं कर्तव्यम् ।

५. "यो यो देवानां प्रत्यबुध्यत स एव तदभवदि"ति बृहदारण्यकविरोधात् ।

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥
काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥
५ एतेषु यश्चरते भ्राजमानेषु यथाकालं चाऽऽहुतयो ह्याददायन् ।
तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलत्यर्चिस्तदा तस्मिन्काले लेलायमाने चलत्यर्चिष्याज्यभागावाज्यभागयोरन्त-
रेण मध्य [1]आवापस्थान आहुतीः प्रतिपादयेत्प्रक्षिपेद्देवतामुद्दिश्य। अनेकाहः प्रयोगापेक्षयाऽऽहुतीरिति बहुवचनम् ॥२॥

एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थास्तस्य च सम्यक्करणं दुष्करम् । [2]विपत्त-
१० यस्त्वनेका भवन्ति । कथं, यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिणोऽवश्यकर्तव्यत्वा-
द्दर्शस्य । अग्निहोत्रिसम्बन्ध्यग्निहोत्रविशेषणमिव भवति तदक्रियमाणमित्येतत् । तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्र-
विशेषणत्वं द्रष्टव्यम् । अग्निहोत्रा[न]ङ्गत्वस्याविशिष्टत्वात्, अपौर्णमासं पौर्णमासकर्मवर्जितम् । [3]अचातुर्मास्यं चतुर्मास्य-
कर्मवर्जितम् । अनाग्रयणमाग्रयणं शरदादिकर्तव्यं तच्च न क्रियते यस्य । तथाऽतिथिवर्जितं चातिथिपूजनं चाहन्य-
हन्यक्रियमाणं यस्य, स्वयं सम्यगग्निहोत्रकालेऽहुतम् । अदर्शादिवदवैश्वदेवं वैश्वदेवकर्मवर्जितं हूयमानमप्यविधिना
१५ हुतं न यथाहुतमित्येतत् । एवं दुःसम्पादितमसम्पादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यत आसप्तमान्सप्तम-
सहितांस्तस्य कर्तुर्लोकान्हिनस्ति हिनस्तीवाऽऽयासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूपेण
भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्यन्ते । ते लोका एवंभूतेनाग्निहोत्रादिकर्मणा त्वप्राप्यत्वाद्धिंस्यन्त इवाऽऽया-
समात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा सम्बध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्र-
प्रपौत्राः स्वात्मोपकाराः सप्त लोका उक्तप्रकारेणाग्निहोत्राविना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ ३ ॥

२० काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना
इति सप्त जिह्वाः । काल्याद्या विश्वरुच्यन्ता लेलायमाना अग्नेर्हविराहुतिग्रसनार्था एताः सप्त जिह्वाः ॥ ४ ॥

एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्माऽऽचरत्यग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु । यथाकालं च

मध्येऽन्ये यागा अनुष्ठीयन्ते । तन्मध्यमावापस्थानमुच्यते । अग्निहोत्राहुत्योर्द्वित्वं प्रसिद्धम् । सूर्याय स्वाहा प्रजापतये
स्वाहेति प्रातः । अग्नये स्वाहा प्रजापतये स्वाहेति सायम् । तत्कथमग्निहोत्रं प्रक्रम्याऽऽहुतीरिति बहुवचनं तत्राऽऽह—
२५ अनेकाहेति । अनेकेष्वहःसु प्रयोगाः अनुष्ठानानि तदपेक्षयेत्यर्थः ॥ २ ॥

दर्शस्याग्निहोत्राङ्गत्वे प्रमाणाभावात्कथं तदकरणमग्निहोत्रस्य विपत्तिरित्याशङ्क्य यावज्जीवचोदनाव-
शादग्निहोत्रिणोऽवश्यकर्तव्यत्वात्तदकरणं भवेद्विपत्तिरित्यभिप्रेत्य विशेषणम् । शरदादिषु नूतनान्नेन कर्तव्यमाग्रयणं
कर्म । अदर्शादिवदवैश्वदेवमिति विशेषणम् । वैश्वदेवस्याग्निहोत्रानङ्गत्वेऽप्यावश्यकत्वादित्यर्थः । पिण्डोदकदानेन
पित्रादीनां त्रयाणामुपकरोति यजमानः पुत्रादीनां च त्रयाणां ग्रासादिदानेन । तनो मध्यवर्तिना यजमानेन सम्बध्य-
३० मानाः पूर्वे त्रय उत्तरे च त्रयो गृह्यन्त इत्याह—पिण्डदानादीति ॥ ३-४-५ ॥

---

१. यद्यपि आज्यभागौ नाग्निहोत्रे स्तः तथापि होमः अग्निमध्ये आज्यादिप्रक्षेपस्थाने कर्तव्यः । आज्य-
भागौ अग्नेः दक्षिणोत्तरभागयोः क्रियेते । तन्मध्यस्थानं आवापस्थानम् ।

२. मन्त्रलोपतन्त्रलोपदक्षिणालोपादिषु हविषः अपाके च प्रायश्चित्ताभिधानात् ।

३. अक्षय्यसुकृतफलकः चातुर्मास्याख्यः कर्मसमुदायः । तस्य, वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीया-
३५ ख्यानि चत्वारि पर्वाणि । एकैकं पर्व बहुयागघटितम् । चतुर्षु चतुर्षु मासेषु एकैकं पर्व कर्तव्यम् ।
वरुणप्रघासान्ते अवभृथश्च । अवैश्वदेवं—वैश्वदेवं स्मार्तकर्म अन्नसंस्कारार्थं आत्मसंस्कारार्थं च प्रत्यहं
कर्तव्यम् । तत्राष्टौ होमाः—ततः सर्वदेवताभ्यो बलिहरणं च यथाविधि कार्यम् ।

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

प्लवा ह्येते अदृढा यज्ञरूपा [1]अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥

[2]अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ८ ॥

यस्य कर्मणो यः कालस्तत्कालं यथाकालं यजमानमाददायप्रावदाना आहुतयो यजमानेन निर्वर्तितास्तं नयन्ति प्रापयन्त्येता आहुतयो या इमा अनेन निर्वर्तिताः सूर्यस्य [3]रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः । यत्र यस्मिन्स्वर्गे देवानां पतिरिन्द्र एकः सर्वानुपर्यधिवसतीत्यधिवासः ॥ ५ ॥

कथं सूर्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यते—एह्येहीत्याह्वयन्त्यः । सुवर्चसो दीप्तिमत्यः । किञ्च प्रियामिष्टां वाचं स्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्योऽर्चयन्त्यः पूजयन्त्यश्चैष वो युष्माकं पुण्यः सुकृतः पन्था ब्रह्मलोकः फलरूपः । एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः [4]प्रकरणात् ॥ ६ ॥

एतच्च ज्ञानरहितं कर्मैतावत्फलमविद्याकामकर्मकार्यमतोऽसारं दुःखमूलमिति निन्द्यते । प्लवा विनाशिन इत्यर्थः । हि यस्मादेतेऽदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादशाष्टादशसंख्याकाः षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश । एतदाश्रयं कर्मोक्तं कथितं शास्त्रेण येष्वष्टादशस्ववरं केवलं ज्ञानवर्जितं कर्म । अतस्तेषामवरकर्माश्रयाणामष्टादशानामदृढतया प्लवत्वात् प्लवते सह फलेन तत्साध्यं कर्म कुण्डविनाशादिव क्षीरदध्यादीनां तत्स्थानां नाशः । यत एवमेतत्कर्म श्रेयः श्रेयःकरणमिति येऽभिनन्दन्त्यभिहृष्यन्त्यविवेकिनो मूढा अतस्ते जरां च मत्युं च जरामृत्युं किञ्चित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥

किञ्चाविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मानं सम्भावयन्तस्ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः । दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव नीयमानाः प्रदर्श्यमानमार्गा यथा लोकेऽन्धा अक्षिरहिता गर्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

आहुतयो यजमानं वहन्तीति सम्बन्धः ॥ ६ ॥

रूप्यते निरूप्यते यदाश्रयतया यज्ञस्ते यज्ञरूपाः ॥ ७ ॥

स्वयमेवेति तत्त्वदर्श्युपदेशानपेक्षतया स्वमनोरथेनैवेत्यर्थः ॥ ८ ॥

---

१. अष्टादश—अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता इत्यध्वर्युगणः । ब्रह्मा, ब्राह्मणाच्छंसी, अग्नीत्, पोता इति ब्रह्मगणः । होता, मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत् इति होतृगणः । उद्गाता, प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्य इत्युद्गातृगणः । यजमानः, पत्नी चेति अष्टादश । अष्टादशोक्तमित्यत्र माध्वैः अष्टादशविद्यास्थाननिरूपितं कर्मेति व्याख्यातम् । अष्टादशस्मृत्युक्तमिति रामानुजीये ।

२. अत्र माध्वाः—अविद्यापदेन विद्यातोऽन्या सर्वाप्यविद्येति व्याचक्रुः । एवं कठवल्ल्यामपि । मतान्तरीयास्तु—कठवल्ल्यामविद्या—काम्यकर्मेत्यूचुः । अत्राप्ययमेवार्थस्तेषां मते । भगवत्पादमते तु अविद्या भावरूपाविद्या मूलप्रकृतिः सर्वत्र ग्राह्या । तया मोमुह्यमानाः कष्टामापदं प्राप्नुवन्तीत्यर्थः । विद्याविरोधित्वात् विद्याविनाश्यत्वाच्चाविद्योच्यते ।

३. रश्मयो भूत्वा—रश्मिभिः संयुज्य ।

४ कर्मप्रकरणात् ब्रह्मलोकस्याहङ्ग्रहोपासनामात्रेण प्राप्यत्वात् ।

[1]अविद्यायां [2]बहुधा वर्तमाना वयं [3]कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते[4] ॥ ९ ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥
तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

किञ्चाविद्यायां बहुधा बहुप्रकारं वर्तमाना वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कुर्वन्ति बाला अज्ञानिनः । यद्यस्मादेवं कर्मिणो न प्रवेदयन्ति तत्त्वं न जानन्ति रागात्कर्मफलरागाभिभवनिमित्तं तेन कारणेनाऽऽतुरा दुःखार्ताः सन्तः क्षीणलोकाः क्षीणकर्मफलाः स्वर्गलोकाच्च्यवन्ते ॥ ९ ॥

इष्टापूर्तम् । इष्टं यागादि[5] श्रौतं कर्म । पूर्तं वापीकूपतडागादि[6] स्मार्तं मन्यमाना एतदेवातिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तोऽन्यदात्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ते न जानन्ति प्रमूढाः पुत्रपशुबन्ध्वादिषु प्रमत्ततया मूढास्ते च नाकस्य स्वर्गस्य पृष्ठ उपरिस्थाने सुकृते भोगायतनेऽनुभूय कर्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा तिर्यङ्नरकादिलक्षणं यथाकर्मशेषं[7] विशन्ति ॥ १० ॥

ये पुनस्तद्विपरीता ज्ञानयुक्ता वानप्रस्थाः संन्यासिनश्च—तपःश्रद्धे हि तपः स्वाश्रमविहितं कर्म । श्रद्धा हिरण्यगर्भादिविषया विद्या ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्तमानाः सन्तः । शान्ता उपरतकरणग्रामाः । विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्षचर्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति सम्बन्धः । सूर्यद्वारेण सूर्योपलक्षितेनोत्तरायणेन पथा ते विरजा विरजसः [8]क्षीणपुण्यपापकर्माणः सन्त इत्यर्थः । प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन्सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्माऽव्ययस्वभावो यावत्संसारस्थायी । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः । ननु—एतं मोक्षमिच्छन्ति केचित्[9], न, 'इहैव सर्वे प्रविलीयन्ति कामाः' 'ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाऽऽविशन्ती'त्यादिश्रुतिभ्योऽप्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न

कं सुखं न भवतीत्यकं दुःखं तन्न विद्यते यस्मिन्नसौ नाकः ॥ ९-१० ॥

केवलकर्मिणां फलमुक्त्वा सगुणब्रह्मज्ञानसहिताश्रमकर्मिणां फलं संसारगोचरमेव दर्शयति—ये पुनस्तद्विपरीता ज्ञानयुक्ता इत्यादिना । अरण्ये स्त्रीजनासङ्कीर्णे देशे । मुक्तानामिहैव सर्वकामप्रविलयं सर्वात्मभावं च दर्शयन्ति श्रुतयः । ब्रह्मलोकप्राप्तिस्तु देशपरिच्छिन्नं फलं ततो न मोक्ष इत्याह—इहैवेति । ब्रह्मा चतुर्मुखः ।

---

१. अविद्यावस्थायामहंममामिमानिन इत्यर्थः ।
२. विविधव्यापारेण ।
३. धनार्जनपुत्रपौत्रादिसुखेन कृतार्थबुद्धयः ।
४. च्यवन्ते—पञ्चाग्निद्वारा पुनरागच्छन्ति ।
५. अत्रादिपदेनाग्निहोत्रतपःसत्यवेदानुपालनातिथ्यवैश्वदेवा ग्राह्याः ।
६. अत्रादिपदेन देवालयनिर्माणान्नप्रदानारामनिर्माणानि गृह्यन्ते ।
७. कर्मशेषः—स्वर्गार्थकर्मणोऽन्यत् कर्मेति निर्णीतं ब्रह्मसूत्रेषु—कृतात्ययेऽनुशयवान् इत्यादिना ( ३।१।८ )
८. ब्रह्मलोकसाधनपुण्यातिरिक्तपुण्यं क्षीणं येषामित्यर्थः ।
९. ननु एतं मोक्षमिच्छन्ति—इति रामानुजीयानां माध्वानां च मतं 'अनागतावेक्षणन्यायेन' निरस्यति भगवान्—इदं हि प्रकरणं 'तदेतत्सत्यमि'त्यारभ्यापरविद्यापरम् । उत्तरत्र 'तदेतत्सत्यमि'त्यारभ्य परविद्याप्रकरणं भविष्यति । अत्रैव परविद्याभिधाने तदेतत्सत्यमित्युत्तरत्र किमपूर्वं वक्तव्यमिति वदेयुः । अस्यैव विवरणमुत्तरग्रन्थ इति चेत् तदा तदेतत्सत्यमित्यपूर्वतया प्रस्तावानुपपत्तिश्च ।

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन[1] ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति विरजस्त्वं त्वापेक्षिकं समस्तमपरविद्याकार्यं साध्यसाधनलक्षणं क्रियाकारकफलभेदभिन्नं द्वैतम् । एतावदेव यद्धिरण्यगर्भप्राप्त्यवसानम् । तथा च मनुनोक्तं स्थावराद्यां संसारगतिमनुक्रामता—

"ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥" इति ॥ ११ ॥ ५

अथेदानीमस्मात्साध्यसाधनरूपात्सर्वस्मात्संसाराद्विरक्तस्य परस्यां विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते—परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्तमेव पुरुषं प्रति विहितत्वात्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणाः फलभूता ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्या नरकतिर्यक्प्रेतलक्षणास्तानेतान्परीक्ष्य [2]प्रत्यक्षानुमानोपमानागमैः सर्वतो याथात्म्येनावधार्य लोकान्संसारगतिभूतान[3]व्यक्तादिस्थावरान्तान्व्याकृताव्याकृतलक्षणान्बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तान[4]नेकानर्थशतसहस्रसङ्कुलान्कदलीगर्भवदसारान्मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमान्प्रतिक्षणप्रध्वंसान्पृष्ठतः कृत्वाऽविद्याकामदोषप्रवर्तितकर्मचितान्धर्माधर्मनिर्वर्तितानित्येतद्ब्राह्मणस्यैव [5]विशेषतोऽधिकारः सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम् । परीक्ष्य लोकान्किं कुर्यादित्युच्यते—निर्वेदं निःपूर्वो विदिरत्र वैराग्यार्थे वैराग्यमायात्कुर्यादित्येतत् । स वैराग्यप्रकारः प्रदर्श्यते । इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः । सर्वं एव हि लोकाः कर्मचिताः कर्मकृतत्वाच्चानित्याः । न नित्यं किञ्चिदस्तीत्यभिप्रायः । सर्वं तु कर्मानित्यस्यैव साधनम् । यस्माच्चतुर्विधमेव हि सर्वं कर्मकार्यम्, १५

विश्वसृजः प्रजापतयो मरीचिप्रभृतयः । धर्मो यमः । महान्सूत्रात्मा । अव्यक्तं त्रिगुणात्मिका प्रकृतिः । सात्त्विकीं सत्त्वपरिणामज्ञानसहितकर्मफलभूतामित्यर्थः ॥ ११ ॥

ऐहिककर्मफलस्य पुत्रादेर्नाशविषयं प्रत्यक्षं, विमतमनित्यं कृतकत्वात् घटवदित्यनुमानमामुष्मिकनाशविषयम् । तद्यथेह कर्मजितो लोकः क्षीयत इत्याद्यागमस्तैरनित्यत्वेन सर्वात्मनाऽवधार्येत्यर्थः ।

"नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । २०
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥"

---

१. नास्त्यकृतः कृतेन—अत्र कल्पतरौ 'नास्त्यकृतः मोक्षः किं कृतेन कर्मणा प्रयोजनं' इति वाक्यं भित्वा व्याख्यातम् । यथाश्रुते कृतेन कर्मणा अकृतो लोको नास्तीति योजनायां लोकत्वावच्छिन्नः सर्वोऽपि कृतक इति परीक्षास्वरूपालाभात् । अतः किंशब्दाध्याहारः वाक्यभेदश्च स्वीकृतः (परि०) । अत्र कृतेन कर्मणा अकृतो मोक्षः न प्राप्यत इति व्याख्यानं मतत्रयसिद्धान्तः । एवं सति ज्ञानकर्मसमुच्चयो मोक्षसाधनमिति २५ वदन्तः रामानुजीयाः एतच्छास्त्रविरुद्धमेव वदन्ति ।

२. अत्र प्रमाणचतुष्टयेनापि संसारयाथात्म्यनिर्धारणमुच्यते । तदेव टीकाकारैः ऐहिकेत्यादिना विवृतम् । उपमानं तु यथा गोसदृशो गवय इति वाक्यं श्रुत्वा अरण्यं गतः गोसदृशं पिण्डं दृष्ट्वा 'एतत्सदृशी मदीया गौः' इत्युपमितिं लभते तथा परेषां उच्चपदस्थितानां पतनं दृष्ट्वा ममापीयमेव गतिरिति उपमानेनानित्यत्वज्ञानम् । ३०

३. अव्यक्तभावोऽपि सुषुप्तिवत् प्रकृतिलयरूपः पुरुषार्थ इति पौराणिकाः । यदाहुः—"दशवर्षसहस्राणि तिष्ठन्त्यव्यक्तचिन्तकाः" इति । अत्र कर्मचितान् परित्यज्येत्युक्तत्वात् मोक्षस्य कर्मसाध्यत्वं नास्तीति सूच्यते । तेन कर्मसमुच्चितं ज्ञानं मोक्षसाधनमिति वदन्तः परास्ताः ।

४. मनुष्यलोक एव कर्माधिकारात् अयं लोकः बीजमितरेऽङ्कुराः फलत्वात् । तत्र भोगसमाप्तौ कर्मकरणायेहैवावर्तन्त इति इतरेतरोत्पत्तिनिमित्तत्वम् । ३५

५. विशेषत इति—ब्राह्मणस्यैव "ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय" "अयज्ञोपवीती कथं ब्राह्मणः" इत्यादि संन्यासविधायकशास्त्रेषु विशिष्य ब्राह्मणग्रहणादित्यर्थः । स्वातन्त्र्येण ब्रह्मान्वेषणे वेदान्तानां विपरीतार्थभ्रान्त्या यथावदात्मानं न जानीयात् । गुर्वनुग्रहश्च दृष्टद्वारा अदृष्टद्वारा च ज्ञानसाधनम् ।

[1]तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।
[2]येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके द्वितीयः खण्डः

इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डकं समाप्तम्

५ उत्पाद्यमाप्यं संस्कार्यं विकार्यं वा। नातःपरं कर्मणो विशेषोऽस्ति। अहं च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थेनार्थी न तद्विपरीतेन। अतः किं कृतेन कर्मणाऽऽयासबहुलेनानर्थसाधनेनेत्येवं निर्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेणाधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाऽऽचार्यं शमदमदयादिसम्पन्नमभिगच्छेत्। शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यादित्येतद्गुरुमेवेत्यवधारणफलम्। समित्पाणिः समिद्भारगृहीतहस्तः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठो जपनिष्ठस्तपोनिष्ठ
१० इति यद्वत्। न हि कर्मिणो ब्रह्मनिष्ठता सम्भवति. कर्मात्मज्ञानयोर्विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यम् ॥ १२ ॥

तस्मै स विद्वान्गुरुर्ब्रह्मविदुपसन्नायोपगताय। सम्यग्यथाशास्त्रमित्येतत्। प्रशान्तचित्तायोपरतदर्पादिदोषाय। शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय सर्वतो विरक्तायेत्येतत्। येन विज्ञानेन यया विद्यया परयाऽक्षरमद्रेश्यादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्पुरि शयनाच्च सत्यं तदेव परमार्थस्वाभाव्यादक्षरं चाक्षरणादक्षततत्वा-
१५ दक्षयत्वाच्च वेद विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूयादित्यर्थः। आचार्यस्याप्ययं नियमो यन्न्यायप्राप्तसच्छिष्यनिस्तारणमविद्यामहोदधेः ॥ १३ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये प्रथममुण्डके द्वितीयः खण्डः

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डकं समाप्तम्

इतिस्मृतेर्ब्राह्मणस्यैवाधिकार इत्यर्थः। कूटस्थेन परिणामरहितेनाचलेन स्पन्दरहितेन ध्रुवेण प्रयत्नरहिते-
२० नाहमर्थी। [3]समित्पाणिरिति विनयोपलक्षणम् ॥ १२ ॥

अक्षरणादिति। अवयवान्यथाभावलक्षणपरिणामशून्यत्वात्। अक्षतत्वादिति। अक्षयत्वाच्चेति। अशरीरत्वाद्विकारशून्यत्वादित्यर्थः ॥ १३ ॥

इति मुण्डकोपनिषद्भाष्यटीकायां प्रथममुण्डके द्वितीयः खण्डः

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्यटीकायां प्रथममुण्डकं समाप्तम्

---

२५ १. अत्र 'प्रशान्तचित्ताय शमान्विताय' इत्यनेन साधनचतुष्टयं ब्रह्मविद्योपदेशायावश्यकमिति सूचितम्। 'परीक्ष्य लोकान्' इत्यनेन नित्यानित्यविवेकः, 'निर्वेदमायात्' इत्यनेन वैराग्यम्, 'प्रशान्तचित्ताय' इत्यनेन शमादिषट्कं तद्विज्ञानार्थमिति मुमुक्षुत्वं च सूचितमिति 'अथातो ब्रह्मजिज्ञासे'त्यनेन सूचितसाधनचतुष्टयमत्र प्रकटीक्रियते। "तस्मै स विद्वानुपसन्नाय ब्रह्मविद्यां ब्रूयादि"त्युक्त्या उत्तरत्रैव परविद्या आरम्यत इति स्पष्टम्। पूर्वत्र परविद्यातत्फलवचनोक्तिरिति व्याख्या न साध्वी।

३० २. 'येनाक्षरं पुरुषं वेद सत्यमि'त्युक्तेः 'सत्यं ज्ञानमनन्तं' 'सदेव सोम्ये'त्यादिवाक्यप्रसिद्धं शुद्धं पारमार्थिकं ब्रह्मेत्यर्थः। न तु शिवो वा विष्णुर्वा। तदुक्तं वासिष्ठनिर्वाणे—

"न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः। अकृत्रिममनाद्यन्तं देवनं देव उच्यते" ॥ इत्यादि

न च पुरुषशब्दः श्रीविष्णौ रूढ इति वाच्यम्। 'पुरुषं कृष्णपिङ्गलं' 'पुरुषस्य सहस्राक्षस्य महादेवस्ये'त्यादौ श्रीशिवेऽपि प्रयोगात्। विष्णौ रूढत्वे अन्तस्तद्धर्माधिकरणवैयर्थ्यापत्तेश्च।

३५ ३. अत्र 'ब्रह्मनिष्ठमि'त्युक्त्या संन्यासीति भाष्यकारैः सूच्यते। एवं तर्हि समिद्भिः तस्य किं कार्यं येन तद्गृहीत्वा तं प्रति गच्छेत् इति शङ्कानिरासाय विनयोपलक्षणमित्युक्तम्। समित्पाणित्वं यत्र गृहस्थ एव जनकयाज्ञवल्क्याङ्गिरोवत् ब्रह्मनिष्ठोऽस्ति तं प्रति विद्यार्थितया गमने उपयोगो भवति।

तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः[1] सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥

दिव्यो ह्यमूर्तः पुरुषः [2]सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥२॥

अपरविद्यायाः सर्वं कार्यमुक्तम् । स च संसारो यत्सारो यस्मान्मूलादक्षरात्सम्भवति यस्मिंश्च प्रलीयते तदक्षरं पुरुषाख्यं सत्यम् । यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति तत्परस्या ब्रह्मविद्याया विषयः स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते । यदपरविद्याविषयं कर्मफललक्षणं सत्यं तदापेक्षिकम् । इदं तु परविद्याविषयं परमार्थतः सल्लक्षणत्वात् तदेतत्सत्यं यथाभूतं विद्याविषयम् । अविद्याविषयत्वाच्चानृतमितरत् । अत्यन्तपरोक्षत्वात्कथं नाम प्रत्यक्षवत्सत्यमक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह—यथा सुदीप्तात्सुष्ठु दीप्तादिद्धात्पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्रशोऽनेकः प्रभवन्ते निर्गच्छन्ति सरूपा अग्निसलक्षणा एव तथोक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा हे सोम्य भावा जीवा आकाशादिवद्घटादिपरिच्छिन्नाः सुषिरभेदा घटाद्युपाधिप्रभेदमनु भवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभवमनुप्रजायन्ते । तत्र चैव तस्मिन्नेवाक्षरेऽपियन्ति देहोपाधिविलयमनुलीयन्ते घटादिविलयमन्विव सुषिरभेदाः यथाऽऽकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्युपाधिकृतमेव तद्वदक्षरस्यापि [3]नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् ॥ १ ॥

नामरूपबीजभूतादव्याकृताख्यात्स्वविकारापेक्षया परादक्षरात्परं यत्सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव [4]सर्वमूर्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह—दिव्यो द्योतनवान्स्वयंज्योतिष्ट्वात् । दिवि वा स्वात्मनि भवोऽलौकिको वा । हि यस्मादमूर्तः सर्वमूर्तिवर्जितः पुरुषः पूर्णः पुरिशयो वा । दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तत इति । अजो न जायते कुतश्चित्स्वतोऽन्यस्य जन्मनिमित्तस्य चाभावात् यथा जलबुद्बुदादेर्वाय्वादि । यथा नभःसुषिरभेदानां घटादि । सर्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्वे प्रतिषिद्धा

द्वे विद्ये वेदितव्ये इत्युपन्यस्यापरविद्यामाद्यमुण्डकेन प्रपञ्च्य परविद्यां सूत्रितां प्रपञ्चयितुं द्वितीयमुण्डकारम्भ इत्याह—अपरविद्याया इत्यादिना । कर्मणोऽपि प्राक्सत्यत्वमुक्तं तद्वदिदं सत्यत्वं न मन्तव्यमित्याह—यदपरविद्याविषयमिति । विपीयते विशेष्यते विद्याऽनेनेति व्युत्पत्त्या विषयशब्दस्य वस्तुपरत्वान्नपुंसकलिङ्गत्वं परमार्थतः सल्लक्षणत्वादत्यन्ताबाध्यत्वादित्यर्थः । अत्यन्तपरोक्षत्वादिति । [5]शास्त्रैकगम्यत्वात् । अपूर्ववद्ब्रह्मणः प्रत्यक्षत्वं न सम्भवति साक्षात्काराधीनं च कैवल्यं ततः कथं नाम सत्यमक्षरं प्रत्यक्षवत्प्रतिपद्येरन्मुमुक्षव इत्यभिप्रेत्य जीवब्रह्मणोरेकत्वे दृष्टान्तमाह—यथा सुदीप्तादिति । एकत्वे सति प्रत्यग्रूपस्यापरोक्षत्वाद्ब्रह्मणोऽपि प्रत्यक्षत्वं भविष्यति घटैकदेशप्रत्यक्षत्वे घटप्रत्यक्षवदित्यर्थः । विभक्तदेशावच्छिन्नत्वेन विस्फुलिङ्गेष्ववयवत्वादिव्यवहारः, स्वतः पुनरग्न्यात्मत्वमेवोष्णप्रकाशत्वाविशेषात्तथा चिद्रूपत्वाविशेषाज्जीवानां स्वतो ब्रह्मत्वमेवेत्यर्थः ॥ १ ॥

अक्षरस्यापि जीवोत्पत्तिप्रलयनिमित्तत्वमौपाधिकमुक्तमेकत्वसिद्ध्यर्थम् । तत्त्वतस्तु निमित्तनैमित्तिकभावोऽपि नास्तीत्याह—नामरूपबीजभूतादिति । देहापेक्षया यद्बाह्यमान्तरं च प्रसिद्धं तेन सह तत्तादात्म्येन तदधिष्ठानतया वा वर्तत इति सबाह्याभ्यन्तरः । अत एव सर्वात्मत्वात्तद्व्यतिरिक्तनिमित्ताभावादज इत्यर्थः । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवमादिभावविकाराणां निषेधे तात्पर्यमजशब्दस्याऽऽह—सर्वभावविकाराणामिति ।

---

१. विविधा भावाः चेतना अचेतनाश्च चेतनानां जीवानां स्वतोऽनादित्वात् तेषामुत्पत्तिः उपाध्युत्पत्तिरेव । प्रलयोऽप्युपाधिप्रलय एवेति ज्ञेयम् ।

२. सबाह्याभ्यन्तरः बाह्याभ्यन्तरसहितः सर्वात्मा । ( कल्प० )

३. नामरूपकृतेति—कृतकेत्यर्थः ।

४. अप्राकृतशरीरं ब्रह्मणोऽभ्युपगन्तृनिरासायोक्तम् ।

५. शास्त्रैकगम्यत्वात् परोक्षत्वं शास्त्रैकगम्येनापरिच्छिन्नानन्दाकारेणेत्यर्थः । स्वरूपेण तु 'सन् घट' इत्यादिप्रत्यक्षविषय एव ब्रह्म ।

[1]एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥

भवन्ति । सबाह्याभ्यन्तरो ह्यजोऽतोऽजरोऽमृतोऽक्षरो ध्रुवोऽभय इत्यर्थः । यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देह-भेदेषु सप्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादिमदिवाऽऽकाशं तथाऽपि तु स्वतः परमार्थ-दृष्टीनामप्राणोऽविद्यमानः क्रियाशक्तिभेदवांश्चलनात्मको वायुर्यस्मिन्नसावप्राणः । तथाऽमना अनेकज्ञानशक्तिभेद-
५ वत्सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन्सोऽयममनाः । अप्राणो ह्यमनाश्चेति प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः । तथा श्रुत्यन्तरे—[2]ध्यायतीव लेलायतीवेति । यस्माच्चैवं प्रतिषिद्धोपाधिद्वयस्तस्माच्छुभ्रः शुद्धः । अतोऽक्षरान्नामरूपबीजोपाधिलक्षितस्वरूपात्सर्व-कार्यकारणबीजत्वेनोपलक्ष्यमाणत्वात्परं तदुपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यस्तस्मात्परतोऽक्षरात्परो निरुपाधिकः पुरुष इत्यर्थः । यस्मिंस्तदाकाशाख्यमक्षरं सव्यवहारविषयमोतं प्रोतं च । कथं पुनरप्राणादिमत्त्वं तस्येत्यु-
१० च्यते । यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनाऽऽत्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादि-मत्त्वं भवेन्न तु ते प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनाऽऽत्मना सन्ति तदा। अतोऽप्राणादिमान्परः पुरुषः। यथाऽनुत्पन्ने पुत्रेऽपुत्रो देवदत्तः ॥ २ ॥

कथं ते न सन्ति प्राणादय इत्युच्यते । यस्मादेतस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायत उत्पद्यतेऽ-विद्याविषयविकारभूतो नामधेयोऽनृतात्मकः प्राणः "वाचारम्भणं विकारो नामधेयमनृतम्" इति श्रुत्यन्तरात् । न हि
१५ तेनाविद्याविषयेणानृतेन प्राणेन सप्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम् । एवं मनः सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते । तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थः । यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्याः । यथा करणानि मनश्चेन्द्रियाणि तथा शरीरविषयकारणानि भूतानि

जीवानां प्राणादिमत्त्वात्तदात्मत्वे ब्रह्मणोऽपि प्राणादिमत्त्वं प्राप्तं तन्निवर्तयति—यद्यपीत्यादिना । स्मृतिसंशयाद्यनेक-ज्ञानेषु शक्तिविशेषोऽस्यास्तीति तथोक्तः; नामरूपयोर्बीजं ब्रह्म तस्योपाधितया लक्षितं शुद्धस्य कारणत्वानुपपत्त्या
२० गमितं स्वरूपमस्येति तथोक्तम् । तस्मादुपाधिरूपात्तद्विशिष्टरूपाच्च परतोऽक्षरात्पर इति सम्बन्धः । कथं माया-तत्त्वस्याक्षरस्य परत्वमित्याकाङ्क्षायामाह—सर्वकार्येति । कार्यं ह्यपरं प्रसिद्धम् । तत्कारणत्वेन गम्यमानत्वान्माया-तत्त्वं परम् । यौक्तिकबाधादनिर्वाच्यत्वेऽपि स्वरूपोच्छेदाभावादक्षरम् । तदुक्तं गीतायाम्—

"क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति ॥ २ ॥

यदेव चैतन्यं निरुपाधिकं शुद्धमविकल्पं ब्रह्म यत्तत्त्वज्ञानाज्जीवानां कैवल्यं तदेव मायाप्रतिबिम्बितरूपेण
२५ कारणं भवतीत्याह—यस्मादेतस्मादेवेति । प्राणोत्पत्तेरूर्ध्वं तर्हि सप्राणत्वं परमात्मनो भविष्यतीतिशङ्कानिवृत्त्यर्थं श्रुत्यन्तरप्रसिद्धं प्राणस्य विशेषणमाह—अविद्याविषय इति । नामधेय इति । वाङ्मात्रो न वस्तुवृत्त इत्यर्थः । प्राणादीनां पाठक्रमोऽयमर्थक्रमेण बाध्यते[3] । "गता कलाः पञ्चदश प्रतिष्ठाः" इति भूतेषु लयश्रवणेन प्राणानां भौतिकत्वावगमाद्भूतोत्पत्त्यनन्तरं प्राणोत्पत्तिर्द्रष्टव्येति । अभिमुखमागच्छन्वायुरावहः पुरतो गच्छन्प्रवह इत्यादि-भेदः । शब्दस्पर्शरूपरसगन्धा उत्तरोत्तरस्य गुणा येषां तानि तथोक्तानि । [4]यथा शुक्लतन्त्ववस्थापन्नादन्वयिकारणा-

३० १. 'प्राणो जायत' इत्युक्त्या प्राणस्यानादित्वपूर्वपक्षो निरस्तः । 'आनीदवातमि'ति श्रुतौ ईश्वरस्य प्रलये प्राणनश्रवणं तु प्राणं विनापि सद्भावपरं ज्ञेयम् । 'एतस्माज्जायते प्राणः' इति श्रुतिश्च क्रमबाधक-पदरहिता तैत्तिरीयस्थक्रमबोधकश्रुत्यनुसारेण नेतव्या । इमे परस्माद्ब्रह्मण उत्पन्ना इत्यत्र तात्पर्यं न तु क्रमे । 'प्राणा वाव ऋषयः तेऽग्रेऽसदासीत्' इत्यस्याः श्रुतेरपि प्राणानां बहुन्नोत्पत्तिश्रुतेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुरोधाच्चोत्पत्तिरेव । असत्त्वमनभिव्यक्तरूपेण सत्ता । ( ब्र. सू. २.४.१ )

३५ २. अत्र स्वतो ध्यानचलनाभावात् मनःप्राणधर्माणां ध्यानचलनादीनामारोपस्यार्थसिद्धत्वात् प्राणमनः शून्यत्वं सिद्ध्यति ।

३. पू. मी. ५.१.२ ।

४. तदभिध्यानादेव तु तल्लिङ्गात् सः ( २-३-१३ ) इति सूत्रप्रतिपाद्यार्थं मनसि कृत्वा आह—शुक्लतन्त्व-वस्थापन्नात् इत्यादि ।

[1]अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥
तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम्।
पुमान्रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ॥ ५ ॥

खमाकाशं वायुरन्तर्बाह्य आवहादिभेदः। ज्योतिरग्निः। आप उदकम्। पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी। एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितान्येतस्मादेव जायन्ते ॥ ३ ॥ ५

संक्षेपतः परविद्याविषयमक्षरं निर्विशेषं पुरुषं सत्यं 'दिव्यो ह्यमूर्तं' इत्यादिना मन्त्रेणोक्त्वा पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रववृते। संक्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति—योऽपि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्विराट् स तत्त्वान्तरितत्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायत एतन्मयश्चेत्येतदर्थमाह। तं च विशिनष्टि। अग्निर्द्युलोकः 'असौ वाव लोको गौतमाग्निः' इति श्रुतेः। मूर्धा यस्योत्तमाङ्गं शिरः। चक्षुषी चन्द्रश्च सूर्यश्चेति चन्द्रसूर्यौ यस्येति सर्वत्रानुषङ्गः कर्तव्यः। अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा। दिशः श्रोत्रे यस्य। वाग्विवृता उद्घाटिताः प्रसिद्धा वेदा यस्य। वायुः प्राणो यस्य हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्येत्येतत्। सर्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते प्रलयदर्शनात्। जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात्। यस्य च पद्भ्यां जाता पृथिवी। एष देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मा। स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकारणात्मा ॥ ४ ॥ १० १५

पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते। तस्मात्परस्मात्पुरुषात् [2]प्रजावस्थानविशेषरूपोऽग्निः। स विशिष्यते। समिधो यस्य सूर्यः समिध इव समिधः। सूर्येण हि द्युलोकः समिध्यते।

ज्जायमानः पटः शुक्लगुणो जायते तथाऽऽकाशावस्थापन्नाद्ब्रह्मणो जायमानो वायुराकाशगुणेन शब्देनान्वितो जायते। तथैव वायुभावापन्नाद्ब्रह्मणोऽग्निस्तद्गुणेनान्वितो जायत इति द्रष्टव्यम्। ननु सूक्ष्माणि भूतानि प्रथममुत्पद्यन्ते। अनन्तरं तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति पञ्चीकरणोपलक्षणार्थं त्रिवृत्करणश्रुतेः पञ्चात्मकत्वमवगम्यते। तत एकैकस्य भूतस्य पञ्चगुणवत्त्वं वर्णितमन्यत्र। कथमिह पञ्चीकरणमनादृत्य प्रथमसर्ग एवाऽऽकाशस्यैकगुणत्वं वायोर्हि द्विगुणत्वं तेजसस्त्रिगुणत्वमित्याद्युच्यते। सत्यम्। भूतसर्गे तात्पर्याभावद्योतनाय प्रक्रियान्तरं न विरुध्यते। न ह्येतत्प्रतिबद्धं किञ्चित्फलं श्रूयते। अत एव गुणगुणिभावोऽपि न वैशेषिकपक्षवदिह विवक्षितः। किन्तु राहोः शिर इतिवद्व्यपदेशमात्रम्। विस्तरेण त्वन्त्यकार्यपर्यन्तं तेन तेनाऽऽकारेण ब्रह्मैव विवर्तत इति प्रपञ्च्यते ततोऽतिरिक्तस्याणुमात्रस्यासम्भवात्तस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रदर्शनार्थमित्यर्थः ॥ ३ ॥ २० २५

सर्वेषां भूतानामिति। पञ्चमहाभूतानाम्। अन्तरात्मा स्थूलपञ्चभूतशरीरो हि विराडित्यर्थः। पञ्चाग्निद्वारेण। द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निदृष्टेः श्रुत्यन्तरचोदितत्वात्तद्द्वारेणेत्यर्थः ॥ ४-५ ॥

---

१. अग्निर्मूर्धा—इत्यादिरूपं परस्यैव ब्रह्मणः उपासनार्थं काल्पनिकं रूपमिति भाष्याभिप्रायः। पुनस्तदेव सविशेषं वक्तव्यमिति भाष्यात्। अत एव सूत्रभाष्ये अग्निर्मूर्धा इत्यादिरूपं परमेश्वरस्यैवोचितं सर्वविकारकारणत्वात्। 'एष सर्वभूतान्तरात्मा' इत्यत्र एष इति प्रकृतानुकर्षणाच्च। परं तु सूत्रभाष्य एव 'अन्ये पुनर्मन्यन्ते' इत्यारभ्य 'नायं भूतयोनेः रूपोपन्यासः सम्भवति जायमानत्वेन निर्देशात्। अपि तु प्रथमशरीरस्य विराट्पुरुषस्यायं रूपोपन्यासः' इत्युक्तम्। तदभिप्रायेणेहोपनिषद्विवरणेऽपि—विराट्पुरुषः स एव। तत्त्वान्तरितत्वेन लक्ष्यमाणोऽपि एतस्मादेव जायत इत्युक्तम्। ३०

परिमलकारास्तु—'अग्निर्मूर्धे'त्यादिना उक्तं सर्वप्रपञ्चात्मकं रूपं परमेश्वर एव समञ्जसं सर्वोपादानत्वेन सर्वात्मकत्वात्। न तु हिरण्यगर्भे। सगुणे सम्भवतस्तस्य निर्गुणेऽपि स्तुत्यर्थमुपन्यासात्। इदमेव च स्वमतमित्याहुः। अत एव स्मर्यमाणमनुमानं स्यादिति सूत्रस्य मन्त्रस्य परमात्मपरत्वं सूचयति। तस्मादग्निः द्युलोकः। ३५

२. प्रजावस्थानविशेषः—देवानां निवासभूतः स्वर्गः।

तस्मादृचः साम [1]यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

५ ततो हि द्युलोका[2]न्निष्पन्नात्सोमात्पर्जन्यो द्वितीयोऽग्निः सम्भवति । तस्माच्च पर्जन्यादोषधयः पृथिव्यां सम्भवन्ति । ओषधिभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुमानग्नौ रेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति । एवं क्रमेण बह्वीर्बह्व्यः ब्राह्मणाद्याः पुरुषात्परस्मात्संप्रसूताः समुत्पन्नाः ॥ ५ ॥

किञ्च कर्मसाधनानि फलानि च तस्मादेवेत्याह—कथं? तस्मात्पुरुषादृचो नियताक्षरपादावसाना गायत्र्यादिच्छन्दोविशिष्टा मन्त्राः । साम पाञ्चभक्तिकं साप्तभक्तिकं च स्तोभादि गीतविशिष्टम् । यजूंष्यनियताक्षरपादावसानानि १० वाक्यरूपाण्येवं त्रिविधा मन्त्राः । [3]दीक्षाः मौञ्ज्यादिलक्षणाः कर्तृनियमविशेषाः । यज्ञाश्च सर्वेऽग्निहोत्रादयः । क्रतवः [4]सयूपाः । दक्षिणाश्चैकगवाद्यपरिमितसर्वस्वान्ताः । संवत्सरश्च कालः कर्माङ्गम् । यजमानश्च कर्ता । लोकास्तस्य कर्मफलभूताः । ते विशेष्यन्ते सोमो यत्र येषु लोकेषु पवते पुनाति लोकान्यत्र येषु सूर्यस्तपति च, ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः ॥ ६ ॥

तस्माच्च पुरुषात्कर्माङ्गभूता देवाः बहुधा वस्वादिगणभेदेन संप्रसूताः सम्यक्प्रसूताः । साध्या देवविशेषाः । १५ मनुष्याः कर्माधिकृताः । पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनं च मनुष्यादीनाम् प्राणापानौ, व्रीहियवौ हविरर्थौ । तपश्च कर्माङ्गं पुरुषसंस्कारलक्षणं स्वतन्त्रं च फलसाधनम् । श्रद्धा यत्पूर्वकः सर्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धिः, तथा सत्यमनृतवर्जनं यथाभूतार्थवचनं चापीडाकरम् । ब्रह्मचर्यं मैथुनासमाचारः । विधिश्चेतिकर्तव्यता[5] ॥ ७ ॥

पाञ्चभक्तिकमिति । हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्तयोऽवयवा यस्य तत्तथोक्तम् । २० साप्तभक्तिकमिति । हिङ्कारप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः सप्त भक्तयो यस्य तत्तथोक्तम् । स्तोभोऽर्थशून्यो वर्णः । विश्वजित्सर्वमेधयोः सर्वस्वदक्षिणा । अत एकां गामारभ्य सर्वस्वान्ता दक्षिणा भवन्तीत्यर्थः ॥ ६ ॥

तपश्च कर्माङ्गमिति । [6]पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्याऽऽमिक्षा वैश्यस्येत्यादिर्विहितम् [स्वतन्त्रं] कृच्छ्रचान्द्रायणादीत्यर्थः ॥ ७ ॥

---

१. यजूंषि—"एक वाक्यं एकं यजुः" इति तल्लक्षणम् । वाक्यत्वं च एकमुख्यविशेष्यकबोधजनकत्वे सति २५ विभज्यमाने साकाङ्क्षत्वम् । ( पू० मी० २-१-१४ )

२. निष्पन्नात् सोमात्—पञ्चाग्निद्वारेण संसरतां प्रथमाग्निः द्युलोकः तत्र कर्मिणः आहुतिद्वारा गत्वा सोमरूपेण निष्पद्यन्ते 'एष सोमो राजा तद्देवानामन्नमि'त्युक्तेः ।

३. दीक्षा—यमनियमादिपरिग्रहानुकूलयोग्यता, तदभिव्यञ्जकं च मौञ्जीदण्डकृष्णाजिनादिः ।

४. सयूपाः—पशुयागाः तदङ्गकाः सोमयागाश्च । तत्र पशुनियोजनार्थो यूपः खादिरादिः । दक्षिणाः प्रायः ३० गौरेव दक्षिणा । तत्रापि क्वचिदेका गौर्दक्षिणा । विकृतिविशेषे धेनुर्दक्षिणा । ज्योतिष्टोमे तु द्वादशशतं गावः । आधाने एका देया, षड्देयाः शतं देयं, सहस्रं देयं, अपरिमितं देयमित्युक्तम् ।

५. इतिकर्तव्यता—अङ्गकलापः ।

६. पयोव्रतम्—क्षुन्निवृत्तिसाधनम् । आमिक्षा—तप्तपयसि दधिप्रक्षेपे सम्पद्यमानं कठिनद्रव्यम् । कृच्छ्रम्—त्र्यहमहनि भोजनं त्र्यहं रात्रौ त्र्यहमयाचितं, त्र्यहमुपवासः । एवंकृते प्राजापत्यकृच्छ्रमनुष्ठितं भवति । ३५ चान्द्रायणम्—शुक्लप्रतिपदि एकः कवलो भोक्तव्यः । प्रत्यहं तद्वर्धने पौर्णमास्यां पञ्चदशकवलाः । ततः प्रतिपदि चतुर्दश इति क्रमेण ह्रासः अमावास्यामेकः । इदं यवमध्यचान्द्रायणम् ।

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त होमाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥
अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥
पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । ५
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके प्रथमः खण्डः

किञ्च सप्त [१]शीर्षण्याः प्राणास्तस्मादेव पुरुषात्प्रभवन्ति। तेषां च सप्तार्चिषो दीप्तयः स्वविषयावद्योतनानि। तथा सप्त समिधः सप्त विषयाः। विषयैर्हि समिध्यन्ते प्राणाः। सप्त होमास्तद्विषयविज्ञानानि "यदस्य विज्ञानं तज्जुहोति" इति श्रुत्यन्तरात्। किञ्च सप्तेमे लोका इन्द्रियस्थानानि येषु चरन्ति सञ्चरन्ति प्राणाः। प्राणा येषु १० चरन्तीति प्राणानां विशेषणमिदं प्राणापानादिनिवृत्त्यर्थम्। गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः। निहिताः स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदम्। यानि चाऽऽत्मयाजिनां[२] विदुषां कर्माणि कर्मफलानि चाविदुषां च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत्परस्मादेव पुरुषात्सर्वज्ञात्प्रसूतमिति प्रकरणार्थः ॥ ८ ॥

अतः पुरुषात्समुद्राः सर्वे क्षाराद्याः। गिरयश्च हिमवदादयोऽस्मादेव पुरुषात्सर्वे। स्यन्दन्ते स्रवन्ति गङ्गाद्याः सिन्धवो नद्यः सर्वरूपा बहुरूपाः। अस्मादेव सर्वा ओषधयो व्रीहियवाद्याः। रसश्च मधुरादिः षड्विधो येन रसेन भूतैः १५ पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरम्। तद्ध्यन्तराले शरीरस्याऽऽत्मनश्चाऽऽत्मवद्वर्तत इत्यन्तरात्मा ॥ ९ ॥

एवं पुरुषात्सर्वमिदं संप्रसूतम्। अतो वाचारम्भणं विकारो नामधेयमनृतं [३]पुरुष इत्येव सत्यम्। अतः पुरुष एवेदं विश्वं सर्वम्। न विश्वं नाम पुरुषादन्यत्किञ्चिदस्ति। अतो यदुक्तं तदेतदभिहितं कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। एतस्मिन्हि परस्मिन्नात्मनि सर्वकारणे पुरुषे विज्ञाते [४]पुरुष एवेदं विश्वं नान्यदस्तीति २०

आत्मयाजिनामिति। सकलमिदमहं च परमात्मैवेतिभावनापूर्वकं परमेश्वराराधनबुद्ध्या ये यजन्ति तेषामित्यर्थः॥ ८ ॥

१. शिरसि भवाः द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके एका वाक् इति सप्त। अवद्योतनं विषयप्रकाशः वृत्तिफलितचैतन्यकृतः होमस्तु वृत्तिः।

२. अन्तःकरणशुद्ध्यर्थं ये यजन्ति ते आत्मयाजिनः। तदुक्तम्—'आत्मयाजी तु करोति इदमनेनाङ्गं २५ संस्क्रियत' इति।

३. एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय छान्दोग्यषष्ठे 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयमि'त्यनेन विकारस्यानृतत्वात्, 'उपादानमेव विकाराणां तत्त्वमि'त्यवगमात् सर्वप्रपञ्चोपादानब्रह्मज्ञानात् सर्वोऽपि प्रपञ्चः तत्त्वतोऽवगतो भवतीति व्युत्पादितम्। अत्र तु 'पुरुष एवेदं सर्वमि'ति पुरुषस्य सर्वात्मकत्वोपपादनेन बाधायां समानाधिकरण्यात् पुरुषव्यति- ३० रेकेण सर्वं स्वरूपेण नास्ति'पुरुष एव तत्त्वं सर्वस्ये'त्युक्तेः पुरुषविज्ञानेन सर्वस्य तत्त्वतो विज्ञानोपपादनं संक्षेपेण कृतम्। न तु छान्दोग्य इव विस्तरेण। इयमेव रीतिः बृहदारण्यके 'आत्मनि विज्ञाते सर्वं विज्ञातं भवती'ति प्रतिज्ञाय 'इदं सर्वं यदयमात्मा' इति पुरुषस्य सर्वात्मकत्वमुक्तम्। गीतासु च 'यज्ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते' इत्युक्त्वा 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति भगवतः उपादानकारणत्वमुक्तम्। तत्रापीयमेव रीतिः। ३५

४. पुरुष एवेदं विश्वमिति मतान्तरे न सम्भवति, जीवानामनादित्वेन पुरुषोपादानकत्वाभावात्, अभेदानङ्गीकाराच्च।

आविः संनिहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम् ।
एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

५ विज्ञातं भवतीति । किं पुनरिदं विश्वमित्युच्यते । कर्माग्निहोत्रादिलक्षणम् । तपो ज्ञानं तत्कृतं फलमन्यदेतावद्धीदं सर्वम् । तच्चैतद्ब्रह्मणः कार्यं तस्मात्सर्वं ब्रह्म परामृतं परममृतमहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां स एवं विज्ञानादविद्याग्रन्थिं ग्रन्थिमिव दृढीभूतामविद्यावासनां विकिरति विक्षिपति नाशयतीह जीवन्नेव न मृतः सन्हे सोम्य प्रियदर्शन ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके प्रथमः खण्डः

१० अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते—आविः प्रकाशं सन्निहितं वागाद्युपाधिभि"र्ज्वलति भ्राजती"ति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते । दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम् । यदेतदाविर्ब्रह्म सन्निहितं सम्यक्स्थितं हृदि तद्गुहाचरं नाम गुहायां चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम् । महत्सर्वमहत्त्वात्पदं पद्यते सर्वेणेति सर्वपदार्थास्पदत्वात् । कथं तन्महत्पदमित्युच्यते । यतोऽत्रास्मिन्ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविवाराः—एजच्चलत्पक्ष्यादि । प्राणत्प्राणितीति प्राणापानादिमन्मनुष्य-
१५ पश्वादि । निमिषच्च यन्निमेषादिक्रियावद्यच्चानिमिषत् चशब्दात्समस्तमेतदत्रैव ब्रह्मणि समर्पितम् । एतद्यदास्पदं सर्वं जानथ हे शिष्या अवगच्छथ तदात्मभूतं भवतां सदसत्स्वरूपम् । सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात् । वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयं परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सम्बन्धो यल्लौकिकविज्ञानागोचरमित्यर्थः । यद्वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्वदोषरहितत्वात् ॥ १ ॥

२० किञ्च—यदर्चिमद्दीप्तिमत् यद्दीप्त्याऽऽदित्यादि दीप्यत इति दीप्तिमद्ब्रह्म । किञ्च यदणुभ्यः श्यामाकादिभ्योऽप्यणु

यत्पृष्टं कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तन्निरूपितम् । सर्वमिदं परमात्मनो जायते । अतस्तावन्मात्रं सर्वं तस्मिन्विज्ञाते विज्ञातं भवतीत्यविद्याक्षयफलाभिधानेनोपसंहृतमिति ॥ ९-१० ॥

इति मुण्डकोपनिषद्भाष्यटीकायां द्वितीयमुण्डके प्रथमः खण्डः ।

अधुना यस्य सकृदुपदेशमात्रेणाद्वितीयं ब्रह्मास्मीतिवाक्यार्थज्ञानं न भवति तस्योपायानुष्ठानेन भवितव्य-
२५ मित्यभिप्रेत्याऽऽह—अरूपं सदक्षरमिति । वाक्यार्थस्यैव पुनः पुनर्भावना . युक्त्यनुसन्धानं चोपाय इत्याह—उच्यत इति । आविःशब्दो निपातः प्रकाशवाची । ब्रह्म विश्वोपलब्ध्यात्मना प्रकाशमानमेव सदेति भावयेदित्यर्थः । अन्यैरप्युक्तम्—

"यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रतिभाति केवलं ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥" इति ।

३० सन्निहितमिति । सर्वेषां प्राणिनां हृदये स्थितं वागाद्युपाधिभिः शब्दादीनुपलभमानवद्ब्रह्मैव जीवभावमापन्नमवभासते । ततः स्वतोऽपरोक्षं चेति सदा स्मरेदित्यर्थः । सर्वमिदं कार्यं परिच्छिन्नं च सास्पदं कार्यत्वात्परिच्छिन्नत्वाच्च घटादिवत्ततः सर्वास्पदं यत्तदेव मायास्पदमात्मभूतमिति युक्त्यनुसन्धानमाह—महत्पदमिति ॥ १ ॥

घटादिवदादित्यादेर्जडत्वेऽपि यद्दीप्तिमत्त्वं वैचित्र्यं तदनुपपत्त्याऽपि तत्कारणं सम्भावनीयमित्याह—किञ्च
३५ यदर्चिमदिति । अर्चिमत्त्वादादित्यादिवदिन्द्रियग्राह्यत्वं प्राप्तं निषेधयति—यदणुभ्य इति । परमाणुपरिमाणत्वं तर्हि

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥
[1]यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥ ५

च सूक्ष्मम् । चशब्दात्स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः । यस्मिँल्लोका भूरादयो निहिताः स्थिताः । ये च लोकिनो लोकनिवासिनो मनुष्यादयः, चैतन्याश्रया हि सर्वे प्रसिद्धास्तदेतत्सर्वाश्रयमक्षरं ब्रह्म स प्राणस्तदु वाङ्मनो वाक्च मनश्च सर्वाणि च करणानि तदु अन्तश्चैतन्यं; चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसङ्घातः "प्राणस्य प्राणम्" इति श्रुत्यन्तरात् । यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्यमवितथमतोऽमृतमविनाशि तद्वेद्धव्यं मनसा ताडयितव्यम् । तस्मिन्मनःसमाधानं कर्तव्यमित्यर्थः । यस्मादेवं हे सोम्य विद्ध्यक्षरे चेतः समाधत्स्व ॥ २ ॥ १०

कथं वेद्धव्यमित्युच्यते—धनुरिष्वासनं गृहीत्वाऽऽदायौपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं महच्च तदस्त्रं च महास्त्रं धनुस्तस्मिन्शरम् । किंविशिष्टमित्याह—उपासानिशितं सन्तताभिध्यानेन तनूकृतं संस्कृतमित्येतत् । सन्धयीत सन्धानं कुर्यात् । सन्धाय चाऽऽयम्याऽऽकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्य लक्ष्य एवाऽऽवर्जितं कृत्वेत्यर्थः । न हि हस्तेनेव धनुष आयमनमिह सम्भवति । तद्भावगतेन तस्मिन्ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन चेतसा लक्ष्यं तदेव यथोक्तलक्षणमक्षरं सोम्य विद्धि ॥ ३ ॥ १५

यदुक्तं धनुरादि तदुच्यते—प्रणव ओङ्कारो धनुः । यथेष्वासनं लक्ष्ये शरस्य प्रवेशकारणं तथाऽऽत्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोङ्कारः । प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते यथा धनुषाऽऽस्त इषुर्लक्ष्ये । अतः प्रणवो धनुरिव धनुः । शरो ह्यात्मोपाधिलक्षणः पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मण्यतो ब्रह्म तल्लक्ष्यमुच्यते लक्ष्य इव मनःसमाधित्सुभिरात्मभावेन लक्ष्यमाणत्वात् । तत्रैवं सत्यप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति तथा देहाद्यात्मप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादयेदित्यर्थः ॥ ४ ॥ २०

अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचनं सुलक्षणार्थम्—यस्मिन्नक्षरे पुरुषे द्यौः पृथिवी चान्तरिक्षं चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्वैस्तमेव सर्वाश्रयमेकमद्वितीयं जानथ जानीथ जानीत हे शिष्याः । आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनां च ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत । तत्प्रकाश्यं च सर्वं कर्म २५

स्यादिति नाऽऽशङ्कनीयमित्याह—चशब्दादिति । स्थूलत्वात्तर्ह्यन्याधारं[2] स्यादिति नाऽऽशङ्कनीयमित्याह—यस्मिँल्लोका इति । प्राणादिप्रवृत्तिश्चेतनाधिष्ठाननिबन्धना जडप्रवृत्तित्वाद्रथादिप्रवृत्तिवच्चिद्भेदे च प्रमाणाभावादेकचैतन्यमात्रमस्मीति विचारयेदित्याह—तदेतत्सर्वाश्रयमिति । प्राणाद्यधिष्ठानत्वात्प्राणादिलक्ष्य आत्मा द्रष्टव्यः ॥ २ ॥

विचारासमर्थस्य प्रणवमवलम्ब्य ब्रह्मात्मैकत्वे चित्तसमाधानं क्रममुक्तिफलं दर्शयितुमुपक्रमते—कथं वेद्धव्यमित्यादिना । प्रणवो ब्रह्मेत्यभिध्यायत उपसंहृतकरणग्रामस्य प्रणवोपरक्तं यच्चैतन्यप्रतिबिम्बं स्फुरति स आत्मेत्यनुसन्धानं प्रणवे शरसन्धानं तस्य चित्प्रतिबिम्बस्य बिम्बैक्यानुसन्धानं लक्ष्यवेधः ॥ ३-४ ॥ ३०

उत्तरग्रन्थस्य पौनरुक्त्यं परिहरति—अक्षरस्यैव दुर्लक्ष्यत्वादिति । ससाधनं सर्वं कर्म परित्यज्याऽऽत्मैव

---

१. अत्र द्युपृथिव्यादीनामाधारत्वेन श्रूयमाणं वस्तु प्रधानं वा हिरण्यगर्भरूपो वायुर्वा ब्रह्म वेति सन्दिह्य प्रधानं वायुर्वा इदं भवितुमर्हति प्रपञ्चाश्रयत्वस्य तयोरपि सम्भवात् इति पूर्वपक्षं कृत्वा सिद्धान्तितं 'द्युभ्वाद्यायतनं स्वशब्दाद्' ब्रह्मेति 'तत्तु समन्वयादि'त्यतः अनुवर्तते, स्वशब्दात्—आत्मशब्दात् तमात्मानमित्युक्तेः । ३५ तस्यैव वाग्विमोकपूर्वकज्ञेयत्वस्य "नानुध्यायाद्बहून् शब्दान्" इत्यादौ बृहदारण्यके श्रुतत्वात् ।

२. अन्याधारम्—अन्यः आधारो यस्य, अन्यत्र निहितमित्यर्थः । सर्वलोकाधारत्वादनाधारमिति समाधानम् ।

अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः।
ओमित्येवं ध्यायथ आत्मानं [1]स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥
यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः।
[2]मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय।
५ तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

ससाधनम्। यतोऽमृतस्यैष सेतुरेतवात्मज्ञानममृतस्यामृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः संसारमहोदधेरुत्तरण-हेतुत्वात्तथा च श्रुत्यन्तरम्—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति ॥ ५ ॥

किञ्च—अरा इव। यथा रथनाभौ समर्पिता अरा एवं संहताः सम्प्रविष्टा यत्र यस्मिन्हृदये सर्वतो देह-व्यापिन्यो नाड्यस्तस्मिन्हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत आत्माऽन्तर्मध्ये चरते चरति वर्तते। पश्यञ्छृण्व-
१० न्मन्वानो विजानन्बहुधाऽनेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमानोऽन्तःकरणोपाध्यनुविधायित्वात्। वदन्ति लौकिका 'हृष्टो जातः क्रुद्धो जात' इति। तमात्मानमोमित्येवमोङ्कारालम्बनाः सन्तो यथोक्तकल्पनया ध्यायथ चिन्तयत। उक्तं च वक्तव्यं शिष्येभ्य आचार्येण जानता। शिष्याश्च ब्रह्मविद्याविविदिषुत्वान्निवृत्तकर्माणो मोक्षपथे प्रवृत्ताः। तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्यः। स्वस्ति निर्विघ्नमस्तु वो युष्माकं पाराय परकूलाय। परस्तात् कस्मात्? अविद्यातमसः। अविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः ॥ ६ ॥

१५ योऽसौ तमसः परस्तात्संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषय इति स कस्मिन्वर्तत इत्याह—यः सर्वज्ञः सर्वविद्याख्यातः। तं पुनर्विशिनष्टि। यस्यैष प्रसिद्धो महिमा विभूतिः। [3]कोऽसौ महिमा? यस्येमे द्यावापृथिव्यौ शासने विधृते तिष्ठतः। सूर्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्रं भ्रमतः। यस्य शासने सरितः सागराश्च स्वगोचरं नातिक्रामन्ति। तथा स्थावरं जङ्गमं च यस्य शासने नियतम्। तथा चर्तवोऽयने अब्दाश्च यस्य शासनं नातिक्रामन्ति।

ज्ञातव्य इत्यत्रैव हेतुमाह—अमृतस्येति। धनुषाऽऽयुधेन लक्ष्यत इति तल्लक्षण आत्मैकत्वसाक्षात्कार
२० इत्यर्थः ॥ ५ ॥

कर्मसङ्गिजनसङ्गत्या कर्मश्रद्धा विषयश्रद्धा च वाक्यार्थज्ञानस्यावगमाय प्रतिबन्धको विघ्नः स मा भूदित्याशंसनम्। न तु वाक्यार्थावगतौ निष्पन्नायां फलप्राप्तेर्विघ्नशङ्काऽस्तीत्यभिप्रेत्याऽऽह—परस्तादिति। मदुपदेशा-दूर्ध्वमित्यर्थः ॥ ६ ॥

सर्वेश्वरत्वमनोमयत्वादिगुणविशिष्टब्रह्मणो हृदयपुण्डरीके ध्यानं च क्रममुक्तिफलं मन्दब्रह्मविदो विधीयत
२५ इति दर्शयितुमाह—योऽसौ तमसः परस्तादित्यादिना ॥ ७ ॥

---

१. अत्राचार्यः शिष्याननुगृह्णाति। एवमेव मुण्डकब्राह्मणे प्रश्नोपनिषदि "तं वेद्यं पुरुषं वेद मा वो मृत्युः परिव्यथा इति" इति वाक्येन शिष्यान् गृहीतब्रह्मविद्यान् अनुगृह्णाति।

२. मनोमय इत्यादिवाक्यं जीवपरम्। तस्यैव प्राणभृत्त्वेन प्राणशरीरत्वस्योपपत्तेः प्राणशरीरयोः शरीरान्तरं प्रति नेतृत्वोपपत्तेश्च। मतान्तरे तु प्राणशरीरः नेता इति पृथग्विशेषणत्वमुक्तं परमात्मनः। मनोमय-
३० त्वादिकं जीवे प्रसिद्धतरम्। स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय इत्यादौ।

३. कोऽसौ महिमेति प्रश्नपूर्वकमाचार्यः बृहदारण्यके अक्षरब्राह्मणे याज्ञवल्क्येनानुक्रान्तान् महिम्न आह—"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादीन् सर्वासामुपनिषदामेक-कण्ठ्यस्फोरणाय।

क्षीयन्ते चास्य कर्माणीति। न च "स आगच्छति विरजां नदीं तत्सुकृतदुष्कृते विधूनुते" (कौ० १-४)
३५ इति श्रुतिविरोधः ज्ञानबलात् भवन् दुरितक्षयः यदैव ज्ञानं तदैव भवति, न तु मृत्वा विरजानदीगमनं यावदवतिष्ठते हेत्वभावात्, विरजातटे सुकृतदुष्कृतक्षयस्य प्रायश्चित्तादिकारणाभावाच्च। तदुक्तम्—साम्पराये तर्तव्याभावात्तथाह्यन्ये ( ब्र० सू० ३-३-२७ )—इति सञ्चितदुरितनाशेऽपि प्रारब्धानुवृत्तिः, मुक्तेषुन्यायेन, प्रारब्धस्य ज्ञानोपजीव्यत्वाच्च।

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥**

तथा कर्तारः कर्माणि फलं च यच्छासनात्स्वं स्वं कालं नातिवर्तन्ते स एष महिमा। भुवि लोके यस्य-स एष सर्वज्ञ एवंमहिमा देवः। दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे। ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्-ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्यद्व्योम तस्मिन्व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते। न ह्याकाशवत्सर्वगतस्य गतिरागतिः प्रतिष्ठा वाऽन्यथा सम्भवति। स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति ५ मनोमयो मनउपाधित्वात् प्राणशरीरनेता प्राणश्च शरीरं[1] च प्राणशरीरं तस्यायं नेता स्थूलाच्छरीराच्छरीरान्तरं प्रति। प्रतिष्ठितोऽवस्थितोऽन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने। हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य। हृदयावस्थानमेव ह्यात्मनः स्थितिर्न ह्यात्मनः स्थितिरन्ने। तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेन परिपश्यन्ति सर्वतः पूर्णं पश्यन्त्युपलभन्ते धीरा विवेकिनः। आनन्दरूपं सर्वानर्थदुःखायासप्रहीणममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा॥७॥ १०

अस्य परमात्मज्ञानस्य फलमिदमभिधीयते—भिद्यते हृदयग्रन्थिरविद्यावासनाप्रचयो बुद्ध्याश्रयः कामः "कामा येऽस्य हृदि श्रिताः" इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ नाऽऽत्माश्रयः। भिद्यते भेदं विनाशमायाति। छिद्यन्ते सर्वज्ञेयविषयाः संशया लौकिकानामामरणात्तु गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति। अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्माणि। न त्वेतज्जन्मारम्भकाणि प्रवृत्तफलत्वात्तस्मिन्सर्वज्ञेऽसंसारिणि परावरे परं च कारणात्मनाऽवरं १५ च कार्यात्मना तस्मिन्परावरे साक्षादहमस्मीति दृष्टे संसारकारणोच्छेदान्मुच्यत इत्यर्थः ॥ ८ ॥

अस्य परमात्मज्ञानस्येति। जीवन्मुक्तिफलस्याद्वैतवाक्यार्थावगमस्य क्रममुक्तिफलस्य चोपासनस्येत्यर्थः। अविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः। किं बुद्धौ विद्यमानायामविद्यादिभेदो ज्ञानफलं किंवा तन्निवृत्तौ। नाऽऽद्यः। सत्युपादाने कार्यस्यात्यन्तोच्छेदासम्भवात्। न द्वितीयः। ज्ञानस्याज्ञानेनैव साक्षाद्विरोधप्रसिद्धेः। किञ्च। बुद्धिरप्यनादिः सादिर्वा। नाऽऽद्यः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इतिश्रुतिविरोधात्। नान्त्यः। २० प्रलये ब्रह्मज्ञानं विनैव बुद्धेर्नाशसम्भवात्तदानर्थक्यप्रसङ्गात्। सादित्वे च बुद्धेरुपादानं साक्षाद्ब्रह्म चेत्तन्नाशं विनाऽत्यन्तोच्छेदो न स्यात्। माया चेत्सा द्रष्टृगतज्ञानेन नोच्छेदमर्हति। लौकिकमायाविगतमायाया द्रष्टृगतज्ञानेनोच्छेदादर्शनात्। किञ्च। बुद्धेरुच्छेदो न तस्याः फलं स्वनाशस्याफलत्वात्। नाऽऽत्मनः। तस्य बुद्धिप्रसङ्गाभावेन तदुच्छेदस्याफलत्वात्। किञ्चाऽऽत्मनोऽविद्याद्यनाश्रयत्वाभिधानं श्रुतिविरुद्धं प्रक्रमे—अविद्यायामन्तरे वर्तमाना इति श्रवणादुपसंहारे च—"अनीशया शोचति मुह्यमानः" इति श्रवणात्। बुद्धिगतमेवाविद्याद्यात्मन्यध्यस्यत इति २५ चेदध्यस्यत इति कोऽर्थः। निक्षिप्यते भ्रान्त्या दृश्यते वा। नाऽऽद्यः। अन्यधर्मस्यान्यत्र निक्षेपासम्भवात्। भ्रान्त्या चेत्केन दृश्यते। न तावदात्मना तस्याविद्याश्रयत्वानङ्गीकारात्। न बुद्ध्या। बुद्धेरात्मविषयत्वासम्भवेन तद्गतदर्शनासम्भवात्। तद्भ्रान्तेश्च स्वाश्रयगतेन तत्त्वानुभवेन निवर्त्यत्वप्रसिद्धेर्बुद्धेरनुभवाश्रयत्वप्रसङ्गात्। तस्मान्नास्य भाष्यस्य सम्यगर्थं पश्याम इति चेत्, उच्यते। चित्तन्त्राऽनादिरनिर्वाच्याऽविद्या चैतन्यमवच्छिद्य स्वावच्छिन्नचैतन्यस्य बुद्ध्यादितादात्म्यरूपेण विवर्तते। तस्याश्च ब्रह्मात्मतासाक्षात्कारनिवर्त्यरूपाङ्गीकारात्तन्निवृत्तौ तदुत्थहृदय- ३० ग्रन्थिभेदः श्रुत्योच्यते। भाष्यकारीयं च बुद्ध्याश्रयत्वाभिधानमहङ्कारविशेषणत्वेनाविद्यादेर्व्यावहारिकत्वाभिप्रायेण, आत्मानाश्रयत्वाभिधानं चाऽऽत्मनो निर्विकारत्वाभिप्रायम्। [2]बाधितानुवृत्तिश्च प्रकटार्थे प्रादर्शीति जीवन्मुक्तिर्न विरुध्यते ॥ ८ ॥

---

१. शरीरं—लिङ्गशरीरम्।

२. तत्र हि एवमुक्तम्—अवश्यं तावत् स्वोत्पत्तये तत्त्वज्ञानेन प्रवृत्तफलं कर्माश्रयणीयम्। स्वीकृते तस्मिन् ३५ कर्मणि कुलालचक्रवत् प्रवृत्तवेगस्य तन्निवर्तनपाटवशून्यत्वेन मध्ये क्षयासम्भवात् भवति वेगक्षयप्रतिपालनम्। उद्दालकादीनां तत्त्वदर्शिनामेव शरीरधारणविषयश्रुतिस्मृतिलिङ्गैः तत्त्वदर्शिभिरेव गुरुशिष्यसम्बन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतात् तस्य तावदेव चिरमिति लिङ्गात् गम्यत इति। यत्त भास्करोक्तम्—आश्रयाभावान्न कर्मानुवृत्तिः जीवस्य ब्रह्मीभावात् ब्रह्मणश्च तदसम्बन्धात्। जीवन्

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥

[1]न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१०॥

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
५　अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥११॥

इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके द्वितीयः खण्डः
इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डकं समाप्तम्

उक्तस्यैवार्थस्य संक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि—हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे परे कोशे कोश इवासेः । आत्मस्वरूपोपलब्धिस्थानत्वात्परं तत्सर्वाभ्यन्तरत्वात्तस्मिन्विरजमविद्याद्यशेषदोषरजोमलवर्जितं १० ब्रह्म सर्वमहत्त्वात्सर्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मात्तन्निष्कलं निरवयवमित्यर्थः । यस्माद्विरजं निष्कलं चातस्तच्छुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्व-मन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि परं ज्योतिर्यदन्यानवभास्यमात्मज्योतिस्तद्यदात्मविदः आत्मानं स्वं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति त आत्मविदस्तद्विदुरात्मप्रत्ययानुसारिणः । यस्मात्परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ॥ ९ ॥

१५　कथं तज्ज्योतिषां ज्योतिरित्युच्यते—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति । तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयतीत्यर्थः । न तु तस्य स्वतः प्रकाशन-सामर्थ्यम् । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरस्मद्गोचरः । किं बहुना । यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्त-मनुदहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादिजगद्विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च २० कार्यगतेन विविधेन भासा अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्नोति । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणां चाऽऽदित्यादीनां तद्दर्शनात् ॥ १० ॥

यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यं सर्वं तद्विकारं वाचारम्भणं विकारो नामधेयमात्रमनृतमितरदित्येत-

भातीति णिजन्तार्थाध्याहारेण व्याख्यातम् । तस्य भासा सर्वमिदं विभातीत्यस्य ब्रह्मणः स्वतो भारूपत्वे तात्पर्यं कथयति—यत एवं तदेव ब्रह्म भाति चेति ॥ ९-१० ॥

२५　उपसंहारमन्त्रस्य तात्पर्यमाह—यत्तज्ज्योतिषां ज्योतिस्तेन ब्रह्मणा विविधं क्रियत इति तद्विकारं सर्वं

---

अथ मुक्त इति विरुद्धं पदद्वयमिति । तन्न । यतः जीवसम्बन्ध्येवाज्ञानादि वर्तमानकर्मसम्पादकरूपेण वर्तते । जन्मान्तरादिसकलसंसारारम्भकाविद्याकामकर्मबन्धनिर्मुक्तः वर्तमानभोगभागित्वाच्च जीवन् इति जीवन्मुक्त इति न विरुद्धम्, "ब्रह्मीभूतत्वं चाब्रह्मत्वभ्रमनिवृत्त्या" इत्युक्तम् । (४-१-१५)

[1] न तत्र सूर्यो भाति—अयं मन्त्रः काठकोपनिषद्यपि श्रूयते, तथापि न तत्र तत्प्रतिपाद्यार्थविषये संशयः । ३०　त्रयाणामेव चैवमुपन्यासः प्रश्नश्चेत्यनेन सूत्रेण तत्राग्निजीवपरमात्मव्यतिरिक्तपदार्थस्य निरूपणानव-काशात् । अतो मुण्डकस्थमिदं वाक्यमधिकृत्य विचारः कृतः 'अनुकृतेस्तस्य चे'ति सूत्रेण—अत्र श्रुतौ निर्दिष्टः तेजो धातुः किञ्चिद्भौतिकं तेजो न ब्रह्म—'तमेव भान्तमनुभाती'त्युक्तानुभानस्य समान-स्वभावकेष्वेव दर्शनात्, गच्छन्तमनुगच्छतीतिवत् इति प्राप्ते सिद्धान्तः ब्रह्मैवास्मिन्मन्त्रे प्रतिपाद्यते भानरूपत्वात् । अयःपिण्डः अग्निं दहन्तमनुदहति इति भिन्नस्वभावकेष्वप्यनुकारदर्शनात् । पूर्वमन्त्रे ३५　ज्योतिषां ज्योतिरित्यनेन ब्रह्मणः प्रकृतत्वात् । कथं तज्ज्योतिषां ज्योतिरिति प्रश्नसमाधानार्थमस्य मन्त्रस्य प्रवृत्तेः ।

[1]द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं [2]स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥

मर्थं विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति—ब्रह्मैवोक्तलक्षणमिदं यत्पुरस्तादग्रे अब्रह्मेवाविद्यादृष्टीनां प्रत्यवभासमानं, तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्ध्वं च सर्वतोऽन्यदिव कार्यकारेण प्रसृतं प्रगतं नामरूपवदवभासमानम् । किं बहुना ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमम् । अब्रह्म- ५
प्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः । ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम् ॥ ११ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके द्वितीयः खण्डः
इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयं मुण्डकं समाप्तम्

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते । यदधिगमे हृदयग्रन्थ्यादिसंसारकारणस्याऽऽत्यन्तिक-विनाशः स्यात् । तद्दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्तः । अथेदानीं तत्सहकारीणि सत्यादिसाधनानि १० वक्तव्यानीति तदर्थमुत्तरारम्भः । प्राधान्येन तत्त्वनिर्धारणं च प्रकारान्तरेण क्रियते अत्यन्तदुरवगाह्यत्वात्कृतमपि ।

जगत्सर्वं ब्रह्मैवेति [3]बाधायां सामानाधिकरण्यं योऽयं स्थाणुः पुमानसावितिवदन्वयव्यतिरेकाभावपरिहारेण[4] तावन्मात्रत्वं बोध्यते ॥ ११ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्यटीकायां द्वितीयमुण्के द्वितीयः खण्डः
इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्यटीकायां द्वितीयं मुण्डकं समाप्तम् १५

प्राधान्येनेति । अपूर्वत्वेन तात्पर्यविषयतयेत्यर्थः । द्वा सुपर्णेत्यादौ द्विवचनस्याऽऽकारश्छान्दसः । जीवस्या-ज्ञत्वेन नियंम्यत्वेन योग्यत्वादीश्वरस्य सर्वज्ञत्वेन नियामकत्वशक्तियोगाच्छोभनमुचितम् । नियम्यनियामकभाव-

---

१. अस्मिन्मन्त्रे 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति सत्त्वं, 'अनश्नन्नन्योऽभिचाकशीति इति क्षेत्रज्ञः' इत्यादिना अन्तःकरणजीवौ द्वा सुपर्णेति ग्राह्यौ इति यद्यपि पैङ्गिरहस्यब्राह्मणं तथापि न क्षतिः। अन्तः-करणातिरिक्तो जीवः अनुपाधिकः शुद्ध एव । स चेश्वरः एवेति ब्रह्मप्रकरणं न विरुध्यते इति निर्णीतं २० ब्रह्मसूत्रभाष्ये । अत्र जीवेश्वरपरतया व्याख्यातॄणामन्येषां ब्राह्मणविरोधः, मन्त्रब्राह्मणयोरैकार्थ्यस्य सर्वसम्प्रतिपन्नत्वात् । सत्त्वशब्दोऽपि उपनिषत्सु 'सत्त्वादधिमहानात्मा' इत्यत्र बुद्धिपर इत्येवोक्तम् ।
यत्तु मतान्तरे समाने वृक्ष इत्युत्तरमन्त्रानुरोधेन अस्य जीवपरत्वस्याङ्गीकरणीयत्वात् पैङ्गिरहस्य ब्राह्मणस्यायमर्थः—सत्त्वं बद्धजीवः क्षेत्रज्ञः परमात्मा । येन विशिष्टः स्वप्नं पश्यतीत्यर्थः । शारीरक-शब्दोऽपि परमात्मपरः चिदचिच्छरीरकत्वात् । एतत्सर्वं स्वमतस्य कथञ्चित् तत्रोद्भावनमेव परमात्मा २५ स्वतः एव सर्वज्ञः, तस्य स्वत एव स्वप्नदर्शनसम्भवे येन विशिष्टः इत्यसङ्गतम् ।
अत्र 'इयदामननात्' इत्यधिकरणे द्वा सुपर्णेति मन्त्रप्रतिपाद्यविद्यायाः 'ऋतं पिबन्ताविति मन्त्रप्रति-पाद्यायाश्च विद्याया ऐक्यं निर्णीतम् । उभयत्रापि इयत्तापरिच्छिन्नस्य द्वित्वोपपन्नस्य विषयस्य प्रतीतेः इति हेतुः प्रदर्शितः । इदं च द्वा सुपर्णामन्त्रस्य जीवेश्वरपरत्वमादायैवेति ज्ञेयम् ।

२. स्वाद्वत्ति—स्वादु यथा तथा अत्ति अल्पं वा बृहद्वा भवतु कर्मफलानुभवे जीवानां सुखानुभवदर्शनात् । ३०

३. बाधायां सामान्याधिकरण्यम्—बाध्यमानतादात्म्योपलक्षिताधिष्ठानव्यक्तिप्रतिपादकसमानविभक्तिकनाम-द्वयत्वं ( ल० च० ) यथा योऽयं स्थाणुः पुमानेष इति—अत्र हि स्थाणुतादात्म्याभावोपलक्षितपुरुष-व्यक्तिमात्रप्रतिपादकत्वात् लक्षणसङ्गतिः ।

४. अन्वयव्यतिरेकाभावपरिहारेणेति—अन्वयः—स्थाणुत्वं तस्य भानं, व्यतिरेकः—तदभावः तस्य च भानं तदुभयं विना शुद्धपुरुषभानमित्यर्थः । अन्वयव्यतिरेकयोरुभयोरपि परिहारेणेत्यर्थः । व्यतिरेकाभाव ३५ इति—व्यतिरेकरूपस्याभावस्य परिहारेणेत्यर्थः । अन्वयव्यतिरेकपरिहारेणेति वा अन्वयव्यतिरेकभान-परिहारेणेति वा पाठश्चेत् सुगमः ।

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते—द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्वदा युक्तौ सखाया सखायौ [1]समानाख्यानौ समानाभिव्यक्तिकारणावेवंभूतौ सन्तौ समानमविशेषमुपलब्ध्यधिष्ठानतयैकं वृक्षं वृक्षमिवोच्छेदनसामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। सुपर्णाविवैकं वृक्षं फलोपभोगार्थम्। अयं हि वृक्ष ऊर्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः सर्वप्राणिकर्मफलाश्रयस्तं परिष्वक्तौ सुपर्णाविवाविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ। तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिः वृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वाद्वनेकविचित्रवेदनास्वादरूपं स्वाद्वत्ति भक्षयत्युपभुङ्क्तेऽविवेकतः। अनश्नन्नन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वसत्त्वोपाधिरीश्वरो नाश्नाति। प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण। स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम्। दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥

तत्रैवं सति—समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवंप्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धिबान्धवैः। अतोऽनीशया न कस्यचित्समर्थोऽहं पुत्रो मम विनष्टो मृता मे भार्या किं मे जीवितेनेत्येवं दीनभावोऽनीशा[2] तया शोचति सन्तप्यते मुह्यमानोऽनेकैरनर्थप्रकारैरविवेकतया चिन्तामापद्यमानः। स एवं प्रेततिर्यङ्मनुष्यादियोनिष्वाजवं जवीभावमापन्नः कदाचिदनेकजन्मसु [3]शुद्धधर्मसञ्चितनिमित्ततः केनचित्परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसम्पन्नः समाहितात्मा सञ्जुष्टं सेवितमनेकैर्योगमार्गैः कर्मिभिश्च यदा यस्मिन्काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमीशमसंसारिणमशनायापिपासाशोकमोहजरामृत्य्वतीतमीशं सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य समः सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते कृतकृत्यो भवतीत्यर्थः ॥ २ ॥

गमनं ययोस्तौ शोभनपतनौ। पक्षिसामान्याद्वेति। वृक्षाश्रयणादिश्रवणादित्यर्थः। ऊर्ध्वमुत्कृष्टं ब्रह्म मूलमधिष्ठानमस्येत्यूर्ध्वमूलोऽवाञ्चः प्राणादयः शाखा इवास्येत्यवाक्शाखः। श्वः स्थानं नियन्तुमस्य न शक्यमित्यश्वत्थः। अव्यक्तमव्याकृतं मूलमुपादानमन्वयि तस्मात्प्रभवतीति तथोक्तो यावदज्ञानभावीत्यर्थः। अविद्याकामकर्मवासनानामाश्रयो लिङ्गमुपाधिर्यस्याऽऽत्मनः स जीवस्तथोक्तः स चेश्वरश्च तावित्यर्थः। सत्त्वं मायाख्यमुपाधिरस्येति सत्त्वोपाधिः। ज्ञानात्मकस्यामलसत्त्वराशेरिति ह्युक्तम् ॥ १ ॥

आवरणं विक्षेपश्च द्वयमविद्यायाः कार्यम्। तत्रेश्वरभावाप्रतिपत्तिरनीशाऽऽवरणं शोचतीति विक्षेपस्तदुभयहेतुरनिर्वाच्यमज्ञानं मोहः। तेन विशिष्टोऽनेकैरनर्थप्रकारैरहं करोमीत्यादिभिरविवेकतया तादात्म्यापन्नतयेत्यर्थः। आजवमनवरतं जवीभावं निकृष्टभावं लक्षणया लघुभावं कर्मवायुप्रेरिततया जवीभावं क्षेप्रयमापन्नः पूर्ववदित्यभेदेनेत्यर्थः ॥ २ ॥

१. समानाख्यानौ—आख्यानं प्रकाशः उभयोः अत एव स्वप्रकाशत्वादिति कल्तपरौ व्याख्यातम्। समानाभिव्यक्तिकारणौ। उभयो हृदयमेकमेवाभिव्यक्तिकारणम्।

२. अत्र अनीशा ईश्वरभावस्यास्फूर्तिः, अहमीश्वराद्भिन्नः इति भ्रमेण शरीरादौ अभेदभ्रान्त्या शोचति। स यदा अन्यं शरीरादिविविक्तं शुद्धमीशमहं ब्रह्मास्मि इति साक्षात्करोति तदा अस्य भगवतो महिमानमाप्नोति—इति इत्यत्र गुणाभावश्छान्दसः एतीत्यर्थः। अत्र यद्यपि वृक्षसामान्यमेवोक्तं तथापि अश्वत्थ एव ग्राह्यः। अन्यत्र काठकोपनिषदि 'एषोऽश्वत्थः सनातन' इत्युक्तत्वात्। अत एव पिप्पलमिति अश्वत्थफलं निर्दिष्टम्। 'फलेलुक्' इत्यनेन विकारावयवार्थप्रत्ययलोपोक्तेः, पिप्पलस्य फलं पिप्पलमित्यनुपपन्नम्।

३. शुद्धधर्मः—ईश्वरार्पणबुद्ध्या क्रियमाणं नित्यनैमित्तिककर्मरूपो धर्मः।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः [1]परमं साम्यमुपैति ॥ ३ ॥
प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम्—यदा यस्मिन्काले पश्यः पश्यतीति विद्वान्साधक इत्यर्थः। पश्यते पश्यति पूर्ववत् रुक्मवर्णं स्वयंज्योतिःस्वभावं रुक्मस्येव वा ज्योतिरस्याविनाशि, कर्तारं सर्वस्य जगत ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं ब्रह्मणो वाऽपरस्य योनिं स यदा चैवं पश्यति तदा स विद्वान्पश्यः पुण्यपापे बन्धनभूते कर्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणं द्वैतविषयाणि साम्यान्यतोऽर्वाञ्च्येवातोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥३॥ ५ १०

किञ्च—योऽयं प्राणस्य प्राणः पर ईश्वरो ह्येष प्रकृतः सर्वैर्भूतैर्ब्रह्मादिस्तम्बपर्यन्तैः। इत्थंभूतलक्षणे तृतीया। सर्वभूतस्थः सर्वात्मा सन्नित्यर्थः। विभाति विविधं दीप्यते। एवं सर्वभूतस्थं यः साक्षादात्मभावेनायमहमस्मीति विजानन्विद्वान्वाक्यार्थज्ञानमात्रेण स [2]भवते भवति न भवतीत्येतत्किम्? अतिवाद्यतीत्य सर्वानन्यान्वदितुं शीलमस्येत्यतिवादी। यस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विद्वानतिवादी स न भवतीत्यर्थः। सर्वं यदाऽऽत्मैव नान्यदस्तीति दृष्टं तदा किं ह्यसावतीत्य वदेत्। यस्य त्वपरमन्यद्दृष्टमस्ति स तदतीत्य वदति। अयं तु विद्वानात्मनोऽन्यन्न पश्यति नान्यच्छृणोति नान्यद्विजानाति। अतो नातिवदति। किञ्चाऽऽत्मक्रीड आत्मन्येव च क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः। तथाऽऽत्मरतिरात्मन्येव च रती रमणं प्रीतिर्यस्य स आत्मरतिः। क्रीडा बाह्यसाधनसापेक्षा। रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः। तथा क्रियावाञ्ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रिया- १५

[3]पूर्ववदित्यभेदेनेत्यर्थः ॥ ३ ॥

आत्मनि रतिरात्मरतिस्तत्पुरुषः सैव क्रियाऽस्यास्तीत्यात्मरतिक्रियावानिति मतुबेवैकः प्रतीयते कथमुक्तं बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यत इति। सत्यमसमासपाठे द्वयोरर्थवत्त्वमासीत्समासपाठे त्वन्यतरो मतुबतिरिच्यते २०

१. परमं साम्यमभेद एव। मतान्तरे अपहतपाप्मत्वादिगुणाष्टकेन साम्यं प्राप्नोति इत्युक्तम्। तत्र यदि ते गुणाः नवतयोत्पद्यन्ते तदा 'यत्कृतकं तदनित्यमि'ति न्यायात् नाशप्रसङ्गः। यदि पूर्वसिद्धानामेवाभिव्यक्तिः, तदा तत्त्वमसीत्यादिना परमेश्वरस्यैव देहं प्रविश्य जीवभावेनावस्थानात् परमं साम्यमभेद—एव। भोगमात्रसाम्याङ्गीकारे परमसाम्यानुपपत्तिरेव। २५

२. भवते भवतीत्यर्थः पूर्वमन्त्रः यदा पश्यः पश्यते इति ज्ञानिनमधिकृत्य प्रवृत्तः। अत्रापि आत्मक्रीडा इत्याद्युक्तेः जीवन्मुक्तपरत्वमस्य मन्त्रस्य स्पष्टमेव। यत्तु मतान्तरे 'तेनातिवादी भवे'ति योजनया 'आत्मज्ञानेन अतिवादी भवे'ति व्याख्यातम्। तत्र अतिवदने नियोगश्चेत् तत्कुर्वन् कथं नाम विद्वान् आत्मक्रीडः आत्मरतिश्च भवेत्। अतिवदन एव कालयापनात्। अपि च छान्दोग्ये 'यद्यतिवाद्यसीति ब्रूयान्नापह्नुवीत' इति स्वभावप्राप्तत्वाभिधानात् तदेकवाक्यतया अतिवादी यदि कश्चिद्भवेत् तदा सः नातिवादी, सत्यवाद्येवेत्यर्थः। क्रियावान् वरिष्ठ इति नित्यनैमित्तिकक्रियावानित्यर्थकरणे तस्यात्मक्रीडत्वात्मरतित्वयोरनुपपत्तिरेव। अतः ज्ञानध्यानादिक्रियावानित्येवार्थः। अपि च 'तपसो वाप्यलिङ्गात्' इत्यनेन संन्यासः अत्रैव दृश्यते। अतः कथं संन्यासिनः नित्यनैमित्तिकक्रियावत्त्वं, यद्यपि स शिखायज्ञोपवीतवान्। भार्याभावेनाग्निहोत्राद्यभावात्। ३०

३. पूर्ववत्—पूर्वशरीर इवाभेदमापन्नः संसरतीत्यर्थः द्वैतविषयाणि साम्यानि सादृश्यरूपाणि तद्गतभूयोधर्मवत्त्वरूपाणि। ३५

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।
येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

५ वात् । समासपाठ आत्मरतिरेव क्रियाऽस्य विद्यत इति [1]बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । केचित्त्वग्निहोत्रादि-कर्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति । तच्चैष ब्रह्मविदां वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रीड आत्मरतिश्च भवितुं शक्तः कश्चित्, बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीडयोर्विरोधात् । न हि तमःप्रकाशयोर्युगपदेकत्र स्थितिः सम्भवति । तस्मादसत्प्रलपितमेवैतदनेन ज्ञानकर्मसमुच्चयप्रतिपादनम् । 'अन्या वाचो विमुञ्चथ" "संन्यासयोगात्" इत्यादिश्रुतिभ्यश्च । तस्मादयमेवेह क्रियावान्यो ज्ञानध्यानादिक्रियावान्सोऽभिन्नार्थ-
१० मर्यादः संन्यासी । य एवंलक्षणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान्ब्रह्मनिष्ठः स ब्रह्मविदां सर्वेषां वरिष्ठः प्रधानः ॥ ४ ॥

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि—सत्येनानृत-त्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः । किञ्च तपसा हीन्द्रियमनएकाग्रतया "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप" इति स्मरणात् । तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात्परमं साधनं तपो नेतरच्चान्द्रायणादि । एष आत्मा
१५ लभ्य इत्यनुषङ्गः सर्वत्र । सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचारेण । नित्यं सर्वदा नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्त्यदीपिकान्यायेनानुषक्तव्यः । वक्ष्यति च—"न येषु जिह्ममनृतं न माया च" इति । कोऽसावात्मा य एतैः साधनैर्लभ्य इत्युच्यते । अन्तःशरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धो यमात्मानं पश्यन्त्युपलभन्ते यतयो यतनशीलाः संन्यासिनः क्षीणदोषाः क्षीण-क्रोधादिचित्तमलाः स आत्मा नित्यं सत्यादिसाधनैः संन्यासिभिर्लभ्य इत्यर्थः । न कादाचित्कैः सत्यादिभिर्लभ्यते ॥५॥

२० सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः—[2]सत्यमेव सत्यवानेव जयते जयति नानृतं नानृतवादीत्यर्थः । न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोर्जयः पराजयो वा सम्भवति । प्रसिद्धं लोके सत्यवादिनाऽनृतवाद्यभिभूयते न विपर्ययोऽतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किञ्च शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम् ? सत्येन यथाभूत-वादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः । येन पथा ह्याक्रमन्ति क्रमन्त ऋषयो दर्शन-

विशिष्यते बाह्यक्रियानिवृत्तिलाभादित्यर्थः । एकदेशिव्याख्यामुद्भाव्य निराचष्टे—केचित्त्वित्यादिना । अनेन वचनेन
२५ ज्ञानकर्मसमुच्चयप्रतिपादनं क्रियत इत्येतदसत्प्रलपितमेवेति योजना ॥ ४ ॥

सम्यग्ज्ञानसहकारीणीति । अत्र सम्यग्ज्ञानशब्देन वस्तुविषयावगतिफलावसानं वाक्यार्थज्ञानमुच्यते । अवगतिफलस्य स्वकार्येऽविद्यानिवृत्तौ सहकार्यपेक्षासम्भवात् । अतोऽपरिपक्वज्ञानस्य सत्यादीनां च परिपक्वविद्या-लाभाय समुच्चय इष्यत एव । नैतावता भास्कराभिमतसिद्धिः । परिपक्वविद्यायाः सहकार्यपेक्षायां मानाभावात् । ततः कर्मासंश्लेषश्रवणाद्देवादीनां कर्मविहीनानां मुक्तिश्रवणाच्चेति ॥ ५ ॥

---

३० १. बहुव्रीहिमतुबर्थयोरिति—आत्मरतिः क्रिया यस्येति बहुव्रीहिसमासे आत्मरतिक्रियः इति रूपम् । आत्मरतिरेव क्रिया आत्मरतिक्रिया तद्वानिति मतुप् । उभयोरेक एव एवार्थः। तर्हि मतुबर्थोऽतिरिच्यते अर्थविशेषबोधको भवतीत्यर्थः । स च बाह्यक्रियारूपक्रियान्तरनिवृत्तिरित्यर्थः । अतिशायने मतुब्विधा-नात् एवं रूपोऽतिशयः लभ्यते न तु बहुव्रीहावित्यर्थः । एतादृशार्थः कर्मधारयोत्तरमतुपा लभ्यते न तु कर्मधारयघटितबहुव्रीहिणा ।

३५ २. सत्यमेव—अत्र सत्यपदेन सद्गुणयुक्तो भगवानुच्यते । तन्निष्ठ सद्भक्तिनिष्ठ एव जायते इति व्याख्या द्वैतिनाम् । तच्च नानृतं इत्यनेन विरुद्धम् । अनृतप्रतिद्वन्द्वितया सत्यवचनस्यैव पुरः स्फूर्तिकत्वात् । सत्यानृते इत्यादौ अनृतपदस्य असुरपरत्वे तु अप्रयुक्तलक्षणा ।

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥
न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
[1]ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

वन्तः कुहकमायाशाठ्याहङ्कारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिंस्तत्परमार्थतत्त्वं सत्यस्योत्तम- ५
साधनस्य सम्बन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयत इति निधानं वर्तते । तत्र च येन पथाऽऽक्रमन्ति
स सत्येन वितत इति पूर्वेण सम्बन्धः ॥ ६ ॥

किं तत्किंधर्मकं च तदित्युच्यते—बृहन्महच्च तत्प्रकृतं ब्रह्म सत्यादिसाधनं सर्वतो व्याप्तत्वात् । दिव्यं स्वयं-
प्रभमनिन्द्रियगोचरमत एव न चिन्तयितुं शक्यतेऽस्य रूपमित्यचिन्त्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरं,
निरतिशयं हि सौक्ष्म्यमस्य सर्वकारणत्वाद्विभाति विविधमादित्यचन्द्राद्याकारेण भाति दीप्यते । किञ्च दूराद्विप्रकृष्ट- १०
देशात्सुदूरे विप्रकृष्टतरे देशे वर्ततेऽविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म । इह देहेऽन्तिके समीपे च विदुषामात्मत्वात् ।
सर्वान्तरत्वाच्चा[2]ऽऽकाशस्याप्यन्तरश्रुतेः । इह पश्यत्सु चेतनावत्स्वित्येतन्निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगि-
भिर्लक्ष्यमाणम् । क्व ? गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं लक्ष्यते विद्वद्भिः तथाऽप्यविद्यया संवृतं सन्न लक्ष्यते
तत्रस्थमेवाविद्वद्भिः ॥ ७ ॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमुच्यते—यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचाऽनभि- १५
धेयत्वान्न चान्यैर्देवैरितरेन्द्रियैः । तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा
प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह—ज्ञानप्रसादेनाऽऽत्मावबोधनसमर्थमपि स्वभावेन
सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सन्नावबोधयति नित्यं सन्निहितमप्यात्मतत्त्वं मला-
वनद्धमिवाऽऽदर्शम् । विलुलितमिव सलिलम् । तद्यदेन्द्रियविषयसंसर्गजनितरागादिमलकालुष्यापनयनादादर्शसलिला-
दिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते तदा ज्ञानस्य प्रसादः स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्वो विशुद्धान्तःकरणो २०
योग्यो ब्रह्म द्रष्टुं यस्मात्ततस्तस्मात्तु तमात्मानं पश्यते पश्यत्युपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः
सत्यादिसाधनवानुपसंहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन् ॥ ८ ॥

कुहकं परवञ्चनम् । अन्तरन्यथा गृहीत्वा बहिरन्यथा प्रकाशनं माया । शाठ्यं विभवानुसारेणाप्रदानम् ।
अहङ्कारो मिथ्याभिमानः । दम्भो धर्मध्वजित्वम् । अनृतमयथादृष्टभाषणम् । एतैर्दोषैर्वर्जिता इत्यर्थः ॥ ६ ॥

सत्यस्य निधानं यदुक्तं तत्पुनर्विशेष्यत इत्याह—किं तत्किंधर्मकं च तदिति ॥ ७ ॥ २५

ज्ञानप्रसादेनेति । अत्र ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या बुद्धिरुच्यते । ध्यायमानो ज्ञानप्रसादं लभते । ज्ञान-
प्रसादेनाऽऽत्मानं पश्यतीति क्रमो द्रष्टव्यः । संशयादिमलरहितस्य प्रमाणज्ञानस्यैव तत्त्वसाक्षात्कारहेतुत्वाद्ध्यान-
क्रियायाः प्रमितिसाधनत्वाप्रसिद्धेरित्यर्थः ॥ ८ ॥

---

१. ज्ञानप्रसादेन—ज्ञानमन्तःकरणं तस्य प्रसादः मलराहित्यं तेन चित्तस्य शुद्धिरिति व्याख्यातम् ।
मतान्तरे—ज्ञानं ब्रह्मैव तस्य प्रसादः अनुग्रहः तेन चित्तशुद्धिरितिव्याख्या । यद्यपि 'ईश्वरानुग्रहादेव ३०
पुंसामद्वैतवासने'ति स्मृतेः ईश्वरानुग्रहः वेदान्तविचारे मनःप्रवृत्तावेवावश्यकः तथापि चित्तशुद्धिः
रागाद्यभावः पापक्षयश्च । तदुभयं प्रयत्नसाध्यमेव नेश्वरानुग्रहादेव लभ्यम् । अनुग्रहस्यैव निष्काम-
कर्मानुष्ठानलभ्यत्वात् । "यस्मिन् विशुद्धे विभवत्येष आत्मा" इत्यनेन चित्तशुद्धौ स्वहेतुना प्राप्तायां
तत्रात्मा स्वात्मानं प्रकाशयतीत्युक्तेः ।

२. आकाशेति—'य आकाशे तिष्ठन्नाकाशादन्तरः' इति श्रुतेः । ३५

[1]एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥
यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

५ इत्यथर्ववेदीयमुण्डकोपनिषदि तृतीयमुण्डके प्रथमः खण्डः

[2]स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

यमात्मानमेवं पश्यति—एषोऽणुः सूक्ष्मश्चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः। क्वासौ। यस्मिञ्शरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टस्तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा
१० वेदितव्य इत्याह—प्राणैः सहेन्द्रियैश्चित्तं सर्वमन्तःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन काष्ठमिवाग्निना। सर्वं हि प्रजानामन्तःकरणं चेतनावत्प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा विशेषेण स्वेनाऽऽत्मना विभवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥

य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह—यं यं लोकं पित्रादिलक्षणं मनसा संविभाति सङ्कल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलान्तः-
१५ करणः कामयते यांश्च कामान्प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान्सङ्कल्पितान्भोगान्। तस्माद्विदुषः सत्यसङ्कल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत्पूजयेत्पादप्रक्षालनशुश्रूषानमस्कारादिभिर्भूतिकामो विभूतिमिच्छुः ततः पूजार्ह एवासौ ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये तृतीयमुण्डके प्रथमः खण्डः

यस्मात्—स वेद जानात्येतद्यथोक्तलक्षणं ब्रह्म परममुत्कृष्टं धाम सर्वकामानामाश्रयमास्पदं यत्र यस्मिन्ब्रह्मणि
२० धाम्नि विश्वं समस्तं जगन्निहितमर्पितं यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धम्। तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव सेवन्ते ते शुक्रं नृबीजं यदेतत्प्रसिद्धं शरीरोपादान-कारणमतिवर्तन्त्यतिगच्छन्ति धीरा धीमन्तो न पुनर्योनिं प्रसर्पन्ति "न पुनः क्वचिद्रतिं करोति" इति श्रुतेः। अतस्तं पूजयेदित्यभिप्रायः ॥ १ ॥

बौद्धादेश्चित्तादौ चेतनत्वभ्रमदर्शनाच्चित्तं स्वस्मिन्संसर्गिणि च चैतन्याभिव्यञ्जकत्वे स्वभावत एव
२५ योग्यम्। ततश्चित्ते परमात्मनोऽभिव्यक्तिसम्भवाच्चेतसा ज्ञेयत्वमुच्यत इति सम्भावनार्थमाह—प्राणैः सहेन्द्रियैश्चित्त-मिति। ओतं चैतन्येन सर्वस्य। तर्हि चित्ते किमिति ब्रह्म स्वत एवापरोक्षं न भवतीत्यत आह—यस्मिंश्च चित्त इति ॥ ९ ॥

सगुणविद्याफलमपि निर्गुणविद्यास्तुतये प्ररोचनार्थमुच्यते—यं यमिति ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्यटीकायां तृतीयमुण्डके प्रथमः खण्डः

---

३० १. एष आत्मा परमात्मा अणुः सूक्ष्मः इति व्याख्या। मतान्तरे—जीवः अणुः इति जीवाणुत्व-परतया व्याकुर्वन्ति। तच्चिन्त्यम्, परमात्मप्रकरणविरोधात् जीवस्वरूपनिरूपणस्याप्रकृतत्वात्। 'नित्यः सर्वगतः स्थाणुः' इति भगवद्वचनविरोधात्। जीवमेव प्रकृत्य 'स वा एष महानज आत्मा' इति बृहदारण्यकवचनविरोधाच्च।

२. सकामानामात्मज्ञपूजया कामप्राप्तिमुक्त्वा निष्कामानां आत्मज्ञमर्चयतां आत्मज्ञानप्राप्तिद्वारा जन्म-
३५ निवृत्तिफलमाह—स वेदैतदिति।

कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति—कामान्यो दृष्टादृष्टेष्टविषयान्कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते स तैः कामभिः कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकाम[1] आत्मकामत्वेन परि समन्तत आप्ताः कामा यस्य तस्य पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति विलयमुपयान्ति नश्यन्तीत्यर्थः। कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः॥२॥

यद्येवं सर्वलाभात्परम आत्मलाभस्तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्त इदमुच्यते—योऽयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थो नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः । तथा न मेधया ग्रन्थार्थधारणशक्त्या । न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः। केन तर्हि लभ्य इत्युच्यते। यमेव परमात्मानमेवैष विद्वान्वृणुते प्राप्तुमिच्छति तेन [2]वरणेनैष परमात्मा लभ्यो नान्येन साधनान्तरेण। नित्यलब्धस्वभावत्वात्। कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते। तस्यैष आत्माऽविद्यासंछन्नां स्वां परां तनूं स्वात्मतत्त्वं स्वरूपं विवृणुते प्रकाशयति प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः । तस्मादन्यत्यागेनाऽऽत्मलाभप्रार्थनैवाऽऽत्मलाभसाधनमित्यर्थः ॥ ३ ॥

परमार्थतत्त्वविज्ञानादिति । विषयेषु यथास्थितदोषदर्शनात्पर्याप्तकामः क्षीणरागो विरुद्धलक्षणया । आत्मबुभुत्सयैव वशीकृतचित्तस्य विषयेभ्यः कामा निवृत्ता एव भवन्तीत्यर्थः। सामर्थ्यादवगम्यते स्वहेतुविनाशात्पुनः कामा न जायन्त इति। जातानां ज्ञानं विनाऽपि क्षयसम्भवादित्यर्थः ॥ १-२ ॥

न बहुना श्रुतेनेति। उपनिषद्विचारव्यतिरिक्तेनेत्यर्थः । तेन वरणेनेति कथं व्याख्यातं यत्तदामिन्नार्थत्वं ? साधनविवक्षायाः प्रस्तुतत्वादित्यर्थं ब्रूमः । परमात्माऽस्मीत्यभेदानुसन्धानं वरणम्। तेन वरणेनैष आत्मा लभ्यो भवति। बहिर्मुखेन(ण) तु शतशोऽपि श्रवणादौ क्रियमाणे न लभ्यते। अतः परमात्माऽस्मीत्यभेदानुसन्धानं परमात्मभजनं पुरस्कृत्यैव श्रवणादि सम्पादनीयमिति भावः। अथवा यमेव परमात्मानं वृणुते तेन परमात्मना मुमुक्षुरूपव्यवस्थितेन श्रवणेनाभेदानुसन्धानलक्षणेन[3]प्रार्थनेन कृत्वा लभ्यः परमात्मैव मुमुक्षुरूपव्यवस्थित इत्यभेदानुसन्धानेनैव लभ्यो न कर्मणेत्यर्थः ॥ ३ ॥

---

१. पर्याप्तकामः—परिसमन्तात् आप्ताः विषयलाभेन पूर्णाः कामा इति नार्थः। विषयलाभे अधिकतरकामोद्भवात्। अतो विरुद्धलक्षणया—आप्ता नष्टाः कामा इति व्याख्यातं टीकायाम्। "न जातु कामः कामनामुपभोगेन शाम्यती"ति स्मृतेः।

अत एव पर्याप्तकामस्य परिपूर्णे ब्रह्मणि कामनावत इति परव्याख्यायाम्—'कामान् यः कामयते' इति कामिनः जन्मोक्त्वा तद्रहितस्य जन्मराहित्ये उक्ते प्रक्रमः सुगमः पुनरपि कामान्तरे जन्मराहित्यायोक्ते प्रक्रमभङ्गः। विषयकामनया सह भगवत्कामनावतो जन्मनिवृत्तिप्रसङ्गश्चेति चिन्तनीयम्।

अत्र माध्वाः—विषयान् भुक्तवतः अत एव कृतात्मनः तृप्तमनस्कस्य कामाः इच्छाः प्रविलीयन्ते निवृत्ता भवन्तीति व्याचक्रुः। इदं तु 'न जातु कामः कामानां' इत्याद्युक्तस्मृतिविरुद्धमनुभवविरुद्धं च। 'महाशनो महापाप्मे'ति भगवदुक्तेः 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्याप्तमि'ति स्मृतेश्च विरुद्धम्।

२. यं परमात्मानमेषः साधकः वृणुते, तेन वरयित्रा विशेषणप्राधान्यात् वरणेनेत्यर्थः। "सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य" ( काव्यालङ्कारसूत्रे वामनः )।

३. प्रार्थनेन कृत्वा—कृत्वाशब्दः प्रार्थनस्येतिकर्तव्यतात्वसूचकोऽभ्युपगतो मीमांसकैः।

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाऽप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः [1]सर्वमेवाऽऽविशन्ति ॥ ५ ॥

५ [2]वेदान्तविज्ञानसुनिश्चितार्थाः [3]संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
[4]ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिङ्गयुक्तानि संन्याससहितानि यस्मात्—अयमात्मा बलहीनेन बलप्रहीणेनाऽऽत्मनिष्ठाजनितवीर्यहीनेन न लभ्यो नापि लौकिकपुत्रपश्वादिविषयसङ्गनिमित्तप्रमादात् । तथा तपसो वाऽप्यलिङ्गाल्लिङ्गरहितात् । तपोऽत्र ज्ञानम् । लिङ्गं संन्यासः संन्यासरहिताज्ज्ञानान्न लभ्यत
१० इत्यर्थः । एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्यतते तत्परः सन्प्रयतते यस्तु विद्वान्विवेक्यात्मवित्तस्य विदुष एष आत्मा विशते संप्रविशति ब्रह्मधाम ॥ ४ ॥

कथं ब्रह्म विशत इत्युच्यते—संप्राप्य समवगम्यैनमात्मानमृषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन । कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः । वीतरागा विगतरागादिदोषाः । प्रशान्ता उपरतेन्द्रियाः । त एवंभूता सर्वगं सर्वव्यापिनमाकाशवत्सर्वतः सर्वत्र प्राप्य नोपाधिपरिच्छिन्नेनैक-
१५ देशेन । किं तर्हि तद्ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य धीरा अत्यन्तविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति भिन्ने घटे घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहति । एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्ति ॥ ५ ॥

किञ्च—वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः परमात्मा विज्ञेयः सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च संन्यासयोगात्सर्वकर्मपरित्यागलक्षणयोगात्केवलब्रह्मनिष्ठास्वरूपाद्योगाद्यतयो यतनशीलाः
२० शुद्धसत्त्वा शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालास्तेऽपरान्तास्तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालस्तस्मिन्परान्तकाले । साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद्दृश्यते प्राप्यते वा । अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्मणीत्यर्थः । परामृताः परममृत-

वीर्यमिति मिथ्याज्ञानानभिभाव्यतालक्षणोऽतिशयः । अलिङ्गादिति । कथम् ? इन्द्रजनकगार्गिप्रभृतीनामप्यात्मलाभश्रवणात् । सत्यम् । संन्यासो नाम सर्वत्यागात्मकस्तेषामपि स्वत्वाभिमानाभावादस्त्येवाऽऽन्तरः
२५ संन्यासो बाह्यं तु लिङ्गमविवक्षितम् "न लिङ्गं धर्मकारणम्" इति स्मरणात् ॥ ४ ॥
नैष्कर्म्यसाहित्यं तु विवक्षितं ॥ ५ ॥

---

१. सर्वमेवाविशन्ति—अत्र द्वैतिनः—इतरैरज्ञेयतया ब्रह्म प्रविश्य इच्छया अन्तर्बहिस्सञ्चरन्तः भोगान् भुञ्जत इत्यर्थमाहुः । तत् कामनिवृत्तेः भगवत्प्राप्तिहेतुतयोक्तत्वात् निवृत्तकामानां पुनः तदुद्भवानुपपत्तेः चिन्त्यम् । मतान्तरेऽपि सर्वमनुभवन्तीत्यर्थाङ्गीकारे कामप्रहाणानुपपत्तिः ।
२५ २. वेदान्तविज्ञानसुनिश्चितार्थाः सुनिश्चितवेदान्तविज्ञानार्था इति यावत् ।
३. संन्यासयोगाच्च शुद्धान्तःकरणाः—अत्र मतान्तरे काम्यकर्मत्यागेन परिशुद्धान्तःकरणा इति व्याख्यातम् । सर्वकर्मत्यागे श्रुतिसिद्धे नेदमुचितम् । तथाहि अयज्ञोपवीती कथं ब्राह्मण इति प्रश्नमुत्थाप्य तस्य ज्ञानमेव यज्ञोपवीतमित्युक्तं जाबालोपनिषदि । संन्यासाधिकरणे भास्करमतखण्डनमधिकृत्य सर्वकर्मसंन्यासः स्थापितः कल्पतरौ । यस्त्वात्मरतिरेव स्यात् इत्यारभ्य तस्य कार्यं न विद्यत
३० इति च गीतासु । माध्वा अपि भगवति सर्वकर्मार्पणं संन्यासमाहुः, तदपि शास्त्रविरुद्धम् ।
४. 'ते ब्रह्मलोके तु' तैत्तिरीयारण्यकपाठः ।

[1]गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥
[2]यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

ममरणधर्मकं ब्रह्माऽऽत्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः परामृताः सन्तः परिमुच्यन्ति परि समन्तात्प्रदीप- ५ निर्वाणवद्घटाकाशवच्च निवृत्तिमुपयान्ति । परिमुच्यन्ति परि समन्तान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते ।

"शकुनीनामिवाऽऽकाशे जले वारिचरस्य च । पदं यथा न दृश्येत तथा ज्ञानवतां गतिः ॥"

"अनध्वगा अध्वसु पारयिष्णव" इति श्रुतिस्मृतिभ्यां, देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्न-साधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् । यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यन्त-वदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् । न त्वेवंविधं ब्रह्म भवितुमर्हति, अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना १० भवितुं युक्ता । अपि चाविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम् ॥ ६ ॥

किञ्च मोक्षकाले या देहारम्भिकाः कलाः प्राणाद्यास्ताः स्वां स्वां प्रतिष्ठां गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति द्वितीयाबहुवचनम् । पञ्चदश पञ्चदशसंख्याका या अन्त्यप्रश्नपरिपठिताः प्रसिद्धा देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः सर्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः । यानि च मुमुक्षुणा कृतानि कर्माण्य-प्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीयमाणत्वाद्विज्ञानमयश्चाऽऽत्माऽविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा १५ जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु, कर्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनाऽऽत्मना । अतो विज्ञानमयो विज्ञानप्रायः । त एते कर्माणि विज्ञानमयश्चाऽऽत्मोपाध्यपनये सति परेऽव्ययेऽनन्तेऽक्षये ब्रह्मण्याकाश-कल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनन्तरेऽबाह्येऽद्वये शिवे शान्ते सर्व एकी भवन्त्यविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाधारापनय इव सूर्यादिप्रतिबिम्बाः सूर्ये, घटाद्यपनय इवाऽऽकाशे घटाद्याकाशाः ॥ ७ ॥

किञ्च—यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तमदर्शनमविशेषात्मभावं गच्छन्ति २०

प्रदीपस्य वर्तिकृतावच्छेदध्वंसे यथा तेजःसामान्यतापत्तिस्तद्वदित्याह—प्रदीपनिर्वाणवदिति। पदं पादन्यासः प्रतिबिम्बं च । न दृश्येताभावादेवेत्यर्थः । अध्वस्विति । संसाराध्वनां पारयिष्णवः पारयितुं समापयितुमिच्छन्तीति समाप्तिकामा अनध्वगा भवन्तीत्यर्थः । तर्कतोऽपीहैव मोक्षो वक्तव्य इत्याह—देशपरिच्छिन्ना हीत्यादिना ॥ ६ ॥

स्वाः प्रतिष्ठाः प्रति गता भवन्तीति भूतांशानां भौतिकानां च महाभूतेषु लयो दर्शितः । अन्त्यप्रश्नेति । ब्राह्मणग्रन्थे षष्ठप्रश्ने प्राणाद्या याः कलाः पठिता इत्यर्थः । मायामयमहाभूतानामंशावष्टब्धैर्जीवाविद्याभूतसूक्ष्मैः २५ प्रातिस्विकैरदृष्टसहकृतैः प्रातिस्विकाः प्राणादय आरभ्यन्ते । ते च कर्माक्षिप्तैर्देवैः सूर्यादिभिरधिष्ठीयन्ते । कर्मणो भोगेनावसाने ते देवाः स्वस्थानं गच्छन्ति । यच्च प्रातिस्विकं स्वाविद्याकार्यं तच्च सर्वं ब्रह्मैव सम्पद्यत इत्याह—यानि चेत्यादिना ॥ ७-८ ॥

---

१. अत्र पञ्चदशकलानिर्दिष्टाः । प्रश्नोपनिषदि तु षोडशकलाः । घ्राणमनसोः एकपृथिव्युपादानकत्वेनैकत्व-विवक्षयाऽत्र पञ्चदशत्वमुक्तम् । प्रश्नोपनिषदि विद्वद्दृष्टिमाश्रित्य कलानां पुरुषे लय उक्तः । अत्र तु ३० पार्श्वस्थानामविदुषां दृष्टिमाश्रित्य कलानां स्वस्वप्रकृतिषु लय इति । तानि परे तथाह्याह इति सूत्रे भाष्यम्—"देवाश्चक्षुराद्यनुग्राहकाः स्वोपकारं परित्यज्य स्वस्वरूपे तिष्ठन्तीत्यर्थः" ।

२. 'यथा नद्यः' इत्यनेन ब्रह्मणि एकीभाव उक्तः । यथोदकं शुद्धे शुद्धमित्यपि दृष्टान्तः काठके । उभयत्रापि जले जलान्तरप्रवेशे महत्तरजलान्तरं जायते । पूर्वजलं नश्यतीति नैयायिकाः । तत्र च नामरूप-विमोके जलमात्रमवशिष्यते । यत्तु मतान्तरे नामरूपात्मकभेदकाकारप्रहाणमात्रमि'त्युक्तम् । अत्र रूप- ३५ माकारविशेषः । तदपि नष्टं चेत् जीवे किमवशिष्येत । नाश एव जीवस्य स्यात् । अस्माभिरप्या-भासवादे मोक्षे जीवनाश एवेष्यते । अपि च अणुर्जीवः परमात्मा विभुः तत्रोपाधिविमोकेनैव एकीभावो वक्तव्यः, अन्यथा संसारदशायामपि तदापातात् । साक्षात्कारः अत्रैव जायते । तेन चोपाधिलये सति

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति ।
तरति शोकं तरति [१]पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

तदेतदृचाऽभ्युक्तम्—
[२]क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।
५ तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

प्राप्नुवन्ति नाम च रूपं च नामरूपे विहाय हित्वा तथाऽविद्याकृतनामरूपाद्विमुक्तः सन्विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति न ब्रह्मैव । न । विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वात् । अविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रति-
१० बन्धः । नित्यत्वादात्मभूतत्वाच्च । तस्मात्—स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति स नान्यां गतिं गच्छति । देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम् । आत्मा ह्येषां स भवति । तस्माद्ब्रह्म विद्वान्ब्रह्मैव भवति । किञ्च नास्य विदुषोऽब्रह्मवित्कुले भवति । किञ्च तरति शोकमनेकेष्टवैकल्यनिमित्तं मानसं सन्तापं जीवन्नेवातिक्रान्तो भवति । तरति पाप्मानं धर्माधर्माख्यं गुहाग्रन्थिभ्यो हृदयाविद्याग्रन्थिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रन्थिरित्यादि ॥ ९ ॥

१५ अथेदानीं ब्रह्मविद्यासम्प्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते—तदेतद्विद्यासम्प्रदानविधानमृचा मन्त्रेणाभ्युक्तमभिप्रकाशितम् । क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः । श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिमेकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये तेषामेव संस्कृतात्मनां पात्रभूताना-

---

अत्रैव ब्रह्मणि लयः अनिच्छताप्यङ्गीकार्यः, परमाणोः परममहति अन्तर्भावस्य प्रयत्नानपेक्षणात् । इत्थं च ज्ञानिनामेकीभावाय ब्रह्मलोकगमनमप्यनर्थकं स्यात् । एतेन देशविशेषं प्राप्य आविर्भूतब्रह्मरूप-
२० विशिष्टात्मनः इत्यादिकं चिन्त्यमेव । श्रुतिविरोधादत्रैव उपनिषदि ब्रह्मणि लयोक्तेश्च ।

१. पाप्मानमिति धर्मोऽप्यत्र पापमेव बन्धकत्वेन श्रेयोविरोधित्वात् । छान्दोग्ये—'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते'—इत्यत्रोभयोरपि सुकृतदुष्कृतयोः पाप्मत्वेन परामर्शात् वेदान्ते यत्र यत्र पुण्यं पापं वोच्यते तत्रोभयोरपि ग्रहणमित्युक्तं भवति । गुहाग्रन्थयो हृदयस्थान्तःकरणगतकामादयो वासनादयश्च ।

२५ २. गृहस्था ये अपरब्रह्मनिष्ठास्तेभ्य एवैतं ग्रन्थं पाठयेत् । ते च शिरोव्रतं शिरस्यग्निधारणमाचरितवन्त इति भाष्यम् । वादनक्षत्रमालायां भस्मरुद्राक्षधारणयोः सकलब्रह्मविद्याङ्गत्ववादे—स्कान्दे सौर-संहितावचनम्—

इदं शिरोव्रतं चीर्णं विधिवद्यैर्द्विजातिभिः । तेषामेव परां विद्यां वदेदज्ञानबाधिकाम् ॥
शिरोव्रतमिदं नाम शिरस्याथर्वणश्रुतौ । यदुक्तं तद्धि नान्यत्तत् तत्पाशुपतसंज्ञितम् ॥
३० शाखाभेदेषु नामानि तस्यास्य प्रविभेदतः । पठ्यते मुनिशार्दूल शाखास्वेकं व्रतं हि तत् ॥
अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना । सर्वाङ्गोद्धूलनं कुर्यात् शिरोव्रतसमाह्वयम् ॥

ब्रह्मोत्तरखण्डेऽपि—

तेषामेव परं ज्ञानं संसारच्छेदकारणम् । उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये ॥
आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थितम् । अतोऽपि पापविच्छेदलाभाय ज्ञानसिद्धये ॥
३५ उद्धूलनं त्रिपुण्ड्रं च मुमुक्षुः सर्वदाऽऽचरेत् ।

अयं चाध्ययनधर्मो न तु ज्ञानाङ्गम्, 'स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियम' इति सूत्रात् । ( ब्र० सू० ३-३-३ )

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः

ॐ भद्रं कर्णेभिरिति शान्तिः ।

इत्यथर्ववेदीया मुण्डकोपनिषत्समाप्ता　　　　५

मेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम्। यथाऽऽथर्वणानां वेदव्रतं प्रसिद्धम्। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव च ॥ १० ॥

तदेतदक्षरं पुरुषं सत्यमृषिरङ्गिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवत उवाच । तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः । नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति । चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति । समाप्ता ब्रह्मविद्या सा येभ्यो ब्रह्मादिभ्यः पारम्पर्यक्रमेण　१० सम्प्राप्ता तेभ्यो नमः परमऋषिभ्यः । परमं ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यादरार्थं मुण्डकसमाप्त्यर्थं च ॥ ११ ॥

इति तृतीयमुण्डकोपनिषद्भाष्ये द्वितीयः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छङ्करभगवतः
कृतावाथर्वणमुण्डकोपनिषद्भाष्यं समाप्तम्　　　　१५

एतद्ग्रन्थद्वारकविद्याप्रदानेऽयं विधिराथर्वणिकानामिति प्रकृतपरामर्शकादेतच्छब्दादवगम्यते । ग्रन्थद्वारेण विद्यायाः प्रकृतत्वसम्भवान्न सर्वत्र ब्रह्मविद्यासम्प्रदाने इति सूचयन्नाह—एतां ब्रह्मविद्यां वदेतेति ॥ ९-१०-११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचितं
मुण्डकोपनिषद्भाष्यव्याख्यानं समाप्तम्　　　　२०

ॐ

अथर्ववेदीया

# प्रश्नोपनिषत्

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः। व्यशेम देवहितं यदायुः॥

ॐ शान्तिः शान्तिः शान्तिः

ॐ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः॥ १॥ ५

श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

[1]मन्त्रोक्तस्यार्थस्य विस्तरानुवादीदं ब्राह्मणमारभ्यते। ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये। एवं संवत्सरब्रह्मचर्यसंवासादियुक्तैस्तपोयुक्तैर्ग्राह्या पिप्पलादादिवत्सर्वज्ञकल्पैराचार्यैर्वक्तव्या च, न सा येन केनचिदिति विद्यां स्तौति। ब्रह्मचर्यादिसाधनसूचनाच्च तत्कर्तव्यता स्यात्—सुकेशा च नामतः। भरद्वाजस्यापत्यं भारद्वाजः। १० शैब्यश्च शिबेरपत्यं शैब्यः सत्यकामो नामतः। सौर्यायणी सूर्यस्यापत्यं सौर्यस्तस्यापत्यं सौर्यायणिश्छान्दसः सौर्यायणीति। गार्ग्यः गर्गगोत्रोत्पन्नः। कौसल्यश्च नामतोऽश्वलस्यापत्यमाश्वलायनः। भार्गवो भृगोर्गोत्रापत्यं भार्गवः। वैदर्भिः विदर्भे भवः। कबन्धी नामतः। कत्यस्यापत्यं कात्यायनः। विद्यमानः प्रपितामहो यस्य सः[2] युवप्रत्ययः। ते हैते

श्रीमदानन्दगिर्याचार्यकृता टीका

आथर्वणे ब्रह्मा देवानामित्यादिमन्त्रैरेवाऽऽत्मतत्त्वस्य निर्णीतत्वात्तत्रैव ब्राह्मणेन तदभिधानं पुनरुक्तमित्याशङ्क्य तस्यैवेह विस्तरेण प्राणोपासनादिसाधनसाहित्येनाभिधानान्न पौनरुक्त्यमिति वदन्ब्राह्मणमवतारयति—मन्त्रेति। विस्तरेति। मन्त्रे हि द्वे विद्ये वेदितव्ये परा चैवापरा चेत्युक्त्वा तत्रापरर्ग्वेदाद्यभिधेयेत्युक्तम्। सा च विद्या कर्मरूपोपासनारूपा च। तत्र द्वितोया द्वितीयतृतोयप्रश्नाभ्यां विव्रियते। आद्या कर्मकाण्डे विवृतेति नेह विव्रियते। उभयोः फलं तु ततो वैराग्यार्थं प्रथमप्रश्ने स्पष्टीक्रियते। परविद्या चाथ परा यया तदक्षरमधिगम्यत इत्युपक्रम्य कृत्स्नेन मुण्डकेन प्रतिपादिता। तत्रापि यथा सुदीप्तादित्यादिमन्त्रद्वयोक्तार्थस्य विस्तरार्थं चतुर्थः प्रश्नः। २० प्रणवो धनुरित्यत्रोक्तप्रणवोपासनविवरणार्थं पञ्चमः प्रश्नः। एतस्माज्जायते प्राण इत्यादिना शेषेण मुण्डकेनोक्तस्यार्थस्य स्पष्टीकरणार्थः षष्ठः प्रश्न इतीदं ब्राह्मणं तद्विस्तरानुवादीत्यर्थः। अत एव विषयप्रयोजनादिकं तत्रैवोक्तमिति नेह पुनरुच्यत इति बोध्यम्। आख्यायिकाया ब्रह्मचर्यतपआदिसाधनविधानं [3]पुराकल्पस्वरूपेण प्रयोजनान्तरं चास्तीत्याह—ब्रह्मचर्यादिसाधनेति। सौर्यायणीति। सौर्यायणिरिति वक्तव्ये दैर्घ्यं छान्दसमित्यर्थः। युवप्रत्यय इति। कत्यस्य युवापत्ये विवक्षिते फक्प्रत्यये तस्याऽऽयन्नादेशे च कात्यायन इति सिध्यतीत्यर्थः। ब्रह्मपराणां पुन- २५

१. मन्त्रेति—मुण्डकोपनिषन्मन्त्रेत्यर्थः तस्यैव व्याख्यानरूपं ब्राह्मणं प्रश्नोपनिषत्। कथं व्याख्यानरूपत्वमिति च आनन्दगिरीये स्पष्टम्।

२. युवप्रत्ययः—जीवति तु वंश्ये युवा (अ. ४-१-१६३) इति सूत्रात् विद्यमानपितामहः कत्यस्यापत्यमित्यर्थः।

३. पुराकल्पः—एककर्तृकमुपाख्यानं परकृतिः बहुकर्तृकमुपाख्यानं पुराकल्पः। दृष्टान्तः 'उल्मुकैर्ह स्म पूर्वे समाजग्मुः तानसुरा रक्षांसि निजघ्नुः' इत्यादि (मी० वा०)। ३०

तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥
अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥
तस्मै स होवाच प्रजाकामो वै [1]प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते ।
५ रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

ब्रह्मपरा अपरं ब्रह्म परत्वेन गता[2]स्तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः, किं तत्। यन्नित्यं विज्ञेयमिति । [3]तत्प्राप्त्यर्थं यथाकामं यतिष्याम इत्येवं तदन्वेषणं कुर्वन्तस्तदधिगमायैष ह वै तत्सर्वं वक्ष्यतीत्याचार्यमुपजग्मुः । कथम् ? ते ह समित्पाणयः समिद्भारगृहीतहस्ताः सन्तो भगवन्तं पूजावन्तं पिप्पलादमाचार्यमुपसन्ना उपजग्मुः ॥ १ ॥

तानेवमुपगतान्ह स किल ऋषिरुवाच—भूयः पुनरेव यद्यपि यूयं पूर्वं तपस्विन एव तपसेन्द्रियसंयमेन १० तथाऽपीह विशेषतो ब्रह्मचर्येण श्रद्धया चा[4]ऽऽस्तिक्यबुद्धयाऽऽदरवन्तः संवत्सरं कालं संवत्स्यथ सम्यग्गुरुशुश्रूषापराः सन्तो वत्स्यथ । ततो यथाकामं यो यस्य कामस्तमनतिक्रम्य यथाकामं यद्विषये यस्य जिज्ञासा तद्विषयान्प्रश्नान्पृच्छत । यदि तद्युष्मत्पृष्टं विज्ञास्यामः । अनुद्धतत्वप्रदर्शनार्थो यदिशब्दो नाज्ञानसंशयार्थः [5]प्रश्ननिर्णयादवसीयते । सर्वं ह वो वः पृष्टं वक्ष्याम इति ॥ २ ॥

अथ संवत्सरादूर्ध्वं कबन्धी कात्यायन उपेत्योपगम्य पप्रच्छ पृष्टवान्। हे भगवन्कुतः कस्माद्ध वा इमा ब्राह्मणाद्याः १५ प्रजाः प्रजायन्त उत्पद्यन्ते । अपरविद्याकर्मणोः समुच्चितयोर्यत्कार्यं या गतिस्तद्वक्तव्यमिति तदर्थोऽयं प्रश्नः ॥ ३ ॥

तस्मा एवं पृष्टवते स होवाच । तदपाकरणायाऽऽह—प्रजाकामः प्रजा आत्मनः सिसृक्षुर्वै प्रजापतिः सर्वात्मा

ब्रह्मान्वेषणमयुक्तमित्यत आह—अपरं ब्रह्मेति । नन्वपरब्रह्मान्वेषणेनैव पुरुषार्थसिद्धेः किं परब्रह्मान्वेषणेनेत्याशङ्कते—किं तदिति । तस्य कोऽतिशय इत्यर्थः । तस्यानित्यत्वेन तत्प्राप्तेरप्यनित्यहेतुत्वेनापुरुषार्थत्वात्परस्यैव नित्यत्वात्तत्प्राप्तेस्तज्ज्ञानमात्रसाध्यत्वेनापि नित्यत्वाच्च तस्यैवान्वेषणीयत्वमिति परस्वरूपकथनेनाऽऽह—यदिति । परब्रह्मा- २० न्वेषमाणानां कोऽनुशय इत्यत आह—तत्प्राप्त्यर्थमिति । तत्प्राप्त्यर्थं तदधिगमाय तदन्वेषणं कुर्वन्तो यथाकामं यतिष्याम इत्येवमभिप्रायेणेत्यन्वयः । समिदिति । समिद्ग्रहणं यथायोग्यं दन्तकाष्ठाद्युपहारोपलक्षणार्थम् ॥ १ ॥

तथाऽपीत्यस्य तपसेत्यतः पूर्वमन्वयः । विशेषत इत्यस्य पूर्वत्राप्यन्वयः । निष्कृष्टमर्थमाह—यद्विषय इति । अज्ञानाद्यर्थत्वाभावे हेतुमाह—प्रश्नेति । अत्रेतिशब्दोऽध्याहार्यः । सर्वप्रश्नानां निर्णयादज्ञानाद्यसम्भवादित्यर्थः ॥२॥

परं ब्रह्मान्वेषमाणा इत्युपक्रान्तेऽस्मिन्ब्रह्मप्रकरणे प्रजापतिकर्तृकप्रजासृष्टिविषयप्रश्नप्रत्युक्त्योरसङ्गतिमाशङ्क्य २५ प्रश्नप्रत्युक्तिरूपायाः श्रुतेस्तात्पर्यमाह—अपरविद्येति। तेषामसौ विरजो ब्रह्मलोक इति समुच्चितकार्यस्य ब्रह्मलोकस्याथोत्तरेणेति तद्गतेर्देवयानमार्गस्य चेह वक्ष्यमाणत्वादित्यर्थः । इदमुपलक्षणं केवलकर्मणां चेत्यपि द्रष्टव्यम् । केवलकर्मकार्यस्यापि चन्द्रलोकस्य तद्गतेः पितृयाणस्य च 'तेषामेवैष ब्रह्मलोकः' 'प्रजाकामा दक्षिणं प्रतिपद्यन्ते' इति वक्ष्यमाणत्वादिति। यद्यपीदमपि परब्रह्मजिज्ञासावसरेऽसङ्गतमेव तथाऽपि केवलकर्मकार्यात्समुच्चितकर्मकार्याच्च विरक्तस्यैव तत्राधिकार इति ततो वैराग्यार्थमिदमुच्यते । यद्यपि मुखतः सृष्टिः प्रतीयते तथाऽपि तदुक्तौ प्रयोजनाभावात्सृष्ट्युक्ति- ३० व्याजेन अपरविद्याफलमेवात्रोच्यत इति भावः । प्रश्न इति प्रतिवचनं चेत्यपि द्रष्टव्यं ताभ्यामेव तदुक्तेरिति ॥ ३ ॥

तस्मै होवाचेति प्रतिज्ञातं विशेषतो दर्शयति—तदपाकरणायेति । आद्यस्य सन्नित्यस्य प्रजाकामः

---

१. प्रजापतिः—अत्र हिरण्यगर्भ एव न ब्रह्म प्रजासृष्टिवर्णनात्। परं ब्रह्म चेत् पञ्चभूतसृष्टिरुच्येत तैत्तिरीयादाविव । परमते प्रजापतिपदं ब्रह्मपरमित्युक्तम् । तन्न । तथात्वे आदौ भूतसृष्टिरुच्येत । प्रजापतिपदस्य "प्रजापतिर्वै हिरण्यगर्भः" इत्यादौ हिरण्यगर्भपरत्वेनैव प्रसिद्धेश्च ।

३५ २. तदनुष्ठानम्— अपरब्रह्मोपासनम् । ३. तज्ज्ञानार्थम् ।

४. आस्तिक्यबुद्ध्या—गुरुरुपदेक्ष्यति परं ब्रह्म तदुपदेशेन परः पुरुषार्थो लप्स्यत इति निश्चयेन ।

५. प्रश्ननिर्णयात्—नातः परमस्ति इति वाक्येन गुरुः स्वेनैव शिष्यजिज्ञासितार्थस्योक्तत्वमाह, तेन अवशिष्टज्ञानार्थमन्यत्र गमनमपि निवारितम् । * ब्रह्मपराः वेदपारगाः इति रत्नप्रभा द्र.-२७९ ।

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥५॥**
**अथाऽऽदित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान्रश्मिषु सन्निधत्ते। यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान्प्राणान्रश्मिषु सन्निधत्ते ॥६॥**

सञ्जगत्स्रक्ष्यामीत्येवं विज्ञानवान्यथोक्तकारी तद्भावभावितः कल्पादौ निर्वृत्तो हिरण्यगर्भः सृज्यमानानां प्रजानां स्थावरजङ्गमानां पतिः सन् जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं तपोऽन्वालोचयदतप्यत। अथ तु स एवं ५
तपस्तप्त्वा श्रौतं ज्ञानमन्वालोच्य सृष्टिसाधनभूतं मिथुनमुत्पादयते मिथुनं द्वन्द्वमुत्पादितवान्। रयिं च सोममन्नं प्राणं चाग्निमत्तारमेतावग्नीषोमावत्त्रन्नभूतौ मे मम बहुधाऽनेकधा प्रजाः करिष्यत इत्येवं सञ्चिन्त्याण्डोत्पत्तिक्रमेण सूर्याचन्द्रमसावकल्पयत् ॥ ४ ॥

तत्राऽऽदित्यो ह वै प्राणोऽत्ताऽग्निः। रयिरेव चन्द्रमाः। रयिरेवान्नं सोम एव। तदेतदेकमत्ता चान्नं च प्रजापतिरेकं तु मिथुनम्। गुणप्रधानकृतो भेदः। कथम्। रयिर्वा अन्नं वा एतत्सर्वं किं तद्यन्मूर्तं च स्थूलं चामूर्तं च सूक्ष्मं १०
च मूर्तामूर्ते अत्त्रन्नरूपे रयिरेव। तस्मात्प्रविभक्तादमूर्ताद्यदन्यन्मूर्तरूपं मूर्तिः सैव रयिरमूर्तेनात्त्राऽद्यमानत्वात् ॥ ५ ॥

तथाऽमूर्तोऽपि प्राणोऽत्ता सर्वमेव यच्चाऽऽद्यम्। कथम्—अथाऽऽदित्य उदयन्नुद्गच्छन्प्राणिनां चक्षुर्गोचर-

सन्नित्यन्वयः। **यथोक्तकारीति**। ज्ञानकर्मसमुच्चयकारीत्यर्थः। **तद्भावभावित इति**। प्रजापतिरहं सर्वात्मेत्युपासनकालीनप्रजापतिभावनायुक्त इत्यर्थः। पूर्वकल्पीयतद्भावभावित एतत्कल्पादौ हिरण्यगर्भात्मना निर्वृत्तः प्रजापतिः सन्पश्चात्प्रजाकामः संस्तपो जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयमतप्यतान्वालोचयच्चिन्तादिना तत्संस्कार- १५
मुद्बोध्य ज्ञानमुत्पादितवानित्यन्वयः। तत्र प्रथममादित्यचन्द्रोत्पादनेन तद्भावमापद्य पश्चाच्चन्द्रादित्यसाध्यसंवत्सरभावमापद्यैवमेव तदवयवायनद्वयमासपक्षाहोरात्रभावमापद्य ततस्तत्साध्यव्रीह्याद्यन्नभावं रेतोभावं चाऽऽपद्य तेन रेतसा प्रजाः सृजेयमित्येवं निश्चित्य प्रथमं रयिप्राणशब्दितचन्द्रसूर्यद्वन्द्वमुत्पादितवानित्याह—**स एवमिति**। रयिशब्देन धनवाचिना भोज्यजातं लक्षयित्वा भोज्यस्य सोमकिरणामृतयुक्तत्वात्तद्द्वारा सोमो लक्ष्यत इत्याह—**रयिं चेति**। एवं प्राणशब्देनापि— २०

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥"

इति स्मृतेरग्नेः प्राणसम्बन्धादग्निर्भोक्ता लक्ष्यत इत्याह—**प्राणं चेति**। अग्नीषोमयोरण्डान्तर्गतत्वेनाण्डोत्पत्त्यनन्तरमुत्पत्तिरित्याशयेनाऽऽह—**अण्डोत्पत्तीति**। [1]'उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहतो'ति श्रुतेः सूर्याग्न्योरेकत्वमभिप्रेत्याग्निं सूर्यपदेनाऽऽह—**सूर्याचन्द्रमसाविति** ॥ ४ ॥

रयिप्राणौ श्रुतिः स्वयमेव व्याचष्ट इत्याह—**तत्राऽऽदित्य इति**। प्रजापतेरेव संवत्सरादिप्रजापर्यन्तस्रष्टृत्वं २५
वक्तुं रयिप्राणयोः संवत्सरस्रष्ट्रोः प्रजापत्युपादानत्वात्प्रजापत्यात्मत्वमाह—**तदेतदेकमिति**। कथमेकस्यात्ताऽन्नं चेति भेद इत्याशङ्क्य तस्यैव गुणभावविवक्षयाऽन्नत्वं प्राधान्यविवक्षया चात्तृत्वमिति भेद इत्याह—**गुणेति**। रयिप्राणयोः कथं प्रजापत्यात्मत्वमिति शङ्कते—**कथमिति**। तत्र रयेः सर्वात्मकत्वात्प्रजापतित्वमित्याह—**रयिरिति**। अमूर्तस्यापि वाय्वादेः केनचिदद्यमानत्वाद्रयित्वमित्यर्थः। ननु मूर्तामूर्तयोरत्त्रन्नयोरुभयोरपि रयित्वेऽन्नमेव कथमुक्तमित्याशङ्क्य मूर्तामूर्तत्वविभागमकृत्वा सर्वस्य गुणभावमात्रविवक्षया सर्वं रयिरित्युच्यते। यदोभे विभज्य गुणप्रधानभावेन ३०
विवक्ष्येते तदाऽमूर्तेन प्राणेन मूर्तस्याद्यमानत्वान्मूर्तस्यैव रयित्वमित्याह—**तस्मादिति** ॥ ५ ॥

रयिशब्दितस्यान्नस्य प्रजापतित्वार्थं सर्वात्मत्वमुक्त्वा प्राणस्यापि तदर्थमेव सर्वात्मत्वमुच्यतेऽथाऽऽदित्य इतिवाक्येनेत्याह—**तथेत्यादिना**। यच्चाऽऽद्यं तदपि प्राणोऽतोऽत्ता प्राणोऽपि सर्वमेवेति सर्वात्मक इत्यर्थः।

---

१. उद्यन्तमिति—रात्रौ सूर्यः अग्निं प्राप्नोति सूर्योदयानन्तरमग्निः सूर्यं प्रविशति। तस्मात् धूम एवाग्नेः दिवा ददृशे। रात्रौ चाग्निरेव दृश्यते न सूर्य इति अर्थवादानुसारेणेदमुक्तम्। अयं चार्थवादः सूर्यो ३५
ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातरग्निहोत्रं जुहोति। अग्निर्ज्योतिर्ज्योतिस्सूर्यः स्वाहेति सायं जुहोति इति विधिस्तुतये। रात्रौ अग्नौ सूर्यः अहनि सूर्ये अग्निरस्ति तस्मात् तत्तल्लिङ्गकमन्त्रः तत्तद्देवतासद्भावकाले पठनार्हः इति स्तुतिः।

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाऽभ्युक्तम् ॥ ७ ॥
विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥
[1]संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते
५ कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते
तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

मागच्छन्यत्प्राचीं दिशं स्वप्रकाशेन प्रविशति व्याप्नोति। तेन स्वात्मव्याप्त्या सर्वांस्तत्स्थान्प्राणान्प्राच्यानन्तर्भूतान्रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात्प्राणिनः सन्निधत्ते सन्निवेशयति, आत्मभूतान्करोतीत्यर्थः। तथैव यत्प्रविशति दक्षिणां यत्प्रतीचीं यदुदीचीमध ऊर्ध्वं यत्प्रविशति यच्चान्तरा दिशः कोणदिशोऽवान्तरदिशो यच्चान्यत्सर्वं प्रकाशयति
१० तेन स्वप्रकाशव्याप्त्या सर्वान्सर्वदिक्स्थान्प्राणान्रश्मिषु सन्निधत्ते ॥ ६ ॥

स एषोऽत्ता प्राणो वैश्वानरः सर्वात्मा विश्वरूपो विश्वात्मत्वाच्च प्राणोऽग्निश्च स एवात्तोदयत उद्गच्छति प्रत्यहं सर्वा दिश आत्मसात्कुर्वन् । तदेतदुक्तं वस्तु ऋचा मन्त्रेणाप्यभ्युक्तम् ॥ ७ ॥

विश्वरूपं सर्वरूपं हरिणं रश्मिवन्तं जातवेदसं जातप्रज्ञानं परायणं सर्वप्राणाश्रयं ज्योतिरेकं सर्वप्राणिनां [2]चक्षुर्भूतमद्वितीयं तपन्तं तापक्रियां कुर्वाणं स्वात्मानं सूर्यं सूरयो विज्ञातवन्तो ब्रह्मविदः। कोऽसौ यं विज्ञातवन्तः।
१५ सहस्ररश्मिरनेकरश्मिः शतधाऽनेकधा प्राणिभेदेन वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

यश्चासौ चन्द्रमा मूर्तिरन्नममूर्तिश्च प्राणोऽत्ताऽऽदित्यस्तदेकमेतन्मिथुनं सर्वं कथं प्रजाः करिष्यत इति, उच्यते—तदेव कालः संवत्सरो वै प्रजापतिस्तन्निर्वर्त्यत्वात्संवत्सरस्य । चन्द्रादित्यनिर्वर्त्यतिथ्यहोरात्रसमुदायो हि संवत्सरस्तदनन्यत्वाद्रयिप्राणमिथुनात्मक एवेत्युच्यते, तत्कथम्, तस्य संवत्सरस्य प्रजापतेरयने मार्गौ द्वौ दक्षिणं

स्वप्रकाशेनेति । स्वकीयप्रकाशेन स्वप्रभयेत्यर्थः। अन्तर्भूतानिति । यद्यपि प्राणस्यात्तृत्वमुक्तं तथाऽपि रयिर्वा एतत्सर्व-
२० मित्यत्रामूर्तस्य प्राणस्यापि गुणभावविवक्षयाऽन्नत्वमुक्तमिति तथोक्तम् । स्वात्मावभासरूपेष्विति । स्वात्मप्रभारूपेषु रश्मिष्वित्यर्थः। व्याप्तत्वादिति । सम्बद्धत्वादित्यर्थः ॥ ६ ॥

तस्य प्रत्यक्षत्वमाह—स एष इति । वैश्वानर इति । नरा जीवा विश्वे च ते नराश्च विश्वानराः स एव वैश्वानरः सर्वजीवात्मक इत्यर्थः। विश्वरूपः सर्वप्रपञ्चात्मक इति भेदः। उक्तं वस्त्विति । आदित्यस्योक्तं माहात्म्यमित्यर्थः ॥ ७ ॥

२५ विश्वरूपमित्यादिद्वितीयान्तानां सहस्ररश्मिरित्यादिप्रथमान्तानां सामानाधिकरण्येनान्वयायोगादध्याहारं कृत्वा वाक्यभेदेन व्याचष्टे—स्वात्मानमित्यादिना ॥ ८ ॥

स मिथुनमुत्पादयत इत्युपक्रान्तं मिथुनमुपसंहरति—यश्चासाविति । यश्चासौ चन्द्रमा यश्चामूर्तः प्राणस्तदेकं मिथुनं सर्वं सर्वात्मकमित्यन्वयः। एतौ मे बहुधा प्रजाः करिष्यत इत्युक्तं तत्केन प्रकारेणेति पृच्छति—कथमिति । रयिप्राणयोः संवत्सरादिद्वारा प्रजास्रष्टृत्वमित्याह—उच्यत इति । तदेव मिथुनमेव संवत्सरः कालः
३० स च प्रजापतिः प्रजापत्यात्मकमिथुननिर्वर्त्यत्वादित्याह—तन्निर्वर्त्यत्वादिति । तदुपपादयति—चन्द्रेति । चन्द्र-निर्वर्त्यास्तिथय आदित्यनिर्वर्त्यान्यहोरात्राणीति विभागः। तन्निर्वर्त्यत्वेऽपि कालस्य कथं तदात्मकतेत्याशङ्क्य कार्य-कारणयोरभेदादित्याह—तदनन्यत्वादिति । न केवलं तिथ्यादिद्वारा चन्द्रादिनिर्वर्त्यत्वं संवत्सरस्य किं त्वयनद्वय-द्वाराऽपीति वक्तुं तस्यायने इत्यादिवाक्यं तत्प्रश्नपूर्वकं व्याचष्टे—तत्कथमिति। चन्द्रादित्यनिर्वर्त्यत्वं कुतो हेत्वन्तरा-दित्यर्थः। केवलकर्मिणां लोकान्विदधद्दक्षिणेन याति । ज्ञानयुक्तकर्मवतां लोकान्विदधदुत्तरेण यातीत्यन्वयः।
३५ सवितेत्युपलक्षणं चन्द्रस्यापि । ज्येष्ठादिर्दक्षिणायनं मार्गशीर्षादिरुत्तरायणमिति श्रुतिषु प्रसिद्धेः। ततश्च कर्मिणां

---

१. संवत्सरो वै प्रजापतिः सूर्यरूपतामापन्नः पुनः संवत्सरस्रष्टृत्वात् संवत्सररूपः।
२. चक्षुर्भूतं चक्षुरनुग्राहकत्वात् ।

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः ॥१०॥**

चोत्तरं च। द्वे प्रसिद्धे ह्ययने षण्मासलक्षणे याभ्यां दक्षिणेनोत्तरेण च याति सविता [1]केवलकर्मिणां ज्ञानसंयुक्तकर्मवतां च लोकान्विदधत्। कथं तत्, तत्र च ब्राह्मणादिषु ये ह वै तदुपासत इति क्रियाविशेषणो द्वितीयस्तच्छब्दः। इष्टं च पूर्तं चेष्टापूर्ते इत्यादि [2]कृतमेवोपासते नाकृतं नित्यं, ते चान्द्रमसं चन्द्रमसि भवं प्रजापतेर्मिथुनात्मकस्यांशं रयिमन्न- ५ भूतं लोकमभिजयन्ते कृतरूपत्वाच्चान्द्रमसस्य, ते तत्रैव च कृतक्षयात्पुनरावर्तन्त 'इमं लोकं हीनतरं वा विशन्ती'ति ह्युक्तम्[3]। यस्मादेवं प्रजापतिमन्नात्मकं फलत्वेनाभिनिर्वर्तयन्ति चन्द्रमिष्टापूर्तकर्मणैत ऋषयः[4] स्वर्गद्रष्टारः प्रजाकामाः प्रजार्थिनो गृहस्थास्तस्मात्स्वकृतमेव दक्षिणं दक्षिणायनोपलक्षितं चन्द्रं प्रतिपद्यन्ते। एष ह वै रयिरन्नं यः पितृयाणः पितृयाणोपलक्षितश्चन्द्रः ॥ ९ ॥

अथोत्तरेणायनेन प्रजापतेरंशं प्राणमत्तारमादित्यमभिजयन्ते। केन। तपसेन्द्रियजयेन विशेषतो ब्रह्मचर्येण १० श्रद्धया [5]विद्यया च प्रजापत्यात्मविषययाऽऽत्मानं प्राणं सूर्यं [6]जगतस्तस्थुषश्चान्विष्याहमस्मीति विदित्वाऽऽदित्यमभि- जयन्तेऽभिप्राप्नुवन्ति। एतद्वा आयतनं सर्वप्राणानां सामान्यमायतनमाश्रयमेतदमृतमविनाशि, अभयमत एव [7]भय- वर्जितं न चन्द्रवत्क्षयवृद्धिभयवदेतत्परायणं परा गतिर्विद्यावतां कर्मिणां च ज्ञानवतामेतस्मान्न पुनरावर्तन्ते[8] यथेतरे केवलकर्मिणः, इति यस्मादेषोऽविदुषां निरोधः आदित्याद्धि निरुद्धा अविद्वांसो नैते संवत्सरमादित्यमात्मानं प्राणमभि- प्राप्नुवन्ति। स हि संवत्सरः कालात्माऽविदुषां निरोधः। तत्तत्रास्मिन्नर्थं एष श्लोको मन्त्रः ॥ १० ॥ १५

लोकान्विधातुं तयोर्दक्षिणोत्तराभ्यां मार्गाभ्यां गमनात्तन्निमित्तत्वाच्चायनद्वयप्रसिद्धेस्तन्निर्वर्त्यत्वं तयोरयनयोरिति तद्द्वारा संवत्सरस्यापि तन्निर्वर्त्यत्वमित्यर्थः। चन्द्रादित्ययोः कथं लोकविधायकत्वमिति पृच्छति—**कथमिति**। चन्द्रादित्यनिर्वर्त्यदक्षिणोत्तरायणद्वारा लोकप्राप्तेः प्राप्यस्य लोकस्यापि चन्द्रादित्यात्मकत्वाच्च तयोस्तद्विधायकत्व- मिति तद्ये ह वा इत्यादिवाक्येन परिहरति—**तत्तत्रेति**। **इष्टं चेति**।

अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ २०
वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥

इति तयोर्भेदः। कृतमित्युपासत इति कृतशब्दोपरितनमितिशब्दमिष्टापूर्ते इति पूर्तशब्दोपर्याकृष्याऽऽदिशब्दपर्यायतया व्याचष्टे—**इत्यादीति**। दत्तमादिशब्दार्थः। कृतमेवोपासते कार्यमेवानुतिष्ठन्तीत्यर्थः। इदं च विशेषणं पुनरावृत्तौ हेतु- तयोक्तम्। कृतरूपेष्टादिजन्यत्वाच्चन्द्रस्यापि कृतत्वेनानित्यत्वात्पुनरावृत्तिरित्याह—**कृतरूपत्वादिति**। पुनरावृत्तौ मन्त्रवाक्यं प्रमाणयति—**इमं लोकमिति** ॥ ९ ॥ २५

**अथेति**। मार्गान्तरारम्भार्थोऽथशब्दः। **प्रजापत्यात्मविषययेति**। तत्तादात्म्यविषययेत्यर्थः। **आदित्यमभि- जयन्त** इति पूर्वमन्वयार्थमुक्तमिदानीं व्याख्यानार्थमिति द्रष्टव्यम्। **सामान्यमिति**। समष्टिरूपमित्यर्थः। **विद्यावता- मिति**। कर्मानधिकारिणामत एव केवलोपासनवतामित्यर्थः। **कर्मिणां च ज्ञानवतामिति**। समुच्चयवतामित्यर्थः। ननु केवलकर्मिणामप्यादित्यप्राप्तावपुनरावृत्तिर्भविष्यतीत्याशङ्क्य तेषामादित्यप्राप्तिरेव नास्तीति वक्तुमित्येष इति वाक्यं व्याचष्टे—**इति यस्मादिति**। तस्मात्तेषामादित्यप्राप्तिरनाशङ्क्येति शेषः (१०)। यद्वा तस्यायने इत्यारभ्येत्येष ३०

१. केवलकर्मिणां दक्षिणायनमार्गेण स्वर्गम्। ज्ञानयुक्तकर्मिणामुत्तरायणमार्गेण ब्रह्मलोकं चेत्यर्थः। इष्टा- पूर्तादि कृतमुपासत इत्यन्वयः इतिपदस्याद्यर्थत्वात्। उपासते अनुतिष्ठन्ति।

२. कृतमेव नाकृतमिति—एतेन नित्यब्रह्मोपासनाभावात् तेषां न ब्रह्मप्राप्तिरित्यर्थः।

३. उक्तं मन्त्रे मुण्डकोपनिषदि। ४. एत ऋषयः इति—ऋषगतौ स्वर्गस्य द्रष्टारः इत्यर्थः।

५. विद्याऽत्र प्रजापतिरहमिति भावनया प्रजापत्युपासनम्। ३५

६. जगतः जङ्गमस्य तस्थुषः स्थावरस्य। आदित्यमभिजयन्ते तद्द्वारा क्रमशः ब्रह्मलोकं यान्ति।

७. भयवर्जितं 'द्वितीयाद्वै भयं भवती'त्युक्तेः द्वितीयवत्त्वप्रयुक्तभयसत्त्वदाह-क्षयवृद्धिभयवर्जितमिति।

८. न पुनरावर्तन्ते अस्मिन्मन्वन्तरे—इति शेषः "इमं मानवमावर्तं नावर्तन्त" इति छान्दोग्यात्। अमृतत्वोक्तिस्तु दीर्घकालस्थायित्वात्।

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्।
अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः
तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥

५ पञ्चपादं पञ्चर्तवः पादा इवास्य संवत्सरात्मन आदित्यस्य तैरसौ पादैरिवर्तुभिरावर्तते। हेमन्तशिशिरावेकीकृत्येयं कल्पना। पितरं सर्वस्य जनयितृत्वात्पितृत्वं तस्य, तं द्वादशाकृतिं द्वादश मासा आकृतयोऽवयवा आकरणं वाऽवयविकरणमस्य द्वादशमासैस्तं द्वादशाकृतिं दिवो द्युलोकात्पर ऊर्ध्वेऽर्धे स्थाने तृतीयस्यां दिवीत्यर्थः। पुरीषिणं पुरीषवन्तमुदकवन्तमाहुः कालविदः। अथ तमेवान्य इम, उ परे कालविदो विचक्षणं निपुणं सर्वज्ञं सप्तचक्रे सर्पचक्रे [1]सप्तहयरूपेण सततं गतिमति कालात्मनि, षडरे षडृतुमत्याहुः सर्वमिदं जगत्कथयन्ति। अर्पितमरा इव रथनाभौ
१० निविष्टमिति। यदि पञ्चपादो द्वादशाकृतिर्यदि वा सप्तचक्रः षडरः सर्वथाऽपि संवत्सरः कालात्मा प्रजापतिश्चन्द्रादित्यलक्षणोऽपि जगतः कारणम् ॥ ११ ॥

यस्मिन्निदं श्रितं विश्वं स एव प्रजापतिः संवत्सराख्यः स्वावयवे मासे कृत्स्नः परिसमाप्यते। मासो वै निरोध इत्यन्तं श्रुतिवाक्यमयनयो रयिप्राणरूपत्वप्रतिपादनपरतया व्याख्येयम्। तथा हि—संवत्सरस्य रयिप्राणमिथुननिर्वर्त्यत्वे रयिप्राणरूपत्वं च वक्तव्यं तत्कथमिति पृच्छति—तत्कथमिति। तदवयवयोरयनयोस्तद्रूपं वक्तुं तयोः प्रथमं
१५ प्रसिद्धिमाह—तस्येति। प्रसिद्धिमेवाऽऽह—याभ्यामिति। एवमपि कथं तयोस्तदात्मकत्वमित्याह—कथमिति। दक्षिणायनस्य रयित्वं वक्तुं कर्मिणां रयिरूपचन्द्रनिर्वर्तकत्वमाह—तत्तत्रेति। लोकमिति। सोमरूपं शरीरमित्यर्थः। तस्य कर्मकृतत्वं पुनरावृत्त्या साधयति—कृतरूपत्वादिति। रयिरूपचन्द्रस्य दक्षिणायनद्वारा प्राप्यत्वात्तस्यायनस्य तदन्तर्भाव इति वक्तं तस्य कर्मिभिः प्राप्यत्वमाह—यस्मादिति। एवं च तस्य रयित्वं सिद्धमित्याह—एष इति। पितृयाणोपलक्षित इति। तत्प्राप्य इत्यर्थः। ततश्च तद्विशेषणस्यायनस्यापि रयित्वमित्यर्थः (९)। इदानीमुत्तरायणस्य
२० प्राणत्वमाह—अथेति। प्राणरूपादित्यप्रापकत्वादुत्तरायणस्य तस्यापि प्राणत्वमिति संवत्सरस्य रयिप्राणमिथुनात्मकत्वमिति तत्कार्यत्वं युक्तमिति भावः। अस्य कर्मसाध्यचन्द्रवैलक्षण्यमाह—एतद्वा इति। इतरत्सर्वं समानम्। अस्मिन्नर्थे इति। संवत्सरस्वरूप इत्यर्थः ॥ १० ॥

इयं कल्पनेति। पञ्चधा कर्मसाध्यचन्द्रवैलक्षण्यकल्पनेत्यर्थः। जनयितृत्वादिति। संवत्सरात्मककालस्य सर्वजनकत्वादित्यर्थः। समानाधिकरणबहुव्रीहितया व्याख्याय व्यधिकरणबहुव्रीहिर्वेत्याह—आकरणं वेति।
२५ अवयविकरणमिति। अवयवित्वेन करणमित्यर्थः। पक्षद्वयेऽप्येक एवार्थः। द्युलोकादिति। आकाशरूपादन्तरिक्षलोकादित्यर्थः। अन्यथा स्वर्गलोकात्परस्य चतुर्थत्वेन तृतीयस्यामित्यनन्वयापत्तेः। उदकवन्तमिति। आदित्याज्जायते वृष्टिरिति स्मृतेरित्यर्थः। अन्य इत्यस्य पूर्वार्धगतेनाऽऽहुरित्यनेन सम्बन्धः। उ इति तुशब्दसमानार्थो निपातः। परे तु तमेव विचक्षणमाहुरित्यन्वयः। किमाहुरित्यत आह—सप्तचक्र इति। तस्मिन्विचक्षणे सप्तचक्रद्यात्मके सर्वमिदं जगदर्पितमित्याहुरित्यर्थः। मतद्वयेऽपि कीदृशोऽर्थभेद इत्यत आह—यदीति। पूर्वमत ऋतूनां
३० पादत्वकल्पनया मासानामवयवत्वकल्पनयाऽऽदित्यात्मना संवत्सरः काल एवोक्तः। द्वितीये तु हेमन्तशिशिरौ पृथक्कृत्य षण्णामृतूनामरत्वकल्पनया संवत्सरस्य परिवर्तनगुणयोगेन चक्रत्वकल्पनया कालप्राधान्येन सर्वाश्रयत्वेन च स एवोक्तः। पक्षद्वयेऽपि गुणभेदेन कल्पनाभेदेन च भेदो न धर्मिभेद इत्यर्थः ॥ ११ ॥

कारणत्वे श्लोकोक्तं जगदाश्रयत्वं हेतुमाह—यस्मिन्निति। संवत्सरस्यापि मासाहोरात्ररूपव्यतिरेकेणौष-

---

१. सप्तहयरूपेणेति—सप्ताश्वाः आदित्यरथं नयन्तीत्युक्तत्वात्। संवत्सरात्मकस्यादित्यस्य स्वरूपमुच्यते—
३५ पञ्चपादमिति। सप्तचक्रे इत्यस्य ऋग्वेदभाष्ये (१-१६४-१२) सप्त आदित्यरश्मयः चक्रस्थानीया यस्येति वा अयनर्तुमासपक्षाहोरात्रमुहूर्तानि सप्तचक्राणि यस्येत्यर्थ उक्तः। अथवा वर्णव्यत्यासात् सर्पचक्रे गमनवति चक्रे इत्यर्थः ( दीपिका )।

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥

तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते ।
तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ ५

प्रजापतिर्यथोक्तलक्षण एव मिथुनात्मकस्तस्य मासात्मनः प्रजापतेरेको भागः कृष्णपक्षो रयिरन्नं चन्द्रमाः अपरो भागः शुक्लः शुक्लपक्षः प्राण आदित्योऽत्ताऽग्निर्यस्माच्छुक्लपक्षात्मानं प्राणं सर्वमेव पश्यन्ति तस्मात्प्राणदर्शिन एत ऋषयः कृष्णपक्षेऽपीष्टं यागं कुर्वन्तः शुक्लपक्ष एव कुर्वन्ति प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मादितरे तु प्राणं न पश्यन्तीत्यदर्शनलक्षणं कृष्णात्मानमेव पश्यन्ति । इतर इतरस्मिन्कृष्णपक्ष एव कुर्वन्ति शुक्ले कुर्वन्तोऽपि ॥ १२ ॥

सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते पूर्ववत् । तस्याप्यहरेव प्राणोऽत्ताऽग्नी रात्रिरेव रयिः पूर्ववत्, प्राणमहरात्मानं वा एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छिद्यापनयन्ति। के ? दिवाऽहनि रत्या रतिकारणभूतया सह स्त्रिया संयुज्यन्ते मिथुनं मैथुनमाचरन्ति मूढाः । यत एवं तस्मात्तन्न कर्तव्यमिति प्रतिषेधः प्रासङ्गिकः। यद्रात्रौ संयुज्यन्ते रत्या ऋतौ ब्रह्मचर्यमेव तदिति प्रशस्तत्वादृतौ भार्यागमनं कर्तव्यमिति । अयमपि प्रासङ्गिको विधिः । प्रकृतं तूच्यते सोऽहोरात्रात्मकः प्रजापतिः व्रीहियवाद्यन्नात्मना व्यवस्थितः ॥ १३ ॥ १५

एवंक्रमेण परिणम्य तदन्नं वै प्रजापतिः। कथम् ? ततस्तस्माद्ध वै रेतो नृबीजं तत्प्रजाकारणं तस्माद्योषिति सिक्तादिमा मनुष्यादिलक्षणाः प्रजाः प्रजायन्ते यत्पृष्टं कुतो ह वै प्रजाः प्रजायन्त इति । तदेवं चन्द्रादित्यमिथुनादिक्रमेणाहोरात्रान्तेनान्नासृग्रेतोद्वारेणेमाः प्रजाः प्रजायन्त इति निर्णीतम् ॥ १४ ॥

तत्तत्रैवं सति ये गृहस्थाः 'ह वै' इति प्रसिद्धस्मरणार्थौ निपातौ । तत्प्रजापतेर्व्रतमृतौ भार्यागमनं चरन्ति कुर्वन्ति तेषां दृष्टफलमिदम् । किम् । ते मिथुनं पुत्रं दुहितरं चोत्पादयन्ते । अदृष्टं च फलमिष्टापूर्तदत्तकारिणां तेषामे- २०

व्यादिजनकत्वाभावात्तस्य मासाद्यात्मकत्वमाह—स एवेति । यथोक्तेति । संवत्सररूपो रयिप्राणमिथुनात्मक इत्यर्थः। शुक्लकृष्णयोरुभयोरपि दर्शपूर्णमासादिकर्मानुष्ठानदर्शना[1]त्तस्मादेत ऋषय इत्यादि वाक्यमनुपपन्नमित्याशङ्क्य शुक्लस्य प्राणात्मकत्वज्ञानस्तुतिपरतया व्याचष्टे—यस्मादिति । यस्मात्प्राणं सर्वमेव सर्वात्मकमेव पश्यन्ति यस्माच्च प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते तस्मादित्यन्वयः । प्राणस्य शुक्लपक्षात्मकत्वात्कृष्णपक्षादिसर्वजगतः प्राणात्मत्वात्प्राणद्वारा कृष्णपक्षस्यापि शुक्लपक्षत्वे सति कृष्णे कुर्वन्तोऽपि प्रकाशात्मके शुक्ल एव कुर्वन्तीति शुक्लपक्षे प्राणत्वज्ञानस्य स्तुतिरित्यर्थः। एतत्स्तुत्यर्थमेव ज्ञानरहितान्निन्दति—इतरे त्विति । ये तु सर्वात्मानं प्राणं न पश्यन्त्यज्ञत्वात्तेषां शुक्लपक्षः प्राणत्वेनाज्ञायमानत्वादज्ञानात्मकः सन्कृष्णपक्षत्वमापद्यतेऽतः शुक्ले कुर्वन्तोऽप्यदर्शनात्मकत्वात्प्रकाशरहिते कृष्ण एव कुर्वन्तीति ते निन्द्यन्त इत्यर्थः। उक्तमर्थं श्रुत्यारूढं करोति—इतर इति ॥ १२ ॥ २५

रयिः पूर्ववदिति । रयिरन्नं चन्द्रमा इत्यर्थः। अह्नः प्राणत्वोक्तिप्रसङ्गादह्नि मैथुनं निषेधति—प्राणमिति । प्रकृतमिति । कुतो ह वा इमाः प्रजाः प्रजायन्त इति पृष्टमित्यर्थः। पूर्वोक्तं सर्वमेतदुपयोगितयोक्तं न तु साक्षात्प्रकृतमिति भावः ॥ १३ ॥ ३०

एवंक्रमेणेति । रयिप्राणसंवत्सरादिक्रमेण परिणम्य व्रीह्याद्यात्मना व्यवस्थितः सन्नन्नं वै प्रजापतिरन्नात्मको जातः प्रजापतिरित्यन्वयः । कथमिति । अन्नरूपत्वेऽपि तस्य कथं प्रजाजनकत्वमित्यर्थः । तत इति । भक्षितादन्नादित्यर्थः । रेत इति । शोणितस्याप्युपलक्षणं तुल्यत्वादिति ॥ १४ ॥

प्रजापतिव्रताचरणमात्रेण नादृष्टफलं चन्द्रलोकः प्राप्यते मूर्खाणामपि प्रसङ्गादत आह—इष्टापूर्तेति । ३५

१. आपौर्णमास्या अमावस्या नात्येति । आअमावस्याः पौर्णमासी नात्येति—इत्युक्तेः ।

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि प्रथमः प्रश्नः

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥

५ वैष यश्चान्द्रमसो ब्रह्मलोकः पितृयाणलक्षणो येषां तपः [1]स्नातकव्रतादीनि, ब्रह्मचर्यम् । ऋतावन्यत्र मैथुनासमाचरणं ब्रह्मचर्यम् । येषु च सत्यमनृतवर्जनं प्रतिष्ठितमव्यभिचारितया वर्तते नित्यमेव ॥ १५ ॥

यस्तु पुनरादित्योपलक्षित उत्तरायणः प्राणात्मभावो विरजः शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्तोऽसौ केषां तेषामित्युच्यते यथा गृहस्थानामनेकविरुद्धसंव्यवहारप्रयोजनवत्त्वाज्जिह्मं कौटिल्यं वक्रभावोऽवश्यंभावी तथा न येषु जिह्मम् । यथा च गृहस्थानां क्रीडानर्मादिनिमित्तमनृतमवर्जनीयं तथा न येषु तत्, तथा माया गृहस्थाना-
१० मिव न येषु विद्यते । माया नाम बहिरन्यथाऽऽत्मानं प्रकाश्यान्यथैव कार्यं करोति सा माया मिथ्याचाररूपा । मायेत्येवमादयो दोषा येष्वधिकारिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते तत[2]साधनानुरूपेणैव तेषामसौ विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः । पूर्वोक्तस्तु ब्रह्मलोकः केवलकर्मिणां चन्द्रलक्षण इति ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
प्रश्नोपनिषद्भाष्ये प्रथमः प्रश्नः

१५ प्राणोऽत्ता प्रजापतिरित्युक्तम् । तस्य प्रजापतित्वमत्तृत्वं चास्मिञ्शरीरेऽवधारयितव्यमित्ययं प्रश्न आरभ्यते—अथानन्तरं ह किलैनं भार्गवो वैदर्भिः पप्रच्छ । हे भगवन्कत्येव देवाः प्रजां शरीरलक्षणां विधारयन्ते

चान्द्रमसो ब्रह्मलोक इत्यपरब्रह्मणः प्रजापतेरंशत्वाद्रयिरूपस्य चन्द्रस्य ब्रह्मलोकत्वमित्यर्थः । इष्टादिकारिणां तपआदिकमपि चन्द्रलोकप्राप्त्यर्थमपेक्षितमित्यत आह—येषां तप इति ॥ १५ ॥

तेषामसौ विरज इत्यादिवाक्यं व्याचष्टे—यस्त्विति । उत्तरायण इति । तेन प्राप्य इत्यर्थः । प्राणात्मभावोऽ-
२० परब्रह्मतयाऽवस्थानमित्यर्थः । असौ केषां तेषामिति । तेषामसौ विरज इत्यत्र तेषामित्यनेन केषां निर्देश इति प्रश्नार्थः । न येषु जिह्ममित्यत्र जिह्मादिशब्दं व्यतिरेकप्रदर्शनेन व्याचष्टे—यथेत्यादिना । मायाग्रहणं तादृशानां दोषाणामुपलक्षणमिति वदन्वाक्यार्थं संगृह्य दर्शयति—मायेत्येवमिति । भिक्षुष्विति परमहंसव्यतिरिक्तानां कुटीचकादीनां ग्रहणम् । तेषां ब्रह्मलोकादपि विरक्तत्वेन तत्रानर्थित्वात् । इतिशब्दार्थमाह—इत्येषेति ॥ १६ ॥

इति श्रीमदानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां प्रथमः प्रश्नः

२५ प्रश्नान्तरस्य प्रथमप्रश्नेन सङ्गतिमाह—प्राणोऽत्तेति । अवधारयितव्यमिति । अत्ता विश्वस्य सत्पतिरित्यत्तृत्वस्यैषोऽग्निस्तपतीत्यारभ्यारा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायस इत्यादिना च प्रजापतित्वस्योत्तरत्र वक्ष्यमाणत्वादित्यर्थः । इदमुपलक्षणं पूर्वं गतिश्रवणेन विरक्तस्यापि

---

१ स्नातकव्रतादीनि—"वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । नेक्षेतोद्यन्तमादित्यमि"त्यादीनि । स्नातकेन गुरुकुलात् समावर्तितेन वटुना कर्तव्या धर्मा उक्ताः ( मनु० ४-३६ ) तानि स्नातकव्रतानि ।
३० यद्यपि कुतो ह वा इमाः प्रजायन्त इत्येतावत् पृष्टं तथापि तस्य गृहस्थानां परलोकप्राप्तिमार्गपर्यन्तत्वात् स्वर्गप्राप्तिः ब्रह्मलोकप्राप्तिश्च यथार्हं निरूपिते ।

२. साधनानुरूपेणेति—व्यवहारे कालुष्यराहित्यं साधनं फलमपि कालुष्यरहितो ब्रह्मलोकः इत्यर्थः । ब्रह्मलोके विरजस्त्वं द्वेषासूयादिराहित्यम् ।

तस्मै स होवाचाऽऽकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्-
मनश्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥

तान्वरिष्ठः प्राण उवाच। मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं
प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति तेऽश्रद्दधाना बभूवुः ॥ ३ ॥

विशेषेण धारयन्ते। कतरे [१]बुद्धीन्द्रियकर्मेन्द्रियविभक्तानामेतत्प्रकाशनं स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते कोऽसौ ५
पुनरेषां वरिष्ठः प्रधानः कार्यकरणलक्षणानामिति ॥ १ ॥

एवं पृष्टवते तस्मै स होवाच। आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीत्येतानि पञ्चमहाभूतानि शरीरारम्भकाणि वाङ्मनश्चक्षुः श्रोत्रमित्यादीनि कर्मेन्द्रियबुद्धीन्द्रियाणि ते कार्यलक्षणाः करणलक्षणाश्च ते देवा आत्मनो माहात्म्यं प्रकाश्याभिवदन्ति स्पर्धमाना अहंश्रेष्ठतायै, कथं वदन्ति ? वयमेतद्बाणं कार्यकरणसङ्घातमवष्टभ्य प्रासादमिव स्तम्भादयोऽविशिथिलीकृत्य विधारयामो विस्पष्टं धारयामः। मयैवैकेनायं सङ्घातो ध्रियत इत्येकैक- १०
स्याभिप्रायः ॥ २ ॥

तानेवमभिमानवतो वरिष्ठो मुख्यः प्राण उवाचोक्तवान्। मा मैवं मोहमापद्यथाविवेकतयाऽभिमानं मा कुरुत यस्मादहमेवैतद्बाणमवष्टभ्य विधारयामि पञ्चधाऽऽत्मानं प्रविभज्य प्राणादिवृत्तिभेदं स्वस्य कृत्वा विधारयामीति। उक्तवति च तस्मिंस्तेऽश्रद्दधाना अप्रत्ययवन्तो बभूवुः कथमेतदेवमिति ॥ ३ ॥

चित्तैकाग्र्यं विना वक्ष्यमाणात्मज्ञानासिद्धेस्तदर्थं मन्दानां फलविशेषार्थं च प्राणोपासनार्थं प्रश्नद्वयारम्भः। तत्रापि १५
श्रेष्ठत्वात्तृत्वप्रजापतित्वादिगुणनिर्धारणार्थं द्वितीयः प्रश्नः। तदुत्पत्त्यादिनिर्धारणपूर्वकं तदुपासनविधानार्थं तृतीयः प्रश्न इत्यपि द्रष्टव्यम्। प्रजाशब्देन शरीरमेव गृह्यते न जीवस्तस्य प्राणधारकत्वेन तद्धार्यत्वाभावादित्याह— शरीरेति। विभक्तानामिति निर्धारणे षष्ठी। स्वमाहात्म्यख्यापनमिति। अवकाशदानादिकमाकाशादीनां माहात्म्यं तस्य ख्यापनं तस्य लोकान्प्रति प्रकटनं तत्प्रकाशयन्ते कुर्वन्तीत्यर्थः। पाकं पचतीतिवत्। अवकाशदानादिकं स्वस्वकार्यं सर्वलोकप्रकटं यथा तथा कतरे कुर्वन्तीत्यर्थः ॥ १ ॥ २०

एष देव इति। वक्ष्यमाणाभिवदनादिव्यवहारसिद्ध्यर्थं चेतनत्वं संभावयितुं देव इति विशेषणम् [२]"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति न्यायेनाऽऽकाशाद्यभिमानिदेवताग्रहणार्थम्। तच्च विशेषणं वाय्वादिष्वपि सर्वत्र सम्बध्यते। वाग्ग्रहणं कर्मेन्द्रियोपलक्षणार्थं चक्षुरादिग्रहणं ज्ञानेन्द्रियोपलक्षणार्थमिति मत्वाऽऽह— कर्मेन्द्रियेति। कार्यलक्षणाः शरीराकारेण परिणता आकाशादयः करणलक्षणानीन्द्रियाणि। माहात्म्यमिति। आकाशादीनामवकाशदानादिरूपं शरीरधारणैकदेशात्मकं प्रकाश्यं स्वकार्यं प्रकाश्य सर्वलोकप्रकटं यथा तथा २५
कृत्वाऽभिवदन्ति, अभितः कृत्स्नं शरीरधारणं प्रत्येकं वयमेव कुर्म इति वदन्तीत्यर्थः। बाणमिति। वबयोरभेदाद्वाति कुत्सितं गन्धं वहतीति वा विनाशं गच्छतीति वा देशाद्देशान्तरं गच्छतीति वा बणं बणमेव बाणं कार्यकरण-सङ्घातं शरीरमित्यर्थः ॥ २ ॥

कथमेतदिति। एतदहमेवैतदित्याद्युक्तम्। एवं यथाभूतं कथमित्यर्थः ॥ ३ ॥

---

१. बुद्धीन्द्रियत्वेन ज्ञानजनकेन्द्रियत्वेन विभक्तानि त्वक्चक्षुः श्रोत्रादीनि। कर्मेन्द्रियत्वेन विभक्तानि ३०
वाक्पाण्यादीनि।

२. अभिमानिव्यपदेशस्त्विति ब्रह्मसूत्रद्वितीयाध्याये प्रथमपादे पञ्चमं सूत्रम्। 'मृदब्रवीत्' इत्यादि श्रुत्या मृदादीनां न चेतनत्वसिद्धिः यतः अभिमानिव्यपदेश एषः। कुतः विशेषानुगतिभ्याम्—विशेषः चेतना-चेतनविभागः विज्ञानं चाविज्ञानं चेति श्रुतावुक्तः। अनुगतिः 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादौ वागाद्यभिमानिदेवतायाः तत्तदिन्द्रियेष्वनुगतिश्रवणम्। ३५

[१]सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिँश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते। तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिँश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

[२]एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥

५ अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्। ऋचो यजूँषि सामानि यज्ञः क्षत्त्रं ब्रह्म च ॥ ६ ॥

स च प्राणस्तेषामश्रद्दधानतामालक्ष्याभिमानादूर्ध्वमुत्क्रमत इवेदमुत्क्रान्तवानिव स रोषान्निरपेक्षः। तस्मिन्नुत्क्रामति यद्वृत्तं तद्दृष्टान्तेन प्रत्यक्षीकरोति। तस्मिन्नुत्क्रामति सत्यथानन्तरमेवेतरे सर्व एव प्राणाश्चक्षुरादय उत्क्रामन्त उच्चक्रमिरे। तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवत्यनुत्क्रामति सति सर्व एव प्रातिष्ठन्ते तूष्णीं व्यवस्थिता अभूवन्। तत्तत्र यथा लोके मक्षिका मधुकराः स्वराजानं मधुकरराजानमुत्क्रामन्तं प्रति सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने १० सर्वा एव प्रातिष्ठन्ते प्रतितिष्ठन्ति। यथाऽयं दृष्टान्त एवं वाङ्मनश्चक्षुः श्रोत्रं चेत्यादयः ते उत्सृज्याश्रद्दधानतां बुद्ध्वा प्राणमाहात्म्यं प्रीताः प्राणं स्तुन्वन्ति स्तुवन्ति ॥ ४ ॥

कथम्—एष प्राणोऽग्निः संस्तपति ज्वलति। तथैष सूर्यः सन्प्रकाशते। तथैष पर्जन्यः सन्वर्षति। किञ्च मघवानिन्द्रः सन्प्रजाः पालयति जिघांसत्यसुररक्षांसि। एष वायुरावहप्रवहादिभेदः[३], किं चैष पृथिवी रयिर्देवः सर्वस्य जगतः सन्मूर्तमसदमूर्तं च अमृतं यद्देवानां स्थितिकारणम् ॥ ५ ॥

१५ किं बहुना—अरा इव रथनाभौ श्रद्धादि नामान्तं सर्वं स्थितिकाले प्राण एव प्रतिष्ठितम्। तथर्चो यजूंषि सामानीति त्रिविधा मन्त्रास्तत्साध्यश्च यज्ञः क्षत्त्रं च सर्वस्य पालयितृ [४]ब्रह्म च यज्ञादिकर्मकर्तृत्वेऽधिकृतं चैवैष प्राणः सर्वम् ॥ ६ ॥

उत्क्रान्तवानिवेति। अत्यन्तोत्क्रान्त्यभावादिवशब्दः। निरपेक्ष इति। स्वयमेवेत्यर्थः। दृष्टान्तेनेति। तद्यथेति वक्ष्यमाणेनेत्यर्थः ॥ ४ ॥

२० सूर्यः सन्निति। तपतीत्यनुषङ्गः सन्तापयतीत्यर्थः। आवहप्रवहादीति। आवहादयः सप्त वायुगणास्तथाभूतः सन्मेघाञ्ज्योतिश्चक्रादींश्च वहतीति शेषः। एष देवः पृथिवी सन्सर्वस्य जगतो धारयिता रयिश्चन्द्रः सन्सर्वं पुष्णातीत्यर्थः ॥ ५ ॥

श्रद्धादीति। प्राणाच्छ्रद्धां खं वायुर्ज्योतिराप इत्यादिना वक्ष्यमाणषोडशकलात्मक इत्यर्थः। ब्रह्म चेति। ब्राह्मणजातिरित्यर्थः। चब्दार्थमाह—यज्ञादीति। अधिकृतं सर्वमेवेत्यन्वयः ॥ ६ ॥

---

२५ १. सोऽभिमानादिति—छान्दोग्ये बृहदारण्यके च प्राणानां स्वस्वश्रैष्ठ्ये विवदनम्, तन्निर्धारणाय प्रजापतिसमीपगमनं, प्रजापतिना 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरं भवति स वः श्रेष्ठ' इत्युपदेशः, ततः प्रत्येकं वागाद्युत्क्रमणं, तदा शरीरस्य पापिष्ठत्वाभावः मुख्यप्राणोत्क्रमणारम्भे इतरेषां भीतिः तैः मिलित्वा प्राण एव श्रेष्ठ इत्यभ्युपगमः प्राणस्तुतिः इत्यादिकस्य व्यवहारस्योपलक्षणमिदम्। एतत्सर्वं प्रश्नोपनिषदि अध्याहर्तव्यम् गुणोपसंहारन्यायेन प्रशंसार्थम्। सर्वत्रापि प्राणः नोत्क्रान्तः तथा सति ३० शरीरपातप्रसङ्गात्। अपितु उत्क्रमितुं प्रवृत्तः तदैव चेतरेषां भीतिः "मोत्क्रमीरि"ति प्रार्थनं च।

२. हिरण्यगर्भस्य समष्टिप्राणस्यावस्थाभेदाः अग्न्यादयः ततः तद्रूपतया प्राणस्तुतिः।

३. आवहप्रवहादिभेदः—

आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा। विवहः प्रवहश्चैव परीवाहस्तथैव च॥
( इति पुराणोक्ताः सप्त ) अभिमुखमागच्छन् आवहः।

३५ ४. ब्रह्म—ब्राह्मणजातिः—यज्ञादिकर्मकर्तृत्वेऽधिकृतम्। आर्त्विज्यं ब्राह्मणस्यैव नेतरेषां वर्णानामिति पूर्वमीमांसायां( १२.४.१६) अधिकरणे निर्णीतम्। 'स्मृतेर्वा स्याद्ब्राह्मणानामि'ति सूत्रम् (१२.४.४३)।

[1]प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥ ७ ॥
देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा। ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥
इन्द्रस्त्वं प्राण तेजसा [2]रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥
यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः। आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥१०॥

किञ्च—यः प्रजापतिरपि स त्वमेव गर्भे चरसि पितुर्मातुश्च प्रतिरूपः सन्प्रतिजायसे, प्रजापतित्वादेव प्रागेव सिद्धं तव मातृपितृत्वं सर्वदेहदेह्याकृतिच्छन्नैकः प्राणः सर्वात्माऽसीत्यर्थः। तुभ्यं त्वदर्थं या इमा मनुष्याद्याः प्रजास्तु हे प्राण चक्षुरादिद्वारैर्बलिं हरन्ति। यस्त्वं प्राणैश्चक्षुरादिभिः सह प्रतितिष्ठसि सर्वशरीरेष्वतस्तुभ्यं बलिं हरन्तीति युक्तम्। भोक्ता हि यतस्त्वं तवैवान्यत्सर्वं भोज्यम् ॥ ७ ॥ ५

किञ्च—देवानामिन्द्रादीनामसि भवसि त्वं वह्नितमो हविषां प्रापयितृतमः। पितॄणां [3]नान्दीमुखे श्राद्धे या पितृभ्यो दीयते स्वधाऽन्नं सा देवप्रदानमपेक्ष्य प्रथमा भवति। तस्या अपि पितृभ्यः प्रापयिता त्वमेवेत्यर्थः। किञ्चर्षीणां चक्षुरादीनां प्राणानामङ्गिरसामङ्गिरसभूतानामथर्वणां तेषामेव 'प्राणो वा अथर्वा' इति श्रुतेः। चरितं चेष्टितं सत्यमवितथं देहधारणाद्युपकारलक्षणं त्वमेवासि ॥ ८ ॥ १०

किञ्च—इन्द्रः परमेश्वरस्त्वं हे प्राण! तेजसा वीर्येण, रुद्रोऽसि संहरञ्जगत्। स्थितौ च परि समन्ताद्रक्षिता पालयिता [4]परिरक्षिता त्वमेव, जगतः सौम्येन रूपेण। त्वमन्तरिक्षेऽजस्रं चरसि उदयास्तमयाभ्यां सूर्यस्त्वमेव च सर्वेषां ज्योतिषां पतिः ॥ ९ ॥ १५

यदा पर्जन्यो भूत्वाऽभिवर्षसि त्वमथ तदाऽन्नं प्राप्येमाः प्रजाः प्राणते प्राणचेष्टां कुर्वन्तीत्यर्थः। अथवा प्राण ते तवेमाः प्रजाः स्वात्मभूतास्त्वदन्नसंवर्धितास्त्वदभिवर्षणदर्शनमात्रेण चाऽऽनन्दरूपाः सुखं प्राप्ता इव सत्यस्तिष्ठन्ति। कामायेच्छातोऽन्नं भविष्यतीत्येवमभिप्रायः ॥ १० ॥

किञ्चेति। यः प्रजापतिर्विराट्सोऽपि त्वमेवेत्यन्वयः। पितुर्गर्भे रेतोरूपेण मातुर्गर्भे पुत्ररूपेण यश्चरति पश्चात्तयोरेव प्रतिरूपः सन्सदृशः सन्यः प्रजायते स त्वमेव प्रजायस इत्यन्वयः। प्रतिशब्दार्थ उक्तः—प्रतिरूपः सन्निति। ननु प्राणस्य पुत्ररूपत्वमेवोक्तं न तु पितृमातृरूपत्वं तत्कस्मादत आह—प्रजापतित्वादेवेति। तस्य सर्वात्मत्वादित्यर्थः। निष्कृष्टार्थमाह—सर्वदेहेति। अत्रापि निष्कृष्टार्थमाह—भोक्ता हीति। अतस्तवैवेत्यतः शब्दाध्याहारेण योज्यम् ॥ ७ ॥ २०

हविषां प्रापयितृतम इति। वह्निशब्दो वहनाद्वह्निरिति यौगिक इत्यर्थः। प्रथमा भवतीति। यज्ञादिदैवकर्मणि प्रथमं नान्दीमुखश्राद्धस्यावश्यकर्तव्यत्वात्सा प्रथमेत्यर्थः। ऋष गताविति धातोर्ज्ञानार्थत्वादृषिशब्दस्य ज्ञानजनकचक्षुराद्यर्थत्वमित्यर्थः। अङ्गिरसभूतानामिति। प्राणाभावेऽङ्गानां शोषदर्शनात्तेषामङ्गिरसत्वमित्यर्थः। मुख्यप्राणस्याथर्वत्वं श्रुत्याऽभिहितं यद्यपि तथाऽपि चक्षुरादीनामपि तदंशत्वादथर्वशब्दार्थत्वमिति भावः ॥ ८ ॥ २५

इहेन्द्रशब्देन परमेश्वरत्वमुच्यते मघवानित्यनेन त्विन्द्र उक्त इति भेदमाह—इन्द्रः परमेश्वर इति। वीर्येण संहारसामर्थ्येनेत्यर्थः। सौम्येनेति। विष्ण्वादिरूपेणेत्यर्थः ॥ ९-१० ॥

---

१. प्रजापतिः विराट्पुरुषः। प्राणैः प्रतितिष्ठसि हिरण्यगर्भात्मकः समष्टिरेव तत्तद्भूतेषु व्यष्टिरूपैः प्रतिष्ठितः। ३०

२. रुद्रोऽसि इत्यनेन घोररूपेण जगत्संहरन् इत्युक्तम्।

३. नन्दन्त्यस्मिन्देवाः इति नान्दी देवोद्देश्यकं यज्ञादि तदर्थं क्रियमाणोपनयनविवाहादि च। तदारम्भे तन्मुखे क्रियमाणं श्राद्धं नान्दीमुखश्राद्धम्। अत्र सत्यवसुसंज्ञकौ विश्वेदेवौ, पितरश्च पितृवर्गः मातामहवर्गश्च। नान्दीश्राद्धं कृत्वैव यज्ञादिकर्तव्यम्। अङ्गि शरीरमङ्गविशिष्टं, तस्य रसः सारः प्राणः।

४. परिरक्षितापि रुद्र एव सौम्येन रूपेणेत्याह—सौम्येन रूपेणेति। श्रीरुद्रस्य द्वे रूपे "घोरान्या शिवान्या" इति श्रुतेः। तत्र शिवास्तनुवः "विराट् च स्वराट् च" (तै० ब्रा० १-६-४) इत्यादयः, घोरास्तु "स्निक च स्नीहितिश्च" इत्यादिना तै० आरण्यके अनुक्रान्ताः। एतेन रुद्रोऽसि परिरक्षिता इति सामानाधिकरण्यं समर्थितं भवति। ततश्च विष्ण्वादिरूपेणेत्यध्याहारोऽनावश्यकः। ३५

व्रात्यस्त्वं प्राणैकर्षिरत्ता विश्वस्य सत्पतिः। वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥११॥
या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि। या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥१२॥
प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्। मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥१३॥

इत्यथर्ववेदीयप्रश्नोपनिषदि द्वितीयः प्रश्नः

५ अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ। भगवन्कुत एष प्राणो जायते कथमायात्यस्मिञ्शरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥

किञ्च—प्रथमजत्वादन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्यस्त्वम्। स्वभावत एव शुद्ध इत्यभिप्रायः। हे प्राणैक-ऋषिस्त्वमाथर्वणानां प्रसिद्ध एकर्षिनामाऽग्निः सन्नत्ता सर्वहविषाम्। त्वमेव विश्वस्य सर्वस्य सतो विद्यमानस्य पतिः सत्पतिः। साधुर्वा पतिः सत्पतिः। वयं पुनराद्यस्य तवादनीयस्य हविषो दातारः। त्वं पिता मातरिश्व हे १० मातरिश्वन्नोऽस्माकम्। अथवा मातरिश्वनो वायोस्त्वम्। अतश्च सर्वस्यैव जगतः पितृत्वं सिद्धम् ॥ ११ ॥

किं बहुना—या ते त्वदीया तनूर्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती। या श्रोत्रे या च चक्षुषि या च मनसि सङ्कल्पादिव्यापारेण सन्तता समनुगता तनूस्तां शिवां शान्तां कुरु मोत्क्रमीः उत्क्रमणेनाशिवां मा कार्षीरित्यर्थः ॥ १२ ॥

किं बहुना—अस्मिँल्लोके प्राणस्यैव वशे सर्वमिदं यत्किञ्चिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च १५ यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एवेशिता रक्षिता। अतो मातेव पुत्रानस्मान्रक्षस्व पालयस्व। त्वन्निमित्ता हि ब्राह्म्यः क्षात्रियाश्च श्रियस्तास्त्वं श्रीश्च श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः। सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्तेत्यवधृतम् ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ प्रश्नोपनिषद्भाष्ये द्वितीयः प्रश्नः

२० अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ। प्राणो ह्येवं प्राणैर्निर्धारिततत्त्वैरुपलब्धमहिमाऽपि संहतत्वात्स्यादस्य कार्यत्वमतः पृच्छामि—भगवन्कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते। जातश्च कथं केन वृत्तिविशेषेणाऽऽ-

असंस्कृत इति। संस्कारहीनो व्रात्य इति स्मृतेरित्यर्थः। अनेन स्वतःशुद्धत्वं विवक्षितमित्याह—स्वभावत एवेति। मातरिश्वेति। मातरिश्व न इत्यत्र नलोपश्छान्दस इत्यर्थः। वायोस्त्वमिति। पितेत्यनुषङ्गः। अस्मिन्व्याख्याने वायुमात्रपितृत्वादस्मदादिसर्वपितृत्वमनुक्तं स्यादत आह—अतश्चेति। अस्मदादिसर्वजनकत्वाद्वायोस्तज्जनकस्याऽऽ- २५ काशात्मनः प्राणस्य सर्वजनकत्वं सिद्धमित्यर्थः ॥ ११ ॥

वाचि प्रतिष्ठितेति। वाच्यपानरूपा तनूः प्रतिष्ठिता। श्रोत्रे व्यानरूपा। चक्षुषि प्राणरूपा। मनसि समानरूपा। 'स प्राणस्तच्चक्षुः स व्यानस्तच्छ्रोत्रं सोऽपानः सा वाक्स समानस्तन्मन' इति श्रुतेरित्यर्थः। उत्क्रमणेनेति। प्राणोत्क्रमणे सत्यपानाद्यात्मिका वागादिरूपा तनूरशिवा कार्यायोग्या स्यादित्यर्थः ॥ १२ ॥

ब्राह्म्य इति। ऋगादिमन्त्ररूपा ब्राह्म्यः। "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्" इति श्रुतेः। ३० क्षात्र्यः प्रसिद्धा धनाद्यैश्वर्यरूपाः। अस्मिन्प्रश्ने निर्धारितं गुणं संगृह्याऽऽह—इत्येवमिति। इदं वरिष्ठत्वादेरुपलक्षणम् ॥ १३ ॥

इत्यानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां द्वितीयः प्रश्नः

एवं प्रजापतित्वात्तृत्वादिगुणजातं निर्धार्य प्राणस्योत्पत्त्यादि निर्धारयंस्तदुपासनां विधातुं प्रश्नान्तरमवतारयति—अथेति। वैदर्भिप्रश्नानन्तरमित्यर्थः। प्राणैरिति। यैर्वागादिप्राणैराकाशादिभिश्च प्राणस्य तत्त्वमुपलब्धं ३५ तैरित्यर्थः। प्राणस्य पूर्वोक्तमहिमत्वादेवोत्पत्तिशङ्काभावात्कुत इति प्रश्नानुपपत्तिमाशङ्क्याऽऽह—अपि संहतत्वादिति।

तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥
आत्मन एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनाऽऽयात्यस्मिञ्छरीरे ॥३॥
यथा सम्राडेवाधिकृतान्विनियुङ्क्ते । एतान्ग्रामानेतान्ग्रामान-
धितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते ॥ ४ ॥

यात्यस्मिञ्छरीरे । किंनिमित्तकमस्य शरीरग्रहणमित्यर्थः । प्रविष्टश्च शरीर आत्मानं वा प्रविभज्य प्रविभागं कृत्वा ५
कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति । केन वा वृत्तिविशेषेणास्माच्छरीरादुत्क्रमत उत्क्रामति । कथं बाह्यमधि-
भूतमधिदैवतं चाभिधत्ते धारयति कथमध्यात्ममिति ॥ १ ॥

एवं पृष्टस्तस्मै स होवाचाऽऽचार्यः—प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हस्तस्यापि जन्मादि त्वं पृच्छस्य-
तोऽतिप्रश्नान्पृच्छसि । ब्रह्मिष्ठोऽसीत्यतिशयेन त्वं ब्रह्मविदतस्तुष्टोऽहं तस्मात्ते तुभ्यं ब्रवीमि ॥ २ ॥

यत्पृष्टं शृणु—आत्मनः परस्मात्पुरुषादक्षरात्सत्यादेष उक्तः प्राणो जायते । कथमित्यत्र दृष्टान्तः । यथा लोक १०
एषा पुरुषे शिरःपाण्यादिलक्षणे निमित्ते छाया नैमित्तिको जायते तद्वदेतस्मिन्ब्रह्मण्येतत्प्राणाख्यं [1]छायास्थानीयमनृत-
रूपं तत्त्वं सत्ये पुरुष आततं समर्पितमित्येतत् । छायेव देहे, [2]मनोकृतेन मनःसङ्कल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतत् ।
वक्ष्यति हि पुण्येन पुण्यमित्यादि । तदेव सक्तः सह कर्मणैति इति च श्रुत्यन्तरात् । आयात्यागच्छत्यस्मिञ्छरीरे ॥३॥

यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते । कथम् ? एतान्ग्रामानेतान्ग्रामानधि-
तिष्ठस्वेति । एवमेव यथा दृष्टान्तः । एष मुख्यः प्राण इतरान्प्राणांश्चक्षुरादीनात्मभेदांश्च पृथक्पृथगेव यथास्थानं १५
सन्निधत्ते विनियुङ्क्ते ॥ ४ ॥

अनेकात्मकत्वात्सावयवत्वादित्यर्थः । शरीरग्रहणमिति । शरीरप्रवेश इत्यर्थः । प्रातिष्ठत इति । आङ्प्रश्लेषाद्दीर्घत्वम् ॥१॥

विषमेति । विषमं दुर्घटं यथा तथा प्रश्नार्ह इत्यर्थः । अतिप्रश्नानिति । त्वदन्येषां प्रश्नानतिक्रान्तानन्य-
दीयप्रश्नागोचरान्सूक्ष्मप्रश्नान्प्रष्टव्यार्थानित्यर्थः । अतिशयेनेति । अपरब्रह्मापेक्षयाऽतिशयितमुख्यब्रह्मविदसि त्वमिति
प्रोत्साहार्थं स्तौतीति भावः ॥ २ ॥ २०

"दिव्यो ह्यमूर्तः पुरुषः, अक्षरात्परतः परः" "एतस्माज्जायते प्राणः" इति मन्त्रावत्र सम्वादयितुं तद्गत-
विशेषणान्याह—परस्मादिति । अत्र दृष्टान्त इति । तस्यानृतत्वार्थं दृष्टान्त उच्यत इत्यर्थः । छायेति । प्रतिबिम्बादि-
रूपेत्यर्थः । एतस्मिन्निति । प्रकृते जनक आत्मनि ब्रह्मणीत्यर्थः । कथमायातीत्यस्योत्तरमाह—मनोकृतेनेति ।
सन्धिरार्षः । तदेव सक्त इति । अस्य कर्मिणो मनो यस्मिन्फले निषक्तं संसक्तं आसक्तः संस्तदेव फलं कर्मणा सहैतीति
श्रुतौ च शरीरग्रहणं कर्मसाध्यमुक्तमित्यर्थः ॥ ३ ॥ २५

आत्मानं वा प्रविभज्येत्यस्योत्तरं दृष्टान्तेनाऽऽह—यथेति । इतरानिति । इतरांश्चक्षुरादीन्यथास्थानमक्ष्यादि-

---

१. यथा आदर्शे जले वा पुरुषछाया अनृता न सत्या तथा आत्मनश्छायारूपः प्राणः मिथ्येत्यर्थः । अत एव
जीवस्वरूपं ब्रह्मसूत्रेषु "अत एव चोपमा सूर्यकादिवत्" "आभास एव च" इति सूत्रयोः प्रतिबिम्ब-
रूपमित्युक्तम् । तच्च जीवोपाधिभूतप्राणस्यैवेत्युक्तं भवति अनेन मन्त्रेण । जीवस्वरूपस्य शुद्धस्य
ब्रह्माभिन्नत्वात् तस्य प्रतिबिम्बत्वाभावात् । ३०
यत्तु रामानुजीयैः—यथा छाया पुरुषेण गच्छति तथा प्राणः आत्मना सह गच्छति इत्यर्थ इत्यूचुः ।
तन्न । "कुत एष प्राणो जायते" इत्यस्य प्रतिवचनं हि प्रक्रान्तम्—आत्मन एष प्राणो जायते यथैषा
पुरुषे छाया इति ह्युक्तम् । तत्र पुरुषेण सह गच्छतीति विवरणमयुक्तम् । तदपि च न सम्यक् लग्नं रात्रौ
छायायाः पुरुषेण सह गमनाभावात् । अतः अनृतत्वोपपादनाय छायासादृश्योक्तिः । 'एतस्मिन् एतदातत-
मि'त्यत्र मतान्तरीयैः जीवे प्राणः आतत इति व्याख्यातं तन्न एतच्छब्दस्य सर्वनामत्वात् पूर्वप्रकृतपरमात्म- ३५
परत्वस्यैव स्वरसत्त्वात् । अस्माकं तु परमात्मनि प्राणः आततः व्याप्तः, तेनात्मनो जीवभावः इत्यर्थः ।
२. मनोकृतेन—मनः सङ्कल्पादिकृतकर्मणा प्राणः शरीरे प्रविष्टः । मतान्तरे—मनोऽकृतेन = अयत्नतः
इत्यर्थः कृतः । तन्न । तथा सति अकृतेनेति वा अयत्नेनेति वा वक्तव्यं मनःपदं व्यर्थम् ।

पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

हृदि ह्येष आत्मा। अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्या द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥

५ तत्र विभागः—पायूपस्थे पायुश्चोपस्थश्च पायूपस्थं तस्मिन् अपानमात्मभेदं मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठति सन्निधत्ते। तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिंश्चक्षुःश्रोत्रे। मुखनासिकाभ्यां च मुखं च नासिका च ताभ्यां मुखनासिकाभ्यां च निर्गच्छन्प्राणः स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति। मध्ये तु प्राणापानयोः स्थानयोर्नाभ्याम्। समानोऽशितं पीतं च समं नयतीति समानः। एष हि यस्माद्यदेतद्धुतं भुक्तं पीतं चाऽऽत्माग्नौ प्रक्षिप्तमन्नं समं नयति, तस्मादशितपीतेन्धनादग्नेरौदर्याद्धृदयदेशं प्राप्तादेताः सप्तसंख्याका अर्चिषो दीप्तयो निर्गच्छन्त्यो १० भवन्ति [1]शीर्षण्याः। प्राणद्वारा दर्शनश्रवणादिलक्षणरूपादिविषयप्रकाशा इत्यभिप्रायः ॥ ५ ॥

हृदि ह्येष पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृदयाकाश एष आत्माऽऽत्मना संयुक्तो[2] लिङ्गात्मा, अत्रास्मिन्हृदय एतदेकशतमेकोत्तरशतं संख्यया प्रधाननाडीनां भवतीति। तासां शतं शतमेकैकस्याः प्रधाननाड्या भेदाः। पुनरपि द्वासप्ततिर्द्वासप्ततिर्द्वे द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि। सहस्राणां द्वासप्ततिः प्रतिशाखानाडी-सहस्राणि प्रतिप्रतिनाडीशतं संख्यया प्रधाननाडीनां सहस्राणि भवन्ति। आसु नाडीषु व्यानो वायुश्चरति। व्यानो १५ गोलकस्थाने सन्निधत्ते सन्निधापयति। आत्मभेदान्मुख्यप्राणस्य वृत्तिभेदान्प्राणापानादीन्पाय्वादिषु नियुङ्क्ते इति। अत्र श्रुत्या नेत्रादीनां चक्षुरादिस्थानानां स्पष्टत्वात्तानि नोक्तानीति द्रष्टव्यम् ॥ ४ ॥

यः कुर्वंस्तिष्ठति तं सन्निधत्ते विनियुङ्क्त इत्यर्थः। मध्य इति। प्राणापानयोर्मध्ये या नाभिस्तस्यां समानः प्रतितिष्ठतीत्यन्वयः। समानशब्दार्थमुक्तं श्रुत्याऽऽरूढं करोति—एष हीति। आत्माग्नाविति। आत्मनि शरीरेऽग्नि-र्जाठराग्निस्तस्मिन्नित्यर्थः। एवं हुतपदबलादन्नस्य हविष्ट्वं जाठराग्नेराहवनीयत्वं प्रक्षेपस्य होमत्वं चोक्त्वा शीर्षण्य-२० सप्तद्वारान्निर्गतानां ज्ञानानामर्चिष्ट्वं वक्तुं तस्मादेता इति वाक्यं व्याचष्टे—तस्मादिति। प्राप्तादिति। अग्ने-रौदर्याद्धेतोः प्राप्तपरिपाकादन्नरसादन्ननाडीद्वारा देहं प्राप्तं नाडीस्थानं हृदयं प्राप्तादन्नरसादिति शेषः। दर्शनद्वयं श्रवणद्वयं घ्राणद्वयं मुखं चैकं रसनामिति सप्तार्चिषः। जाठराग्निपाकजन्यान्नरसबलेन दर्शनादीनां प्रवृत्तेस्तेषु तदर्चिष्ट्वारोप इत्यर्थः ॥ ५ ॥

व्यानस्य नाडीरूपं स्थानं दर्शयितुं नाडीनामुत्पत्तिस्थानं वक्तुमाह—हृदीत्यादिना। हृदयस्य लिङ्गात्म-२५ स्थानत्वोक्तेः। प्रयोजनं तु केचिद्योगिनो नाभिकन्दस्य नाड्युत्पत्तिस्थानत्वं वदन्ति तन्निराकरणं, तत्रैव लिङ्गात्मनः सञ्चरणार्था नाड्यः नाडीभिः प्रत्यवसृप्येत्यादिश्रुतेः। ततश्च लिङ्गात्मनो हृदयस्थानत्वे तत्सञ्चारमार्गभूतनाडीनामपि तदेवोत्पत्तिस्थानमन्यथा प्रदेशान्तरस्थनाडीनां तन्मार्गत्वायोगाद्द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्त इति श्रुतेश्चेति। लिङ्गशरीरस्याऽऽत्मत्वमात्मोपाधित्वेन तद्योगादित्याह—आत्मना संयुक्त इति। यस्माल्लिङ्गात्मा हृदि वर्तते तत्सञ्चारमार्गभूतनाडीनामपि तदेव स्थानमित्याह—अत्रेति। नाडीनां शरीरविधारकत्वेन प्रसिद्धत्वं ३० वक्तुमेतदिति विशेषम्। तस्य स्पष्टत्वाद्भाष्ये न व्याख्यातम्। एकैकस्या नाड्याः शाखानाड्यः शतं शतं भवतीत्याह—तासामिति। ततश्च शतोत्तरमयुतं शाखानाड्य इत्यर्थः। शाखानाडीनां च प्रत्येकं द्व्यधिकसप्तति-सहस्राणि प्रतिशाखानाड्यस्सन्तीत्याह—पुनरपीति। सप्ततिरितिपदस्य संख्याप्रधानत्वे सहस्राणीत्यस्य तेन सामानाधि-करण्यायोगात्षष्ठ्यन्ततया व्याचष्टे—सहस्राणामिति। प्रतिशाखेति। प्रतिशाखाभ्यो निर्गता अल्पशाखाः प्रतिशाखाः। द्वासप्ततिरित्यत्र वीप्सार्थमाह—प्रतिप्रतीति। प्रतिप्रतिनाडीशतमित्यनन्तरमेकैकस्या इत्यनुषङ्गः। तथा च प्रतिप्रति-

३५ १. शिरसि वर्तमानप्राणसहायेन दर्शनादयः सप्त विषयप्रकाशा भवन्तीत्यर्थः शीर्षण्यसप्तद्वाराणि द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके एका वागिति सप्त।

२. आत्मना संयुक्तः=आत्मप्रतिबिम्बयुक्तः लिङ्गात्मा लिङ्गशरीरम्।

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥**

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः ।**
**पृथिव्यां या देवता सैषा पुरुषस्यापान[1]मवष्टभ्यान्तरा यदाकाशः स समानो [2]वायुर्व्यानः ॥ ८ ॥**

**व्यापनात् । आदित्यादिव रश्मयो हृदयात्सर्वतोगामिनीभिर्नाडीभिः सर्वदेहं संव्याप्य व्यानो वर्तते । सन्धिस्कन्धमर्मदेशेषु विशेषेण प्राणापानवृत्त्योश्च मध्य उद्भूतवृत्तिर्वीर्यवत्कर्मकर्ता भवति ॥ ६ ॥** ५

**अथ या तु तत्रैकशतानां नाडीनां मध्य ऊर्ध्वगा सुषुम्नाख्या नाडी तयैकयोर्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्तिः सञ्चरन्पुण्येन कर्मणा शास्त्रविहितेन पुण्यं लोकं देवादिस्थानलक्षणं नयति प्रापयति । पापेन तद्विपरीतेन पापं नरकं तिर्यग्योन्यादिलक्षणम् । उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यामेव मनुष्यलोकं नयतीत्यनुवर्तते ॥ ७ ॥**

**आदित्यो ह वै प्रसिद्धो ह्यधिदैवतं बाह्यः प्राणः स एष उदयत्युद्गच्छति । एष ह्येनमाध्यात्मिकं चक्षुषि भवं चाक्षुषं प्राणं प्रकाशेनानुगृह्णानो रूपोपलब्धौ चक्षुष आलोकं कुर्वन्नित्यर्थः । तथा पृथिव्यामभिमानिनी या देवता प्रसिद्धा सैषा पुरुषस्यापानमपानवृत्तिमवष्टभ्याऽऽकृष्य वशीकृत्याध एवापकर्षणेनानुग्रहं कुर्वती वर्तत इत्यर्थः । अन्यथा हि शरीरं गुरुत्वात्पतेत्सावकाशे वोद्गच्छेत् । यदेतदन्तरा मध्ये द्यावापृथिव्योर्य आकाशस्तत्स्थो वायुराकाश उच्यते । मञ्चस्थवत् । स समानः समानमनुगृह्णानो वर्तत इत्यर्थः । समानस्यान्तराकाशस्थत्वसामान्यात् । सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्याद्व्यानो व्यानमनुगृह्णानो वर्तत इत्यभिप्रायः ॥ ८ ॥** १०

नाडीशतमेकैकस्या नाड्याः प्रतिशाखानाडीनां द्वासप्ततिसहस्राणि भवन्तीत्यर्थः । तथा च मूलशाखाप्रतिशाखानाड्यो मिलित्वा द्वासप्ततिकोट्यो द्वासप्ततिलक्षाणि दशसहस्रं च शतद्वयमेका च भवन्तीति द्रष्टव्यम् । एवं नाडीरुक्त्वा व्यानस्य तत्स्थानत्वमाह—आस्विति । सूक्ष्मासु नाडीषु विद्यमानस्य व्यानस्य कथं व्यापकत्वमित्याशङ्क्य नाडीनां सर्वदेहव्याप्तेस्तत्स्थस्यापि व्यानस्य तद्द्वारा व्याप्तिरित्याह—आदित्यादिवेति । यथाऽऽदित्याद्विनिर्गत्य रश्मयः सर्वतो गतास्तथा हृदयात्सर्वतोगामिन्यो नाड्यस्ताभिरिति योज्यम् । सामान्येन सर्वशरीरव्याप्तावपि विशेषस्थानमाह—सन्धीति । प्राणेति । उच्छ्वासनिश्वासयोः प्राणापानवृत्त्योरभावे व्यानवृत्तिरुद्भवतीत्यर्थः । वीर्यवदिति । अथ यः प्राणापानयोः सन्धिः स व्यान इत्युक्त्वा यानि वीर्यवन्ति कर्माणि बलवता पुरुषेण साध्यानि धनुरायमनादीनि तान्यप्राणन्ननपानन्करोतीति श्रुत्यन्तरोक्तेरित्यर्थः ॥ ६ ॥ १५ २०

इदानीमुदानस्य स्थानं वदन्केनोत्क्रमत इत्यस्योत्तरमाह—या त्विति । उभाभ्यां समप्रधानाभ्यामिति । अनेन पुण्याधिक्ये देवलोकं पापाधिक्ये नरकलोकं नयतीति पूर्वं व्याख्यातं भवति ॥ ७ ॥

कथं बाह्यमभिधत्ते कथमध्यात्ममित्यस्योत्तरमाह—आदित्य इति । या देवता प्रसिद्धेति । अग्निदेवता "पृथिव्येव यस्याऽऽयतनमग्निर्लोकः" इति श्रुतेरग्निसम्बद्धावगमादित्यर्थः । अवष्टभ्येत्यनन्तरमध्याहारेण वाक्यं पूरयति—अध एवापकर्षणेनेति । वृ[धृ]त्यर्थं स्तम्भादेरूर्ध्वमुखेन निखातस्य परितो विद्यमानरज्जुभिरध एवापकर्षणेन पतनाभाववदध एवापकर्षणेन शरीरस्य पतनाभावः सिध्यतीत्यर्थः । अनुग्रहमिति । शरीरधारणलक्षणमित्यर्थः । अन्यथेति । पृथिवीदेवतया विधारणाकरणे गुरुत्वादपानेनाध आकर्षणाच्च सावकाशे भूम्यादिपतनप्रतिबन्धकाभावस्थले पतेदित्यर्थः । अन्तरा यदाकाश इति वाक्यं व्याचष्टे—यदेतदिति । यदिति क्लीबत्वं छान्दसमित्याह—य आकाश इति । मञ्चस्थवदिति । मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्देन मञ्चस्था यथा लक्ष्यन्ते तथाऽऽकाशशब्देन तत्स्थो वायुर्लक्ष्यत इत्यर्थः । स समान इति । सामानाधिकरण्यमनुग्राह्यानुग्राहकयोरभेदोपचारादित्याह—समानमनुगृह्णान इति । एवमुत्तरत्राप्यनुग्रहे हेतुमाह—समानस्येति । शरीरान्तराकाशस्थत्वं समानस्य द्यावापृथिव्यन्तराकाशस्थत्वं बाह्यवायोरित्यन्तराकाशस्थत्वं तयोस्तुल्यमित्यर्थः । वायुर्व्यान इत्यत्र त्वन्तराकाशस्थत्वं विशेषरहितं वायुसामान्येन समुच्चीयत इति न पूर्वाभेद इत्याह—सामान्येनेति ॥ ८ ॥ २५ ३० ३५

---

[1] अवष्टभ्येत्यनन्तरमनुगृह्णातीत्यध्याहारः ।
[2] वायुर्व्यान इत्यस्य सामान्यवायुः व्यानमनुगृह्णातीत्यर्थः ।

**तेजो ह वा उदानस्तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥ ९ ॥**

**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासङ्कल्पितं लोकं नयति ॥ १० ॥**

यद्बाह्यं ह वै प्रसिद्धं सामान्यं तेजस्तच्छरीर उदानः उदानं वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्रायः। यस्मात्तेजःस्वभावो बाह्यतेजोनुगृहीत उत्क्रान्तिकर्ता तस्माद्यदा लौकिकः पुरुष उपशान्ततेजा भवति। उपशान्तं ५ स्वाभाविकं तेजो यस्य सः। तदा तं क्षीणायुषं मुमूर्षुं विद्यात्। स पुनर्भवं शरीरान्तरं प्रतिपद्यते। कथम्? सहेन्द्रियैर्मनसि सम्पद्यमानैः प्रविशद्भिर्वागादिभिः॥ ९॥

[१]मरणकाले यच्चित्तो भवति तेनैव चित्तेन सङ्कल्पेनेन्द्रियैः सह प्राणं मुख्यप्राणवृत्तिमायाति। मरणकाले क्षीणेन्द्रियवृत्तिः सन्मुख्यया प्राणवृत्त्यैवावतिष्ठत इत्यर्थः। तदाऽभिवदन्ति ज्ञातय उच्छ्वसिति जीवतीति। स च

तेजो ह वा इति वाक्यं व्याचष्टे—यद्बाह्यमिति। पूर्वमादित्यात्मकं विशेषतेज उक्तमत्र तेजःसामान्यमुच्यत १० इति न पौनरुक्त्यमित्याह—सामान्यं तेज इति। एवमादित्यादिना रूपेण मुख्यप्राणस्य प्राणापानसमानोदानव्यानानुग्राहकत्वोक्त्याऽध्यात्मं प्राणादिवृत्त्यनुग्राहकत्वमुक्तम्। आदित्याग्न्याकाशसामान्यवायुतेजोरूपी सन्बाह्यमधिदैवमादित्यादिकं धारयतीत्युक्तम्। तद्रूपेणावस्थानमेव तद्धारणं प्राणापानाद्यनुग्रहेण चक्षुराद्यनुग्रहोक्तेस्तद्द्वारा तद्ग्राह्याधिभूतविधारकत्वमुक्तम्। "स प्राणस्तच्चक्षुः सोऽपानः सा वाक्स व्यानस्तच्छ्रोत्रं स समानस्तन्मनः स उदानः स वायु"रिति श्रुत्यन्तरे चक्षुरादीनां प्राणाद्यात्मत्वोक्तेश्चक्षुराद्यनुग्राहकत्वोक्त्या चक्षुरादिरूपाध्यात्मविधार- १५ कत्वं चोक्तमिति कथं बाह्यमभिधत्ते कथमध्यात्ममित्यस्योत्तरमुक्तमिति द्रष्टव्यम्। तेजस उदानवाय्वनुग्राहकत्वं व्यतिरेकप्रदर्शनेन साधयति—यस्मादिति। यस्मात्तेजःस्वभाव उत्क्रान्तिकृदप्युदानवायुर्बाह्यतेजोनुगृहीतः सन्नेव शरीरे वर्तते तस्माज्जीवजीवनहेतुकर्मोपरमे बाह्यतेजोनुग्रहाभावेनोपशान्ततेजा मुमूर्षुर्भवतीन्वयः। स्वाभाविकमिति। जाठराग्निकृतं हस्तादिना स्वशरीरस्पर्शे सत्युष्णत्वेनोपलभ्यमानं तेज इत्यर्थः। भवत्युत्पद्यत इति भवः शरीरमित्यर्थः। शरीरान्तरप्रतिपत्तिरात्मनोऽक्रियस्य न भवतीति शङ्कते—कथमिति। इन्द्रियोपाधिवशादित्याह— २० सहेति। मनसि सम्पद्यमानैरिन्द्रियैः सह शरीरान्तरं प्रतिपद्यत इति पूर्वेणान्वयः॥ ९॥

उक्तशरीरान्तरप्राप्तिमेवोत्क्रान्तिक्रमप्रदर्शनेन स्पष्टीकर्तुं यच्चित्त इत्यादि वाक्यं तदपेक्षिताध्याहारं कुर्वन्व्याचष्टे—मरणेति। यच्चित्त इति। यदेव देवतिर्यगादिशरीरं सम्यगिति चित्ते यस्य स यच्चित्त इत्यर्थः। प्राणं प्रत्यागमनं लोकव्यवहारेण प्रथयति—तदेति। तेजसा तेजोनुगृहीतयोदानवृत्त्येत्यर्थः। एवंभूतो भोक्त्रुदान-

---

१. "सोध्यक्षे तदुपगमादिभ्य" इति सूत्रेण "अस्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनःप्राणे प्राणस्तेजसि २५ तेजः परस्यां देवतायां" इति श्रुतौ, वागुपलक्षितेन्द्रियाणां मनसि लयो मनोवृत्तिमात्रेणावस्थानं मनसः प्राणे लयो मनोवृत्तिलयानन्तरं प्राणस्य श्वासमात्रेणावस्थानं, ततः प्राणस्य जीवे उपसंहारः जीवस्य तेजसि तेजसः परमात्मनीति लयक्रम उक्तो भाष्ये। अस्याः श्रुतेः लोकसिद्धलयक्रमानुसारित्वात्; मुमूर्षोः लोके आदौ इन्द्रियव्यापारोपरमे मनोव्यापारस्थितिः। ततो मनोव्यापारोपरमः प्राणव्यापारमात्रेणावस्थितिश्च दृश्यते। ततस्तस्याप्युपरमः शरीरे उष्ममात्रोपलम्भश्च। अत्र 'एवमेवेममात्मान- ३० मन्तकाले सर्वे प्राणा अनुसमायन्ति' इति श्रुत्यनुरोधात् प्राणानां जीवे लय उक्तः।

प्रश्नोपनिषदि तु न लोकसिद्धोत्क्रमणमनुसृतं "तस्मादुपशान्ततेजाः" इति तेजसः प्रथममेवोपरम उक्तः। यच्चित्तस्तेनैष प्राणमायाति इत्यनेन क्षीणसकलेन्द्रियवृत्तिः भोक्तव्यफलस्फुरणमात्रयुक्तः प्राणव्यापारमात्रावशेषस्तिष्ठति न तु प्राणाधिकरणकवृत्तिलयं प्राप्नोतीत्यर्थः। अत्र तेजःशब्द उदानपरः पूर्वसन्दर्भानुसारात्। प्राणस्तेजसीत्यत्र तु तेजस्सहचरितपञ्चभूतसूक्ष्मपरः। श्रुतिद्वयेऽपि नार्थभेदः। ३५ जीवः पञ्चभूतसूक्ष्मांशैः परिवेष्ठितो रंहति परलोकं गच्छतीत्युक्तत्वात् प्राणादिसहितस्तेजस्सहचरितपञ्चभूतसूक्ष्मेषु स्वोपाधिभूतेषु वर्तत इति छान्दोग्याभिप्रायः।

अत्र तु "प्राणस्तेजसायुक्तः" इत्यनेन इन्द्रियसहितः भूतसूक्ष्मविशिष्टः प्राणो जीवेन सह वर्तमानः जीवं यथासङ्कल्पितं लोकं नयतीत्युक्तम्। अत्र तेजः उदानः उत्क्रान्तिहेतुः। सर्वथापि उपाधिसहितो जीवो

य एवं विद्वान् प्राणं वेद न हास्य प्रजा ऽ हीयतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि तृतीयः प्रश्नः

प्राणस्तेजसोदानवृत्त्या युक्तः सन्सहाऽऽत्मना स्वामिना भोक्त्रा स एवमुदानवृत्त्यैव युक्तः प्राणस्तं भोक्तारं पुण्यपाप- ५
कर्मवशाद्यथासङ्कल्पितं यथाभिप्रेतं लोकं नयति प्रापयति ॥ १० ॥

यः कश्चिदेवं विद्वान्यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभिः प्राणं वेद जानाति तस्येदं फलमैहिकमामुष्मिकं चोच्यते । न हास्य नैवास्य विदुषः प्रजा पुत्रपौत्रादिलक्षणा हीयते छिद्यते । पतिते च शरीरे प्राणसायुज्यतयाऽमृतोऽमरणधर्मा भवति । तदेतस्मिन्नर्थे संक्षेपाभिधायक एष श्लोको मन्त्रो भवति ॥ ११ ॥

उत्पत्तिं परमात्मनः प्राणस्याऽऽयतिमागमनं मनोकृतेनास्मिञ्शरीरे, स्थानं स्थितिं च पायूपस्थादिस्थानेषु १०
विभुत्वं च स्वाम्यमेव सम्राडिव प्राणवृत्तिभेदानां पञ्चधा स्थापनम् । बाह्यमादित्यादिरूपेणाध्यात्मं चैव चक्षुराद्याकारेणावस्थानं विज्ञायैवं प्राणममृतमश्नुत इति । विज्ञायामृतमश्नुत इति द्विर्वचनं प्रश्नार्थपरिसमाप्त्यर्थम् ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
प्रश्नोपनिषद्भाष्ये तृतीयः प्रश्नः

संयुक्तः प्राणः कं नयतीत्पेक्षायां तमेव भोक्तारं नयनीति वदन्वाक्यार्थमाह—स एवमिति । एवकारस्य तमेवेत्यन्वयः। १५
यथासङ्कल्पितमिति । कर्मज्ञानादिसाधनानुष्ठानदशायां सङ्कल्पितं मरणकाले वासनारूपेण पुनरभिव्यक्तं लोकं देवादिशरीरमित्यर्थः ॥ १० ॥

एवं प्राणस्वरूपं निर्धार्य तदुपासनं विधत्ते—यः कश्चिदिति । उत्पत्त्यादिभिर्यथोक्तविशेषणैर्विशिष्टम् । आत्मनः प्राणो जायते, मनःकृताभ्यां धर्माधर्माभ्यां शरीरं गृह्णाति । आत्मानं च पञ्चधा विभज्य पायूपस्थयोरपानं, स्वस्वरूपं प्राणं चक्षुःश्रोत्रयोः, नाभौ समानम्, नाडीसमूहे व्यानम्, उदानं च सुषुम्नायां स्थापयति । उदाने- २०
नोत्क्रामति, बाह्यैः प्राणापानव्यानसमानोदानानुग्राहकैरादित्यपृथिवीदेवताकाशवायुतेजोरूपैरधिदैवमादित्यादिकमादित्यादिकृतानुग्रहैरध्यात्मं चक्षुर्वाक्श्रोत्रमनस्त्वक्चक्षुरादिग्राह्यमधिभूतं च धारयति । स एवोदानवृत्त्या भोक्त्रा च युक्तो भोक्तारं लोकान्तरं नयति । स एव च वरिष्ठः प्रजापतिरत्ता चेत्येवं प्राणं वेदेत्यर्थः । ऐहिकफलमुक्त्वाऽऽमुष्मिकफलमाह—पतित इति । अमृतत्वं च नात्र मुख्यं किन्तु प्राणसायुज्यमेवेत्याह—प्राणेति । इदं तु कामिनः, निष्कामस्य तु चित्तैकाग्र्यम् । तच्छुद्धिद्वारा मुख्यमेवामृतत्वं भवतीति द्रष्टव्यम् ॥ ११ ॥ २५

आयतिमिति । आयातिमित्यर्थः । ह्रस्वत्वं छान्दसम् ॥ १२ ॥

इति श्रीमदानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां तृतीयः प्रश्नः

---

गच्छतीत्यत्र न वैषम्यम् । बृहदारण्यके उपहितप्राधान्यमाश्रित्य इममन्तकाले प्राणा अभिसमायन्तीत्युक्तम् । छान्दोग्ये प्राणस्य च जीवे लय उक्तः, प्रश्नोपनिषदि च प्राणस्तेजसायुक्तः नयतीत्युक्तेः उपाधिप्राधान्यमाश्रितम् । उपहितो जीवो गच्छत्येव नात्र विप्रतिपत्तिः । अतः श्रुतिसूत्रयोः श्रुतीनां च ३०
सामरस्यम् । अत्र रामानुजीयाः अस्य प्रश्नोपनिषद्गतस्योत्क्रान्त्यादि प्रपञ्चस्य प्राणप्रशंसापरत्वात् जीवस्य प्राणोपगमोपपत्तिरित्युक्तम् । तन्न । केनोत्क्रमत इति शिष्यप्रश्नप्रतिवचनरूपत्वादस्य न प्रशंसापरत्वं युक्तम् । छान्दोग्यगतस्यैव तु प्रश्नोत्तरत्वाभावात् प्रशंसापरत्वं युक्तम् । अतः उभयोः श्रुत्योः एकवाक्यत्वे सम्भवति एकस्याः श्रुतेस्त्यागोऽयुक्तः ।

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ। भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥**

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ।** प्रश्नत्रयेणापरविद्यागोचरं सर्वं परिसमाप्य संसारं व्याकृतविषयं साध्यसाधनलक्षणमनित्यम्, अथेदानीमसाध्यसाधनलक्षणमप्राणममनोगोचरमतीन्द्रियविषयं शिवं शान्तमविकृतमक्षरं सत्यं ५ परविद्यागम्यं पुरुषाख्यं सबाह्याभ्यन्तरमजं वक्तव्यमित्युत्तरं प्रश्नत्रयमारभ्यते।

तत्र सुदीप्ताद्विवाग्नेर्यस्मात्पराद्क्षरात्सर्वे भावा विस्फुलिङ्गा इव जायन्ते तत्र चैवापियन्तीत्युक्तं द्वितीये मुण्डके, के ते सर्वे भावा अक्षराद्विभज्यन्ते। कथं वा विभक्ताः सन्तस्तत्रैवापियन्ति किंलक्षणं वा तदक्षरमित्येतद्विवक्षयाऽधुना प्रश्नानुद्भावयति—**भगवन्नेतस्मिन्पुरुषे** शिरःपाण्यादिमति **कानि** करणानि **स्वपन्ति** स्वापं कुर्वन्ति स्वव्यापारादुपरमन्ते **कानि** चास्मिञ्जाग्रति जागरणमनिद्रावस्थां स्वव्यापारं कुर्वन्ति। **कतरः** कार्यकरणलक्षणयोरेष १० **देवः स्वप्नान्पश्यति।** स्वप्नो नाम जाग्रद्दर्शनान्निवृत्तस्य जाग्रद्वदन्तःशरीरे यद्दर्शनम्। तत्किं कार्यलक्षणेन देवेन निर्वर्त्यते किंवा करणलक्षणेन केनचिदित्यभिप्रायः। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्नं निरायासलक्षणमनाबाधं

एवं कर्मविद्यागतिश्रवणेन विरक्तस्य प्राणविद्यया चित्तैकाग्र्यतच्छुद्धिमतोऽत एव साधनचतुष्टयवतो मुख्याधिकारिणः परविद्योक्त्यर्थं प्रश्नत्रयमारभते—**अथ हैनमिति।** पूर्वविद्ययैवामृतत्वोक्तेरुत्तरप्रश्नारम्भो व्यर्थं इत्यत आह—**प्रश्नत्रयेणेति। संसारमिति।** अतो न तन्मुख्यममृतत्वमित्यर्थः। तस्य संसारत्वे व्याकृतत्वं हेतुमाह— १५ **व्याकृतविषयमिति।** व्याकृताश्रयं तदन्तर्गतमित्यर्थः। **साध्यसाधनलक्षणमिति।** साध्यसाधनसम्बधेन लक्ष्यतेऽभिव्यज्यत उत्पद्यत इति तथा। यद्वाऽपरब्रह्मणः प्राणस्य साध्यसाधनोभयात्मकत्वाद्वा तथा। तस्मादनित्यमित्यतोऽपि संसारत्वमित्यर्थः। वक्ष्यमाण आत्मा तु न तथेत्याह—**असाध्येत्यादिना। अतीन्द्रियविषयमिति।** इन्द्रियविषयत्वमतिक्रान्तमित्यव्याकृतमकार्यमित्यर्थः। तत्र हेतुः—**अप्राणमिति।** प्राणागोचरत्वेन तदात्मककर्मेन्द्रियागोचरत्वं मनोऽगोचरत्वेन ज्ञानेन्द्रियागोचरत्वमुक्तम्। सुखरूपतामाह—**शिवमिति।** निवृत्तानर्थत्वमाह—**शान्तमिति।** तत्र २० भावविकाररहितत्वं हेतुमाह—**अविकृतमिति।** अनेनोत्पत्तिपरिणामवृद्धयो निषिद्धाः अक्षरमित्यपक्षयविनाशौ निषिद्धौ। उत्पत्तिनिषेधेन तदनन्तरभाव्यस्तित्वं निषिद्धम्। अत्र सर्वत्र हेतुः—**सत्यमिति।** कालत्रयेऽप्येकरूपमित्यर्थः। तत्र 'अथ परा यया तदक्षरमधिगम्यत' इत्यादि वाक्यं मानमाह—**परविद्यागम्यमिति।** दिव्यो ह्यमूर्तः पुरुष इति मन्त्रमप्याह—**पुरुषाख्यमिति।** कथं पुरुषशब्दोदितं पूर्णत्वं बाह्याभ्यन्तरवस्तुभेदादत आह—**सबाह्येति।** स एव बाह्याभ्यन्तरात्मकस्तद्व्यतिरेकेण तदुभयं नास्तीत्यर्थः। **प्रश्नत्रयमिति।** यद्यपि पञ्चमः प्रश्नोऽपरविद्याविषय २५ एव प्रणवोपासनविषयत्वात्तथाऽपि तस्य क्रममुक्तिफलत्वेन निर्विशेषात्मन्येव सविशेषब्रह्मप्राप्तिद्वारा पर्यवसानात्सोऽपि परविषय एवेति भावः।

एवं सामान्येन प्रश्नत्रयस्यापि सम्बन्धमुक्त्वा चतुर्थप्रश्नस्य प्रातिस्विकसम्बन्धमाह—**तत्रेति।** यस्मादित्यस्य किंलक्षणं वा तदक्षरमिति तच्छब्देनान्वयः। **उक्तमिति।** यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्तीति मन्त्रेणेत्यर्थः—**एतद्विवक्षयेति।** मन्त्रोक्तार्थ- ३० विस्तरानुवादित्वादस्य ब्राह्मणस्येति भावः। अत्राक्षरस्वरूपस्यैव विवक्षितत्वात्तन्निर्णयार्थं कानि स्वपन्तीत्यादिप्रश्नो जागरितादीनां धर्मिविशेषनिर्धारणार्थः, अन्यथा तेषामात्मधर्मत्वशङ्कायां तन्निर्विशेषत्वनिर्णयासिद्धेः। भावानां स्वरूपविभागादिविवक्षा तु ताः पुनः पुनरुदयतः प्रचरन्तीति दृष्टान्तबलात्तत्रैकीभावस्ततो विभागेन निर्गमनमित्यक्षर एकीभूतानां पृथिव्यादिकार्यकरणानामक्षराद्विभागप्रतीतेस्तावन्मात्रेण भाष्य उक्तेति द्रष्टव्यम्। तत्राऽऽद्यप्रश्नेन जागरितस्य धर्मी पृष्टः। स्वप्ने यस्य व्यापारोपरमे जागरितं नास्ति स तस्य धर्म इति(धर्मीति?) निश्चेतुं ३५ शक्यत्वात्। द्वितीयेनावस्थात्रयेऽपि शरीररक्षणं कस्य धर्म इति पृष्टम्। जाग्रतोऽनुपरतव्यापारस्य प्राणस्य देहरक्षकत्वोपपत्तेः। तृतीयेन स्वप्नस्य धर्मी पृष्टः। चतुर्थेन सुषुप्तिधर्मी, सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शो सुखस्य सुषुप्तिसम्बन्धावगमात्। पञ्चमप्रश्नेनावस्थात्रयविनिर्मुक्तमवस्थात्रयपर्यवसानभूमिरूपं तुरीयमक्षरं पृष्टमिति विवेकः। **कार्येति।** कार्यं शरीरं प्राणो वा, करणानि मनआदीनि। पदार्थानुक्त्वा वाक्यार्थं पिण्डीकृत्याऽऽह—**तत्किमिति।** तत्पदं पूर्वापरयोः सम्बध्यते। **प्रसन्नमिति।** विषयसम्पर्ककालुष्यराहित्यम्। निरायासेन विक्षेपाभावमात्रेण

**तस्मै स होवाच। यथा गार्ग्यं मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिँस्तेजोमण्डल एकीभवन्ति। ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते स्वपितीत्यांचक्षते ॥ २ ॥**

सुखं कस्यैतद्भवति तस्मिन्काले जाग्रत्स्वप्नव्यापारादुपरताः सन्तः कस्मिन्नु सर्वे सम्यगेकीभूताः सम्प्रतिष्ठिताः। ५
मधुनि रसवत्समुद्रं प्रविष्टनद्यादिवच्च विवेकानर्हाः प्रतिष्ठिता भवन्ति सङ्गताः सम्प्रतिष्ठिता भवन्तीत्यर्थः। ननु न्यस्तदात्रादिकरणवत्स्वव्यापारादुपरतानि पृथक्पृथगेव स्वात्मन्यवतिष्ठन्त इत्येतद्युक्तं कुतः प्राप्तिः सुषुप्तपुरुषाणां करणानां कस्मिंश्चिदेकीभावगमनाशङ्कायाः प्रष्टुः। युक्तैव त्वाशङ्का। यतः संहतानि करणानि स्वाम्यर्थानि परतन्त्राणि च जाग्रद्विषये तस्मात्स्वापेऽपि संहतानां पारतन्त्र्येणैव कस्मिंश्चित्सङ्गतिर्न्याय्येति। तस्मादाशङ्कानुरूप एव प्रश्नोऽयम्। अत्र तु कार्यकरणसङ्घातो यस्मिंश्च प्रलीनः सुषुप्तप्रलयकालयोस्तद्विशेषं बुभुत्सोः स को नु स्यादिति १० कस्मिन्सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥

तस्मै स होवाचाऽऽचार्यः। शृणु हे गार्ग्य यत्त्वया पृष्टम्—यथा मरीचयो रश्मयोऽर्कस्याऽऽदित्यस्यास्तमदर्शनं गच्छतः सर्वा अशेषत एतस्मिंस्तेजोमण्डले तेजोराशिरूप एकी भवन्ति विवेकानर्हत्वमविशेषतां गच्छन्ति, मरीचयस्तस्यैवार्कस्य ताः पुनः पुनरुदयत उद्गच्छतः प्रचरन्ति विकीर्यन्ते। यथाऽयं दृष्टान्तः। एवं ह वै तत्सर्वं विषयेन्द्रियादिजातं परे प्रकृष्टे देवे द्योतनवति मनसि चक्षुरादिदेवानां मनस्तन्त्रत्वात्परो देवो मनस्तस्मिन्स्वप्नकाल १५ एकी भवति, मण्डले मरीचिवदविशेषतां गच्छति जिजागरिषोश्च रश्मिवन्मण्डलान्मनस एव प्रचरन्ति(ति) स्वव्यापाराय प्रतिष्ठन्ते(ते)। यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि मनस्येकीभूतानीव करणव्यापारादुपरतानि

लक्ष्यतेऽभिव्यज्यते निर्वातस्थापितदीपालोकवदनाबाधं विनाशरहितं सत्यमात्मस्वरूपमित्यर्थः। एतदिति। सुषुप्ते प्रकाशमानं सुखमहमस्वाप्समितिपरामर्शमूलभूतमित्यर्थः। तस्मिन्काल इति। यद्यपि पञ्चमेन प्रश्नेन तुरीयं पृच्छ्यते न सुषुप्तिस्तथाऽपि संसारदशायां सर्वोपाधिरहिततुरीयावस्थाभावेन विवेकत एव तस्य प्रदर्शनीयत्वात्त- २० त्सुषुप्तावज्ञाने सत्यपीतरोपाधिराहित्येन तत्रैव सर्वोपाधिविवेककरणेन तुरीयप्रदर्शनस्य सुकरत्वात्तस्मिन्काले तुरीयप्रदर्शनार्थं सर्वसम्प्रतिष्ठोक्तेति। सम्यगेकीभूता इति। तदात्मभावप्राप्त्या विलयं गता इत्यर्थः। मधुनि रसवदिति। यथा नानापुष्परसा मधुन्येकी भवन्ति तद्वदित्यर्थः। विवेकाभावमात्रेण दृष्टान्तावुक्तौ, तत्र सर्वात्मना लयाभावादित्याह—विवेकानर्हा इति। पूर्वं विवेकानर्हाः सन्तः पश्चात्सम्प्रतिष्ठिता इत्यर्थः। न चानेनापि प्रश्नेनाविद्यावासनाभिरविविक्तः सौषुप्त एव पृष्ट इति शङ्क्यम्। पर आत्मन्यक्षरे सम्प्रतिष्ठन्त इति वक्ष्यमाणत्वात्सुषुप्ते चाज्ञान २५ एव सम्प्रतिष्ठानादेष हि द्रष्टेत्याद्यज्ञानप्रतिबिम्बितस्यै भोक्तुरपि सम्प्रतिष्ठाया अभिधास्यमानत्वादच्छायमित्यज्ञानाभावोक्तेश्च तुरीयमेव पृष्टमिति भावः। ननु कार्यकारणव्यतिरिक्ते सम्प्रतिष्ठानाधिकरणे सामान्येन कस्मिंश्चदवगते कस्मिन्सम्प्रतिष्ठिता इति विशेषप्रश्नो घटते। न च तस्यावगतिरस्ति। न च सम्प्रतिष्ठानस्य साधिकरणत्वेन सामान्येनाधिकरणावगतिरस्तीति वाच्यम्। तत्तदुपादानानामेवाचेतनानां तदधिकरणत्वेन तदतिरिक्तस्य चेतनस्यासिद्धेरिति शङ्कते—नन्विति। दात्रं नाम सस्यादिलवनार्थः शस्त्रविशेषः। स्वात्मनीति। स्वोपादान इत्यर्थः। ३० सुषुप्तपुरुषाणां करणानामिति। सुषुप्तपुरुषाणां यानि करणानि तेषामित्यर्थः। एष हि द्रष्टेत्यादिना पुरुषाणामप्येकीभावस्य वक्ष्यमाणत्वाद्वा पुरुषाणामित्युक्तम्। अस्मिन्पक्षे करणानां चेति चकारो द्रष्टव्यः। प्रष्टुः शङ्कायाः कुतः प्राप्तिरित्यन्वयः। संहतानां परार्थत्वेन व्यापृतत्वात्संहतत्वेन हेतुना परस्मिंश्चेतने सामान्येनावगते प्रष्टुर्विशेषप्रश्नो युक्त इत्याह—युक्तैव त्विति। स्वाम्यर्थानि सङ्घाताभिमान्यर्थानीत्यर्थः। आशङ्कानुरूप इति। मनसि विद्यमानाशङ्कानुरूपो वाचिकः प्रश्न इत्यर्थः। अत्र सम्प्रतिष्ठानविशिष्ट आत्मा न पृष्टः किन्तु तदुपलक्षितः केवल आत्मा ३५ पृष्ट इति वाक्यतात्पर्यमाह—अत्र त्विति। भवन्तीत्यनन्तरं पृष्टमिति शेषः ॥ १ ॥

यत्त्वया पृष्टं तच्छृण्वित्यन्वयः। तस्यैवार्कस्य ता मरीचय इत्यन्वयः। विकीर्यन्त इति। दशदिक्षु क्षिप्यन्त इत्यर्थः। स्वप्नेऽपि चक्षुरादिव्यापारोपलब्धेरेकीभावोऽसिद्ध इत्याशङ्क्य वासनामयेन्द्रियव्यापारोपलब्धावपि बाह्य-

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति। गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥

यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति स समानः। मनो ह वाव यजमानः। इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति[1] ॥ ४ ॥

५ तेन तस्मात्तर्हि तस्मिन्स्वापकाल एष देवदत्तादिलक्षणः पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते लौकिकाः ॥ २ ॥

सुप्तवत्सु श्रोत्रादिषु करणेष्वेतस्मिन्पुरे नवद्वारे देहे प्राणाग्नयः प्राणादिपञ्चवायवोऽग्नय इवाग्नयो जाग्रति। अग्निसामान्यं ह्याह—[2]गार्हपत्यो ह वा एषोऽपानः। कथमित्याह—यस्माद्गार्हपत्यादग्नेरग्निहोत्रकाल इतरोऽग्निराहवनीयः प्रणीयते प्रणयनात्प्रणीयतेऽस्मादिति प्रणयनो गार्हपत्योऽग्निः। तथा सुप्तस्यापानवृत्तेः प्रणीयत इव प्राणो १० मुखनासिकाभ्यां सञ्चरत्यत आहवनीयस्थानीयः प्राणः। व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिणदिक्सम्बन्धादन्वाहार्यपचनो[3] दक्षिणाग्निः ॥ ३ ॥

अत्र च होताऽग्निहोत्रस्य यद्यस्मादुच्छ्वासनिश्वासावग्निहोत्राहुती इव नित्यं द्वित्वसामान्यादेव त्वेतावाहुती

शब्दादिश्रवणादिव्यापाराभावेन तं साधयितुं तेनेति वाक्यं व्याख्याति—यस्मादिति। श्रोत्रादीनामेकीभावो नाम स्वस्वव्यापारं विहाय मनस्तन्त्रतयाऽवस्थानमात्रं न तु मुख्यमेकत्वं तेषां मनःप्रकृतिकत्वाभावेनाप्रकृतौ तदनु- १५ पपत्तेरित्यभिप्रेत्येवकारः प्रयुक्तः। नेयायत इति। इणो गत्यर्थस्य यङन्तस्य रूपमेतन्न गच्छतीत्यर्थः ॥ २ ॥

कानि स्वपन्तीत्यस्य सविषयाणि बाह्यकरणानि स्वपन्त्युपरमन्तेऽतस्तेषामेव जागरणं धर्म इत्युत्तरमुक्त्वा कानि जाग्रतीत्यस्योत्तरमाह—सुप्तवत्स्विति। प्राणानामग्नित्वं गौणमित्याह—अग्नय इवेति। अपानस्य गार्हपत्यत्वे यद्गार्हपत्यात्प्रणीयते प्रणयनादितीदं वाक्यं व्यवहितमपि हेतुत्वेन योजयति—यस्मादिति। प्रणयनादिति पदं गार्हपत्यविशेषणमित्याह—प्रणयनो गार्हपत्य इति। तत्सदृशमाहवनीयः प्राण इति वाक्यं सादृश्याभिधानपूर्वं २० व्याचष्टे—तथेति। गार्हपत्यत्वेनोक्तेऽपानेऽन्तर्गच्छति सति बहिर्गच्छन्प्राणस्ततो निर्गत इव लक्ष्यत इति प्राण आहवनीय इत्यर्थः। परित्यक्तं व्यानोऽन्वाहार्यपचन इति वाक्यमिदानीं व्याचष्टे—व्यानस्त्विति। छान्दोग्ये गायत्रीविद्यायां तस्य वा एतस्य हृदयस्य पञ्च देवसुषय इत्युपक्रम्याथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रमित्यनेन व्यानस्य दक्षिणसुषितो निर्गमनमुक्तमित्यस्यान्वाहार्यपचनसादृश्यं दक्षिणदिक्सम्बन्धित्वं व्यानस्येति व्यानोऽन्वाहार्यपचन इत्यर्थः ॥ ३ ॥

२५ अत्र चेति। अग्निहोत्रस्य होता होमस्य कर्ता, ऋत्विगुच्यत उत्तरवाक्येनेति शेषः। अत्रोच्छ्वासनिःश्वासयोराहुतित्वस्य पूर्वमसिद्धत्वेन सिद्धवन्निर्देशायोगात्स समान इति तच्छब्दानन्वयाच्च वाक्यत्रयं कृत्वाऽन्वयत्रयेण योजयति—यद्यस्मादिति। उच्छ्वासनिःश्वासावित्यनन्तरमाहुती इतिपदं भाष्येऽध्याहृत्यैतावुच्छ्वास-

---

१. उदानः ब्रह्म यजमानं अहरहर्गमयतीति, अत्र उदानः देहान्तस्सञ्चरन् यदा मनः सुषम्नां प्रवेशयति तदा मनोऽविद्यायां लीयते जीवस्तु ब्रह्मणा सह भेदकोपाधेः मनसो लयात् तदा ब्रह्मरूप एवेति ३० तस्मिन् लीन इवेति 'स्वाप्यात्' इति सूत्रभाष्योक्तं स्मर्तव्यम्। मतान्तरे तु—मनसः पुरीतद्गमनात् तद्गतब्रह्म गमयतीत्युक्तमिति व्याख्यातम्। अस्मिन् मते ब्रह्मणः सर्वगतत्वेन पुरीतद्बहिर्देशापेक्षया अन्तर्देशे ब्रह्मणि विशेषाभावात् तदेव ब्रह्मगमयतीत्युक्तेर्विशेषो वक्तव्यः।

२. गार्हपत्याग्निः अग्निहोत्रिणा सर्वदा संरक्षणीयः। प्रातरग्निहोत्रात्पूर्वं गार्हपत्यं काष्ठप्रक्षेपेण वर्धयित्वा ततः प्रज्वलन्तं काष्ठं नीत्वा आहवनीयस्थाने स्थाप्यते। सः आहवनीयो भवति, तदनन्तरं ज्वलन्तं ३५ काष्ठान्तरं परिगृह्य दक्षिणाग्निस्थाने स्थाप्यते। सः दक्षिणाग्निर्भवति। गार्हपत्यादग्नेर्नयनं प्रणयनम्।

३. अन्वाहार्यं नाम ईषदुष्णीकृतास्तण्डुलाः दक्षिणाग्नौ तण्डुलाः उष्णीकृत्य ऋत्विग्भ्यः दक्षिणात्वेन दीयते। अतः दक्षिणाग्नेः अन्वाहार्यपचन इति नाम।

समं साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानीयोऽपि होता चाऽऽहुत्योर्नेतृत्वात्। कोऽसौ स समानः। अतश्च विदुषः स्वापोऽप्यग्निहोत्रहवनमेव। तस्माद्विद्वान्नाकर्मीत्येवं मन्तव्य इत्यभिप्रायः। सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपत इति हि वाजसनेयके। अत्र हि जाग्रत्सु प्राणाग्निषूपसंहृत्य बाह्यकरणानि विषयांश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुर्मनो ह वाव यजमानो जागर्ति यजमानवत्कार्यकरणेषु प्राधान्येन संव्यवहारात्स्वर्गमिव ब्रह्म प्रति प्रस्थितत्वाद्यजमानो मनः कल्प्यते। इष्टफलं यागफलमेवोदानो वायुः। उदाननिमित्तत्वादिष्टफलप्राप्तेः। ५ कथम्, स उदानो मनआख्यं यजमानं स्वप्नवृत्तिरूपादपि प्रच्याव्याहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षरं गमयति। अतो यागफलस्थानीय उदानः। एवं विदुषः श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो भवति तावत्सर्वयागफलानुभव एव नाविदुषामिवानर्थायेति विद्वत्ता स्तूयते। न हि विदुष एव श्रोत्रादीनि स्वपन्ते प्राणाग्नयो वा जाग्रति जाग्रत्स्वप्नयोर्मनःस्वातन्त्र्यमनुभवदहरहः सुषुप्तं वा प्रतिपद्यते। समानं हि सर्वप्राणिनां पर्यायेण जाग्रत्स्वप्नसुषुप्तिगमनमतो विद्वत्तास्तुतिरेवेयमुपपद्यते ॥ ४ ॥ १०

निःश्वासावाहुती आहवनीयाधिकरणाग्निहोत्राहुती इव द्वित्वसाम्यादेवेत्येकोऽन्वयः। अनन्तरं भाष्ये तुशब्दश्चार्थे। श्रुतिगत इतिशब्दस्तस्मादित्यर्थे। यस्मादेतावाहुती यस्माच्चैतौ समं नयति शरीरस्थितिभावाय साम्येन नयति प्रवर्तयति यो वायुर्यथाऽग्निहोत्रे होमकर्ताऽऽहुतिद्वयमाहवनीयं प्रति समं नयति प्रापयति तद्वत्तस्मादाहुत्योर्नेतृत्वात्स वायुर्होतेति यच्छब्दहोतृशब्दाध्याहारेण द्वितीयोऽन्वयः। कोऽसौ वायुरिति तद्विशेषप्रश्ने स होता वायुः समान इति तृतीयोऽन्वय इति विभागः। ननु प्राणाग्नय इत्यत्र सर्वेषां प्राणानामग्नित्वोक्तेः कथमिह समानस्य होतृत्वमुच्यत १५ इत्याशङ्क्योक्तम्—अग्निस्थानीयोऽपीति। अग्नित्वेनोक्तोऽपीति भावः। **होता चेति**। चकारोऽवधारणे, होतैवेत्यर्थः। आहुतिनेतृत्वाद्धोतृत्वे स्थितेऽग्नित्वोक्तिश्छत्रिन्यायेनाग्न्यनग्निसमुदाये लाक्षणिकीत्यर्थः। अवस्थात्रयवर्तिनामुच्छ्वासनिश्वासप्राणानां चाग्निहोत्रावयवत्वसम्पादनस्य नोपासनं प्रयोजनं निर्विशेषात्मप्रकरणत्वात्तद्विध्यदर्शनाच्च, किं त्विन्द्रियाण्युपरमन्ते प्राणा जाग्रतीत्येवं त्वंपदार्थशोधनरूपस्य ज्ञानस्य स्तुतिरेवेत्याह—**अतश्चेति**। **सर्वदेति**। वाजसनेयके हि वाक्चितः प्राणचितश्चक्षुश्चित इत्यादिना सर्वप्राणव्यापारेषु प्रत्येकमग्निचितत्वदृष्टिं विधायैवं- २० दृष्टिमतः सर्वाणि भूतान्यस्य स्वापकालेऽपि चयनं कुर्वन्तीति सा दृष्टिः स्तुता तद्वदिहापीत्यर्थः। **अत्र हीति**। अत्र मनो यजमानः कल्प्यत इति व्यवहितान्वयः। तत्कल्पनायां हेतुद्वयमाह—**यजमानवदिति**। हेतुद्वयं साधयति—**जाग्रत्स्विति**। अत्र स्वप्नकाले विषयान्करणानि चोपसंहृत्य मनो जागर्ति प्राधान्येन स्वव्यापारं कुर्वद्वर्तते। अग्निहोत्रफलं स्वर्गं जिगमिषुर्यजमान इव सुषुप्तिकाले स्वर्गरूपब्रह्म जिगमिषु च मन इत्यन्वयः। भाष्ये यजमान इत्यनन्तरमिवशब्दो द्रष्टव्यः। ह वावशब्देन तत्प्रसिद्धमित्युक्तम्। **इष्टेति**। उदाननिमित्तकमरणानन्तरं यागादिफल- २५ प्राप्तेस्तस्य तन्निमित्तत्वात्कारणे कार्योपचारादुदान इष्टफलत्वेन कल्प्यत इत्यर्थः। न केवलं मरणद्वारा यागफलप्रापकत्वमुदानस्य किं त्वेतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः सर्वयागफलानामपि ब्रह्मात्मकत्वात्तद्ब्रह्मप्रापकत्वादपि अहरहरिष्टफलप्रापकत्वमुदानस्येति प्रश्नपूर्वकमाह—**कथमिति**। **स्वर्गमिवेति**। स्वर्गमेवेत्यर्थः। सर्वयागफलात्मकस्वरूपमेव ब्रह्माक्षरं गमयतीत्यर्थः। यद्यप्यहरहर्ब्रह्मप्राप्तिर्न यागसाध्या यागरहितानामपि तत्प्राप्तेस्तथाऽपि ब्रह्मण एव सर्वयागफलत्वेन तत्प्रापकस्योदानस्येष्टफलप्रापकत्वमस्तीति भावः। न चोदानस्य ३० कथं तत्प्रापकत्वमिति शङ्क्यम्। तस्य सुषुम्नानाडीचारित्वेन स मनस्तन्नाडीं प्रवेशयंस्तद्गतं ब्रह्म प्रापयतीत्युपपत्तेः। ननु गार्हपत्यो वा एषोऽपान इत्यारभ्य मनो ह वाव यजमान इत्यन्तेन ग्रन्थेन विद्वानकर्मी न भवतीति स्तूयते इत्युक्तमस्त्वेवं तत्राग्निहोत्रादिकर्मप्रतीतेरुदानस्य यागफलस्थानीयत्वोक्तेस्तु न तत्फलत्वं तत्र कर्माप्रतीतेरत आह—**एवं विदुष इति**। **विद्वत्तेति**। श्रोत्रादीनि स्वप्न उपरमन्ते प्राणा एव जाग्रतीत्येवंरूपा विद्येत्यर्थः। अस्याश्च विद्याया जागरणं श्रोत्रादिबाह्येन्द्रियधर्मः शरीररक्षणं प्राणधर्मो नाऽऽत्मधर्म इत्येवं त्वंपदार्थविवेकरूपत्वात्स्तोतव्यत्वोपपत्तिः। ३५ अत एव प्राणजागरणस्याविद्वत्साधारणत्वात्कथं विद्वत्तास्तुतिरित्यपि शङ्का निरस्ता तस्यैवंभूतविवेकाभावादिति। ननु विद्याप्रकरणत्वादस्य विदुषः श्रोत्राद्युपरमादिकं सर्वं भवतीति विधीयतां किं स्तुत्येत्याशङ्क्य विद्वदविद्वत्साधारण्येन स्वयमेव भवतो न विधेयत्वमित्याह—**न हीति**। **विद्वत्तास्तुतिरेवेति**। श्रोत्रादिकं परे देवे मनस्येकीभवति प्राणाग्नयो जाग्रतीत्यत्र पदार्थविवेकरूपं ज्ञानं विवक्षितं तज्ज्ञानं गार्हपत्यो वा एषोऽपान इत्यादिना स्तूयत उक्तप्रकारेणेत्यर्थः ॥ ४ ॥ ४०

**[1]अत्रैष देवः स्वप्ने महिमानमनुभवति। यदृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति॥ ५॥**

यत्पृष्टं कतर एष देवः स्वप्नान्पश्यतीति तदाह—अत्रोपरतेषु श्रोत्रादिषु देहरक्षायै जाग्रत्सु प्राणादिवायुषु
५ प्राक्सुषुप्तिप्रतिपत्तेः एतस्मिन्नन्तराल एष देवोऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते।

ननु महिमानुभवने करणं मनोऽनुभवितुस्तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते। स्वतन्त्रो हि क्षेत्रज्ञः। नैष दोषः। क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वान्न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्ति वा। मनउपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके—"सधीः स्वप्नो भूत्वा—ध्यायतीव लेलायतीव" इत्यादि।
१० तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव। मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयंज्योतिष्ट्वं बाध्येतेति केचित्। तन्न। श्रुत्यर्थापरिज्ञानकृता भ्रान्तिस्तेषाम्। यस्मात्स्वयंज्योतिष्ट्वादिव्यवहारोऽप्यामोक्षान्तः सर्वोऽविद्याविषय एव मनआद्युपाधिजनितः।

"यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्" "मात्रासंसर्गस्त्वस्य भवति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्।" इत्यादिश्रुतिभ्यः। अतो मन्दब्रह्मविदामेवेयमाशङ्का न त्वेकात्मविदाम्। नन्वेवं सत्यत्रायं पुरुषःस्वयं-

१५ तृतीयप्रश्नोत्तरत्वेन कतर एष इत्यादि सर्वः पश्यतीत्यन्तं व्याचष्टे—यदिति। कतर इति। अत्रेति श्रौतं पदं गृहीत्वा व्याचष्टे—उपरतेष्वित्यादिनाऽन्तराल इत्यन्तेन। अनेकेति। विषयिविषयाद्यनेकभावगमनमित्यर्थः। इदं च महत्त्वव्याख्यानम्।

"स्वप्नद्रष्टुर्जीवस्य स्वातन्त्र्ये वक्तव्ये देवशब्दितमनसस्तदुक्तिः स्वप्नो मनोधर्मो नाऽऽत्मधर्मं आत्मनि तु तदारोपमात्रं लोकस्येति ख्यापनार्थेति शङ्कापरिहाराभ्यामाह—नन्विति। मनउपाधिकृतमिति। बाह्येन्द्रिययुक्तमन-
२० उपाधिकृतं जागरणं केवलमनउपाधिकृतः स्वप्न इत्यर्थः। स्वप्नस्य धीशब्दवाच्यमनःपरिणामत्वात् स्वप्नो भूत्वेति-श्रुतौ सामानाधिकरण्यनिर्देश इति द्रष्टव्यम्। नन्वियं श्रुतिर्विभूत्यनुभवेन मनःस्वातन्त्र्यं वक्तुं न शक्नोति श्रुत्यन्तर-विरोधापत्तेः। अतोऽत्र देवशब्देन क्षेत्रज्ञ एवोच्यते। तस्यैव स्वतः स्वातन्त्र्यमिति शङ्कते—मन इति। स्वयं-ज्योतिष्ट्वमिति। स्वयंज्योतिष्ट्वबोधकश्रुतिरित्यर्थः। अन्यथा द्वितीयसत्त्वेऽपि दीपादीनामिव वास्तवस्य तस्य बाधा-भावादिति। अत्र किं मनसः सत्त्वे ज्योतिरन्तरस्य मनसो विद्यमानत्वादात्मनः स्वयंज्योतिष्ट्वबोधनं न शक्यमिति
२५ श्रुतेः कार्यस्य बोधनस्य बाधोऽभिप्रेत उत तद्बोधनरूपकार्यसिद्ध्यर्थं मनसोऽभावोऽपि विवक्षितः श्रुतौ ततश्च तत्सत्त्वे श्रुत्यर्थबाध इति वा। नाऽऽद्यः। मनसि सत्यप्येवं तर्हीति वक्ष्यमाणरीत्या मनसो दृश्यत्वेन ज्योतिष्ट्वायोगेनाऽऽत्मन एव स्वयंज्योतिष्ट्वस्य बोधयितुं शक्यत्वादित्याह—तन्नेति। न द्वितीयः, तदानीं मनसोऽभावस्तु श्रुत्यर्थं एव न भवतीत्याह—श्रुत्यर्थेति। आत्मनि ज्योतिष्ट्वबोधनात्मकव्यवहारस्य प्रकाश्यादिसापेक्षत्वात्तस्मिन्सत्येव तद्बोध-साधने मनआदौ च सत्येव तद्बोधयितुं शक्यते नान्यथेति मनआद्यभावो न श्रुतौ विवक्षितः, यथा सति तद्बोधना-
३० शक्तेरित्याह—यस्मादिति।

तत्र मानमाह—यत्र वेति। द्वितीयाभावे व्यवहारो नास्तीत्यत्रापि मानमाह—मात्रेति। दृश्यं मात्रा-शब्दार्थः। असंसर्ग इति च्छेदः। दृश्यासंसर्गे सुषुप्तौ विशेषविज्ञानाभावोक्त्या द्वितीयाभावे व्यवहारो नास्तीत्यर्थः। अतो न द्वितीयः कल्पः सम्भवतीत्याह—अत इति। ननु यदि स्वयंज्योतिष्ट्वबोधनार्थं मनआद्यभावो नापेक्षितो जागरितेऽपि तर्हि तद्बोधनसम्भवादत्रेति स्वप्नवाचिविशेषणमनर्थकमिति शङ्कते—नन्विति। किं विशेषणबला-
३५ न्मनसोऽभावः सिषाधयिषितः। उत विशेषणस्य गतिमात्रं पृच्छ्यते। नाऽऽद्यः। मनसोऽभावाङ्गीकारेऽप्यन्तर्हृदया-काशस्य तत्कृतपरिच्छेदस्य च श्रुतिसिद्धत्वेन त्वन्मतेऽपि तत्र स्वयंज्योतिष्ट्वबोधनासम्भवाद्विशेषणानर्थक्यं

१. अत्रैष देवः—अत्र देवः मनः एव पूर्वमन्त्रे परे देवे मनसीत्युक्तेः मनसः प्रकृतत्वात्। अत्र जीवः परो देव इति परोक्तिः सन्दर्भविरुद्धा, स्वप्नदर्शनं तु मनसः स्वप्ने तस्य प्राधान्यादिति भाष्ये उक्तमेव।

**ज्योतिरिति विशेषणमनर्थकं भवति। अत्रोच्यते। अत्यल्पमिदमुच्यते "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेत" इत्यन्त-हृदयपरिच्छेदे सुतरां स्वयंज्योतिष्ट्वं बाध्येत, सत्यमेवमयं दोषो यद्यपि स्यात्स्वप्ने केवलतया स्वयंज्योतिष्ट्वेनार्धं तावदपनीतं भारस्येति चेन्न। तत्रापि पुरीतति नाडीषु शेत इति श्रुतेः पुरीततिनाडीसम्बन्धात्तत्रापि पुरुषस्य स्वयंज्योतिष्ट्वेनार्धभारापनयाभिप्रायो मृषैव। कथं तर्ह्यत्रायं पुरुषः स्वयंज्योतिरिरिति। अन्यशाखात्वादनपेक्षा सा श्रुतिरिति चेन्न। अर्थैकत्वस्येष्टत्वादेको ह्यात्मा सर्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च। तस्माद्युक्ता ५ स्वप्न आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुम्, श्रुतेर्यथार्थतत्त्वप्रकाशकत्वात्। एवं तर्हि शृणु श्रुत्यर्थं हित्वा सर्वमभिमानं न त्वभिमानेन वर्षशतेनापि श्रुत्यर्थो ज्ञातुं शक्यते सर्वैः पण्डितंमन्यैः।**

**यथा हृदयाकाशे पुरीतति नाडीषु च स्वपतस्तत्सम्बन्धाभावात्ततो विविच्य दर्शयितुं शक्यत इत्यात्मनः स्वयंज्योतिष्ट्वं न बाध्यते। एवं मनस्यविद्याकामकर्मनिमित्तोद्भूतवासनावति। कर्मनिमित्तवासना अविद्ययाऽन्य-द्वस्त्वन्तरमिव पश्यतः सर्वकार्यकरणेभ्यः प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयंज्योतिष्ट्वं १०**

तुल्यमित्याह—**अत्रोच्यत इति**। परिच्छेदोऽधिकोऽत्रेति तरपः प्रयोगः। **स्वयंज्योतिष्ट्वमिति**। तद्बोधनमित्यर्थः। यथाश्रुते वास्तवस्य तस्य बाधस्यानाशङ्क्यत्वादिति। यद्यपि स्वप्नेऽन्तर्हृदयाकाशसत्त्वात्सम्यक्स्वयंज्योतिष्ट्वं बोधयितुं न शक्यमिति दोषस्तुल्यस्तथाऽपि स्वप्ने मनसोऽभावेन तद्बोधनप्रतिबन्धकस्याभावाददूरविप्रकर्षेण स्वयं-ज्योतिष्ट्वं स्वप्ने बोधयितुं शक्यमिति तद्विशेषणमर्थवदिति शङ्कते—**सत्यमिति**। स्यादित्यनन्तरं तथाऽपीति शेषः। **केवलतयेति**। मनसोऽभावेनेत्यर्थः। **भारस्येति**। प्रतिबन्धकस्येत्यर्थः। शेषबोधनं तु सुषुप्ते भविष्यतीत्यभिप्रायः। १५ एवं तर्हि सुषुप्ते सर्वस्याप्यभावमाश्रित्य सम्यग्बोधनं विवक्षणीयं न च तत्सम्भवति। तत्रापि बहुप्रतिबन्धकस्य विद्यमानत्वादित्याह—**न तत्रापीति**। सुषुप्तेऽपीत्यर्थः। **तत्रापीति**। स्वप्नेऽपीत्यर्थः। सुषुप्ते चेत्सर्वभारापनयः स्यात्तदा स्वप्नेऽर्धभारापनयाभिप्रायो वर्णयितुं शक्यते न च तदस्ति। अतोऽत्रेति विशेषणं तदाऽप्यनर्थकमित्यर्थः। तर्हि विशेषणस्य गतिर्वक्तव्येति द्वितीयं शङ्कते—**कथं तर्हीति**। अत्रैष देवः स्वप्ने महिमानमनुभवतीत्यथर्वशाखा-वाक्यार्थकथनावसरे काण्वश्रुतिगतविशेषणस्य गतिर्न वक्तव्या प्रकृतानुपयोगादिति सिद्धान्त्येकदेशी कश्चिन्मन्दः २० शङ्कते—**अन्येति**। सर्ववेदान्तप्रत्ययन्यायेनाथर्वश्रुत्यविरोधेनैकवाक्यतया श्रुत्यर्थस्य वर्णनीयत्वात्तदविरोधोऽपि वक्तव्य इति पूर्ववाद्याह—**नार्थैकत्वस्येति**। तर्हि काण्वश्रुतिरर्थाभावात्त्यज्यतामत आह—**श्रुतेर्यथार्थेति**। स्वा-ध्यायोऽध्येतव्य इत्यध्ययनविधेरर्थावबोधफलकत्वात्तुल्यं च साम्प्रदायिकमितिन्यायाच्चाक्षरमात्रस्याप्यानर्थक्यायोगा-दित्यर्थः। एवमेकदेशिनि दूषिते सिद्धान्त्युत्तरमाह—**एवं तर्हीति**।

तर्ह्यादावेव मुख्यश्रुत्यर्थ उच्यतां किं पूर्वोक्तरीत्या पक्षान्तराशङ्कातन्निराकरणाभ्यामित्याशङ्क्य पाण्डित्या- २५ भिमानवतो यथावदर्थबोधेऽनधिकारात्तस्य तदभिमानावतारचिकीर्षया तदीयनानापक्षा निराकृता इति वक्तुं सर्व-मभिमानं निरस्येत्याद्युक्तम्। स्वयंज्योतिष्ट्वश्रुतेरनतिशङ्क्यत्वात्तद्बलात्स्वप्नादौ हृदयाकाशादिसत्त्वेऽपि तत्सम्बन्ध-प्रतीत्यभावाद्विद्यमानस्याप्यविद्यमानतुल्यत्वेनाऽऽत्मनः केवलत्वात्प्रकाशदर्शनाच्च स्वयंज्योतिष्ट्वमिति बोधनीयं मनसोऽभाववादिनाऽप्येवं मनसि सत्यपि तस्य वासनामयगजतुरगादिविषयतया परिणामाद्दृश्यत्वाच्च द्रष्टुस्ततो भेदेन विवेकतः श्रुत्या स्वप्रकाशत्वं बाध्यत इत्याह—**यथेत्यादिना**। **मनसीति**। सत्यपीति शेषः। ननु मनश्चेद- ३० विद्यानिमित्तवशाद्गजतुरगादिरूपेणाभिव्यक्तवासनावत्तर्हि जाग्रतीव तस्याहंतयैव प्रतीतिः स्यान्नेदन्तयाऽत आह—**कर्मनिमित्तेति**। तथा प्रतीतिं विना स्वप्ने भोगासिद्धेः स्वप्नभोगप्रदकर्मनिमित्तवशाज्जाग्रति गजादीनामिदन्तयाऽ-नुभवेन तद्वासनानामपि तथैवानुभवार्हत्वेन तद्वासनारूपाविद्यावशाच्च वासनाश्रयस्य मनस इदंतयेव वस्त्वन्तरवत् प्रतीतिरित्यर्थः। इदं च विशेषणं मनसो विषयत्वेन विषयित्वासम्भवाद्विषयिण आत्मन एव प्रकाशरूपत्वमिति वक्तुम्। जाग्रत्यादित्यादिकार्यज्योतिषां चक्षुरादिकरणज्योतिषां च सत्त्वेन तत्संकीर्णत्वेनाऽऽत्मनः स्वयंज्योतिष्ट्वं ३५ दुर्बोधं स्वप्ने तु तदभावात्सुबोधमिति वक्तुं सर्वकार्येत्यादि विशेषणम्। स्वप्न आदित्यादिकार्यकरणज्योतिषां भासमानत्वेऽपि तेषां वासनामात्रत्वाद्दृश्यत्वाच्च विषयप्रकाशनासामर्थ्यमिति वक्तुं वासनाभ्य इत्यादि विशेषणम्। एतैश्च विशेषणैः स्वप्न एवैवम्भूते स्वयंज्योतिष्ट्वस्य बोधयितुं शक्यत्वादन्यत्रासम्भवादत्रायमितिश्रुतौ स्वप्न-विशेषणग्रहणमर्थवदित्युक्तमिति द्रष्टव्यम्। **स्वयंज्योतिष्ट्वमिति**। सिद्धमिति शेषः। अतः काण्वश्रुतौ स्वप्ने

**[1]स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्शरीर एतत्सुखं भवति ॥ ६ ॥**

सुर्वपतेनापि तार्किकेण न वारयितुं शक्यते। तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान्पश्यतीति।

कथं महिमानमनुभवतीत्युच्यते—यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं
५ पुत्रं मित्रमिव वाऽविद्यया पश्यतीत्येवं मन्यते, तथा श्रुतमर्थं तद्वासनयाऽनुश्रृणोतीव, देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतीवाविद्यया, तथा दृष्टं चास्मिञ्जन्मन्यदृष्टं च जन्मान्तरदृष्टमित्यर्थः। अत्यन्तावृष्टे वासनानुपपत्तेः। एवं श्रुतं चाश्रुतं चानुभूतं चास्मिञ्जन्मनि केवलेन मनसाऽननुभूतं च मनसैव जन्मान्तरेऽनुभूतमित्यर्थः। सच्च परमार्थोदकादि। असच्च मरीच्युदकादि। किं बहुनोक्तानुक्तं सर्वं पश्यति सर्वः पश्यति सर्वमनोवासनोपाधिः सन्नेवं सर्वकरणात्मा मनोदेवः स्वप्नान्पश्यति ॥ ५ ॥

१० स यदा मनोरूपो देवो यस्मिन्काले सौरेण पित्ताख्येन तेजसा नाडीशयेन सर्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति। यदा मनो [2]दार्वग्निवदविशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा सुषुप्तो भवति। अत्रैतस्मिन्काल एष मनआख्यो देवः स्वप्नान्न पश्यति दर्शनद्वारस्य

मनसोऽभावविवक्षाकारणाभावेन तद्विरोधाभावादत्र देवशब्देन परे देवे मनस्येकी भवतीत्युक्तं मन एवोच्यत इत्युक्तमुपसंहरति—**तस्मादिति**।

१५ नन्विन्द्रियाणामुपरतत्वाद्विषयसम्बन्धाभावात्कथं मनसो महिमानुभव इति शङ्कते—**कथमिति**। पूर्वं ज्ञातस्यैव स्वप्ने ज्ञानात्तस्य वासनामात्रत्वमतो नेन्द्रियापेक्षेत्याह—**उच्यत इति**। **यदिति**। यन्मित्रं पुत्रं वा पूर्वं दृष्टवांस्तदेव दृष्टपुत्रमित्रादिविषयवासनासमुद्भूतं मित्रं पुत्रं वाऽविद्यया पश्यतीति दृष्टवानित्यादिपदाध्याहारेण वाक्यं योज्यम्। अन्यथा पुत्रमिति द्वितीयाया यच्छब्दस्य चानन्वयः स्यादिति। चक्षुरभावेन दर्शनायोगान्मन्यत इत्युक्तम्। **तथेति**। अत्रापि योऽर्थः श्रुतस्तमेव श्रुतमर्थमित्यध्याहारेणैव श्रुतिर्योज्या। देशो नदीतीरादिः। दिक्प्राच्यादि-
२० रिति भावः। प्रत्यनुभूतं प्रतिवारमनुभूतं पुनः पुनरनेकदिनेष्वनेकस्वप्नेष्वनुभवतीत्यर्थः। जन्मान्तरदृष्टमिति व्याख्याने हेतुमाह—**अत्यन्तेति**। अनुभूतं चेत्यस्य प्रत्यनुभूतमित्यनेन पुनरुक्तिमाशङ्क्याह—**केवलेनेति**। पूर्वमिन्द्रियद्वारकानुभव उक्त इत्यपौनरुक्त्यमित्यर्थः। सर्वदर्शने हेतुमाह—**सर्व इति** ॥ ५ ॥

कस्यैतत्सुखं भवतीत्यस्योत्तरं तदपेक्षितं वदन्नाह—**स यदेति**। **पित्ताख्येनेति**। इदमुपलक्षणं चिद्रूपेण ब्रह्मणा चेत्यपि द्रष्टव्यम्। तन्मनः प्राणमेवोपश्रयत इतिश्रुत्यन्तरेण प्राणशब्दिते ब्रह्मणि तस्य लयाभिधानात्।
२५ **तिरस्कृतेति**। वासनाभिव्यक्तौ द्वारं स्वप्नभोगप्रदं कर्म यत्तत्तिरस्कृतं तत्रोपरतं भवति तेजःशब्दितब्रह्मचैतन्यसम्बन्धादित्यर्थः। **रश्मय इति**। वासना इत्यर्थः। **अविशेषविज्ञानेति**। सामान्यचैतन्यरूपेणेत्यर्थः। चेतनाशब्दितसामान्यवृत्तिरूपेण वा। अनेन सुषुप्तमुक्तमित्याह—**तदेति**। नन्वथैतत्सुखं भवतीत्ययुक्तं जन्यसुखस्य तदानीमसम्भवात्स्वरूपसुखस्य पूर्वमपि सत्वेन तदा भवतीत्यनुपपत्तेरित्याशङ्क्य स्वरूपसुखमेव विशेषविज्ञानरूपविक्षेपाभावे

---

१. अत्र पित्ताख्यतेजसाऽभिभूतो भवति। तेन पित्तेन विषयोपलब्धिस्थानानामावृतत्वात् विशेषविज्ञाना-
३० भावः। सुखं तु स्वरूपसुखमेव आत्मसुखस्यानावृतत्वात्। अपरिच्छिन्नांशस्त्वावृतः अविद्यानिवृत्तौ स्वयंप्रकाशते। इदानीं तु मेघावृतसूर्यवत् अविद्यावृतमेव सुखं प्रकाशते।

अत्र तेजसा ब्रह्मणा अभिभूतः सम्पन्नः सम्परिष्वक्तः इति व्याख्या परेषां; तत्राभिभवशब्दो न सङ्गच्छते, सम्पन्नशब्दस्स्याच्चेत् समञ्जसः। अथैतस्मिन् शरीरे सुखं भवति अत्र परेषां विषयसुखस्यैव सुखत्वात् शरीरस्यैव विषयसुखहेतुत्वस्य तैर्लिखनात् सुषुप्तिकाले विषयाभावाच्च तत्काले सुखं कथ-
३५ मित्युपपादनीयम्।

२. दार्वग्निः—अश्वत्थादिकाष्ठे सर्वं काष्ठमभिव्याप्याग्निर्वर्तते। मन्थदण्डेन यत्र वा मथनं क्रियते तत्राग्निरभिव्यज्यते तद्वत् मनःकृत्स्नशरीरं व्याप्य तिष्ठति सुषुप्तिकाले।

स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते। एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते ॥७॥
पृथिवी च पृथिवीमात्रा चाऽऽपश्चाऽऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽऽकाशश्चाऽऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चाऽऽदातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चा- ५
हङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥८॥

[1]एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता
विज्ञानात्मा पुरुषः स परेऽक्षर आत्मनि सम्प्रतिष्ठते ॥ ९ ॥

निरुद्धत्वात्तेजसा। अथ तदैतस्मिञ्शरीर एतत्सुखं भवति यद्विज्ञानं निराबाधमविशेषेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः ॥ ६ ॥ १०

एतस्मिन्कालेऽविद्याकामकर्मनिबन्धनानि कार्यकरणानि शान्तानि भवन्ति। तेषु शान्तेष्वात्मस्वरूप-मुपाधिभिरन्यथा विभाव्यमानमद्वयमेकं शिवं शान्तं भवतीत्येतामेवावस्थां पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह—स दृष्टान्तो यथा येन प्रकारेण सोम्य प्रियदर्शन वयांसि पक्षिणो वासार्थं वृक्षं प्रति सम्प्रतिष्ठन्ते गच्छन्ति। एवं यथा दृष्टान्तो ह वै तद्वक्ष्यमाणं सर्वं पर आत्मन्यक्षरे सम्प्रतिष्ठते ॥ ७ ॥

किं तत्सर्वम्—पृथिवी च स्थूला पञ्चगुणा तत्कारणा च पृथिवीमात्रा च गन्धतन्मात्रा, तथाऽऽपश्चाऽऽपो- १५ मात्रा च। तेजश्च तेजोमात्रा च। वायुश्च वायुमात्रा च। आकाशश्चाऽऽकाशमात्रा च। स्थूलानि च सूक्ष्माणि च भूतानीत्यर्थः। तथा चक्षुश्चेन्द्रियं रूपं च द्रष्टव्यं च। श्रोत्रं च श्रोतव्यं च। घ्राणं च घ्रातव्यं च। रसश्च रसयितव्यं च। त्वक्च स्पर्शयितव्यं च। वाक्च वक्तव्यं च। हस्तौ चाऽऽदातव्यं च। उपस्थश्चाऽऽनन्दयितव्यं च। पायुश्च विसर्जयितव्यं च। पादौ च गन्तव्यं च। बुद्धीन्द्रियाणि कर्मेन्द्रियाणि तदर्थाश्चोक्ताः। मनश्च पूर्वोक्तम्। मन्तव्यं च तद्विषयः। बुद्धिश्च निश्चयात्मिका। बोद्धव्यं च तद्विषयः। अहङ्कारश्चाभिमानलक्षणमन्तःकरण- २० महङ्कर्तव्यं च तद्विषयः। चित्तं च चेतनावदन्तःकरणम्। चेतयितव्यं च तद्विषयः। तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक्तया निर्भास्यो विषयो विद्योतयितव्यम्। प्राणश्च सूत्रं यदाचक्षते, तेन विधारयितव्यं संग्रथनीयं, सर्वं हि कार्यकारणजातं पारार्थ्येन संहतं नामरूपात्मकमेतावदेव ॥ ८ ॥

अतः परं यदात्मरूपं जलसूर्यकादिवद्भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टम्—एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता

निर्वातस्थदीपप्रभावत्सम्यक्प्रकाशते तदपेक्षमेतद्वचनमित्याह—यद्विज्ञानमिति। विज्ञानरूपं स्वरूपसुखमित्यर्थः। २५ अनेनाऽऽनन्दमयकोशशब्दितमनभिव्यक्तमनआदिवासनावदज्ञानं सुषुप्तधर्मीत्युक्तम् ॥ ६ ॥

पञ्चमप्रश्नस्योत्तरं तुरीयस्वरूपं विवेकसौकर्याद्विविच्यात्रैवोच्यत इत्याह—एतस्मिन्निति। अन्यथेति। पूर्वमन्यथा विभाव्यमानमित्यर्थः। मात्रानुप्रवेशेनेति। मात्राणां विवेकतोऽक्षरेऽनुप्रवेशेनेत्यर्थः ॥ ७ ॥

आपोमात्रा इत्यत्र विभक्त्यलोपश्छान्दसः। स्थूलानि चेति। पञ्चीकृतानि चेत्यर्थः। ततश्च पञ्चीकरण-मेतच्छ्रुतिसिद्धमित्युक्तम्। अन्यथाऽऽकाशाकाशमात्रयोः पृथगुक्त्यनुपपत्तेरिति। यद्यपि मन्तव्यादयो मनआदिचतुष्टय- ३० विषया अपि द्रष्टव्यादिविषया एव न पृथक्तथाऽपि मन्तव्यत्वादिरूपेण पृथगिति पृथङ्निर्दिष्टा इति द्रष्टव्यम्। प्रकाश-विशिष्टा या त्वगिति। त्वगाश्रयं चर्म तत्प्रकाशनिर्भास्यं च तदेवेत्यर्थः। पृथिवी चेत्यादिना विधारयितव्यं चेत्यन्तेनाऽऽत्मव्यतिरिक्तं तदुपाधिभूतं सर्वं चोक्तमित्याह—सर्वं हीति ॥ ८ ॥

एष हि द्रष्टेत्यादिनोपहितस्वरूपमुच्यत इत्याह—अतः परमिति। द्रष्टेति। उपाधिकृतमपि द्रष्टृत्वादिक-

---

१. अत्र द्रष्टेत्यादिविशेषणानि जीवस्य। तस्य स्वयं ब्रह्मरूपत्वेऽपि अवस्थावतोऽत्रानुक्रम्यमाणत्वात् तस्य ३५ च मन उपाधिकद्रष्टृत्वाद्युपपत्तेः। स च सुषुप्तौ परे आत्मनि सम्प्रतिष्ठते। स्वमपीतो भवतीति श्रुत्यन्त-

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः [1]सर्वो भवति। तदेष श्लोकः ॥१०॥

रस्रयिता मन्ता बोद्धा कर्ता विज्ञानात्मा विज्ञानं विज्ञायतेऽनेनेति करणभूतं बुद्धयादीदं तु विजानातीति विज्ञानं कर्तृकारकरूपं तदात्मा तत्स्वभावो विज्ञातृस्वभाव इत्यर्थः। पुरुषः कार्यकरणसङ्घातोक्तोपाधिपूर्णत्वात्पुरुषः। स च
५ जलसूर्यकादिप्रतिबिम्बस्य सूर्यादिप्रवेशवज्जगदाधारशेषे परेऽक्षर आत्मनि सम्प्रतिष्ठते ॥ ९ ॥

तदेकत्वविदः फलमाह—परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यत इत्येतदुच्यते स यो ह वै तत्सर्वैषणाविनिर्मुक्तोऽच्छायं तमोवर्जितम्। अशरीरं नामरूपसर्वोपाधिशरीरवर्जितम्। अलोहितं लोहितादिसर्वगुणवर्जितम्। यत एवमतः शुभ्रं शुद्धम्। सर्वविशेषणरहितत्वादक्षरम्। सत्यं पुरुषाख्यम्। अप्राणममनोगोचरम्। शिवं शान्तं सबाह्याभ्यन्तरमजं वेदयते विजानाति, यस्तु सर्वत्यागी सोम्य स सर्वज्ञो न तेनाविदितं किञ्चित्सम्भवति। पूर्वम-
१० विद्ययाऽसर्वज्ञ आसीत्पुनर्विद्ययाऽविद्यापनये सर्वो भवति तदा। तत्तस्मिन्नर्थ एष श्लोको मन्त्रो भवति उक्तार्थसंग्राहकः ॥ १० ॥

मुपाधिव्यतिरिक्तेऽनुपहित आत्मन्यारोपितं स्फटिके लौहित्यवदस्तीत्युपाधिभिन्नोऽप्यात्मा द्रष्टेत्यादिनोक्तः विज्ञानात्मेत्यत्र द्रष्टेत्यादाविव कर्तृवाचकतृचोऽभावाद्विज्ञानं यज्ञं तनुत इत्यादाविव बुद्धेरभिधाने पौनरुक्त्यमाशङ्क्याऽऽह—**विज्ञानमिति। करणभूतमिति**। विज्ञानमय इत्यादावित्यर्थः। एष हीति हिशब्दश्चशब्दार्थकः स च सम्प्रतिष्ठत इति
१५ क्रियानुकर्षणार्थ इति वदन्द्रष्टुरात्मनः पृथिव्यादिवत्स्वरूपेणाक्षरे लयो न सम्भवतीत्याशङ्क्योपाधिलय उपहितरूपाभाव एवास्य लय इत्याह—**स चेति** ॥ ९ ॥

एवं जाग्रदादीनामन्यधर्मत्वोक्त्या शोधिततुर्यात्मानुवादेन तस्याक्षरैक्याभिधानपुरःसरं तज्ज्ञानस्य फलमुच्यत उत्तरवाक्येनेत्याह—**तदेकत्वेति**। वक्ष्यमाणलक्षणमक्षरं प्रतिपद्यत इत्येवंरूपं फलमाहेत्यन्वयः। उत्तरवाक्यमिति शेषः। उक्तमर्थं श्रुत्यक्षरारूढमाह—**एतदुच्यत इति**। स इत्यस्यार्थमाह—**सर्वेति**। अत्राधिकारिणो
२० दुर्लभत्वं स यो ह वा इत्यनेनोक्तम्। स यः कश्चिदेवापूर्ववत्तदच्छायादिविशेषणमक्षरं वेदयत इत्येकं वाक्यं समापनीयम्। यस्तु वेदयते स सर्वज्ञ इति वाक्यान्तरं कार्यमन्यथा यच्छब्दद्वयानन्वयात्। आद्यवाक्येऽच्छायादिविशेषणत्रयेण कारणसूक्ष्मस्थूलशरीरत्रयनिराकरणेनावस्थात्रयनिराकरणेनावस्थात्रयराहित्यमनूद्यते। लोहितादिसर्वगुणवर्जितमित्यनेन तद्गुणकस्थूलशरीरवर्जितमिति प्रतीतेः। शुभ्रमित्यनेन तमेव तुरीयमनूद्य तस्याक्षरसामानाधिकरण्येनैक्यमुक्तमिति विवेकः। अत्राक्षरमित्यनेनाक्षरं पुरुषं वेद सत्यं सबाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्र इति
२५ मन्त्रोक्तानि सर्वाणि विशेषणान्यात्मोपलक्षणान्यात्मोपलक्षणार्थं संगृहीतानीत्याह—**सत्यमित्यादिना**। यस्तु सर्वत्यागीत्यत्रापि वाक्ये वेदयत इत्यस्यानुषङ्गः। अत्र सर्वज्ञ इत्यनेन कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञातं सर्वविज्ञानमुक्तम्। सर्वात्मत्वस्य ज्ञानजन्यत्वेऽनित्यत्वं स्यादत आह—**पूर्वमिति**। एवं चाऽऽरोपनिवृत्तिद्वाराऽभूततद्भावो विवक्षित इत्याह—**सर्वो भवतीति** ॥ १० ॥

---

राच्च। अत्रोपनिषद्व्याख्याता परः "जीवस्य ज्ञानत्वमेव न ज्ञातृत्वमिति वदन्तो मृषावादिनः एतेन
३० निरस्ता" इति वदत् स्वस्यैव मृषावादित्वमङ्गीकरोति। ब्रह्मवादिभिः औपाधिकद्रष्टृत्वादेः यावत्संसारमभ्युपगमात्। स्वमते उभयोपगमश्च अद्वैतिवदेव परोपाधिकत्वेनैव समर्थनीयः। यथा भवतां धर्मभूतज्ञानवानात्मा कर्ता स्वयं ज्ञानरूपः तथा ममापि मनोधर्मभूतज्ञानकर्ता ज्ञाता, स्वयं च ज्ञानरूपः। अत एव धीरित्येतत्सर्वं मन एवेति श्रुतिः।

१. सर्वो भवति—इति सर्वकामयुक्तो भवतीति मतान्तरे गौणम्, अस्माकं तु उपादानव्यतिरेकेणोपादेया-
३५ भावात् सर्वः सर्वतादात्म्यवानित्यर्थः समञ्जसः।
सर्वमाविवेश कामजातं—इति परमतं तदपि गौणम्। अस्माकं तु ब्रह्मभावाविर्भावात् सर्वतादात्म्यप्राप्त्या सर्वमाविशतीति यथाश्रुत एवार्थः।

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य [1]स सर्वज्ञः सर्वमेवाऽऽविवेशेति ॥११॥

इत्यथर्ववेदीयप्रश्नोपनिषदि चतुर्थः प्रश्नः

[2]अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु
प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥ १ ॥ ५

विज्ञानात्मा सह देवैश्चाग्न्यादिभिः प्राणाश्चक्षुरादयो भूतानि पृथिव्यादीनि सम्प्रतिष्ठन्ति प्रविशन्ति यत्र यस्मिन्नक्षरे तदक्षरं वेदयते यस्तु सोम्य प्रियदर्शन स सर्वज्ञः सर्वमेवाऽऽविवेशाऽऽविशतीत्यर्थः ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
प्रश्नोपनिषद्भाष्ये चतुर्थः प्रश्नः

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । १०

अग्न्यादिभिरिति। ततश्च चक्षुश्च द्रष्टव्यं चेत्यत्रापि चक्षुरादिभिर्देवा अप्युपलक्षिता इति व्याख्यातम् ॥११॥

इत्यानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां चतुर्थः प्रश्नः

एवं चतुर्थप्रश्नेनोत्तमाधिकारिणः पदार्थशोधनपूर्वकवाक्यार्थज्ञानेनाक्षरप्राप्तिमुक्त्वाऽत्रानधिकारिणो मन्दवैराग्यवत ओमित्येवं ध्यायत आत्मानं प्रणवो धनुरित्यादिमन्त्रसूचितं ब्रह्मलोकप्राप्तिद्वारा क्रमेणाक्षरप्राप्त्यर्थमोङ्कारोपासनं वक्तुं पञ्चमप्रश्नमवतारयति—अथ हैनमिति । १५

---

१. मध्वमते तु स सर्वज्ञः—ईश्वरदर्शनात् सर्वज्ञ इव तत्सदृशः, अथवा कर्मदिस्सर्वस्य ज्ञानवान् इत्यर्थः । एवं सर्वो भवति इत्यस्य सर्वं ब्रह्म तद्भूत इव भवति इति व्याख्यानं इवशब्देन गौणत्वमापादयति ।

२. अत्र ओङ्कारे ब्रह्मदृष्टिरेव विवक्षिता, अतः प्रतीकोपासनमेवेदम् । यद्यपि प्रतीकोपासकानां ब्रह्मलोकप्राप्तिर्निवारिता "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इति श्रुतेः । अप्रतीकालम्बनान्नयतीति बादरायणः इति सूत्राच्च । तथापि अत्र वचनबलात् ब्रह्मोपासकानां ब्रह्मलोकः श्रूयमाण उपपद्यते, न्यायस्तु तत्र वचनं नास्ति तत्र प्रवर्तत इति परिमले उक्तम् । निर्गुणस्यापि शुद्धब्रह्मणः उपास्यत्वं युक्तमिति श्रीविद्यारण्यश्रीचरणैः यत् ध्यानदीपे निर्णीतं तत् शैब्यप्रश्नमूलकमेव । २०

अत्र ईक्षतिकर्मव्यपदेशात् सः इत्यधिकरणे त्रिमात्रे प्रणवे उपास्यत्वेनोक्तं ब्रह्म शुद्धं परमेव न हिरण्यगर्भशब्दितमपरं ब्रह्मेति निर्णीतम् । यतो हि अत्र एतस्मात् परात्परं पुरिशयं पुरुषमीक्षते इति वाक्येन परब्रह्मोपासको ब्रह्मलोकं प्राप्य परं ब्रह्म ईक्षते इति श्रुतम् । ईक्षणस्य च पारमार्थिकमेव वस्तु विषयः । शुद्धमेव च ब्रह्म पारमार्थिकं, अत एव ईक्षणविषयः शुद्धं ब्रह्म । स एव च ध्यानविषयः, ईक्षणध्यानयोः समानविषयकत्वनियमात् । अन्यत् ध्यायति अन्यदीक्षते इत्यसम्भवात् । यद्यपि "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं" इत्यत्र ब्रह्मध्यानात् शक्तिसाक्षात्कार उक्तः, तथापि अयं अदृष्टद्वारकः । तयोः समानविषयकत्वं तु अदृष्टाद्वारकध्यानजन्यसाक्षात्कारे बोध्यः । निर्गुणस्य यद्यपि तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते—इत्यनेनोपास्यत्वं प्रतिषिद्धं, तथाप्यत्र प्रणवगतत्रिमात्रत्वादिरूपकल्पितगुणाः ब्रह्मण्यारोप्यन्त एवेति नानुपपत्तिः । २५ ३०

अत्र परैः परं चापरं च ब्रह्मेति वाच्यवाचकभावे सामानाधिकरण्यं न तु प्रतीकत्वे इत्युक्तम्, अस्माकमपि काठकमुण्डकयोः ओङ्कारे उच्चार्यमाणे तन्निष्ठस्य यत् शुद्धं ब्रह्म स्फुरति तदेवाहमिति ध्यायेदित्युक्तत्वात् न विरुद्धं, अवाच्यमपि ब्रह्म लक्षणया तेन प्रतिपाद्यत एव । यतो वाचो निवर्तन्त ३५

**तस्मै स होवाच। एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः। तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥ २ ॥**

अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेनोङ्कारस्योपासनविधित्सया प्रश्न आरभ्यते—स यः कश्चिद्ध वै भगवन्मनुष्येषु मनुष्याणां मध्ये तदद्भुतमिव प्रायणान्तं मरणान्तं यावज्जीवमित्येतदोङ्कारमभिध्यायीताऽऽभिमुख्येन ५ चिन्तयेत्। बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशितब्रह्मभावे ओङ्कारे। आत्मप्रत्ययसन्तानाविच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थदीपशिखासमोऽभिध्यानशब्दार्थः। सत्यब्रह्मचर्याहिंसापरिग्रहत्यागसंन्यासशौचसन्तोषामायावित्वाद्यनेकयमनियमानुगृहीतः स एवं यावज्जीवव्रतधारणः। कतमं वाव अनेके हि ज्ञानकर्मभिर्जेतव्या लोकास्तिष्ठन्ति तेषु तेनोङ्काराभिध्यानेन कतमं स लोकं जयति ॥ १ ॥

इति पृष्टवते तस्मै स होवाच पिप्पलादः। एतद्वै सत्यकाम। एतद्ब्रह्म वै परं चापरं च ब्रह्म परं सत्यमक्षरं पुरुषाख्य- १० मपरं च प्राणाख्यं प्रथमजं यत्तदोङ्कार एवोङ्कारात्मकमोङ्कारप्रतीकत्वात्। परं हि ब्रह्म शब्दाद्युपलक्षणानर्हं सर्वधर्म-

**इदानीमिति**। गार्ग्यप्रश्ननिर्णयानन्तरमित्यर्थः। **परेति**। अपरब्रह्मलोकप्राप्तिक्रमेण परब्रह्मलोकप्राप्तिसाधनत्वेनेत्यर्थः। **तदद्भुतमिवेति**। तदिति क्रियाविशेषणं तादृशमभिध्यानमिति, तेन विशेषणेनाद्भुतत्वं दुष्करत्वं भातीत्यर्थः। अभिध्यानेन तत्पूर्वकालीने प्रत्याहारधारणे सूचिते इत्याह—**बाह्येति**। भक्त्याऽऽदरेणोपचारेणवाऽऽवेशित आरोपितो ब्रह्मभावो यस्मिन्नोङ्कारे तस्मिन्समाहितचित्तः इत्यन्वयः। अनेन धारणोक्ता। ध्यानशब्दार्थमाह— १५ **आत्मेति**। सन्तानाविच्छेद इत्यविच्छिन्नसन्तान इत्यर्थः। प्रत्ययान्तरेण विजातीयप्रत्ययेनाखिलीकृतोऽनन्तरितः। चित्तस्याऽऽत्मविषयस्यैव सत एकदेशेन विक्षेपं वारयति—**निर्वातेति**। ध्यानेनैव यमादिसाधनजातमपि सूचितमित्याह—**सत्येति**। कतममितिडतमचोऽर्थं बहुषु निर्धारणं दर्शयति—**अनेके हीति**। ओङ्काराभिध्यानं ध्यानत्वाद्दहराद्युपासनवदपरप्राप्तिसाधनमेवोत परप्राप्तिसाधनमपीति प्रष्टुरभिप्रायः ॥ १ ॥

तदभिप्रायज्ञः पिप्पलादोऽपरालम्बनतया ध्यानं चेदपरप्राप्तिमात्रसाधनं परालम्बनत्वेन चेत्क्रमेण परप्राप्ति- २० साधनमित्युत्तरमाह—**एतद्वा इति**। एतद्यच्छब्दयोर्नपुंसकयोरोङ्कारविशेषणत्वायोगाद्ब्रह्मविशेषणत्वमाह—**एतद्ब्रह्मेति**। किं तद्ब्रह्मेत्यत आह—**परं चेति**। यदेतत्परं चापरं च ब्रह्मास्ति तदुभयमोङ्कार इति वाक्यान्वय इत्यर्थः। न चैवं ब्रह्मोद्देशेनोङ्कारत्वविधाने ब्रह्मण्योङ्कारदृष्टिः प्रसज्येतेति शङ्क्यम्। [1]ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन लोकेषु सामोपासीतेत्यादाविव निकृष्ट ओङ्कार एव ब्रह्मदृष्टिः सिध्यतीति भावः। तयोर्भेदात्कथमैक्यमित्याशङ्क्योपचारादित्याह—**ओङ्कारप्रतीकत्वादिति**। अनेन सामानाधिकरण्येनोङ्कारस्य प्रतीकत्वमुपदिश्यत इति भावः। ननु किं २५ प्रतीकोपदेशेन, साक्षादेव ब्रह्माभिधीयतामत आह—**परं हीति**। **शब्दादीति**। शब्दादिभिः साक्षाद्बोधनानर्हमित्यर्थः। आदिशब्देनानुमानादि गृह्यते। प्रवृत्तिनिमित्तस्य धर्मस्य लिङ्गस्य चाभावादिति तत्र हेतुमाह—**सर्वेति**। न शक्य-

---

इत्युक्तत्वात् परैरपि एवमेव स्वीकार्यम्। सगुणं चेदुपास्यं श्रीशिवरूपं ब्रह्मैव ध्येयम्। "नमस्ताराय" इति रुद्राध्याये शिवनामत्वेन तारशब्दितप्रणवस्य स्पष्टमुक्तत्वात्।

अत्र प्रश्नोपनिषदि प्रतीकोपासनमेवाभिप्रेतं 'परं चापरं च ब्रह्म' 'एकमात्रमभिध्यायीते'त्यादौ ३० विशेष्यत्वेन प्रणवाभिधानात्। या त्रिमात्रेण इति करणत्वबोधकश्रुतिः सा द्वितीयाप्रयोगप्राचुर्यात् द्वितीयार्थेति निर्णीतम्।

यत्तु परैः "परात्परं पुरिशयं पुरुषमीक्षते" इत्यत्र पुरुषशब्दश्रुतेः परपुरुषो विष्णुरेवेति। तत् पुरुषं कृष्णपिङ्गलमिति शिवेऽपि पुरुषशब्दप्रयोगात्, पुरुषशब्दस्य कुत्रचिद्रूढत्वे अन्तस्तद्धर्मोपदेशादित्यधिकरणे आदित्ये हिरण्मयः पुरुषः श्रूयमाणः कः इति संशयानुपपत्तेः विचारवैयर्थ्यप्रसङ्गाच्चायुक्तम्।

३५ 1. ब्रह्मदृष्टिरुत्कर्षात् इति व्याससूत्रम्। अत्र किमादित्यादिदृष्टयः ब्रह्मण्यध्यसनीयाः उत ब्रह्मदृष्टिरादित्यादिषु इति सन्देहे निकृष्टे उत्कृष्टदृष्टिः कर्तव्या न तु उत्कृष्टे निकृष्टदृष्टिः, तथा सति प्रत्यवायप्रसङ्गात् राजामात्यादिषु राजदृष्टेः साफल्यात् राजनि अमात्यदृष्टेः प्रत्यवायकारित्वात् इति लौकिकन्यायात् आदित्यादिष ब्रह्मदृष्टिः कार्येत्युक्तम्। तन्न्यायेनेत्यर्थः।

**स यद्येकमात्रमभिध्यायीत स तेनैव सम्वेदितस्तूर्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ ३ ॥**

विशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुमोङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्या-वेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्तथाऽपरं च ब्रह्म। तस्मात्परं चापरं च ब्रह्म यदोङ्कार इत्युपचर्यते। तस्मादेवं विद्वानेतेनैवाऽऽत्मप्राप्तिसाधनेनैवोङ्काराभिध्यानेनैकतरं परमपरं वाऽन्वेति ब्रह्मानुगच्छति ५ नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः ॥ २ ॥

स यद्यप्योङ्कारस्य सकलमात्राविभागज्ञो न भवति तथाऽप्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति एतदेकदेशज्ञानवैगुण्यतयोङ्कारशरणः कर्मज्ञानोभयभ्रष्टो न दुर्गतिं गच्छति किं तर्हि यद्यप्येवमोङ्कारमेवैकमात्रा-विभागज्ञ एव केवलोऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैवैकमात्राविशिष्टोङ्काराभिध्यानेनैव संवेदितः सम्बोधित-स्तूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते। किं, मनुष्यलोकम्। अनेकानि हि जन्मानि जगत्यां सम्भवन्ति तत्र १० तं साधकं जगत्यां मनुष्यलोकमेवर्चं उपनयन्त उपनिगमयन्ति ऋचः। ऋग्वेदरूपा ह्योङ्कारस्य प्रथमैकमात्राभिध्याता। तेन स तत्र मनुष्यजन्मनि द्विजाग्र्यः सन् तपसा ब्रह्मचर्येण श्रद्धया च सम्पन्नो महिमानं विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति ॥ ३ ॥

मित्यवगाहितुमित्यन्वयः। तर्हीन्द्रियैर्मनसा वा तद्ग्रहोऽस्त्वित्यत आह—अतीन्द्रियेति। मनसेतीन्द्रियैर्वेत्यपि द्रष्टव्यम्। तर्हि तथाविधस्योङ्कारेऽप्यावेशासम्भवात्किञ्चिद्विशेषमारोप्याऽऽवेशो वक्तव्यः। अत एव सूर्यान्तर्गतत्वं विशेषं वक्ष्यति १५ ओङ्कारतादात्म्यं च तत्कथं निर्विशेषत्वलाभोऽत आह—ओङ्कारे त्विति। प्रसीदतीति। तदुपासनेन चित्तस्य नैर्मल्ये सति निर्विशेषं स्वयमेव प्रकाशत इत्यर्थः। तत्र मानमाह—शास्त्रेति। अन्यथा परब्रह्मार्थिनस्तदुक्तिवैयर्थ्यादित्यर्थः। तथाऽपरं चेति। प्रसीदतीत्यन्वयः। तस्मादिति। प्रतीकत्वादित्यर्थः। तस्मादेवं विद्वानिति। ब्रह्मत्वादब्रह्मत्वाहं-मिति विद्वानित्यर्थः। एतेनैवेत्यनन्तरमायतनेनाऽऽलम्बनेनेति पदद्वयं प्रमादतो गलितमिति द्रष्टव्यम्। तस्य पदस्य पिण्डितार्थमाह—ओंकारेति। न त्वेतच्छब्दार्थकथनमेतदिति द्रष्टव्यम्। अभिध्यानस्याऽऽयतनत्वाभावादितीतरो- २० पासनवदस्याप्युपासनत्वात्परप्रापकत्वं न सम्भवतीत्यत आह—नेदिष्ठमिति। मनआद्यपेक्षयेदं नेदिष्ठं समीप-वर्त्यन्तरङ्गं श्रेष्ठमालम्बन"मेतदालम्बनं श्रेष्ठमेतदालम्बनं परमि"त्यादिश्रुतेरित्यर्थः ॥ २ ॥

नेदिष्ठत्वमेव संस्तुवन्नुत्तरवाक्येण साधयति—स यदीति। विकलस्यापि फलजनकत्वान्नेदिष्ठत्वमित्यर्थः। सकलेति। अकारादिमात्रात्रयात्मक ओङ्कारः स चोपासितव्य इति न जानाति किं त्वकारमात्रमुपासितव्यं जानातीत्यर्थः। तथाऽप्येकदेशज्ञानवैगुण्यतया दुर्गतिं न गच्छति किं तर्ह्योंकाराभिध्यानप्रभावात्तदेकदेशध्यान- २५ प्रभावाद्विशिष्टामेव गतिं गच्छतीत्यन्वयः। तात्पर्यार्थमुक्त्वेदानीमक्षरार्थमाह—यद्यप्येवमिति। यदिशब्दो यद्यपीत्यर्थे व्याख्यातः। एवं च स तेनैवेत्यतः प्राक्तथाऽपीति पदं द्रष्टव्यम्। एकमात्रमिति। एकमात्रात्मकमोङ्कारमकार-मित्यर्थः। एकमात्राविशिष्टेत्यत्राप्येकमात्रात्वविशिष्टेत्यर्थः। ओङ्कारेति। तदवयवेत्यर्थः। एकमात्राप्रधानम-प्रधानीभूतमात्राद्वयं कृत्स्नमोङ्कारमिति केचिद्व्याचक्षते। दीपिकायां वाचस्पत्ये चाकारमात्रमित्येव व्याख्यातम्। सम्बोधित इति। तन्मात्राध्यानेन तन्मात्रासाक्षात्कारवानित्यर्थः। पृथिव्यां किमभिसम्पद्यत इति कर्माऽऽकाङ्क्षते— ३० किमिति। मनुष्यलोकमितिपदमिहाऽऽकृष्याऽऽकाङ्क्षां पूरयति—मनुष्यलोकमिति। मनुष्यशरीरमित्यर्थः। पृथिव्यां मनुष्यलोकस्यैव नियमात्तदुक्तिवैयर्थ्यमत आह—अनेकानि हीति। पश्वादीनि हीत्यर्थः। तर्हि तस्य नियमेन कथं मनुष्यत्वप्राप्तिरत आह—तत्र तमिति। ऋग्वेदरूपा हीति। पृथिव्यकारः स ऋग्वेद इति श्रुतेरकारस्य तद्रूपत्व-मित्यर्थः। अभिध्याताऽकाररूपा मात्रा ऋग्वेदरूपेत्यन्वयः। तेनेति। येनर्ग्वेदरूपत्वं तस्य तेनर्चो मनुष्यलोक-मुपनयन्त इत्यर्थः। वीतश्रद्ध इति। श्रद्धाविरहितः सन्नित्यर्थः। योगभ्रष्ट इति। एकदेशज्ञानविकल इत्यर्थः। अनेन ३५ न हि कल्याणकृत्कश्चिदिति गीतावाक्यसम्वादः सूचितः ॥ ३ ॥

**अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्। स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥**

**[1]यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ५ ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥**

अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारमभिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये सम्पद्यत एकाग्रतयाऽऽत्मभावं गच्छति। स एवं सम्पन्नो मृतोऽन्तरिक्षमन्तरिक्षाधारं द्वितीयमात्रारूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजूंषीत्यर्थः। स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्तते ॥ ४ ॥

१० यः पुनरेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण परं सूर्यान्तर्गतं पुरुषं प्रतीकेनाभिध्यायीत, तेनाभिध्यानेन, प्रतीकत्वेन ह्यालम्बनत्वं प्रकृतमोङ्कारस्य परं चापरं च ब्रह्मेत्यभेदश्रुतेरोङ्कारमिति च द्वितीयाऽनेकशः श्रुता बाध्येतान्यथा। यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते तथाऽपि प्रकृतानुरोधात्त्रिमात्रं

द्विमात्रेण विशिष्टमिति। द्वितीयमात्रत्वेन विशिष्टमोङ्कारं तद्गतमुकारमित्यर्थः। न तु मात्राद्वयमकारस्य पूर्वमेवोक्तत्वादत एव द्वितोयमात्रारूपमिति वक्ष्यति। श्रुतौ तृतीया द्वियीयार्थे, ओङ्कारमभिध्यायीतेत्युपक्रमादिति १५ भावः। अत्राभिध्यानं तादात्म्याभिमानपर्यन्तमिति वक्तुं मनसि सम्पद्यत इति वाक्यं, तत्र साक्षान्मनःसम्पत्तेः। साधनत्वेन वा फलत्वेन वाऽनन्वयान्मनःशब्देन तत्परिणामस्वप्नादिलक्षणाद्वारा स्वप्नयजुराद्यात्मत्वेन श्रुत्यन्तरे श्रुतोङ्कार एव लक्ष्यत इत्याह—स्वप्नात्मक इति। उकारे सम्पत्तिपर्यन्तमभिध्यानं यः करोतीति वाक्यार्थ इत्यर्थः। अत्र केचित्स यदीत्यादिर्यः पुनरित्यन्तं न स्तुतिः। किं तूक्तफलायाकारे विश्वाभिन्नविराडुपासनमुकारे तैजसाभिन्नहिरण्यगर्भोपासनं च विवक्षितमित्याहुः। तन्मते मनःशब्देनाण्डपरिणामस्वप्नाभिमानी हिरण्यगर्भ उच्यत इति वक्तुं २० स्वप्नात्मक इत्यादिविशेषणानीति बोध्यम्। दीपिकायां तु मात्राद्वयस्य मिलितस्योपासनं मनसि सम्पत्तिश्च मनसैकाग्रतया चिन्तनमिति च व्याख्यातम् ॥ ४ ॥

एवमोङ्कारं स्तुत्वा तदुपासनं परब्रह्मविषयं विधत्ते—यः पुनरिति। विज्ञानविशिष्टेनेति। विज्ञानविषयीकृतेनेत्यर्थः। मात्रात्रयात्मकज्ञानेनेति यावत्। पूर्ववदत्रापि त्रिमात्रेणेत्यत्र तृतीया मात्रा मकार उच्यत इति भ्रमं वारयितुमोमित्येतेनैवाक्षरेणेत्युक्तम्। पूर्वत्र तत्तन्मात्राप्रधान ओङ्कार एवोच्यत इति मत इहैवेदं विशेषणमनुपपन्नं २५ पूर्वत्राप्योङ्कारस्यैवोक्तत्वादिति तन्मतमनुपपन्नमिव भातीति। त्रिमात्रेणेति तृतीयाश्रवणादोङ्कारो न प्रतीकं तथा सति विषयत्वेन कर्मतया द्वितीया स्यात्किं त्वभिध्यायकत्वेन करणत्वमेव तृतीयाबलादिति भ्रमं वारयति—प्रतीकेनेति। तस्य कर्मत्वेऽपि कारकत्वेनाभिध्यानक्रियानिर्वर्तकत्वेन हेतुत्वात्तन्मात्रविवक्षया तृतीयोपपद्यत इत्यर्थः। एवं व्याख्याने हेतुमाह—प्रतीकत्वेनेति। अभेदेति। प्रतीकत्वे ह्यधिष्ठानाध्यस्यमानयोस्तादात्म्यारोपादभेदश्रवणमुपपद्यते करणत्वे तु न तदुपपद्यत इत्यर्थः। अनेकश इति। ओङ्कारमभिध्यायीत स यद्येकमात्रमभिध्यायीतेति ३० द्विवारं श्रुतेत्यर्थः। अन्यथेत्यस्य बाध्येतेत्यनेनान्वयः। अथ यदि द्विमात्रेण यः पुनरेतं त्रिमात्रेणेति च तृतीयाऽपि द्विवारं श्रुता हेतुत्वापेक्षया करणत्वेन स्वरसा च कारकविभक्तित्वात्ततस्तस्या अपि बाधो न युक्त इति शङ्कते—यद्यपीति। द्वितीयाद्वयस्यापि कर्मत्वे स्वारस्यादुपक्रमस्थत्वाच्च[2] तस्यैव प्राबल्यमित्याह—तथाऽपीति। प्रकृतेति।

---

१. अत्र एकमात्रद्विमात्रप्रणवोपासनं न विधित्सितमिति परिमलेऽभिहितम्—सर्वस्यापि परब्रह्माभेदविशिष्टत्रिमात्रोपासनविध्यर्थवादतयाऽन्वयेन एकवाक्यत्वात्। ओङ्कारस्यायं महिमा, यत् मात्रावैगुण्येनोपास्यमानोऽपि मनुष्यलोकान्तरिक्षलोकप्राप्तिफलो भवति। अतोऽल्पफलं हेयमपरं ब्रह्म विहाय परब्रह्मतया ३५ त्रिमात्र एवोपासनीय इति स्तुतिः।

२. एतेन पूर्वमीमांसास्थः उपक्रमन्यायस्सूचितः ( ३-३-१ )।

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः॥ ६॥
ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते। तमो-
ङ्कारेणैवाऽऽयतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति॥ ७॥

इत्यथर्ववेदीयप्रश्नोपनिषदि पञ्चमः प्रश्नः　५

१० परं पुरुषमिति द्वितीयैव परिणेया [1]त्यजेदेकं कुलस्यार्थं इति न्यायेन, स तृतीयमात्रारूपस्तेजसि सूर्ये सम्पन्नो भवति ध्यायमानः। मृतोऽपि सूर्यात्सोमलोकादिवन्न पुनरावर्तते किंतु सूर्ये सम्पन्नमात्र एव। यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वा एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धि-रूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रारूपैरूर्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं सत्याख्यम्। स हिरण्य-गर्भः सर्वेषां संसारिणां जीवानामात्मभूतः। स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानां तस्मिन्हि लिङ्गात्मनि संहताः सर्वे　१० जीवाः। तस्मात्स जीवघनः। स विद्वांस्त्रिमात्रोङ्काराभिज्ञ एतस्माज्जीवघनाद्धिरण्यगर्भात्परात्परं परमात्माख्यं पुरुष-मीक्षते पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्यायमानः। तदेतौ एतस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः॥ ५॥

तिस्रस्त्रिसंख्याका अकारोकारमकाराख्या ओङ्कारस्य मात्राः। मृत्युमत्यः, मृत्युर्यासां विद्यते ता मृत्यु-मत्यो मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थः। ताः आत्मनो ध्यानक्रियासु प्रयुक्ताः। किञ्चान्योन्यसक्ता इतरेतरसम्बद्धाः। अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ता विप्रयुक्ताः। न तथा विप्रयुक्ता अविप्रयुक्ता　१५ नाविप्रयुक्ता अनविप्रयुक्ताः किं तर्हि विशेषेणैकस्मिन्ध्यानकाले तिसृषु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्न-सुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक्प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलति ज्ञो योगी यथोक्तविभागज्ञ ओङ्कारस्येत्यर्थः। न तस्यैवंविदश्चलनमुपपद्यते। यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रा-त्रयरूपेणोङ्कारात्मरूपेण दृष्टाः स ह्येवं विद्वान्सर्वात्मभूत ओङ्कारमयः कुतो वा चलेत्कस्मिन्वा॥ ६॥

सर्वार्थसंग्रहार्थो द्वितीयो मन्त्रः—ऋग्भिरेतं लोकं मनुष्योपलक्षितम्। यजुर्भिरन्तरिक्षं सोमाधिष्ठितम्।　२०

प्रक्रमानुरोधादित्यर्थः। किञ्च द्वितीयाद्वयमुक्ताभेदश्रुतिः एतेनैवाऽऽयतनेनैकतरमन्वेति आयतनेनैवान्वेतीत्यालम्बन-वाच्यायतनश्रुतिद्वयं चेति बहुश्रुत्यनुरोधेन तृतीयाद्वयं त्याज्यमित्याह—त्यजेदेकमिति। तृतीयमात्रारूप इति। यद्यपि मात्रात्रयध्यानान्मात्रात्रयरूपित्वमेव तस्य तथाऽपि तृतीयमात्राया एवेहासाधारण्यात्तत्प्राधान्येन निर्देश इति बोध्यम्। तृतीयमात्रारूप इति सप्तम्यन्तपाठे तत्सूर्यविशेषणं मकारस्याऽऽदित्यात्मकत्वादिति। हिरण्यगर्भस्य जीव-घनत्वमनागतावेक्षणन्यायेनोपपादयति—स हिरण्यगर्भ इति। लिङ्गरूपेणेति। समष्टिलिङ्गरूपेणेत्यर्थः। तस्मिन्हीति।　२५ समष्टिलिङ्गात्मनि हिरण्यगर्भे व्यष्टिलिङ्गाभिमानिनः सर्वे जीवा गोत्वसामान्ये [2]खण्डमुण्डादय इव संहता इत्यर्थः। इदानीं वाक्यं योजयति—स विद्वानिति। स विद्वानिदानीं ध्यायमानः पश्चाद्ब्रह्मलोकं प्राप्तः। तत्र ब्रह्मलोके स्थावरजङ्गमेभ्यः पराज्जीवघनात्परं पुरुषं पश्यति ततो मुक्तो भवतीत्यन्वयः॥ ५॥

तत्र यः पुनरेतमित्यादिनोक्तेऽर्थे आद्यं मन्त्रं योजयति—तिस्र इति। मृत्युगोचरा इति। प्रत्येकं ब्रह्मदृष्टिं च विना तदुपासकानां मृत्य्वनतिक्रमादित्यर्थः। ब्रह्मदृष्ट्या संश्लिष्टत्वेन च सम्भूय च प्रयुक्ताश्चेन्नायं दोष इत्याह—　३० किञ्चेति। जाग्रदिति। जाग्रत्पुरुषो वैश्वानराभिन्नो विश्वस्तत्स्थानं स्थूलशरीरं जागरितं च। स्वप्नपुरुषस्तु हिरण्य-गर्भाभिन्नस्तैजसस्तत्स्थानं लिङ्गशरीरं स्वप्नश्च। सुषुप्तावीश्वरात्मा प्राज्ञस्तत्स्थानमव्याकृतं सुषुप्तिश्च। तेषा-मकारादितादात्म्येन यदभिध्यानं तल्लक्षणासु योगक्रियासु प्रयुक्तास्वन्योन्यसक्ता अनविप्रयुक्तास्तिस्रो मात्राः प्रयुक्ताश्चेन्न कम्पत इत्यन्वयः। अनेन सर्वात्मके परब्रह्मणीश्वर ओङ्काराभेदेन ध्यानमुक्तम्। यथोक्तेति। तिस्रो मात्रा इति श्लोकोक्तविभाग इत्यर्थः। कुतो वेति। चलनं विक्षेपः स्वस्य सर्वात्मत्वेन स्वव्यतिरिक्ताभावाच्चलनं　३५ न सम्भवतीति कुतो हेतोः कस्मिन्वा विषये चलेदित्यर्थः॥ ६॥

---

१. त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत्॥
इति न्यायः। भूयोऽनुग्रहन्याय एवायम्। मुख्यन्यायश्च।
२. खण्डः विकलाङ्गः मुण्डः शृङ्गहीनः।

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ ।

[1]भगवन्हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं ५ स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्यावन्त एव नाविद्वांसो वेदयन्ते । तं त्रिविधं लोकमोङ्कारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान् । तेनैवोङ्कारेण यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपञ्चविवर्जितमत एवाजरं जरावर्जितममृतं मृत्युवर्जितमत एव यस्माज्जराविक्रिया-रहितमतोऽभयम् । यस्मादेवाभयं तस्मात्परं निरतिशयम् । तदप्योङ्कारेणाऽऽयतनेन गमनसाधनेनान्वेतीत्यर्थः । १० इतिशब्दो वाक्यपरिसमाप्त्यर्थः ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ प्रश्नोपनिषद्भाष्ये पञ्चमः प्रश्नः

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ, समस्तं जगत्कार्यकारणलक्षणं सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले सम्प्रतिष्ठित इत्युक्तम् । सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे सम्प्रतिष्ठते जगत्तत एवोत्पद्यत इति सिद्धं भवति १५ न ह्यकारणे कार्यस्य सम्प्रतिष्ठानमुपपद्यते । उक्तं च—"आत्मन एष प्राणो जायते" इति । जगतश्च यन्मूलं तत्परिज्ञानात्परं श्रेय इति सर्वोपनिषदां निश्चितोऽर्थः । अनन्तरं चोक्तं स सर्वज्ञः सर्वो भवतीति । वक्तव्यं च क्व तर्हि तदक्षरं सत्यं पुरुषाख्यं विज्ञेयमिति । तदर्थोऽयं प्रश्न आरभ्यते । वृत्तान्वाख्यानं च विज्ञानस्य दुर्लभत्वख्यापनेन तल्लब्ध्यर्थं मुमुक्षूणां यत्नविशेषोत्पादनार्थम् ।

हे भगवन्हिरण्यनाभो नामतः कोसलायां भवः कौसल्यो राजपुत्रो जातितः क्षत्त्रिय मामुपेत्योपगम्यैतमुच्य-२० मानं प्रश्नमपृच्छत । षोडशकलं षोडशसंख्याकाः कला अवयवा इवाऽऽत्मन्यविद्याध्यारोपितरूपा यस्मिन्पुरुषे सोऽयं

अपरब्रह्मप्राप्त्यर्थं य ओङ्कारः प्रयुक्तस्तेनैव न पृथक्प्रयुक्तः परमपि प्राप्नोति; ब्रह्मलोक उत्पन्ननिर्विशेष-ब्रह्मसाक्षात्कारेणोक्तस्योङ्कारस्य क्रममुक्तिफलत्वादित्याह—तेनैवेति। येनापरमन्वेति तेनैव परमप्यन्वेतीत्येवकारार्थं इत्यर्थः । तदप्योङ्कारेणेत्यायतनविशेषणार्थं पुनरोङ्कारग्रहणमिति न पुनरुक्तिरिति बोध्यम् ॥ ७ ॥

इति श्रीमदानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां पञ्चमः प्रश्नः

२५ गताः कलाः पञ्चदश प्रतिष्ठाः कर्माणि विज्ञानमयश्चेति मन्त्रे कर्मभिः सह षोडशकलानां परस्मिन् लयमुक्त्वा यथा नद्यः स्यन्दमाना इति मन्त्रेण दृष्टान्तोक्तिद्वारा परप्राप्तिरुक्ता। तन्मन्त्रयोर्विस्तराभिधानार्थं षष्ठं प्रश्नमारभते—**अथ हैनमिति** । तस्य पूर्वेण संगतिमुक्तार्थानुवादपूर्वकमाह—**समस्तमित्यादिना**। अक्षरस्य कारणत्वसिद्ध्यर्थं प्रलयेऽपि तस्मिन्नेव लयमाह—**सामर्थ्यादिति** । लयाधारत्वेन कारणत्वमाह—**तत इति** । तदुक्तेः प्रयोजनमाह—**जगत इति** । यद्यप्यद्वितीयात्मज्ञानान्मुक्तिर्न कारणज्ञानात्तथापि तस्य कारणत्वे तद्व्यतिरेकेण कार्याभावात्तदद्वितीयत्वज्ञानं ३० सिध्यतीति तादृशात्मज्ञानात्परं श्रेय इति । आत्मा वा इदमेक एव । स एतमेव पुरुषं ब्रह्म ततममपश्यत् । प्रज्ञानं ब्रह्म । स एतेन प्रज्ञेनाऽऽत्मनाऽमृतः समभवत् । सदेवैकमेवाद्वितीयमित्युपक्रम्याऽऽचार्यवान्पुरुषो वेद, अथ सम्पत्स्ये, तमेवैकं जानथ । अमृतस्यैष सेतुः, अहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदित्यादिषु निश्चितमित्यर्थः । इहापि तादृगात्मज्ञानादेव सर्वात्मभावः श्रेय उक्त इत्याह—**अनन्तरमिति** । वृत्तमनूद्य वर्तिष्यमाणमाह—**वक्तव्यमिति** । **तदर्थोऽयमिति** । तस्य शरीरान्तःस्थत्वोक्तिद्वारा तस्य प्रत्यगात्मत्वज्ञानार्थमित्यर्थः । **प्रश्नमिति**। प्रष्टव्यमित्यर्थः ।

---

३५ १. अत्र परैः षोडशकलः पुरुषो जीव एवेति व्याख्याय तेन प्राणादिकलाः कथं सृज्यन्ते ईश्वरः खलु तेषां स्रष्टेत्याशङ्क्य अदृष्टद्वारा जीवस्य ईश्वरकृतकलासृष्टिहेतुत्वमिति परिहृतम् । ततः इमाः कलाः पुरुषं प्राप्यास्तं गच्छन्तीत्यत्र पुरुषं महाविष्णुं प्राप्यास्तं गच्छन्ति । तत्राप्यस्तगमनं न नाशः अपि तु

**तस्मै स होवाच। इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥**

षोडशकलस्तं षोडशकलं हे भारद्वाज पुरुषं वेत्थ विजानासि । तमहं राजपुत्रं कुमारं पृष्टवन्तमब्रुवमुक्तवानस्मि नाहमिमं वेद यं त्वं पृच्छसीति। एवमुक्तवत्यपि मय्यज्ञानमसम्भावयन्तं तमज्ञाने कारणमवादिषम्। यदि कथञ्चिदहमिमं त्वया पृष्टं पुरुषमवेदिषं विदितवानस्मि कथमत्यन्तशिष्यगुणवतेऽर्थिने ते तुभ्यं नावक्ष्यं नोक्तवानस्मि न ब्रूयामित्यर्थः। भूयोऽप्यप्रत्ययमिवाऽऽलक्ष्य प्रत्याययितुमब्रुवम्। समूलः सह मूलेन वा एषोऽन्यथा सन्तमात्मानमन्यथा कुर्वन्ननृतमयथाभूतार्थमभिवदति यः स परिशुष्यति शोषमुपैतीहलोकपरलोकाभ्यां विच्छिद्यते विनश्यति। यत एवं जाने तस्मान्नार्हाम्यहमनृतं वक्तुं मूढवत्। स राजपुत्र एवं प्रत्यायितस्तूष्णीं व्रीडितो रथमारुह्य प्रवव्राज प्रगतवान्यथागतमेव। अतो न्यायत उपसन्नाय योग्याय जानता विद्या वक्तव्यैवानृतं च न वक्तव्यं सर्वास्वप्यवस्थास्वित्येतत्सिद्धं भवति। तं पुरुषं त्वा त्वां पृच्छामि मम हृदि विज्ञेयत्वेन शल्यमिव मे हृदि स्थितं क्वासौ वर्तते विज्ञेयः पुरुष इति ॥ १ ॥

तस्मै स होवाच। इहैवान्तःशरीरे हृदयपुण्डरीकाकाशमध्ये हे सोम्य स पुरुषो न देशान्तरे विज्ञेयो यस्मिन्नेता उच्यमानाः षोडश कलाः प्राणाद्याः प्रभवन्त्युत्पद्यन्त इति, षोडशकलाभिरुपाधिभूताभिः सकल इव निष्कलः पुरुषो लक्ष्यतेऽविद्ययेति तदुपाधिकलाध्यारोपापनयेन विद्यया स पुरुषः केवलो दर्शयितव्य इति कलानां तत्प्रभवत्वमुच्यते प्राणादीनाम्, अत्यन्तनिर्विशेषे ह्यद्वये शुद्धे तत्त्वे न शक्योऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारः कर्तुमिति कलानां प्रभवस्थित्यप्यया आरोप्यन्तेऽविद्याविषयाश्चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्यः प्रलीयमानाश्च सर्वदा लक्ष्यन्ते। अत एव भ्रान्ताः केचिदग्निसंयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षणं जायते नश्यतीति। तन्निरोधे शून्यमिव सर्वमित्यपरे। घटादिविषयं चैतन्यं चेतयितुर्नित्यस्याऽऽत्मनोऽनित्यं जायते विनश्यतीत्यपरे। चैतन्यं भूतधर्म इति लोकायतिकाः।

अज्ञाने कारणमिति। अज्ञानसम्भावनायां कारणमित्यर्थः। अप्रत्ययमिति। अविश्वासमित्यर्थः। अन्यथा सन्तमिति। ज्ञानिनं सन्तमन्यथा कुर्वन्नज्ञानिनं कुर्वन्नारोपयन्नित्यर्थः। कथं ते न वक्ष्यमित्यनेन सूचितमर्थमाह— अत इति। समूलो वा इत्यनेन सूचितमाह—अनृतं चेति। स्वरूपेण शल्यत्वाभावादाह—विज्ञेयत्वेनेति। यावज्जिज्ञासितं न ज्ञायते तावत्तद्धृदि शल्यवद्भासत इति शल्यमिवेत्युक्तम् ॥ १ ॥

पुरुषस्य षोडशकलत्वं न साक्षात्सावयवत्वेन किन्तु कलाजनकत्वेन तदुपाधिमत्त्वादिति वक्तुं यस्मिन्नेता इति वाक्यमिति तत्तात्पर्यमाह—षोडशकलाभिरिति। ननु केवल आत्मा प्रदर्श्यतां किं वक्ष्यमाणकलोक्त्येत्यत आह—तदुपाधीति। तथैव स प्रदर्शनीय इत्यत्र हेतुमाह—अत्यन्तेति। अविद्याविषया इति। अविद्याधीना इत्यर्थः। कालत्रयेऽपि तासां चैतन्यरूपाधिष्ठानाव्यतिरेकाद्रज्जुसर्पवन्मृषात्वमित्यविद्याविषयत्वं साधयति—चैतन्येति। चैतन्याव्यतिरेकेण लक्ष्यमाणत्वं हेतुं विज्ञानवादिभ्रान्त्या दृढीकरोति—अत एवेति। घृतं यथाऽग्निसंयोगाद्द्रवावस्थां प्रतिपद्यत एवमहमाकारमालयविज्ञानमेव वासनावशाद्विषयाकारेण जायत इति वदतां तेषां भ्रमो विषयस्य चैतन्याव्यतिरेके प्रत्ययं गमयति, अन्यथा तथाभ्रमानुपपत्तेरित्यर्थः। विषयाणां चैतन्याव्यतिरेकेण प्रतीतिनियमादेव विषयविज्ञानरूपेण चैतन्याभावे सुषुप्त्यादौ शून्यभ्रमो जातः केषांचिदिति तदीयभ्रान्त्याऽपि चैतन्याव्यतिरिक्तप्रतीतिं दृढीकरोति—तन्निरोध इति। चैतन्यस्यानित्यस्य कलारोपाधिष्ठानत्वं न सम्भवति कलाकार्यत्वादिति नैयायिकपक्षोक्तिव्याजेन शङ्कते—घटादीति। भूतधर्म इति। देहाकारेण संहतभूतधर्म इत्यर्थः।

---

भोगानाधायकत्वम्। तत्तु पुरुषं जीवमारम्भे उक्त्वा तस्यैव पुरुषायणा इत्यत्रोक्तिसम्भवे शाखान्तरधावनं न शोभावहम्। स एषोऽकलः अमृत इत्यपि परमात्मपरम् इत्युक्तम्, एवं सति ब्रह्म परिद्रष्टुः जीवस्य फलवचनं नास्तीत्यायातम्। अपि च अरा इवेत्यादि श्लोकोऽपि परमात्मपरतयैव व्याख्यातः। तत्रैवं सति षोडशकलः पुरुषो जीवः य उपक्रान्तः तस्य कलाप्रतिष्ठात्वं पुरुषत्वं मृत्युपरिहाराय वेद्यत्वं च प्रतीयमानं सर्वमपलपितं भवति। अपि च षोडशकलपुरुषवेदनाय प्रश्नः, न तु परमात्मवेदनाय। स च मध्ये परित्यक्तः। अद्वैतेऽन्यदपि स्वारस्यम्, यत् जीवमुपक्रम्य एतावदेवाहमेतत्परं ब्रह्म वेद इति महर्षिणा ब्रह्माणि समापनम्। तेनैवाद्वैतवादोऽत्र विवक्षित इति स्पष्टम्।

अनपायोपजनधर्मकचैतन्यमात्मैव नामरूपाद्युपाधिधर्मैः प्रत्यवभासते। सत्यं ज्ञानमनन्तं ब्रह्म। प्रज्ञानं ब्रह्म विज्ञानमानन्दं ब्रह्म। विज्ञानघन एवेत्यादिश्रुतिभ्यः। स्वरूपव्यभिचारिषु पदार्थेषु चैतन्यस्याव्यभिचाराद्यथा यथा यो यः पदार्थो विज्ञायते तथा तथा ज्ञायमानत्वादेव तस्य तस्य चैतन्यस्याव्यभिचारित्वं, वस्तुतत्त्वं भवति किञ्चिन्न ज्ञायत इति चानुपपन्नम्।

५ रूपं च दृश्यते न चास्ति चक्षुरिति यथा। व्यभिचरति तु ज्ञेयं ज्ञानं न व्यभिचरति कदाचिदपि ज्ञेयम्। ज्ञेयाभावेऽपि ज्ञेयान्तरे भावाज्ज्ञानस्य। न हि ज्ञानेऽसति ज्ञेयं नाम भवति कस्यचित्। सुषुप्तेऽदर्शनाज्ज्ञानस्यापि सुषुप्तेऽभावाज्ज्ञेयवज्ज्ञानस्वरूपस्य व्यभिचार इति चेन्न। ज्ञेयावभासकस्य ज्ञानस्याऽऽलोकवज्ज्ञेयाभिव्यञ्जकत्वात्स्व-व्यङ्ग्याभाव आलोकाभावानुपपत्तिवत्सुषुप्ते विज्ञानाभावानुपपत्तेः।

न ह्यन्धकारे चक्षुषा रूपानुपलब्धौ चक्षुषोऽभावः शक्य कल्पयितुं वैनाशिकेन। वैनाशिको ज्ञेयाभावे १० ज्ञानाभावं कल्पयत्येवेति चेद्येन तदभावं कल्पयेत्तस्याभावः केन कल्प्यत इति वक्तव्यं वैनाशिकेन।

तदभावस्यापि ज्ञेयत्वाज्ज्ञानाभावे तदनुपपत्तेः। ज्ञानस्य ज्ञेयाव्यतिरिक्तत्वाज्ज्ञेयाभावे ज्ञानाभाव इति चेन्न।

चैतन्यस्याऽऽरोपाधिष्ठानत्वसिद्धयर्थं नित्यत्वमेकत्वं च वदंस्तान्निराकरोति—अनपायेति। प्रत्यवभासत इति। नानात्वेन कार्यत्वेन चेति शेषः। सत्यं ज्ञानमिति। तथा च श्रुतिविरोधात्ते पक्षा हेया इत्यर्थः। किञ्च ज्ञान-काले विषयाणां सद्भावनियमाभावाद्विषयकाले च ज्ञानस्य सद्भावनियमात्तयोर्भेद इति विज्ञानवादिपक्षं निराकुर्वन्न-१५ व्यभिचारादेव ज्ञानस्य नित्यत्वं सावयवनैयायिकादिपक्षमपि निराकरोति—स्वरूपेति। घटज्ञानकाले पटाभावसम्भवा-द्विषयाणां ज्ञानव्यभिचारित्वं ज्ञानस्य तु विषयकालेऽवश्यंभावनियमादव्यभिचारित्वमित्यर्थः। पटकाले घटज्ञानमपि नास्तीति घटज्ञानस्यापि पटविषयव्यभिचारित्वं तुल्यमित्याशङ्क्य स्वरूपेत्युक्तम्। ज्ञानस्य विषयविशिष्टस्वरूपेणैव व्यभिचारः। विषयस्य तु स्वरूपेणैवेति विशेष इत्यर्थः। ज्ञानस्याव्यभिचारित्वमुपपादयति—यथा यथेति। ननूत्पन्न-विनष्टादेर्मेरुगुहान्तर्वर्तिनश्चाज्ञायमानत्वाज्ज्ञानस्यापि ज्ञेयाव्यभिचारोऽसिद्ध इत्याशङ्क्य तस्याज्ञाने तत्सद्भावा-२० सिद्धेस्तथाभूतपदार्थोऽसिद्ध इत्याह—वस्तुतत्त्वेति।

अनुपपत्तिमेव दृष्टान्तेन स्फुटीकरोति—रूपं चेति। ज्ञेयस्य ज्ञानव्यभिचारित्वं ज्ञानकाले सत्त्वनियमाभावरूपं स्पष्टमित्याह—व्यभिचरति त्विति। घटज्ञानकाले कदाचित्पटाभावादित्यर्थः। पटकाले घटज्ञानस्यापि व्यभिचारस्तुल्य इत्याशङ्क्य विशिष्टरूपेण व्यभिचारेऽपि स्वरूपेणाव्यभिचारं पूर्ववत्सूचितमाह—न व्यभिचरतीति। ज्ञान-मित्यस्येहाप्यनुषङ्गः। पूर्ववाक्ये द्वितीयान्तमिह तु प्रथमान्तमिति विशेषः। भावादिति। स्वरूपेणेत्यर्थः। ज्ञानस्य २५ स्वरूपेण सत्तामेव ज्ञेयान्तरस्य ज्ञेयत्वादेव साधयति—न हीति। स्वरूपेणाप्यभावं शङ्कते—सुषुप्त इति। किं तदानीं ज्ञेयाभावेन ज्ञानाभावः साध्यत उत ज्ञानस्यादर्शनाद्वाऽऽद्येऽपि ज्ञेयस्य व्यङ्ग्यत्वात्तदभावाद्व्यञ्जकाभाव इति वोत तयोरैक्यादेकाभाव इतराभाव इति। नाऽऽद्यो व्यभिचारादित्याह—न ज्ञेयेति।

व्यङ्ग्यज्ञानैककल्प्यस्य व्यङ्ग्याभावेऽभाव उच्यत आलोकस्य प्रत्यक्षसिद्धत्वान्नैवमिति ज्ञानानुमेयत्ववादिनं प्रति दृष्टान्तान्तरमाह—न हीति। वैनाशिकमते विज्ञानव्यतिरिक्तालोकाद्यभावान्न व्यभिचार इति शङ्कते—वैनाशिक ३० इति। कल्पयत्येवेति। उक्तव्यभिचारस्थलाभावेन व्यभिचाराभावादित्यर्थः। एवमपि ज्ञानाभावकल्पकस्य ज्ञेयाभावस्य ज्ञानमङ्गीक्रियते न वा। आद्ये न ज्ञानाभावसिद्धिस्तस्यैवाभावज्ञानस्य सत्त्वादित्याह—येनेति। येन ज्ञेयाभाव-ज्ञानेन तदभावं ज्ञानाभावं कल्पयेत्तस्य ज्ञानस्याभावः केन कल्प्यते न केनापि कल्पयितुं शक्य इत्यर्थः।

न द्वितीय इत्याह—तदभावस्यापीति। ज्ञेयाभावस्याप्यज्ञातस्य ज्ञानाभावकल्पकत्वासम्भवादवश्यं ज्ञेयत्वात्त-ज्ज्ञानाभावे तदनुपपत्तेः कल्पनानुपपत्तेर्ज्ञानानङ्गीकारपक्षो न युक्त इत्यर्थः। आद्यकोटौ द्वितीयकल्पं शङ्कते—३५ ज्ञेयेति। वैनाशिकमतेऽप्यभावस्य ज्ञेयत्वाभ्युपगमादबुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तदिति प्रतिसंख्याऽप्रति-संख्यानिरोधाकाशरूपत्रयव्यतिरिक्तस्यैव[1] क्षणिकत्वेन निरोधशब्दितस्याभावस्य नित्यत्वाङ्गीकारेण तदभिन्नस्य ज्ञानस्यापि सुषुप्ते सत्त्वं नित्यत्वं च प्राप्तमित्याह—नाभावस्येति। ज्ञानस्याभावाभिन्नत्वेनाभावत्वमेव स्यान्न तु

---

१. प्रतिसंख्यानिरोधः बुद्धिपूर्वकृतो नाशः। अप्रतिसंख्यानिरोधः तद्विपरीतः एतद्द्वयमाकाशश्च—नित्यत्वेन बौद्धा मन्यन्ते।

**अभावस्यापि ज्ञेयत्वाभ्युपगमादभावोऽपि ज्ञेयोऽभ्युपगम्यते वैनाशिकैर्नित्यश्च तदव्यतिरिक्तं चेज्ज्ञानं नित्यं कल्पितं स्यात्तदभावस्य च ज्ञानात्मकत्वादभावत्वं वाङ्मात्रमेव न परमार्थतोऽभावत्वमनित्यत्वं च ज्ञानस्य। न च नित्यस्य ज्ञानस्याभावनाममात्राध्यारोपे किञ्चिन्नश्छिन्नम्।**

**अथाभावो ज्ञेयोऽपि सन् ज्ञानव्यतिरिक्त इति चेत्, न तर्हि ज्ञेयाभावे ज्ञानाभावः। ज्ञेयं ज्ञानव्यतिरिक्तं न तु ज्ञानं ज्ञेयव्यतिरिक्तमिति चेन्न। शब्दमात्रत्वाद्विशेषानुपपत्तेः। ज्ञेयज्ञानयोरेकत्वं चेदभ्युपगम्यते ज्ञेयं ज्ञानव्यतिरिक्तं ज्ञानं ज्ञेयव्यतिरिक्तं नेति तु शब्दमात्रमेतद्वह्निरग्निव्यतिरिक्तोऽग्निर्न वह्निव्यतिरिक्त इति यद्वदभ्युपगम्यते, ज्ञेयव्यतिरेके तु ज्ञानस्य ज्ञेयाभावे ज्ञानाभावानुपपत्तिः सिद्धा।** ५

**ज्ञेयाभावेऽदर्शनादभावो ज्ञानस्येति चेन्न। सुषुप्ते ज्ञप्त्यभ्युपगमात्। वैनाशिकैरभ्युपगम्यते हि सुषुप्तेऽपि ज्ञानास्तित्वं, तत्रापि ज्ञेयत्वमभ्युपगम्यते ज्ञानस्य स्वेनैवेति चेन्न। भेदस्य सिद्धत्वात्। सिद्धं ह्यभावविज्ञेयविषयस्य ज्ञानस्याभावज्ञेयव्यतिरेकाज्ज्ञेयज्ञानयोरन्यत्वम्।** १०

**न हि तत्सिद्धं मृतमिवोज्जीवयितुं पुनरन्यथा कर्तुं शक्यते वैनाशिकशतैरपि। ज्ञानस्य ज्ञेयत्वमेवेति तदप्यन्येन तदप्यन्येनेति त्वत्पक्षेऽतिप्रसङ्ग इति चेन्न। तद्विभागोपपत्तेः सर्वस्य। यदा हि सर्वं ज्ञेयं कस्यचित्तदा तद्व्यतिरिक्तं ज्ञानं ज्ञानमेवेति द्वितीयो विभाग एवाभ्युपगम्यतेऽवैनाशिकैर्न तृतीयस्तद्विषय इत्यनवस्थानुपपत्तिः।**

भावत्वेन सत्त्वं नित्यत्वं च स्यादित्याशङ्क्याभावस्यापि ज्ञानाभिन्नत्वेऽभावत्वमेव न स्यादित्याह—**तदभावस्येति**। अनित्यत्वं च ज्ञानस्येति वाङ्मात्रमेव स्यादित्यनुषङ्गः। वाङ्मात्रेणाप्यभावस्याभावत्वेन ज्ञानानित्यत्वेन चास्मत्सिद्धान्त- १५ सिद्धिरित्याशङ्क्य नाममात्रेण तेन वास्तवनित्यत्वादिविरोधाभावान्नास्माकं क्षतिरित्याह—**न चेति**। **अभावनामेति**। अनित्यनामेत्यपि द्रष्टव्यम्।

एतद्दोषपरिहारार्थं ज्ञेयस्यापि सतोऽभावस्य ज्ञानाभेदो नाङ्गीक्रियत इति शङ्कते—**अथेति**। तर्हि ज्ञेयाभिन्नत्वेन हेतुना सुषुप्ते ज्ञानाभावो न सिध्यति घटाद्यभावेन तज्ज्ञानाभावसिद्धावप्यभावज्ञानाभावासिद्धेस्तस्याभिन्नत्वाभावादित्याह—**न तर्हीति**। यद्वाऽभावस्य ज्ञेयस्य ज्ञानाद्भेदे भावस्यापि तथात्वं स्याद्विशेषहेत्वभावात्तथाच २० न ज्ञेयाभावाज्ज्ञानाभावसिद्धिरित्याह—**न तर्हीति**। ननु ज्ञेयस्य ज्ञानव्यतिरिक्तत्वमङ्गीक्रियते तथाचाभावस्य ज्ञानव्यतिरिक्तत्वादभावत्वादिकं सिध्यति। ज्ञानस्य तु न ज्ञेयव्यतिरिक्तत्वम्। तथा च ज्ञेयाभावे ज्ञानाभावसिद्धिरिति निरुद्धगतिकः शङ्कते—**ज्ञेयमिति**। ज्ञानस्य ज्ञेयाव्यतिरेके ज्ञेयस्यापि तदव्यतिरेकावश्यंभावादन्यथोभयोरत्यन्तभेद एव स्याद्भेदाभेदयोर्विरोधादनुपपत्तेरिति दूषयति—**न शब्दमात्रत्वादिति**। इदमुपलक्षणम्। ज्ञानस्याभावाव्यतिरेकेण नित्यत्वादिकं च स्यादेवेत्यपि द्रष्टव्यम्। यद्येतद्दोषपरिहाराय तस्यापि भेद एवाङ्गीक्रियते तर्हि न सुषुप्तौ ज्ञाना- २५ भावसिद्धिरित्युपसंहरति—**ज्ञेयव्यतिरेके त्विति**।

सुषुप्ते ज्ञानस्यादर्शनादेवाभाव इत्याद्ये द्वितीयं शङ्कते—**ज्ञेयाभाव इति**। आलयविज्ञानसन्ततेर्नित्यत्वाङ्गीकारेण त्वया तदाऽपि तदभावो वक्तुं न शक्यत इत्याह—**न सुषुप्त इति**। **अस्तित्वमिति**। तथाच ज्ञानस्यादर्शनमसिद्धं सुषुप्तेऽपि तदङ्गीकारादित्यर्थः। ननु ज्ञेयाभावेन तन्निरूप्यस्य ज्ञानस्यादर्शनमित्युच्यते मया। सुषुप्ते च स्वस्यैव स्व ज्ञेयत्वाज्ज्ञानदर्शनमुपपद्यतेऽस्मन्मते। त्वन्मते तु स्वज्ञेयत्वानङ्गीकारात्सुषुप्ते चान्यस्याभावान्निरूपकाभावान्न ३० ज्ञानदर्शनास्तित्वमुपपद्यते इति शङ्कते—**तत्रापीति**। अभावस्थले ज्ञानज्ञेययोर्भेदस्य साधितत्वात्तद्दृष्टान्तेन सर्वत्र ज्ञानज्ञेययोर्भेदसाधनान्न स्वज्ञेयत्वं ज्ञानस्येत्याह—**न भेदस्येति**। अभावरूपो ज्ञेयो विषयो यस्य तस्य ज्ञानस्याभावरूपो यो ज्ञेयस्तद्व्यतिरेकादित्यर्थः।

अभावस्थले भेदेऽपि न सर्वत्रेत्याशङ्क्य न्यायस्य तुल्यत्वान्न तदन्यथा कर्तुं शक्यमित्याह—**न हीति**। ज्ञानस्य स्वव्यतिरिक्तज्ञेयत्वनियमपक्षेऽनवस्थां वैनाशिकः शङ्कते—**ज्ञानस्येति**। ज्ञेयस्य स्वव्यतिरिक्तज्ञेयत्वनियमाङ्गी- ३५ कारादस्मन्मते च ज्ञानस्य ज्ञेयत्वानङ्गीकारान्न दोष इत्याह—**न तदिति**। सर्वस्य वस्तुजातस्य विभागोऽसङ्करो ज्ञानं ज्ञानमेव न ज्ञेयं, ज्ञेयमपि ज्ञेयमेव, न कदाचिदपि ज्ञानमित्येवंरूपस्तस्योपपत्तेरित्यर्थः। अथवा द्विभागोपपत्तेरिति च्छेदः। ज्ञानज्ञेयरूपभागद्वयमेव राशिद्वयमेवाङ्गीक्रियते न तृतीयो ज्ञानविषयकज्ञानरूपो भावराशिरङ्गीक्रियत

**ज्ञानस्य स्वेनैवाविज्ञेयत्वे सर्वज्ञत्वहानिरिति चेत्सोऽपि दोषस्तस्यैवास्तु किं तन्निबर्हणेनास्माकमनवस्थादोषश्च, ज्ञानस्य ज्ञेयत्वाभ्युपगमादवश्यं च वैनाशिकानां ज्ञानं ज्ञेयम्।**

**स्वात्मना चाविज्ञेयत्वेनानवस्थाऽनिवार्या। समान एवायं दोष इति चेन्न। ज्ञानस्यैकत्वोपपत्तेः। सर्वदेशकालपुरुषाद्यवस्थमेकमेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात्सवित्रादिजलादिप्रतिबिम्बवदनेकधाऽवभासत इति नासौ दोषः।**

५ **तथा चेहेदमुच्यते।**

**ननु श्रुतेरिहैवान्तःशरीरे परिच्छिन्नः कुण्डबदरवत्पुरुष इति; न। प्राणादिकलाकारणत्वात्। न हि शरीरमात्रपरिच्छिन्नस्य प्राणश्रद्धादीनां कलानां कारणत्वं प्रतिपत्तुं शक्नुयात्। कलाकार्यत्वाच्च शरीरस्य। न हि पुरुषकार्याणां कलानां कार्यं सच्छरीरं कारणकारणं स्वस्य पुरुषं कुण्डबदरमिवाभ्यन्तरीकुर्यात्, बीजवृक्षादिवत्स्यादिति चेत्। यथा बीजकार्यं वृक्षस्तत्कार्यं च फलं स्वकारणकारणं बीजमभ्यन्तरीकरोत्याम्रादि तद्वत्पुरुषमभ्यन्तरी-**

१० **कुर्याच्छरीरं स्वकारणकारणमपीति चेन्न। अन्यत्वात्सावयवत्वाच्च। दृष्टान्ते कारणबीजाद्वृक्षफलसंवृत्तान्यन्यान्येव बीजानि दार्ष्टान्तिके तु स्वकारणकारणभूतः स एव पुरुषः शरीरेऽभ्यन्तरीकृतः श्रूयते।**

इत्यर्थः। तामेवाऽऽह—**यदा हीति**। यस्मिन्पक्षे ज्ञेयं सर्वं स्वव्यतिरिक्तस्य कस्यचिज्ज्ञानस्य ज्ञेयमित्यङ्गीक्रियत इति ज्ञेयपदावृत्त्या स्वव्यतिरिक्तस्येतिपदाध्याहारेण च यदा हीति वाक्यं योज्यम्। अवैनाशिकैरिति च्छेदः। **तद्विषय इति**। ज्ञानविषयकज्ञानात्मक इत्यर्थः।

१५ तर्हि त्वत्पक्षे ज्ञानात्मकस्य ब्रह्मणः सर्वज्ञत्वं न स्यात्स्वेन स्वस्याज्ञानादिति शङ्कते—**ज्ञानस्येति**। ज्ञातुं योग्यस्य सर्वस्याज्ञाने हि सर्वज्ञत्वहानिः, अन्यथा शशविषाणादेरज्ञानातसर्वज्ञत्वं कस्यापि मते न स्यादतो नास्मन्मते तस्य दोषस्य प्राप्तिः किन्तु वैनाशिकस्यैव, तेन ज्ञानस्यावश्यज्ञेयत्वाङ्गीकारात्स्वेन स्वस्य ज्ञेयत्वस्य सिद्धं हीति पूर्वग्रन्थे दूषितत्वादन्यज्ञेयत्वस्य चानङ्गीकारात्सर्वज्ञत्वायोगादित्याह—**सोऽपीति**। तर्हि तव मते कथं सर्वज्ञत्वनिर्वाह इत्याशङ्क्यास्मन्मते तस्य मायिकत्वेन तदनिर्वाहेऽपि न दोष इत्याह—**किं तदिति**। वस्तुतस्तु सर्वस्य

२० व्यवहारहेतुज्ञानवत्त्वं सर्वज्ञत्वं तत्तु ज्ञानस्यापि स्वप्रकाशत्वेन स्वव्यवहारहेतुत्वादस्ति, ज्ञातुं योग्यसर्वज्ञानाद्वा तदस्तीति भावः। पूर्वोक्तानवस्थादोषोऽपि तस्यैवेत्याह—**अनवस्थेति**।

ननु तेन स्वेनैव ज्ञेयत्वाङ्गीकारान्नानवस्थेत्यत आह—**स्वात्मना चेति**। सिद्धं हीत्यत्र स्वज्ञेयत्वासम्भवस्योक्तत्वात्परिशेषादन्यज्ञेयत्वे तस्य तस्याप्येवमित्यनवस्थाऽनिवार्येत्यर्थः। ज्ञानस्याज्ञेयत्वे तद्व्यवहारासिद्धिर्ज्ञानान्तरज्ञेयत्वे चानवस्था तवापि स्यादिति शङ्कते—**समान एवेति**। स्वप्रकाशत्वेन स्वव्यवहारसिद्धेर्ज्ञान-

२५ भेदस्यैवास्माभिरनङ्गीकारादनवस्थायाः प्रसक्तिरेव नास्तीति परिहरति—**न ज्ञानस्येति**। एकत्वपक्षे भेदप्रतीतिमुपपादयति—**नामरूपेति**। एवं च चैतन्यस्यैकत्वेन नित्यत्वाज्जगद्भिन्नत्वेन तस्य सत्यत्वाच्चाधिष्ठानत्वोपपत्तेस्तस्मिन्कलानामध्यारोप आत्मप्रतिपत्त्यर्थमिहोच्यत इत्याह—**तथा चेहेति**। चैतन्यस्य नित्यत्वेनाधिष्ठानत्वे सतीह श्रुताविदं कलानामध्यारोपणमुच्यत इत्यर्थः।

ननु चैतन्यस्य न नित्यत्वं परिच्छेदश्रुतेः परिच्छिन्नस्य च घटादिवदनित्यत्वादिति शङ्कते—**नन्विति**।

३० शरीरान्तःस्थत्वं प्रत्यक्त्वविवक्षयोच्यते न परिच्छेदविवक्षया तथा सत्युत्तरवाक्यविरोधादित्याह—**नेति**। अयोग्यत्वादपि सोऽर्थो न विवक्षित इत्याह—**कलेति**। स्वोत्पत्तेः पूर्वं स्वस्याभावात्तत्कालीनपुरुषं परिच्छेत्तुं न शक्नोतीत्यर्थः। बीजकार्यस्य वृक्षस्य कार्यं फलं स्वकारणवृक्षकारणं बीजमभ्यन्तरीकरोतीति दृष्टमिति नायोग्यत्वमिति शङ्कते—**बीजवृक्षादिवदिति**। तद्विवृणोति—**यथेति**। दृष्टान्ते बीजव्यक्तिभेदादविरोधेऽपीह पुरुषव्यक्त्यैक्यात्कारणत्वाभ्यन्तरीभावयोर्विरोध इत्याह—**नेति**। ननु कारणीभूतबीजस्यैव वृक्षफलतदन्तर्गतबीजरूपेण परिणामात्तयोः कारणकार्य-

३५ बीजयोरैक्यमाशङ्क्यैवमपि तस्य सावयवत्वाद्वृक्षवत्फलाकारेण परिणतावयवेभ्यो भिन्नावयवानामेव तदन्तर्गतबीजरूपेण परिणामात्तयोर्भेदेनाऽऽधारस्थेयभावः स्यादिह तु निरवयवत्वान्न तथात्वमित्याह—**सावयवत्वाच्चेति**। आद्यं हेतुं विवृणोति—**दृष्टान्त इति**। **श्रूयत इति**। यस्मिन्नेताः षोडश कला इति यच्छब्दोक्तस्यैव पुरुषस्यान्तःशरीरे सोम्य स पुरुष इति तच्छब्देनाभिधानादित्यर्थः।

**स ईक्षांचक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥**

बीजवृक्षादीनां सावयवत्वाच्च स्यादाधाराधेयत्वं निरवयवश्च पुरुषः सावयवाश्च कलाः शरीरं च, एतेनाऽऽकाशस्यापि शरीराधारत्वमनुपपन्नं किमुताऽऽकाशकारणस्य पुरुषस्य, तस्मादसमानो दृष्टान्तः। किं दृष्टान्तेन वचनात्स्यादिति चेन्न। वचनस्याकारकत्वात्। न हि वचनं वस्तुनोऽन्यथाकरणे व्याप्रियते। किं तर्हि यथाभूतार्थावद्योतने। तस्मादन्तःशरीर इत्येतद्वचनमण्डस्यान्तर्व्योमेतिवच्च द्रष्टव्यम्। उपलब्धिनिमित्तत्वाच्च। दर्शनश्रवणमननविज्ञानादिलिङ्गैरन्तःशरीरे परिच्छिन्न इव ह्युपलभ्यते पुरुषः, अत उच्यतेऽन्तःशरीरे सोम्य स पुरुष इति। न पुनराकाशकारणः सन्कुण्डबदरवच्छरीरपरिच्छिन्न इति मनसाऽपीच्छति वक्तुं मूढोऽपि किमुत प्रमाणभूता श्रुतिः॥२॥

यस्मिन्नेताः षोडश कलाः प्रभवन्तीत्युक्तः पुरुषविशेषणार्थं कलानां प्रभवः स चान्यार्थोऽपि श्रुतः केन क्रमेण स्यादित्यत इदमुच्यते चेतनपूर्विका च सृष्टिरित्येवमर्थं च—पुरुषः षोडशकलः पृष्टो यो भारद्वाजेन स ईक्षांचक्र ईक्षणं दर्शनं चक्रे कृतवानित्यर्थः। सृष्टिफलक्रमादिविषयम्। कथमित्युच्यते, कस्मिन् कर्तृविशेषे देहादुत्क्रान्त उत्क्रान्तो भविष्याम्यहमेवं कस्मिन्वा शरीरे प्रतिष्ठितेऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्यामित्यर्थः।

## सांख्यमतम्

नन्वात्माऽकर्ता प्रधानं कर्तृ, अतः पुरुषार्थं प्रयोजनमुररीकृत्य प्रधानं प्रवर्तते महदाद्याकारेण। तत्रेदमनुपपन्नं पुरुषस्य स्वातन्त्र्येणेक्षापूर्वकं कर्तृत्ववचनं, सत्त्वादिगुणसाम्ये प्रधाने प्रमाणोपपन्ने सृष्टिकर्तरि सति,

द्वितीयं हेतुं विवृणोति—बीजेति। निरवयवश्चेति। तथा चैकदेशेन कलादिरूपेण परिणाम एकदेशेन तत्रावस्थानं बीजवन्न सम्भवतीत्यर्थः। किञ्च कलानां सावयवत्वेन परिच्छेदात्पुरुषस्य तद्विपरीतत्वादपरिच्छिन्नस्य न परिच्छिन्नाधारकत्वं सम्भवतीत्याह—सावयवाश्चेति। यद्वा सावयवत्वेन कार्यतया मृषात्वान्निरवयवतया परमार्थसत्यपुरुषाधारत्वं नोपपद्यत इत्याह—सावयवाश्चेति। नन्वाकाशकार्यशरीरं आकाशस्यापरिच्छिन्नस्याभ्यन्तरीभावो दृष्ट इत्याशङ्क्य तस्यापि शरीराकारेणावस्थानमेव च्छिद्रादिविशिष्टस्यैव शरीरत्वान्न तु तदन्तःस्थत्वमित्याह—एतेनेति। युक्त्यसहमपि वचनप्रामाण्यादङ्गीकार्यमिति शङ्कते—किं दृष्टान्तेनेति। वचनस्यापि वस्तुनोऽन्यथाकरणे सामर्थ्याभावाद्वस्तुस्वरूपाविरोधेनैव बोधकत्वादन्यथा विचारवैयर्थ्याद्विरुद्धार्थो न बोधार्ह इत्याह—वचनस्येति। तर्ह्यन्तःशरीर इति श्रुतेः कथमुपपत्तिरित्याशङ्क्य पुरुषस्य शरीरोपादानत्वेन तदनुस्यूतस्य तदन्तर्गतत्वप्रतीतेस्तदभिप्रायेयं श्रुतिरिति सदृष्टान्तमाह—तस्मादिति। अण्डेति। अण्डकारणस्य व्योम्नो यथा तदनुस्यूतत्वेन तदन्तर्गतत्वप्रतीतिस्तद्वदित्यर्थः। यद्वा लोकभ्रमसिद्धं परिच्छिन्नत्वमनूद्यते श्रुत्येत्याह—उपलब्धीति। तत्राभिव्यक्तेर्वा तदन्तर्गतत्वव्यपदेश इत्याह—उपलभ्यते चेति॥ २॥

ननु यस्मिन्नेताः षोडश कलाः प्रभवन्तीत्यनेनाध्यारोपस्योक्तत्वात्स ईक्षामित्यादिना पुनः सृष्टिकथनमधिकमित्यत आह—यस्मिन्निति। अत इति। क्रमप्रतिपत्त्यर्थं स ईक्षामित्याद्युच्यत इत्यर्थः। तत्प्रतिपत्तिश्च कलोत्पत्तिप्रतिपत्तिसौकर्यार्थं विपर्ययेण तु क्रमोऽत उपपद्यते चेति न्यायेन[१] कार्यस्य स्वस्वकारणक्रमेणापवादसौकर्यार्थं चेत्यर्थः। ईक्षणोक्तेः प्रयोजनमाह—चेतनेति। सृष्टीति। सृष्टिः प्राणादेः सृष्टिः, तस्या उत्क्रान्त्यादि फलं, क्रमः प्राणाच्छ्रद्धामित्याद्युक्तानन्तर्यम्। आदिशब्देन लोकेषु नाम चेत्याधाराधेयविशेषो गृह्यते।

नन्वीक्षणोक्त्या न चेतनपूर्वकत्वसिद्धिर्न्यायेन चेतनस्याकर्तृत्वेनाहेतुत्वेऽचेतनस्य प्रधानादेर्विक्रियावत्त्वेन हेतुत्वे च सतीक्षणस्यान्यथा नेयत्वादिति साङ्ख्याः शङ्कन्ते—नन्वात्मेति। अकर्तेत्यस्य तत्रेदमित्यनेनान्वयः। आत्माऽकर्ता तत्र तथा सतीदं कर्तृत्ववचनमनुपपन्नमित्यर्थः। किञ्च तस्य कर्तृत्वाङ्गीकारेऽपि कर्तुः कुलालादेरिव सहकारिसाधनान्तराभावादात्मनो दुःखाद्यनर्थहेतुप्राणादिसंसारकर्तृत्वानुपपत्तेश्चानुपपन्नं स्रष्टृत्ववचनमित्याह—आत्मनोऽपीति। कर्तृत्वेऽपीत्यपिशब्दान्वयः। तर्हि किं कर्त्रेत आह—प्रधानमिति। कर्त्रिति। क्रियाशक्तिमदतः प्रवर्तत इत्यन्वयः। ननु प्रधानस्याचेतनस्य प्रयोजनापेक्षाभावात्प्रवृत्त्यनुपपत्तिरित्यत आह—पुरुषार्थमिति। पुरुषस्य

१. विपर्ययेणेति—येन क्रमेण सृष्टिर्जाता तद्विपरीतक्रमेण पृथिव्यादीनां लयोऽवगन्तव्यः पृथिव्या अप्सु अपां तेजसीत्यादिक्रमेण ब्रह्मणि प्रपञ्चलयः ( ब्र० सू० २-३-१४ )।

ईश्वरेच्छानुवर्तिषु वा परमाणुषु सत्सु। आत्मनोऽप्येकत्वेन कर्तृत्वे साधनाभावात्, आत्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च। न हि चेतनावान्बुद्धिपूर्वकार्यात्मनोऽनर्थं कुर्यात्। तस्मात्पुरुषार्थेन प्रयोजनेनेक्षापूर्वकमिव नियतक्रमेण प्रवर्तमानेऽचेतने प्रधाने चेतनवदुपचारोऽयं स ईक्षांचक्र इत्यादिः। यथा राज्ञः सर्वार्थकारिणि भृत्यो राजेति तद्वत्।

## सांख्यपक्षनिरासः

५ न, आत्मनो भोक्तृत्ववत्कर्तृत्वोपपत्तेः। यथा सांख्यस्य चिन्मात्रस्यापरिणामिनोऽप्यात्मनो भोक्तृत्वं तद्वद्वेदवादिनामीक्षादिपूर्वकं जगत्कर्तृत्वमुपपन्नं श्रुतिप्रामाण्यात्।

तत्त्वान्तरपरिणाम आत्मनोऽनित्यत्वाशुद्धत्वानेकत्वनिमित्तः न चिन्मात्रस्वरूपविक्रिया, अतः पुरुषस्य स्वात्मन्येव भोक्तृत्वे चिन्मात्रस्वरूपविक्रिया न दोषाय, भवतां पुनर्वेदवादिनां सृष्टिकर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादिसर्वदोषप्रसङ्ग इति चेन्न। एकस्याप्यात्मनोऽविद्याविषयनामरूपोपाध्यनुपाधिकृतविशेषाभ्युप-
१० गमात्, अविद्याकृतनामरूपोपाधिकृतो हि विशेषोऽभ्युपगम्यत आत्मनो बन्धमोक्षादिशास्त्रकृतसंव्यवहाराय, परमार्थतोऽनुपाधिकृतं च तत्त्वमेकमेवाद्वितीयमुपादेयं सर्वतार्किकबुद्ध्यनवगाह्यमभयं शिवमिष्यते। न तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारकफलं च स्यादद्वैतत्वात्सर्वभावानाम्। सांख्यास्त्वविद्याध्यारोपितमेव पुरुषे कर्तृत्वं क्रियाकारकं फलं चेति कल्पयित्वाऽऽगमबाह्यत्वात्पुनस्ततस्त्रस्यन्तः परमार्थत एव भोक्तृत्वं पुरुषस्येच्छन्ति तत्त्वान्तरं च प्रधानं पुरुषात्परमार्थवस्तुभूतमेव कल्पयन्तोऽन्यतार्किककृतबुद्धिविषयाः सन्तो विहन्यन्ते।

१५ चेतनस्य भोगापवर्गरूपमर्थं प्रयोजनमुद्दिश्य प्रवर्तते वत्सविवृद्ध्यर्थमचेतनस्य धेनुदेहगतक्षीरस्य सस्यादिविवृद्ध्यर्थमम्बुनश्चाचेतनस्य प्रवृत्तिदर्शनादित्यर्थः। ननु प्रधानस्याप्येकत्वेन सहकार्यभावात्कारणत्वानुपपत्तावगत्या चेतनस्यैव कथंचित्कर्तृत्वं वाच्यमित्यत आह—**सत्त्वादीति**। सत्त्वादिगुणत्रयस्य साम्यावस्था प्रधानमिति सांख्यमतम्। तत्र सत्त्वादिगुणैरनेकात्मके प्रधाने कारणे सति पुरुषस्य कर्तृत्ववचनमगतेरभावादनुपपन्नमित्यन्वयः। यदि चेतनानधिष्ठितस्याचेतनस्य प्रवृत्तिर्न दृष्टेति मन्यसे तर्हि परमाणुकारणवादोऽस्तु तत्रेश्वरस्याधिष्ठातुः सत्त्वादित्याह—
२० **ईश्वरेच्छेति**। अत्रापि सत्स्वित्यस्यानुपपन्नमिति पूर्वेणान्वयः।

तर्हीक्षणश्रवणस्य का गतिरत आह—**तस्मादिति**। **पुरुषार्थेनेति**। पुरुषस्य भोगापवर्गार्थेनेत्यर्थः। मुख्य ईक्षितरि विद्यमानेन नियतक्रमेण प्रवर्तमानत्वेन गुणेन योगादैक्षतेति गौणः प्रयोगो माणवके पैङ्गल्यगुणयोगेनाग्निशब्दप्रयोगवदित्यर्थः। नन्वेवमपीक्षितरि प्रधाने पुरुषशब्दः कथमत आह—**यथा राज्ञ इति**। **तद्वदिति**। पुरुषस्य भोगापवर्गकारिणि प्रधाने पुरुषशब्द औपचारिक इत्यर्थः। स्वतोऽकर्तुरप्यात्मनो मायोपाधिककर्तृत्वं सम्भवतीति
२५ हृदि निधाय प्रथममापाततः प्रतिबन्द्या परिहरति—**नेति**। बुद्धिः कर्त्री भोक्ता पुरुष इति वदद्भिः सांख्यैरात्मनो भोक्तृत्वमुक्तमित्यर्थः। **श्रुतिप्रामाण्यादिति**। श्रुत्युक्तजगत्कर्तृत्वमविकारिणोऽपि कथञ्चिन्निर्वाह्यमित्यर्थः।

सांख्यः प्रतिबन्दिपरिहारं शङ्कते—**तत्त्वान्तरेति**। भोगो नाम सुखदुःखानुभवः स च पुरुषस्य स्वरूपभूत इति न तत्त्वान्तरापत्तिलक्षणपरिणाम इत्यर्थः। परिणामो हि पूर्वरूपपरित्यागेन रूपान्तरापत्तिः। सा च सजातीयरूपान्तरापत्तौ विजातीयरूपान्तरापत्तौ वाऽनित्यत्वादिकमावहेदेवेति भोज्याविवेकोपाधिकं भोक्तृत्वमङ्गीकर्तव्यम्।
३० तेन तदात्मककर्तृत्वेऽपि तुल्यमित्यभिप्रेत्य मुख्यपरिहारमाह—**नेति**। एकस्य वस्तुतोऽसहायस्याकर्तुराप्तकामस्यापीत्यपेरर्थः। उपाधिकृतकर्तृत्वसम्भवादविद्यारूपसहायस्य सम्भवाद्भ्रान्त्या स्वस्माद्भिन्नजीवानामनाप्तकामानां सम्भवात्तत्पुरुषार्थाय स्रष्टृत्वं तथाविधस्याप्युपपद्यत इति नाचेतनस्य चेतनानधिष्ठितस्य तद्युक्तमिति भावः। **नामरूपेति**। अनभिव्यक्तनामरूपेत्यर्थः। बन्धमोक्षादीत्यादिशब्देन तत्साधनमुच्यते। मोक्षस्यापि बन्धप्रतियोगित्वेन सोपाधिकत्वमुक्तम्। परमार्थस्य श्रुत्येकगम्यत्वमाह—**सर्वेति**। एवंभूतस्याऽऽत्मनो न स्रष्टृत्वमित्याह—**न तत्रेति**।
३५ **कल्पयित्वेति**। कल्पयितुं प्रवृत्ता इत्यर्थः। पुरुषस्य निर्विशेषत्वेन तस्मिन्वस्तुतः कर्तृत्वाद्ययोगात्तदारोपितमेवेति कल्पयितुं प्रवृत्ता अपि सर्वविरोधनिरासकागमप्रमाणैकशरणत्वाभावात्प्रत्यक्षादिविरोधापत्त्याऽऽरोपितत्वानङ्गीकाराच्च त्रस्यन्तः सर्वं परमार्थत एवेच्छन्ति। तत्राप्यचेतनस्य भोक्तृत्वायोगात्तन्मात्रमात्मनोऽङ्गीकुर्वन्ति। कर्तृत्वादिकं तु प्रधानस्याङ्गीकुर्वन्तीत्यर्थः। तर्हि तस्य को दोष इत्याशङ्क्य भोक्तृत्वाङ्गीकारे तथैव तस्यैव कर्तृत्वमपि स्यादित्यन्यैः शिक्षिताः सन्तः स्वमतात्प्रच्यवन्त इत्याह—**अन्येति**। कृतायाः शिक्षिताया बुद्धेर्विषया अधीनाः शिक्षितबुद्धय इत्यर्थः।

तथेतरे तार्किकाः सांख्यैरित्येवं परस्परविरुद्धार्थकल्पनात् आमिषार्थिन इव प्राणिनोऽन्योन्यविरुद्धमानार्थ-दर्शित्वात्परमार्थतत्त्वाद्दूरमेवापकृष्यन्तेऽतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमेकत्वदर्शनं प्रत्यादरवन्तो मुमुक्षवः स्युरिति तार्किकमतदोषप्रदर्शनं किञ्चिदुच्यतेऽस्माभिर्न तु तार्किकवत्तात्पर्येण। तथैतदत्रोक्तम्—

"विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणम्। तैः संरक्षितसद्बुद्धिः सुखं निर्वाति वेदवित्" ॥

किञ्च भोक्तृत्वकर्तृत्वयोर्विक्रिययोर्विशेषानुपपत्तिः। का नामासौ कर्तृत्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया, यतो भोक्तैव पुरुषः कल्प्यते न कर्ता प्रधानं तु कर्त्रेव न भोक्त्रिति। ५

ननूक्तं पुरुषश्चिन्मात्र एव स च स्वात्मस्थो विक्रियते भुञ्जानो न तत्त्वान्तरपरिणामेन। प्रधानं तु तत्त्वान्तर-परिणामेन विक्रियतेऽतोऽनेकमशुद्धमचेतनं चेत्यादिधर्मवत्तद्विपरीतः पुरुषः। नासौ विशेषो, वाङ्मात्रत्वात्, प्राग्भोगोत्पत्तेः केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्वं नाम विशेषो भोगोत्पत्तिकाले चेज्जायते निवृत्ते च भोगे पुनस्त-द्विशेषादपेतश्चिन्मात्र एव भवतीति चेन्महदाद्याकारेण च परिणम्य प्रधानं ततोऽपेत्य पुनः प्रधानं स्वरूपेणावतिष्ठत इत्यस्यां कल्पनायां न कश्चिद्विशेष इति वाङ्मात्रेण प्रधानपुरुषयोर्विशिष्टविक्रिया कल्प्यते। १०

अथ भोगकालेऽपि चिन्मात्र एव प्राग्वत्पुरुष इति चेत्, न तर्हि परमार्थतो भोगः पुरुषस्य। भोगकाले चिन्मात्रस्य विक्रिया परमार्थैव तेन भोगः पुरुषस्येति चेन्न। प्रधानस्यापि भोगकाले विक्रियावत्त्वाद्भोक्तृत्वप्रसङ्गः। चिन्मात्रस्यैव विक्रिया भोक्तृत्वमिति चेदौष्ण्याद्यसाधारणधर्मवतामग्न्यादीनामभोक्तृत्वे हेत्वनुपपत्तिः।

तर्हि सांख्यशिक्षकस्य तार्किकस्य मतं ग्राह्यमत आह—तथेति। तस्यापि सांख्येन शिक्षितत्वान्न तदपि ग्राह्यमित्यर्थः। तर्हि कस्य तार्किकस्य मतं ग्राह्यमित्याशङ्क्य न कस्यापीत्याह—इत्येवमिति। तर्हि त्वया तार्किक-मतं किमर्थं दूष्यते। परस्परमेव तैर्दूषितत्वात्तव तद्वदेव द्वेषादिमत्त्वप्रसङ्गाच्चेत्यत आह—अत इति। विरोधोद्भव-कारणमिति। पारमार्थिकतया भेददर्शनमित्यर्थः। संरक्षितेति। भेददर्शनस्य परस्परोक्तदोषग्रस्तत्वादद्वैतमेव निर्दुष्ट-मिति निश्चितबुद्धिः सन्निर्वाति सर्वविकल्पेभ्य उपशान्तो भवतीत्यर्थः। दोषप्रदर्शनं किञ्चित्क्रियत इति यदुक्तं तदेव प्रपञ्चयन्कर्तृत्वादेरारोपितत्वमेव परेणापि वक्तव्यमित्याह—किञ्चेत्यादिना। तत्राऽऽदौ भोक्तृत्वकर्तृत्वयोर्विशेषस्य वक्तुमशक्यत्वात्तयोराश्रयव्यवस्था न सम्भवतीत्याह—भोक्तृत्वेति। १५ २०

आशयमविद्वाञ्शङ्कावसरोक्तं विशेषं शङ्कते—नन्विति। स्वात्मस्थो विक्रियत इति। चिद्रूपेण विक्रियत इत्यर्थः। तत्त्वान्तरेति। अनेकत्वाशुद्धत्वादियुक्तस्वविलक्षणमहदादिरूपेणेत्यर्थः। पुरुषस्य चिद्रूपेणैव परिणामान्न रूपान्तरापत्तिरशुद्धत्वादिकं वा। प्रधानस्य त्वाकारान्तरेण परिणामात्पूर्वरूपत्यागादशुद्धत्वादिकं स्यादित्यर्थः। किञ्चिद्रूपेण परिणाम आगन्तुको वा न वा? आद्य आगन्तुकविशेषवत्त्वेनानित्यत्वाद्यापत्त्या प्रधानादविशेषः। भोगानन्तरं पुनः स्वरूपावस्थानान्नानित्यत्वादिदोषश्चेत्प्रधानस्यापि प्रलये तथात्वाङ्गीकारान्न तयोर्विशेषः स्यादिति दूषयति—नासाविति। संग्रहवाक्यं विवृणोति—प्रागिति। अस्यां कल्पनायामिति। चिद्रूपेण तत्त्वान्तररूपेण विक्रिया-कल्पनायामपि विचार्यमाणेऽर्थतो न कश्चिदपि विशेषो लभ्यत इति तयोर्विशिष्टविक्रियेति वाङ्मात्रेणैव कल्प्यत उच्यत इत्यर्थः। २५

द्वितीयं शङ्कते—अथेति। चिन्मात्र एवेति। न त्वागन्तुकं रूपान्तरमित्यर्थः। तर्हि कर्मजन्यः कादाचित्को भोगो न सिध्येदित्याह—न तर्हीति। एतद्दोषपरिहारायाऽऽगन्तुकं परिणाममङ्गीकृत्य भोगकालीनविक्रियामात्रं भोगः। स च पुरुषस्यैव न प्रधानस्येति भोगसदसत्त्वविशेषमात्रेण शङ्कते—भोगकाल इति। तत्रापि किं भोग-कालीनविक्रियामात्रं भोग उत तत्कालीनचिन्मात्रगतविक्रिया भोग इति विकल्प्याऽऽद्ये भोगकाले प्रधानस्यापि सुखाद्याकारेण विक्रियावत्त्वाद्भोगः स्यादित्याह—नेति। द्वितीयं शङ्कते—चिन्मात्रस्यैवेति। चिन्मात्रस्यैव विक्रियेत्येव-कारेण धर्म्यन्तरगतविक्रियानपेक्षा चैतन्यविक्रिया भोग इत्युच्यते वा चैतन्यमात्रगता तदसाधारणा विक्रिया भोग इति वा। नाऽऽद्यः, सुखादिरूपप्रधानविक्रियां विना भोगासिद्धेः। न द्वितीयः। चैतन्यासाधारणविक्रियैव भोग इत्यत्र हेत्वभावात्स्वासाधारणविक्रिया भोग इति वक्तव्यम्। तथा चातिप्रसङ्गः। सर्वस्यापि स्वासाधारणविक्रियावत्त्वात्। भोगकालीनासाधारणविक्रियावत्त्वं तु प्रधानस्याप्यस्ति। तत्कालीनसुखादिविक्रियावत्त्वादिति दूषयति—औष्ण्येति। ३० ३५

प्रधानपुरुषयोर्द्वयोर्युगपद्भोक्तृत्वमिति चेन्न। प्रधानस्य पारार्थ्यानुपपत्तेः। न हि भोक्त्रोर्द्वयोरितरेतरगुण-प्रधानभाव उपपद्यते। प्रकाशयोरिवेतरेतरप्रकाशने। भोगधर्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बो-दयोऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेन्न। पुरुषस्य विशेषाभावे भोक्तृत्वकल्पनानर्थक्यात्।

भोगरूपश्चेदनर्थः पुरुषस्य नास्ति सदा निर्विशेषत्वात्पुरुषस्य कस्यापनयनार्थं मोक्षसाधनं शास्त्रं प्रणीयते ?
५ अविद्याध्यारोपितानर्थापनयनाय शास्त्रप्रणयनमिति चेत्परमार्थतः पुरुषो भोक्तैव न कर्ता प्रधानं कर्त्रेव न भोक्तृ परमार्थसद्वस्त्वन्तरं पुरुषाच्चेतीयं कल्पनाऽऽगमबाह्या व्यर्था निर्हेतुका चेति नाऽऽदर्तव्या मुमुक्षुभिः।

एकत्वेऽपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेन्न, अभावात्। सत्सु हि शास्त्रप्रणेत्रादिषु तत्फलार्थिषु च शास्त्रस्य प्रणयनमनर्थकं सार्थकं वेति विकल्पना स्यात्। न ह्यात्मैकत्वे शास्त्रप्रणेत्रादयस्ततो भिन्नाः सन्ति तदभाव एवं विकल्पनैवानुपपन्ना। अभ्युपगत आत्मैकत्वे प्रमाणार्थश्चाभ्युपगतो भवता यदात्मैकत्वमभ्युपगच्छता। तदभ्युपगमे
१० च विकल्पानुपपत्तिमाह शास्त्रं "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादि। शास्त्रप्रणयनाद्युपपत्तिं चाऽऽहान्यत्र परमार्थवस्तुस्वरूपादविद्याविषये, "यत्र हि द्वैतमिव भवति" इत्यादि विस्तरतो वाजसनेयके।

अत्र च विभक्ते विद्याविद्ये परापरे इत्यादावेव शास्त्रस्यातो न तार्किकचाटभटप्रवेशो वेदान्तराजप्रमाण-

ननु भोगकालीनासाधारणविक्रियैव भोगः। न चाग्न्यादेस्तत्काले नियमेन विक्रियाऽस्ति। न च प्रधान-स्यापि प्रसङ्ग इष्टापत्तेरिति शङ्कते—प्रधानेति। भोक्ता हि शेषी, उभयोरपि भोक्तृत्वे शेषशेषिभावो न स्यादित्याह—
१५ नेति। ननु भोगः सत्त्वगुणप्रधानचेतोरूपेण परिणतप्रकृतेरेव धर्मस्तस्या विक्रियोपपत्तेर्न पुरुषस्य तस्याविक्रिय-त्वात्। न च तस्य भोगाभावप्रसङ्गस्तस्य तथाविधचित्तप्रतिबिम्बितत्वमात्रेण भोक्तृत्वव्यपदेश इति शङ्कते—भोगधर्मवतीति। सत्त्वाङ्गिनीति। सत्वगुणोऽङ्गी प्रधानं यस्य तस्मिश्चेतसीत्यर्थः। तर्हि चित्तगतभोगेन चैतन्ये विशेषो जायते वा न वेति विकल्प्य न द्वितीय इत्याह—नेति।

किञ्चास्मिन्पक्षे स्वकीयशास्त्रप्रणयनं च व्यर्थं स्यादित्याह—भोगरूपश्चेदिति। आद्ये स विशेषः सत्यो
२० वाऽसत्यो वेति विकल्प्य सत्यविशेषवत्त्वे पुरुषस्य विकारित्वं स्यादिति मनसि सन्निधायास्याऽऽरोपितविशेषवत्त्व-मस्तीत्याद्यं शङ्कते—अविद्येति। अनर्थेति। भोगरूपेत्यर्थः। तर्हि भोक्तृत्वविशेषवत्कर्तृत्वादिविशेषस्य प्रधानादेश्चाऽऽ-रोपत्वमेवाङ्गीकर्तुं युक्तं नार्धं[१]वैशसमस्मदुक्तरीत्या बन्धमोक्षव्यवहारसिद्ध्युपपत्तेः। तथा कल्पनायां प्रयोजना-भावात्प्रमाणाभावात्प्रत्युत सर्वश्रुतिविरोधापत्तेश्चेत्याह—परमार्थत इति। पुरुषाद्वस्त्वन्तरं च प्रधानमित्यन्वयः। उक्तदोषजातं सांख्यस्य मतं मोक्षकामिणा नाऽऽदर्तव्यमिति ज्ञापनार्थमुक्तं न तु द्वेषपक्षपातादित्याशयेनाऽऽह—
२५ इति नाऽऽदर्तव्येति।

आत्मैकत्वपक्षेऽपि निरसनीयबन्धाभावाच्छास्त्रप्रणयनानर्थक्यमिति शङ्कते—एकत्वेऽपीति। किमात्मैकत्व-निश्चयवन्तं प्रति तस्याऽऽनर्थक्यमुच्यते तद्विपरीतं प्रति वेति विकल्प्याऽऽद्यं प्रति प्रणयनाभावादानर्थक्यदोषाभाव-माह—नाभावादिति। दोषापादनाभावादित्यर्थः। संग्रहवाक्यं विवृणोति—न ह्यात्मैकत्व इति। निश्चित इति शेषः। तदभावे शास्त्रप्रणेत्राद्यभाव एवं विकल्पनैवार्थवदनर्थकं वेति विकल्पनैवानुपपन्नेत्यर्थः। नैवानुपपन्नेति
३० पाठे तु तदभाव इत्यनेनैकत्वनिश्चयाभावोऽभिधीयते। तदानीं निरसनीयबन्धादिसत्वादियं कल्पना बन्धनिवृत्त्यर्थं शास्त्रप्रणयनकल्पना नानुपपन्नेति योज्यम्। किञ्चाऽऽत्मैकत्वनिश्चये जाते तन्निश्चयजनकत्वेन शास्त्रार्थवत्त्वस्य स्वानुभवसिद्धत्वात्तेनेयं शङ्का कर्तुमपि न शक्येत्याह—अभ्युपगत इति। प्रमाणार्थ इति। प्रमाणस्य शास्त्रस्यार्थः प्रयोजनमित्यर्थः। एकत्वनिश्चयवन्तं प्रति शास्त्रानर्थक्यकल्पनाभावः श्रुत्याप्युक्त इत्याह—तदभ्युपगमे चेति। अत्राभ्युपगमो निश्चयः। एकत्वनिश्चयाभावदशायां तु निरसनीयारोपितबन्धसत्त्वान्नाऽऽनर्थक्यं तदपि श्रुत्योक्त-
३५ मित्याह—शास्त्रप्रणयनेति। अनेन द्वितीयकल्पो निरस्तः। श्रुतिगतं यत्रपदं व्याचष्टे—अन्यत्रेति।

आथर्वणीयमन्त्रोपनिषदि द्वे विद्ये वेदितव्ये इत्युपक्रम्यापरविद्या ऋग्वेदादिरूपा, परा त्वदृश्यत्वादिगुणक-प्रत्यस्तमितसर्वद्वैतवस्तुविषयेत्युक्त्या विद्याविद्ययोर्विषयभेदः शस्त्रस्याऽऽदावेव सूचित इत्याह—अत्र चेति। अद्वैत-वादे सर्वशङ्कानां श्रुतिप्रामाण्येनैव निरासात्तार्किकोत्प्रेक्षितशङ्काशूकस्यापि नात्र प्रवेश इत्युपसंहरति। अत इति। राजप्रमाणेति। प्रमाणराजेत्यर्थः। राजदन्तादित्वात्परनिपातः। वेदान्तप्रमाणमेव राजेव राजा तद्वाहवस्तदुक्त-

४० १. यथा कुक्कुटाण्डस्य अर्धं पाकाय, अर्धं प्रसवायेत्यनुपपन्नं तथेत्यर्थः।

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः।**
**अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च॥ ४॥**

बाहुगुप्त इहात्मैकत्वविषय इति। एतेनाविद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्त्वाद्ब्रह्मणः सृष्ट्यादिकर्तृत्वे साधनाद्यभावो दोषः प्रत्युक्तो वेदितव्यः परैरुक्त आत्मानर्थकर्तृत्वादिदोषश्च।

यस्तु दृष्टान्तो राज्ञः सर्वार्थकारिणि कर्तर्युपचाराद्राजा कर्तेति सोऽत्रानुपपन्नः। ईक्षांचक्र इति श्रुतेर्मुख्यार्थबाधनात्प्रमाणभूतायाः। तत्र हि गौणी कल्पना शब्दस्य यत्र मुख्यार्थो न सम्भवति। इह त्वचेतनस्य मुक्तबद्धपुरुषविशेषापेक्षया कर्तृकर्मदेशकालनिमित्तापेक्षया च बन्धमोक्षादिफलार्था नियता पुरुषं प्रति प्रवृत्तिर्नोपपद्यते। यथोक्तसर्वज्ञेश्वरकर्तृत्वपक्षे तूपपन्ना॥ ३॥ ५

ईश्वरेणेव सर्वाधिकारी प्राणः पुरुषेण सृज्यते। कथं, स पुरुष उक्तप्रकारेणेक्षित्वा प्राणं हिरण्यगर्भाख्यं सर्वप्राणिकरणाधारमन्तरात्मानमसृजत सृष्टवान्। अतः प्राणाच्छ्रद्धां सर्वप्राणिनां शुभकर्मप्रवृत्तिहेतुभूताम्। ततः कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत। खं शब्दगुणम्। वायुं स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणम्। तथा ज्योतिः स्वेन रूपेण पूर्वाभ्यां च विशिष्टं त्रिगुणं शब्दस्पर्शाभ्याम्। तथाऽपो रसेन गुणेनासाधारणेन पूर्वगुणानुप्रवेशेन च चतुर्गुणाः। तथा गन्धगुणेन पूर्वगुणानुप्रवेशेन च पञ्चगुणा पृथिवी। तथा तैरेव भूतैरारब्धमिन्द्रियं द्विप्रकारं बुद्ध्यर्थं कर्मार्थं च दशसंख्यम्। तस्य चेश्वरमन्तःस्थं संशयसङ्कल्पलक्षणं मनः। एवं १०

न्यायास्तैर्गुप्त आत्मैकत्वमेव विषय इव देश इव देशो रक्षणीयत्वात्स तार्किकचाटभटैर्योधैर्न प्रवेश्य इत्यन्वयः। पूर्ववाद्युक्तं दोषं निराकरोति—एतेनेति। उपाधिकृता अनेकाः शक्तयः साधनानि च तत्कृतस्य भेदस्यानेकत्वस्य सत्त्वादित्यर्थः। आत्मेति। आत्मनो योऽनर्थः संसारस्तत्कर्तृत्वमित्यर्थः। आदिशब्देनाऽऽप्तकामत्वेन प्रयोजनापेक्षानुपपत्तिः संगृहीता। कल्पनया त्वव्यतिरिक्तस्य जीवस्य सत्त्वात्तस्य संसारो नाऽऽत्मनः। तदीयकर्मफलदानार्थं चाऽऽप्तकामस्यापि सृष्ट्यादिप्रवृत्तिः सम्भवति। सर्वव्यवहारस्यापि स्वप्नतुल्यत्वाद्वा स्वप्न इव सर्वमप्युपपद्यत इति सूत्रभाष्यादावेव परिहृत इत्यर्थः। १५ २०

सांख्येन स्वपक्षे पुरुषशब्दस्येक्षणस्य चोपपत्तिरुक्ता, तामनूद्य निराकरोति—यस्त्विति। यजमानः प्रस्तर इत्यादावुपचारो दृष्ट इत्याशङ्क्याऽऽह—तत्र हि गौणीति। प्रधानपक्षे न केवलमीक्षणश्रुत्यनुपपत्तिर्वस्तुतस्तस्य स्रष्टृत्वमपि न सम्भवतीत्याह—इह त्विति। मुक्तान्वर्जयित्वा बद्धान्प्रत्येव प्रवृत्तिः कर्तृकर्माद्यपेक्षया बन्धमोक्षादिशब्दितभोगापवर्गार्था व्यवस्थिता प्रवृत्तिर्नोपपद्यत इत्यर्थः। अनेन पुरुषार्थं प्रयोजनमुररीकृत्य प्रधानं प्रवर्तत इति यदुक्तं शङ्कावसरे तन्निरस्तम्। ईश्वरकारणवादे तु न कोऽपि दोष इत्याह—यथोक्तेति॥ ३॥ २५

एवं परपक्षं निराकृत्य प्रकृतश्रुतिव्याख्यानं कुर्वन्स प्राणमसृजतेत्यस्य तात्पर्यार्थमाह—ईश्वरेणेवेति। राज्ञेवेत्यर्थः। अक्षरार्थं प्रश्नपूर्वकमाह—कथमिति। हिरण्यगर्भाख्यमिति। हिरण्यगर्भ इत्याख्या येनोपाधिनाऽऽत्मनो भवति तं बुद्ध्यभिन्नं सर्वप्राणं समष्टिप्राणमित्यर्थः। यथाश्रुते कस्मिन्न्वहमुत्क्रान्त इत्यादिनाऽऽत्मन उत्क्रान्त्याद्युपाधिसृष्टेः प्रस्तुतत्वाद्धिरण्यगर्भस्य जीवस्यातथात्वादुपक्रमविरोधापत्तेः हिरण्यगर्भाख्यमित्युक्तिस्त्वात्मनो हिरण्यगर्भादिसंसारिभावोऽप्येतदुपाधिक इति सूचयितुमिति बोध्यम्। तस्य समष्टित्वमाह—सर्वेति। अन्तरात्मानमिति। सर्वस्थूलशरीरान्तरत्वादात्मबुद्धिगोचरत्वाच्चान्तरात्मा स इत्यर्थः। तत इत्यानन्तर्यार्थेऽयं पञ्चमी। एवमुत्तरत्रापि। न च भूतकार्यत्वात्प्राणस्य कथं ततः पूर्वकालीनत्वमिति वाच्यम्। सत्यम्। सूक्ष्मभूतसृष्ट्यनन्तरं प्राणमसृजतेति कल्पनीयत्वात्। न चैतदनन्तरं भूतसृष्ट्युक्तिविरोधशङ्का। तस्याः पञ्चीकृतस्थूलभूतविषयत्वोपपत्तेः। अत एव भोगसाधनाधिष्ठानानीत्युक्तम्। सूक्ष्माणां तथात्वायोगात्। न चैवमपि स्थूलभूतसृष्ट्यनन्तरमिन्द्रियमनःसृष्ट्युक्तिविरोधः। भूतारब्धदेहाधिष्ठितानामेव तेषां कार्यक्षमत्वेन तेषां तदनन्तरत्वोक्तिरिति भावः। भोगसाधनाधिष्ठानत्वं भूतानां तत्कारणत्वादित्याह—कारणभूतानीति। तेषां भूतानां लक्षणतया खं शब्दगुणमित्यादिनाऽसाधारणगुणा उक्ताः। पूर्वपूर्वगुणानुवृत्तिस्तु पूर्वपूर्वस्योत्तरोत्तरोपादानत्वसूचनार्थं स्थौल्यतारतम्यसिद्ध्यर्थं चोक्तेति बोध्यम्। वायुमिति। श्रुतौ वायुरित्यादिप्रथमा द्वितीयार्थाः। प्राणमसृजतेति द्वितीययोपक्रमात्। तैरेवेति। अपञ्चीकृतावस्थायामित्यर्थः। ३० ३५

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चाऽऽसां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥**

प्राणिनां कार्यं करणं च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नम्। ततश्चान्नादद्यमानाद्वीर्यं बलं सामर्थ्यं सर्वकर्म-
५ प्रवृत्तिसाधनम्। तद्वीर्यवतां च प्राणिनां तपो विशुद्धिसाधनं सङ्कीर्यमाणानां, मन्त्रास्तपोविशुद्धान्तर्बहिःकरणेभ्य कर्म-साधनभूता ऋग्यजुःसामाथर्वाङ्गिरसः। ततः कर्माग्निहोत्रादिलक्षणम्। ततो लोकाः कर्मणां फलम्। तेषु च सृष्टानां प्राणिनां नाम च देवदत्तो यज्ञदत्त इत्यादि। एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिक-दृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च सर्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम् ॥ ४ ॥

१० कथम्—स दृष्टान्तः। यथा लोक इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रोऽयनं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छन्ति। तासां चास्तं गतानां भिद्येते विनश्येते (इयतो ?) नामरूपे गङ्गायमुनेत्यादिलक्षणे। तदभेदे समुद्र इत्येवं प्रोच्यते तद्वस्तूदकलक्षणमेवं यथाऽयं दृष्टान्तः। उक्तलक्षणस्य प्रकृतस्यास्य पुरुषस्य परिद्रष्टुः परि समन्ताद्द्रष्टुर्दर्शनस्य कर्तुः स्वरूपभूतस्य यथाऽर्कः स्वात्मप्रकाशस्य कर्ता सर्वतस्तद्वदिमाः षोडश कलाः प्राणाद्या उक्ताः कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्मभावगमनं
१५ यासां कलानां ताः पुरुषायणा पुरुषं प्राप्य पुरुषात्मभावमुपगम्य तथैवास्तं गच्छन्ति। भिद्येते चाऽऽसां नामरूपे कलानां प्राणाद्याख्या रूपं च यथास्वम्। भेदे च नामरूपयोर्यदनष्टं तत्त्वं पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः।

**तस्य चेश्वरमिति।** नियामकमित्यर्थः। **सङ्कीर्यमाणानामिति।** अविशुद्धसत्त्वतया पापाचरणेन तैः पापैः सङ्कीर्य-माणानां सङ्करपरिहाराय चित्तशुद्धिसाधनं तपोऽसृजतेत्यर्थः। **फलमिति।** लोक्यते भुज्यत इति लोकः फल-मित्यर्थः। **नाम चेति।** ब्राह्मणादिनाम्नोक्तव्यवहारासङ्करार्थमित्यर्थः। नन्वीश्वरसृष्टत्वोक्त्या कलानां सत्यत्वमङ्गी-
२० कर्तव्यम्। आरोपे शुक्तिरजतादौ सृष्टत्वव्यवहाराभावादित्याशङ्क्याङ्गुल्यवष्टम्भनेत्रमर्दनादिना प्रयत्नेन सृष्टस्य द्विचन्द्रमशक-मक्षिकादेरारोपत्वदर्शनात्। अथ रथान्रथयोगान्पथः सृजत इति सृष्टत्वेनोक्तस्वप्नपदार्थस्य च भ्रमत्वदर्शनान्मैवमित्याह—**एवमेता इति।** अविद्याकामकर्मादिदोषरूपं यद्बीजं तदपेक्षया तत्साधनीकृत्येत्यर्थः। तैमिरिकशब्दो नेत्रेऽङ्गुल्यवष्टम्भाद्युपलक्षणार्थः। एवमात्मप्रतिपत्त्यर्थमप्यारोपमुक्त्वा तदपवादमवतारयति—**पुनस्तस्मिन्नेवेति** ॥ ४ ॥

२५ ग्रामादिवद्भेदेन गन्तव्यत्वभ्रमं वारयति—**आत्मभाव इति।** अस्तशब्देन नाशो नाभिधीयते भेदकोपाधि-नामरूपयोर्नाशेऽपि स्वरूपस्य समुद्रात्मना विद्यमानत्वादित्याह—**नामरूपतिरस्कारमिति।** पूर्वरूपतिरस्कारमित्यर्थः। **तद्वस्त्विति।** नामरूपनाशानन्तरं परिशिष्टमुदकलक्षणं वस्तु समुद्र इत्येवोच्यते इत्यन्वयः। पुरुषस्येति कर्मणि षष्ठी। पुरुषं स्वात्मरूपम्। परितः सर्वं स्वरूपत्वेन पश्यत इत्यर्थः। द्रष्टुरित्युक्त आगन्तुकस्य दर्शनस्य कर्ता प्रतीयत इत्यत आह—**दर्शनस्य कर्तुः स्वरूपभूतस्येति।** स्वरूपत्वे दर्शनस्य तत्र कर्तृत्वानुपपत्तेस्तदर्थंकतृच्प्रत्ययविरोध
३० इत्याशङ्क्यार्कः सर्वतः स्वप्रकाशक इत्यत्र यथा कर्त्रर्थकस्य प्रत्ययस्योपचरितत्वं तद्वदिहापीत्याह—**यथाऽर्क इति।** **नदीनामिवेति।** इवशब्दस्तथाशब्दार्थे। यथा नदीनां समुद्रोऽयनं तथा पुरुषोऽयनमित्यन्वयः। अस्तगमनस्वरूपमाह—**भिद्येते इति।** नामरूपभेद एवास्तगमनमिहेत्यर्थः। **यथास्वमिति।** यस्य यत्स्वरूपं प्राणाद्यात्मकं तदपि भिद्यत इत्यन्वयः। पुरुष इत्येवं प्रोच्यत इत्यस्यार्थमाह—**भेदे चेति।** **यदनष्टमिति।** कलानां हि रूपमारोप्याधिष्ठानो-भयात्मकं सत्यानृतमिथुनरूपं, तत्राऽऽरोप्यस्य नामरूपात्मकस्य भेदेऽधिष्ठानात्मकं रूपं पुरुषात्मनोच्यत इत्यर्थः।
३५ यथा समुद्रस्वरूपभूतं जलं मेघैराकृष्याभिवृष्टं गङ्गादिनामरूपोपाधिना समुद्राद्भिन्नमिव व्यवह्रियमाणं तदुपाधि-विगमे समुद्रस्वरूपमेव प्रतिपद्यत एवमविद्याकृतनामरूपोपाधिवशादात्मनो भिन्नमिव स्थितं सर्वं जगद्विद्ययाऽविद्या-कृतनामरूपविगमे ब्रह्ममात्रतयाऽवशिष्यत इत्यर्थः। एवं प्राणादिकलोपाधिक आत्मन उत्क्रमणादिशब्दितमरणादि-

अरा एव रथनाभौ कला यस्मिन्प्रतिष्ठिताः। तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति॥ ६॥

तान्होवाचैतावदेवाहमेतत्परं ब्रह्म वेद। नातः परमस्तीति॥ ७॥

ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं
तारयसीति नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ ८॥

ॐ भद्रं कर्णेभिरिति शान्तिः॥ ५

इत्यथर्ववेदीयप्रश्नोपनिषदि षष्ठः प्रश्नः

इत्यथर्ववेदीया प्रश्नोपनिषत्समाप्ता

य एवं विद्वान्गुरुणा प्रदर्शितकलाप्रलयमार्गः स एष विद्यया प्रविलापितास्वविद्याकामकर्मजनितासु प्राणादि-कलास्वकलोऽविद्याकृतकलानिमित्तो हि मृत्युस्तदपगमेऽकलत्वादेवामृतो भवति, तदेतस्मिन्नर्थं एष श्लोकः॥ ५॥

अरा रथचक्रपरिवारा इव रथनाभौ रथचक्रस्य नाभौ यथाप्रवेशितास्तदाश्रया भवन्ति यथा तथेत्यर्थः। १० कलाः प्राणाद्या यस्मिन्पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु तं पुरुषं कलानामात्मभूतं वेद्यं वेदनीयं पूर्णत्वात्पुरुषं पुरि शयनाद्वा वेद जानीयात्। यथा हे शिष्या मा वो युष्मान्मृत्युः परिव्यथा मा परिव्यथयतु। न चेद्विज्ञायेत पुरुषो मृत्युनिमित्तां व्यथामापन्ना दुःखिन एव यूयं स्थ। अतस्तन्मा भूद्युष्माकमित्यभिप्रायः॥ ६॥

तानेवमनुशिष्य शिष्यांस्तान्होवाच पिप्पलादः किलैतावदेव वेद्यं परं ब्रह्म वेद विजानाम्यहमेतत्। नातोऽस्मा-त्परमस्ति प्रकृष्टतरं वेदितव्यमित्येवमुक्तवाञ्शिष्याणामविदितशेषास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थं च॥ ७॥ १५

ततस्ते शिष्या गुरुणाऽनुशिष्टास्तं गुरुं कृतार्थाः सन्तो विद्यानिष्क्रयमपश्यन्तः किं कृतवन्त इत्युच्यते— अर्चयन्तः पूजयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा, किमूचुरित्याह—त्वं हि नोऽस्माकं पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरस्याभयस्य। यस्त्वमेवास्माकमविद्याया विपरीतज्ञानाज्जन्मजरा-मरणरोगदुःखादिग्राहादविद्यामहोदधेर्विद्याप्लवेन परमपुनरावृत्तिलक्षणं मोक्षाख्यं महोदधेरिव पारं तारयस्यस्मानित्यतः पितृत्वं तवास्मान्प्रत्युपपन्नमितरस्मात्। इतरोऽपि हि पिता शरीरमात्रं जनयति तथाऽपि स प्रपूज्यतमो लोके किमु २० वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्रायः। नमः परमऋषिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो नमः परमऋषिभ्य इति द्विर्वचनमादरार्थम्॥ ८॥

इति प्रश्नोपनिषदि षष्ठः प्रश्नः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतं
प्रश्नोपनिषद्भाष्यं समाप्तिमगमत् २५

व्यवहार इत्युक्तेः प्रयोजनं प्राणादिनिवृत्तावुत्क्रमणादिसर्वसंसारधर्मरहितात्मस्वरूपावस्थानरूपं दर्शयितुं स एष इति वाक्यं व्याचष्टे—य एवं विद्वानित्यादिना॥ ५॥

परिवारा इति। नाभेः परितो नाभौ नेम्यां च प्रोतास्तिर्यक्काष्ठविशेषा इत्यर्थः। यथाप्रवेशिताः इति। यथावत्सम्यक्प्रवेशिता इत्यर्थः। माङोऽर्थं व्यतिरेकप्रदर्शनेन स्पष्टयति—न चेदेति॥ ६॥

शिष्याणां कृतार्थतावुद्धिजननार्थं तानित्यादि वाक्यं व्याचष्टे—तानेवमिति॥ ७॥ ३०

प्रकिरणेनेति। प्रक्षेपेणेत्यर्थः। अतः पितृत्वं तवेति।

"जनकश्चोपनेता च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः"॥

इति स्मृतेरित्यर्थः। योऽस्माकमितिहेतूक्तेस्तात्पर्यं वदन्पितृत्वोक्तिमात्रेण विद्यानिष्क्रयार्थं किं दत्तमित्य-पेक्षायां स्वशरीरमेव परिचारकतया दासभावेन गुरवे दत्तमित्याह—इतरस्मादिति। पितृत्वादेव किं पूज्यतरत्वं परिचार्यत्वं स्वामित्वं किमु वक्तव्यमित्यर्थः। अत एव वाजसनेयके मां चापि सह दास्यायेतीत्युक्तमिति भावः॥ ८॥ ३५

इत्यानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां षष्ठः प्रश्नः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचिताऽऽथर्वणप्रश्नोपनिषद्भाष्यटीका समाप्ता

ॐ

अथर्ववेदीया

# माण्डूक्योपनिषत्[1]

## सगौडपादीयकारिका

**ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः।।**
**भद्रं नो अपि वातय मनः।।**

**ॐ शान्तिः शान्तिः शान्तिः**

**श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्** ५

**प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान्**
**भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान् ।**
**पीत्वा सर्वान्विशेषान् स्वपिति मधुरभुङ्मायया भोजयन्नो**
**मायासंख्यातुरीयं परममृतमजं ब्रह्म यत् तन्नतोऽस्मि।।१।।**

**श्रीमदनुभूतिस्वरूपाचार्यविरचिता माण्डूक्योपनिषद्भाष्यटीका** १०

चित्सत्तामात्ररूपस्य पूर्णस्यैव ममात्मनः। प्रकाराः सर्व एवैते कल्पनैव द्विचन्द्रवत्।।१।।

गौडपादीयभाष्यस्य टिप्पणं क्रियते स्फुटम्। चिरोज्झितागमाख्यातृचित्तसन्तापशान्तये।।२।।

नन्वत्राद्यश्लोकद्वयस्यार्थतस्तुरीयब्रह्ममात्रप्रतिपादनपरत्वात् पौनरुक्त्यम्, द्वितीये च श्लोके चतुर्थ एव पादेऽक्षराधिक्यात् समवृत्तार्धसमविषमवृत्तलक्षणाभावात् लक्षणदुष्टत्वादव्याख्येयत्वम्। तत्र न तावत् पौनरुक्त्यम्। प्रक्रियाविभागप्रदर्शनार्थत्वात्। द्विविधा खलु वेदान्ते प्रतिपादनप्रक्रिया। क्वचित्तदर्थेनोपक्रम्य त्वमर्थेनैक्यमुपदिश्यते। यथा १५

**श्रीमदानन्दगिर्याचार्यकृता माण्डूक्योपनिषद्भाष्यटीका**

परिपूर्णपरिज्ञानपरितृप्तिमते सते। विष्णवे जिष्णवे तस्मै कृष्णनामभृते नमः।।१।।
शुद्धानन्दपदाम्भोजद्वन्द्वमद्वन्द्वतास्पदम्। नमस्कुर्वे पुरस्कर्तुं तत्त्वज्ञानमहोदयम्।।२।।

---

१. 'ओमित्येतदक्षरमिदं सर्व'मित्यारभ्य 'एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद' इत्यन्ता द्वादशखण्डात्मिका माण्डूक्योपनिषत्। तस्याः विवरणरूपाः गौडपादीयकारिकाः प्रथमप्रकरणस्यैकोनत्रिंशत्- २० संख्याकाः, वैतथ्याद्वैतालातशान्त्याख्यानि प्रकरणानि चोपनिषदर्थविवरणपराणि गौडपादाचार्यप्रणीतानि—इति सम्प्रदायः। अत्र मध्वाचार्याः प्रथमप्रकरणस्थाः एकोनत्रिंशत्कारिकाः श्रुत्यन्तर्गता एवेति मन्यन्ते व्याकुर्वन्ति च। रामानुजसम्प्रदाये व्याख्यातारः रङ्गरामानुजास्तु कारिकाः न व्याकुर्वन्ति। तन्मतव्याख्याता कूरनारायणस्तु प्रथमप्रकरणगतकारिका अपि व्याकरोति तासामुपनिषदन्तर्भावं स्वीकुर्वाणः।

एवं स्थिते **विधुशेखरभट्टाचार्यनामा** कश्चित् प्राध्यापको वदति—प्रथमप्रकरणगताः श्लोका २५ एवोपनिषद्घटका उपनिषद्रूपाः; 'ओमि'त्यादिवाक्यानि तु तदर्थप्रतिपादकानि पौरुषेयवाक्यानि। कुत इति चेत्, कारिकाणां व्याख्यानत्वेनाभिमतानां मूलापेक्षया अधिकार्थप्रतिपादकत्वात् मूलस्यैव तथात्वात्।

अनुभूतिस्वरूपाचार्यटीका

छान्दोग्ये 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मिति तत्पदार्थं प्रक्रम्य 'स आत्मे'ति तस्यैवान्ते प्रत्यगात्मत्वं दर्शयति। क्वचित्तु, त्वमर्थेनोपक्रम्य तस्यासंसारिब्रह्मात्मत्वं निरूप्यते। यथा बृहदारण्यके 'योऽयं विज्ञानमयः प्राणेष्वि'ति प्रक्रम्य, 'ध्यायतीव लेलायतीवे'ति तस्यासंसारित्वमुक्त्वा, अन्ते 'स वा एष महानज आत्मे'ति ब्रह्मत्वं निरूपयति। तदेतत् ५ प्रक्रियाद्वैविध्यं श्लोकाभ्यां सूचयति।

तत्राद्येन 'यत्परं ब्रह्म तत्त्रतोऽस्मी'त्यस्मदर्थस्य तदैक्यस्मरणमेव नमनं सूत्रयता, ब्रह्मणः प्रत्यक्त्वप्रतिपादनपरत्वं सूत्रितम्। द्वितीयश्लोकेन च विश्वादिशब्दवाच्यस्य भोक्तुस्तुरीयत्वेनासंसारि-

आनन्दगिरिटीका

गौडपादीयभाष्यं हि प्रसन्नमिव लक्ष्यते। तदर्थतोऽतिगम्भीरं व्याकरिष्ये स्वशक्तितः॥३॥

१० [1]पूर्वे यद्यपि विद्वांसो व्याख्यानमिह चक्रिरे। तथाऽपि मन्दबुद्धीनामुपकाराय यत्यते॥४॥

श्रीगौडपादाचार्यस्य नारायणप्रसादतः प्रतिपन्नान् माण्डूक्योपनिषदर्थाविष्करणपरानपि श्लोकानाचार्यप्रणीतान् व्याचिख्यासुर्भगवान् भाष्यकारश्चिकीर्षितस्य भाष्यस्याविघ्नपरिसमाप्त्यादिसिद्धये परदेवतातत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गलाचरणं शिष्टाचारप्रमाणकं मुखतः समाचरन्नर्थादपेक्षितमभिधेयाद्यनुबन्धमपि सूचयति—**प्रज्ञानेत्यादिना**। तत्र [2]विधिमुखेन वस्तुप्रतिपादनमिति प्रक्रियां प्रदर्शयति—**ब्रह्म यत्तत्रतोऽस्मीति**। अस्मदर्थस्य १५ तदैक्यस्मरणरूपं नमनं सूचयता ब्रह्मणस्तदर्थस्य प्रत्यक्त्वं सूचितमिति तत्त्वमर्थयोरैक्यं विषयो ध्वनितः। यच्छब्दस्य प्रसिद्धार्थावद्योतकत्वाद् वेदान्तप्रसिद्धं यद् ब्रह्म तत्त्रतोऽस्मीति सम्बन्धेन मङ्गलाचरणमपि श्रुत्या क्रियते। ब्रह्मणोऽद्वितीयत्वादेव जननमरणकारणाभावाद**मृतमज**मित्युक्तम्। जननमरणप्रबन्धस्य संसारत्वात् तन्निषेधेन स्वतोऽसंसारित्वं दर्शयता संसारानर्थनिवृत्तिरिह प्रयोजनमिति द्योतितम्। यद्यद्वितीयं स्वतोऽसंसारि ब्रह्म वेदान्तप्रमाणकं तर्हि कथमवस्थात्रयविशिष्टा जीवा भोक्तारोऽनुभूयन्ते, भोजयिता चेश्वरः श्रूयते, भोज्यं च विषयजातं पृथगुपलभ्यते। २० तदेतदद्वैते विरुध्येतेत्याशङ्क्य ब्रह्मण्येव जीवा जगदीश्वरश्चेति सर्वं काल्पनिकं सम्भवतीत्यभिप्रेत्याह—**प्रज्ञानेति**। प्रकृष्टं जन्मादिविक्रियाविरहितं कूटस्थं ज्ञानं ज्ञप्तिरूपं वस्तु **प्रज्ञानम्**। तच्च ब्रह्म। 'प्रज्ञानं ब्रह्मे'ति हि श्रूयते। तस्यांशवो

---

मूलस्थानां 'सप्ताङ्गः एकोनविंशतिमुखः' इत्यादिकठिनपदानां कारिकाभिरव्याख्यानात्। मूलस्थवैश्वानरपदं विहाय विश्वपदप्रयोगात्। जागरितस्थानः, स्वप्नस्थानः, सुषुप्तस्थानः इत्यादिपदानां कारिकास्वव्याख्यानात्।

वैतथ्याद्वैतालातशान्तिप्रकरणानि मिलित्वा अथवा पृथगेव ग्रन्थान्तराणि? न तेषां प्रथमप्रकरणेन २५ सम्बन्धो वक्तव्यः, पृथग्ग्रन्थत्वेऽपि बाधकाभावात् कारिकासु आदौ प्रथमप्रकरणविवरणार्था इमाः कारिका इत्यनुक्तत्वाच्चेति।

तत्रेदमुच्यते—सम्प्रदायागतो महत्या श्रद्धया परिपालितो भारतवर्षे सर्वत्र एकरूपेण प्रवृत्तो ग्रन्थसन्निवेशः कथं वा केनचिदाधुनिकेन सम्प्रदायानभिज्ञेनान्यथयितुं पार्यते। वयं तु पृच्छामः—यथाश्रुतसम्प्रदायावलम्बनेन प्रवृत्तायाः श्रीभगवत्पादीयकारिकाव्याख्याया अवलम्बने काऽनुपपत्तिः? को वा ३० प्रद्वेषस्तस्य महाभागस्य? यदुक्तम्, गद्यभागगतानां केषाञ्चित्पदानां कारिकासु व्याख्या न कृतेति, तत्र। उपनिषदर्थानुसन्धानकुशलानां तदुक्तपदार्थाः प्रसिद्धा एवेति न व्याख्यापेक्षा तेषाम्। यदपि वैतथ्यादि-प्रकरणानां पृथग्ग्रन्थत्वमेवास्त्विति, तत्र। आगमप्रकरणगतप्रपञ्चमिथ्यात्वस्य विस्तरेण निरूपणाय द्वितीयं प्रकरणम्। 'अद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय' इत्यत्र विज्ञेयत्वेनोक्ताद्वैतस्य युक्त्याऽप्युपपादनार्थं तृतीयमद्वैतप्रकरणं, तत्प्रतिपक्षभूतानां निराकरणार्थं चतुर्थमिति भगवत्पादोक्त्यैव भवदुक्तदुराक्षेपाणां ३५ समाधानं भवत्येवेति विजानीहि। अपि च 'सोऽयमात्मा चतुष्पात्'—इत्यारभ्य प्रवृत्ता सर्वाप्युपनिषत् नृसिंहोत्तरतापिन्यामपि दृश्यते। यदि वाक्यात्मिका उपनिषत्त्वेन प्रसिद्धा केनचिद्रचितटीका अभविष्यत् कथमुपनिषदि दृश्यते? तस्मात् सैवोपनिषत्, श्लोकास्तु तत्रादृश्यमानत्वात् पौरुषेया एवेति निर्णयः।

१. पूर्वे विद्वांसः—अनुभूतिस्वरूपादयः। २. स्वरूपप्रदर्शनद्वारा। यथा—सत्यं ज्ञानमनन्तं ब्रह्मेति।

अनुभूतिस्वरूपाचार्यटीका

ब्रह्मत्वप्रतिपादनपरत्वं सूत्रितम्। यद्वा, आद्येन कृतस्य नमस्कारस्य फलं विघ्नोपप्लवाद्रक्षणं द्वितीयेन याचते—**पात्विति**। अथवा विधिमुखेन निषेधमुखेन च ब्रह्मप्रतिपादनमिति प्रक्रियाद्वैविध्यं श्लोकाभ्यां सूचयति।

नन्वनयोः प्रक्रिययोः को भेदः? उच्यते—लौकिकेष्वन्तःकरणवृत्तिशबलितेषु ज्ञानानन्दादिषु व्युत्पन्नाश्शब्दाः सामानाधिकरण्येन वेदे प्रयुज्यमाना विशेषणविशेष्यभावबलेन सम्भावितानृतजडपरिच्छेददुःखानात्मविरोधिस्वरूपं ब्रह्मत्वेन लक्षयन्तः सविलासाविद्यानिवृत्तिफलावसाना भवन्ति। तदेतद्विधिमुखेन बोधनं सूत्रितम्—**ब्रह्म यदिति**। स्थूलाद्यर्थेषु व्युत्पन्नानां स्थूलादिशब्दानामभाववाचकनञा सह प्रयुज्यमानानां नैसर्गिकस्थूलाद्यभावबोधनेनाध्यस्तनिवृत्तिफलावसानत्वम्। यथा स्वाभाविकासर्पत्वबोधेन 'नायं सर्प' इत्याप्तवाक्यस्य सर्पाध्यासनिवृत्तिफलत्वम्। तदेतन्निषेधमुखेन बोधकत्वं सूचितम्—**हित्वा सर्वान्विशेषानिति**।

ननु नैसर्गिकस्थौल्याद्यभावः किं सन् उतासन्? आद्ये सद्वितीयता, अन्त्ये असति वेदान्ताः प्रमाणं स्युः। ततो ब्रह्मण औपनिषदत्वविशेषणमसमञ्जसं स्यात्। सन्नसन्निति कोऽर्थः? यदि भावोऽभावो वेति, नैवं विकल्पः सम्भवति। प्रतिपन्ने धर्मिणि विरुद्धानेकविशेषोपनिपाताभावात्। नो खलु घटः किं घटोऽघटो वेति विकल्पः सञ्जाघटीति। यदि बाध्योऽबाध्यो वेति, तत्राबाध्य इति ब्रूमः। तदालम्बनस्यैव प्रमाणस्य इतराध्यस्तनिवर्तकत्वात्। न सद्वितीयता, भावाद्वैताभ्युपगमात्। सम्बन्धानिरूपणादियुक्तिबाधाच्च न दृश्यत्वमनेकान्तम्। न चौपनिषदत्वव्याघातः, वाचकशक्त्या स्थूलाद्यभावमभिधाय तदुपलक्षिते पर्यवसानात्। ननु अभावबोधस्य अध्यस्तदुःखनिवृत्तिफलत्वे सत्यपि किमित्यद्वैते पर्यवसानमिष्यते? अजिज्ञासितंप्रतिपादनप्रसङ्गात्। परमानन्दं हि कामयमानः मुमुक्षुरद्वैतानन्दं ब्रह्म जिज्ञासते। अभावज्ञानाच्च मोक्षः प्रसज्येत। तदा च 'तरति शोकमात्मविदि'त्युपक्रम्य, 'तस्मै मृदितकषायाय तमसः पारं दर्शयती'त्युपसंहारो विरुध्यते।

ये तु, निषेधशास्त्रं निवर्तकमेवेति वदन्ति, तेषां मुद्गराभिघातवत् कारकत्वप्रसङ्गः। किञ्चिदनालम्ब्य स्वभावविशेषान्निवर्तकत्वे सदा निवर्त्तकत्वप्रसङ्गोऽपि। तस्मात् तात्पर्यवृत्या अद्वैतस्य औपनिषदत्वं निषेधपक्षेऽपि सिद्धम्।

अथवा प्रकरणचतुष्टयात्मकस्यागमस्य वेदान्तैकदेशसम्बद्धत्वख्यापनाय निर्गुणवाक्यप्रतिपाद्यं ब्रह्म आद्यश्लोकेन सूत्रितम्। माण्डूक्यश्रुतिवाक्यव्याख्यानरूपेण आद्यप्रकरणेन ओङ्कारमात्राणामात्मपादानां चैकीकरणेन प्रतिपाद्यं तुरीयं ब्रह्म सूत्रितं द्वितीयश्लोकेन। न च तस्य लक्षणदुष्टत्वं, गाथालक्षणोपेतत्वात्। तदुक्तम्—

विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम्॥(वृत्तरत्नाकरः)इति।

आनन्दगिरिटीका

रश्मयो जीवाश्चिदाभासाः सूर्यप्रतिबिम्बकल्पा [1] निरूप्यमाणा बिम्बकल्पाद् ब्रह्मणो भेदेनासन्तस्तेषां प्रताना विस्तारास्तैरपर्यायमेवाशेषशरीरव्यापिभिः। तदेवाह—**स्थिरेति**। स्थिरा वृक्षादयः। चरा मनुष्यादयः। तेषां निकरः समूहस्तं व्याप्तुं शीलमेषामिति तथा, तैरिति यावत्। लोका लोक्यमाना विषयास्तान् व्याप्येति विषयसम्बन्धोक्तिस्तत्फलं कथयति—**भुक्त्वेति**। भोगाः सुखदुःखादिसाक्षात्कारास्तेषां स्थविष्ठत्वं स्थूलतमत्वं देवतानुगृहीतबाह्येन्द्रियद्वारा बुद्धेस्तत्तद्विषयाकारपरिणामजन्यत्वम् तान्भुक्त्वा स्वपितीति सम्बन्धः। एतेन जागरितं ब्रह्मणि कल्पितमुक्तम्। तत्रैव स्वप्नकल्पनां दर्शयति—**पुनरपीति**। जाग्रद्धेतुधर्माधर्मक्षयानन्तर्यं पुनःशब्दार्थः। स्वप्नहेतुकर्मोद्भवे च सतीत्यपिनोच्यते। न च तत्र बाह्यानीन्द्रियाणि स्थूला विषयाश्च सन्ति; किं तु धिषणाशब्दितबुद्ध्यात्मानो [2] वासनात्मानो विषया भासन्ते,ताननुभूय स्वपितीत्यर्थः। तेषां प्रापकमुपन्यस्यति—**कामजन्यानिति**। कामग्रहणं कर्माविद्ययोरुपलक्षणार्थम्। अवस्थाद्वयकल्पनां ब्रह्मणि दर्शयित्वा तत्रैव सुषुप्तिकल्पनां दर्शयति—**पीत्वेति**। सर्वे विशेषाः सर्वे विषयाः स्थूलाः सूक्ष्माश्च जागरितस्वप्नरूपास्तान् पीत्वा स्वात्मन्यज्ञाते प्रविलाप्य स्वपिति कारणभावेन

१. प्रतिबिम्बो बिम्बव्यतिरिक्तो न वेति विचारे, न तावदतिरिक्तः आदर्शान्तस्तत्परिमातुं प्रदेशाभावात्। नाप्यभिन्नः, उपाधावन्तर्गतत्वेन प्रतीतेः। अतः भेदेन वा अभेदेन वा निरूपयितुमशक्यः प्रातिभासिकः इत्येकः पक्षः, बिम्ब एवादर्शतलमभिहत्य परावृत्तैश्चक्षूरश्मिभिः अभिमुखत्वेन गृह्यते। तत्राभिमुख्यं दर्पणस्थत्वं च कल्पितं, स्वरूपं तु बिम्ब एवेति विवरणकाराः। २. वासनाजन्याः प्रातिभासिकाः।

**यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान्**
**पश्चाच्चान्यान्स्वमतिविभवाज्ज्योतिषा स्वेन सूक्ष्मान्।**
**सर्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा**
**हित्वा सर्वान्विशेषान्विगतगुणगणः पात्वसौ नस्तुरीयः ।।२।।**

अनुभूतिस्वरूपाचार्यटीका

५ आद्यश्लोको मूलाचार्यस्य द्वितीयो भाष्यकारस्येत्यसाम्प्रदायिकम्; सम्बन्धानभिधानात्, 'ओमित्येतदक्षर-मित्याद्यारभ्यत' इति आदिग्रहणविरोधाच्चेति। मङ्गलमाचरति—**प्रज्ञानेति**।

अत्रैवं पदान्वयः—यच्छब्दस्य प्रसिद्धावद्योतकत्वात् वेदान्तप्रसिद्धं यदद्वैतं ब्रह्म तन्नतोऽस्मीति। अद्वितीयत्वादेव जन्ममरणकारणाभावात् अमृतमजम्। जन्ममरणप्रबन्धो हि संसारः, तन्निषेधेन स्वतोऽसंसारित्वं दर्शितम्।

१० यदि स्वतोऽसंसार्यद्वितीयं ब्रह्म वेदान्तवेद्यं, तर्हि—अवस्थात्रयविशिष्टाः जीवा भोक्तारो दृश्यन्ते, भोजयिता चेश्वरः श्रूयते, तद्विरुध्येत—इत्याशङ्क्य ब्रह्मण्येव काल्पनिकं सर्वं सम्भावयति—**प्रज्ञानांश्वित्यादिना**। प्रज्ञानं ब्रह्म, तस्यांशव इवांशवो जीवाः। चिन्मात्रतन्त्रानाद्यनिर्वाच्याज्ञानेषु आवरणविक्षेपशक्तिमत्सु मायाव्यष्टिषु प्रतिबिम्बितं तदेव चैतन्यमनन्तजीवव्यवहारास्पदमिति बहुवचनम्। तेषां प्रताना विस्ताराश्चिदाभासाः तैः युगपत् सकलशरीर-व्यापिवेदनानुसन्धानानुपपत्त्या स्थावरजङ्गमशरीरव्यापिभिः लोकान् विषयान् व्याप्य स्थूलतमान् सुखदुःखादिभोगान्

१५ भुक्त्वा स्वपितीति सम्बन्धः। जागरिते हि अदृष्टेन्द्रियादिसहकृतं मनो दीर्घप्रभाकारेण गवाक्षनिस्सृतप्रदीपप्रभावत् विषयपर्यन्तं सञ्चरत् तान् व्याप्नोति। तदुपहितं चैतन्यं तत्र चिदाभासहेतुर्भवति। यथा जले प्रतिबिम्बितःसविता तत्र प्रकाशाभासोदयहेतुः। एषः स्थूलो भोगः। स्वप्ने तु धिषणोद्भासितान् जाग्रद्बुद्धिवासनानिर्मितान् कामग्रहणस्योपलक्षणार्थत्वात् कामकर्मविद्यानिमित्तान् भुक्त्वा पुनरपि क्रमेणाक्रमेण वा स्वपिति स्थानद्वयोद्भूतश्रमेण परिश्रान्तं पीत्वा सर्वान् विशेषान् मधुरभुगानन्दभुक् स्वापं मौढ्यलक्षणमनुभवति चिदाभासोदयेनेत्यर्थः।

२० एतदुक्तं भवति—ब्रह्मैव व्यष्ट्युपाधिस्थताद्वारेण जीवभावापन्नं भोक्तृ। समष्टिरूपमायायां प्रतिबिम्बितं नोऽस्मान् घटाकाशकल्पान् जीवान् मायया मोहयत् भोजयति। अतो नाद्वैतविरोध इति।

ननु—चतुर्णां पूरणस्तुरीय इति व्युत्पत्तेः ब्रह्मणस्तुरीयत्वेन श्रुत्या निर्देशात् सद्वितीयत्वं प्राप्तम्। तत्राह—**मायासंख्येति**। कल्पितस्थानत्रयसंख्यापेक्षया तुरीयत्वं, न तु सद्वयतयेत्यर्थः। मायावित्वेन प्राप्तं निकृष्टत्वं निराचष्टे—**परमिति**। चित्तत्रापि माया स्वप्रतिबिम्बित एव चैतन्ये स्वसंसर्गव्यवहारं जनयति। दर्पणाद्युपाधीनामेवंस्वभावतादर्शनात्;

२५ न तु बिम्बकल्पे ब्रह्मणीत्यर्थः।।१।।

**यो विश्वात्मेति**। विधीयत इति विधिः धर्मः; अविधिरिति पदच्छेदेनाधर्मोऽपि गृह्यते। तदुपस्थापितादित्यादि-

आनन्दगिरिटीका

तिष्ठतीत्यर्थः। तत्राऽऽनन्दप्राधान्यमभिप्रेत्य विशिनष्टि—**मधुरभुगिति**। अवस्थात्रयस्य मायाकृतस्य मिथ्याभूतस्य प्रतिबिम्बकल्पेष्वस्मासु सम्बन्धितामिवाऽऽपाद्यास्मान् भोजयद् ब्रह्म वर्तते। अतो ब्रह्मण्येवावस्थात्रयम्। तद्वन्तो जीवाः,

३० मायावि ब्रह्म च ब्रह्मणि परिशुद्धे परिकल्पितं सर्वमित्याह—**माययेति**। तस्यैव ब्रह्मणोऽवस्थात्रयातीतत्वेन विज्ञप्तिमात्रत्वं दर्शयति—**तुरीयमिति**। चतुर्णां पूरणं तुरीयमिति व्युत्पत्तेर्ब्रह्मणस्तुरीयत्वेन निर्देशात्प्राप्तं सद्वितीयत्वमित्याशङ्क्य कल्पितस्थानत्रयसंख्यापेक्षया तुरीयत्वं न सद्वितीयत्वेनेत्याह—**मायेति**। मायावित्वेन निकृष्टत्वमाशङ्क्योक्तम्—**परमिति**। मायाद्वारा ब्रह्मणस्तत्सम्बन्धेऽपि स्वरूपद्वारा न तत्सम्बन्धोऽस्तीति कुतो निकृष्टतेत्यर्थः।।१।।

३५ विधिमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य तदर्थेनोपक्रम्य तस्य त्वमर्थप्रत्यगात्ममात्रत्वमुक्तम्। अभिधेय-फलोक्त्या सम्बन्धाधिकारिणौ च सूचितौ। [१]निषेधद्वारा वस्तुप्रतिपादनप्रक्रियामाश्रित्य त्वमर्थेनोपक्रम्य तस्य तदर्थासंसारिब्रह्ममात्रत्वं प्रत्याययति—**यो विश्वात्मेति**। तत्र त्वमर्थः स्वतः सिद्धश्चिद्धातुः सर्वनाम्ना परामृश्यते।

---

१. निषेधद्वारा वस्तुप्रतिपादनम्—यथा 'नेति नेती'ति प्रपञ्चं निषिध्य अन्यत्परमस्तीति ब्रह्म प्रतिपादितम्। एवमेव विगतगुणगणत्वप्रतिपादनपूर्वकं तुरीयं ब्रह्म प्रतिपाद्यते।

### अनुभूतिस्वरूपाचार्यटीका

प्रकाशानुगृहीतेन्द्रियसम्बन्धित्वेन मायामयमहाभूतपरिणामत्वेन स्थूलतमान् प्राश्य यो विश्वात्मा भवति समग्रस्थूलभोगसाधनाभिमानात्। पश्चाच्च स्वप्नावस्थायां वासनामात्रमयत्वेन सूक्ष्मान् स्वेन ज्योतिषा उपलभ्य यस्तैजसो भवति, पुनरपि क्रमेण अक्रमेण वा सुषुप्ते सर्वान्विशेषप्रत्ययान् स्वात्मनि संहृत्य यः प्रज्ञानघनः प्राज्ञो भवति, स एव त्र्यवस्थो जीवो 'नान्तःप्रज्ञं न बहिष्प्रज्ञमि'त्यादिनिषेधशास्त्रजनितप्रमाणोपारूढः सर्वानध्यस्तविशेषान् हित्वा निर्गुणपरमात्मरूपेण सम्पृक्तो नोऽस्मान् व्याख्यातॄन् श्रोतॄंश्च विघ्नाभिभवात् पातु रक्षतु इत्यर्थः॥२॥ ५

### आनन्दगिरिटीका

तस्मिञ्जागरितमारोपितं तमुदाहरति—**विश्वात्मेति**। विश्वं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं स्थूलं जगद् वैराजं शरीरम्। तस्मिञ्जागरिते चाहंममेत्यभिमानवानित्यर्थः। तस्यार्थक्रियामुपन्यस्यति—**विधिजेति**। विधीयत इति विधिर्धर्मो नञाऽनुबन्धेन ततो व्यतिरिक्तोऽविधिरधर्मस्ताभ्यां धर्माधर्माभ्यामविद्याकामप्रसूताभ्यां विषयाः शब्दादयो जन्यन्ते। तान् भोगयोग्यतया भोगशब्दितानादित्याद्यनुगृहीतबाह्येन्द्रियद्वारकबुद्धिपरिणामगोचरतया स्थूलतमान् प्राश्य साक्षादनुभूय स्थितोऽयं प्रत्यगात्मेत्यर्थः। तत्रैव स्वप्नावस्थामध्यस्यति—**पश्चाच्चेति**। जाग्रद्धेतुकर्मक्षयानन्तरं स्वप्नहेतुकर्मोद्भवे च सति स्थूलेभ्यो विषयेभ्योऽन्यानस्मादेव हेतोः सूक्ष्मान् बाह्येन्द्रियाणामुपरतत्वादविद्याकामकर्मप्रेरितात्मीयमतिप्रभावादेव प्रसूतानन्तःकरणात्मनो वासनामयानादित्यादिज्योतिषामस्तमितत्वादात्मभूतेनैव ज्योतिषा विषयीकृताननुभूयापञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सूक्ष्मप्रपञ्चं हैरण्यगर्भं शरीरं स्वप्नस्थानं चाभिमन्यमानस्तैजसो भवतीत्यर्थः। तत्रैव सुषुप्तकल्पनां दर्शयति—**सर्वानिति**। स्थूलसूक्ष्मविभागेन स्थानद्वयावच्छिन्नान् प्रकृतानेतानशेषानपि विशेषानुपाधिद्वयभूतानुपाधिद्वयद्वारकस्थानद्वयसञ्चारप्रयुक्तश्रमोद्भवानन्तरं तस्यापि परिजिहीर्षायां शनैरनुक्रमेणाक्रमेण वा स्वात्मन्यज्ञाते कारणात्मनि स्थापयित्वोपसंहृत्याव्याकृतप्रधानः सन् प्राज्ञो भवतीत्यर्थः। तस्यैव प्रत्यगात्मनः स्थानत्रयविशिष्टस्य 'नान्तःप्रज्ञं न बहिःप्रज्ञमि'त्यादिप्रतिषेधशास्त्रप्रसूतप्रमाणज्ञानसमारूढस्य सर्वानप्यनर्थविशेषान् कार्यकारणरूपान् प्रमाणज्ञानप्रभावादेव हित्वा निरुपाधिकपरिपूर्णपरिज्ञानपरमात्मस्वरूपेण परिनिष्पन्नं तत्त्वं कथयति—**हित्वेति**। प्रथमश्लोकेन प्रदर्शितप्रणामस्य प्रत्यूहप्रवाहप्रशमनात्मकं प्रयोजनं स्थानत्रयप्रकल्पनातीतपरवस्तुप्रयुक्तं प्रार्थयते द्वितीयेन—**पात्विति**। नोऽस्मान् व्याख्यातृत्वेन श्रोतृत्वेन च व्यवस्थितान् पुरुषार्थपरिपन्थिभूतकारणनिरासपुरःसरं परमात्मा पराकृताशेषकल्पनो नित्यविज्ञप्तिस्वभावो मोक्षप्रदानेन तद्धेतुज्ञानप्रदानेन च परिरक्षतादित्यर्थः। १० १५ २०

**केचित्तु** प्रकरणचतुष्टयात्मनो ग्रन्थस्य वेदान्तैकदेशसम्बद्धत्वज्ञापनार्थं निष्प्रपञ्चं वाक्यप्रतिपाद्यं ब्रह्म प्रथमश्लोकेन सूचितम्। द्वितीयेन माण्डूक्यश्रुतिव्याख्यानरूपेणाऽऽद्यप्रकरणेन प्रणवमात्राणामात्मपादानां चैकीकरणेन प्रतिपाद्यं ब्रह्म सूचितमिति मन्यन्ते। न च द्वितीयश्लोके चतुर्थपादे वृत्तलक्षणाभावादसाङ्गत्यमाशङ्कनीयम्। [1]गाथालक्षणस्य तत्र सुसम्पादत्वादिति द्रष्टव्यम्। अन्ये त्वाद्यश्लोकं मूलश्लोकान्तर्भूतमभ्युपगच्छन्तो द्वितीयश्लोकं भाष्यकारप्रणीतमभ्युपयन्ति। तदसत्। उत्तरश्लोकेष्विवाऽऽद्येऽपि श्लोके भाष्यकृतो व्याख्यानप्रणयनप्रसङ्गात्। ओमित्येतदक्षरमित्यादिभाष्यविरोधाच्च[2]। अपरे पुनराद्येन श्लोकेन शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणद्वारेण नमनक्रिया प्रकरणप्रारम्भोपयोगित्वेन क्रियते। परदेवताभक्तिवदपरदेवताभक्तेरपि विद्याप्राप्तावन्तरङ्गत्वस्य शास्त्रीयस्य शिष्यशिक्षायै ज्ञापनार्थमवस्थात्रयातीतात्रित्यसिद्धविज्ञानमूर्तेराचार्यान्मोक्षौपयिकज्ञानप्राप्तिः 'आचार्यवान्पुरुषो वेदे'त्यादिश्रुत्यवष्टम्भेन मुमुक्षुणा प्रार्थ्यते द्वितीयश्लोकेनेति कल्पयन्ति॥२॥ २५ ३०

---

१. गाथालक्षणेति—तदुक्तं वृत्तरत्नाकरे—

विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम्॥

अत्र दश धर्मा भारते प्रोक्ताः—"मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः। त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश॥" इति। प्रकृतश्लोके विषमाक्षरपादत्वमात्रम्। ३५

२. भाष्ये ओमित्यारभ्य व्याख्यानविरोधात्।

**ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥**

**ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्। वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते। अत एव न पृथक् सम्बन्धाभिधेयप्रयोजनानि वक्तव्यानि। यान्येव तु वेदान्ते सम्बन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति। तथाऽपि प्रकरणव्याचिख्यासुना वक्तव्यानि। तत्र प्रयोजनवत्साधनाभि-** ५

अनुभूतिस्वरूपाचार्यटीका

व्याख्येयस्य प्रतीकमादत्ते—**ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानमिति।** प्रकरणलक्षणाभावादव्याख्येयत्वं नाशङ्कनीयमित्याह—**वेदान्तार्थेति।** वेदान्तानामर्था निष्प्रपञ्चब्रह्मात्मैकत्वसगुणब्रह्मोपासनकार्यब्रह्मोपासनादिविषयास्तेषां मध्ये सारमात्यन्तिकपुरुषार्थवत्तया निर्विशेषब्रह्मात्मैकत्वं, तस्य शास्त्रे विस्तरेणोक्तस्य संक्षेपाभिधायकमिदम्। अतोऽवान्तरप्रयोजनसद्भावाद् व्याख्यातुमारभ्यत इत्यर्थः। निर्विषयत्वासम्बन्धत्वादिप्रयुक्ताऽपि अव्याख्येयत्वाशङ्का प्रकरणत्वादेव पर्यहारीत्याह—**अत एवेति।** श्रोतृप्रवृत्त्यर्थमवश्यं वक्तव्यानीति चेत्, तत्राह—**यान्येव त्विति।** १०

ननु प्रयोजनं मोक्षाख्यं ब्रह्मज्ञानस्य, न वेदान्तानाम्; तस्यैव च विषयेण ब्रह्मणा सम्बन्धोऽपि, अतः कथमुच्यते वेदान्ते सम्बन्धाभिधेयप्रयोजनानीति, तत्राऽऽह—**तत्रेति।** प्रयोजनस्य मोक्षस्य साधनं ब्रह्मात्मैकत्वविज्ञानं, तस्य

१५ आनन्दगिरिटीका

यदुद्दिश्य मङ्गलाचरणं कृतं तन्निर्देष्टुमादौ व्याख्येयस्य प्रतीकं गृह्णाति—**ओमित्येतदिति।** 'ओमित्येतदक्षरमि'त्यादिप्रकरणचतुष्टयविशिष्टमिदमारभ्यते व्याख्यायतेऽस्माभिरित्युद्देश्यं प्रतिजानीते। किमिदं शास्त्रत्वेन वा प्रकरणत्वेन वा व्याचिख्यासितम्? नाऽऽद्यः, शास्त्रलक्षणाभावादस्याशास्त्रत्वात्। एकप्रयोजनोपनिबद्धमशेषार्थप्रतिपादकं हि शास्त्रम्। अत्र च मोक्षलक्षणैकप्रयोजनवत्त्वेऽपि नाशेषार्थप्रतिपादकत्वम्। न द्वितीयः, प्रकरणलक्षणाभावादित्याशङ्क्याऽऽह—**वेदान्तेति।** शास्त्रं वेदान्तशब्दार्थः। तस्यार्थोऽधिकारिनिर्णयगुरूपसदनपदार्थद्वयतदैक्यविरोधपरिहारसाधनफलाख्यः। तत्र सारो जीवपरैक्यम्, तस्य सम्यग्ग्रहः संग्रहः संशयविपर्यासादिप्रतिबन्धव्युदासेन तदुपायोपदेशो यस्मिन्प्रकरणे तत्तथेति यावत्। तथा च—"शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्"[२]। इदं प्रकरणत्वेन व्याख्यातुमिष्टम्। निर्गुणवस्तुमात्रप्रतिपादकत्वात् तत्प्रतिपादनसंक्षेपस्य च कार्यान्तरत्वात्प्रकरणलक्षणस्य चात्र सम्पूर्णत्वादित्यर्थः। प्रकरणत्वेऽपि निर्विषयत्वादिप्रयुक्तमव्याख्येयत्वमाशङ्क्याऽऽह—**अत एवेति।** प्रकरणत्वादेव प्रकृतशास्त्राद्भेदेन सम्बन्धादीनामवाच्यत्वेऽपि प्रकरणप्रवृत्त्यङ्गतया तानि त्ववश्यं वक्तव्यानीत्याशङ्क्य शास्त्रीयसम्बन्धादीनां तदीये प्रकरणेऽर्थात्प्राप्तत्वान्नास्ति वक्तव्यत्वमर्थपुनरुक्तेरित्याह—**यान्येवेति।** श्रोतारो हि शास्त्रीयं प्रकरणं प्रतिपद्यमानाः शास्त्रीयाण्येव सम्बन्धादीन्यत्र वचनाभावेऽपि बुध्यमानाः प्रवृत्तिं तस्मिन् प्रकुर्वन्तीत्यर्थः। तर्हि प्रकरणकर्तृवदेव तद्भाष्यकृताऽपि विषयादीनामत्रावक्तव्यत्वाद्भाष्यकृतो विषयाद्युपन्यासायासो वृथा स्यादित्याशङ्क्याऽऽह—**तथाऽपीति।** प्रकरणकर्तुरवक्तव्यान्यपि तद्भाष्यकृता तानि संक्षेपतो वक्तव्यानीति व्याख्यातॄणां मतम्। द्वाभ्यामनुक्तत्वे तेष्वनाश्वासाशङ्कावकाशादित्यर्थः। २० २५ ३०

भाष्यकृता प्रयोजनादीनां वक्तव्यत्वे सिद्धे शास्त्रप्रकरणयोर्मोक्षलक्षणप्रयोजनवत्त्वं प्रतिजानीते—**तत्रेति।** प्रयोजनवच्छास्त्रमिति सम्बन्धः। शास्त्रग्रहणं प्रकरणोपलक्षणार्थम्। मोक्षलक्षणं फलं ब्रह्मज्ञानस्येष्यते, न शास्त्रप्रकरणयोरित्याशङ्क्याऽऽह—**साधनेति।** सत्यं मोक्षस्य साधनं ब्रह्मात्मैकत्वज्ञानम्। तस्य जनकं शास्त्रादि। तद्भावेन ज्ञानव्यवधानेन मोक्षफलवद्भवति शास्त्रादीत्यर्थः। तथाऽपि ब्रह्मणा विषयेण सम्बन्धो वेदान्तानामेवेष्यते, तत्कथमभिधेयसम्बद्धं शास्त्रादीत्याशङ्क्य ब्रह्मविचारमन्तरेण तज्ज्ञानजनकत्वायोगात्तज्ज्ञानजननद्वारा विषयसम्बन्ध- ३५

---

१. 'विधयः' पा.। २. "आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः" इत्युत्तरार्धम्।

**व्यञ्जकत्वेनाभिधेयसम्बद्धं शास्त्रं पारम्पर्येण विशिष्टसम्बन्धाभिधेयप्रयोजनवद्भवति। किं पुनस्तत्प्रयोजनमित्युच्यते। रोगार्तस्येव रोगनिवृत्तौ स्वस्थता। तथा दुःखात्मकस्याऽऽत्मनो द्वैतप्रपञ्चोपशमे स्वस्थता अद्वैतभावः प्रयोजनम्। द्वैतप्रपञ्चस्याविद्याकृतत्वाद्विद्यया तदुपशमः स्यादिति ब्रह्मविद्याप्रकाशनायास्यारम्भः क्रियते। ''यत्र हि द्वैतमिव भवति'' ''यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यद्विजानीयात्'' ''यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं**

अनुभूतिस्वरूपाचार्यटीका

जनकत्वेन शास्त्रमपि ब्रह्मसम्बद्धं भवति, तदभिधानमन्तरेण जनकत्वासम्भवात् ज्ञानजननद्वारेण तत्फलेनैव फलवच्चेत्यर्थः। शास्त्रीयं प्रयोजनमाक्षिपति—**किं पुनरिति**। सिद्धत्वे नास्य प्रयोजनत्वम्, साध्यत्वे स्वर्गवदनित्यत्वमिति भावः। स्वस्वरूपत्वेन सिद्धस्यापि अद्वैतानन्दस्याभिव्यक्तिप्रतिबन्धकबन्धनिवृत्त्यौपाधिक-साध्यत्वेन प्रयोजनत्वं घटत इति परिहरति—**उच्यत इति**। तथापि बन्धस्य सत्त्वात् कर्मणैव निवृत्तिर्न ज्ञानेनेत्याशङ्क्याह—**द्वैतप्रपञ्चस्येति**। बन्धस्याविद्यात्मकत्वेऽन्वयव्यतिरेकगर्भां श्रुतिमाह—**यत्र हीत्यादिना**। एवं

आनन्दगिरिटीका

सिद्धिरित्याह—**अभिधेयेति**। उक्तं ज्ञानव्यवहितं प्रयोजनादि शास्त्रादेरुपसंहरति—**पारम्पर्येणेति**। तत्र सम्बन्धो ब्रह्मज्ञानं [1]शास्त्रादिना जन्यमेवेत्ययोगव्यवच्छेदादुक्तः। शास्त्रादिनैव जन्यमित्यन्ययोगव्यवच्छेदाद्विषयोऽपि दर्शितः।

यदुक्तं प्रयोजनवत्त्वं तदाक्षिपति—**किं पुनरिति**। साध्यत्वे स्वर्गवदनित्यत्वम्, नित्यत्वे साधनानधीनत्वात्र तादर्थ्येन शास्त्रादि प्रयोक्तव्यमित्यर्थः। मोक्षस्याऽऽत्मस्वरूपत्वान्नानित्यत्वं; नापि साधनानर्थक्यम्, स्वरूपभूतमोक्ष-प्रतिबन्धनिवर्तकत्वेनार्थवत्त्वादित्युत्तरमाह—**उच्यत इति**। यथा देवदत्तस्य ज्वरादिना रोगेणाभिभूतस्य स्वस्थता स्वरूपादप्रच्युतिरूपा स्वरूपभूतैव प्रागपि सती रोगप्रतिबद्धाऽसतीव स्थिता चिकित्साशास्त्रीयोपायप्रयोगवशात्प्रति-बन्धभूतरोगापगमे सत्यभिव्यज्यते। न हि तत्रोपायवैयर्थ्यं प्रतिबन्धप्रध्वंसार्थत्वात्। न चानित्यत्वं स्वस्थतायाः शङ्क्येत, तस्यास्तदसाध्यत्वादित्युक्तेऽर्थे दृष्टान्तमाह—**रोगार्तस्येवेति**। यथोदितदृष्टान्तानुरोधादात्मनः स्वतःसमुत्खातनिखिल-दुःखस्य निरतिशयानन्दैकतानस्यापि स्वाविद्याप्रसूताहङ्कारादिद्वैतप्रपञ्चसम्बन्धादात्मनि दुःखमारोप्याहं दुःखी, सुखं मया प्राप्तव्यमिति प्रतिपद्यमानस्य परमकारुणिकाचार्योपदिष्टवाक्योत्थाद्वैतविद्यातो द्वैतनिवृत्तौ प्रतिबन्धप्रध्वंसे स्वभावभूता परमानन्दता निरस्तसमस्तानर्थता च स्वारस्येनाभिव्यक्ता भवति। सा च स्वस्थता परिपूर्णवस्तुस्वभावान्नातिरिच्यते। तदिदं शास्त्रीयं प्रयोजनम्। तस्य स्वरूपत्वेनासाध्यत्वान्नानित्यत्वं शङ्कितव्यम्। न च साधनवैयर्थ्यं, प्रदर्शित-प्रतिबन्धनिवृत्तिफलत्वादिति दार्ष्टान्तिकमाह—**तथेति**। ननु द्वैतस्याहङ्काराद्यात्मनो वस्तुत्वाद्वस्तुनश्च विद्या-नपोह्यत्वान्नित्यनैमित्तिककर्मायत्तत्वात्तन्निवृत्तेरलं विद्यार्थेन प्रकरणारम्भेणेति, तत्राऽऽह—**द्वैतेति**। आत्माविद्याकृतस्य द्वैतस्याऽऽत्मविद्यया कारणनिवृत्त्या निवृत्तेरात्मविद्याभिव्यक्तये शास्त्रारम्भो युज्यते। न च द्वैतस्याविद्याकृतस्य विद्यमानदेहत्वे प्रमाणमस्तीत्याशङ्क्यान्वयव्यतिरेकानुविधायिनीं श्रुतिमुदाहरति—**यत्र हीति**। [2]इवशब्दाभ्याम-विद्यावस्थायां प्रतिभातद्वैतस्य तत्प्रतिभानस्य चाऽऽभासत्वेनाविद्यामयत्वमुच्यते। **आत्मैवाभूदिति**। विदुषो विद्यावस्थायां कर्तृकरणादिसर्वमात्ममात्रं, नातिरिक्तमस्तीत्युक्त्या विद्याद्वारा सर्वस्य द्वैतस्याऽऽत्ममात्रत्ववचनाद्विद्यानिमित्ता कार्यकारणात्मकद्वैतनिवृत्तिरात्मैवेत्यभिलप्यते। तथा च विद्यातो द्वैतनिवृत्तिनिर्देशात्तस्याविद्यात्वमवद्योत्यते। आदिशब्दात् 'नेह नाने'त्यधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं द्वैतस्याभिदधद् वाक्यं वाचारम्भणवाक्यं च गृहीतम्। **अस्यार्थस्येति**। द्वैतगताविद्याकृतत्वस्येत्यर्थः।

विषयप्रयोजनाद्यनुबन्धोपन्यासमुखेन ग्रन्थारम्भे स्थिते सत्यादौ प्रकरणचतुष्टयस्य प्रत्येकमसङ्कीर्णं प्रमेयं

---

१. शास्त्रादिना जन्यमेवेत्यत्रायोगव्यवच्छेद एवकारार्थः; विशेषणसङ्गतत्वात्, शङ्खः पाण्डुर एवेतिवत्। अत्र यथा एवकारेण शङ्खत्वव्यापकत्वं पाण्डुरत्वे प्रतीयते तथा शास्त्रव्यापकत्वं तत्त्वज्ञानजनकत्वे प्रतीयते। शास्त्रादिनैव जन्यमिति एवकारस्य विशेष्येण सम्बन्धे 'पार्थ एव धनुर्धरः' इतिवत् शास्त्रादन्येन न जन्यत इत्यर्थः। तेनासाधारण-विषयसिद्धिः। क्रियासङ्गतस्तु एवकारो 'नीलं सरोजं भवत्येवे'-त्यादौ; तत्रायोगे = सरोजे नीलायोगे सरोजत्व-व्यापकत्वव्यवच्छेदो बोध्यत इति ज्ञेयम्।

२. इवशब्दाभ्यामिति—'यत्र हि द्वैतमिव' इत्यादौ कल्पितत्वरूपमाभासत्वमिवशब्दार्थ इत्यर्थः।

**पश्येत्केन कं विजानीयात्'' इत्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः। तत्र तावदोङ्कारनिर्णयाय [1]प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम्। यस्य द्वैतप्रपञ्चस्योपशमेऽद्वैतप्रतिपत्ती रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिः, तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम्। तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ युक्तितस्तथात्व[2]दर्शनाय तृतीयं प्रकरणम्। अद्वैतस्य तथात्वप्रतिपत्तिप्रतिपक्षभूतानि यानि वादान्तराण्यवैदिकानि तेषा-
५ मन्योन्यविरोधित्वादतत्त्वार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम्।**

**कथं पुनरोङ्कारनिर्णय आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इति। उच्यते। ''ओमित्येतत्'' ''एतदालम्बनम्'' ''एतद्वै सत्यकाम'' ''ओमित्यात्मानं युञ्जीत'' ''ओमिति ब्रह्म'' ''ओङ्कार एवेदं सर्वम्'' इत्यादिश्रुतिभ्यः।**

अनुभूतिस्वरूपाचार्यटीका

प्रयोजनादिमत्त्वाद्व्याख्येयत्वमुपपाद्य प्रकरणचतुष्टयस्य संक्षेपतोऽर्थविभागमाह—**तत्र तावदित्यादिना। आगम-
१० प्रधानमिति।** माण्डूक्यश्रुतिव्याख्यानरूपत्वात्र युक्तिप्रधानमित्यर्थः। अद्वैतस्यापि व्यवस्थानुपपत्त्यादितर्कविरोधात् द्वैतवद् वैतथ्यप्रसक्तौ सत्यामित्यर्थः। तदुपपत्तिभिरेव निराकरणे हेतुः **अन्योन्यविरोधित्वादिति।** निराकार्यत्वे हेतुः **अतत्त्वार्थत्वेनेति।** मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः।

आद्यप्रकरणार्थमाक्षिपति—**कथं पुनरिति।** अन्यज्ञानं ह्यविनाभावादिबलेनान्यप्रतिपत्तौ हेतुर्यथा धूमादिज्ञानं वह्न्यादिप्रतिपत्तेः, न चोङ्कारस्य आत्मना अविनाभावादिरस्तीत्यर्थः। परिहरति—**उच्यत इत्यादिना।** 'सर्वे वेदा

आनन्दगिरिटीका

१५

प्रतिपत्तिसौकर्यार्थं सूचयितव्यमित्याह—**तत्र तावदिति।** ओङ्कारप्रकरणस्यासङ्कीर्णं प्रमेयं संगृह्णाति—**ओङ्कारेति।** तन्निर्णयाय प्रकरणमारब्धमित्ययुक्तम्। तन्निर्णये प्रमाणाभावात् तस्य चानुपयोगित्वात्। आत्मप्रतिपत्तिर्हि पुरुषार्थोपयोगिनीत्याशङ्क्याऽऽगमेत्यादिविशेषणद्वयम्। तदुपदेशप्रधानं माण्डूक्योपनिषद्व्याख्यानरूपम्। तेन तत्र प्रामाण्यादुक्तो निर्णयः सेत्स्यति, न त्विदं युक्तिप्रधानं युक्तिलेशस्य सतोऽपि गुणत्वादप्रधानत्वात्। न चायमोङ्कारनिर्णयो नोपयुज्यते।
२० यदात्मनस्तत्त्वमनारोपितरूपं तत्प्रतिपत्तावुपायत्वात्। तत्प्रतिपत्तेश्च मुक्तिफलत्वात्। अतश्चाऽऽद्यं प्रकरणमोङ्कारनिर्णयावान्तरफलद्वारेण तत्त्वज्ञाने परमफले पर्यवस्यतीत्युपदेशवशादधिगन्तव्यमित्यर्थः। वैतथ्यप्रकरणस्यावान्तरविषयविशेषं दर्शयति—**यस्येति।** आरोपितनिषेधे सत्यनारोपितप्रतिपत्तिः स्वाभाविकीत्यत्र दृष्टान्तमाह—**रज्ज्वामिवेति। हेतुतो** दृश्यत्वाद्यन्तवत्त्वादियुक्तिवशादित्यर्थः। अद्वैतप्रकरणस्यार्थविशेषमुपन्यस्यति—**तथाऽद्वैतस्यापीति।** तस्यापि द्वैतवद् व्यवस्थानुपपत्त्या मिथ्यात्वप्रसङ्गः शङ्क्यते। तस्यां सत्यामौपाधिकभेदाद्व्यवस्थायाः
२५ सुस्थत्वादव्यभिचारादि[3]युक्तिवशादद्वैतस्य परमार्थत्वं प्रतिपादयितुं तृतीयं प्रकरणमित्यर्थः। [4]अलातशान्तिप्रकरणस्यार्थविशेषं कथयति—**अद्वैतस्येति।** तस्य **तथात्वम**बाधितत्वेन वस्तुत्वं तत्प्रतिपक्षत्वं पक्षान्तराणामित्यत्र हेतुमाह—**अवैदिकानीति।** तेषां निराकार्यत्वे हेतुमाह—**अतत्त्वार्थत्वेनेति।** मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः। तदुपपत्तिभिरेव निराकरणे हेतुमाह—**अन्योन्येति।** पक्षान्तरप्रतिषेधमुखेनाद्वैतमेव द्रढयितुमन्त्यं प्रकरणमित्यर्थः।

ओङ्कारनिर्णयद्वारेणाऽऽत्मप्रतिपत्त्युपायभूतमाद्यं प्रकरणमित्ययुक्तम्। तन्निर्णयस्य तद्धीहेतुत्वायोगात्। न
३० खल्वर्थान्तरज्ञानमर्थान्तरज्ञाने व्याप्तिमन्तरेणोपयुज्यते। न चात्र धूमाग्न्योरिव व्याप्तिरुपलभ्यते। न चात्मकार्यत्वमोङ्कारस्य युक्तम्। आकाशादेरविशेषात्। तस्य च सर्वात्मत्वेनाऽऽत्मवत्तत्कार्यत्वव्याघातादिति मन्वानः सन् प्रथमप्रकरणार्थं प्रागुक्तमाक्षिपति—**कथमिति।** न वयमनुमानावष्टम्भादोङ्कारनिर्णयमात्मप्रतिपत्त्युपायमभ्युपगच्छामो येन व्याप्त्यभावो दोषमावहेत्। किं तु श्रुतिप्रामाण्यात्तन्निर्णयस्तद्धीहेतुरिति परिहरति—**उच्यत इति।** तत्र मृत्युना

---

१. प्रथमम् आगमप्रकरणमुपनिषदर्थप्रतिपादनपरम्। द्वितीयम्—'प्रपञ्चोपशमम्' 'अद्वैतं' 'ज्ञाते द्वैतं न विद्यते'
३५ इति वाक्यसूचितं प्रपञ्चमिथ्यात्वं युक्तिभिः प्रतिपादयति। तृतीयं—प्रपञ्चमिथ्यात्वे तदधिष्ठानस्यापि मिथ्यात्वशङ्कायां तस्य सत्यत्वं बोधयति। चतुर्थं तु अद्वैतसमर्थनाय द्वैतवादिमतखण्डनमिति प्रथमप्रकरणशेषभूतं प्रकरणत्रयमपीति भावः।

२. तथात्वं = परमार्थत्वम्। 'तथात्वप्रतिपादनाय' इति पा.।

३. अव्यभिचारादीति—शरीरादेर्भेदेऽपि आत्मनोऽभेदः, भेदप्रतीतेः उपाधिगोचरत्वात्। उपाधीनां
४० मिथ्यात्वाच्चेति। सद्बुद्धेः सर्वत्राव्यभिचाराच्च।

४. अलातदृष्टान्तघटितन्यायप्रयोगयुक्तं प्रकरणमलातशान्तिप्रकरणम्।

**रज्ज्वादिरिव सर्पादिविकल्पस्याऽऽस्पदोऽद्वय आत्मा परमार्थतः सन् प्राणादिविकल्पस्याऽऽस्पदो यथा तथा सर्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषय ओङ्कार एव। स चाऽऽत्मस्वरूपमेव, तदभिधायकत्वात्। ओङ्कारविकारशब्दाभिधेयश्च सर्वः प्राणादिरात्मविकल्पोऽभिधानव्यतिरेकेण नास्ति। "वाचारम्भणं विकारो**

अनुभूतिस्वरूपाचार्यटीका

यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतदि'ति, मृत्युना नचिकेतसं प्रति ब्रह्मत्वेन 'ओमि'त्येतदुपदिष्टम्। तस्यायं भावः—उपसंहृतबाह्यकरणेन समाहितमनस्केनोङ्कारोच्चारणे सति यच्चैतन्यं स्फुरति तदोङ्कारसामीप्यात् शाखाचन्द्रन्यायेन 'ओं'शब्देन लक्ष्यते। अतो लक्षणयोङ्कारनिर्णयो ब्रह्मप्रतिपत्त्युपाय इति। यद्वा, वक्ष्यमाणेन वाच्यवाचकाभेदन्यायेन सर्वमोमिति प्रतिपद्य व्यवस्थितो 'यदेतदोमिति तद्ब्रह्मे'ति बाधायां सामानाधिकरण्येन बोध्यते—'योऽयं स्थाणुः पुमानेष' इतिवदिति। यद्वा, प्रतिमायां विष्णुदृष्टिवत् परापरब्रह्मदृष्ट्या ओङ्कार उपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवति। तदेतदभिप्रेत्य श्रुतिं पठति—**एतदालम्बनमित्यादिना**। अथवा, "ओङ्कार एवेदमि"ति श्रुत्यन्तरेणोङ्कारः सर्वास्पद उक्तः। सर्वास्पदं च ब्रह्म। अत एकलक्षणत्वादनन्यत्वं सिद्धमित्यर्थः।

ननु प्राणादिः स्वानुगतप्रतिभासे वस्तुनि कल्पितः विभक्तत्वात्, य एवं स एवं, यथा सर्पादिः स्वानुगतप्रतिभासे रज्ज्वा इदमंशे कल्पित इत्यनुमानादात्मैव सर्वास्पदोऽवगम्यते, सर्वस्य स्वप्रकाशानुविद्धत्वात्, नोङ्कारस्तस्य जगत्यनुगमादर्शनादित्याशङ्क्याऽऽह—**रज्ज्वादिरिवेत्यादिना**। "प्राण इति प्राणविद" इत्यादिना वक्ष्यमाणो यः प्राणादिः आत्मविकल्पस्तद्विषयः सर्वो वाक्प्रपञ्चः ओङ्कारास्पदः "एवमोङ्कारेण सर्वा वाक् सन्तृण्णे"ति श्रुतेः तदनुविद्धत्वस्याप्यवगमादित्यर्थः। तर्ह्यर्थजातस्याऽऽत्माऽऽस्पदः ओङ्कारश्च वाक्प्रपञ्चस्याऽऽस्पद इत्यास्पदद्वयं प्राप्तमित्याशङ्क्याऽऽह—**स चोङ्कार आत्मनः स्वरूपमेव**। तस्याऽऽत्मनोऽभिधायकत्वात्। ननु यो यस्याभिधायकः स

आनन्दगिरिटीका

नचिकेतसं प्रत्योमित्येतदित्यनेन वाक्येन ब्रह्मत्वेनोमित्येतदुपदिष्टम्। समाहितेनोङ्कारोच्चारणे यच्चैतन्यं स्फुरति तदोङ्कारसामीप्यादेव [1]शाखाचन्द्रन्यायेनोङ्कारशब्देन लक्ष्यते। येन लक्षणयोङ्कारनिर्णयो ब्रह्मधीहेतुरिति विवक्षित्वा श्रुतिमुदाहरति—**ओमित्येतदिति**। प्रतिमायां विष्णुबुद्धिवदोङ्कारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवतीत्यभिप्रेत्य वाक्यान्तरं पठति—**एतदालम्बनमिति**। किं चायमोङ्कारो यदा परापरब्रह्मदृष्ट्योपास्यते तदा तज्ज्ञानोपायतामुपारोहतीति मत्वा पुनः श्रुतिं दर्शयति—**एतद्वा इति**। किं च समाधिनिष्ठो यदा ओमित्युच्चार्याऽऽत्मानमनुसंधत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तं च कारणे मकारे तमपि कार्यकारणातीते प्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेणोङ्कारस्य तत्प्रतिपत्त्युपायतेति विधान्तरेणाऽऽह—**ओमित्यात्मानमिति**। किं च योऽयं स्थाणुः स पुमानितिवद्यदेतदोमित्युच्यते तद्ब्रह्मेति बाधायां सामानाधिकरण्येन समाहितो ब्रह्म बोध्यते। तथा च युक्तमोङ्कारस्य ब्रह्मज्ञानहेतुत्वमित्याह—**ओमिति ब्रह्मेति**। किं च सर्वास्पदत्वादोङ्कारस्य ब्रह्मणश्च तथात्वादेकलक्षणत्वादनन्यत्वासिद्धेरोङ्कारप्रतिपत्तिर्ब्रह्मप्रतिपत्तिरेवेत्याह—**ओङ्कार एवेति**। 'ओमितीदं सर्व'मित्यादिवाक्यान्तरसंग्रहार्थमादिपदमित्यादिश्रुतिभ्यो ब्रह्मप्रतिपत्त्युपायत्वमोङ्कारस्य प्रमितमिति शेषः। ननु स्वानुगतप्रतिभासे सन्मात्रे चिदात्मनि प्राणादिविकल्पस्य कल्पितत्वादात्मनः सर्वास्पदत्वं, न पुनरोङ्कारस्य तदस्त्यननुगमादिति, तत्राऽऽह—**रज्ज्वादिरिवेति**। यथा रज्जुः शुक्तिरित्यादिरधिष्ठानविशेषः सर्पो रजतमित्यादिविकल्पस्याऽऽस्पदोऽभ्युपगतस्तथाऽऽत्माऽद्वयत्वान्मिथ्यात्वहेत्वभावात्परमार्थसत्स्वभावो वक्ष्यमाणस्तस्य प्राणादिविकल्पस्याऽऽस्पदोऽभ्युपगम्यते यथैष दृष्टान्तस्तथैव प्राणादिरात्मविकल्पो यस्तद्विषयः सर्वो वाक्प्रपञ्चो यथोक्तोङ्कारमात्रात्मकस्तदास्पदो गम्यते। न च जगत्योङ्कारस्याननुगमः। ओङ्कारेण सर्वा वाक् [2]संतृण्णेति श्रुतेः। अतो युक्तमोङ्कारस्य सर्वास्पदत्वमित्यर्थः।

नन्वर्थजातस्याऽऽत्मास्पदत्वादोङ्कारास्पदत्वाच्च वाक्प्रपञ्चस्य प्राप्तमास्पदद्वयत्वमिति, नेत्याह—**स चेति**।

---

१. शाखेति—अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति जिज्ञासोः चन्द्रसम्बन्धरहितायाः शाखाया उपलक्षणतया चन्द्रसूचकत्वं दृश्यते, तद्वत् ओङ्कारेण ब्रह्मणः स्फुरणम् ओङ्कारावाच्यत्वेऽपि शुद्धब्रह्मणः युक्तम्।

२. सन्तृण्णा—व्याप्ता। अकारः सर्वशब्दानुस्यूतः। ओङ्कारश्चाकारप्रधानः, तेन तद्व्याप्तत्वं सर्वेषां शब्दानामित्यर्थः।

नामधेयं'' ''तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामनी'' इत्यादिश्रुतिभ्यः। अत आह—

अनुभूतिस्वरूपाचार्यटीका

तस्य स्वरूपमिति नास्ति व्याप्तिः। प्राणादेः आत्मविकल्पस्याभिधानातिरेकदर्शनादित्याशङ्क्य तस्यापि पक्षत्वान्न व्यभिचार इत्याह—**ओङ्कारेति**।

५ विमतःशब्दः, तत्त्वतः स्वव्यतिरिक्ताभिधेयशून्यः, शब्दत्वात्, शशविषाणादिशब्दवत्। ननु प्रत्यक्षविरुद्धः पक्षः। न तावच्चाक्षुषं प्रत्यक्षं शब्दे व्याप्रियते, कथङ्कारं ततो व्यतिरेकं परिच्छिन्द्यात्? श्रावणं च न रूपे व्याप्रियते तदपि कथङ्कारं तस्य व्यतिरेकं गोचरयेत्? मनश्चास्वतन्त्रं बाह्ये। प्रत्यक्षस्य च वर्तमानग्राहिणोऽत्यन्ताबाध्यांशग्रहणे व्यापाराभावान्न प्रकृतप्रतिपक्षता। ननु शब्दार्थौ न तत्त्वतोऽभिन्नौ विरुद्धधर्माक्रान्तत्वात्, तमःप्रकाशवदित्यनुमानविरुद्धः पक्षः। न; विरुद्धधर्माक्रान्तत्वस्य भेदसिद्धिपूर्वकत्वेन हेतोरसिद्धत्वात्। नो खल्वभेदवादिनःशब्दस्य निरवयवत्वमर्थस्य १० सावयवत्वमिति विरुद्धधर्माक्रान्तत्वं संमतम्। ननु शब्दः प्रमाणं, प्रमेयश्चार्थ इति व्यवहारान्यथानुपपत्त्या बाधः। न, स्वप्नवदुपपत्तेः। न च साध्यविकलो दृष्टान्तः, विकल्पमात्रत्वात्। तदुक्तं—**शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति**।

किञ्च, तार्किकाणां वनसेनाविशिष्टादिशब्दा व्यतिरिक्ताभिधेयशून्या इति सुलभ एव दृष्टान्तः तान्प्रति। अथ वनादिशब्दानामौपाधिकोऽर्थ आलम्बनम्। किमुपाधिः तद्योगोऽर्थश्चेति त्रयमालम्बनं? किं वा रूपान्तरं? नाद्यः, एकाकाराया बुद्धेरनेकालम्बनत्वे भ्रमत्वप्रसङ्गादेकैकस्मिंस्तद्बुद्ध्यदर्शनाच्च। न द्वितीयः, अनभ्युपगमादभ्युपगमे वा १५ पदार्थातिरेकप्रसङ्गः। किञ्च, तत्किं प्रत्येकं समवेतं समुदितेषु वा? नाद्यः, न हि प्रत्येकं तरुषु वनमिति मतिः। न द्वितीयो वस्त्वतिरेकेण समुदायानुपलम्भात्। अनेकत्वविशिष्टेषु समवायेऽनवस्था। एतेन पञ्चावयवमनुमानमित्यपि वाङ्मात्रम्। न हि तत्रापि प्रत्यवयवमनुमानबुद्धिः, न च समुदायोऽङ्गीक्रियते।

किञ्च, व्याप्तिपक्षधर्मताविशिष्टात् धूमाद् या प्रमितिरुदेति तस्यास्तावन्न वह्निपर्वततत्सम्बन्धा आलम्बनम्, परोक्षबुद्धेः प्रत्यक्षालम्बनत्वविरोधान्नापि वह्निविशिष्टः पर्वतः, पक्षधर्मताभावप्रसङ्गात्, न हि विशिष्टस्य विशिष्टान्तरे २० वृत्तिः, पर्वतस्य स्ववृत्तितापातात्। किञ्चाग्निधूमयोः पर्वते वृत्तिः संयोगलक्षणा। तत्र यः प्रदेशोऽग्निसंयोगरुद्धस्तत्र धूमसंयोगाप्रवेशादसिद्धिः। तथा विषयविषयिभावविशेषणविशेष्यभावादयः सम्बन्धा नातिरिक्ताः सन्ति, द्वयाधार-वस्त्वन्तरानुपलम्भात्, अतस्ते वाङ्मात्रा एव। किं बहुना—अन्योन्यदृष्ट्यपेक्षया सर्वे पक्षा अन्योन्यस्य वाङ्मात्रा एव। धातुवादादिग्रन्थाश्च तत्त्वतोऽर्थशून्या इति प्रसिद्धम्। अतो दृष्टान्तः सुलभः।

नन्विदं वैयाकरणमतं किमिति भाष्यकृता आश्रायि? न, वैयाकरणानां शब्दः तत्त्वं, तत्रार्थः परिकल्पित इति २५ मतम्। ब्रह्मविदां तु शब्दातिरिक्तार्थाभावे शब्दस्य शब्दत्वानुपपत्तौ निर्विकल्पं सन्मात्रं वस्त्विति मतम्। ततो महदन्तरम्। यदि तेषामपि वाच्यवाचककल्पनास्पदं निर्विकल्पं चित्सत्तामात्रं वस्तु तर्हि संवाद एवेति सन्तोष्टव्यम्। नास्माभिः वैयाकरणसिद्धान्त आश्रितः, किन्त्वयं श्रौत एव पन्था इत्यभिप्रेत्य श्रुतिं पठति—**वाचारम्भणमिति**। अस्य ब्रह्मण इदं सर्वं विकारजातं वाचा सामान्यरूपया तन्त्या प्रसारितरज्जुतुल्यया नामभिः शब्दविशेषैः

आनन्दगिरिटीका

३० आत्मवाचकत्वेऽपि नास्त्योङ्कारस्याऽऽत्ममात्रत्वं तद्वाचकस्य तन्मात्रत्वमिति व्याप्त्यभावात्, प्राणादेरात्मविकल्पस्या-भिधानव्यतिरेकदर्शनादित्याशङ्क्याह—**ओङ्कारेति**। तस्य विकारः सर्वो वाग्विशेषः, 'अकारो वै सर्वा वागि'ति श्रुतेः, ओङ्कारस्य च तत्प्रधानत्वात्, तेन प्राणादिशब्देन वाच्यः प्राणादिरात्मविकल्पः सर्वः स्वाभिधानव्यतिरेकेण नास्ति; तच्चाभिधानं प्राणादिशब्दविशेषात्मकमोङ्कारविकारभूतमोङ्कारातिरेकेण न सम्भवतीत्योङ्कारमात्रं सर्वमिति निश्चीयते। आत्मनोऽपि तद्वाच्यस्य तन्मात्रत्वाभिधानादित्यर्थः। शब्दातिरिक्तार्थाभावे शब्दस्यार्थवाचकत्वानुपपत्तेरेकत्र ३५ विषयविषयित्वायोगान्निर्विकल्पं सन्मात्रं वस्तु वाच्यवाचकविभागशून्यं पर्यवस्यतीत्यभिप्रेत्य कार्यस्य वस्तुतोऽसत्वे प्रमाणमाह—**वाचारम्भणमिति**। कार्यस्य सर्वस्यैवं मिथ्यात्वेऽपि कथमोङ्कारनिर्णयस्य ब्रह्मप्रतिपत्त्युपायत्वसिद्धि-रित्याशङ्क्याऽऽह—**तदस्येति**। तदिदं विकारजातमस्य ब्रह्मणः सम्बन्धि वाचा सामान्यरूपया तन्त्या प्रसारितरज्जुतुल्यया सितं बद्धं व्याप्तमिति सम्बन्धः। शब्दसामान्येनार्थसामान्यस्य व्याप्तावपि कथमर्थविशेषस्य शब्दविशेषव्याप्तिरित्याशङ्क्याऽऽह—**नामभिरिति**। शब्दविशेषैर्दामभिर्दामस्थानीयैर्विशेषरूपमपीदमर्थजातं व्याप्तं

**सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्।।२।।**

**ओमित्येतदक्षरमिदं सर्वमिति। यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्यतिरेकात् अभिधानस्य चोङ्काराव्यतिरेकादोङ्कार एवेदं सर्वम्। परं च ब्रह्माभिधानाभिधेयोपायपूर्वकमेव गम्यत इत्योङ्कार एव। तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमित्येतस्योपव्याख्यानम्। ब्रह्मप्रतिपत्त्युपायत्वाद् ब्रह्मसमीपतया विस्पष्टं प्रकथनमुपव्याख्यानं प्रस्तुतं वेदितव्यमिति वाक्यशेषः। भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्तदप्योङ्कार एवोक्तन्यायतः। यच्चान्यत्त्रिकालातीतं कार्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि तदप्योङ्कार एव।।१।।** ५

**अभिधानाभिधेययोरेकरूपत्वेऽप्यभिधानप्राधान्येन निर्देशः कृतः—ओमित्येतदक्षरमिदं सर्वमित्यादि।**

अनुभूतिस्वरूपाचार्यटीका

दामस्थानीयैः सितं बद्धं व्याप्तमित्यर्थः। तत्र हेतुः **सर्वं हीति**। नाम्ना नीयते व्यवहारपथं प्राप्यत इति नामनि। तथा च गोपालादयो व्यवहारासङ्कराय संज्ञां निवेशयन्ति*। तदनध्यवसाये च वाक्सामान्यानुबद्धेऽपि अनध्यवसायो दृष्टः। तस्माद्वागनुरक्तबुद्धिविषयत्वात् सर्वं वाङ्मात्रम्। वाग्जातं सर्वमोङ्कारानुविद्धत्वादोङ्कारमात्रम्। स च ओङ्कारो लक्षणादिद्वारेणात्मप्रतिपत्तेरुपाय इति आद्यप्रकरणारम्भमुपपाद्य श्रुतिमवतारयति—**अत आहेति**। श्रुतिं योजयति—**यदिदमित्यादिना**। वाच्यं सर्वं भवतु ओङ्कारमात्रं, न परं ब्रह्मेत्याशङ्क्याह—**परं चेति**। ब्रह्माप्यवगन्तव्यं चेत् तर्हि शब्दानुरक्तमेव। निर्विकल्पेऽपि सूक्ष्मा वागस्त्येव। यत्र तु नावगम्यावगन्तृविभागस्तत्र न शब्दानुरागोऽपि इति वाच्यस्य ब्रह्मण ओङ्कारत्वे न वस्तुक्षतिरिति भावः। **उक्तन्यायत इति**। वाच्यस्य वाचकाभेदे दर्शितानुमानत इत्यर्थः। आदिशब्दात्[१] सूत्रात्मा गृह्यते, कालस्यादित्योदयादिक्रियाधर्मत्वात्[२] न कारणपरिच्छेदकत्वमिति द्रष्टव्यम्।।१।। १० १५

'सर्वं ह्येतद् ब्रह्मे'ति श्रुतिं वृत्तानुवादपूर्वकमवतारयति—**अभिधानेत्यादिना**। **एकरूपत्वेऽपीति**। सति कल्पितत्वेन सदेकरूपत्वेऽपीत्यर्थः।

आनन्दगिरिटीका

वक्तव्यं न्यायस्य तुल्यत्वादित्यर्थः। उक्तमर्थं समर्थयते—**सर्वं हीति**। इदं हि सर्वं सामान्यविशेषात्मकमर्थजातं सामान्यरूपेण नाम्ना नीयते व्यवहारपथं प्राप्यते तेन नामनीत्युच्यते। तदेवं वागनुरक्तबुद्धिबोध्यत्वाद्वाङ्मात्रं सर्वम्। वाग्जातं च सर्वमोङ्कारानुविद्धत्वादोङ्कारमात्रम्। स चोङ्कारो लक्षणादिनाऽऽत्मधीहेतुरित्याद्यप्रकरणारम्भः सम्भवतीत्यर्थः। 'तद्यथा शङ्कुने'तिश्रुतिसंग्रहार्थमादिपदम्। प्रतिज्ञातप्रथमप्रकरणार्थसिद्धिरिति शेषः। २०

अर्थमुपपाद्य तस्मिन्नर्थे श्रुतिमवतारयति—**अत आहेति**। श्रुतिं व्याचष्टे—**यदिदमिति**। तदिदं सर्वमोङ्कार एवेति सम्बन्धः। अभिधानस्याभिधेयतया व्यवस्थितमर्थजातमोङ्कार एवेत्यत्र हेतुमाह—**तस्येति**। तथाऽपि पृथगभिधानभेदः स्थास्यति, नेत्याह—**अभिधानस्येति**। वाच्यं वाचकं च सर्वमोङ्कारमात्रमित्यभ्युपगमेऽपि परं ब्रह्म पृथगेव स्थास्यतीत्याशङ्क्याऽऽह—**परं चेति**। यद्धि परं कारणं ब्रह्म तच्चेदवगम्यते तदा किञ्चिदभिधानं तेनेदमभिधेयमित्येवमात्मकोपायपूर्वकमेव तदधिगमोऽभिधेयं च स्वाभिधानाव्यतिरिक्तं तत्पुनरोङ्कारमात्रमित्युक्तत्वाद्वाच्यं ब्रह्मापि वाचकाभिन्नं तन्मात्रमेव भविष्यति। यत्र तु कार्यकारणातीते चिन्मात्रे वाच्यवाचकविभागो व्यावर्तते तत्र नास्त्योङ्कारमात्रत्वमोङ्कारेण लक्षणया तदवगमाङ्गीकारादित्यर्थः। तस्येत्यादिश्रुतिमवतार्य व्याकरोति—**तस्येति**। भूतमित्यादिश्रुतिं गृहीत्वा व्याचष्टे—**कालेति**। वाच्यस्य वाचकाभेदात्तस्य चोङ्कारमात्रत्वादित्युक्तो न्यायः। कालत्रयातीतमोङ्कारातिरिक्तं जडं वस्तु नास्त्येवं प्रमाणाभावादित्याशङ्क्याऽऽह—**कार्याधिगम्यमिति**। अव्याकृतं साभासमज्ञानमनिर्वाच्यं, तत्र कालेन परिच्छिद्यते कालं प्रत्यपि कारणत्वात्। कार्यस्य कारणात्पश्चाद्भाविनो न प्राग्भाविकारणपरिच्छेदकत्वं सङ्गच्छते। सूत्रमादिपदेन गृह्यते तदपि न कालेन परिच्छेत्तुं शक्यते। "स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आसे"ति सूत्रात्कालोत्पत्तिश्रुतेः। तदपि सर्वमोङ्कारमात्रं वाच्यस्य वाचकाव्यतिरेकन्यायादित्यर्थः।।१।। २५ ३० ३५

अभिधानाभिधेययोरेकस्मिन्नेव सति कल्पितत्वेन तदेकरूपत्वस्योक्तत्वात्किमिति पुनः 'सर्वं ह्येतद् ब्रह्मे'त्युच्यते। तत्र वृत्तानुवादपूर्वकमुत्तरवाक्यस्य सफलं तात्पर्यमाह—**अभिधानेत्यादिना**। वाच्यस्य वाचकत्वोक्त्यैव तयोरेकत्व-

---

१. सूत्रम्—सूत्रात्मा हिरण्यगर्भः समष्टिसूक्ष्मशरीराभिमानी। अव्याकृतादीत्यादिशब्दादित्यर्थः।

२. द्र. प्रकटार्थः २-३-७ पृ. ६८६। *. 'गवादीनाम्' इति शेषः।

**जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः॥३॥**

**अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशोऽभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः। इतरथा ह्यभिधानतन्त्राऽभिधेयप्रतिपत्तिरित्यभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यात्। एकत्वप्रतिपत्तेश्च प्रयोजनमभिधानाभिधेययोरेकेनैव प्रयत्नेन युगपत्प्रविलापयंस्तद्विलक्षणं ब्रह्म प्रतिपद्येतेति। तथा च वक्ष्यति—"पादा मात्रा मात्राश्च पादाः" इति। तदाह—सर्वं ह्येतद् ब्रह्मेति। सर्वं यदुक्तमोङ्कारमात्रमिति तदेतद् ब्रह्म। तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो विशेषेण निर्दिशति—अयमात्मा ब्रह्मेति। अयमिति चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मतयाऽभिनयेन निर्दिशति। सोऽयमात्मेति। सोऽयमात्मोङ्काराभिधेयः परापरत्वेन व्यवस्थितश्चतुष्पात् कार्षापणवन्न गौरिवेति। त्रयाणां विश्वादीनां पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधनः पादशब्दः। तुरीयस्य पद्यत इति कर्मसाधनः पादशब्दः॥२॥**

**कथं चतुष्पात्त्वमित्याह—जागरितं स्थानमस्येति जागरितस्थानः। बहिष्प्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा**

अनुभूतिस्वरूपाचार्यटीका

नन्वभिधेयस्याभिधानतन्त्रत्वेऽभिहिते सिद्धमेकत्वं किमिति व्यतिहारोपदेश इत्याशङ्क्याह—**इतरथा हीति**। परस्पराभेदोपदेशेनाभिधानाभिधेययोः एकत्वप्रतिपत्तेर्वा किं प्रयोजनमित्याशङ्क्याह—**एकत्वप्रतिपत्तेश्चेति**। सर्वं सति कल्पितं प्रत्येकं तदनुविद्धत्वात्, यत् येन प्रत्येकमनुविद्धं तत्तत्र परिकल्पितं यथा जलतरङ्गचन्द्रमसश्चन्द्रमसीत्यनुमानानुगृहीतश्रुतिसमर्पितत्वात्। परोक्षत्वं प्राप्तं निवर्तयति—**तच्च ब्रह्मेति**। विवक्षितार्थप्रतिपत्तये असाधारणः कायिको व्यापारोऽभिनयः। तेन कराग्रं हृदयदेशमानीय निर्दिशतीत्यर्थः। **परापरत्वेनेति**। सर्वाधिष्ठानतया परोक्षरूपेण परत्वं, प्रत्यग्रूपेण चापरत्वं, तेन सर्वात्मना व्यवस्थितश्चतुष्पात् कल्प्यते प्रतिपत्तिसौकर्यायेत्यर्थः। कार्षापण इति षोडशपणानां संज्ञा देशविशेषे। तस्य यथा पादकल्पना व्यवहारप्राचुर्याय तद्वदित्यर्थः। न गौरिव चतुष्पात् निष्कलत्वश्रुतिविरोधादित्यर्थः। कथं तर्हि विश्वादिषु पादशब्दप्रवृत्तिरित्याशङ्क्याह—**त्रयाणामिति। करणसाधन इति**। पद्यतेऽनेनेति करणव्युत्पत्तिक इत्यर्थः॥२॥

ननु सर्वं पिण्डीकृत्यात्मेति प्रक्रान्तम्, अतो नात्मनो बहिर्भूतविषय इत्याशङ्क्याह—**बहिर्विषयेवेति**। सुतेजाः

आनन्दगिरिटीका

सिद्धेर्व्यतिहारनिर्देशो वृथेत्याशङ्क्याऽऽह—**इतरथेति**। वाच्येन वाचकस्यैक्यमनुक्त्वा वाचकेनैव वाच्यस्यैक्यवचने सत्युपायोपेयप्रयुक्तमेकत्वं, न मुख्यमैक्यमित्याशङ्क्येत, तन्निवृत्त्यर्थं व्यतिहारवचनमर्थवदित्यर्थः। परस्पराभेदोपदेशादभिधानाभिधेययोरेकत्वप्रतिपत्तिरस्तु, साऽपि विफला ब्रह्मप्रतिपत्त्यनुपयोगित्वादित्याशङ्क्याऽऽह—**एकत्वेति**। अभिधानाभिधेययोरेकत्वप्रतिपत्तेश्चेदं प्रयोजनं यदेकेनैव प्रयत्नेन द्वयमपि विलापयन्नुभयविलक्षणं ब्रह्म प्रतिपद्य निर्वृणोतीति योजना। अभिधानाभिधेययोर्व्यतिहारोपदेशे वाक्यशेषमनुकूलयति—**तथा चेति**। उक्ते वाचकस्य वाच्याभिन्नत्वे वाक्यमवतार्य योजयति—**तदाहेति**। सर्वं कार्यं कारणं चेत्यर्थः। ब्रह्मणः श्रुत्युपदिष्टस्य परोक्षत्वं व्यावर्तयति—**तच्चेति**। यद्ब्रह्म श्रुत्या सर्वात्मकमुक्तं तत्र परोक्षमिति मन्तव्यं किं त्वयमात्मेति योजना। **चतुष्पात्त्वेन** विश्वतैजसप्राज्ञतुरीयत्वेनेत्यर्थः। अभिनयो नाम विवक्षितार्थप्रतिपत्त्यर्थमसाधारणः शारीरो व्यापारः, तेन हस्ताग्रं हृदयदेशमानीय कथयतीत्यर्थः। सोऽयमित्यादिवाक्यान्तरमवतार्य व्याकरोति—**ओङ्कारेति**। सर्वाधिष्ठानतया परोक्षरूपेण परत्वं प्रत्यग्रूपेण चापरत्वं तेन कार्यकारणरूपेण सर्वात्मना व्यवस्थितः सन्नात्मा प्रतिपत्तिसौकर्यार्थं चतुष्पात् कल्प्यते, तत्र दृष्टान्तमाह—**कार्षापणवदिति**। देशविशेषे कार्षापणशब्दः षोडशपणानां संज्ञा। तत्र तथा व्यवहारप्राचुर्याय पादकल्पना क्रियते तथेहापीत्यर्थः। यथा गौश्चतुष्पादुच्यते न तथा चतुष्पादादेष्टुं शक्यते निष्कलश्रुतिव्याकोपादित्याह—**न गौरिवेति**। विश्वादिषु तुर्यान्तेषु पादशब्दो यदि करणव्युत्पत्तिकस्तदा विश्वादिवत्तुर्यस्यापि करणकोटिनिवेशे ज्ञेयासिद्धिः। यदि तु पादशब्दः सर्वत्र कर्मव्युत्पत्तिकस्तदा साधनासिद्धिरित्याशङ्क्य विभज्य पादशब्दप्रवृत्तिं प्रकटयति—**त्रयाणामित्यादिना**। करणसाधनः करणव्युत्पत्तिकः, कर्मसाधनः कर्मव्युत्पत्तिक इति यावत्॥२॥

आत्मनो निरवयवस्य पादद्वयमपि नोपपद्यते, पादचतुष्टयं तु दूरोत्सारितमिति शङ्कते—**कथमिति**। परमार्थत-

१. जागरितं 'दक्षिणाक्षिमुखे विश्व' इत्युक्तेः जाग्रदवस्थावतः स्थानं दक्षिणाक्षि। जाग्रदवस्था तु तदभिमानविषयावस्था। अत्र विश्ववैश्वानरयोरेकत्वाभिप्रायः जागरितस्थानः स्थूलभुक् इति पदाभ्यां वैश्वानरपदेनाभिधानात् द्युलोकादिसप्ताङ्गत्वाच्च द्योत्यते। (अग्रिमपृष्ठेऽनुवर्तते)

**यस्य स बहिष्प्रज्ञः, [1]'बहिर्विषयेव प्रज्ञाऽस्याविद्याकृताऽवभासत इत्यर्थः। तथा सप्ताङ्गान्यस्य 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' इति अग्नि-**

अनुभूतिस्वरूपाचार्यटीका

द्युलोकः, विश्वरूप आदित्यः, पृथक् नानाविधं वर्त्म सञ्चरणमात्मा स्वभावो यस्य सः पृथग्वर्त्मात्मा वायुः, सन्देहः कायमध्यं, बहुलो विस्तीर्ण आकाशः, बस्तिः मूत्रस्थानम्, रयिरन्नं, लक्षणया तत्कारणभूता आप इत्यर्थः। 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय'मित्यादिना प्राणाहुतिषु अग्निहोत्रकल्पना कृता। तच्छेषत्वेन आहवनीयोऽग्निरस्य मुखत्वेन कल्पितः इत्यर्थः। प्राणादिषु सत्स्वेव शब्दाद्युपलब्धिः सम्भवति, नोत्क्रान्तेष्विति परम्परयोपलब्धिद्वारत्वं द्रष्टव्यम्। विश्वे च ते नराश्च विश्वानराः 'नरे संज्ञाया'मित्यस्य अविषयत्वान्निपातात्पूर्वपदस्य दीर्घता। विश्वान् नरान्प्रति अनेकधा कर्मानुसारेण सुखदुःखादि नयति प्रापयति समष्टिरूप इति वैश्वानरः। कर्तर्यण्प्रत्ययः। अथवा, विश्वश्चासौ नरश्चेति विश्वानरः, स एव वैश्वानरः। स्वार्थेऽण् राक्षसवायसवत्। अध्यात्मपरिच्छिन्नं प्रत्यगात्मानमादाय आक्षिपति—

आनन्दगिरिटीका

श्चतुष्पात्त्वाभावेऽपि काल्पनिकमुपायोपेयभूतं पादचतुष्टयमविरुद्धमित्यभिप्रेत्याऽऽद्यं पादं व्युत्पादयति—**आहेत्यादिना। स्थानमस्येत्यभिमानस्य** विषयभूतमित्यर्थः। प्रज्ञायास्तावदान्तरत्वप्रसिद्धेरयुक्तमिदं विशेषणमित्याशङ्क्य व्याचष्टे—**बहिरिति।** चैतन्यलक्षणा प्रज्ञा स्वरूपभूता न बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वात्, बाह्यस्य च विषयस्य वस्तुतोऽभावादित्याशङ्क्याऽऽह—**बहिर्विषयेवेति।** न स्वरूपप्रज्ञा वस्तुतो बाह्यविषयेष्यते, बुद्धिवृत्तिरूपा त्वसावज्ञानकल्पिता तद्विषया भवति। न च साऽपि वस्तुतस्तद्विषयतामनुभवति। वस्तुतः स्वयमभावाद्, बाह्यस्य विषयस्य काल्पनिकत्वात्। अतस्तद्विषयत्वं प्रातिभासिकमित्यर्थः। पूर्वेण विशेषणेन विशेषणान्तरं समुच्चिनोति—**तथेति।** सप्ताङ्गत्वं श्रुत्यवष्टम्भेन विश्वस्य विशदयति—**तस्येत्यादिना।** प्रकृतस्य सन्निहितप्रसिद्धस्यैवाऽऽत्मन-

---

अत्र मतान्तरीयाः—अकार-उकार-मकार-अर्धमात्रात्मकपादचतुष्टयवति ओङ्कारे अनिरुद्धप्रद्युम्नसङ्कर्षण-वासुदेवापरपर्याय—विश्वतैजसप्राज्ञतुरीयाख्यपादचतुष्टययुक्तब्रह्मदृष्टिरिह विधित्सितेति वदन्तः सर्वमिदं पाञ्चरात्रागममूलमिति वदन्ति। परन्त्वत्र वा एतत्समानविषयनृसिंहोत्तरतापनीयोपनिषदि वा वासुदेवव्यूहपरत्वे किमपि गमकं नास्ति, केवलं शुद्धं ब्रह्मैव प्रतिपाद्यते प्रविलापनद्वारेणेति विज्ञेयम्। एभिः सर्वात्मकत्वं प्रणवस्य नोपपादितम्। 'तद्यथा शङ्कुना' इत्यादिना 'ओङ्कारेण सर्वा वाक् सन्तृण्णा' इत्यनेन सर्वशब्दव्यापित्वमकारद्वारा ओङ्कारस्य भवेत्, न तु अर्थप्रपञ्चस्य ओङ्काररूपत्वम्।

अस्मन्मते तु 'वाचारम्भणं विकारो नामधेयम्' 'सर्वं हीदं नामनी' इत्यादिश्रुत्या अर्थप्रपञ्चस्य शब्दप्रपञ्चव्यतिरेकेणाभावः, शब्दप्रपञ्चस्य प्रणवेन व्याप्तत्वात् तद्व्यतिरेकेणाभावश्च निश्चेतुं शक्यते।

अत्र च उत्तरत्र 'पादा मात्रा मात्राश्च पादा' इति परस्पराभेदोक्तेः ओङ्कारपादानामात्मपादानां च विश्वादीनामभेदचिन्तनमुक्तं भवति। अभेदं चिन्तयित्वा तस्योङ्कारे प्रविलापनं च चतुर्थपादे प्रपञ्चोपशमं इत्यनेन सूच्यते। विश्वतैजसप्राज्ञाः प्रपञ्चरूपाः, तेषामुपशमः चतुर्थपादरूपब्रह्मव्यतिरेकेणाभावज्ञानम्। प्रविलापनं च क्रमेणैव। तच्च—'अकारं पुरुषं विश्वमुकारे प्रविलापयेत्। मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्।।' इत्यादिना पञ्चीकरणवार्तिके श्रीसुरेश्वराचार्यैरुक्तम्।

विश्वतैजसप्राज्ञानामीश्वरात्मकानिरुद्धप्रद्युम्नादिपरत्वे 'सप्ताङ्गः एकोनविंशतिमुखः स्थूलभुक्' इत्यादीनां तेषु अन्वयानुपपत्तिः। 'जीवद्वारा' इत्यर्थकरणे चाधिष्ठातुः अधिष्ठेयगतदुःखादेरप्यापत्तिः। स्थूलभुक्त्वादिकं तु हेतुकर्तृत्वेनोच्यत इति बह्वसमञ्जसम्। जीवो नियम्यः नियम्यगतदोषा नियामके भवन्तीति तेषामभिप्रायः। भवतां नियामके नियम्यगुणा भवन्ति चेत् राज्ञि चोरादत्यन्तभिन्ने चोरत्वाद्यापत्तिः। तथा चोत्कृष्टे निकृष्टगुणाध्यारोपात् प्रत्यवायः स्यात्। तदुक्तं रामानुजाचार्यैः 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यत्र 'उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी'ति (ब्र.सू. ४-१-५)। अतो विश्वादयो जीवा इत्येव युक्तम्।

१. इवकारात् बुद्धिवृत्तेः बहिर्गमनात् वृत्तिमदन्तःकरणमपि बहिर्गतमेव। तत्र च प्रमातृचैतन्यं प्रतिबिम्बितमिति आत्मा बहिर्विषय उच्यते, न तु स्वतः।

**होत्रकल्पनाशेषत्वेनाऽऽहवनीयोऽग्निरस्य मुखत्वेनोक्त इत्येवं सप्ताङ्गानि यस्य स सप्ताङ्गः। तथैकोनविंशतिर्मुखान्यस्य बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च दश, वायवश्च प्राणादयः पञ्च, मनो बुद्धिरहङ्कारश्चित्तमिति मुखानीव मुखानि तान्युपलब्धिद्वाराणीत्यर्थः। स एवंविशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन् स्थूलान्विषयान् भुङ्क्त इति स्थूलभुक्। विश्वेषां नराणामनेकधा नयनाद्वैश्वानरः। यद्वा विश्वश्चासौ नरश्चेति विश्वानरो विश्वानर एव वैश्वानरः, सर्वपिण्डात्मानन्यत्वात् स प्रथमः पादः। एतत्पूर्वकत्वादुत्तरपादाधिगमस्य प्राथम्यमस्य।**

५ **कथमयमात्मा ब्रह्मेति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते द्युलोकादीनां मूर्धाद्यङ्गत्वमिति? नैष दोषः। सर्वस्य प्रपञ्चस्य साधिदैविकस्यानेनाऽऽत्मना चतुष्पात्त्वस्य विवक्षितत्वात्। एवं च सति**

अनुभूतिस्वरूपाचार्यटीका

**कथमयमिति**। ब्रह्मरूपेणानवच्छिन्नमादाय परिहरति—**नैष दोष इति**। अनेन ब्रह्मरूपेण आत्मना सात्मकस्येत्यध्याहारः। अत्रेयं प्रक्रिया—चिन्मात्रतन्त्रा अनाद्यनिर्वाच्या भूतप्रकृतिः मायाऽव्याकृतादिशब्दवाच्या। तस्यां

१० प्रतिबिम्बितं तदेव चैतन्यमारोपकस्वभावेन स्वोपाधिना प्रापितविकारवत्तया सर्वज्ञत्वादिधर्मक**मीश्वरसंज्ञकं** भवति। स एव ईश्वरो मायापरिणामभूतसूक्ष्मोपाधिः तज्जसकललिङ्गाभिमानी **हिरण्यगर्भसंज्ञो** भवति। स एव पञ्चीकृतमहाभूतोपाधिरण्डशरीरः स्थूलाभिमानी **विराट्संज्ञो** भवति। एवं विराड्हिरण्यगर्भेश्वरबिम्बकल्पतुरीयाख्या अधिदैवं चत्वारः पादाः। यानि चाध्यात्ममस्मदादीनां स्थूलशरीराणि ते विराजोंऽशाः, यथा देवदत्तस्य हस्तपादादयोंऽशाः तदंशाश्च अङ्गुल्यः, तदंशाश्च पर्वभेदा भिन्ननामरूपशक्तिकर्माणः, केचन स्पृश्याः, केचनास्पृश्याः

१५ आनन्दगिरिटीका

स्त्रैलोक्यात्मकस्य वक्ष्यमाणरीत्या वैश्वानरशब्दितस्य सुतेजस्त्वगुणविशिष्टो द्युलोको मूर्धैवेति द्युलोकस्य शिरस्त्वमुपदिश्यते। विश्वरूपो नानाविधः श्वेतपीतादिगुणात्मकः सूर्यश्चक्षुर्विवक्ष्यते। पृथङ्नानाविधं वर्त्म सञ्चरणमात्मा स्वभावोऽस्येति व्युत्पत्त्या वायुस्तथोच्यते। स च प्राणस्तस्येति सम्बन्धः। बहुलो विस्तीर्णगुणवानाकाशः सन्देहो देहस्य मध्यमो भागः। रयिरन्नं तद्धेतुरुदकं बस्तिरस्य मूत्रस्थानम्। पृथिव्येव प्रतिष्ठात्वगुणा वैश्वानरस्य पादौ।

२० तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमित्यग्निहोत्रकल्पना श्रुता। तस्याः शेषत्वेनाऽऽहवनीयोऽग्निरस्य मुखत्वेनोक्त इति योजना। उक्तं सप्ताङ्गत्वमुपसंहरति—**इत्येवमिति**। विशेषणान्तरं समुच्चिनोति—**तथेति**। बुद्ध्यर्थानीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि। कर्मार्थानीन्द्रियाणि वाक्पाणिपादपायूपस्थानि। तान्येतानि द्विविधानीन्द्रियाणि दश भवन्ति। प्राणादय इत्यादिशब्देनापानव्यानोदानसमाना गृह्यन्ते। उपलब्धिद्वाराणीत्युपलब्धिपदं कर्मोपलक्षणार्थम्। द्वारत्वं करणत्वम्। तत्र बुद्धीन्द्रियाणां मनसो बुद्धेश्च प्रसिद्धमुपलब्धौ करणत्वम्। कर्मेन्द्रियाणां तु वदनादौ

२५ कर्मणि करणत्वम्। प्राणादीनां पुनरुभयत्र पारम्पर्येण करणत्वम्। तेषु सत्स्वेव ज्ञानकर्मणोरुत्पत्तेः, असत्सु चानुत्पत्तेः। मनोबुद्ध्योश्च सर्वत्र साधारणं करणत्वम्। अहङ्कारस्यापि प्राणादिवदेव करणत्वं मन्तव्यम्। चित्तस्य चैतन्याभासोदये करणत्वमुक्तमिति विवेक्तव्यम्। पूर्वोक्तैर्विशेषणैर्विशिष्टस्य वैश्वानरस्य स्थूलभुगिति विशेषणान्तरम्। तद्विभजते—**स एवंविशिष्ट इति**। शब्दादिविषयाणां स्थूलत्वं दिगादिदेवतानुगृहीतैः श्रोत्रादिभिर्गृह्यमाणत्वम्। इदानीं वैश्वानरशब्दस्य प्रकृतविश्वविषयत्वं विशदयति—**विश्वेषामिति**। कर्मणि षष्ठी।

३० विश्वे च ते नराश्चेति विश्वानराः। निपातात्पूर्वपदस्य दीर्घता। विश्वान् नरान् भोक्तृत्वेन व्यवस्थितान् प्रत्यनेकधा धर्माधर्मकर्मानुसारेण सुखदुःखादिप्रापणादयं कर्मफलदाता वैश्वानरशब्दितो भवतीत्यर्थः। अथ वा विश्वश्चासौ नरश्चेति विश्वानरः स एव वैश्वानरः। स्वार्थे तद्धितो राक्षसवायसवदित्याह—**विश्वेति**। कथं विश्वश्चासौ नरश्चेति विगृह्यते? जाग्रतां नराणामनेकत्वात्तादात्म्यानुपपत्तेरित्याशङ्क्याह—**सर्वेति**। सर्वपिण्डात्मा समष्टिरूपो विराडुच्यते। तेनाऽऽत्मना विश्वेषामनन्यत्वाद्यथोक्तसमाससिद्धिरित्यर्थः। विश्वस्य तैजसादुत्पत्तेस्तस्यैव प्राथम्यं युक्तम्, कार्यस्य तु

३५ पश्चाद्भावित्वमुचितमित्याशङ्क्याह—**एतदिति**। प्रविलापनापेक्षया प्राथम्यं न सृष्ट्यपेक्षयेत्यर्थः।

अध्यात्माधिदैवयोर्भेदमादाय प्रागुक्तं सप्ताङ्गत्वमाक्षिपति—**कथमिति**। ब्रह्मणि प्रकृते तस्य परोक्षत्वे शङ्किते तन्निरासार्थं ब्रह्मायमात्मेति प्रत्यगात्मानं प्रकृत्य सोऽयमात्मा चतुष्पादिति चतुष्पात्त्वे तस्य प्रक्रान्ते द्युलोकादीनां मूर्धाद्यङ्गत्वसप्ताङ्गत्वसिद्ध्यर्थं यदुक्तं तदयुक्तं प्रक्रमविरोधादित्यर्थः। अध्यात्माधिदैवयोर्भेदाभावान्न प्रक्रमविरोधोऽस्तीति परिहरति—**नैष दोष इति**। तत्र हेतुमाह—**सर्वस्येति**। आध्यात्मिकस्याऽऽधिदैविकेन

**सर्वप्रपञ्चोपशमेऽद्वैतसिद्धिः। सर्वभूतस्थश्चात्मैको दृष्टः स्यात्। सर्वभूतानि चाऽऽत्मनि। 'यस्तु सर्वाणि भूतानी'त्यादिश्रुत्यर्थः उपसंहृतश्चैवं स्यात्। अन्यथा हि स्वदेहपरिच्छिन्न एव प्रत्यगात्मा सांख्यादिभिरिव दृष्टः**

अनुभूतिस्वरूपाचार्यटीका

देवदत्तात्मनैकत्वेऽपि, तद्वत्। यानि चाध्यात्मं लिङ्गशरीराणि ते हिरण्यगर्भस्यांशाः। यानि सौषुप्तानि अज्ञानानि तेऽव्याकृतांशाः। सांशत्वेऽपि न कार्यत्वमिति वर्णितमन्यत्र। ५

तदेव तुरीयं चैतन्यमवच्छेदेषु प्रतिबिम्बितया विश्वतैजसप्राज्ञसंज्ञकम्। तदेवं विश्वतैजसप्राज्ञतुरीयाख्या अध्यात्ममपि चत्वारः पादाः। आधिदैविकेन तेषां स्वरूपाभेदादैक्यमाश्रित्य द्युमूर्धत्वादिवर्णनम्। इयं चावयवावयविविभागप्रक्रिया श्रुत्यैवोक्ता—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥" इति। अस्यां चाध्यारोपावस्थायां यो जीवो यत्पदप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म चानुतिष्ठति सोऽपि तत्तत्पदे प्रविष्टो विराडादिशब्दैरभिधीयते। यस्तुरीयं ब्रह्मैवास्मि सर्वं न मत्तोऽन्यदस्तीति श्रुत्याचार्यप्रसादादैकात्म्यं प्रतिपद्यते तस्य १० द्वैतविकल्पेनाबाधेऽद्वैतब्रह्मप्राप्तिः फलमित्याह—**एवं च सतीति**। अस्मिंश्च पक्षे यन्मनुनोक्तं—"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥" इति, तदप्यनुगृहीतं भवतीत्याह—**सर्वभूतस्थश्चेति**। मनुवचनस्य मूलभूता श्रुतिरपि अनुगृहीता भवतीत्याह—**यस्तु सर्वाणीति**। मायाद्वारेण सर्वभूतास्पदं यत्तुरीयं तदहमस्मीति दर्शनात् सर्वभूतान्यात्मन्येव पश्यति स्वरूपतयाऽवगतस्यैव ब्रह्मणः सर्वत्र प्रतिबिम्बितत्वेनावस्थानात् सर्वभूतस्थमात्मानं पश्यति विद्वानित्यर्थः। उक्तप्रकारानभ्युपगमे तत्त्वनिष्ठश्रुतिबाह्यतया १५ पाषण्डित्वमेव स्यादित्याह—**अन्यथा हीत्यादिना**। ननु सर्वत्र सत्तासामान्यस्यैकत्वात् सदद्वितीयमिति श्रुत्योच्यते, न तु सर्वात्मैकत्वाभिप्रायेणेत्याशङ्क्याह—**इष्यते चेति**। उपक्रमे तावत् एकमेवाद्वितीयमिति साभ्यासा श्रुतिः मध्ये चान्ते चैतदात्म्यमिदं सर्वमिति बहुकृत्वोऽभ्यस्यति। अतस्तात्पर्यलिङ्गदर्शनात् मुख्यमेव सर्वात्मैकत्वप्रतिपादकत्वमिष्यत

आनन्दगिरिटीका

सहितस्य प्रपञ्चस्य सर्वस्यैव स्थूलस्य पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकस्यानेनाऽऽत्मना विराजा प्रथमपादत्वम्। तस्यैव २० सूक्ष्मस्यापञ्चीकृतपञ्चमहाभूततत्कार्यात्मनो हिरण्यगर्भात्मना द्वितीयपादत्वम्। तस्यैव कार्यरूपतां त्यक्त्वा कारणरूपतामापन्नस्याव्याकृतात्मना तृतीयपादत्वम्। तस्यैव तु कार्यकारणरूपतां विहाय सर्वकल्पनाधिष्ठानतया स्थितस्य सत्यज्ञानानन्तानन्दात्मना चतुर्थपादत्वम्। तदेवमध्यात्माधिदैवयोरभेदमादायोक्तेन प्रकारेण चतुष्पात्त्वस्य वक्तुमिष्टत्वात् पूर्व-पूर्वपादस्योत्तरोत्तरपादात्मना प्रविलापनात्तुरीयनिष्ठायां पर्यवसानं सिंध्यतीत्यर्थः।

यदैवं तुरीये पर्यवसानं जिज्ञासोर्मुमुक्षोरिष्यते तदा तत्त्वज्ञानप्रतिबन्धकस्य प्रातिभासिकद्वैतस्योपरमे सति २५ अद्वैतपरिपूर्णब्रह्माहमस्मीति वाक्यार्थसाक्षात्कारः सिध्यतीति फलितमाह—**एवं चेति**। उक्तन्यायेन तत्त्वसाक्षात्कारे संगृहीते सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेष्वात्मैकोऽद्वितीयो दृष्टः स्यात्। 'एको देवः सर्वभूतेष्वि'ति तत्र तत्र ब्रह्मचैतन्यस्यैव प्रत्यक्त्वेनावस्थानाभ्युपगमात् तानि तानि च सर्वाणि प्रातिभासिकानि भूतानि तस्मिन्नेवात्मनि कल्पितानि दृष्टानि स्युः। तथा च पूर्णत्वमात्मनो भूतान्तराणां च तदतिरेकेण सत्तास्फुरणविरहितत्वं सिध्यति। ततश्च—

"सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि। सम्पश्यन्नात्मयाजी वै स्वाराज्यमभिगच्छति"॥

इति स्मृतिरनुगृहीता भवतीत्याह—**सर्वभूतस्थश्चेति**। न चेदं मानवं वचनममानमिति शङ्कनीयम्। 'यद्वै किञ्च ३० मनुरवदत्तद्भेषज'मिति श्रुतेरित्यभिप्रेत्य दर्शितस्मृतिमूलभूतां श्रुतिं सूचयति—**यस्त्विति**। यो हि पादत्रयं प्रागुक्तया प्रक्रियया प्रविलाप्य तुरीये नित्ये विज्ञप्तिमात्रे सदानन्दैकताने परिपूर्णे प्रतिष्ठां प्रतिपद्यते स ब्रह्माहमस्मीत्यात्मानं जानानः सर्वेषां भूतानामधिष्ठानान्तरमनुपलभमान आत्मन्येव प्रातीतिकानि तानि प्रत्येति। तेषु सर्वेष्वात्मानं सत्तास्फूर्तिप्रदमवगच्छति। ततश्च न किञ्चिदपि गोपायितुमिच्छतीति श्रुत्यर्थश्च यथोक्तरीत्या तत्त्वसाक्षात्कारे संगृहीते सति स्वीकृतः स्यादित्यर्थः। अध्यात्माधिदैवयोरभेदाभ्युपगमद्वारेण प्रागुक्तपरिपाट्या तत्त्वज्ञानानभ्युपगमे दोषमाह— ३५ **अन्यथेति**। सांख्यादिपक्षस्यापि प्रामाणिकत्वात्तथैव प्रतिदेहं परिच्छिन्नस्य प्रत्यगात्मनो दर्शनेन प्रामाणिकोऽर्थोऽभ्युपगतो भवति। व्यवस्थानुपपत्त्या च प्रतिशरीरमात्मभेदः सिध्यतीत्याशङ्क्याऽऽह—**तथा चेति**। सांख्यादीनां द्वैतविषयं दर्शनमिष्टम्। तेन त्वदीयदर्शनस्याद्वैतविषयस्य विशेषाभावादद्वैतं तत्त्वमिति श्रुतिसिद्धो विशेषस्त्वत्पक्षे न सिध्येदतः श्रुतिविरोधो भेदवादे प्रसज्येत। व्यवस्था त्वौपाधिकभेदमधिकृत्य सुस्था भविष्यतीत्यर्थः।

**स्यात्। तथा च सति 'अद्वैतमिति श्रुतिकृतो विशेषो न स्यात्। सांख्यादिदर्शनेनाविशेषात्। इष्यते च सर्वोपनिषदां सर्वात्मैक्यप्रतिपादकत्वम्। अतो युक्तमेवास्याऽऽध्यात्मिकस्य पिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मनाऽऽधिदैविकेनैकत्वमभिप्रेत्य सप्ताङ्गत्ववचनम्। ''मूर्धा ते व्यपतिष्यत्'' इत्यादिलिङ्गदर्शनाच्च। विराजैकत्वमुपलक्षणार्थं हिरण्यगर्भाव्याकृतात्मनोः। उक्तं चैतन्मधुब्राह्मणे—''यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्'' इत्यादि। सुषुप्ताव्याकृतयोस्त्वेकत्वं सिद्धमेव, निर्विशेषत्वात्। एवं च सत्येतत्सिद्धं भविष्यति सर्वद्वैतोपशमे चाद्वैतमिति।।३।।**

अनुभूतिस्वरूपाचार्यटीका

इत्यर्थः। परिच्छिन्नदृष्टेः निन्दितत्वादपि सर्वात्मैकत्वमेव श्रुतेरभिमतमित्याह—**मूर्धा ते इति**। ननु मूलग्रन्थे विराजैकत्वमेव प्रतीयते विश्वस्य द्युमूर्धत्वादिव्यपदेशात्, कथङ्कारं सर्वात्मैकत्वं भाष्यकृतोच्यत इत्याशङ्क्याह—**विराजैकत्वमिति**। ननु विश्वविराडात्मनोः स्थूलाभिमानित्वाविशेषाद्युक्तमेकत्वं, तैजसहिरण्यगर्भयोश्च सूक्ष्माभिमानाविशेषात्। सुषुप्ताव्याकृतयोः पुनः केन लक्षणसाम्येनैकत्वमित्याशङ्क्याह—**सुषुप्तेति**। यथा प्रलये संहृतसर्वविशेषमव्याकृतं तथा जाग्रत्स्वप्नोपरमे निर्विशेषं सुषुप्तमिति लक्षणसाम्यात् सिद्धमेव एकत्वमित्यर्थः। तत्त्वज्ञाननिवर्त्यतया मिथ्याभूतेन अज्ञानेन सहाव्याकृतस्यैक्ये सति स्वरूपेण ज्ञाननिवर्त्यत्वाभावेऽपि विद्वद्दृष्ट्या आत्मातिरिक्तवस्तुरूपेण सप्रपञ्चाव्याकृतबाधेऽद्वैतं सिद्धं भविष्यतीत्येकत्वज्ञानस्य प्रयोजनमाह—**एवं चेति**। चकारादंशांशिभावकृतावान्तरविभागेन सर्वव्यवस्थासिद्धिं सूचयति। तथाहि—कृत्स्नपरिणामित्वेनांशिनोऽव्याकृतस्य विक्षेपशक्तिसद्भावेऽपि आवरणशक्त्यभावात् तदुपाधिरीश्वरः सर्वज्ञोऽहममूढ इति प्रसिद्ध्यति। परिच्छिन्नत्वेन तदंशानां सुषुप्ताख्याज्ञानानामावरणविक्षेपशक्तिमत्त्वात् तदुपाधिका जीवा अज्ञाः प्रसिद्ध्यन्ति। अज्ञानानां च ज्ञानविरोधितया सम्यग्ज्ञानेन रज्जुज्ञानेन रज्ज्वज्ञानदाहवत् स्वरूपदाह एव। मायायाः पुनर्लौकिकमायावत् सम्यग्ज्ञानेन 'वस्तु न भवति' इत्यनेनाकारेण बाधेऽपि न स्वरूपदाह एव, मायाविन्यनुवृत्तिदर्शनात्। यथा च जातिव्यक्त्योः तादात्म्येऽपि 'गौरसोष्ट' इति व्यवहारो व्यक्त्यालम्बनः, 'गौर्नित्यः' इति जात्यालम्बनः, तथा सम्यग्दर्शिनां 'माया नष्टा' इति व्यष्ट्यालम्बनो व्यवहारः, परमेश्वरो मायावीति समष्ट्यालम्बनः। यथा चास्मदादिपिण्डानां धर्माधर्मादिमलवत्त्वेन हानिवृद्धिमत्त्वेऽपि, तदात्मक एव विश्वरूपधरो नारायणो न तद्वान् भवति कल्पितावच्छेदमात्रात् तथा सुषुप्ताव्याकृतयोः मिथ्यारूपेणैक्येऽपि कल्पितावच्छेदात् सर्वाऽपि व्यवस्थोपपनीपद्यतेऽध्यारोपदृष्ट्या। अपवाददृष्ट्या तु न काचिद् व्यवस्थेति।।३।।

आनन्दगिरिटीका

ननु भेदवादेऽपि नाद्वैतश्रुतिर्विरुध्यते। ध्यानार्थमन्त्रं ब्रह्मेतिवदद्वैतं तत्त्वमित्युपदेशसिद्धेरित्याशङ्क्याऽऽह—**इष्यते चेति**। उपक्रमोपसंहारैकरूप्यादिना सर्वासामुपनिषदां सर्वेषु देहेष्वात्मैक्यप्रतिपादनपरत्वमिष्टमतो न ध्यानार्थत्वमद्वैतश्रुतेरेष्टुं शक्यम्। वस्तुपरत्वलिङ्गविरोधादित्यर्थः। अध्यात्माधिदैवयोरेकत्वमुपेत्याद्वैतपर्यवसाने सिद्धे सत्याध्यात्मिकस्य व्यष्ट्यात्मनो विश्वस्य त्रैलोक्यात्मकेनाऽऽधिदैविकेन विराजा सहैकत्वं गृहीत्वा यत्तस्य सप्ताङ्गत्वमुक्तं तदविरुद्धमित्युपसंहरति—**अत इति**। अध्यात्माधिदैवयोरैक्ये हेत्वन्तरमाह—**मूर्धेति**। दिवादित्यादिकं वैश्वानरावयवं वैश्वानरबुद्ध्या ध्यायतो जिज्ञासया पुनरखण्डपक्षमुपगतस्य 'मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य' इत्यन्धोऽभविष्यो यन्मामित्यादिव्यस्तोपासननिन्दा समस्तोपासनविधित्सया दृश्यते। न च द्युलोकादिकं विपरीतबुद्ध्या गृहीतवतः स्वकीयमूर्धादिपरिपतनमुचितं यद्यध्यात्माधिदैवयोरेकत्वं न भवेत् तस्मात्तयोरेकत्वमत्र विवक्षितं भवतीत्यर्थः।

ननु विराजो विश्वेनैकत्वमेव मूलग्रन्थे दृश्यते। तत्कथमविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षित्वाऽद्वैतपर्यवसानं भाष्यकृतोच्यते, तत्राऽऽह—**विराजेति**। यन्मुखतो विराजो विश्वेनैकत्वं दर्शितं तत्तु हिरण्यगर्भस्य तैजसेनान्तर्यामिणश्चाव्याकृतोपहितस्य प्राज्ञेन सहैकत्वस्योपलक्षणार्थमतो मूलग्रन्थेऽप्यविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षितमित्यद्वैतपर्यवसानसिद्धिरित्यर्थः। अध्यात्माधिदैवयोर्यदेकत्वमिहोच्यते तन्मधुब्राह्मणेऽपि दर्शितमित्याह—**उक्तं चेति**। अधिदैवमध्यात्मं चैकरूपं निर्देशं प्रतिपर्यायमयमेव स इत्यभेदवचनादेकत्वमत्र विवक्षितमित्यर्थः। ननु विश्वविराजोः स्थूलाभिमानित्वात्तैजसहिरण्यगर्भयोश्च सूक्ष्माभिमानित्वादेकत्वं युक्तम्। प्राज्ञाव्याकृतयोस्तु केन साधर्म्येणैकत्वं, तत्राऽऽह—**सुषुप्तेति**। प्राज्ञो हि सर्वं विशेषमुपसंहृत्य निर्विशेषः सुषुप्ते वर्तते, प्रलयदशायामव्याकृतं च निःशेषविशेषं स्वात्मन्युपसंहृत्य निर्विशेषरूपं तिष्ठति, तेनोक्तं साधर्म्यं पुरोधाय तयोरैक्यमविरुद्धमित्यर्थः। अध्यात्माधिदैवयोरेकत्वे प्रागुक्तन्यायेन प्रसिद्धे सत्युपसंहारप्रक्रियया सिद्धमद्वैतमिति फलितमाह—**एवं चेति**। तच्चाद्वैतं प्रतिबन्धध्वंसमात्रेण न स्फुरति, किं तु वाक्यादेवाऽऽचार्योपदिष्टादिति वक्तुं चशब्दः।।३।।

**स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः।।४।।**

**स्वप्नः स्थानमस्य तैजसस्येति स्वप्नस्थानः। जाग्रत्प्रज्ञाऽनेकसाधना बहिर्विषयेवावभासमाना मनःस्पन्दनमात्रा सती तथाभूतं संस्कारं मनस्याधत्ते। तन्मनस्तथा संस्कृतं चित्रित इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभिः प्रेर्यमाणं जाग्रद्वदवभासते। तथा चोक्तम्—''अस्य लोकस्य सर्वावतो मात्रामपादाय'' इति। तथा ''परे देवे मनस्येकीभवति'' इति प्रस्तुत्य ''अत्रैष देवः स्वप्ने महिमानमनुभवति'' इत्याथर्वणे। इन्द्रियापेक्षयाऽन्तः-स्थत्वान्मनसस्तद्वासनारूपा च स्वप्ने प्रज्ञा यस्येत्यन्तःप्रज्ञः। विषयशून्यायां प्रज्ञायां केवलप्रकाशस्वरूपायां विषयित्वेन भवतीति तैजसः। विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोज्यत्वम्। इह पुनः केवला वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोग इति। समानमन्यत्। द्वितीयः पादस्तैजसः।।४।।** ५

अनुभूतिस्वरूपाचार्यटीका

स्वप्नपदार्थं व्याख्यातुं तत्कारणं निरूपयति—**जाग्रत्प्रज्ञेत्यादिना**। जाग्रत्संस्कारजः स्वप्न इत्यत्र प्रमाणमाह— **तथा चोक्तमिति**। सर्वसाधनसम्पत्तिः विद्यतेऽस्मिन्निति सर्वावान् तस्य सर्वावतः जाग्रल्लोकस्य मात्रां वासनामादाय स्वपितीत्यर्थः। मनः संस्कृतं स्वप्नाकारेण विवर्तत इत्यत्र प्रमाणमाह—**परे देव इति**।।४।। १०

आनन्दगिरिटीका

द्वितीयपादमवतार्य व्याचष्टे—**स्वप्नेत्यादिना**। स्थानं पूर्ववत्। द्रष्टुर्ममाभिमानस्य विषयभूतमिति यावत्। स्वप्नपदार्थं निरूपयितुं तत्कारणं निरूपयति—**जाग्रदित्यादिना**। तस्याः स्वप्नाद् वैधर्म्यार्थं विशेषणमाह— **अनेकेति**। अनेकानि विविधानि साधनानि करणानि यस्याः सा तथेति यावत्। विषयद्वारकमपि वैषम्यं दर्शयति— **बहिरिति**। बाह्यस्य शब्दादेर्विषयस्याविद्याविवर्तत्वेन वस्तुतोऽभावात्र तद्विषयत्वमपि यथोक्तप्रज्ञाया वास्तवं, किंतु प्रातीतिकमित्यभिप्रेत्योक्त**मिवेति**। न च यथोक्ता प्रज्ञा प्रमाणसिद्धा, तस्या अनवस्थानात्। तेन साक्षिवेद्या सेति विवक्षित्वाऽऽह—**अवभासमानेति**। द्वैततत्प्रतिभासयोर्वस्तुतोऽसत्त्वे हेतुं सूचयति—**मनःस्पन्दनेति**। यथोक्ता प्रज्ञा स्वानुरूपां वासनां स्वसमानाधारांमुत्पादयतीत्याह—**तथाभूतमिति**। जाग्रद्वासनावासितं मनो जागरितवदवभासते स्वप्नद्रष्टुरित्येष्टव्यं मनस एव वासनावतः स्वप्ने विषयत्वात् अतिरिक्तविषयाभावादित्याह— **तथा संस्कृतमिति**। जाग्रद्वासनावासितं मनो जागरितवद्भातीत्यत्र दृष्टान्तमाह—**चित्रित इति**। यथा पटश्चित्रितश्चित्रवद्भाति तथा मनो जागरितसंस्कृतं तद्वद्भातीति युक्तमित्यर्थः। स्वप्नस्य जागरिताद्वैधर्म्यं सूचयति— **बाह्येति**। यथोक्तस्य मनसो जागरितवदनेकधा प्रतिभाने कारणान्तरमाह—**अविद्येति**। यदुक्तं स्वप्नस्य जागरितजनितवासनाजन्यत्वं तत्र **बृहदारण्यकश्रुतिं** प्रमाणयति—**तथा चेति**। अस्य लोकस्येति जागरितोक्तिस्तस्य विशेषणं सर्वावदिति। सर्वा साधनसम्पत्तिरस्मिन्नस्तीति सर्ववान् सर्ववानेव सर्वावान्, तस्य मात्रा लेशो वासना तामपादायापच्छिद्य गृहीत्वा स्वपिति वासनाप्रधानं स्वप्नमनुभवतीत्यर्थः। यत्तु स्वप्नरूपेण परिणतं मनः साक्षिणो विषयो भवतीति, तत्र श्रुत्यन्तरं दर्शयति—**तथेति**। परत्वं मनसस्तदुपाधित्वाद्वाऽसाधारणकारणत्वाद्वा, देवत्वं द्योतनात्मकत्वात्, तत् मनो ज्योतिरिति ज्योतिःशब्दात्, तस्मिन्नेकीभवति, स्वप्ने द्रष्टा तत्प्रधानो भवतीति स्वप्नं प्रकृत्यात्र स्वप्ने स्वप्रकाशो द्रष्टा महिमानं मनसो विभूतिं ज्ञानज्ञेयपरिणामत्वलक्षणां साक्षात्करोति। तथा च मनसो विषयत्वात्र तत्राऽऽत्मग्राहकत्वशङ्केत्यर्थः। ननु विश्वस्य बाह्येन्द्रियजन्यप्रज्ञायास्तैजसस्य मनोजन्यप्रज्ञायाश्चान्तःस्थत्वाविशेषादन्तःप्रज्ञत्वविशेषणं न व्यावर्तकमिति, तत्राऽऽह—**इन्द्रियेति**। उपपादितं तावद्विश्वस्य बहिष्प्रज्ञत्वं तैजसस्त्वन्तःप्रज्ञो विज्ञायते बाह्यानीन्द्रियाण्यपेक्ष्य मनसोऽन्तःस्थत्वात् तत्परिणामत्वाच्च स्वप्नप्रज्ञायास्तद्वानन्तःप्रज्ञो युज्यते। किं च मनःस्वभावभूता या जागरितवासना तद्रूपा स्वप्नप्रज्ञेति युक्तं तैजसस्यान्तःप्रज्ञत्वमित्यर्थः। स्वप्नाभिमानिनस्तेजोविकारत्वाभावात् कुतस्तैजसत्वमित्याशङ्क्याऽऽह—**विषयेति**। स्थूलो विषयो यस्यां वासनामय्यां प्रज्ञायां न ज्ञायते तस्यां विषयसंस्पर्शमन्तरेण प्रकाशमात्रतया स्थितायामाश्रयत्वेन भवतीति स्वप्नद्रष्टा तैजसो विवक्षितः। तेजःशब्देन यथोक्तवासनामय्याः प्रज्ञाया निर्देशादित्यर्थः। ननु विश्वतैजसयोरविशिष्टं प्रविविक्तभुगिति विशेषणम्। प्रज्ञाया भोज्यत्वस्य तुल्यत्वात्। मैवम्। तस्या भोज्यत्वाविशेषेऽपि तस्यामवान्तरभेदात् सविषयत्वाद्विश्वस्य भोज्या प्रज्ञा

(margin line numbers: १५, २०, २५, ३०, ३५)

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्।**
**[१]सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक्चेतोमुखः[२] प्राज्ञस्तृतीयः पादः।।५।।**

**दर्शनादर्शनवृत्त्योस्तत्त्वाप्रबोधलक्षणस्य स्वापस्य तुल्यत्वात् सुषुप्तिग्रहणार्थं यत्र सुप्त इत्यादि विशेषणम्। अथ वा त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां सुषुप्तं विभजते। यत्र यस्मिन् स्थाने ५ काले वा सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति। न हि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षणं स्वप्न-दर्शनं कामो वा कश्चन विद्यते। तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः। स्थानद्वयप्रविभक्तं मनःस्पन्दितं द्वैतजातं तथारूपापरित्यागेनाविवेकापन्नं नैशतमोग्रस्तमिवाहः सप्रपञ्चमेकीभूतमित्युच्यते। अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीव। सेयमवस्थाऽविवेकरूपत्वात्प्रज्ञानघन उच्यते। यथा रात्रौ नैशेन तमसाऽविभज्यमानं सर्वं**

अनुभूतिस्वरूपाचार्यटीका

१० ननु यत्र सुप्त इत्येतावता सुषुप्तग्रहणं सिद्ध्यति, किमर्थं 'न कञ्चन काममि'तीत्यपरितोषादाह—**अथवेति**। पदार्थानां विशेषानभिव्यक्त्यभिप्रायेण एकीभूतत्वाभिधानमित्याह—**स्थानद्वयप्रविभक्तमिति**। निर्वृत्तिकं मनश्चैतन्यग्रस्तं तिष्ठतीत्यभिप्रायेण प्रज्ञानघनः इति। साक्षिसुखांशाभिव्यक्तिप्रतिबन्धकदुःखाभावादानन्दप्राचुर्याभिप्रायेण आनन्दमय इत्युक्तम्। परमप्रेमास्पदतयाऽऽनन्दस्वभावोऽप्यात्मा रागादिदुःखप्रतिबन्धान्न व्यज्यते, तद्विगमे विषयविशेषानुपरक्त-

आनन्दगिरिटीका

१५ स्थूला लक्ष्यते। तैजसे तु प्रज्ञा विषयसंस्पर्शशून्या वासनामात्ररूपेति विविक्तो भोगः सिध्यतीत्याह—**विश्वस्येति**। सप्ताङ्गैकोनविंशतिमुखत्वमित्येतदन्यदित्युच्यते।।४।।

पादद्वयमेवं व्याख्याय तृतीयं पादं व्याख्यास्यन् व्याख्यायमानश्रुतौ न कञ्चनेत्यादिविशेषणस्य तात्पर्यमाह—**दर्शनेति**। दर्शनस्य स्थूलविषयस्य वृत्तिरत्रास्तीति जागरितं दर्शनवृत्तिरित्युच्यते, स्थूलविषयदर्शनादन्यद्दर्शनमदर्शनं वासनामात्रं तस्य वृत्तिरत्रास्तीत्यदर्शनवृत्तिः स्वप्नस्तयोः सुषुप्तवदेव स्वापस्य तत्त्वाग्रहणस्य तुल्यत्वात् 'यत्र सुप्त' २० इत्युक्ते तयोरपि प्रसक्तौ तद्व्यवच्छेदेन सुषुप्तस्यैव ग्रहणार्थं 'यत्र सुप्त' इत्यादिवाक्ये 'न कञ्चने'त्यादिविशेषणम्। तद्धि स्थानद्वयं व्यवच्छिद्य सुषुप्तमेव ग्राहयतीत्यर्थः। न कञ्चन स्वप्नं पश्यतीत्यनेनैव विशेषणेन स्थानद्वयव्यवच्छेद-सम्भवाद् विशेषणान्तरमकिञ्चित्करमित्याशङ्क्याऽऽह—**अथ वेति**। तत्त्वाप्रतिबोधः स्वापस्तस्य स्थानत्रयेऽपि तुल्यत्वा-ज्जाग्रत्स्वप्नाभ्यां विभज्य सुषुप्तं ज्ञापयितुं विशेषणमित्यर्थः। एकस्यैव विशेषणस्य व्यवच्छेदकत्वसम्भवादलं विशेषणाभ्यामित्यस्य कः समाधिरित्याशङ्क्य विशेषणयोर्विकल्पेन व्यवच्छेदकत्वान्नाऽऽनर्थक्यमिति मत्वाऽऽह—**न** २५ **हीति**। यत्रेत्यस्यापेक्षितार्थं कथयति—**तदेतदिति**। अन्यथाग्रहणशून्यत्वं कामसंस्पर्शविरहितत्वं च विशेषणाभ्यां विवक्षितम्। कथमस्य सद्वितीयस्यैकीभूतत्वविशेषणमित्याशङ्क्याह—**स्थानद्वयेति**। जागरितं स्वप्नश्चेति स्थानद्वयम्। तेन प्रविभक्तं यद् द्वैतं स्थूलं सूक्ष्मं च तत्सर्वं मनःस्पन्दितमात्रमिति वक्ष्यते। तच्च यथा स्वकीयरूपमात्मनो विभक्तं तथैव तस्यात्यागेनाव्याकृताख्यं कारणमापन्नं स्वकीयसर्वविस्तारसहितं कारणात्मकं भवति। यथाऽहर्नैशेन तमसा ग्रस्तं तमस्त्वेनैव व्यवह्रियते तथेदमपि कार्यजातं कारणभावमापन्नं कारणमित्येव व्यवह्रियते। तस्यां चावस्थायां ३० तदुपाधिरात्मैकीभूतविशेषणभाग् भवतीत्यर्थः। तथाऽपि कारणोपहितस्य प्रज्ञानघनविशेषणमयुक्तं निरुपाधिकस्यैव तथा विशेषणसम्भवादित्याशङ्क्याऽऽह—**अत एवेति**। सर्वस्य कार्यप्रपञ्चस्य समनस्कस्य सुषुप्ते कारणात्मना स्थितत्वा-देवेत्यर्थः। सुषुप्तावस्थायामुक्तप्रज्ञानानामेकमूर्तित्वं न वास्तवं, पुनर्यथापूर्वविभागयोग्यत्वादिति मत्वोक्तम्—**इवेति**। सुषुप्त्यवस्थायाः कारणात्मकत्वाज्जाग्रत्स्वप्नप्रज्ञानानां तत्रैकीभावात् प्रज्ञानघनशब्दवाच्यतेत्युक्तमनुवदति—**सेयमिति**।

---

१. सुषुप्तस्थान इत्यत्रापि स्वप्नस्थान इत्यत्रेव दोषः। तत्र सुषुप्तस्थाने इति सप्तम्यन्तत्वाश्रयणं ३५ जागरितस्थानः, स्वप्नस्थानः इति प्रथमान्तपदप्रायपाठविरुद्धम्।

२. चेतोमुखः इत्यत्र 'चित्तं च चेतो हृदयमि'ति कोशात् चित्तमेव ग्राह्यम्। तदेव मुखं द्वारम् अवस्थान्तरप्राप्तौ इति भगवत्पादनिर्वचनम्। मतान्तरे तु 'विशुद्धचेतोग्राह्यः इत्यर्थः' इत्युक्तम्, तत्तु मुखशब्दस्य ग्राहकार्थकत्वे स्वरसम्, ग्राह्यार्थकत्वं तु अप्रसिद्धम्।

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्।।६।।**

घनमिव तद्वत् प्रज्ञानघन एव। एवशब्दान्न जात्यन्तरं प्रज्ञानव्यतिरेकेणास्तीत्यर्थः। मनसो विषयविषय्याकार-स्पन्दनायासदुःखाभावादानन्दमय आनन्दप्रायो, नाऽऽनन्द एवः अनात्यन्तिकत्वात्। यथा लोके निरायासःस्थितः सुख्यानन्दभुगुच्यते। अत्यन्तानायासरूपा हीयं स्थितिरनेनानुभूयत इत्यानन्दभुक्। "एषोऽस्य परम आनन्दः" इति श्रुतेः। स्वप्नादिप्रतिबोधचेतः प्रति द्वारीभूतत्वाच्चेतोमुखः। बोधलक्षणं वा चेतो द्वारं मुखमस्य स्वप्नाद्यागमनं प्रतीति ५ चेतोमुखः। भूतभविष्यज्ज्ञातृत्वं सर्वविषयज्ञातृत्वमस्यैवेति प्राज्ञः। सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते। अथ वा प्रज्ञप्तिमात्रमस्यैवासाधारणं रूपमिति प्राज्ञः। इतरयोर्विशिष्टमपि विज्ञानमस्ति। सोऽयं प्राज्ञस्तृतीयः पादः।।५।।

एष हि स्वरूपावस्थः सर्वेश्वरः साधिदैविकस्य भेदजातस्य सर्वस्येशिता, नैतस्माज्जात्यन्तरभूतोऽन्येषामिव।

अनुभूतिस्वरूपाचार्यटीका

सुखरूपेण यथा व्यज्यते, तथा सुषुप्ते सकलविक्षेपविगमे निरायासाज्ञानवृत्त्युदये तत्र सुखात्मना व्यज्यते १० सुखाकारचिदाभासोदयहेतुत्वादित्यानन्दभुक्त्वमुच्यत इत्याह—**यथा लोक इत्यादिना**।।५।।

आधिदैविकाभेदमाश्रित्य विशेषणान्तरमाह—**एष हीत्यादिना**। आध्यात्मिकार्थवाचकेन प्राणशब्देन

आनन्दगिरिटीका

उक्तमेवार्थं दृष्टान्तेन बुद्धावाविर्भावयति—**यथेत्यादिना**। एवकारस्य नायोगव्यवच्छित्तिरर्थः। किं तु अन्ययोग-व्यवच्छित्तिरित्याह—**एवशब्दादिति**। प्राज्ञस्याऽऽनन्दविकारत्वाभावे कथमानन्दमयत्वविशेषणमित्याशङ्क्य स्वरूप- १५ सुखाभिव्यक्तिप्रतिबन्धकदुःखाभावात् प्राचुर्यार्थत्वं मयटो गृहीत्वा विशेषणोपपत्तिं दर्शयति—**मनस इति**। मयटः स्वरूपार्थत्वादानन्दमयत्वमानन्दत्वमेव किं न स्यादित्याशङ्क्याऽऽह—**नेत्यादिना**। न हि सुषुप्ते निरुपाधिकानन्दत्वं प्राज्ञस्याभ्युपगन्तुं शक्यं तस्य कारणोपहितत्वात्। अन्यथा मुक्तत्वात्पुनरुत्थानायोगात्। तस्मादानन्दप्राचुर्यमेवास्य स्वीकर्तुं युक्तमित्यर्थः। आनन्दभुगिति विशेषणं सदृष्टान्तं व्याचष्टे—**यथेति**। तथा सुषुप्तोऽपीति शेषः। दार्ष्टान्तिकं विवृणोति—**अत्यन्तेति**। इयं स्थितिरिति सुषुप्तिरुक्ता। अनेनेति प्राज्ञोक्तिः। सौषुप्तस्य पुरुषस्य तस्यामवस्थायां २० स्वरूपभूतानतिशयानन्दाभिव्यक्तिरस्तीत्यत्र प्रमाणमाह—**एषोऽस्येति**। प्राज्ञस्यैव चेतोमुख इति विशेषणान्तरं तद्व्याचष्टे—**स्वप्नादीति**। स्वप्नो जागरितं चेति प्रतिबोधशब्दितं चेतस्तत्प्रति द्वारभूतत्वं द्वारभावेन स्थितत्वम्। न हि स्वप्नस्य जागरितस्य वा सुषुप्तद्वारमन्तरेण सम्भवोऽस्ति तयोस्तत्कार्यत्वात्। अतः सुषुप्ताभिमानी प्राज्ञः स्थान-द्वयकारणत्वाच्चेतोमुखव्यपदेशभागित्यर्थः। अथवा प्राज्ञस्य सुषुप्ताभिमानिनः स्वप्नं जागरितं वा प्रति क्रमाक्रमाभ्यां यदागमनं तत्प्रति चैतन्यमेव द्वारम्। न हि तद्व्यतिरेकेण काऽपि चेष्टा सिध्यतीत्यभिप्रेत्य पक्षान्तरमाह— २५ **बोधेत्यादिना**। भूते भविष्यति च विषये ज्ञातृत्वं तथा सर्वस्मिन्नपि वर्तमाने विषये ज्ञातृत्वमस्यैवेति प्रकर्षेण जानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः। तदेव प्राज्ञपदं[1] व्युत्पादयति—**भूतेति**। सुषुप्ते समस्तविशेषविज्ञानोपरमात् कुतो ज्ञातृत्वमित्याशङ्क्याह—**सुषुप्तोऽपीति**। यद्यपि सुषुप्तस्तस्यामवस्थायां समस्तविशेषविज्ञानविरहितो भवति तथापि भूता निष्पन्ना या जागरिते स्वप्ने च सर्वविषयज्ञातृत्वलक्षणा गतिस्तया प्रकर्षेण सर्वम् आसमन्ताज्जानातीति प्राज्ञशब्दवाच्यो भवतीत्यर्थः। तर्हि प्राज्ञशब्दस्य मुख्यार्थत्वं न सिध्यतीत्याशङ्क्याऽऽह—**अथवेति**। असाधारण- ३० मितिविशेषणद्योतितमर्थं स्फुटयति—**इतरयोरिति**। आध्यात्मिकस्य तृतीयपादस्य व्याख्यामुपसंहरति—**सोऽयमिति**।५।।

प्राज्ञस्याऽऽधिदैविकेनान्तर्यामिणा सहाभेदं गृहीत्वा विशेषणान्तरं दर्शयति—**एष हीति**। स्वरूपावस्थत्वमुपाधि-

---

१. यत्तु प्राज्ञपदघटितत्वात् अयं खण्डः परमात्मपरः, तत्सहचरितत्वाच्च विश्वतैजसपदयोरपि ईश्वरपरत्वमिति, तन्न। सन्निध्यपेक्षया श्रुतिलिङ्गयोः प्रबलत्वात्। 'स्थूलभुक् प्रविविक्तभुक्' इति लिङ्गस्य जीव एव सम्भवात्। ३५

कारिकायाम् प्राज्ञपदस्य प्रकर्षेण अज्ञः प्राज्ञ इति जीवे 'नात्मानं न परांश्चैव वेत्ती'ति व्याख्यानात् तस्य जीवपरत्वमेव नेश्वरपरता। 'प्रकर्षेण जानातीति प्राज्ञ' इति परेऽपि प्राज्ञपदस्य तुल्यप्रयोगत्वात् 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यत्र ईश्वरग्रहणोपपत्तिः।

(अथ गौडपादीयकारिकाः)

**अत्रैते श्लोका भवन्ति—**

**बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः। घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थितः।।१।।**

**''प्राणबन्धनं हि सोम्य मन'' इति श्रुतेः। अयमेव हि सर्वस्य सर्वभेदावस्थो ज्ञातेत्येष सर्वज्ञ एषोऽन्तर्याम्यन्तरनुप्रविश्य सर्वेषां भूतानां नियन्ताऽप्येष एव। अत एव यथोक्तं सभेदं जगत्प्रसूयत इत्येष योनिः सर्वस्य। यत एवं प्रभवश्चाप्ययश्च प्रभवाप्ययौ हि भूतानामेष एव।।६।।**

**अत्रैतस्मिन्यथोक्तेऽर्थे एते श्लोका भवन्ति। बहिष्प्रज्ञ इति। पर्यायेण त्रिस्थानत्वात्सोऽहमिति स्मृत्या प्रतिसन्धानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्वं शुद्धत्वमसङ्गत्वं च सिद्धमित्यभिप्रायः। महामत्स्यादिदृष्टान्तश्रुतेः।।१।।**

अनुभूतिस्वरूपाचार्यटीका

परमात्मनो निर्देशस्तस्य तत्त्वतो भेदं निवारयति इत्याह—**प्राणबन्धनं हीति**। प्राणः परमात्मा बन्धनो नियामकोऽस्येति तथोक्तम्।।६।।

ननु उपाधिभेदात् जीवभेदो ब्रह्मविदां सम्मतः। तत एकस्मिन्नपि देहे जीवभेदः स्यादित्याशङ्क्याह—**एक एव त्रिधेति**। स्वतन्त्रोपाधिभेदे हि जीवभेदः, इह तु अनाद्यज्ञानावच्छिन्नस्यैव तज्जान्तःकरणेन अवच्छेदः। तस्यैव च तत्सृष्टस्थूलदेहेनाप्यवच्छेदः। अतः स्वरूपैक्येऽपि विशेषणमात्रभेदात् त्रिधात्वमिति भावः।

श्लोकपदानां पूर्वमेव व्याख्यातत्वात् तात्पर्यमात्रमाह—**पर्यायेणेति**। स्थानत्रयं यदि जीवस्य स्वाभाविकं स्यात्

आनन्दगिरिटीका

प्राधान्यमवधूय चैतन्यप्राधान्यम्। अन्यथा स्वातन्त्र्यानुपपत्तेः। नैयायिकादयस्तु ताटस्थ्यमीश्वरस्याऽऽतिष्ठन्ते, तदयुक्तं, [1]पत्युरसामञ्जस्यादिति न्यायविरोधादित्याह—**नैतस्मादिति**। श्रुतिविरोधादपि न तस्य ताटस्थ्यमास्थेयमित्याह—**प्राणेति**। प्रकृतमज्ञातं परं ब्रह्म सदाख्यं प्राणशब्दितं तद्बन्धनं बध्यतेऽस्मिन् पर्यवस्यतीति व्युत्पत्तेः। न हि जीवस्य परमात्मातिरेकेण पर्यवसानमस्ति। मनस्तदुपहितं जीवचैतन्यमात्रं प्राणशब्दस्याऽऽध्यात्मिकार्थस्य परस्मिन् प्रयोगान्मनःशब्दितस्य च जीवस्य तस्मिन् पर्यवसानाभिधानाद्वस्तुतो भेदो नास्तीति द्योतितमित्यर्थः। प्राज्ञस्यैव विशेषणान्तरं साधयति—**अयमेवेति**। नन्ववधारणं नोपपद्यते। व्यासपराशरप्रभृतीनामन्येषामपि सर्वज्ञत्वप्रसिद्धेरित्याशङ्क्य विशिनष्टि—**सर्वेति**। अन्तर्यामित्वं विशेषणान्तरं विशदयति—**अन्तरिति**। अन्यस्य कस्यचिदन्तरनुप्रवेशे नियमने च सामर्थ्याभावादवधारणम्। उक्तं विशेषणत्रयं हेतुं कृत्वा प्रकृतस्य प्राज्ञस्य सर्वजगत्कारणत्वं विशेषणान्तरमाह—**अत एवेति**। यथोक्तं स्वप्नजागरितस्थानद्वयप्रविभक्तमित्यर्थः। सभेदमध्यात्माधिदैवाधिभूतभेदसहितमिति यावत्। निमित्तकारणत्वनियमेऽपि प्राचीनानि विशेषणानि निर्वहन्तीत्याशङ्क्य [2]प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति न्यायान्निमित्तोपादानयोर्जगति न भिन्नत्वमित्येवं नियमतः सिद्धमतो विशेषणान्तरमित्याह—**यत इति**। प्रभवत्यस्मादिति प्रभवः। अप्येत्यस्मिन्नित्यप्ययः। न चैतौ भूतानामेकत्रोपादानादृते सम्भावितावित्यर्थः।।६।।

आचार्यैर्माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतारणमत्रेत्यादिना कृतं तदत्रेत्यनूद्य भाष्यकारो व्याकरोति—**एतस्मिन्निति**। विश्वस्य विभुत्वं प्रागुक्ताधिदैविकाभेदादवधेयम्। अध्यात्माधिदैवाभेदे पूर्वोदाहृतां श्रुतिं सूचयितुं हिशब्दः। स्थूलसूक्ष्मकारणोपाधिभेदाज्जीवभेदमाशङ्क्य स्वरूपैक्येऽपि स्वतन्त्रोपाधिभेदमन्तरेण विशेषणमात्रभेदादवान्तरभेदोक्तिरित्याह—**एक एवेति**। पदार्थानां पूर्वमेवोक्तत्वात् तात्पर्यं श्लोकस्य वक्तव्यमवशिष्यते तदाह—**पर्यायेणेति**।

---

१. 'पत्युरसामञ्जस्यात्' इति (ब्र.सू. २-२-३७)। अयमर्थः—पत्युः परमेश्वरस्य केवलनिमित्तत्वेन वैशेषिकाभ्युपगतस्य जगत्कारणत्वानुपपत्तिः, हीनमध्यमोत्तमभावेन प्राणिनस्सृजतः तस्य वैषम्यनैर्घृण्यप्रसङ्गात्। अतः तटस्थेश्वरवादोऽसङ्गत इत्यर्थः।

२. प्रकृतिश्च ब्रह्म। चशब्दादुपादानपरिग्रहः। प्रतिज्ञा—'येनाश्रुतं श्रुतं भवती'ति प्रतिज्ञा। दृष्टान्तः—'यथा सौम्यैकेन मृत्पिण्डेन' इति दृष्टान्तः। ताभ्यां ब्रह्मणः उपादानत्वसिद्धिः। निमित्तत्वं तु ईक्षणपूर्वकस्रष्टृत्ववचनात् सिद्धम्।

**दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः।। २।।**

**जागरितावस्थायामेव विश्वादीनां त्रयाणामनुभवप्रदर्शनार्थोऽयं श्लोकः–दक्षिणाक्षीति। दक्षिणमक्ष्येव मुखं तस्मिन् प्राधान्येन द्रष्टा स्थूलानां विश्वोऽनुभूयते। ''इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः'' इति श्रुतेः। इन्धो दीप्तिगुणो वैश्वानर आदित्यान्तर्गतो वैराज आत्मा चक्षुषि च द्रष्टैकः।**

**नन्वन्यो हिरण्यगर्भः, क्षेत्रज्ञो दक्षिणेऽक्षि-ण्यक्ष्णोर्नियन्ता द्रष्टा चान्यो देहस्वामी। न, स्वतो भेदानभ्युपगमात्। ''एको देवः सर्वभूतेषु गूढः'' इति श्रुतेः। ''क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत''। 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।।'' इति स्मृतेः।** ५

अनुभूतिस्वरूपाचार्यटीका

न जीवं व्यभिचरेत्। व्यभिचरति च, क्रमेण स्थानत्रयगमनदर्शनादतस्तद्व्यतिरिक्तत्वं सिद्धमित्यर्थः। योऽहं सुप्तः स एवाहं प्रबुद्ध इत्यनुसन्धानादेकत्वं सिद्धमित्यर्थः। अधर्मादिमलस्य स्थानधर्मत्वात् स्थानातिरेके विशुद्धत्वं सिद्धम्। सङ्गस्य वेद्यतया स्थानधर्मत्वात् तद्द्रष्टुरसङ्गत्वं च सिद्धमित्यर्थः। असङ्गत्वे श्रुतिसम्मतिमाह—**महामत्स्यादीति**। यथा महामत्स्य उदक उभे कूले अनुसञ्चरति क्रमेण, न च तद्गुणदोषाभ्यां संसृज्यते, तथा अयमात्मा स्वप्नान्तं जागरितान्तञ्च अनुसञ्चरन्न तद्गुणदोषाभ्यां संसृज्यत इत्यर्थः।।१।। १०

आनन्दगिरिटीका

यद्यात्मनश्चैतन्यमिव स्वाभाविकं स्थानत्रयं न तर्हि तद्वदेव तं व्यभिचरितुमर्हति, व्यभिचरति चाऽऽत्मानं स्थानत्रयं क्रमाक्रमाभ्यां तस्य त्रिस्थानत्वादतस्तद्व्यतिरिक्तत्वमात्मनः सिद्धम्। यः सुप्तः सोऽहं जागर्मीत्यनुसन्धानादेकत्वं तस्यावगतम्। एकत्वेन हि स्मृत्या घटादावेकत्वमिष्यते। धर्माधर्मरागद्वेषादिमलस्यावस्थाधर्मत्वात् तदतिरेके शुद्धत्वमपि सिध्यति। सङ्गस्यापि वेद्यत्वेनावस्थाधर्मत्वाङ्गीकारात् तदतिरेकिणस्तद्द्रष्टुरसङ्गत्वमपि सङ्गतमेवेत्यर्थः। युक्तिसिद्धेऽर्थे श्रुतिमुदाहरति—**महामत्स्यादीति**। महान्नादेयेन स्रोतसाऽप्रकम्प्यगतिरतिबलीयांस्तिमिरुभे कूले नद्याः सञ्चरन् क्रमसञ्चरणात्ताभ्यामतिरिच्यते। न च तस्य कूलद्वयगतदोषगुणवत्त्वम्। न चासौ क्वचिदपि सज्जते। न च श्येनो वा सुपर्णो वा नभसि परिपतन् क्वचिदपि प्रतिहन्यते तथैवायमात्मा क्रमेण स्थानत्रये सञ्चरन्नुक्तलक्षणो युक्तोऽङ्गीकर्तुमित्यर्थः।।१।। १५ २०

विश्वतैजसप्राज्ञानां स्थानत्रयं क्रमेण सञ्चरतामैक्यमेव वस्तुतो भवतीत्यत्र हेत्वन्तरं विवक्षन्नाह—**दक्षिणेति**। श्लोकस्य तात्पर्यं संगृह्णाति—**जागरितेति**। न चैकस्यामवस्थायामेकस्मिन्नेव देहे भिन्नत्वमात्मनस्तद्वादिभिरपीष्यते। जाग्रदवस्थायामिति तु देहे व्यवस्थितत्वोक्त्या विशेषणम्। तद्धि तत्र व्यवस्थितत्वं यदात्मनः सर्वगतस्य तदभिमानित्वम्। देहाभिमानश्च जागरिते परं सम्भवति। तेन तस्यामेवावस्थायामेकस्मिन्नेव देहे त्रयाणामनुभवात्तेषां मिथो भेदो नास्तीति सिध्यतीत्यर्थः। मुखं द्वारमुपलब्धिस्थानं शरीरमात्रे दृश्यमानस्य। कथमिदमुपलब्धौ विशेषायतनमुपदिश्यते? स्थानान्तरापेक्षयाऽस्य प्राधान्यादित्याह—**प्राधान्येनेति**। अनुभूयते ध्याननिष्ठैरिति शेषः। उक्तेऽर्थे श्रुतिं संवादयति—**इन्ध इति**। बृहदारण्यकश्रुतेरुदाहृतायास्तात्पर्यार्थमाह—**इन्ध इत्यादिना**। वैराजस्याऽऽत्मनो यथोक्तगुणवत्त्वेऽपि द्रष्टुश्चाक्षुषस्य किमायातमित्याशङ्क्याऽऽह—**चक्षुषि चेति**। अध्यात्माधिदैवयोरेकत्वादाधिदैविको गुणश्चाक्षुषेऽप्याध्यात्मिके सम्भवतीत्यर्थः। २५

उक्तमेकत्वमाक्षिपति—**नन्विति**। हिरण्यगर्भः सूक्ष्मप्रपञ्चाभिमानी सूर्यमण्डलान्तर्गतः सूक्ष्मसमष्टिदेहो लिङ्गात्मा चक्षुर्गोलकानुगतेन्द्रियानुग्राहकः संसारिणोऽर्थान्तरम्। विराडात्माऽपि स्थूलप्रपञ्चाभिमानी सूर्यमण्डलात्मकः समष्टिदेहश्चक्षुर्गोलकद्वयानुग्राहकस्ततोऽर्थान्तरमेव। क्षेत्रज्ञस्तु व्यष्टिदेहो दक्षिणे चक्षुषि व्यवस्थितो द्रष्टा चक्षुषोः करणानां नियन्ता कार्यकरणस्वामी ताभ्यां समष्टिदेहाभ्यामन्योऽभ्युपगम्यते। तदेवं समष्टिव्यष्टित्वेन व्यवस्थितजीवभेदादुक्त-मेकत्वमयुक्तमित्यर्थः। काल्पनिको जीवभेदो वास्तवो वेति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—**नेत्यादिना**। एको हि परो देवः सर्वेषु भूतेषु समष्टित्वेन व्यष्टित्वेन च समावृतस्तिष्ठतीति श्रवणाद् वस्तुतो भेदो नास्तीत्युक्तं हेतुं साधयति—**एक इति**। सर्वेषु क्षेत्रेषु व्यवस्थितं क्षेत्रज्ञं मामीश्वरं विद्धीति भगवतो वचनाच्च तात्त्विकभेदासिद्धिरित्याह—**क्षेत्रज्ञं चेति**। सर्वेषु भूतेषु क्षेत्रज्ञश्चेदात्मैकः कथं तर्हि प्रतिभूतं भेदप्रथेत्याशङ्क्याऽऽह—**अविभक्तं चेति**। तत्त्वतोऽविभागेऽपि देहकल्पनया भेदधीरित्यर्थः। ३० ३५

**सर्वेषु करणेष्वविशेषेऽपि दक्षिणाक्षिण्युपलब्धिपाटवदर्शनात् तत्र विशेषेण निर्देशो विश्वस्य। दक्षिणाक्षिगतो रूपं दृष्ट्वा निमीलिताक्षस्तदेव स्मरन् मनस्यन्तः स्वप्न इव तदेव वासनारूपाभिव्यक्तं पश्यति। यथाऽत्र तथा स्वप्ने। अतो मनस्यन्तस्तु तैजसोऽपि विश्व एव। आकाशे च हृदि स्मरणाख्यव्यापारोपरमे प्राज्ञ एकीभूतो घनप्रज्ञ एव भवति। मनोव्यापाराभावात्। दर्शनस्मरणे एव हि मनःस्पन्दिते। तदभावे हृद्येवाविशेषेण ५ प्राणात्मनाऽवस्थानम्। ''प्राणो ह्येवैतान्सर्वान्संवृङ्क्ते'' इति श्रुतेः।**

**तैजसो हिरण्यगर्भो मनःस्थत्वात्। 'लिङ्गं मनः' ''मनोमयोऽयं पुरुषः'' इत्यादिश्रुतिभ्यः। ननु व्याकृतः**

अनुभूतिस्वरूपाचार्यटीका

**अविशेषेण** अव्याकृतेन प्राणात्मना हृदयाकाशे अवस्थानं भवतीत्येतत् कथमवगम्यते, तत्राह—**प्राणो हीति**। एतान्सर्वान् वागादीन् प्राणोऽव्याकृतात्मा स्वात्मन्येव संवृङ्क्ते संहरति सुषुप्तावस्थायामित्यर्थः। पूर्वमिन्ध- १० श्रुतिव्याख्यानेन विराजैकत्वं विश्वस्य प्रपञ्चितम्। समनन्तरमेव च आधिदैविकाव्याकृतात्मत्वं सुषुप्तस्य व्याख्यायि। तैजसस्य तु हिरण्यगर्भाभेदो नाभ्यधायि, ततस्तमाह—**तैजस इति**। ननु हिरण्यगर्भो लिङ्गात्मा प्रसिद्धः कथं मनोऽवस्थत्वमात्रेण तैजसस्य हिरण्यगर्भत्वमित्याशङ्क्याह—**लिङ्गं मन इति**। यदवाद्यव्याकृतप्राणात्मनाऽवस्थानं सुषुप्ते, तदाक्षिपति—**नन्वित्यादिना**। अव्याकृतं तावद्देशकालपरिच्छेदशून्यं, सुषुप्तस्यापि तल्लक्षणसद्भावादव्याकृतत्वं

आनन्दगिरिटीका

१५ ननु करणेषु सर्वेषु विश्वस्याविशेषात्र दक्षिणे चक्षुषि विशेषनिर्देशो युज्यते; यद्यपि करणान्तरेभ्यश्चक्षुषि प्राधान्यमुक्तं तथाऽपि नार्थो दक्षिणविशेषणेनेति, तत्राऽऽह—**सर्वेष्विति**। श्रुत्यनुभवाभ्यां निर्देशविशेषसिद्धिरित्यर्थः। यद्यपि देहदेशभेदे विश्वोऽनुभूयते तथाऽपि कथं जागरिते तैजसोऽनुभूयत इत्याशङ्क्य द्वितीयं पादं व्याचष्टे—**दक्षिणेति**। यथा स्वप्ने जागरितवासनारूपेणाभिव्यक्तमर्थजातं द्रष्टाऽनुभवति तथैव जागरिते दक्षिणे चक्षुषि द्रष्टृत्वेन व्यवस्थितः सन्निकृष्टं रूपं दृष्ट्वा पुनर्निमीलिताक्षो दृष्टमेव रूपं रूपोपलब्धिजनितमुद्बुद्धवासनात्मना मनस्यन्तरभिव्यक्तं २० स्मरन्विश्वस्तैजसो भवति। तथा च तयोर्भेदाशङ्का नावतरतीत्यर्थः। स्वप्नजागरितयोर्विलक्षणत्वात्तद्द्रष्ट्रोर्विश्व-तैजसयोरपि वैलक्षण्यमुचितमित्याशङ्क्याऽऽह—**यथेति**। जागरिते यथाऽर्थजातं द्रष्टा पश्यति तथैव स्वप्नेऽपि तदुपलभते, ततो न तयोर्वैलक्षण्यसिद्धिरित्यर्थः। द्वितीयपादस्य व्याख्यामुपसंहरति—**अत इति**। स्थानद्वये द्रष्टुर्भेदाशङ्का निरवकाशेति दर्शयितुमेवकारः। तृतीयं पादं व्याकुर्वञ्जाग्रत्येव सुषुप्तिं दर्शयति—**आकाशे चेति**। यो विश्वस्तैजसत्वमुपगतः स पुनः स्मरणाख्यस्य व्यापारस्य व्यावृत्तौ हृदयावच्छिन्नाकाशे स्थितः सन् प्राज्ञो भूत्वा तल्लक्षणलक्षितो भवति। न २५ हि तस्य रूपविषयदर्शनस्मरणे परिहृत्य विशिष्टाकाशनिविष्टस्य प्राज्ञादर्थान्तरत्वम्। अतश्च स एकीभूतो विषयविषय्याकाररहितः यतो घनप्रज्ञो विशेषविज्ञानविरही रूपान्तररहितस्तिष्ठतीत्यर्थः। उक्तमर्थं प्रपञ्चयन् मनोव्यापाराभावादिति हेतुमुक्त्वा व्याचष्टे—**दर्शनेत्यादिना**। अविशेषेणाव्याकृतरूपेणेत्यर्थः। **अवस्थानं** जागरिते सुषुप्तमिति शेषः। यदुक्तमव्याकृतेन प्राणात्मना हृदयेऽवस्थानमिति तत्र प्रमाणमाह—**प्राणो हीति**। यो हि प्राणोऽध्यात्मं प्रसिद्धः स वागादीन् प्राणानात्मनि संवृङ्क्ते संहरतीति प्राणस्याध्यात्मं वागादिसंहर्तृत्वमुक्तम्। अधिदैवं च यो वायुः ३० सूत्रात्मा सोऽग्न्यादीनात्मनि संहरतीत्यग्न्यादिसंहर्तृत्वं वायोरुक्तम्। अध्यात्माधिदैवयोश्चैकत्वात् प्राणस्य वायोश्च वागादिष्वग्न्यादिषु च संहर्तृत्वेनाव्याकृतत्वस्य संवर्गविद्यायां सूचितत्वादव्याकृतेन प्राणात्मना सुषुप्ते प्राज्ञस्यावस्थानमिति युक्तमेवोक्तमित्यर्थः।

पूर्वमेव विश्वविराजोरैक्यस्यानन्तरं च सुषुप्ताव्याकृतयोरेकत्वस्य दर्शितत्वात् तैजसहिरण्यगर्भयोरनुक्तमभेदं वक्तव्यमिदानीमुपन्यस्यति—**तैजस इति**। तत्र हेतुमाह—**मनःस्थत्वादिति**। हिरण्यगर्भस्य समष्टिमनोनिष्ठत्वात् तैजसस्य ३५ व्यष्टिमनोगतत्वात् तयोश्च समष्टिव्यष्टिमनसोरेकत्वात् तद्गतयोरपि तैजसहिरण्यगर्भयोरेकत्वमुचितमित्यर्थः। किं च हिरण्यगर्भस्य क्रियाशक्त्युपाधौ लिङ्गात्मतया प्रसिद्धत्वात् तस्य च सामानाधिकरण्यश्रुत्या मनसा सहाभेदावगमान्मनो-निष्ठस्य तैजसस्य युक्तं हिरण्यगर्भत्वमित्याह—**लिङ्गमिति**। किं च पुरुषस्य मनोमयत्वश्रवणात्पुरुषविशेषत्वाच्च हिरण्यगर्भस्य तत्प्रधानत्वाधिगमात् तन्निष्ठस्तैजसो हिरण्यगर्भो भवितुमर्हतीत्याह—**मनोमय इति**। प्राणस्य प्रागुक्त-मव्याकृतत्वमाक्षिपति—**नन्विति**। सुषुप्ते हि प्राणो नामरूपाभ्यां व्याकृतो युक्तस्तद्व्यापारस्य पार्श्वस्थैरतिस्पष्टं ४० दृष्टत्वादित्यर्थः। किं च तस्यामवस्थायां वागादीनि करणानि प्राणात्मकानि भवन्ति। 'त एतस्यैव सर्वे रूपम-

**प्राणः सुषुप्ते, तदात्मकानि करणानि भवन्ति, कथमव्याकृतता। नैष दोषः। अव्याकृतस्य देशकालविशेषाभावात्। यद्यपि प्राणाभिमाने सति व्याकृततैव प्राणस्य तथाऽपि पिण्डपरिच्छिन्नविशेषाभिमाननिरोधः प्राणे भवतीत्यव्याकृत एव प्राणः सुषुप्ते परिच्छिन्नाभिमानवताम्। यथा प्राणलये परिच्छिन्नाभिमानिनां प्राणोऽव्याकृतस्तथा प्राणाभिमानिनोऽप्यविशेषापत्तावव्याकृतता समाना, प्रसवबीजात्मकत्वं च, तदध्यक्षश्चैकोऽव्याकृतावस्थः। परिच्छिन्नाभिमानिनामध्यक्षाणां च तैनैकत्वमिति पूर्वोक्तं विशेषणमेकीभूतः प्रज्ञानघन इत्याद्युपपन्नम्। तस्मिन्नुक्तहेतुसत्त्वाच्च।** ५

अनुभूतिस्वरूपाचार्यटीका

न विरुध्यत इत्याह—**नैष दोष इति**। ननु ममायं प्राणोऽस्यायं प्राण इति देशपरिच्छेदावगमात् कथमव्याकृततेत्याशङ्क्याह—**यद्यपीति**। प्रतिबुद्धदृष्ट्या विशेषाभिमानविषयत्वेऽपि सुषुप्तदृष्ट्या तदुपसंहारादव्याकृतत्वं न विरुध्यत इत्यर्थः। विशेषाभिमाननिरोधे प्राणस्याव्याकृतत्वं मरणे प्रसिद्धमित्याह—**यथा प्राणलय इति**। यथाऽधिदैविकमव्याकृतं जगत्प्रसवे बीजं तथा सुषुप्तं जाग्रत्स्वप्नयोः। अतोऽपि लक्षणसाम्यमित्याह—**प्रसवेति**। उपाधिस्वभावपर्यालोचनयाऽभेदोऽभ्यधायि। इदानीमुपहितस्वभावपर्यालोचनयाऽप्यभेदमाह—**तदध्यक्षश्चेति**। तयोः आध्यात्मिकाधिदैविकयोः अधिष्ठाताऽप्येकश्चिद्धातुः कारणोपाधिकत्वसाम्यादित्यर्थः। पूर्वं विशेषानभिव्यक्तिमात्रेणैकीभूत इत्यादिविशेषणं व्याख्यायेदानीं तत्त्वाभेदाभिप्रायेणापि तद् घटत इत्याह—**परिच्छिन्नेति**। कथं तर्हि पञ्चात्मके वायुविकारे रूढस्य प्राणशब्दस्याव्याकृते प्रयोगः कृतः 'प्राणो ह्येवैतान्' इत्यत्र? तत्राह—**उक्तहेतुसत्वाच्चेति**। १०

आनन्दगिरिटीका

भवन्ति'ति श्रुतेः। अतोऽपि प्राणस्य व्याकृतत्वं युक्तमित्याह—**तदात्मकानीति**। उक्तन्यायेन प्राणस्याव्याकृतत्वायोगादव्याकृतेन प्राणात्मना सुषुप्तस्यावस्थानमयुक्तमिति निगमयति—**कथमिति**। एकलक्षणत्वादव्याकृतप्राणयोरेकत्वोपपत्तिरित्युत्तरमाह—**नैष दोष इति**। अव्याकृतं हि देशकालवस्तुपरिच्छेदशून्यम्। प्राणोऽपि सौषुप्तद्रष्टुस्तथा। न हि सौषुप्तदृष्ट्या तत्कालीनस्य प्राणस्य देशादिपरिच्छेदोऽवगम्यते। तथा च लक्षणाविशेषादव्याकृतप्राणयोरेकत्वमविरुद्धमित्यर्थः। १५

तस्यायं प्राणो ममायमिति देशपरिच्छेदप्रतिभानादेकलक्षणत्वाभावान्न प्राणस्याव्याकृतत्वमित्याशङ्क्याऽऽह—**यद्यपीति**। परिच्छिन्नाभिमानवतां मध्ये प्रत्येकं ममायमिति प्राणाभिमाने सति प्राणस्य यद्यपि व्याकृततैव भवति तथाऽपि सुषुप्त्यवस्थायां पिण्डेन परिच्छिन्नो यो विशेषस्तद्विषयो ममेत्यभिमानस्तस्य निरोधस्तस्मिन् भवतीति प्राणोऽव्याकृत एवेति योजना। प्रतिबुद्धदृष्ट्या विशेषाभिमानविषयत्वेन व्याकृतत्वेऽपि सुषुप्तदृष्ट्या तदुपसंहारादव्याकृतत्वं प्राणस्याविरुद्धमिति भावः। विशेषाभिमाननिरोधे प्राणस्याव्याकृतत्वं क्व दृष्टमित्याशङ्क्याऽऽह—**यथेति**। परिच्छिन्नाभिमानिनां प्राणलयो मरणं, तत्राभिमाननिरोधे प्राणो नामरूपाभ्यामव्याकृतो यथेष्यते तथैव प्राणाभिमानिनोऽपि तदभिमाननिरोधेनाविशेषापत्तिः सुषुप्तिः, तत्राव्याकृतता प्राणस्य प्रागुक्तदृष्टान्तेनाविशिष्टा। ततो विशेषाभिमाननिरोधे प्राणस्याव्याकृतत्वं प्रसिद्धमित्यर्थः। किं च यथाऽऽधिदैविकमव्याकृतं जगत्प्रसवबीजम्। 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' इति श्रुतेः। तथा प्राणाख्यं सुषुप्तं जागरितस्वप्नयोर्भवति बीजम्। तथा च कार्यं प्रति प्रसवबीजरूपत्वमविशिष्टमुभयोरिति लक्षणाविशेषादव्याकृतप्राणयोरेकत्वस्य प्रसिद्धिरित्याह—**प्रसवेति**। समानमित्यनुकर्षार्थश्चकारः। उपाधिस्वभावालोचनया सुषुप्ताव्याकृतयोरभेदमभिधायोपहितस्वभावालोचनयाऽपि तयोरभेदमाह—**तदध्यक्षश्चेति**। अव्याकृतावस्थः सुषुप्तावस्थश्च तयोरुपहितस्वभावयोराध्यात्मिकाधिदैविकयोरेकोऽधिष्ठाता चिद्धातुः। अतोऽपि तयोरेकत्वं सिध्यतीत्यर्थः। सुषुप्ताव्याकृतयोरेवमेकत्वं प्रसाध्य तस्मिन्नव्याकृते सुषुप्ते प्रागुक्तं विशेषणं युक्तमित्याह—**परिच्छिन्नेति**। यद्यपि विशेषानभिव्यक्तिमात्रेणैकीभूतत्वादि विशेषणमुपपादितं तथाऽपि परिच्छिन्नाभिमानिनामुपाधिप्रधानानां तत्र तत्राध्यक्षाणां चोपहितानामव्याकृतेनैकत्वम्। अतोऽपि प्रागुक्तविशेषणोपपत्तिरित्यर्थः। किं चाध्यात्माधिदैवयोरेकत्वमिति प्रागुक्तहेतुसद्भावाच्च युक्तं सुषुप्ते प्राज्ञे प्राणात्मन्यव्याकृते यथोक्तं विशेषणमित्याह—**पूर्वोक्तमिति**। ग्रन्थगतादिशब्देन सर्वेश्वरत्वादिविशेषणं गृह्यते। २० २५ ३० ३५

**कथं प्राणशब्दत्वमव्याकृतस्य? ''प्राणबन्धनं हि सोम्य मनः'' इति श्रुतेः। ननु तत्र ''सदेव सोम्य'' इति प्रकृतं सद् ब्रह्म प्राणशब्दवाच्यम्। नैष दोषः। बीजात्मकत्वाभ्युपगमात् सतः। यद्यपि सद्ब्रह्म प्राणशब्दवाच्यं तत्र तथाऽपि जीवप्रसवबीजात्मकत्वमपरित्यज्यैव प्राणशब्दत्वं सतः सच्छब्दवाच्यता च। यदि हि निर्बीजरूपं विवक्षितं ब्रह्माभविष्यत् ''नेति नेति'' ''यतो वाचो निवर्तन्ते'' ''अन्यदेव तद्विदितादथो अविदितात्'' इत्यवक्ष्यत्। ''न सत्तन्नासदुच्यते'' इति स्मृतेः। निर्बीजतयैव चेत् सति लीनानां सम्पन्नानां सुषुप्तप्रलययोः पुनरुत्थानानुपपत्तिः स्यात्। मुक्तानां च पुनरुत्पत्तिप्रसङ्गः। बीजाभावाविशेषात्।**

**ज्ञानदाह्यबीजाभावे च ज्ञानानर्थक्यप्रसङ्गः। तस्मात् सबीजत्वाभ्युपगमेनैव सतः प्राणत्वव्यपदेशः, सर्वश्रुतिषु**

अनुभूतिस्वरूपाचार्यटीका

आध्यात्मिकेनाभिन्नत्वादित्यर्थः। श्रुत्यन्तरे प्रयोगदर्शनाच्च न विरुध्यत इत्याह—**प्राणबन्धनं हीति**। यथा ज्योतिष्टोमप्रकरणे श्रुतो ज्योतिश्शब्दः प्रकृतज्योतिष्टोमविषयस्तथाऽद्वितीयप्रकरणे श्रुतः प्राणशब्दः प्रकृताद्वितीयब्रह्मविषयो नाव्याकृतविषय इत्याह—**ननु तत्रेति**। अद्वितीयं प्रक्रम्य वाक्यशेषे कारणत्वनिर्देशात् मायाशबलं तत्र सच्छब्दवाच्यं न शुद्धमित्याह—**नैष दोष इति**। शुद्धस्य शब्दवाच्यत्वाभावादित्यर्थः। किञ्च, 'सता सोम्य तदा सम्पन्नो भवती'ति सत्सम्पत्तिः तस्मिन्प्रकरणे जीवस्योच्यंते, सापि अव्याकृतविवक्षां गमयतीत्याह—**निर्बीजतयैव चेदिति**। निरविद्यब्रह्मसम्पन्नोऽपि यद्युत्पद्यते तदाऽतिप्रसङ्ग इत्याह—**मुक्तानां चेति**। यच्च केचिन्मन्यन्ते मिथ्याज्ञानतत्संस्कारव्यतिरेकेण न प्रबोधादिबीजभूताऽविद्या नामास्तीति, तत्राह—**ज्ञानदाह्येति**। न तावन्मिथ्याज्ञानदाहः

आनन्दगिरिटीका

प्राणशब्दस्य पञ्चवृत्तौ वायुविकारे रूढत्वान्नाव्याकृतविषयत्वं रूढिविरोधादिति शङ्कते—**कथमिति**। अन्यत्र रूढत्वेऽपि श्रौतप्रयोगवशादव्याकृतविषयत्वं प्राणशब्दस्य युक्तमिति परिहरति—**प्राणबन्धनमिति**। प्रकरणस्य ब्रह्मविषयत्वाद् ब्रह्मण्येव प्रकृते वाक्ये प्राणशब्दस्य प्रयोगान्नाव्याकृतविषयत्वं तस्य युक्तं प्रकरणविरोधादिति शङ्कते—**नन्विति**। प्रकरणस्य ब्रह्मविषयत्वेऽपि ब्रह्मणः सल्लक्षणस्य शबलत्वाङ्गीकारादस्मिन्नपि वाक्ये तत्रैव प्राणशब्दप्रयोगाद्युक्तं तस्याव्याकृतविषयत्वमित्युत्तरमाह—**नैष दोष इति**। संग्रहवाक्यं प्रपञ्चयति—**यद्यपीति**। तत्रेति प्राणबन्धनवाक्यं परामृश्यते। जीवशब्दः सर्वस्यैव कार्यजातस्योपलक्षणम्। प्रकरणवाक्ययोरुभयोरपि परिशुद्धब्रह्मविषयत्वे का क्षतिरित्याशङ्क्य परिशुद्धस्य ब्रह्मणः शब्दप्रवृत्तिनिमित्तागोचरत्वात् तत्र शब्दवाच्यत्वानुपपत्तेर्मैवमित्याह—**यदि हीति**। न केवलं निरुपाधिकं निर्विशेषं ब्रह्म वाङ्मनसयोरगोचरमिति श्रुतेरेव निर्धार्यते, किं तु स्मृतेरपीत्याह—**न सदिति**। किं च कार्यजातं प्रति बीजभूताज्ञानरहिततया शुद्धत्वेनैवास्मिन् प्रकरणे ब्रह्म विवक्षितं चेत् तर्हि 'सता सोम्य तदा सम्पन्नो भवती'ति जीवानां सत्प्राप्तिश्रवणाद् ब्रह्मणः सच्छब्दितस्य शुद्धत्वे सुषुप्त्यादौ तत्र लीनानामेकीभूतानां जीवानां पुनरुत्थानं नोपपद्यते, दृश्यते च पुनरुत्थानम्। तेन शबलमेव ब्रह्मात्र विवक्षितमित्याह—**निर्बीजतयेति**। सुषुप्त्यादौ शुद्धे ब्रह्मणि सम्पन्नानामपि पुनरुत्थाने मोक्षानुपपत्तिदोषमाह—**मुक्तानां चेति**। न तेषां पुनरुत्थानं हेत्वभावादित्याशङ्क्य सुषुप्तानां प्रलीनानां च न तर्हि पुनरुत्थानं हेत्वभावस्य तुल्यत्वादित्याह—**बीजाभावेति**।

नन्वनाद्यनिर्वाच्यमज्ञानं संसारस्य बीजभूतं नास्त्येव यद् ब्रह्मणो विशेषणं भवति। अग्रहणमिथ्याज्ञानतत्संस्काराणामज्ञानशब्दवाच्यत्वात्तत्राऽऽह—**ज्ञानेति**। अज्ञोऽहमित्यज्ञानमपरोक्षम्। अग्रहणस्य च ग्रहणप्रागभावस्य नापरोक्षत्वमिन्द्रियसन्निकर्षाभावादनुपलब्धिगम्यत्वाच्च। भ्रान्तितत्संस्कारयोश्चाभावेतरकार्यत्वादुपादानापेक्षणादात्मनश्च केवलस्यातद्धेतुत्वात्तदुपादानत्वेनानाद्यज्ञानसिद्धिः। किं च देवदत्तप्रमा तन्निष्ठप्रमाप्रागभावातिरिक्ताऽनादिप्रध्वंसिनी प्रमात्वाद् यज्ञदत्तप्रमावत्। न च तदभावे सम्यग्ज्ञानार्थवत्त्वम्। क्षणिकत्वेन भ्रान्तेस्तदनिवर्त्यत्वात् संस्कारस्य च सत्यपि सम्यग्ज्ञाने क्वचिदनुवृत्तिदर्शनात्। न चाग्रहणस्य तन्निवर्त्यत्वम्। ज्ञानस्य तन्निवृत्तित्वात्। अतो ज्ञानदाह्यं संसारबीजभूतमनाद्यनिर्वाच्यमज्ञानं ज्ञानस्यार्थवत्त्वायाऽऽस्थेयम्। अन्यथा तदानर्थक्यप्रसङ्गादित्यर्थः। शुद्धस्य ब्रह्मणो वाक्यप्रकरणाभ्यां विवक्षितत्वाभावे फलितमाह—**तस्मादिति**। ब्रह्मणः शबलस्यैव प्राकरणिकत्वाद् वाक्येऽपि तस्मिन् प्राणशब्दाद् युक्तं प्राणशब्दस्याव्याकृतविषयत्वमिति भावः। यतोऽनाद्यनिर्वाच्याज्ञानशबलस्यैव

**विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक्। आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत।।३।।**
**स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम्। आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत।।४।।**
**त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः। वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते।।५।।**

**च कारणत्वव्यपदेशः। अत एव ''अक्षरात्परतः परः', ''सबाह्याभ्यन्तरो ह्यजः'', ''यतो वाचो निवर्तन्ते'', ''नेति नेति'' इत्यादिना बीजवत्त्वापनयनेन व्यपदेशः। तामबीजावस्थां तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसम्बन्धरहितां पारमार्थिकीं पृथग्वक्ष्यति। बीजावस्थाऽपि न किञ्चिदवेदिषमित्युत्थितस्य प्रत्ययदर्शना-देहेऽनुभूयत एवेति त्रिधा देहे व्यवस्थित इत्युच्यते।।२।।** ५

**उक्तार्थौ श्लोकौ।।३-४।।**

**त्रिषु धामसु जाग्रदादिषु स्थूलप्रविविक्तानन्दाख्यं यद् भोज्यमेकं त्रिधाभूतम्, यश्च विश्वतैजसप्राज्ञाख्यो भोक्तैकः सोऽहमित्येकत्वेन प्रतिसन्धानाद् द्रष्टृत्वाविशेषाच्च प्रकीर्तितः। यो वेदैतदुभयं भोज्यभोक्तृतयाऽनेकधा** १०

अनुभूतिस्वरूपाचार्यटीका

सम्यग्ज्ञानफलं तस्य क्षणिकत्वेनैव सिद्धेः। न च तत्संस्कारस्य सम्यग्ज्ञानदाह्यत्वं रजतभ्रमसंस्काराणां शुक्तिका-बोधेऽप्यनुवृत्तिदर्शनात्। न च ग्रहणप्रागभावनिवर्तकं सम्यग्ज्ञानं तत्काले तदभावात् तन्निवृत्तिरूपत्वाच्च। न च ब्रह्मप्राप्तिः फलम्। स्वभावत्वेन सिद्धत्वात्। अतः सम्यग्ज्ञानस्यार्थवत्त्वान्यथानुपपत्त्या संसारबीजमज्ञानं तन्निवर्त्यं अभ्युगन्तव्यमिति भावः। कारणत्वप्रतिषेधेन शुद्धब्रह्मोपदेशादपि कारणत्वं मायाशबलस्येत्याह—**अत एवेति**। १५ आचार्येणानुपदिष्टत्वात् कारणातिरिक्तं शुद्धब्रह्मैव नास्तीति न वाच्यमित्याह—**तामबीजावस्थामिति**। भवत्वेवं वस्तुव्यवस्था तथाप्यव्याकृतस्यास्मिन् देहेऽनुभवासद्भावात् त्रिधा देहे व्यवस्थित इत्यसङ्गतमुक्तमित्याशङ्क्याह—**बीजावस्थाऽपीति**।।२।।

उक्तविश्वादिवेदनस्यावान्तरफलमाह—**त्रिषु धामसु यदिति**। उक्तफलवचनस्य मूलभूतां युक्तिमाह—**न हि यस्येति**। अत एवोक्तम्— २०

नापो मूत्रपुरीषाभ्यां नाग्निर्दहनकर्मणा। न वायुः स्पर्शदोषेण नान्नदोषेण मस्करी। इति।।५।।

आनन्दगिरिटीका

कारणत्वं ब्रह्मणो विवक्ष्यते। अत एव कारणत्वनिषेधेन परिशुद्धं ब्रह्म श्रुतिषूपदिश्यते, तदेतदाह—**अत एवेति**। अक्षरमव्याकृतम्, तच्च कार्यापेक्षया परम्। तस्मात्परोऽयं परमात्मा। स हि कार्यकारणाभ्यामस्पृष्टो वर्तते। बाह्यं कार्यमभ्यन्तरं कारणमिति ताभ्यां सह तत्कल्पनाधिष्ठानत्वेन वर्तमानश्चिद्धातुः। तथा च स चिद्धातुरजो जन्मादि- २५ समस्तविक्रियाशून्यत्वेन कूटस्थः श्रुतिस्मृत्योर्व्यपदिश्यते। यतो ब्रह्मणः सकाशाद्वाचः सर्वा मनसा सहावकाशमप्राप्य निवर्तन्ते, तद् ब्रह्माऽऽनन्दरूपं विद्वान्न बिभेति। नेति नेतीति वीप्सया सर्वमारोपितमपाक्रियते। आदिशब्देनास्थूलादि-वाक्यं गृह्यते। बीजत्वनिरासेन शुद्धं ब्रह्म व्यपदिश्यते चेद्बीजत्वं शबलस्यैवेति सिध्यतीत्यर्थः। आचार्येणानुक्तत्वान्न कारणातिरिक्तं शुद्धं ब्रह्मास्तीत्याशङ्क्य नान्तःप्रज्ञमित्यादिवाक्यशेषान्मैवमित्याह—**तामिति**। उक्तन्यायेन वस्तु-व्यवस्थायामव्याकृतस्य देहेऽनुभवाभावात्त्रिधा देहे व्यवस्थित इति कथमुक्तमित्याशङ्क्याऽऽह—**बीजेति**।।२।। ३०

विश्वादीनां त्रयाणां त्रिधा देहे व्यवस्थितिं प्रतिपाद्य तेषामेव त्रिधा भोगं निगमयति—**विश्वो हीति**।।३।।

भोगप्रयुक्तां तृप्तिमधुना त्रेधा विभजते—**स्थूलमिति**। उदाहृतश्लोकयोर्व्याख्यानापेक्षां वारयति—**उक्तार्थाविति**।।४।।

प्रकृतभोक्तृभोग्यपदार्थद्वयपरिज्ञानस्यावान्तरफलमाह—**त्रिष्विति**। पूर्वार्धं व्याचष्टे—**जाग्रदादिष्विति**। भोग्यत्वेनैकत्वेऽपि त्रैविध्यमवान्तरभेदादुन्नेयम्। भोक्तुरेकत्वे हेतुमाह—**सोऽहमिति**। योऽहं सुषुप्तः सोऽहं स्वप्नं ३५ प्राप्तः। यश्च स्वप्नमद्राक्षं सोऽहमिदानीं जागर्मीत्येकत्वं प्रतिसंधीयते। न च तत्र बाधकमस्ति। तद् युक्तं भोक्तुरेकत्व-मित्यर्थः। किं चाज्ञानं तत्कार्यं च प्रति प्राज्ञादिषु द्रष्टृत्वस्याविशिष्टत्वाद् द्रष्टृभेदे च प्रमाणाभावाद् युक्तं तदेकत्व-मित्याह—**द्रष्टृत्वेति**। द्वितीयार्धं विभजते—**यो वेदेति**। कथमेतावता भोगप्रयुक्तदोषराहित्यं, तत्राऽऽह—**भोज्यस्येति**।

**प्रभवः सर्वभावानां सतामिति विनिश्चयः। सर्वं जनयति प्राणश्चेतोंशून् पुरुषः पृथक्।।६।।**

**भिन्नं स भुञ्जानो न लिप्यते। भोज्यस्य सर्वस्यैकस्य भोक्तुर्भोज्यत्वात्। न हि यस्य यो विषयः स तेन हीयते वर्धते वा। न ह्यग्निः स्वविषयं दग्ध्वा काष्ठादि, तद्वत्।।५।।**

**सतां विद्यमानानां स्वेनाविद्याकृतनामरूपमायास्वरूपेण सर्वभावानां विश्वतैजसप्राज्ञभेदानां प्रभव उत्पत्तिः। वक्ष्यति च–"वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते" इति। यदि ह्यसतामेव जन्म स्याद् ब्रह्मणोऽव्यवहार्यस्य ग्रहणद्वाराभावादसत्त्वप्रसङ्गः। दृष्टं च रज्जुसर्पादीनामविद्याकृतमायाबीजोत्पन्नानां रज्ज्वाद्यात्मना सत्त्वम्। न हि निरास्पदा रज्जुसर्पमृगतृष्णिकादयः क्वचिदुपलभ्यन्ते केनचित्। यथा रज्ज्वां प्राक्सर्पोत्पत्ते रज्ज्वात्मना सर्पः**

अनुभूतिस्वरूपाचार्यटीका

'एष योनिः' इत्यत्र जगत्कारणत्वं प्राज्ञस्य प्रत्यज्ञायि। तत्र सत्कार्यकारणत्वमसत्कार्यकारणत्वं वेति वादिविप्रतिपत्तेः संशये निर्णयमाह—**प्रभवः सर्वभावानामिति**। सर्वं जडजातं जनयति तमःप्रधानः प्राणश्चेतोंऽशून् प्रतिबिम्बकल्पाञ्जीवान् उपाधिस्थताविशिष्टरूपेण चित्प्रधानः पुरुषो जनयति इत्यवान्तरविभागः। स्वेनाधिष्ठानरूपेण सतामविद्याकृतमिथ्यारूपेण प्रभवः इत्यन्वयः। असज्जन्मनिराकरणमन्तरेण कथं सज्जन्मनिश्चय इत्याशङ्क्याह **वक्ष्यतीति**। मिथ्यैव चेज्जन्माङ्गीक्रियते, कस्मादसत्पक्षः खण्ड्यते इत्याशङ्क्याह—**यदि हीति**। कार्यलिङ्गेन ह्यदृष्टमपि सत् कारणं ब्रह्म सम्भावनाबुद्धिमधिरोहति। असज्जन्मपक्षे त्वसतः कारणसम्बन्धासम्भवान्न कार्यलिङ्गेन सत्कारणसम्भावनेत्यसत्त्वं प्रसज्येतेत्यर्थः। न केवलं स्वानिष्टपरिहाराय सज्जन्माश्रितं व्याप्तिबलाच्चेत्याह—**दृष्टञ्चेति**। अविद्येत्यग्रहणं निमित्तकारणं विवक्षितं, मायेत्युपादानं जडं विवक्षितम् अविद्याकृताश्च ते मायाबीजोत्पत्तयश्च तेषामिति विग्रहः। विमतं सदुपादानं कल्पितत्वाद्रज्जुसर्पवदिति सामान्यतोदृष्टेन कल्पितस्यापि प्रपञ्चस्य सदधिष्ठानत्वमेव। सज्जन्मत्वं चेद्विवक्षितं, तदसत्, कारणात्मनाऽसत्वग्राहकप्रमाणविरोधादित्याशङ्क्याह—**यथा रज्ज्वामिति**।

आनन्दगिरिटीका

यद्यपि भोक्तुरेकस्यैव सर्वं भोग्यमित्यवगतं तथाऽपि कथं सर्वं भुञ्जानो भोगप्रयुक्तदोषवान्न भवतीत्याशङ्क्याऽऽह—**न हीति**। उक्तमर्थं दृष्टान्तेन स्पष्टयति—**न ह्यग्निरिति**। स्वविषयान् काष्ठादीन् दग्ध्वा न हीयते वर्धते वाऽग्निरिति सम्बन्धः।।५।।

एष योनिरित्यत्र प्राज्ञस्य प्रपञ्चकारणत्वं प्रतिज्ञातम्; तत्र सत्कार्यमसत्कार्यं प्रति वा कारणत्वमिति सन्देहे निर्धारयितुमारभते—**प्रभव इति**। तत्रावान्तरभेदमाह—**सर्वमिति**। पुरुषो हि सर्वमचेतनं जगदुपाधिभूतं तमःप्रधानं गृहीत्वा जनयति। अत एव पुरुषे कारणवाचि प्राणपदं प्रयुज्यते। एवं स च चैतन्यप्रधानश्चेतसश्चैतन्यस्यांशुवदवस्थितान् प्रतिबिम्बकल्पाञ्जीवानाभासभूतानुत्पादयति। एवं चेतनाचेतनात्मकमशेषं जगदसङ्कीर्णं सम्पादयतीत्यर्थः। ननु सतां भावानां सत्त्वादेव प्रभवो न सम्भवत्यतिप्रसङ्गादित्याशङ्क्य पूर्वार्धं व्याचष्टे—**सतामिति**। स्वेनाधिष्ठानात्मना विद्यमानानामेवाविद्याकृतं मायामयमारोपितस्वरूपं तेन प्रभवः सम्भवतीत्यर्थः। असज्जन्मनिरसनमन्तरेण कथं सज्जन्म निर्धारयितुं शक्यमित्याशङ्क्याऽऽह—**वक्ष्यतीति**। जन्मनः पूर्वं सर्वस्य सत्त्वे च कारणव्यापारसाध्यत्वासिद्धेर्मिथ्यात्वे च कथं सतामेव प्रभवो भावानामित्याशङ्क्याऽऽह—**यदीति**। कार्यप्रपंञ्चस्यासत्त्वे कारणस्य ब्रह्मणः स्वारस्येन व्यवहार्यत्वाभावात् तस्य ग्रहणे द्वारभूतस्य लिङ्गस्याभावादसत्त्वमेव सिध्येत्। कार्येण हि लिङ्गेन कारणं ब्रह्माऽदृष्टमपि सदित्यवगम्यते। तच्चेदसद्भवेन्न तस्य कारणेन सम्बन्धधीरित्यसदेव कारणमपि स्यादित्यर्थः। कार्यकारणयोरुभयोरपि भवत्वसत्त्वमित्याशङ्क्याऽऽह—**दृष्टं चेति**। अविद्ययाऽनाद्यनिर्वाच्यया कृताश्च ते मायाबीजादुत्पन्नाश्च तेषामविद्यैव मायेत्यङ्गीकारात्, तेषां रज्ज्वादौ कल्पितसर्पादीनामधिष्ठानभूतरज्ज्वादिरूपेण सत्त्वं दृष्टमिति योजना। विमतं सदुपादानं कल्पितत्वाद्रज्जुसर्पवदित्यर्थः। दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति—**न हीति**। विवक्षितं दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—**यथेत्यादिना**। प्राणशब्दितं बीजमज्ञातं ब्रह्म

---

१. प्रभवस्सर्वभावानां सताम्—इत्यत्र सत्कारणवाद उपक्षिप्तः। माध्वास्तु—प्रभवो विष्णुरित्यध्याहारं कृत्वा सतां निश्चयः इति योजयन्ति। तेषामसत्कार्यवादस्वीकारादेवं योजना। परं तु सर्वभावानां सतां प्रभव इति यथाश्रुतार्थविरोधोऽत्र।

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः। स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता।।७।।**

सन्नेवासीत्। एवं सर्वभावानामुत्पत्तेः प्राक्प्राणबीजात्मनैव सत्त्वम् इत्यतः श्रुतिरपि वक्ति–''ब्रह्मैवेदम्'' ''आत्मैवेदमग्र आसीत्'' इति। सर्वं जनयति प्राणश्चेतोंशूनंशव इव रवेश्चिदात्मकस्य पुरुषस्य चेतोरूपा जलार्कसमाः प्राज्ञतैजसविश्वभेदेन देवमनुष्यतिर्यगादिदेहभेदेषु विभाव्यमानाश्चेतोंशवो ये तान् पुरुषः पृथग्विषयभाव-विलक्षणानग्निविस्फुलिङ्गवत्सलक्षणाञ्जलार्कवच्च जीवलक्षणान्। इतरान् सर्वभावान् प्राणो बीजात्मा जनयति। ''यथोर्णनाभिः''। ''यथाऽग्नेर्विस्फुलिङ्गाः'' इत्यादिश्रुतेः।।६।। ५

विभूतिर्विस्तार ईश्वरस्य सृष्टिरिति सृष्टिचिन्तका मन्यन्ते, न तु परमार्थचिन्तकानां सृष्टावादर इत्यर्थः। ''इन्द्रो मायाभिः पुरुरूप ईयते'' इति श्रुतेः। न हि मायाविनं सूत्रमाकाशे निक्षिप्य तेन सायुधमारुह्य चक्षुर्गोचर-तामतीत्य युद्धेन खण्डशश्छिन्नं पतितं पुनरुत्थितं च पश्यतां तत्कृतमायादिसतत्त्वचिन्तायामादरो भवति। तथैवायं मायाविनः सूत्रप्रसारणसमः सुषुप्तस्वप्नादिविकासस्तदारूढमायाविसमश्च तत्स्थः प्राज्ञतैजसादिः, सूत्रतदारूढा-भ्यामन्यः परमार्थमायावी। स एव भूमिष्ठो मायाच्छन्नोऽदृश्यमान एव स्थितो यथा तथा तुरीयाख्यं परमार्थतत्त्वम्। अतस्तच्चिन्तायामेवाऽऽदरो मुमुक्षूणामार्याणां, न निष्प्रयोजनायां सृष्टावादर इत्यतः सृष्टिचिन्तकानामेवैते विकल्पा इत्याह–स्वप्नमायासरूपेति। स्वप्नसरूपा मायासरूपा चेति।।७।। १०

अनुभूतिस्वरूपाचार्यटीका

श्लोकस्योत्तरार्धं योजयितुं प्रतीकमादत्ते—**सर्वं जनयति प्राणश्चेतोंशूनिति**। पृथक् चिदात्मकस्य जीवस्य विसर्जने हेतुगर्भितं विशेषणमाह—**विषयभावेति**। इतरांस्तु विषयभावान् प्राणो जनयतीति सम्बन्धः।।६।। १५

स्वमतपरिशुद्धये मतान्तराण्याह—**विभूतिमित्यादिना**।।७-८।।

आनन्दगिरिटीका

सल्लक्षणं तदात्मनेति यावत्। तदेवमचेतनं सर्वं जगत् प्रागुत्पत्तेर्बीजात्मना स्थितं प्राणो बीजात्मा व्यवहारयोग्यतया जनयतीत्युपसंहरति—**इत्यत इति**। चतुर्थं पादं प्रतीकमादाय व्याकरोति—**चेतोंशूनित्यादिना**। रवेरंशवो यथा वर्तन्ते तथा पुरुषस्य स्वयंचैतन्यात्मकस्य चेतोरूपाश्चैतन्याभासा जीवाश्चेतोंशवो निर्दिश्यन्ते। तान् पुरुषो जनयतीत्युत्तरत्र सम्बन्धः। तेषां चिदात्मकात्पुरुषात् तत्त्वतो भेदाभावं विवक्षित्वा विशिनष्टि—**जलार्केति**। भेदधीस्तु तेषामुपाधिभेदादित्याह—**प्राज्ञेति**। पृथगिति सूचितं पुरुषस्य जीवसर्जने हेतुं कथयति—**विषयेति**। यथाऽग्निना समानरूपा विस्फुलिङ्गा जन्यन्ते, तथा चिदात्मना समानस्वभावा जीवास्तेनोत्पाद्यन्ते। विषयविलक्षणत्वात्। न प्राणेन बीजात्मना तेषामुत्पादनम्। न चोत्पाद्यानां जीवानामुत्पादकाच्चिदात्मनस्तत्त्वतो भिन्नत्वम्। जलपात्र-प्रतिबिम्बितादित्यादीनां बिम्बभूतात् ततस्तत्त्वतो भेदाभावात्। तान्विश्वादीन् पुरुषश्चित्प्रधानो जनयतीत्यर्थः। विषयभावेन व्यवस्थितान् पुनर्भावान् प्राणो जनयतीति तृतीयपादार्थमुपसंहरति—**इतरानिति**।।६।। २० २५

चेतनाचेतनात्मकस्य जगतः सर्गे प्रस्तुते स्वमतविवेचनार्थं मतान्तरमुपन्यस्यति—**विभूतिं प्रसवमिति**। ईश्वरस्य विभूतिर्विस्तारः स्वकीयैश्वर्यख्यापनं सृष्टिरिति पक्षे सृष्टेर्वस्तुत्वशङ्कायां पक्षान्तरमाह—**स्वप्नेति**। कुतः सृष्टिचिन्तकानामेतन्मतं, तत्त्वविदामेव किं न स्यात्, तत्राऽऽह—**न त्विति**। सृष्टेरपि वस्तुत्वाद् वस्तुचिन्तकानामपि तत्राऽऽदरो भविष्यतीत्याशङ्क्याह—**इन्द्र इति**। मायामयी सृष्टिरादरविषया न भवतीत्यत्र दृष्टान्तमाह—**न हीति**। मायादीत्यादिशब्देन तत्कार्यं गृह्यते। दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—**तथैवेति**। तर्हि परमार्थचिन्तकानां कुत्राऽऽदर इत्याशङ्क्य सदृष्टान्तमुत्तरमाह—**सूत्रेत्यादिना**। मायाच्छन्नत्वमदृश्यमानत्वे हेतुः। तुरीयाख्यं जाग्रत्स्वप्न-सुषुप्तेभ्यो विश्वतैजसप्राज्ञेभ्यश्चातिरिक्तं तदस्पृष्टमिति शेषः। परमार्थतत्त्वचिन्ता हि सम्यग्धीद्वारा फलवती, न सृष्टेः। ततः सृष्टावनादरस्तत्त्वनिष्ठानामित्याह—**नेति**। परमार्थचिन्तकानां सृष्टावनादरादपरमार्थनिष्ठानामेव सृष्टौ विशेषचिन्तेत्युक्तेऽर्थे द्वितीयार्धमवतारयति—**इत्यत इति**। जाग्रद्गतानामर्थानामेव स्वप्ने प्रथनात् तस्य सत्यत्वं मायायाश्च मण्यादिलक्षणायाः सत्यत्वाङ्गीकारादनयोर्विकल्पयोः सिद्धान्ताद् वैषम्यमुन्नेयम्।।७।। ३० ३५

**[1]इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः।।८।।**

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा।।९।।**

इच्छामात्रं प्रभोः सत्यसङ्कल्पत्वात् सृष्टिर्घटादिः सङ्कल्पनामात्रं न सङ्कल्पनातिरिक्तम्। कालादेव सृष्टिरिति केचित्।।८।।

५ भोगार्थं क्रीडार्थमिति चान्ये सृष्टिं मन्यन्ते। अनयोः पक्षयोर्दूषणं–देवस्यैष स्वभावोऽयमिति देवस्य स्वभावपक्षमाश्रित्य। सर्वेषां वा पक्षाणामाप्तकामस्य का स्पृहेति। न हि रज्ज्वादीनामविद्यास्वभावव्यतिरेकेण सर्पाद्याभासत्वे कारणं शक्यं वक्तुम्।।९।।

अनुभूतिस्वरूपाचार्यटीका

किंप्रयोजना सा सृष्टिरित्यत आह—**भोगार्थमिति। स्वभाव इति।** नैसर्गिकी मायेत्यर्थः।।९।।

आनन्दगिरिटीका

१० सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुत्थापयति—**इच्छामात्रमिति।** ज्योतिर्विदां कल्पनाप्रकारमाह—**कालादिति।** परमेश्वरस्येच्छामात्रं सृष्टिरित्यत्र हेतुमाह—**सत्येति।** यथा लोके कुलालादेः सङ्कल्पनामात्रं घटादिकार्यं, न तदतिरेकेण घटादिकार्यसृष्टिरिष्टा। नामरूपाभ्यामन्तरेव कार्यं सङ्कल्प्य बहिस्तन्निर्माणाभ्युपगमात्। तथा भगवतः सृष्टिः सङ्कल्पनामात्रा, न तदतिरिक्ता काचिदस्तीति केषाञ्चिदीश्वरवादिनां मतमित्यर्थः।।८।।

१५ यथा तथा वाऽस्तु सृष्टिस्तस्यास्तु किं प्रयोजनमित्यत्र विकल्पद्वयमाह—**भोगार्थमिति।** सिद्धान्तमाह—**देवस्येति।** कः स्वभावो नामेत्युक्ते नैसर्गिकोऽपरोक्षो मायाशब्दार्थस्तस्येत्याह—**अयमिति।** सर्वपक्षाणामपवादं सूचयति—**आप्तेति।** देवस्य परमेश्वरस्य स्वभावः सृष्टिरिति स्वभावपक्षं नैसर्गिकमायाविनिर्मिता सृष्टिरिति मतं सिद्धान्तत्वेनाऽऽश्रित्य चतुर्थपादेन दूषणमुच्यते पक्षयोरनयोरिति योज्यम्। ईश्वरस्येश्वरत्वख्यापनं सृष्टिरित्येकः पक्षः। स्वप्नसरूपा मायासरूपा वा सृष्टिरिति पक्षद्वयमीश्वरस्य सत्यसङ्कल्पस्य सृष्टिरिति पक्षान्तरम्। कालादेव जगतः २० सृष्टिर्नेश्वरात्। ईश्वरस्तूदासीनः। तत्र विकल्पान्तरं भोगार्थं क्रीडार्थं वा सृष्टिरिति फलगतं च विकल्पद्वयम्। तेषामेतेषां सर्वेषामेव पक्षाणां दूषणं चतुर्थपादेनोक्तमिति पक्षान्तरमाह—**सर्वेषामिति।** नो खल्वाप्तकामस्य परस्याऽऽत्मनो मायां विना विभूतिख्यापनमुपयुज्यते। न च स्वप्नमायाभ्यां सारूप्यमन्तरेण स्वप्नमायासृष्टिरेष्टुं शक्यते। अवस्तुनोरेव तयोस्तच्छब्दप्रयोगात्। न च परमानन्दस्वभावस्य परस्य विना मायामिच्छा सङ्गच्छते। न हि तस्य स्वतोऽविक्रियस्येच्छादिभाक्त्वं युक्तम्। न च मायामन्तरेण भोगक्रीडे तस्योपपद्येते। ततो मायामयी भगवतः २५ सृष्टिरित्यर्थः। यदुक्तं कालात्प्रसूतिं भूतानामिति तत्राऽऽह—**न हीति।** अधिष्ठानभूतरज्ज्वादीनां स्वभावशब्दितस्वाज्ञानादेव सर्पाद्याभासत्वं तथा परस्य स्वमायाशक्तिवशादाकाशाद्याभासत्वम्। 'आत्मन आकाशः संभूत' इत्यादिश्रुतेः। न तु कालस्य भूतकारणत्वं प्रमाणाभावादित्यर्थः।।९।।

---

१. माध्वमते सर्वभावानां प्रभवः हेतुः इति सतां सत्पुरुषाणां विनिश्चयः इत्यर्थ उक्तः। चेतोंशून् जीवान् प्राणो जनयतीत्युक्तम्। तत्र। असत्कार्यवादापातात् जीवस्य सादित्वे सान्तत्वापत्त्या नाशप्रसङ्गात् ३० मोक्षस्यानित्यत्वप्रसङ्गः। एभिः परिणामविवर्तवादयोः अनभ्युपगमात् असत्कार्यवादोऽभ्युपेयः। तथा च असदन्वितं कार्यं स्यात्, सन्घट इति न बुध्येत, अपितु असन्घट इति। यत्तु सत्यसृष्टावशक्तस्यैव मायिकसर्जनात् इत्युक्तम्। तत्र। यतः सत्यसृष्टिः कुलालादेरपि दृश्यते। असत्यस्य अर्थक्रियाकारिणः बहुकालस्थायिनः आकाशादेः सृष्टिरेव दुष्करा।

अस्मिन्मते अद्वैतमित्यस्य मिथ्याज्ञानं द्वैतं तद्रहितं तन्निवर्तकमित्यर्थः कृतः। रामानुजीयैः सजातीय- ३५ द्वितीयरहितमित्यर्थ उक्तः। उभयमप्यशब्दार्थत्वादुपेक्षणीयम्। अपि च 'स आत्मा स विज्ञेयः' इति वदता विश्वादित्रयस्यानात्मत्वं स्वरसतः प्रतीयते। तन्माध्वमते चतूरूप आत्मा प्रत्येतव्य इति वदतो न संगच्छते। मतान्तरेऽपि सङ्कर्षणादीनामपि वेद्यत्वान्न सङ्गच्छते। अस्माकं तु विश्वादयः शुद्धात्मप्रतिपत्त्युपायत्वेनैवोक्ताः। ज्ञेयस्तु शुद्धात्मैवेति इदं सुसङ्गतमिति भावः।

उपनिषत्

**नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्।**
**अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं**
**[१]प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः।।७।।**

चतुर्थः पादः क्रमप्राप्तो वक्तव्य इत्याह—नान्तःप्रज्ञमित्यादिना। सर्वशब्दप्रवृत्तिनिमित्तशून्यत्वात् तस्य शब्दानभिधेयत्वमिति विशेषप्रतिषेधेनैव (च) तुरीयं निर्दिदिक्षति। शून्यमेव तर्हि, तन्न। मिथ्याविकल्पस्य निर्निमित्तत्वानुपपत्तेः। न हि रजतसर्पपुरुषमृगतृष्णिकादिविकल्पाः शुक्तिकारज्जुस्थाणूषरादिव्यतिरेकेणावस्त्वास्पदाः शक्याः कल्पयितुम्। ५

एवं तर्हि प्राणादिसर्वविकल्पास्पदत्वात्तुरीयस्य शब्दवाच्यत्वमिति न प्रतिषेधैः प्रत्याय्यत्वमुदकाद्याधारादेरिव घटादेः। न, प्राणादिविकल्पस्यासत्त्वाच्छुक्तिकादिष्विव रजतादेः। न हि सदसतोः सम्बन्धः शब्दप्रवृत्तिनिमित्त- १०

अनुभूतिस्वरूपाचार्यटीका

विशेषप्रतिषेधमुखेनैव तुरीयोपदेशे कारणमाह—**सर्वशब्देति**। सर्वाणि शब्दप्रवृत्तौ निमित्तानि क्रियागुणजात्यादीनि, तद्रहितत्वादित्यर्थः। प्रतिषेधमुखनैवोपदेश्यत्वात् नरविषाणं नास्तीतिवदसत्त्वं प्राप्तमित्याह—**शून्यमेव तर्हीति**। यत्सर्वथैव न सम्भाव्यते तदेव शून्यं भवति, तुरीयं त्वधिष्ठानतया सम्भावितत्वात् न शून्यमित्याह—**तन्नेति**। एवं प्राणादिविकल्पा अवस्त्वास्पदा न सम्भवन्तीति शेषः। तुरीयं शब्दवाच्यमाधारत्वाद् घटादिवदित्याह—**एवं तर्हीति**। आधेयासत्त्वादाधारत्वमपि तत्त्वतोऽसिद्धमित्याह—**न प्राणादीति**। यत्र मुख्यवृत्त्या १५

आनन्दगिरिटीका

पादत्रये व्याख्याते व्याख्येयत्वेन क्रमवशात्प्राप्तं चतुर्थं पादं व्याख्यातुमुत्तरग्रन्थप्रवृत्तिरित्याह—**चतुर्थ इति**। ननु पादत्रयवद्विधिमुखेनैव चतुर्थः पादोऽपि व्याख्यायतां किमिति निषेधमुखेन व्याख्यायते, तत्राऽऽह—**सर्वेति**। सर्वाणि शब्दप्रवृत्तौ निमित्तानि षष्ठीगुणादीनि, तैः शून्यत्वात् तुरीयस्य वाच्यत्वायोगात्रिषेधद्वारैव तन्निर्देशः सम्भवतीत्यर्थः। साक्षाद्वाच्यत्वाभावं द्योतयितुं निर्दिदिक्षतीत्युक्तम्। यदि चतुर्थं विधिमुखेन निर्देष्टुं न शक्यं तर्हि शून्यमेव तदापद्येत तन्निषेधेनैव निर्दिश्यमानत्वात्। तथाविधं नास्त्यर्थवदिति शङ्कते—**शून्यमेवेति**। न तुरीयस्य शून्यत्वमनुमातुं युक्तम्। विमतं सदधिष्ठानं कल्पितत्वात् तथाविधरजतादिवदित्यनुमानात्तुरीयस्य सत्त्वसिद्धेरित्युत्तरमाह—**तन्नेति**। दृष्टान्तं साधयति—**न हीति**। रजतादीनां सदनुविद्धबुद्धिबोध्यत्वादवस्त्वास्पदत्वायोगात् तद्वदेव प्राणादिविकल्पानामपि नावस्त्वास्पदत्वं सिध्यतीत्यर्थः। २० २५

यद्यधिष्ठानत्वं तुरीयस्येष्टं तर्हि वाच्यत्वमधिष्ठानत्वाद् घटादिवदिति प्रक्रमभङ्गः स्यादिति चोदयति—**एवं तर्हीति**। किं प्रातिभासिकमधिष्ठानत्वं हेतूकृतम् किं वा तात्त्विकम्। नाऽऽद्यः। तस्य तात्त्विकवाच्यत्वासाधकत्वात्।

---

१. 'प्रपञ्चोपशमं प्रपञ्चो विस्तृतः। स चोपशमः उत्कृष्टानन्दः इति मध्वव्याख्यानम्। अद्वैतं—द्वीतं द्वितीयेन प्रकारेण इतं ज्ञातं वस्तु, तस्येदं द्वैतम्, मिथ्याज्ञानमित्यर्थः। एवमर्थकरणेऽपि द्वैतज्ञानस्य मिथ्याज्ञानत्वोक्त्या तद्विषयस्य द्वैतस्य मिथ्यात्वमागच्छत्येव। अद्वैतं मिथ्याज्ञानरहितमित्यूचुः। द्वैतविशिष्टमिथ्याज्ञानराहित्योक्तौ द्वैतस्याप्यभावः सिद्ध्येदिति ज्ञेयम्। ३०

प्रपञ्चोपशमम्—इत्यस्य सर्वप्रपञ्चलयाधारमित्यर्थस्य ब्रह्मणि सम्भवात् सङ्कर्षणादित्रयोपशमाधिकरणमित्युक्तिः अपदार्थः।

अद्वैतम्—इत्यस्य "द्विधेतं द्वीतमित्याहुः, तद्भावो द्वैतमुच्यते"—इत्युक्तरीत्या द्विधापन्नप्रपञ्चसामान्यरहितमित्यर्थः। एवं सति सजातीयद्वितीयरहितमित्युक्तिर्न युक्ता। प्रमेयत्वेन प्रपञ्चसामान्यराहित्यार्थकत्वप्रसङ्गाच्च। सर्वेश्वरत्वेन सजातीयं चाप्रसिद्धम्, अतो तन्निषेधानुपपत्तिः। ३५

भागवस्तुत्वात्। नापि प्रमाणान्तरविषयत्वं स्वरूपेण गवादिवत्, आत्मनो निरुपाधिकत्वात्। गवादिवन्नापि जातिमत्त्वम्, अद्वितीयत्वेन सामान्यविशेषाभावात्। नापि क्रियावत्त्वं पाचकादिवदविक्रियत्वात्। नापि गुणवत्त्वं नीलादिवन्निर्गुणत्वात्। अतो नाभिधानेन निर्देशमर्हति। शशविषाणादिसमत्वान्निरर्थकत्वं तर्हि। न, आत्मत्वावगमे तुरीयस्यानात्मतृष्णाव्यावृत्तिहेतुत्वाच्छुक्तिकावगम इव रजततृष्णायाः। न हि
५ तुरीयस्याऽऽत्मत्वावगमे सत्य-विद्यातृष्णादिदोषाणां सम्भवोऽस्ति। न च तुरीयस्याऽऽत्मत्वानवगमे कारणमस्ति। सर्वोपनिषदां तादर्थ्येनोपक्षयात् ''तत्त्वमसि'' ''अयमात्मा ब्रह्म'' ''तत्सत्यम् स आत्मा'' ''यत्साक्षादपरोक्षाद्ब्रह्म'' ''स बाह्याभ्यन्तरो ह्यजः'' ''आत्मैवेदं सर्वम्'' इत्यादीनाम्।

सोऽयमात्मा परमार्थापरमार्थरूपश्चतुष्पादित्युक्तस्तस्यापरमार्थरूपमविद्याकृतं रज्जुसर्पादिसममुक्तं पादत्रय-लक्षणं बीजाङ्कुरस्थानीयम्। अथेदानीमबीजात्मकं परमार्थस्वरूपं रज्जुस्थानीयं सर्पादिस्थानीयोक्तस्थानत्रयनिरा-
१० करणेनाऽऽह–नान्तःप्रज्ञमित्यादि। नन्वात्मनश्चतुष्पात्त्वं प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तःप्रज्ञादिभ्योऽन्यत्वे

अनुभूतिस्वरूपाचार्यटीका

शब्दः प्रवर्तते, तत्र क्वचित्सम्बन्धात् यथा देवदत्ते राजपुरुषशब्दः, क्वचित्प्रमाणान्तरविषये रूढ्या यथा डित्थादिशब्दः, क्वचिज्जातियोगात् तथा गवादिशब्दः, क्वचित्क्रियायोगात् यथा पाचकादिशब्दः, क्वचिद्गुण-योगात् यथा नीलादिशब्दः, तदनुपलब्धिबाधितञ्च तुरीयस्य वाच्यत्वानुमानमित्याह—**नहि सदसतोरित्यादिना**।

१५ विशिष्टक्रियागुणजात्यादिमत एव राजादेरुपासनं सप्रयोजनं दृष्टं तुरीयस्य पुनः शशविषाणादिसमत्वात् निरर्थकत्वं तदुपासनस्येत्याक्षिप्ते समाधत्ते—**नात्मत्वावगम इति**। यावदेव हि तुरीयमात्मानं नावगच्छति तावदेव फलतृष्णादिदोषैः अभिभूयते; तुरीयस्यात्मत्वावगमे तु सकलानर्थहेतुतृष्णादिदोषव्यावृत्तिः प्रयोजनं विद्वदनुभवसिद्धमित्यर्थः। ननु तुरीयस्य निर्विशेषस्यात्मत्वावगम एव न सम्भवति तत्कारणाभावादित्याशङ्क्याह—**न च तुरीयस्येति**। एवं तावन्निषेधमुखेनैव तुरीयोपदेशस्य सप्रयोजनत्वमुपपाद्य वृत्तानुवादपूर्वकं ग्रन्थमवतारयति—
२० **सोऽयमात्मेत्यादिना**। ग्रन्थारम्भमाक्षिपति—**नन्वात्मन इति**। यद्यप्यर्थात्पादत्रयविलक्षणस्तुरीयस्सिध्यति। तथाप्य-

आनन्दगिरिटीका

अतात्त्विके तु वाच्यत्वे प्रक्रमो न विरुध्येत। न द्वितीयः, शुक्त्यादिषु कल्पितरजतादेरवस्तुत्ववत् तुरीयेऽपि कल्पित-प्राणादेरवस्तुत्वात् तत्प्रतियोगिकाधिष्ठानत्वस्य तात्त्विकत्वायोगादिति दूषयति—**न प्राणादीति**। किं च वाच्यत्वे तुरीयस्य निरुच्यमाने तत्र शब्दप्रवृत्तौ निमित्तं वक्तव्यम्। तच्च षष्ठी वा रूढिर्वा जातिर्वा क्रिया वा गुणो वेति
२५ विकल्प्य प्रथमं प्रत्याह—**न हीति**। तुरीयातिरिक्तस्यावस्तुत्वात् तस्य तुरीयस्य च वस्तुभूतसम्बन्धासिद्धेर्विषयाभावे कुतः षष्ठीत्यर्थः। द्वितीयं दूषयति—**नापीति**। विशिष्टरूपेण विषयत्वेऽपि स्वरूपेण निरुपाधिकात्मना तदविषयत्वान्नात्र गवादाविव रूढिरवतरतीत्यर्थः। न तृतीयः, गवादाविवाद्वितीये तुरीये सामान्यविशेषभावस्याभिधातुमयोग्यत्वादिति मत्वाऽऽह—**गवादिवदिति**। न चतुर्थः, पाचकादाविवाक्रिये तुरीये क्रियावत्त्वस्य शब्दप्रवृत्तिनिमित्तस्य वक्तुम-युक्तत्वादित्याह—**नापि क्रियावत्त्वमिति**। न पञ्चमः। उत्पलादौ नीलादिशब्दवन्निर्गुणे तुरीये गुणवत्त्वस्य शब्द-
३० प्रवृत्तिनिमित्तस्य वक्तुमयुक्तत्वादित्याह—**नापीति**।

तदेवं तुरीयस्य वाच्यत्वानुमानं शब्दप्रवृत्तिनिमित्तानुपलब्धिबाधितमिति फलितमाह—**अत इति**। यदि तुरीयस्य नास्ति विशिष्टजात्यादिमत्त्वं तर्हि नरविषाणादिदृष्टेरिव तद्दृष्टेरपि निष्फलत्वम्। विशिष्टजात्यादिमतो राजादेरुपासनस्य फलवत्त्वोपलम्भादिति शङ्कते—**शशविषाणादीति**। यथा शुक्तिरियमित्यवगमे रजतादिविषयतृष्णा व्यावर्तते, तथा तुरीयं ब्रह्माहमित्यात्मत्वेन तुरीयस्य साक्षात्कारे सत्यनात्मविषया तृष्णा व्यवच्छिद्यते। तदेवमात्मत्वेन तुरीयावगमस्य
३५ सर्वाकाङ्क्षानिवर्तकत्वादनर्थकत्वशङ्का न युक्तेति परिहरति—**नेत्यादिना**। तुरीयस्याऽऽत्मत्वावगमे सति सर्वानर्थहेतुतृष्णादिदोषनिवृत्तिलक्षणं फलमुक्तं विद्वदनुभवेन साधयति—**न हीति**। ननु तुरीयमशेषविशेषशून्यं नाऽऽत्मत्वेनावगन्तुं शक्यते तद्धेत्वभावादिति, तत्राऽऽह—**न चेति**। सर्वोपनिषदामित्युक्तमेवोदाहरणलेशेन दर्शयति—**तत्त्वमसीति**।

निषेधमुखेनैव तुरीयस्य प्रतिपादनं न विधिमुखेनेत्युपपाद्य वृत्तानुवादपूर्वकमुत्तरग्रन्थमवतारयति—
४० **सोऽयमित्यादिना**। **बीजाङ्कुरस्थानीयं** मिथो हेतुहेतुमद्भावेन व्यवस्थितमित्यर्थः। **अबीजात्मकं** कार्यकारणविनिर्मुक्त-

**सिद्धे नान्तःप्रज्ञमित्यादिप्रतिषेधोऽनर्थकः। न सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतिपत्तिवत् त्र्यवस्थस्यैवाऽऽत्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात्। तत्त्वमसीतिवत्।**

**यदि हि त्र्यवस्थात्मविलक्षणं तुरीयमन्यत् तत्प्रतिपत्तिद्वाराभावाच्छास्त्रोपदेशानर्थक्यं शून्यतापत्तिर्वा।**

**रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽप्यात्मैक एवान्तःप्रज्ञादित्वेन विकल्प्यते यदा तदाऽन्तःप्रज्ञादित्व-**

अनुभूतिस्वरूपाचार्यटीका

५

वस्थात्रयविशिष्टस्य जीवस्य स्वरूपं तुरीयं ब्रह्मेति नोपदेशमन्तरेण सिध्यतीति तुरीयग्रन्थ आरब्धव्य इत्याह—**सर्पादीति**। यथा विधिमुखप्रवृत्तेन तत्त्वमसिवाक्येन स्थानत्रयसाक्षिणस्त्वंपदलक्ष्यस्य जीवस्य तत्पदलक्ष्यब्रह्मात्मता लक्षणया बोध्यते, तथा निषेधमुखप्रवृत्तेनापि शास्त्रेण तात्पर्यवृत्त्या जीवस्य तुरीयात्मत्वं प्रतिपिपादयिषित-मित्यर्थः। विपक्षे दोषमाह—**यदि हीति**। चेतनात् विलक्षणं तुरीयं चेतनमचेतनं वा? अचेतनत्वे तत्प्राप्तिः पुरुषार्थो न स्यात्, चेतनत्वे तदापरोक्ष्यं न स्यात्, चेतनान्तरं हि चेतनान्तरस्यानुमेयं प्रसिद्धम्, अतस्तदापरोक्ष्ये कारणाभावात् १० आपरोक्ष्यमन्तरेण च पुरुषार्थाप्राप्तेः अनर्थकस्तदुपदेशः इत्यर्थः। अथवा स्वप्रकाशस्तावदात्मा ततोऽन्यच्चेत् तुरीयं 'नास्ति' 'न प्रकाशत' इति शून्यताप्रतिपत्तिः स्यादित्यर्थः। एवं भेदपक्षे दोषमभिधायाभेदपक्षे लाभमाह—**रज्जुरिवेत्यादिना**। स्थानत्रये आत्मैक एव तुरीयोऽन्तःप्रज्ञादित्वेन विकल्प्यमानो यदा तदा स्वाभाविकान्तःप्रज्ञत्वाद्यभावसमर्पकशास्त्राद् यत्प्रतिषेधरूपं प्रमाणविज्ञानमुत्पद्यते तत्समकालमेवाध्यस्तानर्थनिवृत्तिः फलं सिध्यतीत्यर्थः।

ननु तुरीयसाक्षात्काराधीनं फलं, साक्षात्कारस्तु न शाब्दविज्ञानाद्भवति, शब्दस्य परोक्षप्रत्ययजनकत्वात्, १५ अतस्तुरीयसाक्षात्करणाय मानसं प्रत्यक्षमभ्यासादिसाधनान्तरं वाऽन्वेषणीयम्। न शाब्दविज्ञानादेव पुरुषार्थपरि-

आनन्दगिरिटीका

मिति। तत्र हेतुं सूचयति—**परमार्थेति**। तस्य विधिमुखेन निर्देशानुपपत्तिं प्रागुक्तामभिप्रेत्याऽऽह—**सर्पादीति**। किमुत्तरेण ग्रन्थेन तुरीयं प्रतिपाद्यते, किं वा तस्य स्थानत्रयवैलक्षण्यं विवक्ष्यते। प्रथमे प्रतिपादकस्य विधाना-व्यतिरेकादन्यनिषेधानर्थक्यम्। द्वितीयेऽपि तदानर्थक्यमापद्येत। अनुक्त्यैवोक्तादन्यत्वसिद्धेरिति मन्वानः शङ्कते— २० **नन्विति**। न तावत्तुरीयं विधिमुखेन बोध्यम्। तस्य स्वप्रकाशत्वात् तस्मिन् प्रकाशाद्यनुदयात्। तथापि समारोपित-विश्वादिरूपेण प्रतिपन्नं तन्निषेधेन बोध्यते। तदनिषेधे तस्य यथावदप्रथनात्। अतो न निषेधानर्थक्यमिति परि-हरति—**न, सर्पादीति**। तुरीयस्य पादत्रयविलक्षणस्यार्थादेव सिद्धावपि जीवात्मनः 'स्थानत्रयविशिष्टस्य तुरीयं ब्रह्म-स्वरूपमिति नोपदेशमन्तरेण सिध्यतीति तुरीयग्रन्थोऽर्थवानित्यर्थः। यथा विधिमुखेन प्रवृत्तेन तत्त्वमसीति वाक्येन स्थानत्रयसाक्षिणस्त्वंपदलक्ष्यस्य तत्पदलक्ष्यब्रह्मता लक्षणया बोध्यते, तथा निषेधशास्त्रेणापि तात्पर्यवृत्त्या जीवस्य २५ तुरीयब्रह्मत्वं प्रतिपादयितुं दृष्टान्तमाह—**तत्त्वमसीति**।

ननु स्थानत्रयविशिष्टस्याऽऽत्मनो नैव तुरीयात्मत्वं तुरीयग्रन्थेन प्रतिपाद्यते। तुरीयस्य विशिष्टाद्विलक्षण-त्वेनात्यन्तभिन्नत्वात्, तत्राऽऽह—**यदि हीति**। प्रातिभासिकवैलक्षण्येऽपि विशिष्टोपलक्ष्ययोरात्यन्तिकवैलक्षण्याभावात्र तात्त्विकं तुरीयस्य विशिष्टादन्यत्वम्। अन्यथाऽत्यन्तभिन्नयोर्मिथःसंस्पर्शविरहिणोरुपायोपेयभावायोगात् तुरीयप्रतिपत्तौ विशिष्टस्य द्वारत्वाभावादन्यस्य च तत्प्रतिपत्तिद्वारस्यादर्शनात् तुरीयाप्रतिपत्तिरेव स्यादित्यर्थः। शास्त्रात् तत्प्रतिपत्तिः ३० स्यादिति चेन्नेत्याह—**शास्त्रेति**। तद् विशिष्टरूपमनूद्य विशेषणांशापोहेन तस्य तुरीयत्वमुपदिशति। भेदे चाऽऽत्यन्तिके तदानर्थक्यात्र शास्त्रात् तत्प्रतिपत्तिरित्यर्थः। मा तर्हि तुरीयप्रतिपत्तिर्भूदिति चेत्, तत्राऽऽह—**शून्येति**। विशिष्टैव प्रतिपत्त्या तुरीयस्याप्रतिपत्तौ प्रतिपन्नस्य विश्वादेर्विशिष्टस्य प्रत्युदस्तत्वादन्यस्य चाप्रतिपन्नत्वान्नैरात्म्यधीरेवाऽऽपद्येतेत्यर्थः।

भेदपक्षश्चेद् यथोक्तदोषवशात्र सम्भवति, तर्हि मा भूत्। अभेदपक्षोऽपि कथं निर्वहतीति चेत्, तत्र किं फलं पर्यनुयुज्यते किं वा प्रमाणान्तरमथ वा साधनान्तरमिति विकल्प्याऽऽद्यं दूषयति—**रज्जुरिवेति**। यथा रज्जुर- ३५ धिष्ठानभूता सर्पधारादिभिर्विकल्प्यते तथैक एवाऽऽत्मा स्थानत्रयेऽपि यदाऽन्तःप्रज्ञत्वादिना विकल्प्यमानो बहुधा भासते तदा तदनुवादेनान्तःप्रज्ञत्वादिप्रतिषेधजनितं यत्प्रमाणरूपविज्ञानं तदुत्पत्तिसमानकालमेवाऽऽत्मन्यनर्थनिवृत्तिरूपं फलं सिद्धमिति न फलपर्यनुयोगोऽवकाशवानित्यर्थः। शब्दस्य संसृष्टपरोक्षज्ञानहेतोरसंसृष्टापरोक्षज्ञानहेतुत्वायोगात्

**प्रतिषेधविज्ञानप्रमाणसमकालमेवाऽऽत्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफलं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यम्। रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य। येषां पुनस्तमोपनयनव्यतिरेकेण घटाधिगमे प्रमाणं व्याप्रियते तेषां छेद्यावयवसम्बन्धवियोगव्यतिरेकेणान्यतरावयवेऽपि च्छिदिर्व्याप्रियत इत्युक्तं स्यात्। यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं प्रमाणमनुपादित्सिततमोनिवृत्तिफलावसानं छिदिरिव च्छेद्यावयवसम्बन्धविवेककरणे प्रवृत्ता तदवयवद्वैधीभावफलावसाना, तदा नान्तरीयकं घटविज्ञानं न** ५

अनुभूतिस्वरूपाचार्यटीका

समाप्तिरित्याशङ्क्याह—**तुरीयाधिगम इति**। तुरीयस्यात्मनः स्वतोऽपरोक्षसंवित्स्वभावत्वात् तदाकारं शाब्दमपि विज्ञानमपरोक्षम्। न च शब्दस्य परोक्षज्ञानजनकत्वनियमः, परोक्षत्वस्य ज्ञानगतस्य विषयपारोक्ष्योपाधिकत्वात्। अपरोक्षविषये तु शाब्दज्ञानेऽपि पृथगापरोक्ष्याय न प्रयत्यते। यथा रज्जुरियं नायं सर्प इत्याप्तवाक्यात् रज्जुसर्पयोः विवेकसमकाल एव रज्ज्वां सर्पनिवृत्तिफले सति न रज्जुसाक्षात्कारस्य साधनान्तरं मृग्यत इत्यर्थः। ननु विषयगतं प्राकट्यं प्रमाणफलमिति **भाट्टाः**। कथमुच्यते—अध्यस्तनिवृत्तिः प्रमाणफलमिति, तत्राह—**येषां पुनरिति**। स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया यदि वस्तुन्यतिशयमादध्यात् तर्हि अपनयार्थक्रियात्वाविशेषात् [छिदि]क्रियाऽपि च्छेद्ये संयोगापनयातिरिक्तमतिशयमादधीत। न च तत्र भावरूपं विभागमाधत्त इति वाच्यम्। संयोगाश्रये संयोगाभावप्रतीतिं विना विभागानुपलब्धेः। न च नष्टे पटे विभागप्रतीतिप्रसङ्गः, संयोगिनोरप्रतीतेरिति भावः। ननु भवत्पक्षे यद्यज्ञाननिवर्तकमेव प्रमाणं तर्हि घटस्फुरणे कारणाभावाद् घटवेदनं न स्यादित्याशङ्क्याह—**यदा पुनरित्यादिना**। घटादेश्चिद्विवर्तत्वात् स्वाधिष्ठानचित्तादात्म्येन स्फुरणे प्राप्ते चिदावरणाज्ञानप्रतिबन्धाद् घटादिर्न प्रकाशते घटाद्याकारप्रमाणेन तस्मिन्नज्ञानेऽपसारिते नान्तरीयकं घटादिसंवेदनं भवति, न साक्षात्प्रमाणफलम्। न च घटादिसंवेदनस्य स्थायित्वप्रसङ्गस्तमोऽपसारकप्रमातृव्यापारस्यास्थायित्वात्, प्रमातृव्यापारव्यङ्ग्यत्वाच्च विषयसंवेदनं प्रमातृसम्बन्धीत्यपि न विरुध्यते। १० १५

नन्विदं वादान्तरं, परेषां तु जडस्य घटादेः प्रमाणजन्यप्राकट्यमन्तरेण कथं व्यवहार्यता? न तेनापि व्यवहार्यता, जडोपादानस्य[१] घटगतरेखावज्जडत्वेन तद्व्यवहारजनकत्वासम्भवात्। अतीतादौ तु आश्रयासम्भवेन २०

आनन्दगिरिटीका

तुरीयज्ञाने प्रमाणान्तरमेष्टव्यमिति पक्षं प्रत्याह—**तुरीयेति**। तस्य हि साक्षात्कारे न शब्दातिरिक्तं प्रमाणमन्वेष्यम्। शब्दस्य विषयानुसारेण प्रमाहेतुत्वात्। विषयस्य तुरीयस्यासंसृष्टापरोक्षत्वादित्यर्थः। तुरीयसाक्षात्कारे प्रसंख्यानाख्यं साधनान्तरमेष्टव्यमिति पक्षं प्रतिक्षिपति—**साधनान्तरं वेति**। प्रसंख्यानस्याप्रमाणत्वान्न प्रमारूप-साक्षात्कारं प्रति हेतुतेति भावः। २५

यथा रज्जुरियं सर्पो नेति विवेकधीसमुदयदशायामेव रज्ज्वां सर्पनिवृत्तिफले सिद्धे रज्जुसाक्षात्कारस्य फलान्तरं प्रमाणान्तरं साधनान्तरं वा न मृग्यते क्लृप्तत्वात्तथेहापीत्याह—**रज्ज्वति**। विषयगतं प्राकट्यं प्रमाणफलं नाध्यस्तनिवृत्तिरित्याशङ्क्याऽऽह—**येषामिति**। स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया स्वविषये भावरूप-मतिशयमाधत्ते चेदपनयार्थक्रियात्वाविशेषाच्छिदिरपि च्छेद्यसंयोगापनयनातिरिक्तमतिशयमादध्यात्। न च संयोग-विनाशातिरिक्ते विभागे सम्प्रतिपत्तिरस्ति। प्राकट्यस्य च प्रकाशत्वे ज्ञानवन्नार्थनिष्ठत्वमप्रकाशत्वे तेनार्थेन नार्थोऽस्तीति भावः। ३०

अज्ञाननिवर्तकमेव प्रमाणंमिति पक्षे विषयस्फुरणे कारणाभावाद्विषयसंवेदनं न स्यादित्याशङ्क्याऽऽह—**यदेति**। घटो हि तमसा समावृतो व्यवहारायोग्यस्तिष्ठति, तस्य तमसो निष्क्रम्य व्यवहारयोग्यत्वापादने प्रत्यक्षादिप्रमाणं प्रवर्तते। तच्चानुपादित्सितस्यानिष्टस्याप्रमेयस्य तमसो निवृत्तिलक्षणे यदा पर्यवस्यति तदा घटसंवेदनमार्थिकं प्रमाणफलं न भवति। यथा छिदिक्रिया छेद्यस्य तरोरवयवयोर्मिथः संयोगनिरसने प्रवृत्ता सती तयोरेव च्छेद्यावयवयोर्द्वैधीभावे फले पर्यवस्यति, न त्वन्यतरावयवेऽपि च्छिदिर्व्याप्रियते। तथेहापि तमोनिवृत्तौ प्रमाणं निर्वृणोति। घटस्फुरणं त्वार्थिकम्। न च तस्य स्थायित्वमभिव्यञ्जकप्रमातृव्यापारस्यास्थिरत्वादित्यर्थः। ३५

१. घटोपादानकस्य प्राकट्यस्येत्यर्थः।

**तत्प्रमाणफलम्। न च तद्वदप्यात्मन्यध्यारोपितान्तःप्रज्ञत्वादिविवेककरणे प्रवृत्तस्य प्रतिषेधविज्ञानप्रमाणस्यानुपादित्सितान्तःप्रज्ञत्वादिनिवृत्तिव्यतिरेकेण तुरीये व्यापारोपपत्तिः। अन्तःप्रज्ञत्वादिनिवृत्तिसमकालमेव प्रमातृत्वादिभेदनिवृत्तेः। तथा च वक्ष्यति–''ज्ञाते द्वैतं न विद्यते'' इति। ज्ञानस्य द्वैतनिवृत्तिक्षणव्यतिरेकेण क्षणान्तरानवस्थानात्। अवस्थाने चानवस्थाप्रसङ्गाद् द्वैतानिवृत्तिः। तस्मात्प्रतिषेधविज्ञानप्रमाणव्यापारसमकालैवाऽऽत्मन्यध्यारोपितान्तःप्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धम्। नान्तःप्रज्ञमिति तैजसप्रतिषेधः। न बहिष्प्रज्ञमिति विश्वप्रतिषेधः। नोभयतःप्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः। न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः। बीजभावाविवेकरूपत्वात्। न प्रज्ञमिति युगपत्सर्वविषयप्रज्ञातृत्वप्रतिषेधः। नाप्रज्ञमित्यचैतन्यप्रतिषेधः।** ५

**कथं पुनरन्तःप्रज्ञत्वादीनामात्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत्प्रतिषेधादसत्त्वं गम्यत इति। उच्यते। ज्ञस्वरूपाविशेषेऽपीतरेतरव्यभिचारात् रज्ज्वादाविव सर्पधारादिविकल्पितभेदवत् सर्वत्राव्यभिचाराज्ज्ञस्वरूपस्य**

अनुभूतिस्वरूपाचार्यटीका १०

प्रमाणाहितातिशयासम्भवाद्व्यवहाराभावप्रसङ्गः। भवतु वा जडे प्राकट्यं प्रमाणफलं, आत्मनि तु जडवन्न प्रमाणव्यापार इत्याह—**न च तद्वदपीति**। न केवलमाश्रयाभावेन प्रमाणाभावादनन्तरक्षणे तस्य व्यापारानुपपत्तिः स्वरूपाभावाच्चेत्याह—**ज्ञानस्येति**। द्वैतान्तःपातिप्रमाणज्ञानस्य द्वैतनिवृत्तिक्षणात् क्षणान्तरे स्थितिश्चेदिष्यते तर्हि तन्निवर्तकमन्यद्वक्तव्यं तस्याप्यन्यदित्यनवस्था स्यादित्याह—**अवस्थाने चेति**। यस्मात् ज्ञानस्य जन्मैव व्यापारस्तच्च निषेधेनैवोपक्षीणं न प्राकट्यजननाय क्षणान्तरे स्थितिस्सम्भवति तस्मादित्युपसंहरति—**तस्मादिति**। अन्तःप्रज्ञत्वादीनां प्रमाणसिद्धत्वात्र तन्निषेधयोग्यत्वमित्याह—**कथं पुनरिति**। व्यभिचारित्वाद्रज्जुसर्पवन्मिथ्यात्वावगमादतस्तन्निषेधयोग्यत्वमित्याह—**उच्यत इति**। रज्ज्वादाविवेति स्वरूपाविशेषे दृष्टान्तः। इतरेतरव्यभिचारे दृष्टान्तमाह—**सर्पधारादीति**। सत्यालम्बनमेव ज्ञानमध्यस्तनिवर्तने समर्थमित्यभिप्रेत्याऽऽत्मनः सत्यतामाह—**सर्वत्रेति**। १५

आनन्दगिरिटीका

किं च घटादेर्जडस्य संविदपेक्षत्वात् तत्र संविदो मानफलत्वेऽपि नाऽऽत्मन्यजडे संविदेकताने मानस्याऽऽरोपितधर्मनिवर्तकत्वमन्तरेण संविज्जनकत्वव्यापारः सम्भवतीत्याह—**न चेति**। तुरीयात्मनि संवेदनजननव्यापारो न प्रमाणस्य प्रकल्प्यते। तस्य संविदात्मकत्वादारोपितनिवृत्तिव्यतिरेकेण मानजन्यफलसंविदनपेक्षत्वादित्युक्तम्। तत्रैव हेत्वन्तरमाह—**अन्तःप्रज्ञत्वादीति**। आश्रयाभावेनाऽऽश्रितप्रमाणाभावादनन्तरक्षणे तस्य व्यापारानुपपत्तिरित्यत्र वाक्यशेषमनुकूलयति—**तथा चेति**। किं च ज्ञानाधीनद्वैतनिवृत्त्यवच्छिन्नक्षणातिरेकेण न क्षणान्तरे ज्ञानं स्थातुं पारयति, न चास्थिरं ज्ञानं व्यापाराय पर्याप्तम्। तथा च ज्ञानस्य द्वैतनिवृत्तिव्यतिरेकेण नाऽऽत्मनि व्यापारोऽस्तीत्याह—**ज्ञानस्येति**। ननु ज्ञानं द्वैतनिवर्तकमपि न स्वात्मानं निवर्तयति। निवर्त्यनिवर्तकभावस्यैकत्र विरोधात्। अतो यावन्निवर्तकं स्थास्यति, तत्राऽऽह—**अवस्थाने चेति**। निवर्तकस्य ज्ञानस्य द्वैतनिवृत्तेरनन्तरमपि निवर्तकान्तरमपेक्ष्यावस्थाने च तस्य तस्य निवर्तकान्तरसव्यपेक्षत्वादाद्यस्यापि विज्ञानस्य निवर्तकत्वासिद्धिः। न च ज्ञानस्य स्वनिवर्तकत्वानुपपत्तिः स्वपरविरोधिनां भावानां बहुलमुपलम्भादित्यर्थः। २० २५

ज्ञानस्य जन्मातिरिक्तव्यापाराभावात् तज्जन्मनश्च द्वैतनिषेधेनैवोपक्षयात् क्षणान्तरे विषयस्फुरणजननायानवस्थानादारोपितातद्धर्मनिवृत्त्यैव ज्ञानं पर्यवसितमित्युपसंहरति—**तस्मादिति**। प्रतिषेधजनितं विज्ञानमेव प्रमाणम्। तस्य व्यापारो जन्मैव। तेन समानकालैवानर्थनिवृत्तिरिति योजना। तत्र हेतुमाह—**बीजभावेति**। सुषुप्तं हि स्वप्नजागरिते प्रति बीजभावस्तस्याशेषविशेषविज्ञानाभावरूपत्वाद् विशेषविज्ञानानां सर्वेषां घनमेकं साधारणमविभक्तं सुषुप्तमिति तत्प्रतिषेधो नेत्यादिना सम्भवतीत्यर्थः। ३०

युक्तं सर्पादीनां रज्ज्वादौ भ्रान्तिप्रतिपन्नानां प्रतिषेधादसत्त्वम्। आत्मनि तु प्रमाणेन गम्यमानानामन्तःप्रज्ञत्वादीनां न प्रतिषेधो युज्यते मानविरोधादिति शङ्कते—**कथमिति**। प्रामाणिकत्वस्यासिद्धत्वाद् युक्तमन्तःप्रज्ञत्वादीनामसत्यत्वमिति परिहरति—**उच्यत इति**। विमतमसत्यं व्यभिचारित्वात् संप्रतिपन्नवदित्याह—**ज्ञस्वरूपेति**। तस्याविशेषोऽव्यभिचारस्तत्र रज्ज्वादाविवेत्युदाहरणम्। अन्तःप्रज्ञत्वादीनामितरेतरव्यभिचारे निदर्शनं सर्पधारादीति। ३५

**सत्यत्वम्। सुषुप्ते व्यभिचरतीति चेन्न। सुषुप्तस्यानुभूयमानत्वात्। ''न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'' इति श्रुतेः। अत एवादृष्टम्। यस्माददृष्टं तस्मादव्यवहार्यम्। अग्राह्यं कर्मेन्द्रियैः। अलक्षणमलिङ्गमित्येतदननुमेयमित्यर्थः। अत एवाचिन्त्यम्। अत एवाव्यपदेश्यं शब्दैः। एकात्मप्रत्ययसारं जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयम्। अथ वैक आत्मप्रत्ययः सारं प्रमाणं यस्य ५ तुरीयस्याधिगमे ततुरीयमेकात्मप्रत्ययसारम्। ''आत्मेत्येवोपासीत'' इति श्रुतेः। अन्तःप्रज्ञत्वादिस्थानिधर्मप्रतिषेधः कृतः। प्रपञ्चोपशममिति जाग्रदादिस्थान-धर्माभाव उच्यते। अत एव शान्तं शिवं, यतोऽद्वैतं भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्ते। प्रतीयमानपाद-त्रयवैलक्षण्यात्। स आत्मा स विज्ञेय इति, प्रतीयमानसर्पभूछिद्रदण्डादिव्यतिरिक्ता यथा रज्जुस्तथा तत्त्व-मसीत्यादिवाक्यार्थ आत्मा ''अदृष्टो द्रष्टा'' ''न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'' इत्यादिभिरुक्तो यः स विज्ञेय इति भूतपूर्वगत्या। ज्ञाते द्वैताभावः।।७।।**

१० अनुभूतिस्वरूपाचार्यटीका

अव्यभिचारिप्रत्ययेन विशिष्टानां विश्वादीनां स्वरूपमेकं तुरीयं ब्रह्मानुस्रियत इति पारोक्ष्येण व्याख्यातम्। इदानीमयमात्मा ब्रह्मेत्यपरोक्ष एवैकः प्रत्ययः प्रमाणमिति व्याचष्टे—**अथवेति**।।७।।

आनन्दगिरिटीका

विमतं सत्यमव्यभिचारित्वाद्रज्ज्वादिवदित्याह—**सर्वत्रेति**। तस्य च सत्यत्वे सर्वकल्पनाधिष्ठानत्वसिद्धिरिति भावः। १५ अव्यभिचारित्वहेतोरसिद्धिं शङ्कते—**सुषुप्त इति**। न तत्र चैतन्यस्य व्यभिचारः सुषुप्तस्य स्फुरणव्याप्ततया साधकस्फुरणस्यावश्यकत्वादित्याह—**न सुषुप्तस्येति**। सुषुप्ते साधकस्फुरणस्य सत्त्वे प्रमाणमाह—**न हीति**।

निषेधशास्त्रालोचनया निर्विशेषत्वं तुरीयस्योक्तम्, तदेव हेतूकृत्य ज्ञानेन्द्रियाविषयत्वमाह—**अत एवेति**। दृष्टस्यैवार्थक्रियादर्शनाददृष्टत्वादर्थक्रियाराहित्यमिति विशेषणान्तरमाह—**यस्मादिति**। अदृष्टमित्यनेनाग्राह्यमित्यस्य पौनरुक्त्यं परिहरति—**कर्मेन्द्रियैरिति**। अलक्षणमित्ययुक्तम् 'सत्यं ज्ञानमनन्त'मित्यादिलक्षणोपलम्भादित्या- २० शङ्क्याऽऽह—**अलिङ्गमिति**। 'को ह्येवान्यात् कः प्राण्यादि'त्यादिलिङ्गोपन्यासविरुद्धमेतदित्याशङ्क्याऽऽह—**अननुमेय-मिति**। प्रत्यक्षानुमानाविषयत्वप्रयुक्तं विशेषणान्तरमाह—**अत एवेति**। मनोविषयत्वाभावादेव शब्दाविषयत्वं, शब्द-प्रवृत्तेस्तत्प्रवृत्तिपूर्वकत्वादित्याह—**अत एवेति**। तर्हि यथोक्तं वस्तु नास्त्येव प्रमाणाभावादित्याशङ्क्याऽऽह—**एकात्मेति**।

परोक्षार्थविषयतया विशेषणं व्याख्यायापरोक्षार्थतयाऽपि व्याकरोति—**अथ वेति**। अपरोक्षात्मप्रत्ययस्याऽऽ- २५ त्मनि प्रमाणत्वे बृहदारण्यकश्रुतिमुदाहरति—**आत्मेत्येवेति**। 'यच्चाप्नोती'त्यादिना परिपूर्णत्वादिलक्षणस्तावदात्मोक्तः। स च वाङ्मनसातीतः श्रुतिभ्योऽवगतस्तमेवैकरसं परमात्मानं प्रत्यक्त्वेन गृहीत्वा तन्निष्ठस्तिष्ठतीत्यात्मनोऽवस्था-त्रयातीतस्य तुरीयस्यापरोक्षनित्यदृष्टित्वं श्रुतितो दृष्टमित्यर्थः।

विशेषणान्तरस्य पुनरुक्तिं परिहरन्नर्थभेदमाह—**अन्तरिति**। स्थानिधर्मस्य स्थानधर्मस्य च प्रतिषेधोऽन्तः-शब्देन परामृश्यते। **शान्तं** रागद्वेषादिरहितमविक्रियं कूटस्थमित्यर्थः। **शिवं** परिशुद्धं परमानन्दबोधरूपमिति यावत्। ३० यस्माद् द्वैताभावोपलक्षितं तस्माच्चतुर्थमित्याह—**यत इति**। अद्वैतमित्येतद् व्याचष्टे—**भेदेति**। संख्याविशेष-विषयत्वाभावे कथं चतुर्थत्वमित्याशङ्क्याऽऽह—**प्रतीयमानेति**। चतुर्थतुरीययोर्व्याख्यानव्याख्येयत्वेनापौनरुक्त्यम्। तस्योक्तविशेषणत्वेऽपि मम किमायातमित्याशङ्क्याऽऽह—**स आत्मेति**। आत्मनि यथोक्तविशेषणानि न प्रति-भान्तीत्याशङ्क्याऽऽह—**स विज्ञेय इति**। तदेव व्याचष्टे—**प्रतीयमानेति**। 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽ-विनाशित्वादि'त्यादिवाक्यानि प्रतीकोपादानेन दर्शयति—**न हि द्रष्टुरिति**। आत्मन्यव्यवहार्ये कुतो विज्ञेयत्व- ३५ मित्याशङ्क्य भूतपूर्वमविद्यावस्थायां या ज्ञेयत्वाख्याऽवगतिस्तयेदानीमपि विज्ञेयत्वमुक्तमित्याह—**भूतेति**। विद्या-वस्थायामेव किमिति ज्ञातृज्ञानज्ञेयविभागो न भवति, तत्राऽऽह—**ज्ञात इति**। ज्ञानेन तत्कारणस्याज्ञानस्यापनी-तत्वादित्यर्थः।।७।।

(अथ गौडपादीयकारिका:)

अत्रैते श्लोका भवन्ति–

**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः। अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः।।१०।।**
**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः।।११।।**
**नाऽऽत्मानं न परांश्चैव न सत्यं नापि चानृतम्। प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक्सदा।।१२।।** ५

**प्राज्ञतैजसविश्वलक्षणानां सर्वदुःखानां निवृत्तेरीशानस्तुरीय आत्मा। ईशान इत्यस्य पदस्य व्याख्यानं प्रभुरिति। दुःखनिवृत्तिं प्रति प्रभुर्भवतीत्यर्थः। तद्विज्ञाननिमित्तत्वाद् दुःखनिवृत्तेः। अव्ययो न व्येति स्वरूपान्न व्यभिचरतीति यावत्। एतत्कुतः? यस्मादद्वैतः। सर्वभावानां रज्जुसर्पवन्मृषात्वात् स एष देवो द्योतनात्तुरीयश्चतुर्थो विभुर्व्यापी स्मृतः।।१०।।**

**विश्वादीनां सामान्यविशेषभावो निरूप्यते तुर्ययाथात्म्यावधारणार्थम्। कार्यं क्रियत इति फलभावः। कारणं करोतीति बीजभावः। तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ संगृहीताविष्येते। प्राज्ञस्तु बीजभावेनैव बद्धः। तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तम्। ततो द्वौ तौ बीजफलभावौ तत्त्वाग्रहणान्यथाग्रहणे तुर्ये न सिध्यतो न विद्येते न सम्भवत इत्यर्थः।।११।।** १०

**कथं पुनः कारणबद्धत्वं प्राज्ञस्य, तुरीये वा तत्त्वाग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति। यस्मादात्मविलक्षणमविद्याबीजप्रसूतं बाह्यं द्वैतं प्राज्ञो न किञ्चन संवेत्ति यथा विश्वतैजसौ; ततश्चासौ तत्त्वाग्रहणेन तमसाऽन्यथाग्रहणबीजभूतेन बद्धो भवति। यस्मात्तुरीयं तत्सर्वदृक् सदा तुरीयादन्यस्याभावात् सर्वदा सदैवेति सर्वं च तद् दृक्चेति सर्वदृक् तस्मान्न तत्त्वाग्रहणलक्षणं बीजम्। तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावो न हि** १५

अनुभूतिस्वरूपाचार्यटीका

सर्वभावानां कल्पितानामद्वैतोऽधिष्ठानभूत इति नाशे कारणाभावादव्यय इत्यर्थः।।१०-११-१२।।

आनन्दगिरिटीका २०

नान्तःप्रज्ञमित्यादिश्रुत्युक्तेऽर्थे तद्विवरणरूपाञ्श्लोकानवतारयति—**अत्रेति।** विविधं स्थानत्रयमस्माद्भवतीति व्युत्पत्त्या तुरीयो विभुरुच्यते। न हि तुरीयातिरेकेण स्थानत्रयमात्मानं धारयति। सर्वदुःखानामाध्यात्मिकादिभेदभिन्नानां तद्धेतूनां तदाधाराणामिति यावत्। ईशानपदं प्रयुज्य प्रभुपदं प्रयुञ्जानस्य पौनरुक्त्यमित्याशङ्क्याऽऽह—**ईशान इति।** तुरीयस्य दुःखनिवृत्तिं प्रति सामर्थ्यस्य नित्यत्वान्न कदाचिदपि दुःखं स्यादित्याशङ्क्याऽऽह—**तद्विज्ञानेति।** संसृष्टरूपेण व्ययोऽस्तीत्याशङ्क्य विशिनष्टि—**स्वरूपादिति।** तत्र प्रश्नपूर्वकमद्वितीयत्वं हेतुमाह—**एतत् कुत इति।** अतो द्वितीयस्य व्ययहेतोरभावादिति शेषः। विश्वादीनां दृश्यमानत्वात् तुरीयस्याद्वितीयत्वासिद्धिरित्याशङ्क्याऽऽह—**सर्वभावानामिति।** अवस्थात्रयातीतस्य तुरीयस्योक्तलक्षणत्वं विद्वदनुभवसिद्धमिति सूचयति—**स्मृत इति।**।१०।। २५

विश्वादिष्ववान्तरविशेषनिरूपणद्वारेण तुरीयमेव निर्धारयति—**कार्येति।** श्लोकस्य तात्पर्यमाह—**विश्वादीनामिति।** विश्वतैजसयोरुभयबद्धत्वं सामान्यं, प्राज्ञस्य कारणमात्रबद्धत्वं विशेषः। अथेदं निरूपणं कुत्रोपयुज्यते? तत्राऽऽह—**तुर्येति।** प्राज्ञस्य कारणमात्रबद्धत्वं साधयति—**तत्त्वाप्रतिबोधेति।** त्रयाणामवान्तरविशेषे स्थिते प्रकृते तुरीये किमायातमित्याशङ्क्याऽऽह—**तत इति।** तयोस्तस्मिन्नविद्यमानत्वं चिदेकताने तयोर्निरूपयितुमशक्यत्वादि-त्याह—**न सम्भवत इति।**।११।। ३०

प्राज्ञस्य कारणबद्धत्वं साधयति—**नाऽऽत्मानमिति।** तुरीयस्य कार्यकारणाभ्यामसंस्पृष्टत्वं स्पष्टयति—**तुर्यमिति।** श्लोकव्यावर्त्यामाशङ्कामाह—**कथमिति।** वाशब्दात् कथमित्यस्यानुवृत्तिः सूच्यते। प्रथमचोद्योत्तरत्वेन पादत्रयं व्याचष्टे—**यस्मादिति।** विलक्षणमनात्मानमिति यावत्। अनृतमित्यस्य व्याख्यानमविद्याबीजप्रसूतमिति। द्वैतं द्वितीयमसत्यमित्यर्थः। वैधर्म्योदाहरणम्—**यथेति।** प्राज्ञस्य विभागविज्ञानाभावे फलमाह—**ततश्चेति।** यथोक्ते तमसि कार्यलिङ्गमनुमानं सूचयति—**अन्यथेति।** द्वितीयं चोद्यं चतुर्थपादव्याख्यानेन प्रत्याख्याति—**यस्मादित्यादिना।** सदैव तुरीयादन्यस्याभावात् तुरीयमेव सर्वं तच्च सदा दृग्रूपमिति यस्मात् तस्मादिति योजना। तत्रेति परिपूर्णं ३५

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः। बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते।।१३।।**

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः।।१४।।**

**सवितरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनमन्यथा प्रकाशनं वा सम्भवति। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः। अथ वा जाग्रत्स्वप्नयोः सर्वभूतावस्थः सर्ववस्तुदृगाभासस्तुरीय एवेति सर्वदृक्सदा। "नान्यद्रतोऽस्ति द्रष्टृ" इत्यादिश्रुतेः।।१२।।**

५ **निमित्तान्तरप्राप्ताशङ्कानिवृत्त्यर्थोऽयं श्लोकः। कथं द्वैताग्रहणस्य तुल्यत्वात् कारणबद्धत्वं प्राज्ञस्यैव, न तुरीयस्येति प्राप्ताऽऽशङ्का निवर्त्यते। यस्माद् बीजनिद्रायुतस्तत्त्वाप्रतिबोधो निद्रा। सैव च विशेषप्रतिबोधप्रसवस्य बीजम्। सा बीजनिद्रा। तया युतः प्राज्ञः। सदा दृक्स्वभावत्वात्तत्त्वाप्रतिबोधलक्षणा निद्रा तुरीये न विद्यते। अतो न कारणबन्धस्तस्मिन्नित्यभिप्रायः।।१३।।**

१० **स्वप्नोऽन्यथाग्रहणं सर्प इव रज्ज्वाम्। निद्रोक्ता तत्त्वाप्रतिबोधलक्षणं तम इति। ताभ्यां स्वप्ननिद्राभ्यां युक्तौ विश्व-तैजसौ। अतस्तौ कार्यकारणबद्धावित्युक्तौ। प्राज्ञस्तु स्वप्नवर्जितया केवलयैव निद्रया युत इति कारणबद्ध इत्युक्तम्। नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो विरुद्धत्वात् सवितरीव तमः। अतो न कार्यकारणबद्ध इत्युक्तस्तुरीयः।।१४।।**

अनुभूतिस्वरूपाचार्यटीका

तुरीयं कारणबद्धं द्वैताग्रहणवत्त्वात् प्राज्ञवदित्यनुमानविरोधपरिहाराय श्लोक इत्याह—**निमित्तान्तरप्राप्तेति।**

१५ प्राज्ञस्योत्तरभाविकार्यनियतपूर्वभावित्वं कारणबद्धत्वे प्रयोजकम्, अतोऽप्रयोजको हेतुरित्याह—**यस्माद्बीजनिद्रायुत इति।** किञ्च, तुरीयस्य विशुद्धदृक्स्वभावत्वग्राहकप्रमाणबाधात् कालात्ययापदिष्टो हेतुरित्याह—**सदा दृक्स्व-भावत्वादिति।**।१३।।

कार्यकारणबद्धौ ताविति श्लोकार्थं प्रपञ्चयति—**स्वप्ननिद्रायुताविति।**।१४।।

आनन्दगिरिटीका

२० चिदेकतानं तुरीयं परामृश्यते। **अत एवेति।** कारणाभावे कार्यानुपपत्तेरित्यर्थः। तुरीये तत्त्वाग्रहणान्यथाग्रहण-योरसम्भवं दृष्टान्तेन साधयति—**न हीति।** यत्तु तुरीयस्य सदा दृगात्मत्वमुक्तं तत्र प्रमाणमाह—**न हि द्रष्टुरिति।** चतुर्थपादं प्रकारान्तरेण योजयति—**अथ वेति।** तत्रापि श्रुतिमनुकूलयति—**नान्यदिति।**।१२।।

अनुमानप्रयुक्तां तुरीयेऽपि कारणबद्धत्वाशङ्कां परिहरति—**द्वैतस्येति।** श्लोकस्य तात्पर्यं गृह्णाति—**निमित्तान्तरेति।** विमतं कारणबद्धं द्वैताग्रहणवत्त्वात् प्राज्ञवदित्यनुमानमेव दर्शयन्निमित्तान्तरमेव स्फोरयति—**कथमिति।**

२५ अनुमानकृताशङ्कानिवर्तकत्वेन श्लोकमवतारयति—**प्राप्तेति।** प्राज्ञस्योत्तरभाविप्रबोधादिकार्यापेक्षया नियतपूर्वभावित्वं कारणबद्धत्वप्रयोजकम्। न च तुरीयस्य तदस्तीत्यप्रयोजको हेतुरित्याह—**यस्मादिति।** किं च तुरीयस्य विशुद्धचिद्धातुत्वप्रसाधनप्रमाणबाधात् कालात्ययापदिष्टो हेतुरित्याह—**सदेति।** न च पूर्वोक्तोपाधेः साधनव्याप्ति-स्तुरीयस्योत्तरभाविकार्यापेक्षया नियतप्राग्भावित्वाभावादिति मत्वाऽऽह—**तत्त्वेति।** दोषद्वयवत्त्वेनानुमानस्यामानत्वे फलितमाह—**अतो नेति।**।१३।।

३० कार्यकारणबद्धौ तावित्यादिश्लोकोक्तमर्थमनुभवावष्टम्भेन प्रपञ्चयति—**स्वप्नेति।** ननु तैजसस्यैव स्वप्नयुक्तत्वं युक्तं न तु विश्वस्य प्रबुध्यमानस्य तद्योगो युज्यते प्रबुध्यमानत्वव्याघातात्। कथमविशेषेण विश्वतैजसौ स्वप्ननिद्रायुताविति। तत्र स्वप्नशब्दार्थमाह—**स्वप्न इति।** यथा रज्ज्वां सर्पो गृह्यमाणोऽन्यथा गृह्यते तथाऽऽत्मनि देहादिग्रहणमन्यथाग्रहणम्। आत्मनो देहादिवैलक्षण्यस्य श्रुतियुक्तिसिद्धत्वात्, तेन स्वप्नशब्दितेनान्यथाग्रहणेन संसृष्टत्वं विश्वतैजसयोरविशिष्टमित्यर्थः। तथा निद्राणस्यैव निद्रा युक्ता न तु प्रबोधवतो विश्वस्येत्याशङ्क्याऽऽह—**निद्रेति।**

३५ उक्ताभ्यां स्वप्ननिद्राभ्यां विश्वतैजसयोर्वैशिष्ट्यं निगमयति—**ताभ्यामिति।** तयोरन्यथाग्रहणेन अग्रहणेन च वैशिष्ट्यं प्रागपि सूचितमित्याशङ्क्याह—**अत इति।** द्वितीयं पादं विभजते—**प्राज्ञस्त्विति।** द्वितीयार्धं व्याचष्टे—**नोभयमिति।** तुरीये निद्रास्वप्नयोरदर्शने हेतुमाह—**विरुद्धत्वादिति।** अज्ञानतत्कार्ययोर्नित्यविज्ञप्तिरूपे तुरीये विरुद्धत्वादनुप-लब्धिरित्यत्र दृष्टान्तमाह—**सवितरीवेति।** तुरीये वस्तुतो नाविद्यातत्कार्ययोः सङ्गतिरस्तीत्यङ्गीकृत्य प्रागपि सूचितमित्याह—**अतो नेति।**।१४।।

**अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः। विपर्यासे [1]तयोः क्षीणे तुरीयं पदमश्नुते।।१५।।**
**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा।।१६।।**

कदा तुरीये निश्चितो भवतीत्युच्यते। स्वप्नजागरितयोरन्यथा रज्ज्वां सर्पमिव गृह्णतस्तत्त्वं स्वप्नो भवति। निद्रा तत्त्वमजानतस्तिसृष्ववस्थासु तुल्या। स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम्। अन्यथाग्रहण-प्राधान्याच्च गुणभूता निद्रेति तस्मिन्विपर्यासः स्वप्नः। तृतीये तु स्थाने तत्त्वाज्ञानलक्षणा निद्रैव केवला विपर्यासः। अतस्तयोः कार्यकारणस्थानयोरन्यथाग्रहणाग्रहणलक्षणविपर्यासे कार्यकारणबन्धरूपे परमार्थतत्त्व-प्रतिबोधतः क्षीणे तुरीयं पदमश्नुते तदोभयलक्षणं बन्धरूपं तत्रापश्यंस्तुरीये निश्चितो भवतीत्यर्थः।।१५।।

योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मनाऽन्यथाग्रहणलक्षणेन चानादिकाल-प्रवृत्तेन मायालक्षणेन स्वप्नेन ममायं पिता पुत्रोऽयं नप्ता क्षेत्रं गृहं पशवोऽहमेषां स्वामी सुखी दुःखी क्षयितोऽहमनेन वर्धितश्चानेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्तो यदा वेदान्तार्थतत्त्वाभिज्ञेन परमान् कारुणिकेन गुरुणा नास्येवं त्वं हेतुफलात्मकः किं तु तत्त्वमसीति प्रतिबोध्यमानो यदा तदैवं प्रतिबुध्यते। कथम्? नास्मिन् बाह्यमाभ्यन्तरं

अनुभूतिस्वरूपाचार्यटीका

तयोरिति द्विवचनं त्रिषु कथं घटते, तत्राह—**स्वप्ननिद्रयोरिति**। विश्वतैजसावेको राशिः, प्राज्ञो द्वितीयस्ततः श्लोके द्विवचनं न विरुध्यत इति भावः। कस्मिन् स्थाने को विपर्यास इत्याशङ्क्याह—**अन्यथेति**। तस्मिन्निति विश्वतैजसाख्ये कार्यस्थाने तत्त्वप्रतिबोधेन विपर्यासे क्षीणे इत्युक्तम्।।१५।।

कीदृशं तर्हि तत्त्वं प्रतिबुद्ध्यत इत्याशङ्क्याह—**अनादिमायेति**। यदा प्रतिबोध्यत इति शेषः। केन कथं वा प्रतिबोध्यत इत्यत आह—**वेदान्तार्थेति**।।१६।।

आनन्दगिरिटीका

कदा तर्हि स्वप्नो भवतीत्यपेक्षायामाह—**अन्यथेति**। निद्रा तर्हि कदेति सन्दिहानं प्रत्याह—**निद्रेति**। तुरीयप्रतिपत्तिसमयं सङ्गिरते—**विपर्यास इति**। श्लोकव्यावर्त्यामाकाङ्क्षां दर्शयति—**कदेति**। कदा स्वप्ननिष्ठो भवति, कदा निद्रानिष्ठः स्यादित्यपि द्रष्टव्यम्। प्रश्नत्रयस्योत्तरं श्लोकेन दर्शयति—**उच्यत इति**। तत्र कदा स्वप्नो भवतीति प्रश्नं परिहरति—**स्वप्नेति**। अवस्थाद्वये स्वप्नद्रष्टुरित्यर्थः। द्वितीयं प्रश्नं समाधत्ते—**निद्रेति**। विश्वादिषु त्रिषु तयोरिति द्विवचनं कथमित्याशङ्क्याऽऽह—**स्वप्ननिद्रयोरिति**। विश्वतैजसावेको राशिः। प्राज्ञो द्वितीयः। ततः श्लोके द्विवचनमविरुद्धमित्यर्थः। प्रथमे राशौ विपर्यासस्वरूपं कथयति—**अन्यथेति**। द्वितीये राशौ विपर्यासविशेषं दर्शयति—**तृतीये त्विति**। द्वितीयार्धगतान्यक्षराणि व्याकरोति—**अत इति**। द्विवचनस्योपपन्नत्वाद् विपर्यासस्य च विभागेन निर्धारितत्वादित्यर्थः। तृतीयं प्रश्नं प्रतिविधत्ते—**तदेति**। तत्त्वप्रबोधाद्विपर्यासक्षयावस्थायामित्यर्थः।।१५।।

कदा तत्त्वप्रतिबोधो विपर्यासक्षयहेतुर्भवतीत्यपेक्षायामाह—**अनादीति**। प्रतिबुध्यमानं तत्त्वमेव विशिनष्टि—**अजमिति**। जीवशब्दवाच्यमर्थं निर्दिशति—**योऽयमिति**। परमात्मैव जीवभावमापन्नः संसरतीत्यर्थः। तस्य कथं जीवभावापत्तिरित्याशङ्क्य कार्यकारणबद्धत्वादित्याह—**स इति**। परमात्मोभयलक्षणेन स्वापेन सुप्तो जीवो भवतीत्यन्वयः। स्वापस्योभयलक्षणत्वमेव प्रकटयति—**तत्त्वेत्यादिना**। मायालक्षणेनेत्युभयत्र सम्बध्यते। सुप्तमेव व्यनक्ति—**ममेत्यादिना**। स्वापपरिगृहीतस्यैव प्रतिबोधनावकाशो भवतीत्याह—**यदेति**। यदा सुषुप्तस्तदा बुध्यत इति शेषः। प्रतिबोधकं विशिनष्टि—**वेदान्तार्थेति**। कथं प्रतिबोधनं, तदाह—**नासीति**। अनुभूयमानत्वमेवमित्युच्यते। यदोक्तविशेषणेन गुरुणा प्रतिबोध्यमानः शिष्यस्तदाऽसावेवं वक्ष्यमाणप्रकारेण प्रतिबुद्धो भवतीत्युक्तम्। तमेव प्रकारं प्रश्नपूर्वकं द्वितीयार्धव्याख्यानेन विशदयति—**कथमित्यादिना**। अस्मिन्निति सप्तम्या बोध्यात्मरूपं परामृश्यते। बाह्यं कार्यमान्तरं कारणं तच्चोभयमिह नास्ति। ततो जन्मादेर्भावविकारस्य नात्रावकाशः सम्भवतीत्यर्थः।

---

१. तयोः तैजसप्राज्ञयोः विपर्यासे क्षीणे इति योजना। सुषुप्ते अज्ञानमेव विषय इत्युपचर्यते तद्बीजत्वात्तस्य।

**[१]प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।।१७।।**

**वा जन्मादिभावविकारोऽस्त्यतोऽजं 'सबाह्याभ्यन्तरो ह्यज' इति श्रुतेः। सर्वभावविकारवर्जितमित्यर्थः। यस्माज्जन्मादिकारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इत्यनिद्रम्। अनिद्रं हि तत्तुरीयमत एवास्वप्नम्। तन्निमित्तत्वादन्यथाग्रहणस्य। यस्माच्चानिद्रमस्वप्नं तस्मादजमद्वैतं तुरीयमात्मानं बुध्यते तदा[२]।।१६।।**

५ **प्रपञ्चनिवृत्त्या चेत्प्रतिबुध्यतेऽनिवृत्ते प्रपञ्चे कथमद्वैतमिति। उच्यते। सत्यमेवं स्यात्प्रपञ्चो यदि विद्येत्। रज्ज्वां सर्प इव कल्पितत्वान्न तु स विद्यते। विद्यमानश्चेन्निवर्तेत न संशयः। न हि रज्ज्वां भ्रान्तिबुद्ध्या कल्पितः सर्पो विद्यमानः सन्विवेकतो निवृत्तः। न च माया मायाविना प्रयुक्ता तद्दर्शिनां चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता। तथेदं प्रपञ्चाख्यं मायामात्रं द्वैतं रज्जुवन्मायाविवच्चाद्वैतं परमार्थतस्तस्मान्न कश्चित्प्रपञ्चः प्रवृत्तो निवृत्तो वाऽस्तीत्यभिप्रायः।।१७।।**

अनुभूतिस्वरूपाचार्यटीका

१० प्रपञ्चनिवृत्त्या सद्वितीयत्वमाशङ्क्याह—**प्रपञ्चो यदीति**। प्रामाणिकस्यैवाभावः प्रामाणिकः प्रसिद्धो नापरः। अस्माकं तु मिथ्याभूतप्रपञ्चस्य निवृत्तिरपि न वस्त्विति नाद्वैतविघात इत्यर्थः।।१७।।

आनन्दगिरिटीका

अवतारितं विशेषणं सप्रमाणं योजयति—**सबाह्येति**। अजत्वादेवानिद्रं कार्याभावे कारणस्य प्रमाणाभावेन वक्तुमशक्यत्वादिति मत्वाऽऽह—**यस्मादिति**। अनिद्रत्वं हेतुं कृत्वा विशेषणान्तरं दर्शयति—**अत एवेति**। अग्रहणान्यथाग्रहणसम्बन्धवैधुर्यं हेतुं कृत्वा विशेषणद्वयमित्याह—**यस्माच्चेति**। तत्त्वमेवंलक्षणमस्तु, आत्मनः किमायातमित्याशङ्क्याऽऽह—तदा विशिष्टेनाऽऽचार्येण विशिष्टं शिष्यं प्रति बोधनावस्थायामित्यर्थः।।१६।।

तुरीयमद्वैतमित्युक्तं तदयुक्तं प्रपञ्चस्य द्वितीयस्य सत्त्वादित्याशङ्क्याऽऽह—**प्रपञ्च इति**। प्रपञ्चनिवृत्त्या तुरीयप्रतिबोधात्तदद्वितीयत्वमविरुद्धमिति सैद्धान्तिकीमाशङ्कां पूर्ववाद्यनुवदति—**प्रपञ्चेति**। तर्हि पूर्वं प्रपञ्चनिवृत्तेरनिवृत्तस्य तस्य सत्त्वान्नाद्वैतं सेद्धुमर्हतीति पूर्ववाद्येव ब्रवीति—**अनिवृत्त इति**। सिद्धान्ती श्लोकेनोत्तरमाह—**उच्यत इति**। किं प्रपञ्चस्य वस्तुत्वमुपेत्याद्वैतानुपपत्तिरुच्यते, किं वाऽवस्तुत्वमिति विकल्प्याऽऽद्येऽद्वैतानुपपत्तिमङ्गीकरोति—**सत्यमिति**। अद्वैतं तर्हि कथमुपपद्येतेत्याशङ्क्य प्रपञ्चस्यावस्तुत्वपक्षे तदुपपत्तिरित्याह—**रज्ज्वामिति**। यथा सर्पो रज्ज्वां कल्पितो वस्तुतो नास्ति तथा प्रपञ्चोऽपि कल्पितत्वान्नैव वस्तुतो विद्यते। तथा च तात्त्विकमद्वैतमविरुद्धमित्यर्थः। उक्तमर्थं व्यतिरेकमुखेन साधयति—**विद्यमानश्चेदिति**। यद्यात्मनि कारणाधीनः सन् प्रपञ्चो विद्येत तदा कृतकस्यानित्यत्वनियमात्तन्निवृत्तिरवश्यम्भाविनी। कार्यस्य च निवृत्तिर्नाम कारणसंसर्गस्ततः सति कारणे प्रपञ्चनिवृत्तेरनात्यन्तिकत्वाददद्वैतानुपपत्तिराशङ्क्येत। न च कारणाधीनः सन् प्रपञ्चोऽस्ति। तस्य कल्पितत्वेनावस्तुत्वादित्यर्थः। प्रपञ्चस्य मायया विद्यमानत्वं न तु वस्तुत्वमित्युदाहरणाभ्यामुपपादयति—**न हीत्यादिना**। सर्पो हि रज्ज्वां भ्रान्त्या कल्पितो नायं सर्पो रज्जुरेष एवेति विवेकधिया निवृत्तो नैव वस्तुतो विद्यते। बाधितस्य कालत्रयेऽपि सत्त्वाभावात्। माया चेन्द्रजालशब्दवाच्या मायाविना प्रदर्शिता पार्श्वस्थानां मायादर्शनवतां चक्षुर्गतस्य ३० यथार्थदर्शनप्रतिबन्धकस्यापगमे सति समुत्पन्नसम्यग्दर्शनतो निवृत्ता सती नैव वस्तुतो विद्यमाना भवितुमुत्सहते।

---

१. प्रपञ्चो यदि विद्येत—माध्वानां "देहगेहादौ स्वस्वामिभावसम्बन्धो यदि स्वातन्त्र्येण विद्येत" इति साध्याहारं विवरणं प्रपञ्चमिथ्यात्वप्रद्वेषेण, न तु शब्दार्थः।

निवर्तेत न संशयः—'यदि पराधीनोऽपि विद्येत तदा ईश्वरप्रसादान्निवर्तेत' इति व्याख्यानं साध्याहारत्वान्न युक्तम्।

३५ अज्ञैः द्वैतं द्वितीयेन प्रकारेण ज्ञातं तत् वैपरीत्येन ज्ञातं तच्च मिथ्याज्ञानम्, तत् मायामात्रम्। भगवदिच्छया मायया निर्मितं, ततः तदिच्छया निवर्तत इत्यर्थः। तत्रापि मायापदस्येच्छार्थकत्वमसम्भावितम्।

२. अजं जन्मरहितं, अनिद्रं अज्ञानरहितं अस्वप्नं भ्रमरहितं अत एवाद्वैतं तदा बुध्यते (कल्प० २.१.११)।

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते।।१८।।**

**ननु शास्ता शास्त्रं शिष्य इति विकल्पः कथं निवृत्त इत्युच्यते। विकल्पो विनिवर्तेत यदि केनचित्कल्पितः स्यात्। यथाऽयं प्रपञ्चो मायारज्जुसर्पवत्तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक्प्रतिबोधादेवोपदेशनिमित्तोऽत**

अनुभूतिस्वरूपाचार्यटीका

शास्त्रादिविभागस्य मिथ्यात्वे सत्यफलहेतुत्वानुपपत्तेः सत्यत्वं वक्तव्यं, ततस्तन्निवृत्तिर्निरूपितरूपा वक्तव्येत्यभिप्रेत्याह—**ननु शास्तेति। कल्पित इति।** समर्थितो यदि केनचित् प्रमाणेन स्यात् निवृत्तिरपि निरूपितरूपा स्यात्, न त्वयं मया प्रमाणेन समर्थितः, कल्पिताहिदंशादेरपि सत्यमूर्च्छादिकार्यहेतुत्वदर्शनादित्यभिप्रेत्याह—**यथाऽयमित्यादिना।** सर्वस्य सतो ब्रह्मरूपत्वेऽपि उपदेशक्रियोपाधौ कल्पितभेदेन गुरुत्वं शिष्यत्वं च समारोपितमुपाधिनिवृत्तौ निवर्तत इत्यर्थः। ५

एतेनैतदपास्तम्। यदाहुः—अद्वैते प्रमाणमस्ति चेदद्वैतस्य व्याघात इति। यतः प्रमाणं अद्वैतप्रमितिं स्वकार्यं कृत्वा आश्रयाभावादुपसंह्रियते। अतः प्रमितस्याद्वैतस्य न प्रमाणेन विरोधः। १०

किञ्चाद्वैतप्रमाणेन स्वप्रमेयं न हन्यते। हन्तृत्वे तत्र तन्मानं मानं हन्तृ न कस्यचित्।।

किञ्च, तव अद्वैतप्रमाणयोः प्रमित्यभावे न तद्विरोधः प्रमातुं शक्यस्त्वया। विशेषणासिद्धौ विशिष्टासिद्धेरतस्ते भ्रम एवाभूत् अद्वैतप्रमाणे सति तद्व्याघात इति।

किञ्च प्रमाणं प्रमेयभिन्नमिति व्याप्तिबलात्ते विरोधबुद्धिराविरभूत्। तत्र च न सत्यत एव भिन्नत्वमस्मत्सम्मतं व्यावहारिकेणापि तदुपपत्तेः। तवापि बिम्बात्प्रतिबिम्बस्य तात्त्विकभेदाभावेऽपि तत्र तन्मानं सम्मतम्। अतः कथं सदद्वैतस्य प्रमाणभावेन विरोधः। १५

भवतु वा अन्यत्र प्रमेयात् प्रमाणस्य सत्यत एव भिन्नत्वम्। नाद्वैतात्तत्प्रमाणस्य, अद्वैततत्प्रमाणतद्भेदानामेकप्रमाणाविषयत्वात् अद्वैतप्रमाणस्य चाद्वैताकारसमाप्तस्य भेदे व्यापारायोगात्, अनुपपत्त्या चाक्षिप्तस्य भेदस्याद्वैततत्प्रमाणयोः प्रमाणप्रमेयभावनिर्वाहकत्वात् व्याघातकत्वायोगात्। भेदासहिष्णु अद्वैतप्रमाणं भेदमाकाङ्क्षतीति च सुभाषितम्। तिष्ठतु वा अयं फल्गुकोलाहलः। प्रमाणप्रश्न एवाद्वैते न सम्भवतीति ब्रूमः। पदार्थमात्रप्रश्नस्यानुपयोगात्। संसर्गप्रश्ने च विषयविषयिभावसिद्धौ व्यर्थः प्रश्नः। असिद्धौ च निर्विषयः। अप्रमिते प्रश्न इति चेत्। संशयिते विपर्यस्ते सुषुप्तायमाने वा, आद्ये सोऽपि संशयः स्यात् तदेकविषयत्वात्। द्वितीये त्वं भ्रान्तः स्याः, प्रमाणानर्हे च विपर्यस्ते प्रमाणं पृच्छन् विप्रलम्भकः स्याः। तृतीये तु न वाङ्मात्रप्रसरोऽपि कुतस्तद्विषयप्रश्नः? स्वपक्षे च विचारासहिष्णुरेव प्रश्नो व्यवहाराङ्गं वर्णदैर्घ्यादिवदिति न साम्यम्। तस्मात्तत्वतः प्रश्नाभावात् नोत्तरमप्यद्वैते प्रसरीसर्ति। तदेतदभिप्रेत्योक्तं "यतो वाचो निवर्तन्त" इति। किञ्च—"प्रमाणादिविकल्पानामुत्थितेः प्राक् प्रसिद्धितः। २० २५

आनन्दगिरिटीका

यथेदमुदाहरणद्वयं तथेदं द्वैतं प्रपञ्चाख्यं मायामात्रं न परमार्थतोऽस्तीत्यर्थः। प्रपञ्चस्यासत्त्वे शून्यवादः स्यादित्याशङ्क्याऽऽह—**रज्जुवदिति।** प्रपञ्चस्य कालत्रयेऽपि सत्त्वाभावे तात्त्विकमद्वैतमविरुद्धमित्युपसंहरति—**तस्मादिति।।**१७।।

प्रकारान्तरेणाद्वैतानुपपत्तिमाशङ्क्य परिहरति—**विकल्प इति।** यदि केनचिद्धेतुना तत्त्वज्ञानेन कार्येण शास्त्रादिविकल्पो हेतुतया विकल्पितस्तथाऽप्यसौ बाधितो निवर्तेत, न तु तात्त्विकमद्वैतं विरोद्धुमर्हति। तत्त्वज्ञानात्प्रागवस्थायामेव तत्त्वोपदेशं निमित्तीकृत्य यतः शास्त्रादिभेदोऽनूद्यते, उपदेशप्रयुक्ते तु ज्ञाने निर्वृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह—**नन्विति।** तदनिवृत्तौ नाद्वैतसिद्धिर्न च शास्त्रादिभेदस्य कल्पितत्वादविरोधः, तथा सति धूमाभासवत्तत्त्वज्ञानहेतुत्वानुपपत्तिरित्यर्थः। धूमाभासस्याव्याप्तस्यातद्धेतुत्वेऽपि कल्पितस्य शास्त्रादेस्तत्त्वज्ञानहेतुत्वं प्रतिबिम्बादिवदुपपन्नमित्युत्तरमाह—**उच्यत इति।** शिष्यः शास्ता शास्त्रमित्ययं विकल्पो विभागः, सोऽपि निवृत्तिप्रतियोगित्वादवस्तुत्वाज्ज्ञानबाध्यत्वादद्वैताविरोधीत्यर्थः। शिष्यादिविभागस्य कल्पितत्वं दृष्टान्तेन स्पष्टयति—**यथेति।** मायाविना प्रयुक्ता माया यथा कल्पितेष्यते यथा च सर्पधारादिर्विकल्पितस्तथाऽयं प्रपञ्चः सर्वोऽपि कल्पितो वस्तु न भवतीति प्रपञ्चितम्। तथैव प्रपञ्चैकदेशः शिष्यादिरपि ज्ञानात्प्राक्कल्पितः सन्नज्ञानकृतो मिथ्येत्यर्थः। किमिति ज्ञानात्पूर्वमसौ कल्प्यते, तत्राऽऽह— ३० ३५

**[1]सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति।।८।।**

**जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽ-**

**प्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद।।९।।**

**उपदेशादयं वादः शिष्यः शास्ता शास्त्रमिति। उपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न ५ विद्यते।।१८।।**

**अभिधेयप्राधान्येन ओङ्कारश्चतुष्पादात्मेति व्याख्यातो यः सोऽयमात्माऽध्यक्षरमक्षरमधिकृत्याभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम्। किं पुनस्तदक्षरमित्याह–ओङ्कारः। सोऽयमोङ्कारः पादशः प्रविभज्यमानोऽधिमात्रं मात्रामधिकृत्य वर्तत इत्यधिमात्रम्। कथमात्मनो ये पादास्त ओङ्कारस्य मात्राः। कास्ताः। अकार उकारो मकार इति।।८।।**

**तत्र विशेषनियमः क्रियते। जागरितस्थानो वैश्वानरो यः स ओङ्कारस्याकारः प्रथमा मात्रा। केन १० सामान्येनेत्याह–आप्तेराप्तिर्व्याप्तिरकारेण सर्वा वाग्व्याप्ता। ''अकारो वै सर्वा वाक्'' इति श्रुतेः। तथा वैश्वानरेण जगत्। ''तस्य ह वैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाः'' इत्यादिश्रुतेः। अभिधानाभिधेययोरेकत्वं चावोचाम।**

अनुभूतिस्वरूपाचार्यटीका

स्वतःसिद्धमतोऽद्वैतं न प्रमाप्रश्नमर्हति।।'' न च प्रमाणानुपन्यासे वादाभावप्रसङ्गः, एवंरूपवादसम्भवात्। न च वयं केनापि विवदामहे। सुखब्रह्मभूता एवास्महे, कथमप्युद्भूतं भ्रममेव बाधामहे प्रसिद्धिमात्रेणेत्यलम्।।१८।।

१५ एवं तावदध्यारोपापवादाभ्यां परमार्थं वस्तु निर्दिश्य इदानीमेतद्ग्रहणासमर्थानां मन्दाधिकारिणामुपासनविधानायाध्यारोपवृत्तिमाश्रित्योपक्रमते—**अभिधेयप्राधान्येनेत्यादिना**।।८।।

अध्यासो हि सादृश्यनिबन्धनः प्रसिद्धः, इह कथं प्रधानसादृश्यमिति पृच्छति—**केनेति**। वाच्यवाचकयोः प्रसिद्धिसिद्धं भेदमाश्रित्य सादृश्यमुच्यते, तत्त्वतस्तु न भेदोऽपीत्याह—**अभिधानाभिधेययोरिति**।।९।।

आनन्दगिरिटीका

२० **उपदेशेति**। उपदेशमुद्दिश्य यथोक्तविभागवचनमित्युक्तमुपसंहरति—**अत इति**। उपदेशात्प्रागिव तस्मादूर्ध्वमपि भेदोऽनुवर्ततामित्याशङ्क्य विरोधिसद्भावान्नैवमित्याह—**उपदेशेति**।।१८।।

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानां चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टम्। इदानीं तत्त्वग्रहणासमर्थानामधमाधिकारिणामाध्यानविधानायाऽऽरोपदृष्टिमेवावष्टभ्य व्याचष्टे—**अभिधेयेत्यादिना**। अध्यक्षरमित्येतद् व्याकरोति—**अक्षरमिति**। अध्यक्षरमित्यत्र किं पुनस्तदक्षरमिति प्रश्नपूर्वकं व्युत्पादयति—**किं २५ पुनरित्यादिना**। तस्य विशेषणान्तरं दर्शयति—**सोऽयमिति**। आत्मा हि पादशो विभज्यते; मात्रामधिकृत्य पुनरोङ्कारो व्यवतिष्ठते, तत्कथं पादशो विभज्यमानस्याधिमात्रत्वमिति पृच्छति—**कथमिति**। पादानां मात्राणां चैकत्वादेतदविरुद्धमित्याह—**आत्मन इति**।।८।।

पादानां मात्राणां च मध्ये विश्वाख्यविशेषस्याकाराख्यविशेषत्वं निगमयति—**तत्रेति**। विश्वाकारयोरेकत्वं सादृश्ये सत्यारोपयितुं शक्यमन्यत्र सत्येव तस्मिन्नारोपसंदर्शनात्, तथा च किं तदारोपप्रयोजकं सादृश्यमिति ३० पृच्छति—**केनेति**। सामान्योपन्यासपरां श्रुतिमवतारयति—**आहेति**। व्याप्तिमेवाकारस्य श्रुत्युपन्यासेन व्यनक्ति—**अकारेणेति**। अध्यात्माधिदैविकयोरेकत्वं पूर्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं श्रुत्यवष्टम्भेन स्पष्टयति—**तथेति**। किं च सामान्यद्वारा वाच्यवाचकयोरेकत्वमारोप्यं न भवति, तयोरेकत्वस्य प्रागेवोक्तत्वादित्याह—**अभिधानेति**।

---

१. सोऽयमात्मा—इत्यस्य श्रीब्रह्मादिषु नियामकतया स्थित इत्यर्थस्तु अशब्दार्थः। सः ब्रह्मत्वेनोक्ताभिन्नः अयं जीव इत्यर्थस्य स्पष्टतरत्वात्। 'स्थूलभुक्' इत्यादौ भुङ्क्ते भोजयति चेति व्याख्यातम्— ३५ ईश्वरपरत्वात्। सुषुप्तिस्थान इत्यादावपि एकीभूतो वैश्वानरतैजसाभ्यां संश्लेषविशेषरूपैकीभावं प्राप्तः प्रज्ञानघनः प्रज्ञापितो घनः जीवः येन सः' इतीश्वरपरमेव। प्राज्ञः प्रकर्षेण ज्ञापयतीति ईश्वर एव प्राज्ञः। सर्वमिदं न ऋजु।

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वा, उत्कर्षति
ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद।।१०।।
सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा
मिनोति ह वा इदꣳसर्वमपीतिश्च भवति य एवं वेद।।११।।

आदिरस्य विद्यत इत्यादिमत् यथैवाऽऽदिमदकाराख्यमक्षरं तथैव वैश्वानरस्तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य। ५
तदेकत्वविदः फलमाह–आप्नोति ह वै सर्वान् कामानादिः प्रथमश्च भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः।।

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया मात्रा। केन सामान्येनेत्याह–उत्कर्षात्। अकारादुत्कृष्ट इव ह्युकारस्तथा तैजसो विश्वादुभयत्वाद्वाऽकारमकारयोर्मध्यस्थ उकारस्तथा विश्वप्राज्ञयोर्मध्ये तैजसोऽत उभयभाक्त्वसामान्यात्। विद्वत्फलमुच्यते–उत्कर्षति ह वै ज्ञानसन्ततिम्। विज्ञानसन्ततिं वर्धयतीत्यर्थः। समानस्तुल्यश्च मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति। अब्रह्मविदस्य कुले न भवति य एवं वेद।।१०।। १०

सुषुप्तस्थानः प्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया मात्रा। केन सामान्येनेत्याह सामान्यमिदमत्र। मितेर्मितिर्मानं मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्यां प्रस्थेनेव यवाः। तथोङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे। अपीतेर्वा। अपीतिरप्यय एकीभावः। ओङ्कारोच्चारणेऽन्त्येऽक्षर एकीभूताविवाकारोकारौ। तथा विश्वतैजसौ सुषुप्तिकाले प्राज्ञे। अतो वा सामान्यादेकत्वं प्राज्ञम-

अनुभूतिस्वरूपाचार्यटीका १५

यद्यप्यकारस्य सर्वव्यापकत्वात् तत्त्वत उत्कृष्टत्वं तथापि मात्रापाठक्रमेणोकारस्योत्तरत्वादुत्कृष्टत्वमित्याह—**उत्कृष्ट इव हीति**।।१०।। ओमिति नैरन्तर्योच्चारणे मकारे प्रविश्याकारोकारौ मकारान्निर्गच्छत इवेत्यर्थः।

आनन्दगिरिटीका

सामान्यान्तरमाह—**आदिरिति**। तदेव स्फुटयति—**यथैवेति**। उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादादिमत्त्वमकारस्य द्रष्टव्यम्। विश्वस्य पुनरादिमत्त्वं तैजसप्राज्ञावपेक्ष्याऽऽद्यस्थाने वर्तमानत्वादित्यर्थः। उक्तस्य सामान्यान्तरस्य फलं २० दर्शयति—**तस्मादिति**। किमर्थमित्थं सामान्यद्वारा तयोरेकत्वमुच्यते? तद्विज्ञानस्य फलवत्त्वादित्याह—**तदेकत्वेति**। सादृश्यविकल्पादेव फलविकल्पः।।९।।

द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं व्यपदिशति—**स्वप्नेत्यादिना**। यथा प्रथमपादस्य प्रथममात्रायाश्चैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं सत्येव सामान्ये वक्तव्यम्, तदभावे तदारोपायोगादिति पृच्छति—**केनेति**। सामान्योपन्यासपूर्वकमेकत्वारोपं साधयति—**आहेति**। अकारस्य सर्ववाग्व्यापकत्वेनोत्कृष्टत्वस्य २५ स्पष्टत्वात्कथं तस्मादुकारस्योत्कर्षो वर्ण्यते, तत्राऽऽह—**अकारादिति**। अकारस्योत्कर्षे वास्तवेऽपि पाठक्रमादुकारस्योत्कर्षवत्त्वमौपचारिकम्। इवकारश्चामुमर्थमुपोद्बलयति। यथाऽकारादुकारस्योत्कर्षो दर्शितस्तथा विश्वात् तैजसस्योत्कर्षो वक्तव्यः, सूक्ष्माभिमानिनः स्थूलाभिमानिनः सकाशादुत्कर्षस्य युक्तत्वादित्याह—**अकारेति**। उकारतैजसयोर्न प्रत्येकमुभयत्वमेकत्वस्योभयत्वव्याघातादित्याशङ्क्य व्याकरोति—**अकारेति**। मध्यस्थत्वादुकारतैजसयोरुभयभाक्त्वं सामान्यं तस्मात् तयोरेकत्वं शक्यमारोपयितुमित्याह—**अत इति**। यथोक्तैकत्वविज्ञानं फलवत्त्वादुपादेयमिति ३० सूचयति—**विद्वदिति**। ज्ञानसन्ततेरुत्कर्षो नाम कुतश्चित्तस्याः भेदावेदनं तस्येष्टत्वाभावे कथं फलत्वमित्याशङ्क्य व्याचष्टे—**विज्ञानेति**। पक्षद्वयतुल्यत्वमेव प्रकटयति—**अप्रद्वेष्य इति**। सादृश्यभेदेन फलभेदमावेद्य द्विविधसादृश्यप्रयुक्तैकत्वविज्ञानफलमाह—**अब्रह्मविदिति**।।१०।।

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वमुपन्यस्यति—**सुषुप्तेति**। पूर्ववदेकत्वप्रयोजकमत्रापि प्रश्नपूर्वकमुपवर्णयति—**केनेत्यादिना**। मानमेव विवृणोति—**मीयते इति**। ओमित्योङ्कारस्य नैरन्तर्येणोच्चारणे सत्यकारोकारौ प्रथमं ३५ मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः। एकीभावमेव स्फोरयति—**ओङ्कारेति**। मकारवत्प्राज्ञेऽपि तदस्ति सामान्यमित्याह—**तथेति**। उक्तस्यापि सामान्यस्य फलमाह—

(गौडपादीयकारिकाः)

अत्रैते श्लोका भवन्ति–

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम्। मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च।।१९।।**
**तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम्। मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम्।।२०।।**
५ **मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम्। मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च।।२१।।**
**त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः। स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः।।२२।।**

कारयोः। विद्वत्फलमाह–मिनोति ह वा इदं सर्वं जगद्याथात्म्यं जानातीत्यर्थः। अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः। अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम्।।११।।

विश्वस्यात्वमकारमात्रात्वं यदा विवक्ष्यते तदाऽऽदित्वसामान्यमुक्तन्यायेनोत्कटमुद्भूतं दृश्यत इत्यर्थः। १० अत्वविवक्षायामित्यस्य व्याख्यानं मात्रासंप्रतिपत्ताविति। विश्वस्याकारमात्रात्वं यदा संप्रतिपद्यत इत्यर्थः। आप्तिसामान्यमेव चोत्कटमित्यनुवर्तते चशब्दात्।।१९।।

तैजसस्योत्वविज्ञान उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः। उभयत्वं च स्फुटमेवेति। पूर्ववत्सर्वम्।।२०।।

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्ये इत्यर्थः।।२१।।

१५ यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः स पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति।।२२।।

अनुभूतिस्वरूपाचार्यटीका

अङ्गे[१] स्तुतिः परार्थत्वादित्युक्तत्वात् नेदं भूतार्थं फलवचनमित्याह—**अत्रावान्तरेति**।।११।।

आनन्दगिरिटीका

२० **अतो वेति**। सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह—**विद्वदिति**। अविदुषोऽपि जगद्विषयज्ञानमस्तीत्याशङ्क्य विशिनष्टि—**जगद्याथात्म्यमिति**। तद्याथात्म्यं चाव्याकृतत्वम्। प्रलयभवनमनिष्टत्वान्न फलमित्याशङ्क्याऽऽह—**जगदिति**। तत्र तत्रैकत्वज्ञाने फलभेदकथनादुपासनाभेदमाशङ्क्याङ्गेषु फलभेदश्रुतेरर्थवादत्वमुपेत्याऽऽह—**अत्रेति**। पादानां मात्राणां च क्रमादेकत्वविज्ञाने फलकथनं सर्वान् पादान् मात्राश्च सर्वाः स्वात्मन्यन्तर्भाव्य प्रधानस्य ब्रह्मध्यानस्य साधनं यदोङ्काराख्यमक्षरं तस्य स्तुतावुपयुज्यते। तेन च तदेवैकमुपासन- २५ मितरस्य तदङ्गत्वान्नोपास्तिभेदकत्वमित्यर्थः।।११।।

पादानां मात्राणां च यदेकत्वं सनिमित्तं श्रुत्योपन्यस्तं तत्र श्रुत्यर्थविवरणरूपान् पूर्ववदेव श्लोकानवतारयति—**अत्रेति**। प्रथमपादस्य प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति—**विश्वस्येति**। **उक्तन्यायेना**ऽऽदिरस्येत्यादाविति शेषः। पुनरुक्तिपरिहारद्वारा विवक्षितमर्थमाह—**अत्वेति**। अनुवृत्तिद्योतकं दर्शयति—**चशब्दादिति**।।१९।।

द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वारोपप्रयोजकद्वयं श्रुत्युक्तं व्यनक्ति—**तैजसस्येति**। स्फुटमिति क्रिया- ३० विशेषणम्। **तथाविधमित्यस्यार्थं** स्फुटमित्याह—**स्फुटमेवेति**। उत्वविज्ञान इत्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति। तस्य व्याख्यानं सर्वमित्युच्यते, तत्पूर्ववद् द्रष्टव्यमित्युच्यते—**पूर्ववदिति**।।२०।।

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्रुत्या दर्शितं विशदयति—**मकारेति**। अक्षरार्थस्य पूर्ववदेव सुज्ञानत्वात्तात्पर्यार्थमाह—**मकारत्व इति**।।११।।

विश्वादीनामकारादीनां च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति—**त्रिष्विति**। **यथोक्तस्थानत्रयं** जागरितं स्वप्नः ३५ सुषुप्तं चेति त्रितयं, **तुल्यं** पादानां मात्राणां चेति शेषः। **उक्तं सामान्य**माप्तिरुत्कर्षो मितिरित्यादि। महामुनिरित्यस्यार्थमाह—**ब्रह्मविदिति**।।२२।।

---

१. अङ्ग इति—पू० मी० अ० ४-३-१।

**अकारो नयते विश्वमुकारश्चापि तैजसम्। मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः।।२३।।**

(उपनिषत्)

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोंकार आत्मैव[1] संविशत्यात्मनाऽऽत्मानं य एवं वेद।।१२।।**

इति माण्डूक्योपनिषत् समाप्ता

५

**यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायति तमकारो नयते विश्वं प्रापयति। अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः। तथोकारस्तैजसम्। मकारश्चापि पुनः प्राज्ञं चशब्दान्नयत इत्यनुवर्तते। क्षीणे तु मकारे बीजभावक्षयादमात्र ओङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः।।२३।।**

**अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मन-**

अनुभूतिस्वरूपाचार्यटीका

१०

सामान्यज्ञानं स्तुत्वा तज्ज्ञानवत उपासकस्य फलमाह—**अकारो नयत इति**। अपवाददृष्टिमाश्रित्याह—**नामात्र इति**। सर्वमोङ्कारमात्रमिति ध्यात्वा व्यवस्थितस्य यदेतावन्तं कालं ओमिति त्वया प्रतिपन्नं तच्छुद्धं ब्रह्मैवेत्याचार्योपदेशजनितसम्यग्ज्ञानेन प्राज्ञत्वादिविभागबीजाज्ञानस्य मकारत्वेन गृहीतस्य क्षये शुद्धे ब्रह्मणि व्यवस्थितस्य न क्वचिद् गतिर्विद्यते देशपरिच्छेदाभावात् इत्यर्थः।।२३।।

ओङ्कारसंवेदनं प्रत्यक्चैतन्यं त्रिमात्रेणोङ्कारेणाध्यस्तेन तादात्म्यादोङ्कार उच्यते। तस्य परेण ब्रह्मणा ऐक्यमुत्तरश्रुत्योच्यते। तां व्याचष्टे—**मात्रा यस्य न सन्तीत्यादिना**। अभिधानं वाक्, अभिधेयं मनः चित्तव्यति-

१५

आनन्दगिरिटीका

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति—**अकार इति**। यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिन्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्तव्यप्राप्तिविभागो नास्तीत्याह—**नामात्र इति**। ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम्। विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात्। अकारस्य चाध्येयस्योक्त-फलप्रापकत्वायोगादित्याशङ्क्याऽऽह—**अकारेति। तदालम्बनं** तत्प्रधानमिति यावत्। अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसहिरण्यगर्भप्राप्तिर्भवतीत्याह—**तथेति**। यश्च मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाव्याकृतप्राप्तिर्युक्तेत्याह—**मकारश्चेति**। क्रियापदानुवृत्तिरुभयत्र विवक्षिता। चतुर्थपादं व्याचष्टे—**क्षीणे त्विति**। स्थूलप्रपञ्चो जागरितं विश्वश्चेत्येतत्त्रितयमकारमात्रं, सूक्ष्मप्रपञ्चः स्वप्नस्तैजसश्चैतत्त्रितयमुकारमात्रं, प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चेत्येतत्त्रितयं मकारमात्रम्। तत्रापि पूर्वं पूर्वमुत्तरोत्तरभावमापद्यते। तदेवं सर्वमोङ्कारमात्रमिति ध्यात्वा स्थितस्य यदेतावन्तं कालमोमितिरूपेण प्रतिपन्नं तत्परिशुद्धं ब्रह्मैवेत्याचार्योपदेशसमुत्थसम्यग्ज्ञानेन पूर्वोक्तसर्वविभागनिमित्ताज्ञानस्य मकारत्वेन गृहीतस्य क्षये ब्रह्मण्येव शुद्धे पर्यवसितस्य न क्वचिद् गतिरुपपद्यते परिच्छेदाभावादित्यर्थः।।२३।।

२०

२५

प्रत्यक्चैतन्यमोङ्कारसंवेदनं त्रिमात्रेणोङ्कारेणाध्यस्तेन तादात्म्यादोङ्कारो निरुच्यते। तस्य परेण ब्रह्मणैक्यम-मात्रादिश्रुत्या विवक्ष्यते। तामवतार्य व्याकरोति—**अमात्र इत्यादिना**। केवलत्वमद्वितीयत्वम्। विशेषणान्तरमुपपाद-

---

१. 'आत्मैव संविशत्यात्मनाऽऽत्मानम्' इत्यस्य परमते आत्मना परमात्मनाऽनुगृहीतो जीवात्मा तमेवाप्नो-तीत्यर्थ इत्युक्तम्। अस्माकं तु आत्मा जीव परमात्मना अभेदेन एकीभवतीत्यर्थः। तस्यैव सर्वेषामात्म-रूपत्वात् सङ्गच्छते। तेषां तु जीवे रूढस्य ब्रह्मणि लक्षणेति विशेषः। संवेशो अभेदेन लयः स्वरसः। माध्वमते तु—ओमित्येतच्छब्दवाच्यं ब्रह्म अक्षरमित्युच्यते। इदं च सर्वं गुणपूर्णमित्यर्थः। अत्र ओङ्काररूपाक्षरस्य शब्दात्मकस्य सर्वाभिन्नत्वं वाच्यवाचकाभेदेनोपपन्नम्। ततश्च ओमित्येतत्प्रतिपाद्यमिति लक्षणाङ्गीकारः। सर्वमिति सामानाधिकरण्येनाभेदो भासते। गुणपूर्णमित्यर्थस्तु स्वकल्पित एव।

३०

३५

**सयोः क्षीणत्वादव्यवहार्यः। प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रि-पादः आत्मैव। संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद। परमार्थदर्शी ब्रह्मवित् तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते। तुरीयस्याबीजत्वात्। न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पो बुद्धिसंस्कारात् पुनः पूर्ववत् तद्विवेकिनामुत्थास्यति। मन्दमध्यमधियां तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां ५ संन्यासिनां मात्राणां पादानां च क्लृप्तसामान्यविदां यथावदुपास्यमान ओङ्कारो ब्रह्मप्रतिपत्तय आलम्बनीभवति। तथा च वक्ष्यति–"आश्रमास्त्रिविधा हीने"त्यादि।।१२।।**

इति माण्डूक्यमूलमन्त्रभाष्यम्

अनुभूतिस्वरूपाचार्यटीका

रिक्तार्थाभावस्य वक्ष्यमाणत्वात्, तयोर्मूलाविद्याक्षयेण क्षीणत्वादव्यवहार्य इत्यर्थः। उक्तैक्यज्ञानस्य फलमाह—**एवं** १० **यथोक्तेत्यादिना**। ननु यथा सुषुप्ते "सता सोम्य तदा सम्पन्नो भवती"ति श्रुतेः परमात्मानं प्रविष्टोऽपि पुनर्जायते तथा ब्रह्मविदोऽपि पुनर्जन्म स्यादित्याशङ्क्याह—**तृतीयं बीजभावमिति**। एवमोङ्कारद्वारेण शुद्धब्रह्मात्मैक्यविदोऽ-पुनरावृत्तिफलमुक्त्वा मन्दमध्यमाधिकारिणां फलमाह—**मन्दमध्यमधियां त्विति**।।१२।।

इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता।।

आनन्दगिरिटीका

१५ यति—**अभिधानेति**। अभिधानं वाक्, अभिधेयं मनः चित्तातिरिक्तार्थाभावस्याभिधास्यमानत्वात् तयोर्मूलाज्ञानक्षयेण क्षीणत्वादिति हेत्वर्थः। अव्यवहार्यश्चेदात्मा नास्त्येवेत्याशङ्क्य विकारजातविनाशावधित्वेनाऽऽत्मनोऽवशेषान्नैव-मित्याह—**प्रपञ्चेति**। तस्य च सर्वानर्थाभावोपलक्षितस्य परमानन्दत्वेन पर्यवसानं सूचयति—**शिव इति**। तस्यैव सर्वद्वैतकल्पनाधिष्ठानत्वेनावस्थानमभिप्रेत्याऽऽह—**अद्वैत इति**। ओङ्कारस्तुरीयः सन्नात्मैवेति यदुक्तं तदुपसंहरति—**एवमिति**। यथोक्तं विज्ञानं पादानां मात्राणां चैकत्वम्, न च पादा मात्राश्च तुरीयात्मन्योङ्कारे सन्ति, पूर्वपूर्व-२० विभागश्चोत्तरोत्तरान्तर्भावेन क्रमादात्मनि पर्यवस्यतीत्येवंलक्षणतद्वता(?) प्रयुक्तः सन्नोङ्कारो मात्राः पादांश्च स्वस्मिन्नन्त-र्भाव्यावस्थितस्याऽऽत्मनो भेदमसहमानस्तद्रूपो भवतीत्यर्थः। उक्तैक्यज्ञानस्य फलमाह—**संविशतीति**। सुषुप्ते ब्रह्मप्राप्तस्य पुनरुत्थानवन्मुक्तस्यापि पुनर्जन्म स्यादित्याशङ्क्याऽऽह—**परमार्थेति**। सुषुप्तस्य पुनरुत्थानं बीजभूता-ज्ञानस्य सत्त्वादुपपद्यते। इह तु बीजभूतमज्ञानं तृतीयं सुषुप्ताख्यं दग्ध्वैव तेषामात्मानं तुरीयं प्रविष्टो विद्वानिति नासौ पुनरुत्थानमर्हति। कारणमन्तरेण तदयोगादित्यर्थः। तुरीयमेव पुनरुत्थानबीजभूतं भविष्यतीत्याशङ्क्य कार्यकारण-२५ विनिर्मुक्तस्य तस्य तदयोगान्नैवमित्याह—**तुरीयस्येति**। मुक्तस्यापि पूर्वसंस्कारात्पुनरुत्थानमाशङ्क्य दृष्टान्तेन निराचष्टे—**न हीति**। **पूर्ववदि**त्यविवेकावस्थायामिवेत्यर्थः। **तद्विवेकिनां** रज्जुसर्पविवेकविज्ञानवतामिति यावत्। बुद्धिसंस्कारादित्यत्र बुद्धिशब्देन सर्पभ्रान्तिर्गृह्यते। उत्तमाधिकारिणामोङ्कारद्वारेण परिशुद्धब्रह्मात्मैक्यविदामपुनरा-वृत्तिलक्षणमुक्तं फलम्। इदानीं मन्दानां मध्यमानां च कथं ब्रह्मप्रतिपत्त्या फलप्राप्तिरित्याशङ्क्याऽऽह—**मन्देति**। तेषामपि क्रममुक्तिरविरुद्धेत्यर्थः। तत्रैव वाक्यशेषानुकूल्यं कथयति—**तथा चेति**।।१२।।

३० इति माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता।।

---

अयमात्मा ब्रह्मेत्यस्य प्रत्यक्षदृष्टस्य जीवस्य ब्रह्माभेदार्थकत्वे स्पष्टं प्रतीयमाने ब्रह्मादिशरीरेषु आदान-कर्तृत्वेन स्थित आत्मा ब्रह्मेत्यर्थोक्तिः अशब्दार्थः, अयमित्यस्य "इदमः प्रत्यक्षगतं" इत्यादिना प्रत्यक्षदृष्टपरत्वात्।

चतुर्थं मन्यन्ते स आत्मा—इत्यनेन चतुर्थपादो यो निष्प्रपञ्चः स आत्मेत्युक्तं भवति। स चतूरूप ३५ आत्मा विज्ञेयः इति व्याख्यानं तु न सङ्गतम्, पूर्वप्रकृतचतुर्थपादपरामर्शित्वात्तच्छब्दस्य। "नात्मानं न परांश्चैव न सत्यं नापि चानृतं, प्राज्ञः किञ्चन संवेत्ती"त्युक्तेः अज्ञ एव प्राज्ञः। तस्य ईश्वराभेदः "एष सर्वज्ञ" इति अभेदध्यानार्थमुक्तः इति ध्येयम्।

(अथ गौडपादीयकारिका:)

**अत्रैते श्लोका भवन्ति–**

**ओंकारं पादशो विद्यात् पादा मात्रा न संशयः। ओंकारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत्।।२४।।**
**युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्। प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्।।२५।।**
**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः। अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः।।२६।।** ५
**सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च। एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्।।२७।।**

**पूर्ववत् अत्रैते श्लोका भवन्ति–यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोङ्कारं पादशो विद्यादित्यर्थः। एवमोङ्कारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत् कृतार्थत्वादित्यर्थः।।२४।।**

**युञ्जीत समादध्याद् यथाव्याख्याते परमार्थरूपे प्रणवे चेतो मनः। यस्मात् प्रणवो ब्रह्म निर्भयम्। न हि तत्र सदा युक्तस्य भयं विद्यते क्वचित्, ''विद्वान्न बिभेति कुतश्चन'' इति श्रुतेः।।२५।।** १०

**परापरे ब्रह्मणी प्रणवः, परमार्थतः क्षीणेषु मात्रापादेषु पर एवाऽऽत्मा ब्रह्मेति। न पूर्वं कारणमस्य विद्यत इत्यपूर्वः। नास्यान्तरं भिन्नजातीयं किञ्चिद् विद्यत इत्यनन्तरः। तथा बाह्यमन्यन्न विद्यत इत्यबाह्यः। अपरं कार्यमस्य न विद्यत इत्यनपरः। 'सबाह्याभ्यन्तरो ह्यजः' सैन्धवघनवदित्यर्थः।।२६।।**

**आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः सर्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य, यथा मायाव्यादयः एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव तदात्मभावं व्यश्नुत इत्यर्थः।।२७।।** १५

अनुभूतिस्वरूपाचार्यटीका

**पूर्ववदिति।** यथा पूर्वश्रुत्यर्थप्रकाशकाः श्लोका आचार्येण प्रणीतास्तथोत्तरेऽपि श्लोका इत्यर्थः।।२४।।

ओङ्कारं पादशो ज्ञात्वेत्यनेन प्रमाणविचारचतुरस्य प्रमाणज्ञानेनैव सर्वद्वैतापवादकेन कृतकृत्यतोक्ता। अथेदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतामुपदिशति—**युञ्जीतेत्यादिना**।।२५।।

मन्दाधिकारिणां मध्यमाधिकारिणां च कीदृशः प्रणवो ध्येय इत्यत आह—**प्रणवो हीति।** उत्तमाधिकारिणां च कीदृशः सम्यग्ज्ञानगोचर इत्यत आह—**अपूर्व इति**।।२६।। अपूर्वत्वादिविशेषणसिद्धये हेतुमाह—**सर्वस्येति**।।२७।। २०

आनन्दगिरिटीका

यथा पूर्वमाचार्येण श्रुत्यर्थप्रकाशकाः श्लोकाः प्रणीतास्तथोत्तरेऽपि श्लोकाः श्रुत्युक्तेऽर्थ एव सम्भवन्तीत्याह—**पूर्ववदिति।** ओङ्कारस्य पादशो विद्या कीदृशीत्याशङ्क्याऽऽह—**पादा इति।** पादानां मात्राणां चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोङ्कारं ब्रह्मबुद्ध्या ध्यायतो भवति कृतार्थतेति दर्शयति—**ओङ्कारमिति। तस्मात्** पादानां मात्राणां चान्योन्यमेकत्वादित्यर्थः। तदेकत्वं पुरस्कृत्योङ्कारमुभयविभागशून्यं ब्रह्मबुद्ध्या जानीयादित्याह—**ओङ्कारमिति।** उत्तरार्धस्य तात्पर्यमाह—**एवमिति**।।२४।। २५

प्रणवानुसन्धानकुशलस्य प्रणवज्ञानेनैव सर्वद्वैतापवादकेन कृतार्थता भवतीत्युक्तम्। इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतां कथयति—**युञ्जीतेति।** ननु मनःसमाधानं ब्रह्मणि कर्तव्यम्; किमिति प्रणवे तत्कर्तव्यतोच्यते, तत्राऽऽह—**प्रणव इति।** सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति—**प्रणवे नित्येति।** समाधानविषयमाह—**यथेति।** तुरीयरूपं यथेत्युच्यते। तत्र हेतुमाह—**यस्मादिति।** तदेव साधयति—**न हीति।** तत्र तैत्तिरीयकश्रुत्यानुकूल्यमाह—**विद्वानिति**।।२५।। ३०

कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानां चाधिकारिणां ध्येयो भवतीत्याशङ्क्याऽऽह—**प्रणवो हीति।** उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति, तत्राऽऽह—**अपूर्व इति।** परापरब्रह्मात्मना प्रणवो मन्दमध्यमाधिकारिणोर्ध्येयतामुपगच्छतीति पूर्वार्धं व्याचष्टे—**परेति।** उत्तमाधिकारिणस्तु सर्वविशेषशून्यमेकरसं प्रत्यग्भूतं यद् ब्रह्म तद्रूपेण प्रणवः सम्यग्ज्ञानाधिगम्यो भवतीत्युत्तरार्धं विभजते—**परमार्थत इत्यादिना।** उक्तेऽर्थे प्रमाणं सूचयति—**सबाह्येति**।।२६।। ३५

यदोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तम्, तत्र हेतुमाह—**सर्वस्येति।** यथोक्तविशेषणं प्रणवं प्रत्यञ्चं प्रतिपद्य कृतकृत्यो भवतीत्याह—**एवं हीति।** पूर्वार्धं व्याकरोति—**आदीति।**

**प्रणवं हीश्वरं विद्यात् सर्वस्य हृदि संस्थितम्। सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति।।२८।।**
**अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः। ओंकारो विदितो येन स मुनिर्नेतरो जनः।।२९।।**

**स मुनिर्नेतरो जन इति।।**

**इति माण्डूक्योपनिषदर्थाविष्करणपरासु गौडपादीयकारिकासु प्रथममागमप्रकरणम्।।**

५ **सर्वप्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये स्थितमीश्वरं प्रणवं विद्यात् सर्वव्यापिनं व्योमवदोङ्कारमात्मानमसंसारिणं धीरो बुद्धिमान् मत्वा न शोचति। शोकनिमित्तानुपपत्तेः। ''तरति शोकमात्मवित्'' इत्यादिश्रुतिभ्यः।।२८।।**

**अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रा परिच्छित्तिः साऽनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्वद्वैतोपशमत्वादेव शिवः। ओङ्कारो यथाव्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिः। नेतरो जनः शास्त्रविदपीत्यर्थः।।२९।।**

१० इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतावागमशास्त्रविवरणे गौडपादीयकारिकासहितमाडूक्योपनिषद्भाष्ये प्रथममागमप्रकरणम्।।

अनुभूतिस्वरूपाचार्यटीका

ध्यायिनो हृदयदेशं विधत्ते—**प्रणवं हीति**। तत्त्वदर्शिनो देशाद्यनवच्छिन्नवस्तुदर्शनादर्थप्राप्तं शोकाभावफलमनुवदति—**सर्वव्यापिनमिति**।।२८।। उक्तब्रह्मविदं स्तौति—**अमात्र इत्यादिना**।।२९।।

१५ इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते गौडपादीयभाष्यटिप्पणे प्रथमं प्रकरणम्।।

आनन्दगिरिटीका

सर्वस्यैवोत्पद्यमानस्योत्पत्तिस्थितिलया यथोक्तप्रणवाधीना भवन्ति। अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः। तत्र परिणामवादं व्यावर्त्य विवर्तवादं द्योतयितुमुदाहरति—**मायेति**। अनेकोदाहरणमुत्पद्यमानस्यानेकविधत्वबोधनार्थम्। प्रणवस्य प्रत्यगात्मत्वं प्राप्तस्याविकृतस्यैव स्वमायाशक्तिवशाज्जगद्धेतुत्वमित्यत्र दृष्टान्तमाह—**यथेति**। यथा मायावी
२० स्वगतविकारमन्तरेण मायाहस्त्यादेरिन्द्रजालस्य स्वमायावशादेव हेतुः, यथा वा रज्ज्वादयः स्वगतविकारविरहिणः स्वाज्ञानादेव सर्पादिहेतवस्तथाऽयमात्मा प्रणवभूतो व्यवहारदशायां स्वाविद्यया सर्वस्य हेतुर्भवति। अतो युक्तं तस्य परमार्थावस्थायां पूर्वोक्तविशेषणवत्त्वमित्यर्थः। द्वितीयार्धं विभजते—**एवं हीति**। पूर्वोक्तविशेषणसम्पन्नमिति यावत्। ज्ञानस्य मुक्तिहेतोः सहायान्तरापेक्षा नास्तीति सूचयति—**तत्क्षणादेवेति**। तदात्मभावमित्यत्र तच्छब्देनापूर्वादिविशेषणं परमार्थवस्तु परामृश्यते।।२७।।

२५ ब्रह्मबुद्ध्या प्रणवमभिध्यायतो हृदयाख्यं देशमुपदिशति—**प्रणवमिति**। परमार्थदर्शिनस्तु देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकं शोकाभावं 'तत्र को मोहः कः शोक' इत्यादिश्रुतिसिद्धमनुवदति—**सर्वव्यापिनमिति**। हृदयदेशे प्रणवभूतस्य ब्रह्मणो ध्येयत्वे हेतुं सूचयति—**स्मृतिप्रत्ययेति**। **बुद्धिमानिति** विवेकित्वमुच्यते। **मत्वेति** साक्षात्कारसम्पत्तिर्विवक्ष्यते। विवेकद्वारा तत्त्वसाक्षात्कारे सति शोकनिवृत्तौ हेतुमाह—**शोकेति**। तस्य हि निमित्तमात्माज्ञानम्। तस्याऽऽत्मसाक्षात्कारतो निवृत्तौ शोकानुपपत्तिरित्यत्र प्रमाणमाह—**तरतीति**। आदिशब्देन 'भिद्यते
३० हृदयग्रन्थि'रित्यादिश्रुतिर्गृह्यते।।२८।।

ओङ्कारं तुरीयभावमापन्नं यः प्रतिपन्नस्तं स्तौति—**अमात्र इति**। यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभागी न पुरुषार्थभाग् भवतीति विद्यारहितं निन्दति—**नेतर इति**। पादविभागस्य मात्राविभागस्य चाभावादोङ्कारस्तुरीयः सन्नमात्रो भवतीत्याह—**अमात्र इति**। ननु कथमनन्ता परिच्छित्तिरोङ्कारस्य तुरीयस्योच्यते। न हि तत्र परिच्छित्तिरेवास्तीत्याशङ्क्याऽऽह—**नैतावत्त्वमिति**। अनर्थात्मकद्वैतसंस्पर्शाभावादप्रतिबन्धेन परमानन्दत्वं
३५ तस्मिन्नाविर्भवतीत्यभिप्रेत्याऽऽह—**सर्वेति**। **यथाव्याख्यातः** पूर्वार्धेनोक्तविशेषणवानित्यर्थः। ननु यथोक्तप्रणवपरिज्ञानरहितस्यापि शास्त्रपरिज्ञानवत्त्वान्न जन्मोपलक्षितसंसारभाक्त्वेन पुरुषार्थासिद्धिः। मैवम्। शास्त्रविदोऽपि तत्त्वज्ञानाभावे मुख्यपुरुषार्थासिद्धि[द्धे]रित्यभिप्रेत्याऽऽह—**नेतर इति**। तदेवं प्रणवद्वारेण निरुपाधिकमात्मानमनुसन्दधानस्य पुरुषार्थपरिसमाप्तिर्नेतरेषां बहिर्मुखाणामिति स्थितम्।।२९।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां माण्डूक्योपनिषदाविष्करणपरगौडपादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणम्।।

## अथ गौडपादीयकारिकासु वैतथ्याख्यं द्वितीयं प्रकरणम्

**ॐ। वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः। अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना।।१।।**
**अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति। प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते।।२।।**

ॐ। ज्ञाते द्वैतं न विद्यत इत्युक्तम्, 'एकमेवाद्वितीय'मित्यादिश्रुतिभ्यः। आगममात्रं तत्। तत्रोपपत्त्याऽपि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते–वैतथ्यमित्यादिना। वितथस्य भावो वैतथ्यम्, असत्यत्वमित्यर्थः। कस्य? सर्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानाम्। आहुः कथयन्ति मनीषिणः प्रमाणकुशलाः। वैतथ्ये हेतुमाह–अन्तःस्थानात्। अन्तः शरीरस्य मध्ये स्थानं येषाम्। तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादयो न बहिः शरीरात्। तस्मात् ते वितथा भवितुमर्हन्ति। नन्वपवरकाद्यन्तरुपलभ्यमानैर्घटादिभिरनैकान्तिको हेतुरित्याशङ्क्याऽऽह–संवृतत्वेन हेतुनेति। अन्तः संवृतस्थानादित्यर्थः। न ह्यन्तः संवृते देहान्तर्नाडीषु पर्वतहस्त्यादीनां सम्भवोऽस्ति। न हि देहे पर्वतोऽस्ति।।१।।

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धम्। यस्मात् प्राच्येषु सुप्त उदक्षु स्वप्नान् पश्यन्निव दृश्यते इत्येतदाशङ्क्याऽऽह। न देहाद् बहिर्देशान्तरं गत्वा स्वप्नान् पश्यति। यस्मात् सुप्तमात्र एव देहदेशाद् योजनशतान्तरिते मास-मात्रप्राप्ये देशे स्वप्नान् पश्यन्निव दृश्यते। न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति। अतोऽदीर्घत्वाच्च कालस्य न स्वप्नदृग् देशान्तरं गच्छति। किं च प्रतिबुद्धश्च वै सर्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते। यदि च स्वप्ने

अनुभूतिस्वरूपाचार्यटीका

"ब्रह्मैव सर्वमात्मैव सत्प्रकाशावशेषकः। हेयोपादेयभावोऽयं न सन् स्वप्नवदीर्यते।।"

अनुमानतोऽपि विमत-प्रपञ्चनिचयवैतथ्यनिश्चयाय सम्मतमुदाहरणं व्याप्तिग्रहणस्थानं वक्तव्यमित्यभिप्रेत्य सर्वसत्यत्ववादिनं प्राभाकरमुद्दिश्याह—**वैतथ्यं सर्वभावानामिति**। न केवलं वृद्धप्रसिद्ध्यैव वैतथ्यं स्वप्नस्य, किन्तु हेतुबलादपीत्याह—**अन्तःस्थानादिति**। स्वप्नभावा न सत्याः, देशपरिच्छिन्नत्वे सत्युचितदेशविधुरत्वात्। ये सत्या न ते तथा, यथा जाग्रद्भावा इत्यभिप्रेत्याह—**न ह्यन्तः संवृत इति**।।१।।

आनन्दगिरिटीका

ॐ।। आगमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्य द्वैतस्य मिथ्यात्वमर्थादुक्तम्। इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि प्रतिपत्तुं सुशकमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तसिद्ध्यर्थं तस्मिन् वृद्धसंमतिमाह—**वैतथ्यमिति**। न केवलमागमोक्तिवशादेव स्वप्नमिथ्यात्वं, किं तु युक्तितोऽपीत्याह—**अन्तःस्थानादिति**। पूर्वोत्तरप्रकरणयोः सम्बन्धसिद्ध्यर्थं पूर्वप्रकरणे वृत्तं संक्षिप्यानुवदति—**ज्ञात इति**। आदिशब्देन 'यत्र हि द्वैतमिव भवती'त्यादिश्रुतिर्गृह्यते। तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरं प्रकरणमनर्थकमित्याशङ्क्याऽऽह—**आगमेति**। यद् द्वैतमिथ्यात्वं पूर्वमुक्तं **तदागममात्रम्** आगमप्राधान्येनाधिगतम्। न युक्तितः सिद्धम्। तस्मिन्नागमतोऽवगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगन्तव्यमिति प्रकरणान्तरं प्रारब्धमित्यर्थः। प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात् तदधीनविचारानन्तरं तर्काधीनविचारस्य सावकाशाद् युक्तं पौर्वापर्यं पूर्वोत्तरप्रकरणयोरित्युक्तम्। संप्रति श्लोकाक्षराणि योजयति—**वितथस्येत्यादिना**। बाह्या घटादयः; सुखादयस्त्वाध्यात्मिका भावाः। शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यत्रानुभवं प्रमाणयति—**तत्र हीति**। तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं, व्यभिचारादित्याशङ्कामनूद्य परिहरति—**नन्वित्यादिना**। हेत्वन्तरशङ्कां वारयति—**अन्तरिति**। यद्यपि देहान्तः सङ्कुचिते देशे स्वाप्ना भावा भवन्ति तथाऽपि कथं तेषां मृषात्वमित्यत आह—**न हीति**। अन्तरित्युक्तं स्फुटयति—**संवृत इति**। तमेव सङ्कुचितं देशं विशेषणान्तरेण स्फोरयति—**देहान्तर्नाडीष्विति**। उक्तमर्थं कैमुतिकन्यायेन स्फुटयति—**न हीति**। यदा देहेऽपि पर्वतादयो न संभाव्यन्ते तदा तदन्तर्वर्तिनीषु नाडीष्वतिसूक्ष्मासु तेषां सम्भावना नास्तीति किमु वक्तव्यमित्यर्थः। स्वाप्ना भावाः सत्या न भवन्ति, उचितदेशशून्यत्वात्, रजतभुजङ्गादिवदिति भावः।।१।।

देहाद् बहिरेव देशान्तरं गत्वा स्वाप्नानां भावानामुपलम्भात् तेषां देहान्तः संवृते नाडीप्रदेशे दर्शनमसम्प्रतिपन्नमित्याशङ्क्य परिहरति—**अदीर्घत्वाच्चेति**। बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह—**प्रतिबुद्धश्चेति**। व्यावर्त्यामा-

**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम्। वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम्।।३।।**

**देशान्तरं गच्छेद् यस्मिन्देशे स्वप्नान् पश्येत् तत्रैव प्रतिबुध्येत। न चैतदस्ति। रात्रौ सुप्तोऽहनीव भावान् पश्यति। बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत। न च गृह्यते। गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः। न चैतदस्ति तस्मान्न देशान्तरं गच्छति स्वप्ने।।२।।**

५ **इतश्च स्वप्नदृश्या भावा वितथाः। यतोऽभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं युक्तितः श्रुतौ "न तत्र रथा" इत्यत्र। [१]तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयंज्योतिष्ट्व-प्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः।।३।।**

अनुभूतिस्वरूपाचार्यटीका

उचितकालविधुरत्वाच्च वैतथ्यमित्याह—**रात्रौ सुप्त इति**। प्रबुद्धपुरुषान्तरविसंवादादपि न सत्यत्व-
१० मित्याह—**यैश्च सङ्गत इति**।।२।।

जागरिते सूर्याद्यालोकानां वागादिकरणानाञ्च प्रकाशकानां सम्भवादात्मनैव स्वयंप्रकाशेन सर्वं प्रकाश्यत इति न निश्चेतुं शक्यते। स्वप्ने तु सर्वप्रकाशनसाधनोपरमेऽपि वासनामयस्य मनःप्रभृतेः यत्स्फुरणं तच्चैतन्य-ज्योतिस्सद्भावकृतमित्यनन्याधीनप्रकाशत्वमात्मनो दर्शयितुं श्रुत्या रथाद्यभावो दर्शितः। तदपि न्यायतः प्राप्तस्य वैतथ्यस्य द्योतकं लिङ्गं भवतीत्याह—**अभावश्चेति**।।३।।

१५ आनन्दगिरिटीका

शङ्कामनुवदति—**स्वप्नेति**। तेषां देहान्तः सङ्कुचिते नाडीदेशे स्थितिदर्शनान्मिथ्यात्वमित्येतदप्यसम्प्रतिपन्नमित्यत्र हेतुमाह—**यस्मादिति**। **पश्यन्निवेति** स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते। एतच्छब्देन चोद्यं परामृश्यते। स्वप्नद्रष्टा गत्वा स्वप्नान्न पश्यतीत्यत्र हेतुमाह—**यस्मादिति**। इवशब्दस्तु पूर्ववत्। तथाऽपि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्धारितमित्याशङ्क्याऽऽह—**न चेति**। स्वप्नः सत्यो न भवति उचितकालविकल-
२० त्वात् सम्प्रतिपन्नवदित्यभिप्रेत्य फलितमाह—**अत इति**। इतश्च न देहाद् बहिर्देशान्तरे स्वप्नदर्शनमित्याह—**किं चेति**। सर्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान्पश्यन्नकस्मादेव प्रतिबद्धो न तत्रास्ति किं तु शयनदेशे वर्तते। तथाऽपि गत्वा स्वप्नदर्शने काऽनुपपत्तिरित्याशङ्क्याऽऽह—**यदि चेति**। अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्व-मुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति—**रात्राविति**। यद्यपि रात्रौ निद्रामुपगतस्तथाऽपि भावानहनि पश्यन्निव तिष्ठति सुप्तः संहृतचक्षुरादिकरणोऽपि पश्यति। शयानोऽपि पर्यटनं प्रतिपद्यते। यद्यपि सहायविहीनः सुप्तस्तथाऽपि बहुभिः
२५ सहायैः स्वप्नानुपलभते। तस्मादुचितस्य कालस्य कारणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात् तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः। स्वप्नमिथ्यात्वे हेत्वन्तरमाह—**यैश्चेति**। सहदर्शिभिरगृह्यमाणत्वं स्वप्नद्रष्टुरसम्प्रतिपन्नमित्या-शङ्क्याऽऽह—**गृहीतश्चेदिति**। पुरुषान्तरसंवाददर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति—**तस्मान्नेति**।।२।।

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह—**अभावश्चेति**। 'न तत्र रथा न रथयोगा न पन्थानो
३० भवन्ती'त्यादिश्रुत्या स्वप्ने स्वयंज्योतिष्ट्वमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभाव-द्योतकन्यायपुरःसरं श्रूयते। अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्यभावानां मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति। तथा च स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः। हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—**इतश्चेति**। इतःशब्दार्थमेव स्फुटयति—**यत इति**। ज्ञेयाभावे ज्ञानाभावादर्थाज्ज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं चशब्दः। श्रूयते 'न तत्रे'त्याद्यायां श्रुताविति सम्बन्धः। न्यायपूर्वकमिति व्याचष्टे—**युक्तित इति**।
३५ योग्यदेशाद्यभावो युक्तिः। तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते, तत्राऽऽह—**तेनेति**। **अन्तः**शरीरमध्यस्थानं नाडीलक्षणम्। तत्रातिसूक्ष्मे संवृतत्वेन सङ्कुचितत्वेनावस्थानं पर्वतादीनामुपलभ्यते, ततश्चोचितदेशाभावो योग्यकाला-भावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां भावानां वैतथ्यम्, तदेव तदनुवादिन्या श्रुत्याऽपि प्रकाशित-

---

१. देहान्तःस्थानेति क्वचित्पाठः। तेनान्तःस्थानेति शुद्धः पाठः।

**अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम्। यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते।।४।।**

**स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः। भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना।।५।।**

जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा। दृश्यत्वादिति हेतुः। स्वप्नदृश्यभाववदिति दृष्टान्तः। यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः। तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनम्। अन्तःस्थानात् संवृतत्वेन च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः। दृश्यत्वमसत्यत्वं चाविशिष्टमुभयत्र।।४।। ५

प्रसिद्धेनैव भेदानां[1] ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाहुर्विवेकिन इति पूर्वप्रमाणसिद्धस्यैव फलम्।।५।।

अनुभूतिस्वरूपाचार्यटीका

प्रतिज्ञाहेतूदाहरणाख्यमवयवत्रयं बहिरेवोपन्यस्य श्लोकस्य तृतीयं पादमुपनयकथनायावतारयति—**यथा तत्र स्वप्न इति। हेतूपनय इति।** हेतोः पक्षधर्मताख्यापनमित्यर्थः। 'तथा जागरिते स्मृत'मिति द्वितीयपादेन प्रतिपक्षप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूत्रितत्याह—**तस्मादिति।** ननु सकलद्वैतानृततत्ववादिनः केन विशेषेण पक्षविपक्षसपक्षविभाग इत्याशङ्क्य आद्यन्ते पादे व्याचष्टे—**अतःस्थानादित्यादिना।** उचितदेशाद्यभावेन स्फुटं मिथ्यात्वं स्वप्नस्येति सपक्षत्वम्, तत्सद्भावेनास्फुटं मिथ्यात्वं जागरितस्येति पक्षत्वमित्यर्थः।।४।। १०

स्वप्नस्य जागरितस्य च मिथ्यात्वे यदोङ्कारप्रकरणे स्वप्ननिद्रायुताविति जागरिते स्वप्नशब्दः प्रयुक्तः, तदुपपन्नं भवतीत्याह—**स्वप्नजागरितस्थाने हीति। समत्वेनेति।** मिथ्यात्वेन तुल्यतयेत्यर्थः।।५।। १५

आनन्दगिरिटीका

मित्याहुर्ब्रह्मविदः। जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादासनादिव्यवहारस्य तन्निमित्तत्वसम्भवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्धारयितुं शक्यते। स्वप्ने पुनः सूर्याद्यभावेऽपि व्यवहारदर्शनात् तस्य च निमित्तापेक्षत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात् तत्राऽऽत्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं 'न तत्रे'त्याद्या श्रुतिः। तया तत्परया न्यायसिद्धं स्वप्नमिथ्यात्वमनुवदन्त्या तदप्रतिपादितमपि प्रकाशितमिष्यते। तथा च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तसिद्धिरित्यर्थः।।३।। २०

उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह—**अन्तःस्थानादिति।** भेदानामित्यत्र सूचितमनुमानमारचयति—**जाग्रदिति।** तृतीयेन पादेन पक्षधर्मत्वं व्याप्तस्य हेतोरुच्यते, तद् दर्शयति—**यथेति।** द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूत्रितमित्याह—**तस्मादिति।** सर्वद्वैतवैतथ्यवादिनां केन विशेषेण पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह—**अन्तःस्थानादिति।** स्वप्नदृश्यानामन्तःस्थानं संवृतत्वं च, न तथा जाग्रद्दृश्यानाम्, तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटम्। सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वम्। जागरितस्य पुनरुचितदेशादिसद्भावादस्फुटं मिथ्यात्वमिति पक्षत्वमित्यर्थः। तर्हि सर्वथा वैषम्याद् दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याऽऽह—**दृश्यत्वमिति।**।।४।। २५ ३०

स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह—**स्वप्नेति।** उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह—**भेदानामिति।** भेदा भिद्यमाना भावाः। तेषामवस्थाद्वयवर्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम्। तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं[2] साधनस्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति—**प्रसिद्धेनैवेति।**।।५।। ३५

---

१. भेदानां ग्राह्यग्राहकत्वेनेति—सूर्यादीनां ग्राहकत्वं घटादीनां ग्राह्यत्वं च उभयत्र समानं उभयेषां सूर्यघटादीनां मिथ्यात्वं च समानमिति भावः।

२. **साधनेति।** स्थानद्वयाविशेषो मिथ्यात्वे साधनम्। अतः साधनस्थानद्वयेत्युक्तम्।

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा। वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः।।६।।**

**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते। तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः।।७।।**

इतश्च वैतथ्यं जाग्रद्दृश्यानां भेदानाम् आद्यन्तयोरभावाद्; यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके। तथेमे जाग्रद्दृश्या भेदाः आद्यन्तयोरभावाद् वितथैरेव मृगतृष्णिकादिभिः सदृशत्वाद् वितथा एव; तथाऽप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः।।६।।

स्वप्नदृश्यवज्जागरितदृश्यानामप्यसत्त्वमिति यदुक्तं तदयुक्तम्। यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तो गमनागमनादिकार्यं च सप्रयोजना दृष्टाः। न तु स्वप्नदृश्यानां तदस्ति। तस्मात् स्वप्न-दृश्यवज्जाग्रद्दृश्यानामसत्त्वं मनोरथमात्रमिति। तन्न; कस्मात्? यस्मात् सप्रयोजता दृष्टा याऽन्नपानादीनां सा स्वप्ने

अनुभूतिस्वरूपाचार्यटीका

विमतं मिथ्या, आदिमत्त्वात् अन्तवत्त्वाच्च स्वप्नवदित्याह—**आदावन्ते चेति**। सत्यत्वग्राहकप्रत्यक्षविरुद्धः पक्ष इत्याशङ्क्याह—**तथाप्यवितथा इव लक्षिता मूढैरिति**। न तावद्विधिप्रत्ययविषयत्वम्, आपाततो बाधाभावो वा सत्यत्वलक्षणं, अतिव्यापकत्वात्; किन्त्वत्यन्ताबाध्यत्वम्। तच्च न वर्तमानसत्त्वग्राहिणा प्रत्यक्षेण ग्रहीतुं शक्यमतो मूढानामेव सत्यत्वग्राहकं प्रत्यक्षम्; न तेनानुमानस्य बाधः, देहव्यतिरिक्तात्मानुमानस्येव देहात्मप्रत्ययेन, वर्ण-नित्यत्वानुमानस्येव वा वर्णक्षणिकत्वप्रत्यक्षेण, ज्वालाविनाशानुमानस्येव वा ज्वालास्थायित्वप्रत्यक्षेण, भ्रमनिवर्त-काप्तवचनस्येव वा भ्रान्तदृष्ट्येत्यर्थः।।६।।

विमतं सत्यम्, अर्थक्रियाकारित्वात्, आत्मवदित्यनुमानेन सप्रयोजनतान्यथानुपपत्त्या अर्थापत्त्या च बाधमा-शङ्क्याह—**सप्रयोजनता तेषामिति**। आपाततोऽर्थक्रियाक्षमत्वञ्चेत् तर्हि अनैकान्तिकत्वम्, अन्यथाप्युपपत्तिश्च, आत्यन्तिकं चेत् तर्हि असिद्धिरेवेत्यर्थः।।७।।

आनन्दगिरिटीका

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह—**आदाविति**। यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धैः स्वप्नादिभिः समत्वान्मिथ्या, कथं तर्हि तेषां घटः सन् पटः सन्नित्यमृषात्वेन प्रतीतिरित्याशङ्क्याऽऽह—**वितथैरिति**। प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपरत्वं श्लोकस्योपन्यस्यति—**इतश्चेति**। विमतं मिथ्याऽऽदिमत्त्वादन्त-वत्त्वात् स्वप्नादिवदित्यर्थः। उक्तानुमानद्रढिम्ने व्याप्तिं कथयति—**यदादाविति**। यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः। व्याप्तिमतः साधनस्य पक्षधर्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं निगमनं दर्शयति—**तथेति**। अनुमानस्य [1]घटादिषु सत्त्वग्राहकप्रत्यक्षविरोधमाशङ्क्य सद् गन्धर्वनगरमितिवत् तस्याऽऽपातिकसत्त्वविषयत्वान्मैव-मित्याह—**तथाऽपीति**।।६।।

स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति, किं तु फलपर्यन्तत्वाभावात्। जागरितस्य फलपर्यन्तत्वान्न मिथ्यात्व-मित्याशङ्क्याह—**सप्रयोजनतेति**। फलपर्यन्तताराहित्योपाधेः साधनव्यापकत्वे फलितमाह—**तस्मादिति**। जाग्रद्दृश्या भावा बहूक्त्या गृह्यन्ते। श्लोकस्य व्यावर्त्यामुपाध्याशङ्कामुत्थापयति—**स्वप्नेति**। जाग्रद्दृश्यानामिव स्वप्नदृश्यानामपि तुल्यं सप्रयोजनत्वमित्युपाधेरसम्भवमाशङ्क्याऽऽह—**न त्विति**। अनुमानस्य सोपाधिकत्वेनासाधकत्वे फलितमाह—**तस्मादिति**। हेतोः सोपाधिकत्वं दूषयति—**तन्नेति**। साधनव्याप्त्यादिदोषादृते नोपाधिनिरसनं सुशक-मित्याह—**कस्मादिति**। [2]फलपर्यन्तताविरहित्वोपाधेः साधनव्याप्तिमाह—**यस्मादित्यादिना**। तामेव विप्रतिपत्ति

---

१. सत्त्वप्रकारकप्रत्यक्षविषयत्वादित्युक्ते गन्धर्वनगरादौ सत्त्वेन ग्राह्ये व्यभिचारः। प्रत्यक्षप्रमाविषयत्वादिति हेतूकरणे सिद्धान्ते घटादिसत्त्वग्रहस्यापि प्रमात्वाभावादसिद्धो हेतुः।

२. जाग्रद्दृश्या मिथ्या दृश्यत्वात् स्वप्नपदार्थवत् इत्यनुमाने फलपर्यन्तत्वाभाव उपाधिः, तस्य दृष्टान्ते साध्यव्यापकत्वात्, पक्षे साधनाव्यापकत्वाच्चेति शङ्का। 'स्वप्ने विप्रतिपद्यत' इत्यनेन उपाधेः साधन-व्यापकत्वमभिहितम्। यतो जाग्रद्दृश्यपदार्थानामपि स्वप्ने फलपर्यन्तत्वाभावोऽनुभूयते। एतदुपपादनं भाष्ये स्पष्टम्।

**अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्। तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः।।८।।**

**विप्रतिपद्यते। जागरिते हि भुक्त्वा पीत्वा च तृप्तो विनिवर्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोपोषितम-भुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा च तृप्तोत्थितस्तथा। तस्माज्जाग्रद्दृश्यानां स्वप्ने विप्रतिपत्ति-र्दृष्टा। अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः।।७।।**

**स्वप्नजाग्रद्भेदयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत्। कस्मात्? दृष्टान्तस्यासिद्धत्वात्। कथम्? न हि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते। किं तर्हि? अपूर्वं[1] स्वप्ने पश्यति चतुर्दन्तं गजमारूढमष्ट-भुजमात्मानं मन्यते। अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने। तन्नान्येनासता सममिति सदेव। अतो दृष्टान्तोऽसिद्धः। तस्मात् स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम्। तन्न। स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत् स्वतः सिद्धम्। किं तर्हि? अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः। यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि** १०

अनुभूतिस्वरूपाचार्यटीका

दृष्टान्तस्य साध्यवैकल्यं शङ्कते—**स्वप्नजाग्रत्स्थानयोरित्यादिना**[2]। तदपूर्वदर्शनं नान्येनासता शुक्तिरूप्यादि-दर्शनेन तुल्यं पूर्वानुभवसंस्काराभावात् अधिष्ठानसंप्रयोगाभावाच्चेत्यर्थः। तच्चापूर्वदर्शनं गृहीतग्रहणरूपत्वात् स्मरणमे-वेत्यभिप्रेत्याह—**अतो दृष्टान्तोऽसिद्ध इति**। अपूर्वदर्शनं न मिथ्येति वदतः कोऽभिप्रायः? किं स्वतः सिद्धं तत्? किं वा प्रामाणिकं? स्वप्ने प्रामाणसामग्र्यभावात् न प्रामाणिकम्। चैतन्यवदबाधप्रसङ्गात् न स्वतः सिद्धमित्याह—**तन्नेति**। १५ कथं तर्हि तत्सिद्धिरित्याकाङ्क्षायामाह—**अपूर्वं स्थानिधर्मो हीति**। यद्यपि जाग्रत्संस्काराभावात्तदपूर्वं तथापि अनादिभ्रमसन्ततिपतितवासनाऽदृष्टनिद्रादिदोषसहकृता द्रष्टृविद्या तेन आकारेण विवर्तमाना द्रष्ट्रा दृश्यत इति द्रष्टृतन्त्रत्वात् तद्धर्म उच्यत इत्यर्थः। यथा सहस्राक्षत्वाद्यस्मद्दृष्ट्या अपूर्वमपि नेन्द्रस्थानाद्यभिमानिनामपूर्वं तथा जाग्रद्दृष्ट्या चातुर्दन्त्याद्यपूर्वमपि न स्वप्नाभिमानिनोऽपूर्वमित्याह—**यथेति**। ननु च य एव स्वप्नदृक् स एव

आनन्दगिरिटीका २०

प्रकटयति—**जागरिते हीति**। उक्तमर्थं दृष्टान्तेन स्पष्टयति—**यथेत्यादिना**। उपाधेः साधनव्याप्तिं निगमयति—**तस्मादिति**। हेतोः सोपाधिकत्वाभावे फलितमाह—**अत इति**। हेतुद्वयमुपसंहरति—**तस्मादिति**।।७।।

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति—**अपूर्वमिति**। यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्षत्वादि धर्मस्तथा यदिदमपूर्वस्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः। तेन दृष्टत्वात् तस्य मिथ्यात्व-सिद्धिरित्यर्थः। कथं तेनैव दृष्टत्वं तत्राऽऽह—**तानयमिति**। यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन २५ मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते तथाऽयं स्वप्नद्रष्टा स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्मत्वाद् रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामुपन्यस्यति—**स्वप्नेति**। समत्वमाद्यन्तवत्त्वादि। अनुमानसिद्धस्यार्थस्यानुमानदोषोक्तिमन्तरेणासत्त्वमयुक्तमिति पृच्छति—**कस्मादिति**। व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह—**दृष्टान्तस्येति**। असिद्धत्वं प्रश्नपूर्वकं विशदयति—**कथमित्यादिना**। अपूर्वदर्शनमेव विवृणोति—**चतुर्दन्तमिति**। **अन्यदपि** त्रिनेत्रत्वादि। दृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति ३० फलितमाह—**तस्मादिति**। दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति—**तन्नेति**। तत्किं स्वभावतः सिद्धं परतो वा? नाऽऽद्यः। जडस्य तदयोगादित्याह—**न तदिति**। द्वितीये तन्मिथ्यात्वमित्यभिप्रेत्य प्रश्नपूर्वकमाद्यपादमवतारयति—**किं तर्हीति**। तद्गतान्यक्षराणि व्याकरोति—**स्थानिन इति**। अपूर्वस्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टान्तेन साधयति—**यथेत्यादिना**।

---

१. जाग्रत्पदार्थानां स्वाप्निकपदार्थानां च साम्यमुक्तं फलपर्यन्तत्वाभावेन दृश्यत्वेन च। ततश्च स्वाप्निकवन्मिथ्यात्वं साधितम्। इदानीं तयोर्वैषम्यं शङ्कते—अपूर्वत्वं स्वाप्निकेषु न तु जाग्रद्दृश्येषु इति ३५ जाग्रत्कालादृश्यपदार्थात्मकत्वमुपाधिर्भवति, तच्च दृष्टान्ते साध्यव्यापकं पक्षे साधनाव्यापकं च। श्लोकेन समाधानम्। पक्षे जाग्रति अपूर्वाः पदार्था अपि चतुर्दन्तगजादयो देशान्तरे दृश्या एव, तत्र गमनेनोपलभ्याश्च। अतः पक्षे साधनव्यापकत्वमुपाधेः सिद्धम्।

२. जाग्रद्भेदयोः। पा०

**स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्। बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः।।९।।**

**जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्। बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः।।१०।।**

**तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः। न स्वतःसिद्धो द्रष्टुः स्वरूपवत्। तानेवंप्रकारानपूर्वान् स्वचित्तविकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते। यथैवेह लोके सुशिक्षितो[1] देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत्। तस्माद् यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वम्। अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम्।।८।।**

**अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह—स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितमसत्। सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतः-कल्पितयोर्वैतथ्यमेव दृष्टम्।।९।।**

**सदसतोर्वैतथ्यं युक्तम्। अन्तर्बहिश्चेतःकल्पितत्वाविशेषादिति। व्याख्यातमन्यत्।।१०।।**

अनुभूतिस्वरूपाचार्यटीका

जाग्रद्दृगिति कस्मात्ते भावाः जागरितेऽपि वासनावशात् नोपलभ्यन्त इत्याशङ्क्याह—**तानेवं प्रकारान् इत्यादिना**। देशान्तरस्थपदार्थदर्शने समर्थोऽपि देवदत्तो यथा गत्वैव पश्यति तथा तन्नाडीदेशं स्वप्नस्थानं गत्वैव पश्यति इत्यर्थः। **प्रेक्षत इति** प्रत्यक्षनिर्देशात् स्मृतित्वाशङ्कां व्यावर्तयति। न हि स्मृतिः पुरोवस्थितापरोक्षार्थावगाहिनी। परोक्षाणामपि निद्रादोषादापरोक्ष्यमिथ्याज्ञानमिष्टं स्यात्। स्मृतित्वे भ्रान्तिबाधप्रसिद्ध्यनुपपत्तिश्च। यदविद्यानिर्मितमारोपितं भाति तदधिष्ठानं स्थानिशब्देनोच्यते। तद्धर्मत्वं नाम तत्तन्त्रत्वम्, तद्विषयत्वमित्यर्थः। न च सम्प्रयुक्तमेवाधिष्ठानं, संवित्स्वप्रकाशतावादिभिः तत्र परेषां जाड्याध्यासाभ्युपगमात्, तज्जाड्यवादिभिश्च तत्र परेषां स्वप्रकाशताध्यासाभ्युपगमात्। गगने च कार्ष्ण्यभ्रमदर्शनादिति।।८।।

मनोरथकल्पिताद्वैलक्षण्यान्यथानुपपत्त्या चार्थापत्त्या विरोधमाशङ्क्य अन्यथाप्युपपत्तिमाह—**स्वप्नवृत्ताव-पीत्यादिना श्लोकद्वयेन**। एतेनेदमपास्तम्। यदाहुः—

आशामोदकतृप्ता ये ये चोपार्जितमोदकाः। रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते।। इति।।९-१०।।

आनन्दगिरिटीका

अपूर्वदर्शनं स्वप्नद्रष्टृधर्मोऽपि चैतन्यवत् किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमित्याह—**न स्वत इति**। उत्तरार्धं विभजते—**तानित्यादिना**। अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेऽपि किमायातमित्याशङ्क्याऽऽह—**तस्मादिति**। स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति—**अतो नेति**। पूर्वस्यापूर्वस्य वा स्वप्नदर्शनस्य स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वाद् दृष्टान्ते साध्यसम्प्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः।।८।।

जाग्रद्दृश्यानां मिथ्यात्वं तेषु[2] सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते—**स्वप्नवृत्ताविति**। श्लोकस्य तात्पर्यार्थमाह—**अपूर्वत्वेति**। स्वप्नदृष्टान्तस्यापूर्वदर्शनत्वप्रयुक्तां साध्यविकलत्वशङ्कां परिहृत्येति यावत्। स्वप्नस्थाने सर्वस्य मिथ्यात्वाविशेषेऽपीत्यर्थः। असत्त्वं परमार्थसद्विलक्षणत्वेन मिथ्यात्वम्। तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह—**उभयोरिति**।।९।।

दार्ष्टान्तिकमाह—**जाग्रदिति**। युक्तत्वे हेतुमाह—**अन्तरिति**। श्लोकस्थानामक्षराणां व्याख्यानमनपेक्षितं व्याख्यातप्रायत्वादित्याह—**व्याख्यातमिति**।।१०।।

---

१. सुशिक्षितो यो देशान्तरमार्ग इति यच्छब्दोऽध्याहार्यः। एवं टीकायामपि। दृष्टान्ते देशान्तरं स्वप्नावस्था, तां गत्वा अपूर्वपदार्थान् पश्यति।

२. जाग्रत्पदार्थाः मिथ्या दृश्यत्वात् स्वाप्नपदार्थवत् इत्यनुमाने 'सदसद्विभागरहितत्वमुपाधिः' इति शङ्का। समाधानं तु; स्वाप्निकेष्वपि सदसद्विभागस्य सद्भावात् दृष्टान्ते साध्यव्यापकत्वमेव नास्ति कुतः उपाधित्वमिति।

**उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि। क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः।।११।।**

**कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया। स एव बुध्यते भेदानिति वेदान्तनिश्चयः।।१२।।**

चोदकश्चाह–स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं क एतानन्तर्बहिश्चेतःकल्पिताबुध्यते। को वै तेषां विकल्पकः। स्मृतिज्ञानयोः क आलम्बनमित्यभिप्रायः, न चेन्निरात्मवाद इष्टः।।११।।

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन्। ५ स्वयमेव च तान्बुध्यते भेदांस्तद्वदेवेत्येवं वेदान्तनिश्चयः। नान्योऽस्ति ज्ञानस्मृत्याश्रयः। न च निरास्पदे एव ज्ञान-स्मृती वैनाशिकानामिवेत्यभिप्रायः।।१२।।

अनुभूतिस्वरूपाचार्यटीका

इदानीं प्रमातृप्रमाणादिव्यवहारसिद्ध्यन्यथानुपपत्त्या कर्तृकार्यव्यवस्थानुपपत्त्या च अर्थापत्त्या विरोधमाशङ्कते— **उभयोरपीत्यादिना**। विकल्पको निर्मातेत्यर्थः। कर्त्रा हि पूर्वानुभूतं स्मृत्वा तज्जातीयं निर्मीयते। अतः स्मृत्या- १० श्रयाक्षेपेण कर्त्राक्षेपो मन्तव्यः। अथाध्यात्मं यः प्रमाता यश्चाधिदैवं कर्ता महेश्वरः तावुभौ स्वाप्नवन्मिथ्यैव, न वस्त्वित्याशङ्क्याह—**न चेदिति**।।११।।

अन्यथाऽप्युपपत्त्या परिहरति—**कल्पयतीति**। यथा कुम्भसृष्टौ कुम्भकारोऽधिष्ठाता तथा नेहान्योऽधिष्ठाताऽ-स्तीत्याह—**स्वयमिति**। यथा च तत्र मृदुपादानं तथा नेहान्यदुपादानमस्तीत्याह—**स्वमात्मानं वक्ष्यमाणभेदाकारं कल्पयतीति**। यथा च तत्र भूभाग आधारोऽस्ति, नेह तथा आधारोऽस्ति यत्रस्थः करोतीत्याह—**आत्मन्येवेति**। १५ परिणामं व्यावर्तयति—**स्वमाययेति**। मायाधिरूढश्चिदात्मा जगन्निर्मातेत्युपपाद्य स एवान्तःकरणे प्रतिबिम्बितः प्रमातेत्याह—**स्वयमेव चेति। तद्वदेवेति**। रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यैवेत्यर्थः। स एवेत्येवकारार्थमाह— **नान्योऽस्तीत्यादिना**।।१२।।

आनन्दगिरिटीका

सर्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या विशेषमाशङ्कते—**उभयोरिति**। कर्तृकरणव्यवस्थानुपपत्त्याऽपि २० विरोधोऽस्तीत्याह—**को वा इति**। विकल्पको निर्मातेति यावत्। श्लोकस्य चोद्यपरत्वं प्रतिजानीते—**चोदक इति**। अक्षरयोजनया प्रथमार्थापत्तिविरोधं स्फोरयति—**स्वप्नेति**। चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं स्फुटयति— **को वै तेषामिति**। कर्ता हि पूर्वानुभूतं स्मृत्वा तज्जातीयान्निर्मिमीते तेन स्मृत्यनुभवाश्रयाक्षेपेण कर्त्राक्षेपो विवक्षित-स्तथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वरित्यर्थः। योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात्प्रमात्रादेरसत्त्वमित्याशङ्क्याऽऽह—**न चेदिति**। यदि प्रमाता कर्ता वा नेष्यते तर्हि नैरात्म्यमिष्ट- २५ मेवाऽऽपद्यते। न च तदेष्टुं शक्यत आत्मनिराकरणस्य दुष्करत्वान्निराकर्तुरेवाऽऽत्मत्वादित्यर्थः।।११।।

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति—**कल्पयतीति**। करणान्तरं व्यवच्छिनत्ति—**आत्मनेति**। कर्मान्तरं व्यावर्तयति—**आत्मानमिति**। कर्त्रन्तरं निवारयति—**आत्मेति**। तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति—**देव इति**। विवर्तवादं द्योतयति—**स्वमाययेति**। सर्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्तृत्वादिव्यवस्था सिध्यतीति भावः। प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह—**स एवेति**। एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि ३० काल्पनिकभेदनिबन्धना सर्वा व्यवस्थेत्यत्र प्रमाणमाह—**इति वेदान्तेति**। यथा घटस्रष्टा कुलालोऽधिष्ठाता मृदोऽन्यो दृष्टो न तथेहान्योऽधिष्ठाताऽस्तीत्याह—**स्वयमिति**। यथा तत्र मृदाख्यमुपादानमधिष्ठातुरन्यदधिगतं न तथाऽत्रान्यदु-पादानमस्तीत्याह—**स्वमात्मानमिति**। तत्र च घटं कुर्वतो भूभागो भवत्याधारो न तथेहाऽऽधारोऽन्योऽस्तीत्याह— **आत्मन्येवेति**। परिणामवादं व्यावर्त्य विवर्तवादं प्रकटयितुं स्वमाययेत्युक्तं, तत्र दृष्टान्तमाह—**रज्ज्वादाविति**। मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्त्वा तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह—**स्वयमेव चेति**। न ३५ च प्रमातृत्वस्य तात्त्विकत्वं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्धारणादित्याह—**तद्वदिति**। कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे 'नेह नानाऽस्ती'त्यादिश्रुतिं प्रमाणयति—**इत्येवमिति**। स एवेत्येवकारार्थमाह— **नान्योऽस्तीति**। यो जगत्स्रष्टा यश्च प्रमाता ततोऽन्यो ज्ञानस्य स्मृतेश्चाऽऽश्रयो नास्ति। चेतनभेदे मानाभावादनुभव-

**विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थितान्। नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः॥१३॥**

**चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः। कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः॥१४॥**

**स कल्पयन्केन प्रकारेण कल्पयतीत्युच्यते। विकरोति नाना करोत्यपरान् लौकिकान्भावान्पदार्थाञ्शब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतान्नियतांश्च पृथ्व्यादीननियतांश्च कल्पनाकालान्बहिश्चित्तः संस्तथाऽन्तश्चित्तो मनोरथादिलक्षणानित्येवं कल्पयति। प्रभुरीश्वर आत्मेत्यर्थः॥१३॥**

५

**स्वप्नवच्चित्तपरिकल्पितं सर्वमित्येतदाशङ्क्यते—यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योन्यपरिच्छेद्यत्वमिति, सा न युक्ताऽऽशङ्का। चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्याः। नान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः। कल्पनाकाल एवोपलभ्यन्त इत्यर्थः। द्वय-**

अनुभूतिस्वरूपाचार्यटीका

यथा कुम्भं चिकीर्षुः कुम्भकारः कुम्भव्यवहारार्हाः व्यक्तीः प्रथमं बुद्धावाविर्भावयति पश्चात् बहिः संपादयति तथा आदिकर्ताऽपि मायालक्षणे स्वचित्ते अव्यक्तरूपेण स्थितान् स्रष्टव्यपदार्थान् सिसृक्षिताकारेण प्रथममाविर्भावयति, पश्चाद् बहिः सर्वप्रतिपत्तृसाधारणरूपेण सम्पादयतीति क्रमं विवक्षन्नाह—**विकरोतीति। कल्पनाकालानिति।** विद्युदादीन् अस्थिरानित्यर्थः॥१३॥

१०

यत्कल्पितं तत्कल्पनाकालादन्यस्मिन् काले नास्ति, जाग्रद्भावास्तु प्रत्यभिज्ञाबलात् कालान्तरेऽपि सन्तीत्यवगम्यते। अतस्तदन्यथानुपपत्त्याऽर्थापत्त्या बाधितं मिथ्यात्वानुमानमित्याशङ्क्यान्यथाऽप्युपपत्तिमाह—**चित्तकाला हीत्यादिना।**

१५

आनन्दगिरिटीका

स्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वादित्यर्थः। ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्याशङ्क्याबाधितप्रसिद्धिविरोधान्मैवमित्याह—**न चेति**॥१२॥

प्रकृतायां कल्पनायां विवक्षितं क्रममुपन्यस्यति—**विकरोतीति।** नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते। प्रतिपित्सितक्रमप्रतिपत्त्यर्थं पृच्छति—**स कल्पयन्निति।** श्लोकाक्षरयोजनया बुभुत्सितं क्रमं प्रत्याययति—**उच्यत इत्यादिना। अन्यांश्चेति।** शास्त्रीयानिति यावत्। चित्तमध्ये वासनारूपेण व्यवस्थितान्। अनभिव्यक्तनामरूपत्वेन व्यवहारायोग्यत्वमाह—**अव्याकृतानिति।** कल्पनाकालान्विद्युदादीनस्थिरानित्यर्थः। बहिश्चित्तो बहिर्मुखो बाह्यान् व्यवहारयोग्यान् पदार्थान् कल्पयति। अन्तश्चित्तस्तु तेभ्यो व्यावृत्तबुद्धिर्मनोरथादिलक्षणानात्मन्येव व्यवहारयोग्यतायै कल्पयतीत्यर्थः। एतदुक्तं भवति। यथा लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्यं चिकीर्षुरादौ व्यवहारायोग्यां व्यक्तिं बुद्धावाविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां सम्पादयति तथैवायमादिकर्ताऽपि मायालक्षणे स्वचित्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान्स्रष्टव्यपदार्थान् प्रथमं सिसृक्षिताकारेणान्तर्विभाव्य पश्चाद्बहिः सर्वप्रतिपत्तृसाधारणरूपेण सम्पादयतीति कल्पनायां क्रमाधिगतिरिति॥१३॥

२०

२५

कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्जाग्रद्भावानां च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याऽऽह—**चित्तेति।** ये कल्पनाकालभाविनो भावा मनस्यन्तर्वर्तन्ते ये च प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति। प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः, कल्पितेऽपि तद्दर्शनादित्यर्थः। श्लोकव्यावर्त्यामाशङ्कां दर्शयति—**स्वप्नवदिति।** यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्यैवेष्यते तथा जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मिथ्यैवेत्येतन्नाद्यापि निर्धारितमित्यत्र हेतुमाह—**यस्मादिति।** आत्माविद्याविवर्तेन चित्तेन तावदाकृतिर्विनिर्मिता मनोरथरूपा मनस्यन्तर्वर्तमाना बही रज्जुसर्पादयश्च ते चित्तेनैव परिच्छिद्यन्ते। ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते। तैः सह वैलक्षण्यं मनसो बहिर्जाग्रद्दृश्यमानानां भावानामन्योन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञागोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः। श्लोकाक्षरैरुत्तरमाह—**सा नेति।** ये मनस्यन्तर्मनोरथरूपा भावास्ते चित्तकाला भवन्तीत्यत्र चित्तकालत्वं विशदयति—**चित्तेत्यादिना।** वाच्यार्थमुक्त्वा विवक्षितार्थमाह—**कल्पनेति।** द्वितीयपादमवतार्य व्याकरोति—**द्वयेति।** ये मनसो बहिरुपलभ्यन्ते ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति

३०

३५

**अव्यक्ता एव येऽन्यस्तु स्फुटा एव च ये बहिः। कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे[1]।।१५।।**

**कालाश्च भेदकाला अन्योन्यपरिच्छेद्याः। यथाऽऽगोदोहनमास्ते यावदास्ते तावद् गां दोग्धि, यावद् गां दोग्धि तावदास्ते। तावानयमेतावान् स इति परस्परपरिच्छेद्यपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकालाः। अन्तश्चित्तकाला बाह्याश्च द्वयकालाः कल्पिता एव ते सर्वे। न बाह्यो द्वयकालत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अत्रापि हि स्वप्नदृष्टान्तो भवत्येव।।१४।।** ५

**यदप्यन्तरव्यक्तत्वं भावानां मनोवासनोमात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषो नासौ**

अनुभूतिस्वरूपाचार्यटीका

अन्योन्यपरिच्छेद्यत्वं नाम स एवायमिति प्रत्यभिज्ञया पूर्वापरकालविशेषितरूपेणावगम्यमानत्वमित्यर्थः। कालस्य भेदो भेदकाल इत्याहिताग्निवत् भेदशब्दस्य पूर्वनिपातः। भेदकालोऽवच्छेदको येषां ते भेदकाला इति विग्रहः[2]। यथा [3]आगोदोहनमास्त इति प्रथममभिज्ञाय पश्चात्प्रत्यभिज्ञानं यावदास्ते तावत् गां दोग्धीत्यादि। पदार्थान् आख्याय वाक्यार्थं १० कथयति—**अन्तश्चित्तकाला इत्यादिना**। जाग्रद्भेदानां मिथ्यात्वं नाम चित्तस्पन्दनमात्रत्वं चेत् तर्हि स्फुटावभासो न स्यात् मनोरथकल्पितवत्। विद्यते च। अतस्तदनुपपत्त्या बाधमाशङ्क्याह—**अव्यक्ता एवेत्यादिना**।।१४-१५।।

आनन्दगिरिटीका

व्युत्पत्तेः। ततश्चान्येन पूर्वेणान्येन चापरेण परिच्छेद्या भिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमाना इत्यर्थः। प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति—**यथेति**। **आगोदोहनं** गोदोहनपर्यन्तमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञाशेषत्वेनाभिज्ञोदाहरणीया। यावता कालेनावच्छिन्नो वर्तते तावता कालेनावच्छिन्नो गोदोहनं निर्वर्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति—**यावदिति**। यावता कालेनायं घटोऽर्थक्रियां निर्वर्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेष तिष्ठतीत्युदाहरणान्तरमाह—**तावानिति**। परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्त्य निर्वृणोत्येतावता कालेनावच्छिन्नः स तिष्ठतीत्यपरमुदाहरणमाह—**एतावानिति**। उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य च परिच्छेदकत्वम्। तथा च ते सर्वे भावा बहिर्दृश्यमाना द्वयकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः। तृतीयपादं व्याचष्टे—**अन्तरिति**। चतुर्थपादार्थमाह—**नेत्यादिना**। बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितो द्वयकालत्वेन कालद्वयावच्छेदेन कृतः प्रत्यभिज्ञायमानत्वरूपो विशेषोऽन्यहेतुको न भवति। कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह—**अत्रापि हीति**। यद्यपि सर्वं जाग्रद्भेदजातं कल्पितं तथाऽपि तत्र यथोक्तो विशेषः स्फुटः सिध्यति स्वप्ने सर्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः।।१४।। २५

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेर्नाविशेषेण मिथ्यात्वमित्याशङ्क्याऽऽह—**अव्यक्ता इति**। ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिताः। मिथ्यैवान्तर्बहिरिन्द्रियभेदनिमित्तः स्फुटत्वास्फुटत्वविशेषः। न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते। मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः। श्लोकाक्षराणि व्याकरोति—**यदपीत्यादिना**। मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वम्। तत्र हेतुमाह—**मन इति**। चक्षुरादिग्राह्यत्वेन मनसो बहिर्भावानां स्फुटत्वं दृष्टं ३० तदेषाममिथ्यात्वकृतमिति शङ्कां वारयति—**नासाविति**। सर्वसम्प्रतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वास्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वममिथ्यात्वं वा प्रयोजयितुं प्रभवतीत्याह—**स्वप्नेऽपीति**। अयं विशेषस्तर्हि केन सिध्यतीत्याशङ्क्य चतुर्थपादार्थमाह—**किं तर्हीति**। मनोमात्रसम्बन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वम्।

---

१. विशेषस्तु = स्फुटावभासस्तु। इन्द्रियान्तरे = बाह्येन्द्रिये। २. अर्शआद्यच्प्रत्ययो बोध्यः।

३. अन्योन्यपरिच्छेद्यत्वे दृष्टान्तः—गोदोहनं पुरुषप्रतीक्षा च। कियत्कालं प्रतीक्षा कृता इत्याकाङ्क्षायां गोदोहनं ३५ यावत् इति समाधानम्। कियत्कालं गोदोहनमित्यनेन पृष्टे यावत्प्रतीक्षेत्युत्तरम्। न चान्योन्याश्रयः, पृच्छकपुरुषभेदात्। द्वयकालाः कालद्वयपरिच्छेद्याः प्रत्यभिज्ञायमानत्वात्। स्वप्नेऽपि प्रत्यभिज्ञानदर्शनात् नेदं सत्यत्वप्रापकमित्यर्थः।

**जीवं कल्पयते पूर्वं ततो भावान्पृथग्विधान्। बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः।।१६।।**

भेदानामस्तित्वकृतः स्वप्नेऽपि तथा दर्शनात्। किं तर्हीन्द्रियान्तरकृत एव। अतः कल्पिता एव जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम्।।१५।।

बाह्याध्यात्मिकानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायां किं मूलमिति? उच्यते। जीवं
५ हेतुफलात्मकम् अहं करोमि मम सुखदुःखे इत्येवंलक्षणम् अनेवंलक्षण एव शुद्ध आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम्। ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान्भान्बाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते। योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति। अतो हेतुकल्पनाविज्ञानाफलविज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानं तदर्थक्रियाकारकतत्फलभेदविज्ञानानि तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानीत्येवं
१० बाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते।।१६।।

अनुभूतिस्वरूपाचार्यटीका

एवं तावन्मिथ्यात्वानुमानस्य प्रत्यक्षादिबाधं परिहृत्येदानीं विशिष्टरूपेण जीवकल्पनामूलत्वमितरकल्पनानामाह—**जीवं कल्पयते पूर्वमित्यादिना**। बाह्याः साध्यसाधनादिभावा आध्यात्मिकज्ञानसुखरागादिकल्पनायां निमित्तं, आध्यात्मिकाश्च ज्ञानसुखरागादयो बाह्यसाध्यसाधनादिकल्पनायां निमित्तम्। एवमितरेतरनिमित्तनैमित्तिकतेत्यर्थः। सति
१५ भोजनादौ तृप्त्यादि भवति, तदभावे न भवतीत्यन्वयव्यतिरेकाभ्यां भोजनादिकं हेतुरिति कल्पनाविज्ञानं जायते, ततः तृप्त्यादिकं फलमिति कल्पना, ततोऽपरेद्युरुभयस्मृतिः ततस्तत्सजातीयकर्तव्यताविज्ञानं, ततस्तादर्थ्येन पाकादिक्रियातण्डुलादिकारकान्ननिष्पत्त्यादिफलविज्ञानानि, तेभ्यः पुनस्तत्स्मृतिरित्येवमित्यर्थः।।१६।।

आनन्दगिरिटीका

बहिर्भावानां तु चक्षुरादिबहिरिन्द्रियसम्बन्धाद्युक्तं स्फुटत्वं तदेष विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः।
२० स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि सम्भवात् प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति—**अत इति**।।१५।।

भवतु सर्वस्य कल्पिततत्वम्। सा पुनः सर्वकल्पना केन द्वारेणेत्याशङ्क्याऽऽह—**जीवमिति**। आत्मा हि सर्वं मायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति। **तत इति**। 'तत्सृष्ट्वा तदेवानुप्राविशदि''ति श्रुतेः स्वयमेव जीवभावमापद्यते। तद्द्वारेण पुनर्नानाविधान् भावान्निर्मिमीते। ज्ञानस्मृतिवैषम्यात्तत्कल्प्येषु भावेषु वैषम्योपपत्तिरित्यर्थः। श्लोकव्यावर्त्यं प्रश्नमुत्थापयति—**बाह्येति**। पदार्थाः साध्यसाधनतया स्थिता बाह्याः, सुखं दुःखं ज्ञानं
२५ रागश्चेत्येवमादयस्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति। बाह्यान्निमित्तीकृत्याऽऽध्यात्मिका भवन्ति। तानपि निमित्तीकृत्येतरे जायन्ते। तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यम्। निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः। श्लोकाक्षरयोजनया परिहरति—**उच्यत इति**। हेतुफलात्मकमित्युक्तमेव व्यनक्ति—**अहमिति**। हेतुफलभावविकलं परिशुद्धमात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति—**अनेवमिति**। आरोपस्याधिष्ठानापेक्षाऽस्तीत्यत्र दृष्टान्तमाह—**रज्ज्वामिवेति**। द्वितीयतृतीयपादौ विभजते—**तत इति**। तादर्थ्येन प्रथमं कल्पितस्य
३० भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः। यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथाऽपि तस्य तत्र कल्पनाविशेषो विशेषहेतुव्यतिरेकेण न सम्भवतीति शङ्कते—**तत्रेति**। चतुर्थपादेनोत्तरमाह—**उच्यत इति**। कल्पितो विशिष्टरूपेणेति शेषः। अधिकृतः स्वामित्वेन सम्बद्धः इत्यर्थः। इतिशब्दः श्लोकाक्षरयोजनासमाप्तिद्योतनार्थः। प्रकृतकल्पनामेव प्रपञ्चयति—**अत इत्यादिना**। सत्यन्नपानाद्युपयोगे तृप्त्यादि भवति, असति न भवतीत्यन्वयव्यतिरेकरूपान्न्यायाद्भोजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यते। ततस्तृप्त्यादिकं फलमिति कल्पनाविज्ञानं जायते। ततोऽपरेद्युरुक्त-
३५ योरुभयोरपि हेतुफलयोः स्मृतिरुद्भवति। ततश्च फलसाधनसमानजातीये कर्तव्यताविज्ञानम्। ततश्चाभिलषिततृप्त्यादिफलार्थत्वेन पाकादिक्रिया तत्कारकं तण्डुलादि तत्फलान्यन्ननिष्पत्त्यादीनि विशेषविज्ञानादीनि भवन्ति। ततो हेत्वादिस्मृतिः। ततस्तदनुष्ठानम्। ततश्च फलम्। इत्यनेन क्रमेण मिथो हेतुहेतुमत्तया कल्पना भवतीत्यर्थः। प्रकृतां कल्पनामुपसंहरति—**एवमिति**।।१६।।

**अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः।।१७।।**

**निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते। रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः।।१८।।**

तत्र जीवकल्पना सर्वकल्पनामूलवित्युक्तं सैव जीवकल्पना किंनिमित्तेति। दृष्टान्तेन प्रतिपादयति—यथा लोके स्वेन रूपेणानिश्चिताऽनवधारितैवमेवेति रज्जुर्मन्दान्धकारे किं सर्प उदकधारा दण्ड इति वाऽनेकधा विकल्पिता भवति पूर्व स्वरूपानिश्चयनिमित्तम्। यदि हि पूर्वमेव रज्जुः स्वरूपेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत्। यथा ५ स्वहस्ताङ्गुल्यादिषु एष दृष्टान्तः। तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वय-रूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदां सिद्धान्तः।।१७।।

रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा "नेति नेति" इति सर्वसंसारधर्मशून्य-प्रतिपादकशास्त्रजनितविज्ञानसूर्यालोककृतात्मविनिश्चयः "आत्मैवेदं सर्वम्" "अपूर्वोऽनपरोऽनन्तरोऽबाह्यः" "सबाह्याभ्यन्तरो ह्यजः" "अजरोऽमरोऽमृतोऽभयः" "एक एवाद्वयः" इति।।१८।। १०

अनुभूतिस्वरूपाचार्यटीका

तत्त्वाज्ञानान्वयव्यतिरेकाभ्यां तन्निमित्तां जीवकल्पनामाह—**अनिश्चितेत्यादिना श्लोकद्वयेन। नेति नेतीति**

आनन्दगिरिटीका

इदानीं जीवकल्पनानिमित्तं निरूपयति—**अनिश्चितेति**। श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्तयति—**तत्रेति**। पूर्वश्लोकः सप्तम्यर्थः। जीवकल्पनाया नित्यत्वायोगात् सनिमित्तत्वस्य वक्तव्यत्वात्तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः १५ अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूताऽपि कल्पना नावकल्पत इत्याशङ्कते—**सैवेति**। उत्तरत्वेन श्लोकाक्षराण्यवतार्य व्याचष्टे—**दृष्टान्तेनेति**। स्वं असाधारणं रूपं रज्जुत्वं तेनेति यावत्। अनवधारितत्वमेव स्फोरयति—**एवमेवेति**। रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः। उक्तावधारणाराहित्ये कारणं सूचयति—**मन्देति। पूर्वं** रज्जुस्वरूपनिश्चयात्प्रागवस्थायामित्यर्थः। सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति—**स्वरूपेति**। एतदेव व्यतिरेकद्वारा विवृणोति—**यदि हीति**। देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते २० तथा पुरोवर्तिन्यपि रज्जुस्वरूपेण निश्चिते नासौ युक्तस्तथा च रज्ज्वज्ञानादेव स भवतीत्यर्थः। उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिदधानश्चतुर्थपादार्थमाह—**एष इति**। हेतुफलादीत्यादिशब्देन कर्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति—**स्वेनेति**। अनारोपितेनेति यावत्। विज्ञप्तेर्विशुद्धत्वं जन्मादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वं चेत्यर्थः। तन्मात्रत्वमयुक्तं सामान्यविशेषभावादित्याशङ्क्याऽऽह—**सत्तेति**। न च तत्रान्यदस्ति सुखमिति मत्वा विशिनष्टि—**अद्वयेति**। सच्चिदानन्दाद्वयात्माविद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति—**इत्येष इति**। २५ अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते 'यत्र हि द्वैतमिव भवति'त्याद्याश्च द्वैतततत्प्रतिभासयोर्मृषात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः।।१७।।

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति—**निश्चितायामिति**। रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्वथा निवर्तते रज्जुमात्रं चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्वस्याऽऽत्माविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवाऽऽत्मतत्त्वं ३० परिशिष्यते तस्मादात्माविद्याविजृम्भिता जीवकल्पनेत्यर्थः। दृष्टान्तभागं व्याचष्टे—**रज्जुरिति**। तद्वदित्यादि व्याकरोति—**तथेति**। सर्वस्यापि संसारात्मनो धर्मस्याऽऽत्मन्यारोपितस्यासत्त्वावेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एवाद्वितीयः शिष्यते। द्वैतं पुनः सर्वमेव व्यावृत्तं भवतीत्यर्थः। आत्मविनिश्चयमेव विशिनष्टि—**आत्मैवेति**। सर्वमिदमात्मैवेत्युक्तेः पूर्णत्वं तस्योच्यते पूर्वभाविना कारणेन संस्पर्शशून्योऽपूर्वः पश्चाद्भाविना कार्येण सम्बन्धविधुरोऽनपरः अन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसस्तस्यैव ३५ प्रत्यक्त्वमबाह्यत्वं कार्यकारणास्पृष्टमुभयकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह—**सबाह्येति**। विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थम्। जन्मादिसम्बन्धाभावे कारणमविद्यासम्बन्धराहित्यं दर्शयति—**अभय इति**। न खल्वविद्या तत्र कारणत्वेन सम्बन्धमनुभवति। तस्य पूर्णत्वेन कारणानपेक्षत्वादित्याह—**एक इति**। द्वैताद्वैतव्यावृत्त्यर्थमवधारणम्।

**प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः। मायैषा तस्य देवस्य यया ऽयं मोहितः स्वयम्॥१९॥**
**प्राण इति प्राणविदो भूतानीति च तद्विदः। गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥२०॥**

**यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति। उच्यते। शृणु, मायैषा तस्याऽऽत्मनो देवस्य। यथा मायाविना विहिता माया गगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकीर्णमिव करोति ५ तथेयमपि देवस्य माया ययाऽयं स्वयमपि मोहित इव मोहितो भवति। "मम माया दुरत्यया" इत्युक्तम्॥१९॥**

अनुभूतिस्वरूपाचार्यटीका

सर्वसंसारधर्मशून्यस्य प्रतिपादकं यच्छास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकः, तत्कृत आत्मविनिश्चयः सर्वमिदमात्मेत्यद्वयरूपः परिशिष्यत इत्यर्थः॥१७-१८॥

**मोहितस्स्वयमिति।** अज्ञाने प्रतिबिम्बरूपेणेत्यर्थः॥१९॥

१० के ते प्राणादयोऽनन्ता भावा इत्याकाङ्क्षायां तानुदाहरति—**प्राण इत्यादिश्लोकैः।** प्राणो जगत्कर्तेति **हैरण्यगर्भीयाः।** ईश्वरो वा प्राणशब्देनोच्यते। तस्य च कारणत्वं **वैशेषिकादयः** प्रतिपन्नाः। तदुभयं कल्पनामात्रम्, मानाभावात्। न तावत् यत्कार्यं तत्सकर्तृकमिति व्याप्तिर्निरूपणं सहते, न हि प्रागसतः सत्तासमवायादिलक्षणं कार्यत्वं चाक्षुषम्, ज्ञानेच्छाप्रयत्नशाली वा कर्ता चाक्षुषः। संप्रयुक्तमात्रावभासिनः प्रागसत्त्वादौ व्यापारानुपपत्तेः। न च मनो बहिर्विषये स्वतन्त्रम्, अत एव नान्वयव्यतिरेकौ। यदा चैकस्यापि न दर्शनस्य सम्भावना तदा कैव कथा १५ भूयो दर्शनस्य। न च कार्यं कृतिमत् इत्यव्यभिचारः कृतावेव व्यभिचारात् अन्यथाऽनवस्थानात्। किञ्च, करोतीत्युक्ते किमित्याकाङ्क्षा न व्यावर्तते। क्रियत इत्युक्ते च केनेति, ततः परस्पराधीननिरूपणत्वादन्योन्याश्रयम्। किञ्च न ज्ञानवत्त्वं इच्छावत्त्वं वा कर्तृपदार्थः सिद्धविषययोरपि तयोः दर्शनात्। यस्य यद्विषया कृतिः स तस्य कर्ता इत्यत्रापि अवस्थितो विषय उद्देश्यो वा? आद्ये घटादेः कर्ता न स्यात्। अन्त्ये च प्रामादिकब्रह्मवधादौ प्रायश्चित्तविधानं न स्यात्। किञ्च विशिष्टानङ्गीकारात् कृत्यादयः प्रत्येकं कर्तृपदार्थाः स्युः। किञ्च कारकाण्युपाददानश्चेत् कर्ता सदैव स्यात् २० तदुपादानञ्च कार्यमेवेति तत्रान्यदुपादेयम्, तत्रापि तथेत्यनवस्था। आश्रयासिद्ध्यादिप्रयोगदूषणञ्च वर्णितमन्यत्र। किञ्च स्वतन्त्रश्चेन्मुक्तानपि बध्नीयात्। परतन्त्रः ईश्वर इति च व्याहतम्। न च सेवापेक्षया फलभेदप्रदः प्रभुरुदाहरणम्। स हि स्वं प्रयच्छन् प्रभुः स्यात्, न तथेश्वरस्य पित्रादिक्रमागतं स्वमस्ति। कर्मेश्वरयोश्चान्योन्यप्रेरणे परम्पराश्रयम्। किञ्च नैकेन ज्ञानेन सर्वज्ञत्वं तस्य स्वाविषयत्वात्, न द्वाभ्यामन्योन्यविषयित्वासिद्धेः, स्वविषयत्वं विना स्वविशेषितासाधकत्वात्। स्वसंवेद्यत्वे च गुणत्वाद्यसिद्धिः। तस्मात्कल्पनामात्रमेतत्—ईश्वरः कर्तेति। भूतानि चत्वारि २५ पृथिव्यप्तेजोवाय्वाख्यानि जगत्कर्तॄणीति **लोकायतिकाः।** तदपि कल्पनामात्रम्। तथा हि—न तानि स्वतःसिद्धानि

आनन्दगिरिटीका

नन्वविद्यायाः निराश्रयत्वोपपत्तेः आश्रयान्तरस्य चासत्त्वात् तत्रैव सा प्रविशतीति चेत् सत्यम्। अविद्वद्दृष्ट्या तस्यास्तत्र प्रवेशोऽपि वस्तुदृष्ट्या नासौ तस्मिन् प्रवेष्टुं प्रभवतीत्याह—**अद्वय इति।**॥१८॥

आत्मनोऽद्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायाप्रतिपत्त्या प्रत्यवतिष्ठते—**प्राणादिभिरिति।** ३० सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह—**मायेति।** चोद्यभागं विभजते—**यदीति।** उत्तरार्धमुत्तरत्वेन व्याकरोति—**उच्यत इति।** मायामेव दृष्टान्तेन स्पष्टयति—**यथेति।** तामेव मायां कार्यद्वारा स्फोरयति—**ययेति।** यथा लौकिको मोहितो मोहपरवशो दृश्यते तथाऽयमात्मा स्वयमेव मायासम्बन्धान्मोहितो भवति। अतो मोहद्वाराऽऽत्मन्येव मायाधिगतिरित्यर्थः। मायाया मोहहेतुत्वं भगवताऽपि सूचितमित्याह—**ममेति।**॥१९॥

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति—**प्राण इति।** ३५ **प्राणो** हिरण्यगर्भस्तटस्थेश्वरो वा स जगतो हेतुरिति प्राणविदो **हैरण्यगर्भाद्या वैशेषिकादयश्च** कल्पयन्ति। तदिदं कल्पनामात्रम्। स्वतन्त्रस्य हिरण्यगर्भस्य सर्वजगद्धेतुत्वे मानाभावात्। पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्, तटस्थेश्वरवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः। कल्पनान्तरं दर्शयति—**भूतानीति चेति।** पृथिव्यप्तेजोवायवस्तत्त्वानि, तानि च चत्वारि भूतानि जगत्कारणानीति **लोकायतिकाः।** तदपि

**पादा इति पादविदो विषया इति तद्विदः। लोका इति लोकविदो देवा इति च तद्विदः।।२१।।**

अनुभूतिस्वरूपाचार्यटीका

जाड्यहानिप्रसङ्गात्। स्वतःसिद्धे च भेदग्राहकप्रमाणाप्रवृत्तेश्चत्वारीत्यनुपपन्नम्। नापि स्वगुणेन सिद्ध्यति, न हि औष्ण्यं वह्निं गोचरयति। स्वविलक्षणसिद्धिकत्वे च तत्त्वातिरेकप्रसङ्ग इति। गुणाः सत्त्वरजस्तमोलक्षणाः साम्येनावस्थिताः कारणमिति—**साङ्ख्याः**। तदपि कल्पनामात्रम्। साम्यावस्थितानां कारणत्वे प्रलयाभावप्रसङ्गात्। वैषम्यभजनमपि स्वभावतः पुरुषसन्निधेर्वा? उभयथापि सदा स्यात्। न चादृष्टादि गुणत्रयातिरिक्तमस्ति साङ्ख्यानाम्, सात्त्विकोऽयं तामसोऽयमिति परविशेषणत्वेन प्रतीतेः न स्वतन्त्रा नित्यागुणा इति।। आत्मा, अविद्या, शिवः इति संक्षेपतस्त्रीणि तत्त्वानीति **शैवाः**। तत्र यदि तावदागमादेव तत्सिद्धिः, अन्योन्याश्रयम्। न चान्यत् तत्र प्रमाणमुपलभ्यते। शिवोऽप्यात्मनोऽन्यश्चेदशिवः स्यात् रज्जुसर्पवत्। अनन्यत्वे तु तत्त्वभेदानुशासनं गुरुशिष्यानुशासनं च न स्यात्।।२०।।

एकस्यात्मनो विश्वादयः पादा इत्यपि कल्पनामात्रम्। निरवयवस्यात्मनोंऽशभेदानुपपत्तेः। विषया एव परमार्थतत्त्वमिति **वात्स्यायनप्रभृतयः**। तदपि भ्रममात्रम्। यत आहुः—

विषस्य विषयाणाञ्च दूरमत्यन्तमन्तरम्। उपयुक्तं विषं हन्ति विषयाः स्मरणादपि।।
चर्मखण्डं द्विधाभिन्नम् अपानोद्गारधूपितम्। तत्र मूढा निमज्जन्ति प्राणैरपि धनैरपि।।

लोका भूर्भुवस्स्वरिति त्रयो वस्तुभूता इति **पौराणिकाः**। तत्र यदि वासस्थानभेदेन त्रित्वं तदाऽऽनन्त्य-प्रसङ्गः, यदि स्वातन्त्र्याभिप्रायेण तच्च कल्पनामात्रम्। आकाशादिपारतन्त्र्यादिति। देवा इन्द्रादयः फलदातार इति **देवताकाण्डीयाः**। तत्र यद्यस्मदादिप्रयत्नमपेक्ष्य त उपकुर्वन्ति तदा भृत्येभ्यो न विशेषः। स्वातन्त्र्येणोपकारकत्वे व्यर्थं तदाराधनम्, देवताप्रसादोऽपि च स्वमनोरथ एव। तद्भक्तानामपि विपत्तिदर्शनात्।।२१।।

आनन्दगिरिटीका

कल्पनामात्रम्। न हि भूतानि स्वतः सिद्धानि, जडत्वविरोधात्। नापि परतः सिद्धानि, स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगाद् वह्निगतौष्ण्यस्य वह्निविषयत्वादर्शनात्। अतो भूतानि जगत्कर्तॄणीति कल्पनैवेत्यर्थः। सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति **सांख्याः** तदपि कल्पनामात्रम्। साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात्। वैषम्यभजनस्य च निर्हेतुकत्वे सदा तदापातात्। सहेतुकत्वे हेतोर्नित्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह—**गुणा इतीति**। कल्पनान्तरमाह—**तत्त्वानीति चेति**। आत्माऽविद्या शिव इति संक्षेपतस्त्रीणि तत्त्वानि सर्वजगत्प्रवर्तकानीति **शैवा** मन्यन्ते। तदपि कल्पनामात्रम्। आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे तत्त्वानां त्रित्वव्याघातादित्यर्थः।।२०।।

एकस्याऽऽत्मनो विश्वादयः पादाः सर्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रम्। निरंशस्याऽऽत्मनोंऽश-भेदानुपपत्तेरित्याह—**पादा इतीति**। **वात्स्यायन**प्रभृतीनां कल्पनां कथयति—**विषया इतीति**। शब्दादयो विषया भूयो भूयो भुज्यमानास्तत्त्वमिति विभ्रममात्रम्। "विषस्य विषयाणां च दूरमत्यन्तमन्तरम्। उपभुक्तं विषं हन्ति विषयाः स्मरणादपि" इति विषयानुसन्धानस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः। भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति **पौराणिकाः**। तदपि कल्पनामात्रम्। स्थानभेदेन त्रित्वे तदानन्त्यस्य दुरुत्तरत्वात् स्वातन्त्र्यस्य चासिद्धत्वादित्याह—**लोका इतीति**। अग्नीन्द्रादयो देवास्तत्तत्फलदातारो नेश्वरस्तथेति **देवता-काण्डीयाः**[1]। तदपि कल्पनामात्रम्। अस्मदादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशेषाभावप्रसङ्गात्। स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात्। तद्भक्तानामपि विपत्तिदर्शनात् तत्प्रसादस्याकिञ्चित्करत्वादित्याह—**देवा इति चेति**।।२१।।

---

१. देवताकाण्डीयाः—सङ्कर्षकाण्डं देवताकाण्डम्। देवता अधिकृत्य विचारप्राचुर्यात् देवताकाण्डत्वं तस्य। पूर्वमीमांसायाः द्वादशाध्याय्याः अनन्तरं तत्रतत्रानुक्तानामवश्यवक्तव्यानां विप्रकीर्णानां न्यायानां प्रतिपादनमत्र दृश्यते। तदिदं जैमिनिना कृतम्। तस्य **देवस्वामिभाष्यं भास्कररायकृता** वृत्तिश्च मुंद्रिते दृश्येते।

**वेदा इति वेदविदो यज्ञा इति च तद्विदः। भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः।।२२।।**

**सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः। मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः।।२३।।**

अनुभूतिस्वरूपाचार्यटीका

वेदाः परमार्थाः इति **पाठकाः**। तदपि कल्पनामात्रम्। नहि लौकिकवर्णव्यतिरिक्ता वेदा उपलभ्यन्ते। न चैकैकस्मिन् वर्णे वेदबुद्धिः। क्रमोऽपि तेषां कल्पनामात्रम्, उच्चारणक्रियाया उपलब्धिक्रियायाश्च प्रतिपुरुषं भेदात् तत्तक्रमद्विशिष्टवेदानन्त्ये 'स एवायं वेद' इति विभ्रममात्रम्। यज्ञा वस्तुभूता इति **कात्यायनप्रभृतयः** ''यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग'' इति। तत्र नैकैकस्य यज्ञशब्दार्थत्वं व्रीह्यादिषु यज्ञबुद्ध्यभावात् समुदायश्चेत्तस्या-वस्तुत्वाद्यज्ञ इति विभ्रममात्रम्।

भोक्ता आत्मेति **साङ्ख्याः**। तत्र भोगो विक्रिया चेत् अनित्यत्वादिप्रसङ्गः, स्वभावश्चेत् सदा स्यादिति। विषयसन्निधौ भोक्तृत्वं भ्रममात्रम्। भोज्यं वस्त्विति **सूपकाराः**। तदपि भ्रममात्रम्। मधुरादिस्वादस्य व्यञ्जनादेः क्षणेन विस्वादतादर्शनात्।।२२।।

सूक्ष्म आत्मेत्य**णुवादिनः**। तत्र युगपत्सकलकलेवरव्यापिवेदनानुसन्धानानुपपत्तिः। अथवा, सूक्ष्मः परमाणु-समुदायः परमार्थं इति **परमाणुवादिनः**। तदपि भ्रममात्रम्। पेषणादिसाध्यपार्थिवादिरजसां नित्यत्वानुपपत्तेः। निरवयवत्वे च संयोगानुपपत्तेः कार्यानुपपत्तिः। अप्रत्यक्षसमवेतस्य च वायुवनस्पतिसंयोगादिवदप्रत्यक्षत्वात् त्र्यणुकादिप्रत्यक्षं न स्यात्। कार्येण च तदनुमानमाश्रयासिद्ध्यादिदोषदुष्टम्, अतिरिक्तकार्यारम्भे च पलपरिमितद्रव्यारब्धं कार्यद्रव्यमधिकपरिमाणं दृश्येत। तस्मात्तदपि कल्पनामात्रमिति।

स्थूलो देह एवात्मेति **लोकायतिकभेदः**। तत्र मृतसुषुप्तयोरपि चैतन्यं स्यात्, सङ्घातस्य तादवस्थ्यात्। वाय्वादीनां चैकैकस्य चैतन्यादर्शनात्। सङ्घातस्य चावस्तुत्वादिति। मूर्तस्त्रिशूलादिधारी परमार्थ **इत्यागमिकाः**। तत्रास्मदादिशरीरवत् मूर्तस्य पाञ्चभौतिकत्वानुमानात् नानादित्व लीलाविग्रहकल्पनं च भ्रममात्रं, विग्रहाभावे लीलाया एवासम्भवात्। अमूर्तः [सर्वाकारशून्यः निःस्वभावः] परमार्थ इति **शून्यवादिनः**। तदपि कल्पनामात्रम्। निःस्वभावः परमार्थ इति व्याघातात्।।२३।।

आनन्दगिरिटीका

ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति **पाठका** वदन्ति। तदपि कल्पनामात्रम्। न हि वेदा लौकिकवर्ण-व्यतिरिक्ता दृश्यन्ते। क्रमवतामेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात्। क्रमश्चोच्चारणोपलब्ध्योरन्यतरगतो वर्णेष्वारोप्यते। तथा च तथाविधक्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात् कुतो वेदानां परमार्थतेत्याह—**वेदा इति**। ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति **बोधायन**प्रभृतयो **याज्ञिका** मन्यन्ते। तदपि भ्रान्तिमात्रम्। 'यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग' इत्यत्रैकैकस्मिन् यज्ञविज्ञानाभावात् समुदायस्यावस्तुत्वादित्याह—**यज्ञा इति चेति**। भोक्तैवाऽऽत्मा न कर्तेति **सांख्याः**। तत्र भोगो यदि विक्रिया स्वीक्रियते, तर्हि कथं नानित्यत्वादिप्रसङ्गः? स्वभावत्वे सदा स्यादिति विषयसन्निधौ भोक्तृत्वं भ्रान्तिरेवेत्याह—**भोक्तेति चेति**। **सूपकारास्तु** भोज्यं वस्त्विति प्रतिजानते तदपि न। मधुरादिरसव्यञ्जनादेस्तदैवान्यथात्वदर्शनादैकरूप्यासम्भवादित्याह—**भोज्यमिति चेति**।।२२।।

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित्। तत्र। युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेरित्याह—**सूक्ष्म इतीति**। स्थूलो देहोऽहंप्रत्ययादात्मेति '**लोकायतभेदः**। तच्च न। मृतसुषुप्तयोरपि सङ्घाताविशेषाच्चैतन्य-प्रसङ्गात्। एकैकस्य च भूतस्य चैतन्यादर्शनात् सङ्घातस्य चावस्तुत्वादित्याह—**स्थूल इति चेति**। मूर्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवती**त्यागमिकाः**। तदपि भ्रान्तिमात्रम्। अस्मदादिशरीरवत् तस्यापि शरीरस्य पाञ्चभौतिकत्वात्। लीलाविग्रहकल्पनं च विग्रहाभावे लीलाभावादयुक्तमित्याह—**मूर्त इति**। अमूर्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति **शून्यवादिन**स्तदपि कल्पनामात्रम्। परमार्थो निःस्वभावश्चेति व्याघातादित्याह—**अमूर्त इति चेति**।।२३।।

**काल इति कालविदो दिश इति च तद्विदः। वादा इति वादविदो भुवनानीति तद्विदः।।२४।।**
**मन इति मनोविदो बुद्धिरिति च तद्विदः। चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः।।२५।।**

अनुभूतिस्वरूपाचार्यटीका

कालः परमार्थ इति **ज्योतिर्विदः**। तन्न। कालैक्ये मुहूर्तादिव्यवहारो न स्यात्। नानात्वेऽपि न स्वातन्त्र्यम्। उदयकाल इत्यादिक्रियाविशेषत्वेन[षितत्वेन] प्रतीतेः। न च क्रियाधर्मत्वमेव, काले क्रियोदयात्। अन्यथा कालानवच्छिन्नत्वेन क्रियाया नित्यत्वापातात्। किञ्च, यदि मुहूर्तः परमार्थो **ज्योतिर्विदः** किन्न स्वाराज्यं, तच्छास्त्र-प्रणेतॄणां च विपत्तिः प्रसिद्धैव। किञ्च प्रवृत्तफलस्य कर्मणोऽवश्यभोग्यत्वात् व्यर्थो मुहूर्तस्तस्मात् काल इति कल्पनामात्रम्। दिशः परमार्था इति **स्वरादिविदः**। तदपि भ्रममात्रं, तद्विदामपि पराजयदर्शनात् तदुपदिष्टदिक्-स्थानां सर्वदैव जयः स्यात्, क्षणान्तरेऽपि दिक्स्वभावालोपादिति। धातुवादमन्त्रवादप्रभृतयः परमार्था इति **व्याडिप्रभृतयः**। तदपि तेषां विभ्रममात्रम्। ताम्रादिस्वभावे स्थिते नष्टे वा कनकादिभावायोगात्। यदि रसः स्वावय-वैस्ताम्रादिवर्णं तिरस्कृत्य कनकादिवर्णं दर्शयेत् तदा जपाकुसुमसंज्ञिनि[सङ्गि] स्फटिकादिरक्ततावत् कनकादिभावस्य मृषात्वाद् रसावयवापगमेऽपगमानुमानात्। मर्त्यस्य च शरीरस्य रसेनाजरामरत्वमित्यपि व्यामोहमात्रम्। मन्त्रवादेऽपि कालदष्टो न जीवति। अकालदष्टः स्वयमेवोत्तिष्ठति। क्वचिज्जपतः फलदर्शनस्य काकतालीयत्वात् नियततायाश्चादर्शनाच्च परप्रतारणार्थवैतेति। भुवनानि वस्तूति चतुर्दशेति **भुवनकोशविदः**। तच्च कल्पनामात्रं को हि तानि दृष्ट्वा समागतः। न च महानुभाववचनमेव शरणं तेषां विप्रतिप्रतिदर्शनादिति।।२४।।

मन आत्मेति **लोकायतिकभेदः**। तत्र च न क्लेशप्राप्तिः कस्यापि स्यात्। स्वतन्त्रस्य स्वानर्थसङ्कल्पानु-पपत्तेः। बुद्धिर्बाह्यविषयाकारा। चित्तम् बाह्यविषयाकारशून्यं विज्ञानं स्वसंवेद्यम्। ते वस्तुनी इति **बौद्धभेदाः** भ्रान्ताः। सुषुप्ते व्यभिचारात्। वेद्यस्य च घटादिवत् स्वव्यतिरिक्तवेद्यत्वादिति।

धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति **जैमिनिप्रभृतयः**। तच्च कल्पनामात्रम्। यतो यस्मिन् प्राणिनिकाये यो यः प्रशस्यते स तेषां धर्मः। यश्च निन्द्यते सोऽधर्मः, न त्वग्निहोत्रादिरेव। यतो भरतखण्ड-व्यतिरिक्तभूभागनिवासिनां सुखदुःखोत्कर्षौ दृश्येते तदभावेऽपि। न च ता भोगभूमय इति वाच्यम्। तदुद्देशेन विधानादर्शनात्। यदि च कालत्रयान्यतमकालावच्छिन्नौ तौ तदाऽपाक्षीत् यजतीत्यादेरपि प्रयोगप्रसङ्गः(?)। साध्यैक-

आनन्दगिरिटीका

कालः परमार्थ इति **ज्योतिर्विदः**। तच्च न। कालैक्ये मुहूर्तादिव्यवहारायोगात्। तन्नानात्वेऽपि न स्वातन्त्र्यम्। अन्यविषयत्वेन प्रतीतेः। उदयकालः इत्यादिना क्रियाधर्मत्वेन प्रतीतेः स्फुटत्वात्। न च क्रियाधर्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथा कालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह—**काल इतीति**। [1]**स्वरोदयविदस्तु** दिशः परमार्था इत्याहुः। तदपि भ्रान्तिमात्रम्। तद्विदामपि पराजयदर्शनादित्याह—**दिश इति चेति**। धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित्। तदपि कल्पनामात्रम्। ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात्। मन्त्रवादेऽपि कालदष्टो न जीवति अकालदष्टः स्वयमेवोत्थास्यतीत्यभ्युपगमाद्व्यामोह-मात्रमित्याह—**वादा इतीति**। भुवनानि चतुर्दश वस्तूनीति **भुवनकोशविदः**। तदपि कल्पनामात्रम्। तेषामदृष्टत्वात्। न च तेभ्यस्तद्दर्शनम्। तेषां मिथो विप्रतिपत्तिदर्शनादित्याह—**भुवनानीति**।।२४।।

मन एवाऽऽत्मेति **लोकायतभेदः**। तदपि भ्रान्तिमात्रम्। तस्य स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः। अस्वातन्त्र्ये च घटवदनात्मत्वात् करणत्वाच्च दीपवदात्मत्वायोगादित्याह—**मन इति**। बुद्धिरेवाऽऽत्मेति बौद्धाः। तेषामपि भ्रान्तिमात्रमेव तत् सुषुप्ते व्यभिचाराद् वेद्यस्य च घटवदतिरिक्तवेद्यत्वादित्याह—**बुद्धिरिति**। चित्तमेव बाह्याकारशून्यं विज्ञानम्। तदेवाऽऽत्मेत्यपरे। तत्रापि प्रागुक्तन्यायाविशेषात्तुल्यं भ्रान्तित्वमित्याह—**चित्तमिति**। धर्माधर्मौ

---

१. **स्वरोदयविदः** यस्यां दिशि स्वरविशेषो ध्वनिरूपः श्रूयते तस्यां दिशि गमने विजय इति निर्णये कुशला इत्यर्थः।

**पञ्चविंशक इत्येके षड्विंश इति चापरे। एकत्रिंशक इत्याहुरनन्त इति चापरे।।२६।।**
**लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः। स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे।।२७।।**

अनुभूतिस्वरूपाचार्यटीका

रूपत्वे न कदाचिन्निष्पत्तिः स्यात्। अथानुबन्धनिष्पत्त्या निष्पत्तिरुच्यते। कोऽर्थः? किं तस्यैव निष्पत्तिः उत तयोरपि। ५ प्रथमे न सिद्धिश्चरमे घटान्न विशेषः। किञ्च, सुखदुःखसाधनसम्पत्तिः धर्माधर्मानुष्ठायिनामेवेति नियन्तुं न शक्यं, तदभावेऽपि सोमेश्वरवदीश्वरादीनां (?) तद्दर्शनादिति।।२५।।

मूलप्रकृतिः प्रधानं, महदहङ्कारपञ्चतन्मात्राणि सप्त प्रकृतिविकृतयः, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च विषयाः एकं अन्तःकरणमिति षोडश विकाराः, पुरुषस्तूपलब्धिमात्रस्वभाव इति पञ्चविंशतिसंख्याकः प्रपञ्च इति **सांख्याः**। एतदपि कल्पनामात्रम्। यतो विशेषणं व्यावर्तकं भविष्यति। व्यावर्त्यं च प्रमितं न वा? प्रथमे न शक्यं १० व्यावर्तयितुम्। चरमे व्यर्थं विशेषणं, न चान्यत्रास्तीति शक्यमवधारयितुम्। यतः **पातञ्जलाः**—ईश्वरमधिकं पश्यन्तः षड्विंशतिः पदार्था इति कल्पयन्ति। रागाविद्यानियतिकालकलामायाधिकास्त एवैकत्रिंशत् पदार्था इति **पाशुपताः**। अनन्तः पदार्थ भेद इति **संवर्तप्रभृतयः**। तस्मान्मुनीनामेव विप्रतिपत्तिदर्शनाद्विप्रतिपत्तेस्त्वज्ञानमूलत्वात् पदार्थभेदवर्णनं वादिनां कल्पनामात्रमिति।।२६।।

लोकानुरञ्जनमेव तत्त्वमिति **लौकिकाः**। तदपि कल्पनामात्रं, भिन्नरुचिर्हि लोकः तमनुरञ्जयितुं विश्वेश्वरोऽप्य- १५ समर्थः। आश्रमाः पदार्थाः इति **दक्षप्रभृतयः** मन्यन्ते। 'मेखलाजिनदण्डैर्हि **ब्रह्मचारी** च लक्ष्यते। **गृहस्थो** वेदयष्टिभ्यां नखलोमैर्वनाश्रितः। त्रिदण्डेन यतिश्चैव लक्षणादि पृथक् पृथगिति'। तदपि कल्पनामात्रम्। वेषस्य आश्रमशब्दार्थत्वे तु शूद्रादेरपि प्रसङ्गात्। जातिमूलाश्चाश्रमाः, सा च दुर्लक्ष्या। तदुक्तम्—

अनादाविह संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना।। इति।

संस्कारोऽपि देहसमवायी चेत् नामुत्रोपभुज्येत। आत्मसमवायी चेत्तन्न, असङ्गत्वात्, विकारित्वे अनित्यत्वादि- २० प्रसङ्गाच्चेति। **लैङ्गिका[लैङ्गाः]** वैयाकरणाः स्त्रीपुन्नपुंसकं शब्दजातं तत्त्वमाहुः। तत्र किं स्त्र्यादिःस्वभाव औपाधिको

आनन्दगिरिटीका

विधिनिषेधचोदनागम्यौ परमार्थाविति **मीमांसकाः**। तदपि कल्पनामात्रम्। देशकालादिषु धर्माधर्मयोर्विप्रतिपत्ति- दर्शनादित्याह—**धर्मेति**।।२५।।

प्रधानं मूलप्रकृतिः। महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, २५ पञ्च विषयाः, मनश्चैकमिति षोडश विकाराः। पुरुषस्तु दृशिस्वभाव इति पञ्चविंशतिसंख्याकः प्रपञ्चो वस्त्विति **सांख्याः**। तच्च कल्पनामात्रम्। पञ्चविंशतिविशेषणस्याव्यावर्तकत्वे वैयर्थ्याद् व्यावर्तकत्वे च व्यावर्त्यप्रमित्य- प्रमित्योरनुपपत्तेरित्याह—**पञ्चविंशक इति। पातञ्जलाः** पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिः पदार्था इति कल्पयन्ति। तदयुक्तम्। ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः। अनन्तर्भावे च घटवदनीश्वरत्वप्रसङ्गादित्याह— **षड्विंश इति चेति। पाशुपतास्तु** रागाविद्यानियतिकालकलामायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते। तन्न। ३० क्लेशत्वेऽपि रागाविद्ययोरवान्तरभेदवदस्मितादेरपि तद्भिन्नत्वेन संख्यातिरेकात् तस्य रागोपलक्षितत्वे तस्याप्यविद्यो- पलक्षितत्वेन न्यूनतापातादविद्यामाययोश्चैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेः संख्यातिरेकतादवस्थ्यम्। कालकलासु च तत्प्रसिद्धेरित्याह—**एकत्रिंशक इति**। अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित्। तदपि न। वादिनां विवाददर्शनात्। विवादस्य चाज्ञानमूलकत्वादित्याह—**अनन्त इतीति**।।२६।।

लोकानुरञ्जनमेव तत्त्वमिति **लौकिकाः**। तदपि विभ्रममात्रम्। लोकस्य भिन्नरुचित्वात् तदनुरञ्जनस्येश्वरेणापि ३५ कर्तुमशक्यत्वादित्याह—**लोकानिति। दक्षप्रभृतयस्त्वाश्रमाः** परमार्था इति समर्थयन्ते। तदसत्। वेषस्याऽऽश्रम- शब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचत्वात्तन्मूलस्याऽऽश्रमस्य दर्शयितुमशक्यत्वात् संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगादसङ्गे चाऽऽत्मनि तदसमवायादित्याह—**आश्रमा इतीति। वैयाकरणास्तु** स्त्री- पुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति। तदप्ययुक्तम्। स्त्र्यादेः शब्दस्वभावत्वे सर्वादीनां त्रिलिङ्गत्वायोगादेकस्या-

**सृष्टिरिति सृष्टिविदो लय इति च तद्विदः। स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा।।२८।।**
**यं भावं दर्शयेद् यस्य तं भावं स तु पश्यति। तं चावति स भूत्वाऽसौ तद्ग्रहः समुपैति तम्।।२९।।**

**प्राणः प्राज्ञो बीजात्मा तत्कार्यभेदा हीतरे स्थित्यन्ताः। अन्ये च सर्वे लौकिकाः सर्वप्राणिपरिकल्पिता भेदा रज्ज्वामिव सर्पादयः। तच्छून्य आत्मन्यात्मस्वरूपानिश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः। प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजनत्वाद् यत्नो न कृतः।।२०-२१-२२-२३-२४-२५-२६-२७-२८।।** ५

**किं बहुना? प्राणादीनामन्यतममुक्तमनुक्तं वा यं भावं पदार्थं दर्शयेद् यस्याऽऽचार्योऽन्यो वाऽऽप्त इदमेव**

अनुभूतिस्वरूपाचार्यटीका

वा? आद्ये सर्वादीनां त्रिलिङ्गता न स्यात्। एकस्य अनेकस्वभावताऽयोगात्। अन्त्ये चावस्तुत्वप्रसङ्गः, शब्दातिरिक्तार्थानङ्गीकारादौपाधिकस्य मिथ्यात्वाच्च। किञ्च, शब्द उत्पाद्यते ज्ञाप्यते वा? आद्ये अन्योन्याश्रयः, शब्दनिष्पत्तौ व्याकरणारम्भः ततश्च शब्दनिष्पत्तिरिति। द्वितीये व्यर्थं व्याकरणम्। स्वरूपज्ञानस्य श्रोत्रात् सम्भवात्, व्युत्पत्तेश्च वृद्धव्यवहारात्। किञ्च 'सुप्तिङन्तं पदम्' इति लक्षणस्येतरेतरावृत्तेरव्यापकता। घटादिलक्षणस्य चातिव्यापकता। रूढ्याश्रये व्यर्थं प्रकृतिप्रत्ययविभागसङ्केतकरणम्। किञ्च, यथा अनादिवेदविरोधे पौरुषेयी स्मृतिः अप्रमाणं तथा अनादिवेददृष्टशब्दविरुद्धशब्दनिर्माणं किं नाप्रमाणम्? अथ छन्दसि बहुलमिति वचनात् पाठकानाञ्च तथैव प्रसिद्धेरर्थप्रतिपत्तेश्च सम्भवात् तत्र ते न विरुध्यन्ते, तर्हि लोकेऽपि अपशब्दभाषिणां तथैव प्रसिद्धेः अर्थप्रतिपत्तेश्च तेभ्यः सम्भवाल्लोकेऽपि न विरुध्यन्ते। किञ्च, भारतादिषु पाणिनिमतविरुद्धानेकशब्दोपलब्धेर्व्यासस्य किमज्ञानं सम्भावयामः किं वा पाणिनेरेवेति विशये वैयाकरणानामेव शाकल्यशाकटायनादीनां विप्रतिपत्त्युपलब्धेः तस्यैवाज्ञानकल्पनं युक्तमिति। १०, १५

द्वे ब्रह्मणी वेदितव्ये परञ्चैवापरं चेत्यन्ये कल्पयन्ति। तत्र, यतो वस्तुतः परिच्छेदे नैव कोऽपि ब्रह्मपदार्थः सम्भवति।।२७।।

सतोऽसतश्चोत्पत्त्याद्यसम्भवस्य वक्ष्यमाणत्वात् सृष्ट्यादिवर्णनमपि **पौराणिकानां** भ्रमसिद्धानुवादमात्रम्। इह लोके यत्सर्वं कुलधर्मग्रामधर्मदेशधर्मादि तदपि सर्वदा कल्पनामात्रमेव। न हि वस्त्वन्यथा भवतीति।।२८।। २०

प्राणादिश्लोकानां संक्षेपार्थमाह—**प्राणः प्राज्ञ इत्यादिना**। एवं तावद्वादिनां लौकिकानां च कतिपयकल्पनाभेदानुदाहृत्य अनन्तत्वात् सर्वथैव ते नोदाहर्तुं शक्यन्त इति संक्षेपमाह—**यं भावमित्यादिना**। असौ पुरुष एव भूत्वा

आनन्दगिरिटीका

नेकस्वभावत्वासम्भवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह—**स्त्रीपुंनपुंसकमिति**। द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित्। तच्च न। परिच्छेदे क्वचिदपि ब्रह्मत्वायोगाद् वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह—**परापरमिति**।।२७।। २५

सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति **पौराणिकाः**। तदपि कल्पनामात्रम्। सतोऽसतश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाऽऽह—**सृष्टिरित्यादिना**। यथोक्तकल्पनानामधिष्ठानं सूचयति—**सर्वे चेति**। उदाहृताश्चानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते, नाऽऽत्मनः कल्पितत्वम्। सर्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः। ३०

प्राणादिश्लोकेषु प्राणशब्दार्थमाह—**प्राण इति**। तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह—**तत्कार्येति**। अन्तिमपदार्थं स्फुटयति—**अन्य इति**। कुलधर्मो ग्रामधर्मो देशधर्मश्चेत्येते सर्वशब्देन गृह्यन्ते। तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति—**रज्ज्वामिति**। आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह—**तच्छून्य इति**। किमिति समुदायार्थः श्लोकानामुच्यते श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याऽऽह—**प्रत्येकमिति**।।२८।। ३५

लौकिकानां परीक्षकाणां च कतिपयकल्पनाभेदानुदाहृत्यानन्तत्वादशेषतस्तेषामुदाहर्तुमशक्यत्वं दृष्ट्वा संक्षेपमात्रमाचष्टे—**यं भावमिति**। पादत्रयं विभजते—**किं बहुनेत्यादिना**। तमेव भावं विशिनष्टि—**यो दर्शित**

**एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः। एवं यो वेद तत्त्वेन कल्पयेत् सोऽविशङ्कितः॥३०॥**
**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा। तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥३१॥**

तत्त्वमिति, स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा। तं च द्रष्टारं स भावोऽवति यो दर्शितो भावोऽसौ भूत्वा रक्षति। स्वेनाऽऽत्मना सर्वतो निरुणद्धि। तस्मिन् ग्रहस्तद्ग्रहस्तदभिनिवेशः इदमेव तत्त्वमिति। स तं ग्रहीतारमुपैति। तस्याऽऽत्मभावं निगच्छतीत्यर्थः॥२९॥

एतैः प्राणादिभिरात्मनोऽपृथग्भूतैरपृथग्भावैरेष आत्मा रज्जुरिव सर्पादिविकल्पनारूपैः पृथगेवेति लक्षितोऽभिलक्षितो निश्चितो मूढैरित्यर्थः। विवेकिनां तु रज्ज्वामिव कल्पिताः सर्पादयो नाऽऽत्मव्यतिरेकेण प्राणादयः सन्तीत्यभिप्रायः। "इदं सर्वं यदयमात्मा" इति श्रुतेः। एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानं च केवलं निर्विकल्पं यो वेद तत्त्वेन श्रुतितो युक्तितश्च सोऽविशङ्कितो वेदार्थं विभागतः कल्पयेत् कल्पयतीत्यर्थः। इदमेवंपरं वाक्यमदोऽन्यपरमिति। "न ह्यनध्यात्मविद्वेदाञ्ज्ञातुं शक्नोति तत्त्वतः" "न ह्यनध्यात्मवित् कश्चित्क्रियाफलमुपाश्नुत" इति हि मानवं वचनम्॥३०॥

यदेतद् द्वैतस्यासत्त्वमुक्तं युक्तितस्तदेतद् वेदान्तप्रमाणावगतमित्याह–स्वप्नेति। स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके सत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः। यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुञ्जनपद-

अनुभूतिस्वरूपाचार्यटीका

तत्तादात्म्यमेव आपद्य तस्य अन्यत्र प्रवृत्तिं निवारयति उपदिष्टो गणपत्यादिभावमि[व इ]त्यर्थः। असौ देवः परमार्थो नान्य इति परोक्षो वा भूत्वा। अथवा असुः प्राणस्तस्मिन्नसौ प्राणे तदुपलक्षिते हृदये भूत्वा स्थित्वा इत्यर्थः॥२९॥

उक्तवस्तुज्ञानवान्न वेदकिङ्करो भवति, किन्तु सः यं वेदार्थं ब्रूते स एव तदर्थो भवतीत्युक्तज्ञानस्तुत्यर्थमाह— **एतैरेष इत्यादिना**। क्रियाफलं प्रमाणफलं तत्त्वनिर्णयमित्यर्थः॥३०॥

प्रसारितानि पण्यानि क्रयविक्रयवस्तूनि येष्वापणेषु हट्टेषु ते प्रसारितपण्यापणास्ते च गृहाश्च प्रासादाश्च

आनन्दगिरिटीका

**इति**। स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह—**असाविति**। साधकपुरुषतादात्म्यमापद्येत्यर्थः। रक्षणप्रकारं प्रकटयति— **स्वेनेति**। साक्षादसाधारणरूपत्वेन तत्रैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः। चतुर्थपादं व्याचष्टे—**तस्मिन्निति**॥२९॥

एतेनान्यत्र प्रवृत्तिनिरोधे हेतुरुक्तः। तर्हि प्राणादीनामात्मवदेव तात्त्विकत्वं प्राप्तमित्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह—**एतैरिति**। उक्तज्ञानस्तुत्यर्थमाह—**एवमिति**। पूर्वार्धं व्याकरोति—**एतैरिति**। कल्पितानामधिष्ठानातिरेकेण सत्तास्फुरणयोरभावात् तद्द्वारेणाऽऽत्मनि भेददर्शनमविवेकिनामस्तु तदन्येषां कथमुपलब्धिरित्याशङ्क्याऽऽह—**विवेकिनां त्विति**। प्राणादीनामात्मातिरेकेणासत्त्वे प्रमाणमाह—**इदमिति**। उत्तरार्धं योजयति—**एवमिति**। तत्त्वेनाऽऽत्मवेदनोपायं सूचयति—**तत्त्वेनेति**। स्वप्नदृश्यवज्जाग्रद्दृश्यानां मिथ्यात्वसाधको दृश्यत्वादिहेतुरत्र युक्तिरित्युच्यते। तथोक्तविज्ञानवान् वेदकिङ्करो न भवति, किं तु स यं वेदार्थं ब्रूते स एव वेदार्थो भवतीत्यर्थः। विभागतो वेदार्थव्याख्यानमभिनयति—**इदमिति**। ज्ञानकाण्डं साक्षादद्वैतवस्तुपरम्। कर्मकाण्डं तु साध्यसाधनसम्बन्धबोधनद्वारा परम्परया तस्मिन् पर्यवसितम्। 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतेरित्यर्थः। आत्मविदो वेदार्थवित्त्वमुक्तं व्यनक्ति—**न हीति**। तदेव हि वेदार्थतत्त्वं यत्प्रत्यगात्मस्वरूपम्, अतश्चाध्यात्मविदेव याथात्म्येन तत्त्वज्ञाने प्रभवतीत्यर्थः। उक्तेऽर्थे स्मृतिमुदाहरति—**न हीति**। क्रियाशब्देन प्रमाणमुच्यते। तत्फलं तत्त्वज्ञानम्, अग्निहोत्रादिक्रियायाश्च [शुद्धिद्वारा तस्मिन् पर्यवसानादित्यर्थः॥३०॥

याभिर्युक्तिभिरस्मिन् प्रकरणे द्वैतस्य मिथ्यात्वं कथ्यते तासां प्रमाणानुग्राहकत्वादनाभासत्वमवसेयमित्याह— **स्वप्नेति**। श्लोकस्य तात्पर्यार्थमाह—**यदेतद् द्वैतस्येति**। असत्त्वे सत्त्ववत् प्रतिभानं कथमित्याशङ्क्य श्लोकाक्षराणि व्याचष्टे—**स्वप्नश्चेति**। प्रसारितानि तत्र तत्र प्रकटतां प्रापितानि पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु हट्टेषु ते प्रसारितपण्यापणास्ते च गृहाश्च प्रासादाश्च स्त्रीपुञ्जनपदाश्चैतेषां व्यवहारास्तैराकीर्णमिति योजना। दृष्टान्तत्रयमनूद्य दार्ष्टान्तिकमाह—**यथा चेति**। गन्धर्वनगराकारः चकारार्थः। 'नेह नानाऽस्ति किञ्चने'त्यादयो वेदान्ताः।

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।।३२।।**

व्यवहाराकीर्णमिव गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टम्, यथा च स्वप्नमाये दृष्टे असद्रूपे तथा विश्वमिदं द्वैतं समस्तमसद् दृष्टम्। क्वेत्याह–वेदान्तेषु; ''नेह नानाऽस्ति किञ्चन'' ''इन्द्रो मायाभिः'' ''आत्मैवेदमग्र आसीत्'' ''ब्रह्मैवेदमग्र आसीत्'' ''द्वितीयाद्वै भयं भवति'' ''न तु तद्द्वितीयमस्ति'' ''यत्र त्वस्य सर्वमात्मैवाभूत्'' इत्यादिषु। विचक्षणैर्निपुणतरवस्तुदर्शिभिः पण्डितैरित्यर्थः। ''तमःश्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम्। नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्।'' इति व्याससमृतेः।।३१।। ५

न निरोध इति। प्रकरणार्थोपसंहारार्थोऽयं श्लोकः। यदा वितथं द्वैतमात्मैवैकः परमार्थतः संस्तदेदं निष्पन्नं भवति–सर्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति तदा न निरोधः। निरोधनं निरोधः प्रलयः, उत्पत्तिर्जननं, बद्धः संसारी जीवः, साधकः [1]साधनान्मोक्षस्य, मुमुक्षुर्मोचनार्थी, मुक्तः विमुक्तबन्धः। उत्पत्तिप्रलययोरभावाद् बद्धादयो न सन्तीत्येषा परमार्थता। कथमुत्पत्तिप्रलययोरभाव इत्युच्यते। द्वैतस्यासत्त्वात्। ''यत्र हि द्वैतमिव भवति'' ''य इह नानेव पश्यति'' ''आत्मैवेदं सर्वम्'' ''ब्रह्मैवेदं सर्वम्'' ''एकमेवाद्वितीयम्'' ''इदं सर्वं यदयमात्मा'' इत्यादिनानाश्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम्। सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः। नाप्यद्वैतमुत्पद्यते लीयते वा। अद्वयं चोत्पत्तिप्रलयवच्चेति विप्रतिषिद्धम्। यस्तु पुनर्द्वैतसंव्यवहारः स रज्जुसर्पवदात्मनि प्राणादिलक्षणः कल्पितः इत्युक्तम्। न हि मनोविकल्पनाया रज्जुसर्पादिलक्षणाया रज्ज्वां प्रलय उत्पत्तिर्वा। न च मनसि रज्जुसर्पस्योत्पत्तिः १०

अनुभूतिस्वरूपाचार्यटीका

स्त्रीपुञ्जनपदाश्च तेषां व्यवहाराः तैराकीर्णमित्यर्थः। तमसि मन्दान्धकारे यद्रज्ज्वां श्वभ्रं भूच्छिद्रं भ्रान्त्या भाति तन्निभं तत्तुल्यं विवेकिभिर्दृष्टं विश्वं नाशप्रायं वर्तमानकालेऽपि तद्योग्यतासद्भावादित्यर्थः।।३१।। १५

सत्त्वाभावे कथमुत्पत्तिप्रलययोरभावस्सिद्ध इत्याशङ्क्याह—**सतो हीति**। धर्म्यभावे धर्माभावः प्रसिद्ध इत्यर्थः। अद्वैतं ब्रह्मैव कार्याकारेणोत्पद्यते लीयते चेत्येकदेशिनः, तदसङ्गतमित्याह—**नापीति**। त्वयाऽपि व्यवहाराङ्गं द्वैतमिष्यते, तस्य जन्मलयौ किमिति न स्तः इत्याशङ्क्याह—**यस्तु पुनरिति**। विमतस्तत्त्वतो न जन्मलयवान् कल्पितत्त्वात् रज्जुसर्पवदित्यर्थः। दृष्टान्तं साधयति—**न हीत्यादिना**। सर्वेषामुपलम्भाभावात् रज्ज्वां जन्मलयौ मा भूतां दुष्टकरणस्यैव मनसः सकाशादुत्पत्तिः, मनसि च लयो रज्जुसर्पस्य भविष्यतीत्याशङ्क्याह—**न चेति**। २०

आनन्दगिरिटीका

द्वैतस्य वस्तुतोऽसत्त्वे स्मृतिमपि दर्शयति—**तम इति**। तमसि मन्दान्धकारे रज्ज्वामधिष्ठाने भूच्छिद्रमिति यद् भ्रान्त्या भाति तन्निभं तत्तुल्यं विवेकिभिर्विश्वं दृष्टं, तच्चातीव चञ्चलमालक्षितं नाशप्रायं वर्तमानकालेऽपि तद्योग्यतासत्त्वात्। न च द्वैतं कदाचिदपि सुखकरमुपलभ्यते, दुःखाक्रान्तं तु दृश्यते। तच्च नाशग्रस्तम्। नाशादूर्ध्वमसत्त्वमेवोपगच्छति न तर्हि तस्य परमार्थत्वं प्रमाणाभावादित्यर्थः।।३१।। २५

प्रमाणयुक्तिभ्यां द्वैतमिथ्यात्वप्रसाधनेनाद्वैतमेव पारमार्थिकमिति स्थिते निर्धारितमर्थं संगृह्णाति—**नेत्यादिना**। श्लोकस्य तात्पर्यार्थमाह—**प्रकरणेति**। कोऽसौ प्रकरणार्थस्तस्य वा संग्रहे किं सिध्यति, तदाह—**यदेति**। व्यवहारमात्रस्याविद्याविषयत्वेऽपि किं स्यादिति चेत् तदाह—**तदेति**। चतुर्थपादार्थमाह—**उत्पत्तीति**। उक्तमेवार्थं प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति—**कथमित्यादिना**। द्वैतासत्त्वं श्रुत्यवष्टम्भेन स्पष्टयति—**यत्र हीति**। द्वैतस्यासत्त्वे कथमुत्पत्तिप्रलयौ न स्यातामित्याशङ्क्य किं द्वैतस्य तौ किं वाऽद्वैतस्येत्याद्यं विकल्पं दूषयति—**सतो हीति**। द्वितीयं प्रत्याह—**नापीति**। व्यावहारिकद्वैताङ्गीकारात् तस्यैवोत्पत्तिप्रलयावित्याशङ्क्याऽऽह—**यस्त्विति**। विमतस्तत्त्वतो नोत्पत्तिप्रलयवान् कल्पितत्वाद्रज्जुसर्पवदित्यत्र दृष्टान्तासिद्धिमाशङ्क्य रज्जुसर्पस्य रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति विकल्प्य प्रथमं प्रत्याह—**न हीति**। रज्जुं पश्यतां सर्वेषामुपलब्धिप्रसङ्गादित्यर्थः। द्वितीयं दूषयति—**न चेति**। बहिरुपलब्धिविरोधादित्यर्थः। तृतीयं निरस्यति—**न चेति**। उभयतो मनोरज्जुलक्षणे न रज्जुसर्पस्योत्पत्तिप्रलयौ युक्तौ द्वयाधारत्वानुपलम्भादित्यर्थः। रज्जुसर्पवद् द्वैतस्य मानसत्वाविशेषात्र तत्त्वतो जन्मविनाशौ दर्शयितुं ३० ३५

---

१. 'साधनवान्' इति पा.।

**प्रलयो वा, न चोभयतो वा। तथा मानसत्वाविशेषाद् द्वैतस्य। न हि नियते मनसि सुषुप्ते वा द्वैतं गृह्यते। अतो मनोविकल्पनामात्रं द्वैतमिति सिद्धम्। तस्मात् सूक्तं द्वैतस्यासत्त्वान्निरोधाद्यभावः परमार्थतेति।**

**यद्येवं द्वैताभावे शास्त्रव्यापारो नाद्वैते विरोधात्। तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावाच्छून्यवाद-प्रसङ्गः, द्वैतस्य चाभावात्। न, रज्जुसर्पादिविकल्पनाया निरास्पदत्वानुपपत्तिरिति प्रत्युक्तमेतत् कथमुज्जीवयसीति।**
५ **आह–रज्जुरपि सर्पविकल्पस्याऽऽस्पदभूता विकल्पितैवेति दृष्टान्तानुपपत्तिः। न, विकल्पनाक्षयेऽविकल्पितस्या-विकल्पितत्वादेव सत्त्वोपपत्तेः। रज्जुसर्पवदसत्त्वमिति चेत्, न, एकान्तेनाविकल्पितत्वादविकल्पितरज्ज्वंशवत् प्राक्सर्पाभावविज्ञानात्। विकल्पयितुश्च प्राग्विकल्पनोत्पत्तेः सिद्धत्वाभ्युपगमादसत्त्वानुपपत्तिः।**

अनुभूतिस्वरूपाचार्यटीका

बहिस्संविद्विरोधादित्यर्थः। **उभयतो वा** मनोरज्जुलक्षणे न, द्वयाधारताऽदर्शनादित्यर्थः। दार्ष्टान्तिकमाह—**तथेति**।
१० मानसत्वमसिद्धमित्याशङ्क्याह—**न हीति**। यस्मिन् सति यद्भवति असति च न भवति, तत् तदात्मकं प्रसिद्धम्। ग्राह्यग्राहकरूपं च द्वयम्, अहमिदं जानामीति सत्येव मनसि भवति। अतो मनोविकल्पनामात्रम्। न च भ्रमसिद्धस्या-ज्ञातसत्तायां प्रमाणमस्ति, येन मनो दर्शनमात्रे निमित्तं कल्प्येत। ये च परमाण्वादिप्रसूतद्वैतं प्रामाणिकमिति जल्पन्ति, ते प्रागेव परास्ताः।

यद्येवं निरोधाद्यभावः परमार्थस्तर्हि तत्रैव शास्त्रव्यापारः नाद्वैते ब्रह्मणि, अभावबोधने व्यापृतस्य भावबोधने
१५ व्यापारः न, विरोधात्। ततः किमित्यत आह—**तथा चेति**। द्वैते विद्यमाने कथमद्वैतस्याप्रामाणिकत्वमात्रेण शून्यवाद इति न वाच्यमित्याह—**द्वैतस्य चाभावादिति**। ओङ्कारप्रकरणे परिहृतमेतच्चोद्यं कथमुद्भावयसि, इत्युक्त आह पूर्ववादी—**रज्जुरपीति**। नावश्यं स्वमतसिद्धो दृष्टान्तो वक्तव्य इति नियामकमस्ति, किन्तु प्रसिद्धः, तावन्मात्रेण परबोधसम्भवात्। विद्यते च प्रसिद्धिः भ्रमबाधे यः परिशिष्यते सोऽवधिः सन् यथा रज्जुरिति। तथा द्वैतभ्रमबाधसाक्षितया स्फुरति चिदात्मा, तस्याविकल्पितत्वादेव सत्तोपपत्तेः न शून्यताप्राप्तिरित्याह—**न,**
२० **विकल्पनाक्षय इति**। अद्वैतमसत् अप्रामाणिकत्वात् रज्जुसर्पवदिति चेत्—न, रज्जुसर्पस्य असत्त्वे भ्रमविषयत्वस्य प्रयोजकत्वात्; आत्मनस्तु सर्वभ्रमसाक्षितया एकान्तत एव भ्रमाविषयत्वात् सत्त्वमित्युक्तम्। अज्ञातसत्तायामनैकान्तिकश्च हेतुरित्यभिप्रेत्याह—**अविकल्पितेति**। सर्पाभावज्ञानात् प्रागनवभासमानो रज्ज्वंशः तस्यामवस्थायां प्रामाणिकत्वाभावेऽपि सन् यथा तथा सदैव प्रामाणिकत्वाभावेऽपि आत्मा किं न सन्नित्यर्थः। इतश्चात्मनो नासत्त्वमित्याह—**विकल्पयितुश्चेति**।

२५ आनन्दगिरिटीका

शक्याविति दार्ष्टान्तिकमाह—**तथेति**। द्वैतस्य न कुतश्चित् तात्त्विकौ जन्मविनाशाविति शेषः। मानसत्वासिद्धिमा-शङ्क्याऽऽह—**न हीति**। अन्वयव्यतिरेकाभ्यां द्वैतं मनोविकल्पनामात्रमिति निगमयति—**अत इति**। न च मनो द्वैतस्य दर्शनमात्रे निमित्तमिति युक्तम्। भ्रमसिद्धस्याज्ञातसत्तायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति—**तस्मादिति**। निरोधाद्यभावस्य परमार्थत्वे तत्रैव शास्त्रव्यापारादद्वैते तदव्यापारादभावबोधने व्यापृतस्य भावबोधने
३० व्यापारविरोधादद्वैतमप्रामाणिकं प्राप्तमिति शङ्कते—**यद्येवमिति**। अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्या-शङ्क्याऽऽह—**तथा चेति**। अद्वैतस्याप्रामाणिकत्वेऽपि कुतः शून्यवादो द्वैतस्य सत्त्वादित्याशङ्क्याऽऽह—**द्वैतस्येति**। नाप्रामाणिकशून्यवादो युक्तः, यथा रज्ज्वामारोपितसर्पादे रज्जुरधिष्ठानम्; न हि निरधिष्ठानो भ्रमोऽस्ति; तथा द्वैतकल्पनाया निरधिष्ठानत्वायोगात्तदधिष्ठानत्वेनाद्वैतमास्थेयमित्योङ्कारप्रकरणे परिहृतमेतच्चोद्यं कथमुद्भावयसीति सिद्धान्तवाद्याह—**नेत्यादिना**। तत्र शून्यवादी स्वमतानुसारेण दृष्टान्तासम्प्रतिपत्त्या चोदयति—**आहेति**। स्वमत-
३५ सम्मतस्यैव दृष्टान्ततेत्यनियमात् प्रसिद्धिमात्रेण परप्रतिबोधनसम्भवाद् भ्रमबाधे परिशिष्यमाणस्यावधेः सत्यताया रज्ज्वादौ दृष्टत्वाद् द्वैतभ्रमबाधसाक्षितया स्फुरतश्चैतन्यस्याकल्पितत्वादेव सत्त्वान्न शून्यताप्रसक्तिरित्युत्तरमाह—**नेत्यादिना**। अद्वैतमसदप्रामाणिकत्वाद्रज्जुसर्पवदिति तदकल्पितत्वासिद्धिं शङ्कते—**रज्ज्वति**। रज्जुसर्पस्यासत्त्वे भ्रान्तिविषयत्वं प्रयोजकमात्मनस्तु भ्रमसाक्षित्वान्नियमेन भ्रमाविषयत्वान्नासत्त्वमित्युत्तरमाह—**नैकान्तेनेति**। अप्रामाणिकत्वहेतोरनैकान्तिकत्वं दोषान्तरमाह—**अविकल्पितेति**। नायं सर्पो रज्जुरेवेति सर्पाभावज्ञानपूर्वकपुरो-

**कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तकत्वम्? नैष दोषः। रज्ज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात्। कथम्? सुख्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान् पश्यामि व्यक्तोऽव्यक्तः कर्ता फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममैत इत्येवमादयः सर्व आत्मन्यध्यारोप्यन्ते। आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात्। यथा सर्पधारादिभेदेषु रज्जुः। यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्तव्यत्वं शास्त्रेण। [1]अकृतकर्तृ च शास्त्रं कृतानुकारित्वेऽप्रमाणं स्यात्, यतः अविद्याध्यारोपितसुखित्वादिविशेषप्रतिबन्धादेवाऽऽत्मनः स्वरूपेणानवस्थानम्। स्वरूपावस्थानं च श्रेय इति। सुखित्वादिनिवर्तकं शास्त्रमात्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादिवाक्यैः।** ५

अनुभूतिस्वरूपाचार्यटीका

एवं तावत् सामान्यतो दर्शनेन अधिष्ठानतया सतः सम्भावितत्वात् बाधसाक्षित्वेन परिशिष्टत्वात् स्वरूपेण भ्रमाविषयत्वात् भ्रमोत्पत्तेः प्राक् स्वतःसिद्धत्वात् च आत्मनः प्रमाणाविषयत्वेऽपि न शून्यत्वमित्युपपाद्य इदानीं प्रमिते धर्मिणि प्रतिषेधदर्शनात् आत्मनः प्रमित्यभावे कथं तत्र द्वैताभावप्रमापकं शास्त्रमिति शङ्कते—**कथं पुनरिति**। १० धर्मिण्यभावबोधो, न प्रमिते, विशेषणवैयर्थ्यात्, विद्यते चात्मनः सर्वाध्यासेषु अनुगताकारेण स्फुरणमित्याह—**नैष दोष इति**। भ्रमाविषयस्य अध्यासानुगततया स्फुरणं न घटत इत्याह—**कथमिति**। स्वप्रकाशतया स्वतो निर्विकल्पस्फुरणेऽपि सविकल्पव्यवहारे अध्यस्तसंसृष्टाकारेण भ्रमविषयत्वं न विरुध्यत इत्याह—**सुख्यहमित्यादिना**।

न केवलमध्यस्तविशेषणैः विशेष्यस्य आत्मनः स्वरूपस्फुरणस्य सिद्धत्वात् शास्त्रेणाकर्तव्यत्वमनुवादकत्वेनाप्रामाण्यप्रसङ्गाच्चेत्याह—**अकृतकर्तृ चेति**। ननु स्फुरत्यात्मनि द्वैतनिषेधकत्वे शास्त्रस्य निष्प्रयोजनत्वं स्यात् १५ इत्याशङ्क्याऽऽह—**अविद्याध्यारोपितेति**। नास्त्यात्मा परमानन्दरूपो न प्रकाशते चेति विपरीतव्यवहारालम्बनत्वापत्तिः अध्यासकृतः प्रतिबन्धः। तत एव च आत्मनः स्वरूपेऽनवस्थानं दुःखित्वं भवति। प्रतिबन्धके तस्मिन् अपोदिते शास्त्रेण स्वरूपावस्थानं प्रयोजनं सिध्यतीत्यर्थः। ननु—निश्शेषदुःखनिवृत्तिः निरतिशयानन्दावाप्तिश्च परं श्रेयः, न स्वरूपावस्थानमित्याशङ्क्याह—**स्वरूपावस्थानं च परं श्रेय इति**। प्रसिद्धं मोक्षशास्त्रेषु इति शेषः। परमानन्दाभिव्यक्तिभावादित्यर्थः। द्वैतनिवर्तकत्वे शास्त्रस्य मुद्गराभिघातवत् कारकत्वप्रसङ्गः इत्याशङ्क्याह—**सुखित्वादीति**। २०

आनन्दगिरिटीका

वर्तिरज्जुत्वनिश्चयात्प्रागवस्थायां प्रामाणिकत्वाभावेऽपि सन्नेवाज्ञातो रज्ज्वंशोऽभ्युपगम्यते। तथा सदैव प्रामाणिकत्वाभावेऽपि सन्नेवाऽऽत्मा भविष्यतीत्यर्थः। आत्मनोऽसत्त्वाभावे हेत्वन्तरमाह—**विकल्पयितुश्चेति**।

आत्मनो द्वैतभ्रमाधिष्ठानत्वेन सम्भावितत्वाद् बाधसाक्षित्वेन परिशिष्टत्वात् पूर्वं भ्रमोत्पत्तेः स्वतः सिद्धत्वाच्च प्रमाणाविषयत्वेऽपि नास्ति शून्यतेत्युक्तम्। इदानीं प्रमिते धर्मिणि प्रतिषेधदर्शनादात्मनोऽप्रमितत्वे तत्र द्वैताभावप्रमापकं शास्त्रमयुक्तमिति शङ्कते—**कथमिति**। प्रतिपन्ने धर्मिणि प्रतिषेधात् प्रमिते प्रतिषेधस्य विशेषणवैफल्यादेवानभ्युपगमादात्मनश्च सर्वकल्पनास्वधिष्ठानाकारेण स्फुरणाङ्गीकरणात् तस्मिन् प्रतिपन्ने द्वैतप्रतिषेधः सम्भवतीति परिहरति—**नैष दोष इति**। भ्रमाविषयस्याऽऽत्मनोऽध्यासानुगततया स्फुरणमघटमानमित्याक्षिपति—**कथमिति**। स्वप्रकाशत्वेन स्वतो निर्विकल्पकस्फुरणेऽपि सविकल्पकव्यवहारे समारोपितसंसृष्टाकारेण भ्रमविषयत्वमविरुद्धमित्याह—**सुख्यहमित्यादिना**। उक्तन्यायेनाऽऽत्मप्रतीतेः सिद्धत्वात् प्रतिपन्ने तस्मिन् द्वैतप्रतिषेधस्य सुकरतेति फलितमाह—**यदा चेति**। न केवलमारोपितविशेषणैर्विशेष्यस्याऽऽत्मनः स्वरूपस्फुरणस्य सिद्धत्वादेव न शास्त्रेण कर्तव्यत्वमनुवादत्वेनाप्रामाण्यप्रसङ्गाच्चैवमित्याह—**अकृतेति**। स्फुरत्यात्मनि द्वैतनिषेधकत्वेऽपि शास्त्रस्य फलाभावादप्रामाण्यं तदवस्थमित्याशङ्क्याऽऽह—**अविद्येति**। प्रतिषेधशास्त्रादपनीते प्रतिबन्धे स्वरूपावस्थानं फलतीत्यर्थः। निःशेषदुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च परं श्रेयो, न स्वरूपावस्थानमित्याशङ्क्याऽऽह—**स्वरूपेति**। इति प्रसिद्धं मोक्षशास्त्रेष्विति शेषः। २५ ३० ३५

द्वैतनिवर्तकत्वे शास्त्रस्य कारकत्वं स्यादित्याशङ्क्याऽऽह—**सुखित्वादीति**। असुखित्वादेः स्वाभाविकत्वादात्मनि स्फुरत्यस्फुरणमनुपपन्नमित्याशङ्क्य भ्रमविषयशुक्तीदमंशादेश्च स्वाभाविकोऽपि रजतादिभेदो दोषमाहात्म्याद् यथा न प्रतिभाति तथाऽचिन्त्यशक्त्यविद्याप्रभावादात्मनि स्फुरत्यपि सुखित्वाद्यध्यासविरोध्यसुखित्वादि-

१. अकृतकर्तृ—अज्ञातज्ञापकं। कृतानुकारित्वे ज्ञातज्ञापकत्वे अप्रमाणं स्यादित्यर्थः।

[1]भावैरसद्भिरेवायमद्वयेन च कल्पितः। भावा अप्यद्वयेनैव तस्मादद्वयता शिवा।।३३।।

आत्मस्वरूपवदसुखित्वाद्यपि [2]सुखित्वादिभेदेषु नानुवृत्तोऽस्ति धर्मः। [3]यद्यनुवृत्तः स्यान्नाध्यारोपितसुखित्वादिलक्षणो विशेषः। यथोष्णत्वगुणविशेषवत्यग्नौ शीतता। तस्मान्निर्विशेष एवाऽऽत्मनि सुखित्वादयो विशेषाः कल्पिताः। यत्त्वसुखित्वादिशास्त्रमात्मनस्तत्सुखित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम्। [4]''सिद्धं तु निवर्तकत्वात्'' ५ इत्यागमविदां सूत्रम्।।३२।।

पूर्वश्लोकार्थस्य हेतुमाह–भावैरिति। यथा रज्ज्वामसद्भिः सर्पधारादिभिरद्वयेन च रज्जुद्रव्येण सताऽयं सर्प इयं

अनुभूतिस्वरूपाचार्यटीका

ननु असुखित्वादेः स्वाभाविकत्वादात्मनि स्फुरत्यस्फुरणं नोपपद्यत इत्याशङ्क्याह—**आत्मस्वरूपवदिति**। भ्रमविषयस्य शुक्तीदमंशादेः स्वाभाविको रजतादिभेदो यथा न भाति, दोषस्याचिन्त्यमहिमत्वात्, एवमविद्याप्रभावादात्मनि चिद्रूपेण १० स्फुरत्यपि सुखित्वाद्यध्यासविरोध्यसुखित्वादिरूपेणास्फुरणं न विरुध्यत इति भावः। इतरथा भ्रमाभावप्रसङ्ग इत्याह—**यदीति**। उक्तं प्रमेयं संक्षिप्य निगमयति—**तस्मादित्यादिना**। उक्तेऽर्थे **द्रविडाचार्यसम्मतिमाह—सिद्धं त्विति**। ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रस्य प्रामाण्यमभावबोधने व्युत्पन्ननञ्संसृष्टस्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्त्तकत्वादित्यर्थः।।३२।।

ननु विश्वव्यापकं सत्तानाम महासामान्यं तद्व्यक्तयस्त्वाकाशादय इति संङ्गिरन्ते, कुतो निरोधाद्यभावस्य १५ परमार्थतेति। तत्राह—**भावैरिति**। इत्थंभावे तृतीया। अनुगतसत्तां विहाय व्यभिचारिणां विशेषाणां पृथक् सत्त्वे प्रमाणाभावात्। असद्भिर्विशेषाकारैः अद्वयेन च अनुवृत्ताकारेण च अव्यावृत्ताननुगतपूर्णचित्सत्तारूपोऽयमात्मैव कल्पितो मूढैः, न तु तत्त्वतःसामान्यविशेषभावः अस्ति अन्योन्याश्रयादिति भावः। असन्तश्चेद्विशेषाः कथं

आनन्दगिरिटीका

रूपेणास्फुरणमविरुद्धमित्याह—**आत्मेति**। विपक्षे भ्रमानुपपत्तिरित्याह—**यदीति**। उक्तमर्थं संक्षिप्य निगमयति— २० **तस्मादिति**। असुखित्वादेरकल्पितत्वमसिद्धमाशङ्क्य निरस्यति—**यत्त्विति**। अस्थूलं शोकान्तरमित्यादिवाक्यं शास्त्रशब्देन गृह्यते। उक्तेऽर्थे **द्रविडाचार्यसम्मतिमाह—सिद्धं त्विति**। ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यमभावबोधनव्युत्पन्ननञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादिति सूत्रार्थः।।३२।।

यदुक्तं निरोधाद्यभावस्य परमार्थतेति, तदयुक्तम्। सामान्यविशेषात्मकं वस्तु नानारसमिति मते निरोधादेः २५ सुसाध्यत्वादित्याशङ्क्याऽऽह—**भावैरिति**। भावा व्यावृत्ता विशेषाः। ते च व्यभिचारित्वादसन्तो रज्जुसर्पवत्। अद्वयमनुवृत्तं सामान्यं विशेषाकारैरवस्तुभूतैः सामान्याकारेण च तादृशेनायमव्यावृत्ताननुगतपूर्णसत्ताचिदेकतानः सन्नात्मैव मूढैर्मोहमाहात्म्यात् कल्प्यते। न वस्तुतः सामान्यविशेषभावोऽस्ति, परस्पराश्रयत्वादित्यर्थः। विशेषाणामसत्त्वे कथं

---

१. अव्यावृत्तानुगतं ब्रह्मतत्त्वम्; अतो ब्रह्माप्यनुगतरूपेण मिथ्यैव, स्वरूपेण तु सत्यम्। भावास्तु स्वरूपेणाप्यसन्तः। अद्वयता स्वरूपेण शिवेत्यर्थः न तु संसृष्टरूपेण।

३० २. सुखित्वादिभेदेषु सुखित्वदुःखित्वादिविशेषेषु असुखित्वादिः नानुवृत्तोऽस्ति आत्मनो निर्धर्मकत्वादिति शेषः। यद्यपि सुखित्वाभाव आत्मस्वरूपमेव तथापि तेन रूपेणात्मा भ्रमदशायां न भाति, अविद्यादोषात्, यथा—रजतभ्रमकाले शुक्तित्वं रजतभेदो वा।

३. यदि भ्रमविरोध्यसुखित्वरूपेण भासेत तदा भ्रम एव न स्यादित्यर्थः। **विशेषः** भायादिति शेषः।

४. इदं छान्दोग्यवाक्यविवरणकर्त्तुः **द्रविडाचार्यस्य** वचनमिति टीकाकारमतम्। इदमेव वाक्यं द्वितीयपरिच्छेदे ३५ अद्वैतसिद्धिकारोदाहृतमधिकृत्य ब्रह्मानन्दैर्व्याख्यातम्। शब्दानां नित्यत्वे सिद्धान्तिते व्याकरणस्य ज्ञातज्ञापकत्वेनाप्रामाण्यमाशङ्क्य मृजादिधातुना मृजन्तीत्यादेः साधुत्वसम्भवेऽपि मार्ष्टीत्यादीनामसाधुत्वभ्रमनिवर्त्तकत्वरूपप्रयोजनकत्वेन प्रामाण्यं सिद्धमेवेत्यर्थकं सिद्धं त्वित्यादिकमुक्तं वृद्धिसूत्रवार्तिके इति। व्याकरणवार्तिककारस्यापि द्रविडत्वात्तस्य द्रविडाचार्यत्वोक्तिरपि साधुरेव।

**धारा दण्डोऽयमिति वा रज्जुद्रव्यमेव विकल्प्यत एवं प्राणादिभिरनन्तैरसद्भिरेवाविद्यमानैः, न परमार्थतः। न ह्यचप्रलिते मनसि कश्चिद्भाव उपलक्षयितुं शक्यते केनचित्। न चाऽऽत्मनः प्रचलनमस्ति। प्रचलितस्यैवोपलभ्यमाना भावा न परमार्थतः सन्तः कल्पयितुं शक्याः। अतोऽसद्भिरेव प्राणादिभावैरद्वयेन च परमार्थसताऽऽत्मना रज्जुवत् सर्वविकल्पास्पदभूतेनायं स्वयमेवाऽऽत्मा कल्पितः सदैकस्वभावोऽपि सन्। ते च प्रणादिभावा अप्यद्वयेनैव सताऽऽत्मना विकल्पिताः। न हि निरास्पदा काचित् कल्पनोपलभ्यते। अतः सर्वकल्पनास्पदत्वात् स्वेनाऽऽत्मनाऽद्वयस्याव्यभिचारात्** ५

### अनुभूतिस्वरूपाचार्यटीका

सत्वेन व्यवह्रियन्त इत्याशङ्क्य अनुगतसत्तातादात्म्येनेत्याह—**भावा अप्यद्वयेनैव**। सन्त इति शेषः। परमार्थतोऽविद्यमानैः प्राणाद्याकारैः आत्मा विकल्पित इत्युक्तम्। अविद्यमानत्वे प्रमाणान्तरमाह—**न ह्यप्रचलित इति**। विमतास्तत्त्वतो न सन्ति, अप्रचलिते मनसि अप्रकाशमानत्वात् रज्जुसर्पवदित्यर्थः। भाट्टानामप्रचलितेऽपि मनसि आत्मप्रचलनेन प्रमातृव्यापारेण सिध्यन्ति भावाः। अतोऽप्रयोजको हेतुरित्याशङ्क्याह—**न चात्मनः प्रचलनमस्ति**। १० विभुत्वान्नभोवदित्यर्थः।

ननु प्रचलितेनैव मनसा उपलभ्यमानत्वमस्तु परमार्थं च भविष्यति, विपक्षे बाधकाभावादप्रयोजक इत्याशङ्क्याह—**प्रचलितस्यैवेति**। यदि आत्मव्यतिरिक्ता भावाः स्युः, तदा आत्मचैतन्याव्यवधानात् सदैव प्रकाशेरन्निति सुषुप्ताद्यभावप्रसङ्गो बाधक इत्यर्थः। ननु आत्ममनस्संयोगजन्यश्चैतन्यगुणः, सुषुप्त्यादौ च मनस्संयोगाभावात् न द्वैतसंवित्तिप्रसङ्गः इति; वादान्तरमेतत्। विस्तरेण चैतत् पराकरिष्यामः। किञ्च सति वा मनसि किमिति न संयोगः। १५ चलनाभावादिति चेत्, सति मनसि किमिति चलनाभावः, तन्निमित्तकर्मोद्भूत्यभावात् [इति चेत्]। सति कर्मणि किमित्युद्भूत्यभावः? ईश्वरेच्छोद्भूत्यभावादिति चेत्, सतीश्वरे किमितीच्छोद्भूत्यभावः? इच्छान्तरमूलत्वे अनवस्था। नित्यायाश्चेच्छाया उद्भूतिर्नाम तदुपरागः। स चाशक्यः संयोगादिविरहात्। कर्मोद्भूतिनिमित्तकालाभावादिति चेत्, न, कालकर्मणोः संयोगादिसम्बन्धविरहात्। असंसृष्टस्य निमित्तत्वे अतिप्रसङ्गात्। कर्मान्तरप्रतिबन्धादिति चेत्। न,

### आनन्दगिरिटीका २०

सत्त्वेन व्यवहारः स्यादित्याशङ्क्य सत्तातादात्म्येन कल्पितत्वात् तेषां सत्त्वेन व्यवहारोपपत्तिरित्याह—**भावा इति**। अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शेषः। सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह—**तस्मादिति**। श्लोकतात्पर्यं दर्शयति—**पूर्वेति**। निरोधादिसर्वविशेषाभावोपलक्षितं वस्तु वस्तुभूतमिति पूर्वश्लोकार्थस्तस्य सामान्यविशेषात्मके वस्तुनि विशेषानाश्रित्य निरोधादेः सुसाधनत्वादसत्त्वमाशङ्क्यते, तेन तस्य साधनापेक्षायां तत्प्रदर्शनपरोऽयं श्लोक इत्यर्थः। तत्र पूर्वार्धगतान्यक्षराणि दृष्टान्तावष्टम्भेन व्याचष्टे—**यथेत्यादिना**। संसृष्टरूपेण कल्पितत्वेऽपि स्वरूपेणानारोपितत्वाद्रज्जुद्रव्यस्य व्यावहारिकसत्यत्वमुन्नेयम्। अविद्यमानैरयमात्मा कल्प्यते, न परमार्थतस्तेषां सत्त्वमिति शेषः। कथं प्राणादीनां परमार्थतोऽसत्त्वमित्याशङ्क्यान्वयव्यतिरेकाभ्यां तेषां मनःस्पन्दितमात्रत्वप्रतीतेर्मृषात्वं स्वप्नवदित्याह—**न हीति**। आत्मपरिणामत्वान्मनश्चलनमन्तरेणापि प्राणादिभावानां परमार्थतः सत्त्वमित्याशङ्क्याऽऽह—**न चेति**। न हि विभोरात्मनो नभोवच्चलनं वास्तवमवकल्पते। न च तदभावे निरवयवस्य परिणामसम्भावनेत्यर्थः। प्राणादीनामात्मपरिणामत्वासम्भवे फलितमाह—**प्रचलितस्येति**। प्रगतं चलितं यस्य स तथा। कूटस्थस्यैवाऽऽत्मनो भासमाना भावा न परमार्थतः सन्तो भवितुमुत्सहन्ते। दृश्यत्वजडत्वादिना स्वप्नवन्मिथ्यात्वसिद्धेरित्यर्थः। एवं प्राणादिभावानां मिथ्यात्वं प्रसाध्य फलितं दर्शयन् पूर्वार्धाक्षराणां व्याख्यानमुपसंहरति—**अत इति**। अद्वयस्य परमार्थत्वात् तदात्मना कथमात्मा कल्पितः स्यादित्याशङ्क्य स्वरूपेणाकल्पितस्य संसृष्टरूपेण कल्पितत्वमिष्टमित्याह—**परमार्थसतेति**। अविद्यावशादिष्टा कल्पना न स्वभाववशादित्याह—**सदेति**। प्राणादीनामसत्त्वे सत्त्वेन कथं व्यवहारगोचरत्वमित्याशङ्क्य तृतीयपादार्थमाह—**ते चेति**। कल्पितानां प्राणादिभावानामधिष्ठानसत्तया सत्त्वेन न सत्ताऽवकल्प्यते। तेषामधिष्ठानापेक्षानियमाभावादित्याशङ्क्याऽऽह—**न हीति**। सर्वा विकल्पना साधिष्ठानैव दृश्यते। न चासतोऽधिष्ठानत्वमारोपितानुवेधाभावात् तदनुवेधात्तु सतोऽधिष्ठानत्वमेष्टव्यम्। तथा च प्राणादिभावानां वस्तुतोऽसत्त्वेऽपि सति कल्पितानां सत्त्वेन व्यवहारसिद्धिरित्यर्थः। चतुर्थपादार्थमाह—**अत इति**। स्वेनेति विशेषणं संसृष्टरूपेण

**नाऽऽत्मभावेन नानेदं न स्वेनापि कथञ्चन। न पृथङ् [1]नापृथक्किञ्चिदिति तत्त्वविदो विदुः।।३४।।**

**कल्पनावस्थायामप्यद्वयता शिवा। कल्पना एव त्वशिवाः। रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ताः, अद्वयताऽभयाऽतः सैव शिवा।।३३।।**

**कुतश्चाद्वयता शिवा? नानाभूतं पृथक्त्वमन्यस्यान्यस्माद् तत्र दृष्टं तत्राशिवं भवेत्। न ह्यत्राद्वये परमार्थ-५ सत्यात्मनि प्राणादिसंसारजातमिदं जगदात्मभावेन परमार्थस्वरूपेण निरूप्यमाणं नाना वस्त्वन्तरभूतं भवति। यथा**

अनुभूतिस्वरूपाचार्यटीका

सुखदुःखशून्यस्य सुषुप्तेः कर्मनिमित्तत्वात्। न चाऽऽयासप्रतिबन्धात्, निरायासस्यापि अकस्मात् सुषुप्तिदर्शनात्। अतो यदि तव कर्मास्ति, तन्निमित्तमनःक्रियाजः संयोगो युक्तः। मा वा भूत् कर्मनिमित्तं मनश्चलनम्, तथापि संयोगो न विरुध्यते सतोर्नैरन्तर्यातिरिक्तसंयोगसद्भावे मानाभावात्। तस्मात् सदेकस्वभावं विश्वं कल्पनयैव मनस्स्पन्दने सति १० ग्राह्यग्राहकद्वैतरूपेण भिन्नमिव प्रत्यवभासते; कल्पनाक्षये चाभावादेव नोपलभ्यते इत्याध्यात्मिकप्रक्रिया।।३३।।

किञ्च द्वैतवादी प्रष्टव्यः किं नानाभूतमिदं द्वैतमात्मतादात्म्येन सिध्यति, किं वा स्वातन्त्र्येण? नाद्यः इत्याह—**नात्मभावेनेति**। इदं नानाभूतं नात्मतादात्म्येन सिध्यति जडाजडयोस्तमःप्रकाशयोरिव विरुद्धत्वात् तादात्म्यानुपपत्तेः। भेदादिशून्यात्मतादात्म्ये च नानात्वासिद्धेरित्यर्थः। द्वितीयं प्रत्याह—**न स्वेनापीति**। सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येण सिद्धौ न नानाभूतं नाम स्यात् आत्मत्वप्रसङ्गात्। आत्मनोऽतिरेके च १५ संवित्संसर्गानिरूपणेनासिद्धिप्रसङ्गादित्यर्थः। परस्परमपि द्वैतं न पृथक्सिध्यति, पृथक्त्वस्य धर्मिप्रतियोगि-रूपावच्छिन्नत्वेन अन्योन्याश्रयापातात्। धर्मत्वरूपत्वयोश्च निरूपयितुमशक्यत्वाच्चेत्यर्थः। अन्योन्यमपृथगपि न किञ्चित्सिध्यति घटपटादिशब्दानां पर्यायतापातात् व्यवहारविलोपप्रसङ्गाच्च। अतो वास्तवाकारेण सर्वथा निरूपणासहमेव द्वैतमित्यर्थः। श्लोकस्य तात्पर्यार्थमाह—**कुतश्चेत्यादिना**। नानाभूतमित्यस्य व्याख्यानमन्यस्य अन्यस्मात्पृथक्त्वं [इति] यत्र व्याघ्रचौरादौ दृष्टं तत्र भयं भवेत्। तद्भयकारणं भेददर्शनमेव अद्वैते नास्तीत्याह—२० **न हि अत्रेति**। अध्यस्तमधिष्ठानरूपेण तत्त्वतो विचार्यमाणे असदेव भवतीत्यत्रोदाहरणमाह—**यथेति**। हस्ते गृहीत-प्रदीपो यदा प्रकाशेन रज्जुस्वरूपेण कल्पितं सर्पं विचारयति तदाऽसौ असन्नेव स्यादित्यर्थः। तदुक्तम्—

पुंसो निजमनोमोहकल्पितोऽनल्पदुःखदः। संसारदुःखवेतालो विचारेण विलीयते। इति।।३४।।[2]

आनन्दगिरिटीका

व्यभिचाराङ्गीकारार्थम्। कल्पनाराहित्यदशायामेवाद्वयता शिवेत्याशङ्क्य कल्पनामात्रस्याशिवत्वान्मैवमित्याह—**कल्पनेति**। २५ त्रासादीत्यादिशब्देन हर्षशोकादयो गृह्यन्ते। यदुक्तमद्वयता शिवेति तदुपपादयति—**अद्वयतेति**।।३३।।

किं च किमिदं नानाभूतं द्वैतमात्मतादात्म्येन वा सिध्यति, स्वातन्त्र्येण वेति विवेक्तव्यम्। नाऽऽद्य इत्याह—**नाऽऽत्मभावेनेति**। इदं हि नानाभूतं द्वैतं नाऽऽत्मतादात्म्येन सेद्धुमर्हति। जडाजडयोर्विरुद्धस्वभाव-योस्तादात्म्यायोगात्। भेदादिशून्यात्मतादात्म्ये च द्वैतस्य नानात्वासिद्धेरित्यर्थः। द्वितीयं दूषयति—**न स्वेनेति**। स्वेन सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येणापि नेदं द्वैतं सेद्धुं पारयति। तथा स्वातन्त्र्ये सत्यात्मत्वप्रसङ्गाद-३० नात्मनोऽद्वैतत्वापातादित्यर्थः। किं च किमिदं द्वैतमन्योन्यं पृथगपृथग्वेति विवेक्तव्यम्। नाऽऽद्य इत्याह—**न पृथगिति**। न हि किञ्चिदपि द्वैतं परस्परं पृथगेव सिध्यति पृथक्त्वस्य धर्मिप्रतियोगिरूपावच्छिन्नत्वेनान्योन्याश्रयत्वाद्धर्मत्व-स्वरूपत्वयोर्दुर्वचनत्वादित्यर्थः। नापि किञ्चिदन्योन्यमपृथग्भूत्वा सिध्यति। घटपटादिशब्दानां पर्यायत्वप्रसङ्गाद् व्यवहारलोपापातादित्याह—**नापृथगिति**। अतो वास्तवाकारेण सर्वथा निरूपणासहमेव द्वैतमिति फलितमाह—**इति तत्त्वेति**। यदुक्तमद्वयता शिवेति; तत्र हेत्वन्तरोपन्यासपरत्वं श्लोकस्य दर्शयति—**कुतश्चेति**। तदेव स्फुटयति—३५ **नानाभूतमित्यादिना**। नानाभूतमित्यस्य पर्यायोपादानं पृथक्त्वमिति। तस्य भयकारणत्वं प्रकटयति—**अन्यस्येति**। **तत्र** व्याघ्रचोरादाविति यावत्। तद्भयकारणं भेददर्शनमद्वये वस्तुनि नास्तीत्याह—**न हीति**। अध्यस्तमधिष्ठान-रूपेण तत्त्वतो निरूप्यमाणमसदेव भवतीत्यत्र दृष्टान्तमाह—**यथेति**। प्रदीपप्रकाशेनाधिष्ठानमात्रतया समारोपितः सर्पो

१. नापृथक्—सेद्धुमर्हतीति शेषः; २. यो.वा.मु.प्र. १४-२७।

**वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः। निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः।।३५।।**
**तस्मादेवं विदित्वैनमद्वैते योजयेत् स्मृतिम्। अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत्।।३६।।**

रज्जुस्वरूपेण प्रकाशेन निरूप्यमाणो न नानाभूतः कल्पितः सर्पोऽस्ति, तद्वत्। नापि स्वेन प्राणाद्यात्मनेदं विद्यते कदाचिदपि रज्जुसर्पवत् कल्पितत्वादेव। तथाऽन्योन्यं न पृथक्प्राणादि वस्तु यथाऽश्वान्महिषः पृथग्विद्यत एव। अतोऽसत्त्वान्नापृथग्विद्यतेऽन्योन्यं परेण वा किञ्चिदिति। एवं परमार्थतत्त्वमात्मविदो ब्राह्मणा विदुः। अतोऽशिव-हेतुत्वाभावादद्वयतैव शिवेत्यभिप्रायः।।३४।। ५

तदेतत् सम्यग्दर्शनं स्तूयते। विगतरागभयद्वेषक्रोधादिसर्वदोषैः सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपार-गैरवगतवेदार्थतत्त्वैर्ज्ञानिभिर्निर्विकल्पः सर्वविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन् स आत्मा प्रपञ्चोपशमोऽत एवाद्वयः। विगतदोषैरेव पण्डितैर्वेदान्तार्थतत्परैः संन्यासिभिः परमात्मा द्रष्टुं शक्यो नान्यै रागादिकलुषितचेतोभिः स्वपक्षपातिदर्शनैस्तार्किकादिभिरित्यभिप्रायः।।३५।। १०

यस्मात् सर्वानर्थप्रशमरूपत्वादद्वयं शिवमभयमत एवं विदित्वैनमद्वैते स्मृतिं योजयेत्। अद्वैतावगमायैव स्मृतिं

अनुभूतिस्वरूपाचार्यटीका

यस्य पुनः मिथ्याज्ञानसंस्कारप्राबल्यादुक्तविचारमात्रेण नाद्वयप्रत्ययदार्ढ्यं तस्य स्मृतिसन्ततिकर्तव्यतायां नियमविधिमाह—**योजयेत्स्मृतिमिति**। शास्त्रादद्वैतमवगम्य स्मृतिसन्ततिं कुर्वतो लोकानुवर्तनेऽपि नियममाह—**अद्वैतं समनुप्राप्येति**।।३५-३६।। १५

आनन्दगिरिटीका

यदा निरूप्यते तदा नासौ तद्व्यतिरेकेण सिध्यति। तथा जगदपीदं तदात्मस्वरूपेण निरूप्यमाणं नान्यत्वेन सिध्येदित्यर्थः। एवं प्रथमपादं व्याख्याय द्वितीयपादं व्याचष्टे—**नापीति**। **कदाचिदपीति**। कल्पनावस्थायाः प्रागूर्ध्वं चेत्यर्थः। न पृथगित्यस्यार्थमाह—**तथेति**। पृथक्त्वस्यान्योन्याश्रयत्वेन[1] दुर्वचनत्वात्। वैधर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याविरुद्धम्। नापृथगित्यादि व्याकरोति—**अत इति**। द्वैतस्य प्रागुक्तन्यायेनासत्त्वान्न तदन्योन्यं वा परेणाऽऽत्मना वा सहापृथग्भूत्वा सेद्धुमर्हति। अतो दुर्निरूपत्वान्न किञ्चिद् द्वैतं नामास्तीति ब्रह्मविदां मतमित्यर्थः। दृष्टं हि द्वैतं भयहेतुस्तदस्पृष्टं पुनरद्वैतमभयमेवेत्युपसंहरति—**अत इति**।।३४।। २०

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरतामाचरतीत्याशङ्क्याऽऽह—**वीतेति**। रागादिप्रतिबन्धविधुराणामेव यथोक्तमद्वैतदर्शनं न सर्वेषामित्यर्थः। श्लोकस्य तात्पर्यमाह—**तदेतदिति**। स्तुतिश्च तदुपायप्रवृत्तावुपकरोतीति शेषः। आदिपदेन सम्यग्दर्शनप्रतिबन्धकाः सर्वे दोषाः संगृह्यन्ते। रागादिविमोको यदा कदाचिदनधिकारिणामपि सम्भवत्यतो विशिनष्टि—**सर्वदेति**। सदा रागादिव्यावृत्तौ विवेकं हेतुं प्रपञ्चयति—**मुनिभिरिति**। विवेके च पदशक्तेर्वाक्य-तात्पर्यस्य च परिज्ञानं कारणमित्याह—**वेदेति**। एवं सम्यग्ज्ञानाधिकारिणं साधनचतुष्टयसम्पन्नमुक्त्वा तद्विषयं निरूपयति—**निर्विकल्प इति**। आत्मनश्चाक्षुषत्वशङ्कां वारयति—**उपलब्ध इति**। हिशब्दद्योत्यमर्थमाह—**वेदान्तेति**। सर्वविकल्पशून्यत्वमात्मनः स्फुटयितुं प्रपञ्चोपशमविशेषणम्। आत्मनोऽभावत्वं बहुव्रीहिणा प्रत्युदस्यते। हेतुहेतु-मद्भावेन पुनरुक्तिं विशेषणयोर्व्यासेधति—**अत एवेति**। सम्यग्दर्शनाधिकारिणो दर्शितानुपसंहरति—**विगतेति**। अनधिकारिणो दर्शयन् वैशेषिकवैनाशिकादिशास्त्राभिज्ञानामपि तदन्तर्भावं सूचयति—**नान्यैरिति**।।३५।। २५ ३०

मिथ्याज्ञानप्रचयसंस्काराद्वेदान्तार्थतात्पर्यवतां पण्डितानामपि नाद्वैते प्रत्ययदार्ढ्यं सिध्यतीत्याह—**तस्मादिति**। शास्त्रादद्वैतमवगम्य स्मृतिसन्ततिं कुर्वतो लोकानुवर्तने विधिनियममाह—**अद्वैतमिति**। तस्मादित्यस्यार्थ-माह—**यस्मादिति**। एवमिति निर्विकल्पत्वादिपरामर्शः। विदित्वा शास्त्रतोऽवगम्येत्यर्थः। अद्वैतावगतिदार्ढ्यार्थं

---

१. अन्योन्याश्रयत्वेनेति—भेदस्य वस्तुस्वरूपत्वे प्रतियोग्यनपेक्षत्वप्रसङ्गात्। नापि भेदस्य वस्तुधर्मत्वं धर्मिप्रतियोगिभेदानां युगपद्ग्रहणायोगात्। न च धर्मिप्रतियोगिज्ञानाभ्यां भेदप्रतीतिः भेदभेदिनोर्भेदेऽन-वस्थानात्—इति तत्त्वप्रदीपिका। भामत्यां तु अन्योन्याश्रयः उक्तः। तदित्थम्—अस्मादयं भिन्न इत्यत्र पञ्चम्युल्लिखितावधेः ग्रहो धर्मिणः सकाशादगृहीतभेदस्य न सम्भवति। भेदग्रहश्च नागृहीते प्रतियोगित्वे उपपद्यते धर्मिणोऽपि स्वापेक्षया तत्प्रसङ्गात्। ततश्चान्योन्याश्रयग्रस्तभेद एवारोपितः (कल्प० २-१-१६)। ३५

**निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च। चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्।।३७।।**

**तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः। तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत्।।३८।।**

इति गौडपादीयकारिकासु वैतथ्याख्यं द्वितीयं प्रकरणम्

**कुर्यादित्यर्थः। तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं साक्षादपरोक्षादजमात्मानं सर्वलोक-**
५ **व्यवहारातीतं जडवल्लोकमाचरेत्। अप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः।।३६।।**

**कया चर्यया लोकमाचरेदित्याह–निस्स्तुतिरिति। स्तुतिनमस्कारादिसर्वकर्मवर्जितस्त्यक्तसर्वबाह्यैषणः प्रतिपन्नपरमहंसपारिव्राज्य इत्यभिप्रायः। "एतं वै तमात्मानं विदित्वा" इत्यादिश्रुतेः। "तद्बुद्धयस्तदात्मानस्त-न्निष्ठास्तत्परायणाः" इत्यादिस्मृतेश्च। चलं शरीरं प्रतिक्षणमन्यथाभावात्। अचलमात्मतत्त्वम्। यदा कदाचिद्भो-जनादिव्यवहारनिमित्तमाकाशवदचलं स्वरूपमात्मतत्त्वमात्मनो निकेतमाश्रयमात्मस्थितिं विस्मृत्याहमिति मन्यते**
१० **यदा तदा चलो देहो निकेतो यस्य सोऽयमेवं चलाचलनिकेतो विद्वान्न पुनर्बाह्यविषयाश्रयः। स च यादृच्छिको भवेत्। यदृच्छाप्राप्तकौपीनाच्छादनग्रासमात्रदेहस्थितिरित्यर्थः।।३७।।**

**बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकं च देहादिलक्षणं रज्जुसर्पादिवत् स्वप्नमायादिवच्चासत्। "वाचारम्भणं**

अनुभूतिस्वरूपाचार्यटीका

चलश्चाचलश्च चलाचले निकेत आश्रयो यस्य स चलाचलनिकेतः। कदा तर्हि चलो देहो निकेत इत्यत आह—
१५ **यदा कदाचिदिति**। आत्मनि स्थितिं यदाकदाचित् विस्मरति, विस्मृत्य चाहमिति मन्यते यदेति योजना।।३७।।

अहमस्मि परं ब्रह्म न मत्तोऽन्यत्किञ्चिदस्तीति स्मृतिसन्ततिकरणमपि न सन्ध्यासमय एव, किन्तु नैरन्तर्येणै-वेत्याह—**तत्त्वमाध्यात्मिकमित्यादिना**। तत्त्वादप्रच्युतो भवेदित्येतत्पदं व्यतिरेकमुखेन व्याचष्टे—**यथा अतत्त्वदर्शी-**

आनन्दगिरिटीका

स्मृतिसन्ततिकर्तव्यतायां नियमविधिमभ्यनुजानाति—**अद्वैत इति**। अद्वैतमित्याद्युत्तरार्धं विभजते—**तच्चेति**।
२० जडसदृशस्य कथं लोकाचरणमबुद्धिपूर्वकारित्वादित्याशङ्क्याऽऽह—**सर्वलोकेति**। लौकिकव्यवहारानतीत्य विदुषो जडवदाचरणं कीदृशमित्यपेक्षायां चतुर्थं पादमनूद्य तात्पर्यमाह—**जडवदिति**। एवंविधोऽहमित्यात्मानं विद्याभिजनादिभिरप्रख्यापयञ्जडवदेव विद्वाँल्लोकमाचरेदिति योजना।।३६।।

ननु परापरदेवयोः स्तुतिपूर्वकप्रणामस्य श्राद्धादिक्रियायाश्च कर्तव्यतया प्रतिबन्धात् कथं विदुषो जडवदा-चरणमिति, तत्राऽऽह—**निस्स्तुतिरिति**। तथाऽपि जीवता क्वापि स्थातव्यत्वादाश्रयमुद्दिश्य प्रवृत्तेरावश्यकत्वात् कुतो
२५ जडसादृश्यमित्याशङ्क्याऽऽह—**चलेति**। चलं चाचलं च चलाचले ते निकेतो यस्याऽऽश्रयः स तथेति यावत्। तथाऽपि कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया प्रवृत्तिध्रौव्यान्न विदुषो जडतुल्यतेत्याशङ्क्याऽऽह—**यतिरिति**। आकाङ्क्षापूर्वकं पूर्वार्धाक्षराणि व्याचष्टे—**कयेत्यादिना**। वर्णाश्रमाभिमानवतस्तत्तत्कर्मसु वर्त्तमानस्य कथमिदं विशेषणमित्याशङ्क्याऽऽह—**त्यक्तेति**। पारमहंस्यपारिव्राज्यं प्रतिपत्तुमशक्यमप्रामाणिकत्वादिति चेन्नैवं श्रुतिस्मृतिसिद्धत्वादित्याह—**एतमिति**। विदित्वेत्यापातिकं वेदनं व्युत्थानहेतुत्वेनोच्यते। तस्मिन्नेव परस्मिन् वस्तुनि
३० विषयान्तरेभ्यो व्यावृत्ता बुद्धिर्येषामिति तथा। तदेव परं वस्त्वात्मा निरुपचरितं स्वरूपं येषां ते तथोच्यन्ते। तस्मिन्नेव परस्मिन्नात्मनि निष्ठा निश्चयेन स्थितिर्येषां ते तथेत्याह—**तन्निष्ठा इति**। तदेवाऽऽत्मभूतं परं वस्तु परमयनं परा गतिर्येषां ते तथेत्याह—**तत्परायणा इति**। आदिशब्देन 'सर्वकर्माणि मनसे'त्यादिवाक्यं गृह्यते। कदा पुनश्चलो देहो विदुषो निकेतो भवति, तत्राऽऽह—**यदेति**। अविवक्षिते हि कालविशेषे विवक्षितं व्यवहारं निमित्तीकृत्याऽऽत्मस्थितिमुक्तविशेषणवतीं विस्मृत्याहङ्कारममकारपरवशो यदा विद्वानवतिष्ठते तदेति योजना।
३५ स्वभावतस्त्वचलमात्मस्वरूपमेवास्य निकेतनं, चलं पुनः शरीरमुपदर्शितविस्मरणद्वारेणेति निगमयति—**सोऽयमिति**। अविदुषो विशेषार्थं व्यावर्त्यं कीर्तयति—**न पुनरिति**। चतुर्थपादार्थमाह—**स चेति**।।३७।।

अहमेव परं ब्रह्म न मत्तोऽन्यदस्ति किञ्चिदिति स्मृतिसन्ततिकरणमपि न कालविशेषनियतं किं तु नैरन्तर्येण कर्तव्यमित्याह—**तत्त्वमिति**। आध्यात्मिकं शरीरादि कल्पितं तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो देहाद् बहिरवस्थितं पृथिव्यादि च कल्पितत्वेनावस्तुत्वादधिष्ठानमात्रमेवेत्यनुभूय स्वयमपि द्रष्टा परमार्थवस्तुस्वभावमापन्नस्तत्रैवाऽऽ सक्तचेता

**विकारो नामधेयम्'' इत्यादिश्रुतेः। आत्मा च सबाह्याभ्यन्तरो ह्यजोऽपूर्वोऽनन्तरोऽबाह्यः कृत्स्न आकाशवत्सर्वगतः सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियः ''तत्सत्यं स आत्मा तत्त्वमसि'' इति श्रुतेः। इत्येवं तत्त्वं दृष्ट्वा तत्त्वीभूतस्तदारामो न बाह्यरमणो, यथाऽतत्त्वदर्शी कश्चिच्चित्तमात्मत्वेन प्रतिपन्नश्चित्तचलनमनु चलितमात्मानं मन्यमानस्तत्त्वाच्चलितं देहादिभूतमात्मानं कदाचिन्मन्यते प्रच्युतोऽहमात्मतत्त्वादिदानीमिति। समाहिते तु मनसि कदाचित्तत्त्वभूतं प्रसन्नात्मानं मन्यत इदानीमस्मि तत्त्वीभूत इति। न तथाऽऽत्मविद्भवेत्। आत्मन एकरूपत्वात् स्वरूपप्रच्यवनासम्भवाच्च। सदैव ब्रह्मास्मीत्यप्रच्युतो भवेत् तत्तत्त्वात् सदाऽप्रच्युतात्मतत्त्वदर्शनो भवेदित्यभिप्रायः। ''शुनि चैव श्वपाके च'' ''समं सर्वेषु भूतेषु'' इत्यादिस्मृतेः।।३८।।** ५

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ गौडपादीयागमशास्त्रभाष्ये वैतथ्याख्यं द्वितीयप्रकरणम्।।

अनुभूतिस्वरूपाचार्यटीका १०

त्यादिना। एकस्वरूपत्वे स्वरूपाप्रच्यवने च स्मृतिं पठति—**शुनि चैवेति**। समदर्शिनः सदेकरूपवस्तुदर्शिन एव पण्डिता इत्यर्थः। विनश्यत्स्वविनश्यन्तमिति स्वरूपाप्रच्यवनमुक्तम्।।३८।।

इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते गौडपादीयभाष्यटिप्पणे वैतथ्याख्यं द्वितीयं प्रकरणम्।।

आनन्दगिरिटीका

बाह्येभ्यो विषयेभ्यो व्यावृत्तबुद्धिस्तस्मिन्नेव तत्त्वे परमार्थभूते प्रतिष्ठितस्तद्दर्शननिष्ठः स्यादित्यर्थः। पृथिव्यादेश्च प्रत्येकं परमार्थत्वसम्भवे कथमद्वैतनिष्ठा सिध्येदित्याशङ्क्य व्याचष्टे—**बाह्यमित्यादिना**। किं तदुभयोस्तत्त्वं तदाह—**रज्जुसर्पवदिति**। उक्तस्य विकारजातस्यासत्त्वे प्रमाणमाह—**वाचारम्भणमिति**। द्रष्टुरात्मनोऽपि दृश्यप्रतियोगित्वात्तुल्यं वाचारम्भणत्वमित्याशङ्क्याऽऽह—**आत्मा चेति**। भवतु परस्याऽऽत्मनस्तत्तदागमवचननिर्देशादुक्तलक्षणत्वं तथाऽपि द्रष्टुरात्मनो न यथोक्तरूपत्वमित्याशङ्क्याऽऽह—**तत्सत्यमिति**। विशेषणानि तु प्राचीनानि तत्तदागमोपात्तान्यपुनरुक्तानि। द्वितीयार्धं व्याचष्टे—**इत्येवमिति**। आत्मारामत्वं कथमित्याशङ्क्य बाह्यविषयासक्तिं त्यक्त्वा प्रत्यगात्मन्येव परितृप्तत्वादित्याह—**न बाह्येति**। तत्त्वादप्रच्युतो भवतीत्येतद्व्यतिरेकमुखेनण व्याकरोति—**यथेत्यादिना**। अतत्त्वदर्शीति च्छेदः। आत्मविदो नाव्यवस्थितमात्मदर्शनमित्यत्र हेतुमाह—**आत्मन इति**। सति स्वरूपे स्वरूपात्प्रच्युतेरप्रसक्तत्वात्तत्प्रतिषेधो युक्तो न भवतीत्याशङ्क्याऽऽह—**सदेति**। वस्तुनः सदैकरूपत्वे स्मृतिमुदाहरति—**शुनि चेति**। समदर्शिनः सदैकरूपवस्तुदर्शिन एव पण्डिता नान्ये तथेत्यर्थः। स्वरूपाप्रच्यवने च स्मृतिं दर्शयति—**सममिति**। तत्र हि विनश्यत्स्वविनश्यन्तमिति स्वरूपाप्रच्यवनमुक्तम्।।३८।। १५ २० २५

इति श्रीमत्परहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयकारिकाभाष्यटीकायां वैतथ्याख्यं द्वितीयप्रकरणम्[१]।।

---

१. इदं तु बोध्यम्—अस्मिन्वैतथ्यप्रकरणे 'स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा। तथा विश्वमिदं दृष्टमि'ति श्लोकात् दृष्टिसृष्टिवाद एवाचार्याभिमत इति स्पष्टम्। तत्र च दोषप्रयुक्तत्वनिबन्धनं ज्ञातैकसत्ताकत्वमज्ञातसत्त्वाभावो वा द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्ताकत्वं वा दृष्टिसृष्टिः। 'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्यातच्चितोर्योगः षडस्माकमनादय' इत्युक्ताः षट्पदार्था दृष्टिसृष्टौ नान्तर्भवन्ति। अनाद्यतिरिक्तेष्वेव दृष्टिसृष्टेरङ्गीकारात् न च दृष्टिसृष्टिपक्षे स्वर्गं प्रति न यागः कारणतामियान्नापि श्रवणादिकं साक्षात्कारं प्रतीति वाच्यम्। स्वाप्निककार्यकारणभाववदेवोपपत्तेरध्यासलक्षणमपि तत्र नानुपपन्नं शुक्त्यवच्छिन्नचैतन्यस्य स्वरूपेण सत्यत्वात् सत्यमिथ्यावस्तुसम्भेदावभासस्य सम्भवात्। प्रतिपुरुषं प्रपञ्चभेदेऽपि सादृश्यादेव यो घटस्त्वया दृष्टः स एव मयाऽपीति प्रत्यभिज्ञोपपत्तिः। अयमेव प्रकारः श्रीवाचस्पत्युक्तनानाविद्याङ्गीकारपक्षेऽपि। न्यायमते विभिन्नपुरुषगतापेक्षाबुद्धिजन्यद्वित्वादिभेदेऽप्यभेदप्रत्यभिज्ञाऽत्रोदाहरणम्। न च 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवो राजा विशामयमि''त्यादिश्रुतिविरोधः। तस्या धारानित्यत्वेनोपपत्तेः 'यथोर्णनाभिः' इत्यादिश्रुत्युक्तकार्यकारणभावश्च लोकप्रसिद्धिमनुरुध्य। सर्वलोकसृष्टिश्च तत्तत्सृष्टिव्यक्तिमभिप्रेत्य 'यदा यत्पश्यति तदा तत्सृजती'त्यत्र तात्पर्यात्। अत एव 'मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम्। मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते' इति कारिका। विस्तरस्त्वद्वैतसिद्धौ वेदान्तसिद्धान्तमुक्तावल्यां च। ३० ३५ ४०

## अथ गौडपादीयकारिकासु अद्वैताख्यं तृतीयं प्रकरणम्

**ॐ। उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते। प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः।।१।।**

**ओङ्कारनिर्णय उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण। ज्ञाते द्वैतं न विद्यत इति च। तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित् तर्केणापीत्यत आह। शक्यते तर्केणापि ज्ञातुम्। तत् कथमित्यद्वैतप्रकरण-मारभ्यते। उपास्योपासनादिभेदजातं सर्वं वितथं, केवलश्चाऽऽत्माऽद्वयः परमार्थ इति स्थितमतीते प्रकरणे। यत उपासनाश्रित उपासनामात्मनो मोक्षसाधनत्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म तदुपासनं कृत्वा जाते ब्रह्मणी-दानीं वर्तमानोऽजं ब्रह्म शरीरपातादूर्ध्वं प्रतिपत्स्ये। प्रागुत्पत्तेश्चाजमिदं सर्वमहं च। यदात्मकोऽहं प्रागुत्पत्तेरिदानीं जातो, जाते ब्रह्मणि च वर्तमान उपासनया पुनस्तदेव प्रतिपत्स्य इत्येवमुपासनाश्रितो धर्मः साधको येनैवं क्षुद्र-** ५

अनुभूतिस्वरूपाचार्यटीका

अहमस्मि परं ब्रह्म निश्चितं चित्त चिन्त्यताम्। चिद्रूपत्वादसङ्गत्वादबाध्यत्वात्प्रियत्वतः।।

१० तर्कतोऽप्यद्वैतं सम्भावयितुं प्रकरणं प्रारिप्सुः उपास्योपासकभेददृष्टिं तावन्निन्दति प्रथमश्लोकेन—**उपासनेति**। शरीरस्य धारणात् धर्मो जीवः, भूतसङ्घाताकारेण जाते ब्रह्मणि तदभिमानितया वर्तते। प्रागुत्पत्तेरजं सर्वमिति वस्तु कालावच्छिन्नं मन्यते, येनैवं मिथ्याज्ञानी तेनेति योजना।

वृत्तानुवादपूर्वकं प्रकरणमारभते—**ओङ्कारेत्यादिना**। तर्केणाद्वैतं सम्भावयितुं यदि प्रकरणमारभ्यते तर्हि उपासकनिन्दा कुतः? तत्राह—**उपास्येति**। कथं तर्हि "सबाह्याभ्यन्तरो ह्यज" इति श्रुतिः, तत्राह—**प्रागुत्पत्तेश्च अजमिदं सर्वमहं चेति** मन्यते। अतोऽजत्वश्रुतिः प्रागवस्थब्रह्मविषयेत्यर्थः। यद्यस्यामवस्थायां कार्यमात्रं ब्रह्म, किं १५ तर्हि उपासनया प्राप्तव्यमित्यत आह—**यदात्मकोऽहं** प्रागुत्पत्तेरासं तदेव पुनः प्रलये प्रतिपत्स्ये इति सम्बन्धः।

आनन्दगिरिटीका

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्याद्वैतं पारमार्थिकमपि तर्कतः सम्भावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदपवदति—**उपासनेति**। देहस्य धारणाद्धर्मो जीवो भूतसङ्घाताकारेण जाते २० ब्रह्मणि तदभिमानित्वेन वर्तते। स प्रागुत्पत्तेरजं सर्वमित्येवं कालावच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थ-साधनत्वेनाऽऽश्रितस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्ध्वमित्येवं यतो मिथ्याज्ञानवानवतिष्ठते तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः स्मृतश्चिन्तित इत्यर्थः। प्रकरणान्तरमवतारयन् वृत्तमनुद्रवति—**ओङ्कारेति**। तस्य हि निर्णये प्रथमे प्रकरणे प्रपञ्चोपशमः शिवोऽद्वैत इति विशेषणैरात्मा प्रतिज्ञामात्रेणाद्वितीयो व्याख्यात इत्यर्थः। द्वितीयप्रकरणार्थं संक्षिप्यानुवदति—**ज्ञात इति**। तत्रैवाऽऽद्ये प्रकरणे 'ज्ञाते द्वैतं न विद्यत' इत्यत्र प्रतिज्ञामात्रेण द्वैताभाव उक्तः। २५ स तु द्वितीयेन प्रकरणेन हेतुदृष्टान्तात्मकेन तर्केण च प्रतिपादितो, नात्र प्रतिपादयितव्यमवशिष्टमस्तीत्यर्थः। तृतीयं प्रकरणमाकाङ्क्षापूर्वकमवतारयति—**अद्वैतमिति**। "नैषा तर्केण मतिरापनेये"ति श्रुतेरद्वैतं कथं तर्केण ज्ञातुं शक्य-मित्याक्षिपति—**तत्कथमिति**। स्वतन्त्रतर्काप्रवेशेऽपि तस्मिन्नागमिकतर्कस्य सहकारितया सम्भावनाहेतुत्वात् तर्केणापि ज्ञातुं शक्यमिति व्यवहारोपपत्तिरिति मत्वाऽऽह—**अद्वैतेति**। यदि तर्केणाद्वैतं सम्भावयितुं प्रकरणमारभ्यते तर्हि किमित्युपासकनिन्दा प्रथमं प्रस्तूयते, तत्राऽऽह—**उपास्येति**। उक्तवक्ष्यमाणविरोधित्वादुपासकस्य तन्निन्दा ३० प्रकृतोपयोगिनीत्यर्थः। कथं तर्हि तत्र तत्राजत्वमात्मनो दर्शयन्ती श्रुतिर्घटिष्यते, तत्राऽऽह—**प्रागिति**। प्रागवस्थायां सर्वमिदमजमहं च तथेत्युपासको यतो मन्यतेऽतश्च प्रागवस्थब्रह्मविषया भविष्यत्यजत्वश्रुतिरित्यर्थः। कार्यस्थित्य-वस्थायां यदि ब्रह्म तन्मात्रमिष्टं तर्हि किमुपासनया प्राप्तव्यमित्याशङ्क्याऽऽह—**यदात्मक इति**। इदानीमुत्पत्त्यवस्थायां जातो जाते ब्रह्मणि स्थित्यवस्थायां वर्तमानोऽहं प्रागुत्पत्तेर्यदात्मकः सन्नासं तदेव पुनः प्रलयावस्थायामुपासनया प्रतिपत्स्ये, तत्क्रतुन्यायादिति सम्बन्धः। तलवकाराणां शाखायामुपास्यस्य ब्रह्मत्वनिषेधदर्शनाच्चोपासकनिन्दा

**अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम्। यथा न जायते किंचिज्जायमानं समन्ततः।।२।।**
**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः। घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम्।।३।।**

ब्रह्मवित् तेनासौ कारणेन कृपणो दीनोऽल्पकः स्मृतो नित्याजब्रह्मदर्शिभिरित्यभिप्रायः। ''यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'' इत्यादिश्रुतेस्तलवकाराणाम्।।१।।

सबाह्याभ्यन्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानो जातोऽहं जाते ब्रह्मणि वर्ते तदुपासनाश्रितः सन् ब्रह्म प्रतिपत्स्य इत्येवं प्रतिपन्नः कृपणो भवति यस्मादतो वक्ष्याम्यकार्पण्यमकृपणभावमजं ब्रह्म। तद्धि कार्पण्यास्पदम् ''यत्रान्योऽन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं मर्त्यमसत्'' ''वाचारम्भणं विकारो नामधेयम्'' इत्यादिश्रुतिभ्यः। तद्विपरीतं सबाह्याभ्यन्तरमजमकार्पण्यं भूमाख्यं ब्रह्म यत्प्राप्याविद्याकृतसर्वकार्पण्यनिवृत्तिस्तदकार्पण्यं वक्ष्यामीत्यर्थः। तदजाति, अविद्यमाना जातिरस्य। समतां गतं सर्वसाम्यं गतम्। कस्मात्? अवयववैषम्याभावात्। यद्धि सावयवं वस्तु तदवयववैषम्यं गच्छज्जायत इत्युच्यते। इदं तु निरवयवत्वात् समतां गतमिति न कैश्चिदवयवैः स्फुटत्यतोऽजात्यकार्पण्यम्। समन्ततः समन्तात्, यथा न जायते किञ्चिदल्पमपि न स्फुटति रज्जुसर्पवदविद्याकृतदृष्ट्या जायमानं येन प्रकारेण न जायते सर्वतोऽजमेव ब्रह्म भवति तथा तं प्रकारं शृण्वित्यर्थः।।२।।

अजाति ब्रह्माकार्पण्यं वक्ष्यामीति प्रतिज्ञातं, तत्सिद्ध्यर्थं हेतुं दृष्टान्तं च वक्ष्यामीत्याह–आत्मा परो हि यस्मादाकाशवत्सूक्ष्मो निरवयवः सर्वगत आकाशवदुक्तो जीवैः क्षेत्रज्ञैर्घटाकाशैरिव घटाकाशतुल्यैः उदित उक्तः स

### अनुभूतिस्वरूपाचार्यटीका

तलवकाराणां शाखायामुपास्यस्य ब्रह्मत्वप्रतिषेधाच्च निन्दा युक्तेत्याह—**यद्वाचेति**।।१।।

जातिःजन्म तदभावे हेतुः **समतां गतमित्येतद्** व्याचष्टे—सर्वात्मना कात्स्न्येन साम्यं निर्विशेषतां स्वत एव गतं प्राप्तम् यस्मादिति। निर्विशेषत्वे हेतुः—**अवयववैषम्याभावादिति**। व्यतिरेकमुखेनाजत्वं प्रपञ्चयति—**यद्धीत्यादिना**।।२।।

आत्मा स्वगततात्त्विकभेदशून्यः सूक्ष्मत्वान्निरवयवत्त्वात् सर्वगतत्वादाकाशवदिति प्रयोगः। तर्हि एते जीवाः किमात्मका इत्यत आह—**जीवैरिति**। इत्थंभावे तृतीया। जीवरूपेण परमात्मैवोक्तः ''क्षेत्रज्ञं चापि मां विद्धी''त्यादिष्वित्यर्थः। 'वद' व्यक्तायां वाचीति धातुनिष्पन्नमुदित इति पदं गृहीत्वा व्याख्यातम्। तदसङ्गतम्,

### आनन्दगिरिटीका

युक्तेत्याह—**यद्वाचेति**। अनभ्युदितमनभिप्रकाशितम्, अभ्युद्यतेऽभिप्रकाश्यते, उपासते वाचा विषयीकुर्वन्तीत्यर्थः। आदिशब्देन 'यन्मनसे'त्यादि गृह्यते।।१।।

भेददर्शिनमुपासकमद्वैतविरोधिनं निन्दित्वा सम्प्रत्यद्वैतप्रतिज्ञां करोति—**अत इति**। जातिर्जन्म, तद्रहितमजाति। तत्र हेतुमाह—**समतामिति**। जन्मराहित्यं साधयति—**यथेति**। अतःशब्दार्थमाह—**सबाह्येति**। प्रतिज्ञाभागं विभजते—**अकृपणेति**। तदेव व्यतिरेकमुखेण स्फोरयति—**तद्धीति**। दर्शनादिविशेषव्यवहारगोचरीभूतं कार्यजातं परिच्छिन्नं नाशि चोच्यते। तदेव कृपणत्वालम्बनमित्यर्थः। तच्च मिथ्याभूतमित्यत्र प्रमाणमाह—**वाचारम्भणमिति**। कार्पण्यमुक्त्वा तदभावरूपमकार्पण्यं प्रकटयति—**तद्विपरीतमिति**। प्राप्य ज्ञात्वेति यावत्। द्वितीयपादं व्याचष्टे—**तदजातीत्यादिना**। सर्वात्मना साम्यं निर्विशेषत्वं गतमित्यत्र हेतुं पृच्छति—**कस्मादिति**। निर्विशेषत्वे हेतुमाह—**अवयवेति**। हेतुमेव प्रकटयन् व्यतिरेकमुखेणाजत्वं प्रपञ्चयति—**यद्धीत्यादिना**। समन्तत इति पूर्णत्वसङ्कीर्तनम्। द्वितीयार्धं व्याचष्टे—**यथेत्यादिना**। यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वं भ्रान्तिदृष्ट्या जायमानत्वेन भासमानमपि यथा येन प्रकारेण वस्तुतो न जायते किं तु सर्वतो देशतः कालतो वस्तुतश्च पूर्णं कूटस्थमेव वस्तु भवति तथा तं प्रकारमिति सम्बन्धः।।२।।

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मा प्रकृतः, स कीदृगित्यपेक्षायामाह—**आत्मा हीति**। जीवभेदप्रतीतिस्तर्हि कथमित्याशङ्क्याऽऽह—**जीवैरिति**। यथाऽऽकाशो विभुत्वादिधर्मः स्वगततात्त्विकभेदवान्न भवति तथा परमात्मा विशेषाभावात्। यथा च महाकाशो घटाकाशाकारेण प्रतीयते तथा परमात्मा नानाविधजीवाकारेण प्रतीतिगोचरो

**एवाऽऽकाशसमः पर आत्मा। अथवा घटाकाशैर्यथाऽऽकाश उदित उत्पन्नस्तथा परो जीवात्मभिरुत्पन्नः। जीवात्मनां परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु सा महाकाशाद् घटाकाशोत्पत्तिसमा न परमार्थत इत्यभिप्रायः। तस्मादेवाकाशाद् घटादयः सङ्घाता यथोत्पद्यन्त एवमाकाशस्थानीयात्परमात्मनः पृथिव्यादिभूतसङ्घाता आध्यात्मिकाश्च कार्य-**

अनुभूतिस्वरूपाचार्यटीका

५ घटतुल्यसङ्घातैः पर एवोक्त इति सप्रपञ्चताप्रसङ्गादतोऽपरितोषादाह—**अथवेति**। आकाशस्यावकाशप्रदानेन घटाद्युत्पत्तौ कारणत्वं निर्विकारस्यैव दृष्टमित्यभिप्रेत्याऽऽह—**तस्मादेवाकाशादिति**।

अत्र आचार्येणावच्छेदस्योदाहृतत्वादवच्छेदपक्ष एव सिद्धान्तो न प्रतिबिम्बपक्ष इति **केचिज्जल्पन्ति**। ते प्रष्टव्याः, कोऽयमवच्छेदो नाम? कल्पितखिल्यप्रदेशाल्पीकरणम्, उत चिद्धातोरेव प्रत्युपाधि पूर्णस्यैव मिथ्यावस्थानं, १० बहिश्च पूर्णस्यावस्थितिः। नाद्यः आचार्याभिप्रायो, यतः आचार्यः पदे पदे जीवानां ब्रह्मैकत्वं पारमार्थिकमिति प्रतिपादयति। कल्पिताकल्पितयोरैक्यं न सत्यं भवति। कल्पितानाञ्च ज्ञानबाध्यत्वात् तत्त्वमसीत्युपदेशः तत्फलं च नावकल्पते। द्वितीये तु—प्रतिबिम्बपक्षान्न भेदः। तथा च प्रतिबिम्बश्रुतिः—"अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥" इति वस्तुन एवोपाध्यन्तर्मिथ्यावस्थानं बहिश्चोपाधेः निरुपाधिकस्य पूर्णस्यावस्थानं दर्शयति। न चैतद्विरुद्धं, निरवयवस्यापि नभस एवंरूपतादर्शनात्। **प्राभाकरादीनां** च जातेरमूर्तायाः प्रतिपिण्डं कात्स्न्येंनाभिव्यक्तेः बहिश्चावस्थानस्योपगमात्। सर्वगतवर्णवादिनां च १५ प्रतिध्वनि कात्स्न्येंन वर्णाभिव्यक्तेः, बहिश्च सद्भावस्याभ्युपगमात्। समवायादीनां च तद्वादिभिरित्थंभावस्योपगमात्। तस्मादमूर्तस्यायमेव स्वभावो यत् प्रत्यवच्छेदकं पूर्णस्यैवाभिव्यक्तिः बहिश्च सद्भाव इति। न च पृथग्देश एवोपाधिः, आकाश एव व्यभिचारात्। न च प्रतिबिम्बत्वे सादित्वं, स्वरूपैक्याभ्युपगमात्। तस्मादुदाहरणे शब्दभेद एव नार्थभेद इति व्यर्थः प्रतिबिम्बपक्षे प्रद्वेषः।

**ये तु** एकस्य ब्रह्मण एकेनैवोपाधिना अवच्छेदादेकजीवतामाहुः, न कल्पितोऽवच्छेदभेदोऽस्ति। न २० चानवच्छिन्नं बिम्बकल्पं ब्रह्म, किन्तु जीव एव अवच्छेदनाशे ब्रह्म भविष्यति। कस्यचिदपि प्राङ्मोक्षो नाभूत्। उत्तरत्र शास्त्रप्रामाण्यात् भविष्यतीति च। तेषां प्रवृत्तिसाङ्कर्यं सर्वशरीराणां दुष्परिहरम्। आचार्यस्य च साङ्कर्यपरिहार-प्रयोजनः प्रयासः 'यथैकस्मिन् घटाकाश' इत्यादिः तैर्व्यर्थः कृतः स्यात्। "तद्यो यो देवानां प्रत्यबुध्यत" इत्यादि श्रुतिः 'इहैव तैर्जितस्सर्गः[1]' 'बहवो ज्ञानतपसा पूता मद्भावमागता' इत्यादि भगवद्वचनञ्च बार्हस्पत्यवत्कल्पितं स्यात्। आचार्यस्य 'चालब्धावरणास्सर्वे धर्माः प्रकृतिनिर्मलाः' इत्यादिवचनस्यार्थहानिश्च व्यर्थैव[वृथैव]कृता। प्रतिशिष्यं च २५ तत्त्वमसि-वाक्यार्थानुस्मारकनामकरणं प्रतारकत्वमात्रम्, अव्युत्पन्नव्युत्पादनार्थं पदार्थशोधनमुपनिषत्सु च संसार्य-संसारिप्रकरणभेदकरणं निरर्थकम्। बिम्बकल्पब्रह्मानभ्युपगमात्। विस्तरतश्चायम्मार्गोऽपाकारी**इष्टसिद्धिविवरणे**। तस्माद् व्यावहारिकदृष्ट्याऽवच्छेदभेदवर्णनं तत्त्वदृष्ट्या 'न निरोध' इत्यादि न्याय्यम्। दृष्टिद्वयबहिष्कृतस्त्वयमेक-

आनन्दगिरिटीका

३० भवतीत्यर्थः। कथं सङ्घातानां परस्मादुत्पत्तिरित्याशङ्क्याह—**घटादिवदिति**। यथा मृदः सकाशाद्घटादयो जायन्ते तथा परमात्मैव पृथिव्यादिसङ्घाताकारेण जायत इत्यर्थः। यदाऽऽत्मनो जीवादीनामुत्पत्तिरिष्टा तदा तस्यामुत्पत्तौ दृष्टान्तवचनमेतदित्याह—**जाताविति**। श्लोकस्य वृत्तानुवादपूर्वकं तात्पर्यमाह—**अजातीत्यादिना**। प्रथमपादस्याक्षरार्थमाह—**आत्मेत्यादिना**। विमतः स्वगततात्त्विकभेदशून्यः सूक्ष्मत्वान्निरवयवत्वाद्विभुत्वादाकाशवत्। न च परमाण्वादौ सूक्ष्मत्वादेर्व्यभिचारः। तस्यैवासम्मतत्वात्। क्वचिदपि तात्त्विकभेदासम्प्रतिपत्तेश्चेत्यर्थः। जीवैरित्यादि ३५ व्याचष्टे—**जीवैरिति**। जीवाकारेण परमात्मैवोक्तः। "क्षेत्रज्ञं चापि मां विद्धि" इति स्मृतेरित्यर्थः। उदित-शब्दश्चेदुक्तार्थस्तर्हि परस्यैवाऽऽत्मनः सङ्घातरूपेणोक्तत्वे सप्रपञ्चत्वं प्रसज्येतेत्याशङ्क्याऽऽह—**अथ वेति**। तर्हि [2]नात्माऽश्रुतेरिति न्यायविरोधः स्यादित्याशङ्क्याऽऽह—**जीवात्मनामिति**। तृतीयपादं व्याचष्टे—**तस्मादेवेति**। उक्तेऽर्थे

---

१. सर्गः = जन्म। २. ब्र० सू० २-३-१७ जीवः नोत्पद्यते उत्पत्तिप्रकरणे तदुत्पत्त्यश्रुतेः, ताभ्यः 'न जीवो म्रियते' इत्यादिश्रुतिभ्यः तन्नित्यत्वावगतेः।

**घटादिषु प्रलीनेषु घटाकाशादयो यथा। आकाशे संप्रलीयन्ते तद्वज्जीवा इहाऽऽत्मनि।।४।।**
**यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते। न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः।।५।।**

कारणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते। अत उच्यते घटादिवच्च सङ्घातैरुदित इति। यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्याऽऽत्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादिः।।३।।

यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्तिः, यथा घटादिप्रलये घटाकाशादिप्रलयस्तद्वद् देहादिसङ्घातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहाऽऽत्मनि प्रलयो न स्वत इत्यर्थः।।४।।

सर्वदेहेष्वात्मैकत्व एकस्मिञ्जननमरणसुखादिमत्यात्मनि सर्वात्मनां तत्सम्बन्धः क्रियाफलसाङ्कर्यं च स्यादिति य आहुर्द्वैतिनस्तान्प्रतीदमुच्यते। यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते संयुक्ते न सर्वे घटाकाशादयस्तद्रजोधूमादिभिः संयुज्यन्ते, तद्वज्जीवाः सुखादिभिः। नन्वेक एवाऽऽत्मा? बाढम्, ननु न श्रुतं त्वयाऽऽकाशवत्सर्वसङ्घातेष्वेक एवाऽऽत्मेति। यद्येक एवाऽऽत्मा तर्हि सर्वत्र सुखी दुःखी च स्यात्। न चेदं सांख्यचोद्यं सम्भवति। १०

अनुभूतिस्वरूपाचार्यटीका

संसारिवादः त्रैपुरसालग्रामाद्यर्चनपरैः ब्रह्मविद्यापराङ्मुखैः उत्प्रेक्षित इत्युपेक्षणीयम्। "एकात्मवन्तो देहाः स्यु"रित्यादिवचनन्तु स्वरूपैक्याभिप्रायमित्यलम्।।३।।

एवमद्वैते सृष्टिश्रुतिविरोधं श्रुत्यर्थापत्तिविरोधं च परिहृत्य प्रलयश्रुतितदर्थापत्तिविरोधं परिहरति—**घटादिष्विति**।।४।। १५

इदानीं दृष्टार्थापत्तिविरोधं परिहरति—**यथैकस्मिन्निति**। आकाशदृष्टान्तेनान्यथाप्युपपत्तिरुक्ता। तत्र वैषम्यं शङ्कते—**नन्वेक एवेति**। शब्दसमवायिकारणं हि आकाशः, तस्य दिवि भुवि च अविशेषादेकत्वे सिद्धे कल्पितभेदात् तत्र व्यवस्था युक्ता, तथा आत्मस्वरूपैक्ये न युक्तिर्दृश्यत इत्यर्थः। पूर्वोक्तां युक्तिं स्मारयति—**बाढं, ननु नेति**। यदि सर्वदेहेषु एक एवात्मा, स एव तर्हि सुखी दुःखी च, घटादिष्वाकाशस्वरूपस्यैव धूमादिसम्बन्धदर्शनात्, अतः २०

आनन्दगिरिटीका

वाक्यमवतारयति—**अत इति**। आकाशस्यावकाशप्रदानेन घटाद्युत्पत्तौ कारणत्वं निर्विकारस्यैव दृष्टमिति द्रष्टव्यम्। जातावित्यादेरर्थमाह—**यदेति**।।३।।

अद्वैतस्य जीवसृष्टिश्रुतिविरोधं परिहृत्य तस्यैव जीवप्रलयश्रुत्या विरोधमाशङ्क्य परिहरति—**घटादिष्विति**। औपाधिकौ जीवानामुत्पत्तिप्रलयौ, न स्वाभाविकौ। तथा चोत्पत्तिश्रुत्या विरोधाभाववदद्वैतस्य प्रलयश्रुत्याऽपि न विरोधोऽस्तीति श्लोकाक्षरव्याख्यानेन प्रकटयति—**यथेत्यादिना**।।४।। २५

इदानीमद्वैतस्य व्यवस्थानुपपत्त्या विरोधमाशङ्क्य परिहरति—**यथैकस्मिन्निति**। उक्तदृष्टान्तवशादेकस्मिञ्जीवे सुखादिसंयुक्ते सत्यपरे जीवास्तैरेव सुखादिभिर्न संयुज्यन्त औपाधिकभेदादित्याह—**तद्वदिति**। श्लोकव्यावर्त्यामाशङ्कां दर्शयति—**सर्वदेहेष्विति**। ऐकात्म्ये कर्तर्येकस्मिन् कर्तारः सर्वे, भोक्तरि चैकस्मिन् भोक्तारः सर्वे भवेयुरित्यव्यवस्थान्तरमाह—**क्रियेति**। व्यवस्थानुपपत्त्या द्वैतमेष्टव्यमिति वदन्तं प्रत्युत्तरत्वेन श्लोकमवतारयति—**तान् प्रतीति**। किमिदमैकात्म्ये साङ्कर्यम्? किमेकस्मिञ्जीवे व्यवस्थितेन सुखादिना जीवान्तराणां तद्वत्त्वं स्यादित्युच्यते किं वा सर्वोपाधिष्वात्मैक्यात्तस्य स्वरूपेण सर्वसुखादिमत्त्वं स्यादित्यापाद्यते, तत्राऽऽद्यं प्रत्याह—**तद्वदिति**। ३०

आत्मनः सर्वत्रैकत्वात्तस्य स्वरूपेण सर्वसुखादिमत्त्वमिति द्वितीयं पक्षं विवक्षन्नाशङ्कते—**नन्विति**। सर्वत्राऽऽत्मैकत्वमुक्तमङ्गीकरोति—**बाढमिति**। तदेकत्वमुपपत्तिशून्यं कथमङ्गीकृतमित्याशङ्क्याऽऽह—**ननु नेति**। यदि सर्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्यैवैकस्य प्राप्तमिति न व्यवस्थासिद्धिरिति चोदयति—**यद्येक एवेति**। आत्मस्वरूपस्य सर्वत्रैकत्वेऽपि कल्पितभेदाद् व्यवस्थासिद्धिरित्यभिप्रेत्य किमिदं सांख्यस्य चोद्यं किं वा वैशेषिकादेरिति विकल्प्याऽऽद्यं प्रत्याह—**न चेदमिति**। किं चैकात्म्यं दूषयता सांख्येन तद्भेदोऽभ्युपगम्यते। स च नाभ्युपगन्तुं शक्यते तन्मानाभावादित्याह—**न चेति**। प्रधानं हि कस्यचिद्भोगमपवर्गं च कस्यचिदादधत् पुरुषशेषमिष्यते। तच्च ३५

**न हि सांख्य आत्मनः सुखदुःखादिमत्त्वमिच्छति बुद्धिसमवायाभ्युपगमात्सुखदुःखादीनाम्। न चोपलब्धिस्वरूपस्याऽऽत्मनो भेदकल्पनायां प्रमाणमस्ति। भेदाभावे प्रधानस्य पारार्थ्यानुपपत्तिरिति चेत्। न। प्रधानकृतस्यार्थस्याऽऽत्मन्यसमवायात्। यदि हि प्रधानकृतो बन्धो मोक्षो वाऽर्थः पुरुषेषु भेदेन समवैति, ततः प्रधानस्य पारार्थ्यमात्मैकत्वे नोपपद्यत इति युक्ता पुरुषभेदकल्पना। न च सांख्यैर्बन्धो मोक्षो वाऽर्थः पुरुषसमवेतोऽभ्युपगम्यते। निर्विशेषाश्च चेतनमात्रा आत्मानोऽभ्युपगम्यन्ते। अतः पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पारार्थ्यं सिद्धं, न तु पुरुषभेदप्रयुक्तमिति। अतः पुरुषभेदकल्पनायां न प्रधानस्य पारार्थ्यं हेतुः। न चान्यत् पुरुषभेदकल्पनायां प्रमाणमस्ति सांख्यानाम्। परसत्तामात्रमेव चैतन्निमित्तीकृत्य स्वयं बध्यते मुच्यते च प्रधानम्। परश्चोपलब्धिमात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतुर्न केनचिद्विशेषेणेति केवलमूढतयैव पुरुषभेदकल्पना वेदार्थपरित्यागश्च।**

**ये त्वाहुर्वैशेषिकादय इच्छादय आत्मसमवायिन इति। तदप्यसत्; स्मृतिहेतूनां संस्कारणामप्रदेशवत्यात्मन्यसमवायात्।**

अनुभूतिस्वरूपाचार्यटीका

परो न स्यादित्यर्थः। इदं चोद्यं किं **सांख्यस्य वैशेषिकादेर्वा**, आद्यं प्रत्याह—**नेदमित्यादिना**। किञ्चैकात्म्ये दोषं ब्रुवतः सांख्यस्य भेद इष्टो न सम्भवतीत्याह—**न चोपलब्धीति**। एकलक्षणं हि एकम्, भिन्नलक्षणं च भिन्नं प्रसिद्धम्, अन्यथा एकानेकविभागानुपपत्तेः। अत आत्मनोऽपि उपलब्धिमात्रलक्षणस्य न प्रतिदेहं तात्त्विको भेदः सम्भवतीत्यर्थः। प्रधानं कस्यचिद्भोगं कस्यचिदपवर्गं कुर्वत् पुरुषशेषं भवति, तन्नोपपद्यते पुरुषभेदाभावे, अतोऽर्थापत्त्या भेदः प्रतीयत इत्युक्तेऽनुदयमाह—**न प्रधान इत्यादिना**। येन यस्योपकारः क्रियते स तस्य शेषः प्रसिद्धः, प्रधानेन च पुरुषस्य न कोऽपि उपकारः क्रियते, अतः पारार्थ्यमेव न घटत इत्यर्थः। यदि पारार्थ्यबलादेव पुरुषे कश्चिदतिशय इष्यते तदाऽपसिद्धान्त इत्याह—**निर्विशेषाश्चेति**। किञ्च पारार्थ्यं प्रधानस्य परं शेषिणमपेक्षते न भेदमात्रमतोऽन्यथाप्युपपत्तिरित्याह—**पुरुषसत्तेति**। यच्चाहुः—''जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्याच्चैव।'' इति, तदपि न सांख्यमतानुसारेण पुंभेदसाधकं [1]व्यधिकरणासिद्धत्वादित्याह—**न चान्यदिति**। न केवलं निष्प्रमाणिका पुंभेदकल्पना, निष्प्रयोजना च सांख्यानामित्याह—**परसत्तामात्रं चेदिति**।

द्वितीयं प्रत्याह—**ये त्वाहुरित्यादिना**। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः नव विशेषगुणा आत्मन इष्यन्ते **वैशेषिकादिभिः**। ते किं यावदात्मसमवायिनः, एकदेशवृत्तयो वा? आद्ये युगपत्सर्वावभासादिप्रसङ्गः। यथा

आनन्दगिरिटीका

पुरुषभेदाभावे नोपपद्यते तेनार्थापत्त्या पुरुषभेदः सिध्यतीति शङ्कते—**भेदेति**। अर्थापत्तेरनुदयं वदन्नुत्तरमाह—**नेत्यादिना**। संक्षिप्तमेवोक्तं विवृणोति—**यदि हीति**। प्रधानस्य पारार्थ्यसामर्थ्यादेव पुरुषेषु कश्चिदतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह—**निर्विशेषा इति**। किं च प्रधानस्य पारार्थ्यं परं शेषिणमपेक्षते, न तस्मिन् भेदमपि काङ्क्षते। अतोऽन्यथाऽप्युपपत्तिरित्याह—**अत इति**। जन्ममरणादिव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं व्यधिकरणत्वादिति मत्वाऽऽह—**न चेति**। न केवलं प्रमाणशून्या पुरुषभेदकल्पना, किं तु प्रयोजनशून्या चेत्याह—**परेति**। ननु न पुरुषसत्तामात्रं निमित्तीकृत्य प्रधानं प्रवर्तते। किं त्वीश्वराधिष्ठितमिति सेश्वरवादिमतमाशङ्क्य तस्यापि पुरुषत्वाविशेषादुपलब्धिमात्रत्वमभ्युपेत्याऽऽह—**परश्चेति**। वेदार्थो वेदप्रतिपाद्यमद्वैतम्।

द्वितीयमुत्थापयति—**ये त्विति**। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नव विशेषगुणाः। ते च प्रत्येकमात्मसु व्यवस्थया समवेताः स्वीक्रियन्ते। [2]तेषां व्यवस्थानुपपत्त्या प्रतिदेहमात्मभेदसिद्धिरित्यर्थः। किं

---

१. पक्षे अवर्तमानोऽन्यत्र सन् हेतुः व्यधिकरणासिद्धः। साध्यव्यधिकरणः असिद्धश्च, यथा पर्वतोऽग्निमान् धूमोपलब्धेरिति।

२. तेषां व्यवस्थानुपपत्त्या—चैत्रसुखादि तत्रैव, न तु मैत्रस्यापि साधारणमिति व्यवस्था एकात्मवादे न शक्यते, चैत्रमैत्रयोरेकत्वेन चैत्रसुखस्य मैत्रे प्रसङ्गात्। अतः आत्मभेदः स्वीकार्यः। अनुमानं च—चैत्रशरीरावच्छिन्नः आत्मा मैत्रशरीरावच्छिन्नात्मभिन्नः, तच्छरीरावच्छिन्नसुखाद्यनधिकरणत्वात्, यन्नैवं तन्नैवमिति। अत्रापि चैत्रमैत्रात्मनोर्भेदसिद्धौ तद्गतभोगानधिकरणत्वसिद्धिः। तत्सिद्धौ भेदसिद्धिरित्यन्योन्याश्रयात्।

**आत्ममनःसंयोगाच्च स्मृत्युत्पत्तेः स्मृतिनियमानुपपत्तिः। युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्गः। न च भिन्नजातीयानां स्पर्शादिहीनानामात्मनां मनआदिभिः सम्बन्धो युक्तः। न च द्रव्याद् रूपादयो गुणाः कर्मसामान्यविशेष-**

अनुभूतिस्वरूपाचार्यटीका

प्रदीपादेः प्रकाशगुणः स्वाश्रयसंयुक्ते प्रकाशव्यवहारं जनयति, तथा यावदात्मसमवायिज्ञानगुणः स्वाश्रयसंयुक्ते सर्वस्मिन् युगपत् ज्ञातताव्यवहारं जनयेत्। तथा सुखगुणः स्वाश्रयसंयुक्ते सर्वस्मिन् उत्साहं जनयेत्, दुःखगुणः स्वाश्रयसंयुक्ते सर्वस्मिन्नवसादं जनयेत् इत्याद्यव्यवस्था स्यात्। यदि द्वितीयः, स एकदेशः सत्यो वा असत्यो वा? आद्ये घटादिवत् प्रदेशवत्त्वात् कार्यत्वादिप्रसङ्गः। अन्त्ये कल्पितप्रदेशानामेव सुखादिगुणत्वं नात्मन इत्याह—**स्मृतिहेतूनामिति**। संस्कारग्रहणमितरेषामुपलक्षणार्थम्। अथवा भ्रमवासनानां संसारकारणत्वेन तार्किकैरभ्युपेतत्वात् विशेषतस्तन्निषेधोऽसंसारित्वख्यापनार्थः। इतश्चात्मनो न ज्ञानादयो गुणा इत्याह—**आत्ममनस्संयोगाच्चेति**। आत्ममनःसंयोगो हि ज्ञानाद्युत्पत्तेः असमवायिकारणमिष्यते। स च न सम्भवति। सांशयोरेव लोके संयोगदर्शनात्। आत्ममनसोश्च निरंशत्वाभ्युपगमात्। कल्पितांशद्वारेण चेत् संयोगः स तयोर्न स्यात्। कल्पितपरमार्थयोः संसर्गस्य तव शून्यत्वात्। यदि स्वरूपेण संयोगः, तर्हि द्वितीयो न स्यात् एकस्यानेकस्वरूपायोगात्।

किञ्च संयोगविशिष्टे प्रदेशे न सुखादिसमवायः, संयोगस्यापि समवायिकारणत्वप्रसङ्गात्। न प्रदेशान्तरे, कार्यैकार्थसमवायलक्षणायाः प्रत्यासत्तेरसम्भवेन संयोगस्य असमवायिकारणत्वाभावप्रसङ्गात्। संयोगस्य च स्वाश्रये-स्वकार्यारम्भकत्वे मनस्येव तत्किं न स्यादिति भावः। किञ्च संयोगस्यासमवायिकारणत्वे ग्रहणसमये स्मृतिर्न सम्भवत्येवेति नियमो नोपपद्यते, संस्कारवदात्ममनस्संयोगस्यैव स्मृत्युत्पत्तौ सामग्रीत्वात्, ग्रहणकारणसंयोगेनैव स्मृत्युत्पत्तिसम्भवादित्याह—**स्मृतिनियमानुपपत्तिरिति**। अथवा सर्वसंस्काराणामात्मन्येव सद्भावात् सति मनस्संयोगे युगपत्सर्वस्मृत्युत्पत्तिः स्यात्। अथ संस्कारोद्बोधकाभावान्न भवति, संस्काराणामुद्बोधः न क्रिया गुणो वा, निष्क्रियत्वान्निर्गुणत्वाच्च। न च षट्पदार्थातिरिक्तो धर्मोऽस्ति वैशेषिकाणाम्। न च बलवत्संस्कारात् प्रतिबन्धः तदितरकार्यसर्वस्मृतिप्रसङ्गात्। नो खल्वेकः संस्कारो बहूनां प्रतिबन्धकः। बहूनां प्रतिबन्धकत्वे तत्कार्यसर्वस्मृति-यौगपद्यप्रसङ्गः। तेषामपि संस्कारान्तरैः प्रतिबन्धेऽनवस्था। किञ्च संस्कारोद्बोधः कार्यगम्यः, कार्य एव च विप्रतिपद्य-मानस्य न तदभावः परिहारः सन्देहादिति। किञ्च लोके सम्बन्धो भवन् प्रायेण सजातीयानां भवति, यथा मृगाणां मृगैः, सम्बन्धविशेषस्तु संयोगः स्पर्शादिमता दृष्टो रज्जुघटादीनां, न तु तदुभयाभावे। अतो मनआदिभिरात्मनां सम्बन्धो न घटत इत्याह—**न चेति**। ननु नायं नियमः, उभयविधप्रयोजकाभावेऽपि गुणादीनां द्रव्येण सम्बन्ध-दर्शनादित्याशङ्क्याह—**न च द्रव्यादिति**। 'शुक्लो घटः' 'पाचको देवदत्तः' 'खण्डो गौः' इत्यादिसामानाधिकरण्य-प्रत्ययदर्शनान्न द्रव्याद्भिन्ना गुणादयो मायावादिनां सम्मताः। किन्तु द्रव्यमेव कल्पनया तत्तदाकारेणावभासत इति

आनन्दगिरिटीका

बुद्ध्यादयो रूपादिवदात्मव्यापिनः, किं वा संयोगादिवदेकदेशवृत्तयः। नाऽऽद्यः। ज्ञानादिगुणानामाश्रयव्यापिनामाश्रय-संयुक्ते सर्वस्मिन्नपर्यायेण ज्ञाततादिव्यवहारजनकत्वप्रसङ्गादित्याह—**तदप्यसदिति**। द्वितीये त्वेकदेशः सत्योऽसत्यो वा। प्रथमे घटादिवदात्मनः सत्यैकदेशत्वात् कार्यत्वादिप्रसङ्गः। द्वितीये कल्पितैकदेशानामेव ज्ञानादिगुणवत्त्वमात्मनस्तु न तद्वत्त्वं सिध्यतीत्याह—**स्मृतीति**। स्मृतिहेतवः संस्कारा भावनाख्याःतेषां ग्रहणमितरेषामुपलक्षणार्थम्। तेषामात्मनि समवायाभावात् परस्य सिद्धान्तासिद्धिरिति शेषः।

किं चाऽऽत्ममनःसंयोगादसमवायिकारणाज्ज्ञानानामुत्पत्तिरिष्टा। तथा च सति ग्रहणसमये स्मृतिर्न सम्भवत्येवेति नियमो नोपपद्यते, ग्रहणकारणसंयोगेनैव स्मृत्युत्पत्तिसम्भवादित्याह—**आत्मेति**। किं चाऽऽत्ममनसोः संयोगादेकस्मादेकस्याः स्मृतेः समुत्पत्तिसमये स्मृत्यन्तराण्यपि समुत्पद्येरन्। असमवायिकारणस्य तुल्यत्वात्। न च समुद्बुद्धसंस्कारायौगपद्याद्युगपदनुत्पत्तिः। तेषां तदुद्बोधस्य चाऽऽत्मनि विप्रतिपन्नत्वेन स्मृतिसामग्र्यन्तर्भावा-सम्भवादित्यभिप्रेत्याह—**युगपद्वेति**। किं च समानजातीयानां स्पर्शादिमतां च परस्परं सम्बन्धो दृष्टः। यथा मल्लानां मेषाणां रज्जुघटादीनां च। तदुभयाभावादात्मनां मनआदिभिः सम्बन्धासिद्धेर्नोक्तादसमवायिकारणादबुद्ध्यादिगुणोत्पत्तिः सिध्यतीत्याह—**न चेति**। गुणादीनां साजात्यस्य स्पर्शादिमत्त्वस्य चाभावेऽपि द्रव्येण सम्बन्धवदात्मनो मनआदिभिः सम्बन्धः सिध्येदिति चेन्नेत्याह—**न चेति**। स्वतन्त्रं सन्मात्रं द्रव्यशब्देनात्र विवक्षितम्। न ततो भेदेन गुणादयो वेदान्तिमते विद्यन्ते। शुक्लः पटः खण्डो गौरित्यादिसामानाधिकरण्यदर्शनात्। द्रव्यमेव तु कल्पनया तत्तदा-कारेण

**समवाया वा भिन्नाः सन्ति परेषाम्। यदि ह्यत्यन्तभिन्ना एव द्रव्यात् स्युरिच्छादयश्चाऽऽत्मनस्तथा च सति द्रव्येण तेषां सम्बन्धानुपपत्तिः। अयुतसिद्धानां समवायलक्षणः सम्बन्धो न विरुध्यत इति चेत्। न, इच्छादिभ्योऽनित्येभ्य आत्मनो नित्यस्य पूर्वसिद्धत्वान्नायुतसिद्धत्वोपपत्तिः। आत्मनाऽयुतसिद्धत्वे चेच्छादीनामात्मगतमहत्त्ववन्नित्यत्व-प्रसङ्गः। स चानिष्टः। आत्मनोऽनिर्मोक्षप्रसङ्गात्।**

५ **समवायस्य च द्रव्यादन्यत्वे सति द्रव्येण सम्बन्धान्तरं वाच्यं, यथा द्रव्यगुणयोः। समवायो नित्यसम्बन्ध एवेति न वाच्यमिति चेत् तथा च समवायसम्बन्धवतां नित्यसम्बन्धप्रसङ्गात् पृथक्त्वानुपपत्तिः। अत्यन्तपृथक्त्वे च द्रव्यादीनां**

अनुभूतिस्वरूपाचार्यटीका

यतस्तद्रहस्यम् अतो न सम्मतो दृष्टान्त इत्यर्थः। द्रव्यशब्देन चात्र स्वतन्त्रं सन्मात्रं विवक्षितं, न वैशेषिकाभिमतं गुणाश्रयो द्रव्यमिति लक्षितं, गुणोत्पत्तेः पूर्वक्षणेऽव्यापकत्वान्न तल्लक्षणं स्यात्। यदि गुणाश्रयत्वयोग्यं द्रव्यं, तर्हि १० न प्रत्यक्षं स्यात्, योग्यतायाः कार्यावसेयत्वात्। अथ स्वभावातिरेकिणी नातीन्द्रिया योग्यताऽस्ति तर्हि व्यर्थं विशेषवचनम्। अथवा यत्कदाचिद् गुणाश्रयः तत्प्रागपि द्रव्यमुच्यते, तर्हि उत्पत्तेः प्रागपि घटादि द्रव्यं स्यात्। यदनुत्पन्नमासीत् तदुत्पन्नमिति सामानाधिकरण्यव्यवहारात्। अथ तदुत्पत्तेः प्राङ्नास्त्येव तर्हि अनुत्पन्नमुत्पन्नं न स्यात्। किञ्च गुणाश्रयत्वयोग्यत्वं द्रव्यत्वं द्रव्यत्वादेव च गुणाश्रयत्वयोग्यत्वमिति परस्पराश्रयम्। निरस्तं चैतद्विस्तरेणान्यत्र। किञ्च यद्यतो भिन्नं तत्ततोऽन्यत्रापि भवति, भाति च। न च द्रव्याद्भेदेन गुणादयो भवन्ति भान्ति वा, अतो द्रव्य-१५ पारतन्त्र्यान्यथाऽनुपपत्त्या न द्रव्याद् भिन्ना गुणादय इत्याह—**यदि हीति**।

अथ सम्बन्धादपि द्रव्यपारतन्त्र्यसम्भवादन्यथाप्युपपत्तिः, न, अत्यन्तभिन्नानां मेरुसर्षपादीनां तादृक्सम्बन्धा-दर्शनात्। समवायाख्यः सम्बन्धविशेषो न विरुध्यत इत्याह—**अयुतसिद्धानामिति**। केयमयुतसिद्धिर्नाम? किमपृथक्कालत्वं किं वाऽपृथग्देशत्वम्? उत अपृथक्स्वभावत्वं? अथवा संयोगविभागायोग्यत्वं? नाद्य इत्याह—**न, इच्छादिभ्य इति**। आत्मना चापृथक्कालत्वेऽनादित्वादात्मगतमहत्त्ववन्नित्यत्वं प्रसज्यत इत्याह—**आत्मनेति**। न २० द्वितीयः, तन्तुपटादीनामयुतसिद्ध्यभावप्रसङ्गात्। पटस्य हि तन्तवो देशः, तन्तूनां तु अंशवः। न तृतीयो, भेदपक्षहानात्। न चतुर्थो, देवदत्तस्य हस्तादीनाञ्चायुतसिद्ध्यभावप्रसङ्गात्। न च तत्र हस्तादेः प्रदेशान्तरेणैव संयोगविभागौ, नावयविनः-इति वाच्यम्। चण्डालस्पर्शादौ देवदत्तस्यास्पृश्यत्वाभावप्रसङ्गात्। अतोऽयुतसिद्धानि-रूपणादसम्भवः समवायलक्षणस्य। किञ्च यद् यत्परतन्त्रं प्रतीयते तत् तत्सम्बद्धं दृष्टम्। यथा गुणादि द्रव्यसम्बद्धम्। तथा समवायस्यापि द्रव्यपारतन्त्र्यात् द्रव्येण सम्बन्धान्तरं वाच्यं तस्यापि तथेत्यनवस्था स्यादित्याह—**समवायस्य चेति**। असंसृष्टस्य सम्बन्धापेक्षा स्यात्, समवायश्च सदा समवायिभ्यां संसृष्ट एवेति न तस्य सम्बन्धान्तरं वाच्यमिति २५ चेत्, तर्हि पृथक्त्वं न स्यात् द्रव्यगुणादीनां नित्यसंसृष्टत्वात् भेदस्य कदाचिदप्यनुपलम्भादित्याह—**तथा चेति**।

आनन्दगिरिटीका

भातीत्यभ्युपगमात्। अतो दृष्टान्तासम्प्रतिपत्तिरित्यर्थः। विपक्षे दोषमाह—**यदि हीति**। गुणादयो द्रव्यादत्यन्तभिन्ना हिमवद्विन्ध्ययोरिव यदि स्युर्यदि चाऽऽत्मनः सकाशादिच्छादयोऽत्यन्तं भिन्ना भवेयुस्तदा गुणादीनां द्रव्येण तद्वदेव सम्बन्धानुपपत्तेः, इच्छादीनां चाऽऽत्मना तदयोगात् पारतन्त्र्यासिद्धिरित्यर्थः। अत्यन्तभिन्नानामपि समवायसम्बन्धात् ३० पारतन्त्र्योपपत्तिरिति शङ्कते—**अयुतेति**। किमिदमयुतसिद्धत्वमपृथक्कालत्वं किं वाऽपृथग्देशत्वमुतापृथक्स्वभावत्व-माहोस्वित् संयोगविभागायोग्यत्वम्? नाऽऽद्यः। विकल्पासहत्वात्। किमिच्छाद्यपेक्षयाऽऽत्मनोऽपृथक्कालत्वं किं वाऽऽत्मापेक्ष-येच्छादीनामिति विकल्प्याऽऽद्यं दूषयति—**नेत्यादिना**। यद्यात्मना सहापृथक्कालत्वमिच्छादीनां तदाऽऽत्मनोऽनादित्वात् तद्गतमहत्त्ववन्नित्यत्वं तेषामापततीत्याह—**आत्मनेति**। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—**स चेति**।

न चापृथग्देशत्वमयुतसिद्धत्वम्। तन्तुपटादीनां पृथग्देशानामयुतसिद्ध्यभावप्रसङ्गात्। न चापृथक्स्वभावत्वम-३५ युतसिद्धत्वम्। भेदपक्षपरिक्षयात्। न च संयोगविभागायोग्यत्वमयुतसिद्धत्वम्। देवदत्तस्य हस्तादीनां चायुतसिद्ध्य-भावापातादित्यभिप्रेत्य समवायस्य द्रव्यादनन्यत्वे तावन्मात्रत्वेन तत्सम्बन्धत्वव्याघातात्; ततोऽन्यत्वे तेन सम्बन्धान्तर-मस्ति न वेति विकल्प्याऽऽद्ये स्यादनवस्थेति मत्वाऽऽह—**समवायस्येति**। द्वितीयं शङ्कते—**समवाय इति**। न वाच्यं सम्बन्धान्तरमिति शेषः। समवायस्य नित्यसम्बन्धत्वे समवायवतां द्रव्यगुणादीनामपि तद्वत्त्वाद्भेदस्य कदाचिदप्यनुपलम्भात् पृथक्त्वप्रथानुपपत्तिरिति दूषयति—**तथा चेति**। संयोगस्यापि समवायसाम्यं चकारेण सूच्यते।

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै। आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः।।६।।**

**स्पर्शवदस्पर्शद्रव्ययोरिव षष्ठ्यर्थानुपपत्तिः। इच्छाद्युपजनापायवद्गुणवत्त्वे[1] चाऽऽत्मनोऽनित्यत्वप्रसङ्गः देहफलादिवत्। सावयवत्वं विक्रियावत्त्वं च देहादिवदेवेति दोषावपरिहार्यौ। यथा त्वाकाशस्याविद्याध्यारोपितरजोधूममलवत्त्वादिदोषवत्त्वं तथाऽऽत्मनोऽविद्याध्यारोपितबुद्ध्याद्युपाधिकृतसुखदुःखादिदोषवत्त्वे बन्धमोक्षादयो व्यावहारिका न विरुध्यन्ते। सर्ववादिभिरविद्याकृतव्यवहाराभ्युपगमात् परमार्थानभ्युपगमाच्च। तस्मादात्मभेदपरिकल्पना वृथैव तार्किकैः क्रियत इति।।५।।**

**कथं पुनरात्मभेदनिमित्त इव व्यवहार एकस्मिन्नात्मन्यविद्याकृत उपपद्यत इति। उच्यते। यथेहाऽऽकाश**

अनुभूतिस्वरूपाचार्यटीका

चकारात् संयोगोऽपि तथा किं न स्यादिति सूचयति। अथ सम्बन्धो नेष्यते समवायस्य समवायिभिः गुणादीनां च द्रव्येणानवस्थाभयादेव, तत्राह—**अत्यन्तपृथक्त्वे चेति**। द्रव्यस्यायं गुणोऽस्यानेन सम्बन्धः इत्यादि षष्ठीप्रयोगो न स्यात्। यथा स्पर्शवत् पृथिव्यादि स्पर्शविहीनस्याकाशस्येति षष्ठी न प्रयुज्यते, तद्वदित्यर्थः। विशेषत आत्मन इच्छादिगुणत्वे दोषान्तरमाह—**इच्छादीति**। आत्मा नेच्छादिगुणवान् नित्यत्वान्निरवयवत्वात् निष्क्रियत्वात्, न य एवं न स एवं यथा देह इति प्रयोगः। विपक्षेऽपि गुणोत्पत्तिविनाशयोः गुणिनो विक्रियाया अवश्यम्भावित्वादन्यथा पूर्वावस्थातोऽविशेषप्रसङ्गादनित्यत्वादिप्रसङ्गो बाधकः। ननु यदि देहस्यैव इच्छादिगुणत्वं तदाऽऽत्मनोऽभावान्मोक्षो न स्यात्। लौकिकशास्त्रीयव्यवहारः सर्व एव लुप्येत। अतो बन्धमोक्षव्यवस्थान्यथानुपपत्त्या प्रतिशरीरं भिन्ना आत्मानः सुखादिगुणविशिष्टा एष्टव्याः। तत्राह—**यथा त्विति**। अविद्याया अवस्तुत्वात् तत्कृतो व्यवहारो न सम्भवतीति न वाच्यमित्याह—**सर्ववादिभिरिति**। अविद्याकृतमनुष्यत्वाद्यध्यारोपेण लौकिकशास्त्रीयव्यवहाराः सर्ववादिभिरभ्युपगम्यन्ते, तथाऽस्माकमपि भविष्यतीत्यर्थः। परमार्थे च मोक्षे न केनापि वादिना व्यवहारोऽभ्युपगम्यतेऽतो व्यवहारनिर्वाहाय भेदे सत्यत्वांशकल्पनं वृथैवेत्याह—**परमार्थेति**।।५।।

ननु सुरनरादिजीवास्तत्त्वतो भिन्नाः, भिन्ननामकत्वात्, भिन्नकार्यकरत्वात्, भिन्नरूपत्वात्, घटपटादिवदित्यनुमानविरुद्धमविद्याकृतत्वकल्पनमित्याह—**कथं पुनरिति**। घटाकाशादिष्वनैकान्तिक इत्याह—**उच्यत इत्यादिना**।।६।।

आनन्दगिरिटीका

समवायस्य समवायिभिर्गुणादीनां च द्रव्येणात्यन्तभेदे हिमवद्विन्ध्ययोरिव सम्बन्धानुपपत्तेस्तेषु परतन्त्रताव्यवहारासिद्धिरित्याह—**अत्यन्तेति**। किं चेच्छादयो नाऽऽत्मगुणा उपजनापायवत्त्वाद्रूपादिवत्। यद्वाऽऽत्मा नानित्यगुणवान्नित्यत्वाद् व्यतिरेकेण देहादिवदित्याह—**इच्छादीति**। न केवलमात्मनोऽनित्यगुणत्वेऽनित्यत्वप्रसक्तिरेव दोषः। किं त्वन्यदपि दोषद्वयं दुष्परिहरमिति बाधकान्तरमाह—**सावयवत्वमिति**। यद्यात्मनो नेच्छादिगुणवत्त्वं तदा तस्य बन्धाभावान्मोक्षो न स्यादतो बन्धमोक्षव्यवस्थानुपपत्त्या प्रतिदेहं सुखदुःखादिविशिष्टात्मभेदसिद्धिरित्याशङ्क्याऽऽह—**यथा त्विति**। अवस्तुत्वादविद्यायास्तत्कृतव्यवहारायोगाद्व्यावहारिकबन्धाद्यभ्युपगमासिद्धिरित्याशङ्क्याऽऽह—**सर्ववादिभिरिति**। अविद्याकृतमनुष्यत्वाध्यारोपेण लौकिकवैदिकव्यवहारः सर्ववादिभिरिष्यते, तत्कृता च व्यवस्थाऽऽस्थीयते। तस्मादस्माकमपि तथैव सर्वमविरुद्धमित्यर्थः। परमार्थे च मोक्षे केनापि वादिना व्यवहारो नाभ्युपगम्यते। तथा च मोक्षे परेषां व्यवहारस्यैवाभावात्तन्निर्वाहकपारमार्थिकभेदाभ्युपगमो वृथेत्याह—**परमार्थेति**। कल्पितभेदवशादपि पूर्वोक्तसर्वव्यवस्थासौस्थ्यात् पारमार्थिकात्मभेदकल्पना प्रमाणप्रयोजनशून्येत्युपसंहरति—**तस्मादिति**।।५।।

अद्वैतस्य श्रुत्यादिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूषयति—**रूपेति**। श्लोकव्यावर्त्यामाशङ्कामाह—**कथमिति**। यथाऽऽत्मभेदवादे तद्भेदनिमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवात्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपपद्यते। तथा च विमता जीवास्तत्त्वतो भिद्यन्ते भिन्ननामकत्वाद्भिन्नकार्यकरत्वात् भिन्नरूपत्वाद् घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः। घटाकाशादिष्वनैकान्तिकत्वं विवक्षित्वा श्लोकाक्षराणि व्युत्पादयति—**उच्यत इत्यादिना**। शयनादिकार्यं समाख्याश्च भिद्यन्त इति सम्बन्धः। तत्कृताश्चेत्यत्र तच्छब्देन विकल्पितो घटाकाशभेदो गृह्यते। चकारोऽवधारणार्थः। घटाकाशादीनामुक्तहेतुमत्त्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्व-

---

१. इच्छादीनामात्मधर्मत्वं तद्रूपेण परिणाम एव, घटगतरूपादिवत्। ततश्च विकारित्वादनित्यत्वापत्तिः।

**नाऽऽकाशस्य घटाकाशो विकारावयवौ यथा। नैवाऽऽत्मनः सदा जीवो विकारावयवौ तथा।।७।।**

**यथा भवति बालानां गगनं मलिनं मलैः। तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः।।८।।**

**एकस्मिन् घटकरकापवरकाद्याकाशानामल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते तथा कार्यमुदकाहरणधारणशयनादि, समाख्याश्च घटाकाशः करकाकाश इत्याद्यास्तत्कृताश्च भिन्ना दृश्यन्ते। तत्र तत्र वै व्यवहारविषय इत्यर्थः। सर्वोऽयमाकाशे रूपादिभेदकृतो व्यवहारो न परमार्थ एव। परमार्थतस्त्वाकाशस्य न भेदोऽस्ति। न चाऽऽकाशभेदनिमित्तो व्यवहारोऽस्त्यन्तरेण परोपाधिकृतं द्वारम्। यथैतत् तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निरूपणात् कृतो बुद्धिमद्भिर्निर्णयो निश्चय इत्यर्थः।।६।।**

**ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार इति। नैतदस्ति। यस्मात् परमार्थाकाशस्य घटाकाशो न विकारः। यथा सुवर्णस्य रुचकादिर्यथा वाऽपां फेनबुद्बुदहिमादिः। नाप्यवयवो यथा वृक्षस्य शाखादिः। न तथाऽऽकाशस्य घटाकाशो विकारावयवौ यथा तथा नैवाऽऽत्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्वदा यथोक्तदृष्टान्तवन्न विकारो नाप्यवयवः। अत आत्मभेदकृतो व्यवहारो मृषैवेत्यर्थः।।७।।**

**यस्मात्—यथा घटाकाशादिभेदबुद्धिनिबन्धनो रूपकार्यादिभेदव्यवहारस्तथा देहोपाधिजीवभेदकृतो जन्ममरणादिव्यवहारस्तस्मात्तत्कृतमेव क्लेशकर्मफलमलवत्त्वमात्मनो न परमार्थत इत्येतमर्थं दृष्टान्तेन प्रतिपिपादयिषन्नाह—यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवन्न गगनं मलवद् याथात्म्यविवेकिनाम्, तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक् क्लेशकर्मफलमलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेकरहितानां**

अनुभूतिस्वरूपाचार्यटीका

घटाकाशादिरपि महाकाशस्य विकारोऽवयवो वा, अतस्तत्रापि तात्त्विक एव भेद इति न विपक्षतेत्याह—**ननु तत्र परमार्थकृत एवेति।** निर्विकारत्वं निरवयवत्वं चाकाशस्य लोकसिद्धमादाय परिहरति—**नैतदस्तीत्यादिना।**।७।।

जीवो न ब्रह्मणो विकारोऽवयवो वा, "निष्कलं निष्क्रियं शान्त"मिति श्रुतेः। किन्तु ब्रह्मैव उपाध्यनुप्रविष्टं जीव इत्यैक्यमुक्तम्। तदयुक्तम्। ब्रह्मणः शुद्धत्वात् जीवस्य रागादिमलवत्त्वादित्याशङ्क्य जीवस्यापि न परमार्थतो मलिनत्वमित्याह—**यथा भवतीत्यादिना।**।८।।

आनन्दगिरिटीका

मित्याशङ्क्याऽऽह—**सर्वोऽयमिति।** उक्तेऽर्थे तृतीयं पादं विभजते—**न चेति।** परोपाधिशब्देन घटकरकादिरुच्यते। दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे—**यथैतदित्यादिना।**।६।।

घटाकाशादीनां विपक्षत्वाभावमाशङ्क्य परिहरति—**नेत्यादिना।** घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात् तत्रापि भेदस्य तात्त्विकत्वात्र विपक्षतेति श्लोकस्य व्यावर्त्यं चोद्यमुत्थापयति—**नन्विति।** आकाशस्य निर्विकारत्वं निरवयवत्वं च लोकसिद्धं गृहीत्वा परिहरति—**नैतदस्तीति।** तत्र वैधर्म्योदाहरणद्वयमाह—**यथेति।** घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह—**यथा वृक्षस्येति।** उक्तदृष्टान्तानां दार्ष्टान्तिकमाह—**न तथेति।** घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वं च नास्तीत्युक्तं दृष्टान्तत्वेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्धं व्याकरोति—**यथेत्यादिना।** अनैकान्तिकत्वेनानुमानस्यामानत्वे स्थिते फलितमाह—**अत इति।**।७।।

जीवो ब्रह्मणो नांशो न विकारोऽपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीवशब्दितमित्युक्तं, तदयुक्तं, ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमलवत्त्वादेकत्वायोगादित्याशङ्क्य परमार्थतो जीवस्यापि नास्ति मलवत्त्वमित्याह—**यथेति।** श्लोकस्य तात्पर्यमाह—**यस्मादिति।** घटाकाशो मठाकाशः सूचीपाशाकाशश्चेत्युपाधिनिमित्तो भेदस्तद्विषया बुद्धिस्तत्प्रयुक्तो रूपभेदोऽर्थक्रियाभेदो नामभेदश्चेति व्यवहारो नभसि यथोपलभ्यते तथा देहाद्युपाधिभेदप्रयुक्तो जीवभेदस्तत्कृतो जननमरणसुखदुःखादिव्यवहारो व्यवस्थितो यस्मादास्थीयते तस्मात् तेनाविद्याविद्यमानेन कृतमेवाऽऽत्मनो रागादिमलवत्त्वं न वस्तुतोऽस्तीत्येतमर्थं दृष्टान्तद्वारा प्रतिपिपादयिषन्नादौ दृष्टान्तमाहेति योजना। दृष्टान्तभागनिविष्टान्यक्षराणि व्याचष्टे—**यथेत्यादिना।** दार्ष्टान्तिकभागगतानामक्षराणामर्थमाह—**तथेति।** यो हि

**मरणे सम्भवे चैव गत्यागमनयोरपि। स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः।।९।।**
**सङ्घाताः स्वप्नवत् सर्वे आत्ममायाविसर्जिताः। आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते।।१०।।**

### आत्मतत्त्वस्य श्रौतत्वसमर्थनम्

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके। तेषामात्मा परो जीवः खं यथा संप्रकाशितः।।११।।**

नाऽऽत्मविवेकवताम्। न ह्यूषरदेशस्तृड्वत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमांस्तथा नाऽऽत्माऽबुधारोपित- ५
क्लेशादिमलैर्मलिनो भवतीत्यर्थः।।८।।

पुनरप्युक्तमेवार्थं प्रपञ्चयति-घटाकाशजन्मनाशगमनागमनस्थितिवत् सर्वशरीरेष्वात्मनो जन्ममरणादिरा-काशेनाविलक्षणः प्रत्येतव्य इत्यर्थः।।९।।

घटादिस्थानीयास्तु देहादिसङ्घाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चाऽऽत्ममायाविसर्जिता आत्मनो मायाऽविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः। यद्याधिक्यमधिकभावस्तिर्यग्देहाद्यपेक्षया १०
देवादिकार्यकरणसङ्घातानां, यदि वा सर्वेषां समतैव, नैषामुपपत्तिः सम्भवः सद्भावप्रतिपादको हेतुर्विद्यते नास्ति, हि यस्मात्तस्मादविद्याकृता एव न परमार्थतः सन्तीत्यर्थः।।१०।।

उत्पत्त्यादिवर्जितस्याद्वयस्यास्याऽऽत्मतत्त्वस्य श्रुतिप्रमाणकत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते-रसादयोऽन्न-

#### अनुभूतिस्वरूपाचार्यटीका

जीवो मरणानन्तरं धर्मवशात् स्वर्गं गच्छति, नरकं वाऽधर्मवशात्, तद्भोगक्षये च पुनरागत्य ब्राह्मणादियोनौ १५
सम्भवति, तत्र यावद्भोगं तिष्ठतीत्यादिव्यवहारोऽपि कल्पनामात्रमेव। न हि गगनोपमस्य गत्यादि सम्भवति, शास्त्रं चैतद्विषयं भ्रमसिद्धानुवादकमित्यभिप्रेत्याह—**मरण इत्यादिना**।।९।।

उपाधीनां सत्यत्वादौपाधिकोऽपि भेदः सत्य इति केचित्, तद्व्यावर्तयति—**सङ्घाता इति**। विमता देहा न सत्याः देहत्वात् स्वप्नादिदेहवदित्यर्थः। ननु पूज्या हरिहरहिरण्यगर्भादिदेहाः कथमसत्या इत्याशङ्क्याऽऽह—**आधिक्ये** मूढदृष्ट्या कल्पितेऽपि, विवेकदृष्ट्या तु सर्वेषां पञ्चात्मकत्वाविशेषात् **सर्वसाम्ये** वा स्वप्नवन्न सत्यत्वे २०
काचिदुपपत्तिर्विद्यत इत्यर्थः।।१०।।

एवं तावदद्वितीयब्रह्मात्मत्वं जीवस्य तर्कत उपपाद्य तस्य श्रुतिमूलत्वं दर्शयितुमुपक्रमते—**रसादयो हीत्यादिना**।

#### आनन्दगिरिटीका

प्रत्यगात्मा विज्ञाता सोऽप्यबुद्धानां मलिनो भवतीति सम्बन्धः। अबुद्धानामित्येतद् व्याचष्टे—**प्रत्यगात्मेति**। अविवेकि-भिरध्यारोपितेऽपि प्रत्यगात्मनो मलवत्त्वे मलप्रयुक्तं फलं तत्र वास्तवं भविष्यतीत्याशङ्क्याऽऽह—**न हीति**।।८।। २५

ननु जीवो मरणानन्तरं धर्मानुरोधेन स्वर्गं गच्छति। अधर्मवशाच्च नरकं प्रतिपद्यते। धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे सम्भवति। तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते। एवमिह-लोकपरलोकसञ्चरणव्यवहारविरुद्धमद्वैतमिति, तत्राऽऽह—**मरण इति**। श्लोकस्य तात्पर्यमाह—**पुनरपीति**। आत्मनि सर्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः। आत्मनो हि गगनोपमस्य गत्यादेर्वस्तुतोऽसम्भवादविद्याकृतस्तस्मिन् गत्यादिरित्यर्थः।।९।। ३०

ननु सङ्घातशब्दितानामुपाधीनां सत्यत्वात् तत्प्रयुक्तभेदस्यापि तथात्वादद्वैतानुपपत्तितादवस्थ्यमिति चेत्तत्राऽऽह—**सङ्घाता इति**। देवादिदेहानां पूज्यतमत्वेनाऽऽधिक्याभ्युपगमात्रासत्यत्वसिद्धिरित्याशङ्क्य देहभेदेषु केषुचिदाधिक्ये मूढदृष्ट्या कल्पितेऽपि विवेकिदृष्ट्या सर्वदेहानां पञ्चभूतात्मकत्वाविशेषादशेषसाम्ये वा स्वीकृते नास्ति सङ्घातेषु सत्यत्वे काचिदुपपत्तिरित्याह—**आधिक्य इति**। पूर्वार्धाक्षराणि योजयति—**घटादीति**। मणिमन्त्रादिरूपां मायामिन्द्र-जालप्रयोजकभूतां व्यावर्तयति—**अविद्येति**। विमता देहा न सत्या देहत्वात् सम्प्रतिपन्नवदित्यर्थः। ब्रह्मादिदेहाना- ३५
मुत्कृष्टत्वात्राविद्याकृतत्वमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—**यदीत्यादिना**।।१०।।

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितम्। इदानीं तत्रैव तैत्तिरीयश्रुतेस्तात्पर्यमाह—**रसादयो हीति**। श्लोकस्य तात्पर्यमाह—**उत्पत्त्यादीति**। अक्षरार्थं कथयति—**रसादय इति**। आदिशब्देन मनोमयविज्ञानमया-

**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्। पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशितः।।१२।।**

**रसमयः प्राणमय इत्येवमादयः कोशा इव कोशा अस्यादेरिवोत्तरोत्तरस्यापेक्षया बहिर्भावात्पूर्वपूर्वस्य, व्याख्याता विस्पष्टमाख्यातास्तैत्तिरीयके तैत्तिरीयकशाखोपनिषद्वल्ल्यां तेषां कोशानामात्मा येनाऽऽत्मना पञ्चापि कोशा आत्मवन्तोऽन्तरतमेन। स हि सर्वेषां जीवननिमित्तत्वाज्जीवः। कोऽसावित्याह–पर एवाऽऽत्मा यः पूर्वम् ''सत्यं ५ ज्ञानमनन्तं ब्रह्म'' इति प्रकृतः, यस्मादात्मनः स्वप्नमायादिवदाकाशादिक्रमेण रसादयः कोशलक्षणाः सङ्घाता आत्ममायाविसर्जिता इत्युक्तम्। स आत्माऽस्माभिर्यथा खं तथेति संप्रकाशित 'आत्मा ह्याकाशवदि'त्यादिश्लोकैः। न तार्किकपरिकल्पितात्मवत् पुरुषबुद्धिप्रमाणगम्य इत्यभिप्रायः।।११।।**

**किं चाधिदैवमध्यात्मं च तेजोमयोऽमृतमयः पुरुषः पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवाऽऽत्मा ब्रह्म सर्वमिति द्वयोर्द्वयोरा द्वैतक्षयात् परं ब्रह्म प्रकाशितम्। क्वेत्याह–ब्रह्मविद्याख्यं मध्वमृतममृतत्वं मोदनहेतुत्वाद्विज्ञायते यस्मिन्निति १० मधुज्ञानं मधुब्राह्मणं तस्मिन्नित्यर्थः। किमिवेत्याह–[1]पृथिव्यामुदरे चैव यथैक आकाशोऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः।।१२।।**

अनुभूतिस्वरूपाचार्यटीका

अस्यादेः कोशा यथा खड्गाद्यपेक्षया बहिर्भूतास्तथोत्तरोत्तरापेक्षया पूर्वपूर्वस्य बहिर्भावादन्नरसमयादयः कोशसामान्यात् कोशा इत्युच्यन्ते इत्यर्थः। मनुष्योऽहं प्राण्यहं प्रमाताऽहं कर्ताऽहं भोक्ताऽहमिति पञ्चानां विशिष्टानां यदेकं स्वरूप- १५ मनुयायि प्रत्यक्चैतन्यं तद् ब्रह्मप्रतिबिम्बत्वात् ब्रह्मैवेति जीवपरयोरैक्ये तैत्तिरीयोपनिषदस्तात्पर्यं दर्शितम्।।११।।

तत्रैव बृहदारण्यकस्यापि तात्पर्यमाह—**द्वयोरिति। आ द्वैतक्षयादित्यध्यारोपावस्थायाम्**, अपवाददृष्ट्या द्वयोरिति नोपपद्यते।।१२।।

आनन्दगिरिटीका

नन्दमया गृह्यन्ते। खड्गादेर्यथा कोशास्तदपेक्षया बहिर्भवन्ति तद्वदेते पञ्च कोशा व्यपदिश्यन्ते। तत्र हेतुमाह— २० **उत्तरोत्तरस्येति**। पूर्वपूर्वस्यान्नमयादेरुत्तरोत्तरप्राणमयाद्यपेक्ष्य बहिर्भावाद् ब्रह्म सर्वान्तरं प्रतिष्ठाभूतमपेक्ष्याऽऽनन्द-मयस्यापि बहिर्भावाविशेषादविशिष्टं पञ्चानामपि कोशत्वमित्यर्थः। अवशिष्टान्यक्षराणि व्याचष्टे—**व्याख्याता इत्यादिना**। तत्र जीवशब्दप्रवृत्तिं व्युत्पादयति—**स हीति**। विशिष्टं जीवशब्दार्थमाकाङ्क्षाद्वारा व्यावर्त्तयति— **कोऽसावित्यादिना**। प्रकरणाविच्छेदार्थं प्रकरणमनुसन्धत्ते—**यस्मादिति**। प्रकृतस्य परस्याऽऽत्मनः श्रौतत्वे फलित-माह—**नेत्यादिना**।।११।।

२५ मनुष्योऽहं प्राण्यहं प्रमाताऽहं कर्ताऽहं भोक्ताऽहमिति पञ्चानां विशिष्टानां यदेकं स्वरूपमनुगतं प्रत्यक्चैतन्यं तद् ब्रह्मैवेति जीवपरयोरैक्ये तैत्तिरीयश्रुतेस्तात्पर्यमुक्त्वा तत्रैव बृहदारण्यकश्रुतेरपि तात्पर्यमाह—**द्वयोरिति**। मधु-ब्राह्मणे बहुषु पर्यायेष्वधिदैवाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यक्प्रकाशितम्। अतोऽस्मिन् बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये तात्पर्यमित्यर्थः। तत्र दृष्टान्तमाह—**पृथिव्यामिति**। न केवलमैक्ये तैत्तिरीयश्रुतेरेव तात्पर्यं, किं तु बृहदारण्यकश्रुतेरपीत्याह—**किं चेति**। अधिदैवं पृथिव्यादावध्यात्मं च शरीरे तेजोमयो ज्योतिर्मय- ३० श्चैतन्यप्रधानोऽमृतमयोऽमरणधर्मा पुरुषः पूर्णः पृथिव्यादौ शरीरे चान्तर्गतो यो विज्ञाता स पर एवाऽऽत्मा। तेन स विज्ञाता सर्वं पूर्णमपरिच्छिन्नं ब्रह्मैवेति परं ब्रह्म प्रकाशितमिति सम्बन्धः। अपवादावस्थायामध्यारोपासम्भवाद् द्वयोर्द्वयोरिति कथमुच्यते तत्राऽऽह—**आ द्वैतक्षयादिति**। द्वैतक्षयपर्यन्तं ब्रह्म प्रकाशितम्। द्वयोर्द्वयोरिति पुनरनुवाद-मात्रमित्यर्थः। मधुज्ञाने मध्वेव प्रकाशितं न ब्रह्मेत्याशङ्क्य मधुज्ञानशब्दार्थं व्युत्पादयति—**क्वेत्यादिना**। शब्दस्य क्वचिदाश्रितत्वं रूपवदनुमीयते। तच्च शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाशमिति सिद्धमिति। तच्च ३५ कल्पनालाघवादेकमेवेति गम्यते। तथा च बहिरन्तश्चैकमेवाऽऽकाशमनुमानप्रामाण्यादधिगतम्। तथाऽधिदैवमध्यात्मं च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्धं व्याचष्टे—**किमिवेत्यादिना**।।१२।।

---

१. तार्किकैराकाश एक एवेत्यनुमीयते। तथाहि शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादिति परिशेषानुमानम्। तत्र शब्दो द्रव्याश्रितो गुणत्वात् रूपवदिति हेतौ विशेष्यसिद्धिः। शब्दो

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते। नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम्।।१३।।**

**यद् युक्तितः श्रुतितश्च निर्धारितं जीवस्य परस्य चाऽऽत्मनो जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च। यच्च सर्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्वदर्शनं निन्द्यते ''न तु तद् द्वितीयमस्ति'' ''द्वितीयाद्वै भयं भवति'' ''उदरमंन्तरं कुरुते। अथ तस्य भयं भवति'' ''इदं सर्वं यदयमात्मा'' ''मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'' इत्यादिवाक्यैश्चान्यैश्च ब्रह्मविद्भिः। यच्चैतत्तदेवं हि समञ्जसमृज्ववबोधं न्याय्यमित्यर्थः। यास्तु तार्किकपरिकल्पिताः कुदृष्टयस्ता अनृज्व्यो निरूप्यमाणा न घटनां प्राञ्चन्तीत्यभिप्रायः।।१३।।** ५

अनुभूतिस्वरूपाचार्यटीका

यत् स्तूयते तद्विधीयते, यन्निन्द्यते तन्निषिध्यते इति न्यायाच्च एकत्वपरं शास्त्रमित्याह—**जीवात्मनोरिति। अभेदेनेति।** ''ब्रह्म वेद ब्रह्मैव भवती''ति एकत्वफलोपदेशेनेत्यर्थः। ''वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः''। ''अहं हरिस्सर्वमिदं जनार्दनो नान्यत् ततः कारणकार्यजातम्। ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति।'' ''सर्वभूतस्थमात्मानमि''त्यादिवाक्यैः सहस्रशो व्यासादिभिः स्तूयत इत्यर्थः। अन्यैश्च ब्रह्मविद्भिः ''अविद्यामोहितात्मानः पुरुषा भिन्नदृष्टयः''। ''किं तेन न कृतं पापं चोरेणात्मापहारिणा।।'' ''अश्रद्दधानाः पुरुषाः'' इत्यादिवाक्यैर्निन्द्यत इत्यर्थः। ''या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः।।'' इति **मनुवचनाद् वैशेषिकादिभिः** विरचिता द्वैतदृष्टयः असमञ्जसा इत्याह—**यास्त्विति। निरूप्यमाणा न घटनां प्राञ्चन्तीति।** अमाशयः— १० १५

आनन्दगिरिटीका

इतश्चैकत्वे श्रुतीनां तात्पर्यमित्याह—**जीवात्मनोरिति।** अभेदेन ''ब्रह्म वेद ब्रह्मैव भवती''त्यादिना ब्रह्मभावफलवादेनेत्यर्थः। यत्प्रशस्यते तद्विधेयमित्यादिन्यायादेकत्वदर्शने फलवादोपपत्त्युपलम्भादेकत्वं प्रशस्तत्वाद् विवक्षितमिति भावः। यच्चानेकत्वं सर्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते। यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह—**नानात्वमिति।** तदुभयमेकत्वप्रशंसनं नानात्वनिन्दनं चैकत्वमेव शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह—**तदेवं हीति।** श्लोकाक्षराणि व्याचष्टे—**यदिति।** अनन्यत्वाभावशङ्कां व्यावर्त्यैकरसत्वं दर्शयति—**अभेदेनेति।** तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम्। शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः। व्यासपराशरादिभिश्च वेदार्थं व्याचक्षाणैरेकत्वं स्तूयते ''वासुदेवः सर्वमिति स महात्मा सुदुर्लभः'', ''अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्''[1] इत्यादिवाक्यैरित्याह—**व्यासादिभिश्चेति।** द्वितीयार्धं विभजते—**यच्चेति।** तन्निन्द्यत इति यच्छब्देनोपक्रमाद् द्रष्टव्यम्। ''अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः'', ''किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा'' इत्यादिवाक्यैर्व्यासादयोऽपि द्वैतदर्शनं निन्दन्तीत्याह—**अन्यैश्चेति।** एवमनेकत्वदर्शनस्य निन्दितत्वेन निषिद्धत्वान्नानेकत्वं शास्त्रीयमित्युक्त्वा चतुर्थपादार्थमाह—**यच्चैतदिति।** विषयभेदेन प्रशंसनं निन्दनं चेत्यर्थः। **एवं हीति।** द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्तात्पर्यगम्यत्वमित्यङ्गीकारे सतीत्यर्थः। भेददृष्टीनामपि न्याय्यत्वाविशेषाद्भेददर्शननिन्दनस्य कुतो न्याय्यत्वमित्याशङ्क्याऽऽह—**यास्त्विति।** २० २५ ३०

---

गुणश्चक्षुरिन्द्रियायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानेन तस्य गुणत्वसिद्धिः। शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात् सुखवदित्यनुमानेन पृथिव्यादिचतुष्टयानाश्रितत्वसिद्धिः। शब्दः कालदिङ्मनआश्रितो न विशेषगुणत्वाद्रूपवत्, शब्द आत्मानाश्रितो बहिरिन्द्रियग्राह्यत्वात् व्यतिरेकेण सुखवदित्याद्यनुमानैः शब्दस्याष्टद्रव्यानाश्रितत्वसिद्धौ तदाश्रयतयाऽतिरिक्तमाकाशनामकं द्रव्यमभ्युपेयमित्यर्थः। तच्चैकं लाघवादुपाधभेदेन श्रोत्रभेदस्य घटाकाशादिभेदस्य चोपपादनसम्भवादित्यर्थः। ३५

१. 'सकलमिदमहं च वासुदेवः' 'सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्' (वि० पु०) इत्यादि च द्र.।

**जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम्। भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते।।१४।।**

**ननु श्रुत्याऽपि जीवपरमात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेरुत्पत्त्यर्थो [१]पनिषद्वाक्येभ्यः पूर्वं प्रकीर्तितं कर्मकाण्डे**

अनुभूतिस्वरूपाचार्यटीका

**सांख्यानां** तावत् प्रकृतिपुरुषौ नित्यौ, तयोरविवेकात् संसारः, तर्हि मोक्षेऽपि अविवेकस्य तमसो भावाद-
५ निर्मोक्षः स्यात्। न हि तेषां गुणपुरुषातिरिक्तं वस्तु। सात्त्विकेन विवेकेन प्रतिबन्धश्चेत् कल्प्यते तर्हि तस्यासत उत्पत्तिरिष्टा स्यात्। कृतकत्वाच्च तस्य क्षये मुक्तानां पुनर्बन्धः स्यात्। किञ्च दृगव्यवधानं हि जडस्य दृश्यत्वम्। तच्च मोक्षेऽप्यस्तीति न संसारात् सांख्यानां विशेषः। **वैशेषिकादीनामपि** नित्यानि मनांसि सर्वगतात्मभिर्मोक्षेऽपि संयुक्तानीति कस्मात् शरीराद्यर्थः प्रयत्नो न स्यात्। अदृष्टज एव संयोगः प्रयत्नहेतुः। नादृष्टजत्वं संयोगस्य (न चात्मनि) क्रिया गुणो वा, निर्गुणत्वान्निष्क्रियत्वाच्च। न च औपाधिकं वस्तु इत्यकौशलम्। किञ्चादृष्टजस्सुखादि-
१० समवाय एव किं न स्यात्? किं संयोगेनान्तर्गडूयमानेन। न च क्रिया करणसंयोगपूर्विकेति नियमः। मनश्चलने व्यभिचारात्। न च कार्यसमवायनियमाभ्यां, आद्यव्यापारे व्यभिचाराददृष्टमेव वा समवायि किं न स्यात्। किञ्च मोक्षेऽपि अदृष्टजः संयोगस्ते न विरुध्यते। अतीतानन्तकल्पसञ्चितादृष्टानामनन्तत्वादेकक्षयायोगात्। उक्तं हि—

अन्तर्न्यूनातिरिक्तत्वैर्युज्यते परिमाणवत्। वस्तुन्यपरिमेये तु नूनं तेषामसम्भवः।। इति।

न च क्षयकारणमपि पश्यामः। न तावज्जीवज्ञानं तत्क्षयकारणमतिप्रसङ्गात्। "सहस्रशीर्षा पुरुष"
१५ इत्यारभ्याधिदैविकमीश्वरं प्रस्तुत्य "तमेव विदित्वाऽतिमृत्युमेति" इति तज्ज्ञानातिरिक्तसाधननिषेधात्। न चेश्वरगोचरमपि परोक्षज्ञानं सर्वकर्मक्षयकारणं ध्यानादिविधानानर्थक्यात्। न च सामान्यतो दृष्टानुमितस्याऽऽपरोक्ष्यं दृष्टचरम्। न निरोधदोषोपहतमनःसम्यगापरोक्ष्यं प्रसूते, किन्तु मृतपुत्राद्यापरोक्ष्यवत् मिथ्या। श्रुतिस्तु "यस्य स्यादद्धा न विचिकत्से"ति सम्यग्ज्ञानात् फलमाह। न च "ज्ञानाग्निः सर्वकर्माणीति" स्मृतेः सत्यानां कर्मणां ईश्वरोपासनात् निवृत्तिरिति वाच्यम्। वचनस्य पदार्थसामर्थ्यानाधायकत्वात्। तस्मात् सर्वकर्मक्षयकारणाभावाददृष्टजोऽपि मनस्संयोगो
२० मोक्षे कुतो न स्यात्। अथ देहावस्थितयोरेव आत्ममनसोः संयोगः प्रयत्नमुत्पादयति। न, सर्वगतस्यात्मनो देहाधिकरणत्वायोगात्। मनसोऽपि स्वतन्त्रस्य देहान्तरेव नावस्थाननियामकमस्ति। न चादृष्टाक्षिप्तं तिष्ठतीति वाच्यम्। संयोगादिसम्बन्धशून्यस्याचेतनस्याक्षेपकत्वासम्भवात्। अदृष्टमनोऽवस्थानयोरितरेतराश्रयात्। अन्धपरम्परान्यायेन ऽन्याय्याऽनादिताकल्पना। न चेश्वरेच्छया नियमितं तिष्ठतीति वाच्यं, तस्या अपि तेन साक्षात् सम्बन्धविरहात्। स्वाश्रयसंयोगद्वारेण नियामकत्वे गर्दभेच्छायाः किं न स्यात्। किञ्च, मुक्तजीवानां सर्वगतत्वेन
२५ सूकरादिदेहान्तस्थमनोभिः संयोगसम्भवात् विष्ठाभक्षणादि प्रयत्नतः किं न स्यात्। तस्मात्तार्किकपशुपालैः स्वशिष्यपालनायैवाविचारसुन्दरद्वैतदृष्टिदामनी निरमायीति निर्मलम्।।१३।।

स्वमनीषिकया नेयं द्वैतदृष्टिरस्माकीनैः निरमीयत, किन्तु श्रुत्यैव व्यधायि इत्याशङ्कते—**ननु श्रुत्याऽपीत्यादिना**।

आनन्दगिरिटीका

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृताः।।

३० इति मनुवचनादित्यर्थः। न्यायविरोधादपि भेदवादानामसमञ्जसत्वमित्याह—**निरूप्यमाणा इति**। वैशेषिक-वैनाशिकादिकल्पना भेदानुसारिण्यो, भेदश्च परस्पराश्रयतादिदोषदूषितो न प्रमीयते। तेन भेदवादानामुत्प्रेक्षामूला-नामसमञ्जसतेत्यर्थः।।१३।।

न भेदवादानामुत्प्रेक्षामात्रमूलत्वं श्रुतिमूलत्वादित्याशङ्क्य परिहरति—**जीवात्मनोरिति**। उत्पत्तिर्व्युत्पत्तिः सम्यग्ज्ञानम्, तदर्थोपनिषदां प्रवृत्त्यपेक्षया प्राक्प्रवृत्तकर्मकाण्डेन यत्परापरयोर्नानात्वमुक्तं तदोदनं पचतीति भविष्य-
३५ त्प्रवृत्त्या तण्डुलेष्वोदनत्ववद् गौणमेव, न मुख्यभेदार्थत्वं श्रुतेर्युज्यते, भेदस्यापूर्वत्वपुरुषार्थत्वयोरभावादित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह—**नन्विति**। न केवलमस्माभिरुत्प्रेक्षितमिदं, किं तु श्रुत्याऽपि दर्शितमित्यपेरर्थः। भेदं

१. उत्पत्त्यर्थेति—एकत्वज्ञानार्थेत्यर्थः। एवमेव पाठः क्वचित्।

**अनेकशः कामभेदत इदङ्कामोऽदःकाम इति; परश्च "स दाधार पृथिवीं द्याम्" इत्यादिमन्त्रवर्णैः। तत्र कथं कर्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यत इति। अत्रोच्यते—"यतो वा इमानि भूतानि जायन्ते" "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" "तदैक्षत। तत्तेजोऽसृजत" इत्याद्युत्पत्त्यर्थोपनिषद्वाक्येभ्यः प्राक् पृथक्त्वं कर्मकाण्डे प्रकीर्तितं यत्तन्न परमार्थम्। किं तर्हि? गौणम्। महाकाशघटाकाशादिभेदवत्। यथौदनं पचतीति भविष्यद्वृत्त्या तद्वत्। न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते। स्वाभाविकाविद्यावत्प्राणिभेददृष्ट्यनुवादित्वादात्मभेदवाक्यानाम्। इह चोपनिषत्सूत्पत्ति-प्रलयादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम्। "तत्त्वमसि" "अन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादिभिः। अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपिपादयिषितं भविष्यतीति भाविनीमेव वृत्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः। [1]अथवा "तदैक्षत" "तत्तेजोऽसृजत" इत्याद्युत्पत्तेः प्राक् "एकमेवाद्वितीयम्" इत्येकत्वं प्रकीर्तितम्। तदेव च "तत्सत्यं स आत्मा तत्त्वमसि" इत्येकत्वं भविष्यतीति तां भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद् गौणम्। यथौदनं पचतीति तद्वत्।।१४।।**

अनुभूतिस्वरूपाचार्यटीका

तत्परातत्परयोस्तत्परं बलवदिति न्यायेन अखण्डवाक्यार्थस्यैव सामञ्जस्यमाह—**अत्रोच्यत इत्यादिना**। न केवलमपूर्वार्थत्वादद्वैतवाक्यानां तत्परत्वं, सोपपत्तिकत्वादपीत्याह—**इह चोपनिषत्स्विति**। सृष्टेः प्रागद्वितीयं ब्रह्मैवासीत् तदेवेदं सृष्ट्वा अनुप्रविष्टं जीव उच्यते। अतो जीवस्य ब्रह्मता सम्भवतीत्युपपत्तिः। नवकृत्वोऽभ्यासोऽपि तात्पर्यलिङ्गमित्याह—**तत्त्वमसीति**। साध्याहारं योजनान्तरमाह—**अथ वेति**।।१४।।

उपक्रमोपसंहारयोरेकरूपत्वं तात्पर्यलिङ्गमत्र दर्शितम्। इत एवोत्पत्त्यादिश्रुतिभ्यः सकाशादाकृष्योद्भाव्यायं दोषः प्रागेव परिहृतः। इह पुनः किमर्थ उपन्यास इत्यध्याहारेण चोद्यं परिहरति—**उत्पत्तीति**। उत्पत्त्यादिश्रुतीनां ब्रह्मात्मैक्ये

आनन्दगिरिटीका

वदन्त्याः श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—**अनेकश इति**। कर्मकाण्डे तत्तत्कामनाभेदेन नियोज्यभेदसिद्धावपि कथं जीवपरयोर्भेदः सिध्यति, परस्य तत्रानुक्तत्वादित्याशङ्क्याऽऽह—**परश्चेति**। 'हिरण्यगर्भः समवर्तताग्र' इति मन्त्रे प्रकृतो हिरण्यगर्भः सर्वनाम्ना परामृश्यते। स इमां पृथिवीं द्यामपि धृतवान्। अन्यथा गुरुत्वात्तयोरवस्थानायोगात्। न च हिरण्यगर्भातिरिक्तमीश्वरं परे बुध्यन्ते मन्त्रवर्णैः। परश्च प्रकीर्तित इति सम्बन्धः। कर्मकाण्डार्थं ज्ञानकाण्डे-नापबाध्य ज्ञानकाण्डार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यतामित्याशङ्क्य बाध्यबाधकभावनिर्धारणे कारणानवधारणान्नैव-मित्याह—**तत्रेति**। श्लोकाक्षरैरुत्तरमाह—**अत्रेत्यादिना**। पृथक्त्वस्य गौणत्वे प्रागुक्तमेव दृष्टान्तमाह—**महाकाशेति**। तत्रैव श्लोकसूचितमुदाहरणमाह—**यथेति**। मुख्यत्वं हीत्यादि व्याचष्टे—**न हीति**। भेदस्यापूर्वत्वाद्यभावान्न वाक्यानां तत्परत्वम्; तत्परातत्परयोश्च तत्परं वाक्यं बलवदिति न्यायादखण्डवाक्यार्थस्यैव सामञ्जस्यमित्यर्थः। अद्वैत-वाक्यानामपि कथमद्वैते तात्पर्यमित्याशङ्क्यापूर्वार्थत्वादुपपत्तिमत्त्वाच्चेत्याह—**इह चेति**। अद्वैतं तावन्मानान्तरागो-चरत्वादपूर्वमेकमेवाद्वितीयमिति प्रागवस्थायां ब्रह्माद्वितीयं श्रुतम्। तदेवेदं सृष्ट्वा 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति श्रुतेरनुप्रविष्टं जीवोऽभिलप्यते। तेन जीवस्य ब्रह्मता सम्भवतीत्युपपत्त्याऽपि श्रुतेरद्वैतार्थत्वं गम्यते। सृष्ट्यादिश्रुती-नामद्वैते तात्पर्यं न सृष्ट्यादावित्यनन्तरमेव वक्ष्यते। तस्मादद्वैते श्रुतेस्तात्पर्यात्तदर्थस्यैव तात्त्विकतेत्यर्थः। न केवलमुपपत्तेरेवाद्वैते श्रुतेस्तात्पर्यं किं तु नवकृत्वोऽभ्यासादपीत्याह—**तत्त्वमिति**। भेददृष्टेरपवादाच्च श्रुतेरद्वैते तात्पर्यं प्रतिभातीत्याह—**अन्योऽसाविति**। आदिशब्देनाद्वैतवादीनि द्वैतनिषेधीनि च वचनान्तराणि गृह्यन्ते। एकत्वमेव प्रतिपिपादयिषितमिति पूर्वेण सम्बन्धः। एकत्वे श्रुतेस्तात्पर्ये सिद्धे तृतीयपादावष्टम्भेन फलितमाह—**अत इति**। श्लोकस्य साध्याहारं व्याख्यानान्तरमाह—**अथवेत्यादिना**।।१४।।

---

१. अस्मिन् पक्षे उत्पत्तिः प्रपञ्चोत्पत्तिः, ततः प्राक् "एकमेवाद्वितीयमि"त्येकत्वं यत्प्रकीर्तितं तच्च भविष्यद्वृत्त्या तत्त्वमसीत्येकत्वमुत्तरत्र वक्ष्यतीति जीवात्मनोः पृथक्त्ववचनं तु गौणमिति, यत् प्रागुत्पत्तेः इत्यतः पूर्वमित्येकत्वमित्यध्याहारः। पृथक्त्वमित्यस्य गौणमित्यनेन सम्बन्धः।

**[१]मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा। उपायः सोऽवताराय नास्ति भेदः कथंचन।।१५।।**

**ननु यद्युत्पत्तेः प्रागजं सर्वमेकमेवाद्वितीयं तथाऽप्युत्पत्तेरूर्ध्वं जातमिदं सर्वं जीवाश्च भिन्ना इति। मैवम्। अन्यार्थत्वादुत्पत्तिश्रुतीनाम्। पूर्वमपि परिहृत एवायं दोषः। स्वप्नवदात्ममायाविसर्जिताः सङ्घाता घटाकाशोत्पत्ति-भेदादिवज्जावानामुत्पत्तिभेदादिरिति इत एवोत्पत्तिभेदादिश्रुतिभ्य आकृष्येह पुनरुत्पत्तिश्रुतीनामैदंपर्यप्रतिपिपाद-यिषयोपन्यासः। मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या चोदितौ प्रकाशिताऽन्यथाऽन्यथा च स सर्वः सृष्टि-प्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्, यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणवैशिष्ट्यबोधावताराय। तदप्यसिद्धमिति चेत्। न। शाखाभेदेष्वन्यथाऽन्यथा च प्राणादिसम्वादश्रवणात्। यदि हि**

अनुभूतिस्वरूपाचार्यटीका

तात्पर्यप्रतिपादनेच्छयाऽयमुपन्यासः। पूर्वन्तु मिथ्यासृष्टिपरत्वमुक्तमिति न पौनरुक्त्यम्। यतः शब्दशक्तिवशात् भाति न स एव श्रुत्यर्थो भवति, किन्तु यत्र तात्पर्यं स श्रुत्यर्थ इत्यत्रोदाहरणमाह—**यथेति**। वागादिप्राणानामहं श्रेयानिति कोलाहलः संवादः। स यथाश्रुतार्थो न भवति अचेतनत्वादित्यर्थः। देवासुरसंग्रामे देवा असुराभिभवाय यज्ञमारेभिरे। वागादींश्चोद्गातृत्वेन वव्रिरे। तांश्च वागादीन् कल्याणासङ्गजेन पाप्मना असुरा विविधुः, इत्याद्याख्यायिका न यथाश्रुतार्था, वागादीनां वागभावेन उद्गानासामर्थ्यात्। किन्त्वसुरैः अधर्षितत्वात् प्राणोत्क्रान्तौ च देहपातप्रसिद्धेः प्राणः श्रेष्ठ इत्यवधारणाय सा कल्पितेत्यर्थः। देवताशब्दप्रयोगाच्चेतना वागादय इति मुख्यार्थमेव संवादादि(गुण)-श्रवणमतोऽसिद्धमुदाहरणमित्याह—**तदपीति**। प्रमाणान्तरप्राप्तिविरोधयोरसतोः यथाश्रुतेऽर्थेऽर्थवादानां प्रामाण्यमिति देवताधिकरणन्यायेनाविरोधापेक्षमेव अर्थवादप्रामाण्यम्। इह तु परस्परपराहतिदर्शनान्न प्रामाण्यमित्याह—**नेति**। क्वचिद्विवदमानानां प्रजापतिमुपागतानां "यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतममेव भवति स वः श्रेष्ठः" इत्युक्तानां प्रवासः श्रूयते। क्वचित्तु स्वातन्त्र्येण यस्मिन्नुत्क्रान्त इदं शरीरं पतेत् स नः श्रेष्ठः इत्यालोच्य। क्वचिद् वाक्चक्षुःश्रोत्र-

आनन्दगिरिटीका

सृष्ट्यादिश्रुतिषु शब्दशक्तिवशादेव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्तिरित्याशङ्क्याऽऽह—**मृल्लोहेति**। उत्पत्त्यादि-श्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्यावर्त्यं चोद्यमुत्थापयति—**नन्विति**। तासां स्वार्थनिष्ठत्वाभावान्निरवकाशं चोद्यमिति परिहरति—**मैवमिति**। परिहृतत्वाच्च नेदं चोद्यं सावकाशमित्याह—**पूर्वमपीति**। यदि प्रकृतोत्पत्त्यादिश्रुतिभ्यः सकाशादुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गमाकृष्योद्भाव्य सृष्ट्यादिश्रुतेः स्वार्थपरत्वं परिहृतं तर्हि पुनरुपन्यासो वृथा स्यादित्याशङ्कते—**इत एवेति**। उत्पत्त्यादिश्रुतीनां मिथ्यासृष्टिपरत्वं पूर्वमुक्तम्। इह तु तासां ब्रह्मात्मैक्ये तात्पर्यप्रतिपादनेच्छया पुनरुपन्यासः सिध्यतीत्युत्तरमाह—**इह पुनरिति**। पादत्रयगतान्यक्षराणि योजयति—**मृदित्यादिना**। यः शब्दशक्त्या प्रतीयते न स श्रुत्यर्थो भवति, किं तु तात्पर्यगम्यस्यैव श्रुत्यर्थतेत्यत्र दृष्टान्तमाह—**यथेति**। वागादीनां प्राणानामहं श्रेयानहं श्रेयानिति मिथः संघर्षः संवादस्तत्र याऽऽख्यायिका श्रूयते नासौ श्रुत्यर्थो भवति वागादीनामचेतनत्वात्। तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे तात्पर्यवतीत्यर्थः। उदाहरणान्तरं सूचयति—**वागादीति**। देवासुरसङ्ग्रामे देवास्तावदसुरानभिभवितुं यज्ञमुपचक्रमिरे। वागादींश्चोद्गातृत्वेन वव्रिरे। तांश्च वागादीन् कल्याणासङ्गजेन पाप्मनाऽसुरा विविधुरित्याद्याख्यायिका च न यथाश्रुतार्था। वागादीनां वागभावेनोद्गानासामर्थ्यात्। किं त्वसुरैरधर्षितत्वात्प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारशेषत्वेन सा कल्पिता। तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात्तत्कार्यस्य तद्व्यतिरेकेणाभावात् तदेवास्तीत्यद्वैतबुद्ध्यवतारोपायत्वेन सृष्ट्यादिप्रक्रिया कल्पितेत्यर्थः। देवताशब्दप्रयोगाच्चेतनत्वं वागादीनामिति मुख्यार्थत्वं संवादादिश्रवणस्य, अतोऽसिद्धमुदाहरणमिति शङ्कते—**तदपीति**। संवादविसंवादयोरसतोः श्रुतेऽर्थे प्रामाण्यमर्थवादानामित्यङ्गीकारादविरोधापेक्षमेवार्थवादप्रामाण्यम्। इह तु परस्परव्याहतिदर्शनान्न प्रामाण्यमिति परिहरति—**न, शाखाभेदेष्विति**। प्राणादीत्यादिशब्देन मुख्यप्राणातिरिक्ता वागादयो गृह्यन्ते। उक्तमेव समाधानं व्यतिरेकमुखेण विवृणोति—**यदि हीति**। क्वचिद्विवदमानानां प्राणानां स्वयमेव निर्णेतुमशक्तानां प्रजापतिमुपगतानां

---

१. अन्यथा अन्यथेति वीप्सा द्रष्टव्या। लोहं सुवर्णम्, अवताराय ब्रह्मात्मैक्यबुद्धेरिति शेषः। प्रतिपाद्ये ब्रह्मणि नास्ति भेदः विगानमित्यर्थः (कल्प० १.४.१५)।

**आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः। उपासनोपदिष्टेयं तदर्थमनुकम्पया।।१६।।**

**संवादः परमार्थ एवाभूदेकरूप एव संवादः सर्वशाखास्वश्रोष्यद् विरुद्धानेकप्रकारेण नाश्रोष्यत्। श्रूयते तु। तस्मात्र तादर्थ्यं संवादश्रुतीनाम्। तथोत्पत्तिवाक्यानि प्रत्येतव्यानि। कल्पसर्गभेदात् संवादश्रुतीनामुत्पत्तिश्रुतीनां च प्रतिसर्गमन्यथात्वमिति चेन्न। निष्प्रयोजनत्वाद् यथोक्तबुद्ध्यवतारप्रयोजनव्यतिरेकेण। न ह्यन्यप्रयोजनवत्त्वं संवादोत्पत्तिश्रुतीनां शक्यं कल्पयितुम्। तथात्वप्रतिपत्तये ध्यानार्थमिति चेन्न। कलहोत्पत्तिप्रलयानां प्रतिपत्तेरनिष्टत्वात्। तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वबुद्ध्यवतारायैव, नान्यार्थाः कल्पयितुं युक्ताः। अतो नास्त्युत्पत्त्यादिकृतो भेदः कथञ्चन।।१५।।** ५

**यदि पर एवाऽऽत्मा नित्यशुद्धबुद्धमुक्तस्वभाव एकः परमार्थः सन् "एकमेवाद्वितीयम्" इत्यादिश्रुतिभ्योऽसदन्यत् किमर्थेयमुपासनोपदिष्टा "आत्मा वा अरे द्रष्टव्यः" "य आत्माऽपहतपाप्मा" "स क्रतुं कुर्वीत" "आत्मेत्येवो-**

अनुभूतिस्वरूपाचार्यटीका

मनांसि मुख्यातिरिक्ताश्चत्वारः प्राणाः श्रूयन्ते। क्वचित् त्वगादयोऽपीत्येवं परस्परपराहतिरित्यर्थः। तथोत्पत्तिवाक्यानि—क्वचिदाकाशादिक्रमेण सृष्टिः। क्वचित् तेजआदिक्रमेण, क्वचित्प्राणादिक्रमेण इत्येवं परस्परपराहतिदर्शनादविवक्षितार्थानीत्यर्थः। व्यवस्थयाऽर्थवत्त्वं शङ्कते—**कल्पसर्गभेदादिति**। सिद्धे प्रामाण्ये व्यवस्था कल्प्येत, तदेव नाद्यापि निश्चितमित्याह—**नेति**। प्राणादिभावप्राप्तये ध्यानार्थं तत् सङ्कीर्तनम्, अत एव गुणोपसंहारपादे वियत्पादे च सूत्रकृता ऐकरूप्यं न्यरूपि, तत्राह—**नेति**। "तं यथा यथोपासते तदेव भवती"ति श्रुतेः न्यायसाम्यात् कलहादिध्यानात् तत्प्राप्तिः फलं स्यात्। तच्चानिष्टम्। सूत्रकारप्रयासश्च मन्दमतिव्याकुलत्वपरिहारार्थ इति भावः।।१५।। १०

एवं तावद्भेदोत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनाविध्यनुपपत्तिविरोधं परिहरति—**आश्रमा इत्यादिना**। कार्यब्रह्मोपासका हीनदृष्टयः। कारणब्रह्मोपासका मध्यमदृष्टयः। अद्वितीयब्रह्मदर्शिनः उत्तमदृष्टयः। उपास्यं ब्रह्मैव न भवतीति प्रतिषेधात् मन्दमध्यमदृष्टिविषयत्वमुपासनस्य गम्यत इत्याह—**यन्मनसेति**। अद्वैतदृष्टीनां त्वाश्रयविषयभेदाभावादेव नोपासनं संभवतीत्याह—**तत्त्वमसीति**।।१६।। १५

आनन्दगिरिटीका

'यस्मिन्नुत्क्रान्ते शरीरमिदं पापिष्ठतरमिव तिष्ठति स वः श्रेष्ठो भवती'ति तेनोक्तानां प्रवासः श्रूयते। क्वचित्तु स्वातन्त्र्येण यस्मिन्नुत्क्रान्ते शरीरमिदं पतति स नः श्रेयानित्यालोच्य प्रवासो व्यपदिश्यते। क्वचित्पुनर्वाक्चक्षुःश्रोत्रमनांसीति मुख्यप्राणातिरिक्ताश्चत्वारः श्रूयन्ते। क्वचित्त्वगादयोऽपीत्येवं विरुद्धानेकप्रकारेण संवादश्रवणमस्तीत्याह—**श्रूयते त्विति**। प्राणसंवादश्रुतीनां मिथो विरोधान्नास्ति स्वार्थे प्रामाण्यमित्युपसंहरति—**तस्मादिति**। उक्तदृष्टान्तानुरोधादुत्पत्तिवाक्यान्यपि न विवक्षितार्थानि। क्वचिदाकाशादिक्रमेण सृष्टिः क्वचिदग्न्यादिक्रमेण क्वचित्प्राणादिक्रमेण क्वचिदक्रमेणेत्येवं परस्परपराहतिदर्शनादित्याह—**तथेति**। प्रतिकल्पं सृष्टिभेदस्येष्टत्वादुक्तश्रुतीनामपि प्रतिसर्गमन्यथात्वाद् व्यवस्थयाऽर्थवत्त्वं स्यादिति शङ्कते—**कल्पेति**। सिद्धे प्रामाण्ये व्यवस्था कल्प्यते। तदेव नाद्यापि सिद्धमित्युत्तरमाह—**नेत्यादिना**। तासां प्रयोजनवत्त्वं त्वयाऽपि स्वीकृतमित्याशङ्क्याऽऽह—**यथोक्तेति**। प्रयोजनान्तराभावं प्रकटयति—**न हीति**। प्राणादिभावप्राप्तये ध्यानार्थं प्राणादिसङ्कीर्तनमिति शङ्कते—**तथात्वेति**। 'तं यथा यथोपासते तदेव भवती'ति श्रुतेः न्यायसाम्यात् कलहादिध्यानात्तत्प्राप्तिः फलं स्यात्, तच्चानिष्टमिति परिहरति—**नेत्यादिना**। प्राणसंवादश्रुतीनां प्राणवैशिष्ट्यावबोधावतारार्थत्वमुपपाद्य दार्ष्टान्तिकमुपसंहरति—**तस्मादिति**। उत्पत्त्यादिश्रुतीनामुत्पत्त्यादिपरत्वाभावे फलितं चतुर्थपादावष्टम्भेन स्पष्टयति—**अत इति**।।१५।। २० २५ ३०

उत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति—**आश्रमा इति**। आश्रमिणो वर्णिनश्च कार्यब्रह्मोपासका हीनदृष्टयः। कारणब्रह्मोपासका मध्यमदृष्टयः। अद्वितीयब्रह्मदर्शनशीलास्तूत्तमदृष्टयः। एवमेतेषु त्रिविधेषु मध्ये मन्दानां मध्यमानां चोत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा। तथा चोपासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेवान्तर्भविष्यन्तीत्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह—**यदीति**। तस्यैव परमार्थतः सत्त्वे प्रमाणमाह—**एकमेवेति**। द्वैतप्रतीतेर्मिथ्याद्वैतविषयत्वेनाविरोधमाह—**असदिति**। अद्वैतस्यैव वस्तुत्वे ध्यानविधिविरोधमाह—**किमर्थेति**। उपासनोपदेशमेव विशदयति—**आत्मेति**। तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते। 'य आत्मे'त्यादौ तु 'स विजिज्ञासितव्य' इति ध्यानविधिः। 'स क्रतु'मित्यत्र सशब्देन ३५

**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्। परस्परं विरुध्यन्ते तैरयं न विरुध्यते।।१७।।**

**पासीत'' इत्यादिश्रुतिभ्यः। कर्माणि चाग्निहोत्रादीनि। शृणु तत्र कारणम्। आश्रमा आश्रमिणोऽधिकृताः। वर्णिनश्च मार्गगाः। आश्रमशब्दस्य प्रदर्शनार्थत्वात्त्रिविधाः। कथम्? हीनमध्यमोत्कृष्टदृष्टयः। हीना निकृष्टा मध्यमोत्कृष्टा च दृष्टिर्दर्शनसामर्थ्यं येषां ते मन्दमध्यमोत्तमबुद्धिसामर्थ्योपेता इत्यर्थः। उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं**
५ **कर्माणि च, न चाऽऽत्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थं दयालुना वेदेनानुकम्पया सन्मार्गगाः सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति। [१]''यन्मनसा न मनुते येनाऽऽहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'' ''तत्त्वमसि'' ''आत्मैवेदं सर्वम्'' इत्यादिश्रुतिभ्यः।।१६।।**

**शास्त्रोपपत्तिभ्यामवधारितत्वादद्वयात्मदर्शनं सम्यग्दर्शनं, तद्बाह्यत्वान्मिथ्यादर्शनमन्यत्। इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात्। कथं? स्वसिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हतादि-**
१० **दृष्ट्यनुसारिणो द्वैतिनो निश्चिताः एवमेवैष परमार्थो नान्यथेति तत्र तत्रानुरक्ताः, प्रतिपक्षं चाऽऽत्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं विरुध्यन्ते। तैरन्योन्यविरोधिभिरस्मदीयोऽयं**

अनुभूतिस्वरूपाचार्यटीका

मिथ्याभेददृष्टिविषयत्वेनोपासनविध्युपपत्तेः यद्यपि तद्विरोधो नास्ति, तथापि मतान्तराणां प्रमाणमूलत्वात् तद्विरोधोऽस्ति अद्वैतदर्शनस्येत्याशङ्क्य तेषां भ्रममूलत्वं सूत्रयति—**स्वसिद्धान्तेत्यादिना**। यथा स्वहस्तपादादिभिः
१५ कदाचिदाघाते कृते विद्वेषो न जायते, परबुद्ध्यभावात्, तथा द्वैताभिमानिभिः उपद्रवे कृतेऽपि अद्वैतदर्शिनः तद्विद्वेषो न जायते, सर्वानन्यत्वात् परबुद्ध्यभावादित्यर्थः।।१७।।

आनन्दगिरिटीका

शमादिमानधिकारी परामृश्यते। अद्वैतस्यैव वस्तुत्वे कर्मविधिविरोधोऽपि प्रसरतीत्याह—**कर्माणि चेति**। किमर्थान्युप-दिष्टानीति सम्बन्धः। अद्वैताधिकारिणोऽधिकार्यन्तरं प्रति विधिद्वयं सावकाशमिति परिहरति—**शृण्विति**। तत्रेत्यु-
२० पासनोपदेशः कर्मोपदेशश्च गृह्यते। तदेव कारणमक्षरयोजनया प्रकटयति—**आश्रमा इति**। आश्रमशब्देनाऽऽश्रमिणो गृह्यन्तां, वर्णिनस्तु कथं गृह्येरन्नित्याशङ्क्याऽऽह—**आश्रमेति**। शूद्रान् व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम्। त्रैविध्यमेवाऽऽकाङ्क्षाद्वारा स्फोरयति—**कथमित्यादिना**। कार्यब्रह्मविषयत्वान्निकृष्टत्वम्। मध्यमत्वं कारणब्रह्मविषयत्वात्। उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम्। एवं पूर्वार्धं व्याख्यायोत्तरार्धं व्याकरोति—**उपासनेति**। कर्मोपदेशस्यापि तदर्थत्वमाह—**कर्माणि चेति**। व्यावर्त्यां शङ्कां दर्शयति—**न चेति**। वेदेनोपासनाद्युपदेशे मन्दानां
२५ मध्यमानां च कथमनुग्रहः सिध्यतीत्याशङ्क्याऽऽह—**सन्मार्गगा इति**। प्राप्नुयुरित्युपासनोपदिष्टा कर्माणि चेति पूर्वेण सम्बन्धः। उपास्यं ब्रह्मैव न भवतीति प्रतिषेधान्मन्दमध्यमदृष्टिविषयत्वमुपासनस्य प्रतिभातीत्याह—**यन्मनसेति**। अद्वैतदृष्टीनां तु वर्णाश्रमभेदाभिमानाभावादेव नोपासनं कर्म वा सम्भवतीत्याह—**तत्त्वमसीति**।।१६।।

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह—**स्वसिद्धान्तेति**। श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति—**शास्त्रेति**। तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रोपपत्ती
३० गृह्येते। द्वैतदर्शनस्य मिथ्यादर्शनत्वे हेत्वन्तरपरत्वमवतारितस्य श्लोकस्य दर्शयति—**इतश्चेति**। इतःशब्दार्थमेव दर्शयति—**द्वैतिनामिति**। आदिशब्देन मदमानादयो गृहीताः। स्वीयं स्वीयं सिद्धान्तं व्यवस्थापयितुं तत्त्वज्ञानमधिकृत्य प्रवृत्तानां वादिनां कुतो दोषास्पदत्वमित्याक्षिपति—**कथमिति**। श्लोकाक्षरयोजनया परिहरति—**स्वसिद्धान्तेत्यादिना**। निश्चयमेव स्फोरयति—**एवमेवेति**। रागास्पदत्वेऽपि तेषां द्वेषास्पदत्वं कथमित्याशङ्क्याऽऽह—**प्रतिपक्षमिति**। उत्तरार्द्धं विभजते—**स्वसिद्धान्तेति**। यद्धि वादिनां प्रत्येकं स्वसिद्धान्तत्वेनोपसंगृहीतं दर्शनं तन्निर्धारणार्थमन्योन्यं वादिनो
३५ विरोधमाचरन्तो दृश्यन्ते। न च तैरद्वैतदर्शनं विरुध्यमानमध्यवसीयते। यथा[२] स्वकीयकरचरणादिभिराघाते

---

१. यन्मनसेति—ब्रह्मण उपास्यत्वप्रतिषेधेनोपासनोपदेशो मन्दमध्यमदृष्टिविषय एवेति ज्ञायते। उत्तमदृष्टीनां ज्ञाननिष्ठत्वात्।

२. तदुक्तं भागवते—''जिह्वां क्वचित् सन्दशति स्वदद्भिः, तद्वेदनायां कतमाय कुप्येदि''ति।

**अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते। तेषामुभयथा द्वैतं तेनायं न विरुध्यते।।१८।।**

वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते, यथा स्वहस्तपादादिभिः। एवं रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः।।१७।।

केन हेतुना तैर्न विरुध्यत इत्युच्यते। अद्वैतं परमार्थो हि यस्माद् द्वैतं नानात्वं तस्याद्वैतस्य भेदस्तद्भेदस्तस्य कार्यमित्यर्थः। ''एकमेवाद्वितीयम्'' ''तत्तेजोऽसृजत'' इति श्रुतेः, उपपत्तेश्च। स्वचित्तस्पन्दनाभावे समाधौ मूर्च्छायां सुषुप्तौ चाभावात्। अतस्तद्भेद उच्यते द्वैतम्। द्वैतिनां तु तेषां [1]परमार्थतश्चापरमार्थतश्चोभयथाऽपि द्वैतमेव। यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानाम्। तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः। ''इन्द्रो मायाभिः

अनुभूतिस्वरूपाचार्यटीका

स्वमतपर्यालोचनया तावदविरोधमाह—**अद्वैतं परमार्थो हीति**। श्रुतिप्रामाण्यात् द्वैतस्याद्वैतकार्यत्वावगमात् कार्यस्य च पृथक् सत्ताप्रतिषेधात् 'तत्सत्य'मित्यवधारणात् अद्वैतदर्शनं न द्वैतदर्शनेन विरुध्यत इत्यर्थः। स्वचित्तस्पन्दनाभावे सुषुप्ते मिथ्याज्ञानोपरमे द्वैतदर्शनाभावाददद्वैतं सिद्धं, ततः स्वप्नजाग्रद्भेदानामुद्भेददर्शनादुपपत्तेरपि द्वैतमद्वैतकार्यम्। कार्याभिमतैश्च न कारणं विरुध्यत इत्यर्थः।

इदानीं द्वैतमतपर्यालोचनयाऽपि न विरोध इत्याह—**द्वैतिनां त्विति**। परमार्थ आत्मादिः, अपरमार्थः स्वप्नादिः। उभयमपि द्वैतमेव नाद्वैतं नामास्ति तेषाम्। अविद्यमानेन च विरोधो न प्रमाणतः वक्तुं शक्यत इति भावः। यद्यन्योन्यदृष्ट्योर्विरोधस्तदाऽपि निरूपणीयं—किं द्वे अपि दृष्टी प्रमाणं? उताप्रमाणं? उत एका भ्रान्तिरिति? नाद्यः, सति विरोधे द्वयोः मात्वायोगात्। न द्वितीयो निरास्पदभ्रमायोगात्। तृतीये तु कस्य भ्रान्तित्वमिति विवक्षायां भेदबुद्धेः भ्रान्तित्वं युक्तं सापेक्षविषयत्वादन्योन्याश्रयादिदोषदुष्टत्वात्, एकत्वबुद्धेश्च निरपेक्षविषयत्वादनेकस्यैकपूर्वकत्वेन उभयसम्प्रतिपत्तेश्च प्रामाण्यं युक्तम्। ततः किमित्यत आह—**यदि च तेषामिति**।।१८।।

आनन्दगिरिटीका

कदाचिदाचरितेऽपि द्वेषो न जायते, [2]परबुद्ध्यभावात्। तथा द्वैताभिमानिभिरुपद्रवे क्षुद्रे कृतेऽपि नाद्वैतदर्शिनस्तेषु द्वेषो जायते। सर्वानन्यत्वात् परबुद्ध्यभावादित्यर्थः। अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिज्ञातं कथं प्रदर्शितया प्रक्रियया प्रतिपन्नमित्याशङ्क्याऽऽह—**एवमिति**।।१७।।

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधवाचोयुक्तिरित्याशङ्क्य स्वमतपर्यालोचनया तावदविरोधमाह—**अद्वैतमिति**। मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाऽऽह—**तेषामिति**। द्वैतिनां परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम्। तच्च सम्प्रतिपन्नद्वैतवन्मिथ्येत्येवं स्थिते न द्वैतेनाद्वैतस्य विरोधः शक्यशङ्को भवतीत्यर्थः। श्लोकप्रतिषेध्यं प्रश्नं करोति—**केनेति**। श्लोकाक्षराणामर्थमाचक्षाणो हेतुमाह—**उच्यत इति**। द्वैतस्याद्वैतकार्यत्वे प्रमाणमाह—**एकमेवेति**। श्रुतिप्रामाण्याद् द्वैतस्याद्वैतकार्यत्वावगमात् कार्यस्य च कारणाद्भेदेन सत्त्वनिषेधात् तत्सत्यमित्यवधारणान्नाद्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः। अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह—**उपपत्तेश्चेति**। तामेवोपपत्तिं संक्षिप्य दर्शयति—**स्वचित्तेति**। सुषुप्त्याद्यवस्थायां स्वकीयचित्तस्पन्दनाभावे मिथ्याज्ञानोपरमे सति द्वैतदर्शनाभावाददद्वैतं सिद्धम्। ततश्च स्वप्नवज्जाग्रद्भेदानामुत्पत्तिदर्शनादित्युपपत्तेर्द्वैतमद्वैतकार्यं, न च कारणं तत्कार्यप्रतिभासैर्विरुध्यते कार्यस्य वाचारम्भणमात्रत्वात् कारणातिरेकेणाभावादित्यर्थः। तेषामित्यादिभागं विभजते—**द्वैतिनां त्विति**। परमार्थद्वैतांशेनाद्वैतविरोधमाशङ्क्य द्विधा व्यवहारेऽपि विमतस्य द्वैतस्य द्वैतत्वादेव सम्प्रतिपन्नवन्मिथ्यात्वसिद्धेर्न तेन विरोधोऽद्वैतस्येति मन्वानः सन्नाह—**यदि चेति**। भ्रान्तिमूलद्वैतदर्शनैरद्वैतदर्शनं प्रमाणमूलमविरुद्धमित्येतद्

---

१. परमार्थतः = कारणस्य। अपरमार्थतः = कार्यस्य। उभयोरपि मिथ्यात्वात्। अस्माकं तु परमार्थतः अद्वैतम्। अपरमार्थतः कार्यस्य मिथ्यात्वादद्वैतमेव।

२. अत एव तत्रभवद्भिः भाष्यकारैः ''उत्तराच्चेदाविर्भूतस्वरूपस्तु'' इत्याधिकरणे ''केचित्तु पारमार्थिकं जैवं रूपं मन्यन्ते अस्मदीयाश्च केचित्'' इति द्वैतिनोऽधिकृत्य ''अस्मदीया'' इत्युक्तम्।

**मायया भिद्यते ह्येतन्नान्यथाऽजं कथंचन। तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत्।।१९।।**
**[1]अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः। अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति।।२०।।**

पुरुरूप ईयते'' ''न तु तद् द्वितीयमस्ति'' इति श्रुतेः। यथा [2]मत्तगजारूढ उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या, तद्वत्। ततः परमार्थतो ब्रह्मविदात्मैव द्वैतिनाम्। तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः।।१८।।

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत् परमार्थसदिति स्यात् कस्यचिदाशङ्केत्यत आह–यत्परमार्थसदद्वैतं मायया भिद्यते ह्येतत् तैमिरिकानेकचन्द्रवद् रज्जुः सर्पधारादिभिर्भेदैरिव, न परमार्थतो निरवयवत्वादात्मनः। सावयवं ह्यवयवान्यथात्वेन भिद्यते। यथा मृद् घटादिभेदैः। तस्मान्निरवयवमजं नान्यथा कथञ्चन केनचिदपि प्रकारेण न भिद्यत इत्यभिप्रायः। तत्त्वतो भिद्यमाने ह्यमृतमजमद्वयं स्वभावतः सन्मर्त्यतां व्रजेत्। यथाऽग्निः शीतताम्। तच्चानिष्टं स्वभाववैपरीत्यगमनम्। सर्वप्रमाणविरोधात्। अजमव्ययमात्मतत्त्वं माययैव भिद्यते, न परमार्थतः। तस्मान्न परमार्थसद् द्वैतम्।।१९।।

ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैवाऽऽत्मतत्त्वस्यामृतस्य स्वभावतो जातिमुत्पत्तिमिच्छन्ति परमार्थत एव तेषां जातं चेत्तदेव मर्त्यतामेष्यत्यवश्यम्। स चाजातो ह्यमृतो भावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति? न कथञ्चन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः।।२०।।

अनुभूतिस्वरूपाचार्यटीका

ब्रह्म न स्वतः स्फुटनधर्मि निरवयवत्वात् नित्यत्वादजत्वात्, न यदेवं न तदेवं यथा मृदादीत्युक्तम्। विपक्षे बाधकमाह—**तत्त्वत इति**।।१९।।

एवं तावद् यादृशं द्वैतस्याद्वैतकार्यत्वं घटते तत् स्वमतेनोक्त्वा स्वयूथ्यं प्रत्याह—**अजातस्यैवेति**।।२०।।

आनन्दगिरिटीका

दृष्टान्तेनोपपादयति—**यथेत्यादिना**। कार्यकारणभूतयोर्द्वैताद्वैतयोरविरोधे सिद्धे फलितमाह—**तत इति**। अद्वैतिनां द्वैतिनां च प्रातिस्विकपक्षपर्यालोचनातो द्वैतपक्षैरद्वैतपक्षो विरुद्धो न भवतीति फलितमुपसंहरति—**तेनेति**।।१८।।

अद्वैतमेव द्वैतात्मना परिणमते चेद् द्वैतमपि तात्त्विकं स्यादित्याशङ्क्याऽऽह—**माययेति**। विवर्तवादानङ्गीकारे दोषमाह—**तत्त्वत इति**। पूर्वार्धव्यावर्त्यामाशङ्कामादर्शयति—**द्वैतमिति**। तत्र पूर्वार्धक्षराण्यवतार्य व्याकरोति—**अत आहेति**। विमतो भेदो मिथ्या भेदत्वाच्चन्द्रादिभेदवदित्यर्थः। विमतं तत्त्वतो भेदरहितम्, निरवयवत्वान्नित्यत्वाद-जत्वाच्च व्यतिरेकेण मृदादिवदित्याह—**नेत्यादिना**। निरवयवत्वेऽपि वस्तुनः स्फुटनधर्मत्वमाशङ्क्याऽऽह—**सावयवं हीति**। उक्तमनुमानं निगमयति—**तस्मादिति**। अन्यथा परमार्थत्वेनेत्यर्थः। पुनर्नञनुकर्षणमन्वयार्थं, कार्यत्व-धर्मत्वांशत्वादिरत्र प्रकारोऽभिप्रेतः। विपक्षे दोषं वदन् द्वितीयार्धं विवृणोति—**तत्त्वत इति**। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—**तच्चेति**। विवर्तवादमुपसंहरति—**अजमिति**। स्थिते विवर्तवादे फलितमाह—**तस्मादिति**।।१९।।

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति—**अजातस्येति**। अनुवादभागं विभजते—**ये त्विति**। स्वभावत एवाजातस्य स्वभावत एवामृतस्य चाऽऽत्मतत्त्वस्य परमार्थत एव जातिमुत्पत्तिं ये स्वयूथ्याः स्वीकुर्वन्तीत्यर्थः। ''जातस्य हि ध्रुवो मृत्यु''रिति न्यायेन दूषयति—**तेषामिति**। अजातो हीत्याद्यक्षराण्युक्तेऽर्थे योजयति—**स चेति**।।२०।।

---

१. अजातस्य भावस्योत्पत्तिवादिनो ब्रह्मपरिणामो जगदिति वादिनः। प्रपञ्चात्मना ब्रह्मणः परिणामे ब्रह्मणः उत्पत्तिरेवाङ्गीकृता स्यादित्यर्थः।

२. मत्तगजारूढं भूमिष्ठो भ्रान्तः ''अहं गजारूढः मां प्रति त्वदीयगजं प्रेरय न मे भीतिः'' इति वदति। गजारूढस्तु भ्रान्तोऽयमिति ज्ञात्वा न वाहयति, तद्वत् अद्वैती द्वैतदृष्टिं स्वविरोधिनं न मन्यते। तेषां द्वैतिनां परमार्थतोऽपरमार्थतश्चोभयथा द्वैतमेव व्यवहारगोचरस्तत्रापरमार्थेन द्वैतेन नाद्वैतिनां विरोधः। परमार्थेन तु विरोधः स्यात्। परन्तु परमार्थभूतद्वैतं नास्त्येव सर्वस्य चित्तस्पन्दमात्रत्वादित्यध्याहृत्य श्लोको योजनीयः।

**न भवत्यमृतं मर्त्यं [1]न मर्त्यममृतं तथा। प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति।।२१।।**
**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम्। कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः।।२२।।**
**[2]भूततोऽभूततो वाऽपि सृज्यमाने समा श्रुतिः। निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत्।।२३।।**

यस्मान्न भवत्यमृतं मर्त्यं लोके। नापि मर्त्यममृतं तथा। ततः प्रकृतेः स्वभावस्यान्यथाभावः स्वतः प्रच्युतिन कथंचिद्भविष्यति। अग्नेरिवौष्ण्यस्य।।२१।।

यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः स भावः स्वभावतोऽमृतः इति प्रतिज्ञा मृषैव। कथं तर्हि कृतकेनामृतस्तस्य स्वभावः कृतकेनामृतः स कथं स्थास्यति निश्चलोऽमृतस्वभावतया न कथञ्चित् स्थास्यति। आत्मजातिवादिनः सर्वदाऽजं नाम नास्त्येव, सर्वमेतन्मर्त्यम्। अतोऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायः।।२२।।

नन्वजातिवादिनः सृष्टिप्रतिपादिका श्रुतिर्न सङ्गच्छते प्रामाण्यम्। बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः। सा

अनुभूतिस्वरूपाचार्यटीका

पूर्वश्लोकार्थे हेतुमाह—**न भवत्यमृतमिति**।।२१।।

ननु सृष्टेः प्रागमृतं ब्रह्म कारणरूपेण, कार्याकारेण तु सृष्ट्युत्तरकालं मर्त्यतां याति; ततो रूपभेदान्न दोष इत्याशङ्क्याऽऽह—**यस्य पुनरिति**। सृष्टेः प्रागपि कारणस्यैव कार्याकारेण जन्मयोग्यतया मर्त्यत्वावगमात् मृषैव प्रतिज्ञा स्यादित्यर्थः। कथं तर्हि प्रतिज्ञा युक्तेत्याकाङ्क्षायां कृतकेन मर्त्यत्वाविलयनेनामृतस्तस्य वादिनः स कारणाख्यो भावः-इति प्रतिज्ञा युक्तेत्यर्थः। भवतु प्रलयकालेऽमृतावस्था परिणामे नामृतत्वम्, ततो वा को दोष इत्यत आह—**कृतकेनामृतः सन्निति**। कृतकस्य विनाशित्वेन व्याप्तत्वादित्यर्थः। किञ्चास्यामवस्थायां कार्यमात्रं वस्त्विति अहं ब्रह्मास्मीति ज्ञानाभावान्मोक्षो न स्यादित्याह—**आत्मजातिवादिन इति**।।२२।।

नोत्प्रेक्षामात्रेणास्माभिः परिणामवाद आश्रितः, किन्तु सृष्टिश्रुतिबलात्। सा तव न घटत इत्याह—

आनन्दगिरिटीका

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति—**न भवतीति**। तत्र पूर्वार्धं हेतुत्वेन व्याचष्टे—**यस्मादिति**। उत्तरार्धं हेतुमत्त्वेन योजयति—**तत इति**। यथाऽग्नेः स्वभावभूतस्योष्णत्वस्यान्यथात्वं शैत्यगमनमयुक्तं तथाऽन्यत्रापि स्वभावस्यान्यथात्वमनुचितं स्वरूपनाशप्रसङ्गादित्यर्थः।।२१।।

ननु ब्रह्म कारणरूपेण प्रागुत्पत्तेरमृतमपि कार्याकारेणोत्पत्त्युत्तरकालं मर्त्यतां गमिष्यति। ततो रूपभेदादुभयमविरुद्धमिति, तत्राऽऽह—**स्वभावेनेति**। पूर्वार्धं साध्याहारं योजयति—**यस्येति**। प्रागवस्थायामपि कारणस्यैव [3]कार्याकारेण जन्मयोग्यतया मर्त्यत्वावगमान्मृषैव प्रतिज्ञा स्यादित्यर्थः। कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविलयेनामृतस्तस्य वादिनः स कारणाख्यो भावो [न] भवतीति प्रतिज्ञा युक्तेत्याह—**कथमित्यादिना**। भवतु प्रलयावस्थायाममृतावस्थापरिणामेनामृतत्वं ततो [नित्यो] वा किं [न] स्यादित्याशङ्क्याऽऽह—**कृतकेनेति**। कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः। किं चास्यामवस्थायां कार्यमात्रं वस्त्वित्यजं ब्रह्मास्मीति ज्ञानाभावान्मोक्षो न स्यादित्याह—**आत्मेति**।।२२।।

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्यत्वमाशङ्क्य निरस्यति—**भूतत इति**। परिणामवादे विवर्तवादे च सृष्टिश्रुतेरविशेषादद्वैतानुरोधिश्रुतियुक्तिवशाद् विवर्तवादस्यैव स्वीकर्तव्यतेति भावः। सृष्टिश्रुतेरद्वैतानुगुण्ये प्रमाणयुक्त्यनुगृहीतमद्वैतमेवाभ्युपगन्तव्यमिति फलितमाह—**निश्चितमिति**। श्लोकव्यावर्त्यां शङ्कां दर्शयति—**नन्विति**।

---

१. न मर्त्यममृतं तथा—इति दृष्टान्तप्रदर्शनम्। यथा मर्त्यममृतं न भवेत् तथाऽमृतं न मर्त्यमित्यर्थः।

२. भूतत इति—सृष्टिश्रुतिमादाय नाद्वैतविरोधः शङ्कितुं शक्यते। "आत्मन आकाशः सम्भूत" इतिवत् 'रथान् रथयोगान् पथः सृजते" इत्यपरमार्थसृष्टिश्रुतेरपि सद्भावेन सृष्टिश्रुत्या प्रपञ्चतात्त्विकत्वनिर्धारणासम्भवात्। अतः श्रुत्या निश्चितं वाचारम्भणश्रुत्या, युक्तिसहितं च यदुक्तं ब्रह्मसत्यत्वं जगन्मिथ्यात्वं तदेव ग्राह्यमित्यर्थः।

३. कार्याकारपरिणामेन।

**त्वन्यपरा। उपायः सोऽवतारायेत्यवोचाम। इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधाशङ्कामात्रपरिहारार्थौ। भूततः परमार्थतः सृज्यमाने वस्तुन्यभूततो मायया वा मायाविनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टिश्रुतिः। ननु गौणमुख्ययोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता। न। अन्यथा सृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्चेत्यवोचाम। अविद्यासृष्टिविषयैव सर्वा गौणी मुख्या च सृष्टिर्न परमार्थतः। ५ "सबाह्याभ्यन्तरो ह्यज" इति श्रुतेः। तस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तं च युक्त्या च सम्पन्नं तदेवेत्यवोचाम पूर्वैर्ग्रन्थैः। तदेव श्रुत्यर्थो भवति नेतरत् कदाचिदपि।।२३।।**

अनुभूतिस्वरूपाचार्यटीका

**नन्विति। विवक्षितार्थं प्रतीति।** मिथ्यासृष्टिवादे श्रुतिपदानामसृजत अभवदित्यादीनामानुलोम्यमाञ्जस्यं विरुध्यत इति शङ्कापरिहारार्थमित्यर्थः। "माया ह्येषा मया सृष्टे"तिवत् "तत्तेजोऽसृजते"ति श्रुतिः। देवदत्तो व्याघ्रोऽभवदितिवत् १० "सच्च त्यच्चाभवदि"ति, सत्यविशेषणाभावादित्यर्थः। यद्यपि 'अग्निर्माणवक' इत्यादौ माणवकेऽपि अग्निशब्दप्रयोगो दृष्टः तथापि अग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतिरेव भवति, मुखमिव प्रथमं प्रकाशत इत्यर्थे मुख्यपदव्युत्पत्तेः। अतः सत्यसृष्टिरेव मुख्योऽर्थो ग्राह्य इत्याह—**नन्विति**। परिहरति—**नेति**। सत्यसृष्टेः शब्दार्थस्य ममाप्रसिद्धत्वादित्यर्थः। लौकिकानां प्रसिद्धत्वेऽपि न तत्र श्रुतितात्पर्यं प्रयोजनाभावादित्युक्तमित्यर्थः। अन्यथा सृष्टेरप्रसिद्धत्वादित्येतत्प्रपञ्चयति—**अविद्येति**। गौणी स्वप्नरथादिसृष्टिः, मुख्या जागरे घटादिसृष्टिः, १५ सर्वाऽप्यविद्याभूमावेव विपर्ययाभावे अभावात्। तथाभूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावासम्भवात्। यौक्तिकबाधेन खकाष्ण्यादिवत् मिथ्यात्वावगमादिति भावः। किञ्च, तत्त्वनिष्ठश्रुतिबाधादपि मिथ्यासृष्टिविषयत्वमित्याह—**सबाह्येति**। किं तर्हि परमार्थमित्यत आह—**तस्मादिति**। निरवयवत्वादित्यादियुक्तिसम्पन्नञ्चेत्यर्थः।।२३।।

केतुः चेतश्चित्तं प्रज्ञा मायेत्यादिप्रज्ञानामसु पाठात् मायाशब्दो न मिथ्यार्थ इत्याह—**नन्विति**। सत्यं प्रज्ञानामसु पाठोऽस्ति तथापि न ब्रह्मचैतन्यं प्रज्ञा निवृत्तिश्रवणात्। किन्तु इन्द्रियजन्या। तस्याश्चाविद्यान्वयव्यतिरेकानुविधायित- २० याऽविद्यात्वे सति मिथ्यात्वान्न दोष इत्यर्थः।।२४।।

आनन्दगिरिटीका

यद्यात्मा कार्याकारेण न जायते तर्हि सृष्टिश्रुतिरश्लिष्टा स्यादित्यर्थः। सृष्ट्यनुवादिनी श्रुतिरस्तीत्यङ्गीकरोति—**बाढमिति**। तस्या मिथ्यासृष्ट्यनुवादित्वेन कथमुपपत्तिरित्याशङ्क्याऽऽह—**सा त्विति**। कथमद्वैतपरत्वेन सृष्टिश्रुतेरुप- २५ पत्तिरित्याशङ्क्याऽऽह—**उपाय इति**। यदि सृष्टिश्रुतेरद्वैतपरत्वेन तद्विरोधसमाधी अधस्तादेवोक्तौ तर्हि पुनश्चोद्यं तत्परिहारश्चायुक्तौ पुनरुक्तेरित्याशङ्क्याऽऽह—**इदानीमिति**। मिथ्यासृष्टिवादे श्रुतिपदानामसृजताभवदित्यादीनामसामञ्जस्यविरोधाशङ्कायां तावन्मात्रं परिहर्तुं पुनश्चोद्यपरिहारावित्यर्थः। श्लोकस्य तात्पर्यमुक्त्वा पूर्वार्धाक्षराणि व्याकरोति—**भूतत इति**। माया ह्येषा मया सृष्टेत्यादिवत् 'तत्तेजोऽसृजते'ति श्रुतिः। 'सच्च त्यच्चाभवदि'ति श्रुतिस्तु देवदत्तो व्याघ्रोऽभवदितिवत्। न च सत्यत्वं विशेषणमत्रोपलभ्यते। तेन मायामय्यां सृष्टाविष्टायामपि ३० सृष्टिश्रुतिः श्लिष्टेत्यर्थः। "गौणमुख्ययोर्मुख्ये सम्प्रत्ययः" इति न्यायमाश्रित्य शङ्कते—**नन्विति**। अग्निर्माणवक इत्यत्र माणवकेऽग्निशब्दप्रयोगेऽप्यग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतेर्मुख्यमेव प्रथमं प्रतिभातीति मुख्ये पदव्युत्पत्तेर्मुख्यार्थतया सत्या सृष्टिरेष्टव्येत्यर्थः। मुख्यसृष्ट्यङ्गीकारेऽपि सत्या सृष्टिर्न सिध्यति। अस्मत्पक्षे सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति—**नेत्यादिना**। लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेन प्रसिद्धत्वेऽपि फलाभावान्न तत्र श्रुतितात्पर्यमित्याह—**निष्प्रयोजनत्वाच्चेति**। अन्यथा सृष्टेरप्रसिद्धत्वमेव स्पष्टयति—**अविद्येति**। ३५ गौणी स्वप्ने रथादिसृष्टिः। मुख्या जागरे घटादिसृष्टिः। सर्वाऽप्यविद्यावस्थायामेव। तस्यां सत्यामेव भावान्न तत्त्वदृष्ट्या काऽपि सृष्टिः सम्भवति। तथाभूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावासम्भवात् तदतिरेकेण च सृष्टेरयोगादित्यर्थः। वस्तुस्वरूपालोचनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति—**सबाह्येति**। सृष्टेरविद्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्धं विभजते—**तस्मादिति**। निरवयवत्वं विभुत्वमित्यादियुक्तिः। तेनाद्वैतमेव श्रुतितात्पर्यगम्यं न द्वैतमिति फलितमाह—**तदेवेति**।।२३।।

**नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि। अजायमानो बहुधा मायया जायते तु सः।।२४।।**
**सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते। को न्वेनं जनयेदिति कारणं प्रतिषिध्यते।।२५।।**

कथं श्रुतिनिश्चय इत्याह—यदि हि भूतत एव सृष्टिः स्यात् ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थमाम्नायो न स्यात्। अस्ति च ''नेह नानाऽस्ति किञ्चन'' इत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः। तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव प्राणसंवादवत्। ''इन्द्रो मायाभिः'' इत्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशात्। ननु प्रज्ञावचनो मायाशब्दः। सत्यम्। इन्द्रियप्रज्ञाया अविद्यामयत्वेन मायात्वाभ्युपगमाददोषः। मायाभिरिन्द्रियप्रज्ञाभिरविद्यारूपाभिरित्यर्थः। ''अजायमानो बहुधा विजायते'' इति श्रुतेः। तस्मान्माययैव जायते तु सः। तुशब्दोऽवधारणार्थः—माययैवेति। न ह्यजायमानत्वं बहुधा जन्म चैकत्र सम्भवति। अग्नाविव शैत्यमौष्ण्यं च। फलवत्त्वाच्चाऽऽत्मैकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थः। ''तत्र को मोहः कः शोक एकत्वमनुपश्यतः'' इत्यादिमन्त्रवर्णात्। ''मृत्योः स मृत्युमाप्नोति'' इति निन्दितत्वाच्च सृष्ट्यादिभेददृष्टेः।।२४।।

''अन्धं तमः प्रविशन्ति ये सम्भूतिमुपासते'' इति सम्भूतेरुपास्यत्वापवादात् सम्भवः प्रतिषिध्यते। न हि

अनुभूतिस्वरूपाचार्यटीका

इतश्च भेददृष्टिर्मिथ्येत्याह—**सम्भूतेरिति**। सम्यग्भूतिरैश्वर्यं यस्याः सा सम्भूतिः, हिरण्यगर्भाख्या देवता;

आनन्दगिरिटीका

सृष्टेर्मृषात्वस्पष्टीकरणद्वारेणाद्वैतमेव श्रुत्यर्थतया निर्धारयितुं श्रौतनिश्चयमेव विवृणोति—**नेहेति**। आकाङ्क्षां प्रदर्श्य श्लोकाक्षराणि व्याकरोति—**कथमित्यादिना**। तत्राऽऽद्यपादे व्यतिरेकं दर्शयित्वा पुनरन्वयाख्यानेन व्याचष्टे—**यदि हीति**। द्वैतभावश्चेत्प्रतिषिध्यते कथं तर्हि सृष्टिरुपदिश्यते, तत्राऽऽह—**तस्मादिति**। यथा प्राणवैशिष्ट्यदृष्ट्यर्थं प्राणसंवादः श्रुतिषु कल्प्यते तथा सृष्टिरेकत्वप्रतिपत्त्यर्थत्वेन कल्पिता। वास्तव्याः सृष्टेरयोगस्योपदिष्टत्वादित्यर्थः। कल्पिता सृष्टिरित्यत्र हेत्वन्तरं दर्शयन् द्वितीयं पादमवतार्य तात्पर्यमाह—**इन्द्र इति**। मायाशब्देन सृष्टेर्व्यपदेशादसौ कल्पितायुक्तेति शेषः। [1]अभिधानग्रन्थे प्रज्ञानामसु पाठान्मायाशब्दो मिथ्यार्थो न भवतीति शङ्कते—**नन्विति**। मायाशब्दस्य प्रज्ञानामसु क्वाचित्कं पाठमङ्गीकरोति—**सत्यमिति**। कथं तर्हि मिथ्यार्थत्वं, तत्राऽऽह—**इन्द्रियेति**। न हि मायाशब्दिता प्रज्ञा ब्रह्मचैतन्यम्। 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्यादौ निवृत्तिश्रवणात्। किं त्वसाविन्द्रियजन्या। तस्याश्चाविद्यान्वयव्यतिरेकानुविधायितयाऽविद्यात्वेन मिथ्यात्वान्मायाशब्दस्य मिथ्यार्थत्वे नानुपपत्तिरित्यर्थः। तात्पर्यार्थमुक्त्वा तत्रैवाक्षरानुगुण्यमाह—**मायाभिरिति**। पुरुरूपः सन्नीयत इति सम्बन्धः। मायामयी सृष्टिरित्यत्र हेत्वन्तरपरत्वेन तृतीयपादमवतारयति—**अजायमान इति**। अजायमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति—**तस्मादिति**। अश्रुतस्य कथमेवकारस्याऽऽवापः स्यादित्याशङ्क्याऽऽह—**तुशब्द इति**। अवधारणरूपमर्थमेवाभिनयति—**माययैवेति**। कस्मादित्थमवधार्यते? वास्तवे जन्मनि का वस्तुक्षतिरित्याशङ्क्याऽऽह—**न ह्यजेति**। आत्मैकत्वज्ञानमेव सृष्टिश्रुतितात्पर्यगम्यं सृष्टिस्तु तच्छेषत्वादविवक्षितेत्यत्र हेत्वन्तरमाह—**फलवत्त्वाच्चेति**। तस्य फलवत्त्वे प्रमाणमाह—**तत्रेति**। एकत्वमाचार्योपदेशमनुपश्यतः साक्षात्कुर्वतस्तत्रैकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः। न केवलं विफलत्वाद्भेददृष्टिरविवक्षिता किं तु निन्दितत्वेन निषिद्धत्वादनर्थकरत्वाच्चेत्याह—**मृत्योरिति**।।२४।।

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह—**सम्भूतेरिति**[2]। सम्यग्भूतिरैश्वर्यं यस्याः सा सम्भूतिर्देवता हिरण्यगर्भाख्या।

---

१. प्रज्ञावचनो मायाशब्दः, माया वयुनमिति प्रज्ञानामत्वेन निरुक्तवचनात् (निघण्टुः ३.९) अभिधानग्रन्थः निरुक्तम्। इन्द्रियवृत्तयः मायाकार्यान्तःकरणपरिणामा अतो मायामय्य एवेत्यर्थः। इन्द्रः परमेश्वरः इन्द्रियजप्रज्ञाविषयतया बहुरूपो भवति। मायिकं तस्य प्रपञ्चात्मकं रूपं इन्द्रियैर्जायते। ''मम माया दुरत्यया'' ''माया ह्येषा मया सृष्टा'' इत्यादावनिर्वचनीयमायाशक्तावपि मायाशब्दप्रयोगो द्रष्टव्यः।

२. ईशभाष्ये ''अन्धं तमः प्रविशन्ति येऽविद्यामुपासते'' इत्यारभ्य ''विद्यां चाविद्यां चे''ति विद्याकर्मणोः उपासनकर्मणोः समुच्चयमुक्त्वा ''अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते'' इत्यादिना असम्भूतेर्मायायाः

**परमार्थतः सम्भूतायां सम्भूतौ तदपवाद उपपद्यते। ननु विनाशेन सम्भूतेः समुच्चयविध्यर्थः सम्भूत्यपवादः। यथा ''अन्धं तमः प्रविशन्ति येऽविद्यामुपासते'' इति। सत्यमेव देवतादर्शनस्य सम्भूतिविषयस्य विनाशशब्दवाच्यस्य कर्मणः समुच्चयविधानार्थः सम्भूत्यपवादः। तथाऽपि विनाशाख्यस्य कर्मणः स्वभाविकज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्ववद् देवतादर्शनकर्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्मफलरागप्रवृत्तिरूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वम्। एवं ह्येषणाद्वयरूपान्मृत्योरशुद्धेर्वियुक्तः पुरुषः संस्कृतः स्यादतो मृत्योरतितरणार्था देवता-**

अनुभूतिस्वरूपाचार्यटीका

कार्यमध्ये श्रेष्ठायास्तस्या निन्दितत्वात् प्रधानमल्लनिबर्हणन्यायेन कार्यमेव निषिध्यत इति वस्तु न भवतीत्यर्थः। अवस्तुत्वख्यापनार्था निन्दा न भवति, किन्तु विनाशेन कर्मणा देवतोपासनस्य समुच्चयविध्यर्था फलवत्त्वादित्याह—**नन्विति**। चोद्यमनुजानाति—**सत्यमिति**। तथापि अविद्याभूमिष्ठफलवत्त्वात् समुच्चयस्यावस्तुत्वं न व्यावर्तत इति संक्षेपः। समुच्चयः किं कामिना अनुष्ठेयः? किं वा निष्कामेण? आद्ये देवताभाव एवामृतत्वं, द्वितीये तु यथा नित्यस्याग्निहोत्रादेः अशास्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साध्यसाधनैषणारूपमृत्युतरणार्थत्वं वाच्यमित्यर्थः। संस्कारार्थत्वे मृत्युतरणार्थत्वं कथमित्याशङ्क्याऽऽह—**एवं हीति**। कामचारवादभक्षणादिरूपस्वाभाविकप्रवृत्त्यशुद्धिवियोगसंस्कारो यथा नित्याग्निहोत्रादेः फलं तथा निष्कामेणानुनिष्ठतसमुच्चयफलं कामाख्याशुद्धिवियोग इत्यर्थः। ननु—''अविद्यया मृत्युं तीर्त्वे''ति मन्त्रे मृत्वतिक्रमहेतुरविद्याऽऽम्नायते कथं ''सम्भूत्या अमृतमश्नुत'' इत्येतत्समुच्चयफलं मृत्युतरणमिति व्याख्यायत इत्याशङ्क्याऽऽह—**अतो मृत्योरिति**। ''विद्ययाऽमृतमश्नुत'' इत्यनेन

आनन्दगिरिटीका

तस्याश्च कार्यमध्ये श्रेष्ठाया निन्दितत्वात् प्रधानमल्लनिबर्हणन्यायेन सम्भवशब्दितं कार्यमेव निषिध्यते। तथा च सिद्धं तस्यावस्तुत्वमित्यर्थः। कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च यथोक्तार्थसिद्धिरित्याह—**को न्वेनमिति**। पूर्वार्धं व्याकरोति—**अन्धमिति**। सम्भूत्युपासनाया मन्त्रार्धेनाऽऽद्येन निन्दां विधाय 'ततो भूय इवे'त्यादिनोत्तरार्धेन सम्भूतेरुक्ताया देवताया हेयत्वमुपपाद्यते। ततश्च प्रधानभूतदेवतोपास्यत्वापवादात्ततोऽर्वाक्तनं सर्वमेव सम्भवशब्दितं कार्यमात्रं निषिध्यते। तथा च तदवस्तुत्वसिद्धिरित्यर्थः। सम्भूतेरपवादेऽपि तस्मिन्मिथ्यात्वनियमाभावान्न कार्यमात्रस्य मिथ्यात्वं शक्यं प्रतिज्ञातुमित्याशङ्क्याऽऽह—**न हीति**। सम्भूतिनिन्दा तदवस्तुत्वख्यापनार्था न भवति; किं तु विनाशेन कर्मणा देवतोपासनस्य समुच्चयविध्यर्था; समुच्चयविधानस्य फलवत्त्वादिति शङ्कते—**नन्विति**। अपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह—**यथेति**। अत्र खल्वविद्याशब्दितकर्मापवादो विद्याकर्मणोः समुच्चयविध्यर्थः स्थितो 'विद्यां चाविद्यां च यस्तद्वेदोभयं सहे'ति श्रवणादित्यर्थः। उक्तं चोद्यमनुजानाति—**सत्यमिति**। तर्हि सम्भूत्यपवादस्तदवस्तुत्वख्यापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्याविद्यावस्थायामवस्थितफलवत्त्वाद् यदवस्तुत्वं सम्भूत्यादेर्निन्दाधीनमुक्तं तत् तदवस्थमेवेति मन्वानः सन्नाह—**तथाऽपीति**। यथाऽग्निहोत्रादेः शास्त्रीयस्य कर्मणोऽशास्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साधनाद्येषणारूपमृत्युतरणार्थत्वं समुच्चयस्यापि वाच्यम्। तथा च सम्भूत्यादेरवस्तुत्वमविरुद्धमित्यर्थः। मृत्युतरणार्थत्वे संस्कारार्थत्वं कथमित्याशङ्क्याऽऽह—**एवं हीति**। कामचार-

---

प्रकृतेरुपासनम् ''य उ सम्भूत्यामि''ति कार्यब्रह्मणः उपासनं च समुच्चित्यानुष्ठेयमिति व्याख्यातम्। अत्र तु ईशावास्यस्य माध्यन्दिनशाखाभिमतः पाठ आदृतः। तत्र च सम्भूतिवाक्यमादौ पठित्वा पश्चात् ''येऽविद्यामुपासते'' इत्यादिवाक्यानि पठितानि। तदनुरुध्य कारिकाभाष्यप्रवृत्तिः। तत्र च ''ये सम्भूतिमि''त्येव पाठ आद्रियते, न तु ''येऽसम्भूतिमि''ति पदच्छेदः। स्वरव्यत्ययश्छान्दसः। अत्र च सम्भूत्युपासा हिरण्यगर्भोपासनं, विनाशः कर्म तयोः समुच्चयो विधीयते इत्यभिप्रायः। तत्र च विनाशेन कर्मणा स्वाभाविकाज्ञानप्रवृत्तिः निरुध्यते। समुच्चयस्य साध्यसाधनैषणाद्वयरूपमृत्योरतितरणं प्रयोजनम्। अग्रिमखण्डेषु ''अविद्यया मृत्युं तीर्त्वा'' इत्यत्र कर्महिरण्यगर्भोपासनसमुच्चयः अविद्या। तेन पूर्वोक्तैषणाद्वयनिर्मुक्तो भूत्वा विद्यया ब्रह्मविद्यया अमृतप्राप्तिः। तत्र च विद्याविद्ययोः क्रमिकः समुच्चयः न समकालीनः। अस्मिन्पक्षे—अन्धं तमः प्रविशन्ति येऽविद्यां कर्मैव उपासते कुर्वन्ति। ततो भूयश्च विद्यायां परब्रह्मविद्यायामेव रताः, न तु तत्साधननिष्कामकर्मानुष्ठानसगुणब्रह्मोपासनादिकं कुर्वन्तीत्यर्थः।

**स एष नेति नेतीति व्याख्यातं निह्नुते यतः। सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते।।२६।।**

दर्शनकर्मसमुच्चयलक्षणा ह्यविद्या। एवमेवैषणालक्षणाविद्याया मृत्योरतितीर्णस्य विरक्तस्योपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयकी परमात्मैकत्वविद्योत्पत्तिरिति पूर्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मविद्याऽमृतत्वसाधनैकेन पुरुषेण सम्बध्यमानाऽविद्यया समुच्चीयत इत्युच्यते। अतोऽन्यार्थत्वादमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य निन्दार्थ एव भवति सम्भूत्यपवादः, यद्यप्यशुद्धिवियोगहेतुरतन्निष्ठत्वात्। अत एव सम्भूतेरपवादात् सम्भूतेरापेक्षिकमेव सत्त्वमिति परमार्थसदात्मैकत्वमपेक्ष्यामृताख्यः सम्भवः प्रतिषिध्यते। एवं मायानिर्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे [1]स्वभावरूपत्वात् परमार्थतः को न्वेनं जनयेत्। न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित्। तथा न कश्चिदेनं जनयेदिति। को न्वित्याक्षेपार्थत्वात् कारणं प्रतिषिध्यते। अविद्योद्भूतस्य नष्टस्य जनयितृ कारणं न किञ्चिदस्तीत्यभिप्रायः। ''नायं कुतश्चिन्न बभूव कश्चित्'' इति श्रुतेः।।२५।।

सर्वविशेषप्रतिषेधेन ''अथात आदेशो नेति नेति'' इति प्रतिपादितस्याऽऽत्मनो दुर्बोध्यत्वं मन्यमाना श्रुतिः

अनुभूतिस्वरूपाचार्यटीका

मुख्यामृतत्वस्य वक्ष्यमाणत्वात् समुच्चयात् मुख्यामृतत्वं न घटते यतोऽतः समुच्चयलक्षणैवाविद्या तत्रोच्यते। आपेक्षिकमृत्युतरणहेतुत्वाविशेषादित्यर्थः। समुच्चयलक्षणा चेदविद्या कथं तस्या ब्रह्मविद्यया समुच्चयो ''विद्याञ्चाविद्याञ्चे''त्यनेनोक्तः इत्याशङ्क्य उपायोपेयभावेनेत्याह—**एवमेवैषणेति**। **नान्तरीयकीति**। अवश्यम्भाविनी प्रतिबन्धकाभावादित्यर्थः। भवत्वेवं मन्त्रार्थः ततः प्रकृते किमायातमित्याह—**अतोऽन्यार्थत्वादिति**। अन्यार्थत्वमशुद्धिवियोगहेतुत्वमिष्टं चेत् किमित्यपवाद इत्याशङ्क्याह—**यद्यपीति**। **अतन्निष्ठत्वादिति**। परमार्थामृतत्वफलत्वाभावादित्यर्थः। ''को न्वेनं जनयेत्पुनरि''ति श्रुत्यर्थमाह—**मायेति**। विशिष्टरूपेण जीवस्य मिथ्यात्वात्। मायानिर्मितहस्त्याद्युदाहरणं न विरुध्यते।।२५।।

आनन्दगिरिटीका

कामवादकामभक्षणादिलक्षणस्वाभाविकप्रवृत्तिरूपाशुद्धिवियोगः संस्कारो यथा नित्याग्निहोत्रादिफलं तथा निष्कामेणानुष्ठितसमुच्चयफलं कामाख्याशुद्धिव्यावृत्तिरित्यर्थः। 'अविद्यया मृत्युं तीर्त्वे'ति मन्त्रे मृत्युतरणहेतुरविद्येति श्रवणात् 'सम्भूत्याऽमृतमश्नुत' इति च सम्भूतेरमृतत्वफलाभिधानात् कथं समुच्चयफलं मृत्योरतितरणमित्याशङ्क्याऽऽह—**अत इति**। यतो न समुच्चयान्मुख्यममृतत्वं घटते, तस्य 'विद्ययाऽमृतमश्नुत' इति वक्ष्यमाणत्वात्[2]। अतः समुच्चयलक्षणाऽविद्या 'अविद्यया मृत्युं तीर्त्वे'त्यत्र निर्दिश्यते। आपेक्षिकमृत्युतरणहेतुत्वसम्भवादित्यर्थः। यद्यविद्याशब्देन समुच्चयो विवक्ष्यते, कथं तर्हि 'विद्यां चाविद्यां चे'त्यनेन विद्याविद्ययोः समुच्चयो निर्दिश्यते। न हि देवतादर्शनकर्मसमुच्चयस्य ब्रह्मविद्यया समुच्चयः सम्भवतीत्याशङ्क्याऽऽह—**एवमिति**। नान्तरीयकत्वमवश्यम्भावित्वम्। प्रतिबन्धकाभावे कार्योत्पत्तेरुपपत्तेरित्यर्थः। एवं मन्त्रार्थे स्थिते प्रकृते फलितमाह—**अत इति**। अन्यार्थत्वं समुच्चयस्याशुद्धिक्षयहेतुत्वम्। तच्चेदिष्टं किमित्यपवादस्तत्राऽऽह—**यद्यपीति**। तथाऽप्यतन्निष्ठत्वात् परमार्थामृतत्वफलत्वाभावात् तदपवादसिद्धिरित्यर्थः। अपवादफलं दर्शयन्नाद्यभागविभजनमुपसंहरति—**अत एवेति**। 'को न्वेनं जनयेत्पुन'रिति श्रुत्यर्थमाचक्षाणो द्वितीयार्धं विभजते—**एवं मायेत्यादिना**। उक्तमर्थं दृष्टान्तेन स्पष्टयति—**न हीति**। न कश्चिदेनं जनयेदिति कारणं प्रतिषिध्यत इति सम्बन्धः। प्रश्नार्थे किंशब्दे दृश्यमाने कथं कारणप्रतिषेधसिद्धिरित्याशङ्क्याऽऽह—**को न्विति**। अक्षरार्थमुक्त्वा द्वितीयार्धस्य तात्पर्यमाह—**अविद्येति**। ततश्चेदुद्भूतो जीवः कथं तस्य जनयितृ कारणं नेत्युच्यते व्याघातादित्याशङ्क्याऽऽह—**नष्टस्येति**। जीवस्य जनयितृकारणाभावे प्रमाणमाह—**नायमिति**। तस्याविद्यामन्तरेण स्वतो जन्माभावं सूचयति—**न बभूवेति**।।२५।।

इतोऽपि द्वैतं वस्तु न भवतीत्याह—**स एष इति**। 'द्वे वावे'त्यादिना व्याख्यातं मूर्तामूर्तादि सर्वमेव त्याज्यमग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः 'स एष' इत्युपक्रम्य प्रतिपादितस्याऽऽत्मतत्त्वस्य कूटस्थस्याविषयत्वेन प्रथोपपत्तिरित्यर्थः। नेति नेतीति वीप्सातात्पर्यमाह—**सर्वेति**। रूपद्वयोपन्यासानन्तरं तन्निषेधमन्तरेण

१. स्वभावस्वरूपत्वात् = स्वात्मकभावरूपत्वात्। स्वभावः स्वस्वरूपमधिष्ठानम्।

२. माध्यन्दिनपाठे—अन्धं तमः प्रविशन्ति येऽविद्यामुपासते इति वाक्यं सम्भूतिवाक्यानन्तरं पठितं, अतः तदभिप्रायेण वक्ष्यमाणत्वोक्तिः।

**सतो हि मायया जन्म युज्यते न तु तत्त्वतः। तत्त्वतो जायते यस्य जातं तस्य हि जायते।।२७।।**

**पुनः पुनरुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद् व्याख्यातं तत्सर्वं निह्नुते। ग्राह्यं जनिमद्बुद्धिविषयम-पलपति। अर्थात् "स एष नेति नेति" इत्यात्मनोऽदृश्यतां[1] दर्शयन्ती श्रुतिरुपायस्योपेयनिष्ठतामजानत उपायत्वेन व्याख्यातस्योपेयवद् ग्राह्यता मा भूदित्यग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थः। ततश्चैवमुपायस्योपेयनिष्ठतामेव ५ जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्वं प्रकाशते स्वयमेव।।२६।।**

**एवं हि श्रुतिवाक्यशतैः सबाह्याभ्यन्तरमजमात्मतत्त्वमद्वयं न ततोऽन्यदस्तीति निश्चितमेतत्। युक्त्या चाधुनैतदेव**

अनुभूतिस्वरूपाचार्यटीका

इतश्च द्वैतं न वस्त्वित्याह—**स एष इति**। केनाभिप्रायेण निह्नुत इत्याकाङ्क्षायामाह—**उपायस्येति**। यथा निष्क्रियोऽहमिति प्रत्ययदार्ढ्याय विहितस्य संन्यासस्य मन्दमतिभिः वस्तुत्वमवादि, तथा ब्रह्मातिरिक्तवस्त्वभावबोधाय १० "द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्चे"त्याद्युपदिष्टं मन्दमतिभिः ब्रह्मण एव तत्त्वतो रूपं प्रपञ्च इति गृह्येत। अतस्तन्माभूदिति मन्वाना श्रुतिः निह्नुत इत्यर्थः। उपायस्य वस्तुत्वाभावे कथं निर्विशेषात्मप्रतिपत्तिः इत्याशङ्क्याह—**ततश्चैवमिति**। वाक्यतात्पर्यपर्यालोचनसमुत्पन्नचित्तावस्थाविशेषव्यक्तमात्मतत्त्वं स्वयमेव संविदन्तरनिरपेक्षं प्रकाशत इत्यर्थः।।२६।।

आनन्दगिरिटीका

१५ निर्विशेषवस्तुप्रतिपत्तेरयोगात्तत्प्रतिपत्त्या च पुरुषार्थपरिसमाप्तिसम्भवादादेशो निर्विशेषस्याऽत्मतत्त्वस्योपदेशस्तावत् प्रस्तूयते। एवं प्रस्तुत्य नेति नेतीति वीप्सया सर्वस्य मूर्तामूर्तादिविशेषस्याऽऽरोपितस्य निषेधो दर्शितस्तेन चाऽऽत्मा जिज्ञासितो विशिष्टो निर्दिष्ट इत्यर्थः। स चेदेवं मूर्तामूर्ताधिकारे प्रतिपादितस्तर्हि किमिति प्रदेशान्तरे पुनः पुनरेवं प्रतिपाद्यते, पुनरुक्तेरित्याशङ्क्य व्याख्यातमित्यादि व्याचष्टे—**प्रतिपादितस्येति**। यद्यपि मूर्तामूर्तप्रकरणे प्रतिपादितमात्मतत्त्वं तथाऽपि तस्य परमसूक्ष्मत्वाद् दुर्ज्ञानत्वं मन्यते श्रुतिः। सा पुनरुपायविशेषसद्भावाभिप्रायेण २० तस्यैव पुनः पुनः प्रतिपादनेच्छया यद्यदारोपितं तत्तदशेषमपह्नुत्यावशिष्टमात्मस्वरूपं निवेदयतीत्यर्थः। सर्वमित्यादि स्पष्टीकुर्वाणः स एष इति व्याचष्टे—**ग्राह्यमिति**। स एष इत्याद्या श्रुतिरदृश्यतामात्मनो विशेषं निषेधमुखेन दर्शयन्ती यद् दृश्यं कार्यं मनसां वाचां च गोचरीभूतं तदशेषमर्थादपलपति। सा हि परमार्थवस्त्वदृश्यमिति ब्रुवाणा दृश्यस्य वस्तुत्वे नोपपद्यते। तथा चानुपपत्तेर्दृश्यवर्गस्यावस्तुत्वं सिद्धमित्यर्थः। ननु किमिति श्रुतिर्व्याख्यातं विशेषजातं निह्नुते [2]पङ्कप्रक्षालनन्यायापातादित्याशङ्क्याग्राह्यभावेनेत्यादि व्याकरोति—**उपायस्येति**। 'द्वे वावे'त्यादिना २५ व्याख्यातस्य रूपप्रपञ्चस्याद्वितीयब्रह्मात्ममात्रपर्यवसायितामप्रतिपद्यमानस्य ब्रह्मवदेवोपायत्वेनाभिमतस्यापि प्रपञ्चस्य वस्तुत्वेन ग्राह्यत्वाशङ्का या सा मा भूदित्यशेषविशेषराहित्येनाद्वितीयब्रह्मस्वरूपनिर्धारणार्थमारोपितं प्रपञ्चं प्रतिषेधति श्रुतिरित्यर्थः। उपायस्य कल्पितत्वेन वस्तुत्वाभावादुपेयस्य च सदैकरूपत्वात् कथं तथाविधवस्तुप्रतिपत्ति-रित्याशङ्क्याजमित्यादि व्याचष्टे—**ततश्चेति**। समारोपितस्य सर्वस्य निषेधादेव स्वातन्त्र्येण वस्तुत्वाभावनिश्चया-दारोपितसर्पादेरधिष्ठानातिरेकेणासत्त्ववदुपायस्य मूर्तादेरुपेयाद्वितीयब्रह्ममात्रतामेव प्रतिपद्यमानस्य ब्रह्मणश्च सदैक-३० रूपत्वकूटस्थनित्यदृष्टिस्वभावत्वादि जानतस्तस्योत्तमस्याधिकारिणः स्वयमेवान्यापेक्षामन्तरेणाऽऽत्मतत्त्वमुक्तविशेषणं प्रकाशीभवति। कल्पितस्य चोपायत्वं प्रतिबिम्बादिवदविरुद्धमित्यर्थः।।२६।।

आत्मतत्त्वमजमद्वितीयं परमार्थभूतम्; द्वैतं तु मायाकल्पितमसदिति प्रतिपादितम्। तत्रैव हेत्वन्तरमाह—**सतो हीति**। यदात्मतत्त्वं सदा सदेकरूपं तस्य मायया जगदाकारेण जन्म युक्तम्, मायाया दुर्निरूपार्थसमर्थन-पटीयस्त्वात्। परमार्थतस्त्वेकरूपमनेकरूपतया नोत्पत्तुं पारयति, विरोधादित्यर्थः। विपक्षे दोषमाह—**तत्त्वत इति**।

---

३५ १. आत्मनोऽदृश्यतां—नेति नेतीत्यनेन वीप्सया दृश्यं सर्वं आत्मा न भवतीति प्रतिपादिते आत्मा द्रष्टेति निश्चितं भवतीत्यर्थः। अदृश्यतां दृश्यभिन्नत्वम्। प्रपञ्चनिषेधः आत्मनि बुद्धिव्यवस्थापनोपायत्वेन निर्दिष्टो नोपेयत्वेन। उपेयस्त्वात्मा। उपायस्याग्राह्यत्वादेव तस्य निह्नवः।

२. पङ्कप्रक्षालनन्यायः "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि"ति न्यायः।

**असतो मायया जन्म तत्त्वतो नैव युज्यते। वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते।।२८।।**

**यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः। तथा जाग्रद् द्वयाभासं स्पन्दते मायया मनः।।२९।।**

पुनर्निर्धार्यत इत्याह–तत्रैतत्स्यात् सदाऽग्राह्यमेव चेदसदेवाऽऽत्मतत्त्वमिति। तन्न। कार्यग्रहणात्। यथा सतो मायाविनो मायया जन्म कार्यम्। एवं जगतो जन्म कार्यं गृह्यमाणं मायाविनमिव परमार्थसन्तमात्मानं जगज्जन्ममायास्पदमवगमयति। यस्मात् सतो हि विद्यमानात् कारणान्मायानिर्मितस्य हस्त्यादिकार्यस्येव जगज्जन्म युज्यते, नासतः कारणात्। न तु तत्त्वत एवाऽऽत्मनो जन्म युज्यते। अथवा सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पादिवन्मायया जन्म युज्यते, न तु तत्त्वतो यथा तथाऽग्राह्यस्यापि सत एवाऽऽत्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते। न तु तत्त्वत एवाजस्याऽऽत्मनो जन्म। यस्य पुनः परमार्थसदजमात्मतत्त्वं जगद्रूपेण जायते वादिनो न हि तस्याजं जायत इति शक्यं वक्तुं विरोधात्। ततस्तस्यार्थाज्जातं जायत इत्यापन्नम्; ततश्चानवस्था जाताज्जायमानत्वेन। तस्मादजमेकमेवाऽऽत्मतत्त्वमिति सिद्धम्।।२७।।

असद्वादिनामसतोऽभावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते, अदृष्टत्वात्। न हि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते। तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थः।।२८।।

कथं पुनः सतो माययैव जन्मेत्युच्यते। यथा रज्ज्वां विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन्नेवं मनः

अनुभूतिस्वरूपाचार्यटीका

सत इति पञ्चम्यन्तं पदमादाय निमित्तकारणपरतया व्याख्याय इदानीं सत इति षष्ठ्यन्तं पदमादाय उपादानपरतया व्याचष्टे—**अथवेत्यादिना**।।२७।।

कार्यं सत्पूर्वकमिति न निश्चिता व्याप्तिः, असद्वादिभिः असतःसज्जन्माङ्गीकरणादित्याशङ्क्याह—**असत इति**।।२८।।

ननु—आधिदैविकसृष्टिः यद्यपि सत्पूर्विका तथापि अध्यात्मं ग्राह्यग्राहकाकारसृष्टौ मन एव कारणं निरूपितम्।

आनन्दगिरिटीका

यस्य वादिनो मते ब्रह्मैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमानत्वप्रतिज्ञाया व्याहतत्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः। अद्वैतमावेदयन्त्या द्वैतनिषेधकश्रुत्या दृश्यत्वजडत्वादियुक्त्या च तथाविधया निर्धारितमर्थं श्लोकाक्षरार्थकथनार्थमनुवदति—**एवमिति**। उक्तमेव वस्तु युक्त्यन्तरेण पुनर्निर्धारयितुमुत्तरग्रन्थ-प्रवृत्तिरित्याह—**अधुनेति**। पूर्वार्धं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति—**तत्रेति**। श्लोकः सप्तम्या परामृश्यते। यत्र कदाचिदपि गृह्यते तदत्यन्तासदेव शशविषाणादिवदेष्टव्यं, प्रमाणाभावे प्रमेयासिद्धेरित्यर्थः। कार्यलिङ्गकानुमान-वशादात्मतत्त्वस्य कारणत्वेन सत्त्वनिर्णयान्नासत्त्वं चोद्यमिति दूषयति—**तन्नेति**। संगृहीतमर्थं दृष्टान्तेन विवृणोति—**यथेति**। विमतं सदधिष्ठानं कार्यत्वात् सम्प्रतिपन्नवदित्यर्थः। उक्तेऽर्थे पूर्वार्धाक्षराणि योजयति—**यस्मादिति**। तस्मात् कारणस्य सत्त्वमविवादमिति शेषः। **नासत इति**। तस्य निःस्वभावत्वात् कारणत्वायोगादित्यर्थः। **न त्विति**। तथाभूतस्यान्यथाभूतस्य च जन्मायोगादित्यर्थः। सत इति पञ्चम्यन्तं पदं गृहीत्वा निमित्तकारणपरतया व्याख्यातम्। सम्प्रति सत इति षष्ठ्यन्तं पदमादायोपादानपरतया व्याख्यां करोति—**अथवेति**। यथा रज्जोः सर्पधाराद्याकारेण मायाकृतं जन्म तथैवाग्राह्यस्यापि सद्रूपस्याऽऽत्मतत्त्वस्य जगदात्मना जन्म मायाप्रयुक्तं प्रतिपत्तव्यम्। जन्मरहितस्य वस्तुतो जन्मव्याघातादित्यर्थः। उत्तरार्धं विभजते—**यस्येत्यादिना**। मायिकं जन्म न तात्त्विकमिति स्थिते फलितमाह—**तस्मादिति**।।२७।।

सत्पूर्वकं कार्यमिति न व्याप्तिः। असद्वादिभिरसतः सज्जन्माभ्युपगमादित्याशङ्क्याऽऽह—**असत इति**। तत्त्वतोऽतत्त्वतो वा नासतः सदाकारेण जन्मेत्यर्थः। तत्र दृष्टान्तमाह—**वन्ध्येति**। पूर्वार्धं व्याकरोति—**असद्वादिनामिति**। असतो निःस्वरूपस्य स्वरूपाभावादेव तत्त्वतोऽतत्त्वतो वा कार्याकारेण न युक्तं जन्मेत्यत्र हेतुमाह—**अदृष्टत्वादिति**। उत्तरार्धं व्याकुर्वन्नदृष्टत्वमेव दृष्टान्तेन स्पष्टयति—**न हीति**। सद्वादो मायया सम्भवति। असद्वादस्तु तयाऽपि नेति विशेषं दर्शयन्नुपसंहरति—**तस्मादिति**। कार्यकारणनिरूपणमत्रेति परामृश्यते।।२८।।

सत्तत्वस्यैव मायया जन्मेत्युक्तमुपपादयति—**यथेति**। सत एव मायया जन्मेत्ययुक्तम्। अवस्थाद्वयेऽपि द्वैतस्य मनःस्पन्दितत्वस्वीकारादिति श्लोकव्यावर्त्यं चोद्यमुत्थापयति—**कथमिति**। अधिष्ठानरूपेण मनोऽपि सदिति

**अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः। अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः।।३०।।**

**मनोदृश्यमिदं द्वैतं यत्किञ्चित् सचराचरम्। मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते।।३१।।**

**परमार्थविज्ञप्त्याऽऽत्मरूपेणावेक्ष्यमाणं सद्ग्राह्यग्राहकरूपेण द्वयाभासं स्पन्दते स्वप्ने मायया रज्ज्वामिव सर्पः। तथा तद्वदेव जाग्रज्जागरिते स्पन्दते मायया मनः स्पन्दत इवेत्यर्थः।।२९।।**

५ **रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सद् द्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादि ग्राह्यं तद्ग्राहकं वा चक्षुरादि द्वयं विज्ञानव्यतिरेकेणास्ति। जाग्रदपि तथैवेत्यर्थः। परमार्थसद्विज्ञानमात्राविशेषात्।।३०।।**

**रज्जुसर्पवद्विकल्पनारूपं द्वैतरूपेण मन एवेत्युक्तम्। तत्र किं प्रमाणमित्यन्वयव्यतिरेकलक्षणमनुमानमाह– कथं? तेन हि मनसा विकल्प्यमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मन इति प्रतिज्ञा। तद्भावे भावात्तदभावेऽभावात्।**

अनुभूतिस्वरूपाचार्यटीका

१० तच्च कल्पितम्। अतः कथं कार्येण सत्कारणानुमानमित्याह—**कथं पुनरिति**। अधिष्ठानरूपेण मनोऽपि सदित्याह— **यथा रज्ज्वामिति**।।२९।।

मनसा सद्वितीयत्वादद्वयं ब्रह्म कारणं सर्वस्येति प्रतिज्ञाहानिः इत्याशङ्क्य सच्चिद्रूपेणाद्वयत्वमाह—**अद्वयं चेति**। विमतं विज्ञानातिरेकेण नास्ति, ग्राह्यग्राहकत्वात् स्वप्नगतग्राह्यग्राहकवदित्याह—**जाग्रदपीति**। स्वप्ने दृष्टं १५ हस्त्यादि नास्तीति दृष्टस्यैव बाधात् दृष्टिमात्रं तत्र सत्यमिति युज्यते। जागरिते चक्षुरादेरपि भावात् न ज्ञानमात्रं वस्त्वित्याशङ्क्याऽऽह—**परमार्थसदिति**। यत् कदाचिद् यत्र व्यभिचरति तत् तस्य परमार्थरूपं प्रसिद्धम्। द्वैतञ्च सदा प्रकाशमानमेव व्यवहारपथमवतरति—'अहं प्रकाशे चक्षुः प्रकाशते अनिलादि प्रकाशते इति। अतः सर्वस्य परमार्थसंविज्ज्ञप्तिमात्ररूपाविशेषात् कल्पनैव नीलादि पश्यामीति ग्राह्यग्राहकभाव इत्यर्थः। तदुक्तम्—

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्।।
२० यदस्ति यद्भाति तदात्मरूपं नान्यत् ततो भाति न चान्यदस्ति।
स्वभावसंवित् सुविभाति केवला ग्राह्यं ग्रहीतेति मृषैव कल्पना।। इति।।३०।।

द्वैतं मनोमात्रं तद्भावनियतभावत्वात् यो यो यद्भावनियतभावः स तन्मात्रो यथा मृद्भावनियतभावो घटादि मृन्मात्रं इत्यनुमानम्। मनसस्तत्त्वतः चैतन्यरूपस्याभावासम्भवात् कथमन्वयव्यतिरेकावित्याह—**कथमिति**। परिहरति—**तेन हीति**। चैतन्यात्मकेन मनसा विकल्प्यमानेन मृषैव स्पन्दमानेन दृश्यमिदं विश्वमिति २५ कल्पितरूपस्याभावसम्भवा-दन्वयव्यतिरेकौ सम्भवत इत्यर्थः।।३१।।

आनन्दगिरिटीका

सदृष्टान्तमुत्तरमाह—**उच्यत इति**। मनसः सन्मात्रत्वेऽपि कथमनेकधा स्पन्दनमित्याशङ्क्य स्वप्नदृष्टान्तं व्याचष्टे— **ग्राह्येति**। दार्ष्टान्तिकमाह—**तथेत्यादिना**। मायाधीनं मनःस्पन्दनमवस्तुभूतमिति द्योतयितुमिवेत्युक्तम्।।२९।।

मनो ब्रह्म चेति कारणद्वयं तर्हि द्वैतस्य स्वीकृतमित्याशङ्क्य दृष्टान्तेन निराचष्टे—**अद्वयं चेति**। दृष्टान्तभागं ३० विभजते—**रज्ज्विति**। दृष्टान्ते चैतन्यातिरिक्तस्य ग्राह्यग्राहकभेदस्य मनःस्पन्दितस्यासत्त्वं साधयति—**न हीति**। तथैव जागरितेऽपि परमार्थात्मस्वरूपेणाद्वयं सन्मनो ग्राह्यग्राहकद्वैताकारेणावभासते। तथा च परमार्थसतो विज्ञान-मात्रस्यावस्थाद्वयेऽपि विशेषाभावात् तस्मिन्नेवाधिष्ठाने मायाकल्पितं मनः स्पन्दते द्वयाकारमित्यङ्गीकारात् न कारणद्वयं शङ्कितव्यमित्याह—**जाग्रदपीति**।।३०।।

मनोमात्रं द्वैतमित्यत्र प्रमाणमाह—**मनोदृश्यमिति**। वृत्तमनूद्य श्लोकतात्पर्यमाह—**रज्ज्विति**। यथा रज्जुः ३५ सर्परूपेण विकल्पते तथा मनो द्वैतरूपेण विकल्पनात्मकम्। तच्चाविद्याकल्पितमित्युक्तेऽर्थे प्रमाणगवेषणायां विशिष्ट-मनुमानमुपन्यस्यतीत्यर्थः। तदेव प्रश्नपूर्वकं प्रकटयन् प्रथमार्धाक्षराणि व्याचष्टे—**कथमित्यादिना**। विमतं मनोमात्रं तद्भावनियतभावत्वात्। यथा मृद्भावनियतभावो मृन्मात्रो घटादिरित्यनुमानमारचयति—**द्वैतमिति**। उक्तमेव व्यतिरेकं

**आत्मसत्यानुबोधेन न सङ्कल्पयते यदा। अमनस्तां तदा याति ग्राह्याभावे तदग्रहम्।।३२।।**
**अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते। ब्रह्मज्ञेयमजं नित्यमजेनाजं[1] विबुध्यते।।३३।।**

**मनसो ह्यमनीभावे निरोधे विवेकदर्शनाभ्यासवैराग्याभ्यां, रज्ज्वामिव सर्पे लयं गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इत्यभावात्सिद्धं द्वैतस्यासत्त्वमित्यर्थः।।३१।।**

**कथं पुनरमनीभाव इति। उच्यते–आत्मैव सत्यमात्मसत्यं मृत्तिकावत् "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः। तस्य शास्त्राचार्योपदेशमन्ववबोध आत्मसत्यानुबोधः। तेन सङ्कल्प्यभावतया न सङ्कल्पयते। दाह्याभावे ज्वलनमिवाग्नेः। यदा यस्मिन् काले तदा तस्मिन् कालेऽमनस्ताममनीभावं याति ग्राह्याभावे तन्मनोऽग्रहं ग्रहणविकल्पनावर्जितमित्यर्थः।।३२।।**

**यद्यसदिदं द्वैतं, केन स्वमजमात्मतत्त्वं विबुध्यत इति। उच्यते। अकल्पकं सर्वकल्पनावर्जितमत एवाजं ज्ञानं ज्ञप्तिमात्रं ज्ञेयेन परमार्थसता ब्रह्मणाऽभिन्नं प्रचक्षते कथयन्ति ब्रह्मविदः; "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" अग्न्युष्णवत्। "विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिभ्यः। तस्यैव विशेषणं ब्रह्म ज्ञेयं यस्य स्वस्य तदिदं ब्रह्मज्ञेयमुष्णस्येवाग्निवदभिन्नम्। तेनाऽऽत्मस्वरूपेणाजेन ज्ञानेनाजं ज्ञेयमात्मतत्त्वं**

अनुभूतिस्वरूपाचार्यटीका

सङ्कल्पो हि मनसो व्यावहारिकं रूपं, स च सङ्कल्प्यापेक्षः, सर्वं च यदस्ति भाति च तदात्मैवेत्यवगमे सति संकल्प्याभावात् मनसो मनस्त्वं न वर्तते। तथापि स्फुरति चेत् तदात्मैवेति न विवेकदृष्ट्या मनो नामास्तीत्याह—**अमनस्त्वमिति**।।३२।।

मनो ह्यात्मव्यञ्जकं तदभावे कथमात्मस्फुरणमित्याह—**यद्यसदिति**। पराभिप्रायेण ब्रह्मज्ञेयमिति ज्ञान-विशेषणम्। स्वाभिप्रायेणासम्भवमाह—**उष्णस्येवेति**। यथोष्णस्य गुणस्य गुणी वह्निर्न गोचरः तथा ज्ञानस्य गुणस्य न ब्रह्म ज्ञेयं सम्भवति। तदधीनसिद्धित्वे गुणस्य प्राधान्यापातादित्यर्थः। कथं तर्हि घटत इत्याह—**अग्निवदभिन्नमिति**।

आनन्दगिरिटीका

स्फोरयन् द्वितीयार्धं विभजते—**मनसो हीति**। समाधिस्वापयोर्द्वैतस्यानुपलम्भेऽपि नासत्त्वमित्याशङ्क्य 'मानाधीना मेयसिद्धिरि'त्यभिप्रेत्याऽऽह—**इत्यभावादिति**।।३१।।

मनसो यदमनस्त्वमुक्तं तदुपपादयति—**आत्मेति**। समाधिस्वापयोरननुभवेऽपि मनसः स्वरूपेण नित्यत्वान्ना-मनस्त्वमित्याक्षिपति—**कथमिति**। सङ्कल्पो हि मनसो व्यावहारिकं रूपम्। सङ्कल्पश्च सङ्कल्प्यापेक्षत्वात् तदभावे न भवति। सर्वमात्मैवेत्यवगमे च सङ्कल्प्याभावान्मनसो मनस्त्वं न वर्तते। तथाऽपि स्फुरति चेदात्मैवेति न विवेकिदृष्ट्या मनो नामास्तीति श्लोकाक्षरैरुत्तरमाह—**उच्यत इति**। तस्यैव सत्यत्वे दृष्टान्तमाह—**मृत्तिकावदिति**। तथा घटशरावादिष्वसत्येषु मृत्तिकामात्रमनुस्यूतं सत्यमिष्यते तथैवानात्मस्वसत्येष्वात्ममात्रं सत्यमेष्टव्यम्। तत्सत्य-मित्यवधारणादेवकारस्य दृष्टान्तनिविष्टस्य दार्ष्टान्तिकेऽनुषङ्गादित्यर्थः। उक्ते दृष्टान्ते प्रमाणमाह—**वाचारम्भणमिति**। अवशिष्टान्यक्षराणि व्याचष्टे—**तस्येत्यादिना**। तेन तत्त्वज्ञानेनाऽऽत्मातिरिक्तार्थाभावे निश्चिते सङ्कल्प-विषयाभावनिर्धारणया सङ्कल्पाभावे दृष्टान्तमाह—**दाह्येति**। यथाऽग्नेर्दाह्याभावे ज्वलनं न भवति तथा सङ्कल्प्याभावे सङ्कल्पो निरवकाशः स्यादित्यर्थः। सङ्कल्प्याभावे किं मनसो भवति, तदाह—**यदेति**।।३२।।

मनसश्चेन्मनस्त्वं व्यावर्तते, तर्हि कथमात्मनोऽवबोधो व्यञ्जकाभावादित्याशङ्क्याऽऽह—**अकल्पकमिति**। श्लोकव्यावर्त्यां शङ्कामाह—**यदीति**। मनोमुख्यस्य द्वैतस्यासत्त्वे व्यञ्जकाभावान्नाऽऽत्मबोधः सम्भवति "मनसैवानु-द्रष्टव्यमि"ति श्रुतेः; मनसश्चासत्त्वाङ्गीकारादित्यर्थः। स्वरूपभूतेन ज्ञानेनैवाऽऽत्मनोऽवबोधसम्भवान्नातिरिक्ते मनस्यपेक्षेत्युत्तरमाह—**उच्यत इति**। ज्ञेयाभिन्नं ज्ञानमित्यत्र श्रुतीरुदाहरति—**न हीति**। सत्यग्नौ तदात्मक-मौष्ण्यं न परिलुप्यते तथेत्युत्तरमाह—**अग्न्युष्णवदिति**। "प्रज्ञानं ब्रह्मे"त्यादिश्रुतिसंग्रहार्थमादिपदम्। ज्ञेयाभिन्न-

---

१. अजेनाजं विबुध्यते आत्मनैवात्मा ज्ञायते। न चात्र कर्मकर्तृभावो विरुद्धः, आत्मनः स्वप्रकाशत्वात्। स्वप्रकाशत्वं च स्वात्मनि सर्वदा संशयादिराहित्यम्, स्वव्यवहारानुकूलचैतन्यरूपत्वमिति यावत्।

**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः। प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः।। ३४।।**

स्वयमेव विबुध्यतेऽवगच्छति नित्यप्रकाशस्वरूप इव सविता। नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्षत इत्यर्थः।। ३३।।

आत्मसत्यानुबोधेन सङ्कल्पमकुर्वद् बाह्यविषयाभावे निरिन्धनाग्निवत्प्रशान्तं निगृहीतं निरुद्धं मनो भवतीत्युक्तम्। एवं च मनसो ह्यमनीभावे द्वैताभावश्चोक्तः। तस्यैवं निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्वकल्पनावर्जितस्य धीमतो विवेकवतः प्रचरणं प्रचारो यः स तु प्रचारो विशेषेण ज्ञेयो योगिभिः। ननु सर्वप्रत्ययाभावे यादृशः सुषुप्तस्थस्य मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात् किं तत्र विज्ञेयमिति। अत्रोच्यते। नैवम्। यस्मात् सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थ-प्रवृत्तिबीजवासनावतो मनसः, आत्म-सत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्य निरुद्धस्यान्य एव प्रशान्तसर्वक्लेशरजसः स्वतन्त्रः प्रचारः। अतो न तत्समः। तस्माद् युक्तः स विज्ञातुमित्यभिप्रायः।। ३४।।

अनुभूतिस्वरूपाचार्यटीका

यथाऽग्निरुष्णस्वभावः तथाऽजं नित्यं ब्रह्मैव ज्ञानम्। "कृत्स्नः प्रज्ञानघन एवे"ति श्रुतेः। अनेनाजं नित्यमिति पदद्वयं व्याख्यातम्। अहमात्मा परं ब्रह्मेत्यभिज्ञाभिवदनव्यवहारोऽपि विदुषः स्वरूपज्ञानप्रयुक्त एवेत्याह—**तेनेति**।।३३।।

मुमुक्षूणां ज्ञानफलं न स्वर्गवत् परोक्षं किन्तु तृप्तिवत्प्रत्यक्षम्, अतो ज्ञानफलस्य मनोनिरोधस्य प्रत्यक्षत्वाय निरुद्धस्य मनसः कीदृशं वर्तनम्, ज्ञातव्यमेतत् प्रासङ्गिकमाह—**निगृहीतस्येत्यादिना**। अन्तर्लीना गुप्ताः अनेकार्थप्रवृत्तीनां बीजभूता वासना विद्यन्ते यस्मिंस्तस्यात्मसत्यानुबोध एव हुताशोऽग्निस्तेन विप्लुष्टानि दग्धान्यविद्यादीनि अनर्थप्रवृत्तिबीजानि यस्य तस्येत्यर्थः। शान्तसर्वक्लेशमलस्य स्वतन्त्रो ब्रह्मस्वरूपेणावस्थानलक्षण इत्यर्थः।।३४-३५।।

आनन्दगिरिटीका

मित्युक्तं स्फुटयति—**तस्यैवेति**। आत्मनः स्वयमेवावगतिरूपत्वान्नार्थान्तरापेक्षेत्येतमर्थं दृष्टान्तेन स्फुटयति—**नित्येति**।।३३।।

मोक्षमाणस्य ज्ञानफलं स्वर्गवन्न परोक्षं किं तु तृप्तिवत्प्रत्यक्षम्। अतश्च प्रकृतज्ञानफलस्य मनोनिरोधस्य प्रत्यक्षत्वार्थं प्रसङ्गं प्रकरोति—**निगृहीतस्येति**। न तस्य विज्ञेयत्वं सुषुप्ते प्रसिद्धत्वादित्याशङ्क्याऽऽह—**सुषुप्त इति**। श्लोकाक्षराणि व्याकर्तुं वृत्तं कीर्तयति—**आत्मेति**। तस्य सत्यस्य प्रागुक्तेनानुबोधेन सम्यग्ज्ञानेन बाह्यस्य विषयस्य सङ्कल्प्यस्याभावे निरालम्बनस्य प्रचारासम्भवे च मनः सङ्कल्पमकुर्वत्प्रशान्तं निरुद्धं च प्रभवतीत्यन्वयः। निर्विषयं मनः शाम्यतीत्यत्र दृष्टान्तमाह—**निरिन्धनेति**। निरुद्धे मनसि मनस्त्वव्यावृत्तौ मनःस्पन्दितस्य द्वैतस्याभावमुक्तं स्मारयति—**एवं चेति**। एवं वृत्तमनूद्य पादत्रयस्यार्थमाह—**तस्येति**। **एवं** विषयाभावेनेति यावत्। आत्मसत्यानुबोधो विवेकशब्दार्थः। प्रत्यगात्मन्येव पर्यवसानं प्रचारः, तस्य विद्वत्प्रत्यक्षत्वं विवक्षित्वा योगिभिरित्युक्तम्। चतुर्थपादव्यावर्त्यामाशङ्कामाह—**नन्विति**। निरुद्धस्यापि मनसः प्रचार इति सम्बन्धः। विशेषप्रत्ययाभावस्य निरोधे स्वापे च विशेषाभावादिति हेत्वर्थः। तत्र प्रचारे प्रसिद्धे सतीति यावत्। चतुर्थपादमुत्तरत्वेनावतारयति—**अत्रेति**। निरुद्धस्य मनसः सुषुप्तस्येव प्रचारस्य सुज्ञानत्वान्न तत्र ज्ञातव्यमस्तीत्युक्तं प्रत्याह—**नैवमिति**। विद्याऽभावव्यावृत्त्यर्थं मोहविशेषणम्। चित्तभ्रमं व्यावर्तयितुं तमोविशेषणम्। अन्तर्लीना गुप्ता अनेकानर्थफलानां प्रवृत्तीनां बीजभूता वासना यस्मिन् मनसि तस्येति सुषुप्तस्य विशेषणम्। आत्मनः सत्यस्यानुबोधो यो व्याख्यातः स एव हुताशोऽग्निस्तेन विप्लुष्टान्यविद्यादीन्यनेकानर्थपर्यन्तप्रवृत्तीनां बीजानि यस्य तस्येति निरुद्धस्य विशेषणं, प्रकर्षेण शान्तं सर्वक्लेशात्मकं रजो यस्येति तस्यैव विशेषणान्तरम्। स्वतन्त्रो ब्रह्मस्वरूपावस्थानात्मक इत्यर्थः। यथोक्तस्य प्रचारस्य सुषुप्तप्रचारविसदृशस्य दुर्ज्ञानत्वे स्थिते फलितमाह—**तस्मादिति**।।२४।।

[1]लीयते हि सुषुप्ते तन्निगृहीतं न लीयते। तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः।।३५।।
अजमनिद्रमस्वप्नमनामकमरूपकम्। सकृद्विभातं सर्वज्ञं नोपचारः कथंचन।।३६।।

प्रचारभेदे हेतुमाह—लीयते सुषुप्तौ हिं यस्मात् सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिः सह तमोरूपम-विशेषरूपं बीजभावमापद्यते, तत् विवेकविज्ञानपूर्वकं निरुद्धं निगृहीतं सन्न लीयते तमोबीजभावं नाऽऽपद्यते। तस्माद् युक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य च मनसः। यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्जितं तदा परमद्वयं ब्रह्मैव तत्संवृत्तमित्यतस्तदेव निर्भयम्। द्वैतग्रहणस्य भयनिमित्तस्याभावात्। शान्तमभयं ब्रह्म। यद्विद्वान्न बिभेति कुतश्चन। तदेव विशेष्यते ज्ञप्तिर्ज्ञानमात्मस्वभावचैतन्यं तदेव ज्ञानमालोकः प्रकाशो यस्य तद् ब्रह्म ज्ञानालोकं विज्ञानैकरसघन-मित्यर्थः। समन्ततः समन्तात् सर्वतो व्योमवन्नैरन्तर्येण व्यापकमित्यर्थः।।३५।।

जन्मनिमित्ताभावात् सबाह्याभ्यन्तरमजम्। अविद्यानिमित्तं हि जन्म रज्जुसर्पवदित्यवोचाम। सा चाविद्याऽऽत्म-सत्यानुबोधेन निरुद्धा। अतोऽजमत एवानिद्रम्। अविद्यालक्षणाऽनादिर्माया निद्रा। स्वापात्प्रबुद्धोऽद्वयस्वरूपेणाऽऽत्म-नाऽतोऽस्वप्नम्। अप्रबोधकृते ह्यस्य नामरूपे, प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे इति न नाम्नाऽभिधीयते ब्रह्म, रूप्यते वा न केनचित्प्रकारेणेत्यनामकमरूपकं च तत्। ''यतो वाचो निवर्तन्ते'' इत्यादिश्रुतेः। किं च सकृद्विभातं सदैव विभातं सदा भारूपमग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात्। ग्रहणाग्रहणे हि राज्यहनी। तमश्चाविद्यालक्षणं

अनुभूतिस्वरूपाचार्यटीका

पुनः कीदृशं तन्निरुद्धमनसः स्वरूपमित्याह—**अजमनिद्रमिति**। सदा भारूपत्वे हेतुमाह—**अग्रहणेति**। जीवो ह्युपाधिस्थोऽहंरूपग्रहणानुदये तिरोभूतो भवति। कर्ताऽहमित्यन्यथाग्रहणोदये चाविर्भूतो भवति। तदभावाद् बिम्बकल्पं ब्रह्मैव सदैव विभातमित्यर्थः। ननु श्रुत्याचार्योपदेशात्पूर्वं ब्रह्मग्रहणं नासीत्। इदानीं जातमिति प्रसिद्धेः ब्रह्मण्यपि ग्रहणाग्रहणे स्त इति, तत्राह—**ग्रहणाग्रहणे इति**। ग्रहणाग्रहणे राज्यहनी इव कल्पिते, यथा सवित्रपेक्षया

आनन्दगिरिटीका

मनसः सुषुप्तस्य समाहितस्य च प्रचारभेदोऽस्तीत्युक्तं, तत्र हेतुमाह—**लीयते हीति**। समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति—**तदेवेति**। पूर्वार्धस्य तात्पर्यमाह—**प्रचारेति**। मनसः सुषुप्तस्य समाहितस्य चेति वक्तव्यम्। यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः। अविद्यादीत्यादिशब्देनास्मितारागादयो गृह्यन्ते। सुषुप्ते मनसो वासनाभिः सह लयप्रकारं कथयति—**तमोरूपमिति**। आपद्यत इति सम्बन्धः। जाड्यं रूपमवस्थान्तरेऽपि तुल्यमित्यतो विशिनष्टि—**अविशेषेत्यादिना**। एवमाद्यं पादं व्याख्याय द्वितीयं पादं व्याचष्टे—**तदिति**। पूर्वविभाग-विभजनेन फलितमाह—**तस्मादिति**। तदेव निर्भयं ब्रह्मेत्यस्यार्थमाह—**यदेति**। समाहितं मनो ग्राह्यं ग्राहकमित्य-विद्याकृतं यन्मलद्वयं तेनं वर्जितं यदा तदेति सम्बन्धः। मनसो ब्रह्मत्वे निर्भयत्वं तस्य फलितमित्याह—**इत्यत इति**। तत्र हेतुमतःशब्देन सूचितमाह—**द्वैतेति**। यदुपशान्तं ब्रह्माभयमित्युक्तं तस्याभयत्वे प्रमाणं सूचयति—**यद्विद्वानिति**। ननु यथोक्तं ब्रह्म प्रकाशते न वा प्रकाशते? प्रकाशते चेदुपायापेक्षायामद्वैतव्याघातः; न चेत्प्रकाशते पुरुषार्थत्वासिद्धिरिति, तत्राऽऽह—**तदेवेति**। तस्य ब्रह्मत्वसिद्धये परिच्छिन्नत्वं व्यवच्छिनत्ति—**समन्तत इति**।।३५।।

प्रकृतमेव ब्रह्म प्रकारान्तरेण निरूपयति—**अजमित्यादिना**। न च तस्मिन्निरुपाधिके ब्रह्मणि ज्ञाते कर्तव्य-शेषः सम्भवतीत्याह—**नेति**। अजत्वमुपपादयति—**जन्मेति**। किं तज्जन्मनिमित्तं यदभावादजत्वमुपपाद्यते, तदाह—**अविद्येति**। कुतस्तर्हि तन्निवृत्याऽजत्वसिद्धिस्तत्राऽऽह—**सा चेति**। निमित्तनिवृत्त्याऽजत्वसिद्धिर्युक्तमनिद्रत्वं निद्रा-शब्देनाविद्याभिलापादित्याह—**अत एवेति**। विशेषणान्तरं साधयति—**अविद्यालक्षणेति**। उत्तरविशेषणद्वयं विवृणोति—**अप्रबोधेति**। ब्रह्मणो नामरूपवत्त्वाभावे प्रमाणमाह—**यत इति**। विशेषणान्तरमाह—**किं चेति**। सदा भारूपत्वे हेतुमाह—**अग्रहणेति**। जीवे ह्युपाधिस्थेऽहंरूपग्रहणानुदये तिरोभावः, कर्ताऽहमित्यन्यथाग्रहणोदये

---

१. सुषुप्तस्य मनःप्रचारोऽन्य इत्युक्तम्। सुषुप्ते अविद्यायां मनसो लयः। समाधौ तु लय एव नास्ति मनसः। अपि तु निरोध एव। मनस्तदा निर्भयं ब्रह्मैव सम्पद्यते। केवलं ज्ञानालोक एव तदा प्रकाशते।

**सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः। सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः।।३७।।**

**सदाऽप्रभातत्वे कारणं तदभावान्नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति। अत एव सर्वं च तज्ज्ञस्वरूपं चेति [1]सर्वज्ञम्। नेह ब्रह्मण्येवंविध उपचरणमुपचारः कर्तव्यः, यथाऽन्येषामात्मस्वरूपव्यतिरेकेण [2]समाधानाद्युपचारः। नित्यशुद्धबुद्धमुक्तस्वभावत्वाद् ब्रह्मण कथञ्चन न कथञ्चिदपि कर्तव्यसम्भवोऽविद्यानाश[3] इत्यर्थः।।३६।।**

५ **अनामकत्वाद्युक्तार्थसिद्धये हेतुमाह–अभिलप्यतेऽनेनेत्यभिलापो वाक्करणं सर्वप्रकारस्याभिधानस्य तस्माद् विगतः। वागत्रोपलक्षणार्था। सर्वबाह्यकरणवर्जित इत्येतत्। तथा सर्वचिन्तासमुत्थितः। चिन्त्यतेऽनयेति चिन्ता बुद्धिस्तस्याः समुत्थितोऽन्तःकरणवर्जित इत्यर्थः। "अप्राणो ह्यमनाः शुभ्रः अक्षरात्परतः परः" इति श्रुतेः।**

अनुभूतिस्वरूपाचार्यटीका

न रात्र्यहनी स्तः। किन्तु उदयास्तमयकल्पनया, तथा ब्रह्मस्वभावपर्यालोचनया ग्रहणाग्रहणे न स्तः, १० किन्तूपाधिस्थताकल्पनयेत्यर्थः। इतश्च सदा विभातं निरुपाधिकं ब्रह्मेत्याह—**तमश्चेति**। एवं विदुषो निरुद्धस्य मनसः परब्रह्मस्वरूपावस्थानमुक्त्वा ये विदुषोऽपि समाध्यादि कर्तव्यमाहुः तान् व्यावर्तयति—**नेह ब्रह्मणीत्यादिना**। यावदविद्या हि समाध्यादि कर्तव्यं नाविद्यानाशे, व्यतिरिक्तस्य मनसोऽभावात् यतो व्यावर्तनीयं तस्याप्यभावादविद्यालेशात् विलसदपि मनः आत्म-प्रकाशरूपेणैव व्यवतिष्ठते। उक्तं हि—

यत्र यत्र गता दृष्टिः यत्र यत्र गतं मनः। तत्र तत्र शिवं शान्तं पश्यन्ते वेदपारगाः।।
१५ कायाभिमाने गलिते विज्ञाते परमात्मनि। यत्र यत्र मनो याति तत्र तत्र समाधयः।। इति।।३६।।

विद्वानेव ब्रह्मेति पुँल्लिङ्गत्वेन निर्देशः, नास्ति लिङ्गं ब्रह्मणीति वाऽनियमेन प्रयुङ्क्ते। सम्यगाधीयते निक्षिप्यते विद्ययाऽस्मिन् ब्रह्मणि जीव इति वा समाधिर्ब्रह्मेत्यर्थः।।३७।।

आनन्दगिरिटीका

चाऽऽविर्भावो भवति तदभावाद्भास्वरूपमेव सदा ब्रह्मेत्यर्थः। श्रुत्याचार्योपदेशात्पूर्वं ब्रह्मण्यग्रहणं तदुपदेशादूर्ध्वं २० तद्ग्रहणमिति प्रसिद्धे ब्रह्मण्यपि ग्रहणाग्रहणे स्यातामित्याशङ्क्याऽऽह—**ग्रहणेति**। यथा सवित्रपेक्षया रात्र्यहनी न स्तः, किन्तूदयास्तमयकल्पनया कल्प्येते; तथा ब्रह्मस्वभावालोचनया ग्रहणाग्रहणे न विद्येते, किं तूपाधिद्वारा कल्प्येते। तेन ब्रह्मणः सदा भारूपत्वमविरुद्धमित्यर्थः। इतश्च निरुपाधिकं ब्रह्म सदाविभातमेषितव्यमित्याह—**तमश्चेति**। अप्रभातत्व इति च्छेदः। तदभावो ब्रह्मदृष्ट्या तमःसम्बन्धाभावः। उक्तमेव हेतूकृत्य विशेषणान्तरं विशदयति—**अत एवेति**। विदुषो निरुद्धमनसो ब्रह्मस्वरूपावस्थानमुक्तम्। ये तु विदुषोऽपि समाध्यादि कर्तव्यमा- २५ चक्षते तान्प्रत्याह—**नेहेति**। **एवंविधत्वं** निरुपाधिकत्व**मुपचारः** समाध्यादिः। निरुपाधिके ब्रह्मणि विदुषो न कर्तव्यशेषोऽस्तीत्येतमर्थं वैधर्म्योदाहरणेन साधयति—**यथेत्यादिना**। **अन्येषा**मनात्मविदामिति यावत्। अविद्या-दशायामेव सर्वो व्यवहारो विद्यादशायां चाविद्याया असत्त्वान्न कोऽपि व्यवहारः। बाधितानुवृत्त्या तु व्यवहाराभास-सिद्धिरित्यर्थः।।३६।।

विद्वानेव ब्रह्मेत्यङ्गीकृत्य प्रकृतं ब्रह्म पुँल्लिङ्गत्वेन निर्दिशति—**सर्वेति**। श्लोकस्य तात्पर्यमाह—**अनामेति**। ३० अत्रेति प्रकृतपदोपादाने। तर्हि सर्वकरणवर्जितत्वस्यात्रैव सिद्धत्वादुत्तरविशेषणमनर्थकमित्याशङ्क्याऽऽह—**सर्वबाह्येति**। बाह्यकरणसम्बन्धराहित्यवदन्तःकरणसम्बन्धराहित्यं दर्शयति—**तथेति**। उभयविधकरणसम्बन्धवैधुर्येणाऽऽत्मनः शुद्धत्वे प्रमाणमाह—**अप्राण इति**। कारणसम्बन्धराहित्यमाह—**अक्षरादिति**। तस्य परत्वं कार्यापेक्षया द्रष्टव्यम्।

---

१. अत्र सर्वज्ञमित्यस्य सर्ववस्तुविषयकज्ञानवत् इति नार्थः। विदुषो विद्ययाऽविद्यातत्कार्ययोर्निरस्तत्वात् द्वैताभावात्। अतः सर्वश्चासौ ज्ञश्चेत्येवार्थः। सर्वो ब्रह्मव्यतिरेकेण सर्वस्याभावात्। ज्ञः ज्ञानस्वरूप इत्यर्थः।

३५ २. समाधानादि—समाधिकर्त्तव्यता नास्त्यस्माकं सर्वदा भारूपब्रह्मप्रतिपत्तेः।

३. अविद्यानाशे—नाशाय कर्त्तव्यं नास्ति अविद्याया नष्टत्वादित्यर्थः। अथवा अविद्याया नष्टत्वाद् व्यवहारे किमपि कर्त्तव्यं नास्तीत्यर्थः।

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते। आत्मसंस्थं तदा ज्ञानमजाति समतां गतम्।।३८।।**

**[1]अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः। योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः।।३९।।**

**यस्मात्सर्वविशेषवर्जितोऽतः सुप्रशान्तः। सकृज्ज्योतिः सदैव ज्योतिरात्मचैतन्यस्वरूपेण। समाधिः समाधिनिमित्त-प्रज्ञावगम्यत्वात्। समाधीयतेऽस्मिन्निति वा समाधिः। अचलोऽविक्रियः। अत एवाभयो विक्रियाऽभावात्।।३७।।**

**यस्माद् ब्रह्मैव समाधिरचलोऽभय इत्युक्तमतो—न तत्र तस्मिन् ब्रह्मणि ग्रहो ग्रहणमुपादानं, नोत्सर्ग उत्सर्जनं हानं वा विद्यते। यत्र हि विक्रिया तद्विषयत्वं वा तत्र हानोपादाने स्याताम्, न तद् द्वयमिह ब्रह्मणि सम्भवति। विकार-हेतोरन्यस्याभावान्निरवयवत्वाच्च। अतो न तत्र हानोपादाने इत्यर्थः। चिन्ता यत्र न विद्यते। सर्वप्रकारैव चिन्ता न सम्भवति यत्रामनस्त्वात् कुतस्तत्र हानोपादाने इत्यर्थः। यदैवाऽऽत्मसत्यानुबोधो जातस्तदैवाऽऽत्मसंस्थं विषया-भावादग्न्युष्णवदात्मन्येव स्थितं ज्ञानम् अजाति जातिवर्जितम् समतां गतं परं साम्यमापन्नं भवति। यदादौ प्रतिज्ञातम् 'अतो वक्ष्याम्यकार्पण्यमजाति समतां गत'मितीदं तदुपपत्तितः शास्त्रतश्चोक्तमुपसंह्रियते—अजाति समतां गतमिति। एतस्मादात्मसत्यानुबोधात् कार्पण्यविषयमन्यत्। ''यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः[2]'' इति श्रुतेः। प्राप्यैतत् सर्वः कृतकृत्यो ब्राह्मणो भवतीत्यभिप्रायः।।३८।।**

**यद्यपीदमित्थं परमार्थतत्त्वम्। अस्पर्शयोगो नामायं सर्वसम्बन्धाख्यस्पर्शवर्जितत्वादस्पर्शयोगो नाम वै स्मर्यते**

अनुभूतिस्वरूपाचार्यटीका

इदानीं विद्वद्दृष्ट्या विधिप्रतिषेधनिमित्ते लौकिके च हानोपादाने अपि न सम्भवत इत्याह—**ग्रहो न तत्रेत्यादिना**।।३८।।

यदि परमार्थब्रह्मस्वरूपावस्थानफलकमिदमद्वैतदर्शनं किमिति सर्वैर्नाद्रियत इत्याशङ्क्याऽऽह—**अस्पर्शयोग**

आनन्दगिरिटीका

उक्तं हेतूकृत्य विशेषणान्तरं विशदयति—**यस्मादिति**। अस्मिन् परस्मिन्नात्मनि समाधीयते निक्षिप्यते जीवस्तदुपा-धिश्चेति समाधिः परमात्मा। समाधिनिमित्तया प्रज्ञया तस्यावगम्यत्वाद्वा समाधित्वमवगन्तव्यम्। अत एवेत्युक्तं स्फुटयति—**विक्रियेति**।।३७।।

प्रकृते ब्रह्मण्यविक्रिये विधिनिषेधाधीनयोर्वैदिकयोर्वा लौकिकयोर्वा हानोपादानयोरनवकाशत्वमित्याह—**ग्रहो नेति**। मनोविषयत्वाभावाच्च ब्रह्मणि तयोरवकाशो नास्तीत्याह—**चिन्तेति**। यथोक्ते ब्रह्मणि ज्ञाते फलितमाह— **आत्मेति**। प्रकरणादौ प्रतिज्ञातमुपसंहरति—**अजातीति**। किमिति लौकिकौ वैदिकौ वा ग्रहोत्सर्गौ ब्रह्मणि न भवतस्तत्राऽऽह—**यस्मादिति**। उक्तमेवार्थमुपपादयति—**यत्र हीति**। ब्रह्मणि विक्रियाऽभावे हेतुमाह—**विकारेति**। तस्य विक्रियाविषयत्वाभावेऽपि हेतुं कथयति—**निरवयवत्वाच्चेति**। विक्रियायास्तद्विषयत्वस्य चाभावे फलितमाह—**अत इति**। द्वितीयं पादमवतार्य व्याचष्टे—**चिन्तेत्यादिना**। तृतीयं पादं विभजते—**यदैवेति**। चतुर्थपादं व्याकरोति—**अजातीति**। नन्विदं प्रकरणादावुक्तं किमर्थं पुनरिहोच्यते, तत्राऽऽह—**यदादाविति**। ननु 'ग्रहो न तत्रे'त्यादौ पूर्वत्र तत्त्वज्ञानमुक्तं न त्वकार्पण्यम्, तत्कथमकार्पण्यं वक्ष्यामीत्युपक्रान्तस्यात्रोपसंहारः सम्भवतीत्याशङ्क्य तत्त्वज्ञान-स्यैवाकार्पण्यरूपत्वादुक्तोपसंहारसिद्धिरित्याह—**एतस्मादिति**। तत्त्वज्ञानातिरिक्तं ज्ञानं कार्पण्यविषयमित्यत्र लिङ्गं दर्शयति—**यो वा इति**। तत्त्वज्ञानराहित्ये कृपणत्वमुक्त्वा तद्वत्त्वे फलितमाह—**प्राप्येति**।।३८।।

परमार्थब्रह्मस्वरूपावस्थानफलकं चेदद्वैतदर्शनं किमिति तर्हि सर्वैरेव नाऽऽद्रियते, तत्राऽऽह—**अस्पर्शेति**। परमार्थतत्त्वं कर्मनिष्ठानां बहिर्मुखाणां दुर्दर्शनमित्यत्र हेतुमाह—**योगिन इति**। यदुक्तं तद्विज्ञानं स्वरूपावस्थान-फलकमिति, तदङ्गीकरोति—**यद्यपीति**। परमार्थतत्त्वं ब्रह्मेदं प्रत्यग्भूतम् इत्थं प्रागुक्तपरिपाट्या कूटस्थसच्चिदा-

---

१. अस्पर्शयोगः स्पर्शः सम्बन्धः तद्रहितो योगः ब्रह्मणि एकीभावः, ''असङ्गो ह्ययं पुरुष'' इत्युक्तेः ब्रह्मभावं प्राप्तस्य सर्वसम्बन्धाभावसिद्धिः। सर्वयोगिभिः द्वैतदर्शियोगिभिः। भयनिमित्तं द्वितीयवस्तु। तत्त्वज्ञाने सति तदभावात् अयं ज्ञानयोगो भयवर्जितः। द्वैतदर्शिनस्तु अहङ्कारस्यापि नाशात् आत्मनाशं मन्यन्ते।

२. कृपणः पणक्रीतदासादिसदृशः सर्वदा इदं कर्तव्यं यजमानायेदं कर्तव्यमात्मने इति विचारपरो दुःखी।

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम्। दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च।।४०।।**

**प्रसिद्धमुपनिषत्सु। दुःखेन दृश्यत इति दुर्दर्शः सर्वैर्योगिभिः, वेदान्तविहितविज्ञानरहितैः सर्वयोगिभिरात्मसत्यानुबोधायासलभ्य एवेत्यर्थः। योगिनो बिभ्यति ह्यस्मात् सर्वभयवर्जितादप्यात्मनाशरूपमिमं योगं मन्यमाना भयं कुर्वन्ति अभयेऽस्मिन् भयदर्शिनो भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थः।।३९।।**

५ **येषां पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत्कल्पितमेव मन इन्द्रियादि च, न परमार्थतो विद्यते तेषां ब्रह्मस्वरूपाणामभयं मोक्षाख्या चाक्षया शान्तिः स्वभावत एव सिद्धा नान्यायत्ता, नोपचारः कथञ्चनेत्यवोचाम। ये त्वतोऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसम्बन्धि पश्यन्ति तेषामात्मसत्यानुबोधरहितानां मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम्। किं च दुःखक्षयोऽपि। न ह्यात्मसम्बन्धिनि मनसि प्रचलिते दुःखक्षयोऽस्त्यविवेकिनाम्। किं चाऽऽत्मप्रबोधोऽपि मनोनिग्रहायत्त एव। तथाऽक्षयाऽपि मोक्षाख्या १० शान्तिस्तेषां मनोनिग्रहायत्तैव।।४०।।**

अनुभूतिस्वरूपाचार्यटीका

**इति**। यद्यपीदमित्थं परमात्मतत्त्वं स्वरूपावस्थानं फलं प्राप्यते अद्वैतबोधात्, तथापि मूढा न भजन्त इति शेषः। हेतुगर्भितं विशेषणं वर्णाश्रमादिधर्मेण पापादिमलेन च स्पर्शो न भवत्यद्वैतानुभवोऽस्पर्शः, स एव योगो जीवस्य ब्रह्मभावेन योजनात्। अतो ये धर्माधर्मयोरभिनिविष्टा ये च भोगं कामयमानाः ब्रह्मभावं स्त्र्यादिभोगरहितं १५ नेच्छन्ति ते नादरन्त्यद्वैतबोधमित्यर्थः। उपनिषत्सु "न कर्मणा लिप्यते पापकेने"त्यादिषु आत्मसत्यानुबोधे य आयासः श्रवणमननादिलक्षणस्तेन लभ्यत इत्यर्थः। योगिनः कर्मिणः श्रोत्रियाः ब्राह्मण्याद्यस्माकं यास्यतीति मन्वाना अलेपकवादात् त्रस्यन्तीत्यर्थः।।३९।।

एवं तावदुत्तमबुद्धीनामद्वैतात्मदर्शनफलं मनोनिरोधमभिधाय मन्ददृष्टीनां मनोनिरोधायत्तमात्मदर्शनमाह— **मनसो निग्रहायत्तमित्यादिना**।।४०।।

२० आनन्दगिरिटीका

नन्दात्मकं यद्यपि तत्त्वज्ञानात् प्राप्यते तथाऽपि मूढास्तन्निष्ठा न भवन्तीति शेषः। यस्य तत्त्वानुभवस्य स्वरूपावस्थानं फलमुक्तं तमिदानीं विशिनष्टि—**अस्पर्शेति**। तत्र वर्णाश्रमादिधर्मेण पापादिमलेन च स्पर्शो न भवत्यस्मादित्यद्वैतानुभवोऽस्पर्शः। स एव योगो जीवस्य ब्रह्मभावेन योजनादित्याह—**सर्वेति**। नामेति निपातस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह—**नामेत्यादिना**। उपनिषत्सु "न लिप्यते कर्मणा पापकेने"त्याद्यासु। दुःखं श्रवणमननादिलक्षणम्। २५ योगिशब्दस्य ज्ञानिविषयत्वं व्यावर्तयति—**वेदान्तेति**। कैस्तर्हि यथोक्तस्यानुभवस्य लभ्यत्वमित्याशङ्क्याऽऽह— **आत्मेति**। उत्तरार्धं विभजते—**योगिन इति**। कर्मिणो हि श्रोत्रिया ब्राह्मण्याद्यस्माकं नङ्क्ष्यतीति मत्वा तत्त्वज्ञानाद् बिभ्यतीत्यर्थः। अभयनिमित्तमेव तत्त्वज्ञानं मिथ्याज्ञानवशाद्भयनिमित्तं पश्यन्तीत्याह—**सर्वेति**। भयदर्शित्वं विशदयति—**अभयेति**।।३९।।

उत्तमदृष्टीनामद्वैतदर्शनमद्वैतदृष्टिफलं च मनोनिरोधमुक्त्वा मन्ददृष्टीनां मनोनिरोधाधीनमात्मदर्शनमुपन्य- ३० स्यति—**मनस इति**। अभयमित्यशेषभयनिवृत्तिसाधनमात्मदर्शनमुच्यते। सर्वयोगिनां सर्वेषां योगिनां कर्मानुष्ठाननिष्ठानां बुद्धिशुद्धिमतामित्यर्थः। मनोनिरोधाधीनं प्रागुक्तमनूद्य तत्फलं कैवल्यं कथयति—**दुःखेति**। श्लोकस्य विषयं परिशिनष्टि—**येषामिति**। अभयं भयरहित्यमसंत्रासात्मकमित्यर्थः। उक्तलक्षणा **शान्तिर्निरतिशयानन्दाभिव्यक्तिः, स्वभावतो** विद्यास्वरूपसामर्थ्यादित्यर्थः। विदुषां जीवन्मुक्तानां मुक्तेः सिद्धत्वान्न साधनापेक्षेत्याह—**नान्यायत्तेति**। तत्र वाक्योपक्रममनुकूलयति—**नेत्यादिना**। उत्तमेभ्यो ज्ञानवद्भ्योऽधिकारिभ्यो व्यतिरिक्तानधिकारिणोऽवतारयति—**ये** ३५ **त्विति**। योगिनः सुकृतानुष्ठायिनस्तदनुष्ठानादेव सन्मार्गगामिनस्तेषामपि तत्त्वज्ञानं कथञ्चिदुपजातं चेदलं मनोनिग्रहेणेत्याशङ्क्याऽऽह—**तेषामिति**। अभयं तदेव तत्त्वज्ञानम्। दुःखनिवृत्तिरपि मनोनिग्रहमपेक्ष्य भवतीत्याह— **किं चेति**। तदेव व्यतिरेकमुखेण स्फोरयति—**न हीति**। इतश्च मनो निग्रहीतव्यमित्याह—**किं चेति**। अभयमित्यत्र सूचितं स्पष्टं विवृणोति—**आत्मेति**। इतश्च मनोनिग्रहोऽर्थवानित्याह—**तथेति**। तेषां साधकानां मुमुक्षूणामिति यावत्।।४०।।

[1]उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना। मनसो निग्रहस्तद्वद्भवेदपरिखेदतः।।४१।।
उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः। सुप्रसन्नं लये चैव यथा कामो लयस्तथा।।४२।।
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्। अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति।।४३।।

मनोनिग्रहोऽपि तेषामुदधेः कुशाग्रेणैकबिन्दुनोत्सेचनेन शोषणव्यवसायवद् व्यवसायवतामनवसन्नान्तःकरणानामनिर्वेदादपरिखेदतो भवतीत्यर्थः।।४१।। ५

किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रह उपायः? नेत्युच्यते। अपरिखिन्नव्यवसायवान् सन् वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयान्निरुन्ध्यादात्मन्येवेत्यर्थः। किं च लीयतेऽस्मिन्निति सुषुप्तो लयस्तस्मिँल्लये च सुप्रसन्नमायासवर्जितमपीत्येतन्निगृह्णीयादित्यनुवर्तते। सुप्रसन्नं चेत् कस्मान्निगृह्यत इति। उच्यते। यस्माद् यथा कामोऽनर्थहेतुस्तथा लयोऽपि। अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः।।४२।।

कः स उपाय इति। उच्यते। सर्वं द्वैतमविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात् कामनिमित्तो भोग इच्छाविषयस्तस्माद् विप्रसृतं मनो निवर्तयेद् वैराग्यभावनयेत्यर्थः। अजं ब्रह्म सर्वमित्येतच्छास्त्राचार्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति। अभावात्।।४३।। १०

अनुभूतिस्वरूपाचार्यटीका

अक्ष्णो निमीलनेऽन्धकारं पश्यामः, उन्मीलने घटादीनि, न कदाचित् ब्रह्मेति मत्त्वा यदि उद्विजन्ते तदा मनोनिरोधोऽपि तेषां न सम्भवति। अनुद्विग्नचित्तानान्तु जन्मसहस्रैः सम्भाव्यत इत्याह—**अपरिखेदत इति**।।४१।। १५

आनन्दगिरिटीका

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिध्येदित्याशङ्क्याऽऽह—**उत्सेक इति**। दृष्टान्तदार्ष्टान्तिकभूतश्लोकनिविष्टाक्षराणि व्याचष्टे—**मनोनिग्रहोऽपीति**। तेषां व्यवसायवतामुद्योगभागिनामनुद्वेगवतामिति सम्बन्धः। चक्षुषो निमीलने तमो दृश्यते तस्य चोन्मीलने घटाद्येवोपलक्ष्यते न कदाचिदपि ब्रह्मेत्युद्वेगपरिवर्जनात् प्रागुदीरितानां मनोनिग्रहः सम्भवति, तदाह—**अपरिखेदत इति**।।४१।। २०

समाधिं कुर्वतस्तत्त्वसाक्षात्कारप्रतिबन्धका लयविक्षेपसुखरागास्तेभ्यो मनसो वक्ष्यमाणोपायेन निग्रहं कुर्यात्। अन्यथा समाधिसाफल्यानुपपत्तेरित्याह—**उपायेनेति**। प्रागुक्तादुपायादेव मनोनिग्रहपरिग्रहे श्रवणादिविध्यानर्थक्यमिति मन्वानः शङ्कते—**किमिति**। पूर्वोक्तोपायवतः श्रवणाद्यनुतिष्ठतो मनोनिग्रहद्वारा तत्त्वज्ञानसिद्धिरित्युत्तरमाह—**नेत्युच्यत इति**। तृतीयपादं व्याचष्टे—**किं चेति**। लीयते स्थानद्वयमिति शेषः। चतुर्थपादमाकाङ्क्षाद्वारा विवृणोति—**सुप्रसन्नमित्यादिना**।।४२।। २५

उपायेन निगृह्णीयादित्युक्तम्। तमेवोपायं वैराग्यरूपमुपदिशति—**दुःखमिति**। ज्ञानाभ्यासाख्यमुपायान्तरमुपन्यस्यति—**अजमिति**। अक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति—**कः स इति**। तत्र पूर्वार्धं व्याकरोति—**उच्यत इत्यादिना**। **वैराग्यभावना** तत्र तत्र द्वैतविषये दोषानुसन्धानेन वैतृष्ण्यभावना। तया कामभोगान्मनो निरोद्धव्यमित्यर्थः। द्वितीयार्धं ज्ञानाभ्यासविषयं व्याकरोति—**अजमित्यादिना**।।४३।। ३०

---

१. उत्सेक इति—अत्र जीवन्मुक्तिविवेके श्रीविद्यारण्यस्वामिपादाः सम्प्रदायसिद्धामाख्यायिकां वदन्ति। तथाहि—कस्यचित् पक्षिणोऽण्डानि तीरस्थानि उदधिः उत्सेकेनापजहार। तं च समुद्रं शोषयिष्यामीति प्रवृत्तः स पक्षी स्वमुखाग्रेणैकैकं जलबिन्दुं बहिः प्रक्षिपति स्म। तदा बहुभिः बन्धुवर्गैर्वार्यमाणोऽप्यनुपरतः प्रत्युत तानपि सहकारिणो वव्रे। तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतस्सर्वानवलोक्य कृपालुर्नारदो गरुडं समीपे प्रेषयामास। ततो गरुडपक्षवातेन शुष्यन् समुद्रो भीतः तान्यण्डान्यानीय पक्षिणे ददौ। एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णातीति। ३५

**लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः। सकषायं विजानीयात् समप्राप्तं न चालयेत्।।४४।।**

**नाऽऽस्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत्। निश्चलं निश्चरच्चित्तमेकीकुर्यात् प्रयत्नतः।।४५।।**

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं सम्बोधयेन्मनः। आत्मविवेकदर्शनेन योजयेत्। चित्तं मन इत्यनर्थान्तरम्। विक्षिप्तं च कामभोगेषु शमयेत्पुनः। एवं पुनः पुनरभ्यस्यतो लयात्सम्बोधितं विषयेभ्यश्च ५ व्यावर्तितं नापि साम्यमापन्नमन्तरालावस्थं सकषायं सरागंबीजसंयुक्तं मन इति विजानीयात्। ततोऽपि यत्नतः साम्यमापादयेत्। यदा तु समप्राप्तं भवति। समप्राप्त्यभिमुखीभवतीत्यर्थः। ततस्तन्न विचालयेद् विषयाभिमुखं न कुर्यादित्यर्थः।।४४।।

समाधित्सतो योगिनो यत्सुखं जायते तन्नाऽऽस्वादयेत्। तत्र न रज्येतेत्यर्थः। कथं तर्हि? निःसङ्गो निस्पृहः प्रज्ञया विवेकबुद्ध्या–यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेति विभावयेत्। ततोऽपि १० सुखरागान्निगृह्णीयादित्यर्थः। यदा पुनः सुखरागान्निवृत्तं निश्चलस्वभावं सन्निश्चरद् बहिर्निर्गच्छद्भवति चित्तं ततस्ततो नियम्योक्तोपायेनाऽऽत्मन्येवैकीकुर्यात् प्रयत्नतः। चित्स्वरूपसत्तामात्रमेवाऽऽपादयेदित्यर्थः।।४५।।

अनुभूतिस्वरूपाचार्यटीका

समाधिं कुर्वतो ब्रह्मसाक्षात्कारस्य प्रतिबन्धका लयविक्षेपकषायसुखरागाः। तत्र लयो निद्रा, विक्षेपो मनोरथः, कषायश्चित्तस्य ताटस्थ्यं, आलस्यं अन्तरालावसादः, सुखाभिलाषः तेषां निरासाय अजं पूर्णं ब्रह्मैवास्मीति

१५ आनन्दगिरिटीका

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्तितं मनो रागप्रतिबद्धं श्रवणमनननिदिध्यासनाभ्यासप्रसूतसम्प्रज्ञातसमाधिनाऽसम्प्रज्ञातसमाधिपर्यन्तेन [योजयितुं] ततोऽपि प्रतिबन्धाद् व्यावर्तनीयमित्याह—**लय इति**। श्लोकाक्षराणि व्याकरोति—**एवमित्यादिना**। ज्ञानाभ्यासःश्रवणाद्यावृत्तिर्विषयेषु क्षयिष्णुत्वादिदोषदर्शनेन वैतृष्ण्यं वैराग्यम्, लयो निद्रा। सम्प्रबोधनमेवाभिनयति—**आत्मेति**। मनसि प्रकृते किमिति चित्तमुच्यते, तत्राऽऽह—**चित्तमिति**। विक्षिप्तं २० विप्रसृतं शमयेद् व्यावर्तयेदिति यावत्। पुनरित्यत्र विवक्षितमर्थमाह—**एवमिति**। उभयतो व्यावर्तितं मनस्तर्हि निर्विशेषब्रह्मरूपतां गतमित्याशङ्क्याऽऽह—**नापीति**। अन्तरालावस्थमनसः स्वरूपं तृतीयपादावष्टम्भेन स्पष्टयति—**सकषायमिति**। रागस्य बीजत्वं पराचीनविषयप्रवृत्तिं प्रति प्रतिपत्तव्यम्। यथोक्तं मनो ज्ञात्वा किं कर्तव्यमित्यपेक्षायामाह—**ततोऽपीति**। अन्तरालावस्था पञ्चम्या परामृश्यते। लयावस्थादि दृष्टान्तयितुमपिशब्दः। यत्नतः सम्प्रज्ञातसमाधेरिति यावत्। साम्यमसम्प्रज्ञातसमाधिमित्यर्थः। चतुर्थपादस्यार्थमाह—**यदा त्विति**। समाधिद्वयद्वारेण २५ समं निर्विशेषं परिपूर्णं ब्रह्मरूपं प्राप्य मनस्तन्मात्रतया समाप्तं चेदप्राप्तप्रतिषेधः स्यादित्याशङ्क्याऽऽह—**समप्राप्तीति**। ततो निर्विशेषवस्तुप्राप्त्याभिमुख्यादनन्तरमित्यर्थः। किं तन्मनसश्चालनं यत्प्रतिषिध्यते, तत्राऽऽह—**विषयेति**।।४४।।

समाधित्सायां यत्सुखमुत्पद्यते तद्विषयाभिलाषादपि मनो निरोद्धव्यमित्याह—**नाऽऽस्वादयेदिति**। तत्रेति समाध्यवस्थोच्यते। किं तु तस्यामवस्थायां सुखं यदुपलभ्यते तदज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकज्ञानेन निःस्पृहः सन् भावयेदित्याह—**निस्सङ्ग इति**। किं च यच्चित्तं प्राचीनवैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं ३० तद्यदि स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत् तदा सम्प्रज्ञातसमाधेरसम्प्रज्ञातसमाधिपर्यन्तात्प्रयत्नात् तदात्मन्येवैकीकृत्य तन्मात्रमापाद्य परिशुद्धपरिपूर्णब्रह्मात्मकः स्वयं तिष्ठेदित्याह—**निश्चरदिति**। प्रथमपादाक्षराणि योजयति—**समाधित्सत इति**। तस्य समाध्यवस्थायामिति शेषः। द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति—**कथमित्यादिना**। निःस्पृहो यथोक्ते सुखेऽनुरागरहितः सन्नित्यर्थः। विवेकरूपा बुद्धिरागन्तुकस्य रज्जुसर्पवत्कल्पितत्वमित्येवमात्मिका, तया भावयेदिति सम्बन्धः। भावनाप्रकारमभिनयति—**यदित्यादिना**। प्रथमार्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थं निगमयति—**ततोऽपीति**। ३५ उत्तरार्धं विभजते—**यदेत्यादिना**। पूर्वोक्तसमाध्यनुरोधादात्मन्येव निश्चलस्वभावं सच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरद्भवतीति सम्बन्धः। तच्च चित्तं बाह्यविषयाभिमुख्यादुक्तोपायेन ज्ञानाभ्यासादिना व्यावर्त्याऽऽत्मन्येव परस्मिन् ब्रह्मणि प्रयत्नतः सम्प्रज्ञातसमाधिवशादेकीकुर्यात्। असम्प्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवाऽऽपादयेदित्यर्थः। तदेव स्पष्टयति—**चित्स्वरूपेति**।।४५।।

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः। अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा।।४६।।**
**स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्। अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते।।४७।।**
**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते। एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते।।४८।।**

**इति गौडपादीयकारिकायामद्वैताख्यं तृतीयं प्रकरणम्**

**यथोक्तोपायेन निगृहीतं चित्तं यदा सुषुप्ते न लीयते, न च पुनर्विषयेषु विक्षिप्यते, अनिङ्गनमचलं निवात-प्रदीपकल्पम्। अनाभासं न केनचित्कल्पितेन विषयभावेनावभासत इति। यदैवंलक्षणं चित्तं तदा निष्पन्नं ब्रह्म ब्रह्मस्वरूपेण निष्पन्नं चित्तं भवतीत्यर्थः।।४६।।** ५

**यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्वस्थं स्वात्मनि स्थितम्। शान्तं सर्वानर्थोपशमरूपम्। सनिर्वाणं निर्वृतिर्निर्वाणं कैवल्यं सह निर्वाणेन वर्तते। तच्चाकथ्यं न शक्यते कथयितुम्। अत्यन्तासाधारणविषयत्वात्। सुखमुत्तमं निरतिशयं हि तद् योगिप्रत्यक्षमेव। न जातमित्यजं यथा विषयविषयम्। अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तं सत् स्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः।।४७।।** १०

**सर्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत्सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन, न परमार्थ-**

अनुभूतिस्वरूपाचार्यटीका

सम्प्रज्ञातसमाधिरूपप्रत्ययप्रवाहकरणेन यत्र यत्र मनो धावति तत्र तत्र क्षयिष्णुत्वादिदोषानुसन्धानेन च क्रमेण क्षये कदा ब्रह्म सम्पन्नं चित्तं भवतीति, तदाह—**यदा न लीयत इति**।।४२-४३-४४-४५-४६।।

येन ब्रह्मरूपेणासम्प्रज्ञातसमाधौ चित्तं व्यवतिष्ठते तद् विशिनष्टि—**स्वस्थमित्यादिना**। आत्मसत्यानुबोधेन लक्ष्यते प्राप्यत इति तथोक्तम्। यथेक्षुक्षीरादिमाधुर्यं स्वप्रत्यक्षमेव, तथा योगिनोऽसम्प्रज्ञातसमाधिनिष्ठस्यैवात्यन्ता-साधारणविषयत्वादकथ्यमित्यर्थः।।४७।। १५

पूर्वग्रन्थेषूक्तानां मनोनिरोधादीनामुपायानां व्यावहारिकमेव सत्यत्वं मन्दाधिकारिविषयत्वात्। अतो नोपाय-सत्यत्वेनाद्वैतविरोधः। परमार्थसत्यं त्वजं सर्वमिति तद्दर्शनस्यैवोत्तमाधिकारिविषयस्य तत्त्वावेदनं प्रामाण्यमित्याह—न **कश्चिदिति**।।४८।। २०

इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते गौडपादीयभाष्यटिप्पणेऽद्वैताख्यं तृतीयं प्रकरणम्।

आनन्दगिरिटीका

कदा पुनरिदं चित्तं ब्रह्ममात्रमापद्यते, तत्राऽऽह—**यदेति**। त्रिविधप्रतिबन्धविधुरं विषयाकाररहितं यदा चित्तमवतिष्ठते तदा ब्रह्म सम्पन्नं भवतीत्यर्थः। अक्षराणि व्याचष्टे—**यथोक्तेनेत्यादिना**। उपायो ज्ञानाभ्यासादिः। निगृहीतं विषयेभ्यो विमुखीकृतं न लीयते, न निद्रापारवश्येन कारणात्मतां गतमित्यर्थः। अचलं रागादिवासना-शून्यमित्यर्थः। अचलत्वे दृष्टान्तः—**निवातेति**। किं तु ब्रह्माकारेणेत्येवंलक्षणं चित्तं यदा सम्पद्यते तदेति योजना। निष्पन्नं ब्रह्मेत्युक्तमेव स्फुटयति—**ब्रह्मस्वरूपेणेति**।।४६।। २५

असम्प्रज्ञातसमाध्यवस्थायां येन रूपेण चित्तमभिनिष्पद्यते तद् ब्रह्मस्वरूपं विशिनष्टि—**स्वस्थमिति**। ज्ञेयेना-व्यतिरिक्तमिति शेषः। तत्र विदुषां संमतिमुदाहरति—**सर्वज्ञमिति**। यथोक्तमित्यसम्प्रज्ञातसमाधिलक्षणं ब्रह्मेत्यर्थः। तस्य परमंपुरुषार्थरूपतामाह—**सुखमिति**। वैषयिकं सुखं व्यवच्छेत्तुं परमार्थेति विशेषणम्। किं तत्र ज्ञानेनेत्या-शङ्क्याऽऽह—**आत्मेति**। तस्य सत्यस्यागमाचार्यानुसारिणा बोधेन लक्ष्यते प्राप्यते ब्रह्मेति तथोच्यते। तस्य स्वमहिमप्रतिष्ठत्वमाह—**स्वात्मनीति**। सर्वस्य त्रिविधस्यानर्थस्योपशमेनोपलक्षितत्वादपि पुरुषार्थत्वसिद्धिरित्याह—**सर्वेति**। निरतिशयानन्दाभिव्यक्तिर्निरवशेषानर्थोच्छित्तिश्चेत्येवंलक्षणं मोक्षमाचक्षते। तत्कथमिदं ब्रह्मेत्याशङ्क्याऽऽह—**सनिर्वाणमिति**। तस्य क्षीरगुडादिमाधुर्यभेदस्येव स्वानुभवमात्राधिगम्यत्वादवाच्यत्वमाह—**तच्चेति**। यदुक्तं परमार्थसुखमिति, तदिदानीमुपपादयति—**सुखमिति**। तर्हि सर्वेषामेव तद् भूयादित्याशङ्क्याऽऽह—**योगीति**। ज्ञानस्याजातत्वे वैधर्म्यदृष्टान्तमाह—**यथेति**।।४७।। ३० ३५

उक्तानामुपायानां परमार्थसत्यत्वे सत्यद्वैतहानिः। अन्यथा तदप्रमितिरित्याशङ्क्याऽऽह—**न कश्चिदिति**। तत्र हेतुमाह—**सम्भवोऽस्येति**। श्लोकाक्षराणि व्याकर्तुं भूमिकां व्याकरोति—**सर्वोऽपीति**। व्यावहारिकसत्यत्वमेवोपायानां

**सत्येति। परमार्थसत्यं तु न कश्चिज्जायते जीवः कर्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण। अतः स्वभावतोऽजस्यास्यैकस्याऽऽत्मनः सम्भवः कारणं न विद्यते नास्ति। यस्मान्न विद्यतेऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत्। पूर्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन् सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किंचिन्न जायत इति।।४८।।**

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ
५ गौडपादीयागमशास्त्रभाष्येऽद्वैताख्यं तृतीयप्रकरणम्।।

आनन्दगिरिटीका

न परमार्थसत्यत्वमित्यङ्गीकृत्य पारमार्थिकसत्यस्य प्रतिपत्त्युपायत्वेनैवोक्तेत्याह—**मृदिति**। यदुक्तं मनोनिग्रहादीनां परमार्थत्वेऽद्वैतहानिरिति, तत्राऽऽह—**नेत्यादिना**। तेषामपरमार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न, व्यावहारिकसत्यानामपि तत्प्रमितिहेतुत्वस्य प्रतिबिम्बवदुपपत्तेरिति भावः। उपायानां व्यावहारिकसत्यत्वेनैव पारमार्थिकं सत्यत्वं किं न स्यादिति,
१० तत्राऽऽह—**परमार्थेति**। तदेव स्पष्टयति—**कर्तेति**। स्वभावतोऽजत्वं हेतूकर्तव्यम्। तत्रैव हेत्वन्तरमाह—**अत इति**। हेत्वन्तरमेव स्पष्टयति—**यस्मादिति**। उत्तरार्धं व्याचष्टे—**पूर्वेष्विति**। पूर्वेषु ग्रन्थेष्विति शेषः। इतिशब्दोऽद्वैतप्रकरणपरिसमाप्तिं द्योतयति।।४८।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां
गौडपादीयकारिकाभाष्यटीकायां अद्वैताख्यं तृतीयप्रकरणम्[1]

---

१५ १. अयमत्र संग्रहः—"प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इति मोक्षार्थिना विज्ञेयत्वेन श्रुतिनिर्दिष्टे चतुर्थे पादे प्रपञ्चोपशमः इत्यंशं वैतथ्यप्रकरणेन प्रसाध्य "अद्वैतमि"त्युक्ताद्वैतरूपत्वप्रदर्शनायाचार्यैरद्वैतप्रकरणमारब्धम्। "द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते। तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते।।" इति वार्तिककारोक्तरीत्या द्वैताभावोपलक्षितं ब्रह्मैवाद्वैतपदार्थः। अत्र न विद्यते द्वैतं यत्रेति बहुव्रीहिसमास आश्रितः। न द्वैतमद्वैतमिति विग्रहे तु केवलप्रपञ्चाभावो लभ्येत। स च
२० शून्यवादानुकूलः। अत एव कोशे बुद्धनामसु "अद्वयवादी"ति बुद्धस्य नामान्तरमनुक्रम्यते। तदिदमद्वैतं युक्त्या श्रुत्या चात्र समर्थ्यते।

यद्यपि प्रपञ्चमिथ्यात्वं वैतथ्यप्रकरणेन व्यवस्थापितमेव, तथाप्यत्र द्वैतस्य केवलं मानसत्वं स्वप्नदृष्टान्तेन समर्थ्यते। अपि च जीवनानात्वं व्यवहारसिद्धं सुखादिवैचित्र्यं च विभिन्नजीवेषु कथमुपपादनीयमिति शङ्काऽत्र आकाशघटाकाशदृष्टान्तेन सम्यगुपपाद्यते। कर्मोपासनकाण्डयोर्वेदस्थयोर्मन्दाधिकारिविषयत्वेन
२५ सार्थक्यं च निर्णीयते। अद्वैतसाक्षात्कारे मार्गद्वयं श्रीमधुसूदनस्वामिभिः गीताविवरणे प्रतिपादितम्। एकः विचारमार्गेण प्रपञ्चाभावं ब्रह्मणि ज्ञात्वा जीवस्य तत्र योजनम्। अयमेवास्पर्शयोगः। न विद्यते वर्णाश्रमादिधर्मस्पर्शः पापादिमलं च यस्मिन् अद्वैतात्मज्ञाने सोऽस्पर्शः, स च ब्रह्मणा योजनात् योगः इति नाम्नैव स्फुटीकृतः। अपरश्च मार्गः ब्रह्मणि निर्विशेषे मनसः ऐकाग्र्यपरम्परया मनसो नाशस्तेन ब्रह्मात्मना संस्थितिरूपा जीवन्मुक्तिः। मार्गद्वयमप्यत्र विस्तरेण प्रत्यपादि श्रीगौडपादाचार्यैः। ध्यानयोगसाधनानि च
३० विशेषतः प्रावर्णि। भारतीयदर्शनेष्वथवा जगत्यां यानि यानि दर्शनानि भूतभविष्यद्वर्त्तमानकालेषु सन्ति परिकल्पयिष्यमाणानि वा तेभ्यस्सर्वेभ्यो विशिष्टतममिदं वैदिकदर्शनं, "स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्। परस्परं विरुध्यन्ते तैरयं न विरुध्यते"। इति कारिकोक्तरीत्या वेदान्तदर्शनस्य स्वहस्तपादादिषु नरस्येव द्वैतदर्शनेषु न परकीयत्वबुद्धिः। येन दर्शनान्तरावलम्बिषु परकीयत्वबुद्धिस्तेषु द्वेषश्च प्रादुर्भवेत्। अतः सर्वैरेव द्वैतवादिभिः स्वस्वाभिमतोपास्यदेवतापार्थक्ये सत्यपि
३५ परमपुरुषार्थसाधनत्वेनाद्वैतदर्शनानुसरणं श्रेयसे भवेदिति दिक्। अत एव "कृष्णात्परं किमपि तत्त्वमहं न जाने" इति, "अद्वैतवीथीपथिकैरुपास्याः स्वाराज्यसिंहासनबद्धदीक्षाः। शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेन।।" इति च वदन्तः श्रीमधुसूदनसरस्वत्यः तथा 'सर्वं सदाशिव सहस्व ममापराधं, स्वामिन्ननन्यशरणः शरणं गतोऽस्मि" इति वदन्तः श्रीमदप्पय्यदीक्षिताश्चाद्वैतसाम्राज्यधुरन्धराः अस्मिन् भारते वर्षे विरेजुः।

## अथालातशान्त्याख्यं चतुर्थं प्रकरणम्

[1]ज्ञानेनाऽऽकाशकल्पेन धर्मान् यो गगनोपमान्। ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम्।।१।।

**ओङ्कारनिर्णयद्वारेणाऽऽगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्य ''एतदुत्तमं सत्यमि''त्युपसंहारः कृतः अन्ते। तस्यैतस्यागमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च। तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितं क्लेशानास्पदत्वादात्मैकत्व-बुद्धिरेव सम्यग्दर्शनमित्यद्वैतदर्शनस्तुतये[2]। तदिह विस्तरेणान्योन्यविरुद्धतयाऽसम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैत-दर्शनसिद्धिरुपसंहर्तव्या[3]ऽऽवीतन्यायेनेत्यलातशान्तिरारभ्यते। तत्राद्वैतदर्शनसम्प्रदायकर्तुरद्वैतस्वरूपेणैव नमस्का-रार्थोऽयमाद्यश्लोकः। आचार्यपूजा ह्यभिप्रेतार्थसिद्ध्यर्थेष्यते शास्त्रारम्भे। आकाशेनेषदसमाप्तमाकाशकल्पमाकाशतुल्य-** ५

अनुभूतिस्वरूपाचार्यटीका

यदाश्रयाः प्रसिद्ध्यन्ति विवादा वादिनामिह। अविरुद्धः स्वयंसिद्धः सोऽहं संवित्स्वभावकः।।

ग्रन्थारम्भेऽन्यार्थोऽप्योङ्कारोपदेशः स्वभावान्मङ्गलाय भवतीति नान्यन्मङ्गलमाचरितम्। अन्ते च परं देवं नमस्करिष्यति। सन्मङ्गलाश्च आद्यन्तमध्यमङ्गलाश्च ग्रन्थाः प्रचारिणः प्रायेणेति मध्येऽपि देवताचार्यनमस्कारेण मङ्गलमाचरति—**ज्ञानेनेति**। १०

आनन्दगिरिटीका

आद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्याऽऽदावोङ्कारोच्चारणवदन्ते परदेवताप्रणाम-वन्मध्येऽपि परदेवतारूपमुपदेष्टारं प्रणमति—**ज्ञानेनेति**। पूर्वोत्तरप्रकरणसम्बन्धसिद्ध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनुद्रवति—**ओङ्कारेति**। अद्वैत इत्यद्वैतोपलक्षितं तृतीयं प्रकरणमुच्यते। चतुर्थं प्रकरणमवतारयितुमुपयुक्त-मर्थान्तरमनुवदति—**तस्येति**। द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता गृह्यन्ते। वैनाशिका नैरात्म्यवादिनः। रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम्। पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुत्रोपयुज्यते, तत्राऽऽह—**क्लेशेति**। पातनिकामेवं कृत्वा संमनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते—**तदिहेति**। तदसम्यग्दर्शनत्वमिति सम्बन्धः। आवीतन्यायो व्यतिरेकन्यायः। यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वेऽवगतेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेकोऽपि व्यभिचारशङ्कानिरासित्वेन व्याप्तिनिश्चयार्थमिष्यते। तथा तर्कतः सम्भावितस्याऽऽगमेनावगतस्यापि प्रतिपक्षभूत-वादान्तरापाकरणप्रपञ्चमन्तरेण पाक्षिकासम्यक्त्वशङ्का स्यादद्वैतदर्शनस्येति तत्प्रतिषेधेन तत्सिद्धिरुपसंहर्तव्येत्यलात-शान्तिदृष्टान्तोपलक्षितमारभ्यते प्रकरणमित्यर्थः। विशेषेण स्पष्टमितो वीतः, स न भवतीत्यवीतः। अवीत एवाऽऽवीतः। तेन न्यायेन व्यतिरेकेणेति यावत्। प्रकरणस्य तात्पर्यमेवं दर्शयित्वा प्रथमश्लोकस्य तात्पर्यमाह—**तत्रेति**। तत्र चतुर्थप्रकरणं सप्तम्या परामृश्यते। किमित्यद्वैतरूपेणाऽऽचार्यो नमस्क्रियते, तत्राऽऽह—**आचार्येति**। १५ २० २५

---

१. आकाशकल्पेन ज्ञेयाभिन्नेन ज्ञानेन गगनोपमान् धर्मान् सम्बुद्धवान्। गगनोपमाः धर्माः जीवाः ते ज्ञेयाः, तथा च सर्वजीवाभिन्नज्ञानरूपी नारायणः सर्वात्मेत्यर्थः।

२. ''°दर्शनं स्तूयते' इति पा.।

३. आवीतन्यायः—सांख्यतत्त्वकौमुद्यामुक्तं **श्रीवाचस्पतिमिश्रैः**—अनुमानं द्विविधं वीतमवीतं च, अन्वयमुखेन प्रवर्तमानं विधायकं वीतं, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्। तत्रावीतं शेषवत्। शेषः परिशेषः स एव विषयः यस्यानुमानज्ञानस्य तत् शेषवत्। तदुक्तं भाष्ये–प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे सम्प्रत्ययः शेषः। अयं च व्यतिरेकी—यथा पटः तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्यादर्शनात्, यत् यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरं कार्यं गृह्यते, न चात्र पटे गुरुत्वान्तरं गृह्यते तन्तुगुरुत्वात्, तस्मात्ततो न भिन्न इति। प्रकृते च यद्यत् दर्शनमन्योन्यविरुद्धं तदसम्यग्दर्शनम्। यत् सम्यग्दर्शनं तन्नान्यदर्शनेन विरुध्यते, वेदान्तदर्शनं च नान्येन विरुध्यते। ''परस्परं विरुध्यन्ते तैरयं न विरुध्यते।'' यथा देहः स्वहस्तपादादिभिः इत्युक्तं प्राक्। ३० ३५

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः। अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम्।।२।।**

**मेतत्। तेनाऽऽकाशकल्पेन ज्ञानेन, किम्, धर्मानात्मनः किंविशिष्टान्? गगनोपमान् गगनमुपमा येषां ते गगनोपमास्तानात्मनो धर्मान्। ज्ञानस्यैव पुनर्विशेषणम्—ज्ञेयैर्धर्मैरात्मभिरभिन्नमग्न्युष्णवत्सवितृप्रकाशवच्च ज्ञानं, तेन ज्ञेयाभिन्नेन ज्ञानेनाऽऽकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन गगनोपमान् धर्मान् यः सम्बुद्धः सम्बुद्धवानित्ययमेवेश्वरो यो नारायणाख्यस्तं वन्देऽभिवादये द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं पुरुषोत्तममित्यभिप्रायः। उपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति।।१।।**

**अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये। स्पर्शनं स्पर्शः सम्बन्धो न विद्यते यस्य योगस्य केनचित् कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव, वै नामेति ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः। स च सर्वसत्त्वसुखोः। भवति कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखरूपः, यथा तपः। अयं तु न तथा। किं तर्हि? सर्वसत्त्वानां सुखः। तथेह भवति कश्चिद्विषयोपभोगः सुखो न हितः। अयं तु सुखो हितश्च। नित्यमप्रचलितस्वभावत्वात्। किं चाविवादो विरुद्धवचनं विवादः पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते सोऽविवादः। कस्मात्? यतोऽविरुद्धश्च। य ईदृशो योगो देशित उपदिष्टः शास्त्रेण तं नमाम्यहं प्रणमामीत्यर्थः।।२।।**

अनुभूतिस्वरूपाचार्यटीका

वृत्तानुवादपूर्वकं चतुर्थप्रकरणारम्भं सम्भावयति—**ओङ्कारेत्यादिना**। आवीतन्यायेन = व्यतिरेकन्यायेन, यथा यत्कृतकं तदनित्यमित्यन्वयबलादनित्यत्वावगमेऽपि यदनित्यं न भवति तत्कृतकमपि न भवतीति व्यतिरेक इष्यते तार्किकैः व्यभिचारशङ्कानिरासेन व्याप्तिनिश्चयाय, तथा तर्कतः सम्भावितस्यागमेनावगतस्यापि प्रतिपक्षभूतवादान्तरापाकरणं यावन्न प्रपञ्च्यते तावत् पाक्षिकासम्यक्त्वाशङ्काऽद्वयदर्शनस्य न व्यावर्तत इति तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्तव्येत्यलातशान्तिदृष्टान्तोपलक्षितं प्रकरणमारभ्यत इत्यर्थः। आकाशस्य जडत्वाधिक्यात् स्वप्रकाशं ज्ञानमाकाशेनेषदसमाप्तमित्यर्थः।।१।।

सर्वसत्त्वानां देहेन्द्रियलक्षणानां निरायाससुखहेतुत्वात् सुखयतीति सुखः। कर्तरि कृत्प्रत्ययोऽत एव पुँल्लिङ्गता। नपुंसकलिङ्गता तु भावसाधनस्य। दृष्टाह्लादहेतुः सुखः, परोक्षाह्लादहेतुर्हितः। शरीरपातादूर्ध्वमपि परमानन्दाव्यभिचारादित्यर्थः। उक्तं हि—राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्।। इति। अविरुद्धः आत्मप्रकाशत्वात्। न हि आत्मप्रकाशः कस्यापि विरुद्ध्यत इत्यर्थः।।२।।

आनन्दगिरिटीका

अभिप्रेतार्थः शास्त्रस्याविघ्नेन परिसमाप्तिस्तदर्थे विप्रतिपत्त्यादिव्यावृत्तिश्च। आकाशस्य जडत्वाधिक्याज्ज्ञानं स्वप्रकाशमाकाशेनेषदसमाप्तं वक्तव्यम्। विभुत्वादावुपमा द्रष्टव्या। बहुवचनमुपाधिकल्पितभेदाभिप्रायम्। तेषामपि चिन्मात्रत्वं विवक्षित्वोक्तम्—**ज्ञानस्यैवेति**। तेनेत्यादि पुनरनुवादेनान्वयमन्वाचष्टे। आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत। ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमेश्वरस्येति भावः। ननु प्रकरणे प्रारभ्यमाणे प्रतिपाद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राऽऽह—**उपदेष्टृति**।।१।।

इदानीमद्वैतदर्शनयोगस्तुतये तन्नमस्कारं प्रस्तौति—**अस्पर्शेति**। श्लोकस्य तात्पर्यमाह—**अधुनेति**। तस्य च स्तुतिस्तत्साधनेषु प्रवृत्तावुपयुज्यते। सम्प्रत्यक्षराणि व्याकुर्वन्नस्पर्शयोगशब्दं व्याकरोति—**स्पर्शनमिति**। योगस्यान्यसम्बन्धप्रसङ्गाभावात् कथमस्पर्शत्वमित्याशङ्क्याऽऽह—**ब्रह्मेति**। निपातयोरर्थं कथयति—**वै नामेति**। सर्वेषां सत्त्वानां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति—**स चेति**। सुखहेतावपि ब्रह्मस्वभावे विवक्षितं विशेषं दर्शयति—**भवतीति**। हितविशेषणस्य तात्पर्यमाह—**तथेह भवतीत्यादिना**। तस्य हितत्वे हेतुमाह—**नित्यमिति**। तस्यैव विशेषणान्तरमाह—**किं चेति**। तत्र हेतुं प्रश्नपूर्वकमाह—**कस्मादिति**। आत्मप्रकाशत्वाद् ब्रह्मस्वभावस्याविरुद्धत्वम्। न हि कस्यचिदात्मप्रकाशो विरुद्धो भवतीत्यर्थः। यथोक्तयोगज्ञानमार्गस्य सम्प्रदायागतत्वमाह—**य ईदृश इति**। तन्नमस्कारव्याजेन तस्य स्तुतिस्तदुपायेषु श्रोतृप्रवृत्त्यर्थमत्र विवक्षितेत्याह—**तं नमामीति**।।२।।

**भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि। अभूतस्यापरे धीरा विवदन्तः परस्परम्।।३।।**
**भूतं न जायते किंचिदभूतं नैव जायते। विवदन्तो द्वया ह्येवमजातिं ख्यापयन्ति ते।।४।।**
**ख्याप्यमानामजातिं तैरनुमोदामहे वयम्। विवदामो न तैः सार्धमविवादं निबोधत।।५।।**
**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः। अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति।।६।।**
**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा। प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति।।७।।** ५

**कथं द्वैतिनः परस्परं विरुध्यन्त इति। उच्यते। भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि सांख्या न सर्व एव द्वैतिनः। यस्मादभूतस्याविद्यमानस्यापरे वैशेषिकाः नैयायिकाश्च धीरा धीमन्तः प्राज्ञाभिमानिन इत्यर्थः। विवदन्तो विरुद्धं वदन्तो ह्यन्योन्यमिच्छन्ति जेतुमित्यभिप्रायः।।३।।**

**तैरेवं विरुद्धवदनेनान्योन्यपक्षप्रतिषेधं कुर्वद्भिः किं ख्यापितं भवतीति। उच्यते। भूतं विद्यमानं वस्तु न जायते किञ्चिद्विद्यमानत्वादेवाऽऽत्मवदित्येवं वदन्नसद्वादी सांख्यपक्षं प्रतिषेधति सज्जन्म। तथाऽभूतमविद्यमानम्-** १० **विद्यमानत्वान्नैव जायते शशविषाणवदित्येवं वदन् सांख्योऽप्यसद्वादिपक्षमसज्जन्म प्रतिषेधति। विवदन्तो विरुद्धं वदन्तो द्वया द्वैतिनोऽप्येतेऽन्योन्यस्य पक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात् ख्यापयन्ति प्रकाशयन्ति ते।।४।।**

**तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलम्, न तैः सार्धं विवदामः पक्षप्रतिपक्षग्रहणेन। यथा तेऽन्योन्यमित्यभिप्रायः। अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निबोधत हे शिष्याः!।।५।।**

**सदसद्वादिनः सर्वेऽपीति। पुरस्तात्कृतभाष्यः श्लोकः।।६।।** १५

अनुभूतिस्वरूपाचार्यटीका

अद्वैतदर्शनस्याविवादप्रपञ्चनाय द्वैतिनां तावद् विवादमाह—**भूतस्येत्यादिना**।।३-४-५।।

यत् वैतण्डिकः शिष्यो वा दूषणं द्वैतवादेषु पश्यति तदप्यस्माभिरनुज्ञायत इत्याह—**अजातस्यैवेति**।।६।।

यच्चाब्रह्मवादिभिः परिणामिब्रह्मवादेषु दूषणमुच्यते तदप्यनुमन्यामहे इत्याह—**न भवतीति**। मर्त्योत्पत्तेः

आनन्दगिरिटीका २०

अद्वैतदर्शनस्याविरुद्धत्वेनाविवादत्वं विशदीकर्तुं द्वैतिनां विवादं तावदुदाहरति—**भूतस्येति**। एवं विरुद्धं वदन्तो मिथो जेतुमिच्छन्तीत्याह—**विवदन्त इति**। प्रश्नपूर्वकं श्लोकाक्षराणि योजयति—**कथमित्यादिना**। एवकारार्थे हेतुमाह—**यस्मादिति**। प्राज्ञाभिमानिनो जातिमिच्छन्तीति पूर्वेण सम्बन्धः। चतुर्थपादं साध्याहारं व्याकरोति—**विवदन्त इति**।।३।।

पक्षद्वयनिषेधमुखेन सिद्धमर्थं कथयति—**भूतमित्यादिना**। श्लोकाक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति— २५ **तैरिति**। तत्राऽऽद्यं पादमवतार्य व्याकरोति—**उच्यत इति**। द्वितीयपादं विभजते—**तथेति**। द्वितीयार्धं विभजते—**विवदन्त इत्यादिना**। सदसदतिरिक्तवस्त्वभावाद् वस्तुत उत्पत्तेरनुपपत्तिरित्याह—**अर्थादिति**।।४।।

तर्हि प्रतिवादिभिरुक्तत्वादजातिरपि भवता प्रत्याख्येयेत्याशङ्क्याऽऽह—**ख्याप्यमानामिति**। प्रतिवादिभिः सह विवादाभावे फलितमाह—**अविवादमिति**। अक्षराणि व्याचष्टे—**तैरित्यादिना**। अद्वैतवादिनो द्वैतवादिभिर्विवादाभावे वैधर्म्यदृष्टान्तमाह—**यथा त इति**। चतुर्थपादार्थमाह—**अत इति**।।५।। ३०

जातस्यैव जन्मन आनर्थक्यादनवस्थानाच्चाजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि स्वीकुर्वन्तीति परपक्षमनुवदति—**अजातस्येति**। तत्र शिष्टाभीष्टदोषं प्रदर्श्याभ्यनुजानाति—**अजातो हीति**। के ते वादिनो यैरेवमिष्यते, तत्राऽऽह—**सदसदिति**। अवशिष्टानि श्लोकाक्षराणि व्याख्याततत्वात्र पुनर्व्याख्यानसापेक्षाणी-त्याह—**पुरस्तादिति**।।६।।

परिणामिब्रह्मवादे यदब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुज्ञातमेवेति मत्वाऽऽह—**न भवतीति**। अमृतं हि ब्रह्म ३५ न तद्रूपे स्थिते मर्त्यं भवितुमर्हति, स्थितरूपविरोधात्। न च मर्त्यं कार्यं स्वरूपे स्थिते प्रलयावस्थायाममृतं ब्रह्म सम्पद्यते। नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याऽऽह—**प्रकृतेरिति**। किं च यस्य परिणामवादिनः

**स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम्। कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः।।८।।**

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या। प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या।।९।।**

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः। जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया।।१०।।**

उक्तार्थानां श्लोकानामिहोपन्यासः। परवादिपक्षाणामन्योन्यविरोधख्यापितानुपपत्त्यनुमोदनप्रदर्श- ५ नार्थः।।७-८।।

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह–सम्यक्सिद्धिः [1]संसिद्धिस्तत्र भवा सांसिद्धिकी। यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः, सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति तथैव सा। तथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा। यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा, साऽपि न कालान्तरे व्यभिचरति देशान्तरे च। तथा सहजाऽऽत्मना सहैव जाता। यथा पक्ष्यादीनामाकाशगमनादिलक्षणा। अन्याऽपि या काचिदकृता १० केनचिन्न कृता। यथाऽपां निम्नदेशगमनादिलक्षणा। अन्याऽपि या काचित् स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया लोके। मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवतिः किमुताजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः।।९।।

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते, कल्पनायां वा को दोष इत्याह–जरा- मरणनिर्मुक्ताः। जरामरणादिसर्वविक्रियावर्जिता इत्यर्थः। के? सर्वे धर्माः, सर्व आत्मान इत्येतत् स्वभावतः प्रकृतितः।

१५ अनुभूतिस्वरूपाचार्यटीका

पूर्वममृतं ब्रह्म तद्रूपे स्थिते न भवति मर्त्यं तद्रूपविरोधात्। तथा मर्त्यं कार्यं स्वरूपे स्थिते प्रलयकाले नामृतं ब्रह्म सम्पद्यते। नष्टे तु स्वरूपे तस्यैवाभावात्। अभावभूतस्याप्यभावरूपे स्थिते नष्टे वा नामृतत्वमित्याह— **प्रकृतेरिति**।।७।।

किञ्च यस्य परिणामवादिनः स्वभावेनात्मनः परमात्माख्यो धर्मः कार्यभावापत्त्या मर्त्यतां गच्छति तस्य २० कृतकेन समुच्चयानुष्ठानेनामृतो मुक्तो जीवः कथं स्थास्यति निश्चलः? कथमपि न स्थास्यतीत्यर्थः।।८।।

प्रकृतेरन्यथाभावो न कथचिद्भविष्यतीत्युक्तम्, तत्र हेतुमाह—**यस्मादिति**। प्रासङ्गिकं प्रकृतिशब्दार्थं व्याख्याय प्रकृतेरन्यथात्वाभावे यत्फलति स्वसिद्धान्ते तत्किंपुनर्न्यायेनाऽऽह—**मिथ्याकल्पितेष्वपीति**।।९।।

आनन्दगिरिटीका

स्वभावेनामृतः सन् परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्या गच्छति तस्य कृतकेन समुच्चयानुष्ठा- २५ नेनामृतो जातो मुक्तो वक्तव्यः। स च कथं निश्चलः स्थातुं पारयति। यत्कृतकं तदनित्यमिति न्यायविरोधादि- त्याह—**स्वभावेनेति**। पुनरुक्तिमाशङ्क्य प्रत्यादिशति—**उक्तार्थानामिति**।।७-८।।

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति—**सांसिद्धिकीति**। श्लोकाक्षराणि व्याकुर्वन् प्रकृतेरन्यथात्वाभावे हेतुमाह—**यस्मादिति**। तस्मादजाऽमृतस्वभावा प्रकृतिर्न विपर्येतीति किमु वक्तव्यमिति योजना। कैमुतिकन्यायद्योतनार्थोऽपिशब्दः। विवक्षितं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते—**काऽसावित्यादिना**। ३० साङ्ख्योगमनुष्ठाय परिसमापनं संसिद्धिः। सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसम्पन्नानाम्। या काचित् स्वभावं न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति शेषः। प्रासङ्गिकं प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथात्वाभावे प्रागुक्ते स्वसिद्धान्ते यत्फलति तदिदानीं किंपुनर्न्यायेन कथयति—**मिथ्येति**।।९।।

प्रासङ्गिकीमेव जीवानां प्रकृतिं दर्शयितुं प्रक्रमते—**जरेति**। आत्मानो हि सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः। तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याऽऽह—**जरामरणमिति**। सर्वविक्रियाशून्ये स्वात्मनि ३५ विक्रियाकल्पनायां तद्वासनया स्वभावहानिः स्यादित्यर्थः। श्लोकाक्षराणि व्याकर्तुमाकाङ्क्षां दर्शयति—**किंविषयेति**।

---

१. संसिद्धिः प्रकृतिस्समे। स्वरूपं च स्वभावश्चेति त्रिकाण्डिवचनादेतेषां शब्दानां पर्यायत्वेऽपि पौनरुक्त्य- परिहाराय विशेषार्थकथनम्। सांख्याः कार्यकारणानन्यत्ववादिनः उत्पत्तेः पूर्वं कार्यं कारणरूपेण सदिति वदन्ति।

[1]**कारणं यस्य वै कार्यं कारणं तस्य जायते। जायमानं कथमजं भिन्नं नित्यं कथं च तत्।।११।।**

[2]**कारणाद् यद्यनन्यत्वं ततः कार्यमजं यदि। जायमानाद्धि वै कार्यात् कारणं ते कथं ध्रुवम्।।१२।।**

एवंस्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः। तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः।।१०।।

कथं सज्जातिवादिभिः सांख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः। कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यम्; कारणमेव कार्याकारेण परिणमते यस्य वादिन इत्यर्थः। तस्याजमेव सत् प्रधानादि कारणं महदादिकार्यरूपेण जायत इत्यर्थः। महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैः। विप्रतिषिद्धं चेदं जायतेऽजं चेति। नित्यं च तैरुच्यते प्रधानं, भिन्नं विदीर्णं स्फुटितमेकदेशेन सत् कथं नित्यं भवेदित्यर्थः। न हि सावयवं घटादि एकदेशस्फुटनधर्मि नित्यं दृष्टं लोक इत्यर्थः। विदीर्णं च स्यादेकदेशेन, अजं नित्यं चेत्येतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः।।११।।

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह—कारणादजात् कार्यस्य यद्यनन्यत्वमिष्टं त्वया ततः कार्यमजमिति प्राप्तम्। इदं

अनुभूतिस्वरूपाचार्यटीका

प्रासङ्गिकीमेव जीवानां प्रकृतिं निरूपयितुमुपक्रमते—**किंविषयेति**। किमाश्रयेत्यर्थः। प्रासङ्गिकं त्यक्त्वा पुनर्यत् साङ्ख्यपक्षे वैशेषिकेण दूषणमुच्यते तदभ्यनुज्ञानार्थमाह—**कारणमित्यादिना**।।१०-११।।

किञ्च, अभेदवादी प्रष्टव्यः—किं कारणाभिन्नं कार्यमुत कार्याभिन्नं कारणम्? आद्यं प्रत्याह—**कारणाद्यद्यनन्यत्वमिति**। **अत इति**। अस्मिन् पक्षे कार्यमजं स्यादित्यर्थः। द्वितीयमनुवदति—**यदि जायमानाद्धि वै कार्यादनन्यत्वमिति**। कारणस्येति शेषः। दूषयति—**कारणं ते कथं ध्रुवमिति**। इति योजना।।१२।।

आनन्दगिरिटीका

आश्रयविषयो विषयशब्दः। अप्रकृतं प्रकृतेराश्रयनिरूपणमित्याशङ्क्याऽऽह—**यस्या इति**। प्रश्नान्तरं प्रकरोति—**कल्पनायामिति**। तत्र पूर्वार्धमुत्तरत्वेन व्याकरोति—**आहेत्यादिना**। उत्तरार्धं विभजते—**एवंस्वभावा इति**।।१०।।

प्रासङ्गिकं परित्यज्य सांख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्यनुज्ञातमनुभाषते—**कारणमिति**। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याऽऽह—**जायमानमिति**। सावयवत्वाच्च प्रधानस्य नित्यत्वानुपपत्तिरित्याह—**भिन्नमिति**। श्लोकस्य तात्पर्यमाह—**कथमिति**। तत्र प्रथमपादाक्षराणि योजयति—**कारणमित्यादिना**। तदेव स्पष्टयति—**कारणमेवेति**। द्वितीयपादं विभजते—**तस्येति**। प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिशब्देनाहङ्कारादिग्रहणम्। तृतीयपादं व्याकरोति—**महदादीति**। विप्रतिषेधं विशदयति—**जायत इति**। चतुर्थपादार्थमाह—**नित्यं चेति**। विमतमनित्यं सावयवत्वाद् घटादिवदित्यभिप्रेत्य दृष्टान्तं साधयति—**न हीति**। साङ्ख्यस्मृतिविरुद्धमनुमानमित्याशङ्क्याऽऽह—**विदीर्णं चेति**।।११।।

किं च कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यम्? किं वा कार्याभिन्नं कारणमिति विकल्प्याऽऽद्यमनुवदति—**कारणादिति**। अतोऽस्मिन्पक्षे कार्यमजं स्यात्, तथाविधकारणाभिन्नत्वादिति दूषयति—**अत इति**। द्वितीयमनुद्रवति—**यदीति**। जायमानात्कार्यात् कारणमभिन्नं यदीति योजना। न तर्हि कारणं ध्रुवं भवितुमर्हति कार्याभिन्नत्वात् तस्य चाध्रुवत्वादिति दूषयति—**कारणमिति**। श्लोकस्य तात्पर्यमाह—**उक्तस्येति**। कार्यकारणयोरभेदवादे विप्रतिषेधो दर्शितः। तस्यैव दृढीकरणार्थमयं श्लोक इत्यर्थः। पूर्वार्धाक्षरोत्यमर्थमाह—**कारणादिति**। प्राप्तेरनिष्ट-

---

१. सांख्यमतं दूषयति—**कारणमिति**। भिन्नमित्यस्यार्थमाह—**विदीर्णमिति**।

२. श्लोके 'अतः कार्यम्' इति पा.। यदीत्यनर्थकम् कारणाद्यद्यनन्यत्वमित्यत्र यदिशब्दश्रवणात्। कार्यमजं स्यादित्यर्थः। जायमानात्कार्यात् 'अभिन्नं' इत्याध्याहृत्य कारणं कथं ध्रुवं भवेदिति योजनीयम्। **न हि कुक्कुट्या इति**। कार्यस्य कारणाभिन्नत्वमुत्पत्तिमत्त्वं च त्वया अङ्गीक्रियते, तच्चायुक्तम्, कारणाभेदे तद्वन्नित्यत्वापत्तिः, उत्पत्तिमत्त्वे च कारणाभेदो न वक्तव्यः, न हि उभयं स्वीकर्तुं शक्यं अर्धकुक्कुटीन्यायापत्तेरित्यर्थः।

**अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै। जाताच्च जायमानस्य न व्यवस्था प्रसज्यते।।१३।।**

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च। हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते।।१४।।**

चान्यद् विप्रतिषिद्धं कार्यमजं चेति तव। किं चान्यत् कार्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्यात् कारणमनन्यन्नित्यं ध्रुवं च ते कथं भवेत्। न हि कुक्कुट्या एकदेशः पच्यत एकदेशः प्रसवाय कल्प्यते।।१२।।

५ किं चान्यत्, अजादनुत्पन्नाद् वस्तुनो जायते यस्य वादिनः कार्यं, दृष्टान्तस्तस्य नास्ति वै, दृष्टान्ताभावेऽर्थादजान्न किञ्चिज्जायत इति सिद्धं भवतीत्यर्थः। यदा पुनर्जाताज्जायमानस्य वस्तुनोऽभ्युपगमः, तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्येत। अनवस्थानं स्यादित्यर्थः।।१३।।

"यत्र त्वस्य सर्वमात्मैवाभूत्" इति परमार्थतो द्वैताभावः श्रुत्योक्तस्तमाश्रित्याऽऽह—हेतोर्धर्माधर्मादिरादिः कारणं देहादिसङ्घातः फलं येषां वादिनाम्। तथाऽऽदिः कारणम् हेतुर्धर्माधर्मादिः फलस्य च देहादिसङ्घातस्य। एवं १० हेतुफलयोरितरेतरकार्यकारणत्वेनाऽऽदिमत्त्वं ब्रुवद्भिरेवं हेतोः फलस्य चानादित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः। न हि नित्यस्य कूटस्थस्याऽऽत्मनो हेतुफलात्मता सम्भवति।।१४।।

अनुभूतिस्वरूपाचार्यटीका

किञ्च, सांख्येन अजात्प्रधानादभिन्नं कार्यं जायत इत्येतत् दृष्टान्तेन बोधनीयम्। अजादभिन्नं जायत इत्यत्र च नोभयसम्मतो दृष्टान्तोऽस्तीत्याह—**अजाद्वै जायते यस्येति**।।१३।।

१५ एवं तावदन्योन्यपक्षप्रतिषेधेन यदजत्वं द्वैतिभिः ख्यापितं तदभ्यनुज्ञातं, कः खलु अनुकूलमाचरति प्रतिकूलमाचरेदिति न्यायेन। इदानीं श्रुत्याऽपि यद् द्वैतं निराकारि तदपि विद्वदनुभवानुसार्येवेत्यभ्यनुज्ञायत इत्याह—**यत्र त्वस्येति**। हेतोः फलस्य चानादिभावः कथं तैरुपवर्ण्यते हेतुफलात्मकः संसारोऽनादिरिति वदद्भिः। अथात्मपरिणामत्वात् हेतुफलयोरुपादानरूपेणानादित्वं, तत्राह—**न हीति**। निरंशस्य सकृत्परिणामे तत्रोपक्षयात् कार्यान्तरं न स्यादवशेषे च सांशत्वापातादनित्यत्वादिप्रसङ्ग इति भावः।।१४।।

२० आनन्दगिरिटीका

पर्यवसायित्वमाह—**इदं चेति**। प्रधानस्याजत्वं जायमानत्वं च विप्रतिषिद्धमित्युक्तम्। अन्यदित्युक्तमेव व्यनक्ति—**कार्यमिति**। अभेदेऽपि मायावादे नैष दोषः, कारणस्य कार्यादनन्यत्वानभ्युपगमात्, कार्यस्यैव कारणमात्रत्वाङ्गीकारादिति मत्वाऽऽह—**तवेति**। द्वितीयार्धं विभजते—**किं चान्यदिति**। अभेदवादेऽपि कार्यस्यानित्यत्वं कारणस्य नित्यत्वमिति व्यवस्था किमिति न भवतीत्याशङ्क्याऽऽह—**न हीति**।।१२।।

२५ किंच यस्य प्रधानवादिनो मते प्रधानादजादभिन्नं कार्यं जायते महदादीत्यभ्युपगम्यते तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः, तदवष्टम्भेनैव तेनार्थव्यवस्थापनात्। न चात्रोभयसम्प्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीत्याह—**अजादिति**। यद्यजान्नित्याद् वस्तुनो जायमानमभ्युपगन्तुं न शक्यते तर्हि जातादेव जायमानमभ्युपगम्यतामित्याशङ्क्याऽऽह—**जाताच्चेति**। सांख्यसमये दोषान्तरप्रदर्शनपरत्वं श्लोकस्य प्रतिजानीते—**किं चान्यदिति**। तत्र पूर्वार्धाक्षराणि योजयति—**अजादिति**। दृष्टान्ताभावेऽपि प्रमाणान्तरादर्थप्रतिपत्तिर्भविष्यतीत्याशङ्क्याऽऽह—**दृष्टान्तेति**। परस्य ३० खल्वनुमानाधीनमर्थपरिज्ञानम्। न च दृष्टान्ताभावेऽनुमानमवकल्पते। तस्मान्न सांख्यसमयः सम्भवतीत्यर्थः। द्वितीयार्धं व्याचष्टे—**यदा पुनरित्यादिना**।।१३।।

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन ख्यापितं वस्तुनोऽजन्यत्वमद्वैतवादिनाऽभ्यनुज्ञातम्; इदानीं द्वैतनिरसनमपि श्रौतं विद्वदनुभवानुसारित्वात् तेनाभ्यनुज्ञातमेवेत्याह—**हेतोरिति**। हेतुफलात्मकः संसारोऽनादिरिति वदद्भिस्तस्यानादित्वस्वभावो नैव वक्तुं शक्यते। हेतुफलयोरादिमत्त्वस्य कण्ठोक्तत्वादतो हेतुफलात्मकं द्वैतमनिरूपित- ३५ रूपमवस्तुभूतमित्यर्थः। श्लोकस्य तात्पर्यमाह—**यत्र त्विति**। तमाश्रित्य कार्यकारणात्मकस्य द्वैतस्य दुर्निरूपत्वमाहेति योजना। हेतुफलयोरात्मपरिणामत्वादादिमत्त्वमुपादानरूपेण चानादित्वमित्याशङ्क्याऽऽत्मनो निरंशस्य कूटस्थस्य नित्यस्य परिणामानुपपत्तेर्नैवमित्याह—**न हीति**।।१४।।

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च। तथा जन्म भवेत् तेषां पुत्राज्जन्म पितुर्यथा।।१५।।**
**सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया। युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत्।।१६।।**
**फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति। अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति।।१७।।**

**कथं तैर्विरुद्धमभ्युपगम्यत इति। उच्यते। हेतुजन्यादेव फलाद्धेतोर्जन्माभ्युपगच्छतां तेषामीदृशो विरोध उक्तो भवति यथा पुत्राज्जन्म पितुः।।१५।।**

**यथोक्तो विरोधो न युक्तोऽभ्युपगन्तुमिति चेन्मन्यसे–सम्भवे हेतुफलयोरुत्पत्तौ क्रम एषितव्यस्त्वयाऽन्वेष्टव्यो हेतुः पूर्वं पश्चात्फलं चेति। इतश्च युगपत्सम्भवे यस्माद्धेतुफलयोः कार्यकारणत्वेनासम्बन्धः। यथा युगपत्सम्भवतोः सव्येतरगोविषाणयोः।।१६।।** ५

**कथमसम्बन्ध इत्याह–जन्यात् स्वतोऽलब्धात्मकात् फलादुत्पद्यमानः सञ्शशविषाणादेरिवासतो न हेतुः प्रसिध्यति जन्म न लभते। अलब्धात्मकोऽप्रसिद्धः सञ्शशविषाणादिकल्पस्तव कथं फलमुत्पादयिष्यति। न हीतरेतरापेक्षसिद्धयोः शशविषाणकल्पयोः कार्यकारणभावेन सम्बन्धः क्वचिद् दृष्टः, अन्यथा वेत्यभिप्रायः।।१७।।** १०

अनुभूतिस्वरूपाचार्यटीका

एवं तावत् हेतुफलात्मकः संसारो नानादिः इत्युपपाद्य तयोः कार्यकारणभावोऽपि न सम्भवतीत्याह—**हेतोरादिरिति**। तत्त्वतो हेतुफलभावं निरूपयता हेतुर्लब्धसत्ताको निरूपणीयः। स च धर्माधर्माख्यो हेतुर्नात्ममात्राल्लब्धसत्ताकः, कैवल्येऽपि प्रसङ्गात्। न च देहत् तस्याद्याप्यप्रसिद्धेः, नो खलु हेतुसद्भावे विप्रतिपन्नस्य सिद्धवत्फलोपादानेन उत्तरं युक्तम्। न चाद्वितीयब्रह्मातिरिक्तं वस्त्वपश्यतः फलं प्रसिद्धम्। असिद्धस्य च न हेतुत्वसम्भव इत्याह—**यथा पुत्रादिति**।।१५।। १५

विरोध इत्यसम्भवो न युक्तोऽभ्युपगन्तुं, सम्भवत्येव हेतुफलभाव इति चेन्मन्यसे, तर्हि त्वया नियतपूर्वभावी हेतुर्नियतोत्तरभावि च फलं निरूपणीयमित्याह—**सम्भव इति**।।१६।।

ययोर्युगपद्भावस्तयोर्न कार्यकारणभावो यथा शृङ्गयोरिति व्याप्तिरुक्ता। साऽनुग्राहकतर्काभावे न प्रमाणमिति तार्किकरीतिमनुसृत्य तर्कमाह—**फलादुत्पद्यमान इति**। युगपद्भावे हेतुफलयोरन्यतरस्यापि पूर्वक्षणेऽसत्ता इत्यसतोश्शशशृङ्गयोरिवान्योन्यापेक्षया जन्यजनकभावो नोपपद्यते, शशशृङ्गादिष्वपि प्रसङ्गादित्यर्थः।।१७।। २०

आनन्दगिरिटीका

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादित्वं विप्रतिषिद्धमित्युपपादितम्। सम्प्रति कार्यकारणभावोऽपि तयोर्न सम्भवतीत्याह—**हेतोरित्यादिना**। हेतुफलयोरन्योन्यं कारणत्वमभ्युपगच्छद्भिरभ्युपगम्यते विरुद्धमित्येतत् प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना**। ईदृशत्वमेव विशदयति—**यथेति**।।१५।। २५

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याऽऽह—**सम्भव इति**। तयोरुदये प्रातीतिके नियतपूर्वभावी हेतुर्नियतोत्तरभावि फलमित्यभ्युपगमे हेतुमाह—**युगपदिति**। यथोक्तो विरोधो हेतुफलभावस्यासम्भवः, स न युक्तोऽभ्युपगन्तुं प्रतीतिविरोधादिति व्यावर्त्यां शङ्कामनुवदति—**यथेति**। तत्रोत्तरत्वेन श्लोकाक्षराणि योजयति—**सम्भव इति**। प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह—**इतश्चेति**। तामेवोपपत्तिं स्फोरयति—**युगपदिति**। ययोर्युगपत्सम्भवस्तयोर्न कार्यकारणत्वं यथा विषाणयोरिति व्याप्तेर्व्यक्तत्वात् क्रमस्याऽऽवश्यकतेत्यर्थः।।१६।। ३०

उक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति—**फलादिति**। हेतुफलयोर्मिथो हेतुफलत्वं ब्रुवतो मते हेत्वधीनतयाऽलब्धात्मकात् फलादुत्पद्यमानो हेतुर्न ततो लब्धात्मको भवत्यलब्धात्मकश्चासत्त्वान्न फलमुत्पादयितुं शक्नोति। अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः। हेतुफलयोरक्रमवतोर्न कार्यकारणभावेन सम्बन्धः सिध्यतीत्येतदाकाङ्क्षापूर्वकं साधयति—**कथमित्यादिना**। स्वतो हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं स्वतश्चालब्धात्मकम्। तत उत्पद्यमानः सन्नेष हेतुर्न प्रसिध्यति। न खलु शशविषाणादेरसतः सकाशात् किञ्चिल्लब्धात्मकमुपलभ्यते। हेतुश्चेदप्रसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि तथाविधोऽसद्रूपः सन्न फलमुत्पादयितुमुत्सहते। न हि सद्वादिमते फलमसतः सकाशादुपलब्धचरमित्यर्थः। तथाऽपि कथं हेतुफलयोरसम्बन्धः सिध्यतीत्याशङ्क्याऽऽह—**न हीति**। अन्यथा वेत्याधाराधेयभावादिकथनम्।।१७।। ३५

**यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः। कतरत् पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया।।१८।।**
**अशक्तिरपरिज्ञानं क्रमकोपोऽथवा पुनः। एवं हि सर्वथा बुद्धैरजातिः परिदीपिता।।१९।।**
**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः। न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते।।२०।।**

**असम्बन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया, कतरत् पूर्वनिष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात् पूर्वसिद्ध्यपेक्षया तद् ब्रूहीत्यर्थः।।१८।।**

**अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिः, अपरिज्ञानं तत्त्वाविवेको मूढतेत्यर्थः। अथवा योऽयं त्वयोक्तः क्रमो हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्यलक्षणस्तस्य कोपो विपर्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्यकारणभावानुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यपक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः।।१९।।**

**ननु हेतुफलयोः कार्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य [1]च्छलमिदं त्वयोक्तं 'पुत्राज्जन्म पितुर्यथा'।**

अनुभूतिस्वरूपाचार्यटीका

"पुण्यो वै पुण्येन कर्मणा" इत्यादिश्रुतिबलात् धर्मादिः हेतुफलभाव इष्यते चेत्तदापि नासम्भावितार्था श्रुतिः प्रमाणमित्यवश्यं पूर्वापरीभावो वक्तव्य इत्याह—**यदि हेतोरिति**।।१८।।

अन्योन्याश्रयदोषात् तद्वक्तुं न शक्यते चेत्तदा अप्रतिभा निग्रहस्थानमित्याह—**अशक्तिरिति**। कथकाशक्तिसूचकं निग्रहस्थानमिति हि परिभाषन्ते तार्किकाः। प्रतिज्ञाहानिरपि भवतीत्याह—**क्रमकोप इति**। तदेतत् सर्वस्याजत्वं श्रुतिविद्वदनुभवसिद्धमपि गुप्तमासीदधुनाऽस्माकं द्वैतिनां कलकलेन प्रकटमभूत्, यथा केषाञ्चित् गुह्यं परस्परकोलाहलेन लोकस्य विदितं भवति तद्वदित्याह—**एवं हेत्विति**।।१९।।

अनवस्थाभ्युपगमेनान्योन्याश्रयत्वं प्रागुक्तं परिहर्तुं शङ्कते—**नन्वित्यादिना**। अद्वैतदर्शिनस्तत्त्वतो बीजा-

आनन्दगिरिटीका

हेतुफलयोर्यौगपद्ये सत्यन्यतरस्यापि न पूर्वक्षणे सत्तेत्यसतोः शशविषाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते, शशविषाणादिष्वपि प्रसङ्गादित्युक्तम्। इदानीं "पुण्यो वै पुण्येन कर्मणा भवती"त्यादिश्रुतेर्धर्मादिषु हेतुफलभावमाशङ्क्य श्रुतेरसम्भावितार्थे प्रामाण्यायोगादवश्यं पौर्वापर्यं वक्तव्यमित्याह—**यदीति**। श्लोकाक्षराणि योजयति—**असम्बन्धतेत्यादिना**।।१८।।

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते, परस्पराश्रयात्। अतश्चेदं पूर्वनिष्पन्नमिति वक्तुमशक्यमित्याह—**अशक्तिरिति**। उत्तरावसरे चेदुत्तरापरिज्ञानं तर्हि कथकाशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानीयमापततीत्यर्थः। किं च यदि क्रमस्य नियतपूर्वापरभावात्मनोऽपरिज्ञानं सदा पूर्वं कारणमुत्तरं कार्यमिति प्रतिज्ञा हीयेत। तथा च प्रतिज्ञाहानिर्निग्रहान्तरमापद्येतेत्याह—**क्रमेति**। अन्योन्यपक्षप्रतिक्षेपमुखेन सतोऽसतश्च जन्मनी प्रत्याख्याते। क्रमाक्रमाभ्यामुत्पत्तेरनुपपत्तेरजातिरेवास्मदभिप्रेता वादिभिरादर्शिता भवतीत्युपसंहरति—**एवं हीति**। तत्राऽऽद्यं पादं व्याकरोति—**अथेत्यादिना**। क्रमपक्षे पूर्वनिष्पन्नमेतच्छब्देन परामृश्यते। द्वितीयपादं योजयति—**अथवेत्यादिना**। द्वितीयार्धं विवृणोति—**एवमिति**।।१९।।

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्यकारणभावाभ्युपगमान्नान्योन्याश्रयत्वमित्याशङ्क्याऽऽह—**बीजेति**। दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्त्वित्याशङ्क्याऽऽह—**न हीति**। श्लोकापोद्यं चोद्यमुद्भावयति—**नन्विति**। शब्दमात्रं विवक्षितार्थशून्यम्। शब्दमाश्रित्य च्छलप्रयोगमेवोदाहरति—**पुत्रादिति**। आदिशब्देन 'फलादुत्पद्यमानः सन्न

---

१. छलमिति—अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्, यथा नवकम्बलोऽयं देवदत्त इति नवीनकम्बलाभिप्रायेण केनचिदुक्ते अन्यस्तं दूषयति, कुतोऽस्य नव कम्बलाः सन्ति? अतिदरिद्रत्वादिति। एवमत्रापि धर्माधर्मवशात् शरीरोत्पत्तिः शरीरेण च धर्माधर्मौ सम्पाद्येते इत्युक्ते अन्योन्याश्रयो भवतोद्भावितः, स च न प्रसरति व्यक्तिभेदात्। अन्यौ धर्माधर्मौ शरीरोत्पादकौ अन्यौ च शरीरेणोत्पाद्याविति। यथा बीजाङ्कुरौ। अन्येभ्योऽङ्कुरेभ्यो बीजमुत्पद्यते अन्यांश्चाङ्कुराञ्जनयति।

**पूर्वापरापरिज्ञानमजातेः परिदीपकम्। जायमानाद्धि वै धर्मात् कथं पूर्वं न गृह्यते।।२१।।**

**'विषाणवच्चासम्बन्ध' इत्यादि। न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिरसिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता। किं तर्हि? बीजाङ्कुरवत् कार्यकारणभावोऽभ्युपगम्यत इति। अत्रोच्यते–बीजाङ्कुराख्यो दृष्टान्तो यः स साध्येन तुल्यो ममेत्यभिप्रायः। ननु प्रत्यक्षः कार्यकारणभावो बीजाङ्कुरयोरनादिः, न, पूर्वस्य पूर्वस्यापरवदादिमत्त्वाभ्युपगमात्। यथेदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान् बीजं चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्। एवं पूर्वः पूर्वोऽङ्कुरो बीजं च पूर्वं पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्याऽऽदिमत्त्वात् कस्यचिदप्यनादित्वानुपपत्तिः। एवं हेतुफलानाम्। अथ बीजाङ्कुरसन्ततेरनादिमत्वमिति चेत्। न। एकत्वानुपपत्तेः। न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसन्ततिर्नामैकाऽभ्युपगम्यते हेतुफलसन्ततिर्वा तदनादित्ववादिभिः। तस्मात् सूक्तं हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यत इति। तथा चान्यदप्यनुपपत्तेर्न च्छलमित्यभिप्रायः। न च लोके साध्यसमो हेतुः साध्यसिद्धौ सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्यर्थः। हेतुरिति दृष्टान्तोऽत्राभिप्रेतो गमकत्वात्। प्रकृतो हि दृष्टान्तो न हेतुरिति।।२०।।** ५ १०

**कथं बुद्धैरजातिः परिदीपितेत्याह–यदेतद्धेतुफलयोः पूर्वापरापरिज्ञानं तच्चैतदजातेः परिदीपकमवबोधक-**

अनुभूतिस्वरूपाचार्यटीका

ङ्कुरयोरपि कार्यकारणभावोऽसिद्ध इत्युक्तम्; तत्र प्रत्यक्षं साधकमाह—**ननु प्रत्यक्ष इति**। न तावत् चाक्षुषमेकं ज्ञानं बीजस्य पूर्वभावित्वेऽङ्कुरस्य चोत्तरभावित्वे तयोः सम्बन्धे च व्यापिपर्ति, वर्तमानमात्रग्राहकत्वात्, नाप्यनेकं युगपत् भवति। भावेऽपि परस्परवार्तानभिज्ञत्वात् नोभयावच्छिन्नसम्बन्धे मानं, संस्कारसहितमपि मनो न सम्बन्धे प्रत्यक्षं स्मृतिहेतुत्वात्, सम्बन्धविषयकसंस्कारस्याप्यसिद्धेः। किञ्च, यथाऽङ्कुरस्य कार्यत्वात् कारणाकाङ्क्षा तथा बीजस्यापीति निराकाङ्क्षप्रतिपत्तिर्न कुत्रापीति न प्रत्यक्षं मानमित्याह—**न, पूर्वस्येति**। यच्चानादित्वं बीजाङ्कुरयोः जगन्नित्यत्ववादिभिर्वर्णितमनवस्थापरिहाराय तदसङ्गतमित्याह—**यथेदानीमिति**। प्रवाहरूपेणानादित्वमित्यपि न वाच्यम्। प्रवाहस्य वस्त्वतिरिक्तस्यानभ्युपगमात् अनुपलम्भाच्चेत्याह—**नैकत्वेति**। यच्चावाचि छलमिदं त्वयोक्तमिति, तत्राह—**तथा चेति**। नवकम्बलयोऽयं माणवक इत्युक्ते संख्यार्थोपादानेन प्रतिषेधे भवेच्छलम्। नवः १५ २०

आनन्दगिरिटीका

ते हेतुः प्रसिध्यती'त्यादि गृह्यते। कार्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति—**न हीति**। तत्रैव प्रश्नपूर्वकमभिप्रेतमर्थमुदाहरति—**किं तर्हीति**। दृष्टान्तासम्प्रतिपत्त्या परिहरति—**अत्रेति**। मायावादिमते क्वचिदपि कार्यकारणभावस्य वस्तुभूतस्यासम्प्रतिपत्तेर्ममेत्युक्तम्। प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते—**नन्विति**। किं बीजाङ्कुरव्यक्त्योरिदं कार्यकारणत्वमिष्यते किं वा बीजाङ्कुरसन्तानयोरिति विकल्प्याऽऽद्यं दूषयति—**न पूर्वस्येति**। तदेव प्रपञ्चयति—**यथेत्यादिना**। बीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादित्वस्यान्योन्यकारणत्वस्य चानुपपत्तिरिति शेषः। कल्पान्तरमुत्थापयति—**अथेति**। बीजसन्ततेरङ्कुरसन्ततेश्चानादित्वमन्योन्यकारणत्वं चाविरुद्धं सिध्यति। बीजजातीयादङ्कुरजातीयमङ्कुरजातीयाद् बीजजातीयमुत्पद्यमानमुपलभ्यते। तथैव हेतुजातीयात्फलजातीयं फलजातीयाच्च हेतुजातीयमविरुद्धमित्यर्थः। दृष्टान्ते दार्ष्टान्तिके च सन्ततेरेकस्या व्यक्तेर्व्यतिरेकेणासम्भवान्नैवमिति दूषयति—**नेत्यादिना**। तदेव प्रपञ्चयति—**न हीति। तदनादित्ववादिभिस्तासु** व्यक्तिषु मिथो हेतुत्वमनादित्वं तद्वदनशीलैरिति यावत्। अन्योन्याश्रयत्वादनवस्थानाद्वा हेतुफलयोर्मिथो हेतुफलभावस्य वक्तुमशक्यत्वाद् दृष्टान्तदार्ष्टान्तिकयोरनुपपत्तिः सिद्धेत्युपसंहरति—**तस्मादिति**। दृष्टान्तस्यासम्प्रतिपन्नत्वे स्थिते कार्यकारणस्य क्वचिदपि सम्प्रतिपत्त्यभावात् पुत्राज्जन्म पितुर्यथेत्यादि न च्छलप्रयुक्तमिति फलितमाह—**तथा चेति**। एवं श्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे—**न चेति**। किमिति हेतुशब्दस्य मुख्यमर्थं त्यक्त्वा गौणोऽर्थो गृह्यते? प्रकरणसामर्थ्यादित्याह—**प्रकृतो हीति**। हेतुफलभावानुपपत्तिमुपपादितामुपसंहर्तु**मितिशब्दः**।।२०।। २५ ३० ३५

यत्पुनरन्योन्यपक्षं प्रतिक्षिपद्भिरजातिर्वस्तुतो ज्ञापिता परीक्षकैरित्युपक्षिप्तं तत्र कथमजातिर्वस्तुतो ज्ञापितेत्याशङ्क्याऽऽह—**पूर्वापरेति**। कार्यस्य गृह्यमाणत्वादजातिरसिद्धेत्याशङ्क्य कारणस्यापि तर्हि ग्राह्यत्वादितरेतराश्रयादजातिरभिव्यक्ता सिध्यतीत्याह—**जायमानादिति**। तत्र पूर्वार्धं प्रश्नद्वारा विवृणोति—**कथमित्यादिना**।

**स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते। सदसत् सदसद्वाऽपि न किंचिद्वस्तु जायते।।२२।।**

**मित्यर्थः। जायमानो हि चेद् धर्मो गृह्यते, कथं तस्मात्पूर्वं कारणं न गृह्यते। अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम्। जन्यजनकयोः सम्बन्धस्यानपेतत्वात्। तस्मादजातिपरिदीपकं तदित्यर्थः।।२१।।**

**इतश्च न जायते किञ्चित्। यज्जायमानं वस्तु स्वतः परत उभयतो वा सदसत् सदसद्वा न जायते। न तस्य केनचिदपि प्रकारेण जन्म सम्भवति। न तावत् स्वयमेवापरिनिष्पन्नत्वात् स्वतः स्वरूपात् स्वयमेव जायते यथा घटस्तस्मादेव घटात्। नापि परतोऽन्यस्मादन्यो यथा घटात्पटः पटात्पटान्तरम्। तथा नोभयतः। विरोधात्। यथा घटपटाभ्यां घटः पटो वा न जायते। ननु मृदो घटो जायते, पितुश्च पुत्रः। सत्यम्। अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम्। तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते–किं सत्यमेव तावुत मृषेति। यावता परीक्ष्यमाणे शब्दप्रत्ययविषयं**

अनुभूतिस्वरूपाचार्यटीका

कम्बलोऽस्येत्यर्थान्तरसम्भवात्। प्रकृते तु हेतुफलशब्दयोरस्माकमर्थाप्रसिद्धेस्त्वदभिमतार्थस्य चानुपपत्तेरन्यदप्यस्माभिरुक्तं न छलमित्यर्थः॥२०-२१॥

आद्यं दूषयति—**न तावत्स्वयमेवेति**। स्वसिद्धौ स्वसिद्धिः इत्यात्माश्रयत्वादित्यर्थः। द्वितीयं दूषयति—**नापि परत इति**। अन्यत्वं चेज्जनकत्वे प्रयोजकं सर्वं सर्वस्य जनकं स्यादित्यतिप्रसङ्गः। यत् यज्जनने शक्तं तत् तज्जनकमिति चेत्—अहो अस्य पाण्डित्यं यदयमसिद्धेन शक्तिविषयेणासिद्धं जनकं नियच्छति। न च प्रत्यक्षम्, शक्तेरनिन्द्रियगोचरत्वात्। अत एव नानुमेयत्वं नार्थापत्तितोऽपि, भ्रमादप्युपपत्तेः। किञ्च, अन्यत्वं जन्यजनकयोः प्रसिद्धिबाधितं सुवर्णं कुण्डलमित्याद्यभेदप्रसिद्धेः। न च सा सम्बन्धादत्यन्तभिन्नयोः[1], सम्बन्धवशेन सामानाधिकरण्यं दृष्टं धवलः प्रासाद इत्यादिभ्रमदृष्टेश्च। किञ्च, न सम्बन्धात् सामानाधिकरण्यं; किन्तु प्रवृत्त्यैक्यात् सोऽयं देवदत्त इत्यादौ दृष्टम् भिन्नशब्दप्रवृत्तिरपि कल्पितभेदात् तद्वदुपपद्यते। अन्यथा अन्योन्याश्रयादि।

तृतीयं दूषयति—**नोभयत इति**। भिन्नजातीयानां विरुद्धानामेककार्यारम्भकत्वविरोधादित्यर्थः। **सत्यमेवेति**। सत्यालम्बनावुत मृषार्थाविति परीक्षायां न सत्यालम्बनत्वं पश्यन्ति ब्रह्मविदः। तत्र हेतु**र्यावतेति**। मृद्व्यतिरेकेण घटो नाम शब्दमात्रमेव। तथा पिता भूतसंघातः, पुत्रोऽपि तथैवेति शब्द एवातिरिच्यते पञ्चकद्रयाभावादित्यर्थः।

आनन्दगिरिटीका

नियते पौर्वापर्ये निर्धारिते जातिः सिध्यति, तदभावे तदसिद्धिरित्यर्थः। द्वितीयार्धं विभजते—**जायमानो हीति**। कार्यग्रहणे कारणं ग्रहीतव्यमिति कुतो नियम्यते, तत्राऽऽह—**अवश्यं हीति**। कार्यकारणयोर्नियतसम्बन्धवतोरितरेतराश्रयाद् दुर्ग्रहत्वादजातिरेव वस्तुतो ज्ञापितेत्युपसंहरति—**तस्मादिति**। कार्यकारणयोर्दुर्ज्ञानत्वं तच्छब्देन परामृश्यते॥२१॥

वस्तुनो वस्तुतो जन्म नास्तीति विकल्पपूर्वकं साधयति—**स्वतो वेत्यादिना**। कस्यचिदपि वस्तुनो जन्म नास्तीत्यस्मिन्नर्थे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—**इतश्चेति**। इतःशब्दार्थमेव स्फोरयितुं जायमानमनूद्य षोढा विकल्पयति—**यज्जायमानमिति**। सर्वेष्वपि पक्षेषु दोषसम्भावनां सूचयति—**न तस्येति**। तत्राऽऽद्यं दूषयति—**न तावदिति**। स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते, स्वयमेव स्वापेक्षामन्तरेण स्वकारणाधीनतया परिनिष्पन्नत्वात्। अन्यथा स्वसिद्धेः स्वसिद्धिरित्यात्माश्रयात्। न हि घटादेव घटो जायमानो दृष्टोऽस्तीत्यर्थः। द्वितीयं प्रत्याह—**नापीति**। न खल्वन्यत्वं जनकत्वे प्रयोजकम्। घटादपि पटोत्पत्तिप्रसङ्गात्। न चोत्पादकत्वयोग्यत्वविशेषितमन्यत्वं तथेति वाच्यम्। उत्पत्तिमन्तरेण तद्योग्यत्वस्य दुरवगमत्वादित्यर्थः। तृतीयं निरस्यति—**तथेति**। विरोधमेव दृष्टान्तद्वारा स्पष्टयति—**यथेति**। न हि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते। तथा जायमानं स्वस्मादन्यस्माच्च भवतीत्यनुपपन्नमित्यर्थः। अन्यत्वे सत्यपि जन्यजनकभावस्य प्रत्यक्षत्वान्नासौ शक्यते प्रतिक्षेप्तुमिति शङ्कते—**नन्विति**। किं प्रत्यक्षानुसारिणौ शब्दप्रत्ययावविवेकिनामिष्येते किं वा विवेकिनामिति विकल्प्याऽऽद्यमङ्गीकरोति—**सत्यमिति**। द्वितीयं प्रत्याह—**तावेवेति**। मृषैवेति परीक्ष्यमाणे सतीति सम्बन्धः। तच्च जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव वाचारम्भणश्रवणान्न परमार्थतो यावता विद्यते, तस्मादसत्यालम्बनत्वमेव

[1]. 'न हि अत्यन्तभिन्नयोः सम्बन्धवशेन' इति पाठः स्यात्।

**हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः। आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते।।२३।।**

**वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत् ''वाचारम्भणम्'' इति श्रुतेः। सच्चेन्न जायते सत्त्वान्मृत्पित्रादिवत्। यद्यसत्, तथाऽपि न जायतेऽसत्त्वादेव शशविषाणादिवत्। अथ सदसत् तथाऽपि न जायते विरुद्धस्यैकस्यासम्भवात्। अतो न किञ्चिद्वस्तु जायत इति सिद्धम्। [1]येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः, ते दूरत एव न्यायापेताः। इदमित्थमित्यवधारणक्षणान्तरानवस्थानादननुभूतस्य स्मृत्यनुपपत्तेश्च।।२२।।** ५

**किं च हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरजन्मैवाभ्युपगतं स्यात्। तत्कथम्? अनादेरादि-**

अनुभूतिस्वरूपाचार्यटीका

चतुर्थं पराचष्टे—**सच्चेदिति**। अभिव्यक्तिरपि तथा। सती चेत् सदा स्यादभिव्यक्त्यन्तराभ्युपगमे त्वनवस्था स्यादित्यर्थः। पञ्चमं प्रत्याचष्टे—**यद्यसदिति**। प्रागसज्जातम् इत्यपि सङ्केतमात्रम्, असतो जन्मसिद्धौ प्रागिति विशेषणं जन्मापेक्षं सिद्ध्यति, तत्सिद्धौ च तस्य जन्म सिद्ध्यतीत्यन्योन्याश्रयादिति। षष्ठं दूषयति—**अथ सदसदिति**। १० कात्स्न्येंन सत्त्वे तथैव समाप्तत्वादसत्त्वं नोपपद्यते, अंशयोश्च व्यवस्थितत्वान्नैकं द्व्यात्मकं सम्भवतीत्यर्थः। बौद्धपक्षेऽप्यधिकमाह—**येषां पुनरित्यादिना**। जनिस्तावत्क्रिया धात्वर्थत्वात्। सैव जायत इति कर्तृप्रत्ययेन निर्देशात् कारकं भवति। अन्यथा वस्तु जायते। जनिर्जायत इति गौरवात्। सैव जातरूपेण क्रियाफलमिति एकस्मिन्नेव क्रियात्वं कारकत्वं फलत्वं च येषां मते समारोपितमभ्युपगम्यत इत्यर्थः। एतच्च क्षणिकत्वाधीनं, यतः क्रियां कुर्वाणं कारकमुच्यते, तत्र हेतुतया पूर्वक्षणवर्तित्वमाश्रयतया क्रियाक्षणेऽप्यवस्थानमिति स्थायित्वं स्यात्, अतः १५ समारोपसिद्धये क्षणिकत्वं च वस्तुनोऽभ्युपगम्यते, यत् सत् तत्क्षणिकं यथा प्रदीपः सन्तश्चामी भावा इत्याद्यनुमानेनेत्यर्थः। इदमित्यभिज्ञाय इत्थमित्यवधारणक्षणान्तरेऽनवस्थानात् क्षणिकवादिनो जनिरेव जायत इत्यवधारणानुपपत्तिः। सर्वं क्षणिकमिति च सर्वानुवादेन क्षणिकत्वावधारणायोगादप्रसिद्धविशेषणः पक्षः, व्याप्त्यनवधारणं, दृष्टान्तासिद्धिश्चेत्यर्थः। सम्प्रति सन्ततेः सत्त्वेन सन्ततः सर्वोऽप्ययं व्यवहार इति न वाच्यम्। अर्थक्रियाकारित्वेन सन्ततेः परमार्थसत्त्वप्रसङ्गात्। किञ्च चैत्रानुभूते मैत्रस्य स्मृत्यदर्शनात् पूर्वोत्तरक्षणयोरत्यन्त- २० विलक्षणत्वात् योऽहं रूपमन्वभूवं सोऽहं स्मरामीत्यनुभूते स्मृतिर्न स्यात्। अतो युक्त्यनुगृहीतप्रत्यभिज्ञा-बाधितमनुमानमित्याह—**अनुभूतस्येति**।।२२।।

इतश्च न किञ्चित्तत्त्वतो जायत इत्याह—**हेतुर्न जायत इति**। सादेश्चेहोत्पत्तावभिहितैवानवस्था। फलञ्चापि न जायते अनादेर्हेतोरिति पूर्वेण सम्बन्धः। कादाचित्कत्वेन प्रसिद्धस्य धर्मादेः अनादित्वानङ्गीकरणात्, अन्यथा

आनन्दगिरिटीका २५

शब्दप्रत्यययोरेष्टव्यमिति योजना। चतुर्थं शिथिलयति—**सच्चेदिति**। पञ्चमं निराकरोति—**यदीति**। षष्ठं प्रत्यादिशति—**अथेत्यादिना**। षण्णां विकल्पानां निरासे फलितं निगमयति—**अतो नेति**। क्रियाकारकफलनानात्वपक्षे जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति—**येषां पुनरिति**। बौद्धानां न्यायावष्टम्भेन वस्तु व्यवस्थापयतां कुतो न्यायबाह्यत्वमित्याशङ्क्याऽऽह—**इदमिति**। इदमा वस्तु परामृष्टम्। इत्थमिति क्षणिकत्वं विवक्षितम्। एवमवधारणावच्छिन्ने क्षणे वस्त्ववच्छेदकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावान्न तस्मिन्ननुभवः सिध्यतीत्यर्थः। न च ३० तस्मिन्ननुभूतेऽर्थे स्मृतिरुत्पद्यते। तथा च वस्तुनि प्रत्ययद्वयासिद्धौ व्यवहारासिद्धिरित्याह—**अननुभूतस्येति**।।२२।।

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह—**हेतुर्नेति**। नानादेः फलाद्धेतुर्जायते। न हि फलस्यानादित्वे ततो हेतुजन्म युक्तं सदा तज्जन्मप्रसङ्गादित्यर्थः। फलमपि न हेतोरनादेर्जायते दोषसाम्यादित्याह—**फलं चेति**। नापि स्वभावतो निमित्तमन्तरेण फलं हेतुर्वा जायते। तत्र हेतुमाह—**आदिरिति**। कारणरहितस्य जन्मानुपलब्धे-

---

१. **येषां पुनरिति**—विज्ञानवादिनो बौद्धा विज्ञानापेक्षया वस्त्वन्तरस्याभावात् सर्वस्य क्षणिकविज्ञानरूपत्वात् ३५ क्रियैव कारकं उभयोर्विज्ञानरूपत्वात्। प्रथमक्षणे वस्तूत्पत्तिः द्वितीये च तस्य क्षणिकत्वावधारणं वक्तव्यम्, तच्च न सम्भवति, प्रथमक्षणस्थवस्तुनो द्वितीयेऽभावात्। तदभावे कस्य क्षणिकत्वमिति निर्णयसम्भवः?

**प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः। संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता।।२४।।**

**रहितात्फलाद्धेतुर्न जायते। न ह्यनुत्पन्नादनादेः फलाद्धेतोर्जन्मेष्यते त्वया। फलं चाऽऽदिरहितादनादेर्हेतोरजात् स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते। तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते। यस्मादादिः कारणं न विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते। कारणवत एव ह्यादिरभ्युपगम्यते ५ नाकारणवतः।।२३।।**

**उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति—प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम्। निमित्तं कारणं विषय इत्येतत् सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत् प्रतिजानीमहे। न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात्। तस्याः सनिमित्तत्वात्। अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतो नाशोऽभावः प्रसज्येतेत्यर्थः। न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात्। अतः प्रत्ययवैचित्र्यस्य १० द्वयस्य दर्शनात् परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं तस्य परतन्त्रस्य परतन्त्राश्रयबाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता मताऽभिप्रेता। न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वभावभेदेनैव वैचित्र्यं सम्भवति। स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः। इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य**

अनुभूतिस्वरूपाचार्यटीका

प्रसिद्धिविरोधादित्यर्थः। लोकायतिकमतापनुत्तय आह—**स्वभावत इति**। निर्निमित्तमेव फलं शरीरादि न जायत १५ इति पूर्वेण सम्बन्धः। तत्र प्रसिद्धं हेतुमाह—**आदिः** कारणं न विद्यते यस्य शशशृङ्गादेः तस्यादिरुत्पत्तिः न विद्यत इति हि प्रसिद्धम्। अतः कारणाभावे कार्याभावप्रसिद्धेः कार्यार्थिनां च विशिष्टदेशकालनिमित्तप्रतीक्षाप्रतीतेः न स्वभाववादोऽपि युक्त इत्यर्थः।।२३।।

एवं जन्मासम्भवादजं विज्ञानमात्रं तत्त्वमुक्तम्, तत्र प्रत्ययवैचित्र्यान्यथानुपपत्या दुःखोत्पादानुपपत्त्या च जडस्यापि सद्भावं शङ्कते—**प्रज्ञप्तेरित्यादिना**। प्रकाशमात्रस्वभावत्वात्प्रज्ञप्तेः स्वतस्तावत् वैचित्र्यं न घटते। न २० चौपाधिकं नीलपीताद्युपाध्यभावे घटते इत्याह—**न हि प्रज्ञप्तेरिति**।।२४।।

आनन्दगिरिटीका

रित्यर्थः। वस्तुनो वस्तुतो जन्माभावे हेत्वन्तरपरत्वं श्लोकस्य सूचयति—**किं चेति**। हेत्वन्तरमेव दर्शयितुं प्रथमं प्रतिज्ञां करोति—**हेत्विति**। फलाद्धेतुर्जायते, ततश्च फलमित्यभ्युपगमात् कथमजन्माभ्युपगतमिति पृच्छति—**कथमिति**। तत्राऽऽद्यपादाक्षरयोजनया परिहरति—**अनादेरिति**। तदेवोपपादयति—**न हीति**। फलं कार्यकरणसङ्घातः। हेतुर्धर्मादिः। २५ फलं चापीति भागं विभजते—**फलं चेति**। अजाज्जायत इति नाभ्युपगम्यत इति सम्बन्धः। स्वभावत इति पदं योजयति—**स्वभावत एवेति**। फलितं निगमयति—**तस्मादिति**। न हेतुफलयोर्जन्मवतोरनादित्वमभ्युपगन्तुं शक्यम्। अभ्युपगमे च जन्मैव तयोराकस्मिकं स्यादित्यर्थः। स्वभाववादनिराकरणं प्रतिज्ञातमुत्तरार्धावष्टम्भेन प्रतिपादयति—**यस्मादिति**।।२३।।

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तम्। इदानीं बाह्यार्थवादमुत्थापयति—**प्रज्ञप्तेरिति**। ३० ज्ञानस्य निर्विषयत्वे प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति—**अन्यथेति**। अग्निदाहादिप्रयुक्तदुःखोपलब्ध्यनुपपत्तेश्चास्ति बाह्यार्थ इत्याह—**संक्लेशस्येति**। परतन्त्रं परकीयं शास्त्रं, तस्यास्तिता तद्विषयस्य बाह्यार्थस्य विद्यमानतेति यावत्। श्लोकस्य तात्पर्यमाह—**उक्तस्यैवेति**। वस्तुनो नास्ति वस्तुतो जन्मेत्युक्तार्थस्तस्यैव दृढीकरणं पूर्वोत्तरपक्षाभ्यां चिकीर्ष्यते। तया पुनराक्षेपमुखेण बाह्यार्थवादिनां प्रस्थानमुत्थापयतीत्यर्थः। ब्रह्मस्वरूपभूतां प्रज्ञप्तिं प्रतिषेधति—**शब्दादीति**। साकारवादं व्युदस्यति—**स्वात्मेति**। प्रज्ञप्तेर्विषयनिरपेक्षत्वात्र स्वातिरिक्तविषयतेत्याशङ्क्याऽऽह—**न** ३५ **हीति**। सनिमित्तत्वं सविषयत्वेन स्फुरणम्। तमेव हेतुं द्वितीयपादयोजनया विशदयति—**अन्यथेति**। प्रसङ्गस्येष्टत्वं प्रत्याचष्टे—**न चेति**। प्रत्ययवैचित्र्यानुपपत्तिप्रयुक्तं फलं चतुर्थपादव्याख्यानेन कथयति—**अत इति**। ननु प्रज्ञप्तेः स्वभावभेदेनैव बाह्यालम्बनं वैचित्र्यमन्तरेण स्वगतं वैचित्र्यं घटिष्यते, तत्राऽऽह—**न हीति**। औपाधिकं तर्हि प्रत्ययवैचित्र्यमित्याशङ्क्य बाह्यार्थातिरिक्तोपाध्यनधिगमान्मैवमित्याह—**स्फटिकस्येति**। तृतीयपादं हेत्वन्तरपरत्वेनावतारयति—**इतश्चेति**। तस्योपलब्धिमुपपादयति—**उपलभ्यते हीति**। तदुपलम्भेऽपि कुतो बाह्यार्थसिद्धि-

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात्। निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्।। २५।।**

ज्ञानव्यतिरिक्तस्यास्तिता। संक्लेशनं संक्लेशो दुःखमित्यर्थः। उपलभ्यते ह्यग्निदाहादिनिमित्तं दुःखं, यद्यग्न्यादि बाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात् ततो दाहादिदुःखं नोपलभ्येत। उपलभ्यते तु, अतस्तेन मन्यामहेऽस्ति बाह्योऽर्थ इति। न हि विज्ञानमात्रे संक्लेशो युक्तः। अन्यत्रादर्शनादित्यभिप्रायः।। २४।।

अत्रोच्यते–बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत् त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र। ब्रूहि किं तत इति। उच्यते। निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः, कथं, भूतदर्शनात् परमार्थदर्शनादित्येतत्। न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति। यथाऽश्वान्महिषः, पटो वा तन्तुव्यतिरेकेण। तन्तवश्चांशुव्यतिरेकेणेत्येव-मुत्तरोत्तरभूतदर्शन आ शब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामह इत्यर्थः। अथवाऽभूतदर्शनाद् बाह्यार्थस्यानिमित्तत्व-मिष्यते। रज्ज्वादाविव सर्पादिरित्यर्थः। भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं भवेत्। तदभावेऽभावात्। न हि

अनुभूतिस्वरूपाचार्यटीका

द्वैतिनस्तव तार्किकत्वाभिमानात् त्वया युक्तिदर्शनात् प्रज्ञप्तेः सविषयत्वमिष्यत इत्येतत् सत्यं, तर्हि अत्रैव स्थिरीभव प्रतीतिमात्रशरणो मा भूरित्याह—**स्थिरीभवेति**। विचारदृष्टिमेवावलम्ब्याहं वर्ते, किं ततो दूषणं ब्रूहि इत्युक्ते सिद्धान्त्याह—**अत्रोच्यत इति**। चक्षुषाऽन्तर्बहिर्वा निरीक्ष्यमाणे, त्वचा स्पृश्यमाने, जिह्वया आस्वाद्यमाने, घ्राणेनाऽऽघ्रायमाणे च न मृद्व्यतिरिक्तं घटे तत्त्वमुपलभामहे। ततः तत्प्रत्ययस्तावन्न तत्त्वतः सालम्बनः, तद्दृष्टान्तमादाय विमतः प्रत्ययस्तत्त्वतो न सालम्बनः प्रत्ययत्वात् सम्मतवदित्यनुमानमुज्जृम्भते।

यद्यप्येतद्विज्ञानवाद्यभिमतं तथापि "कृत्स्नः प्रज्ञानघन एवे"त्यादिश्रुत्यनुसारादनुमतं ब्रह्मविदामपीति भूतदर्शनम्। यौक्तिकं तत्त्वदर्शनं व्याख्यायाधिष्ठानभूतानुभवादध्यस्तस्य जडस्यासत्त्वं व्याचष्टे—**अथवेति**।

किञ्च, विमतोऽर्थ आलम्बनतया न स्वप्रत्ययजनकः भ्रान्तिविषयत्वात् रज्जुसर्पवदित्याह—**भ्रान्तीति**। हेत्वसिद्धिमाशङ्क्याऽऽह—**तदभाव इति**। ननु देहाद्यभिमानिनां तावत् चक्षुरादिभिर्बाह्योऽर्थो भाति। कथमद्वैतदर्शिनां

आनन्दगिरिटीका

रित्याशङ्क्याऽऽह—**यदीति**। उपलब्धिरेव तर्हि दुःखस्य मा भूदिति चेन्न। स्वानुभवविरोधादित्याह—**उपलभ्यते त्विति**। विशिष्टदुःखोपलब्ध्यनुपपत्तिसिद्धं फलमाह—**अत इति**। विज्ञानातिरिक्तबाह्यार्थाभावेऽपि क्लेशोपलब्धिर-विरुद्धेत्याशङ्क्याऽऽह—**न हीति**। अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत्।।२४।।

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादमुद्भावयति—**प्रज्ञप्तेरिति**। अस्तु का नाम वस्तु-क्षतिरित्याशङ्क्याऽऽह—**निमित्तस्येति**। मतान्तरे प्राप्ते तन्निराकरणमुच्यते विज्ञानवादिनेति श्लोकस्य तात्पर्यमाह—**अत्रेति**। तत्र पूर्वार्धं विभजते—**बाढमित्यादिना**। द्वैतिनस्तव तर्कप्रधानत्वान्न प्रतीतिमात्रशरणता युक्तेति मत्वाऽऽह—**स्थिरीभवेति**। वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना। विचारदृष्टिमेवावष्टभ्याहं वर्ते, किं ततः, दूषणं ब्रूहीति पृच्छति—**ब्रूहीति**। तत्रोत्तरार्धं सिद्धान्ती व्याकुर्वन्नुत्तरमाह—**उच्यत इत्यादिना**। घटादेर्वैचित्र्याहेतुत्वे प्रश्नपूर्वकं हेतुमाह—**कथमित्यादिना**। परमार्थदर्शनं प्रपञ्चयति—**न हीति**। तत्र वैधर्म्यदृष्टान्तमाह—**यथेति**। घटे दर्शितं न्यायं पटेऽपि दर्शयति—**पटो वेति**। तन्तुष्वपि न्यायसाम्यमुदाहरति—**तन्तव इति**। परमार्थदर्शनफलमुपसंहरति—**इत्येवमिति**। घटादीनां स्वकारणव्यतिरेकेणासतां न प्रत्ययवैचित्र्यहेतुत्वमतो घटादिप्रत्ययवत्प्रत्ययान्तराण्यपि प्रत्ययत्वाविशेषाद् वास्तवालम्बनवर्जितानि मन्तव्यानीत्यर्थः। भूतदर्शनं यौक्तिकं तत्त्वदर्शनं ततो निमित्तस्यानिमित्तत्वमिति व्याख्यातम्। इदानीमभूतदर्शनादिति पदच्छेदेन व्याख्यानान्तरमाह—**अथवेति**। यथा रज्ज्वादावधिष्ठाने सर्पादेरारोपितस्य दर्शनान्न तस्य वस्तुतो दर्शनं प्रत्यालम्बनत्वमिष्टम्। तथैवाधिष्ठानज्ञानापेक्षया परमार्थतो दर्शनाद् बाह्यस्यार्थस्य ज्ञानं प्रत्यालम्बनत्वं वास्तवमभ्युपगन्तुमशक्यमित्यर्थः। किञ्च विमतो बाह्यार्थो न तत्त्वतो ज्ञानं प्रत्यालम्बनं भ्रान्तिविषयत्वाद् रज्ज्वां सर्पादिवदित्याह—**भ्रान्तीति**। हेतुं साधयति—**तदभाव इति**। भ्रान्त्यभावे बाह्यार्थो न

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च। अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक्।।२६।।**
**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु। अनिमित्तो विपर्यासः कथं तस्य भविष्यति।।२७।।**

सुषुप्तसमाहितमुक्तानां भ्रान्तिदर्शनाभाव आत्मव्यतिरिक्तो बाह्योऽर्थ उपलभ्यते। न ह्युन्मत्तावगतं वस्त्वनुन्मत्तैरपि तथाभूतं गम्यते। एतेन द्वयदर्शनं संक्लेशोपलब्धिश्च प्रत्युक्ता।।२५।।

५ यस्मान्नास्ति बाह्यं निमित्तमतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम्। नाप्यर्थाभासं चित्तत्वात् स्वप्नचित्तवत्। अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यतः। उक्तहेतुत्वाच्च। नाप्यर्थाभासश्चित्तात् पृथक्चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने।।२६।।

ननु विपर्यासस्तर्ह्यसति घटादौ घटाद्याभासता चित्तस्य। तथा च सत्यविपर्यासः क्वचिद्वक्तव्य इति। अत्रोच्यते। निमित्तं विषयमतीतानागतवर्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेव। यदि हि क्वचित् संस्पृशेत्

१० अनुभूतिस्वरूपाचार्यटीका

चाक्षुषादेः स्फुरणमात्रत्वम्, तत्राह—**न हीति**। तथाप्यर्थापत्त्योः किं दूषणमुक्तं भवति, तदाह—**एतेनेति**। तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धिश्च प्रत्युक्ता। अतोऽनुपपद्यमानादर्शनादनुदय एव अर्थापत्तिद्वयस्य। व्यवहारदृष्ट्या तु स्वप्नवत् पूर्वभ्रान्तिवासनासमारोपितं संवेदन एव वैचित्र्यं दुःखं च व्यवहाराङ्गमिति अन्यथाप्युपपत्तिरिति भावः।।२५।।

१५ ज्ञानस्य सविषयत्वप्रसिद्धेः तत्त्वदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याह—**चित्तमिति**। स्फुरणमिह चित्तशब्देनोपलक्ष्यते। तत्र कुत्रापि सकर्मकम्। जानातेस्तु सकर्मकत्वं क्रियात्वकल्पनया द्रष्टव्यम्।

किञ्च, जागरितगतोऽर्थो न सन् अर्थत्वात् स्वप्नार्थवत्। अतोऽपि ज्ञानं न सविषयमित्याह—**अभूतो हीति**। **उक्तहेतुत्वाच्चेति**। भ्रान्तिविषयत्वाच्चेत्यर्थः। अर्थजन्यत्वाभावेऽपि ज्ञानस्यार्थाभासजन्यत्वं भविष्यतीति न वाच्यमित्याह—**नापीति**। पूर्वसिद्ध एव हि जनकः प्रसिद्धः। न चाभासस्य प्रतीतेः पूर्वं सत्त्वमस्तीत्यर्थः।।२६।।

आनन्दगिरिटीका

२० भातीत्युक्तं हेतुं प्रपञ्चयति—**न हीति**। देहाभिमानवतो बाह्यार्थप्रतिभानध्रौव्याद्द्वैतदर्शिनोऽपि तत्प्रतिभानमप्रत्यूहं प्राप्नोतीत्याशङ्क्याऽऽह—**न ह्युन्मत्तेति**। बाह्यार्थसमर्थनार्थमुक्तमर्थापत्तिद्वयं कथं निरसनीयमित्याह—**एतेनेति**। तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धिश्च प्रत्युक्ता। तेनानुपपद्यमानार्थापत्तिद्वयस्यानुत्थानम्। व्यवहारदृष्ट्या तु पूर्वभ्रमसमारोपितस्वप्नवदेव संवेदने वैचित्र्यं दुःखं च व्यवहाराङ्गमित्यन्यथाऽप्युपपत्तिरित्यर्थः।।२५।।

२५ ज्ञानस्य सालम्बनत्वप्रसिद्धेस्तत्त्वदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याऽऽह—**चित्तमिति**। न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात्। जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनया स्वीकृतमिति भावः। चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याऽऽह—**नार्थेति**। तत्र हेतुमाह—**अभूत इति**। प्रथमपादं व्याचष्टे—**यस्मादिति**। विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात् सम्प्रतिपन्नवदिति द्वितीयं पादं विभजते—**नापीति**। न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः। तृतीयपादं व्याकरोति—**अभूतो**

३० **हीति**। विमतोऽर्थः सन्न भवत्यर्थत्वात् सम्प्रतिपन्नवदित्यनुमानान्न ज्ञानस्याऽऽलम्बनमित्यर्थः। विमतोऽर्थः स्वविषयज्ञानजनको न भवति भ्रान्तिविषयत्वात् सम्प्रतिपन्नवदित्युक्तमनुमानं स्मारयति—**उक्तेति**। अर्थजन्यत्वाभावेऽपि ज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह—**नापीति**।।२६।।

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत्। भ्रान्तिश्चाभ्रान्तिप्रतियोगिनीत्यन्यथाख्यातिमाशङ्क्याऽऽह—**निमित्तमिति**। कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्वासनाभावात् तज्जन्या नान्यथाख्यातिः

३५ सिध्यति। भ्रान्तिस्तु विधान्तरेणापि भविष्यतीत्याह—**अनिमित्त इति**। श्लोकव्यावर्त्यमाशङ्कां दर्शयति—**नन्विति**। यदि घटादिर्बाह्योऽर्थो न गृह्यते तर्हि तस्मिन्नसत्येव तदाभासता ज्ञानस्य विपर्यासः। अतस्मिंस्तद्बुद्धेस्तथात्वात्। विपर्यासे च स्वीकृते क्वचिदप्यविपर्यासो वक्तव्यः, भ्रान्तेरभ्रान्तिपूर्वकत्वस्यान्यथाख्यातिवादिभिरिष्टत्वादित्यर्थः। तत्र पूर्वार्धयोजनया परिहरति—**अत्रेति**। उक्तमेवार्थमुत्तरार्धयोजनया साधयति—**यदीति**। अभ्रान्तेरभावादसम्भवे भ्रान्तेरसति

**[1]तस्मान्न जायते चित्तं चित्तदृश्यं न जायते। तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम्।। २८।।**

**सोऽविपर्यासः परमार्थत इत्यतस्तदपेक्षयाऽसति घटे टाद्याभासता विपर्यासः स्यान्न तु तदस्ति कदाचिदपि चित्तस्यार्थ-संस्पर्शनम्। तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति न कथञ्चिद्विपर्यासोऽस्तीत्यभिप्रायः। अयमेव हि स्वभावश्चित्तस्य। यदुतासति निमित्ते घटादौ तद्वदवभासनम्।। २७।।**

**प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानु-मोदितम्। तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते—तस्मादित्यादि। यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात्। तस्मात् तस्यापि चित्तस्य जायमानाव-भासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम्। यथा चित्तदृश्यं न जायतेऽतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखित्वशून्यत्वानात्मत्वादि च, तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः। येऽपि शून्य-** १०

अनुभूतिस्वरूपाचार्यटीका

क्वचित् सत एव अन्यत्र असत्त्वेऽपि दोषात् ख्यातिरन्यथाख्यातिरिष्टा। साऽत्र सम्भवतीति चेत्, न, क्वचिदपि ज्ञानस्य सविषयत्वादर्शनात्। कथं तर्हि घटाद्याकारनिर्भासनं, तत्राह—**अयमेव हीति**। अन्वयव्यतिरेका-भावपरिहारेण तावन्मात्रत्वं स्वभावशब्देन विवक्षितम्। अविद्येति केचित्।।२७।।

वृत्तानुवादपूर्वकं श्लोकस्य तात्पर्यमाह—**प्रज्ञप्तेरित्यादिना**। घटस्फुरणं मे जातमित्यादिसंविज्जन्म न सत्यम्, दृश्यत्वान्नीलादिवदित्याह—**असत्येव जन्मनीति**। क्षणिकत्वं स्थायित्वविरोधिस्वरूपत्वम्, दुःखं क्लेशः, शून्यत्वं सुषुप्तादौ विच्छित्तिः, अनात्मत्वमसातत्यगमनमसर्वगतत्वम्, आदिशब्दादत्यन्तविलक्षणत्वमन्योन्यसादृश्यञ्च गृह्यते। तानि ये पश्यन्ति ते वै पश्यन्ति खे पदमित्यन्वयः। तत्र हेतुः—**तेनैव चित्तेनेति**। स्वस्कन्धाधिरोहकल्पायाः स्ववृत्तेर-शक्यत्वात् तद्दृश्यतां विना तद्धर्मावगत्यसम्भवाच्चेत्यर्थः। **पश्यन्त एवेति** अविपरिलुप्तदृक्स्वभावतां सूचयति। सर्वाभावसिद्धिर्हि दृग्बलात् भवति, दृशः पुनरभावः कथं सिध्यतीति भावः।।२८।। २०

आनन्दगिरिटीका

घटादौ घटाद्याभासता ज्ञानस्य कथं निर्वहतीत्याशङ्क्याऽऽह—**अयमेवेति**। स्वभावशब्देनाविद्योच्यते। न हि भ्रान्तिरभ्रान्तिपूर्विकेति नियमः। सविषयाणां भ्रमाणामविद्यात्वाभ्युपगमादित्यर्थः।।२७।।

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति—**तस्मादिति**। प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याऽऽह—**तस्येति**। वृत्तसङ्कीर्तनपूर्वकं श्लोकस्य तात्पर्यमाह—**प्रज्ञप्तेरिति**। २५ तच्च बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेन प्रवृत्तम्, तत्पुनराचार्येण भवत्वेव-मित्यनुज्ञातम्, बाह्यार्थवाददूषणस्य स्वमतेऽपि संमतत्वादित्याह—**बाह्यार्थेति**। बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह—**तदेवेति**। असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः। सम्प्रति विज्ञानवाददूषणमवतारयति—**तदिदमिति**। तस्मादित्यादि व्याचष्टे—**यस्मादिति**। **भूतदर्शनाद्** घटादेर्मृदादिमात्रं भूतं वस्तुतत्त्वं तस्यापि विज्ञप्तिमात्रं तत्त्वं तस्य शास्त्रतो दर्शनादिति ३० यावत्। द्वितीयपादं दृष्टान्तत्वेन विभजते—**यथेति**। विमतं विज्ञानजन्म न तात्त्विकं दृश्यत्वान्नीलपीतादिवदित्यर्थः। विपक्षे दोषमाह—**अत इति**। तत्त्वतो विज्ञानस्य जन्मायोगाद् ये तस्य तात्त्विकं जन्म पश्यन्ति ते पक्ष्यादीनां खेऽपि पदं पश्यन्तीत्यन्वयः। अनात्मत्वादीत्यादिशब्देनान्योन्यविलक्षणत्वमन्योन्यसादृश्यं च गृह्यते। तत्र हेतुं सूचयति—**तेनैवेति**। स्ववृत्तेरनुपपत्तेस्तद्दृश्यतामन्तरेण च तद्धर्मदृश्यताऽसम्भवादित्यर्थः। विज्ञानवादे फलितं विशेषं दर्शयति—**अत इति**। शून्यवादिनं प्रति विशेषं कथयति—**येऽपीति**। पश्यन्त एवेत्यविलुप्तदृग्रूपता द्योत्यते। दृग्बलादेव सर्वाभावः ३५ सिध्यति। दृगभावस्तु कथं सिध्येत्। न च तावद् दृगेव तदभावं साधयेत्। तयोरेककालत्वानुपपत्तेरित्यर्थः। किं च

१. तस्मान्न जायते चित्तम्—विज्ञानवादिनो बौद्धस्य वचनं-प्रज्ञप्तेः सनिमित्तत्वं (२५), चित्तं न संस्पृशत्यर्थम् (२६) निमित्तं न सदा चित्तं (२७) इति श्लोकत्रयमित्युक्तं बौद्धग्रन्थेष्वन्वेषणीयम्।

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः। प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति।।२९।।**
**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति। अनन्तता चादिमतो मोक्षस्य न भविष्यति।।३०।।**

**वादिनः पश्यन्त एव सर्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनाऽपि जिघृक्षन्ति।।२८।।**

५ **उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धम्। यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः। अजातं [1]यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यति।।२९।।**

**अयं चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते। अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति। न ह्यनादिः सन्नन्तवान् कश्चित् पदार्थो दृष्टो लोके।**
१० **बीजाङ्कुरसम्बन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत्। न। एकवस्त्वभावेनापोदितत्वात्। तथाऽनन्तताऽपि [2]विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्याऽऽदिमतो न भविष्यति। घटादिष्वदर्शनात्। घटादिविनाशवदवस्तुत्वाददोष इति चेत्। तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः, असत्त्वादेव शशविषाणस्येवाऽऽदिमत्त्वाभावश्च।।३०।।**

अनुभूतिस्वरूपाचार्यटीका

यदि क्षणिकत्वं शून्यत्वं वा न सम्भवति, किं तर्हि सम्भवतीति, तत्राह—**अजातमिति**।।२९।।
१५ इतश्चाजं सर्वमित्ययमेव परमार्थ इत्याह—**अनादेरिति**। **अतीतकोटिरहितस्येति**। पूर्वं नासीदित्यवच्छेदरहितस्येत्यर्थः। संसार अनन्तवान्, अनादिभावत्वात् आत्मवदित्यर्थः। सन्ताने व्यभिचारमाशङ्क्य दूषयति—**बीजाङ्कुरेति**। भावत्वादिति विशेष्यांशः तत्र न वर्तत इत्यर्थः। किञ्च, मोक्षो नानन्तकः आदिमत्त्वात् घटादिवदिति प्रसङ्गान्तरमाह—**तथाऽनन्तताऽपीति**। यथा घटादिध्वंसः कृतकोऽपि नित्यः तथा बन्धध्वंसः कृतकोऽपि नित्यो

आनन्दगिरिटीका

२० सर्वशून्यतां वदन्तः शून्यतादर्शनस्य स्वात्मदर्शनस्य च शून्यतां वदन्ति। तथा च स्वपक्षासिद्धिरित्यभि-प्रेत्याऽऽह—**स्वदर्शनस्येति**। **ततोऽपीति**। विज्ञानवादिभ्योऽपीत्यर्थः।।२८।।

यदि विज्ञानस्य बाह्यालम्बनत्वं क्षणिकत्वं शून्यत्वं च न सम्भवति किं तर्हि तत्त्वमेकरूपं भवतीत्याशङ्क्याऽऽह—**अजातमिति**। तस्याश्च प्रकृतेरन्यथात्वं पुरस्तादेव निरस्तमित्याह—**प्रकृतेरिति**। श्लोकस्य तात्पर्यमाह—**उक्तैरिति**। कूटस्थमद्वितीयं ब्रह्मेति यत्पूर्वत्र प्रतिज्ञातं तज्जन्मनो दुर्निरूपत्वादुक्तहेतुभिः सिद्धम्। तस्यैव
२५ सिद्धस्यार्थस्य फलमुपसंहर्तुमेष श्लोक इत्यर्थः। पूर्वार्धं योजयति—**अजातमिति**। यदि चित्तं स्फुरणमजातमभीष्टं तर्हि तद् ब्रह्मैव, तस्य कौटस्थ्यैकस्वाभाव्यात्तत्पुनर्वस्तुतो न जातमेव मायया जन्मवदिति कल्प्यते चेत् तस्याजातिरेवाजातत्वात् प्रकृतिर्भवतीत्यर्थः। द्वितीयार्धं योजयति—**अजातरूपाया इति**। तस्याश्चेदन्यथात्वं स्वरूपहानिरापतेदित्यर्थः।।

कूटस्थं तत्त्वं तात्त्विकमित्यत्र हेत्वन्तरमाह—**अनादेरिति**। विमतः संसारो नान्तवाननादिभावत्वादात्मवदित्यर्थः। किं च मोक्षोऽनन्तो न, भावत्वे सत्यादिमत्त्वाद् घटवदित्याह—**अनन्तेति**। श्लोकस्य तात्पर्यमाह—
३० **अयं चेति**। तत्र पूर्वार्धं व्याकरोति—**अनादेरिति**। **अतीतकोटिरहितस्य** पूर्वं नाऽऽसीदित्यवच्छेदवर्जितस्येत्यर्थः। योऽनादिभावः सोऽन्तवान्नेति व्याप्तिरात्मनि व्यक्तेत्याह—**न हीति**। बीजाङ्कुरयोर्हेतुफलभावेन सम्बन्धस्तस्य नैरन्तर्यं सन्तानस्तस्यानादिभावत्वेऽपि विच्छेदस्यान्तस्य दृष्टत्वादनैकान्तिकतेति शङ्कते—**बीजेति**। भावत्वविशेष्यांशस्य तत्रावर्तनान्न व्यभिचारशङ्केति दूषयति—**नैकेति**। द्वितीयार्धं व्याचष्टे—**तथेति**। यत्राऽऽदिमत्त्वं तत्र नानन्तत्वमिति व्याप्तिभूमिमाह—**घटादिष्विति**। यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसोऽपि भविष्यतीत्य-
३५ नैकान्तिकत्वमाशङ्कते—**घटादीति**। मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्येतेति दूषयति—**तथा चेति**। किं च प्रागसतः सत्तासमवायरूपं कार्यत्वं तदपि मोक्षस्यासत्त्वे न सिध्यतीत्याह—**असत्त्वादेवेति**।।३०।।

---

१. चित्तस्यैव स्फुरणरूपत्वं तवेष्टं चेत् तत् ब्रह्मैव तस्य भेदः जन्म च न स्तः।
२. तत्त्वज्ञानकालेत्यर्थः।

**अदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा। वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः।।३१।।**
**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते। तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः।।३२।।**
**सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात्। संवृतेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः।।३३।।**

**वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ।।३१-३२।।**

**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यत एतैः श्लोकैः।।३३।।** ५

अनुभूतिस्वरूपाचार्यटीका

भविष्यतीति अनैकान्तिकत्वमाह—**घटादीति**। परिहरति—**तथा चेति**। अभावत्वे सति मोक्षस्य परमार्थसत्त्वप्रतिज्ञाया हानिः स्यात्। प्रध्वंसोऽस्तीति सत्त्वसमारोपेण यथोच्यते तथा मोक्षोऽस्तीति सत्त्वसमारोपेणोच्यत इत्यर्थः। किञ्च, प्रागसतः सत्तासमवायादिलक्षणं कार्यत्वमभिमतं तार्किकाणां, तदपि मोक्षस्यासत्त्वे न स्यादित्याह—**असत्त्वादेवेति**। कादाचित्कत्वं प्रध्वंसस्य कार्यत्वमित्यपि वाङ्मात्रं कालसम्बन्धस्य भवनस्य चासम्भवादिति।।३०।। १०

भवतु तर्हि मोक्षस्याद्यन्तवत्त्वं, ततः को दोष इत्याशङ्क्याह—**आदावन्ते च यन्नास्त्यू**षरोदकादि **वर्तमानेऽपि तत्तथा** नास्त्येवेति सम्मतम्। तथा वितथैरूषरोदकादिभिः सदृशा आद्यन्तवत्त्वेन मिथ्यात्वेन समा मोक्षादयः अवितथा इव मूढैर्लक्षिताः स्युरित्यर्थः।।३१।।

ननु—ऊषरोदकादिना स्नानपानादिप्रयोजनं न निष्पद्यते, मोक्षस्वर्गपशुपुत्रादिषु तु सुखादिप्राप्तिः प्रयोजनं दृश्यते। अतो न वैतथ्यमित्याशङ्क्याऽऽह—**सप्रयोजनता तेषां** मोक्षादीनां **स्वप्ने विप्रतिपद्यते** व्यभिचरति। १५ जागरिते हि मुक्तोऽहं पुत्रवानहमिति मत्वा हृष्टो नरके पतितं विनष्टपुत्रञ्चात्मानं स्वप्ने पश्यन् शोचति। अतो नात्यन्तिकं सप्रयोजनत्वमित्यर्थः।।३२।।

किञ्च, येन येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं स सर्वोऽपि जागरिते तुल्यः। तस्मादप्यजं संविन्मात्रं तत्त्वमिति दर्शयितुमुपक्रमते—**सर्वे धर्मा इत्यादिना**। कायस्यान्तर्निदर्शनात् यदि स्वप्ने मिथ्यात्वं तर्हि विराट्-कायस्यान्तर्दर्शनात् सर्वे जाग्रद्धर्मा अपि मृषेत्यर्थः। यद्युचितदेशवैधुर्यात् स्वप्नस्य मिथ्यात्वं तर्हि संवृते निश्छिद्रेऽ- २० स्मिन् ब्रह्मणि प्रदेश(वत्प्रदेशान्तर)विधुरेऽखण्डे भूतानां विद्यमानानां दर्शनं कुतः स्यात्? न कुतोऽपि, अनवकाशत्वात् ब्रह्मण इत्यर्थः।।३३।।

आनन्दगिरिटीका

अस्तु तर्हि मोक्षस्याऽऽद्यन्तवत्त्वं तत्राऽऽह—**आदाविति**। यदित्यूषरोदकादि गृह्यते। **तथा** वस्तुतो नास्त्येवेति यावत्। वितथैस्तैरेव मरीच्युदकादिभिः। सादृश्यमाद्यन्तवत्त्वम्। विमता मोक्षादयो न परमार्थसन्तो भवितु- २५ मर्हन्त्याद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः। कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याऽऽह—**अवितथा इति**। लक्षिता मूढैरविचारकैरिति शेषः। ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनां तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भात्र मोक्षादिवैतथ्यमित्याशङ्क्याऽऽह—**सप्रयोजनतेति**। तेषां मोक्षादीनामिति यावत्। पुनरुक्तिशङ्कां वारयति—**वैतथ्य इति**।।३१-३२।।

किं च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं ३० तत्त्वमेष्टव्यमिति विवक्षित्वाऽऽह—**सर्व इति**। यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्वस्य जागरितस्य दर्शनान्मिथ्यात्वं दुर्वारमित्यर्थः। किं च योग्यदेशवैधुर्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते ब्रह्मण्यखण्डैकरसे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्याद् ब्रह्मणोऽनवकाशत्वा-दित्याह—**संवृत इति**। अवतारितश्लोकसहितानामुत्तरश्लोकानां 'जात्याभास'मित्यस्मात्प्राक्तनानां तात्पर्यमाह—**निमित्तस्येति**।।३३।। ३५

**न युक्तं दर्शनं गत्वा कालस्यानियमाद् गतौ। प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते।।३४।।**
**मित्राद्यैः सह संमन्त्र्य सम्बुद्धो न प्रपद्यते। गृहीतं चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति।।३५।।**
**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात्। यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम्।।३६।।**

**जागरिते गत्यागमनकालो नियतो देशः प्रमाणतो यस्तस्यानियमान्नियमस्याभावात् स्वप्ने न देशान्तर-गमनमित्यर्थः।।३४।।**

५ **मित्राद्यैः सह संमन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते। गृहीतं च यत्किञ्चिद्धिरण्यादि न प्राप्नोति। अतश्च न देशान्तरं गच्छति स्वप्ने।।३५।।**

**स्वप्ने चाटन् दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात्। यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः। स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः।।३६।।**

१० अनुभूतिस्वरूपाचार्यटीका

किञ्च, गतौ नियतस्य कालस्याभावात् स्वप्ने गत्वा दर्शनं नेष्टम्, तथा मरणादूर्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमपि न युक्तं कालानवच्छिन्नत्वादित्यर्थः। यद्देशस्थः स्वप्नं पश्यति, प्रबुद्धस्तस्मिन् देशे न विद्यत इति मिथ्यात्वमिष्टम्। तथा यद्देशस्थः संसारं पश्यति ब्रह्मभावं प्रतिबुद्धस्तस्मिन् देशे न विद्यते पूर्वरूपेणानवस्थानात्, अतो जागरितस्य मिथ्यात्वमित्यर्थः।।३४।।

१५ किञ्च, स्वप्नेऽपि विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि 'परं श्रेयोऽस्माभिः साधनीय'मिति सब्रह्म-चारिभिस्सह समालोच्याविद्यानिद्रातः प्रबुद्धो न तच्छ्रेयस्साध्यत्वमालोचितं प्रतिपद्यते नित्यमुक्तत्वनिश्चयात् सर्व-स्यातो मुमुक्षुत्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्यर्थः। किञ्च, स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति तत्साध्यफलाभावात्। अथवा लोकदृष्ट्या यत्किञ्चिद् गृहीतं वस्त्रान्नोदकादि तत् विद्वान्नैव किञ्चित्करोमीति प्रत्ययबाधात् स्वसम्बन्धित्वेन नैव पश्यति इति आभासमात्रमेवेत्यर्थः।।३५।।

२० किञ्च, स्वप्ने येन कायेन पर्यटति, सोऽसन् पृथङ्निश्चलकायदर्शनात्। तथा जागरिते येन परिव्राजकादिदेहेन

आनन्दगिरिटीका

उक्तमेवार्थं प्रपञ्चयति—**न युक्तमित्यादिना**। स्वप्ने देशान्तरगतौ नियतकालाभावान्न गत्वा दर्शनमिष्टं तथा मरणादूर्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः। किं च यद्देशस्थः स्वप्नं पश्यति प्रतिबुद्धस्तस्मिन् देशे नास्तीति मिथ्यात्वमभीष्टम्। तथा यस्मिन् देशे स्थितः संसारमनुभवति ब्रह्मभावं प्रतिपन्नस्तस्मिन्

२५ देहदेशे नास्ति परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह—**प्रतिबुद्धश्चेति**। श्लोकस्य तात्पर्यार्थं कथयति—**जागरित इति**।।३४।।

किं च यथा स्वप्ने विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति स ब्रह्म-वादिभिः सह समालोच्याविद्यानिद्रातः प्रतिबुद्धो नैव [1]श्रेयःसाध्यत्वमालोचितं प्रतिपद्यते। सर्वस्य नित्यमुक्तत्व-निश्चयात्। अतो मुमुक्षुत्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्याह—**मित्राद्यैरिति**। किं च स्वप्नवदेव गृहीतमुपदेशादि

३० विद्वान्न पश्यति तत्साध्यफलाभावादित्याह—**गृहीतं चेति**। अथ वा लोकदृष्ट्या यत्किञ्चिद् गृहीतं वस्त्रान्नोदकादि तद्विद्वान्नैव किञ्चित्करोमीति प्रतिबुद्धोऽन्यप्रत्ययबाधान्न स्वसम्बन्धित्वेनाधिगच्छति। तेन तदाभासमात्रमेवेत्याह—**गृहीतं चेति**। उक्तमर्थं विवक्षित्वा श्लोकाक्षराणि योजयति—**मित्राद्यैरित्यादिना**।।३५।।

किं च स्वप्नावस्थायां येन देहेन नाड्यादिषु पर्यटति स मिथ्या पृथग्भूतस्य निश्चलस्य देहस्य दर्शनात्। तथा जागरिते येन परिव्राजकादिशरीरेण लोकस्य पूज्यो द्वेष्यो वा दृश्यते स मिथ्या कथ्यते। पृथगेव कूटस्थ-

३५ ब्रह्माख्यशरीरस्यानुभवादित्याह—**स्वप्ने चेति**। किं च यथा स्वप्ने देहो मिथ्या तथा चित्तदृश्यं जडं सर्वमवस्तुकं मिथ्याभूतमेषितव्यमित्याह—**यथेति**। पूर्वार्धगतान्यक्षराणि योजयति—**स्वप्न इति**। उत्तरार्धगतानि व्याकरोति—**यथेत्यादिना**। प्रकरणार्थमुपसंहरति—**स्वप्नेति**।।३६।।

---

१. श्रेयसो मोक्षस्य साध्यत्वमस्माभिः इति।

**ग्रहणाज्जागरितवत् तद्धेतुः स्वप्न इष्यते। तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते।।३७।।**
**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्। न च भूतादभूतस्य सम्भवोऽस्ति कथंचन।।३८।।**
**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः। असंत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति।।३९।।**

**इतश्चासत्त्वं जाग्रद्वस्तुनो, जागरितवज्जागरितस्येव ग्रहणाद् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्य स स्वप्नस्तद्धेतुर्जागरितकार्यमिष्यते। तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्। यथा स्वप्न इत्यभिप्रायः। यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात् साधारणविद्यमानवस्तुवदवभासमानं[1] न तु साधारणं विद्यमानवस्तु[2] स्वप्नवदेवेत्यभिप्रायः।।३७।।**

**ननु स्वप्नकारणत्वेऽपि जागरितवस्तुनो न स्वप्नवदवस्तुत्वम्। अत्यन्तचलो हि स्वप्नः, जागरितं तु स्थिरं लक्ष्यते। सत्यमेवमविवेकिनां स्यात्। विवेकिनां तु न कस्यचिद्वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्याऽऽत्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु ''सबाह्याभ्यन्तरो ह्यज'' इति। यदपि मन्यसे जागरितात् सतोऽसत् स्वप्नो जायत इति, तदसत्। न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके। न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि।।३८।।**

**ननूक्तं त्वयैव स्वप्नो जागरितकार्यमिति, तत्कथमुत्पादोऽप्रसिद्ध इत्युच्यते। शृणु तत्र तथा कार्यकारण-**

अनुभूतिस्वरूपाचार्यटीका

लोकस्य पूज्यो द्वेष्यो वा भवति, सोऽसन् कूटस्थब्रह्माख्यकायस्यानुभवादित्यर्थः। किं बहुना? यथा स्वाप्नः कायोऽसन् तथा चित्तदृश्यं जडजातमवस्तुकं चैतन्यातिरिक्तमसदेवेत्यर्थः।।३६।।

सति प्रमातरि बाध्यत्वं स्वप्नस्य मिथ्यात्वम्, तददर्शनात् स्वप्नदृगपेक्षया जागरितस्य सत्त्वम्, न परमार्थतः। स्वप्नं मिथ्याभूतं प्रति कारणत्वादेवेत्याह—**तस्यैव स्वप्नदृश एव सदिति**। अनेकप्रतिपत्तृसाधारणवस्तुवदवभासमानं जागरितं न तत्त्वतस्साधारणं तत्त्वतः प्रतिपत्तृभेदाभावात्, ''एको देवः सर्वभूतेषु गूढ''इत्यादिश्रुतेरित्यर्थः।।३७-३८।।

आनन्दगिरिटीका

यथा जागरितं तथा स्वप्नो गृह्यते। तथा च स्वप्नस्य जागरितकार्यत्वाद् यः स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्नवत् तन्मिथ्यात्वमित्याह—**ग्रहणादिति**। किं च जागरितस्य विद्यमानत्वमनेकसाधारणत्वं च वस्तुतो नास्ति स्वप्नकारणत्वात्किं तु तथा भासमानत्वमित्याह—**तद्धेतुत्वादिति**। जागरितस्य वस्तुतोऽसत्त्वे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—**इतश्चेति**। इतःशब्दार्थमेव स्फोरयन् पूर्वार्धं योजयति—**जागरितवदिति**। उत्तरार्धं योजयति—**तद्धेतुत्वादिति**। सति प्रमातरि बाध्यत्वं स्वप्नस्य मिथ्यात्वं, जागरितस्य पुनस्तदनुपलम्भात् परमार्थतः सत्त्वम्। कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात्। न हि सर्वसाधारणं विद्यमानं जागरितं मिथ्या भवितुं युक्तमित्याशङ्क्याऽऽह—**यथेत्यादिना**।।३७।।

कार्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैषम्यादित्याशङ्क्याऽऽह—**उत्पादस्येति**। यत्तु कार्यकारणत्वं सत्यासत्ययोरिव स्वप्नजागरितयोरित्युक्तं तद् दुरुक्तमित्याह—**न चेति**। श्लोकव्यावर्त्यामाशङ्कामाह—**नन्विति**। किमिदं वैलक्षण्यमविवेकिनां प्रतिभाति, किं वा विवेकिनामिति विकल्प्याऽऽद्यमङ्गीकरोति—**सत्यमिति**। द्वितीयं प्रत्याह—**विवेकिनां त्विति**। द्वितीयभागमाकाङ्क्षाद्वारा विभजते—**यदपीत्यादिना**। सम्भवो नासतोऽस्तीत्येतद् दृष्टान्तेन साधयति—**न हीति**। कथञ्चिदपि सतोऽसतो वेत्यर्थः।।३८।।

यदुक्तमुत्पादस्याप्रसिद्धत्वं तदयुक्तम्, स्वप्नजागरितयोस्त्वया कार्यकारणत्वाङ्गीकरणादित्याशङ्क्याऽऽह—**असदिति**। जागरिते दृष्टस्य स्वप्ने दर्शनाज्जागरितस्य स्वप्नं प्रति कारणत्वं चेत् तर्हि स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात् तस्य जागरितं प्रति कारणत्वं किं न स्यादित्याशङ्क्याऽऽह—**असत्स्वप्नेति**। श्लोकव्यावर्त्यामाशङ्कामुत्थापयति—**नन्विति**। पूर्वापरविरोधे चोदिते परिहारे कथ्यमाने मनःसमाधानं प्रार्थयते—**शृण्विति**। तमेव प्रकारं

१. जागरितमपीति शेषः। २. विद्यमानं वस्तु यस्य तत्।

**नास्त्यसद्धेतुकमसत् सदसद्धेतुकं तथा। सच्च सद्धेतुकं नास्ति सद्धेतुकमसत् कुतः।।४०।।**

भावोऽस्माभिरभिप्रेत इति। असदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्नेऽपि जागरितवद् ग्राह्यग्राहकरूपेण विकल्पयन् पश्यति, तथाऽसत् स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यत्यविकल्पयन्। चशब्दात् तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः। तस्माज्जागरितं स्वप्नहेतुरुच्यते
५ न तु परमार्थसदिति कृत्वा।।३९।।

परमार्थतस्तु न कस्यचित् केनचिदपि प्रकारेण कार्यकारणभाव उपपद्यते। कथम्? नास्त्यसद्धेतुकमसच्छशविषाणादि हेतुः कारणं यस्यासत एव खकुसुमादेस्तदसद्धेतुकमसन्न विद्यते। तथा सदपि घटादिवस्तु असद्धेतुकं शशविषाणादिकार्यं नास्ति। तथा सच्च विद्यमानं घटादि विद्यमानघटादिवस्त्वन्तरकार्यं नास्ति। सत्कार्यमसत्कुत एव सम्भवति। न चान्यः कार्यकारणभावः सम्भवति शक्यो वा कल्पयितुम्। अतो विवेकिनामसिद्ध एव कार्यकारणभावः
१० कस्यचिदित्यभिप्रायः।।४०।।

अनुभूतिस्वरूपाचार्यटीका

जागरितस्य स्वप्नवासनामयत्वाप्रसिद्धेः स्वप्नस्य च जागरितवासनामयत्वप्रसिद्धेः जागरितं कारणं स्वप्नः कार्यमित्युक्तम्, इदानीं तदपि न नियतमित्याह—**चशब्दादिति**।।३९।।

व्यवहारदृष्ट्या स्वप्नजागरितयोः कार्यकारणभाव उक्तः, परमार्थदृष्ट्या त्वप्रसिद्ध एव कार्यकारणभाव
१५ इत्याह—**नास्त्यसद्धेतुकमिति**। अवस्तुन एवाज्ञानादवस्त्वेव कार्यं जायत इति कुमायावादिनां दृष्टिः, तां व्यावर्तयति। आद्युपादानादसद्रूपे भेदाभावात् न तत्र कार्यकारणभावः शशविषाणादाविवेत्यर्थः। तथा हि—असद्रूपं भिद्यमानं नासदाकारेण भिद्यते प्रतियोगिनोऽसत्त्वाभावापातात्। व्यावर्तकासाधारणाकारमन्तरेण व्यावृत्तधीप्रकारा[व्यावृत्तावेका]भावप्रसङ्गात्। सदाकारेण भेदेनासत्त्वं उभयोः पूर्वोत्तरकालयोश्चानिर्वाच्यताऽविशेषे व्यर्थं जन्म कारकोपादानं च, अतो नानिर्वाच्यं जायत इति। शून्यात् सत्कार्यं जायत इति शून्यवादः। तं निराचष्टे
२० द्वितीयपादेन—**सदसद्धेतुकं तथेति**। कार्यप्रसवशक्तत्यात्मत्वं हि कारणत्वमसतो निरात्मकस्य कथं स्यात्। न च कार्ये शून्यान्वयो भाति, नाप्युदाहरणमिति भावः। कार्यकारणयोः द्वयोरपि सत्यत्वमिति सांख्यादयः। तान् प्रत्याचष्टे तृतीयपादेन—**सच्च सद्धेतुकं नास्तीति**। सद्रूपे भेदाभावात् सतोऽन्यस्यासत्त्वात् सत्त्वस्य

आनन्दगिरिटीका

प्रकटयत्रक्षराणि योजयति—**असदिति**। तुच्छत्वं व्यवच्छिनत्ति—**रज्ज्वति**। दर्शनस्याऽऽभासत्वं सूचयति—
२५ **विकल्पितमिति**। यथा जाग्रद्दृष्टस्य विशेषस्य स्वप्ने दर्शनाज्जागरितवासनाधीनः स्वप्नो जागरितकार्यत्वेन व्यवह्रियते तथा स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात् तत्कार्यत्वं जागरितस्य प्राप्तमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—**तथेति**। यत्तु स्वप्नजागरितयोरुक्तं कार्यकारणत्वं तदपि न नियतमिति निपातार्थं कथयति—**चशब्दादिति**। तस्मात्प्रायशः स्वप्नस्य जाग्रद्वासनाधीनत्वादिति यावत्। जागरितस्य परमार्थसत्त्वात् कार्यस्य स्वप्नस्यापि तादात्म्यात् तथात्वं विवक्षित्वा कार्यकारणत्वप्रथा कथं न भवतीति व्यावर्त्यं कथयति—**न त्विति**।।३९।।

३० व्यवहारदृष्ट्या कार्यकारणत्वं स्वप्नजागरितयोरुक्तम्। तत्त्वदृष्ट्या त्वप्रसिद्धमेव क्वचिदपि कार्यकारणत्वमिति वदन् वस्तुनोऽज्ञानादवस्त्वेव कार्यं भवतीति मतं व्यावर्त्तयति—**नास्तीति**। शून्यवादिनस्तु सदेव कार्यं जायते शून्यादिति मन्यन्ते, तान्प्रत्याह—**सदिति**। तथेत्यनेन नास्तीत्येतदनुकृष्यते। सांख्यादयस्तु कार्यकारणयोर्द्वयोरपि सत्त्वं सङ्गिरन्ते, तान्प्रत्युक्तम्—**सच्चेति**। सद् ब्रह्म कारणं मिथ्याप्रपञ्चसृष्टेरित्येके वर्णयन्ति, तान्निराचष्टे—**सद्धेतुकमिति**। श्लोकस्य तात्पर्यमाह—**परमार्थतस्त्विति**। प्रसिद्धं कार्यकारणत्वं यया कया च
३५ प्रक्रियया प्रतिपादयितुमुचितमन्यथा प्रसिद्धिप्रकोपादित्याक्षिपति—**कथमिति**। अनिर्वाच्यं मायामयं कार्यकारणत्वं प्रतीतिमात्रसिद्धमयौक्तिकमधिकृत्य प्रसिद्धिरविरुद्धेत्यभिसन्धायाऽऽद्यं पादं विभजते—**नास्तीत्यादिना**। द्वितीयं पादं व्याचष्टे—**तथेत्यादिना**। तृतीयं पादं व्याकरोति—**तथा सच्चेति**। चतुर्थपादार्थमाह—**(अ)सदिति**। अस्तु तर्हि प्रकारान्तरेण कार्यकारणभाव इत्याशङ्क्य योग्यानुपलब्धिविरुद्धत्वान्मैवमित्याह—**न चेति**।।४०।।

**विपर्यासाद् यथा जाग्रदचिन्त्यान् भूतवत्स्पृशेत्। तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति।।४१।।**
**उपलम्भात् समाचारादस्तिवस्तुत्ववादिनाम्। जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा।।४२।।**

**पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावाशङ्कामपनयन्नाह—विपर्यासादविवेकतो यथा जाग्रत् जागरिते अचिन्त्यान् भावानशक्यचिन्तनीयान् रज्जुसर्पादीन् भूतवत्परमार्थवत् स्पृशेत् स्पृशन्निव विकल्पयेदित्यर्थः। कश्चित् यथा तथा स्वप्ने विपर्यासाद्धस्त्यादीन् धर्मान् पश्यन्निव विकल्पयति। तत्रैव पश्यति न तु जागरितादुत्पद्यमाना-नित्यर्थः।।४१।।** ५

**याऽपि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा—उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः। समाचाराद् वर्णा-श्रमादिधर्मसमाचरणात्। ताभ्यां हेतुभ्यामस्तिवस्तुत्ववादिनामस्ति वस्तुभाव इत्येवंवदनशीलानां दृढाग्रहवतां श्रद्दधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिः। तां गृह्णन्तु तावत्। वेदान्ताभ्यासिनां तु स्वयमेवाजाद्वयात्मविषयो विवेको भविष्यतीति, [1]न तु परमार्थबुद्ध्या। ते हि श्रोत्रियाः स्थूलबुद्धित्वादजातेरजातिवस्तुनः सदा त्रस्यन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः। उपायः सोऽवतारायेत्युक्तम्।।४२।।** १०

अनुभूतिस्वरूपाचार्यटीका

किञ्चित् [दा]कारेण कारणत्वेऽतिप्रसङ्गाच्चेत्यर्थः। सद्ब्रह्म कारणं मिथ्याप्रपञ्चसृष्टेरिति मन्दब्रह्मविदः, तान्प्रत्याह चतुर्थपादेन—**सद्धेतुकमसत्कृत इति।** कार्यस्योपादानतादात्म्येन सत्त्वप्रसङ्गात् कूटस्थस्य सतः चिदेकरसस्य विकारशक्त्ययोगाच्च। मायाद्वारेण ब्रह्म कारणमिति चेत्, न, तत्सङ्गाभावे द्वारत्वस्य वाङ्मात्रत्वात्। तत्सङ्गे च असङ्गत्वादिश्रुतिकोपः स्यात्। मिथ्यासङ्गे न दोष इति चेत्, न, विशेषणवैफल्यात्। किञ्च, मायाऽपि कारणं नो वा? आद्ये नैकविज्ञानेन सर्वविज्ञानम्। अपि च द्वारशब्दो व्यर्थः। शून्यकारणे चैकवचननिर्देशो [विरुद्धयेत] "यतो वा इमानि" इत्यादिः, कारणत्वमपि तस्याः न चेतनवर्गं प्रति, विरोधात्। न च जडवर्गं प्रति, अविशेषात्। अन्त्ये प्रकृतिश्रुतिविरोधोऽकिञ्चित्करत्वेन द्वारत्वमपि न स्यात्। किञ्च, मायाऽपि प्रकाशते चेत् चिदेव; न प्रकाशते चेत् न व्यवहाराङ्गम्। तस्मात् तत्त्वदृष्ट्याऽप्रसिद्ध एव कार्यकारणभावः।।४०-४१।। १५

कथं तर्हि "जन्माद्यस्य यत" इत्यादिसूत्रैः जगत्कारणं ब्रह्मासुसूचत् सूत्रकारः। तत्राह—**उपलम्भा-दिति।**।४२।। २०

आनन्दगिरिटीका

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्यकारणत्वमित्यत्रैव हेत्वन्तरमाह—**विपर्यासादिति।** श्लोकस्य तात्पर्य-माह—**पुनरपीति।** अक्षरार्थं कथयति—**विपर्यासादित्यादिना।** कश्चिदित्यस्य पूर्वेण क्रियापदेन सम्बन्धः। दृष्टान्त-मनूद्य दार्ष्टान्तिकमाह—**यथेत्यादिना।**।४१।। २५

तत्त्वदृष्ट्या कार्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रप्रमुखैः सूत्रैर्जगत्कारणं ब्रह्म सूत्रितमित्या-शङ्क्याऽऽह—**उपलम्भादिति।** अविवेकिनां विवेकोपायत्वेन कार्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्यर्थः। श्लोका-क्षराणि व्याचष्टे—**याऽपीत्यादिना।** अस्ति वस्तुभावो द्वैतस्येति शेषः। कार्यकारणभावमुपेत्य जन्मोपदिशताम-द्वैतवादिनां मन्दविवेकिषु विवेकदार्ढ्योपायत्वेन कथं तदुपदेशः स्यादित्याशङ्क्याऽऽह—**तामिति।** यदा ब्रह्मणः सकाशादशेषं जगद्भवतीत्यभ्युपेतं तदा तदतिरेकेण जगतोऽभावाद् ब्रह्मैव सर्वमिति निश्चितम्। तद्विषयेषु च वेदान्तेषु पौर्वापर्येणाऽऽलोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसादादेव कूटस्थाद्वितीयवस्तुविवेकदार्ढ्यं सेत्स्यतीत्यभिप्रेत्या-द्वैतवादिभिर्जातिरुपदिष्टा, न तु द्वैतस्य श्रुतितो न्यायतश्च निरूपयितुमशक्यस्य परमार्थत्वं गृहीत्वा जातिरुपदिष्टेत्य-जातिरेव पारमार्थिकीत्यर्थः। चतुर्थपादार्थमाह—**ते हीति।** तेषां विवेकोपायत्वेन जातिरुपदिष्टेत्यत्रोपक्रममनुकूलयति—**उपाय इति।**।४२।। ३०

१. इति निश्चित्य तेषां चित्तसमाधानाय जगज्जन्मोपदिष्टं न तु द्वैतस्य सत्यत्वाऽऽग्रहेणेत्यर्थः। ३५

**अजातेस्त्रसतां तेषामुपलम्भाद् वियन्ति ये। जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति।।४३।।**

**उपलम्भात् समाचारान्मायाहस्ती यथोच्यते। उपलम्भात् समाचारादस्ति वस्तु तथोच्यते।।४४।।**

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च। अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम्।।४५।।**

**ये चैवमुपलम्भात्समाचाराच्चाजातेरजातिवस्तुनस्त्रसन्तोऽस्ति वस्त्वित्यद्वयादात्मनो वियन्ति विरुद्धं यन्ति, ५ द्वैतं प्रतिपद्यन्त इत्यर्थः। तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति। विवेकमार्गप्रवृत्तत्वात्। यद्यपि कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति। सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः।।४३।।**

**ननूपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्त्विति। न। उपलम्भसमाचारयोर्व्यभिचारात्। कथं व्यभिचार इत्युच्यते। उपलभ्यते हि मायाहस्ती हस्तीव, हस्तिनमिवात्र समाचरन्ति बन्धनारोहणादिहस्तिसम्बन्धिभिर्धर्मैर्हस्तीति १० चोच्यतेऽसन्नपि यथा तथैवोपलम्भात् समाचाराद् द्वैतं भेदरूपमस्ति वस्त्वित्युच्यते। तस्मान्नोपलम्भसमाचारौ द्वैतवस्तुसद्भावे हेतू भवत इत्यभिप्रायः।।४४।।**

**किं पुनः परमार्थसद्वस्तु यदास्पदा जात्याद्यसद्बुद्धय इत्याह—अजाति सज्जातिवदवभासत इति जात्याभासम्। तद्यथा देवदत्तो जायत इति। चलाभासं चलमिवाऽऽभासत इति। यथा स एव देवदत्तो गच्छतीति। वस्त्वाभासं वस्तु द्रव्यं धर्मि तद्वदवभासत इति वस्त्वाभासम्। यथा स एव देवदत्तो गौरो दीर्घ इति। जायते १५ देवदत्तः स्पन्दते दीर्घो गौर इत्येवमवभासते परमार्थतस्त्वजमचलमवस्तुत्वमद्रव्यं च। किं तदेवंप्रकारम्? विज्ञानं विज्ञप्तिः। जात्यादिरहितत्वाच्छान्तम्। अत एवाद्वयं च तदित्यर्थः।।४५।।**

अनुभूतिस्वरूपाचार्यटीका

ननु—"उदरमन्तरं कुरुते अथ तस्य भयं भवति" "ये के चात्महनो जनाः" "अन्धं तमः प्रविशन्ति" इत्यादिश्रुतिभ्यो ब्रह्मणि विकारदर्शिनां भयप्राप्त्यात्महानिदोषाः श्रूयन्ते। अतः श्रोत्रियाः सूत्रकृता नान्वग्राहिषत, २० तत्राह—**अजातेस्त्रसतां तेषामिति**। "न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छती"त्यादिस्मृतिभ्यो यद्यपि नात्यन्त एवाधःपातः स्यात्। तथापि निन्दानुपपत्त्या कश्चिद् दोषः कल्प्यते, तत्राह—**दोषोऽप्यल्प इति**। सम्यग्दर्शनाप्राप्तिहेतुको गर्भवासादिलक्षण इत्यर्थः।।४३-४४-४५।।

आनन्दगिरिटीका

"उदरमन्तरं कुरुते। अथ तस्य भयं भवती"त्यादिश्रुतिभ्यो ब्रह्मणि विकारदर्शिनां भयप्राप्तिः श्रूयते। २५ तथा च श्रोत्रियाणामपि भेददर्शिनां नानुग्राह्यतेत्याशङ्क्याऽऽह—**अजातेरिति**। "न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छती"ति स्मृतेस्तेषामात्यन्तिकपतनाभावेऽपि निन्दानुपपत्त्या कश्चिद्दोषलेशः सम्भवतीत्याशङ्क्य सम्यग्दर्शनाप्राप्तिप्रयुक्तं गर्भवासादिदोषमभ्यनुजानाति—**दोषोऽपीति**। अन्वयमादर्शयन् पादत्रयगतान्यक्षराणि योजयति—**ये चेत्यादिना**। चतुर्थपादं व्याचष्टे—**यद्यपीति**। कश्चिन्निन्दानुपपत्तिसूचित इति यावत्।।४३।।

यत्तु हेतुभ्यां द्वैतस्यास्तित्वमुक्तं तद् दूषयति—**उपलम्भादिति**। श्लोकव्यावर्त्यामाशङ्कामनूद्य दूषयति— ३० **नन्वित्यादिना**। व्यभिचारस्यासिद्धिमाशङ्क्य परिहरति—**कथमित्यादिना**। उपलम्भसमाचारौ मायामये हस्तिनि वस्तुत्वाभावेऽपि भवतः, तथा द्वैतेऽपि न तयोरस्ति वस्तुत्वसाधकत्वमित्युपसंहरति—**तस्मादिति**।।४४।।

भूतदर्शनावष्टम्भेन निमित्तस्यानिमित्तत्वमुक्तमेतदन्तैः श्लोकैर्विप्रपञ्चितम्। सम्प्रति भूतदर्शनमुपसंहरति— **जात्याभासमिति**। श्लोकाक्षराण्याकाङ्क्षाद्वारा विवृणोति—**किं पुनरित्यादिना**। गौरत्वदीर्घत्वोक्त्या देवदत्तस्य गुणवत्त्वेन द्रव्यत्वं स्फुटीक्रियते। पूर्वार्धार्थानुवादेनापरार्धं योजयति—**जायत इत्यादिना**। विशेष्यं प्रश्नपूर्वकं ३५ विशदयति—**किं तदित्यादिना**।।४५।।

[1]एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः। एवमेव विजानन्तो न पतन्ति विपर्यये।।४६।।
ऋजुवक्रादिकाभासमलातस्पन्दितं यथा। ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा।।४७।।
अस्पन्दमानमलातमनाभासमजं यथा। अस्पन्दमानं विज्ञानमनाभासमज तथा।।४८।।

एवं यथोक्तेभ्यो हेतुभ्यो न जायते चित्तम्, एवं धर्मा आत्मानोऽजाः स्मृता ब्रह्मविद्भिः। धर्मा इति बहुवचनं देहभेदानुविधायित्वादद्वयस्यैवोपचारतः। एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तस्त्यक्तबाह्यैषणाः पुनर्न पतन्त्यविद्याध्वान्तसागरे विपर्यये। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिमन्त्रवर्णात्।।४६।। ५

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह—यथा हि लोक ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयिविषयाभासमित्यर्थः। किं तत्? विज्ञानस्पन्दितम्। स्पन्दितमिव स्पन्दितमविद्यया[2]। न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति। अजाचलमिति ह्युक्तम्।।४७।। १०

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाजायमानमनाभासमजं यथा तथाऽविद्यया स्पन्दमानमविद्योपरमेऽस्पन्दमानं जात्याद्याकारेणानाभासमजमचलं भविष्यतीत्यर्थः।।४८।।

### अनुभूतिस्वरूपाचार्यटीका

चैतन्यस्याजत्वमुपसंहृत्य सर्वजीवानां तावन्मात्रस्वभावत्वादजब्रह्मैकाकारत्वमाह—**एवंधर्मा अजाः स्मृता इति।** उक्तवस्तुज्ञानस्य फलमाह—**एवमेवेति।**।४६।। १५

यदवाद्यजाचलं विज्ञानं जात्याभासं चलाभासं चेति, तद् दृष्टान्तेन प्रपञ्चयति—**ऋजुवक्रादिकेति।**

अप्रच्युतप्राच्यस्वरूपस्यासत्यनानाकारावभासो विवर्तः स्पन्दितम्। विज्ञानं शान्तमित्युक्तम् तत्र दृष्टान्तमाह—**अस्पन्दमानमिति।**।४८।।

### आनन्दगिरिटीका

ब्रह्मणश्चिद्रूपस्याजत्वमुपपादितमुपसंहरति—**एवं नेति।** चित्प्रतिबिम्बानां जीवानां बिम्बभूतब्रह्ममात्रत्वादजत्वमविशिष्टमित्याह—**एवमिति।** उक्तब्रह्मात्मैक्यज्ञानस्य फलमाह—**एवमिति।** श्लोकाक्षराणि व्याकरोति—**एवमित्यादिना।** कार्यकारणभावस्य दुर्भणत्वादयो यथोक्ता हेतवः। चित्तं चैतन्यं ब्रह्मेति यावत्। **एवमिति।** प्रतिबिम्बानां बिम्बमात्रत्वात् जीवानामपि प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यर्थः। अद्वयस्य बहुवचनभाक्त्वमयुक्तमित्याशङ्क्याऽऽह—**धर्मा इतीति।** उत्तरार्धं योजयति—**एवमेवेति।** विज्ञानं विज्ञप्तिरूपं ब्रह्मेत्यर्थः। यथोक्तज्ञाने मुख्यानधिकारिणो व्यपदिशति—**त्यक्तेति।** उक्तज्ञानवतां संसारसन्त्रासाभावे प्रमाणमाह—**तत्रेति।**।४६।। २०

विज्ञानमजमचलमेव जात्याभासं चलाभासं चेत्युक्तम्, तदिदानीं दृष्टान्तेन प्रपञ्चयति—**ऋजुवक्रादिकेति।** अप्रच्युतपूर्वस्वरूपस्यासत्यनानाकारावभासो विवर्तः, तदत्र विज्ञानस्य स्पन्दितत्वम्। श्लोकस्य तात्पर्यमाह—**यथोक्तमिति।** तत्र दृष्टान्तभागं व्याचष्टे—**यथा हीति।** दार्ष्टान्तिकं योजयति—**तथेति।** किमित्यविद्यामन्तरेण मुख्यमेव स्पन्दनं विज्ञानस्य नेष्यते, तत्राऽऽह—**न हीति।** निरवयवस्य विभुनो विज्ञानस्य वस्तुतश्चलनविकलस्याविद्यमानमेव स्पन्दनमित्यत्र वाक्योपक्रमानुकूल्यं कथयति—**अजेति।**।४७।। २५

विज्ञानं शान्तमित्युक्तं दृष्टान्ते स्पष्टयति—**अस्पन्दमानमिति।** श्लोकाक्षराणि व्याकरोति—**अस्पन्दमानमित्यादिना।** तथाऽविद्ययेत्यत्राविद्ययेति च्छेदः।।४८।। ३०

---

१. एवं न जायते चित्तम्—नित्यविज्ञानरूपं ब्रह्मेत्यर्थः। धर्माः जीवाः ब्रह्मरूपत्वात् अजाः। विपर्यये भ्रमे तदुपलक्षितसंसारे न पतन्ति।

२. विज्ञानस्य नित्यत्वसमर्थनं पूर्वं कृतम् "तस्य पश्यन्ति ये जातिम् खे वै पश्यन्ति ते पद"मित्यनेन। तत्कथं तस्य स्पन्दनम्, अत आह—"अविद्यये"ति। ३५

**[1]अलाते स्पन्दमाने वै नाऽऽभासा अन्यतोभुवः। न ततोऽन्यत्र निस्पन्दान्नालातं प्रविशन्ति ते।।४९।।**
**न निर्गता अलातात् ते द्रव्यत्वाभावयोगतः। विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः।।५०।।**
**विज्ञाने स्पन्दमाने वै नाऽऽभासा अन्यतोभुवः। न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते।।५१।।**
**न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः। कार्यकारणताऽभावाद्यतोऽचिन्त्याः सदैव ते।।५२।।**

५ किं च तस्मिन्नेवालाते स्पन्दमान ऋजुवक्राद्याभासा अलातादन्यतः कुतश्चिदागत्यालाते नैव भवन्तीति नान्यतोभुवः। न च तस्मान्निस्पन्दादलातादन्यत्र निर्गताः। न च निस्पन्दमलातमेव प्रविशन्ति ते।।४९।।

किं च न निर्गता अलातात् ते आभासा गृहादिव द्रव्यत्वाभावयोगतः। द्रव्यस्य भावो द्रव्यत्वम्। तदभावो द्रव्यत्वाभावः। द्रव्यत्वाभावयोगतो द्रव्यत्वाभावयुक्तेर्वस्तुत्वाभावादित्यर्थः। वस्तुनो हि प्रवेशादि सम्भवति, नावस्तुनः। विज्ञानेऽपि जात्याद्याभासास्तथैव स्युराभासस्याविशेषतस्तुल्यत्वात्।।५०।।

१० कथं तुल्यत्वमित्याह—अलातेन समानं सर्वं विज्ञानस्य। सदाऽचलत्वं तु विज्ञानस्य विशेषः। जात्याद्याभासा विज्ञानेऽचले किंकृता इत्याह। कार्यकारणताऽभावाज्जन्यजनकत्वानुपपत्तेरभावरूपत्वादचिन्त्यास्ते यतः सदैव। यथा

अनुभूतिस्वरूपाचार्यटीका

दृष्टान्ते कथमृजुवक्रादीनामसत्यत्वमित्याकाङ्क्षायां निरूपणासहत्वेनेत्याह—**अलाते स्पन्दमान इति**। देशान्तरादागमनस्यानुपलम्भात् नान्यतोभुव इत्यर्थः। ततो निस्पन्दादलातादन्यत्र ते वर्तन्त इत्यपि वक्तुं न १५ शक्यतेऽनुपलम्भादेवेत्यर्थः। **नालातं प्रविशन्ति ते,** न लीयन्ते तत्रानुपादानत्वादलातस्य। यदि स्पन्दं निमित्तमलातमुपादानं तदा स्पन्दनाभावेऽपि ऋज्वाद्याकारा अलाते स्युः, निमित्ताभावमात्रान्नैमित्तिकाभावादर्शनादित्यर्थः।।४९-५०।।

आनन्दगिरिटीका

अलातदृष्टान्ते कथमृजुवक्रादीनामसत्त्वमित्याशङ्कायां निरूपणासहत्वादित्याह—**अलात इति**। यदा खल्वलातं २० स्पन्दमानमवतिष्ठते तदा तस्मिन्नन्यतो देशान्तरादागत्याऽऽभासा भवन्तीति न शक्यं वक्तुमृजुवक्राद्याभासानां देशान्तरादागमनस्यानवगमात्। यदा तदेवालातं निःस्पन्दं स्पन्दनवर्जितं वर्तते तदा ततोऽन्यत्राऽऽभासा भवन्तीत्यपि न युक्तं वक्तुमनुपलम्भाविशेषात्। न चाऽऽभासास्तस्मिन्नेवालाते लीयन्ते, तदनुपादानत्वात्। यदि हि स्पन्दनं निमित्तमलातमुपादानं तदा निमित्ताभावमात्रान्नैमित्तिकाभावादर्शनादृजुवक्राद्याकाराः स्पन्दनाभावेऽप्यलाते भवेयुरित्यर्थः। इतश्च दृष्टान्ते दृष्टानामाभासानां मिथ्यात्वमेष्टव्यमित्याह—**किं चेति**। हेत्वन्तरमेव स्पष्टयन् पूर्वार्धाक्षराणि व्याचष्टे— २५ **तस्मिन्नेवेति**। आभासानां देशान्तरादागमनस्यानुपलम्भो हेतुः कर्तव्यः। अनुपलब्धिमेव हेतूकृत्य तृतीयपादार्थमाह— **न चेति**। चतुर्थपादार्थमाह—**न च निस्पन्दमिति**।।४९।।

ऋजुवक्राद्याभासानां दृष्टान्ते निर्गमनप्रवेशयोरसम्भवं साधयति—**नेत्यादिना**। दृष्टान्तनिविष्टाभासवद्दार्ष्टान्तिकेऽपि जन्माद्याभासा मिथ्यैव भवेयुरित्याह—**विज्ञानेऽपीति**। ऋजुवक्राद्याकारेषु जन्माद्याकारेषु चाऽऽभासत्वस्य तुल्यत्वादिति हेतुमाह—**आभासस्येति**। इतश्च दृष्टान्ते मिथ्यात्वमाभासानामेष्टव्यमित्याह—**किं चेति**। तदेव ३० पूर्वार्धयोजनया विशदयति—**नेति**। ऋजुवक्राद्याभासानां वस्तुतोऽभावेऽपि किमिति प्रवेशाद्यसिद्धिरित्याशङ्क्याऽऽह— **वस्तुनो हीति**। द्वितीयार्धं योजयन् दार्ष्टान्तिकमाचष्टे—**विज्ञानेऽपीति**।।५०।।

तुल्यत्वं सार्धेनोत्तरश्लोकेन साधयति—**कथमित्यादिना**। न हि तस्मिन्विज्ञाने यथा कथञ्चिच्चलनवति ततोऽन्यस्मात्कस्माच्चिदागत्य जन्माद्याभासास्तत्र भवितुमर्हन्ति तथा प्रथाऽभावात्। न च तस्माद्विज्ञानादचलतयाऽवस्थितादन्यत्राऽऽभासा भवितुमुत्सहन्ते प्रतीत्यभावस्य तुल्यत्वात् नापि तदेव विज्ञानं प्रविशन्ति तस्य केवलस्य ३५ तदुपादानत्वानुपगमात्। न च ते विज्ञाने प्रवेष्टुं समर्थास्ततो निर्गन्तुं वा पारयन्ति, तेषामवस्तुत्वादित्यर्थः। कथं तर्हि विज्ञाने प्रथा तेषामित्याशङ्क्य मृषैवेत्याह—**कार्येति**। आभासानां विज्ञानस्य च कार्यकारणताया

१. अलाते ये चलनादयः उपलब्धास्ते सर्वे भ्रमगोचराः, न तु अन्यत आगता अनन्तरं स्थिरताकाले गता इति वा तत्रैव लीना इति वा वक्तुं शक्यन्ते।

**द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि। द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते।।५३।।**

**असत्स्वृज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टाऽलातमात्रे तथाऽसत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादिबुद्धिर्मृषैवेति समुदायार्थः।।५१-५२।।**

**अजमेकमात्मतत्त्वमिति स्थितम्। तत्र यैरपि कार्यकारणभावः कल्प्यते तेषां द्रव्यं द्रव्यस्यान्यस्यान्यद्धेतुः कारणं स्यान्न तु तस्यैव तत्। नाप्यद्रव्यं कस्यचित्कारणं स्वतन्त्रं दृष्टं लोके। न च द्रव्यत्वं धर्माणामात्मनामुपपद्यतेऽन्यत्वं वा** ५

अनुभूतिस्वरूपाचार्यटीका

संक्षेपतस्तात्पर्यमाह—**असत्स्वित्यादिना**।।५१-५२।।

इदानीं वैशेषिकादिकल्पितकार्यकारणभावप्रयोजकस्य निरूपयितुमशक्यत्वाच्चाजमेव परमार्थमित्याह—**द्रव्यमित्यादिना**। अवयविद्रव्यस्यावयवद्रव्यमेव समवायिकारणम्। अन्यस्य च कार्यद्रव्यगतस्य गुणस्य (कारणगतो गुणः)अन्यत् कारणद्रव्यगतं गुणान्तरमसमवायिकारणमिष्टं वैशेषिकादिभिः। तत्र निर्गुणत्वात् निष्क्रियत्वाच्च आत्मनां न पराभिमतद्रव्यत्वमस्ति। समवायिकारणत्वाच्चेद् द्रव्यत्वं तर्हि अन्योन्याश्रयत्वं, सदेकस्वभावत्वाच्च विश्वस्य न कस्यचित्कुतश्चिदन्यत्वं निरूप्यमाणे सम्भवति। १०

यच्चोदयनादिनाऽगादि (जगद्भेद) स्वरूपभेदभिन्नानां परस्परव्यावृत्तिः केवलव्यतिरेकिणा प्रमीयते—पृथिवी अबादिभ्यो भिद्यते, पृथिवीत्वात् इत्यादिना। तत्र स्वरूपं भेद इति कोऽर्थः? किं निर्विशेषणं वस्तु सविशेषणं वा? आद्ये न विवादः। अन्त्ये व्याघातः, सविशेषणं भेदस्वरूपञ्च इति विशेषणस्य स्वरूपादतिरेकप्रसिद्धेः। किञ्च, सस्वभावस्य भेदः स्वरूपम्? उत निस्स्वभावस्य? आद्ये द्वैरूप्यं, तच्च विप्रतिषिद्धमेकं द्विरूपञ्चेति। द्वितीये न प्रत्यक्षता। न हि निस्स्वभावस्य शशशृङ्गादेश्च स्वभावभेदः प्रत्यक्षीकर्तुं शक्यः। किञ्च, स्वरूपभेदभानं सप्रतियोगिकम्? उत निष्प्रतियोगिकम्? आद्ये न स्वरूपं भेदः, सप्रतियोगिकत्वात् दीर्घत्ववत्। इतरथा न प्रतियोग्यपेक्षं तद्भानं स्यात् इतरस्वरूपभानवत्। अन्त्ये न तद् भेदभानं निष्प्रतियोगिकभानत्वात् इतरस्वरूपभानवत्। १५

किञ्च, स्वरूपभानमेव चेद्भेदभानं न विपर्ययः स्यात्, तस्य तदभानहेतुकत्वात्। तद्दर्शनेन च विपर्यये अतिप्रसङ्गः। किञ्च, स्वमसाधारणं सर्वतो व्यावृत्तं रूपं स्वरूपं, यथा पृथुबुध्नोदराकारो घट इति। तस्य भेदत्वे घटो भेद इति प्रकाशेत, न तु भिन्न इति। न चासर्वज्ञस्य प्रकाशेत सर्वत इति। किं चावधित्वं भेदाग्रहणे न गृह्यते इत्यन्योन्याश्रयत्वम्। किञ्च, घटत्वजात्याधारो घट इति सिद्धे भेदे सिद्ध्यति। ततश्चान्योन्याश्रयत्वं घटस्वरूपतया भेदसिद्धिस्तत्सिद्धौ च घटसिद्धिरिति। या च व्यावृत्तिः, सा किं एकवृत्तिः अनेकवृत्तिर्वा? आद्ये २०

आनन्दगिरिटीका

दुर्वचत्वादाभासाः सर्वदैव निरूपयितुमशक्यत्वान्मायामयाः सन्तो मिथ्यैव भवन्तीत्यर्थः। सार्धश्लोकतात्पर्यमाह—**अलातेनेति**। तर्हि सक्रियत्वमपि विज्ञानस्य प्रसज्येतेत्याशङ्क्याऽऽह—**सदेति**। यदि विज्ञानमचलमभीष्टं तर्हि तत्र जात्याद्याभासा हेत्वभावान्न स्युरित्याशङ्क्यान्तिमार्धेन परिहरति—**जात्याद्याभास इत्यादिना**। यतः सदैवाचिन्त्या अतो मृषैवेति शेषः। संक्षेपतस्तात्पर्यमाह—**यथेत्यादिना**।।५१-५२।। २५

यदुक्तं कार्यकारणताऽभावादिति तदिदानीमुपपादयितुमुपक्रमते—**द्रव्यमिति**। अवयवद्रव्यमवयविद्रव्यस्योपादानम्। अवयवगुणाश्चावयविगुणेषु समानजातीयेष्वसमवायिनो दृष्टाः। न चैवमात्मनो द्रव्यत्वं येन समवायित्वम्। न च तद्रूपाणां क्वचिदसमवायित्वं गुणगुणिभावस्यान्यत्वस्य तस्मिन् दुर्वचनत्वादित्यर्थः। श्लोकाक्षराणि योजयति—**अजमित्यादिना**। अवयवावयविविभागविरहित्वमजत्वम्। एकत्वं गुणगुणिभावशून्यत्वम्। तत्रेत्यात्मतत्त्वं परामृश्यते। तत्र कार्यकारणभावं दूषयितुं सामान्यन्यायमाह—**तेषामिति**। अद्रव्यस्यापि रूपादेस्तन्त्वादिद्वारा पटशौक्ल्यादौ कारणत्वं दृष्टमित्यतो विशिनष्टि—**स्वतन्त्रमिति**। अस्तु तर्हि द्रव्यत्वेनायित्वेन चाऽऽत्मनि कार्यकारणत्वं नेत्याह—**न चेति**। न हि तत्र गुणवत्त्वेन द्रव्यत्वं निर्गुणत्वात्, [1]नापि समवायित्वेन तथात्वमन्योन्या- ३०

[1]. **नापि समवायित्वेनेति**। समवायित्वं समवायानुयोगित्वं तदपि कार्यप्रतियोगिकं द्रव्यस्यैव, गुणकर्मणोर्गुणत्वकर्मत्वसमवायानुयोगित्वेऽपि तयोर्नित्यत्वात्। **अन्योन्याश्रयादिति**। समवायेन द्रव्ये पदार्थोत्पत्तौ तस्य समवायानुयोगित्वं समवायानुयोगित्वे पदार्थोत्पत्तिरित्यन्योन्याश्रयः। अन्यत्वं तु "नेह नानास्ती"त्यनेन श्रुतिनिषिद्धं दुर्निरूपं च। ३५

**एवं न चित्तजा धर्माश्चित्तं वाऽपि न धर्मजम्। एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः।।५४।।**
**यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः। क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः।।५५।।**

कुतश्चिद् यनान्यस्य कारणत्वं कार्यत्वं वा प्रतिपद्येत। अतोऽद्रव्यत्वादनन्यत्वाच्च न कस्यचित् कार्यं कारणं वाऽऽत्मेत्यर्थः।।५३।।

एवं यथोक्तेभ्यो हेतुभ्य आत्मविज्ञानस्वरूपमेव चित्तमिति न चित्तजा बाह्यधर्मा नापि बाह्यधर्मजं चित्तम्। विज्ञानस्वरूपाभासमात्रत्वात् सर्वधर्माणाम्[१]। एवं न हेतोः फलं जायते नापि फलाद्धेतुरिति हेतुफलयोरजातिं हेतुफला-जातिं प्रविशन्त्यध्यवस्यन्ति। आत्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः।।५४।।

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते—धर्माधर्माख्यस्य हेतोरहं कर्ता मम धर्माधर्मौ, तत्फलं कालान्तरे क्वचित्प्राणिनिकाये जातो भोक्ष्य इति यावद्धेतुफलयोरावेशो हेतुफलाग्रह आत्मन्यध्यारोपणं तच्चित्ततेत्यर्थः। तावद्धेतुफलयोरुद्भवो धर्माधर्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिरित्यर्थः। यदा पुनर्मन्त्रौषधिवीर्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेनाविद्योद्भूतहेतुफलावेशोऽपनीतो भवति तदा तस्मिन् क्षीणे नास्ति हेतुफलोद्भवः।।५५।।

अनुभूतिस्वरूपाचार्यटीका

घटयोः व्यावृत्तिरिति न स्यात्। संयोगादेरिवानेकवृत्तिताऽऽपातात्। द्वितीये त्वनवस्था। न एकमनेकमिति व्यावृत्त्यन्तरस्यापि एकवृत्तिताऽयोगात्। व्यावृत्तेरपि वस्तुनोऽव्यावृत्तत्वादनवस्थान्तरम्। स्वपरनिर्वाहकत्वं च परिभाषामात्रम्, व्यावृत्त्यसिद्धौ स्वपरविभागस्यैवासम्भवात्। प्रयोगदूषणं चाप्रसिद्धविशेषणत्वं, सन्दिग्धविशेष्यत्वं च। पक्षस्याबादिभ्यो व्यावृत्त्यनिश्चये पृथिवीत्वनिश्चयाभावात् पृथिवीत्वजातिसमवायोऽपि व्यावृत्त्यनिश्चये निश्चेतुमशक्यः। पृथिवीजातीयानां च व्यक्तीनामानन्त्यादेकेन प्रमाणेन धर्मित्वनिश्चयासम्भवादाश्रयासिद्धिः। प्रतियोगिनां चाबादीनामानन्त्यादेकेन प्रमाणेन निश्चेतुमशक्यत्वात् तदवच्छिन्नव्यावृत्तिव्यतिरेकानिश्चयात् सन्दिग्धानैकान्तिकमिति—अलं विस्तरेण।।५३।।

चिकीर्षितकुम्भादिसंवेदनात् कुम्भादयो जायन्ते। जाताश्च कर्मतया स्वसंविज्जनका इत्यादिव्यवहारोऽपि विद्वद्दृष्ट्या कस्यचिदप्यन्यत्वाभावेन न सम्भवतीत्याह—**एवं न चित्तजा इति**। यश्च धर्मादेः शरीरादेश्च कार्य-कारणभावः प्राक् तत्त्वदृष्ट्या खण्डितः सोऽप्यन्यत्वाभावे सिद्ध इत्याह—**एवं हेतुफलाजातिमिति**।।५४।।

न हेतुः जायते नापि फलमिति परमार्थमुक्त्वा अधुना मुमुक्षूणां तदभिनिवेशव्याविवृत्सया तदभिनिवेश-भावाभावयोः बन्धमोक्षहेतुत्वमाह—**यावद्धेतुफलावेश इत्यादिना**।।५५-५६।।

आनन्दगिरिटीका

श्रयत्वप्रसङ्गात्। न च तत्र कुतश्चिदन्यत्वं सर्वस्य सन्मात्रत्वेनैकरूपत्वप्रतिभानात्। अतो न तत्र कारणत्वं कार्यत्वं वा प्रतिपत्तुं शक्यमिति फलितमाह—**अत इति**।।५३।।

चिकीर्षितकुम्भसंवेदनसमनन्तरं कुम्भः सम्भवति। सम्भूतश्चासौ कर्मतया स्वसंविदं जनयतीति व्यवहारोऽपि नोपपद्यते। कस्यचिदपि विद्वद्दृष्ट्यनुरोधेनानन्यत्वादित्याह—**एवमिति**। यश्च धर्मादेः शरीरादेश्च कार्यकारणभावो विद्वद्दृष्ट्या पुरस्तान्निरस्तः सोऽप्यन्यत्वाभावे न सिध्यतीत्याह—**एवं हेत्विति**। तत्र पूर्वार्धं योजयति—**एवमित्यादिना**। आत्मस्वरूपस्य निर्विकारत्वमद्रव्यत्वमप्रसिद्धत्वमित्यादयो यथोक्ता हेतवः। बाह्या धर्मा घटादयो नाऽऽत्मानः। न च धर्मशब्दितानां जीवानां चित्तशब्दितात्परस्मादात्मनो जन्मेति युक्तम्। तेषां प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यभिप्रेत्याऽऽह—**विज्ञानेति**। उत्तरार्धं योजयति—**एवं नेति**।।५४।।

न फलाद्धेतुर्जायते नापि फलं हेतोरिति तत्त्वदृष्ट्योपदिष्टम्। इदानीं मुमुक्षूणां तदभिनिवेशव्यावृत्त्यर्थं तदभिनिवेशभावाभावयोस्तदुद्भवानुद्भवौ दर्शयति—**यावदिति**। श्लोकाक्षराण्याकाङ्क्षाप्रदर्शनपुरःसरं विवृणोति—**ये पुनरित्यादिना**।।५५।।

---

१. बाह्यपदार्थाः ज्ञानरूपेणैव भान्ति यथा घटो भातीति, ज्ञानं च ब्रह्मेत्यर्थः।

**यावद्धेतुफलावेशः संसारस्तावदायतः। क्षीणे हेतुफलावेशे संसारं न प्रपद्यते।।५६।।**
**संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै। सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै।।५७।।**
**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः। जन्म मायोपमं तेषां सा च माया न विद्यते।।५८।।**

यदि हेतुफलोद्भवस्तदा को दोष इत्युच्यते–यावत् सम्यग्दर्शनेन हेतुफलावेशो न निवर्ततेऽक्षीणः संसारस्ताव-दायतो दीर्घो भवतीत्यर्थः। क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते कारणाभावात्।।५६।। ५

नन्वजादात्मनोऽन्यन्नास्त्येव, तत्कथं हेतुफलयोः संसारस्य चोत्पत्तिविनाशावुच्येते त्वया। शृणु। संवृत्या संवरणं संवृतिरविद्याविषयो लौकिको व्यवहारस्तया संवृत्या जायते सर्वं तेनाविद्याविषये शाश्वतं नित्यं नास्ति वै। अत उत्पत्तिविनाशलक्षणः संसार आयत इत्युच्यते। परमार्थसद्भावेन त्वजं सर्वमात्मैव यस्मात्। अतो जात्यभावादुच्छेदस्तेन नास्ति वै कस्यचिद्धेतुफलादेरित्यर्थः।।५७।।

येऽप्यात्मानोऽन्ये च धर्मा जायन्त इति कल्प्यन्ते–त इति एवंप्रकारा यथोक्ता संवृतिर्निर्दिश्यत इति। संवृत्यैव धर्मा जायन्ते न ते तत्त्वतः परमार्थतो जायन्ते। यत्पुनस्तत्संवृत्या जन्म तेषां धर्माणां यथोक्तानां यथा मायया जन्म तथा तन्मायोपमं प्रत्येतव्यम्। माया नाम वस्तु तर्हि? नैवम्। सा च माया न विद्यते, मायेत्यविद्यमान-स्याऽऽख्येत्यभिप्रायः।।५८।। १०

अनुभूतिस्वरूपाचार्यटीका

पूर्वापरविरोधमाशङ्क्य परिहरति—**नन्वजादात्मन इत्यादिना**। यथा सर्पाभावं पश्यन् विवेकी नास्ति सर्पो रज्जुरियं कस्मात् वृथैव बिभेषीत्यभिधत्ते। मूढस्तु स्वापराधादेव सर्पं परिकल्प्य बिभेति पलायते च। न तत्र विवेक्यभिधानं मूढदृष्ट्या विरुध्यते। तथा परमार्थजदर्शनं व्यावहारिकजन्माद्यभिधानेन न विरुध्यत इति भावः।।५७।। १५

संवृत्या जायते सर्वमित्येतत् स्फुटयति—**धर्मा य इतीत्यादिना**। प्रसिद्धावद्योतक इतिशब्दः।।५८-५९।।

आनन्दगिरिटीका

अभिनिवेशवशाद्धेतुफलोद्भवे किं भवति, तदाह—**यावदिति**। अभिनिवेशनिवृत्त्या तदनुद्भवे वा किं स्यादित्याशङ्क्याऽऽह—**क्षीण इति**। आकाङ्क्षापूर्वकं पूर्वार्धं योजयति—**यदीति**। उत्तरार्धं व्याचष्टे—**क्षीणे पुनरिति**।।५६।। २०

कूटस्थमद्वितीयमात्मतत्त्वमिच्छता कुतो जन्मनाशौ व्यवह्रियेते, तत्राऽऽह—**संवृत्येति**। अविद्यया सर्वस्य जायमानत्वे सत्यविद्याविषये नित्यं नाम नास्त्येवेत्याह—**शाश्वतमिति**। परमार्थतस्तु सर्वमजं कूटस्थमास्थीयते, तेन कल्पनां विना विनाशो नास्त्येव हेतुफलादेरित्याह—**सद्भावेनेति**। पूर्वापरविरोधमाशङ्कते—**नन्विति**। न तावदात्मनो जन्मविनाशौ तस्य कूटस्थत्वान्नापि ततोऽन्यस्य तौ युक्तौ तस्याद्वितीयत्वात्। तथा च हेत्वादेर्बन्धस्य जन्मनाशौ न त्वया वक्तव्यावित्यर्थः। उच्यमाने समाधाने मनःसमाधानमर्थयते—**शृण्विति**। तत्र पूर्वभागाक्षरार्थं कथयति—**संवृत्येत्यादिना**। अविद्याविषये नित्यस्य वस्तुनोऽभावे फलितमाह—**अत इति**। द्वितीयार्धाक्षरार्थमाह—**परमार्थेति**। जात्यभावो जन्मादिविक्रियाऽभावस्तमेवोच्छेदाभावे हेतुं कथयति—**तेनेति**। यथा पुरोवर्तिनि भुजगाभावमनुभवन्विवेकी 'नास्ति भुजङ्गो रज्जुरेषा कथं वृथैव बिभेषी'ति भ्रान्तमभिदधाति। भ्रान्तस्तु स्वकीयादपराधादेव भुजङ्गं परिकल्प्य भीतः सन् पलायते न च तत्र विवेकिनो वचनं मूढदृष्ट्या विरुध्यते। तथा परमार्थकूटस्थात्मदर्शनं व्यावहारिकजन्मादिवचनेनाविरुद्धमिति भावः।।५७।। २५ ३०

संवृत्या जायते सर्वमित्युक्तं तदिदानीं प्रपञ्चयति—**धर्मा इति**। तत्राऽऽद्यं पादं विभजते—**येऽपीति**। प्रसिद्धावद्योतकत्वमितिशब्दस्य दर्शयति—**त इत्येवंप्रकारा इति**। एवंप्रकारत्वमेव स्फोरयति—**यथोक्तेति**। अनन्तरप्रकृता संवृतिरितिशब्देनोक्ता। तथा च संवृत्यैव ते धर्मा जायन्ते न तु तेषां तत्त्वतो जन्मेत्यर्थः। न ते तत्त्वत इत्युक्तं प्रपञ्चयति—**परमार्थत इति**। संवृत्याऽपि जन्म पारमार्थिकमेवेत्याशङ्क्य तृतीयपादं योजयति—**यत्पुनरिति**। प्रत्येतव्यं जन्मेति शेषः। चतुर्थपादार्थमाकाङ्क्षाद्वारा स्फोरयति—**मायेत्यादिना**।।५८।। ३५

**यथा मायामयाद् बीजाज्जायते तन्मयोऽङ्कुरः। नासौ नित्यो न चोच्छेदी तद्वद् धर्मेषु योजना।।५९।।**
**नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा। यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते।।६०।।**
**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया। तथा जाग्रद् द्वयाभासं चित्तं चलति मायया।।६१।।**
**अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः। अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः।।६२।।**
**स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान्। अण्डजान् स्वेदजान् वाऽपि जीवान् पश्यति यान् सदा।।६३।।**

५

**कथं मायोपमं तेषां धर्माणां जन्मेत्याह—यथा मायामयादाम्रादिबीजाज्जायते तन्मयो मायामयोऽङ्कुरो नासौ नित्यो** न चोच्छेदी विनाशी वाऽभूतत्वात् तद्वदेव धर्मेषु जन्मनाशादियोजना युक्तिः। न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः। ५९।।

परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वतोऽशाश्वत इति वा नाभिधा नाभिधानं प्रवर्तत इत्यर्थः। यत्र येषु वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा न प्रवर्तन्तेऽभिधातुं प्रकाशयितुं न प्रवर्तन्त इत्यर्थः। इदमेवमिति १० विवेको विविक्तता तत्र नित्योऽनित्य इति नोच्यते। ''यतो वाचो निवर्तन्ते'' इति श्रुतेः।।६०।।

यत्पुनर्वाग्गोचरत्वं परमार्थतोऽद्वयस्य विज्ञानमात्रस्य तन्मनसः स्पन्दनमात्रं न परमार्थत इति। उक्तार्थौ श्लोकौ।।६१-६२।।

इतश्च वाग्गोचरस्याभावो द्वैतस्य। स्वप्नान् पश्यतीति स्वप्नदृक् प्रचरन् पर्यटन् स्वप्ने स्वप्नस्थाने दिक्षु वै दशसु स्थितान् वर्तमानाञ्जीवान् प्राणिनोऽण्डजान् स्वेदजान्वा यान् सदा पश्यतीति। यद्येवं ततः किम्? १५ उच्यते।।६३।।

अनुभूतिस्वरूपाचार्यटीका

सद्भावेन हि अजं सर्वमित्येतत् प्रपञ्चयति—**नाजेषु सर्वधर्मेष्विति**।।६०।।

यद्यात्मा शब्दागोचरः कथं तर्हि व्याख्यातृभिः आत्मा शब्दैरेव प्रतिपाद्यते? इत्याशङ्क्य चित्तस्पन्दनमात्रम-विचारसुन्दरं तत् प्रतिपाद्यप्रतिपादकरूपमित्याह—**यथा स्वप्न इत्यादिना** श्लोकद्वयेन। पौनरुक्त्यञ्च नाशङ्कनीयं २० शङ्कान्तरनिरासात्।।६१-६२।।

जीवान् पश्यति यानित्यस्य यच्छब्दस्य ते न विद्यन्त इत्युत्तरश्लोकस्थतच्छब्देन सम्बन्धः।।६३-६४।।

आनन्दगिरिटीका

जन्म मायोपमं तेषामित्युक्तम्, तदेव दृष्टान्तावष्टम्भेन साधयति—**यथेत्यादिना**। श्लोकाक्षराण्याकाङ्क्षां दर्शयन् योजयति—**कथमित्यादिना**।।५९।।

२५ यदुक्तं सद्भावेन ह्यजं सर्वमिति तत् प्रपञ्चयति—**नाजेष्विति**। आत्मसु नित्यानित्यकथा नावतरतीत्यत्र हेतुमाह—**यत्रेति**। श्लोकस्य पूर्वार्धं व्याचष्टे—**परमार्थतस्त्विति**। द्वितीयार्धं व्याकरोति—**यत्रेत्यादिना**। तत्रेति प्रकृतेषु धर्मेष्विति यावत्। आत्मसु नित्यानित्यकथाऽभावे शब्दागोचरत्वं हेतुस्तत्र प्रमाणमाह—**यत इति**।।६०।।

आत्मनः शब्दागोचरत्वे कथमसौ व्याख्यातृभिः शब्दैरेव प्रतिपाद्यतामाचरतीत्याशङ्क्य चित्तस्पन्दन-मात्रमविचारसुन्दरं प्रतिपाद्यप्रतिपादकरूपं द्वैतमिति सदृष्टान्तमाह—**यथेति**। स्वप्ने प्रतिपाद्यप्रतिपादकद्वैतस्य ३० चित्तस्पन्दितमात्रत्वेऽपि जागरिते कथं तथा स्यादित्याशङ्क्याऽऽह—**अद्वयं चेति**। पौनरुक्त्यं श्लोकयोराशङ्क्य शङ्कान्तरनिरासार्थत्वान्मैवमिति मन्वानः सन्नाह—**यत्पुनरिति**।।६१-६२।।

वाग्गोचरीभूतस्य द्वैतस्यासत्त्वे हेत्वन्तरमाचक्षाणो दृष्टान्तमाचष्टे—**स्वप्नदृगिति**। यान् पश्यति ते न विद्यन्ते पृथगित्युत्तरत्र सम्बन्धः। श्लोकस्य तात्पर्यमाह—**इतश्चेति**। इतःशब्दार्थमेव स्फुटयन्नक्षराणि व्याचष्टे—**स्वप्नानिति**। न ते विद्यन्त इति पूर्ववदन्वयः। स्वप्नदृशो विषयभूतानां भेदानां तत्र दृश्यमानत्वेऽपि द्वैतभेदमिथ्यात्वे ३५ किमायातमिति पृच्छति—**यदीति**। उत्तरश्लोकेनोत्तरमाह—**उच्यत इति**।।६३।।

**स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक्। तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते।।६४।।**
**चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान्। अण्डजान् स्वेदजान् वाऽपि जीवान् पश्यति यान् सदा।।६५।।**
**जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक्। तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते।।६६।।**
**उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति चोच्यते। लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते।।६७।।**

स्वप्नदृशश्चित्तं स्वप्नदृक्चित्तम्। तेन दृश्यास्ते जीवास्ततस्तस्मात् स्वप्नदृक्चित्तात् पृथङ्न विद्यन्ते न सन्तीत्यर्थः। चित्तमेव ह्यनेकजीवादिभेदाकारेण विकल्प्यते। तथा तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव, तेन स्वप्नदृशा दृश्यं तद्दृश्यम्। अतः स्वप्नदृग्व्यतिरेकेण चित्तं नाम नास्तीत्यर्थः।।६४।। ५

जाग्रतो दृश्या जीवास्तच्चित्ताव्यतिरिक्ताश्चित्तेक्षणीयत्वात् स्वप्नदृक्चित्तेक्षणीयजीववत्। तच्च जीवेक्षणात्मकं चित्तं द्रष्टुरव्यतिरिक्तं द्रष्टृदृश्यत्वात् स्वप्नचित्तवत्। उक्तार्थमन्यत्।।६५-६६।।

[1]जीवचित्ते उभे चित्तचैत्ये ते अन्योन्यदृश्ये इतरेतरगम्ये। जीवादिविषयापेक्षं हि चित्तं नाम भवति। १०

अनुभूतिस्वरूपाचार्यटीका

दार्ष्टान्तिकं योजयति—**चरञ्जागरित इत्यादिना** जाग्रत्पुरुषो यान् जीवान् पश्यतीत्यत्र जीवशब्देन कार्यकरणसङ्घाता उच्यन्ते, न चेतनाः, तेषां दृश्यत्वाभावादिति।।६५-६६।।

चित्तव्यतिरेकग्राहकप्रमाणबाधात् कालात्ययापदिष्टो हेतुरित्याशङ्क्याह—**उभे हीति**। दृश्ये सिद्धे तदवच्छिन्नदर्शनं सिध्यति, तत्सिद्धौ च तदवच्छिन्नदृश्यं सिध्यतीति अन्योन्याश्रयदोषात् न दृश्यदर्शनव्यतिरेकग्राहि प्रमाणमस्ति येन बाधः स्यादित्यर्थः। सम्भावनायां हि प्रमाणप्रवृत्तिं वाञ्छन्ति प्रमाणकुशलाः। सम्भावना च दृश्यदर्शनयोः नान्यतरस्यापि नैरपेक्ष्येण। अतोऽन्योन्याश्रयदोषपुरस्कारेण सिध्यन् दृश्यदर्शनभावः कल्पनैव। बाधश्च यौक्तिको वर्णदैर्घ्यादाविव प्रादर्शि। विद्वत्प्रत्यक्षबाधश्च रज्जुसर्पादाविवागादि। दूषणान्तरविवक्षया पृच्छति—**कथमिति**। प्रामाणिकस्यैव भेदः प्रामाणिकः सम्भवति, न दृश्यदर्शनयोः स्वरूपे प्रमाणमस्तीत्याह—**लक्षणाशून्यमिति**। १५

आनन्दगिरिटीका २०

श्लोकाक्षराणि योजयन् कर्मधारयं व्यावर्तयति—**स्वप्नेति**। जीवादिभेदानां स्वप्ने दृश्यमानानामुक्तानां चित्तात्पृथगसत्त्वं साधयति—**चित्तमेवेति**। तर्हि द्रष्टा चित्तं चेति द्वयं स्वप्ने स्वीकृतम्, नेत्याह—**तथेति**। तच्छब्दस्य चित्तविषयत्वं व्यावर्तयति—**तेनेति**। स्वप्नावस्थस्य चित्तस्य स्वप्नदृग्विषयत्वे फलितमाह—**अत इति**।।६४।।

दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—**चरन्नित्यादिना**। जाग्रदवस्थो हि पुरुषो याञ्जीवान् पश्यतीत्यत्र जीवशब्देन कार्यकरणसङ्घाता गृह्यन्ते, चेतनानां दृश्यत्वाभावादिति द्रष्टव्यम्। श्लोकद्वये विवक्षितमनुमानद्वयमारचयति—**जाग्रत इति**। अक्षरव्याख्यानं तु दृष्टान्तव्याख्यानेनैव स्पष्टत्वान्न पृथगपेक्षितमिति विवक्षित्वाऽऽह—**उक्तार्थमिति**।।६५-६६।। २५

दृश्यदर्शनव्यतिरेकग्राहकप्रमाणप्रतिहतं हेतुद्वयमित्याशङ्क्याऽऽह—**उभे हीति**। दृश्यदर्शने परस्परापेक्षसिद्धिके। दृश्ये सिद्धे तदवच्छिन्नं दर्शनं सिध्यति, तस्य च सिद्धौ तदवच्छिन्नं दृश्यं सिध्यतीत्यन्योन्याश्रयान्न दृश्यं दर्शनं वा सिध्यतीत्यतो विभागावगाहिप्रमाणाभावान्न तद्बाधो हेतुद्वयस्येत्यर्थः। किं च सम्भावनायां प्रमाणप्रवृत्तिर्वक्तव्या। न च दृश्यदर्शनयोरन्यतरस्यापि नैरपेक्ष्येण सम्भावना भवत्यन्योन्याश्रयदोषात्। तथा च परस्परपुरस्कारेण सिध्यदुभयं कल्पितमेव स्यादिति मत्वाऽऽह—**किं तदिति**। तद् दृश्यं दर्शनं वा किमस्तीति पृष्टे विवेकिना नास्तीत्येवोच्यते प्रागुक्तदोषादित्यर्थः। किं च प्रामाणिकस्यैव प्रामाणिको भेदः सम्भवति। न च दृश्यदर्शनयोः स्वरूपे प्रमाणमस्तीत्याह—**लक्षणेति**। कथं तर्हि प्रमाणप्रमेयविभागो वादिभिर्गृह्यते? तच्चित्ततादोषेणेत्याह—**तन्मतेनेति**।। तत्र प्रथमं पादं विभजते—**जीवेति**। ते जीवचित्ते इति सम्बन्धः। अन्योन्यदृश्यत्व- ३० ३५

---

१. **जीवचित्ते इति**—अत्र जीवपदेन जीवच्छरीराणि गृह्यन्ते। पूर्वश्लोके "अण्डजान् स्वेदजान् वाऽपि जीवान्" इत्युक्तेः। चित्तपदेन च चैतन्यरूप आत्मा। इतरेतरगम्ये इतरेतरज्ञानापेक्षसिद्धिके विषयापेक्षं ज्ञानं (चित्तं) ज्ञानापेक्षश्च विषयो यतः।

**चित्तापेक्षं हि जीवादि दृश्यम्। अतस्ते अन्योन्यदृश्ये। तस्मान्न किञ्चिदस्तीति चोच्यते, चित्तं वा चित्तेक्षणीयं वा किं तदस्तीति विवेकिनोच्यते। न हि स्वप्ने हस्ती हस्तिचित्तं वा विद्यते, तथेहापि विवेकिनामित्यभिप्रायः। कथम्?**

अनुभूतिस्वरूपाचार्यटीका

यदि तावदज्ञातार्थबोधकं प्रमाणम्, न तत् दृश्यदर्शनयोः सम्भवति। तयोर्ज्ञातत्वेऽज्ञातत्वे चाज्ञातताया: प्रमातुमशक्यत्वात्। प्रमाणज्ञातत्वानुपपत्त्यैव प्रागज्ञातत्वावगमे चान्योन्याश्रयता।

५ यच्चागादि **उदयनेन**—''तत्त्वानुभूतिः प्रमा'' ''प्रमासाधनं प्रमाणमि''ति—तत् तावदसम्भवपराहतम्। तत्त्वसाधनयोः अनुभूत्यतिरेके प्रकाशानुपपत्तौ तत्संसर्गासिद्धेः लक्षणप्रवृत्त्ययोगात्। अनुभूतिसंसर्गादेव तत् प्रकाशत इति चेत्, न, अप्रकाशमानयोः अनुभूतिसंसर्गसाधकादर्शनात्। न च तदनुभूतिरेव स्वस्य तत्संसर्गं साधयति, अन्योन्याश्रयात्। सिद्धे तदनुभूतित्वे तत्संसर्गसाधकत्वं तत्संसर्गसिद्धौ च तदनुभूतित्वमिति। तदाकारेणानुत्पत्तेश्च। न चानुभूत्यन्तरं तत्संसर्गसाधकं तस्मिंस्तथाऽवभासायोगात्। आद्यसामग्र्याः समुत्पन्नं चेत्? आद्यसमानविषयं स्यात्।
१० सामग्र्यन्तरात् समुत्पत्तौ नान्यविषयावभासः। तत्संस्कारबलाच्चेत्तदवभासः, तर्हि पूर्वानुभूतेः नष्टत्वात् न तत्संसर्गसिद्धिः। किञ्च तत्त्वशब्देनात्यन्ताबाध्योऽर्थो विवक्षितः, प्रतिपन्नोपाधौ सत्वं वा? आद्ये घटाद्यनुभूतावव्याप्तिः न हि घटोऽयमित्याद्यनुभूतौ अत्यन्ताबाध्योऽर्थः प्रकाशते। तत्राप्रकाशमानश्च न तदर्थोऽतिप्रसङ्गात्।

द्वितीये कः प्रतिपन्नस्योपाधिः? कालो वा देशो वा आश्रयो वा? आद्ये न कालस्य प्रतिपन्नोपाधौ सत्त्वम्, द्वितीये नाकाशादेः, तृतीये न परमाण्वादेः। अतः तदनुभूतावव्याप्तिः। दिङ्मोहादिविशेषानुभवेषु चासञ्ज्ञातबाधेषु
१५ [1]निधनेष्वप्यतिव्याप्तिः। बाधाभावे सत्त्वाभावासिद्धेः, स्वतः सिद्ध्यनङ्गीकाराच्च प्रमाविषयतयैव तव सत्त्वसिद्धिः, अतोऽन्योन्याश्रयः—सत्त्वावच्छिन्नानुभूतिः प्रमाऽवगन्तव्या, प्रमावगमाच्च सत्त्वावगम इति। किञ्च, प्रतिपन्नोपाधौ सत्त्वं नाम सत्तासमवायः? उत स्वरूपसत्त्वमुत भवनम्? प्रथमे सत्तासमवायानुभूतौ अव्याप्तिः। मध्यमे स्वरूपाणां परस्परावृत्तेः तदवच्छिन्नानुभूतेः अननुगमादव्याप्तिः। उत्तमे चाऽऽत्मानुभूतावव्याप्तिः। किञ्च, अस्माकमनुभूतिशब्दः संवित्पर्यायः, तत्र स्मृतावतिव्याप्तिः। न चानुभूतिजात्याधारः संविद्विशेषोऽनुभूतिः, निरुपाधिकव्यक्तिभेदाभाने जाति-
२० कल्पनायोगात्। अन्यथा घटाकाशादावपि प्रसङ्गात्। न च संस्कारातिरिक्तकारणजन्याऽनुभूतिः, तन्मात्रजन्या स्मृतिः इति, तव ईश्वरानुभूतेरननुभूतित्वापातात्। स्वतस्सिद्धायाश्च प्रागभावसाधकाभावात्, स्मृतावपि संयोगादेः कारणत्वात्। अतोऽविचारितरमणीयमेतत्।

यच्च, यथार्थज्ञानं प्रमाणमिति लक्षणान्तरम्, तत्र यथार्थत्वं नाम स्वकाले ज्ञानस्य विद्यमानार्थत्वं चेत्? तर्हि भूताद्यनुमानेऽव्याप्तिः। कदाचिद्विद्यमानार्थत्वं चेत्, स्मृतावतिव्याप्तिः। यच्चावर्णि—लक्षणं केवलव्यतिरेक्यनुमानमिति।
२५ तदप्यसत्। प्रमाणसामान्यलक्षणाभावे तद्व्याप्तविशेषासिद्धेः। पक्षादिलक्षणमन्तरेण च व्यतिरेक्यसिद्धेः स्वसिद्धौ स्वसिद्धिरित्यात्माश्रयतापत्तिः। तस्मात् प्रमाणपदार्थस्य दुर्निरूपत्वात् न दृश्यादिस्वरूपं प्रामाणिकमिति न तद्भेदः प्रामाणिक इति सूक्तम्।

ननु न सच्चेत्प्रमाणम्, प्रमेयं कथं तर्हि नैयायिकादिभिः गृह्यते इति, तत्राह—**तन्मतेनैवेति**। यथा ह्यसन्नपि क्षणिकोऽर्थः तद्भावनादोषेण **बौद्धेन** गृह्यते सर्वशून्यतावादिना, **प्राभाकरेण** नियोगः, **भाट्टैः** भावना, **कामुकैश्च**
३० स्त्रीपिण्डोऽस्थिस्नाय्वसृक्विण्मूत्राद्यनेकाशुचिनीडोऽपि तच्चित्ततादोषेणैव सारिस्थतयाऽऽलिङ्ग्यते, तथा प्रमाणमिदं प्रमेयमिदमिति सदा तच्चित्ततादोषेणैवासन्नपि विभागः सन्मात्रे गृह्यते मूढैरित्यर्थः। विचारचतुराणान्तु नास्ति तद्ग्रह इत्याह—**न हीति**। घटः कुतः सिद्ध्यतीति पृष्टे प्रमाणादिति नोत्तरम्, अतिव्यापकत्वात्, यथा शब्दानित्यत्वे किं मानमिति पृष्टे पृथिव्याद्यनित्यं कार्यत्वादिति। किन्तु घटप्रमाणादिति वाच्यम्, तत्रापि विशेषणीभूतो घटः कुतः सिध्यतीत्युक्ते घटप्रमाणादित्येव वाच्यमित्यनवस्था। मूकीभावे तु अप्रतिभेत्यर्थः। किञ्च, घटप्रमाणाद् घटः

आनन्दगिरिटीका

३५ मितरेतरग्राह्यत्वं, तदेव स्पष्टयति—**जीवादीति**। द्वितीयपादं व्याचष्टे—**तस्मादिति**। तदेव स्फुटयति—**चित्तं वेति**। किं तदस्तीति पृष्टे सति न किञ्चिदस्तीत्युच्यते विवेकिनेति योजना। उक्तमेवार्थं दृष्टान्तेन विवृणोति—**न हीति**। इहेति जागरितोक्तिः। द्वितीयार्धं व्याचिख्यासुतया पृच्छति—**कथमिति**। तदेवावतार्य व्याकरोति—**लक्षणेत्यादिना**। यतस्ततो न तद्भेदस्य प्रामाणिकत्वमिति शेषः। कथं तर्हि लौकिकानां परीक्षकाणां च प्रमाणप्रमेयविभाग-

१. नाशेषु।

**यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च। तथा जीवा अमी सर्वे भवन्ति न भवन्ति च।।६८।।**
**यथा मायामयो जीवो जायते म्रियतेऽपि च। तथा जीवा अमी सर्वे भवन्ति न भवन्ति च।।६९।।**
**यथा निर्मितको जीवो जायते म्रियतेऽपि च। तथा जीवा अमी सर्वे भवन्ति न भवन्ति च।।७०।।**
**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते। एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते।।७१।।**
**चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद् द्वयम्। [1]चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम्।।७२।।** ५

लक्षणाशून्यं लक्ष्यतेऽनयेति लक्षणा प्रमाणम्, प्रमाणशून्यमुभयं चित्तं चैत्यं द्वयं यतः; तन्मतेनैव तच्चित्ततयैव तद् गृह्यते। न हि घटमतिं प्रत्याख्याय घटो गृह्यते, नापि घटं प्रत्याख्याय घटमतिः। न हि तत्र प्रमाणप्रमेयभेदः शक्यते कल्पयितुमित्यभिप्रायः।।६७।।

मायामयो मायाविना यः कृतः; निर्मितको मन्त्रौषध्यादिभिर्निष्पादितः। स्वप्नमायानिर्मितका अण्डजादयो जीवा यथा जायन्ते म्रियन्ते च तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा इत्यर्थः।।६८-६९-७०।। १०

व्यवहारसत्यविषये जीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तम्। उत्तमं तु परमार्थसत्यं न कश्चिज्जायते जीव इति। उक्तार्थमन्यत्।।७१।।

सर्वं ग्राह्यग्राहकवच्चित्तस्पन्दितमेव द्वयं चित्तं परमार्थत आत्मैवेति निर्विषयम्, तेन निर्विषयत्वेन नित्यमसङ्गं कीर्तितम्। ''असङ्गो ह्ययं पुरुषः'' इति श्रुतेः। सविषयस्य हि विषये सङ्गः। निर्विषयत्वाच्चित्तमसङ्गमित्यर्थः।।७२।।

अनुभूतिस्वरूपाचार्यटीका १५

सिध्यतीत्युक्ते घटाद् घटः सिध्यतीत्यापद्यते, यतो घटं प्रत्याख्याय न घटप्रमाणं सिध्यतीत्याह—**नापीति**। किञ्च घटप्रमाणादबाधितो घटे व्यवहारो भवतीति तत्र तत्प्रमाणं चेत् तर्हि प्रमाणेऽपि घटाधीनो व्यवहार इति घटस्तत्र प्रमाणं किं न स्यात्? तथा च न व्यवस्थेत्याह—**न हि तत्रेति**।।६७।।

दृश्या अण्डजादयो दर्शनातिरिक्ताः न सिध्यन्तीत्यनुमानस्य भेदग्राहिप्रमाणबाधः पर्यहारि। तथापि जन्मादिप्रत्ययबाधः शशशृङ्गादिसमत्वे जन्माद्ययोगादित्याशङ्क्याह—**यथेत्यादिना**। संविद्व्यतिरेकेण परमार्थसत्त्वाभावानुमानस्य न जन्मादिप्रत्ययबाधः सत्त्वाभावेऽपि स्वप्नादिषु जन्मादिविकल्पबाहुल्योपलम्भादित्युक्तम्।।६८-६९-७०।। २०

यस्तु जन्मादि सत्यमित्यभिमन्यते, स प्रागेव निरस्त इति स्मारयति—**न कश्चिदिति**।।७१।।

संवेदनस्य कल्पितदृश्योपरक्तरूपेण दृश्यत्वान्न दृष्टिव्यतिरेकेण सत्त्वमिति पूर्वं स्वप्नदृष्टान्तेनोक्तम्। इदानीं तत्त्वतः संवेदनस्य विषयसङ्गाभावादात्मैव संवेदनमित्याह—**चित्तस्पन्दितमेवेदमिति**।।७२।।

आनन्दगिरिटीका २५

प्रवृत्तिरित्याशङ्क्य चतुर्थपादार्थमाह—**तन्मतेनेति**। तदेव प्रपञ्चयति—**न हीति**। घटे किं प्रमाणमित्युक्ते ज्ञानमित्यनुत्तरमतिप्रसङ्गात्[2], नापि घटज्ञानमन्योन्याश्रयप्रसङ्गादतो न घटतज्ज्ञानयोर्मानमेयभावः सम्भवतीत्यर्थः।।६७।।

दृश्यानामण्डजादीनां दर्शनातिरिक्तानामसत्त्वानुमानस्य भेदग्राहकप्रमाणबाधं परिहृत्य दर्शनातिरेकेण तेषामसत्त्वे जन्मादिप्रत्ययबाधः स्यादित्याशङ्क्य परिहरति—**यथेत्यादिना**। मायामयस्य निर्मितकस्य च जीवस्य विशेषं बुभुत्समानं प्रत्याह—**मायेति**। संविदतिरेकेणाण्डजादीनां परमार्थतः सत्त्वाभावानुमानस्य न जन्मादिप्रतिभासबाधः। सत्त्वाभावेऽपि स्वप्नादिषु जन्मादिविकल्पबाहुल्योपलम्भादिति श्लोकत्रयस्य तात्पर्यमाह—**स्वप्नेत्यादिना**।।६८-६९-७०।। ३०

यस्तु जन्मादि सत्यमिति मन्यते, तं प्रति प्रागुक्तं स्मारयति—**न कश्चिदिति**। वृत्तानुवादपूर्वकं श्लोकतात्पर्यमाह—**व्यवहारेति**। अक्षराणि न व्याख्येयानि व्याख्यातत्वादित्याह—**उक्तार्थमिति**।।७१।।

संवेदनस्य कल्पितदृश्योपहितरूपेण दृश्यत्वान्न द्रष्टुर्व्यतिरेकेण सत्त्वमिति स्वप्नदृष्टान्तेनोक्तमिदानीं तत्त्वतः संवेदनस्य विषयसम्बन्धाभावादात्मैव संवेदनमित्याह—**चित्तेति**। अक्षरार्थं कथयति—**सर्वमित्यादिना**। निर्विषयत्वेनासङ्गत्वे सिद्धे श्रुतिमपि संवादयति—**असङ्गो हीति**। श्रुतियुक्तिसिद्धमसङ्गत्वं साधयति—**सविषयस्येति**।।७२।। ३५

---

१. चित्तं = ब्रह्म। २. अतिप्रसङ्गात्—घटज्ञानेन पटसिद्धिप्रसङ्गात्। केवलज्ञानेन शशविषाणादेः सिद्धिप्रसङ्गात्।

**योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ। परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः।।७३।।**

**ननु निर्विषयत्वेन चेदसङ्गत्वं चित्तस्य न निःसङ्गता भवति यस्माच्छास्ता शास्त्रं शिष्यश्चेत्येवमादेर्विषयस्य विद्यमानत्वात्। नैष दोषः। कस्मात्? यः पदार्थः शास्त्रादिर्विद्यते स कल्पितसंवृत्या, कल्पिता च सा परमार्थ-प्रतिपत्त्युपायत्वेन संवृतिश्च सा, तया योऽस्ति परमार्थेन नास्त्यसौ न विद्यते। ज्ञाते द्वैतं न विद्यत इत्युक्तम्। यश्च परतन्त्राभिसंवृत्या परशास्त्रव्यवहारेण स्यात् पदार्थः स परमार्थतो निरूप्यमाणो नास्त्येव। तेन युक्तमुक्तमसङ्गं तेन कीर्तितमिति।।७३।।** ५

अनुभूतिस्वरूपाचार्यटीका

ननु—द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट्पदार्थाः इति **वैशेषिकः**। कथमुच्यते संविद्व्यतिरिक्तोऽर्थो नास्तीति। तत्राह—**यश्च परतन्त्रेति**। षट्संख्या पदार्थेभ्योऽन्या? अनन्या वा? आद्ये पदार्थातिरेकः। अन्त्ये सर्वा-नन्यत्वे संख्याया अनेकरूपतापातः। एकैकानन्यत्वे द्रव्यात्मकत्वेन गुणादिषु वृत्तिर्न स्यात्। किञ्च, १० सामान्योपाधौ षट्सङ्ख्यानिविशते, विशेषोपाधौ वा? नोभयथाऽपि। परापररूपाणां सामान्यानां विशेषाणां चापरिमितत्वात्। न च षड्लक्षणायोगः भावत्वान्विते निषिध्यत इति वाच्यं, तस्यान्यत्व[त्र]प्रमित्ययोगात्, इह चेत्तरेतराश्रयात्, मेलनायोगाच्च। यत्र हि द्रव्ये पञ्चलक्षणयोगस्तत्र न तदयोगो यत्र न तदयोगो गुणादौ तत्र न तद्योगः। षण्णां च ते न भावत्वान्वयः, विधिप्रत्ययविषयत्वञ्च शुक्तिरूप्येऽप्यस्ति। लक्षणञ्च तव व्यतिरेक्यनुमाननम्। न च षडेव व्यतिरेक्यनुमानानि। पृथिव्यादिव्यावृत्तिगोचराणां तेषां बहुलमुपलम्भात्। किञ्च, १५ द्रव्यलक्षणं गुणादिपञ्चकव्यावृत्तिसमर्थविशेषणयुक्तं क्रियत इति प्रागेव गुणादिपञ्चकं लक्षणतः परस्परव्यावृत्तं प्रमातव्यम्। तल्लक्षणानि च द्रव्यव्यावृत्तिसमर्थविशेषणयुक्तानि प्रमातव्यानीति प्रागेव द्रव्यं लक्षणत इतरव्यावृत्तं प्रमातव्यमित्यन्योन्याश्रयान्नैकमपि सिध्येत्। न च लोकसिद्धं द्रव्यादिस्वरूपं भिन्नम्, लोकस्यात्र औदासीन्यात्। अनुमानवैयर्थ्याच्च। सर्वञ्च परोक्षमेव ते भासते, न चातिरिक्ताभावः शक्योऽसर्वज्ञेन ज्ञातुम्। कपिलादिभिः सर्व-ज्ञत्वाभिमतैः प्रधानादीनामपि उपलम्भात् न च कणाद एवैकस्सर्वज्ञ इति **कोशपानं**[1] विना विश्वस्यामः। न २० च तेषामपि षट्स्वेवान्तर्भावः कल्पनीयः। सत्येवैकस्मिन् तत्कल्पनस्य लघीयस्त्वात् किमनया मूर्खशिष्यवृन्द-प्रतारणया। निराकारि विस्तरशः षट्पदार्थारिक्तकल्पना **तत्त्वालोक** इति नेह प्रपञ्च्यते[2]।।७३।।

आनन्दगिरिटीका

निर्विषयत्वेन चित्तस्यासङ्गत्वं [3]सङ्गीतम्; तदसङ्गतम्; शास्त्रादेर्विषयस्य सत्त्वादित्याशङ्क्याऽऽह—**योऽस्तीति**। ननु परमार्थतो वैशेषिकाः षट् पदार्थान् द्रव्यादिसमवायान्तानातिष्ठन्ते, तथा च चित्तस्य कथमसङ्गत्वम्, तत्राऽऽह— २५ **परेति**। वैशेषिकपारिभाषिकव्यवहारानुरोधेन पदार्थो यो द्रव्यादिः समवायान्तः स्यात्र स परमार्थतोऽस्ति, किं तु संवृत्या प्रतिभाति, तस्मादविरुद्धमसङ्गत्वमित्यर्थः। व्यावर्त्यं चोद्यमुत्थापयति—**नन्विति**। तत्र यस्मादिति सामान्येनोक्तं हेतुं विशेषतो व्यनक्ति—**शास्तेति**। आदिशब्देन प्रमाता प्रमाणं प्रमेयमित्यादि गृह्यते। असङ्गत्वाक्षेपं परिहरति—**नैष दोष इति**। तत्र निर्विषयत्वहेतुं प्रश्नपूर्वकं पूर्वार्धयोजनया साधयति—**कस्मादित्यादिना**। परमार्थतो द्वैतस्यासत्त्वे वाक्योपक्रममनुगुणमादर्शयति—**ज्ञात इति**। द्वितीयार्धं योजयति—**यश्चेति**। न हि द्रव्यस्य लक्षणं ३० गुणादिपञ्चकस्य च ततो व्यावर्तकप्रातिस्विकलक्षणप्रतिपत्तिमन्तरेण प्रकल्पते। तथा च [4]तल्लक्षणतस्तत्प्रतिपत्तौ तदितरप्रतिपत्तिः, तत्प्रतिपत्तौ च तल्लक्षणतस्तद्व्यावृत्ततत्तत्प्रतिपत्तिरिति परस्पराश्रयान्न किञ्चिदपि वस्तुतः सिध्येदित्यर्थः। वस्तुतो निर्विषयस्यैव सिद्धत्वादसङ्गत्वं चित्तस्य प्रागुक्तं सङ्गतमेवेत्युपसंहरति—**तेनेति**।।७३।।

---

१. कोशपानं—सत्यवदननिर्णयाय दुर्गादिदेवताभिषेकजलप्राशनं (या० स्मृ० २-११२) दिव्यप्रमाणं यथा तप्तपरशुग्रहणम्। ३५

२. तत्र हि विस्तरेण षोडशपदार्थनिराकरणं प्रमाणलक्षणनिराकरणञ्च कृतम्। विस्तृतत्वान्नानूद्यते।

३. संगीतं = कथितम्।

४. तल्लक्षणतो गुणादिपञ्चकलक्षणतस्तत्प्रतिपत्तौ गुणादिप्रतिपत्तौ तदितरद्रव्यप्रतिपत्तिः द्रव्यप्रतिपत्तौ तदितरगुणादिप्रतिपत्तिः इत्यन्योन्याश्रयः।

**[1]अजः कल्पितसंवृत्या परमार्थेन नाप्यजः। परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः।।७४।।**
**अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते। द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते।।७५।।**
**यदा न लभते हेतूनुत्तमाधममध्यमान्। तदा न जायते चित्तं हेत्वभावे फलं कुतः।।७६।।**

**ननु शास्त्रादीनां संवृतितित्वेऽज इतीयमपि कल्पना संवृतिः स्यात्। सत्यमेवम्। शास्त्रादिकल्पितसंवृत्यैवाज इत्युच्यते। परमार्थेन नाप्यजः। यस्मात् परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिमपेक्ष्य योऽज इत्युक्तः स संवृत्या जायते। अतोऽज इतीयमपि कल्पना परमार्थविषये नैव क्रमत इत्यर्थः।।७४।।** ५

**यस्मादसन् द्वैतविषयस्तस्मादसत्यभूते द्वैतेऽभिनिवेशोऽस्ति केवलमभिनिवेश आग्रहमात्रम्। द्वयं तत्र न विद्यते। मिथ्याभिनिवेशमात्रं च जन्मनः कारणं यस्मात्तस्माद् द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न जायते।।७५।।**

**जात्याश्रमविहिता आशीर्वर्जितैरनुष्ठीयमाना धर्मा देवत्वादिप्राप्तिहेतव उत्तमाः केवलाश्च धर्माः। अधर्म-** १०

अनुभूतिस्वरूपाचार्यटीका

परमार्थेन नाप्यज इति व्यपदेशः कैवल्ये अजोऽहमित्यभिधानाभावादित्यर्थः। कुतस्तर्हि जन्मप्राप्तिः येन तत्प्रतिषेधायाजत्वव्यपदेशस्तत्राह—**यस्मादिति**। परिणामवादप्रसिद्ध्यपेक्षया यस्मात्प्राप्तं जन्मातोऽज इत्युक्तम्। परिणामवाद्यभिमतं जन्म कीदृशमङ्गीकृत्य निषेधः कृतस्तत्राह—**स संवृत्येति**। यतः कल्पितजन्मप्रतिषेधेनाजत्वोप-देशोऽतः इत्युपसंहारः। यथा शुक्तेः स्वाभाविकारूप्यत्वेऽपि मिथ्यारूप्याभावो न सत्यः, सप्रतियोगिकत्वात्, तथाऽऽत्मनः स्वाभाविककौटस्थ्येपि अध्यस्तजन्मनिषेधोऽवस्त्वेवेत्यर्थः।।७४।। १५

सबाह्यभ्यन्तरो ह्यजोऽहमिति ज्ञानस्य कल्पितशास्त्रादिजन्यत्वे सति मिथ्यात्वान्नापुनरावृत्तिफलसाधनत्वं सम्भवतीत्याशङ्क्याह—**अभूतेति**। यदि द्वितीयः संसारः सत्यः स्यात् तदा तन्निवृत्तये साधनमपि वस्तुभूतं अन्विष्येत। मिथ्याभिनिवेशमात्रस्य मिथ्योपायजेनापि ज्ञानेन वस्तुनिष्ठेन निवृत्तिः स्यादित्यर्थः।।७५।।

'निर्निमित्तो न जायत' इत्येतत् प्रपञ्चयति—**यदा न लभत इत्यादिना**।।७६।। २०

आनन्दगिरिटीका

शास्त्रादिभेदकल्पनायाः संवृतिसिद्धत्वे तदधीनाऽऽत्मन्यजत्वकल्पनाऽपि संवृतिसिद्धैव स्यादित्याशङ्क्याङ्गी-करोति—**अज इति**। कल्पितमात्मन्यजत्वमित्यत्र हेतुमाह—**परतन्त्रेति**। परिणामवादप्रसिद्धजन्मना भ्रान्त्यैवाऽऽत्मा जायते, जन्मनश्च विभ्रमत्वे तन्निषेधस्याजत्वस्यापि तथात्वं युक्तमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह—**नन्विति**। शास्त्रादिभेदस्य कल्पितत्वे तत्प्रयुक्तमात्मन्यजत्वमपि कल्पितं स्यादित्यर्थः। किमजोऽयमात्मेति व्यवहारस्य कल्पितत्वं किं वा तदुपलक्षितस्य रूपस्येति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति**। अजोऽयमित्यभिधानस्य संवृतिप्रयुक्तत्वात् तद्व्यवहारस्य कल्पितत्वमिष्टमित्यर्थः। कैवल्यावस्थायामजोऽयमित्यभिधानाभावमभ्युपेत्य व्यावर्त्यं दर्शयति—**परमार्थेनेति**। आत्मन्यजत्वव्यवहारस्य कल्पितत्वे द्वितीयार्धव्याख्यानेन हेतुमाह—**यस्मादिति**। परेषां परिणामवादिनां शास्त्रे या परिणामप्रसिद्धिस्तामपेक्ष्य तन्निषेधेन योऽज इत्यात्मोक्तः स संवृत्यैव यतो जायतेऽतश्च प्रतियोगिनो जन्मनः संवृतिसिद्धत्वात् तन्निषेधरूपमजत्वमपि तादृगेवेत्यर्थः। अजत्वादिव्यवहारोपलक्षितस्वरूपस्याकल्पितत्वम्। तस्य कल्पनाधिष्ठानत्वात्। न च कल्पितस्य शास्त्रादेरकल्पिते न प्रमितिहेतुत्वं प्रतिबिम्बादौ बिम्बादिप्रमितिहेतुत्वस्य सम्प्रतिपन्नत्वादिति द्रष्टव्यम्।।७४।। २५ ३०

ननु ज्ञानस्य कल्पितशास्त्रादिजन्यत्वे मिथ्यात्वान्नापुनरावृत्तिफलसाधनत्वम्, तत्राऽऽह—**अभूतेति**। यदि द्वितीयः संसारः सत्यः स्यात् तदा तन्निवृत्त्यर्थं साधनमपि वस्तुभूतमभिधीयते, मिथ्याभिनिवेशमात्रस्य तु मिथ्योपायजन्येनापि ज्ञानेन वस्तुनिष्ठेन निवृत्तिः सिध्यतीति श्लोकार्थं कथयति—**यस्मादित्यादिना**।।७५।। ३५

निर्निमित्तो न जायत इत्युक्तम्, तदेतत्प्रपञ्चयति—**यदेति**। उत्तमान् हेतून्विभजते—**जातीति**। आशीर्वर्जितैः फलतृष्णारहितैरधिकारिभिरिति यावत्। देवत्वादीत्यादिशब्देनोत्कृष्टं जन्म गृह्यते। केवलत्वं धर्माणां प्राधान्यम्।

१. अजः—अजत्वव्यवहारोऽप्याविद्यको, न जायत इत्यजः। जन्मनः संवृत्तिसिद्धत्वात् तदभावोऽपि तथा।

**अनिमित्तस्य चित्तस्य याऽनुत्पत्तिः समाऽद्वया। अजातस्यैव सर्वस्य चित्तदृश्यं हि तद् यतः।।७७।।**

**बुद्ध्वाऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन्। वीतशोकं तथाऽकाममभयं पदमश्नुते।।७८।।**

व्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमाः। तिर्यगादिप्राप्तिनिमित्ता अधर्मलक्षणा प्रवृत्तिविशेषाश्चाधमाः। तानुत्तम-मध्यमाधमानविद्यापरिकल्पितान् यदैकमेवाद्वितीयमात्मतत्त्वं सर्वकल्पनावर्जितं जानन्न लभते न पश्यति यथा, बालैर्दृश्यमानं गगने मलं विवेकी न पश्यति, तद्वत्, तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैरुत्तमाधममध्यमफलरूपेण। ५ न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादि।।७६।।

हेत्वभावे चित्तं नोत्पद्यत इति ह्युक्तम्। सा पुनरनुत्पत्तिश्चित्तस्य कीदृशीत्युच्यते। परमार्थदर्शनेन निरस्त-धर्माधर्माख्योत्पत्तिनिमित्तस्यानिमित्तस्य चित्तस्येति या मोक्षाख्याऽनुत्पत्तिः सा सर्वदा सर्वावस्थासु समा निर्विशेषाऽद्वया च। पूर्वमप्यजातस्यैवानुत्पन्नस्य चित्तस्य सर्वस्याद्वयस्येत्यर्थः। यस्मात्प्रागपि विज्ञानाच्चित्तदृश्यं तद् द्वयं जन्म च। १० तस्मादजातस्य सर्वस्य सर्वदा चित्तस्य समाऽद्वयैवानुत्पत्तिर्न पुनः कदाचिद्भवति कदाचिद्वा न भवतीति। सर्वदैक-रूपैवेत्यर्थः।।७७।।

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयस्याभावादनिमित्ततां च सत्यां परमार्थरूपां बुद्ध्वा हेतुं धर्मादिकारणं

अनुभूतिस्वरूपाचार्यटीका

१५ "तदा न जायते चित्तमि"ति कालपरिच्छेदप्रतीतेरागन्तुकत्वं प्राप्तमित्यभिप्रेत्याह—**कीदृशीति**। यथा रूप्यकल्पनाकालेऽपि शुक्तेररूप्यत्वं स्वाभाविकं न व्यभिचरति तथा जन्मकल्पनाकालेऽपि संविदो निर्विशेषाद्वय-ब्रह्मरूपता स्वाभाविक्यस्त्येव जन्मभ्रमनिवृत्त्यपेक्षया तु तदा न जायत इत्युक्तमित्याह—**सर्वदेति**। न केवलं मोक्षभागिन एव चैतन्यस्याजत्वं, किन्तु घटाद्युपरक्तस्यापि सर्वस्य चित्प्रतिबिम्बस्य बिम्बकल्प-ब्रह्मरूपस्थितिः समैवेत्याह—**अजातस्यैवेति**। तत्र हेतुः—**यस्मादिति**। दृश्यत्वात् रज्जुसर्पवत्तत्त्वतो नास्त्येव द्वयं विषयविषय्याख्यं जन्म च कदाचिदपीत्यर्थः।।७७।।

२० द्वयाभावं स बुद्ध्वैव न जायत इत्युक्तम्। तत् प्रपञ्चयति—**बुद्ध्वेत्यादिना**।।७८।।

आनन्दगिरिटीका

मनुष्यत्वादीत्यादिशब्देन मध्यमयोनयो गृह्यन्ते। तिर्यगादीत्यादिशब्देनाधमं जन्म संगृह्यते। वाक्यार्थज्ञानादज्ञाननिवृत्तौ तन्निवृत्त्यर्थं विशिनष्टि—**अविद्येति**। अविदुषां प्रतीयमाना हेतवो विदुषां न प्रतिभान्तीत्येतद् दृष्टान्तेन स्फुटयति—**यथेति**। उक्तेऽर्थे हेतुत्वेन चतुर्थपादं व्याचष्टे—**न हीति**।।७६।।

२५ तदा न जायते चित्तमिति कालपरिच्छेदप्रतीतेरागन्तुकत्वमाशङ्क्य परिहरति—**अनिमित्तस्येति**। चित्तस्य हि निमित्तवर्जितस्य नित्यसिद्धस्य या सर्वदाऽनुत्पत्तिः सा निर्विशेषाऽद्वितीया चेत्यत्र हेतुमाह—**अजातस्येति**। सर्वस्य द्वैतस्य चित्तदृश्यत्वेन मिथ्यात्वान्नित्यसिद्धस्य परिपूर्णस्य चित्ताख्यस्य स्फुरणस्य जन्मायोगात् तदनुत्पत्तिरुक्तलक्षणा युक्तेत्यर्थः। उक्तमनूद्याऽऽकाङ्क्षापूर्वकं श्लोकमवतार्य व्याकरोति—**हेत्वभाव इत्यादिना**। ३० यथा रूप्यकल्पनाकालेऽपि शुक्तेररूप्यत्वं स्वाभाविकं तथा जन्मकल्पनाकालेऽपि संविदो निर्विशेषाद्वितीयब्रह्मता स्वाभाविकी, जन्मभ्रमनिवृत्त्यपेक्षया तु तदा न जायत इत्युक्तमित्याह—**सर्वदेति**। न केवलं मोक्षावस्थस्यैव चैतन्यस्याजत्वं, किं तु घटाद्युपरक्तस्यापीत्यभिप्रेत्याऽऽह—**सर्वावस्थास्विति**। सर्वस्यैव चित्तप्रतिबिम्बस्य बिम्बकल्पब्रह्मरूपत्वादि हेतुमभिप्रेत्याऽऽह—**अद्वया चेति**। तृतीयपादार्थं कथयति—**पूर्वमपीति**। तत्र हेतुमाह—**यस्मादिति**। तस्माद्रज्जुसर्पवद् द्वैतस्य जन्मनश्च दृश्यत्वाद् वस्तुतोऽसत्त्वादिति यावत्।।७७।।

३५ 'द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायत' इत्युक्तं तदिदानीं प्रपञ्चयति—**बुद्ध्वेति**। द्वैताभावोपलक्षितां सत्तामनाद्यनन्तां परमार्थभूतां प्रतिपद्य देवादियोनिप्राप्तौ धर्मादिहेतुमसाङ्कर्येणाननुतिष्ठन् यदा विद्वानवतिष्ठते तदा सर्वसंसारकारणरहितं पदमश्नुवानो न पुनः शरीरं गृह्णातीत्यर्थः। श्लोकं व्याचष्टे—**यथोक्तेनेति**।

**अभूताभिनिवेशाद्धि सदृशे तत् प्रवर्तते। वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते।।७९।।**
**निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः। विषयः स हि बुद्धानां तत् साम्यमजमद्वयम्।।८०।।**
**अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम्। सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः।।८१।।**

देवादियोनिप्राप्तये पृथगनाप्नुवन्ननुपाददानस्त्यक्तबाह्यैषणः सन् कामशोकादिवर्जितमविद्यादिरहितमभयं पदमश्नुते, पुनर्न जायत इत्यर्थः।।७८।। ५

यस्मादभूताभिनिवेशादसति द्वये द्वयास्तित्वनिश्चयोऽभूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे तच्चित्तं प्रवर्तते। तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं निरपेक्षं सद् विनिवर्ततेऽभूताभिनिवेशविषयात्।।७९।।

निवृत्तस्य द्वैतविषयाद् विषयान्तरे चाप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थितिर्यैषा ब्रह्मस्वरूपा स्थितिश्चित्तस्याद्वयविज्ञानैकरसघनलक्षणा। स हि यस्माद्विषयो गोचरः परमार्थदर्शिनां बुद्धानां तस्मात् तत्साम्यं परं निर्विशेषमजमद्वयं च।।८०।। १०

पुनरपि कीदृशश्चासौ बुद्धानां विषय इत्याह—स्वयमेव तत् प्रभातं भवति, नाऽऽदित्याद्यपेक्षं, स्वयंज्योतिः-

अनुभूतिस्वरूपाचार्यटीका

अनिमित्तता चेत् सत्या, किं तर्हि चित्तस्य प्रवृत्तेर्निमित्तमित्याशङ्क्याऽऽह—**अभूताभिनिवेशाद्धीत्यनेन।** अस्माकं श्रेयो भविष्यतीति मिथ्याभिनिवेशमात्रात् स्वाभिनिवेशानुरूपे चित्तं प्रवर्तते, कस्यचिज्जटाधारणादौ, कस्यचित्क्लेशोल्लुञ्छनादौ, कस्यचित् तुलसीमूलमालादौ, कस्यचित् सुरामांसोपहारादिभिः शक्त्यर्चनादावित्यर्थः। १५ कुतस्तर्हि निवर्तत इत्याह—**वस्त्वभावमिति।** व्यभिचारित्वादिहेतुभिः अन्वयाद्य[अद्वयात्म]दर्शनेन च साध्यसाधनाख्यद्वयाभावः तं यदा बुद्धवान् तदा वस्त्वभावं स बुद्ध्वैव निस्सङ्गं चित्तं यथा पुनर्न प्रवर्तते तथा निवर्तत इत्यर्थः।।७९।।

अभयं पदमश्नुत इत्युक्तमत्र हेतुमाह—**निवृत्तस्येति।** विद्वदनुभवैकगम्यत्वात् कल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिविशेषणमित्याह—**विषय इति।।८०।।**

स्वयं प्रभातत्वे हेतुमाह—**सकृद्विभात इति।** यत् सत्तायां प्रकाशं व्यभिचरति तत्पराधीनप्रकाशमिति निश्चेतुं २० शक्यम्। यथा घटादि। चेतनस्तु न सत्तायां प्रकाशं व्यभिचरति। अप्रकाशादेः साक्षित्वादतोऽपराधीनप्रकाश

आनन्दगिरिटीका

दृश्यत्वादिना हेतुना द्वैतस्य रज्जुसर्पादिवदेव कल्पितत्वं यथोक्तो न्यायस्तेन चैतन्यस्य जन्मनि यद् द्वयं निमित्तं तस्याभावतामभावोपलक्षितां सत्तां निमित्ताभावादेवानाद्यनन्तां तस्मादेव सत्यां बुद्ध्वेति योजना। पृथगिति देवतादिप्रकृष्टजन्मप्राप्तये धर्मं मनुष्यत्वप्राप्तये धर्माधर्मौ तिर्यगाद्यधमयोनिप्राप्तये चाधर्मसाङ्कर्येणाननुतिष्ठन्निति यावत्। २५ प्रकृतस्य ज्ञानवतो धर्माद्यनुष्ठानायोगे हेतुं सूचयति—**त्यक्तेति।** कार्यभूतसर्वानर्थराहित्यमुक्त्वा पुनरभयमित्यस्यार्थमाह—**अविद्येति।।७८।।**

यथोक्तपदप्राप्तिः सदाऽस्तीत्याशङ्क्याऽऽह—**अभूतेति।** व्यभिचारित्वादिहेतुभिरद्वयात्मदर्शनेन वा साध्यसाधनात्मनो द्वैतस्य वस्तुनोऽभावं यदा पुमान् बुद्धवांस्तदा वस्त्वभावं पुरुषो बुद्ध्वैव निःसङ्गं चित्तं यथा पुनर्न प्रवर्तते तथा तन्निवृत्तिमनु निवृत्तो भवतीत्यर्थः। अक्षराणि विभजते—**यस्मादित्यादिना।** यस्मादभूताभिनिवेशात् ३० तदनुरूपे चित्तं प्रवर्तते तस्मान्निःसङ्गं निवर्तत इति सम्बन्धः। अभूताभिनिवेशमेव विशदयति—**असतीति।** अभिनिवेशस्याविद्याव्यामोहरूपत्वमन्वयव्यतिरेकसिद्धमिति वक्तुं हीत्युक्तम्। तदनुरूप इत्यत्र तच्छब्देनाभिनिवेशो गृह्यते। **तस्येति।** अभिनिवेशविषयस्येत्यर्थः।।७९।।

अभयं पदमश्नुत इत्यत्र हेतुमाह—**निवृत्तस्येति।** विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह—**विषय इति।** अक्षरार्थं कथयति—**निवृत्तस्येत्यादिना।।८०।।** ३५

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि—**अजमिति।** स्वयंप्रभातत्वे हेतुमाह—**सकृदिति।** कल्पितस्य सर्वस्य धारणाद्धर्मो, नासौ कथमपि परतन्त्रो भवितुमर्हत्यनवस्थानादतः स्वयंज्योतिरित्याह—**धर्म इति।** किं च धीयते निधीयते सर्वं निक्षिप्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते। तथा च सर्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्तादौ साक्षितयाऽऽत्मनः सिद्धेः स्वयंज्योतिष्ट्वमेष्टव्यमित्याह—**धातुरिति।** किं चाऽऽत्मत्वा-

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा। यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ।।८२।।**

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः। चलस्थिरोभयाभावैरावृणोत्येव बालिशः।।८३।।**

स्वभावमित्यर्थः। सकृद्विभातः सदैव विभात इत्येतत्। एष एवंलक्षण आत्माख्यो धर्मो धातुस्वभावतो वस्तु-स्वभावत इत्यर्थः।।८१।।

५ एवमुच्यमानमपि परमार्थतत्त्वं कस्माल्लौकिकैर्न गृह्यत इत्युच्यते—यस्माद् यस्य कस्यचिद् द्वयवस्तुनो धर्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियतेऽनायासेनाऽऽच्छाद्यत इत्यर्थः। द्वयोपलब्धिनिमित्तं हि तत्राऽऽवरणं न यत्नान्तरमपेक्षते। दुःखं च विव्रियते प्रकटीक्रियते। परमार्थज्ञानस्य दुर्लभत्वात्। भगवानसावात्माऽद्वयो देव इत्यर्थः। अतो वेदान्तैराचार्यैश्च बहुश उच्यमानोऽपि नैव ज्ञातुं शक्य इत्यर्थः। "आश्चर्यो वक्ता कुशलोऽस्य लब्धा" इति श्रुतेः।।८२।।

अस्ति नास्तीत्यादि। सूक्ष्मविषया अपि पण्डितानां ग्रहा भगवतः परमात्मन आवरणा एव, किमुत मूढजनानां १० बुद्धिलक्षणा इत्येवमर्थं प्रदर्शयन्नाह—अस्त्यात्मेति वादी कश्चित् प्रतिपद्यते। नास्तीत्यपरो वैनाशिकः। अस्ति नास्तीत्यपरोऽर्धवैनाशिकः सदसद्वादी दिग्वासाः। नास्ति नास्तीत्यन्यन्तशून्यवादी। तत्रास्तिभावश्चलः, घटाद्य-नित्यविलक्षणत्वात्। नास्तिभावः स्थिरः सदाऽविशेषत्वात्। उभयं चलस्थिरविषयत्वात् सदसद्भावः, अभावोऽत्यन्ता-भावः प्रकारचतुष्टयस्यापि। तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव बालिशोऽ-विवेकी। यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात् किमु स्वभावमूढो जन इत्यभिप्रायः।।८३।।

१५ अनुभूतिस्वरूपाचार्यटीका

इत्यर्थः। कल्पितस्य सर्वस्य धारणात् धर्मः। यदि कल्पितस्य सत्ताप्रतीत्योः परतन्त्रस्य धारकोऽधिष्ठानभूतः आत्माऽपि परतन्त्रस्तदाऽनवस्था स्यादतस्तत्परिहाराय मूलकारणं यथा वादिभिरनाद्यभ्युपगतं तथा स्वतस्सिद्ध आत्माऽभ्युपेय इति भावः। धीयते सर्वं निक्षिप्यते सुषुप्तादावस्मिन्निति धातुः। अतः सकलज्ञानसाधनोपसंहारेऽपि सुषुप्तादौ साक्षितयाऽऽत्मनः सिद्धेः, अन्यथा परामर्शायोगात् स्वयंज्योतिष्ट्वमिति भावः। **स्वभावत इति**।

२० आनन्दगिरिटीका

देवाऽऽत्मनः स्वयंज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह—**स्वभावत इति**। आकाङ्क्षापूर्वकं श्लोकमवतार्य तदक्षराणि योजयति—**पुनरपीत्यादिना**। धातुस्वभावत इत्येकं पदं गृहीत्वा व्याचष्टे—**वस्त्विति**। विवक्षितार्थस्तु पूर्वस्मान्नातिरिच्यते।।८१।।

आत्मा चेदुक्तलक्षणो विवक्षितस्तर्हि किमित्यसौ श्रुत्याचार्योपदिष्टस्तथैव सर्वैर्न गृह्यते, तत्राऽऽह—**सुखमिति**। २५ मिथ्याभिनिवेशादात्मतत्त्वस्वरूपसुखं सदैवाऽऽच्छाद्यते, तस्मादेव वस्तुतोऽसदपि दुःखं सर्वदा प्रकटीक्रियते, तेनासौ भगवानात्मा श्रुत्याचार्योपदिष्टोऽपि न विस्पष्टो भवतीत्यर्थः। श्लोकव्यावर्त्यां शङ्कां दर्शयति—**एवमिति**। स्वयंज्योतिष्ट्वादिप्रागुक्तप्रकारेणेति यावत्। तत्र श्लोकमवतार्य व्याकरोति—**उच्यत इत्यादिना**। द्वैते गृह्यमाणेऽपि कथमात्मस्वरूपस्य सुखस्यानायासेनाऽऽच्छाद्यमानत्वम्, तत्राऽऽह—**द्वयेति**। इतश्चाऽऽत्मतत्त्वं यथावन्न प्रतिभातीत्याह—**दुःखं चेति**। यथावदात्मप्रथाऽभावे हेतुमाह—**परमार्थेति**। देवो याथातथ्येन न भातीति शेषः। ३० सुखस्य विद्यमानस्याऽऽवरणमविद्यमानस्य दुःखस्य विवरणमिति स्थिते फलितमाह—**अत इति**। श्रुत्याचार्योपदेशस्य तात्पर्यशून्यत्वं वारयति—**बहुश इति**। आत्मनि प्रवचनस्य परिज्ञानस्य दुर्लभत्वे प्रमाणमाह—**आश्चर्य इति**।।८२।।

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति लौकिकपुरुषाभिनिवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति—**अस्तीत्यादिना**। श्लोकस्य तात्पर्यमाह—**अस्तीति**। प्रमाता देहादिव्यतिरिक्तोऽस्तीत्यादौ वैशेषिकादिपक्षः। देहादिव्यतिरिक्तोऽपि नास्ति बुद्धेर्व्यतिरिच्यते, क्षणिकस्य विज्ञानस्यैवाऽऽत्मत्वादिति द्वितीयो विज्ञानवादिपक्षः। तृतीयो ३५ दिगम्बरपक्षः। चतुर्थे तु शून्यवादिपक्षे शून्यस्याऽऽत्यन्तिकत्वद्योतनार्था वीप्सा। द्वितीयार्धं विभजते—**तत्रेत्यादिना**। अनित्येभ्यो घटादिभ्यः सुखाद्याकारपरिणामितया वैलक्षण्यादस्तिभावो योऽयं प्रमातोक्तः स चलः सविशेषः सन् परिणामीत्यर्थः। देहाद्यतिरिक्तोऽपि प्रमाता बुद्ध्यतिरिक्तो नास्तीति यो नास्तिभावः स स्थिरो निर्विशेषत्वात्तदवस्थ्यैत्याह—**नास्तिभाव इति**। प्रकारचतुष्टयस्यास्तित्वस्य नास्तित्वस्यास्तिनास्तित्वस्य नास्ति-नास्तित्वस्य चेति यावत्। बालिशत्वे सिद्धे फलितं न्यायमुपसंहरति—**किम्विति**।।८३।।

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः। भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक्।।८४।।**
**प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम्। अनापन्नादिमध्यान्तं किमतः परमीहते।।८५।।**
**विप्राणां विनयो ह्येष शमः प्राकृत उच्यते। दमः प्रकृतिदान्तत्वादेवं विद्वाञ्शमं व्रजेत्।।८६।।**

कीदृक्पुनः परमार्थतत्त्वं यदवबोधादबालिशः पण्डितो भवतीत्याह–कोट्यः प्रावादुकशास्त्रनिर्णयान्ता एता उक्ता अस्ति नास्तीत्याद्याश्चतस्रो यासां कोटीनां ग्रहैर्ग्रहणैरुपलब्धिनिश्चयैः सदा सर्वदाऽऽवृत आच्छादितस्तेषामेव प्रावादुकानाम्। यः स भगवानाभिरस्तिनास्तीत्यादिकोटिभिश्चतसृभिरप्यस्पृष्टोऽस्त्यादिविकल्पनावर्जित इत्येतत्। येन मुनिना दृष्टो ज्ञातो वेदान्तेष्वौपनिषदः पुरुषः स सर्वदृक् सर्वज्ञः परमार्थपण्डित इत्यर्थः।।८४।। ५

प्राप्यैतां यथोक्तां कृत्स्नां समस्तां सर्वज्ञतां ब्राह्मण्यं पदं ''स ब्राह्मणः'' ''एष नित्यो महिमा ब्राह्मणस्य'' इति श्रुतेः। आदिमध्यान्ता उत्पत्तिस्थितिलया अनापन्ना अप्राप्ता यस्याद्वयस्य पदस्य न विद्यन्ते तदनापन्नादिमध्यान्तं ब्राह्मण्यं पदम्। तदेव प्राप्य लब्ध्वा किमतः परमस्मादात्मलाभादूर्ध्वमीहते चेष्टते निष्प्रयोजनमित्यर्थः। ''नैव तस्य कृतेनार्थः'' इत्यादिस्मृतेः।।८५।। १०

विप्राणां ब्राह्मणानां विनयो विनीतत्वं स्वाभाविकं यदेतदात्मस्वरूपेणावस्थानं एष विनयः, शमोऽप्येष एव,

अनुभूतिस्वरूपाचार्यटीका

आत्मत्वादेव स्वयंज्योतिष्ट्वमन्यथाऽनात्मत्वप्रसङ्गात् घटादिवदिति भावः। घटादिभ्योऽनित्येभ्यः सुखाद्याकार-परिणामितया वैलक्षण्याच्चलः परिणामी सविशेष इत्यर्थः। देहाद्यतिरिक्तः प्रमाता नास्तीति नास्तिभाव स्थिरः, निर्विशेषत्वादभावस्येत्यर्थः। आभिरस्पृष्टोऽस्त्यादिकल्पनासाक्षित्वात् कल्पनाधिष्ठानत्वाच्चेत्यर्थः।।८१-८४।। १५

परमार्थतः पण्डितस्यापि यावज्जीवादिश्रुतिचोदितमग्निहोत्राद्यनुष्ठेयमिति केचित्। तान् प्रत्याह—**प्राप्य सर्वज्ञतामिति**। गार्हस्थ्याभिमानिन एव प्रत्यवायपरिहारादिप्रयोजनं पश्यतः प्रवृत्तिः स्यात्। न परमार्थदर्शिनः सर्वज्ञतया विशेषाभिमानाभावात् प्राप्तव्यप्रयोजनाभावाच्चेत्यर्थः। ''स ब्राह्मणः केन स्यादि''ति ब्रह्मविदि ब्राह्मणपदप्रयोगात्तस्य प्राप्यं कैवल्यं ब्राह्मण्यं पदमित्यर्थः। ''एष नित्यो महिमा ब्राह्मणस्ये''ति धर्माद्यस्पृष्टो ब्रह्मणो महिमा ब्राह्मणस्याभिहितस्ततो ब्रह्मैव ब्राह्मण्यमिति स्वार्थे तद्धितश्चातुर्वर्ण्यमितिवत्।।८५।। २०

यद्यपि ब्रह्मविदोऽग्निहोत्रादिप्रवृत्तिरूपं कर्म न घटते तथापि निवृत्तिरूपं शमदमादि नियोगतोऽनुष्ठेयं भविष्यति कैवल्यानुगुणत्वात्, ब्राह्मणमात्रसम्बन्धितया स्मरणाच्च—

आनन्दगिरिटीका

आत्मनो यदावरणमुक्तं तदुपसंहरति—**कोट्य इति**। यासां कोटीनां परीक्षकपरिकल्पितनिर्णयनिरूपणीयानां ग्रहैरभिनिवेशविशेषैरात्मा सदा समावृतस्ताः खल्वेताश्चतस्रः कोट्यः सन्ति। तथा चाऽऽत्मनो न यथावत्प्रथनमित्यर्थः। यदि सदाऽऽत्मा समावृतो न तर्हि तस्य ज्ञानम्, ज्ञाने वा नास्ति नैराकाङ्क्ष्यं ज्ञातव्यान्तरपरिशेषादित्याशङ्क्याऽऽह—**भगवानिति**। आत्मा हि वस्तुतोऽस्तीत्यादिकल्पनारहितो येनोपनिषत्प्रवणेन प्रतिपन्नः स सर्वज्ञो ज्ञातव्यान्तरम-पश्यन् परमार्थपण्डितो निराकाङ्क्षो भवतीत्यर्थः। श्लोकनिरस्यामाकाङ्क्षां दर्शयति—**कीदृगिति**। किमिति परमार्थतत्त्वं जिज्ञास्यते? तज्ज्ञानात्पाण्डित्यसिद्ध्यर्थमित्याह—**यदवबोधादिति**। तत्र श्लोकमवतार्य व्याकरोति—**आहेत्यादिना**। तेषामेव प्रावादुकानामुपलब्धिनिश्चयैरिति सम्बन्धः। यो भगवानुक्तविशेषणः स येनेति योजना।।८४।। २५ ३०

ज्ञानवतोऽपि यावज्जीवादिश्रुतिवशादग्निहोत्रादि कर्तव्यमित्याशङ्क्याऽऽह—**प्राप्येति**। यथोक्तां चतुष्कोटि-विनिर्मुक्तामिति यावत्। समस्तत्वं ज्ञातव्यशेषशून्यत्वं परिपूर्णज्ञप्तिरूपत्वम्। तत्र ब्राह्मण्यपदप्रयोगे प्रमाणमाह—**स ब्राह्मण इति**। स विद्वानपरोक्षीकृतब्रह्मसतत्त्वः सन् फलावस्थो मुख्यो ब्राह्मणो भवतीत्यर्थः। ब्राह्मणस्य ब्रह्मविदो विद्याफलावस्थस्यैव स्वभावो महिमेत्युक्तो निर्विकारो वृद्धिह्रासाभावादेकरूपो भवतीति वाक्यान्तरस्यार्थः। तदेव पदं विशिनष्टि—**अनापन्नादिमध्यान्तमिति**। तद् व्याकरोति—**आदीति**। अन्वयं दर्शयन्नविशिष्टं व्याचष्टे—**तदेव प्राप्येति**। ज्ञानवान् फलावस्थः सन् कृतकृत्यो न तस्य किञ्चिदस्ति कर्तव्यमित्यस्मिन्नर्थे भगवद्वाक्यं प्रमाणयति—**नैव तस्येति**।।८५।। ३५

यावज्जीवादिश्रुतेरविद्वद्विषयत्वाद्विदुषो नाग्निहोत्रादि कर्तव्यमित्युक्तम्। इदानीं तत्रापि नियोगतोऽस्ति कर्तव्यमित्याशङ्क्याऽऽह—**विप्राणामिति**। ब्रह्मविदां ब्राह्मणानामेष विनयः स्वभावः। [illegible] न नियोगाधीनां ४०

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते। अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते।।८७।।**
**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम्। ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम्।।८८।।**

प्राकृतः स्वाभाविकोऽकृतक उच्यते। दमोऽप्येष एव प्रकृतिदान्तत्वात् स्वभावत एव चोपशान्तरूपत्वाद् ब्रह्मणः। एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वाञ्शममुपशान्तिं स्वाभाविकीं ब्रह्मस्वरूपां व्रजेद् ब्रह्मस्वरूपेणावतिष्ठत इत्यर्थः।।८६।।

एवमन्योन्यविरुद्धत्वात् संसारकारणानि रागद्वेषदोषास्पदानि प्रावादुकानां दर्शनानि। अतो मिथ्यादर्शनानि तानीति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वाद् रागादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्युपसंहृतम्। अथेदानीं स्वप्रक्रियाप्रदर्शनार्थ आरम्भः—सवस्तु संवृतिसता वस्तुना सह वर्तत इति सवस्तु। तथा चोपलब्धिरुपलम्भस्तेन सह वर्तत इति सोपलम्भं च शास्त्रादिसर्वव्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरितमित्येतत्। एवंलक्षणं जागरितमिष्यते वेदान्तेषु। अवस्तु संवृतेरप्यभावात्। सोपलम्भं वस्तुवदुपलम्भनमुपलम्भोऽसत्यपि वस्तुनि तेन सह वर्तत इति सोपलम्भं च। शुद्धं केवलं प्रविविक्तं जागरितात् स्थूलाल्लौकिकं सर्वप्राणिसाधारणत्वादिष्यते स्वप्न इत्यर्थः।।८७।।

अवस्त्वनुपलम्भं च ग्राह्यग्रहणवर्जितमित्येतत्। लोकोत्तरम् अत एव लोकातीतम्। ग्राह्यग्रहणविषयो हि

अनुभूतिस्वरूपाचार्यटीका

शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।। इति। तत्राह— **विप्राणामिति**। औद्धत्याद्यभावस्य स्वाभाविकत्वात् न नियोगतोऽनुष्ठेयत्वमित्यर्थः। आध्यात्मिकप्रवृत्त्युपरमस्याऽप्यन्वयव्यतिरेकपरिहारेणाऽऽत्ममात्रत्वान्नानुष्ठेयत्वं विद्वद्दृष्ट्या। तदुक्तम्—"निवृत्तिः केवलात्मते"ति।।८६।।

वृत्तानुवादपूर्वकं प्रकरणशेषस्य तात्पर्यमाह—**एवमन्योन्येत्यादिना**। **स्वप्रक्रियेति**। शिष्यस्यारोपदृष्टिमाश्रित्य जाग्रदादिपदार्थशुद्धिपूर्वको बोधनप्रकार इत्यर्थः।।८७।।

आनन्दगिरिटीका

कर्तव्यतामधिकरोति। शमोऽपि स्वाभाविको न नियोगेन क्रियते। दमोऽपि स्वभावसिद्धत्वान्न नियोगमपेक्षते। एवं कूटस्थमात्मतत्त्वं विद्वान् पुमानशेषविक्रियाशून्यब्रह्मस्वरूपेण तिष्ठतीत्यर्थः। अक्षरार्थं कथयति—**विप्राणामित्यादिना**। तमेव स्वाभाविकं विनयं विवृणोति—**यदेतदिति**। एष एवेत्यात्मस्वभावो गृह्यते।।८६।।

परमतनिराकरणमुखेनाऽऽत्मतत्त्वमवधारितम्। अधुना स्वप्रक्रिययाऽवस्थात्रयोपन्यासमुखेनापि तदवधारयितुमवस्थाद्वयमुपन्यस्यति—**सवस्त्विति**। वृत्तानुवादपूर्वकं प्रकरणशेषस्य तात्पर्यं दर्शयति—**एवमिति**। शिष्यस्याध्यारोपदृष्टिमाश्रित्य जाग्रदादिपदार्थपरिशुद्धिपूर्वको बोधप्रकारः स्वप्रक्रिया; तया तस्यैवाऽऽत्मतत्त्वस्य प्रदर्शनपरो ग्रन्थशेष इत्यर्थः। तत्र जागरितमुदाहरति—**सवस्त्विति**। यद्धि प्रातिभासिकं व्यावहारिकं च स्थूलमर्थजातमादित्यादिदेवतानुगृहीतैरिन्द्रियैरुपलभ्यते तज्जागरितमित्यर्थः। द्वयमित्यस्यार्थमाह—**शास्त्रादीति**। तत्र श्लोके लोकप्रसिद्धमित्येतदुच्यते—**लौकिकमिति**। तद् व्याचष्टे—**लोकादिति**। न केवलमिदं जागरितं लोकप्रसिद्धम्। किं तु वेदान्तेष्वपि परम्परया ज्ञानोपायत्वेन प्रसिद्धमित्याह—**एवंलक्षणमिति**। स्वप्नोपन्यासपरमुत्तरार्धं योजयति—**अवस्त्विति**। बाह्येन्द्रियप्रयुक्तो व्यवहारः संवृतिशब्दार्थः। सोऽपि स्थूलार्थवन्न स्वप्ने सम्भवति। तथा च बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनसस्तदर्थाभासाकारावभासनं स्वप्नशब्दितमित्यर्थः। शुद्धमित्यस्य केवलमिति पर्यायं गृहीत्वा विवक्षितमर्थमाह—**प्रविविक्तमिति**। तस्यापि लोकप्रसिद्धत्वं लौकिकमित्यनेनोक्तं, तद्विवृणोति—**सर्वप्राणीति**।।८७।।

सम्प्रति सुषुप्तं दर्शयति—**अवस्त्विति**। स्थूलं सूक्ष्मं च वस्तु विषयभूतं यत्र न विद्यते तत्तथा। इन्द्रियार्थसम्प्रयोगजन्यो वा स्थूलार्थावगाही वासनात्मको वा यत्रोपलम्भो न सम्भवति तदशेषविशेषविज्ञानशून्यं सुषुप्तमिति विशिनष्टि—**अ[illegible]पलम्भं चेति**। नन्विदं कारणात्मना बुद्धेरवस्थानम्। न च कारणं लोके प्रसिद्धम्। कार्यस्यैवावस्थाद्वयात्मकस्य [illegible]त्वादित्यभिप्रेत्याऽऽह—**लोकोत्तरमिति**। तस्य साक्षिप्रसिद्धत्वं विवक्षित्वोक्तम्—**इति स्मृतमिति**। ज्ञानज्ञेयात्मकाव[illegible]वस्[illegible] तुरीयं च परमार्थतत्त्वं विद्वदनुभवसमधिगम्यमित्याह—**ज्ञानमिति**। श्लोकगतं पदद्वयमनूद्य विवक्षितमर्थं कथ[illegible]—**अवस्त्विति**। ग्राह्यग्रहणविभागवर्जितत्वादेव कुतो लोकातीतत्वमित्याशङ्क्याऽऽह—**ग्राह्येति**।

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम्। सर्वज्ञता हि सर्वत्र भवतीह महाधियः।।८९।।**
**हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः। तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः।।९०।।**

लोकस्तदभावात् सर्वप्रवृत्तिबीजं सुषुप्तमित्येतत्, एवं स्मृतम्, सोपायं परमार्थतत्त्वं लौकिकं शुद्धलौकिकं लोकोत्तरं क्रमेण येन ज्ञानेन ज्ञायते तज्ज्ञानं, ज्ञेयमेतान्येव त्रीणि एतद्व्यतिरेकेण ज्ञेयानुपपत्तेः। सर्वप्रावादुककल्पितवस्तुनोऽत्रै-वान्तर्भावात् विज्ञेयं परमार्थसत्यं तुर्याख्यमद्वयमजमात्मतत्त्वमित्यर्थः। सदा सर्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्तितम्।।८८।। ५

ज्ञाने च लौकिकादिविषये। ज्ञेये च लौकिकादौ त्रिविधे। पूर्वं लौकिकं स्थूलम्, तदभावेन पश्चाच्छुद्धं लौकिकम्, तदभावेन लोकोत्तरमित्येवं क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्येऽद्वयेऽजेऽभये विदिते स्वयमेवाऽऽत्मस्वरूपमेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञस्तद्भावः सर्वज्ञता। इहास्मिँल्लोके भवति महाधियो महाबुद्धेः। सर्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्वत्र सर्वदा भवति। सकृद्विदिते स्वरूपे व्यभिचारा-भावादित्यर्थः। न हि परमार्थविदो ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम्।।८९।। १०

**लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्देशादस्तित्वाशङ्का परमार्थतो मा भूदित्याह–हेयानि च लौकिकादीनि**

अनुभूतिस्वरूपाचार्यटीका

स्थानत्रयं विविच्य ज्ञानादिपदार्थान् व्याचष्टे—**सोपायमित्यादिना**। पदार्थपरिशोधनाद्युपायपूर्वकं ब्रह्मात्मैकत्वं स्थानत्रयं च क्रमेण येन मनोवृत्तिरूपेण ज्ञानेन ज्ञायते तदिह ज्ञानं विवक्षितमित्यर्थः। सर्वैः प्रावादुकैः प्रवदनशीलैः शुष्कतर्कजल्पनापरैः कल्पितस्य कार्यकारणादिरूपस्य वस्तुनोऽवस्थात्रय एवान्तर्भावादित्यर्थः।।८८।। १५

"आत्मनि विज्ञाते सर्वं विज्ञातं स्यादि"ति यत् श्रुत्योक्तं तदुक्तवस्तुज्ञाने फलतीत्याह—**ज्ञाने चेति**। ज्ञानमात्रं हि तत्त्वमर्थाकारेण सर्वमिति [1]कल्पनया भानात् तत्सर्वं ज्ञप्तिमात्रमिति श्रुत्या आचार्यप्रसादात् सकृद्विदिते स्वरूपस्फुरणस्य व्यभिचाराभावात् सदैव सर्वज्ञप्तिरूपा सर्वज्ञता भवतीत्युक्तम्। तत् स्फुटयति—**न हीति**। बौद्धानां ज्ञानस्य क्षणिकत्वात् पूर्वविनाशोत्तरोत्पादान्तराले न ज्ञानमस्तीति न सर्वदा सर्वज्ञता मुक्तस्य सम्भवति। मम तु ज्ञानस्य कौटस्थ्यात् नोत्पादविनाशाविति सर्वदा सर्वज्ञतेत्यर्थः।।८९।। २०

आनन्दगिरिटीका

सुषुप्तं चेदलौकिकं कथं तदवगम्यतामित्याशङ्क्याऽऽह—**सर्वप्रवृत्तीति**। अवस्थाद्वयबीजं सुषुप्तमित्येतत्प्रसिद्धं शास्त्रविदामित्याह—**एवमिति**। अवस्थात्रयमेवमुक्त्वा ज्ञानपदार्थं कथयति—**सोपायमिति**। ज्ञानमत्र मनोवृत्तिरूपं विवक्षितम् अवस्थात्रयातिरिक्तमपि परीक्षकपरिकल्पितं ज्ञेयं सम्भवतीत्याशङ्क्याऽऽह—**सर्वेति**। सर्वैरेव प्रावादुकैः शुष्कतर्कजल्पनशीलैः परिकल्पितस्य कार्यकारणादिरूपवस्तुनोऽवस्थात्रये नियमेनान्तर्भावाज्ज्ञेयान्तरं नास्तीत्यर्थः। २५ ज्ञेयमेव विशेषेण ज्ञेयं विज्ञेयमुच्यते, तेन तदपि नावस्थात्रयातिरिक्तमस्तीत्याशङ्क्याऽऽह—**विज्ञेयमिति**। उपायोपेयभूते यथोक्तेऽर्थे विदुषामभिमतिमादर्शयति—**सदेति**।।८८।।

"आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवती"ति श्रुत्या यत्प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति—**ज्ञाने चेति**। ज्ञानज्ञेयवेदने विवक्षितं क्रममनुक्रामति—**पूर्वमित्यादिना**। यत्पुनरवस्थात्रयातीतं तुरीयं तत्परिज्ञाने विवक्षितं क्रमं दर्शयति—**स्थानेनेति**। तुर्ये विदिते सतीति सम्बन्धः। तस्य स्थानत्रयात्मकद्वैताभावोपलक्षितत्वमाह— ३० **अद्वय इति**। जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यं कथयति—**अज इति**। कार्यसम्बन्धस्तत्र नास्तीति वक्तुं कारणभूताविद्यासम्बन्धाभावमभिदधाति—**अभय इति**। यथोक्ततत्त्वज्ञानस्य परिपूर्णब्रह्मरूपेणावस्थानं फलमाह—**स्वयमेवेति**। ज्ञानवतो यथोक्तं फलमर्चिरादिमार्गायत्तमिति शङ्कां वारयति—**इहेति**। उक्तज्ञानवतो महाबुद्धित्वे हेतुमाह—**सर्वलोकेति**। ज्ञानवतो यथोक्तं ज्ञानं कदाचिद्भवदपि कालान्तरेऽभिभूतमसत्कल्पं भविष्यतीत्या-शङ्क्याऽऽह—**एवंविद इति**। श्रुत्याचार्यप्रसादाद्विदिते स्वरूपे स्वरूपस्फुरणस्य व्यभिचाराभावात् परिपूर्णज्ञप्तिरूपता ३५ विदुषो भवतीत्युक्तं स्फुटयति—**न हीति**।।८९।।

अवस्थात्रयस्य ज्ञेयत्वनिर्देशात्परमार्थतोऽस्तित्वमाशङ्क्य परिहरति—**हेयेति**। शङ्कोत्तरत्वेन श्लोकमवतार्य

---

१. कल्पनाया अभावात्। इति पा.

**प्रकृत्याऽऽकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः। विद्यते न हि नानात्वं तेषां क्वचन किञ्चन।।९१।।**

**आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः। यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते।।९२।।**

त्रीणि जागरितस्वप्नसुषुप्तान्यात्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः। ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम्। आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। पाक्यानि रागद्वेषमोहादयो ५ दोषाः कषायाख्यानि पक्तव्यानि। सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणोपायत्वेनेत्यर्थः। अग्रयाणतः प्रथमतः, तेषां हेयादीनामन्यत्र विज्ञेयात् परमार्थसत्यं विज्ञेयं ब्रह्मैकं वर्जयित्वा उपलम्भनमुपलम्भोऽविद्याकल्पनामात्रम्। हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यता त्रयाणामित्यर्थः।।९०।।

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवदाकाशतुल्याः सूक्ष्मनिरञ्जनसर्वगतत्वैः सर्वे धर्मा आत्मानो ज्ञेया मुमुक्षुभिरनादयो नित्याः। बहुवचनकृतभेदाशङ्कां निराकुर्वन्नाह–क्वचन किञ्चन किंचिदणुमात्रमपि तेषां न विद्यते १० नानात्वमिति।।९१।।

ज्ञेयताऽपि धर्माणां संवृत्यैव, न परमार्थत इत्याह–यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव यथा नित्यप्रकाशस्वरूपः सवितैवं नित्यबोधस्वरूपा इत्यर्थः। सर्वे धर्माः सर्व आत्मानः। न च तेषां निश्चयः कर्तव्यो नित्यनिश्चितस्वरूपा इत्यर्थः। न सन्दिह्यमानस्वरूपा एवं नैवं चेति। यस्य मुमुक्षोरेवं यथोक्तप्रकारेण सर्वदा बोधनिश्चयनिरपेक्षताऽऽत्मार्थं परार्थं वा, यथा सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वार्थं परार्थं चेत्येवं १५ भवति क्षान्तिर्बोधकर्तव्यतानिरपेक्षता सर्वदा स्वात्मनि सोऽमृतत्वायामृतभावाय कल्पते। मोक्षाय समर्थो भवतीत्यर्थः।।९२।।

अनुभूतिस्वरूपाचार्यटीका

पाण्डित्यं—वेदान्ततात्पर्याभिज्ञत्वमद्वितीयवस्तुविचारचातुर्यम्। बाल्यं—दम्भदर्पाहङ्कारादिराहित्यम्। मौनं—मुनेः कर्म ज्ञानाभ्यासादिकमित्यर्थः।।९०।।

२० ज्ञेयात्मस्वरूपतत्त्वं स्फुटयति—**प्रकृत्येति**।।९१।।

ज्ञेयशब्दप्रयोगात् मुख्यमेव ज्ञेयत्वं प्राप्तं निवर्तयति—**आदिबुद्धा इति**।।९२।।

आनन्दगिरिटीका

हेयशब्दार्थं व्याचष्टे—**लौकिकादीनामिति**। तान्येव त्रीणि विभजते—**जागरितेति**। पाण्डित्यं वेदान्ततात्पर्याभिज्ञत्वमद्वितीयवस्तुविचारचातुर्यपरिनिष्पन्नं श्रवणम्। बाल्यं दम्भदर्पाहङ्कारादिराहित्यम्, युक्तितः श्रुतार्थानु- २५ सन्धानकुशलत्वम्। मौनं मुनेः कर्म ज्ञानाभ्यासलक्षणं निदिध्यासनशब्दितम्। तान्येतान्याप्तव्यानि। यद्यपि ज्ञेयस्य विज्ञेयत्वं युक्तं तथाऽपि कथं हेयादीनां विज्ञेयत्वमित्याशङ्क्याऽऽह—**उपायत्वेनेति**। तदेव प्रकटयितुं प्रथमत इत्युक्तम्। उत्तरार्धं व्याचष्टे—**तेषामिति**। हेयादीनां रज्जुसर्पवदविद्याकल्पितत्वान्नास्ति परमार्थत्वशङ्केत्यर्थः।।९०।।

यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति, तदिदानीं स्फुटयति—**प्रकृत्येति**। बहुवचनप्रयोगप्राप्तं दोषं प्रत्यादिशति—**विद्यत इति**। कल्पितभेदनिबन्धनं बहुवचनमित्यर्थः। क्वचनेति देशकालावस्थाग्रहणम्। ३० **अणुमात्रमपीति** कार्यकारणभावस्यांशांशिभावस्य चोपादानम्।।९१।।

ज्ञेयशब्दप्रयोगान्मुख्यमेव ज्ञेयत्वं प्राप्तं प्रत्युदस्यति—**आदिबुद्धा इति**। यथोक्तरीत्या समुत्पन्नस्य ज्ञानस्य फलमाह—**यस्येति**। प्रथमपादस्य तात्पर्यमाह—**ज्ञेयताऽपीति**। उक्तमर्थं दृष्टान्तेन स्पष्टयति—**यथेति**। पादान्तरस्यार्थं कथयति—**न चेति**। निश्चितस्वस्वरूपत्वमेव व्यतिरेकद्वारा स्फोरयति—**नेत्यादिना**। न खल्वात्मा स्वसत्तायामेवं नैवमिति सन्दिह्यमानस्वरूपो भवितुमलम्। तस्य स्फुरणाव्यभिचारात् तद्रूपत्वस्य प्रागेव साधितत्वादित्यर्थः। द्वितीयार्धं ३५ व्याकरोति—**[illegible]त्यादिना**। आत्मस्वरूपस्य स्फुरद्रूपत्वं यथोक्तप्रकारः। बोधाख्यो निश्चयो बोधनिश्चयस्तस्मिन्निरपेक्षत्वं स्वार्थमन्यार्थं [illegible] भवति सोऽमृतत्वाय कल्पत इति सम्बन्धः। तदेव दृष्टान्तेन साधयति—**यथेत्यादिना**। इतिशब्दो यथेत्[illegible] सम्बध्यते।।९२।।

**आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः। सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम्।।९३।।**
**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा। भेदनिम्नाः पृथग्वादास्तस्मात् ते कृपणाः स्मृताः।।९४।।**
**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः। ते हि लोके महाज्ञानास्तच्च लोको न गाहते।।९५।।**

**तथा नापि शान्तिकर्तव्यताऽऽत्मनीत्याह—यस्मादादिशान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठूपरतस्वभावा इत्यर्थः। सर्वे धर्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात् तस्माच्छान्तिर्मोक्षो वा नास्ति कर्तव्य इत्यर्थः। न हि नित्यैकस्वभावस्य कृतं किञ्चिदर्थवत् स्यात्।।९३।।** ५

**ये यथोक्तं परमार्थतत्त्वं प्रतिपन्नास्त एवाकृपणा लोके, कृपणा एवान्य इत्याह—यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः। के? पृथग्वादाः पृथङ्नाना वस्त्वित्येवं वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः। तस्मात्ते कृपणाः क्षुद्राः स्मृताः यस्माद् वैशारद्यं विशुद्धिर्नास्ति तेषां भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्वदा वर्तमानानामित्यर्थः। अतो युक्तमेव तेषां कार्पण्यमित्यभिप्रायः।।९४।।**

**यदिदं परमार्थतत्त्वममहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः क्षुद्रैरल्पप्रज्ञैरनवगाह्यमित्याह—अजे साम्ये परमार्थतत्त्व एवमेवेति ये केचित् स्त्र्यादयोऽपि सुनिश्चिता भविष्यन्ति चेत् त एव हि लोके महाज्ञाना निरतिशयतत्त्वविषयज्ञाना** १०

अनुभूतिस्वरूपाचार्यटीका

"सोऽमृतत्वाय कल्पत" इति वचनादागन्तुकममृतत्वं प्राप्तं यद्यपि; तथापीत्यादिः। पादत्रयोक्तमर्थं चतुर्थपादेन संक्षिप्याह—**अजं साम्यं विशारदमिति**। प्रतिबिम्बकल्पानामनन्तानामपि जीवानां ब्रह्मैव बिम्बकल्पमेकं स्वरूपमिति सर्वेषां नित्यमुक्तत्वादि सिद्धमित्यर्थः। उक्तस्वरूपानङ्गीकारे त्वपुरुषार्थत्वं मोक्षस्यापद्यत इत्याह—**न हीति**। संसारदुःखोपरमणं सुखजन्म वा कृतकं चेत् क्षयिष्णु स्यादित्यर्थः।।९३।। १५

मुमुक्षुप्ररोचनायाविद्वन्निन्दां विद्वत्स्तुतिञ्च व्यवहारदृष्ट्या करोति श्लोकद्वयेन—**वैशारद्यन्त्वित्यादिना**।।९४।।

पदैषिणो देवा अपि ज्ञानिनः प्राप्यपदरहितस्य मार्गे मुह्यन्ति। देवानामपि परिच्छिन्नदृष्टित्वादनवगाह्योऽसौ मार्ग इत्यर्थः। "शकुनीनामिवाकाशे जले वारिचरस्य च। पदं यथा न दृश्येत तथा ज्ञानवतां गतिः।।" इत्यादिदुर्लक्ष्यत्वस्मरणात्।।९५।। २०

आनन्दगिरिटीका

"सोऽमृतत्वाये"त्यादिवचनादागन्तुकममृतत्वं प्रत्युदस्यति—**आदिशान्ता इति**। श्लोकस्य तात्पर्यमक्षरार्थं च निर्दिशति—**तथा नापीत्यादिना**। उक्तमेवार्थं चतुर्थपादेन संक्षिप्य दर्शयति—**अजमिति**। श्लोकार्थमुपसंहरति—**विशुद्धमिति**। उक्तरूपतानङ्गीकारे मोक्षस्यापुरुषार्थता स्यादित्याह—**न हीति**। संसारदुःखोपशमनं सुखजन्म वा यदि क्रियेत तदा कृतकस्यानित्यत्वमवश्यम्भावीत्यर्थः।।९३।। २५

इदानीं मुमुक्षुप्ररोचनार्थमविद्वन्निन्दां दर्शयति—**वैशारद्यं त्विति**। श्लोकस्य तात्पर्यं दर्शयति—**ये यथोक्तमिति**। उत्तरार्धमादौ योजयति—**यस्मादिति**। तस्मादित्युत्तरेणास्य सम्बन्धः। प्रथमार्धमुक्तेऽर्थे हेतुत्वेन व्याचष्टे—**यस्मादित्यादिना**। समनन्तरोक्तस्य यस्मादित्यस्यापेक्षितं पूरयति—**अत इति**।।९४।।

एवमविद्वन्निन्दां प्रदर्श्य विद्वत्प्रशंसां प्रसारयति—**अज इति**। कूटस्थे वस्तुनि निर्विशेषे येषामसम्भावना-विपरीतभावनाविरहि निर्धारणरूपं विज्ञानं सम्भावनोपनीतमस्ति ते हि व्यवहारभूमौ महति निरतिशये तत्त्वे परिज्ञानवत्त्वान्महानुभावा भवन्तीत्यर्थः। ननु तत्त्वविषयज्ञानस्य सर्वलोकसाधारणत्वात् तत्त्वज्ञानवतां किमिति प्रशंसा प्रस्तूयते तत्राऽऽह—**तच्चेति**। श्लोकस्य तात्पर्यमाह—**यदिदमिति**। यदित्युपक्रमात् तदमहात्मभिरनवगाह्यमिति योजनीयम्। अमहात्मत्वं क्षुद्रहृदयत्वम्। तत्र हेतुः—**अपण्डितैरिति**। अपाण्डित्यं विवेकरहितत्वम्। तत्र हेतुर्वेदान्तेत्यादिना सूच्यते। तेषां पौर्वापर्येण पर्यालोचनापरिचयपराङ्मुखैरित्यर्थः। विचारचातुर्याभावादेव पदार्थवाक्यार्थविभागावगमशून्यत्वमाह—**अल्पप्रज्ञैरिति**। तर्हि पारमार्थिके तत्त्वे केषामेवं मनी[illegible]मुन्मिषेदित्याशङ्क्य येषां केषाञ्चिदेव तन्निष्ठानामित्याह—**ये केचिदिति**। स्त्र्यादीनामुपनिषद्द्वारा ज्ञा[illegible]पि [illegible]ऽपि द्वारान्तरप्रयुक्तस्तदधिकारः सम्भवतीत्यभिप्रेत्यापीत्युक्तम्। तत्त्वज्ञानस्य दुर्लभत्वमभ्युपेत्य चेदित्युक्त[illegible]तुर्थपादं व्याचष्टे— ३०, ३५

**अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते। यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम्।।९६।।**

**अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चित। असङ्गता सदा नास्ति किमुताऽऽवरणच्युतिः।।९७।।**

**इत्यर्थः। तच्च तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विषयीकरोतीत्यर्थः।**

५ **''सर्वभूतात्मभूतस्य सर्वभूतहितस्य च। देवा अपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः।।''**

**''शकुनीनामिवाऽऽकाशे गतिर्नैवोपलभ्यते।'' इत्यादिस्मरणात्।।९५।।**

**कथं महाज्ञानत्वमित्याह—अजेष्वनुत्पन्नेष्वचलेषु धर्मेष्वात्मस्वजमचलं च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतस्तस्मादसंक्रान्तमर्थान्तरे ज्ञानमजमिष्यते। यस्मान्न क्रमतेऽर्थान्तरे ज्ञानं तेन कारणेनासङ्गं तत् कीर्तितमाकाशकल्पमित्युक्तम्।।९६।।**

१० **इतोऽन्येषां वादिनामणुमात्रेऽल्पेऽपि वैधर्म्ये वस्तुनि बहिरन्तर्वा जायमान उत्पद्यमानेऽविपश्चितोऽविवेकिनोऽसङ्गताऽसङ्गत्वं सदा नास्ति किमुत वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीति।।९७।।**

अनुभूतिस्वरूपाचार्यटीका

अजं साम्यं प्रमेयं तद्विषयनिश्चयवन्तः प्रमातार इति वस्तुतः परिच्छेदे कथं महाज्ञानमित्याकाङ्क्षायामाह—**अजेष्विति**। कूटस्थानां जीवानां स्वरूपमेकं ज्ञानं कूटस्थं देशाद्यनवच्छेदात् ब्रह्मोच्यते। अतोऽर्थान्तरभूत-
१५ ब्रह्मविषयत्वाभावात् न तत्त्वविदां महाज्ञानत्वहानिः। अज्ञानसंशयपरिच्छेदभ्रमादिनिवृत्तेः सुनिश्चितब्रह्मवित्त्वमुपचर्यत इति भावः। किञ्च, अस्मन्मते ज्ञानस्यासङ्गत्वमपि सिध्यति, विषयाभावादेव, अतो ''मुक्त्यै निर्विषयं मन'' इति मनुवचनमप्यविरुद्धमित्याह—**यस्मान्न क्रमत इति**।।९६।।

अजब्रह्मात्मकं विश्वमिति स्वमते ज्ञानमसङ्गं सिध्यतीत्युक्तम्। मतान्तरे तु विषयसद्भावादसङ्गता न प्रसिध्यतीत्याह—**अणुमात्रेऽपीति**।।९७।।

२० आनन्दगिरिटीका

**तच्चेति**। ज्ञानवतां विज्ञातं परमार्थतत्त्वमन्येषामनवगाह्यमित्यत्र प्रमाणमाह—**सर्वभूतेति**। सर्वेषां भूतानां ब्रह्मादीनां स्तम्बपर्यन्तानामात्मा परं ब्रह्म तद्भूतस्य विदुषः सर्वत्राऽऽत्मभूतस्य सर्वेषु निरुपचरितस्वरूपत्वादेव परमहितस्य परमप्रेमास्पदत्वादेव परमसुखात्मकस्य प्राप्यपुरुषार्थविरहिणो मार्गे देवा विद्यावन्तोऽपि पदमन्वेषमाणा विविधं मोहमुपगच्छन्तीत्यर्थः। महात्मनो ज्ञानवतो गन्तव्यपदरहितस्य परिपूर्णस्य गतिरवगन्तुमशक्येति निदर्शनवशेन
२५ विशदयति—**शकुनीनामिति**।।९५।।

अजं साम्यमित्युक्तं प्रमेयं तद्विषयनिश्चयवान् प्रमाता प्रमाणं तथाविधनिश्चयज्ञानमिति वस्तुपरिच्छेदे कथं महाज्ञानत्वमित्याशङ्क्याऽऽह—**अजेष्विति**। अजा धर्माश्चित्प्रतिबिम्बा जीवा विवक्ष्यन्ते। तेष्वजं ज्ञानं कूटस्थदृष्टिरूपं बिम्बकल्पं ब्रह्माचलमात्मभूतमभ्युपगम्यते। तथा च मानमेयादिभावस्य कल्पितत्वेऽपि वस्तुतो वस्तुपरिच्छेदाभावादुपपन्नं तज्ज्ञानवतां महाज्ञानत्वमित्यर्थः। किं चास्मन्मते ज्ञानस्य यदसङ्गत्वमङ्गीकृतं तदपि विषयाभावादेव
३० सिध्यति। ततश्च ''मुक्त्यै निर्विषयं मन'' इति यदुच्यते तदप्यविरुद्धमित्याह—**यतो नेति**। आकाङ्क्षापूर्वकं पूर्वार्धं योजयति—**कथमित्यादि[illegible]**। उत्तरार्धं व्याचष्टे—**यस्मान्नेति**। नित्यविज्ञप्तिरूपस्याऽऽत्मनोऽसङ्गत्वं प्रागपि सूचितमित्याह—**आका[illegible]ति**।।९६।।

कूट[illegible] ब्र[illegible]व तत्त्वमि[illegible] स्वमते ज्ञानमसङ्गं सिध्यतीत्युक्तम्। मतान्तरे पुनः सविषयत्वाज्ज्ञानस्यासङ्गत्वमसङ्गतं प्रसज्ये[illegible]—**अणुमात्रेऽपीति**। अविद्वद्दृष्ट्या कस्यचिदपि पदार्थस्य जन्माङ्गीकारे ज्ञानस्य तदनुषङ्गित्वेना-
३५ सङ्गत्वायोगे बन्[illegible]वस्[illegible] प्रयोजनं दूरापास्तं भवतीत्याह—**किमुतेति**। श्लोकाक्षराणि व्याकरोति—**इत इति**। विद्वानद्वैतवादी प[illegible] परामृश्यते।।९७।।

**अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः। आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः।।९८।।**

**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः। सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्।।९९।।**

तेषामावरणच्युतिर्नास्तीति ब्रुवतां स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्माणामावरणम्। नेत्युच्यते–अलब्धावरणाः। अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्मा अलब्धावरणा बन्धनरहिता इत्यर्थः। प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः। यद्येवं कथं तर्हि बुध्यन्त इत्युच्यते। नायकाः स्वामिनः ५ समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः। यथा नित्यप्रकाशस्वरूपोऽपि सविता प्रकाशत इत्युच्यते, यथा वा नित्यनिवृत्तगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते तद्वत्।।९८।।

यस्मान्न हि क्रमते बुद्धस्य परमार्थदर्शिनो ज्ञानं विषयान्तरेषु धर्मेषु धर्मसंस्थं सवितरीव प्रभा। तायिनः, तायोऽस्यास्तीति तायी, सन्तानवतो निरन्तरस्याऽऽकाशकल्पस्येत्यर्थः। पूजावतो वा प्रज्ञावतो वा। सर्वे धर्मा आत्मानोऽपि तथा ज्ञानवदेवाऽऽकाशकल्पत्वान्न क्रमन्ते क्वचिदप्यर्थान्तर इत्यर्थः। यदादावुपन्यस्तं ज्ञानेनाऽऽकाशकल्पेनेत्यादि १० तदिदमाकाशकल्पस्य तायिनो बुद्धस्य तदनन्यत्वादाकाशकल्पं ज्ञानं न क्रमते क्वचिदप्यर्थान्तरे। तथा धर्मा इति। आकाशमिवाचलमविक्रियं निरवयवं नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वम्। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः। ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्।

अनुभूतिस्वरूपाचार्यटीका

अज्ञप्रसिद्ध्यैव अज्ञानाद्यावरणं सिध्यति न तत्त्वविद्दृष्ट्येत्यभिप्रेत्याह—**अलब्धमप्राप्तमिति**। मुख्यक्रिया-कर्तृवाचकत्वं प्रकृतिप्रत्यययोर्न नियतमित्यभिप्रेत्योदाहरणमाह—**यथेति**।।९८।। १५

कस्मान्मुख्यं बोद्धृत्वं नेष्यत इति, विद्वद्दृष्ट्या ज्ञानस्य विषयसङ्गाभावादित्याह—**क्रमते न हीति**। किञ्च जीवानां ब्रह्मरूपेण विभुत्वादाकाशवत् क्रियासमवायित्वं न घटते। अतोऽपि न मुख्यं बोद्धृत्वमित्याह—**सर्वे धर्मास्तथेति**। ननु ज्ञानमात्रं परमार्थः ज्ञातृज्ञेयादिभावस्तत्र कल्पित इति सुगतमतमेतद् ब्रह्मविद्भिः स्वीकृतमित्याशङ्क्याह—**ज्ञानं नैतदिति**। भेदाङ्गीकारादित्यर्थः। तदिदमत्रोपसंहृतमिति शेषः। तत् कथयति—**अद्वयमित्यन्तेन**।।९९-१००।। २०

आनन्दगिरिटीका

न चेदावरणच्युतिरिष्यते तर्हि स्वीकृतमावरणमित्याशङ्क्याऽऽह—**अलब्धेति**। बोद्धृत्वं तर्हि कथमित्याशङ्क्य बोधनशक्तिमत्त्वादित्याह—**बुध्यन्त इति**। शङ्कोत्तरत्वेन श्लोकमवतारयति—**तेषामित्यादिना**। अविद्वद्दृष्ट्यैवाविद्यावरणं सिध्यति, न तत्त्वदृष्ट्येत्यभिप्रेत्य व्याचष्टे—**अलब्धेति**। उक्तेऽर्थे हेतुकथनार्थं विशेषणत्रयमित्याह—**यस्मादिति**। तस्माद् बन्धनरहिता इति पूर्वेण सम्बन्धः। आत्मनो यथोक्तस्वभावत्वे बोद्धृत्वं २५ न सिध्यतीत्याक्षिपति—**यद्येवमिति**। पादान्तरेणोत्तरमाह—**उच्यत इति**। मुख्यावेव क्रियाकर्तारौ प्रकृतिप्रत्ययाभ्यामभिधेयावित्याशङ्क्य नियममुदाहरणाभ्यां निरस्यति—**यथेत्यादिना**।।९८।।

किमिति मुख्ये बोद्धृत्वे सम्भाविते तदेव नेष्टमित्याशङ्क्य ज्ञानस्य विद्वद्दृष्ट्या विषयसम्बन्धासम्भवादित्याह—**क्रमत इति**। किं च जीवानां ब्रह्मात्मना विभुत्वादाकाशवत्क्रियासमवायायोगात्र मुख्यं बोद्धृत्वं सेद्धुमलमित्याह—**सर्व इति**। ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादि कल्पितमिति सौगतमतमेव भवताऽपि ३० संगृहीतमित्याशङ्क्याऽऽह—**ज्ञानमिति**। तत्र पूर्वार्धाक्षराणि व्याकरोति—**यस्मादिति**। यद्धि परमार्थदर्शिनो ज्ञानं तत्र विषयान्तरेषु क्रमते, किं तु सवितरि प्रकाशवदात्मन्येव प्रतिष्ठितं यस्मादिष्यते तस्मात्तस्मिन् मुख्यं बोद्धृत्वं सेद्धुमर्हतीत्यर्थः। परमार्थदर्शिनो विशेषणम्—**तायिन इति**। तद् व्याचष्टे—**तायोऽस्येत्यादिना**। आत्मनो मुख्यस्य बोद्धृत्वस्याभावे हेत्वन्तरम्—**सर्वे धर्मास्तथेति**। तद्विभजते—**सर्व इत्यादिना**। प्रकरणादावुक्तमेव किमर्थं पुनरिहोच्यते, तत्राऽऽह—**यदादाविति**। तदिदमिहोपसंहृतमिति शेषः। क्रमते न हीत्यादेरर्थमुपसंहरति— ३५ **आकाशकल्पस्येति**। सर्वे धर्मास्तथेत्यस्यार्थं निगमयति—**तथेति**। धर्मा न क्रमन्ते क्वचिदपीति शेषः। तथा च नाऽऽत्मनि मुख्यं बोद्धृत्वं, किं त्वौपचारिकमिति प्रकृतमुपसंहर्तुमितिशब्दः। पूर्वार्धस्य तात्पर्यमाह—**आकाशमिति**।

**दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम्। बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम्।।१००।।**

**यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः।।९९।।**

**शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते। दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शम्। अस्ति नास्तीति**
५ **चतुष्कोटिवर्जितत्वाद् दुर्विज्ञेयमित्यर्थः। अत एवातिगम्भीरं दुष्प्रवेशं महासमुद्रवदकृतप्रज्ञैः। अजं साम्यं विशारदम्। ईदृक्पदमनानात्वं नानात्ववर्जितं बुद्ध्वाऽवगम्य तद्भूताः सन्तो नमस्कुर्मस्तस्मै पदाय। अव्यवहार्यमपि व्यवहार-गोचरमापाद्य यथाबलं यथाशक्तीत्यर्थः।।१००।।**

**अजमपि जनियोगं प्रापदैश्वर्ययोगादगति च गतिमत्तां प्रापदेकं ह्यनेकम्।**
**विविधविषयधर्मग्राहिमुग्धेक्षणानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि।।१।।**

१० अनुभूतिस्वरूपाचार्यटीका

भाष्यकारोऽपि प्रतिपादितं ब्रह्म शास्त्रसमाप्तौ संस्मरति—**अजमपीति**। प्रणतानां तदैक्यं प्रतिपन्नानां संसारभयविहन्तृ यत् ब्रह्म तन्नमस्ये। कथंभूतं? यदजमपि जनियोगं कार्यावस्थां प्रापदैश्वर्ययोगात् मायाप्रतिबिम्बितत्वेन ईश्वरभावापत्त्या जगत्कारणमभवदित्यर्थः। कूटस्थतया विभुतया चागति गतिवर्जितमपि गतिमत्तां प्रापत् ब्रह्मलोकादिभावापत्त्येत्यर्थः। यदेकमपि स्वतोऽनाद्यविद्यासु प्रतिबिम्बभावादनेकजीवभावं प्राप्तं केषां दृष्ट्या

१५ आनन्दगिरिटीका

ज्ञानमित्यादि व्याचष्टे—**ज्ञानेति**। सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रमुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते। मतान्तरे तु नैवमिति कुतो मतसाङ्कर्याशङ्काऽवकाशमासादयेदित्यर्थः।।९९।।

प्रकरणचतुष्टयविशिष्टस्य शास्त्रस्याऽऽदाविवान्तेऽपि परदेवतातत्त्वमनुस्मरंस्तन्नमस्काररूपं मङ्गलाचरणं सम्पादयति—**दुर्दर्शमिति**। दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि—**अतिगम्भीरमिति**।
२० प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थत्वं निर्विशेषत्वं सर्वसम्बन्धविधुरत्वं चेति हेतुत्रयमभिप्रेत्याऽऽह—**अजमित्यादिना**। विशेषणत्रयं तर्हि कुतश्चिदनवगतं तन्नास्त्येवेति निश्चेतुं युक्तम्, प्रमाणाधीनत्वात् प्रमेयसिद्धेरित्याशङ्क्योपनिषद्भिर-तद्धर्माध्यासापाकरणद्वारेणावगम्यमानत्वान्नैवमित्याह—**पदमिति**। तत्र तर्हि सकलविभागविकले कुतो नमस्कारक्रिया स्वीक्रियामर्हतीत्याशङ्क्याऽऽह—**अनानात्वमिति**। यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्पते तथापि यथासामर्थ्यं मायाबलमवलम्ब्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया प्रचयादिप्रयोजनवती प्रामाणिकैरभि-
२५ प्रेतेत्यर्थः। श्लोकस्य तात्पर्यमाह—**शास्त्रेति**। यदि परमार्थतत्त्वं शास्त्रस्याऽऽदाविवान्तेऽपि नमस्क्रियते तदा तस्याऽऽद्यन्तमध्येष्वनुसन्धेयतया स्तुतिः सिध्यति। तेन तदर्थमादाविवावसानेऽपि प्रह्वीभावस्तद्विषयश्लोकेनोप-दिश्यते। तथा च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं समधिगतमित्यर्थः। दुर्दर्शत्वमुक्तं व्यनक्ति—**अस्तीति**। सर्वेषामेव यथोक्ते परमार्थतत्त्वे प्रवेशानुपपत्तिमाशङ्क्य सम्प्रदायरहितानां तथात्वेऽपि तद्वतां मैवमित्याह—**अकृतेति**। कौटस्थ्यादिसिद्ध्यर्थं व्याख्यातमेव पदत्रयमनुवदति—**अजमिति**। उक्तं वेदान्तैकगम्यं तत्त्वं द्वैताभावोपलक्षित-
३० मित्याह—**ईदृगिति**। यथोक्तं ब्रह्म ज्ञात्वा ज्ञानसामर्थ्याद् ब्रह्मीभूतश्चेदाचार्यस्तर्हि कथं तस्मै नमस्कर्तुं प्रवर्तते। न हि परिपूर्णं वस्तु वस्तुतो व्यवहारगोचरतामाचरतीत्याशङ्क्याऽऽह—**अव्यवहार्यमिति**। परमार्थतो व्यवहारागोचरत्वेऽपि परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहारगोचरतां परिकल्प्य नमस्कारक्रिया तस्मिन् प्रयोजन-वशादाश्रितेत्यर्थः।।१००।।

इदानीं [illegible]ष्यकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादितपरदेवतातत्त्वमनुस्मृत्य तन्नमस्काररूपं मङ्गला-
३५ चरणमाचरति—**[illegible]जमपीति**। [illegible] ब्रह्माशेषोपनिषत्प्रसिद्धं सर्वथा परिच्छेदरहितं तदहं प्रत्यग्भूतं नमस्ये [नतोऽस्मि] तद्विषयं प्रह्वीभावस्[illegible] सम्बन्धः। प्रणामप्रयोजनमाह—**प्रणतेति**। ये हि प्रणता ब्रह्मणि प्रह्वीभूतास्तन्निष्ठा-स्तिष्ठन्ति तेषां [illegible]त्कार्यात्मकं भयं तदाचार्योपदेशजनितबुद्धिवृत्तिफलकारूढं ब्रह्मैव हन्ति। न खलु जडा

**प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं**
**भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे।**
**कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतो-**
**र्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि।।२।।**

अनुभूतिस्वरूपाचार्यटीका ५

विविधविषयधर्मग्राहिमुग्धेक्षणानां, न तत्त्वदृशां; विविधाश्च ते विषयधर्माश्च तद्ग्राहितया मुग्धं विपर्यस्तमीक्षणं येषां तेषामिति विग्रहः।।१।।

यत्प्रणीतागमो व्याख्यायि तं नमस्करोति ग्रन्थप्रणयनप्रयोजनकीर्तनपूर्वकम्—मत्पूज्यस्य मद्गुरोरतिशयेन पूज्यमत एव परमगुरुं नतोऽस्मि। कथम्? तदीयपादयोः स्वशिरःपातैः। यः कारुण्यादुद्दधारामृतमिदं ज्ञानाख्यं देवैरपि दुर्लभम्, भूतोपकाराय। किंदृष्ट्या कारुण्यमभूदित्याह—भूतान्यालोक्य मग्नानि समुद्रेऽब्धावपारे संसारेऽविरतं सन्ततं जननमेव ग्राहाः जलचराः तैः घोरे। कस्यान्तः स्थितममृतत्वं[तम्] कुतः सकाशादुदधृतवानित्याह—प्रज्ञैव वैशाखः मन्थाः तस्य वेधः क्षेपस्तेन क्षुभितश्चासौ जलनिधिर्वेदनामा तस्यान्तस्स्थं तत एवोद्धृतवान् स्वप्रज्ञानमन्थनक्षेपेण वेदोदधिमालोड्य सारमद्वैतज्ञानामृतमुद्धृतवान् क्षीराब्धेरिव नारायण इत्यर्थः।।२।। १०

आनन्दगिरिटीका

बुद्धिवृत्तिर्वस्तुसामर्थ्यमन्तरेणाज्ञानं सकार्यमपनेतुमलम्। बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरुक्तं फलमादधातीत्यर्थः। तस्यैव ब्रह्मणः सम्प्रति तटस्थलक्षणं विवक्षति—**अजमित्यादिना**। यद्यपि जन्मादिसर्वविक्रियाशून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथाऽपि तदैश्वर्येण तदीयशक्त्यात्मकेनानिर्वाच्याज्ञानवैभवेन योगादाकाशादिकार्यात्मना जन्मसम्बन्धं प्राप्य जगतो निदानमिति व्यपदेशभाग्भवति। तथा च श्रुतिसूत्रयोर्ब्रह्मणो जगत्कारणत्वं प्रसिद्धमित्यर्थः। यद्यपि चेदं ब्रह्म कूटस्थतया विभुतया च गतिवर्जितमवतिष्ठते तथाऽपि यथोक्ताज्ञानमाहात्म्यात् कार्यब्रह्मतां प्राप्य गतिमत्तां गन्तव्यतां बादर्यधिकरणन्यायेन प्रतिपद्यते, तदाह—**अगति चेति**। यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्त-नानात्वमेकरसमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथाऽपि जीवो जगदीश्वरश्चेत्येतद् यदनाद्यनिर्वाच्याविद्यावशादनेकमिव प्रतिभातीत्याह—**एकमिति**। केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते तदाह—**विविधेति**। विविधाश्च ते विषयधर्माश्च तद्ग्राहितया मुग्धं विपर्यस्तं विवेकविकलमीक्षणं येषां तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु तत्त्वतः, शास्त्रदृष्ट्या तु तस्मिन्नेकत्वमेव प्रामाणिकमित्यर्थः।।१।। १५ २०

सम्प्रति ग्रन्थप्रणयनप्रयोजनप्रदर्शनपूर्वकं परमगुरूनागमशास्त्रस्य व्याख्यातस्य प्रणेतृत्वेन व्यवस्थितान् प्रणमति—**प्रज्ञेति**। यो हि कारुण्यादिदं ज्ञानाख्यममृतं भूतहेतोस्तदुपकारार्थमुद्दधार तं परमगुरुं नतोऽस्मीति सम्बन्धः। अमुमिति तस्य पुरोदेशे सन्निहितत्वेनापरोक्षत्वं सूचितम्। परमगुरुत्वं पूज्यानामपि गुरूणामतिशयेन पूज्यत्वादा-चार्यस्य समधिगतमित्याह—**पूज्येति**। नमस्कारप्रक्रियां प्रकटयति—**पादपातैरिति**। पादौ तदीयौ पादौ, तयोः स्वकीयस्योत्तमाङ्गस्य पाता भूयो भूयो नम्रीभावास्तैरिति यावत्। आचार्यो ज्ञानाख्यममृतं कथंभूतमुद्धृतवानित्य-पेक्षायामुक्तम्—**अन्तरस्थमिति**। कस्यान्तरस्थमिति विवक्षायामाह—**वेदेति**। कथमित्यत्राऽऽह—**प्रज्ञेति**। मेधासहिता प्रज्ञैव वैशाखो मन्थास्तस्य वेधो वेधनं क्षेपणं तेन क्षुभितो विलोडितो जलनिधिर्वेदनामा तस्यान्तरेऽभ्यन्तरे स्थितमिदममृतमिति यावत्। उक्तस्य ज्ञानामृतस्य प्रसिद्धादमृतादवान्तरवैषम्यमादर्शयति—**अमरैरिति**। यद्धि भगवता नारायणेन क्षीरसागरान्तरवस्थितममृतं समुद्धृतं तदेव कथञ्चिदमरा लेभिरे। इदं तु [illegible]रनायासलभ्यं न भवति। ज्ञानसामग्रीसम्पन्नैरेव लभ्यत्वादित्यर्थः। यदि कारुण्यादिदममृतमाचार्येण वेदोदधेर्भूतोपकारार्थमुद्धृतं कथं तर्हि कारुण्यं तस्य प्रादुरभूदित्याशङ्क्याऽऽह—**भूतानीति**। योऽयं समुद्रवद् दु[illegible] सं[illegible]स्मन्नविरतमन-वरतं सन्ततमेव यानि जननानि विग्रहभेदग्रहणानि तान्येव ग्राहा जलचरास्तै[illegible] भ[illegible] मग्नानि भग्न-सङ्कल्पानि परवशानि भूतान्युपलभ्य कारुण्यमाचार्यस्य प्रादुरासीत्। ततश्चेदममृतमुद्[illegible]पि[illegible]भ्यो दत्त्वा तानि रक्षितवानित्यर्थः।।२।। २५ ३० ३५

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् स्वान्तमोहान्धकारो
मज्जोन्मज्जञ्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये[१]।।३।।

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शङ्करभगवतः कृतौ गौडपादीयागमशास्त्रविवरणेऽलातशान्त्याख्यं चतुर्थप्रकरणं समाप्तम्।।

अनुभूतिस्वरूपाचार्यटीका

यत्प्रसादात् स्वस्य ज्ञानमभूत् तं स्वगुरुं नमस्यति—येषां प्रज्ञैवालोकः तन्निर्गता भाः अस्मत्तत्त्वबुद्धिः। तया यत्प्रज्ञालोकभासा मम स्वान्तमोहान्धकारं प्रतिहतिमगमत् तत्पादौ नमस्ये इति सम्बन्धः। अन्तोऽवच्छेदो ब्रह्मणोऽतिरेको ममाभूत् यस्माच्चित्तन्त्रानाद्यनिर्वाच्याज्ञानात् तत्स्वान्तं मोहान्धकारं तत्कार्यञ्च मज्जनोन्मज्जनं विनाशम-गमदसकृदुपजन एवोदन्वान् समुद्रस्तस्मिन् पुनः पुनः बन्धनं जन्ममरणबन्धाधिरोहणं न केवलं मम नष्टं, यत्पादावाश्रितानामन्येषामपि श्रुतस्य शास्त्रीयज्ञानस्य शमस्य सकलसंशयोच्छेदस्य विनयस्य ब्रह्मण्येव नम्रीभावस्य प्रवेशस्य प्राप्तिरग्र्या सर्वश्रेष्ठाऽमोघा सफला भवति। तत एव तेषां पादौ जगतः पावनीयौ, संसारनिवर्तकौ सर्वभावैः वाङ्मनःकायप्रणिधानैः नमस्करोमीत्यर्थः।।३।।

सत्यं ब्रह्मास्म्यजं शुद्धं निर्भयं भेदवर्जितम्। नानवाप्तं मया किञ्चित् कर्तव्यं वा तदात्मना।।१।।

इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते गौडपादीयभाष्यटिप्पणे चतुर्थं प्रकरणम्।।

आनन्दगिरिटीका

अथाधुना स्वगुरुभक्तेर्विद्याप्राप्तावन्तरङ्गत्वमङ्गीकृत्य तदीयपादसरसीरुहयुगलं प्रणमति—**यत्प्रज्ञेति**। तेषाम-स्मद्गुरूणां पादौ सर्वभावैर्वाङ्मनोदेहानां प्रह्वीभावैर्नमस्ये नम्रीभवामीति सम्बन्धः। तौ च जगतः सर्वस्यापि पावनीयौ पवित्रतया पवित्रत्वमापाद्य निर्वृणाते। तौ च स्वसम्बन्धिनां सर्वेषां भवः संसारस्तत्प्रयुक्तं भयं स्वकारणेन सहापनुद्य पुरुषार्थपरिसमाप्तिं कुर्वाते। तानेव गुरून्विशिनष्टि—**यत्प्रज्ञेति**। मे मम स्वान्तमन्तःकरणं तस्मिन् मोहो व्याकुलताहेतुरविवेकस्तस्य कारणं यदनाद्यज्ञानं तद्येषां प्रज्ञैवाऽऽलोकस्तस्य भा दीप्तिस्तया प्रतिहतिं विनाशमगमद् गतवत् तत्पादाविति सम्बन्धः। न केवलमज्ञानमेवाऽऽचार्यप्रसादादपगच्छत्तुच्छीभवति, किं तु तत्कार्यमनर्थजातमपि कारणनिवृत्तौ स्थितिमलभमानमाभासीभवतीत्याह—**मज्जोन्मज्जमिति**। असकृदनेकशो देवतिर्यगादियोनिषु योऽयमुपजनो नानाविधदेहभेदसंग्रहोऽसावेवोदन्वानुदधिस्तस्मिन्नतित्रासने भयावहे कदाचिद् यथोक्तमज्ञानं कार्यरूपेण मज्जदनभिव्यक्तमवतिष्ठते तदेव चावस्थाविशेषे तद्रूपेणोन्मज्जदभिव्यक्तमनर्थकरं परिवर्तते। तदेवमतिक्रूरे संसारसागरे परिवर्तमानमज्ञानं सकार्यमाचार्यप्रसादादपनीतमासीदित्यर्थः। न केवलमेकस्य ममैव यथोक्तफलप्राप्ति-राचार्यप्रसादादाविरभूत् किं तु तच्चरणपरिचर्यापरायणानामन्येषामपि भूयसामित्याह—**यत्पादाविति**। येषां गुरूणां पादद्वयमाश्रितानामन्येषामपि शिष्याणां तदीयशुश्रूषाप्रणयिमनीषाजुषां श्रुतिर्मनननिदिध्यासनसहकृतं श्रवणज्ञानम्। शमः शान्तिरिन्द्रियोपरतिः। विनयोऽवनतिरनौद्धत्यम्। तेषां प्राप्तिरग्र्या श्रेष्ठा प्रतिष्ठिता सिध्यति। यस्मादमोघा सफला श्रवणादीनां प्राप्तिस्तस्मादग्र्यत्वं तस्यां सम्भाव्यते। तदेवमाचार्यप्रसादादात्मनोऽन्येषां च बहूनां पुरुषार्थपरिसमाप्तिसम्भवादाचार्यपरिचरणं पुरुषार्थकामैराचरणीयमित्यर्थः।।३।।

विष्णुं कृष्णं स्वमायाविरचितविविधद्वैतवर्गं निसर्गादुत्खातानर्थसार्थं निरवधिमधुरं सच्चिदेकस्वभावम्।
आज्ञायाऽऽत्मानमेकं विधिमुखविमुखं नेति नेतीति गीतं वन्दे वाचां धियां चापदमपि जगतामास्पदं कल्पितानाम्।।१।।
गौडपादीयभाष्यस[illegible] व्याख्या व्याख्यातृसंमता। संमिता निर्मिता सेयमर्पिता पुरुषोत्तमे।।२।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां [illegible]डपादीयभाष्यटीकायामलातशान्त्याख्यं चतुर्थप्रकरणम्।।

---

१. "न[illegible]वस्[illegible]ङः क्यच्" (पा० अ० ३-१-१९) इति सूत्रे ङित्त्वानुबन्धस्य प्रत्येकं योजनात् नमसो[illegible]दित्वात् "नमस्ये" इति साधुः।

ॐ

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकान्तर्गता

# तैत्तिरीयोपनिषत्[1]

सटीकवार्तिकयुक्तसटीकशाङ्करभाष्योपेता

## अथ शीक्षाध्याये प्रथमोऽनुवाकः

**ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्॥**

**ॐ शान्तिः शान्तिः शान्तिः॥ १॥**

सत्यं वदिष्यामि पञ्च च ५

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः॥ १॥

### श्रीमदानन्दगिर्याचार्यकृता भाष्यटीका

यत्प्रकाशसुखाभिन्नं यन्मन्त्रेण प्रकाशितम्। १०
विवृतं ब्राह्मणे तत्स्यामद्वयं ब्रह्म निर्भयम्॥ १॥

यजुर्वेदशाखाभेदतैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादि-

### श्रीमदच्युतकृष्णानन्दतीर्थकृता भाष्यटीका वनमाला

विघ्नेश्वरं विघ्नशान्त्यै वाणीं वाचः प्रवृत्तये।
गुरून्गूढार्थभानाय प्रणमामि निरन्तरम्॥ १॥ १५
जगन्मङ्गलरूपाय सृष्टिस्थित्यन्तकारिणे।
नमो लक्ष्मीसमेताय कृष्णाय परमात्मने॥ २॥
परिपूर्णं नित्यशुद्धं निर्विशेषं स्वयंप्रभम्।
सत्यानन्दस्वरूपं यत्तदहं ब्रह्म निर्भयम्॥ ३॥
आचार्यस्य प्रसादेन पूर्वपुण्यैकजन्मना। २०
तैत्तिरीयकभाष्यस्य व्याख्यां कुर्वेऽतिभक्तितः॥ ४॥

तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थ-

---

केदारेशं च विश्वेशं ढुण्ढिं च गणनायकम्।
भाष्यकारं गुरूंश्चान्यान् प्रणमामि मुहुर्मुहुः॥

१. तैत्तिरीयोपनिषत् संहिता वारुणी याज्ञिकी चेति त्रिविधा। तत्र प्रथमपाठके संहितोपासनाविधानात् २५
तस्य संहितेति व्यवहारः, द्वितीयतृतीययोः या ब्रह्मविद्या विधीयते [illegible] वरुणेन [illegible]तित्वात् तयोः वारुणीति प्रसिद्धिः। चतुर्थस्तु यज्ञोपयुक्तमन्त्रप्रचुरत्वात् याज्ञिकी[illegible]सिद्धः। [illegible]नां त्रयाणां प्रपाठकानां भाष्यं श्रीमद्भिराचार्यैः प्रणीतम्। [illegible]पि



**यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः।**
**व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥**
**तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः।**
**विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥ ३ ॥**

५ **नित्यान्यधिगतानि कर्माण्युपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिनां पूर्वस्मिन्ग्रन्थे। इदानीं कर्मोपादान-**

आनन्दगिरिटीका

कारणत्वेन [1]तटस्थलक्षणेन मन्दमतीन्प्रति सामान्येनोपलक्षितं, सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्कारच्छलेन संक्षेपतो दर्शयति—**यस्माज्जातमिति**। निमित्तोपादानत्वयोः पञ्चम्याः साधारण्यादुभय-विधमपि हेतुत्वमिहाविवक्षितम्। कार्यविलयस्य प्रकृतावेव नियतत्वाद्विशेषतः प्रकृतित्वमाह—**यस्मिन्निति**।
१० कार्यधारणस्य निमित्ते धर्मादावपि प्रसिद्धत्वात्साधारणकारणत्वमाह—**येनेति**। ज्ञानात्मन इति स्वरूपलक्षण-सूचनम् ॥ १ ॥

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति—**यैरिति**। पदानि च वाक्यानि च प्रमाणं चानुमानादि तद्विवेचनेन व्याख्याता इत्यर्थः ॥ २ ॥

चिकीर्षितं निर्दिशति—**तैत्तिरीयकेति**। व्युत्पन्नस्य पदेभ्य एव पदार्थस्मृतिसम्भवात्पदस्मारितपदार्थानां
१५ संसर्गस्यैव वाक्यार्थत्वात्सूत्रकारेणोपनिषत्तात्पर्यस्य निरूपितत्वाच्च व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याह—**विस्पष्टार्थेति**। मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासम्भवादुपनिषद्गतनिःशेषपदार्थानां विशिष्य निःसंशयं ज्ञानं ये रोचयन्ते तेषामुपकारायेत्यर्थः ॥ ३ ॥

कर्मविचारेणैवोपनिषदो गतार्थत्वादुपनिषत्प्रयोजनस्य निःश्रेयसस्य कर्मभ्य एव सम्भवात्पृथग्व्याख्यारम्भो न युक्त इत्याशङ्कामपनेतुं कर्मकाण्डार्थमाह—**नित्यानीति**। "अथातो धर्मजिज्ञासा" इति जैमिनिना धर्मग्रहणेन

२० वनमाला

लक्षणेन सामान्येनोपलक्षितं सत्यज्ञानादिना स्वरूपलक्षणेन विशेषतो निश्चितं नमस्करोति—**यस्माज्जातमिति**। ज्ञानात्मन इति स्वरूपलक्षणं सूचितम् ॥ १ ॥

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति—**यैरिति**। इमे क्रमेण व्याख्येयत्वेन बुद्धिस्थाः। पदानि च वाक्यानि च प्रमाणानि च पदवाक्यप्रमाणानि। "सोऽकामयत" इत्यादौ ब्रह्मसत्त्वसाधकतया
२५ विवक्षितान्यनुमानानि प्रमाणानि। तेषां पदवाक्यप्रमाणानां विवेचनपूर्वकं व्याख्याता इत्यर्थः। यद्वा पदं व्याकरणं तत्साधुत्वविचाररूपत्वात्, वाक्यं मीमांसा वेदवाक्यविचाररूपत्वात्, प्रमाणं न्यायशास्त्रं प्राधान्येन प्रत्यक्षादिप्रमाण-विचारात्मकत्वात्; ततश्च पदवाक्यप्रमाणैः साधनभूतैर्व्याख्याता इत्यर्थः ॥ २ ॥

चिकीर्षितं निर्दिशति—**तैत्तिरीयकेति**। ननु व्युत्पन्नस्य पदेभ्य एव पदार्थस्मृतिसम्भवात्पदस्मारित-पदार्थानां यथायोग्यं सम्बन्धस्यैव वाक्यार्थस्यावगन्तुं शक्यत्वात्सूत्रकारेण वेदान्ततात्पर्यस्य निरूपितत्वाच्च व्यर्थः
३० पृथग्व्याख्यारम्भ इत्याशङ्क्याह—**विस्पष्टार्थेति**। मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासम्भवादुपनिषद्गत-निःशेषपदार्थानां निःसंशयज्ञानं येभ्यो रोचते तेषामुपकारायेत्यर्थः ॥ ३ ॥

उपनिषदः कर्मकाण्डेन नियतपौर्वापर्यसूचितं सम्बन्धं विशिष्य ख्यापयितुं कर्मकाण्डार्थं कीर्तयति—**नित्यानीति**। पूर्वस्मिन्ग्रन्थे नित्यानि कर्माणि सञ्चितदुरितक्षयार्थत्वेनाधिगतानि; तैश्च नित्यैरिह जन्मनि जन्मान्तरेषु वाऽनुष्ठितैः क्षीणपापस्य शुद्धान्तःकरणस्य कर्मानुष्ठानप्रयोजकाविद्याकामपरिहारद्वारा मुक्तिसिद्धये इदानीमुपनिषदि
३५ ब्रह्मविद्या प्रस्तूयते निरू[illegible]यत इत्यर्थः। तथा च कर्मणां ब्रह्मविद्यां प्रति चित्तशुद्धिद्वारा साधनत्वात्तत्प्रतिपादकयोरपि

---

[1] तट[illegible]स्थलक्षण[illegible]म्—[illegible]ल्लक्ष्यकालमनवस्थितं व्यावर्तकं च ( वेदा० परि० ) यद्वा स्वरूपभिन्नत्वे सति [illegible] [illegible]र्तकत्[illegible], त[illegible]क्षणस्य लक्षणम्। स्वरूपमेव लक्षणं स्वरूपलक्षणमिति भेदः। तैत्तिरीयकसारः [illegible]ावस्[illegible] प्रन्[illegible]ोपनिषत्।

**हेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते। कर्महेतुः कामः स्यात्। प्रवर्तकत्वात्। आप्तकामानां हि कामाभावे स्वात्मन्यव-स्थानात्प्रवृत्त्यनुपपत्तिः। आत्मकामत्वे चाऽऽप्तकामता। आत्मा हि ब्रह्म। तद्विदो हि परप्राप्तिं वक्ष्यति। अतोऽविद्या-निवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः। "अभयं प्रतिष्ठां विन्दते" "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यादिश्रुतेः।**

आनन्दगिरिटीका

सिद्धवस्तुविचारस्य पर्युदस्तत्वान्नोपनिषदो गतार्थत्वमित्यर्थः। तानि च कर्माणि सञ्चितदुरितक्षयार्थानि "धर्मेण पापमपनुदति" इति श्रुतेर्न निःश्रेयसार्थानि। न केवलं जीवतोऽवश्यकर्तव्यान्यधिगतानि, फलार्थिनां काम्यानि च। न तान्यपि निःश्रेयसार्थानि। "स्वर्गकामः" "पशुकामः" इत्यादिवन्मोक्षकामोऽदः कुर्यादित्यश्रवणात्। अतः संसार एव कर्मणां फलमित्यर्थः। कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थमाह—**इदानीमिति**। कर्मणामुपादानेऽनुष्ठाने यो हेतुस्तन्निवृत्त्यर्थं ब्रह्मविद्याऽस्मिन्ग्रन्थ आरभ्यते। अतः सनिदानकर्मोन्मूलनार्थत्वादुपनिषदः कर्मकाण्डविरुद्धत्वान्न गतार्थत्वमित्यर्थः। कर्मानुष्ठाने हेतुर्नियोगस्तस्य प्रमाणसिद्धत्वान्न विद्यया विरोध इत्याशङ्क्याऽऽह—**कर्महेतुरिति**। अस्येदं साधनमित्येतावच्छास्त्रेण बोध्यते। यस्य यत्राभिलाषः स तत्र प्रवर्तते कामत एव। अतो न नियोगस्य प्रवर्तकत्वसम्भावनाऽपीत्यभिप्रायः। सति कामे प्रवृत्तिरित्यन्वय उक्तः। कामाभावे न प्रवृत्तिरिति व्यतिरेकमाह—**आप्तेति**। अभिलषितविषयप्राप्तिः कामनिवृत्तौ हेतुः। न विद्या। अतः कथं कर्महेतुपरिहाराय विद्यारम्भ इत्याशङ्क्याऽऽह—**आत्मकामत्वे चेति**। कामितविषयप्राप्त्या कामस्य तात्कालिकोपशममात्रं न तूच्छेदः। पुन-र्विषयाकाङ्क्षादिदर्शनात्। आप्तकामताऽपि निरङ्कुशाऽऽत्मैव वस्तु नान्यत्ततोऽस्तीत्येवंरूपात्मकामत्वे सति भवति कामयितव्याभावादेव। आत्मानं ह्यद्वयानन्दरूपमजानन्नेव व्यतिरिक्तं विषयं पश्यन्कामयते। ततः कामस्याऽऽत्मा-विद्यामूलत्वादात्मविद्यैव तन्निवृत्तिहेतुरित्यर्थः। भवत्वात्मविद्या कामविरोधिनी कर्महेतुपरिहाराय ब्रह्मविद्या प्रस्तूयत इति कथमुक्तं तत्राऽऽह—**आत्मेति**। [1]आनन्दमयं परमात्मानमादायः श्रुतिरुदाहृता।

वनमाला

कर्मकाण्डोपनिषदोः साध्यसाधनभावः सम्बन्ध इत्यर्थः। ननु कर्मकाण्डस्य चेत्पापक्षयद्वारा विद्यायां विनियोगः, तर्हि पशुस्वर्गादिसाधनभूतानां काम्यकर्मणां तत्रोक्तिरसङ्गता तेषां विद्यासाधनत्वायोगादित्याशङ्क्याऽऽह—**काम्यानि चेति**। अयं भावः—काम्यानां फलार्थत्वेऽपि फलाभिसन्धिं विना कृतानां तेषां विद्यासाधनत्वमप्यस्त्येव, विविदिषा-वाक्येन नित्यकाम्यसाधारण्येन कर्मणां विद्यायां विनियुक्तत्वात् "अनाश्रितः कर्मफलम्" इत्यादिस्मृतिष्वपि तथोक्त-त्वाच्च; कर्मकाण्डे फलार्थिनां काम्यकर्मविधानमपि विद्योपयोग्येवेति। कर्मोपादानहेतुपरिहारायेत्यत्र निर्दिष्टः कर्मप्रवृत्तिहेतुः क इति जिज्ञासायामाह—**कर्महेतुरिति**। अत्र यद्यप्यविद्यापि कर्मोपादानहेतुः, तथा च वक्ष्यति—"तस्मादविद्यादिकर्मोपादानहेतुनिवृत्तौ" इति, तथाप्यविद्यायाः कामद्वारा कर्महेतुत्वात्कामो हेतुरित्युक्तम्। कामस्यैव प्राधान्येन कर्महेतुत्वं भगवता व्यासेनाप्युक्तम्—"यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" इति। कामस्य कर्म-हेतुत्वेऽन्वयव्यतिरेकौ प्रमाणयति—**प्रवर्तकत्वादिति**। कामे सति प्राणिनां प्रवृत्तिदर्शनादित्यर्थः। **आप्तकामानां हीति**। अनुपपत्तिपदमभावपरम्। ततश्च आप्तकामानां प्राप्तस्वरूपानन्दानां स्वात्मनि स्वरूपानन्देऽवस्थानाद्धेतोः कामाभावे प्रवृत्त्यभावदर्शनादित्यर्थः। तेषां प्रवृत्त्यभावः प्रसिद्ध इति हिशब्दार्थः। नन्वाप्तकामत्वे को हेतुः? तत्राह—**आत्मकामत्वे चेति**। आत्मैव काम आनन्दो यस्य साक्षात्कृतः स आत्मकामः, तस्य भाव आत्मकामत्वम्, तस्मिन्सत्याप्तकामता भवतीत्यर्थः। ननु ब्रह्मविद्यैवाप्तकामताहेतुः नात्मानन्दसाक्षात्कारवत्त्वम्; तत्राह—**आत्मा च ब्रह्मेति**। "अयमात्मा ब्रह्म" इति श्रुतेरिति भावः। ब्रह्मविद आत्मानन्दप्राप्तौ मानमाह—**तद्विदो हीति**। हि यस्मात्परस्य स्वरूपानन्दस्य प्राप्तिं ब्रह्मविदः "ब्रह्मविदाप्नोति परम्" इति श्रुतिर्वक्ष्यति, तस्माद्ब्रह्मविदाप्तकाम इत्यर्थः। नन्वात्मानन्दस्य नित्यप्राप्तत्वाद्विद्यया तत्प्राप्तिश्रुतिरनुपपन्ना; नेत्याह—**अत इति**। आत्मस्वरूपत्वेऽप्य-विद्यावृतत्वाद्विद्यया तदावरणनिवृत्तौ स्वात्मानन्दे यदभेदेनावस्थानं तदत्र परप्राप्तिर्वि[illegible]क्षिता; अतो न विद्या-वैयर्थ्यशङ्केति भावः। ब्रह्मविदः परप्राप्तावेवान्यदपि वाक्यद्वयं पठति—**अभयमिति**। ब्रह्म[illegible]यभयं यथा भवति तथा

[1]. आनन्दमयं परमात्मानमिति—आनन्दमयो जीव इति भगवत्पादैः [illegible]न्दम[illegible]ाधिक[illegible]णे इह च श्रुति युक्तिभिः समर्थितं यद्यपि, तथापि आनन्दमयप्राप्तेः तदभिमानत्[illegible]पत्[illegible]त [illegible] पञ्चकोशा-तिरिक्तब्रह्मप्रकाशनात् आनन्दमयो ब्रह्मेति व्यवहृतम्। यद्वा वृत्तिका[illegible]योऽ[illegible]ापि [illegible]।

## ऐकभविकमतं, तन्निरासश्च।

ननु काम्यप्रतिषिद्धयोरनारम्भादारब्धस्य चोपभोगेन क्षयान्नित्यानुष्ठानेन प्रत्यवायाभावादयत्नत एव स्वात्मन्यवस्थानं मोक्षः। अथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्कर्मभ्य एव मोक्ष इति चेन्न। कर्मानेकत्वात्। अनेकानि ह्यारब्धफलान्यनारब्धफलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि सम्भवन्ति।

५ आनन्दगिरिटीका

एवं तावत्कर्मकाण्डेनागतार्थत्वात्कर्मभ्योऽसम्भाव्यमाननिःश्रेयसप्रयोजनत्वाच्चोपनिषदो व्याख्यारम्भं सम्भाव्य पुनरनारम्भवादिनोऽभिप्रायमुद्भावयति—**काम्यप्रतिषिद्धयोरिति**। आत्यन्तिकागामिशरीरानुत्पादे स्वरूपावस्थानं निःश्रेयसं, शरीरानुत्पादश्च हेत्वभावादेव सेत्स्यति किं ज्ञानार्थोपनिषदारम्भेणेत्यर्थः। मतान्तरमाह—**अथवेति**। यदेव स्वर्गसाधनं ज्योतिष्टोमादि तदेव मोक्षसाधनं, निरतिशयप्रीतेः स्वर्गपदार्थस्य मोक्षादन्यत्र
१० असम्भवात्सति शरीरे क्लेशावश्यंभावादित्यर्थः। ऐकभविकपक्षे आद्यं मतं प्रत्याख्याति—**नेत्यादिना**। यद्यपि वर्तमाने देहे काम्यं प्रतिषिद्धं च नाऽऽरभेत मुमुक्षुस्तथाऽपि सञ्चितस्यानेकस्य सम्भवाद्धेत्वभावोऽसिद्ध इत्यर्थः। प्रायणेनाभिव्यक्तानि सर्वाण्येव कर्माणि सम्भूयैकं शरीरमारभन्ते, तत्र सर्वेषामुपभोगेन क्षयितत्वात्सञ्चितं कर्मैव नास्तीतिशङ्कानिराकरणायोक्तम्—**विरुद्धफलानीति**। स्वर्गनरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन्देहे भोगेन क्षयासम्भवात् प्रायणस्य सर्वाभिव्यञ्जकत्वे प्रमाणाभावाद्बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं सम्भवतीत्यर्थः। सम्भावना-

१५ वनमाला

प्रतिष्ठां स्वात्मभावेनावस्थानं यदा विन्दते तदैवाभयं गतो भवतीत्यर्थः। आनन्दमयं परमात्मानमुपसंक्रामति प्राप्नोतीत्यर्थः। इदं च वृत्तिकारमताभिप्रायेणोदाहृतम्, स्वमते आनन्दमयस्य जीवत्वादिति बोध्यम्।

ननु जीवस्य शरीरेऽवस्थानं बन्धहेतुः, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः; आत्यन्तिकेन शरीरसम्बन्धाभावेन युक्ते स्वस्वरूपेऽवस्थानं मोक्षः, "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"
२० इति श्रुतेः; स चात्यन्तिकः शरीरसम्बन्धाभावो ब्रह्मात्मैकत्वविद्यां विना कर्मभिरेव सिध्यति, किं विद्ययेति [1]मीमांसकः शङ्कते—**काम्येति**। काम्यं कर्म देवादिशरीरहेतुः, प्रतिषिद्धं कर्म तिर्यगादिशरीरहेतुः, नित्यनैमित्तिकाननुष्ठानं प्रत्यवायोत्पादनद्वारा नारक्यादिजन्महेतुः। तथा च मुमुक्षुणा सर्वात्मना काम्यप्रतिषिद्धयोरनारम्भात् सम्यङ्नित्यनैमित्तिकानुष्ठानेन प्रत्यवायानुत्पादाच्च न भाविजन्मप्राप्तिः, आरब्धफलयोश्च पुण्यपापयोरुपभोगेनैव नाशान्न ततोऽपि भाविजन्मप्राप्तिशङ्का; तथा च विद्यासम्पादनयत्नं विना मुमुक्षोरेवं वर्तमानस्यात्यन्तिकशरीर-
२५ सम्बन्धाभावशब्दितः स्वात्मन्येवावस्थानलक्षणो मोक्षः सिध्यतीत्यर्थः। अत्र च शरीरसम्बन्धस्य कर्मनिमित्तकत्वात् "निमित्तापाये नैमित्तिकापायः" इति न्यायेन शरीरसम्बन्धाभावरूपमोक्षस्य कर्मसाध्यत्वोक्तिरिति [2]मन्तव्यम्। मीमांसक एव प्रकारान्तरमाह—**अथवेति**। यानि कर्माणि स्वर्गसाधनत्वेन श्रुतानि तान्येव मोक्षसाधनम्, स्वर्गशब्दवाच्यस्य निरतिशयसुखस्य स्वरूपानन्दलक्षणान्मोक्षादन्यत्वासम्भवात् "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥" इत्यर्थवादेन निरतिशयप्रीतेः स्वर्गशब्दवाच्यत्वावगमात्।
३० त्रिविष्टपादिजनितसुखे दुःखासंभिन्नत्वादिविशेषणानामसम्भवात्। तथा च निरतिशयप्रीतिरूपस्य मोक्षस्य कर्महेतुकत्वावगमात्कर्मभ्य एव मोक्षः सिध्यति, किं विद्यासम्पादनयत्नेनेत्यर्थः। तत्राद्यं मतं निराकरोति—**न कर्मानेकत्वादिति**। कर्मणामनेकत्वसम्भवान्न विद्यां विना मोक्षसिद्धिरित्यर्थः। संग्रहं विवृणोति—**अनेकानि हीति**। कर्मानेकत्वप्रसिद्धिद्योतनार्थो हि शब्दः। तेषु कर्मसु यान्यनारब्धफलानि तेषामुपभोगेन क्षयासम्भवात्तानि शेषकर्माणि तन्निमित्तशरीरारम्भ एवं वृत्तस्याप्युपपद्यत इत्यर्थः। नन्वनेकजन्मान्तरकृतानां सर्वेषामेव कर्मणां संभूय वर्तमान-
३५ जन्मारम्भकत्वसम्भवादनारब्धफलानि कर्माणि न सन्त्येव; नेत्याह—**विरुद्धफलानीति**। स्वर्गनरकादिरूपविरुद्धफलवतां ज्योतिष्टोमब्रह्महत्यादीनां संभूयैकजन्मारम्भकत्वासम्भवेनैकस्मिञ्जन्मन्युपभोगेन तेषां क्षयासम्भवात्सन्त्येव

---

१. अयं [illegible]कदेशी अ[illegible] भाट्टः प्राभाकरो वा।

२. [illegible]स्वात्मन्य[illegible]नं मोक्ष इत्युक्तं तच्च कर्माभावात् शरीराभावेन सिद्ध्यति स च नित्यानुष्ठानादिवस्[illegible] प्रव[illegible]

अतस्तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगक्षयासम्भवाच्छेषकर्मनिमित्तशरीरारम्भोपपत्तिः। कर्मशेषसद्भावसिद्धिश्च "तद्य इह रमणीयचरणाः" "ततः शेषेण" इत्यादिश्रुतिस्मृतिशतेभ्यः। इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानीति चेन्न। अकरणे प्रत्यवायश्रवणात्। प्रत्यवायशब्दो ह्यनिष्टविषयः। नित्याकरणनिमित्तस्य [1]प्रत्यवायस्य दुःखरूपस्याऽऽगामिनः परिहारार्थानि नित्यानीत्यभ्युपगमान्नानारब्धफलकर्मक्षयार्थानि। यदि नामानारब्धफलकर्म-क्षयार्थानि नित्यानि कर्माणि तथाऽप्यशुद्धमेव क्षपयेयुर्न शुद्धम्[2]। विरोधाभावात्। न हीष्टफलस्य कर्मणः शुद्धि-रूपत्वान्नित्यैर्विरोध उपपद्यते। शुद्धाशुद्धयोर्हि विरोधो युक्तः। न च कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्य-सम्भवादशेषकर्मक्षयोपपत्तिः। अनात्मविदो हि कामोऽनात्मफलविषयत्वात्। स्वात्मनि च कामानुपपत्तिर्नित्य-प्राप्तत्वात्स्वयं चाऽऽत्मा परं ब्रह्मेत्युक्तम्। नित्यानां चाकरणमभावस्ततः [3]प्रत्यवायानुपपत्तिरिति। अतः पूर्वोपचित-

आनन्दगिरिटीका

मात्रमेतन्नात्र प्रमाणमस्तीत्याशङ्क्याऽऽह—कर्मशेषेति। प्रेत्य स्वकर्मफलमनुभूय ततः शेषेण जन्म प्रतिपद्यन्त इति स्वर्गादवरोहतां कर्मशेषसद्भावं दर्शयतीत्यर्थः। सञ्चितकर्मसद्भावमङ्गीकृत्य देहान्तरारम्भो न भविष्यतीत्याह—इष्टेति। एतद्भाट्टानां सिद्धान्तविरुद्धमित्याह—नेति। मुमुक्षुणाऽनुष्ठितस्य नित्यादेः सञ्चितकर्मक्षयार्थत्वाभ्युपगमेऽपि नाभिमतसिद्धिरित्याह—यदि नामेति। यच्चोक्तं मुमुक्षुः काम्यानि वर्जयेदिति तदप्यसति विवेकबले दुर्घटम्। सति मूलाज्ञाने कामोद्भवस्य दुर्निवारत्वादित्याह—न च कर्महेतूनामिति। ननु कामो नाज्ञानमूलः। आत्मविदामपि काम-दर्शनादित्यत आह—स्वात्मनि चेति। सर्वं आत्मेति पश्यतां तत्त्वतो विषयाभावादेव कामानुपपत्तिः। अशनादिप्रवृत्ति-निमित्तं तु कामाभास एव। वास्तवाभिनिवेशाभावादित्यर्थः। तेषामप्यर्चिरादिमार्गेण ब्रह्मप्राप्तेः कामनाऽस्तीति नाऽऽशङ्कनीयमित्याह—स्वयं चेति। यच्चोक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानीति तत्राऽऽह—नित्यानां चेति।

वनमाला

शेषकर्माणीत्यर्थः। सञ्चितकर्मसद्भावे मानमाह—कर्मशेषसद्भावसिद्धिश्चेति। तत्तत्र स्वर्गादवरोहतां मध्ये ये इहास्मिँल्लोके रमणीयचरणाः पुण्यकर्माणः ते रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्त इति श्रुत्यर्थः। "प्रेत्य स्वकर्म-फलमनुभूय ततः शेषेण जन्म प्रतिपद्यन्त" इति स्मृतिरपि स्वर्गादवरोहतां शेषकर्मसद्भावं दर्शयतीत्यर्थः। ननु सञ्चितकर्मणां सत्त्वेऽपि तेषां नित्यानुष्ठानेन क्षयान्न तैर्भाविजन्मप्राप्तिरिति शङ्कते—इष्टानिष्टेति। नित्यानां सञ्चित-कर्मक्षयफलकत्वं मीमांसकस्य स्वाभ्युपगमविरुद्धमिति दूषयति—नेति असुखरूपस्येति[4]। दुःखसाधनस्येति यावत्। आगामिन इति। नित्याकरणानन्तरमेव प्रसक्तस्येत्यर्थः। नित्यानां तदभ्युपगमेऽपि परस्य नाभिमतसिद्धिरित्याह—यदि नामेति। नित्यान्यनारब्धफलकर्मक्षयार्थानि सन्तु नामेत्यर्थः। "धर्मेण पापमपनुदति" इति शास्त्राच्छुद्धय-शुद्धिरूपयोः सुकृतदुष्कृतयोरेव विरोधाच्च नित्यानि पापमेव नाशयेयुः, न सञ्चितपुण्यमपि; अतस्तत्पुण्यनिमित्तं भाविजन्म मुमुक्षोरवश्यंभावीत्यर्थः। विरोधाभावमेव साधयति—न हीत्यादिना। यदुक्तं काम्यप्रतिषिद्धयोर-नारम्भादिति, तत्र जन्मारभ्य प्रायणपर्यन्तं सर्वात्मना प्रतिषिद्धवर्जनं पुरुषेण कर्तुमशक्यम्, अतिनिपुणानामपि सूक्ष्मापराधदर्शनात् काम्यवर्जनमपि सर्वात्मना कर्तुमशक्यमित्याह—न चेति। आत्मज्ञानं हि कामानामशेषतो निवर्तकम्, "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति स्मरणात्; ज्ञानाभावे च सति कामावश्यंभावात् काम्यानुष्ठानमपि कदाचिन्मुमुक्षोः प्रसज्यते, तद्वशाच्च जन्मापि स्यादित्यर्थः। अशेषकर्मक्षयोपपत्तिर्न चेत्यन्वयः। ननु आत्मज्ञानं न कामानां निवर्तकम्, आत्मविदोऽपि कामदर्शनादिति नेत्याह—अनात्मविदो हीति। फलविषयत्वादिति। आत्म-व्यतिरिक्तं किञ्चिदपि वस्तुतो नास्तीति मन्यमानस्यात्मविदः स्वव्यतिरिक्तफलाभावादिति भावः। तर्हि स्वात्मन्येवानन्दरूपे तस्य कामोऽस्तु; नेत्याह—स्वात्मनि चेति। नन्वात्मविदः प्राप्तस्वरूपानन्दस्यापि परब्रह्मप्राप्तौ कामोऽस्ति; नेत्याह—स्वस्येति। विदुष इत्यर्थः। नित्यानुष्ठानेन च प्रत्यवायाभावादिति वदता त्वया यदि

१. प्रत्यवायशब्दस्य पापवाचित्वे तत्फलस्येत्यर्थः। तस्य नरकार्थकत्वे यथा[illegible]भाष्यमेव [illegible]।

२. न शुद्धं=पुण्यकर्म।

३. प्रत्यवायानुपपत्तिः—प्रत्यवायो नरकः तदनुपपत्तिः "नासतो विद्यते भाव" [illegible]पि[illegible]त्।

४. भाष्ये पाठभेदोऽयम्। एवं स्वस्येति।

**दुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति "अकुर्वन्विहितं कर्म" इति हि शतुर्नानुपपत्तिः । अन्यथा अभावाद्भावोत्पत्तिरिति सर्वप्रमाणव्याकोप इति । अतोऽयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम् ।**

आनन्दगिरिटीका

आगामि दुःखं प्रत्यवाय् उच्यते । तस्य भावरूपस्य नाभावो निमित्तम् । "पापः पापेन" इति श्रुतेः निषिद्धाचरण-
५ निमित्तत्वाद्दुःखस्येत्यर्थः ।

[1]"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । [2]प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥"

इति शतृप्रत्ययादकरणस्यापि प्रत्यवायनिमित्तत्वमवगतमित्याशङ्क्याऽऽह—**अतः पूर्वेति** । यदि यथावन्नित्य-नैमित्तिकानुष्ठानमभविष्यत्तदा सञ्चितदुरितक्षयोऽभविष्यत् । न चायं विहितमकार्षीदित्यतः प्रत्यवायो भविष्यतीति शिष्टैर्लक्ष्यते । यथा विचिकित्सन्श्रोत्रिय इति । ततः शतृप्रत्ययस्यान्यथा व्युत्पन्नत्वान्न तद्बलादकरणे हेतुत्वमवगन्तुं
१० शक्यत इत्यर्थः । ननु—लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यते तत्राऽऽह—**अन्यथेति** । भावरूपस्य कार्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवगतं, शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वप्रमाणविरोधः स्यादित्यर्थः । ननु त्वयाऽप्यकरणस्य प्रत्यवायलक्षणत्वमिष्टम् । भाट्टैश्चानुपलम्भस्य अभावप्रमितिहेतुत्वमिष्यते । तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्यव्यवस्थापकत्वमिष्यते । तत्कथं भावस्यैव [3]कारणत्वम् । तदुक्तम्—"भावो यथा तथाऽभावः कारणं कार्यवन्मतः" इति । उच्यते ।
१५ अस्माभिस्तावदभावस्य स्वरूपेण कारणत्वं नेष्टम् । किन्तु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम् । तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते । नित्याकरणाज्ञाने प्रत्यवायाभावप्रसङ्गात् । भाट्टानामपि च केषाञ्चिज्ज्ञातस्य योग्यानुप-लम्भस्याभावप्रतिमिहेतुत्वं, [4]सत्तया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः । तार्किकाणामपि प्रतिबन्धका-भावस्य कारणत्वे [5]अन्योन्याश्रयत्वप्रसङ्गान्न प्रामाणिकत्वम् । प्रागभावस्यापि ज्ञातरूपेण जन्यज्ञापकत्वमेव । यस्मादिदं

वनमाला

२० प्रत्यवायस्य नित्याकरणजन्यत्वं विवक्षितम्, तदा तदपि न सम्भवतीत्याह—**नित्यानां चेति** । **प्रत्यवायानुपपत्तिरिति** । प्रत्यवायोत्पत्तिर्न सम्भवतीत्यर्थः । ननु "अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥" इति वचनगतशतृप्रत्ययादकरणस्य प्रत्यवायहेतुत्वमवगम्यते; अकरणात्प्रत्यवायोत्पत्त्यनुपगमे च शतृप्रत्ययानुपपत्तिरिति; नेत्याह—**इत्यत इति** । वक्ष्यमाणरीत्या अकरणस्य प्रत्यवायाहेतुत्वादित्यर्थः । "लक्षणहेत्वोः क्रियायाः" इति सूत्रेण हेताविव लक्षणेऽपि शतुर्विधानादत्र लक्षणार्थ एव स इत्यर्थः । नन्वकरणेन प्रत्यवायक्रिया
२५ कथं लक्ष्यते ? उच्यते—यदि यथावन्नित्यानुष्ठानमभविष्यत्तदा सञ्चितदुरितक्षयोऽभविष्यत्, न चायं नित्यमकार्षीत्; ततः प्रत्यवायी भविष्यतीत्येवं नित्याकरणेन पूर्वजन्मसु सञ्चितेभ्यो दुरितेभ्यः प्राप्यमाणा दुःखरूपा प्रत्यवायक्रिया शिष्टैर्लक्ष्यत इति । ननु लक्षणे हेतौ च साधारणाच्छतृप्रत्ययादकरणस्य प्रतीतं हेतुत्वमेव कस्मान्नोपेयते ? तत्राह—**अन्यथेति** । अकरणस्य हेतुत्वे स्वीकृते सत्यभावाद्भाव उत्पद्यत इति प्रसज्येत अकरणस्याभावरूपताया उक्तत्वा-दित्यर्थः । तत्रेष्टापत्तिं वारयति—**सर्वेति** । अभावस्य भावधर्माश्रयत्वायोग्यत्वं प्रत्यक्षादिप्रमाणसिद्धम्, अभावस्य
३० कारणत्वरूपभावधर्माश्रयत्वस्वीकारे तु प्रत्यक्षादिप्रमाणविरोधः स्यादित्यर्थः । न चैवमकरणस्य कथं ज्ञापकत्वं कथं

---

१. "अकुर्वन्विहितं कर्म"त्यत्र लक्षणार्थे शतृप्रत्ययः लक्षणं ज्ञापनं नित्याकरणं भाव्यनिष्टं सूचयति, तत्कारणं तु नित्यकर्मकाले अनुष्ठितं कर्मान्तरमिति "स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः । प्रत्यवायेऽपि तेन स्यात्" इति प्राचीनैरुक्तम् ।

२. प्रसज्जन्—विशेषासक्तिं कुर्वन् ।

३५ ३. [illegible]प्रतिबद्धा सामग्री कारणं न तु प्रतिबन्धकाभावस्य कारणत्वम् । प्रतिबन्धकस्य तु कार्याकूलशक्ति-[illegible]घटकत्वमेव [illegible]नं

४. स[illegible] प्रत्य[illegible]क्षत्वापात इति । ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणात् ।

५. [illegible]सङ्गात्—कस्यचित् प्रतिबन्धकत्वे ज्ञाते तेन कार्यानुत्पत्तिर्ज्ञायते, कार्यानुत्पत्तौ ज्ञातायां तस्[illegible]धकत्वं ज्ञायते इत्यन्योन्याश्रयत्वं प्रतिबन्धकत्वज्ञाने ।

यच्चोक्तं निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मारभ्य एव मोक्ष इति। तन्न। नित्यत्वान्मोक्षस्य। न हि नित्यं किञ्चिदारभ्यते लोके। यदारब्धं तदनित्यमित्यतो न कर्मारब्धो मोक्षः। विद्यासहितानां कर्मणां नित्यारम्भसामर्थ्यमिति चेत्। न। विरोधात्। नित्यं चाऽऽरभ्यत इति विरुद्धम्। यद्विनष्टं तदेव नोत्पद्यत इति प्रध्वंसाभाववन्नित्योऽपि मोक्ष आरभ्य एवेति चेन्न। मोक्षस्य भावरूपत्वात्। प्रध्वंसाभावोऽप्यारभ्यत इत्यभावस्य विशेषा-

आनन्दगिरिटीका ५

प्राङ्नाऽसीत्तस्मादिदानीं जातमिति। न तु जनकत्वं प्रागभावस्य नियतप्राग्भावित्वेन कारणत्वे प्राक्कालस्य [1]स्ववृत्तितापातः। प्राग्भावित्वमपि चान्यथासिद्धमित्युक्तं—[2]तत्त्वालोके। यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म किन्तु "कर्मणा पितृलोकः" "सर्वे एते पुण्यलोका भवन्ति" इति श्रुतेः पितृलोकप्राप्तिफलम्, तस्मान्न यथोक्तचरितस्य शरीरानुत्पाद इत्याह—अयत्नत इति। द्वितीयमतमनूद्य दूषयति—यच्चोक्तमित्यादिना। विद्यासहितेनापि कर्मणाऽऽरभ्यश्चेन्मोक्षस्तर्ह्यनित्य एव। यत्कृतकं तदनित्यमिति व्याप्तिदर्शनादित्युक्तं तत्र व्याप्तिभङ्गं मन्वानः १० शङ्कते—यद्विनष्टमिति। भावरूपत्वादिति। यद्भावरूपं कार्यं तदनित्यमिति व्याप्तेस्त्वच मोक्षस्य निरतिशयप्रीतेर्भावत्वादनित्यत्वं स्यादेवेत्यर्थः। प्रध्वंसाभावस्य कार्यत्वमभ्युपगम्य यत्प्रध्वंसातिरिक्तकार्यं तदनित्यमिति व्याप्तिर्व्याख्यातैव। वस्तुतस्तु प्रध्वंसस्य कार्यत्वमपि नास्तीत्याह—प्रध्वंसेति। जन्याश्रयत्वं तावत्प्रध्वंसस्य न कार्यत्वम्। जनेर्नैरुक्तैर्भावविकारत्वाभ्युपगमात्। नापि प्रागसतः सत्तासमवायादिलक्षणम्। तदनभ्युपगमात्।

वनमाला १५

वाऽनुपलब्धेरभावज्ञापकत्वमिति वाच्यम्, अकरणानुपलब्ध्योर्ज्ञातयोरेव ज्ञापकत्वाभ्युपगमेन स्वरूपतस्तयोर्ज्ञानहेतुत्वाभावादित्यन्यत्र विस्तरः। मीमांसकस्याद्यप्रकारनिराकरणमुपसंहरति—इत्यत इति। उक्तप्रकारेण ब्रह्मज्ञानं विना यथावर्णितचरितस्यापि मुमुक्षोर्मोक्षासम्भवादित्यर्थः। अथ वेत्याद्युक्तमप्यनूद्य निराकरोति—यच्चोक्तमित्यादिना। किं केवलकर्मणां मोक्षारम्भकत्वं ? विद्यासहितानां वा ? नाद्य इत्याह—तन्नेति। ननु नित्यत्वेऽपि कर्मसाध्यत्वं तस्य किं न स्यादिति; नेत्याह—न हीति। लोके यन्नित्यमात्मादि तत्किञ्चिदपि नारभ्यते, यद्धि घटाद्यारब्धं २० तदनित्यमिति व्याप्तिदर्शनादित्यर्थः। द्वितीयकल्पमनूद्य निराकरोति—विद्यासहितानामिति। विद्यारूपसहकारिमहिम्ना कर्मारभ्यस्यापि मोक्षस्य नित्यत्वं भविष्यतीति शङ्काभिमानः। विरुद्धमिति। विद्यारूपसहकारिमहिम्ना तावत्कर्मसाध्ये मोक्षे कश्चिदतिशयो भविष्यति, "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति श्रुतेः। स चातिशयो न नित्यत्वरूपः, "यत्कृतकं तदनित्यम्" इति व्याप्तिविरोधात् "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतिविरोधाच्च; किं तु तदतिरिक्त उत्कर्षरूप एव वक्तव्य इति २५ भावः। किं च निरतिशयप्रीतेरात्मस्वरूपत्वेनारभ्यत्वायोगाच्च न विद्यासहितानां केवलानां वा कर्मणां मोक्षः फलम्। न च स्वर्गकामश्रुतिविरोधः, तत्र निरतिशयप्रीतिवाचकस्य स्वर्गशब्दस्य कर्मयोग्यतानुसारेण विषयजनितसुखविशेषे लाक्षणिकत्वोपपत्तेः। एतच्च बृहदारण्यकषष्ठाध्यायवार्तिके प्रपञ्चितम्, तत्रैव द्रष्टव्यम्। शङ्कते—यद्विनष्टमिति। यद्घटादि विनष्टं तत्पुनर्नोत्पद्यत इति दर्शनात् घटादिविनाशरूपस्य प्रध्वंसाभावस्य नित्यत्वं निश्चीयते, तस्यानित्यत्वे तु विनष्टस्य घटादेः पुनरुत्पत्तिप्रसङ्गः स्यात्; ध्वंसप्रागभावानधिकरणकालस्य प्रतियोगि- ३० कालत्वनियमादित्यर्थः। ततः किम् ? तत्राह—प्रध्वंसाभाववदिति। प्रध्वंसाभावस्य कार्यत्वमुपेत्य यद्भावकार्यं तदनित्यमिति व्याप्तिर्विवक्षिता; निरतिशयप्रीतिरूपा च मुक्तिर्भावरूपैव तवापि सम्मता, अतो न मुक्तेर्नित्यत्वं सिध्यतीति दूषयति—नेति। परमार्थतस्तु प्रध्वंसस्य कार्यत्वं नास्तीत्याह—प्रध्वंसाभावोऽपीति। प्रध्वंसा-

---

१. स्ववृत्तितापातः-प्राक्कालवृत्तित्वविशिष्टत्वेन प्रागभावस्य कारणत्वं नाम तस्य नियतप्राक्कालवृत्तित्वं ततश्च विशिष्टस्य नियतप्राक्कालवृत्तित्वे विशेषणेऽपि प्राक्कालवृत्तित्वे प्राक्कालवृत्तित्वमागतमिति ३५ स्ववृत्तिता।

२. तत्त्वालोक इति—तत्र ह्येवमुक्तम्, न च ज्ञानात् स्वप्रागभावनिवृत्ति[illegible]ति [illegible] प्र[illegible] ज्ञानभावायोगात् अलब्धात्मकस्य घातकत्वानुपपत्तेः। निवृत्तेर्भावत्वेऽनवस्था। [illegible]योऽ[illegible]ापि [illegible]वत्वप्रसङ्गः। सहभावित्वे च ज्ञानान्न स्यात् तन्निवृत्तिः। ज्ञानमज्ञानस्यैव निवर्तकमिति [illegible]।

**भावाद्विकल्पमात्रमेतत् । भावप्रतियोगी ह्यभावः । यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते भिन्न इव घटभावः पटभाव इत्येवं निर्विशेषोऽपि भावाभावः क्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते । न ह्यभाव उत्पलादिवद्विशेषण-सहभावी । विशेषणवत्त्वे भाव एव स्यात् । विद्याकर्मकर्तुर्नित्यत्वाद्विद्याकर्मसन्तानजनितमोक्षनित्यत्वमिति चेत्**

आनन्दगिरिटीका

५ नाप्युत्तरकालयोगः । कालेन सम्बन्धाभावात् । अवच्छेद्यावच्छेदकभावस्य सम्बन्धान्तरमूलकत्वदर्शनात्, तदुत्तर-कालस्य प्रध्वंसावच्छेदकत्वं स्वभावश्चेदन्यावच्छेदकत्वं स्वभावो न स्यात् । तस्मादभावस्य निर्विशेषकत्वात्कार्यत्वं कल्पनामात्रपरमिति भावः । किञ्च, अभावस्य भावनिषेधमात्रस्वभावत्वाद्भावविरोधित्वाच्च न भावरूपो धर्मः सम्भवतीत्याह—**भावेति** । ननु—अभावश्चतुर्विधः । तत्रानित्यः प्रागभावः । प्रध्वंसादयस्तु नित्याः । ततः कथं निर्विशेषत्वमित्याशङ्क्याऽऽह—**यथा हीति** । विधिप्रत्ययस्यैकाकारत्वादेक एव भावोऽवच्छेदकभेदाद्भिन्न इव १० प्रकाशते जायते नश्यति च तथा निषेधप्रत्ययस्यैकाकारत्वादेक एवाभावोऽवच्छेदकभेदाद्भिन्न इव प्रकाशते जायते नश्यति चेति क्रियायोगात्संख्यागुणयोगाद्द्रव्यवदभावो विकल्प्यते । न तु तत्त्वतः सविशेष इत्यर्थः । इतश्च न तत्त्वतः सविशेष इत्याह—**न हीति** । विशेषणं हि विशेष्यान्वयि प्रसिद्धम् । प्रतियोगिना च विशेषणेन नाभावस्य सह-भावोऽस्ति । घटप्रध्वंसस्य नित्यत्वे घटस्यापि नित्यत्वप्रसङ्गात् । घटसहभावित्वे च तदभावत्वव्याघाताद्भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात् । ततः प्रतियोगिविशेषादभावः सविशेषः कार्यत्वादिधर्मवानिति विभ्रममात्र-१५ मित्यर्थः । एवं प्रध्वंसदृष्टान्तेन शङ्कितं नित्यत्वं परिहृत्य प्रकारान्तरेणाऽऽशङ्कां निषेधति—**विद्याकर्मेत्यादिना** । विद्याकर्मणोः कर्ता नित्य इति साधनसान्तत्यात्साध्यसान्तत्यं न वाच्यम् । कर्तृत्वस्यानुपरमेऽनिर्मोक्षप्रसङ्गादुपरमे च साधनसान्तत्याभावान्मोक्षस्य विच्छित्तिः स्यादित्यर्थः । यस्मान्निःश्रेयसं ब्रह्मज्ञानं विना दुष्प्रापं तस्मादित्युप-

वनमाला

भावोऽप्यारभ्यत इति न सम्भवति, नैरुक्तैर्जनेर्भावपदार्थधर्मत्वप्रतिपादनविरोधेनाभावस्य भावरूपजन्माश्रयत्वा-२० योगेन च प्रध्वंसाभावे जन्मरूपविशेषाभावाभ्युपगमादित्यर्थः । कथं तर्हि वादिनां प्रध्वंसाभावे जन्याश्रयत्वज्ञानमि-त्याशङ्क्य भ्रान्तिमात्रमेतदित्याह—**विकल्पमात्रमेतदिति** । ननु प्रध्वंसाभावस्य प्रतियोगिजन्यत्वाभावे तत्प्रति-योगिकत्वं न स्यादित्याशङ्क्य प्रागभावात्यन्ताभावयोरिव तस्य तत्प्रतियोगिकत्वं सम्भवतीत्याशयेनाह—**भाव-प्रतियोगी ह्यभाव इति** । अभावस्य भावप्रतियोगिकत्वं घटाभावः पटाभाव इति व्यवहारसिद्धमिति हिशब्दार्थः । नन्वभावे भावप्रतियोगिकत्वविशेषाभ्युपगमे तत्र जनिरूपविशेषोऽपि परमार्थोऽस्त्विति न शङ्कनीयम्, भाव-२५ प्रतियोगिकत्वस्यापि तत्र परमार्थत्वासिद्धेरित्येतत्सदृष्टान्तमाह—**यथा हीति** । भावः सत्त्वम्, तच्च सर्वानुगतं सद्रूपं वस्तुतो निर्विशेषं ब्रह्मैव नान्यत्; तद्यथा एकमपि घटसत्त्वं पटसत्त्वमिति रीत्या भिन्नमिव घटादिभि-र्विशेष्यते घटादिप्रतियोगिकत्वेन कल्प्यते, तथा घटो नास्ति पटो नास्तीति प्रतीयमानाभावोऽप्येक एव, समवायसत्ताजात्यादिवत् लाघवात्; स चाभावः सर्वविशेषरहितोऽपि भावेषु घटादिषु मुद्गराभिघातादिजनित-क्रियायोगाद्घटादिप्रतियोगिकत्वेन जातत्वेन च वादिभिर्भ्रान्त्या परिकल्प्यते, द्वावभावावित्यादिव्यवहारात् ३० संख्यागुणयोगमभावस्य मत्वा द्रव्यत्वेनाभावः केनचित्परिकल्प्यते । एतदुक्तं भवति—यथा ह्यभावस्य द्रव्यान्त-र्भावमाशङ्कमानस्याभावे गुणाश्रयत्वद्रव्यत्वभ्रान्तिः, तथा वादिनामपि तत्र वस्तुतो भावप्रतियोगिकत्वजन्मा-श्रयत्वादिरस्तीति भ्रान्तिरिति । अभावस्य वस्तुतो जन्मादिरूपभावधर्माश्रयत्वे बाधकमाह—**न ह्यभाव इत्यादिना** । भावधर्माश्रयस्य भावत्वनियमप्रसिद्धिद्योतनार्थो हिशब्दः । **विशेषणसहभावीति** । विशेषणाश्रय इत्यर्थः । नन्वेकस्याभावस्य जन्मादिकल्पनास्पदस्य ब्रह्मतुल्ययोगक्षेमस्याङ्गीकारे द्वैतापत्तिरिति चेत्, नायं दोषः; ३५ भावाद्वैताभिप्रायेणास्य भाष्य[illegible] प्रवृत्त्युपपत्तेः । वस्तुतस्तु अयमभावो न ब्रह्मातिरिक्तः, ब्रह्मणि कल्पित-घटादिप्रतियो[illegible]ल्पित[illegible]योगिकाभावस्याधिष्ठानानतिरेकादिति मन्तव्यम् । साध्यस्य मोक्षस्य स्वरूपेण नित्यत्वायोगे[illegible] सम्भवतीति शङ्कते—**विद्याकर्मकर्तुरिति** । कर्तुरात्मनो नित्यत्वादात्मा सन्ततं विद्याकर्मणी कुर्व[illegible]था च विद्याकर्मलक्षणसाधनसन्ताननजनितो मोक्षोऽपि सन्ततोऽवतिष्ठते । प्रवाह-

गङ्गास्रोतोवत् । न । कर्तृत्वस्य दुःखरूपत्वात् । कर्तृत्वोपरमे च मोक्षविच्छेदात् । तस्मादविद्यादिकर्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थानं मोक्ष इति । स्वयं चाऽऽत्मा ब्रह्म । तद्विज्ञानादविद्यानिवृत्तिर्मोक्ष इति ब्रह्मविद्यार्थोपनिषदारभ्यते । उपनिषदिति विद्योच्यते । तच्छीलिनां गर्भजन्मजराविनिशातनात्तदवसादनाद्वा ब्रह्मणो वोपनिगमयितृत्वादुपनिषण्णं वाऽस्यां परं श्रेय इति । तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ।

शं सुखं प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु । तथैवापानवृत्ते रात्रेश्चाभिमानी देवतात्मा वरुणः । चक्षुष्यादित्ये चाभिमान्यर्यमा । बल इन्द्रः । वाचि बद्धौ च बृहस्पतिः । विष्णुरुरुक्रमो विस्तीर्णक्रमः पादयोरभिमानी । एवमध्यात्मदेवताः । शं नो भवत्विति सर्वत्रानुषङ्गः । तासु हि सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकर्तृत्वं प्रार्थ्यते—शं नो भवत्विति । ५

आनन्दगिरिटीका

संहारः । ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याह—उपनिषदिति । निशातनात्-शिथिलीकरणादित्यर्थः । अस्यां विद्यायां निमित्तभूतायां परं श्रेयो ब्रह्म जीवस्योपनिषण्णमात्मतयोपस्थितं भवतीत्यर्थः । १०

एवमुपनिषदां व्याख्यारम्भं सम्भाव्य प्रतिपदव्याख्यामारभते—शं सुखमित्यादिना । शं नो भवत्विति । सुखकृद्भवत्वित्यर्थः । अध्यात्मप्राणकरणाभिमानिनीनां देवतानां सुखकृत्त्वं किमिति प्राथ्यर्ते तत्राऽऽह—तासु हीति ।

वनमाला १५

नित्यत्वे दृष्टान्तमाह—गङ्गेति । नेति । मुक्तिकालेऽपि साधनानुष्ठातृत्वरूपस्य कर्तृत्वस्यानुवृत्त्युपगमे मुक्त्युच्छेदः, तस्य दुःखात्मकत्वात्; एतद्दोषपरिहाराय तदा तदुपरमोपगमे च मोक्षस्यापि विच्छेदादनित्यत्वं तदवस्थमेवेत्यर्थः । तस्मादिति । मोक्षस्य साध्यत्वे नित्यत्वभङ्गप्रसङ्गादित्यर्थः । काम आदिपदार्थः । कर्मोपादानहेतोरविद्यादेर्निवृत्तौ सत्यामित्यर्थः । ननु ब्रह्मात्मनाऽवस्थानं मोक्षः "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः, न स्वात्मन्यवस्थानमिति शङ्कां निराकरोति—स्वयं चेति । नन्वविद्यादिनिवृत्तिरेव कर्मसाध्याऽस्तु, तथा च कर्मभिरेव मोक्ष इति नेत्याह—तद्विज्ञानादिति । कर्मणामविद्यानिवर्तने सामर्थ्याभावादिति भावः । इतिशब्दो विचारसमाप्त्यर्थः । एवं कर्मणां मुक्तिहेतुत्वं निरस्य आदौ ब्रह्मविद्या प्रस्तूयत इति यदुक्तं तदेवोपसंहरति—अतो ब्रह्मविद्यार्थेति । ब्रह्मविद्याया एव मुक्तिसाधनत्वादित्यर्थः । ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयसाधनत्वे प्रमाणमित्याशयेनोपनिषच्छब्दार्थमाह—उपनिषदितीति । अत्र सामीप्यवाचिना उपोपसर्गेण प्रतीचो ब्रह्मसामीप्यमुच्यते । तच्च सामीप्यं तयोरभेदरूपं विवक्षितम् । निशब्दो निश्चयार्थः । तथा च उपसर्गद्वयेन तयोरभेदनिश्चयरूपा विद्योच्यते । विशरणावसादनगतयो धात्वर्थाः । क्विप्प्रत्ययश्चात्र कर्तरि विवक्षितः । ततश्च प्रत्यग्ब्रह्मैक्यगोचरा विद्या विदुषामनर्थं शातयति अवसादयति वा तान्ब्रह्म गमयतीति वा उपनिषत्पदेन सफला ब्रह्मविद्योच्यत इत्यर्थः । एतदेव विवृणोति—तच्छीलिनामिति । ब्रह्मविद्याभ्यासशीलवतामित्यर्थः । शातनं शिथिलीकरणम्, तेषां गर्भादीनामवसादनं नाशनम् । उपनिगमयितृत्वात् प्रत्यक्तया प्रापयितृत्वादित्यर्थः । एवमुपनिषत्पदस्य "षद्लृ विशरणगत्यवसादनेषु" इति वैयाकरणप्रसिद्धिमनुसृत्यार्थत्रयं दर्शितम् । इदानीं स्वयमर्थान्तरमाह—उपनिषण्णं वेति । उपसामीप्येन विषयतया अस्यां विद्यायां ब्रह्मस्वरूपं परं श्रेयो नितरामबाधिततया स्थितिमित्यर्थः । उपनिषत्पदस्य ग्रन्थं प्रसिद्धिं घटयति—तदर्थत्वादिति । विद्याप्रयोजनकत्वाद्ग्रन्थोऽप्युपनिषत्पदेन निरूढलक्षणया ग्रहीतव्य इत्यर्थः । अत्र व्याख्येयस्य ग्रन्थस्य ब्रह्मविद्यार्थत्वोक्त्या तस्य मानान्तरानधिगतं ब्रह्म विषयः । तद्विद्याद्वारा मुक्तिः प्रयोजनम् । तत्कामो धिकारीति सूचितं भवति । २० २५ ३०

एवं विषयादिमत्त्वादुपनिषदो व्याख्यारम्भं समर्थ्य व्याख्यामारभते—शं सुखमित्यादिना । शमित्यस्य सुखकृदित्यर्थः । चक्षुषीति । चक्षुष्यादित्यमण्डले च वर्तमानस्तयोरभिमानीत्यर्थः । बल इति । बाह्वोर्बलेऽभिमानित्वेन वर्तमानो देव इन्द्र इत्यर्थः । वाचि बुद्धौ वागभिमानो गुरुरित्यर्थः । [illegible] त्रिविक्रमावतारे विस्तीर्णपादोपेत इत्यर्थः । शरीरस्थप्राणकरणाभिमानिनीनां देवतानां सुखकृ[illegible] ? अत्राह—तासु हीति । विद्यार्थं श्रवणम्, श्रुतस्याविस्मरणं धारणम्, शिष्येभ्यः प्रतिपादनं वि[illegible]पि [illegible]कमादिपदार्थः ३५

**ब्रह्म विविदिषुणा नमस्कारवदनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थं क्रियेते । [1]सर्वक्रियाफलानां तदधीनत्वाद्ब्रह्म वायुस्तस्मै ब्रह्मणे नमः प्रह्वीभावं, करोमीति वाक्यशेषः । [2]नमस्ते तुभ्यं हे वायो ! नमस्करोमीति परोक्षप्रत्यक्षाभ्यां वायुरेवाभिधीयते । किञ्च त्वमेव चक्षुराद्यपेक्ष्य बाह्यं सन्निकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्तस्मात्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थं तदपि त्वदधीन-**
५ **त्वात्त्वामेव वदिष्यामि । सत्यमिति स एव वाक्कायाभ्यां सम्पाद्यमानः सोऽपि त्वदधीन एव सम्पाद्य इति त्वामेव सत्यं वदिष्यामि । तत्सर्वात्मकं वाय्वाख्यं ब्रह्म मयैवं स्तुतं सन्मां विद्यार्थिनमवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तारमाचार्यं वक्तृत्वसामर्थ्यसंयोजनेनावतु । अवतु मामवतु वक्तारमिति पुनर्वचनमादरार्थम् । ओं शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमनार्थम् ।**

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
१० तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये प्रथमोऽनुवाकः

### आनन्दगिरिटीका

श्रवणं गुरुपादोपसर्पणपूर्वकं वेदान्तानां तात्पर्यावधारणम् । धारणं श्रुतस्याप्यविस्मरणम् । उपयोगः शिष्येभ्यो निवेदनम् । अन्यद्ब्रह्म वायुश्चान्य इति नाऽऽशङ्कनीयमित्याह–**परोक्षेति** । ब्रह्मणे इति परोक्षेण "स ब्रह्म त्यदित्याचक्षत" इति श्रुतेः । वायुशब्देन च प्रत्यक्षतया निर्देशः । प्राणस्य प्रत्यक्षत्वादित्यर्थः । यद्यपि सूत्रात्मरूपेण वायुः परोक्षः
१५ तथाऽप्याध्यात्मिकप्राणवायुरूपेण ब्रह्मशब्दवाच्यत्वेऽप्यपरोक्षत्वमित्याह—**किञ्चेति** । बाह्यं चक्षुरादि रूपदर्शनाद्यनुमेयत्वाद्व्यवहितम् । प्राणस्त्वव्यवधानेन साक्षिवेद्यः[3] सन्निहितश्च भोक्तुरिति चक्षुराद्यपेक्षया प्रत्यक्ष इत्यर्थः । बृंहणाद्ब्रह्म । प्राणकृतेन ह्यशनादिना शरीरादेर्बृंहणं प्रसिद्धमित्यर्थः । यथा राज्ञो दौवारिकं कश्चिद्राजदिदृक्षुराह–"त्वमेव राजे"ति तथा हार्दस्य ब्रह्मणो द्वारपं प्राणं हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुराह—**त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति** । ब्रह्मवदनक्रिया प्राणदेवतास्तुत्यर्था । स्तुत्यन्तरमाह—**ऋतमित्यादिना** ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
२० शीक्षावल्ल्यां प्रथमोऽनुवाकः

### वनमाला

नमो ब्रह्मण इत्यादेस्तात्पर्यमाह—**ब्रह्म विविदिषुणेति** । त्वं ब्रह्मेति वदनक्रिया ब्रह्मवदनक्रिया । **परोक्षेति** । नमो ब्रह्मण इत्यत्र वायोः सम्बोधनाभावात्परोक्षतया निर्देश इत्यर्थः । उत्तरवाक्ये वायुपदेन सम्बोधनात्प्रत्यक्षतया
२५ निर्देश इत्यर्थः । यद्वा ब्रह्मेति पारोक्ष्येण निर्देशः, वायोर्ब्रह्मशब्दितसूत्रात्मरूपेण परोक्षत्वात्, वायुशब्देन च प्रत्यक्षतया निर्देशः, प्राणवायुरूपेण नमस्कार्यस्य वायोः प्रत्यक्षत्वादित्यर्थः । किं चेत्यस्य त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीत्यनेन सम्बन्धः । वायोः प्रत्यक्षब्रह्मत्ववदने हेतुपरं त्वमेवेति वाक्यं व्याचष्टे—**त्वमेव चक्षुराद्यपेक्ष्येत्यादिना** । बाह्यमप्रत्यक्षं चक्षुराद्यपेक्ष्य त्वमेव प्रत्यक्षं ब्रह्मासीति सम्बन्धः । प्रत्यक्षत्वे हेतुरव्यवहितत्वम्; तदेव विवृणोति—**सन्निकृष्टमिति** । त्वगिन्द्रियसन्निकृष्टमित्यर्थः । **वदिष्यामीति** । वदामीत्यर्थः । ऋतसत्यशब्दयोः
३० अपुनरुक्तमर्थं वदन्नेव तौ व्याचष्टे—**ऋतमित्यादिना** । **स एवेति** । शास्त्रानुसारेण कर्तव्यतया निश्चितार्थं एवेत्यर्थः । **त्वदधीन एवेति** । कर्मसम्पादनस्य प्राणवाय्वधीनत्वदर्शनादिति भावः । **सर्वात्मकमिति** । समष्टिव्यष्ट्यात्मकमित्यर्थः । वायोः सूत्रात्मरूपेण समष्टिशब्दितं व्यापकत्वम्, अस्मदादिप्राणरूपेण व्यष्टिशब्दितं परिच्छिन्नत्वं चेत्युभयं परोक्षप्रत्यक्षनिर्देशाभ्यां प्रकृतमिति मत्वा तत्सर्वात्मकमिति सर्वनामप्रयोग इति मन्तव्यम् । **एवं स्तुतमिति** । उक्तप्रकारेण ब्रह्मवदनक्रियया स्तुतमित्यर्थः । इदमुपलक्षणम् । नमस्कृतं चेत्यपि द्रष्टव्यम्, तस्यापि पूर्वं कृतत्वात् ।
३५ **आध्यात्मिकेति** । ज्वरशिरोरोगादय आध्यात्मिकाः, चोरव्याघ्राद्युपद्रवा आधिभौतिकाः, यक्षराक्षसाद्युपद्रवा आधिदैविका इति विभागः ।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां प्रथमोऽनुवाकः

---

१. सर्व[illegible]याफ[illegible]ना[illegible]नं "तस्मिन्नपो मातरिश्वा दधाति" इति ईशश्रुतेः ।
२. [illegible]ायुर्हिरण्यगर्भः "वायुर्वै गौतम तत्सूत्रमि"ति श्रुतेः ।
४० ३. वा[illegible]प्रन[illegible]ान्येनान्तःकरणत्वात् साक्षिप्रत्यक्षवेद्यत्वम् ।

ॐ

श्रीमत्सुरेश्वराचार्यविरचितं

# तैत्तिरीयोपनिषद्भाष्यवार्तिकम्

श्रीमदानन्दगिरिटीकोपेतम्

## अथ वार्तिके शीक्षावल्ल्यां प्रथमोऽनुवाकः

सत्यं ज्ञानमनन्तमेकममलं ध्वस्तान्धकारं परं निर्द्वैतं हृदि पद्ममध्यनिलयं निःशेषधीसाक्षिणम् ।
वेदान्तोपनिविष्टबोधविषयं प्रत्यक्तया योगिनां भक्त्या तं प्रणिपत्य वेदशिरसो वक्ष्यामि सद्वार्तिकम् ॥१॥
यस्येदं सकलामलेन्दुकिरणप्रख्यैर्यशोरश्मिभिर्व्याप्तं यश्च कृपालुतापरवशश्चक्रे हितं दुःखिनाम् ।
यद्वाणीकुलिशावरुग्णमतयः पेतुर्दिशस्तार्किका भक्त्या पूज्यतमं प्रणम्य तमहं तद्भाष्यनीतौ यते ॥२॥

श्रीमदानन्दगिर्याचार्यविरचिततैत्तिरीयोपनिषद्भाष्यवार्तिकटीका ५

कृष्णाय सच्चिदानन्दतनवे परमात्मने ।
नमो विधीयते त्रेधा गुरवे च तदात्मने ॥ १ ॥
श्रद्धाभक्ती पुरस्कृत्य सम्प्रदायानुसारतः ।
व्याख्यास्येऽहं यथाशक्ति तैत्तिरीयकवार्तिकम् ॥ २ ॥

तैत्तिरीयकशाखोपनिषदस्तद्भाष्यस्य च वार्तिकमुक्तानुक्तदुरुक्तचिन्तात्मकं चिकीर्षुराचार्यश्चिकीर्षितस्य १० वार्तिकस्याविघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च शास्त्रीयवस्तुतत्त्वानुस्मरणपूर्वकं तन्नमस्कार-रूपं मङ्गलाचरणं मुखतः सम्पादयन्नर्थादपेक्षितमनुबन्धजातं च सूचयन्नुद्देश्यस्यैकदेशं[1] प्रतिजानीते—**सत्यमित्यादिना**। तं प्रकृतं परमात्मानं प्रत्यञ्चं भक्तिश्रद्धाभ्यां प्रकर्षेण त्रिधा नत्वा वेदशिरसस्तैत्तिरीयकोपनिषदः सदबाधितन्याय-सन्दृब्धं दुरुक्तादिचिन्तात्मकं वार्तिकं वक्ष्यामीति सम्बन्धः। उपनिषदः स्पष्टार्थतया वस्तुतो दुरुक्ताभावेऽपि दुरुक्तत्व-भ्रान्त्या तच्चिन्तासिद्धः। अनुक्तं तु गुणोपसंहारन्यायेन तत्र चिन्तयितुं शक्यते। उक्तचिन्ता तु सुकरैव। प्रणतिविषयत्वेन १५ प्रकृतस्य परमात्मनस्तत्पदार्थस्यानृतविरोधित्वेनावितथत्वं सन्मात्रत्वं सर्वकल्पनाधिष्ठानत्वमुपन्यस्यति—**सत्यमिति**। तस्यैव जाड्यविरोधित्वेन चिन्मात्रत्वं स्वयंप्रकाशत्वं दर्शयति—**ज्ञानमिति**। तस्यैव कालतो देशतश्चापरिच्छिन्नत्वेन सर्वगतत्वं नित्यत्वं च कथयति—**अनन्तमिति**। वस्तुतश्च परिच्छेदपरिहाराय सजातीयविजातीयभेदराहित्यमुदाहरति—**एकमिति**। एतस्यैव कार्यकारणसंस्पर्शशून्यत्वेन परमोत्कृष्टत्वमाचष्टे—**ध्वस्तेति**। समारोपितसकलविशेषविकलत्व-माह—**निर्द्वैतमिति**। तत्पदलक्ष्यमर्थमित्थमुपक्षिप्य त्वंपदार्थं निर्दिशति—**हृदीति**। हृदि पद्मं हृत्पद्मं प्रथमार्थे २० सप्तमीप्रयोगादलुक्समासाद्वा, तस्य मध्यमेव निलयो यस्य तं बुद्धिस्थमात्मानमित्यर्थः। समष्टिबुद्धिविशिष्टं त्वंपद-वाच्यमर्थमुक्त्वा तस्यैव लक्ष्यमर्थमाह—**निःशेषेति**। उक्तपदार्थद्वयविषयाणां पदानां मिथः सामानाधिकरण्येन सिद्धं पदार्थैक्यं वाक्यार्थभूतं शास्त्रीयं विषयं विवक्षन्नाह—**वेदान्तेति**। योगिनो ज्ञाननिष्ठाः संन्यासिनस्तेषां प्रत्यग्भावेन वेदान्तेषु तत्त्वमस्यादिवाक्येषु व्यवस्थितो यो बोधो ब्रह्माहमस्मीत्येवमात्मकस्तस्य विषयं परमात्मानं प्रत्यञ्चं प्रणिपत्य वार्तिकं वक्ष्यामीति योजना। अत्र चैक्ये विषये सूचिते विषयविषयिभावः सम्बन्धो ध्वनितः। ध्वस्तान्ध- २५ कारमित्यादिना सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिरूपे फले दर्शिते। तत्कामोऽधिकारी सिध्यतीति द्रष्टव्यम् ॥ १ ॥

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरावि"तिश्रुतेर्देवताभक्तिरिव गुरुभक्तिरपि विद्यायामन्तरङ्गसाधन-मित्यङ्गीकृत्य विशिष्टगुणसङ्कीर्तनपूर्वकं गुरुविषयं प्रणामं प्रकुर्वन् [2]अवशिष्टमुद्देश[illegible]मभिदधाति—**यस्येत्यादिना**।

---

१. मूलभाष्ययोर्वार्तिकप्रणयनात् एकदेशो वेदशिरसो वार्तिकम् ।

२. अवशिष्टं तैत्तिरीयकभाष्यवार्तिकप्रणयनम् । [illegible]योऽ[illegible]ापि ३०

**तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः। विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥ ३ ॥**

**दुरितक्षयहेतूनि नित्यानि ब्राह्मणे ययुः। काम्यानि चेह कर्माणि दृष्टादृष्टफलानि तु ॥ ४ ॥**

**विद्या प्रस्तूयतेऽथोर्ध्वं यथाभूतार्थबोधिनी। कर्मोपादानहेतूंस्तान्सैवोच्छेत्तुमलं यतः ॥ ५ ॥**

तं भगवन्तं भाष्यकारं विशिष्टगुणविशिष्टं पूज्यतममस्मदाराध्यतमं भक्त्या श्रद्धया च प्रकर्षेण नत्वा तेनैव गुरुणा ५ कृतस्य तैत्तिरीयकभाष्यस्य नीतिर्नयनं विभजनं तत्राहं यते यत्नं करोमि। दुरुक्त्यादिनिरूपणरूपं वार्तिकं सम्पादयामीति सम्बन्धः। उक्तानुक्तचिन्ता तावदिह सुघटैव दुरुक्तचिन्ताऽप्यापाततो घटते। तत्राऽऽचार्यस्य निरतिशयकीर्तिमत्त्वं गुणमनुकीर्तयति—**यस्येति**। अशेषमपि खल्विदं विश्वं यस्य भगवतो भाष्यकारस्य यशोरूपै रश्मिभिर्व्याप्तमुपलभ्यते तानेव यशोरश्मीनशेषलोकानन्दयितृत्वेन विशिनष्टि—**सकलेति**। सकलस्य सम्पूर्णस्यामलस्य मेघनीहारादिमलसंस्पर्शविकलस्येन्दोश्चन्द्रमसो ये किरणा रश्मयस्तत्प्रख्यैस्तत्तुल्यैरिति यावत्। तस्यैव भाष्यकृतो १० दुःखितानां संसारिणां दुःखमुपलभ्य कृपालुतया परवशस्याऽऽत्मतत्त्वज्ञानादन्यत्र तदुद्धरणमपश्यतस्तेषां हितं दुःखनिवृत्तिसाधनं प्रति प्रणेतृत्वं भाष्याद्यध्यात्मग्रन्थप्रणयनद्वारेण प्रसिद्धमित्याह—**यश्चेति**। सम्यग्दर्शनमार्गप्रतिरोधकत्वेन प्रवृत्तानां वैशेषिकवैनाशिकादीनां तार्किकाणां भाष्यकारवचनसामर्थ्यादेव निवृत्तिरिति गुणान्तरमाह—**यद्वाणीति**। यस्य वाणी यद्वाणी सैव कुलिशं वज्रं तेनावरुणा भग्ना मतिर्येषां ते तार्किका दिशः पेतुर्नष्टा इत्यर्थः। तमेवंविधं भाष्यकारं भक्त्या प्रणम्य तदीयभाष्यनीतौ यतेऽहमिति योजना ॥ २ ॥

१५ एवं [1]परापरगुरुनमस्कारव्याजेन तैत्तिरीयोपनिषदस्तद्भाष्यस्य च वार्तिकं करोमीति श्लोकाभ्यामुक्तं तदेव च स्वकीयग्रन्थस्य सम्प्रदायपूर्वकत्वं दर्शयन्प्रकटयति—**तैत्तिरीयकेति**। तैत्तिरीयकशाखोपनिषदस्तद्भाष्यस्य च भाष्यकारप्रसादादेवेयं व्याख्या वार्तिकाख्या संशयविपर्यासव्यतिरेकेणाबाधितन्यायवती क्रियते। ननूपनिषदर्थस्य भाष्येण भाष्यार्थस्य च तदक्षरैरेव प्रतिपत्तुं शक्यत्वात्किमनया व्याख्ययेत्याशङ्क्य विशेषेण ये स्पष्टमर्थं रोचयन्ते तेषामियं व्याख्योपयुक्तेत्याह—**विस्पष्टेति**। हिशब्देनास्या व्याख्याया न्यायसंदृब्धत्वेनोपनिषत्तद्भाष्यार्थप्रकटीकरण- २० सामर्थ्यं द्योत्यते ॥ ३ ॥

ननु विधिकाण्डेनैवोपनिषदो गतार्थत्वात्तत्प्रयोजनस्य कर्मवशादेव सम्भवादवशिष्टार्थाभावादुपनिषदस्तद्भाष्यस्य च पृथग्व्याख्यारम्भो वृथेत्याशङ्क्य "नित्यानी"त्यादिभाष्यमाश्रित्य कर्मकाण्डार्थमनुवदति—**दुरितेति**। सञ्चितस्य दुरितस्य क्षयः साध्यत्वेन हेतुरनुष्ठापको येषां नित्यनैमित्तिककर्मणां तानि ब्राह्मणशब्दिते विधायके काण्डे पूर्वस्मिन्ग्रन्थे सिद्धानि। न हि तानि निःश्रेयसप्रयोजनानि, "धर्मेण पापमपनुदती"ति श्रुतेरुपार्जितदुरितनिबर्हणार्थत्वावगमात्। २५ तथा च "अथातो धर्मजिज्ञासे"ति सूत्रकृता धर्मग्रहणेन सिद्धवस्तुविचारस्य पर्युदस्तत्वान्नोपनिषदो विधिकाण्डेन गतार्थतेत्यर्थः। न केवलं जीवतोऽवश्यं कर्तव्यानि पूर्वकाण्डेऽपि गतार्थानि, किन्तु कामनानिबन्धनान्यपि चित्राकारीर्यादीनि[2] दृष्टफलानि, अदृष्टफलानि च दर्शपूर्णमासज्योतिष्टोमादीनि तत्रैव सिद्धानि। न च तान्यपि मोक्षार्थानि स्वर्गकामः पशुकाम इतिवन्मोक्षकामः सन्निदं कर्म कुर्यादित्यश्रवणादतः संसारफलमेव कर्मेत्यभिप्रेत्याऽऽह—**काम्यानि चेति** ॥ ४ ॥

३० कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थं वदन्पूर्वोत्तरकाण्डयोः सङ्गति"मिदानीमि"त्यादिभाष्येण दर्शयति—**विद्येति**। ऐहिकैर्जन्मान्तरीयैर्वा पुण्यकर्मभिरन्तःकरणशुद्ध्यनन्तरं तत्परिपाकतो विवेकवैराग्यसिद्धेरूर्ध्वं मुमुक्षुत्वे सत्यपेक्षितमोक्षसिद्ध्यर्थमुपनिषच्छब्दिता विद्या प्रारभ्यते। सा च यथाभूतस्य ब्रह्मात्मैकत्वस्य प्रकटीभावहेतुरतो हेतुहेतुमल्लक्षणः सम्बन्धो द्वयोरपि काण्डयोरित्यर्थः। ननु कर्मणां पुरुषार्थहेतुत्वप्रसिद्धेर्मुमुक्षुं प्रत्यपि विशिष्टं कर्मैवोच्यतां किमिति विद्या प्रस्तूयते तत्राऽऽह—**कर्मेति**। अन्वयव्यतिरेकाभ्यां कर्मानुष्ठाने कामादयो हेतवस्तानुच्छेत्तुं ३५ विद्यैव शक्नोति। तत्कारण[illegible]निराकरणहेतुत्वादतो विद्यैव मुमुक्षुं प्रत्यारब्धुं योग्येत्यर्थः ॥ ५ ॥

---

१. स्व[illegible]प्रन[illegible]ः=स्वगुरुः।

२. चि[illegible]कामः वृष्टिकामः कारीर्या यजेत।

स यथाकाम इत्येवं योऽकामश्चेति सादरम् । कामाकामैकहेतू नो बन्धमोक्षौ श्रुतिर्जगौ ॥ ६ ॥
अपविद्धद्वये[1] तत्त्वे सर्वदैवात्मरूपके । विपर्ययोऽनभिज्ञानात्ततः कामः क्रियास्ततः ॥ ७ ॥
यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् । तस्मात्सर्वप्रवृत्तीनामलं विद्योपशान्तये ॥ ८ ॥

ऐकभविकमतं, तन्निरासश्च ।

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ ९ ॥
इति मीमांसकंमन्यैः कर्मोक्तं मोक्षसाधनम् । प्रत्याख्यायाऽऽत्मविज्ञानं तत्र न्यायेन निर्णयः ॥१०॥ ५
नैतदेवं भवेन्न्याय्यं विरुद्धफलदायिनाम् । सम्भवात्कर्मणां पुंसो भूयसां शास्त्रदर्शनात् ॥११॥
अनारब्धफलानीह सन्ति कर्माणि कोटिशः । तद्य इहेति वचसो गम्यतां कर्मणां स्थितिः ॥१२॥
न चैकदेहे भोगोऽस्ति ब्रह्महत्याश्वमेधयोः । विरुद्धफलहेतुत्वान्मूढसात्त्विकदेहयोः ॥१३॥

कामादीनां बन्धकारणकर्मप्रवृत्तिहेतुत्वं विवक्षित्वा कामादिनिवृत्त्या मोक्षो भवतीत्यर्थादुक्तम् । तत्र कामादिना बन्धे तन्निवृत्त्या मोक्षे च प्रमाणमाह—**स यथेति** ॥ ६ ॥ १०

कामादेरपि कार्यत्वेन कारणापेक्षायां तत्कारणप्रदर्शनपूर्वकं तस्य प्रवर्तकत्वेन बन्धहेतुत्वं प्रकटयति—**अपविद्धेति** । प्रत्यगात्मनोऽपरिज्ञानं मिथ्याज्ञानकारणं तस्मात्कामादिस्ततश्च शुभाशुभव्यामिश्रप्रवृत्तिद्वारा सुखदुःखप्राप्तिरित्यर्थः ॥ ७ ॥

प्रतीचः स्वात्मन्यज्ञानान्मिथ्याज्ञानं तद्धेतुककामादिवशात्प्रवृत्तिरित्युक्तमयुक्तम् । विदुषोऽपि प्रवृत्तिदर्शनादित्याशङ्क्याऽऽह—**यदज्ञानादिति** । ज्ञानादूर्ध्वं बाधितानुवृत्तिव्यतिरेकेणाज्ञानहेतुकप्रवृत्तेरसम्भवे फलितमाह—**तस्मादिति** ॥ ८ ॥ १५

ज्ञानान्मुक्तिरित्युक्ते सत्यैकभविकन्यायेन मीमांसकस्य शङ्कां काम्यप्रतिषिद्धयोरित्यादिभाष्योक्तामुद्भावयति—**मोक्षार्थीति** ॥ ९ ॥

प्रारब्धफलं तु कर्म भोगादेव क्षयं गच्छतीत्यङ्गीकृत्य यथावर्णितचरितस्य ज्ञानव्यतिरेकेण मोक्षो भवतीति शरीरान्तरोत्पादे हेत्वभावादिति फलितमाह—**इति मीमांसकंमन्यैरिति**। युक्तिपर्यालोचनायां नायं पक्षः सम्भवति दूषयति—**तत्रेति** ॥ १० ॥ २०

तदेव "न कर्मानेकत्वादि"त्यादिभाष्यावष्टम्भेन स्पष्टयति—**नैतदिति** । यद्यपि मुमुक्षुर्वर्तमाने देहे काम्यं निषिद्धं वा बुद्धिपूर्वं नाऽऽरभते तथाऽपि सञ्चितस्यानेकस्य कर्मणः सम्भवादागामिनि देहे हेत्वभावस्यासिद्धिरित्यर्थः। साधारणेन प्रायणेनाभिव्यक्तानि सर्वाण्येव कर्माणि सम्भूयैकं शरीरं कुर्वन्ति । तत्र सर्वकर्मणामुपभोगेन क्षीणत्वान्नास्ति सञ्चितं कर्मेत्येतन्निराकर्तुं विरुद्धफलदायिनामित्युक्तम् । स्वर्गनरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन्देहे भोगासम्भवात्प्रायणस्य सर्वकर्माभिव्यञ्जकत्वे च मानाभावाद्बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं सिद्ध्यतीत्यर्थः । प्रायणाभिव्यक्तेन बलवता कर्मणा प्रथममारम्भकेण प्रतिबद्धं दुर्बलं कर्मानारम्भकमवशिष्टमित्यत्र प्रमाणमाह—**शास्त्रदर्शनादिति** ॥ ११ ॥ २५

कर्मानुवादपूर्वकं शास्त्रमेव प्रकटयति—**अनारब्धेति**। इहेति कर्तृरुक्तिः। 'तद्य इह रमणीयचरणा' इत्यादिवाक्यं स्वर्गादवरोहतां सुकृतदुष्कृताभ्यां मनुष्यादिलोके देहग्रहणं दर्शयति । ततो न स्वर्गप्रददेहारम्भकत्वेन सर्वं कर्म क्षीणमित्यर्थः ॥ १२ ॥ ३०

ननु ब्रह्महत्याश्वमेधयोः सुखदुःखफलत्वात्तयोश्चैकस्मिन्नेव देहे भोगसम्भवाद्विरुद्धफलदायित्वं कथं कर्मणामुच्यते तत्राऽऽह—**न चेति** । विरुद्धे देहे सुखदुःखफलहेतुत्वमश्वमेधब्रह्महत्ययो॥ [illegible] मात्त [illegible] सुखदुःखमात्रफलत्वाभावाद्विरुद्धफलदायिनामित्यविरुद्धं विशेषणमित्यर्थः ॥ १३ ॥

१. द्वयं=बन्धमोक्षौ । ३५

सप्तजन्मानुगं कार्यमेकस्यापीह कर्मणः । श्रूयते धर्मशास्त्रेषु किमुतानेककर्मणाम् ॥१४॥
अनारब्धेष्टकार्याणां नित्यं चेद्ध्वस्तये मतम् । नैवं स्वात्माक्रियाहेतुं[1] यतोऽनर्थं निहन्ति तत् ॥१५॥
पापस्य कर्मणः कार्यं प्रत्यवायगिरोच्यते । नित्यैर्विरोधाच्चद्धानिर्न त्विष्टफलदायिनः ॥१६॥
कामश्च कर्मणो हेतुस्तस्योच्छित्तेर्न सम्भवः । प्रत्यग्बोधमृते यस्मादसम्यगिदमुच्यते ॥१७॥
यद्ध्यनात्मफलं तस्मै कर्म सर्वं विधीयते । आप्तत्वादात्मनः कर्म नैव स्यादाप्तये ततः ॥१८॥
नित्यानां चाक्रियाऽभावः प्रत्यवायस्ततः कुतः । न ह्यभावाद्भवेद्भावो मानं यस्मान्न विद्यते ॥१९॥
पूर्वोपचितकर्मभ्यस्तस्मात्कर्तारमेति या । प्रत्यवायक्रिया तस्या लक्षणार्थः शता भवेत् ॥२०॥
नित्यानामक्रिया यस्माल्लक्षयित्वैव सत्वरा । प्रत्यवायक्रियां तस्माल्लक्षणार्थे शता भवेत् ॥२१॥
सर्वप्रमाणकोपः स्यादभावाद्भावसम्भवे । तस्मादयत्नतः स्थानमात्मनीत्यतिपेलवम् ॥२२॥

यत्तु कर्माशयस्यैकभविकत्वं तद्दूषयति—**सप्तजन्मेति**। अवयुत्यवादेन[2] सप्तेत्युक्तमधिकजन्मग्रहणश्रवणात् । "श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चाण्डालपुल्कसानां च ब्रह्महा योनिमृच्छतीत्या"दिस्मरणादेकमेव कर्मानेकं जन्माऽऽरभते । किमु नानाविधं कर्म नानाविधदेहारम्भकमिति वक्तव्यमित्यर्थः ॥ १४ ॥

अनारब्धफलं शुभमशुभं वा सर्वमिह कृतं नित्यं कर्म निवर्तयति । अतो ज्ञानाभावेऽपि मुमुक्षोर्वर्तमान-देहपाते मोक्षो भवतीति शङ्कते—**अनारब्धेति**। 'इष्टानिष्टफलानामि'त्यादिभाष्यादिष्टग्रहणमुपलक्षणार्थम्, नित्याकरण-हेतुकानर्थनिवृत्तिरेव नित्यानुष्ठानफलमिति मीमांसकैरिष्टत्वान्न नित्यानुष्ठानादनारब्धशुभाशुभनिवृत्तिरिति "न,अकरणे प्रत्यवायश्रवणादि"त्यादिभाष्येण परिहरति—**नैवमिति** ॥ १५ ॥

किञ्च पापस्य कर्मणोऽनारब्धफलस्य नित्यानुष्ठानान्निवृत्तावपि पुण्यस्य कर्मणो न ततो निवृत्तिरविरोधादिति वदन् "यदि नामे"त्यादिभाष्यं व्याचष्टे—**पापस्येति** ॥ १६ ॥

यत्तु काम्यानि कर्माणि वर्जयेन्मुमुक्षुरिति तदिदानीं 'न च कर्महेतूनामि'त्यादिभाष्येण दूषयति—**कामश्चेति**। यस्मात्कामस्य कर्महेतोरज्ञानकार्यत्वात्तस्वज्ञानमन्तरेण निवृत्तेरसम्भवस्तस्माद्यथावर्णितचरितस्य ज्ञानमन्तरेण मुक्तिरित्ययुक्तमतो ज्ञानादेव मोक्षो न कर्मणेत्यर्थः ॥ १७ ॥

किञ्च मोक्षस्य कर्मसाध्यत्वे न तावदुत्पाद्यत्वं नित्यत्वात्, नापि संस्कार्यत्वं निर्गुणत्वान्निर्दोषत्वाच्च, न च विकार्यत्वं कूटस्थत्वादाप्यत्वमपि नोपपद्यते तस्यात्मत्वेन नित्याप्तत्वादतो मोक्षे कर्म निरर्थकमित्याह—**यद्धीति**। आत्मव्यतिरिक्तं फलं स्वर्गपशुपुत्रादि ॥ १८ ॥

यदुक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानि कर्माणीति तत्र "नित्यानां चे"त्यादिभाष्येणोत्तर-माह—**नित्यानां चेति**। आगामिदुःखं प्रत्यवायस्तस्य भावरूपस्य नाभावो निमित्तं निषिद्धाचरणनिमित्तत्वाद्-दुःखस्येत्यर्थः । अभावाद्भावोत्पत्त्यसम्भवं मानाभावेन साधयति—**नहीति** ॥ १९ ॥

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छती"तिशतृप्रत्ययाद-करणस्यापि प्रत्यवायनिमित्तत्वं प्रमितमित्याशङ्क्याऽऽह—**पूर्वेति**। तस्मादित्यसतः सदुत्पत्त्यसम्भवादित्यर्थः ॥ २० ॥

उक्तमेवार्थं "अतः पूर्वोपचिते"त्यादिभाष्यावष्टम्भेन स्पष्टयति—**नित्यानामिति**। यदि यथावन्नित्यनैमित्ति-कानुष्ठानं स्यात्तदा सञ्चितदुरितक्षयोऽपि भवेन्न चायं विहितमकार्षीत्ततः प्रत्यवायी भविष्यतीति शिष्टैर्लक्ष्यते तेन शतृप्रत्ययस्यान्यथाऽपि सिद्धत्वान्न तद्बलादकरणस्य प्रत्यवायहेतुत्वसिद्धिरित्यर्थः ॥ २१ ॥

ननु लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यते तत्रा'न्यथे'त्यादिभाष्यं व्याच[illegible] सर्वेति । सर्वस्य भावरूपस्य कार्यस्य भावरूपं कारणमिति प्रत्यक्षादिभिरवधारितं शतृप्रत्ययादभ[illegible] सर्वप्रमाणविरोधः स्यादित्यर्थः । अस्मत्पक्षे त्वकरणज्ञानस्य प्रत्यवायज्ञापकत्वम् । न च ते ज्ञाताद[illegible] प्रत्[illegible]त्पत्तिः । केवलात्प्रत्यवायांभावप्रसङ्गाद्योग्यानुपलब्धिरपि ज्ञातैवाभावप्रमितिहेतुः ।

---

१. स्वात्[illegible]कर्मस्वरूपं तस्याक्रियेत्यर्थः ।　　२. बहुषुप्राप्तेषु एकं पृथक्कृत्यवादेन ।

निर्धूतातिशया प्रीतिः कर्महेतुरिति त्वया । यदभाणि तदन्याय्यं यथा तदभिधीयते ॥२३॥
मुक्तेः कौटस्थ्यरूपत्वान्न तस्याः कर्म साधनम् । स्वर्गादिवदनित्या स्याद्यदि स्यात्कर्मणः फलम् ॥२४॥
अनित्यफलदायित्वं ज्ञानहीनस्य कर्मणः । कूटस्थफलदायित्वं 'विद्येतस्येति चेन्मतम् ॥२५॥
नैवमारभ्यमाणस्य ह्यनित्यत्वसमन्वयात् । न च प्राप्तमनित्यत्वं विद्या वारयितुं क्षमा ॥२६॥
प्रध्वंसाभाववच्चेत्स्यात्कर्मकार्यमपि ध्रुवम् । भावात्मकत्वान्मोक्षस्य नैवमप्युपपद्यते ॥२७॥
कार्यं प्रध्वंसतोऽन्यद्यत्तदनित्यं क्रियोत्थितेः । घटादिवत्प्रतिज्ञायां विशिष्टत्वाददोषता ॥२८॥
प्रध्वंसाच्छकलादि स्यात्तच्चानित्यं घटादिवत् । कल्पनामात्रतोऽभावो नैवाऽऽरभ्यः स कर्मभिः ॥२९॥
आविर्भावतिरोभावैर्धर्मिण्यां मृदि सर्वदा । धर्मा घटादयः सर्वे वर्तन्ते न त्वभावगाः ॥३०॥

प्रतिबन्धकाभावस्य तु कारणत्वमन्योन्याश्रयत्वादप्रामाणिकमित्यभिप्रेत्य यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म किन्तु श्रुतिप्रामाण्यात्पितृलोकादिप्राप्तिफलं तस्मान्न यथोक्तचरितस्य मुक्तिरित्युपसंहरति—**तस्मादिति** ॥ २२ ॥

स्वर्गकामवाक्ये स्वर्गशब्देन निरतिशयप्रीतेर्मुक्तेरुक्तत्वात्तद्धेतुत्वेन कर्मविधानात्कर्मसाध्यैव मुक्तिरिति द्वितीयं पूर्वपक्षं भाष्योक्तमनुभाष्य दूषयति—**निर्धूतेति** ॥ २३ ॥

मोक्षस्य कर्मकार्यत्वानुपपत्तिं "नही"त्यादिभाष्येण साधयति—**मुक्तेरिति** । आत्मत्वेन मोक्षस्य कूटस्थनित्यत्वान्न कर्मसाध्यतेत्युक्त्वा विपक्षे दोषमाह—**स्वर्गादिवदिति** ॥ २४ ॥

"विद्यासहितानामि"त्यादिभाष्येण कर्मसाध्यत्वेऽपि मोक्षस्य नानित्यत्वमिति समुच्चयवाद्याह—**अनित्येति** ॥ २५ ॥

विद्यासहितेनापि कर्मणा मोक्षश्चेदारभ्यते तर्हि यत्कृतकं तदनित्यमितिन्यायान्मोक्षानित्यत्वं दुर्निवारमिति "न विरोधादि"त्यादिना निरस्यति—**नैवमिति** । सहायीभूतविद्यासामर्थ्यादनित्यत्वं निवार्यतामित्याशङ्क्याऽऽह—**न चेति** । न तावत्प्रमाणजन्या विद्या मोक्षस्यानित्यत्वं वारयति अकारकत्वात् । उपासना तु स्वफलानित्यत्वमपि वारयितुमशक्ता कथं कर्मफलानित्यत्वं वारयतीत्यर्थः ॥ २६ ॥

कर्मकार्यत्वे मोक्षस्यानित्यत्वं यत्कृतकं तदनित्यमितिव्याप्तिदर्शनादित्यत्र व्याप्तिभङ्गं शङ्कते—**प्रध्वंसेति** । यद्भावरूपं कार्यं तदनित्यमिति व्याप्तेस्तव मोक्षस्य निरतिशयप्रीतेर्भावरूपत्वादारभ्यत्वे स्यादेवानित्यत्वमिति दूषयति—**भावेति** ॥ २७ ॥

यद्भावत्वे सति कृतकं तदनित्यमित्येतदेव साधयति—**कार्यमिति** । अनित्यमिति प्रतिज्ञायां कार्यत्वहेतोर्भावत्वेन विशिष्टत्वात्प्रतिज्ञाहेत्वोर्व्याप्तिभङ्गदोषवत्ता नास्तीति फलितमाह—**प्रतिज्ञायामिति** ॥ २८ ॥

प्रध्वंसस्य कार्यत्वेऽपि नित्यत्वमभ्युपगम्योक्तं तदेवासिद्धमित्याह—**प्रध्वंसादिति** । नाशक्रियातः शकलादिकार्यं जायते तच्च घटादिवदनित्यमतो न भवदभिप्रेतो ध्वंसस्तत्कार्यं वाऽस्तीत्यर्थः । कस्तर्हि भवन्मते प्रध्वंसाभावस्तत्राऽऽह—**कल्पनेति** । प्रध्वंसस्यास्मन्मते शशविषाणवद्विकल्पमात्रत्वान्नित्यत्वानित्यत्वयोरभावान्नासौ व्यभिचारभूरित्यर्थः ॥ २९ ॥

प्रध्वंसस्य शशविषाणकल्पत्वे घटादीनां सदा मृदादिषु विद्यमानत्वात्कपालाद्युत्पत्तावनुपलब्धिर्न सिध्येदित्याशङ्क्याऽऽह—**आविर्भावेति** । विद्यमानमपि घटादिकार्यं विरोधिके[illegible]रुद्धत्वान्नोपलभ्यते कदाचिदित्यर्थः ॥ ३० ॥

---

१. विद्येतः = विद्यासहितः ।

नास्त्यभावस्य सम्बन्धः क्रियया वा गुणेन वा । निरात्मकत्वान्नैवालं सम्बद्धुं केनचित्क्वचित् ॥३१॥

तस्मात्स्यात्कल्पनामात्रो व्यवहारप्रसिद्धये । प्रध्वंसादिरभावोऽयं शिलापुत्रादिवन्मृषा ॥३२॥

तस्मादविद्याव्युच्छित्तौ स्यादवस्थानमात्मनि । नचाविद्याप्रहाणं स्याद्ब्रह्मविद्यामृते क्वचित् ॥३३॥

तस्माद्विद्याप्तये ज्ञेया प्रारब्धोपनिषत्परा । सैवाविद्यापनुत्त्यर्था विद्या चैवाऽऽत्मगामिनी ॥३४॥

५ विद्यासंशीलिनां यस्माद्गर्भजन्माद्यशेषतः । उपमृद्नाति विद्येयं तस्मादुपनिषद्भवेत् ॥३५॥

उपेत्य वा निषण्णं तच्छ्रेय आत्यन्तिकं यतः । तस्मादुपनिषज्ज्ञेया ग्रन्थस्तु स्यात्तदर्थतः ॥३६॥

शान्तिमन्त्रवार्तिकम्

प्राणवृत्तेस्तथा चाह्नो देवता याऽभिमानिनी । मित्रः शं नः सुखं भूयादिति ब्रह्मेह याच्यते ॥३७॥

रात्रेरपानवृत्तेश्च वरुणश्चाभिमानभाक् । शं नो भवतु सर्वत्र चक्षुस्थश्चार्यमा रविः ॥३८॥

१० प्रध्वंसाभावस्य गुणो नित्यत्वं प्रागभावस्य चानित्यत्वं नाशक्रियावत्त्वमितरस्य चोत्पत्तिक्रियावत्त्वमिति परस्य मतं तदपि न युक्तमित्याह—नास्तीति । तदेव स्फुटयति—निरात्मकत्वादिति ॥ ३१ ॥

प्रध्वंसादावभावे निरात्मके धर्मधर्मिभावस्य दुर्भणत्वात्कल्पनामात्रत्वमेवेत्युपसंहरति—तस्मादिति । चतुर्विधाभावव्यवहारसिद्ध्यर्थमविद्याकल्पितोऽभावो न वास्तवोऽस्तीत्यर्थः ॥ ३२ ॥

काम्यप्रतिषिद्धवर्जनाद्युपायादात्मन्यवस्थानलक्षणस्य मोक्षस्य दुर्वचनत्वादविद्यातत्कार्यनिवृत्तौ तथाविध-
१५ कैवल्यं ज्ञानादेवेत्युपसंहरति—तस्मादिति ॥ ३३ ॥

यतो ब्रह्मात्मैकत्वज्ञानादेव संसारकारणात्माविद्यानिवृत्तिस्तस्मादात्मज्ञानार्थत्वेनोपनिषदारम्भः सम्भवति इत्यारम्भमुपसंहरति—तस्माद्विद्येति । तामेव विद्यां विशिनष्टि—सैवेति ॥ ३४ ॥

ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्यभिप्रे"त्योपनिषदिति विद्ये"त्यादिभाष्यं व्याचष्टे—विद्येति । सकारणसंसारस्य शिथिलीकरणादत्यन्तविनाशहेतुत्वाद्वा ब्रह्मविद्योप-
२० निषच्छब्दवाच्येत्यर्थः ॥ ३५ ॥

आत्यन्तिकं श्रेयो ब्रह्म तद्विद्यानिमित्तमात्मनि निषण्णमात्मानं गमयत्यनया वा व्युत्पत्त्या ब्रह्मविद्योप-निषच्छब्दवाच्येत्याह—उपेत्येति । ब्रह्मविद्या चेदित्थमुपनिषच्छब्देनोच्यते कथं तर्हि ग्रन्थे तच्छब्दं प्रयुञ्जते तत्राऽऽह—ग्रन्थस्त्विति ॥ ३६ ॥

शान्तिमन्त्रवार्तिकम्

२५ एवमुपनिषदस्तद्भाष्यस्य च व्याख्येयत्वं प्रतिपाद्य प्रतिपदं व्याख्यामारभते—प्राणवृत्तेरिति । "शं नो मित्र" इत्यत्र मित्रशब्देन प्राणप्रवृत्तेरह्नश्चाभिमानी देवतात्मोच्यते स च नोऽस्माकं सुखकृद्भवत्विति सूत्रात्मकं ब्रह्म मुमुक्षुणा प्रार्थ्यते [1]सप्तम्या वाक्यं गृह्यते ॥ ३७ ॥

"शं वरुण" इत्यत्रापि वरुणशब्देनापानवृत्ते रात्रेश्चाभिमानभागी देवतात्मा कथ्यते । स चास्माकं सुख-कृद्भवत्विति पूर्ववदेव सूत्रात्मकब्रह्मप्रार्थनामभिप्रेत्याऽऽह—रात्रेरिति । एवमुत्तरत्रापि ब्रह्मैव प्रार्थनाविषयभूत-
३० मित्याह—सर्वत्रेति । "शं नो [illegible]त्वर्यमे"त्यत्रार्यमा चक्षुरभिमानी रविरादित्य इत्याह—चक्षुस्थश्चेति ॥ ३८ ॥

---

१. सत [illegible] प्रवृ [illegible] त्यादिः।

बले तु भगवानिन्द्रो वाचि बुद्धौ बृहस्पतिः। विष्णुश्चोरुक्रमः शं नो विस्तीर्णक्रमणो ह्यसौ ॥३९॥
अध्यात्मदेवताः सर्वा मित्राद्याः शं भवन्तु नः। सुखकृत्सु हि तासु स्याद्विघ्नोपशमनं ध्रुवम् ॥४०॥
श्रवणं धारणं चैवमुपयोगश्च सिध्यति। ज्ञानस्याप्रतिबन्धेन प्रार्थनीयमतो भवेत् ॥४१॥
ब्रह्मविद्योपसर्गाणां शान्त्यर्थं वायुरूपिणे। ब्रह्मजिज्ञासुना कार्यं नमस्कारोक्तिकर्मणी ॥४२॥
सर्वक्रियाफलानां हि ब्रह्माधीनत्वहेतुतः। वायवे ब्रह्मणे तस्मै प्रह्वीभावोऽस्तु सर्वदा ॥४३॥ ५
पारोक्ष्येण नमस्कृत्य प्रत्यक्षेण नमस्क्रिया। परोक्षसाक्षाद्रूपाभ्यां वायुरेवाभिधीयते ॥४४॥
प्रत्यक्षं ब्रह्म हे वायो त्वमेवासीति संस्तुतिः। त्वामेवातो वदिष्यामि साक्षात्त्वमुपलभ्यसे ॥४५॥

"शं न इन्द्रो बृहस्पतिरि"त्यत्र बलाभिमानी देवतात्मेन्द्रः, बृहस्पतिर्वागभिमानी बुद्ध्यभिमानी चेत्याह—**बल इति**। "शं नो विष्णुरि"त्यत्र विष्णुर्नाम पादाभिमानी देवतात्मा स चास्माकं सुखकृदस्तु तदाह—**विष्णुश्चेति**। तस्योरुक्रमत्वं स्फोरयति—**विस्तीर्णेति** ॥ ३९ ॥ १०

व्याख्यातानां वाक्यानां संपिण्डितमर्थमाह—**अध्यात्मेति**। किमिति यथोक्ता देवताः प्रार्थ्यन्ते ब्रह्मजिज्ञासुभिरित्याशङ्क्य "तासु हो"त्यादिभाष्यार्थमाह—**सुखकृत्स्विति** ॥ ४० ॥

तासु देवतासु सुखकृत्सु सतीषु वेदान्तश्रवणार्थं मुमुक्षूणामविघ्नेन गुरुपादोपसर्पणं सिध्यति ततश्च वेदान्तानां तात्पर्यावधारणं श्रवणं श्रुतस्याविस्मरणं धारणमुपयोगः शिष्येभ्यो निवेदनम् ॥ ४१ ॥

"नमो ब्रह्मण" इत्यादिवाक्यस्य तात्पर्यमाह—**ब्रह्मविद्येति** ॥ ४२ ॥ १५

किमिति वायुरूपिणे ब्रह्मणे नमस्कारवन्दनक्रिये क्रियेते अन्यस्मै कस्मैचिद्देवतात्मने विघ्नोपशमनार्थं ते किं न स्यातामित्याशङ्क्य 'सर्वक्रियाफलानामि"त्यादिभाष्यार्थमाह—**सर्वेति**। कर्मफलस्य सर्वस्य सूत्रब्रह्माधीनत्वात्तस्यैव नमस्कारवन्दनक्रिये नान्यस्येत्यर्थः ॥ ४३ ॥

"नमो ब्रह्मण" इत्येतावतैव वायुरूपिणे ब्रह्मणे नमस्कारस्य सिद्धत्वादुत्तरवाक्यमकिञ्चित्करमित्याशङ्क्याऽऽह—**पारोक्ष्येणेति**। "स ब्रह्म त्यदित्याचक्षत" इतिश्रुतेः ब्रह्मणः सूत्रस्याऽऽदौ पारोक्ष्येण नमस्कारः कृतस्तस्यैव वायुशब्देन प्रत्यक्षतया निर्देशः। प्राणस्य प्रत्यक्षत्वादतो न पौनरुक्त्यमित्यर्थः। साक्षात्त्वासाक्षात्त्वाभ्यां वायुब्रह्मणोर्भेदमाशङ्क्याऽऽह—**परोक्षेति** ॥ ४४ ॥ २०

"त्वमेव प्रत्यक्षं ब्रह्मासी"त्यस्य तात्पर्यमाह—**प्रत्यक्षमिति**। हे वायो! तव सूत्ररूपेण पारोक्ष्येऽपि प्राणरूपेण अपरोक्ष्यमस्ति चक्षुरादि हि रूपदर्शनाद्यनुमेयत्वाद्व्यवहितं[1] साक्षिवेद्यं प्राणस्त्वव्यवधानेन साक्षिवेद्यः सन्निहितश्च भोक्तुरिति प्रत्यक्षो विवक्ष्यते प्राणकृतेनाशनादिना शरीरादेर्बृंहणप्रसिद्धेर्ब्रह्मत्वं च तवातिव्यक्तमतः "त्वमेव प्रत्यक्षं ब्रह्मासी"ति वायुदेवतास्तुतिरत्र विवक्षितेत्यर्थः। "त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामी"त्यस्य तात्पर्यमाह—**त्वामेवेति**। यथा कश्चन राजदर्शनार्थी राज्ञो दौवारिकं कञ्चिदुपलभ्य त्वमेव राजेति ब्रूते तथा हार्दस्य ब्रह्मणो द्वारपालं[2] प्राणं प्रतीत्य हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुरभिवदति त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति। यतस्त्वं साक्षिणा साक्षादुपलभ्यसे तस्मात्त्वामेवाहं ब्रह्म वदिष्यामीति ब्रह्मवदनक्रिया प्राणदेवतायाः स्तुतिरेवेत्यर्थः ॥ ४५ ॥ २५

---

१. अनुमेयस्य चक्षुरादेः व्यवहितं साक्षिवेद्यत्वं यतः साक्षी स्वसम्बद्धं सर्वं प्रकाशयति चक्षुरादिश्चानुमितिद्वारैव सम्बध्यते अनुमितेरन्तःकरणधर्मत्वात्। प्राणस्तु अन्तःकरणाभेदात् स्वयमेव सक्षिणा संसृज्यते। तयोरभेदश्च "यो वै प्राणस्सा प्रज्ञे"त्यादिश्रुतिसिद्ध इत्यर्थः। ३०

२. द्वारपालमिति—तदुक्तं छान्दोग्यतृतीयाध्याये गायत्रीविद्यायां "तस्य [illegible] देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणः" इत्युक्त्वा "ते वा एते पञ्च ब्रह्मपुरु[illegible] लोकस्य द्वारपाः" इत्युक्तत्वात्। ३५

यथाशास्त्रं यथाकार्यं बुद्धौ सुपरिनिश्चितम् । ऋतं तत्त्वदधीनत्वाद्वदिष्यामीति संगतिः ॥४६॥
प्रयोगस्थं तदेवर्तं सत्यमित्यभिधीयते । तदपि त्वदधीनत्वाद्वदिष्याम्येव साम्प्रतम् ॥४७॥
विद्यार्थिना स्तुतं सन्मां ब्रह्मावतु गुरुं च मे । विद्याग्रहणवक्तृत्वशक्तिभ्यां नौ सदऽवतु ॥४८॥
विद्याप्राप्त्युपसर्गाणां त्रिः शान्तिरभिधीयते । आचार्यशिष्ययोस्तस्यां ब्रह्म ज्ञातुं हि शक्यते ॥४९॥

इति प्रथमोऽनुवाकः

५

"ऋतं वदिष्यामी"त्यस्य तात्पर्यार्थमाह—यथाशास्त्रमिति । अग्निहोत्रादिलक्षणं कार्यं कर्तव्यं कर्मानतिक्रम्य तदेव शास्त्रानुरोधेन बुद्धौ सुपरिनिश्चितमनुष्ठेयत्वेन निर्धारितमृतमित्युच्यते तच्च त्वदधीनत्वात्त्वदात्मकत्वाच्च त्वामेव वदिष्यामीति देवतास्तुतिरेवेत्यर्थः ॥ ४६ ॥

स्तुत्यन्तरमाह—प्रयोगस्थमिति । ऋतमेवानुष्ठीयमानं सत्यमुच्यते तदपि त्वदात्मकत्वात्त्वामेव वदिष्या-
१० मीति वाक्ययोः स्तुत्यर्थयोरपुनरुक्ततेत्यर्थः ॥ ४७ ॥

"तन्मामवत्वि"त्यादिवाक्यस्यार्थमाह—विद्यार्थिनेति । उक्तप्रकारेण मया स्तुतं सद्ब्रह्म मामाचार्यं चावतु रक्षत्विति प्रार्थनायां केन रूपेण रक्षत्विति विवक्षायामाह—विद्याग्रहणेति । श्रुत्यादिद्वारेणाऽऽचार्योपदिष्टस्य तत्त्वस्य ग्रहणे सामर्थ्यं यथा मम श्रोतुर्न विहन्यते यथाऽऽचार्यस्य वक्तृत्वसामर्थ्यमप्रतिहतं भवति तथा शिष्याचार्ययोः शरीरद्वयं रक्षणीयमित्यर्थः ॥ ४८ ॥

१५ आचार्यस्य विद्योपदेशार्थं विद्याग्रहणार्थं च शिष्यस्य प्रवृत्तस्याऽऽध्यात्मिको—ज्वरादिनिमित्तः (सह) चक्षुः-श्रोत्रादिनिमित्तश्च, आधिभौतिको—व्याघ्रचोरादिभयनिमित्तः, वर्षगर्जनादिप्रयुक्तश्च, आधिदैविको—विघ्नः सम्भाव्यते तस्य त्रिविधस्योपसर्गस्य विघ्नस्य परिहारार्थं त्रिः शान्तिरुच्यते तस्यां विघ्नोपशान्तौ सत्यामेव ज्ञानोपदेशतद्ग्रहण-सम्भवादिति पुनरुक्तिशङ्कां वारयति—विद्येति ॥ ४९ ॥

इति प्रथमोऽनुवाकः



## अथ शीक्षावल्ल्यां द्वितीयोऽनुवाकः

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥१॥**

शीक्षां पञ्च

**इति द्वितीयोऽनुवाकः**

**अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो मा भूदिति शीक्षाध्याय आरम्यते—शिक्षा शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम् । शिक्ष्यन्त इति वा शिक्षा वर्णादयः । शिक्षैव शीक्षा । दैर्घ्यं छान्दसम् । तां शीक्षां व्याख्यास्यामो विस्पष्टमा समन्तात्कथयिष्यामः । चक्षिङः ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम् ।** ५
**तत्र वर्णोऽकारादिः । स्वर उदात्तादिः । मात्रा ह्रस्वाद्याः । बलं प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं समता । सन्तानः सन्ततिः । संहितेत्यर्थः । एष हि शिक्षितव्योऽर्थः । शिक्षा यस्मिन्नध्याये सोऽयं शीक्षाध्याय इत्येवमुक्त उदित उक्त इत्युपसंहार उत्तरार्थः ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ** १०
**तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥**

आनन्दगिरिटीका

**यत्नोपरम इति**—स्वरोष्मव्यञ्जनप्रमादो मा भूदित्यर्थः । अन्यथा विवक्षितार्थसिद्धिरेव न स्यात् । तदुक्तम्—
"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति । १५
**लक्षणमिति** । लक्षणं शास्त्रम् । ऋटुरषाणां मूर्धा, इचुयशानां तालिवत्यादि । तस्यान्यत्रैव सिद्धत्वादिह कर्मव्युत्पत्तिरेव शिक्षाशब्दस्य ग्राह्या । [ **रूपमिति** ] "चक्षिङः ख्याञ्" "वा लिटि" इति सूत्रेण ख्याञादिष्टो यस्तस्येदं रूपं न "ख्या प्रकथने" इत्यस्य सोपसर्गस्य, प्रयोगानभिधानादित्यर्थः[1] ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
शीक्षावल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥ २०

वनमाला

**शीक्षाध्यायारम्भस्य तात्पर्यमाह—अर्थज्ञानेत्यादिना । यत्नोपरम इति** । अध्ययनकाले स्वरादिष्वौदासीन्यमित्यर्थः । स्वरवर्णादिव्यत्यासे च सत्यन्यथाऽर्थावबोधः प्रसज्येत; ततश्च नार्थप्रसङ्गः स्यात् "मन्त्रो हीनः स्वरतो वर्णतो वा" इत्यादिशास्त्रादिति भावः । नन्वेवं सति कर्मकाण्डेऽप्ययमध्यायो वक्तव्य इति चेत्, सत्यम्; अत एवोभयसाधारण्यायायं काण्डयोर्मध्ये पठितः । ननु तर्हि भाष्ये उपनिषद्ग्रहणमनर्थकम्; नानार्थकम्, उपनिषत्पाठे २५ यत्नाधिक्यद्योतनार्थत्वोपपत्तेः । तथाहि—कर्मकाण्डे क्वचिदन्यथाऽर्थज्ञानपूर्वकान्यथानुष्ठानस्य प्रायश्चित्तेन समाधानं सम्भवति, "अनाज्ञातं यदाज्ञातम्" इत्यादिमन्त्रलिङ्गात् । ज्ञानकाण्डे सगुणनिर्गुणवाक्यानामन्यथाऽर्थावबोधे सति सम्यगुपासनानुष्ठानतत्त्वज्ञानयोरलाभात्पुरुषार्थासिद्धिरेव स्यात्, प्रायश्चित्तेनात्र समाधानासम्भवात् । अतो यथावद्-ब्रह्मबोधायोपनिषत्पाठे यत्नाधिक्यं कर्तव्यमिति द्योतनार्थत्वेनोपनिषद्ग्रहणमुपपद्यत इति ।

**शीक्षाशब्दस्य द्वेधा व्युत्पत्तिं दर्शयति—शिक्ष्यत इत्यादिना । लक्षणपदम्** "अकुहविसर्जनीयानां कण्ठः, ३० इचुयशानां तालु, ऋटुरषाणां मूर्धा, लृतुलसानां दन्ताः" इत्यादिशास्त्रपरम् । नन्वेवं सति वर्णाद्युच्चारणलक्षणं शिक्ष्यतेऽनयेति व्युत्पत्तिरयुक्ता, तल्लक्षणस्य शीक्षाशब्दितेऽध्याये शिक्षणादर्शनादित्याशङ्क्य व्युत्पत्त्यन्तरं दर्शयति—**शिक्ष्यन्त इति** । वेदनीयत्वेनोपदिश्यन्त इत्यर्थः । **चक्षिङ इति** । "चक्षिङः ख्याञ्" इति सूत्रेण ख्याञादिष्टो यस्य तस्येदं रूपम्, न तु "ख्या प्रकथने" इत्यस्य, तस्यार्धधातुके प्रयोगाभावादित्यर्थः । [illegible]क्ता वाक्कर्म क्रिया अर्थो यस्य तस्येत्यर्थः । **मध्यमवृत्त्येति** । अतिद्रुतत्वादिकं विनेत्यर्थः ॥ ३५

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां [illegible]योऽ[illegible]कः

---

[1] शास्त्रे "ख्या प्रकथन" इति धातोः सार्वधानुकमात्रविषयत्वाभिधानादित्यर्थ[illegible]

## अथ शीक्षावल्ल्यां द्वितीयोऽनुवाकः

अर्थज्ञानप्रधानत्वाद्वेदान्तानां विपश्चिताम् । पाठे त्वयत्नो मा प्रापदिति शिक्षाऽभिधीयते ॥५०॥

शिक्ष्यते ज्ञायते साक्षाद्वर्णाद्युच्चारणं यया । स्याद्वा कर्मणि शिक्षेति व्याख्यास्यामोऽधुना तु ताम् ॥५१॥

अकारादिर्भवेद्वर्ण उदात्तादिः स्वरस्तथा । ह्रस्वदीर्घप्लुता मात्राः प्रयत्नश्च बलं स्मृतम् ॥५२॥

समता साम वर्णानां वैषम्यस्य विवर्जनम् । सन्तानः संहिता तु स्यादिति शिक्षोपदिश्यते ॥५३॥

५ इति द्वितीयोऽनुवाकः

प्रथमं शिक्षाध्यायारम्भे हेतुमाह—अर्थज्ञानेति । वेदान्तानां ब्रह्मात्मपरत्वात्कर्मकाण्डस्य च कर्मपरत्वाद्-बुद्धिपूर्वकारिणामध्ययने स्वरोष्मव्यञ्जनेष्वनास्थासम्भवाद्विवक्षितार्थासिद्धिः स्यादित्याशङ्क्य तन्निवृत्त्यर्थमेतद-ध्यायप्रवृत्तिरित्यर्थः ॥ ५० ॥

शिक्षाशब्दस्य द्विधा व्युत्पत्तिं सम्भावनया दर्शयति—शिक्ष्यत इति । लक्षणशास्त्रस्यान्यत्रैव सिद्धत्वादिह १० कर्मव्युत्पत्तिरेव ग्राह्येत्यङ्गीकृत्य वाक्यार्थमाह—स्याद्वेति ॥ ५१ ॥

शिक्षितव्यानेव विभज्य दर्शयन्वर्णः स्वर इत्यादि व्याकरोति—अकारादिरिति द्वाभ्याम् । वर्णादीना-मेकस्यापि वैगुण्ये फलपर्यन्तं ज्ञानं न सिध्यति [1]"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह"ति-दर्शनादतो वर्णादयः सर्वे शिक्षितव्या भवन्तीत्यर्थः ॥ ५२-३ ॥

इति द्वितीयोऽनुवाकः

---

१५ १. तैत्तिरीयसंहिताया द्वितीयकाण्डपञ्चमप्रपाठके उक्तं विश्वरूपाख्यः त्वष्टुः पुत्रः किञ्चित्कालं देवानां पुरोहित आ[illegible]ीत् । स च असुरस्त्रियां जातत्वात् असुरपक्षपाती सन्सर्वदेवसन्निधौ देवानामेव हविर्दातव्य-मिति वद[illegible]पि परोक्षं रहसि असुरेभ्यो हविर्दातव्यमवोचत् । इदं चेन्द्रः ज्ञात्वा तं जघान । त्वष्टा तु स्वपुत्रघा[illegible]ात् रोषि[illegible]ः इन्द्रघातकं पुत्रमभिलषन् यज्ञं कारयामास । तत्र च "स्वाहेन्द्रशत्रुर्वर्धस्वे"त्य-जुहो[illegible] । अ[illegible] [illegible]नं [illegible]पदे तत्पुरुषसमासे इन्द्रस्य शातयिता घातक इत्यर्थात् तस्य मनोरथपूर्तिर-२० भविष्य[illegible]रं [illegible]भ्रमात् तत्पुरुषस्वरेण मन्त्रं न पपाठ अपि तु बहुव्रीहिस्वरेण, ततश्चेन्द्रः शत्रुः घातकः य[illegible] प्र[illegible]भेनेन्द्रेण वध्य एव कश्चिद्वृत्रनामा असुरः प्रादुरभूत् स चेन्द्रेण हतः इति । तत्पुरुषस्व[illegible]न्तोदात्तस्वरः । बहुव्रीहौ तु प्रकृत्यापूर्वपदमित्युक्तेः पूर्वपदस्य प्रकृतिस्वर इति भेदः ।

## अथ शीक्षावल्ल्यां तृतीयोऽनुवाकः[1]

**सह नौ यशः। सह नौ ब्रह्मवर्चसम्। अथातः सँ हिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम्। ता महासँ हिता इत्याचक्षते। अथाधिलोकम्। [2]पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः॥ १॥**

अधुना [3]संहितोपनिषदुच्यते। तत्र संहितादुपनिषत्परिज्ञाननिमित्तं यद्यशः प्रार्थ्यते तन्नावावयोः शिष्याचार्ययोः सहैवास्तु। तन्निमित्तं च यद्ब्रह्मवर्चसं तेजस्तच्च सहैवास्त्विति शिष्यवचनमाशीः। शिष्यस्य ह्यकृतार्थत्वात् प्रार्थनोपपद्यते नाऽऽचार्यस्य। कृतार्थो ह्याचार्यो नाम भवति। अथानन्तरमध्ययनलक्षणविधानस्य पूर्ववृत्तस्य, अतः यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानविषयेऽवतारयितुमित्यतः संहिताया उपनिषदं संहिताविषयं

आनन्दगिरिटीका

संहिता वर्णानां सन्निकर्षस्तद्विषयमुपासनं प्रथमं कथ्यत इत्याह—**अधुनेति**। सन्निधानाच्च स्वशाखासंहितैव ग्राह्या। शं नो मित्र इत्याशीर्वादः कृत्स्नोपनिषच्छेषः। संहितोपनिषच्छेषमाशीर्वादान्तरमाह—**तत्रेति**। वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतः शब्देनोक्त इत्याह--**यतोऽत्यर्थमिति**। **पञ्चस्विति** सप्तमी

वनमाला

अथातः संहिताया इत्यादेस्तात्पर्यमाह—**अधुनेति**। वर्णानामत्यन्तसामीप्यं संहिता, तद्विषयोपनिषदुपासनमिदानीमुच्यत इत्यर्थः। शं नो मित्र इत्याशीर्वादः कृत्स्नोपनिषच्छेषः। संहितोपनिच्छेषमाशीर्वादान्तरं प्रथममाह—**तत्रेति**। उपनिषत्परिज्ञानमुपासनविषयकं ज्ञानम्; तच्च शिष्यस्याचार्योपदेशजनितमाचार्यस्य च तदुपदेशप्रयोजकम्, तन्निमित्तकं यश इत्यर्थः। **तेज इति**। मुखकान्त्यादिरूपमुपनिषत्परिज्ञाननिमित्तकमित्यर्थः। ननु सहैवास्त्विति केन प्रार्थ्यते? तत्राह—**शिष्यवचनमिति**। तत्र विनिगमकमाह—**शिष्यस्य हीति**। तस्याकृतार्थत्वं प्रसिद्धमिति हिशब्दार्थः। नन्वाचार्योऽप्यकृतार्थ एव शिष्यसापेक्षत्वादिति; नेत्याह—**कृतार्थो हीति**। न ह्याचार्यस्य स्वप्रयोजनसिद्ध्यर्थं शिष्यापेक्षास्ति, किं तु केवलं तदनुग्रहार्थमेवाचार्यप्रवृत्तिरिति भावः। नन्वेवमाचार्यस्य शिष्येण किमर्थं यशआदि प्रार्थ्यते? स्वार्थमेवेति ब्रूमः, यशस्विनः शिष्या हि लोके यशस्विनो भवन्ति; यशस्विनां च लाभपूजादिकं फलं प्रसिद्धम्; अतः स्वार्थमेव शिष्यो गुरोर्यशः प्रार्थयत इत्यनवद्यम्। पूर्ववृत्तस्यानन्तरमिति सम्बन्धः। वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह—**यतोऽत्यर्थमिति**। ज्ञानमुपासनम्, तदेव विषयः,

---

१. तृतीयानुवाके संहितोपासनमुच्यते। उपासनसामान्ये केचन विषया ब्रह्मसूत्रोक्ताः स्मर्तव्याः। आसीनः सम्भवात्—उपास्तौ आसनादिनियमः नास्ति आसीनस्यैव चित्तैकाग्र्यं सम्भवेत्। तिष्ठतः देहधारणे मनः व्याप्रियेत, शयानस्य अकस्मात् निद्रा समागच्छेत् (४-१-७)। यत्तैकाग्रता तत्राविशेषात्—(४-१-११) उपासनासु दिग्देशकालादिनियमोऽपि नास्ति। चित्तैकाग्र्यमुपासनायामावश्यकं, तत् यत्र देशे काले वा सम्पद्यते स एवाश्रयणीयः।

२. "पृथिवी पूर्वरूपमि"त्यत्र पूर्ववर्णस्य पृथिवीदेवतादृष्ट्या उपासनं कार्यं तादृशोपासनसंस्कृतस्य पूर्ववर्णस्य फलजनकत्वं द्रष्टव्यं निकृष्टे उत्कृष्टदृष्टिः कर्तव्येति ब्रह्मदृष्टिरुत्कर्षादित्यनेन (४-१-५) व्युत्पादनात्।

३. **संहितोपनिषत्**—न केवलं तैत्तिरीयके अपि तु ऐतरेयोपनिषद्यपि अथातः संहिताया उपनिषत् पृथिवी पूर्वरूपं द्योरुत्तररूपमित्यादि। इदमुपासनाद्वयं एकमेव न भिन्नम्—इति सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् इत्यधिकरणन्यायात् (ब्र. सू. ३-३-१)। उपासनयोरैक्ये इतरत्र श्रूयमाणाः अतिरिक्तधर्माः इतरत्राप्युपसंहार्याः—इति "उपसंहारोऽर्थाभेदात्" इत्यधिकरणे (३-३-५) निर्णीतम्। अनेन न्यायेन ऐतरेयकगतं तैत्तिरीये उपसंहर्तव्यम्। तैत्तिरीयकगतं अग्निः पूर्वरूपमित्यादि ऐतरेयके उपसंहार्यम्। तत्त्वं तु ऐतरेयकतैत्तिरीययोः संहितोपासनायां महद्वैलक्षण्यं दृश्यत [illegible] एवेति **सायणाचार्याः**।

**वायुः सन्धानम्। इत्यधिलोकम्। अथाधिज्यौतिषम्। अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपः सन्धिः। वैद्युतः सन्धानम्। इत्यधिज्यौतिषम्। अथाधिविद्यम्। आचार्यः पूर्वरूपम्॥ २॥**

दर्शनमित्येतद्ग्रन्थसन्निकृष्टमेव व्याख्यास्यामः। पञ्चस्वधिकरणेष्वाश्रयेषु ज्ञानविषयेष्वित्यर्थः। कानि तानीत्याह–अधिलोकं लोकेष्वधि यद्दर्शनं तदधिलोकम्। तथाऽधिज्यौतिषमधिविद्यमधिप्रजमध्यात्ममिति। ता एता पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात्संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिता इत्याचक्षते कथयन्ति वेदविदः। अथ तासां यथोपन्यस्तानामधिलोकं दर्शनमुच्यते। दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र। पृथिवी पूर्वरूपं पूर्वो वर्णः पूर्वरूपम्। संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्येत्युक्तं भवति। तथा द्यौरुत्तररूपमाकाशोऽन्तरिक्षलोकः सन्धिर्मध्यं पूर्वोत्तररूपयोः, सन्धीयेते अस्मिन्पूर्वोत्तररूपे इति॥

वायुः सन्धानम्। संधीयतेऽनेनेति सन्धानम्। इत्यधिलोकं दर्शनमुक्तम्। अथाधिज्यौतिषमित्यादि समानम्।

आनन्दगिरिटीका

तृतीयार्थे विपरिणेया। अधिकरणशब्दश्च विषयपर्यायः। पञ्चभिः पर्यायैः विशेषितं ज्ञानं वर्णेषु वक्तव्यम्। यथा विष्णुदर्शनं प्रतिमायामित्यर्थः। **लोकेष्वधीति**। लोकानधिकृत्योपादाय ध्येयत्वमित्यर्थः। विद्याशब्देन विद्याप्रतिबद्ध आचार्यादिर्विवक्षितः। तथैव प्रजाशब्देन प्रजाप्रतिबद्धः पित्रादिर्विवक्षितः। **अध्यात्ममिति**। आत्मानं भोक्तारमधिकृत्य यद्वर्तते जिह्वादि तद्विवक्षितम्। सर्वत्र तत्तदभिमानिनी देवतैव ग्राह्या। अन्यस्योपास्यत्वासम्भवादिति। विधिशेषमर्थवादमाह—**ता एता इति**। संहितोपनिषदः कर्तव्या इत्युत्पत्तिविधिरुक्तः। कथं कर्तव्या इत्याकाङ्क्षायां विनियोगविधिमाह—**अथ तासामित्यादिना**। कर्तुरेकत्वादनुष्ठेयानां बहुत्वादवश्यंभाविनि क्रमे विशेषनियमार्थोऽथशब्दः "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इतिवत्।

उपप्रदर्श्यन्ते परामृश्यन्ते अधिकारविधिप्रदर्शनाय, यथा षड्यागाः समुच्चिताः फलसाधनमधिकारांशे-

वनमाला

तस्मिन्नित्यर्थः। **ग्रन्थसन्निकृष्टामेवेति**। संहितारूपग्रन्थप्रधानामेवेति यावत्। नन्वधिकरणेष्विति सप्तम्या लोकादिषु संहितादृष्टिविधिरिह विवक्षित इति प्रतीयते; तथा सति लोकानामेव संहितादृष्ट्योपास्यत्वं स्यात्; तच्चोपक्रमोपसंहारविरुद्धम्, "अथातः संहितायाः" इत्युपक्रमे "य एवमेता महासंहिता व्याख्याता वेद" इत्युपसंहारे च संहिताया एवोपास्यत्वावगमादित्याशङ्क्याह—**ज्ञानविषयेष्वित्यर्थ इति**। अधिकरणपदस्य विषयपरत्वोक्तिरुपलक्षणम्; सप्तमी तृतीयार्थपरेत्यपि द्रष्टव्यम्। तथा च लोकाद्यात्मना संहितैवोपास्येति लभ्यते, अतो न विरोध इति भावः। **लोकेष्वधीति**। लोकविषयकमिति यावत्। एवमुत्तरत्रापि। अत्र विधित्सितानामुपासनानां स्तावकं ता महासंहिता इति वाक्यम्। तद्व्याचष्टे—**ता एता इति**। अथाधिलोकमथाधिज्योतिषमित्यादिवाक्यस्थाथशब्दानामर्थमाह—**दर्शनक्रमेति**। अत्रोपासनस्यैकत्वेन कर्तुरेकत्वाल्लोकादिभेदेन प्रयोगभेदाच्चावश्यंभाविनि क्रमे तद्विधानार्था अथशब्दा इत्यर्थः। तत्राद्योऽथशब्द आरम्भार्थः, इतरे तन्निरूपितक्रमार्था इति भावः। उपनिषदः कथं कर्तव्या इत्याकाङ्क्षायामाह—**तासामित्यादिना**। ननु संहितायाः पूर्ववर्णः पृथिवीति कथं सामानाधिकरण्यं तयोर्भेदादित्याशङ्क्याह—**पूर्ववर्ण इति**। "मनो ब्रह्म" इत्यादिवदत्र सामानाधिकरण्यमिति भावः। **मध्यमिति**। पूर्वोत्तररूपे सन्धीयेते अस्मिन्निति व्युत्पत्त्या यत्सन्धिशब्दवाच्यं पूर्वोत्तररूपयोर्मध्यम्, तत्रान्तरिक्षलोकदृष्टिः कर्तव्येत्यर्थः॥

**वायुरिति**। सन्धीयेते पूर्वोत्तररूपे अनेनेति व्युत्पत्त्या सन्धानशब्दवाच्यं यत्संहितारूपम्, तत्र वायुदृष्टिः कर्तव्येत्यर्थः। इदं च क्वचिदुदाहृत्य प्रदर्श्यते—"इषे त्वा" इत्यत्र षकारस्योपरि योऽयमेकारः सोऽयं पृथिवीरूपः; यश्चोपरितनस्तकारः स द्युलोकः; तयोर्वर्णयोर्मध्यदेशोऽन्तरिक्षलोकः; तस्मिन्देशे संहितानिमित्तो द्विर्भविनापादितो योऽन्यस्तकारः स वायुरिति। **समानमिति**। अथाधिज्योतिषम्, अग्निः पूर्वरूपम्, आदित्य उत्तररूपम्, आपः सन्धिः, वैद्युतः सन्धानम्, इत्यधिज्योतिषम्। ज्योतिःशब्देनात्र जहल्लक्षणया आपः संगृहीताः। विद्युदेव वैद्युतः। अथाधिविद्यम्, आचार्यः पूर्वरूपम्, अन्तेवास्युत्तररूपम्, विद्या सन्धिः, प्रवचनं सन्धानम्, इत्यधिविद्यम्। इत्यधिविद्यमित्यत्र विद्याशब्देन आ[illegible]दयो जहल्लक्षणयैव संगृहीता इति बोध्यम्। विद्याशब्दश्चाध्येतव्यग्रन्थपरः। ग्रन्थस्याध्ययनमध्यापनं प्रव[illegible]नम्। अथाधिप्रजम्, माता पूर्वरूपम्, पितोत्तररूपम्, प्रजा सन्धिः, प्रजननं

अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचन ँ् सन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् ।
माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजनन ँ् सन्धानम् । इत्यधिप्रजम् ॥ ३ ॥
अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः ।
जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महास ँ् हिताः । य एवमेता महास ँ् हिता
व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ४ ॥ ५

सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन

इति तृतीयोऽनुवाकः

इतीमा इत्युक्ता उपप्रदर्श्यन्ते । यः कश्चिदेवमेता महासंहिता व्याख्याता वेदोपास्ते । वेदेत्युपासनं स्याद्विज्ञानाधिकारात् "इति प्राचीनयोग्योपास्स्व" इति च वचनात् । उपासनं च यथाशास्त्रं तुल्यप्रत्ययसन्ततिरसङ्कीर्णा चातत्प्रत्ययैः शास्त्रोक्तालम्बनविषया च । प्रसिद्धश्चोपासनशब्दार्थो लोके गुरुमुपास्ते, राजानमुपास्त इति, यो हि गुर्वादीन्सन्ततमुपचरति स उपास्त इत्युच्यते । स च फलमाप्नोत्युपासनस्य । अतोऽत्रापि च य एवं वेद सन्धीयते प्रजादिभिः स्वर्गान्तैः प्रजादिफलान्याप्नोतीत्यर्थः । १०

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

आनन्दगिरिटीका

नाभेदात्, तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्याह—यः कश्चिदित्यादिना । फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय भवति । फलानभिसन्धिना त्वनुष्ठीयमानं ब्रह्मविद्यार्थं भवति । मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वान्मेधाकामस्य जपोऽपि ब्रह्मविद्यार्थो भवति । श्रीविहीनेन सत्त्वशुद्ध्यर्थं यागाद्यनुष्ठातुं न शक्यत इति श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीति महातात्पर्यं विद्यासन्निधिसमाम्नातानां सर्वत्र द्रष्टव्यम् । १५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां तृतीयोऽनुवाकः २०

वनमाला .

सन्धानम्, इत्यधिप्रजमित्यत्र प्रजाशब्दो मात्रादीनपि पूर्ववत्संगृह्णाति । प्रजननं प्रजाया उत्पत्तिः । अथाध्यात्मम्, अधरा हनुः पूर्वरूपम्, उत्तरा हनुरुत्तररूपम्, वाक्सन्धिः, जिह्वा सन्धानम्, इत्यध्यात्मम् । अत्रात्मा देहः, तदवयवविषयमुपासनमध्यात्ममित्यर्थः । एतेषु समानं योजनमित्यर्थः । उपप्रदर्श्यन्त इति । उपसंह्रियन्त इति यावत् । वेदेत्यस्य ज्ञानवाचित्वात्कथं ज्ञानावृत्तिरूपोपासनपरत्वमित्याशङ्क्य तत्साधयति—वेदेत्युपासनं स्यादित्यादिना । विज्ञानाधिकारादिति । उपास्तिप्रकरणादित्यर्थः । तत्र मानमाह—इति प्राचीनेति । यथाशास्त्रमित्यनेन यत्राहंग्रहश्चोदितस्तत्राहंग्रहेण, अन्यत्र तं विनेति विवक्षितम् । तुल्यत्वमेकविषयकत्वम् । अतत्प्रत्ययैरिति । ध्येयान्यगोचरैः प्रत्ययैरित्यर्थः । एकवस्तुगोचरा विच्छेदरहिता प्रत्ययसन्ततिरुपासनमिति निष्कर्षः । ननु सकृत्प्रत्यय एवोपासनमस्तु, किं तदावृत्त्येत्याशङ्क्य क्रियावृत्तावेवोपासनशब्दः प्रसिद्धो लोके, न सकृत्क्रियायाम्, अतोऽत्र वेदेत्यनेन प्रत्ययक्रियावृत्तिरेव लक्षणीयेत्याशयेनाह—प्रसिद्धश्चेत्यादिना । ननु तत्रापि सकृदुपचारक्रियैवोपासनम्; नेत्याह—यो हीति । पृथिवी पूर्वरूपमित्यादिवेदनमात्रात्फलासम्भवादप्युपासनमेवात्र विधेयम्, उपासनस्य तु योग्यतया वक्ष्यमाणं फलं सम्भवति, लोकेऽप्युपासनस्य फलवत्त्वप्रसिद्धेरित्याशयेनाह—स चेति । गुर्वाद्युपासक इत्यर्थः । अतोऽत्रापीति । गुर्वाद्युपासनस्य लोके फलवत्त्वदर्शनात् अत्रापि संहिताविषयेऽपि, य एवं लोकादिदृष्ट्या संहिता उपास्त इत्यर्थः । सन्धीयत इति । सम्बध्यत इत्यर्थः । अत्र फलकामिना क्रियमाणमुपासनं कामितफलाय भवति, फलाभिसन्धिरहितेन तु क्रियमाणं तदेव विद्यासाधनं भवतीति ब्रह्मविद्यासन्निध्याम्नानेन [illegible] इति मन्तव्यम् । २५ ३० ३५

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां तृतीयोऽनुवाकः

## अथ शीक्षावल्ल्यां तृतीयोऽनुवाकः

सूक्ष्मार्थानुप्रवेशाय बहिष्प्रवणचेतसाम् । संहिताविषयं तावत्स्थूलोपासनमुच्यते ॥५४॥
संहितादिनिमित्तं यद्यशस्तन्नौ सहास्त्विति । आचार्यशिष्ययोस्तद्वद्ब्रह्मवर्चसमावयोः ॥५५॥
यशः ख्यातिः प्रकाशः स्याद्वृत्तस्वाध्यायहेतुजम् । ब्रह्मवर्चसमित्याहुस्तेजो यत्तन्निबन्धनम् ॥५६॥
शिष्यस्याऽऽशीरियं ज्ञेया नाऽऽचार्यस्य कृतार्थतः । अनाप्तपुरुषार्थानामाशीर्वादो हि युज्यते ॥५७॥
५ वेदाध्ययनविज्ञानादनन्तरमिदं यतः । नेदीयः संहिताज्ञानमतस्तदभिधीयते ॥५८॥
संहिताविषयं ज्ञानमिहोपनिषदुच्यते । पञ्चाधिकरणां तां तु व्याख्यास्यामोऽधुना स्फुटम् ॥५९॥
अधिलोकमधिज्योतिरधिविद्यमधिप्रजम् । अध्यात्मं चेति लोकादेर्महत्त्वाच्चद्विदो जगुः ॥
ता महासंहिताः सर्वा इति ता य उपासते ॥६०॥

"अधुने"त्यादिभाष्यार्थमाह—सूक्ष्मार्थेति । अध्येतारो हि बहिरेव ग्रन्थप्रवृत्तचित्तास्तेषामर्थज्ञाने सूक्ष्मे
१० बुद्धिप्रवेशसिद्ध्यर्थं संहिता वर्णानां सन्निकर्षस्तद्विषयमुपासनं स्थूलशब्दसंसृष्टमादावुच्यते सन्निधानाच्चात्र स्वशाखा-
संहितैव ग्राह्येत्यर्थः ॥ ५४ ॥

समस्तोपनिषच्छेषः "शं नो मित्र" इत्यादिराशीर्वादः संवृत्तः । संप्रति संहितोपनिषच्छेषमाशीर्वादान्तरं "सह नौ यशः सह नौ ब्रह्मवर्चसमि"ति वाक्याभ्यामुच्यते । तद्व्याचष्टे—संहितादीति ॥ ५५ ॥

यशोब्रह्मवर्चसशब्दयोरर्थभेदं कथयति—यश इति । श्रुतिस्मृत्युक्तकारित्वं वृत्तं, स्वाध्यायश्च नियमाध्ययनं
१५ ताभ्यां जातं यशस्तच्च ख्यातिः प्रकाशश्चेति व्यवह्रियते । ताभ्यामेव हेतुभ्यां जातं त्वग्व्याप्तं तेजो ब्रह्मवर्च-
समिति व्यवहरन्तीत्यर्थः ॥ ५६ ॥

सेयं प्रार्थना शिष्यस्याऽऽचार्यस्य वेत्याकाङ्क्षायां "शिष्यस्य हीत्या"दिभाष्यार्थमाह—शिष्यस्येति । कृतार्थोऽपि कस्मादाचार्यो न प्रार्थयते तत्राऽऽह—अनाप्तेति ॥ ५७ ॥

अथातःशब्दयोरर्थमाह—वेदेति ॥ ५८ ॥

२० आनन्तर्यमथशब्दार्थो हेत्वर्थश्चातःशब्द इत्युक्त्वा संहिताया इत्यादि व्याचष्टे—संहितेति । पञ्च-
स्वधिकरणेष्वित्यस्यार्थमाह—पञ्चेति । पञ्चस्वितिसप्तमी तृतीयार्थे परिणम्यते । अधिकरणशब्दश्च विषयपर्यायः । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु प्रतिमायां विष्णुदृष्टिरिव कर्तव्यमित्यर्थः ॥ ५९ ॥

विषयानेव विविच्य दर्शयति—अधिलोकमिति । लोकानधिकृत्य ध्येयत्वेनोपादायेत्येतज्ज्योतिःशब्दे-
नाग्न्यादिर्गृह्यते विद्याशब्देन विद्याहेतुराचार्यादिर्विवक्षितः । प्रजाशब्देन प्रजाहेतुः पित्रादिरुक्तः । अध्यात्ममित्यात्मानं
२५ भोक्तारमधिकृत्य यज्जिह्वादि प्रवर्तते तदुच्यते । सर्वत्र चात्र तदभिमानिनी देवतैव ग्राह्या ततोऽन्यस्योपास्यत्वा-
सम्भवादित्यर्थः । संहितोपनिषदां महत्त्वं संहितात्वं चार्थवादोक्तमुपपाद्य तासां कर्तव्यत्वमुत्पत्तिविधिना दर्शयति—
लोकादेरिति । लोकादिमहासंहितानां विषयत्वाद्वेदाक्षरसंहिताविषयत्वाच्च महत्त्वं संहितात्वं चोपनिषदां विज्ञेयं ताश्च
कर्तव्या इत्यर्थः । ये चोपनिषत्तात्पर्येणानुवर्तन्ते तेषां वक्ष्यमाणं भवतीति द्रष्टव्यम् ॥ ६० ॥

दृष्टिक्रमविधानार्थास्त्वथशब्दा अमी स्मृताः। लोकादीनधिकृत्योक्तेरधिलोकाद्यतो भवेत् ॥६१॥
पृथिव्यग्निरथाचार्यो माता या चाधरा हनुः। पूर्वं स्यात्संहितारूपं दिवादित्याद्यथोत्तरम् ॥६२॥
पूर्वो वर्णः पूर्वरूपमुत्तरश्चोत्तरं स्मृतम् ॥६३॥
संहिताया इति ज्ञेयं ततोऽन्या काऽत्र संहिता। सन्धिः स्यान्मध्यमं छिद्रमाकाशादिस्तथैव च ॥६४॥
सन्धत्ते येन सन्धानं वाय्वादिरिह कीर्त्यते। इतीमा इति वाक्येन प्रदर्श्यन्ते यथोदिताः ॥६५॥ ५
वेदोपास्ते तु यस्त्वेताः फलं तस्येदमुच्यते। शास्त्रार्पितधियोपेत्य ह्यातादात्म्याभिमानतः॥
चिरासनं भवेदर्थे तदुपासनमुच्यते ॥६६॥
सन्धीयतेऽसौ स्वर्गान्तैः प्रजादिभिरसंशयम्। महतीः संहिता वेद यो यथोक्ताः समाहितः ॥६७॥

इति तृतीयोऽनुवाकः

अथाधिलोकमित्यादौ सर्वत्राथशब्दाः सन्ति तेषामर्थमाह—दृष्टीति। कर्तुरेकत्वादनुष्ठेयानां बहुत्वादवश्यं- १० भाविनि क्रमे हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इतिवत्तद्विशेषनियमार्था वाक्येष्वथशब्दा इत्यर्थः। अधिलोकादिशब्दवाच्यत्वं कथमुपासनानामित्याशङ्क्याऽऽह—लोकादीनिति ॥ ६१ ॥

संहिताया यत्पूर्वमक्षरं तत्र पृथिवीदृष्टिरग्निदृष्टिराचार्यदृष्टिर्मातृदृष्टिरधराहनुदृष्टिश्च कर्तव्येतिविनियोगविधिं दर्शयति—पृथिवीति। यच्चोत्तरं संहिताक्षरं तत्र द्युलोकदृष्टिरादित्यदृष्टिरन्तेवासिदृष्टिः पितृदृष्टिरुत्तराहनुदृष्टिश्च कर्तव्येत्याह—दिवेति ॥ ६२ ॥

के ते पूर्वोत्तरे संहिताया रूपे यत्र पृथिव्यादिदृष्टिरित्याशङ्क्याऽऽह—पूर्व इति। उक्ताक्षरातिरेकेण संहिता- १५ रूपस्य दुर्निरूपत्वमाह—तत इति। अक्षरयोर्मध्यमं छिद्रं सन्धिस्तत्र च पूर्ववदाकाशदृष्टिर्जलदृष्टिर्विद्यादृष्टिः प्रजादृष्टिर्वाग्दृष्टिश्च कर्तव्येत्याह—सन्धिरिति ॥ ६३-६४ ॥

पूर्वोत्तराक्षरयोः सम्बन्धहेतुर्यत्तद्विशेषः सन्धानं तत्र वायुदृष्टिर्विद्युद्दृष्टिः प्रवचनदृष्टिः प्रजननेन्द्रियदृष्टिर्जिह्वादृष्टिश्च कार्येत्याह—सन्धत्त इति। इत्थं संहितोपासनप्रकारा उक्ता इति विनियोगविधि"मितीमा" इति- २० वाक्यार्थकथनेनोपसंहरति—इतीमा इति ॥ ६५ ॥

यथा दर्शादयः षड्यागाः समुच्चित्य फलसाधनमधिकारांशेनाभेदात्तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्यधिकारविधिं "य एवमेता" इत्यादिवाक्यस्यार्थकथनेन कथयति—वेदेति। प्रजादि स्वर्गान्तमिदमा परामृश्यते। उपासनशब्दार्थमाह—शास्त्रेति। श्रुतिस्मृतिसिद्धेऽर्थे तदीयं साक्षात्करणं यावदुत्पद्यते तावद्विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययसन्ततिकरणमुपासनमित्यर्थः ॥ ६६ ॥ २५

फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय सम्पद्यते फलानभिसन्धिना त्वनुष्ठीयमानं तदेव ब्रह्मविद्यार्थं भवतीत्यभिप्रेत्य वेदोपास्ते यस्त्वित्यादिनोक्तं प्रपञ्चयति—सन्धीयत इति ॥ ६७ ॥

इति तृतीयोऽनुवाकः



## अथ शीक्षावल्ल्यां चतुर्थोऽनुवाकः

**यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्संबभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय। आवहन्ती वितन्वाना॥ १॥**

यश्छन्दसामिति। मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनजपहोमावुच्येते "स मेन्द्रो मेधया स्पृणोतु"
५ "ततो मे श्रियमावह" इति च लिङ्गदर्शनात्[1]। यश्छन्दसां वेदानामृषभ इवर्षभः प्राधान्यात्। विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेः, "तद्यथा शङ्कुना" इत्यादिश्रुत्यन्तरात्। अत एवर्षभत्वमोङ्कारस्य। ओङ्कारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैवोङ्कारस्य। छन्दोभ्यो वेदेभ्यो वेदा ह्यमृतं तस्मादमृतादधिसम्बभूव। लोकदेववेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओङ्कारः सारिष्ठत्वेन प्रत्यभादित्यर्थः। न हि नित्यस्योङ्कारस्याञ्जसैवोत्पत्तिरवकल्पते। स एवंभूत ओङ्कार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु
१० बलयतु वा। प्रज्ञाबलं हि प्रार्थ्यते। अमृतस्यामृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य तदधिकारात्, हे देव धारणो धारयिता भूयासं भवेयम्। किञ्च शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतत्। भूयादिति प्रथमपुरुषविपरिणामः।

### आनन्दगिरिटीका

अवान्तरतात्पर्यमभिप्रेत्याह—**यश्छन्दसामित्यादिना**। सम्बभूवेति जन्मवाचके पदे श्रूयमाणे किर्मित "प्रजापतिर्लोकानभ्यतपत्" इत्यादिश्रुत्यन्तरानुसारेणाऽऽत्मज्ञानयोग्यकार्यश्रेष्ठत्वेन प्रतिभानं व्याख्यायते तत्राऽऽह—
१५ **न हीति। पुरुषविपरिणाम इति।** भूयासमित्युत्तमपुरुषस्य प्रकृतस्य प्रथमपुरुषत्वेन विपरिणामः कर्तव्य इत्यर्थः।

### वनमाला

ननु यश्छन्दसामित्यादयो मन्त्राः किमर्थमाम्नायन्ते? तत्राह—**मेधेति**। मेधाकामस्य मेधाप्राप्तिसाधनं जप उच्यते, श्रीकामस्य श्रीप्राप्तिसाधनं होम उच्यत इति विभागः। एवं तात्पर्यवर्णने कारणमाह—**स मेन्द्र इत्यादिना। ऋषभ इति।** गवां मध्ये प्रधानत्वाद्यथा ऋषभः श्रेष्ठः, तथा वेदानां मध्ये प्रणवः श्रेष्ठः प्राधान्या-
२० दित्यर्थः। ननु कथमोङ्कारस्य सर्वरूपत्वमित्याशङ्क्याह—**सर्ववाग्व्याप्तेरिति**। शब्दमात्रे कृत्स्नस्याभिधेयस्यान्तर्भाव "तस्य वाक्तन्तिः" इत्यादिश्रुत्युक्तं सिद्धं कृत्वा तस्य सर्वशब्दात्मकत्वे प्रमाणमाह—**तद्यथेति**। "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक्सन्तृण्णा" इति श्रुत्यन्तरम्। तस्य चायमर्थः—यथा लोके अश्वत्थपर्णानि शङ्कुशब्दवाच्येन स्वगतशलाकाविशेषेण व्याप्तानि, तद्वदोङ्कारेण सर्वा शब्दात्मिका वाग्व्याप्तेति। **अत एवेति।** विश्वरूपत्वाच्च तस्य श्रेष्ठत्वमित्यर्थः। नन्वोङ्कारस्यात्र स्तुतिरन्याय्या; नेत्याह—**ओङ्कारो ह्यत्रेति**।
२५ अस्यां संहितोपनिषद्योङ्कारस्य "ओमिति ब्रह्म" इत्यत्रोपासनं प्रसिद्धमिति हिशब्दार्थः। ओङ्कारस्य सर्ववेदेषु प्राधान्यं कुत इत्याशङ्क्य तद्धेतुप्रदर्शनपरं छन्दोभ्य इति वाक्यं व्याचष्टे—**वेदेभ्य इत्यादिना**। अमृतादिति वेदविशेषणं "वेदा ह्यमृताः" इति श्रुत्यन्तरात्, एकवचनं च च्छान्दसमित्याशयेनाह—**वेदा ह्यमृतमिति**। वेदानाममृतत्वं नित्यत्वम्, तच्चावान्तरप्रलये नाशाभावरूपं विवक्षितम्। न त्वात्यन्तिकं नित्यत्वमस्ति वेदानाम्; कल्पादौ सृष्टिश्रवणात्, महाप्रलये नाशाभ्युपगमाच्च। इदं च देवताधिकरणे विस्तरेण निरूपितं तत्रैव द्रष्टव्यम्। सम्बभू-
३० वेत्यस्यार्थमाह—**लोकदेवेति**। **सारिष्ठमिति**। सारतममित्यर्थः। तथा च श्रुतिः—"प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या [illegible]म्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः सुवरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत्" इति। अभ्यतपत् सारजिघृक्षया पर्यालोचितवानित्यर्थः। त्रयो वेदास्त्रयी विद्या। यद्यप्यस्यां श्रुतौ लोकानन्तरं देवा न श्रूयन्ते, तथापि "प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान्प्राबृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां
३५ रसान्प्राबृहत्" इत्यत्र देवा [illegible] श्रूयन्त इत्यभिप्रेत्य देवग्रहणमिति मन्तव्यम्। प्राबृहत् गृहीतवान्, सारत्वेन ज्ञातवानित्यर्थः। ननु सम्बभूवेति पदं जन्मपरत्वेनैव कुतो न व्याख्यायते? तत्राह—**न हीति। नित्यस्येति।**

---

१. एतेनैतेषां [illegible] लिङ्गकल्प्य एव विनियोग इत्युक्तं भवति।

**कुर्वाणा चीरमात्मनः। वासाꣳसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा। आमायन्तु ब्रह्मचारिणः स्वाहा। विमायन्तु ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा॥ २॥**

जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणीत्यर्थः। कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं श्रोता भूयासमित्यर्थः। आत्मज्ञानयोग्यः कार्यकारणसङ्घातोऽस्त्विति वाक्यार्थः। मेधा च तदर्थमेव हि प्रार्थ्यते। ५ ब्रह्मणः परमात्मनः कोशोऽसि। असेरिवोपलब्ध्यधिष्ठानत्वात्। त्वं हि ब्रह्मणः प्रतीकं त्वयि ब्रह्मोपलभ्यते। मेधया लौकिकप्रज्ञया पिहितः आच्छादितः स त्वं सामान्यप्रज्ञैरविदिततत्त्व इत्यर्थः। श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं मे गोपाय रक्ष। तत्प्राप्त्यविस्मरणादिना। जपार्था एते मन्त्रा मेधाकामस्य। होमार्थास्त्वधुना श्रीकामस्य मन्त्रा उच्यन्ते। आवहन्त्यानयन्ती। वितन्वाना विस्तारयन्ती तनोतेस्तत्कर्मत्वात्। कुर्वाणा निर्वर्तयन्ती। अचीरमचिरं क्षिप्रमेव। छान्दसो दीर्घः। चिरं वा कुर्वाणा। १०

आनन्दगिरिटीका

अचेतनशब्दं प्रति प्रार्थना कथं? कथं चेन्द्रशब्देनाभिधानमित्याशङ्क्य ब्रह्माभेदविवक्षयेत्यभिप्रेत्याऽऽह—**ब्रह्मण इति**। ब्रह्माभेदेन प्रार्थितदाने समर्थश्चेदोङ्कारः किमिति सर्वैर्नोपास्यत इत्याशङ्क्याऽऽह—**मेधयेति**। **लौकिकप्रज्ञयेति**। शालग्रामादिष्विव देवताबुद्ध्येत्यर्थः। नैतेष्वार्षेयादि मृग्यं ब्राह्मणोत्पन्नत्वात्।

वनमाला १५

अवान्तरप्रलयावस्थायिन इत्यर्थः। प्रणवस्य वेदान्तर्भूतत्वेन वेदसमानयोगक्षेमस्य वेदेभ्यः सकाशान्मुख्यं जन्म न हि सम्भवतीत्याशयः। परमेश्वर इत्यस्य विवरणं सर्वकामेश इति। ननु मेधाप्रदानेन तत्प्रीणनं तात्कालिकप्रीतिसम्पादनं न तद्विद्याकामस्य विवक्षितं प्रयोजनमित्यस्वरसादाह—**बलयतु वेति**। अत्र विद्याकामस्यापेक्षां दर्शयति—**प्रज्ञाबलं हीति**। प्रज्ञात्र मेधाशब्दार्थः। सा च ग्रन्थतदर्थधारणशक्तिः, सैव बलम्। प्रज्ञाबलस्य च "नायमात्मा बलहीनेन लभ्यः" इति श्रुतिसिद्धं विद्यासाधनत्वं द्योतयितुं हिशब्दः। **तदधिकारादिति**। अमृतशब्दमुख्यार्थस्य ब्रह्मणो २० धारणासम्भवादमृतशब्देन मुख्यार्थादन्यदेव किञ्चिल्लक्षणीयम्; तच्चामृतशब्दितब्रह्मप्राप्तिसाधनं ब्रह्मज्ञानमेव वक्तव्यम्, तत्साधनप्रज्ञाप्रार्थनेन तस्यैव बुद्धिस्थत्वादित्यर्थः। **पुरुषविपरिणाम इति**। उत्तमपुरुषत्वेन पूर्वत्र प्रयुक्तस्य भूयासमित्यस्य भूयादिति प्रथमपुरुषत्वेनात्र व्यत्यासः कर्तव्य इत्यर्थः। **मधुरभाषिणीति**। भूयादित्यनुषङ्गः। ननु चक्षुरादेरपि ज्ञानं प्रत्यानुकूल्यं कुतो न प्रार्थ्यते? प्रार्थ्यत एवेत्याशयेन शरीरं मे विचर्षणमित्यादेर्विवक्षितमर्थमाह—**आत्मज्ञानेति**। कार्यं स्थूलशरीरम्, करणानि चक्षुरादीनि, तेषां सङ्घातः समुदाय इत्यर्थः। ननु सङ्घातनिष्ठा २५ योग्यता चेदात्मज्ञानस्य प्रार्थ्यते, किमर्थं तर्हि मेधा प्रार्थ्यते? तत्राह—**मेधा चेति**। रोगादिप्रतिबन्धरहितस्य जितेन्द्रियस्यापि मेधां विनाऽऽत्मज्ञानासम्भवात्सापि प्राधान्येनात्मज्ञानार्थमेव प्रार्थ्यत इत्यर्थः। आत्मज्ञानं प्रति प्रज्ञायाः प्रकृष्टसाधनत्वद्योतनार्थो हिशब्दः। अत्राचेतनस्याप्योङ्कारस्य ब्रह्माभेदेन प्रार्थितदाने सामर्थ्यमवगन्तव्यम्। ननु कथं तस्य ब्रह्माभेदः? तत्प्रतीकत्वादिति ब्रूमः। कथं तस्य तत्प्रतीकत्वम्? तत्राह—**ब्रह्मणः परमात्मन इति**। नन्वसिं प्रति प्रसिद्धकोशस्येव ब्रह्म प्रति प्रणवस्य स्वस्मिन्नन्तर्भावयितृत्वरक्षकत्वादेरभावान्न मुख्यं कोशत्वमस्ति; ३० तत्राह—**उपलब्धीति**। यथासिः कोशे उपलभ्यते तथा ओङ्कारे ब्रह्मोपलभ्यते; ततश्चोपलब्धिस्थानत्वसाम्यात्कोशशब्दो गौण ओङ्कार इत्यर्थः। तदेव साम्यं विवृणोति—**त्वं हीति**। तस्य ब्रह्मप्रतीकत्वे अत्यन्तरप्रसिद्धिद्योतनार्थो हि-शब्दः। प्रतीकमिति। दृष्ट्यालम्बनमित्यर्थः। ब्रह्मदृष्टिफलमाह—**त्वयीति**। उपलब्धिः साक्षात्कारः। ननु यद्योङ्कारः प्रार्थितफलदाने समर्थस्तर्हि किमिति स सर्वैर्नोपास्यत इति शङ्कावारणार्थं मेधया पिहित इति वाक्यम्। तद्व्याचष्टे—**मेधयेत्यादिना**। ननु शास्त्राजनिता प्रज्ञा लौकिकप्रज्ञा, तस्याः केशं श्रीठारेरिव पिधायकत्वमित्याशङ्क्यात्र विवक्षितं पिधानं कथयति—**स त्वमिति**। उक्तलौकिकप्रज्ञामात्रयुक्ताः सामान्यप्रज्ञाः, स त्वं सामान्यप्रज्ञैरविदितमहिमासि; तस्मात्त्वं न सर्वैरुपास्यस इत्यर्थः। श्रवणपूर्वकमात्मज्ञानादिलक्षणं विज्ञानं श्रुतम्, तत्प्राप्त्यविस्मरणादिना गोपायेति योजना। प्रथमादिपदेन मननजनितं ज्ञानं संगृह्यते। द्वितीयादिपदेन रागादिलक्षणप्रतिबन्ध- ३५

**यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ ३ ॥**

५ वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु सर्वतः स्वाहैकं च

इति चतुर्थोऽनुवाकः

आत्मनो मम, किमित्याह—वासांसि वस्त्राणि मम गावश्च गाश्चेति यावत् । अन्नपाने च सर्वदैवमादीनि कुर्वाणा श्रीर्या तां ततो मेधानिर्वर्तनात्परमावहाऽऽनय । अमेधसो हि श्रीरनर्थायैवेति । किंविशिष्टाम् । लोमशामजाव्यादियुक्तामन्यैश्च पशुभिः संयुक्तामावहेति । अधिकारादोङ्कार एवाभिसम्बध्यते । स्वाहा, स्वाहाकारो होमार्थ-
१० मन्त्रान्तज्ञापनार्थः। आ मा यन्तु आयन्तु मामिति व्यवहितेन सम्बन्धः। ब्रह्मचारिणो विमाऽऽयन्तु प्रमाऽऽयन्तु दमायन्तु शमायन्त्वित्यादि ।

यशो यशस्वी जने जनसमूहेऽसानि भवानि । श्रेयान्प्रशस्यतरो वास्यसो वसीयसो वसुतराद्वसुमत्तराद्वाऽसानीत्यन्वयः । किञ्च तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन्पूजावन्प्रविशानि प्रविश्य चानन्यस्त्वदात्मैव भवानीत्यर्थः । स त्वमपि मा मां भग भगवन्पूजावन्प्रविशाऽऽवयोरेकत्वमेवास्तु । तस्मिंस्त्वयि सहस्रशाखे बहुभेदे
१५

आनन्दगिरिटीका

"वस निवासे, वस आच्छादने" इति धातुद्वयादुप्रत्ययः शीलेऽर्थे। वसुर्वसनशीलः। पराच्छादनशीलो वा वसुः।

वनमाला

निवृत्तिः संगृह्यते । तदुक्तं वार्तिके—"रागद्वेषादिहेतुभ्यः श्रुतं गोपाय मे प्रभो" इति । **तत्कर्मत्वादिति** । तनोतेर्धातोस्तदर्थकत्वादित्यर्थः । **ममेति** । ममान्नपानादिकं सर्वमानयन्ती सर्वदा सम्पादयन्ती तथा सम्पादितं सर्वं
२० विस्तारयन्ती वर्धयन्ती वर्धितं सर्वं चिरं दीर्घकालं कुर्वाणा वर्तयन्ती, यथा विनष्टं न भवति तथा कुर्वतीति यावत् । अचिरमिति च्छेदः सम्भावनामात्रेण । दैर्घ्यं छान्दसम् । **किमित्याहेति** । किमावहन्तीत्याकाङ्क्षायामाहेत्यर्थः । अत्रावहन्तीत्यादिपदत्रयं श्रियो विशेषणम् । नन्वावहन्तीत्यादिपदत्रयस्य प्रथमान्तस्य, द्वितीयान्तस्य श्रीपदस्य च कथं विशेषणविशेष्यभावेनान्वयं इत्याशङ्क्याध्याहारेण योजयति—**श्रीर्या तामिति** । तामावहेत्युत्तरेणान्वयः । ततो मे श्रियमित्यत्र तत इत्यस्य व्याख्या मेधानिर्वर्तनात्परमिति । ननु मेधानिष्पत्त्यनन्तरमेव
२५ किमिति श्रीः प्रार्थ्यते ? तत्राह—**अमेधसो हीति** । प्रज्ञाहीनस्यापात्रव्ययादिना धनादिकमनर्थायैवेत्येतत्प्रसिद्धम्; अतो मेधानन्तरमेव श्रीः प्रार्थ्यत इत्यर्थः। **किंविशिष्टां चेति**। पुनश्च किंविशिष्टामित्यर्थः। अजादीनां लोमशत्वात्तद्रूपा श्रीर्लोमशेति भावः । श्रियमावहेति कः सम्बोध्यते ? तत्राह—**अधिकारादिति** । सन्निधानादित्यर्थः । ओङ्कारस्य प्रार्थितश्रीप्रदाने योग्यतासूचनार्थो हिशब्दः । मेधाविनः श्रीयुक्तस्य विद्याप्रदानाय शिष्यप्राप्तिप्रार्थनामन्त्रः आ मा यन्त्विति। तं व्याचष्टे—**आयन्तु मामिति** । स्वस्याचार्यत्वप्रयुक्तकीर्तिप्रार्थनामन्त्रो "यशोजन" इति । तं व्याचष्टे—
३० **यशस्वीति** । "वस निवासे" "वस आच्छादने" इति धातुद्वयादुप्रत्ययः शीलार्थे । वेश्मसु वसनशीलः पराच्छादनशीलो वा वसुः, अतिशयेन वसुर्वसीयान्, तस्माद्वसीयसः । ईलोपश्छान्दसः । यद्वा धनवाचिना वसुशब्देन वसुमाल्लँक्ष्यते; तथा चातिशयेन वसुमान्वसुमत्तरः, तस्मादित्यर्थं इत्याशयेनाह—**वसुमत्तराद्वेति** । **तेष्विति** । वसीयःसु वसुमत्तरेषु वेत्यर्थः। विद्यातत्साधनप्रार्थनानन्तरं विद्याफलप्रार्थनां दर्शयति—**किं चेति** । नन्वत्र विदुषो ब्रह्मरूपे प्रणवे मुख्यप्रवेशासम्भवाद[illegible]स्मीति ज्ञानमेव तस्य तस्मिन्प्रवेशत्वेन विवक्षणीयम् । तस्य चामृतस्य
३५ देव धारणो भूयासमित्यनेनैव प्र[illegible]त्वात्पुनरुक्तिः स्यादित्याशङ्क्य तात्पर्यमाह—**प्रविश्य चेति** । वाक्यद्वयस्य विवक्षितमर्थं संक्षिप्याह—**आवयोरिति** । भेदहेतुमज्ञानं नाशयेत्यर्थः; तयोरेकत्वस्य स्वतः सिद्धत्वादिति मन्तव्यम् । **बहुभेद इति** । शिवविष्णवाद्य[illegible]कमूर्त्युपेते त्वयि पापं नाशयामि, त्वन्मूर्तिभजनेन पापं नाशयामीति यावत् । यदुक्तं

निमृजे शोधयाम्यहं पापकृत्याम् । यथा लोक आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति । यथा च मासा अहर्जरं संवत्सरोऽहर्जरः । अहोभिः परिवर्तमानो लोकाञ्जरयतीत्यहानि वाऽस्मिञ्जीर्यन्त्यन्तर्भवन्तीत्यहर्जरः । तं च यथा मासा यन्त्येवं मां ब्रह्मचारिणो हे धातः सर्वस्य विधातः, मामायन्त्वागच्छन्तु सर्वतः सर्वदिग्भ्यः । प्रतिवेशः श्रमापनयनस्थानमासन्नगृहमित्यर्थः । एवं त्वं प्रतिवेश इव प्रतिवेशस्त्वच्छीलिनां सर्वपापदुःखापनयनस्थानमसि, अतो मा मां प्रति प्रभाहि प्रकाशयाऽऽत्मानं प्रमापद्यस्व प्रपद्यस्व च मां रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः । श्रीकामोऽस्मिन्विद्याप्रकरणेऽभिधीयमानो धनार्थः धनं च कर्मार्थं कर्म चोपात्तदुरितक्षयाय तत्क्षये हि विद्या प्रकाशते । तथा च स्मृतिः— ५

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥" इति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्ली चतुर्थोऽनुवाकः[1] १०

आनन्दगिरिटीका.

अतिशयेन वसुर्वसीयांस्तस्माद्वसीयसः । ईलोपश्छान्दसः । वसुमान्वसुशब्देन लक्ष्यत इत्यभिप्रेत्याऽऽह—वसुमत्तराद्वेति । पूर्वोक्तस्य प्रयोजनमाह—किञ्चेति । यदुक्तं "ब्रह्मचारिणो मामायन्तु" इति तत्र दृष्टान्तमाह—यथेति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां चतुर्थोऽनुवाकः १५

वनमाला

ब्रह्मचारिणो मामायन्त्विति, तदेव दृष्टान्तेन प्रपञ्चयति—यथेति । अतो मामिति । त्वन्निष्ठायाः संसारश्रमापनयनस्थानत्वात्तदपनयाय मां प्रति स्वात्मानं तत्त्वतः प्रकाशयेत्यर्थः । आदरसूचनार्थमुक्तज्ञानं पुनः प्रार्थयित्वा मुक्तिमपि तदर्थमेव पुनः प्रार्थयते—प्रपद्यस्व चेति । रसविद्धो लोहो रसमयो भवति, तद्वन्मां त्वन्मयं कुर्वित्यर्थः । विद्यासन्निधौ श्रुतस्य श्रीकामस्य प्रणाड्या विद्यायामुपयोगं दर्शयति—श्रीकामोऽस्मिन्नित्यादिना । विद्या प्रकाशत इति । प्रकाशतेऽभिव्यज्यते, उत्पद्यत इति यावत् । यथा आदर्शतले निर्मले प्रतिबिम्बं स्फुटं पश्यति, तथा पापक्षयेण निर्मलादर्शतलतुल्येऽन्तःकरणे ब्रह्मात्मानं पश्यतीति स्मृतेरुत्तरार्धार्थः । २०

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां चतुर्थोऽनुवाकः

---

१. शान्तिरत्नाकरोक्तः आवहन्तीहोमप्रकारः—आवहन्तीमन्त्रस्य माहाचमस्य ऋषिः महाविराट् छन्दः अन्नपूर्णभवानीदेवता । अन्नसमृद्ध्यर्थे आवहन्तीहोमे विनियोगः मन्त्रैरेवाङ्गन्यासकरन्यासौ । ध्यानम्— २५
अर्काभामरुणाम्बरावृततनूमानन्दपूर्णाननां मुक्ताहारविभूषितां कुचभराक्रान्तां सकाञ्चीगुणाम् ।
देवीं दिव्यरसान्नपूर्णकरकामंभोजदर्वीकरां ध्यायेच्छङ्करवल्लभां त्रिणयनामम्ब प्रलम्बालकाम् ॥
इति ध्यात्वा अग्निं प्रतिष्ठाप्यादौ चतस्रः औदुम्बरसमिधः जुहोति—शरीरं+स्वाहा, जिह्वा मे+स्वाहा, कर्णाभ्यां+स्वाहा, ब्रह्मणः कोशोऽसि+स्वाहा । सर्वत्रान्नपूर्णाभवान्या इदं न मम्म । ततोऽन्नत्र-होमाः (४) आवहन्ती+श्रियमावह स्वाहा (१) आवहन्ती+पशुभि[illegible] स्वाहा (२) आमायन्तु+ ३०
स्वाहा (३) यशोजने+स्वाहा इत्यादि अनुवाकान्तस्वाहामन्त्रैः होमाः [illegible]र्याः । अन्ते प्रतिवेशोऽसि+पद्यस्वेति प्रार्थना कार्या ।

## अथ शीक्षावल्ल्यां चतुर्थोऽनुवाकः

यश्छन्दसामितिज्ञानं मेधाकामस्य भण्यते । आवहन्तीति तद्वत्स्याच्छ्रीकामस्येह लिङ्गतः ॥६८॥
छन्दःशब्दास्त्रयो वेदास्तत्प्रधानत्वकारणात् । ऋषभो विश्वरूपश्च सर्ववाग्व्याप्तिकारणात् ॥६९॥
अमृतेभ्योऽसौ वेदेभ्यः प्रतिभातः प्रजापतेः । ओंकारस्य हि नित्यत्वान्नाञ्जसोत्पत्तिरुच्यते ॥७०॥
ओंकारः सर्वकामेशः स इन्द्रः परमेश्वरः । मेधया प्रज्ञया मां स स्पृणोतु प्रीणयत्विति ॥७१॥
५ अमृतत्वैकहेतोः स्यामात्मज्ञानस्य धारणः ॥७२॥
विचक्षणं च मे भूयाच्छरीरं देव सर्वदा । मनः प्रह्लादिनी मे स्याज्जिह्वा मधुरभाषिणी ॥७३॥
कर्णाभ्यां चैव वेदार्थं भूरि विश्रृणुयामहम् । ब्रह्मणश्चासि कोशस्त्वमसेरिव परात्मनः ॥७४॥
अपविद्धैषणा यस्मात्त्वयि पश्यन्ति तत्परम् । अभिधानप्रतीकत्वद्वारेणास्योपलब्धये ॥
त्वमेव हेतुतां यासि तस्मात्कोशस्त्वमुच्यसे ॥७५॥

१० "यश्छन्दसामि"त्यारभ्य "श्रुतं मे गोपाये"त्यन्तस्य ग्रन्थस्य तात्पर्यमाह—यश्छन्दसामिति । तेन हि ज्ञान-मोङ्कारोपासनमधिकृत्य जपो मेधाकामस्योच्यते—"स मेन्द्रो मेधया स्पृणोत्वि"ति लिङ्गान्मेधाहीनेन ब्रह्मणोऽवगन्तुम-शक्यत्वात्तत्कामस्य जपोऽपि ब्रह्मविद्यार्थो भवतीत्यर्थः—आवहन्तीत्यारभ्यानुवाकसमाप्त्यन्तस्य ग्रन्थस्य तात्पर्य-माह—आवहन्तीति । यथा जपो मेधाकामस्याभिधीयते तथैवाऽऽवहन्तीत्यादिना सर्वेणानुवाकेन श्रीकामस्य होमो विवक्षितः स्यात्ततो मे श्रियमावहेति लिङ्गात् । न हि श्रीविहीनेन चित्तशुद्ध्यर्थं यागाद्यनुष्ठातुं शक्यते ततः १५ श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीत्यर्थः ॥ ६८ ॥

वेदत्रयं छन्दःशब्दवाच्यं तस्मिन्वेदत्रये प्रधानत्वमोङ्कारस्यास्ति तस्मादेव कारणादृषभशब्दादोङ्कारो गृह्यते। "तद्यथा शङ्कुने"त्यादिश्रुतेरोङ्कारस्य सर्वात्मकत्वश्रवणाद्विश्वरूपश्चासावितिपदत्रयस्यार्थमाह—छन्दःशब्दा इति ॥६९॥

छन्दोभ्योऽधीत्यादेरर्थमाह—अमृतेभ्य इति । अमृतादिति पदमपि बहुवचनसामानाधिकरण्याद्बहुवचनत्वेन योज्यते। सम्बभूवेति जन्मवाचके पदे श्रूयमाणे किमिति "प्रजापतिर्लोकानभ्यतपदि"त्यादिश्रुत्यन्तरमनुसृत्य श्रेष्ठत्वेन २० प्रतिभानं व्याख्यायते तत्राऽऽह—ओङ्कारस्येति ॥ ७० ॥

"समेन्द्रो मेधये"त्यादेरर्थमाह—ओङ्कार इति ॥ ७१ ॥

अमृतस्येत्यादावमृतशब्देनामृतहेतुत्वादात्मज्ञानमुच्यते तस्याहं त्वत्प्रसादाद्धारयिता स्यामिति प्रार्थनान्तर-माह—अमृतत्वेति ॥ ७२ ॥

"शरीरं मे विचर्षणमि"त्यस्यार्थमाह—विचक्षणं चेति । "जिह्वा मे मधुमत्तमे"त्यस्यार्थमाह—मन इति । २५ यदि हि शरीरपाटवं न स्यात्तदा मेधाफलस्याऽऽत्मज्ञानस्य सिद्ध्यर्थं श्रवणाद्यनुष्ठानयोग्यता न मे सिध्येत् । यदि च मदीयं वागिन्द्रियं परुषभाषणे व्याप्रियेत तदा ज्ञानोपदेष्टर्यपि तत्सम्भवान्न मे ज्ञानं सम्भवेदतस्तदुभयं प्रार्थ्यते मुमुक्षुणेत्यर्थः ॥ ७३ ॥

"कर्णाभ्यामि"त्यादेरर्थमाह—कर्णाभ्यामिति । ओङ्कारस्य शब्दमात्रत्वेनाचेतनत्वात्कथं मेधादिप्रदाने सामर्थ्यं कथं चेन्द्रशब्दवाच्यत्वमित्याशङ्क्याऽऽह—ब्रह्मणश्चेति । ओङ्कारस्य ब्रह्मोपलब्धिस्थानत्वेन ब्रह्मसन्निकर्षात्तत्र ३० सर्वमुपपन्नमित्यर्थः ॥ ७४ ॥

ब्रह्मकोशत्वमोङ्कारस्य [illegible]धयति—अपविद्धेति । त्वयीति सप्तमी निमित्तार्था । कथमोङ्कारं निमित्तीकृत्य विरक्ता मुमुक्षवो ब्रह्म पश्यन्तीत्य[illegible]क्षायामाह—अभिधानेति ॥ ७५ ॥

लौकिकप्रज्ञया यस्मान्मेधया पिहितस्ततः । नोपासते पराक्चित्तास्त्वां देवममृतप्रदम् ॥७६॥

रागद्वेषादिहेतुभ्यः श्रुतं गोपाय मे प्रभो ॥७७॥

येन श्रुतेन सम्पन्नस्त्वामेव प्रविशाम्यहम् । प्रापयन्त्यावहन्तीति विस्तारार्थोत्तरा क्रिया ॥७८॥

कुर्वाणामुभयं देव चिरमावह मे श्रियम् । ततो वेदार्थविज्ञानादन्नपानान्तदायिनीम् ॥७९॥

लोमशां पशुभिर्युक्तां प्रत्येकं सर्वदेति च । मन्त्रान्तज्ञापनार्थाय स्वाहाकारोऽयमुच्यते ॥८०॥ ५

तथैव चोत्तरत्रापि स्वाहा तत्सम्भवाद्भवेत् । दैवेन मानुषेणैव वित्तेनाऽमुत्रिकैहिकम् ॥

कर्म कर्तुमलं यस्मात्प्रार्थ्यते तेन तद्द्वयम् ॥८१॥

आयन्तूद्दिश्य मां सर्वे अधीतिश्रवणार्थिनः ॥८२॥

प्रकृष्टयर्थं प्रमायन्तु यत्नतो ब्रह्मचारिणः । संभूय कोटिशश्चैव मामेवाऽऽयन्तु सत्वराः ॥८३॥

जनेऽसानि यशश्चेति पूर्वस्यैतत्प्रयोजनम् । वस्यसोऽहं सकाशाच्च श्रेयान्स्यां गुणतोऽधिकः॥ १०

वसीयसो वस्यस इतीलोपश्छान्दसो भवेत् ॥८४॥

ईयसुन्वस्तुर्वा स्यात्स्याद्वा वसुमतः परः । अभीष्टोऽतिशयो यस्मात्सजातीयाद्गुणोन्नतेः ॥८५॥

ब्रह्माभेदेन मुमुक्षूणामपेक्षितमेधादिदाने चेदोङ्कारः सामर्थ्यमश्नुते तर्हि किमिति सर्वैरेव मेधार्थिभिरसौ नोपास्यते तत्राऽऽह—लौकिकेति । विषयाभिनिवेशो लौकिकप्रज्ञा ॥ ७६ ॥

"श्रुतमि"त्यादेरेर्थमाह-रागद्वेषादीति। ज्ञानसाधनं श्रवणादिकमनुतिष्ठतो मे यथा रागादि ज्ञानप्रतिबन्धकं १५ न भवति तथा त्वया कर्तव्यमित्यर्थः। मेधाकामस्य जपार्थान्मन्त्रान्व्याख्याय श्रीकामस्य होमार्थान्मन्त्रान्व्याचिख्यासुः "आवहन्ती वितन्वाने"तिपदद्वयस्य क्रमेणार्थमाह—प्रापयन्तीति ॥ ७७-७८ ॥

"कुर्वाणे"त्यादेरर्थमाह—कुर्वाणामिति । उभयं वस्त्राद्यानयनं तद्विस्तारं चेत्यर्थः। देवेत्योङ्कारो ब्रह्माभेदेन सम्बोध्यते । वेदार्थविज्ञानादनन्तरमिति शेषः । तदभावे श्रीरनर्थाय सम्भाव्यते ॥ ७९ ॥

"लोमशामि"त्यादेरर्थमाह—लोमशामिति । अजाव्यादियुक्तत्वं श्रियो लोमशत्वं स्वतस्तदयोगात्सर्वदा २० वासांसि सर्वदा गाः सर्वदाऽन्नपाने च मामावहन्तीं विस्तारयन्तीं कुर्वाणां श्रियमावहेत्यन्वयं सूचयति—प्रत्येकमिति । स्वाहाकारप्रयोगस्याभिप्रायमाह—मन्त्रान्तेति ॥ ८० ॥

उत्तरेष्वपि मन्त्रेषु स्वाहाकारो मन्त्रान्तज्ञापनायैव भवेत्तत्र तत्र स्वाहाकारेण मन्त्रान्तज्ञापनसम्भवादित्याह—तथैवेति । ननु किमर्थं मुमुक्षुणा ज्ञानं धनं च प्रार्थ्यते तत्राऽऽह—दैवेनेति । दैवं वित्तं ज्ञानम् । मानुषं सुवर्णादि ॥ ८१ ॥ २५

आमायन्त्वित्यादेरर्थमाह—आयन्त्विति ॥ ८२ ॥

"प्र मायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहे"ति वाक्यद्वयं केचित्पठन्ति तस्यार्थमाह—प्रकृष्टयर्थमिति ॥ ८३ ॥

किमर्थमनेकब्रह्मचार्यागमः प्रार्थ्यते तत्राऽऽह—जनेऽसानीति । बहवो ब्रह्मचारिणो यदि मत्तो विद्यामाददीरन्विद्वत्सभायां तदा मम ख्यातिर्भवतीत्यर्थः। "श्रेयानि"त्यादेरर्थमाह—वस्यसोऽहमिति । वस्यस इति वसीयस ३० इत्यस्मिन्नर्थे ईकारलोपश्छान्दसः । वसीयसः सकाशादहं श्रेष्ठः स्यामित्यर्थः ॥ ८४ ॥

वसितुः पुरुषाद्धनवतो वा पुरुषादुत्तरत्रायमीयसुन्प्रत्ययो न धातोरुपर्यादिति विवक्षितत्वादित्याह—ईयसुन्निति । तत्र हेतुमाह—अभीष्ट इति । गुणश्रेष्ठतया सजातीयेभ्यः श्रेष्ठत्वस्य विवक्षितत्वादित्यर्थः । अथवा "वस

ब्रह्मणः कोशभूतं त्वां भगवन्प्रविशाम्यहम् । मां च सर्वात्मभावेन प्रविशेश प्रसीद मे ॥८६॥
ऐकात्म्यमावयोरस्तु भेदहेतुं विनाशय । अनन्तभेदे त्वय्येव निमृजे दुष्कृतं ततः ॥८७॥
द्रुतमापो यथा यन्ति निम्नेन मकरालयम् । तथैवाऽऽयन्तु मां सर्वे समन्ताद्ब्रह्मचारिणः ॥८८॥
यस्मिन्नहानि जीर्यन्ते सोऽब्दोऽहर्जर उच्यते । अहर्जरे यथा मासा यन्ति सम्वत्सरात्मनि ॥८९॥
५ आसन्नगृहपर्यायः प्रतिवेश इहोच्यते । प्रतिवेश इवासि त्वं सर्वदुःखापनोदकृत् ॥९०॥
प्रतिप्राणिप्रवेशाद्वा प्रतिवेशोऽसि कीर्त्यसे । मां प्रत्यतः प्रभाहि त्वं प्रमापद्यस्व चाञ्जसा ॥९१॥

इति चतुर्थोऽनुवाकः

निवासे" "वस आच्छादन" इति धातुद्वयादुप्रत्ययः । ताच्छील्यार्थे वसुर्वंसनशीलः पराच्छादनशीलो वा वसुरिति । अतिशयेन वसुर्वसीयानुक्तस्तस्माद्वसीयसोऽहं श्रेष्ठः स्याम् । वसुमान्वा वसुशब्देन लक्ष्यते । ततो वसुमत्तरादहं श्रेष्ठो १० भूयासमित्यर्थः ॥ ८५ ॥

पूर्वोक्तस्य प्रार्थनस्य प्रयोजनमाह—ब्रह्मण इति । मुमुक्षोः श्रेष्ठत्वे सत्योङ्कारवाच्येन ब्रह्मणा सहैकत्वमपेक्षितं सेत्स्यतीत्यर्थः । तस्मिन्नित्यादेरर्थमाह—अनन्तेति । यस्मादहं त्वदात्मभूतोऽस्मि तस्मात्त्वन्निमित्तमेव मम पापक्षयः स्यादित्यर्थः ॥ ८६-८७ ॥

यदुक्तं "ब्रह्मचारिणो मामायन्त्वि"ति तत्र दृष्टान्तद्वयं श्रुत्युक्तं व्याचष्टे—द्रुतमित्यादिना ॥ ८८-८९ ॥

१५ "प्रतिवेशोऽसी"त्यत्र प्रतिवेशशब्दार्थमाह—आसन्नेति । सन्निहितगृहवदशेषदुःखनिवृत्तिहेतुस्त्वमिति वाक्यार्थं कथयति—प्रतिवेश इति ॥ ९० ॥

"आकाशवत्सर्वप्राण्यनुप्रवेशाद्वा प्रतिवेशस्त्वमि"त्यर्थान्तरमाह—प्रतिप्राणीति । "प्र मा भाही"त्यादेरर्थमाह—मां प्रतीति । यतस्त्वं सर्वंगतोऽतो मां प्रति प्रमाहि त्वत्स्वरूपं प्रकटय मां च प्रपद्यस्वेत्यर्थः । प्रकृतेषु मन्त्रेषु ब्राह्मणोत्पन्नत्वात्तद्वद्भावादार्षेयादि नानुसन्धेयम् ॥ ९१ ॥

२० इति चतुर्थोऽनुवाकः

## अथ शीक्षावल्ल्यां पञ्चमोऽनुवाकः

**भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः ॥ १ ॥**

संहिताविषयमुपासनमुक्तं तदनु मेधाकामस्य श्रीकामस्य च मन्त्रा अनुक्रान्तास्ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं प्रस्तूयते—भूर्भुवः सुवरिति । इतीत्युक्तोपप्रदर्शनार्थः । ५ एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः । परामृष्टाः स्मार्यन्ते वै इत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः स्मार्यन्ते तावत् । तासामियं चतुर्थी व्याहृतिर्मह इति । तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते । उ ह स्म, इत्येतेषां वृत्तानुकथनार्थत्वाद्विदितवान्ददर्शेत्यर्थः । माहाचमस्यग्रहणमार्षानुस्मरणार्थम् । ऋषिस्मरणमप्युपासनाङ्गमिति गम्यत इहोपवेशात् । येयं माहाचमस्येन दृष्टा व्याहृतिर्मह इति तद्ब्रह्म महद्धि किल ब्रह्म । महती च व्याहृतिः ।

### आनन्दगिरिटीका १०

वृत्तानुवादपूर्वकमुत्तरानुवाकस्य सम्बन्धमाह—संहिताविषयमित्यादिना । व्याहृतीनां श्रद्धागृहीतत्वात्तत्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहेदिति ततो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्मान्तर्हृदये ध्येयत्वेनोपदिश्यत इत्यर्थः । मह इति व्याहृतावङ्गिब्रह्मदृष्टिः कर्तव्या । तत्र किं साम्यमित्यत आह—महद्धीति । यथा देवदत्तस्य

### वनमाला

वृत्तानुवादपूर्वकमुत्तरानुवाकद्वयतात्पर्यमाह—संहिताविषयमित्यादिना । संहितोपासनं फलाभिसन्धि १५ विनाऽनुष्ठितं चित्तशुद्धिद्वारा विद्योपयोगार्थमिति सूचयति—ते चेति । चशब्दोऽप्यर्थः । संहितोपासनवत्तेऽपीत्यर्थः । अन्तरिति । व्याहृतीनां श्रद्धागृहीतत्वात्तत्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहति । अतो व्याहृतिशरीरस्य ब्रह्मणो हृदयान्तरुपासनमुपदिश्यत इत्यर्थः । तात्पर्यमुक्त्वाऽक्षरव्याख्यानाय प्रतीकमादत्ते—भूर्भुवः सुवरिति । इतीत्युक्तेति । भूर्भुवः सुवरिति वाक्येनोक्तानां व्याहृतीनां पाठक्रमलब्धक्रमानुवादार्थः श्रुताविति शब्द इत्यर्थः । प्रदर्शितानामिति । प्रदर्शितक्रमोपेतानां व्याहृतीनां स्वरूपानुवादार्थ एतास्तिस्रो व्याहृतय इति शब्द इत्यर्थः । ननु २० क्रमतः स्वरूपतश्च ताः किमर्थं परामृश्यन्ते ? तत्राह—परामृष्टा इति । स्मृतिं विवृणोति—तिस्र एता इति । स्मार्यन्ते तावदिति । तावच्छब्दः प्राथम्यार्थः । कर्मकाण्डे कर्माङ्गत्वेन प्रसिद्धव्याहृतयः इह प्रथमं स्मर्यन्ते वैशब्देन तासु क्रमेणोपासनविधानार्थमित्यर्थः । सोमपानार्थं महांश्चमसो यस्य स महाचमस इति वेदभाष्यकाराः । अपत्यमिति । गोत्रापत्यमित्यर्थः । तथा च वार्त्तिके दर्शितम्—"महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेत्" इति । प्रवेदयत इति लटो भूतार्थपरत्वेन व्याख्याने हेतुमाह—उ ह स्म इत्येतेषामिति । ऋषेश्चतुर्थव्याहृतिविषयकं वेदनं २५ योगप्रभावजनितं प्रत्यक्षमेवेति मत्वाऽऽह—ददर्शेत्यर्थ इति । आर्षेति । ऋषिसम्बन्ध्यनुस्मरणमार्षम्, तस्यानुस्मरणस्य कर्तव्यताद्योतनार्थमित्यर्थः । ननु तस्योपासनाङ्गत्वे सति कर्तव्यता सिध्यति, तदेव कुत इति; तत्राह—ऋष्यनुस्मरणमपीति । इहोपदेशादिति । उपासनप्रकरणे ऋषेः सङ्कीर्तनादित्यर्थः । उत्तरत्रोपदेक्ष्यमाणाया गतेरपि चिन्तनमुपासनाङ्गत्वेन कर्तव्यमिहोपदेशाविशेषादित्यपेरर्थः । तद्ब्रह्मेति । तच्चतुर्थव्याहृतिस्वरूपं ब्रह्मेति चिन्तयेदित्यर्थः । इतरव्याहृतित्यागेन चतुर्थव्याहृतिस्वरूपे ब्रह्मदृष्टिविधाने नियामकमाह—महद्धि किल ब्रह्म महती च ३० व्याहृतिरिति । महत्त्वं व्यापकत्वम्, तच्च ब्रह्मणः श्रुतिषु प्रसिद्धमिति द्योतनार्थौ हि किलेति निपातौ । चतुर्थव्याहृतेरितरव्याहृत्यपेक्षया व्यापकत्वं वक्ष्यति । तथा च व्यापकत्वसाम्येन चतुर्थव्याहृतिस्वरूपे ब्रह्मदृष्टिविधिरिति

**मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीँ्षि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूँ्षि ॥ २ ॥**

**किं पुनस्तत्। स आत्मा। आप्नोतेर्व्याप्तिकर्मणः आत्मा। इतराश्च व्याहृतयो लोका देवा वेदाः प्राणाश्च मह इत्यनेन ५ व्याहृत्यात्मनाऽऽदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यतः। अतोऽङ्गान्यवयवा अन्या देवताः। देवताग्रहणमुपलक्षणार्थं लोकादीनाम्। मह इत्येतस्य व्याहृत्यात्मनो देवा लोकादयश्च सर्वेऽवयवभूताः। यत आहाऽऽदित्यादिभिर्लोकादयो**

आनन्दगिरिटीका

पादादीन्यङ्गानि मध्यभागश्चाङ्गी, इतरेषामङ्गानामात्मा कथ्यते व्यापकत्वात्। तथा महोव्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते। इतराश्च व्याहृतयः पादाद्यवयवत्वेन कल्प्यन्ते। प्रथमव्याहृतिः पादौ,

१० वनमाला

भावः। चतुर्थव्याहृतेर्व्यापकत्वं निरूपयितुं पृच्छति—**किं पुनस्तदिति**। मह इति व्याहृतिस्वरूपं ब्रह्मेत्युक्तम्, तद्व्याहृतिस्वरूपं पुनरपि किं कीदृशमित्यक्षरार्थः। अत्रोत्तरं स आत्मेति श्रुतिः। विधेयापेक्षया पुंलिङ्गनिर्देशः, स चतुर्थव्याहृतिस्वरूपमात्मा इतरव्याहृत्यपेक्षया व्यापकमित्यर्थः। ननु चेतने रूढस्यात्मशब्दस्य कथं व्यापकत्वमर्थः? योगेनेत्याह—**आप्नोतेरिति**। व्याप्तिः कर्म क्रिया अर्थो यस्य; ततश्च व्याप्तिवाचकादाप्नोतेः सकाशान्निष्पन्नोऽय-
१५ मात्मशब्दो व्यापकत्वबोधक इत्यर्थः। मह इति व्याहृतेरात्मश्रुत्युक्तमितरव्याहृत्यपेक्षया व्यापकत्वमुपपादयति—**इतराश्चेत्यादिना यतोऽन्त इत्यन्तेन**। चशब्दोऽवधारणे। नन्वितरव्याहृतयो मह इत्यनेन व्याप्यन्त इत्ययुक्तम्, इतरव्याहृतिषु मह इत्यस्याक्षरानुवृत्तेरदर्शनादित्याशङ्क्याह—**आदित्यचन्द्रब्रह्मान्नभूतेनेति**। मह इति व्याहृत्यात्मन आदित्यादिभूतत्वमित्थं श्रूयते—"मह इत्यादित्यः, मह इति चन्द्रमाः, मह इति ब्रह्म, मह इत्यन्नम्" इति। मह इति ब्रह्मेत्यत्र ब्रह्मोङ्कार इति वक्ष्यति। नन्वादित्यादीनां लोकादिष्वेव व्याप्तिः, न व्याहृतिषु, अनुपलम्भात्;
२० ततश्च कथमादित्यचन्द्रभूतेन मह इत्यनेन इतरा व्याहृतयो व्याप्यन्त इत्याशङ्क्य तासामादित्यादिव्याप्यता-सिद्ध्यर्थं लोकाद्यात्मकतामाह—**लोका देवा वेदाः प्राणाश्चेति**। इतरव्याहृतयो लोकदेववेदप्राणात्मिका इत्यक्षरार्थः। तासामित्थं लोकाद्यात्मकत्वं श्रूयते—"भूरिति वा अयं लोकः, भुव इत्यन्तरिक्षम्, सुवरित्यसौ लोकः; भूरिति वा अग्निः, भुव इति वायुः, सुवरित्यादित्यः; भूरिति वा ऋचः, भुव इति सामानि, सुवरिति यजूँ्षि; भूरिति वै प्राणः, भुव इत्यपानः, सुवरिति व्यानः" इति। अत्र पृथिव्यन्तरिक्षद्युलोकानामादित्यव्याप्यता प्रसिद्धा, अग्नि-
२५ वाय्वादित्यदेवतानां चन्द्रव्याप्यता प्रसिद्धैव, चन्द्रसूर्ययोः स्वदीप्त्या सर्वलोकव्यापकत्वात्; वागात्मकानां वेदाना-मोङ्कारव्याप्यता "तद्यथा शङ्कुना" इत्यादिश्रुतिसिद्धा, प्राणानामन्नरसद्वाराऽन्नव्याप्यता प्रसिद्धा; तथा च लोकदेव-वेदप्राणात्मिका इतरव्याहृतयो यत आदित्यचन्द्रब्रह्मान्नभूतेन मह इत्यनेन व्याहृत्यात्मना व्याप्यन्ते, अतो मह इति व्याहृतेरितरापेक्षया व्यापकत्वमित्यर्थः। इत्थं स आत्मेति वाक्यं व्याख्याय अनन्तरवाक्यमादत्ते—**अङ्गानीति**। नन्वन्या व्याहृतयो यथा देवतारूपत्वेन श्रुतास्तथा लोकादिरूपत्वेनापि श्रुताः; ततश्च कथमग्न्यादिदेवतारूपाणा-
३० मेव तासामङ्गत्ववचनम्? तत्राह—**देवताग्रहणमिति**। देवतापदमजहल्लक्षणया लोकादीनामपि ज्ञापनार्थम्; अतो नोक्तदोष इत्यर्थः। लोकाद्युपलक्षणे कृते सति फलितम् "अङ्गान्यन्या देवताः" इति वाक्यार्थं दर्शयति—**मह इत्येतस्येत्यादिना इत्यन्तेन**। अत्रेतिशब्दोऽन्त इत्यर्थे, यत इत्युपक्रमात्; तथा च यत आदित्यादिभिर्लोकादयो महीयन्ते अतः सर्वे देवा लोकादयश्च मह इत्येतस्य व्याहृत्यात्मनोऽवयवभूता इति योजना। अत्र दृष्टान्तमाह—**आत्मना इति**। प्रसिद्धशरीरस्य मध्यभागोऽत्रात्मशब्दार्थः। तेन हस्तपादाद्यङ्गानि महीयन्ते। शरीरमध्यभाग-
३५ गताश्नादिना अङ्गानां वृद्धिः प्रसिद्धेति हिशब्दार्थः। अयं भावः—यथा देवदत्तस्य मध्यमभागं प्रति पादादीन्यङ्गानि मध्यमभागाधीनवृद्धिभाक्त्वात्, मध्यमभागश्चाङ्गी तद्वृद्धिहेतुत्वात्, तथा लोकाद्यात्मिका इतरव्याहृतयः पादादि-रूपाङ्गाणि, आदित्याद्यात्मकं चतुर्थव्याहृतिस्वरूपमङ्गीति कल्प्यते; मह इत्यस्यादित्याद्यात्मनेतरवृद्धिहेतुत्वेन

महः इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति ॥ ३ ॥

असौ लोको यजूंषि वेद द्वे च

इति पञ्चमोऽनुवाकः ५

महीयन्त इति। आत्मना ह्यङ्गानि महीयन्ते महनं वृद्धिरुपचयो महीयन्ते वर्धन्त इत्यर्थः। अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूरिति। एवमुत्तरोत्तरैकैका चतुर्धा भवति।

मह इति ब्रह्म। ब्रह्मेत्योङ्कारः। शब्दाधिकारेऽन्यस्यासम्भवात्। उक्तार्थमन्यत्। ता वा एताश्चतस्रश्चतुर्धेति। ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुष्प्रकाराः। धाशब्दः प्रकारवचनः। चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः। तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः। ता यथोक्तव्याहृतीर्यो वेद स १०

आनन्दगिरिटीका

द्वितीया बाहू, तृतीया शिर इत्यर्थः। व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरुक्तः। इदानीमङ्गविशेषविधिः कथ्यते—भूरिति वा अयं लोक इत्यादिना। तत्रैकैका व्याहृतिश्चतुष्प्रकाराऽवगन्तव्येति तात्पर्यमाह—अयं लोक इत्यादिना।

एकैका व्याहृतयो यदा चतुष्प्रकाराश्चिन्त्यन्ते तदा षोडशकलः पुरुष उपासितो भवतीत्यभिप्रेत्य संक्षेपमाह—ता वा एता इति। स वेद ब्रह्मेति ब्रह्मवेदनं फलत्वेन न सङ्कीर्त्यतेऽधिकारविधिवाक्ये। किन्तु वक्ष्यमाणानु- १५

वनमाला

वृद्धिहेतुत्वसाम्यात्, इतरव्याहृतीनां च लोकाद्यात्मना तदधीनवृद्धिभाक्त्वेन प्रसिद्धाङ्गवद्वृद्धिभाक्त्वसाम्यात्; तत्रापि प्रथमा व्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इति विभागः; तथा च व्याहृतिचतुष्टयं मिलित्वा शरीरं सम्पद्यते; तस्मिन्व्याहृतिमये शरीरे यदङ्गित्वेन कल्पितं चतुर्थव्याहृतिस्वरूपं तत्र तद्ब्रह्मेति वाक्येन ब्रह्मदृष्टिर्विहिता; तथा च वक्ष्यति—मह इत्यङ्गिनि ब्रह्मणीति। आदित्यादीनां च लोकादिवृद्धिहेतुत्वमित्थं श्रूयते— २० "आदित्येन वाव सर्वे लोका महीयन्ते, चन्द्रमसा वाव सर्वाणि ज्योतींषि महीयन्ते, ब्रह्मणा वाव सर्वे वेदा महीयन्ते, अन्नेन वाव सर्वे प्राणा महीयन्ते" इति। अयमर्थः—लोकास्तावदादित्येन प्रकाशिताः सन्तः प्राणिनां व्यवहार्यत्वलक्षणां वृद्धिं प्राप्नुवन्ति; अग्निवाय्वादित्यदेवतारूपाणि ज्योतींषि चन्द्रमसा वर्धन्त इत्येतत् "प्रथमां पिबेत वह्निः" इत्यादिशास्त्रसिद्धम्, चन्द्रकलापानेन तेषां वृद्धेरावश्यिकत्वात्; ब्रह्मणा प्रणवेन सर्वे वेदा वर्धन्ते वेदवृद्धेः प्रणवपूर्वकाध्ययनाधीनत्वात्, तथा च वक्ष्यति "ओमिति ब्राह्मणः प्रवक्ष्यन्नाह" इति; अन्नेन प्राणा वर्धन्त २५ इत्येतत्प्रसिद्धम्, श्रुतिश्चात्र भवति "शुष्यति वै प्राण ऋतेऽन्नात्" इति। भूरिति वा अयं लोक इत्यादावेकैका व्याहृतिश्चतुष्प्रकारा ज्ञातव्येति तात्पर्यमाह—अयं लोक इत्यादिना। भूरितीति। चतुर्धा भवतीति शेषः। एवमुत्तरा इति। अन्तरिक्षं वायुः सामान्यपान इति द्वितीया व्याहृतिर्भुव इति, सुवर्लोक आदित्यो यजूंषि व्यान इति तृतीया व्याहृतिः सुवरिति, आदित्यश्चन्द्रमा ओङ्कारोऽन्नमिति चतुर्थी व्याहृतिर्मह इति; एवमेता उत्तरा व्याहृतयः प्रत्येकं चतुर्धा भवन्तीत्यर्थः। मह इति ब्रह्मेत्यत्र ब्रह्मशब्दस्य मुख्यार्थपरत्वं वारयति—ब्रह्मेत्योङ्कार ३० इति। भूरिति वा ऋच इत्यादिना वेदावयवभूतशब्दसन्निधाने मुख्यार्थग्रहणायोगात्, चतुर्थव्याहृतौ पूर्वमेव मुख्यब्रह्मदृष्टेरुक्तत्वेन पौनरुक्त्यप्रसङ्गाच्चेत्यपि द्रष्टव्यम्। धाशब्दस्य प्रकारवचनत्वे सति चतस्रश्चतुर्धेति वाक्यस्य फलितमर्थं क्रियाध्याहारपूर्वकं दर्शयति—चतस्रश्चतस्रः सत्य इति। स्वरूपेण चतस्रो व्याहृतयो द्रष्टव्यलोकादिभेदेन प्रत्येकं चतस्रः सत्य इत्यर्थः। ननु व्याहृतिषु प्रत्येकं पदार्थचतुष्टयदृष्टिवाक्येभ्य एव तासां प्रत्येकं चतुर्धात्वक्लृप्तिसिद्धेः चतस्रश्चतुर्धेति वाक्यं पुनरुक्तमिति; नेत्याह—तासां यथाक्लृप्तानामिति। भूरिति वा अयं लोक इत्यादि- ३५

वेद विजानाति। किं ? ब्रह्म। ननु—तद्ब्रह्म स आत्मेति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत्स वेद ब्रह्मेति। न। तद्विशेषविवक्षुत्वाददोषः। सत्यं विज्ञातं चतुर्थव्याहृत्यात्मा ब्रह्मेति न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च "शान्तिसमृद्धम्" इत्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगो विज्ञायत इति। तद्विवक्षु हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह। अतो न दोषः। यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः।
५ अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्य, उभयोर्ह्यनुवाकयोरेकमुपासनं, लिङ्गाच्च। भूरित्यग्नौ प्रतितिष्ठतीत्यादिकं लिङ्गमुपासनैकत्वे, विधायकाभावाच्च। न हि वेद उपासितव्य इति विधायकः कश्चिच्छब्दोऽस्ति व्याहृत्यनुवाके

आनन्दगिरिटीका

वाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह—**न तद्विशेषविवक्षुत्वादित्यादिना**। यदि व्याहृत्यवयवमेव ब्रह्मोत्तरत्रोपास्यते तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटेत। तस्माद्-
१० व्याहृत्यात्मकदेवताप्राप्त्यभिधानं उपासनैकत्वे लिङ्गमाह—**लिङ्गाच्चेति**। किञ्चैकत्र प्रधानविद्याविधिरपरत्र गुणविधिरित्येवमनुवाकभेदे चरितार्थे नानन्यथासिद्धं भेदकं प्रमाणमुपलभ्यत इत्याह—**विधायकाभावाच्चेति**। **विधायक इति**। भिन्नविद्याबोधक इत्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां पञ्चमोऽनुवाकः

१५ वनमाला

वचनानां व्याहृतिस्तुतिपरत्वशङ्कानिरासेन तथैवोपासनकर्तव्यतावश्यकत्वद्योतनार्थं इत्यर्थः। चतस्रश्चतस्रो व्याहृतय इति वाक्यं तु निरूपितानां तासामुपसंहारार्थमिति भावः। ज्ञातस्य ब्रह्मणः पुनर्ज्ञानोपदेशे पौनरुक्त्यं स्यादिति शङ्कते—**नन्विति**। तद्ब्रह्मेति वाक्ये ब्रह्ममात्रमवगतं न तु तद्गुणजातम्, "स वेद ब्रह्म" इति तु वक्ष्यमाणगुणविशिष्टत्वेन ज्ञातव्यत्वमुपदिश्यते। तथा च वक्ष्यमाणगुणविशिष्टत्वेन पूर्वमज्ञातत्वान्न पौनरुक्त्यमिति—
२० परिहरति—**नेति**। न च वक्ष्यमाणगुणानामपि वक्ष्यमाणानुवाकेनैवावगन्तुं शक्यत्वादिदं वचनं व्यर्थमेव स्यादिति वाच्यम्; एतदनुवाकावगते चतुर्थव्याहृत्यात्मके ब्रह्मणि वक्ष्यमाणगुणवत्त्वावगमस्यैतद्वचनाधीनत्वेन वैयर्थ्याप्रसक्ते-रिति भावः। संग्रहं विवृणोति—**सत्यमित्यादिना**। न तु तद्विशेषो विज्ञायत इति सम्बन्धः। तस्य ब्रह्मणो विशेषमेव विवृणोति—**हृदयान्तरित्यादिना**। योऽयमुत्तरानुवाकोपक्रमे दर्शितो हृदयान्तरुपलभ्यमानत्वमनोमयत्वादिर्हिरण्मय-त्वान्तो गुणपूगः यश्च तदुपसंहारे प्रदर्शित आकाशशरीरत्वादिशान्तिसमृद्धमित्येवमन्तो धर्मपूगः स न ज्ञायत
२५ इत्यर्थः। विशेषणविशेष्यरूप इत्यत्र विशेष्यपदमविवक्षितार्थम्; अत एव धर्मपूगस्य विशेषणत्वमात्रमेव वक्ष्यति—धर्मपूगेण विशिष्टं ब्रह्मेति। यद्वा अत्र विशेषणानां पाठक्रमानुसारेण क्रमविशिष्टतया चिन्तनमभिप्रेत्य विशेषण-विशेष्यरूपत्वमुक्तम्; तच्च पूर्वापरीभूतत्वरूपम्। अत एव "इति प्राचीनयोग्य" इत्यत्र इतिशब्देन प्रकारवाचिना क्रमविशिष्टतयैव गुणानामुपासनं प्रतीयत इति बोध्यम्। ननु तद्ब्रह्म स आत्मेत्यत्रास्तु तद्विशेषाज्ञानम्; ततः किम् ? तत्राह—**तद्विवक्ष्विति**। एवं पौनरुक्त्यदोषं परिहृत्य स वेद ब्रह्मेति वाक्यस्यार्थं कथयति—**यो हीति**। ननु
३० लोकादिदृष्टिपरिगृहीतव्याहृतिशरीरब्रह्मोपासनविधायकस्यास्यानुवाकस्य वक्ष्यमाणेनानुवाकेनैकवाक्यतां विना कथं तत्रत्यगुणानामत्रान्वय इत्याशङ्क्य वक्ष्यमाणगुणाकर्षकात्स वेद ब्रह्मेति वाक्यादेवानयोरेकवाक्यत्वं कल्प्यत इत्याशयेनाह—**अतो वक्ष्यमाणेति**। नन्वनुवाकद्वये उपासनैक्यं विना कथमेकवाक्यम्, अर्थैक्यनिबन्धनत्वादेक-वाक्यताया इत्याशङ्क्य, तदपि वक्ष्यमाणगुणाकर्षकवाक्यबलादेव कल्प्यत इत्याशयेनाह—**उभयोरिति**। लिङ्गाच्चो-पासनमेकमेवेत्युक्तमेव विवृणोति—**भूरित्यग्नाविति**। व्याहृत्यनुवाकोक्तानामग्न्यादिदृष्टीनां वक्ष्यमाणानुवाके फलकथन-
३५ लिङ्गाद्व्याहृतिशरीरब्रह्मोपासनमुभयत्रैकमिति गम्यत इत्यर्थः। **विधायकाभावाच्चेति**। उपासनभेदकविध्यभावा-दित्यर्थः। तमेव विवृणोति—**न हीति**। ननु व्याहृत्यनुवाकस्थः "ता यो वेद" इति विधिरेव तद्भेदकोऽस्तु;

"ता यो वेद" इति च वक्ष्यमाणार्थत्वान्नोपासनभेदकः। वक्ष्यमाणार्थत्वं च तद्विशेषविवक्षुत्वादित्यादिनोक्तम्। सर्वे देवा अस्मा एवं विदुषेऽङ्गभूता आवहन्त्यानयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः।[1]

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये पञ्चमोऽनुवाकः

वनमाला ५

नेत्याह—ता यो वेदेति त्विति। इतिशब्दो वेदेति विधिं परामृशति; तथा च "ता यो वेद" इत्ययं विधिर्नोपासनभेदक इति योजना। अयं भावः—"ता यो वेद" इत्यत्र व्याहृतिशरीरस्य ब्रह्मणः प्रधानविद्याविधिरुत्तरानुवाके गुणविधिरिति प्रकारेणोपासनैक्येऽपि "ता यो वेद" इति विधिसम्भवान्न तस्य विद्याभेदकत्वमिति। ननु तर्हि "स वेद ब्रह्म" इति विधिर्भेदकोऽस्तु; नेत्याह—वक्ष्यमाणार्थत्वान्नोपासनभेदक इति। "स वेद ब्रह्म" इति वाक्यं व्याहृत्यनुवाकस्थे ब्रह्मोपासने वक्ष्यमाणगुणाकर्षणार्थत्वान्न विद्यैक्यविरोधि, किन्तु तदनुकूलमेवेत्यर्थः। हेत्वसिद्धिं १० पूर्वोक्तार्थस्मारणेन निराचष्टे—वक्ष्यमाणार्थत्वं चेति। विदुषे देवाः कदा बलिं प्रयच्छन्तीत्याकाङ्क्षायां स्वाराज्यप्राप्त्यनन्तरमित्याशयेनाह—स्वाराज्येति। स्वयमेव राजा स्वराट्, तस्य भावः स्वाराज्यम्, अङ्गदेवताधिपतित्वमिति यावत्। तत्प्राप्त्यनन्तरमेवाङ्गदेवताभिर्बल्युपहरणमुचितम्; अत एवार्थक्रमानुसारेण "सर्वेऽस्मै देवाः" इति वाक्यम् "आप्नोति स्वाराज्यम्" इति वाक्यानन्तरं पठनीयम्। एतच्चाग्रे स्फुटं वक्ष्यति—स्वयमेव राजाधिपतिर्भवत्यङ्गभूतानां देवतानां यथा ब्रह्म देवाश्च सर्वेऽस्मै बलिमावहन्तीति। एतेनानुवाकयोः पृथक्फलश्रवणादु- १५ पासनभेद इति शङ्कापि निरस्ता भवति फलभेदश्रवणस्यैवासिद्धेरिति।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां पञ्चमोऽनुवाकः

१. अत्र भूरादिव्याहृतिषु लोक, देव, वेद, प्राणदृष्टयः चोद्यन्ते इदं चोपासनं षष्ठानुवाकोक्तब्रह्मोपासनस्याङ्गभूतम्, अत एव उपासकस्य सकलदेवपूज्यत्वमुपपद्यते यथाश्रुते प्रतीकोपासकानां ब्रह्मलोकाभावात् तदनुपपत्तेः (सायणः)। २०

अथ वार्तिके शीक्षावल्ल्यां पञ्चमोऽनुवाकः

उपासनमथेदानीं व्याहृत्यात्मन उच्यते । स्वाराज्यफलसिद्ध्यर्थं महिमाऽतोऽस्य कीर्त्यते ॥९२॥

भूर्भुवः स्वरिति ज्ञेयाः प्रसिद्धा व्याहृतीर्नरैः । तिस्रस्तासां चतुर्थी तु मह इत्यृषिरभ्यधात् ॥९३॥

महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेत् । माहाचमस्योतः साक्षान्महो वेदयते पराम् ॥९४॥

उपासनाङ्गतार्थोऽयमृषिनामग्रहो भवेत् । आर्षेयस्मृतिसंमिश्रमुपासनमिहोच्यते ॥९५॥

५ चतुर्थी व्याहृतिर्येयं ब्रह्मेत्येवमुपास्यताम् । महत्त्वाद्ब्रह्म सा ज्ञेया आत्मा चाऽऽप्नोति येन सा॥९६॥

आदित्यचन्द्रब्रह्मान्नभूतेन व्यापिना यतः ॥९७॥

लोकदेवादयो व्याप्ता आत्मा तेन महो भवेत् । देवताग्रहणं चात्र परिशिष्टोपलक्षणम् ॥९८॥

लोका देवास्तथा वेदाः प्राणाश्चाङ्गानि सर्वशः । मह इत्यस्य ज्ञेयानि व्याहृत्यात्मन एव हि ॥९९॥

महीयन्ते यतः सर्व आदित्याद्यात्मना परे । मह इत्येवमुक्तेन तस्मादात्मा भवेन्महः ॥१००॥

१० आत्मना हि महीयन्ते हस्ताद्यङ्गानि सर्वशः । यथा लोकादयस्तद्वदादित्याद्यात्मनैधिताः ॥१०१॥

ओङ्कारवाच्यत्वेन तत्प्रतीकत्वेन वा ब्रह्मणो ध्येयत्वमुक्तम् । जपार्था होमार्थाश्च मन्त्रा व्याख्याताः । सम्प्रति व्याहृत्यात्मनो ब्रह्मणोऽपरस्योपासनं विशिष्टफलं वक्तव्यमित्युत्तरानुवाकस्य तात्पर्यमाह—**उपासनमिति** । यतो व्याहृत्यात्मनो ब्रह्मणोऽत्रोपासनं विवक्षितमतः समनन्तरवाक्येन तथाविधब्रह्मणः स्तुतिर्विवक्षितेत्याह—**महिमेति** ॥ ९२ ॥

१५ एवं तात्पर्यमुक्त्वाऽक्षरार्थं कथयति—**भूरिति** । व्याहृतीरिति द्वितीया प्रथमार्थे । "तासामि"त्यादिवाक्यत्रयस्यार्थमाह—**तासामिति** ॥ ९३ ॥

तद्धितार्थमाह—**महाचमसेति** ॥ ९४ ॥

ऋषिनामग्रहणस्य प्रयोजनमाह—**उपासनेति** ॥ ९५ ॥

तद्ब्रह्मेत्यस्यार्थमाह—**चतुर्थीति** । तस्या महत्त्वाद्ब्रह्मत्वं सर्वव्यापकत्वाच्चाऽऽत्मत्वमित्येतदाह—
२० **महत्त्वादिति** ॥ ९६ ॥

सर्वव्यापकत्वं साधयति—**आदित्येति** ॥ ९७ ॥

व्याहृतीनां श्रद्धागृहीतत्वात्तत्त्यागेनोक्तं ब्रह्म बुद्धि नाऽऽरोहति । अतो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्म हृदयान्तर्ध्येयत्वेनोक्त्वा महोव्याहृतावङ्गिब्रह्मदृष्टिर्महत्वव्यापकत्वसामान्यादितराश्च व्याहृतयस्तस्य पादाद्यवयवत्वेन कल्प्यन्ते । प्रथमा व्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इति व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्ति-
२५ विधिरित्युक्तम् । इदानीमङ्गान्यन्या देवता इत्यत्र देवताग्रहणस्य तात्पर्यमाह—**देवतेति** ॥ ९८ ॥

परिशिष्टोपलक्षणे सिद्धमर्थमाह—**लोका इति** ॥ ९९ ॥

चतुर्थव्याहृतेर्व्यापकत्वेनाऽऽत्मत्वं पूर्वत्रोक्तम् । अधुना लोकादिवृद्धिहेतुत्वादात्मत्वमित्येतदाह—**महीयन्त इति** ॥ १०० ॥

उक्तमर्थं दृष्टान्तेन साधयति—**आत्मनेति** । यथा देवदत्तस्य पादादीन्यङ्गानि मध्यभागश्चाङ्गी तेषामङ्गानां
३० वृद्धिहेतुत्वादुच्यते तथा महोव्याहृतिर्ब्रह्मणो हिरण्यगर्भस्य लोकाद्यात्मकस्य मध्यभागो लोकादेरादित्याद्यात्मना वृद्धिहेतुत्वादात्मेति चोच्यत इत्यर्थः ॥ १०१ ॥

अयं लोकोऽग्निर्ऋग्वेदः प्राणश्चेति चतुर्विधा । भूरिति व्याहृतिर्ज्ञेया तथैवान्या यथाक्रमम् ॥१०२॥
अन्तरिक्षं च वायुश्च साम चापान एव च । चतुर्धा भुव इत्येषा द्वितीया व्याहृतिर्मता ॥१०३॥
द्यौरादित्यो यजुश्चेति व्यानश्चेति चतुर्थ्यपि । महश्चेति पुरा प्रोक्ता चतस्रः स्युश्चतुर्विधाः ॥१०४॥
उक्तानां पुनरुक्तिः स्यादुपासानियियंसया । यथोक्ता व्याहृतीरेता वेदोपास्ते तु यो नरः ॥
स वेद सकलं ब्रह्म वक्ष्यमाणविशेषणम् ॥१०५॥ ५
ब्रह्म वेद स इत्येवं पुनरुक्तं किमुच्यते । वक्ष्यमाणानुवाकार्थविवक्षुत्वाददोषता ॥१०६॥
स य एषोऽन्तरित्यादि वक्ष्यमाणानुवाकगम् । वस्तूपास्यमिहैवेति स वेदेति पुनर्वचः ॥१०७॥
एकवाक्यत्वमेतस्माद्द्वयोरप्यनुवाकयोः ॥१०८॥
लोका देवादयश्चास्मा उपासित्रे यथाबलम् । बलिं भोगं प्रयच्छन्ति फलमेतदुपासितुः ॥१०९॥

इति पञ्चमोऽनुवाकः १०

उत्पत्तिविधेरुक्तत्वादङ्गविशेषविधिमधुना कथयति—अयमित्यादिना ॥ १०२ ॥

तथैवान्या इत्यादि विवृणोति—अन्तरिक्षमिति ॥ १०३ ॥

व्यानश्चेत्यत्र तृतीया व्याहृतिर्मतेत्यनुषज्यते । महश्चेति चतुर्थ्यपि व्याहृतिः । एवं पूर्वव्याहृतिवदादित्य-चन्द्रब्रह्मान्नभूतेनेत्यत्र चतुर्विधा प्रोक्तेत्याह—चतुर्थ्यपीति । प्रदर्शितप्रकारेण चतस्रो व्याहृतयश्चतुर्विधा भवन्तीति निगमयति—चतस्रः स्युरिति ॥ १०४ ॥ १५

"अयं लोक" इत्यादिना व्याहृतीनां प्रत्येकं चतुर्विधत्वमुक्तमेव किमिति पुनरुच्यते तत्राऽऽह—उक्तानामिति । व्याहृतीनां स्तुत्यर्थं चतुर्विधत्वं नोच्यते किन्तु प्रत्येकं तासां चतुर्विधत्वेनोपासनं नियतमिष्यते । तथा षोडशकलस्य पुरुषस्योपास्यत्वमत्र सेत्स्यति अधिकवचनस्यार्थविशेषसूचकत्वादित्यर्थः । अधिकारविधिविवक्षया "ता यो वेदे"त्यादेरर्थमाह—यथोक्ता इति । व्याहृत्यनुवाकेनोक्ते ब्रह्मोपासने गुणविधानमनन्तरानुवाके भविष्यतीत्यभिप्रेत्य विशिनष्टि—वक्ष्यमाणेति ॥ १०५ ॥ २०

"तद्ब्रह्म"ति ब्रह्मणश्चतुर्थव्याहृत्यात्मन उक्तत्वात्पुनरुक्तिरनर्थिकेति शङ्कते—ब्रह्मेति । अनुवाकद्वयेनैक-मुपासनं विवक्षितमिति वक्तुमुक्तानुवादान्नास्ति पुनरुक्तिरित्याह—वक्ष्यमाणेति ॥ १०६ ॥

"सत्यमि"त्यादिभाष्यमाश्रित्योक्तमेव प्रपञ्चयति—स य इति ॥ १०७ ॥

"अतो वक्ष्यमाणानुवाकेने"त्यादिभाष्यार्थमाह—एकवाक्यत्वमिति । एतस्मादुपासनैक्यादित्यर्थः ॥ १०८ ॥

"सर्वेऽस्मै देवा बलिमावहन्ती"त्यस्यार्थमाह—लोका इति । उपासित्रे स्वाराज्यप्राप्तायेत्यर्थः ॥ १०९ ॥ २५

इति पञ्चमोऽनुवाक

## अथ शीक्षावल्ल्यां षष्ठोऽनुवाकः[1]

**स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ ॥ १ ॥**

भूर्भुवःसुवःस्वरूपा मह इत्येतस्य हिरण्यगर्भस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम्। यस्य ता
५ अङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते सालग्राम इव विष्णोः। तस्मिन्हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते पाणाविवाऽऽमलकम्। मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते—स इति व्युत्क्रम्य "अयं पुरुषः" इत्यनेन सम्बध्यते। य एषोऽन्तर्हृदये हृदयस्यान्तः हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते। तस्यान्तर्य एष आकाशः प्रसिद्ध एव करकाकाशवत्। तस्मिन्सोऽयं पुरुषः। पुरि शयनात्पूर्णा वा
१० भूरादयो लोका येनेति पुरुषो, मनोमयः मनो विज्ञानम्। मनुतेर्ज्ञानकर्मणस्तन्मयस्तदुपलभ्यत्वात्। मनुतेऽनेनेति वा मनोऽन्तःकरणं तदभिमानी तन्मयस्तल्लिङ्गो वा। अमृतोऽमरणधर्मा हिरण्मयो ज्योतिर्मयः। तस्यैवंलक्षणस्य हृदयाकाशे

### आनन्दगिरिटीका

तदुपलभ्यत्वादिति। ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यत्वाद्ध्यायिभिरित्यर्थः। जडस्य मनसः प्रवृत्ति

### वनमाला

१५ वृत्तानुवादपूर्वकमुत्तरानुवाकतात्पर्यमाह—भूर्भुवस्सुवरित्यादिना। मह इति व्याहृत्यपेक्षया अन्या भूर्भुवःसुवः-स्वरूपा व्याहृतयो देवतादिरूपाश्चतुर्थव्याहृत्यात्मकस्य ब्रह्मणोऽङ्गानीत्युक्तमित्यर्थः। एतस्येति। स इति तच्छब्देन अस्मिन्ननुवाके समाकृष्टस्येत्यर्थः। पुरुषपदापेक्षया स इति पुंलिङ्गनिर्देश इति न तद्विरोधः। उपासनार्थं साक्षादुप-लब्ध्यर्थं चेत्यर्थक्रमः उपासनफलत्वात्साक्षात्कारस्य। उपासनार्थं स्थानविशेषोपदेशे दृष्टान्तमाह—सालग्राम इवेति। साक्षादुपलब्ध्यर्थमित्युक्तं प्रपञ्चयति—तस्मिन्हीति। उपासकानामिदं प्रसिद्धमिति द्योतनार्थो हिशब्दः। व्युत्क्रम्येति।
२० सन्निहितमाकाशमुल्लङ्घ्येत्यर्थः। हृदयस्वरूपमाह—पुण्डरीकेति। प्राणायतन इति। "हृदि प्राणः" इति प्रसिद्धेरिति भावः। अनेकेति। अनेकनाड्याश्रयभूतानि सुषिराणि यस्येति विग्रहः। पुण्डरीकाकारत्वाधोमुखत्वोर्ध्वनालत्व-विशिष्टे मांसखण्डे मानमाह—विशस्यमान इति। "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्" इत्यादिश्रुतिप्रसिद्धो यथोक्तमांसखण्डो विशस्यमाने पशौ प्रत्यक्षत उपलभ्यत इत्यर्थः। प्रसिद्ध एवेति। "योऽयमन्तर्हृदय आकाशः" इत्यादिश्रुतिष्विति शेषः। करकाकाशो यथा प्रसिद्ध इति दृष्टान्तयोजना। पुरि हृदये शरीरे वा शयनादवस्थानात्
२५ पुरुषः, पूर्णत्वाद्वा पुरुषः, भूरादयः पूर्णा येन स पुरुष इति वा। मननं मन इति भावव्युत्पत्तिमाश्रित्याह—मनो ज्ञानमिति। मननं ज्ञानमित्यत्र हेतुमाह—मनुतेरिति। ज्ञानं कर्म क्रिया वाच्यभूता यस्य तस्मान्मनुतेर्धातोर्निष्पन्नो मनःशब्दो यतो ज्ञानवाचीत्यर्थः। पुरुषस्य मनोविकारत्वाभावादाह—तत्प्राय इति। मनःप्रधान इत्यर्थः। तत्र हेतुमाह—तदुपलभ्यत्वादिति। तेनोपासनसंस्कृतेन मनसोपलभ्यमानत्वादित्यर्थः। तल्लिङ्गो वेति। अस्मदादिमनसा

---

१. व्याहृत्यात्मकस्य हिरण्यगर्भस्य आत्मत्वेनोपासनमिह विधीयते। इति प्राचीनयोग्योपास्व इति
३० विधिदर्शनात्। पूर्वानुवाके तु एतदुपासनाङ्गं भूरादिव्याहृतिषु अग्न्यादिदेवतोपासनमुक्तम्। अय-मेवाभिप्रायः आनन्दगिरेः वार्तिकस्य भाष्यस्य चेति स्पष्टमवगम्यते। इदं च ब्रह्मोपासनं अहमिति गृहीत्वा कर्तव्यं "आत्मेति तूपगच्छन्ती"ति न्यायात्। मनोमयस्य ब्रह्मत्वं च "सर्वत्र प्रसिद्धोपदेशादि" त्यधिकरणे स्पष्टम्। उपासनानां यावज्जीवमावृत्तिः कर्तव्या अन्त्यप्रत्ययस्यैव फलजनकत्वेन

**सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् ।**

साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्येन्द्ररूपस्य ब्रह्मणः स्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा। सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता। यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत्। यत्र च केशान्तः केशानामन्तोऽवसानं मूलं केशान्तो विवर्तते विभागेन वर्तते मूर्धप्रदेश इत्यर्थः। तं देशं प्राप्य तत्र विनिस्सृता। व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता ५ या सेन्द्रयोनिरिन्द्रस्य ब्रह्मणो योनिर्मार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः। तयैवं विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्यास्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतस्तस्मिन्नग्नौ प्रतितिष्ठत्यग्न्यात्मनेमं लोकं व्याप्नोतीत्यर्थः। तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ। प्रतितिष्ठतीत्यनुवर्तते।

सुवरिति तृतीयव्याहृत्यात्मन्यादित्ये। मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति। तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजाऽधिपतिर्भवति। अङ्गभूतानां देवानां यथा १०

आनन्दगिरिटीका

दृष्ट्वा तदधिष्ठातृतया हिरण्यगर्भोऽनुमीयते। तस्य शास्त्रे सकलकरणाधिष्ठातृत्वेन प्रसिद्धत्वादिति तल्लिङ्गत्वमुक्तमित्यर्थः।

वनमाला

अस्मदादिभिरनिवार्येण तन्नियन्तृतया ब्रह्मानुमानसम्भवादिति भावः। **ज्योतिर्मय इति।** स्वप्रकाश इत्यर्थः। १५ व्याहृतिशरीरे ब्रह्मणि मनोमयत्वादिगुणवत्यहंग्रहमभिप्रेत्य विदुष आत्मभूतस्येत्युक्तम्, अहंग्रहं विना तद्भावायोगात् तद्भावं विना च स्वाराज्यप्राप्त्ययोगात्; अतः स्वाराज्यप्राप्तिवचनानुरोधेन विदुषो ब्रह्मभावो ब्रह्मण्यहंग्रहश्च कल्प्यत इति भावः। तथा च श्रुतिः—"देवो भूत्वा देवानप्येति" इति। इहैव भावनया देवभावं प्राप्य देहपातोत्तरकालं देवभावं प्राप्नोतीति तदर्थः। **इन्द्ररूपस्येति।** "सेन्द्रयोनिः" इति वाक्यशेषदर्शनादिन्द्ररूपत्वमुक्तम्। "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुत्यन्तरमनुसृत्याऽऽह— २० **हृदयादूर्ध्वमिति।** श्रुतिप्रसिद्धायां शताधिकायां नाड्यां नामान्तरेण योगशास्त्रप्रसिद्धिं कथयति—**सुषुम्नेति। स्तन इवेति।** आस्यान्तरिति शेषः। **तेनेति।** तस्येत्यर्थः। तस्य चान्तरेण अन्तर्देशं प्राप्यमाणा शीर्षकपाले व्यपोह्य या निर्गतेति योजना। विनिष्क्रम्य प्रतितिष्ठतीति सम्बन्धः। **लोकस्येति।** ऋग्वेदस्य प्राणस्य चेत्यर्थः। **इमं लोकमिति।** ऋग्वेदं प्राणं चेत्यपि द्रष्टव्यम्। प्रथमव्याहृतौ लोकाग्निऋग्वेदप्राणानां चतुर्णां दृष्टत्वेन लोकाग्निभाववदृग्वेदप्राणभावस्यापि वक्तव्यत्वात्। न च प्रधानब्रह्मोपासनफलवचनेन "मह इति ब्रह्मणि" इत्यनेन सर्वात्मक- २५ ब्रह्मभावे कथिते सति विदुष ऋग्वेदप्राणभावस्यापि सिद्धत्वान्न पृथक्तद्भावो वक्तव्य इति वाच्यम्; तथा सति लोकाग्निभावस्यापि तत एव सिद्धत्वेन "अग्नौ प्रतितिष्ठति" इति श्रुतिवचनमग्न्यात्मनेमं लोकं व्याप्नोतीति भाष्यवचनं चानर्थकं स्यात्। एतेन भूरिति व्याहृतौ ऋग्वेदप्राणदृष्ट्योर्ब्रह्मोपासनं प्रत्यङ्गतया प्रधानफलेनैव फलवत्त्वाच्छ्रुतौ भाष्ये च पृथक्तद्भाववचनाभाव इति शङ्कापि निरस्ता, तस्यां लोकाग्निदृष्ट्योरप्यङ्गत्वेन तत्फलस्याप्यवक्तव्यत्वापत्तेः। यदि चाङ्गानां प्रधानफलेनैव फलवत्त्वेऽप्यङ्गस्तुत्यर्थं पृथक्फलवचनमपेक्षितमित्युच्येत, तदा ऋग्वेदादि- ३० दृष्टावपि तदर्थं पृथक्फलं वक्तव्यम्; एवमुत्तरत्रापि द्रष्टव्यमिति संक्षेपः। **आत्मभावेन स्थित्वेति।** अत्र क्रमकथनं पाठक्रममाश्रित्य। वस्तुतस्तु क्रमो न विवक्षितः, विदुषः सर्वात्मकब्रह्मभाव एवाग्न्यादिभावस्यान्तर्भावेण क्रमाभावादिति मन्तव्यम्। **ब्रह्मभूत इति।** "मह इति ब्रह्मणि" इति वाक्योक्तब्रह्मभावप्रयुक्तमित्यर्थः। उपासकः सर्वेषां

---

तत्सिद्ध्यर्थमावश्यकत्वात् इति "आप्रायणात् तत्रापि हि दृष्टं" इत्यत्रोक्तम्। पृथिव्यन्तरिक्षमित्यादिना जगदुपाधिविशिष्टब्रह्मोपासनमुक्तम्। ओमिति ब्रह्मेति प्रणवस्य परापरब्रह्मदृष्ट्योपासनमुक्तम्। ३५ अधिकारविधिः फलसम्बन्धबोधकविधिः। यथा स्वर्गकामो यजेतेति, अत्र च सन्वीयते प्रजया पशुभिः इति फलवचनम्।

**वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व ॥ २ ॥**

वायावमृतमेकं च

इति षष्ठोऽनुवाकः

५ ब्रह्म। देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे। आप्नोति मनसस्पतिम् सर्वेषां हि मनसां पतिः। सर्वात्मकत्वाद्ब्रह्मणः। सर्वैर्हि मनोभिस्तन्मनुते। तदाप्नोत्येवं विद्वान्। किञ्च वाक्पतिः सर्वासां वाचां पतिर्भवति। तथैव चक्षुष्पतिश्चक्षुषां पतिः। श्रोत्रपतिः श्रोत्राणां पतिः। विज्ञानपतिर्विज्ञानानां च पतिः। सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः। किञ्च ततोऽप्यधिकतरमेतद्भवति। किं तत्। उच्यते। आकाशशरीरमाकाशः शरीरमस्याऽऽकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम्। किं तत्। प्रकृतं ब्रह्म। सत्यात्म सत्यं मूर्तामूर्तं अवितथं
१० स्वरूपं वाऽऽत्मा स्वभावोऽस्य तदिदं सत्यात्म। प्राणारामं प्राणेष्वाराम आरमणमाक्रीडा यस्य तत्प्राणारामम्। प्राणानां वाऽऽरामो यस्मिंस्तत्प्राणारामम्। मनआनन्दम्। आनन्दभूतं सुखकृदेव यस्य मनस्तन्मनआनन्दम्। शान्तिसमृद्धं शान्तिरुपशमः शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्। शान्त्या वा समृद्धं तदुपलभ्यत इति शान्तिसमृद्धम्।

आनन्दगिरिटीका

स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्स्रष्टृत्वादिलक्षणं न भवतीत्याह—अङ्गभूतानां देवानामिति। सावधिक-
१५ मैश्वर्यमेवाऽऽह—आप्नोतीत्यादिना।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां षष्ठोऽनुवाकः

वनमाला

हि मनसां पतिर्भवतीत्यत्र हिशब्दसूचितं हेतुमाह—सर्वात्मकत्वाद्ब्रह्मण इति। ब्रह्मभूतस्य विदुषः सर्वजीवात्म-
२० कत्वादित्यर्थः। ननु ब्रह्मणः सर्वात्मकत्वे सिद्धे तद्भावमापन्नस्य विदुषः सर्वात्मकत्वं स्यात्, तदेव कुत इत्यत्राऽऽह—सर्वैर्हीति। तद्ब्रह्म सर्वैरुपाधिभूतैर्मनोभिः प्राप्तजीवभावं सन्मनुते चक्षुरादिद्वारा रूपादिकमनुभवति। ब्रह्मणो जीवभावे मानत्वेन प्रवेशवाक्यादिसूचनार्थो हिशब्दः। न केवलमुपासकः सर्वमनसां पतिः, किं तु वागादीनामपीत्याह—किं चेति। सर्वात्मकत्वादिति। विदुष इति शेषः। ननु त्वगादिपतित्वमपि कुतो नोक्तमित्याशङ्क्य आप्नोति मनसस्पतिमित्यादेर्विवक्षितमर्थमाह—सर्वप्राणिनामिति। तद्वानिति। नियम्यनियामकभावसम्बन्धी
२५ मत्वर्थः। न केवलमेतावदेव विदुषः फलं भवति, किं त्वितोऽपि बहु फलं भवतीत्याह—किं च ततोऽपीति। शरीरमस्येति। शरीरपदं स्वरूपपरम्; ततश्च आकाशमधिष्ठानभूतस्य ब्रह्मणः कल्पितं स्वरूपमित्यर्थः। सूक्ष्ममिति। जलादिभिर्दु:खादिभिश्च संश्लेषायोग्यत्वं सूक्ष्मत्वम्; तदाह भगवान्—"यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते" इति। सत्यमिति। सद्भूतत्रयलक्षणं मूर्तम्, त्यद्वाय्वाकाशात्मकममूर्तम्, तदुभयं सच्च त्यच्च सत्यमिति व्युत्पत्त्या सत्यशब्दवाच्यम्, तदात्मा कल्पितं रूपमस्येत्यर्थः। सत्यशब्दस्य परमार्थ-
३० वस्तुनि रूढिमाश्रित्याह—अवितथमिति। प्राणेष्विति। सविषयेष्विन्द्रियेष्वित्यर्थः। इदं च व्याख्यानं ब्रह्मणो जीवभावाभिप्रायम्। केवलब्रह्मपरत्वेनापि व्याचष्टे—प्राणानां वेति। यस्मिन्निति। यस्मिन्ब्रह्मणि नियन्तृरूपे सतीत्यर्थः। मनआनन्दमिति पदं ब्रह्मणो जीवभावाभिप्रायेणैव व्याचष्टे—मन इत्यादिना। शान्तिश्चेति। सर्वद्वैतनिवृत्तिरूपमित्यर्थः। अज्ञानतत्कार्यध्वंसस्याधिष्ठानब्रह्मानतिरेकादिति भावः। समृद्धं चेति। सम्यगात्मभावेन ऋद्धिं व्याप्तिं गतं समृद्धम्,

**अमृतममरणधर्मि। एतच्चाधिकतरं विशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यमिति। एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्वेत्याचार्यवचनोक्तिरादरार्था।**

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये षष्ठोऽनुवाकः

**वनमाला**                ५

सर्वव्यापकमित्यर्थः। शान्त्या वेति। सर्ववृत्त्युपरमलक्षणया समाधिशब्दितया शान्त्या समृद्धवत्पूर्णानन्दरूपेण योगिभिरुपलभ्यत इत्यर्थः। एतच्चेति। ननु फलत्वेनोक्तस्याधिकतरविशेषणस्य कथमुपास्यगुणान्तर्भाव उच्यते? नैष दोषः, "तं यथा यथोपासते" इति श्रुत्या फलत्वेनावगतस्यापि विशेषजातस्य ध्येयत्वावगमात्, विशिष्यात्र व्यवहितसन्निहितसकलगुणपूगलक्षणप्रकारपरामर्शिनेतिपदेनाधिकतरविशेषणस्याप्युपास्तिं प्रति विषयतया समर्पणाच्च। न चैवम् "आप्नोति स्वाराज्यम्" इत्यादावुक्तानां सर्वदेवाधिपतित्वसर्वदेवपूज्यत्वसर्वकरणपतित्वानामपि फलरूपाणामुपास्यगुणत्वप्रसङ्ग इति वाच्यम्; इष्टत्वात्। तत्संग्रहार्थं एवैतच्चेत्यत्र चकार इति संक्षेपः। ननु उपासनस्य श्रुत्या स्वेन रूपेणोक्तावप्यनुष्ठानसिद्धेः आचार्योक्तिकल्पनं मुधा, नेत्याह—आदरार्थेति। उपासनानुष्ठाने आदरातिशयसिद्धयर्थेत्यर्थः। उक्त एवेति। उपासनं च यथाशास्त्रमित्यादाविति शेषः। नन्वत्र किमपरं ब्रह्मोपास्यं? किं वा परं ब्रह्मेति? किमत्र संशयकारणम्? परं चापरं च ब्रह्मेत्यादावुभयत्र ब्रह्मशब्दप्रयोगदर्शनमेव। अत्र [1]केचिद् अपरमेव ध्येयमिति वदन्ति। तथाहि—प्राणारामत्वमनआनन्दत्वयोः सूत्रात्मनि हिरण्यगर्भे स्वारस्यान्मनोमयपदस्य मनोभिमानीति भाष्यदर्शनेन भाष्यकारस्यापि तत्रानुमत्यवगमाच्च, अन्येषामपि विशेषणानां तस्मिन्नेव यथाकथंचिदुपपादनसम्भवाच्चापरमेवात्र विवक्षितमिति। अन्ये तु परमेश्वररूपमेवात्र ब्रह्म ध्येयमिति वदन्ति। तथा हि—परं ब्रह्मैवात्र विवक्षितम्, ब्रह्मशब्दस्य तत्र मुख्यत्वात्; नापरम्, तत्र तस्यामुख्यत्वात्; तदुक्तं सूत्रकारेण "सामीप्यात्तु तद्व्यपदेशः" इति। परब्रह्मसामीप्यादेव सूत्रात्मनि ब्रह्मशब्दप्रयोगो न मुख्यवृत्त्येति तदर्थः। तथा अमृतत्वं परस्यैव ब्रह्मणो लिङ्गम्। न च "सैषानस्तमिता देवता" इत्यादावपरस्यापि नाशराहित्यरूपममृतत्वं श्रूयत इति वाच्यम्; तस्यावान्तरप्रलये नाशाभावश्रवणेऽपि महाप्रलये नाशश्रवणेन मुख्यामृतत्वासम्भवात्। न च "प्राणारामं मनआनन्दम्" इति लिङ्गद्वयानुरोधेनापेक्षिकमेवामृतत्वमिहास्त्विति वाच्यम्; ब्रह्मश्रुत्यनुरोधेन मुख्यामृतत्वग्रहणसम्भवे दुर्बललिङ्गानुरोधेनापेक्षिकामृतत्वग्रहणायोगात्, उपसंहारेऽप्यमृतत्वश्रवणेनोपक्रमोपसंहारस्पर्शित्वलक्षणतात्पर्यलिङ्गयुक्तस्यामृतत्वस्य तद्रहितप्राणारामत्वादिलिङ्गानुरोधेनान्यथानयनायोगाच्च। तथा पुरुषपदोदितं पूर्णत्वं हिरण्मयपदोदितं स्वयंज्योतिष्ट्वमिन्द्रपदोदितं पारमैश्वर्यमाकाशशरीरपदोदितमाकाशदेहत्वं सूक्ष्मत्वं वा सत्यात्मपदोदितमवितथस्वभावत्वं शान्तिसमृद्धपदोदितं सर्वप्रपञ्चोपशमात्मकत्वमित्येतेषां लिङ्गानां परब्रह्मण्येव स्वारस्याच्च। मनोमयपदस्याप्यर्थत्रयं भाष्ये दर्शितम्। तत्र प्रथमतृतीयार्थौ परापरब्रह्मणोः साधारणौ। मनोभिमानीत्यर्थप्रदर्शनमात्रमपरब्रह्मपक्षपाती[2]। तथा प्राणारामत्वमनआनन्दत्वे अपि। न चैतावता हिरण्यगर्भाख्यं ब्रह्म श्रुतिभाष्ययोरभिप्रेतमिति निश्चेतुं शक्यते। शाण्डिल्यविद्यादौ मनोमयत्वप्राणशरीरत्ववत्त्रापि ब्रह्मणः सार्वात्म्यप्रयुक्ततया तेषामपि परस्मिन्ब्रह्मण्युपपत्तेः सार्वात्म्यं च प्रकृतस्य ब्रह्मणो दर्शितम्। न चैतत्परब्रह्मणोऽन्यत्र मुख्यं सम्भवति तस्मात्परमेव ब्रह्मात्रोपास्यमिति संक्षेपः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां षष्ठोऽनुवाकः

---

१. केचित् वार्तिककारानन्दगिरयः।

२. अपरमेव ब्रह्मोपास्यमिति वार्तिककारः आनन्दगिर्याचार्यश्च। युक्तं चैतत्—मनोमयत्वप्राणारामत्वादीनां परब्रह्मण्यसम्भवात्। न च शाण्डिल्यविद्यान्यायः सम्भवति। तत्र सर्वं खल्विदं ब्रह्मेत्युपक्रमात् एतद्ब्रह्मेति उपसंहाराच्च परब्रह्मत्वनिर्णये सति मनोमयत्वादीनां ब्रह्मणि कथञ्चिदुपपादनं कृतम्। अत्र तु एतद्विशेषणैरेवोपास्यो निर्णयः। ते च परब्रह्मणि नान्वीयन्ते इति विशेषात्। अत एव भाष्ये "सर्वेषां मनसां पतिः" "अङ्गभूता देवतानां अङ्गभूता अवयवभूताः" इत्यादिभाष्यं सङ्गच्छते।

## अथ वार्तिके शीक्षावल्ल्यां षष्ठोऽनुवाकः

तिस्रो व्याहृतयस्ताश्च ब्रह्मणोऽङ्गान्यवादिषम् । स्थानादिसिद्धये तस्य परः सन्दर्भ उच्यते ॥११०॥

स यः परोक्षनिर्दिष्टः प्रत्यक्षेण स दर्श्यते । अन्तर्हृदय आकाशे पश्याऽऽत्मानं त्वमात्मना ॥१११॥

पद्माकारो हि मांसस्य खण्डो हृदयमुच्यते । आकाशस्तस्य मध्ये यो बुद्धेरायतनं सदा ॥
तस्मिन्स पुरुषो ज्ञेयो मनोमय इहाञ्जसा ॥११२॥

५ शशिस्थराहुवत्साक्षान्मनस्येवोपलभ्यते ॥११३॥

मनुते मनसा यस्मात्तेनायं स्यान्मनोमयः । स्याद्वा तदभिमानित्वात्तल्लिङ्गात्तन्मयः स्मृतः ॥११४॥

अमृतोऽमरणधर्मा स्याद्धिरण्यं ज्योतिरुच्यते । तन्मयोऽयं पुमान्ध्येयस्तत्प्राप्तौ द्वारथोच्यते ॥११५॥

ऊर्ध्वं प्रवृत्ता नाड्येका सुषुम्ना हृदयादधि । गत्वा तालुकयोर्विद्वान्मध्येनोदानगर्भया ॥११६॥

स्तनवल्लम्बते कण्ठे मांसखण्डस्त्वधोमुखः । इन्द्रस्यासौ सृतिर्ज्ञेया रेचकेन तया व्रजेत् ॥११७॥

१० तया गत्वाऽथ यायात्स यत्केशान्तो विवर्तते । भित्त्वा शिरःकपाले द्वे भूरित्यग्निं प्रपद्यते ॥११८॥

द्वितीययाऽथ व्याहृत्या वायौ सम्प्रतितिष्ठति । आदित्ये सुवरित्येवं लोकेशे प्रतितिष्ठति ॥११९॥

स्थित्वैवमङ्गभूतेषु प्रतितिष्ठत्यथाङ्गिनि । मह इत्यात्मनि स्थित्वा स्वाराज्यं प्रतिपद्यते ॥१२०॥

उत्तरानुवाकस्य तात्पर्यमाह—तिस्र इति । ताश्चेत्याध्यात्मिका दर्शिताः । ब्रह्मणो महाव्याहृत्यात्मकस्य । स्थानादीत्यादिशब्देन गुणमार्गौ गृह्येते ॥ ११० ॥

१५ "स वेद ब्रह्मे"ति पूर्वस्मिन्ननुवाके परोक्षरूपेण निर्दिष्टं ब्रह्म प्रत्यक्षं हृदयाकाशे प्रदर्श्यत इति पदार्थव्याख्यानं करोति—स य इति । "तस्मिन्नयं पुरुष" इत्यस्य तात्पर्यमाह—अन्तरिति ॥ १११ ॥

हृदयशब्दार्थमाह—पद्मेति । "अन्तरि"त्यादेर्वाक्यार्थं कथयति—आकाश इति ॥ ११२ ॥

मनोमयत्वं तस्य श्रुत्योक्तमनेकधा साधयति—शशिस्थेति ॥ ११३ ॥

मनुते विषयजातमिति शेषः—तल्लिङ्गात्—तेन मनसा लिङ्गेन गम्यमानत्वादित्यर्थः ॥ ११४ ॥

२० शब्दद्वयस्यार्थमनूद्य गुणद्वयात्मकत्वेन ब्रह्मणो ध्येयत्वमाह—अमृत इति । अन्तरेणेत्यादिवाक्यस्य तात्पर्यमाह—तत्प्राप्ताविति । शरीरस्थित्यर्थकर्मसमाप्त्यानन्तर्यमथशब्दार्थः ॥ ११५ ॥

तमेव द्वारशब्दितं मार्गं तेनोपासकस्य गमनं च वाक्यं योजयन्दर्शयति—ऊर्ध्वमित्यादिना । या हृदयादारभ्य सुषुम्ना नाडी ध्येयस्येन्द्रस्यापरस्य ब्रह्मणः प्राप्तये प्रवृत्ता सा च सृतिर्योगशास्त्रानुसारेण ज्ञातव्या ॥ ११६ ॥

यया चोपासको विद्वान्कण्ठे स्थितं स्तनसदृशमधोमुखं सल्लम्बमानं मांसखण्डं भित्त्वा तालुकयोर्मध्येन २५ गत्वा प्रकृतया सृत्योदानवायुपूरितया रेचकप्राणायामबलाद्व्रजेदिति ॥ ११७ ॥

किं व्रजेदित्यपेक्षायां "यत्रे"त्यादि व्याचष्टे—तयेति । फलप्राप्त्याभिमुख्यानन्तर्यमथशब्दार्थः । शिरःकपाले भित्त्वा मूर्धानं भित्वा तदनन्तरमङ्गाङ्गिभावेन स्थितं ब्रह्म प्राप्नोतीत्याह—भूरित्यादिना ॥ ११८-११९-१२० ॥

नान्यो राजाऽस्ति यस्येह राजा यः स्वयमेव तु । स स्वराट् तस्य भावश्च स्वाराज्यमिह कीर्त्यते ॥१२१॥
मनोगीश्चक्षुषां चैव श्रोत्रविज्ञानयोरपि । आप्नोति पर्युपासीनः स्वाराज्यं नात्र संशयः ॥
तत एतत्फलं दिव्यं यथोक्तोपासनाद्भवेत् ॥१२२॥
व्याहृत्यात्मन एतस्य रूपसंक्लृप्तयेऽधुना । उपासनविधित्सायै परो ग्रन्थोऽवतार्यते ॥१२३॥
वियद्देहमिदं ब्रह्म वियत्सदृशमेव वा । मूर्तामूर्तस्वभावं च त्रैलोक्याद्यात्मतो भवेत् ॥१२४॥ ५
इन्द्रियारमणं चैव मनआनन्दमेव च । शान्त्या समृद्धमत्यर्थं ब्रह्मैतदमृतं परम् ॥१२५॥
प्राचीनयोग्योपास्स्वैतद्यथाव्याख्यातलक्षणम् । माहाचमस्य आचार्य अन्तेवासिनमुक्तवान् ॥१२६॥

इति षष्ठोऽनुवाकः

"आप्नोति स्वाराज्यमि"त्यत्र स्वाराज्यशब्दार्थमाह—नान्य इति । व्यवहारभूमिर्वाक्यं चेहशब्दाभ्यां परामृश्यते ॥ १२१ ॥ १०

"आप्नोति मनसस्पतिमि"त्यादि व्याकरोति–मनोगीरिति । "एतत्ततो भवती"ति व्याकुर्वन्फलमुपसंहरति—तत इति ॥ १२२ ॥

"आकाशशरीरं ब्रह्मे"त्यादेर्वाक्यस्य तात्पर्यमाह—व्याहृत्यात्मन इति । कुत्र हिरण्यगर्भरूपसंक्लृप्तिरुपयुज्यते तत्राऽऽह—उपासनेति ॥ १२३ ॥

तात्पर्यमुक्त्वा पदार्थमाह—वियदिति । इदं ब्रह्मेत्याकाशोपाधिकमुच्यते, तस्य च वियता सूक्ष्मत्वव्यापित्वादिभिः सादृश्यम् । "सत्यात्मे"त्यस्यार्थमाह—मूर्तामूर्तेति । सच्च यच्चेति भूतपञ्चकं मूर्तामूर्तात्मकं सत्यं तदात्मा स्वभावो यस्य तद्ब्रह्म सत्यात्मेत्यर्थः ॥ १२४ ॥ १५

प्राणाराममित्यादेरर्थमाह—इन्द्रियेति । प्राणेष्विन्द्रियेष्वारमणमाक्रीडा यस्य । यत्र वा तेषामारमणं तद्ब्रह्म प्राणारामम् । मनआनन्दमानन्दकरमेव यस्य तद्ब्रह्म तथेत्यर्थः । "शान्तिसमृद्धममृतमि"ति पदद्वयस्यार्थमाह—शान्त्येति ॥ १२५ ॥ २०

उक्तविशेषणमपरं ब्रह्मात्मत्वेनोपास्यमित्याचार्यनियोगं शिष्यं प्रति दर्शयति—प्राचीनेति ॥ १२६ ॥

इति षष्ठोऽनुवाकः

## अथ शीक्षावल्ल्यां सप्तमोऽनुवाकः

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्। अथाध्यात्मम्। प्राणो व्यानोऽपान उदानः समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म माँ्सँ् स्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदँ् सर्वम्। पाङ्क्तेनैव पाङ्क्तँ् स्पृणोतीति॥ १॥

सर्वमेकं च

५

इति सप्तमोऽनुवाकः

यदेतद्व्याहृत्यात्मकं ब्रह्मोपास्यमुक्तं तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते। पञ्चसंख्यायोगात्पङ्क्तिच्छन्दःसम्पत्तिः। ततः पाङ्क्तत्वं सर्वस्य। पाङ्क्तश्च यज्ञः। "पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञः" इति श्रुतेः। तेन यत्सर्वं लोकाद्यात्मान्तं च पाङ्क्तं परिकल्पयति यज्ञमेव तत्परिकल्पयति। तेन यज्ञेन परिकल्पितेन १० पाङ्क्तात्मकं प्रजापतिमभिसम्पद्यते। तत्कथं पाङ्क्तमिदं सर्वमित्यत आह—पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशा इति लोकपाङ्क्तम्। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तम्। आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तम्। आत्मेति विराड् भूताधिकारात्। इत्यधिभूतमित्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम्। लोकदेवतापाङ्क्तयोश्चाभिहितत्वात्।

आनन्दगिरिटीका

१५ उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह—यदेतदित्यादिना। पृथिव्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्य च्छन्दसः सम्पादनादित्याह—पञ्चसंख्येति। न केवलं पञ्चसंख्यायोगात्पङ्क्तिच्छन्दःसम्पादनं यज्ञत्वसम्पादनमपि कर्तुं शक्यत इत्याह—पाङ्क्तश्च यज्ञ इति। पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिः सम्पाद्यत इति यज्ञः पाङ्क्त इत्यर्थः।

वनमाला

२० उत्तरोऽप्यनुवाकः प्रकारान्तरेण ब्रह्मोपासनविषय इत्याह—यदेतदित्यादिना। पृथिव्यादिजगतः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्य च्छन्दसः पृथिव्यादौ सम्पादनादित्याह—पञ्चसंख्येति। न केवलं पञ्चसंख्यायोगात्पङ्क्तिच्छन्दःसम्पादनम्, यज्ञत्वसम्पादनमपि कर्तुं शक्यत इत्याह—पाङ्क्तश्च यज्ञ इति। पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिर्योगाद्यज्ञः पाङ्क्त इत्यर्थः। दैववित्तमुपासनं मानुषवित्तं गवादीति विभागः। पङ्क्तिच्छन्दसो यज्ञस्य च पञ्चसंख्यायोगात्पाङ्क्तत्वे क्रमेण श्रुतीर्दर्शयति—पञ्चाक्षरेति। जगतो यज्ञत्वसम्पादनमेव २५ दर्शयति–तेनेति। पञ्चसंख्यायोगलक्षणेन यज्ञसाम्येनेत्यर्थः। लोकाद्यात्मान्तं चेति। प्राणादिमज्जान्तं चेति चकारार्थः। परिकल्पयति, श्रुतिरिति शेषः। एवं ब्रह्मोपाधिभूतं सर्वं जगत्पंक्तिच्छन्दोरूपं यज्ञरूपं च परिकल्प्य तादृक्पाङ्क्तजगदात्मकं प्रकृतं ब्रह्माहमस्मीति चिन्तयतः किं फलं भवतीत्याकाङ्क्षायामाह—तेन यज्ञेनेति। प्रजापतिमिति। स्थूलसर्वप्रपञ्चोपाधिकस्य ब्रह्मणः प्रजापतिरूपत्वात् "तं यथा यथोपासते" इति न्यायेन जगदात्मब्रह्मोपासनाज्जगदात्मानं प्रजापतिमेव प्राप्नोतीत्यर्थः। एवं तात्पर्यमुक्त्वा पृथिव्यादिजगतः पञ्चसंख्यायोगात्पाङ्क्तस्वरूपत्वं प्रश्न- ३० पूर्वकं श्रुत्या दर्शयति—तत्कथमित्यादिना। विराडिति। "आप ओषधयः" इत्यादिस्थूलभूताधिकाराद्भूतमयो विराड्देह इहात्मशब्दार्थ इत्यर्थः। इत्यधिभूतमित्युपसंहारवचनमित्यधिलोकमित्यधिदैवतमित्येवं रूपयोरधिलोकाधिदैवतपाङ्क्तद्वयोपसंहारवचनयोरुपलक्षणार्थमित्यत्र हेतुमाह—लोकदेवतापाङ्क्तयोश्चेति। तयोरपि पूर्वमुक्त्वा-

अथानन्तरमध्यात्मं पाङ्क्तत्रयमुच्यते—प्राणादि वायुपाङ्क्तम्। चक्षुरादीन्द्रियपाङ्क्तम्। चर्मादि धातुपाङ्क्तम्। एतावद्धीदं सर्वमध्यात्मं बाह्यं च पाङ्क्तमेवेति। एतदेवमधिविधाय परिकल्प्यर्षिर्वेद एतद्दर्शनसम्पन्नो वा कश्चिदृषिरवोचदुक्तवान्। किमित्याह—पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैवाऽऽध्यात्मिकेन संख्यासामान्यात्पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति। एकात्मतयोपलभत इत्येतत्। एवं पाङ्क्तमिदं सर्वमिति यो वेद स प्रजापत्यात्मैव भवतीत्यर्थः। ५

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये सप्तमोऽनुवाकः

आनन्दगिरिटीका

"उत्कृष्टदृष्टिर्निकृष्टे फलवती" इति न्यायाद्बाह्यपाङ्क्तरूपेणाऽऽध्यात्मिकपाङ्क्तत्रयमवगन्तव्यमित्यभिप्रेत्याऽऽह—एकात्मतयेति। १०

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां सप्तमोऽनुवाकः

वनमाला

दित्यर्थः। अध्यात्ममिति। आत्मा देहः, तमधिकृत्य वर्तमानमध्यात्ममित्यर्थः। ननु पाङ्क्तषट्ककथनेन कथं सर्वस्य जगतः पाङ्क्तत्वमुक्तम्? तत्राह—एतावद्धीति। यद्बाह्यमध्यात्मं च पाङ्क्तं श्रुत्या दर्शितम् एतावदेवेदं १५ सर्वं जगत्, न ततोऽधिकमस्तीत्यवगन्तव्यमित्यर्थः। श्रुतिप्रदर्शितपाङ्क्तषट्के कृत्स्नस्य जगतोऽन्तर्भावः प्रसिद्ध इति हिशब्दार्थः। उपासनाविधिं दर्शयति—एतदेवमिति। एतज्जगदेवं पाङ्क्तरूपेणेत्यर्थः। उक्तवानित्यस्येतिशब्देन सम्बन्धः। संख्यासामान्यादिति। आध्यात्मिकमपि पाङ्क्तत्रयं बाह्यमपि पाङ्क्तत्रयमित्यस्मात्सामान्यादाध्यात्मिकेन पाङ्क्तेन बाह्यपाङ्क्तस्य पूरणमित्यर्थः। ननु तेन तस्य पूरणं कुसूलादेरिव धान्यादिना न सम्भवतीत्याशङ्क्याऽऽह—एकात्मतयेति। बाह्यमाध्यात्मिकं च सर्वं पाङ्क्तजातमेकात्मत्वेनोपलभते, पाङ्क्तजगदात्मकं ब्रह्माहमस्मीति २० चिन्तयेदित्युक्तवानिति यावत्। एतदधिविधायेत्यादिनोक्तमुपासनमनूद्य तस्य फलमुपक्रमे कथितमित्याह—एतदेवमिति।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां सप्तमोऽनुवाकः

## अथ वार्तिके शीक्षावल्ल्यां सप्तमोऽनुवाकः

पाङ्क्तस्वरूपेणैतस्य भूयोऽप्यन्यदुपासनम् । उदारफलसिद्ध्यर्थं पृथिवीत्युच्यतेऽधुना ॥१२७॥
पञ्चभिर्यत आरब्धं जगत्पाङ्क्तमतो भवेत् । यज्ञः क्लृप्तो भवेदेवं पाङ्क्तो यज्ञ इति श्रुतिः ॥१२८॥
यज्ञेन परिक्लृप्तेन त्रैलोक्यात्मानमश्नुते । पाङ्क्तत्वसिद्धये तस्मादारब्धैषा परा श्रुतिः ॥१२९॥
दिगन्तं लोकपाङ्क्तं स्यान्नक्षत्रान्तं च दैवतम् । आत्मान्तं भूतपाङ्क्तं च विराडात्माधिकारतः ॥१३०॥
५ उपलक्षणमेतत्स्याद्देवतालोकपाङ्क्तयोः । अधिभूतमिदं वक्ष्यामोऽथाध्यात्ममतः परम् ॥१३१॥
वायुपाङ्क्तं समानान्तं त्वगन्तं चैन्द्रियं तथा । चर्मादि धातुपाङ्क्तं च विश्वमेतावदुच्यते ॥१३२॥
पाङ्क्तमेव जगत्सर्वमिति दृष्ट्वाऽभ्यधादृषिः । पाङ्क्तं वा इदमाब्रह्मस्तम्बं नान्यदिति स्म ह ॥१३३॥
आध्यात्मिकेन पाङ्क्तेन संख्यासामान्यकारणात् । बलयत्यात्मभावेन पाङ्क्तं बाह्यमशेषतः ॥१३४॥

इति सप्तमोऽनुवाकः

१० प्रकृतस्यैव ब्रह्मणो हिरण्यगर्भस्य पाङ्क्तस्वरूपेणोपासनं वक्तव्यमित्युत्तरानुवाकप्रवृत्तिरित्याह—**पाङ्क्तेति** ॥ १२७ ॥

कथं हिरण्यगर्भस्य पाङ्क्तत्वमित्याशङ्क्य पञ्चभूतारब्धत्वाज्जगदात्मा हिरण्यगर्भः पाङ्क्तो भवतीत्याह—**पञ्चभिरिति**। एवं सति जगदात्मनो हिरण्यगर्भस्य यज्ञत्वमपि क्लृप्तं भवतीत्याह—**यज्ञ इति** ॥ १२८ ॥

पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिः सम्पाद्यतया यज्ञस्य पाङ्क्तत्वं वक्तव्यम् । जगतो यज्ञत्वं किमर्थं १५ कल्प्यते तत्राऽऽह—**यज्ञेनेति**। पाङ्क्तात्मकयज्ञरूपप्रजापत्युपासनात्प्रजापतिरेव भवतीत्यर्थः। पाङ्क्तात्मकजगदुपासनस्य विशिष्टफलवत्त्वाज्जगतो वक्तव्यं पाङ्क्तत्वमित्युत्तरग्रन्थप्रवृत्तिरित्युपसंहरति—**पाङ्क्तत्वेति** ॥ १२९ ॥

वाक्यत्रयमाश्रित्य पङ्क्तिविभागं दर्शयति—**दिगन्तमिति**। कोऽसावात्मेति भूतप्रकरणादात्मशब्देन विराडुच्यत इत्याह—**विराडिति** ॥ १३० ॥

इत्यधिभूतमित्यत्र भूतग्रहणस्य विवक्षितमाह—**उपलक्षणमिति**। अध्यात्ममित्यत्र तात्पर्यमाह—२० **वक्ष्याम इति** ॥ १३१ ॥

वाक्यत्रयमाश्रित्याध्यात्मिकं पाङ्क्तत्रयं विभजते—**वायुपाङ्क्तमिति** ॥ १३२ ॥

एतदधिविधायेत्यादेरर्थमाह—**पाङ्क्तमेवेति**। ऋषिर्वेदो वा यथोक्तदर्शनसम्पन्नो वा कश्चित् । निपातद्वयं वस्त्वन्तरासत्त्वप्रसिद्ध्यर्थम् ॥ १३३ ॥

उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायादाध्यात्मिकं पाङ्क्तत्रयमितरपाङ्क्तत्रयात्मना विद्यादित्यभिप्रेत्य पाङ्क्त-२५ षट्कस्योपासनाप्रकारं दर्शयन्पाङ्क्तेनैव पाङ्क्तं स्पृणोतीत्यस्यार्थमाह—**आध्यात्मिकेनेति**। संख्यासामान्यं पञ्चसंख्यावत्त्वम् ॥ १३४ ॥

इति सप्तमोऽनुवाकः

## अथ शीक्षावल्ल्यामष्टमोऽनुवाकः

ओमिति ब्रह्म। ओमितीद ँ सर्वम्। ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओ ँ शोमिति शस्त्राणि श ँ सन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति ॥ १ ॥

ओं दश ५

इत्यष्टमोऽनुवाकः

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम्। अनन्तरं च पाङ्क्तस्वरूपेण तस्यैवोपासनमुक्तम्। इदानीं सर्वोपासनाङ्गभूतस्योङ्कारस्योपासनं विधित्स्यते। परापरब्रह्मदृष्ट्या ह्युपास्यमान ओङ्कारः शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनं भवति। स ह्यालम्बनं ब्रह्मणः परस्यापरस्य च। प्रतिमेव विष्णोः। "एतेनैवाऽऽयतनेनैकतरमन्वेति" इति श्रुतेः। ओमिति इतिशब्दः स्वरूपपरिच्छेदार्थः। ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेदुपासीत। यत १० ओमितीदं सर्वं, सर्वं हि शब्दरूपमोङ्कारेण व्याप्तम्। "तद्यथा शङ्कुना" इति श्रुत्यन्तरात्। अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्वमोङ्कार इत्युच्यते।

### आनन्दगिरिटीका

वृत्तानुवादपूर्वकमुत्तरानुवाकमवतारयति--व्याहृत्यात्मन इत्यादिना। वेदविदां हि सर्वाः क्रिया ओङ्कारमुच्चार्य प्रवर्तन्ते ततस्तस्य श्रद्धागृहीतत्वात्तत्परिहारेणापदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादायैवोपासनं विधायत १५ इत्यर्थः। नन्वोङ्कारस्य शब्दमात्रस्याचेतनत्वादहमनेनोपासित इति ज्ञानाभावात्कथं फलदातृत्वं स्यादित्याशङ्क्याऽऽह—परापरेति। प्रतिमाद्यर्चनं इव सर्वत्रेश्वर एव फलदातेति भावः। ओङ्कारे ब्रह्मत्वाध्यासे किं सादृश्यमित्यत आह—ओमितीदमिति। सर्वास्पदत्वमोङ्कारस्य ब्रह्मणा सादृश्यमित्यर्थः।

### वनमाला

उत्तरानुवाकस्य सङ्गतिं वृत्तानुवादपूर्वकं दर्शयति--व्याहृत्यात्मन इति। अनन्तरं चेति। अव्यवहित- २० पूर्वानुवाक इत्यर्थः। इदानीमिति। उक्तवक्ष्यमाणसर्वोपासनानां कर्मणां चाङ्गभूतो य ओङ्कारस्तस्योपासनमिदानीं विधीयते; तथा च पूर्वोक्तोपासनेष्वङ्गत्वेनोपस्थितस्य प्रणवस्यात्रोपासनविधानात्सङ्गतिरिति भावः। न चोङ्कारस्य सर्ववैदिककर्मोपासनाङ्गत्वे मानाभाव इति वाच्यम्; "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥" इति भगवद्वचनस्यैव मानत्वात्। ब्रह्मवादिनां वेदवादिनामित्यर्थः। ननु शब्दमात्ररूपस्योङ्कारस्याचेतनतया फलदातृत्वासम्भवात्कथमुपास्यत्वमित्याशङ्क्याह—परापरेति। प्रतिमाद्यर्चन इव ब्रह्मैव २५ फलदात्रीति भावः। ब्रह्मण एव सर्वत्र फलदातृत्वम् "फलमत उपपत्तेः" इत्यधिकरणे प्रसिद्धमिति द्योतनार्थो दृष्ट्या ह्युत्यत्र हिशब्दः। प्रणवस्य परापरब्रह्मदृष्ट्यालम्बनत्वं प्रसिद्धमिति सदृष्टान्तमाह—स हीति। प्रणवस्य परापरब्रह्मदृष्ट्यालम्बनत्वे तद्दृष्ट्योपासितस्य तस्य परापरप्राप्तिसाधनत्वे च श्रुतिमाह—एतेनैवेति। ओङ्कारेणैवायतनेन प्राप्तिसाधनेन परमपरं वा प्राप्नोतीत्यर्थः। एवं तात्पर्यमुक्त्वा अक्षराणि व्याचष्टे---इतीत्यादिना। परिच्छेदार्थ इति। संग्रहार्थ इत्यर्थः। ओङ्कारस्य परापरब्रह्मदृष्ट्यालम्बनत्वेन श्रुतिषु प्रसिद्धत्वेऽपि प्रकृते मुख्यत्वात्परब्रह्म- ३० दृष्टिरेवोङ्कारे विवक्षितेति मत्वा तत्र ब्रह्मदृष्ट्यध्यासे किं सादृश्यमित्याकाङ्क्षायामाह—यत ओमितीदं सर्वमिति। यत ओङ्कारः सर्वात्मकः ततः सर्वात्मकत्वसादृश्यादोङ्कारे सर्वात्मकब्रह्मदृष्टिर्युक्तेति भावः। ननु ब्रह्मणः सर्वात्मकत्वम् "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिसिद्धम्; ओङ्कारस्य तु कथं सार्वात्म्यमित्याशङ्क्याह—सर्वं हीति। नन्वोङ्कारस्य सर्वशब्दात्मकत्वेऽपि कथमर्थप्रपञ्चात्मकत्वमित्याशङ्क्य शब्दद्वारेत्याह—अभिधानतन्त्रं हीति। अभिधेयजातस्याभिधानाधीनसिद्धिकत्वाद्वाच्यवाचकयोस्तादात्म्यस्वीकाराच्चाभिधेयजातस्याभिधानेऽन्तर्भावः ३५ सम्भवतीत्यर्थः। अत इदमिति। प्रणवसार्वात्म्यस्यापि श्रुत्यादिसिद्धत्वादिदं सर्वमोङ्कार इति प्रसिद्धवदुपदिश्यते

ओङ्कारस्तुत्यर्थमुत्तरो ग्रन्थः उपास्यत्वात्तस्य। ओमित्येतदनुकृतिरनुकरणम्। करोमि यास्यामि वेति कृतमुक्तमोमित्यनुकरोत्यन्यः। अत ओङ्कारोऽनुकृतिः। ह स्म वा इति प्रसिद्धावद्योतकाः। प्रसिद्धं ह्योङ्कारस्यानुकृतित्वम्। अपि च "ओ श्रावय" इति प्रैषपूर्वकमाश्रावयन्ति प्रतिश्रावयन्ति। तथोमिति सामानि गायन्ति सामगाः। ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि। तथा ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा ५ प्रसौत्यनुजानाति प्रैषपूर्वकम्। ओमित्यग्निहोत्रमनुजानाति। जुहोमीत्युक्त ओमित्येवानुज्ञां प्रयच्छति। ओमित्येव ब्राह्मणः प्रवक्ष्यन्प्रवचनं करिष्यन्नध्येष्यमाण ओमित्येवाऽऽह। ओमिति प्रतिपद्यतेऽध्येतुमित्यर्थः। ब्रह्म वेदमुपाप्नवानीति उपाप्नुयां ग्रहीष्यामीति। उपाप्नोत्येव ब्रह्म। अथवा ब्रह्म परमात्मा तमुपाप्नवानीत्यात्मानं प्रवक्ष्यन्प्रापयिष्यन्नोमित्येवाऽऽह। स च तेनोङ्कारेण ब्रह्म प्राप्नोत्येव। ओङ्कारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्तस्मादोङ्कारं ब्रह्मेत्युपासीतेति वाक्यार्थः।

१० इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्येऽष्टमोऽनुवाकः

आनन्दगिरिटीका

शस्त्राणि गीतिरहिता ऋच उच्यन्ते। प्रतिगरमिति। ओऽथामोदैवेति शब्दमध्वर्युः प्रतिगृणाति होतुः शंसनं प्रति प्रतिशंसनमुच्चारयतीत्यर्थः। प्रवक्ष्यन्निति। "वच परिभाषणे" इत्यस्य रूपं प्रथमव्याख्याने। द्वितीये "वह १५ प्रापणे" इत्यस्य द्रष्टव्यम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां अष्टमोऽनुवाकः

वनमाला

ओमितीदं सर्वमिति वचसेत्यर्थः। ननु प्रथमवाक्येन प्रणवे ब्रह्मदृष्टिर्विहिता, तत्र तद्दृष्टिकरणे नियामकं द्वितीय- २० वाक्येन दर्शितम्, अतो विवक्षितार्थस्य सिद्धत्वात्किमुत्तरग्रन्थेनेत्याशङ्क्याह—ओङ्कारस्तुत्यर्थ इति। अनुकरणमिति। अनुज्ञानरूपमिति यावत्। केनचित्करोमीत्युक्त्वा कृतं कर्मान्य ओमित्यनुकरोति अनुजानाति, तथा यास्यामि विष्ण्वालयमित्युक्तमन्य ओमित्यनुकरोतीति योजना। प्रसिद्धं हीति। प्रसिद्धिश्च करोमीत्यादिना पूर्वं प्रदर्शितैव। अप्यो श्रावयेत्यत्र अपिशब्दो वक्ष्यमाणोदाहरणसमुच्चयार्थ इति मत्वाऽऽह—अपि चेति। प्रैषपूर्वकमिति। "ओ श्रावय" इति मन्त्रगतेनोङ्कारेणाग्नीध्रसम्बोधनपूर्वकमित्यर्थः। तदुक्तं वेदभाष्ये—"मन्त्रगत ओङ्कार आग्नीध्र- २५ सम्बोधनार्थः। हे आग्नीध्र देवान्प्रति हविःप्रदानावसरं श्रावयेति मन्त्रार्थः" इति। आश्रावयन्तीत्यस्यार्थमाह—प्रतिश्रावयन्तीति। प्रतिश्रवं कारयन्ति, प्रत्याश्रवणं कारयन्तीति यावत्। शस्त्रशंसितारो होतारः, तेऽपि "शों सावोम्" इत्युपक्रम्य शस्त्राणि शंसन्ति तान्योमिति समापयन्ति चेत्यर्थः। प्रतिगरमिति। "ओऽथामोद इव" इति मन्त्रमित्यर्थः। ओकारेण होता सम्बोध्यते; हे होतः अथ अर्धर्चशंसनानन्तरमस्माकमामोद इव हर्ष एव सम्पन्न इति तदर्थः। ब्रह्मेति। ऋत्विग्विशेषो ब्रह्मा यदा अन्येषामृत्विजामनुज्ञां प्रयच्छति तदा ओं प्रोक्षेत्यादिरूपेण ३० प्रणवपुरःसरमेव प्रसौति। तस्यार्थमाह—अनुजानातीति। जुहोमीत्युक्तवन्तं प्रत्यन्य ओमित्येवानुज्ञां प्रयच्छतीत्यर्थः। प्रवचनं करिष्यन्निति। प्रवक्ष्यन्निति "वच परिभाषणे" इत्यस्य रूपमस्मिन्व्याख्याने; द्वितीयव्याख्याने तु "वह प्रापणे" इत्यस्यान्तर्भावितण्यर्थस्य रूपमिति भेदः। वेदमिति। वेदं ग्रहीष्यामीत्यभिसन्धिमानादावोमित्येवाध्येतुं ब्राह्मण उपक्रमत इत्यर्थः। अध्ययनफलभूतां वेदावाप्तिं कथयति ब्रह्मैवोपाप्नोतीति; तद्योजयति—उपाप्नोत्येवेति। प्रापयिष्यन्निति। परमात्मानमुपाप्नवानि प्रत्यक्त्वेन प्राप्नुयामित्यभिसन्धिमान्ब्राह्मण आत्मानं ब्रह्म प्रापयिष्यन्नात्मनो ३५ ब्रह्मभावप्राप्त्युपायमन्विष्यन्नोमित्याहेत्यर्थः। स चेति। स च ब्राह्मणस्तेनोङ्कारेण आत्मज्ञानमुपायं लब्ध्वा ब्रह्म प्राप्नोत्येवेत्यर्थः। विवक्षितमनुवाकार्थं संक्षिप्य दर्शयति—ओङ्कारपूर्वेति। अत्र यद्यपि "ओ श्रावय" इति मन्त्रे "ओऽथामोद इव" इति प्रतिगरनामकमन्त्रे च ओकार एव श्रूयते न त्वोङ्कारः, तथाप्योकारस्योङ्कारैकदेशत्वात्तत्पूर्वप्रवृत्तानामप्योङ्कारपूर्वकत्वमुपचारादुक्तमिति मन्तव्यम्।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यामष्टमोऽनुवाकः

## अथ वार्तिके शीक्षावल्ल्यामष्टमोऽनुवाकः

सर्वोपासनशेषस्य प्रणवस्याधुनोच्यते । उपासनमलं यस्माद्ब्रह्मणोः प्राप्तये द्वयोः ॥१३५॥
परस्य ब्रह्मणो यस्मादपरस्य च चोद्यते । आलम्बनतया तस्मात्स एवात्राभिधीयते ॥१३६॥
ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा सदा । धारयेत्स्तुतये तस्य परो ग्रन्थोऽवतार्यते ॥१३७॥
तद्यथा शङ्कुनेत्येवं सर्वमोमिति युज्यते । अभिधानादृते यस्मादभिधेयं न विद्यते ॥१३८॥
अनुज्ञानुकृतिस्तद्वत्सर्वत्रोमिति कीर्त्यते । ओश्रावयेत्यनुज्ञाता यत आश्रावयन्ति च ॥१३९॥ ५
प्रसौति ह्यनुजानाति ब्रह्मोमित्येव चर्त्विजम् । प्रवक्ष्यन्ब्राह्मणो वेदमोमित्येवं प्रयुज्यते[1] ॥१४०॥
उपाप्नवानि ब्रह्मेति स च वेदमवाप्नुयात् ॥१४१॥
परात्मा वा भवेद्ब्रह्म स तदोङ्कारपूर्वकम् । प्राप्नोत्येव न सन्देह उपासीतात ओमिति ॥१४२॥

इत्यष्टमोऽनुवाकः

"ओमिति ब्रह्मे"त्याद्यनुवाकस्य तात्पर्यमाह—सर्वेति। उपासनाशब्देन शास्त्रीयं सर्वं कर्म लक्ष्यते। उपासनं १० परापरब्रह्मदृष्ट्येति शेषः। तथोपासितस्य प्रणवस्य तत्प्राप्तिसाधनत्वादिति हेतुमाह—अलमिति। वेदविहिताः सर्वाः क्रियाः प्रणवमुच्चार्य प्रवर्त्यन्ते तेन तस्य श्रद्धागृहीतत्वात्तत्परिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादाय एतस्मिन्नुभयविधब्रह्मदृष्टिर्विधीयत इत्यर्थः ॥ १३५ ॥

परापरब्रह्मदृष्ट्यालम्बनत्वेनोङ्कारस्य "परं चापरं चे"त्यादौ विधानाच्च तदनुवादेन ब्रह्मदृष्टिरत्र विधित्सितेत्याह—परस्येति ॥ १३६ ॥ १५

ओङ्कारो ध्येयत्वेनात्रोच्यते न तु सर्वशेषत्वेनेत्येवं तात्पर्यमुक्त्वोमिति ब्रह्मेत्यस्यार्थमाह—ओमित्येतदिति। उपास्यत्वादोङ्कारस्य स्तुत्यर्हत्वं गृहीत्वा समनन्तरसन्दर्भस्य स्तुतिपरत्वमाह—स्तुतय इति ॥ १३७ ॥

"ओमितीदं सर्वमि"त्योङ्कारस्य कथं सर्वत्वमुच्यते सर्वस्यातत्कार्यत्वादित्याशङ्क्य तस्य सर्वत्वे श्रुतियुक्ती क्रमेण दर्शयति—तद्यथेति ॥ १३८ ॥

"ओमित्येतदनुकृती"त्यत्रानुकृतिशब्देनानुज्ञा लोकवेदयोरुच्यते। तथा च तस्य सर्वात्मत्वेनोत्कर्षवदनुज्ञा- २० रूपत्वाच्चोत्कर्षः सिध्यतीत्याह—अनुज्ञेति। "अप्यो श्रावये"त्यादेरर्थमाह—ओश्रावयेतीति। अतोऽनुज्ञारूपत्वमोङ्कारस्य प्रकटमिति शेषः ॥ १३९ ॥

"ओमिति ब्रह्मा प्रसौती"त्यस्यार्थमाह—प्रसौतीति। "ओमिति ब्राह्मण" इत्यादेरर्थमाह—प्रवक्ष्यन्निति ॥१४०॥

किमभिसन्धायोङ्कारपूर्वकं वेदाध्ययनं करोति तत्राऽऽह—उपाप्नवानीति। ब्रह्मशब्देन वेदो गृह्यते ॥१४१॥

ब्रह्मशब्दस्यार्थान्तरमुक्त्वा तत्रापि वाक्यं योजयति—परात्मेति। उपासकः सर्वनाम्ना परामृश्यते ॥१४२॥ २५

इत्यष्टमोऽनुवाकः

---

१. "युज समाधौ" प्रकर्षेण युज्यते समाहितचित्तो भवतीत्यर्थः।

## अथ शीक्षावल्ल्यां नवमोऽनुवाकः

ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च।
५ प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्‌गल्यः। [1]तद्धि तपस्तद्धि तपः ॥ १ ॥

प्रजा च स्वाध्यायप्रवचने च षट् च

इति नवमोऽनुवाकः

विज्ञानादेवाऽऽप्नोति स्वाराज्यमित्युक्तःवाच्छ्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तमित्यतस्तन्मा प्रापदिति
१० कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः। ऋतमिति व्याख्यातम्। स्वाध्यायोऽध्ययनम्। प्रवचनमध्यापनं ब्रह्मयज्ञो वा। एतान्यृतादीन्यनुष्ठेयानीति वाक्यशेषः। सत्यं च सत्यवचनं यथाव्याख्यातार्थं वा। तपः कृच्छ्रादि। दमो बाह्यकरणोपशमः। शमोऽन्तःकरणोपशमः। अग्नय आधातव्याः। अग्निहोत्रं च होतव्यम्। अतिथयश्च पूज्याः। मानुषमिति लौकिकः संव्यवहारः। तच्च यथाप्राप्तमनुष्ठेयम्। प्रजा चोत्पाद्या। प्रजनश्च प्रजननमृतौ भार्यागमनमित्यर्थः।

१५

### आनन्दगिरिटीका

व्यवहितानुवाकेन सम्बन्धमाह—विज्ञानादेवेत्यादिना। अपरविद्यासहकारितया तत्फलेनैव फलवत्त्वसिद्ध्यर्थमुत्तरानुवाकारम्भ इत्यर्थः। लौकिकसंव्यवहारो विवाहादिः।

### वनमाला

उत्तरानुवाकस्य व्यवहितानुवाकेन सम्बन्धमाह—विज्ञानादेवेत्यादिना। कर्मणां स्वाराज्यप्राप्तावनुपयोगः
२० प्राप्त इति शङ्कार्थः। उपासनसहकारितया तत्फलेन स्वाराज्येन कर्मणां फलवत्त्वसिद्ध्यर्थमस्मिन्ननुवाके तेषामुपन्यास इति परिहारार्थः। पुरुषार्थपदं स्वाराज्यपरम्, कर्मणामुपासनसहकारितया तत्फलं प्रत्युपयोगप्रकारश्चेत्थम्—उपासकेन स्वकर्माननुष्ठाने तदकरणसूचितेन प्रत्यवायेन प्रतिबद्धमुपासनं फलपर्यवसायि न भवेत्; अतः प्रतिबन्धापनयद्वारा कर्मणां तत्रोपयोग इति। तथा च श्रुतिः—"अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति। अविद्यया कर्मणा प्रतिबन्धकपापलक्षणं मृत्युं नाशयित्वा विद्यया उपासनलक्षणया स्वाराज्यलक्षणममृतमश्नुत
२५ इति हि तदर्थः। व्याख्यातमिति। शास्त्रान्निश्चितावस्थं दर्शादिकर्मजातमृतशब्दवाच्यमिति "ऋतं वदिष्यामी"त्यत्र व्याख्यातमित्यर्थः। उपासकस्याध्यापने प्रवृत्तावुपासनानुष्ठानासम्भवादध्यापनस्य काम्यत्वेन तदकरणे प्रत्यवायाभावाच्च प्रवचनमध्यापनमिति व्याख्यानमयुक्तमित्यस्वरसादाह—ब्रह्मयज्ञो वेति। यथाव्याख्यातार्थं वेति। शास्त्रात्कर्तव्यतया बुद्धौ विनिश्चितमेव कर्म वाक्कायाभ्यां सम्पाद्यमानं सत् सत्यशब्दवाच्यमिति "सत्यं वदिष्यामी"-त्यत्र व्याख्यातार्थकं वाऽत्र सत्यपदमित्यर्थः। कृच्छ्रादीति। आदिपदं चान्द्रायणादिसंग्रहार्थम्। न चाशनपरित्याग-
३० प्रधाने कृच्छ्रादौ प्रवृत्तस्य कथं स्वाराज्यफलकोपासनानुष्ठानं सम्भवतीति वाच्यम्; शक्तस्य तदुभयानुष्ठानसम्भवात्, अशक्तस्य तु धनिनो धनदानरूपं सर्वसाधारण्येन मिताशनादिरूपं वा तपो भविष्यति। तथा च श्रुतिः—"एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति" इति। "हितमितमेध्याशनं तपः" इति योगशास्त्रे मिताशनादितपसोऽप्युक्तत्वात्। विवाहादौ बन्ध्वाद्युपचारो लौकिकः संव्यवहारः। [2]प्रजाश्चोत्पाद्या इति। प्रजोत्पत्त्यर्थाः पुत्रकामेष्ट्यादयः कर्तव्या

---

१. तद्धि तपस्तद्धि तपः—इति श्रुतेर्वचनम्। २. प्रजाश्चेति मूलपाठान्तरम्।

प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयितव्य इत्येतत्। सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम्। स्वाध्यायाधीनं ह्यर्थज्ञानम्। अर्थज्ञानायत्तं च परं श्रेयः। प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्धयर्थं च। अतः स्वाध्यायप्रवचनयोरादरः कार्यः। सत्यमिति सत्यमेवानुष्ठातव्यमिति सत्यवचाः सत्यमेव वचो यस्य सोऽयं सत्यवचा नाम वा तस्य। राथीतरो रथीतरस्य गोत्रो राथीतराचार्यो मन्यते।

तप इति तप एव कर्तव्यमिति तपोनित्यस्तपसि नित्यस्तपःपरस्तपोनित्य इति वा नाम, पौरुशिष्टिः ५ पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते। स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते। तद्धि तपस्तद्धि तपः। हि यस्मात्स्वाध्यायप्रवचने एव तपस्तस्मात्ते एवानुष्ठेये इति। उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये नवमोऽनुवाकः १०

### आनन्दगिरिटीका

पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्यमाह—**सर्वैरेतैरिति**। किमिति यत्नतोऽनुष्ठेये तत्राऽऽह—**स्वाध्यायाधीनमिति**। त्रयाणामृषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरेवादरं विवृणोति—**सत्यमित्यादिना**।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
शीक्षावल्ल्यां नवमोऽनुवाकः १५

### वनमाला

इत्यर्थः। **निवेशयितव्य इति**। निवेशो विवाहः। पुनः पुनः स्वाध्यायग्रहणस्य तात्पर्यमाह—**सर्वैरित्यादिना**। यत्नतोऽनुष्ठेये इत्यत्र हेतुमाह—**स्वाध्यायाधीनं हीति**। अध्ययनाधीनमित्यर्थः। अध्ययनस्यार्थज्ञानपर्यन्तत्वं पूर्वतन्त्रप्रसिद्धमिति द्योतनार्थो हिशब्दः। **अर्थज्ञानायत्तं चेति**। प्राणाड्या कर्मकाण्डार्थज्ञानायत्तं परं श्रेयः, साक्षादेव ज्ञानकाण्डार्थज्ञानायत्तं परं श्रेय इति विभागसूचनार्थश्चकारः। **अत इति**। स्वाध्यायस्यार्थज्ञानद्वारा परमश्रेयः- २० साधनत्वात्प्रवचनस्याविस्मरणादिसाधनत्वाच्चेत्यर्थः। **सत्यमेवेति**। अनुष्ठेयानां मध्ये सत्यमेव प्रशस्तं कर्मेति राथीतरस्य मतमिति भावः। तथा च वचनम्—"अश्वमेधसहस्रं च सत्यं च तुलया धृतम्। अश्वमेधसहस्रात्तु सत्यमेकं विशिष्यते ॥" इति। अत्र द्वितीयनामशब्दः प्रसिद्धिद्योतकः। **तप एवेति**। कृच्छ्रचान्द्रायणादिमिताशनधनदानरूपं तप एव प्रशस्तं कर्मेति पौरुशिष्टेर्मतम्। तस्य प्राशस्त्यं चोत्तमलोकप्राप्तिसाधनत्वात्। तथा च श्रुतिः—"तपसर्षयः सुवरन्वविन्दन्" इति। मौद्गल्याभिमते स्वाध्यायप्रवचनयोरुत्तमकर्मत्वे हेतुमाह श्रुतिः—**तद्धि तप इति**। २५ हिशब्दार्थकथनम्—**यस्मादिति**। तत्र स्वाध्यायशब्दितस्याध्ययनस्य नियमोपेतत्वात्तपःशब्दवाच्यत्वम्। तदुक्तम्—"नियमेषु तपःशब्द" इति। प्रवचनशब्दितस्य च ब्रह्मयज्ञस्य तपस्त्वम् "तपो हि स्वाध्यायः" इत्यादिश्रुतिप्रसिद्धमिति मत्वा तपस्त्वं तयोरुत्तमकर्मत्वे हेतुतयोक्तमित्यनुसन्धेयम्। **उक्तानामपीति**। "सत्यं च स्वाध्यायप्रवचने च तपश्च स्वाध्यायप्रवचने च" इत्यत्रोक्तानामपीत्यर्थः। **आदरार्थमिति**। आदरसूचनद्वारा मतभेदेनोत्तमकर्मत्वख्यापनार्थमित्यर्थः। ३०

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां नवमोऽनुवाकः

## अथ वार्तिके शीक्षावल्ल्यां नवमोऽनुवाकः

यथोक्तोपासनादेव स्वाराज्यफलसंश्रयात् । नैष्फल्ये कर्मणां प्राप्ते तत्साफल्यार्थं उत्तरः ॥१४३॥

स्वाध्यायोऽध्ययनं ज्ञेयं तथाचाध्यापनं परम् । आधातव्या यथाशास्त्रमग्नयः श्रेयसे तथा ॥

होतव्यमग्निहोत्रं च कुर्याच्चातिथिपूजनम् ॥१४४॥

तथा संव्यवहारश्च मानुषं स्यादसंशयम् ॥१४५॥

५ उत्पाद्या च प्रजा योग्या प्रजनं चर्तुसेवनम् । निवेशनं सुतस्येह प्रजातिरिति गम्यताम् ॥१४६॥

उक्तेषु व्यापृतेनापि कार्ये एव प्रयत्नतः । स्वाध्यायप्रवचने तेन प्रत्येकं च ग्रहस्तयोः ॥१४७॥

वेदार्थबोधनं नास्ति स्वाध्यायेन विना यतः । तथा प्रवचनेनातो धर्मार्थं च ग्रहस्तयोः ॥१४८॥

सत्यमेव तु वक्तव्यमिति सत्यवचा जगौ । राथीतरो मुनिस्तद्वत्तप एवेत्युवाच ह ॥१४९॥

पुरुशिष्टस्य तनयः कर्तव्यं तु महातपाः ।

१० मुद्गलस्याऽऽत्मजश्चाऽऽह कर्तव्ये यत्नमास्थितैः । स्वाध्यायप्रवचने एव ते एव तु तपो यतः ॥१५०॥

इति नवमोऽनुवाकः

आप्नोति स्वाराज्यमित्युपासनादेव स्वाराज्यश्रवणात्कर्मणामानर्थक्यमाशङ्क्य तदर्थवत्त्वं वक्तु"मृतं चे"त्याद्युत्तरानुवाकप्रवृत्तिरित्याह—यथोक्तेति ॥ १४३ ॥

ऋतसत्यशब्दयोरर्थस्य प्रथमानुवाके गतत्वादिदानीं स्वाध्यायप्रवचनशब्दयोरर्थमाह—स्वाध्याय इति । १५ "अग्नयश्चे"त्यादेरर्थं कथयति—आधातव्या इति ॥ १४४ ॥

"मानुषं चे"त्यादौ मानुषशब्दार्थमाह—तथेति । लौकिकः संव्यवहारो विवाहादिः ॥ १४५ ॥

प्रजाप्रजननशब्दयोरर्थमाह—उत्पाद्या चेति । प्रजातिशब्दार्थं विवक्षितं दर्शयति—निवेशनमिति ॥१४६॥

पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्यमाह—उक्तेष्विति ॥ १४७ ॥

कर्तव्यान्तरे व्यापृतेनापि स्वाध्यायप्रवचने कर्तव्ये इत्यत्र हेतुमाह—वेदार्थेति । अतस्तयोः प्रत्येकं ग्रहण-२० मिति शेषः । प्रवचनेन विनेति सम्बन्धः । पुण्योपचयहेतुत्वाच्च प्रत्येकं ग्रहणं तयोरित्याह—धर्मार्थं चेति ॥ १४८ ॥

ऋषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरादरं सूचयति सत्यमेवेत्यादिना ॥ १४९-१५० ॥

इति नवमोऽनुवाकः

## अथ शीक्षावल्ल्यां दशमोऽनुवाकः

[1]अहं वृक्षस्य रेरिवा। कीर्त्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविण ँ सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम्॥ १॥

अहं षट्

इति दशमोऽनुवाकः

अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नायः। स्वाध्यायश्च विद्योत्पत्तये, प्रकरणात्। विद्यार्थं हीदं प्रकरणम्। न चान्यार्थत्वमवगम्यते। स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते। अहं वृक्षस्योच्छेद्यात्मकस्य संसारवृक्षस्य रेरिवा प्रेरयिताऽन्तर्याम्यात्मना। कीर्तिः ख्यातिर्गिरेः पृष्ठमिवोच्छ्रिता मम। ऊर्ध्वपवित्रः ऊर्ध्वं कारणं पवित्रं पावनं ज्ञानप्रकाश्यं परमं ब्रह्म यस्य सर्वात्मनो मम सोऽहमूर्ध्वपवित्रः। वाजिनीव वाजवतीव। वाजमन्नं तद्वति सवितरीत्यर्थः। यथा सवितर्यमृतमात्मतत्त्वं विशुद्धं प्रसिद्धं श्रुतिस्मृतिशतेभ्य एवं स्वमृतं शोभनं विशुद्धमात्मतत्त्वमस्मि भवामि। ५

द्रविणं धनं सवर्चसं दीप्तिमत्तदेवाऽऽत्मतत्त्वमस्मीत्यनुवर्तते। ब्रह्मज्ञानं वाऽऽत्मतत्त्वप्रकाशकत्वात्सवर्चसम्। १०

आनन्दगिरिटीका

स्वाध्यायार्थं इति जपार्थः "इषे त्वेति शाखां छिनत्ति" इतिवत्। अन्यत्र विनियोजकं श्रुत्यादिप्रमाणमपि नोपलभ्यत इत्याह—न चान्यार्थत्वमिति। [2]अक्षितमसीत्यादिवदुपासनाविधिशेषत्वं वा वक्तुं न शक्यते। ज्ञानसाधनक्रियाविधेः प्रक्रान्तत्वादित्यर्थः।

वनमाला १५

नन्वहं वृक्षस्येत्यादिमन्त्रपाठः किमर्थ इत्याशङ्क्याह—स्वाध्यायार्थं इति। जपार्थ इत्यर्थः। ननु तज्जपस्य क्वोपयोगः? तत्राह—स्वाध्यायश्चेति। प्रकरणादिति हेतुं विवृणोति—विद्यार्थं हीति। प्रकरणस्य संहितोपनिषद्गतमन्त्रब्राह्मणजातस्य विद्याप्रयोजनकत्वादित्यर्थः ब्रह्मविद्यासन्निधौ पाठादिति भावः। अहं वृक्षस्येत्यादिमन्त्राम्नायस्य कर्मशेषत्वशङ्कां निराकरोति—न चेति। तदवगमकश्रुतिलिङ्गादेरदर्शनादिति भावः। स्वाध्यायो विद्योत्पत्तये भवतीत्युक्तम्; तत्र विवक्षितं द्वारं समर्पयति—स्वाध्यायेन चेति। जपादिरूपस्य धर्मस्य पापक्षयरूपशुद्धिद्वारा विद्योत्पत्तिहेतुत्वम् "तपसा कल्मषं हन्ति" इत्यादिशास्त्रसिद्धमिति विशेषसूचनार्थश्चकारः। अहमिति। साक्षात्कृतब्रह्मतत्त्वस्त्रिशङ्कुनामा ऋषिः अहंशब्दार्थः। उच्छेद्यात्मकस्येति। उच्छेद्यस्वभावस्येत्यर्थः। संसारवृक्षस्येति। विद्याप्रतिपादके मन्त्रे प्रसिद्धवृक्षग्रहणायोगात्संसार एवोच्छेद्यस्वभावत्वसाम्याद्वृक्षशब्देन गृह्यत इति भावः। जगदात्मकस्य संसारवृक्षस्य प्रेरयिता परमेश्वर एव, न ब्रह्मविदिति, तत्राह—अन्तर्याम्यात्मनेति। ब्रह्मविदः सर्वात्मकत्वादिति भावः। कीर्त्तिरिति। मेरोः शृङ्गमिव मम ब्रह्मविदः कीर्त्तिः प्रसिद्धिः स्वर्गलोकव्यापिनीत्यर्थः। उपरिभागवाचिनोर्ध्वशब्देन संसारमण्डलादुपरि वर्तमानं जगत्कारणत्वोपलक्षितं ब्रह्म लक्ष्यत इत्याशयेनाह—ऊर्ध्वं कारणमिति। वस्तुतः संसारास्पृष्टमिति यावत्। अत एवाह—पवित्रमिति। नन्वेवंभूतमपि ब्रह्म सर्वप्राणिसाधारणमेव, वस्तुत एकात्मकत्वात्सर्वप्राणिनामिति; तत्राह—ज्ञानप्रकाश्यमिति। अन्येषां ज्ञानाभावादिति भावः। ब्रह्मेत्यनन्तरं स्वरूपभूतमिति शेषः। अन्नमिति। कर्मफलरूपं वस्वादिदेवभोग्यममृतमन्नम्; तद्वत्त्वमादित्यस्य मधुविद्यायां प्रसिद्धमिति बोध्यम्। यथा सवितरि श्रुतिस्मृतिशतेभ्यो विशुद्धममृतमात्मतत्त्वं प्रसिद्धम्, एवं मय्यपि पुरुषे श्रुतिस्मृतिशतेभ्य एव विशुद्धमात्मतत्त्वं प्रसिद्धमस्ति। इत्थमुभयत्र प्रसिद्धमात्मतत्त्वं स्वमृतशब्दितमस्तीत्यर्थः। तथा च श्रुतयः—"स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः" इत्याद्याः, स्मृतयश्च—"आदित्ये शुद्धममृतमात्मतत्त्वं यथा स्थितम्। विद्याधिकारिणि तथा पुरुषेऽपि तदस्ति भोः" इत्याद्या द्रष्टव्याः। धनमिति। लौकिकस्य रत्नादिकं धनम्; ब्रह्मविदस्तु निरतिशयानन्दमात्मतत्त्वमेव धनम्, तच्च स्वप्रकाशत्वा- २० २५ ३०

---

१. अहं वृक्षस्येति—अयं जीवन्मुक्तस्य सर्वात्मभावप्रतिपादको मन्त्रः अहं वृक्षस्य रेरिवेत्यादिः "अहमन्नमहमन्नाद" इतिवत्। विशिष्टाद्वैतिनस्तु अहं वृक्षस्येत्येकं पदमहङ्काराख्यवृक्षस्य रेरिवा छेदकः इत्यर्थं वदन्ति। अत्र त्रिशङ्कोः वेदानुवचनं वेदनानन्तरभावि सर्वात्मत्वप्रतिपादकं वचनमित्यर्थे स्पष्टे अहं वृक्षस्यैकं पदमिति समासो व्यर्थः। स्वमृतमस्मि इत्युत्तमपुरुषक्रियापदविरोधश्च "अहं मनुरभवं सूर्यश्चे"त्यत्रैतादृशसमासाप्रसक्तेश्चेति द्रष्टव्यम्। ३५

२. छान्दोग्य तृतीयाध्याये श्रुतं पुरुषस्य यज्ञत्वेनोपासनम् तदङ्गभूतोयं मन्त्रः तत्रैव श्रुतः। ४०

द्रविणमिव द्रविणं मोक्षसुखहेतुत्वात्। अस्मिन्पक्षे प्राप्तं मयेत्यध्याहारः कर्तव्यः। सुमेधाः शोभना मेधा सार्वज्ञ्य-लक्षणा यस्य मम सोऽहं सुमेधाः। संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वम्। अत एवामृतोऽमरणधर्माऽ-क्षितोऽक्षीणोऽव्ययः अक्षतो वा, अमृतेन वोक्षितः सिक्तः। "अमृतोक्षितोऽहम्" इत्यादिब्राह्मणम्। इत्येवं त्रिशङ्कोर्ऋषे-र्ब्रह्मभूतस्य ब्रह्मविदो वेदानुवचनं वेदो वेदनमात्मैकत्वविज्ञानं तस्य प्राप्तिमनु वचनं वेदानुवचनम्। आत्मनः ५ कृतकृत्यताख्यापनार्थं वामदेववत्त्रिशङ्कुनाऽऽर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थः। अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते। ऋतं चेत्यादिकर्मोपन्यासात् अनन्तरं च वेदानुवचनपाठादेतदवगम्यते। एवं श्रौतस्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य परं ब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये दशमोऽनुवाकः

१० आनन्दगिरिटीका

अहं वृक्षस्येतिमन्त्रस्यर्षिस्त्रिशङ्कुः, पङ्क्तिश्छन्दः, परमात्मा देवता, ब्रह्मविद्यार्थे जपे विनियोगः। न केवलमस्य जपो विद्यार्थः पूर्वोक्तानि कर्माण्यपीत्याह—**ऋतं चेत्यादिना**।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां दशमोऽनुवाकः

१५ वनमाला

दीप्तिमित्यर्थः। साकाङ्क्षत्वादाह—**अस्मीत्यनुवर्तत इति**। द्रविणं सवर्चसमित्यस्यार्थान्तरमाह—**ब्रह्मज्ञानं वेति**। ब्रह्मज्ञानं वा द्रविणमिति सम्बन्धः। ब्रह्मज्ञानस्य सवर्चसत्वे हेतुमाह—**अमृतत्वेति**। अमृतत्वं ब्रह्म, तदावरण-निवर्तनद्वारा तत्प्रकाशकत्वात्; ब्रह्मणि "अहं ब्रह्मास्मि" इति व्यवहार्यतापादकत्वादित्यर्थः। **मोक्षेति**। प्रकृताभि-प्रायं मोक्षग्रहणम्। पुरुषार्थहेतुत्वसाम्याद्द्रविणशब्दो ब्रह्मज्ञाने प्रयुक्त इत्यर्थः। ब्रह्मस्वरूपव्यञ्जकं मुक्तिसाधनभूतं २० ब्रह्मज्ञानं चेत्सवर्चसं द्रविणम्, तर्हि तदस्मीति पूर्ववदन्वयो न घटते; तत्राह—**अस्मिन्पक्ष इति**। **शोभनेति**। शोभना ब्रह्मज्ञानोपयोगिनी मेधा ग्रन्थतदर्थधारणसामर्थ्यलक्षणा यस्य सोऽहं सुमेधा इत्यर्थः। **सार्वज्ञ्येति**। सार्वज्ञ्यलक्षणा वा मेधा यस्य सोऽहमित्यर्थः। विदुषः सर्वज्ञत्वलक्षणमेधावत्त्वं साधयति। **संसारेति**। संसारो जगत्। जगज्जन्मादि-हेतुत्वं च ब्रह्मभूतस्य विदुषो वाजसनेयके श्रूयते—"अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते" इति। अस्मादित्यस्य साक्षात्कृतादित्यर्थः। छान्दोग्येऽपि श्रूयते—"एवं विजानत आत्मनः प्राणाः" इत्यादिना। तथा विदुषः सर्वज्ञत्वमपि २५ प्रश्नोपनिषदि श्रूयते—"स सर्वज्ञः सर्वमेवाविवेश" इति। **अत एवेति**। जगद्धेतुत्वादेवेत्यर्थः। जगत्कारणस्य ब्रह्म-चैतन्यस्य नित्यत्वात्तद्रूपस्य विदुषो नास्ति मरणमित्यर्थः। **अव्यय इति**। अवयवापचयो व्ययः, तद्रहित इत्यर्थः। **अक्षतो वेति**। शस्त्रादिकृतक्षतरहित इत्यर्थः। निरवयवत्वादिति भावः। **अमृतेन वेति**। स्वरूपानन्दानुभवेन सदा व्याप्त इति यावत्। **इतीत्यादीति**। इति त्रिशङ्कोर्वेदानुवचनमिति वाक्यं ब्राह्मणमित्यर्थः। **कृतकृत्यतेति**। यथा वामदेवस्य कृतकृत्यताख्यापनार्थम् "अहं मनुरभवम्" इत्यादिवचनम्, तथा त्रिशङ्कोरपि वेदानुवचनं तत्ख्यापनार्थम्; ३० तत्ख्यापनं च मुमुक्षूणां कृतकृत्यतासम्पादके ब्रह्मविचारे प्रवृत्त्यर्थमिति बोध्यम्। पूर्वम् "अहं वृक्षस्य" इति मन्त्रस्य विद्याप्रयोजनकप्रकरणमध्यपठितत्वाद्विद्याशेषत्वमुक्तम्। इदानीं लिङ्गादपि तस्य तच्छेषत्वं वक्तुं शक्यत इत्याशयेन विवक्षितं मन्त्रार्थं कथयति—**त्रिशङ्कुनेति**। **आर्षेणेति**। तपःप्रभावजनितेनेत्यर्थः। मन्त्रस्य विद्याप्रकाशकत्वे फलित-माह—**अस्य चेति**। विद्याप्रकाशनसामर्थ्यरूपाल्लिङ्गाच्चेति चकारार्थः। पूर्वानुवाके कर्माण्युपन्यस्यानन्तरमेव ऋषेरात्मविषयदर्शनोपन्यासे श्रुतेः कोऽभिप्राय इत्याकाङ्क्षायामाह—**ऋतं चेत्यादिना**। **अनन्तरं चेति**। चकारोऽव-३५ धारणार्थः। सकामस्य पितृलोकप्राप्तिरेव "कर्मणा पितृलोकः" इति श्रुतेः, नात्मदर्शनमित्याशयेनाह—**निष्कामस्येति**। सांसारिकफलेषु निःस्पृहस्यापि विद्यामकामयमानस्य न विद्योत्पत्तिः, किं तु प्रत्यवायनिवृत्तिमात्रमित्याशयेनाह—**ब्रह्म विविदिषोरिति**। **आर्षाणीति**। नित्यनैमित्तिककर्मस्वपि "तपसा कल्मषं हन्ति" इत्यादौ तपस्त्वप्रसिद्धेस्त-ज्जन्यानामपि दर्शनानामार्षत्वमुक्तमिति मन्तव्यम्।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां दशमोऽनुवाकः

## अथ वार्तिके शीक्षावल्ल्यां दशमोऽनुवाकः

स्वाध्यायार्थश्च विज्ञेयः अहं वृक्षस्य रेरिवा । इत्यादिरुत्तरो ग्रन्थो विशुद्धिर्हि ततो धियः ॥१५१॥
विशुद्धमनसो यस्मात्सम्यग्ज्ञानोदयो भवेत् । मन्त्राम्नायोऽयमारब्ध एतस्मात्कारणात्परः ॥१५२॥
उच्छित्तिलक्षणस्याहं विश्वस्य जगतः सदा । अस्य संसारवृक्षस्य रेरिवा जनकोऽस्म्यहम् ॥१५३॥
कीर्तिःख्यातिर्मम ज्ञेया गिरेःपृष्ठमिवोच्छ्रिता । ऊर्ध्वं तत्कारण ब्रह्म पवित्रं भवहानतः ॥१५४॥
यस्य सोऽयं भवेदूर्ध्वं पवित्रं पावनं परम् ॥१५५॥
वाजमन्नमिति ज्ञेयं तद्वतीव दिवाकरे । स्वमृतं परमं ब्रह्म बुद्धावस्यामहं सदा ॥१५६॥
द्रविणं धनमित्याहुरिह त्वात्मावबोधनम् । सवर्चसं सुदीप्तं स्यान्मोक्षामृतफलप्रदम् ॥१५७॥
अक्षितोऽक्षीणरूपत्वाद्वेदानुवचनं त्विदम् । त्रिशङ्कोर्ब्रह्मभूतस्य ह्यार्षं संदर्शनं परम् ॥१५८॥
पावनोऽस्य जपः श्रेयान्ब्रह्मज्ञानस्य जन्मने ।
मुमुक्षुः प्रयतस्तस्माज्जपेदेतत्समाहितः । कर्मप्रसङ्ग उक्तत्वादयमर्थोऽवसीयते ॥१५९॥
मुमुक्षोस्तत्परस्यैवं श्रौतस्मार्तेषु कर्मसु । आर्षं च प्रातिभं ज्ञानमाविर्भवति मोक्षदम् ॥१६०॥

इति दशमोऽनुवाकः

"अहं वृक्षस्ये"त्यादिमन्त्राम्नायस्य तात्पर्यमाह—**स्वाध्यायार्थश्चेति**। अत्र हि प्रकरणे मन्त्रपाठो जपार्थो गृह्यते "इषेत्वेति शाखामाच्छिनत्ती"तिवदन्यत्र विनियोजकश्रुत्याद्यनुपलम्भात् । न चाक्षितमसीत्यादिव[1]दुपासनादिशेषत्वमस्य वक्तुं शक्यं ज्ञानसाधनक्रियाविधेः प्रक्रान्तत्वादित्यर्थः । मन्त्रजपस्य फलमाह—**विशुद्धिरिति** ॥ १५१ ॥

विशुद्धिप्रयोजनमाह—**विशुद्धेति** ॥ १५२ ॥

"अहं वृक्षस्य रेरिवे"त्यस्यार्थं कथयति—**उच्छित्तीति**। अहमिति मन्त्रदृग्ब्रह्मभूतो गृह्यते ॥ १५३ ॥

"कीर्तिः पृष्ठं गिरेरिवे"त्यस्यार्थमाह—**कीर्तिरिति**। ऊर्ध्वपवित्र इत्यस्यार्थमाह—**ऊर्ध्वमिति**। तच्च पवित्रं भवेदिति सम्बन्धः । पवित्रत्वं साधयति—**भवेति**। वाक्योत्थबुद्धिवृत्तिद्वारेणेति शेषः ॥ १५४ ॥

पवित्रत्वं स्पष्टयति—**पावनं परमिति**। यस्य ममेदं स्वरूपमुक्तलक्षणं ब्रह्म सोऽहमूर्ध्वपवित्रोऽस्मीति योजना ॥ १५५ ॥

"वाजिनीवे"त्यादेरर्थमाह—**वाजमिति**। यथाऽन्नवत्यादित्ये प्रकटं ब्रह्माहमस्मीत्यादित्यो मन्यते तथाऽस्यां बुद्धौ स्वमृतं शोभनममृतमहमस्मीत्यर्थः ॥ १५६ ॥

"द्रविणमि"त्यस्यार्थमाह—**द्रविणमिति**। तत्र हेतुत्वेनोत्तरपदमवतार्य व्याचष्टे—**सवर्चसमिति** ॥ १५७ ॥

"सुमेधा अमृतोक्षित" इत्यत्राद्यपदद्वयस्य प्रसिद्धार्थत्वादक्षित इति पदस्यार्थमाह—**अक्षित इति**। अक्षीणरूपत्वं षड्भावविकाररहितत्वम् । "इति त्रिशङ्कोरि"त्यादेरर्थमाह—**वेदेति**। ऋषेस्त्रिशङ्कोर्ब्रह्मभावं प्राप्तस्य ब्रह्मवेदनमनु यदेतदार्षमात्मीयं परं दर्शनं तस्य स्वानुभवस्य प्रकटीकरणमेतद्वचनमित्यर्थः ॥ १५८ ॥

मन्त्राम्नायोऽस्मिन्प्रकरणे जपार्थः स्यादित्युक्तमधिकविवक्षया पुनरनुवदति—**पावनोऽस्येति**। तदेवाधिकं दर्शयति—**कर्मेति**। ऋतं चेत्यादौ पूर्वत्र, वेदमनूच्येत्यादावुत्तरत्र कर्माभिधानान्मध्ये मन्त्राम्नायो जपार्थ एवेति गम्यते । जपस्य कर्मत्वादित्यर्थः ॥ १५९ ॥

न केवलं जपस्यैव ब्रह्मज्ञानं फलं किन्तु सर्वकर्मणामित्याह—**मुमुक्षोरिति**। ईश्वरार्थेषु श्रौतेषु स्मार्तेषु च कर्मसु फलाभिसन्धिवर्जितस्येश्वरायेत्येवं तात्पर्येण प्रवृत्तस्य परिशुद्धबुद्धेर्मोक्षमेवापेक्षमाणस्याऽऽर्षं यथार्थं प्रातिभमुपदेशानपेक्षं मोक्षफलं ज्ञानमुद्भावयतीत्यर्थः ॥ १६० ॥

इति दशमोऽनुवाकः

---

१. अयं मन्त्रः छान्दोग्योक्तस्य यज्ञत्वेन पुरुषोपासनस्य शेषः ।

## अथ शीक्षावल्ल्यामेकादशोऽनुवाकः

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ १ ॥**

वेदमनूच्येत्येवमादिकर्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणीत्येवमर्थः। ५ अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशुद्धसत्त्वस्याऽऽत्मज्ञानमञ्जसैवोत्पद्यते। "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते" इति हि स्मृतिः। वक्ष्यति च--"तपसा ब्रह्म विजिज्ञासस्व" इति। अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि। अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः। प्रागुपन्यासाच्च कर्मणां केवलब्रह्मविद्यारम्भाच्च। पूर्वं कर्माण्युपन्यस्तानि। उदितायां च विद्यायां "अभयं प्रतिष्ठां विन्दते" "न बिभेति कुतश्चन" "किमहं साधु नाकरवम्" इत्येवमादिना कर्मनैष्किञ्चन्यं दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण

१० आनन्दगिरिटीका

उत्तरानुवाकस्य तात्पर्यमाह—**वेदमनूच्येत्यादिना**। विद्योत्पत्त्यर्थं नित्यनैमित्तिकान्यनुष्ठेयानीत्येको नियम उक्तः। प्रागेव चानुष्ठेयानीति नियमान्तरमाह—**प्रागुपन्यासाच्च कर्मणामिति**। संग्रहवाक्यं विवृणोति—**केवलेत्यादिना**। अविद्यया कर्मणा मृत्युमधर्मं तीर्त्वेति मन्त्रोऽपि विद्योत्पत्तेः प्रागेव कर्मानुष्ठानं सूचयतीत्यर्थः।

वनमाला

१५ उत्तरानुवाके कर्मणां कर्तव्यता किमर्थमुपदिश्यत इत्याकाङ्क्षायामाह--**वेदमनूच्येत्यादिना**। ज्ञानात्पूर्वं कर्मणां ज्ञानार्थिनाऽवश्यं कर्तव्यत्वे हेतुमाह—**पुरुषेति**। संस्कारस्वरूपं कथयन्संस्कारद्वारा तेषां ब्रह्मविज्ञानसाधनत्वमाह—**संस्कृतस्य हीति**। सत्त्वस्यान्तःकरणस्य विशिष्टा या शुद्धिः सैव संस्कार इति भावः। **अञ्जसैवेति**। अप्रतिबन्धेनैवेत्यर्थः। पापरूपस्य चित्तमालिन्यस्य ज्ञानोत्पत्तिप्रतिबन्धकत्वात्, शुद्धिद्वारा कर्मणां विद्योदयहेतुत्वे हिशब्दसूचितं मानमाह—**तपसेति**। तपसा कर्मणा कल्मषनिवृत्तौ विद्या भवति, तया विद्यया अमृतमश्नुत इति २० स्मृत्यर्थः। **इति हि स्मृतिरिति**। इति स्मृतेरित्यर्थः। ननु कर्मभिर्विशुद्धसत्त्वस्यापि तत्त्वचिन्तां विना कथमात्मविज्ञानमञ्जसैवोत्पद्येत ? तत्राह—**वक्ष्यति चेति**। तत्त्वचिन्तामपि विद्यासाधनत्वेन श्रुतिर्वक्ष्यतीत्यर्थः। श्रुतौ तपःशब्दस्तत्त्वविचारपर इत्येतदग्रे स्फुटीकरिष्यते। उपसंहरति—**अत इति**। पुरुषसंस्कारद्वारा कर्मणां विद्यासाधनत्वादित्यर्थः। ननु उपदिशतीत्यनुक्त्वा राजेवानुशास्तीति किमर्थं वदति श्रुतिरित्याशङ्क्य गुरूपदेशातिक्रमे महाननर्थो भवेदिति सूचनार्थमित्याह—**अनुशासनशब्दादिति**। तदतिक्रमे दोषो भवतीति गम्यत इति शेषः। २५ तत्रोपपत्तिमाह—**अनुशासनेति**। लोके राजानुशासनातिक्रमे दोषोत्पत्तिप्रसिद्धेरिति हिशब्दार्थः। ननु यथा ज्ञानात्पूर्वं कर्माणि ज्ञानार्थं कर्तव्यानि तथा ज्ञानोदयानन्तरमपि मुक्त्यर्थं तानि कर्तव्यानि, ज्ञानकर्मसमुच्चयस्यैव मुक्तिसाधनत्वात्; तथा च स्मृतिः—"तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने" इति; नेत्याह—**प्रागुपन्यासाच्चेति**। चशब्दः शङ्कानिरासार्थः। कर्मणां विद्यारम्भात्प्रागुपन्यासाद्धेतोर्विद्योदयानन्तरं न तान्यनुष्ठेयानीत्यर्थः। **केवलेति**। "ब्रह्मविदाप्नोति परमि"त्यत्र परप्राप्तिसाधनत्वेन विद्यामात्रारम्भाच्च हेतोर्न विद्योदयानन्तरं तान्यनुष्ठेयानीत्यर्थः। ३० प्रागुपन्यासं विवृणोति—**पूर्वमिति**। ब्रह्मविदाप्नोति परमिति विद्यारम्भात्पूर्वं संहितोपनिषद्येव "ऋतं चे"त्यादावुपन्यस्तानीत्यर्थः। विद्योदयानन्तरमेव मुक्तिलाभश्रवणात्तदनन्तरं कर्मणां नैष्फल्यश्रवणाच्च न मुक्तिसाधनत्वं कर्मणामित्याशयेनाह—**उदितायां चेति**। यदा ब्रह्मण्यभयं यथा भवति तथा प्रतिष्ठामात्मभावं विद्यया विन्दते तदैवाभयं गतो भवति। ब्रह्मणः स्वरूपभूतमानन्दं विद्वान्न बिभेति कुतश्चन, भयहेत्वविद्याया विद्योदयकाल एव निवृत्तत्वादित्यर्थः। **किमहमिति**। विदुषः साधुकर्माकरणप्रयुक्तसन्तापाभावोक्त्या तं प्रति कर्मणामाकिञ्चन्यं

**देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ २ ॥**

विद्योत्पत्त्यर्थानि कर्माणीति । मन्त्रवर्णाच्च—"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । **ऋतादीनां** पूर्वत्रोपदेशः आनर्थक्यपरिहारार्थः । इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यनियमार्थः । वेदमनूच्याध्याप्याऽऽचार्योऽन्तेवासिनं ५ शिष्यमनुशास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः । अतोऽवगम्यतेऽधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति । "बुद्ध्वा कर्माणि चाऽऽरभेत्" इति स्मृतेश्च ।

कथमनुशास्तीत्याह—**सत्यं वद** यथाप्रमाणावगतं वक्तव्यं च तद्वद । **तद्वद्धर्मं चर** । धर्मं इत्यनुष्ठेयानां सामान्यवचनं सत्यादिविशेषनिर्देशात् । **स्वाध्यायादध्ययनान्मा प्रमदः** प्रमादं मा कार्षीः । **आचार्यायाऽऽचार्यार्थं प्रियमिष्टं धनमाहृत्या**ऽऽनीय दत्त्वा विद्यानिष्क्रयार्थम् । आचार्येण चानुज्ञातोऽनुरूपान्दारानाहृत्य **प्रजातन्तुं** प्रजा- १० सन्तानं **मा व्यवच्छेत्सीः** प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या । अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः । प्रजाप्रजननप्रजातित्रयनिर्देशसामर्थ्यात् । अन्यथा प्रजननश्चेत्येतदेकमेवावक्ष्यत् ।

आनन्दगिरिटीका

"ऋतं च स्वाध्यायप्रवचने च" इत्यादिना पूर्वत्र कर्मानुष्ठानमुक्तमेवातः पौनरुक्त्यमित्याशङ्क्याऽऽह—**ऋतादीना-मिति** । विचारमकृत्वा गुरुकुलान्न निर्वर्तितव्यम् । किन्त्वध्ययनविधेरर्थावबोधनद्वारेण पुरुषार्थपर्यवसायितासिद्ध्यर्थ- १५ मक्षरग्रहणानन्तरमर्थावबोधे प्रयतितव्यमित्याह—**ग्रन्थग्रहणादन्विति** । "वेदमधीत्य स्नायादि"ति स्मृतिरप्येतच्छ्रुति-विरुद्धेत्याह—**अतोऽवगम्यत इति** । **वक्तव्यमिति** । वचनार्हं परस्य हितमित्यर्थः ।

वनमाला

फलाभावः प्रतीयत इत्यर्थः । समुच्चयस्य श्रुतिबाह्यत्वमुपसंहरति—**अत इति** । प्रागुपन्यासादिहेतोरित्यर्थः । **विद्येति** । विद्योत्पत्त्यर्थान्येव न मुक्त्यर्थानीति गम्यत इत्यर्थः । इतश्च दुरितक्षयद्वारा विद्योत्पत्त्यर्थान्येवेत्याह—**मन्त्रेति** । २० अविद्यया कर्मणा मृत्युं पाप्मानं तीर्त्वेति कर्मणां दुरितक्षयफलकत्वप्रतिपादनपूर्वकं विद्यामात्रस्य मुक्तिहेतुत्व-प्रतिपादकमन्त्रवर्णाच्चेत्यर्थः । एवं च सति तत्प्राप्तिहेतुरिति स्मृतिवचनं क्रमसमुच्चयपरम्, न यौगपद्येन विद्याकर्मणोः समुच्चयपरमिति मन्तव्यम् । पौनरुक्त्यं परिहरति—**ऋतादीनामिति** । कर्मणां विद्याफले स्वाराज्येऽनुप-योगमाशङ्क्य तत्रोपयोगकथनाभिप्रायेण पूर्वत्रोपदेश इत्यर्थः । अनुशब्दार्थमाह—**ग्रन्थेति** । वेदमध्याप्यानन्तरमेव तदर्थमप्युपदिशतीति वदन्त्याः श्रुतेस्तात्पर्यमाह—**अत इति** । धर्मजिज्ञासा कर्मविचारः । इतश्च धर्मजिज्ञासां २५ कृत्वैव गुरुकुलान्निर्वर्तितव्यमित्याह—**बुद्ध्वेति** । न च वेदाध्ययनानन्तरमाचार्येणानुज्ञातो दारानाहृत्य मीमांसया कर्मावबोधं सम्पादयतु, तदा तत्सम्पादनेऽपि न "बुद्ध्वा—" इति स्मृतिविरोध इति वाच्यम्, दारसंग्रहानन्तरं नित्यनैमित्तिकानुष्ठानावश्यंभावेन पुनस्तस्य गुरुकुलवासासम्भवात्; अतः प्रागेव कर्मावबोधः सम्पादनीय इति भावः । यथाप्रमाणावगतमपि परस्याहितं न वाच्यमित्याह—**वक्तव्यं चेति** । वचनार्हमित्यर्थः । तदाह भगवान्—"अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्" इति । **सामान्यवचनमिति** । अनुष्ठेयसामान्यवाचकमपि धर्मपदं सत्यादि- ३० रूपधर्मविशेषनिर्देशसन्निधानात्तदतिरिक्तानुष्ठेयपरमित्यर्थः । **स्वाध्यायादध्ययनादिति** । अध्ययनेन गृहीतस्य स्वाध्यायस्य प्रमादो विस्मरणम्, तन्मा कुर्वित्यर्थः; "ब्रह्मोज्झे मे किल्बिषम्" इति मन्त्रवर्णेन 'ब्रह्महत्यासमं ज्ञेयमधीतस्य विनाशनम्" इति स्मरणेन च वेदविस्मरणे प्रत्यवायावगमात् । मे मम किल्बिषं ब्रह्मोज्झे वेद-विस्मरणवति पुरुषे गच्छत्विति मन्त्रार्थः । ननु न कर्तव्येति कथम्, सन्ततिप्राप्तेर्दैवाधीनत्वादित्याशङ्क्याऽऽह—**अनुत्पद्यमानेऽपीति** । इतश्चैवमेव श्रुतेरभिप्राय इत्याह—**प्रजेति** । ऋतं चेत्यनुवाके "प्रजा च स्वाध्यायप्रवचने च, ३५ प्रजनश्च स्वाध्यायप्रवचने च, प्रजातिश्च स्वाध्यायप्रवचने च" इति सन्ततिविषय एव प्रजादित्रयनिर्देशबलाच्चेत्यर्थः । **अन्यथेति** । श्रुतेः सन्तत्यर्थयत्ने तात्पर्याभाव इत्यर्थः । ऋतुकालगमनाभावे प्रत्यवायस्मरणात्तावन्मात्रमेव श्रुतिर-वक्ष्यदित्यर्थः । न च श्रुत्या तात्पर्येण सन्ततिः सम्पादनीयेति किमर्थमुच्यत इति वाच्यम्, पितृऋणस्य परलोक-

**नो इतराणि। ये के चास्मच्छ्रेयाँ्सो ब्राह्मणाः। तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्॥ ३॥**

**सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः। सत्याच्च प्रमदनमनृतप्रसङ्गः। प्रमादशब्दसामर्थ्यात् विस्मृत्याप्य-**
५ **नृतं न वक्तव्यमित्यर्थः। अन्यथाऽसत्यवदनप्रतिषेध एव स्यात्। धर्मान्न प्रमदितव्यम्। धर्मशब्दस्यानुष्ठेयविषयत्वादन-**
**नुष्ठानं प्रमादः स न कर्तव्यः। अनुष्ठातव्य एव धर्म इति यावत्। एवं कुशलादात्मरक्षार्थात्कर्मणो न प्रमदितव्यम्।**
**भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो[1] न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।**
**स्वाध्यायोऽध्ययनं प्रवचनमध्यापनं ताभ्यां न प्रमदितव्यम्। ते हि नियमेन कर्तव्ये इत्यर्थः। तथा देवपितृकार्याभ्यां**
**न प्रमदितव्यम्। दैवपित्र्ये कर्मणी कर्तव्ये। मातृदेवो माता देवो यस्य स त्वं मातृदेवो भव स्याः। एवं पितृदेव**
१० **आचार्यदेवोऽतिथिदेवो भव। देवतावदुपास्या एत इत्यर्थः। यान्यपि चान्यान्यनवद्यान्यनिन्दितानि शिष्टाचार-**
**लक्षणानि कर्माणि तानि सेवितव्यानि कर्तव्यानि त्वया। नो अकर्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि।**
**यान्यस्माकमाचार्याणां सुचरितानि शोभनचरितान्याम्नायाद्यविरुद्धानि तान्येव त्वयोपास्यान्यदृष्टार्थान्यनुष्ठेयानि,**
**नियमेन कर्तव्यानीति यावत्। नो इतराणि विपरीतान्याचार्यकृतान्यपि। ये के चाविशेषिता आचार्यत्वादिधर्मैः**
**अस्मदस्मत्तः श्रेयांसः प्रशस्यतरास्ते च ब्राह्मणा न क्षत्त्रियादयस्तेषामासनेनाऽऽसनदानादिना त्वया प्रश्वसितव्यम्।**
१५ **प्रश्वसनं प्रश्वासः श्रमापनयः, तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः। तेषां चाऽऽसने गोष्ठीनिमित्ते समुदिते तेषु न**
**प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः। केवलं तदुक्तसारग्राहिणा भवितव्यम्। किञ्च यत्किञ्चिद्देयं तच्छ्रद्धयैव**

वनमाला

प्राप्तिप्रतिबन्धकत्वेन तदपाकरणद्वारा परलोकप्राप्तिसाधनत्वात्; तथा च श्रुतिः—"नापुत्रस्य लोकोऽस्ति" इति।
न केवलं पितृऋणं परलोकप्रतिबन्धकम्, किं तु मोक्षस्यापि; तथा च मनुः—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे
२० निवेशयेत्। अनपाकृत्य चैतानि मोक्षमिच्छन्व्रजत्यधः" इति। तथा च मुमुक्षुणापि सन्ततियत्नः कर्तव्य इति। ननु
सत्यात्प्रमादनिषेधवचनस्य यदि सत्यमेव वक्तव्यमित्यर्थो विवक्षितः, तदा "सत्यं वद" इत्यनेन पौनरुक्त्यं
स्यादित्याशङ्क्याह—**सत्याच्चेति**। चशब्दः शङ्कानिरासार्थः। ननु यद्यत्रानृतवदननिषेधो विवक्षितः तर्ह्यनृतं न
वक्तव्यमित्यनुक्त्वा प्रमादशब्दप्रयोगे कोऽभिप्रायः श्रुतेरित्याशङ्क्याऽऽह—**प्रमादशब्दसामर्थ्यादिति**। अनृतवदनविषये
विस्मृत्यानृतवदनेऽपि दोषाधिक्यमेव, "समूलो वा एष परिशुष्यति योऽनृतमभिवदति" इति श्रुतेः "नानृतात्पातकं
२५ किञ्चित्" इति स्मृतेश्च। तस्मादनृतवर्जने सदा जागरूकेणैव भवितव्यमिति भावः। **अन्यथेति**। विस्मृत्यानृत-
वदनेऽपि दोषातिशयाभावे सतीत्यर्थः। असत्येति च्छेदः। **अननुष्ठानमिति**। अनुष्ठेयस्वरूपस्य धर्मस्यालस्यादि-
कृतमननुष्ठानं प्रमाद इत्यर्थः। **अनुष्ठातव्य एवेति**। धर्म इति शेषः। **आत्मरक्षणार्थादिति**। शरीररक्षणार्थाच्चिकित्सादि-
रूपादित्यर्थः। **मङ्गलार्थादिति**। "वायव्यं श्वेतमालभेत" इत्यादौ विहिताद्वैदिकात् लौकिकात्प्रतिग्रहादेश्चेत्यर्थः।
**देवेति**। देवकार्यं यागादि, पितृकार्यं श्राद्धादीति विभागः। मात्रादीनां वस्तुतो देवत्वाभावादाह—**देवतावदिति**।
३० श्रौतस्मार्तकर्मजातमुपदिश्याचारप्रमाणकानि कर्माणि विशेषोक्तिपूर्वकमुपदिशति—**यान्यपि चेति**। अपि च यानीति
योजना। आचार्यकृतानां कर्मणां साकल्येनोपादेयत्वमिति विशेषमाशङ्क्याह—**यान्यस्माकमिति**। **विपरीता-
नीति**। शापप्रदानादीनीत्यर्थः। **आचार्यत्वादीति**। आदिपदं मातृपितृत्वादिसंग्रहार्थम् आचार्यादिभिन्ना इत्यर्थः।
**प्रशस्यतरा इति**। सगुणनिर्गुणब्रह्मनिष्ठादियुक्ता इत्यर्थः। श्रुतस्य ब्राह्मण्यस्याविवक्षायां कारणाभावं मत्वाह—
**न क्षत्त्रियेति**। **आसनादिनेति**। शुश्रूषान्नपानादिसंग्रहार्थमादिपदम्। **गोष्ठीति**। शास्त्रार्थनिर्णयाय क्रियमाणो
३५ व्यवहारोऽत्र गोष्ठी, सा निमित्तमुद्देश्यतया कारणं यस्य समुदितस्य समुदायस्य तस्मिन्नित्यर्थः। **प्रश्वासोऽपि
न कर्तव्य इति**। किमु वक्तव्यं पण्डितंमन्यतया विस्रम्भेण वार्तादिकं न कार्यमितीति भावः। तर्हि तेषां
समुदिते गत्वा किं कर्तव्यं मयेत्याशङ्क्याह—**केवलमिति**। **श्रद्धयैवेति**। अवर्जनीयतया प्राप्तेष्वपात्रेष्व-

---

१. भूतिशब्दस्य भस्मार्थत्वं बोधायनेनोक्तम्। अथातो द्विजातीनां त्रिपुण्ड्रधारणविधिं व्याख्यास्यामः भूत्यै न प्रमदितव्यमिति विज्ञायते ( बो० गृ० )।

**ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ४ ॥**

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि स्यात्तेषु वर्तेरंस्तसह च ५

इति एकादशोऽनुवाकः

**दातव्यम् । अश्रद्धयाऽदेयं न दातव्यम्**[1] **। श्रिया विभूत्या देयं दातव्यम् । ह्रिया लज्जया च देयम् । भिया च भयेन देयम् । संविदा च । संविन्मित्रादिकार्यम् । अथैवं वर्तमानस्य यदि कदाचित्ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वाऽऽचारलक्षणे विचिकित्सा संशयः स्यात् । ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन सम्बन्धः कर्तव्यः । संमर्शिनो विचारक्षमाः । युक्ता अभियुक्ताः कर्मणि वृत्ते वा । आयुक्ता अपरप्रयुक्ताः । अलूक्षा अरूक्षा अक्रूरमतयः । धर्मकामा अदृष्टार्थिनोऽकामहता इत्येतत्स्युर्भवेयुः । ते यथा येन प्रकारेण ब्राह्मणास्तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरंस्तथा त्वमपि वर्तेथाः । अथाभ्याख्यातेष्वभ्युक्ता दोषेण सन्दिह्यमानेन संयोजिता केनचित्तेषु च यथोक्तं सर्वमुपनयेद्ये तत्रेत्यादि ।** १०

आनन्दगिरिटीका

एवं कर्तव्यमर्थमुपदिश्यानुष्ठानकाले समुत्पन्नसंशयनिवृत्त्यर्थं शिष्टाचारः प्रमाणयितव्य इत्याह—**अथैव-मित्यादिना । अपरप्रयुक्ता इति ।** स्वतन्त्रा इत्यर्थः । **अभ्युक्ता** अभिशस्ता इत्यर्थः । १५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यामेकादशोऽनुवाकः

वनमाला

पीत्यर्थः । तदुक्तं वार्त्तिके "श्रद्धयैव च दातव्यमश्रद्धाभाजनेष्वपि" इति । **न दातव्यमिति ।** "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥" इति भगवतोक्तत्वादिति भावः । स्वविभूत्यनु-सारेण देयमित्याह—**श्रियेति ।** बहु ददतापि मया कियद्दीयत इति लज्जावता दातव्यमित्याह—**लज्जयेति ।** परलोकभयेन देयमित्याह—**भियेति । मित्रेति ।** मित्रसुहृदादेर्यत्कार्यं तेनापि निमित्तेन देयमित्यर्थः । **तत्र कर्मादाविति ।** देशाद्यर्थकस्य तत्रशब्दस्य युक्ता इत्यनेनान्वय उक्तः;. कस्मिन्विषये युक्ता इत्याकाङ्क्षायां कर्मादा-वित्युक्तमिति विवेचनीयम् । **अभियुक्ता इति ।** कर्मादावभियोगो विधिवत्तदनुष्ठानम्, अनुष्ठेयार्थनिर्णयस्य संमर्शिन इत्यनेन लब्धत्वादिति मन्तव्यम् । **अपरप्रयुक्ता इति ।** स्वतन्त्रा इत्यर्थः । **अकामहता इति ।** लाभपूजादिकामोपहता न भवन्तीत्यर्थः । **तथा त्वमपीति ।** उदितहोमादिविषये सन्देहे सति स्वस्ववंशस्थितानामेतादृशानामाचाराद्व्यवस्थां निश्चित्य तथा वर्तेथा इत्यर्थः । **केनचिदिति ।** स्वर्णस्तेयादिरूपेणेत्यर्थः । सन्दिह्यमानेनेति विशेषणात्पातकित्वेन निश्चितानामभ्याख्यातपदेन ग्रहणं नास्तीति गम्यते तेषामसंव्यवहार्यत्वनिश्चयेन तद्विषये विचाराप्रसक्तेरिति मत्वा तद्व्यावृत्तिः कृतेति मन्तव्यम् । **तेष्विति ।** पातकित्वसंशयास्पदेषु पुरुषेषु यथोक्तं तस्मिन्देशे काले वेत्यादिकं सर्वमुपनयेद्योजयेदित्यर्थः । एवं ये तत्रेत्यादिवाक्यजातस्य तात्पर्यमुक्त्वा अक्षरार्थकथनप्रसक्तावाह—**ये तत्रेत्यादि समानमिति ।** ये तत्रेत्यादिवाक्यजातं पूर्वेण ये तत्रेत्यादिवाक्यजातेन समानार्थम्, अतो न पृथग्व्याख्येयमित्यर्थः । २०, २५, ३०

[1] "अश्रद्धयापि देयमेवे"ति सायणः । सात्त्विकदानफलाभावेऽपि राजसतामसदानफलसम्भवादिति भावः । "श्रिया देयं ह्रिया देयमि"त्यादौ अश्रिया अदेयं अह्रिया अदेयमित्यपि बोध्यं—एकत्रोक्तस्य उपलक्षणत्वात् । ३५

एष आदेशो विधिः। एष उपदेशः पुत्रादिभ्यः पित्रादीनाम्। एषा वेदोपनिषद्वेदरहस्यं वेदार्थं इत्येतत्। एतदेवानुशासनमीश्वरवचनम्। आदेशवाच्यस्य विधेरुक्तत्वात्सर्वेषां वा प्रमाणभूतानामनुशासनमेतत्। यस्मादेवं तस्मादेवं यथोक्तं सर्वमुपासितव्यं कर्तव्यम्। एवमु चैतदुपास्यमुपास्यमेव चैतन्नानुपास्यमित्यादरार्थं पुनर्वचनम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
५ तैत्तिरोयोपनिषच्छीक्षावल्लीभाष्ये एकादशोऽनुवाकः

वनमाला

उक्तमनुशासनमुपसंहरति—एष इत्यादिना। सत्यं वदेत्यादिग्रन्थसन्दर्भ एतच्छब्दार्थः। पुत्रेति। पुत्रादिभ्यः शुकादिभ्यः पित्रादीनां व्यासादीनां य उपदेश इतिहासादौ प्रसिद्धः सोऽप्येष एवेत्यर्थः। अयमेवार्थ इतिहासादावुक्त इति भावः। कर्मकाण्डस्य कृत्स्नस्याप्यत्रैव तात्पर्यमिति वक्तुमेषा वेदोपनिषदिति वाक्यम्; तद्व्याचष्टे—वेदरहस्य-
१० मिति। एषा वेदापनिषदित्यत्रैतच्छब्दः प्रकृतकर्मसंहतिपरः। ईश्वरवचनमिति। "श्रुतिस्मृती ममैवाज्ञे" इति स्मरणादिति भावः। नन्वनुशासनं विधिरिति कुतो नोच्यते? तत्राह—आदेशवाच्यस्येति। आदेशपदेन विधेरुक्ततया पौनरुक्त्यापत्तेरिति भावः। अनुशासनपदस्यार्थान्तरमाह—सर्वेषां वेति। आदरार्थमिति। यथोक्तकर्मानुष्ठाने यत्नाधिक्यसिद्ध्यर्थमित्यर्थः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यामेकादशोऽनुवाकः

## अथ वार्तिके शीक्षावल्ल्यामेकादशोऽनुवाकः

आरम्भो नियमार्थः स्यादात्मज्ञानोदयात्पुरा । श्रुतेर्वेदमनूच्येति श्रुतिश्चैवानुशास्ति हि ॥१६१॥
विद्योत्पत्त्यर्थमेतानि कर्तव्यानि मुमुक्षुणा । वक्ष्यमाणानि कर्माणि यावदात्मावबोधनम् ॥१६२॥
आत्मज्ञानोदयादूर्ध्वं पुरुषार्थावसानतः । स्वतः सिद्धेश्च मोक्षस्य कर्मकाण्डमनर्थकम् ॥१६३॥
तस्मात्सत्त्वविशुद्ध्यर्थं कार्यं कर्म मुमुक्षुभिः । प्रागेव ब्रह्मविज्ञानान्नियमेनेति ह श्रुतिः ॥१६४॥
आनर्थक्यापनुत्त्यर्थमृतादीनां पुरा श्रुतिः । नियमार्थमिहोक्तिः स्यादात्मज्ञानोदयार्थिनः ॥१६५॥ ५
अध्याप्य निखिलं वेदमन्तेवासिनमादरात् । सत्यं वदेत्येवमादि गरीयाननुशास्ति हि ॥१६६॥
यथोपलब्धं यद्वाक्यं हिंसाकल्कविवर्जितम् । सर्वधर्मविदः प्राज्ञास्तत्सत्यं प्रतिजानते ॥१६७॥
अग्निहोत्राद्यनुष्ठानं धर्ममाहुर्विपश्चितः । प्रमादं मा कृथास्तद्वत्स्वाध्यायं प्रति सर्वदा ॥१६८॥
तथाभिलषितां न्याय्यामाचार्यायाथ दक्षिणाम् । दत्त्वा दारारांस्त्वमाहृत्य मा च्छेत्सीः सुतसन्ततिम् ॥१६९॥
विस्मृत्याप्यनृतं नैव त्वया वक्तव्यमण्वपि । इत्यस्य प्रतिपत्त्यर्थं सत्यादिति पुनर्वचः ॥१७०॥ १०
एवं शिष्टेष्वपि ज्ञेयं प्रसिद्धार्थत्वकारणात् । स्पष्टार्थ उत्तरो ग्रन्थः स्वयमेवावगम्यताम् ॥१७१॥
उक्तेभ्योऽन्यानि कर्माणि शिष्टाचारोपगानि तु । अनाशङ्कितदोषाणि त्वया कार्याणि यत्नतः ॥१७२॥

"वेदमनूच्य"त्यादेरनुवाकस्य तात्पर्यमाह—आरम्भ इति । ज्ञानस्याऽऽत्मविषयस्य मोक्षसाधनस्योदयात्पूर्वं नियमेनावश्यंभावेन कर्तव्यानि नित्यनैमित्तिकानि कर्माणीत्येको नियमः । तानि पूर्वमेव कर्तव्यानीत्यपरो नियमः । तस्योभयविधस्य नियमस्य सिद्ध्यर्थो वेदमनूच्येति श्रुतेरारम्भः स्यादित्यर्थः । ज्ञानात्पूर्वमवश्यमनुष्ठेयानि कर्माणीत्यस्मिन्नियमे प्रमाणमाह—श्रुतिश्चेति । "विविदिषन्ती"त्यादिका श्रुतिः । चशब्दात् "कषायपक्तिः कर्माणो" त्यादिका स्मृतिश्च यथोक्तमर्थमभिवदतीत्यर्थः ॥ १६१ ॥ १५

तथाऽपि प्रागेव कर्माणि कर्तव्यानीति नियमो न युज्यते । ज्ञानादूर्ध्वमपि यावज्जीवश्रुत्या तेषां कर्तव्यत्वादित्याशङ्क्याऽऽह—विद्येत्यादिना ॥ १६२-१६३ ॥

उत्पन्ने ज्ञाने विवक्षितस्य मोक्षस्य सिद्धत्वादुत्तरकालं कर्तव्याभावात्प्रागेव कर्तव्यानि कर्माणीत्युपसंहरति—तस्मादिति ॥ १६४ ॥ २०

ऋतं चेत्यादौ कर्माण्येव कर्तव्यत्वेनोक्तानि वेदमनूच्येत्यादिप्रकृतश्रुतावपि तान्यपि कर्तव्यत्वेनोच्यन्ते तेन पुनरुक्तिरित्याशङ्क्याऽऽह—आनर्थक्येति । उपासनादेव स्वाराज्यश्रवणादानर्थक्यं कर्मणामाशङ्क्य तत्परिहारार्थमृतं चेत्यादिरनुवाको वेदमनूच्येत्यादिस्तु नियमद्वयसिद्ध्यर्थं इति न पुनरुक्तिरित्यर्थः ॥ १६५ ॥

सङ्गतिं दर्शयित्वा वाक्यमवतारयति—अध्याप्येति । सत्यं वद धर्मं चरेत्याद्यनुशासनम् ॥ १६६ ॥ २५

तत्र सत्यशब्दार्थमाह—यथोपलब्धमिति । हिंसाकल्काभ्यां विवर्जितम् । कल्को भावदोषः ॥ १६७ ॥

धर्मशब्दार्थमाह—अग्निहोत्रादीति । स्वाध्यायादित्यादेरर्थमाह—प्रमादमिति । विहिताकरणं प्रमादः । तद्वत्सत्यवदनाद्यनुष्ठानवदित्यर्थः ॥ १६८ ॥

आचार्यायेत्यादेरर्थमाह—तथेति । अध्ययननिर्वृत्यानन्तर्यमथशब्दार्थः ॥ १६९ ॥

सत्यान्न प्रमदितव्यमित्यस्यार्थमाह—विस्मृत्यापीति ॥ १७० ॥ ३०

उक्तं न्यायं धर्मान्न प्रमदितव्यमित्यादिवाक्येष्वतिदिशति—एवमिति । तेष्वक्षरार्थो न वक्तव्यो ग्रन्थस्य स्पष्टार्थत्वेन व्याख्यानानपेक्षत्वादित्याह—प्रसिद्धार्थत्वेति ॥ १७१ ॥

यान्यनवद्यानीत्यादेरर्थमाह—उक्तेभ्य इति । सत्यादिभ्य इति यावत् ॥ १७२ ॥

समाशङ्कितदोषाणि शिष्टैराचरितान्यपि । सावद्यानि न कार्याणि कर्माणीह कदाचन ॥१७३॥
श्रुतिस्मृत्यविरुद्धानि शिष्टाचारोपगानि च । अस्मत्कर्माणि कार्याणि न विरोधीनि कर्हिचित् ॥१७४॥
अस्मत्तो ब्राह्मणा ये स्युः श्रेयांसः शास्त्रवेदिनः । तेषामासनदानेन श्रमापनयनं कुरु ॥१७५॥
तेषामाख्यायिकायां वा न वाच्यं सम्भ्रमात्त्वया । तदुक्तसारं त्वादाय नापकार्यं यथाबलम् ॥१७६॥
५ श्रद्धयैव हि दातव्यमश्रद्धाभाजनेष्वपि ॥१७७॥
श्रीर्विर्भूतिस्तया देयं देयं चापि सदा ह्रिया । भिया भयेन दातव्यं संविन्मैत्री तयाऽपि च ॥१७८॥
एवं चेद्वर्तमानस्य श्रौतस्मार्तेषु कर्मसु ।
वृत्ते वा विचिकित्सा स्यात्संशयो मतिविभ्रमात् । तस्मिन्कर्मणि वृत्ते वा विप्रा ये सूक्ष्मदर्शिनः ॥१७९॥
स्वतन्त्रा अभियुक्ताश्च ऋजवः कामवर्जिताः । यथा ते तत्र वर्तन्ते वर्तेथास्त्वं तथैव च ॥१८०॥
१० तथा शङ्कितदोषेषु यथोक्तमुपपादयेत् । आदेशोऽत्र विधिर्ज्ञेय उपदेशः सुताय च ॥१८१॥
रहस्यं सर्ववेदानां वेदोपनिषदुच्यते । अनुशासनमीशस्य ज्ञेयमेतत्परात्मनः ॥१८२॥
यस्मादेवमतः सद्भिर्यथोक्तं यत्नमास्थितैः । उपासितव्यं कर्तव्यमेवं चैतत्समाचरेत् ॥१८३॥

इति एकादशोऽनुवाकः

नो इतराणीत्यस्यार्थमाह—समाशङ्कितेति ॥ १७३ ॥

१५ यान्यस्माकमित्यादेरर्थमाह—श्रुतीति ॥ १७४ ॥

ये के चास्मदित्यादेरर्थं कथयति—अस्मत्त इति । श्रेयांसः समा हीनाश्चेति द्रष्टव्यम् ॥ १७५ ॥

तस्यैवार्थान्तरमाह—तेषामिति । एतेषां कार्यविघाताय मम सामर्थ्यमस्तीति कृत्वा तेषामपकाराय न प्रयतितव्यमित्याह—नापकार्यमिति ॥ १७६ ॥

श्रद्धया देयमित्यस्यार्थमाह—श्रद्धयैवेति । एवकारेण श्रद्धापूर्वकं दानं प्रशस्तं न त्वश्रद्धया दातव्यं तस्य २० फलविकलत्वादित्येतदुच्यते ॥ १७७ ॥

श्रिया देयमित्यादेरर्थमाह—श्रीरिति । राजादिभयेन विवाहादौ प्रसिद्धो लौकिकसंव्यवहारः संविन्मैत्रीति-चोच्यते ॥ १७८ ॥

अथ यदीत्यादेरर्थमाह—एवं चेदिति । श्रुतिस्मृत्यनुसारेण तत्र तत्र वर्तमानस्य कुतः संशयस्तत्राऽऽह—मतीति । संमर्शिन इत्यस्यार्थमाह—सूक्ष्मेति ॥ १७९ ॥

२५ युक्तत्वं स्वातन्त्र्यमपरप्रयुक्तत्वमायुक्तत्वमभियुक्तत्वमरूक्षत्वमृजुत्वमक्रूरत्वं धर्मकामत्वमहष्टार्थित्वम् ॥१८०॥

अथाभ्याख्यातेष्वित्यादेरर्थमाह—तथेति । अभिशस्तेष्वपि यथैवंविधाः पुरुषा वर्तन्ते यथा त्वयाऽपि वर्तितव्यमित्यर्थः । एष आदेश इत्यस्यार्थमाह—आदेशोऽत्रेति । सत्यं वदेत्यादिनोक्तोऽर्थो विधिरादेशोऽनुष्ठेय इत्यर्थः। इत्यर्थः । एष उपदेश इत्यस्यार्थमाह—उपदेश इति ॥ १८१ ॥

एषा वेदोपनिषदिति व्याचष्टे—रहस्यमिति । एतदनुशासनमिति व्याकरोति—अनुशासनमिति ॥ १८२ ॥

३० उपास्यमुपासितव्यमिति पदद्वयस्यार्थं कथयति—यस्मादिति । यथोक्तमादेशोपदेशाद्येवं यस्माद्वेदोक्तं तस्माद्यत्नमास्थितैः सद्भिरेतत्प्रागतं सत्याद्युपासितव्यं कर्तव्यतया बुद्धौ ध्यातव्यम् । ततश्च यथाव्याख्यातं तथा कुर्यादित्येतदुपास्यमित्यनेन विवक्षितमित्यर्थः ॥ १८३ ॥

इति एकादशोऽनुवाकः

## अथ शीक्षावल्ल्यां द्वादशोऽनुवाकः[1]

**शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्॥१॥**

ॐ शान्तिः शान्तिः शान्तिः

सत्यमवादिषं पञ्च च

शं नः शीक्षा सह नौ यश्छन्दसां भूः स यः पृथिव्योमित्यृतं चाहं वेदमनूच्य शं नो द्वादश

शं नो मह इत्यादित्यो नो इतराणि त्रयोविंशतिः

**इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये**
**द्वादशोऽनुवाकः**

अतीतविद्याप्राप्त्युपसर्गप्रशमनार्थं शान्तिं पठति—शं नो मित्र इति। व्याख्यातमेतत्पूर्वम्। १०

अत्रैतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थं—किं कर्मभ्य एव केवलेभ्यः परं श्रेय उत विद्यासव्यपेक्षेभ्य आहोस्विद्विद्याकर्मभ्यां संहताभ्यां विद्यया वा कर्मापेक्षया उत केवलाया एव विद्याया इति। तत्र केवलेभ्य एव कर्मभ्यः स्यात्। समस्तवेदार्थज्ञानवतः कर्माधिकारात्। "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति स्मरणात्। अधिगमश्च सहोपनिषदर्थेनाऽऽत्मज्ञानादिना। "विद्वान्यजते" "विद्वान्याजयति" इति च विदुष एव कर्मण्यधिकारः

आनन्दगिरिटीका १५

शं नो मित्र इति। तदपरं ब्रह्म मामपरविद्यार्थिनमात्रोदरक्षदित्यर्थः।

आद्यानुवाके केवलाया विद्याया निःश्रेयससाधनत्वमुक्तमपि स्फुटीकर्तुं कर्मविधिमुपलभ्य प्रसङ्गात्पुनर्विचारयितुमुपक्रमते—अत्रैतच्चिन्त्यत इत्यादिना। विवेकार्थमिति पृथक्फलत्वज्ञापनार्थमित्यर्थः। "भूतं भव्यायोपदिश्यते" इति न्यायेनाऽऽत्मज्ञानस्यापि कर्मकर्तृसंस्कारतया कर्मविधिशेषत्वाच्छ्रुतस्यापि फलस्यार्थवादमात्रत्वात्कर्मभ्य एव परं श्रेय इति पूर्वः पक्षः। २०

वनमाला

आद्यवादे केवलाया विद्याया मुक्तिसाधनत्वं साधितमपि विशिष्य समुच्चयनिराकरणेन पुनः साधयितुं चिन्तामुपक्रमते—अत्रैतदिति। विद्याकर्मणोः फलभेदज्ञानार्थमेतद्वक्ष्यमाणं वस्तु चिन्त्यत इत्यर्थः। एवकारस्य व्याख्यानम्—केवलेभ्य इति। उत विद्येति। विद्या परब्रह्मविद्या, उपसर्जनतया तत्सापेक्षेभ्य इत्यर्थः। विद्याकर्मणोः समप्राधान्यपक्षमाह—आहोस्विदिति। विद्याप्राधान्यकोटिमाह—विद्यया वेति। सिद्धान्तकोटिमाह—उत केवलयैवेति। २५ पूर्वपक्षमाह—तत्रेत्यादिना। "वेदमनूच्य" इत्यादौ श्रुतेः कर्मस्वत्यन्तादरदर्शनात् "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति भगवद्वचनदर्शनाच्च कर्मभ्य एव परं श्रेयः; न च विद्यावैयर्थ्यं शङ्कनीयम्, तस्याः कर्मशेषत्वाभ्युपगमात्, तत्फलवचनस्यात एवार्थवादत्वान्न तद्विरोधोऽपीति भावः। उपनिषज्जन्याया विद्यायाः कर्मशेषत्वे हेतुमाह—समस्तेति। समस्तवेदार्थज्ञानवतः कर्माधिकारे मानमाह—वेद इति। रहस्यान्युपनिषदः। समस्तवेदार्थज्ञानवतः कर्माधिकारेऽप्युपनिषदर्थज्ञानस्य कर्माङ्गत्वे किमायातम्? तत्राह—अधिगमश्चेति। सरहस्य ३० इति विशेषणादुपनिषत्प्रयोजनभूतेनात्मविज्ञानेन सहैव वेदार्थावगमो गुरुकुले सम्पादनीय इति स्मृत्यर्थोऽवगम्यते; तथा च कर्मकाण्डार्थज्ञानवद्वेदान्तार्थज्ञानस्यापि कर्माङ्गत्वमायातीति भावः। आत्मविद्यायाः कर्माङ्गत्वे हेत्वन्तरमाह—विद्वानिति। सर्वत्र वेदे विद्वान्यजते विद्वान्याजयति इति समस्तवेदार्थज्ञानरूपविद्यावत एव यतोऽधिकारः

---

१. अस्य भाष्यस्थविचारस्य वार्तिकं वार्तिककारैः न कृतम्, एतैरेव पूर्वं स्वकृते बृहदारण्यकभाष्यसम्बन्धवार्तिके एतत्प्रतिपाद्यविषयस्य विचारितत्वादिति सम्भावयामः। ३५

प्रदर्श्यते सर्वत्र। "ज्ञात्वा चानुष्ठानम्" इति च। कृत्स्नश्च वेदः कर्मार्थ इति हि मन्यन्ते केचित्। कर्मभ्यश्चेत्परं श्रेयो नावाप्यते वेदोऽनर्थकः स्यात्।

न। नित्यत्वान्मोक्षस्य। नित्यो हि मोक्ष इष्यते। कर्मकार्यस्यानित्यत्वं प्रसिद्धं लोके, कर्मभ्यश्चेच्छ्रेयोऽनित्यं स्यात्तच्चानिष्टम्। "तद्यथेह कर्मचितो लोकः क्षीयते" इति [1]न्यायानुगृहीतश्रुतिविरोधात्। काम्यप्रतिषिद्धयोः
५ अनारम्भादारब्धस्य च कर्मण उपभोगेन क्षयान्नित्यानुष्ठानाच्च ज्ञाननिरपेक्ष एव मोक्ष इति चेत्। तच्च न। शेषकर्मसम्भवात्तन्निमित्तशरीरान्तरोत्पत्तिः प्राप्नोतीति प्रत्युक्तम्। कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति

आनन्दगिरिटीका

सिद्धान्तमाह—न नित्यत्वादित्यादिना। यद्यप्यध्ययनविधिप्रयुक्त्या कृत्स्नो वेदार्थ एकेन विचारितव्यस्तथाऽप्यध्ययनविधौ प्रतिवाक्याध्ययनं प्रतिवाक्यार्थविचारं च व्यापारभेदात्तत्प्रयुक्तोऽभ्युदयकामस्य कर्मोप-

१० वनमाला

प्रदर्श्यते, ततोऽप्यात्मज्ञानस्य कर्मशेषत्वमित्यर्थः। समस्तवेदार्थज्ञानवतः कर्माधिकारे स्मृत्यन्तरमाह—ज्ञात्वेति। "ज्ञात्वाऽनुष्ठानम्" इति स्मृत्या च विदुष एव कर्मण्यधिकारः प्रदर्श्यत इति योजना। एवमौपनिषदात्मज्ञानस्य तत्फलवचनस्य च कर्मशेषत्वप्रदर्शनेन कृत्स्नस्य वेदस्य कर्मपरत्वमुक्तम्। तत्र जैमिनिशबरस्वामिसम्मतिमाह—कृत्स्नश्चेति। तदुक्तं जैमिनिना—"आम्नायस्य क्रियार्थत्वात्—" इति; शबरस्वामिना चोक्तम्—"दृष्टो हि
१५ तस्यार्थः कर्मावबोधनम्" इति। तस्य वेदस्यार्थः प्रयोजनम्। एवं कर्मणामेव मुक्तिहेतुत्वं प्रसाध्य विपक्षे दण्डमाह—कर्मभ्यश्चेदिति। अनर्थकः स्यादिति। परमपुरुषार्थपर्यवसायी न स्यात्। न चेष्टापत्तिः, अध्ययनविधिविरोधप्रसङ्गात्। अध्ययनविधिना हि समस्तस्य वेदस्याभ्युदयनिःश्रेयसफलवदर्थावबोधपरत्वमापादितम्। तस्मात्कर्ममात्रसाध्यो मोक्ष इति स्वीकर्तव्यमिति स्थितम्। विद्याया मुक्तिहेतुत्वेऽपि न केवलायास्तस्यास्तद्धेतुत्वम्, "विद्यां चाविद्यां च" इति श्रुत्या विद्याकर्मसमुच्चयस्य मुक्तिहेतुत्वावगमात्। समुच्चयेऽपि "कर्मणैव हि संसिद्धिम्—"
२० इत्यादिवचनानुरोधेन कर्मप्राधान्यपक्षः, "तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने" इत्यादिवचनानुरोधेन समप्राधान्यपक्षः, "ब्रह्मविदाप्नोति परम्" इत्यादिवचनानुरोधेन विद्याप्राधान्यपक्ष इति विभागः। इदं च समुच्चयपक्षोपपादनं स्पष्टत्वादुपेक्षितं भाष्यकारेणेति मन्तव्यम्। तत्र केवलकर्मजन्यो मोक्ष इति पक्षं निराकरोति—नेत्यादिना। नित्यो हीति। मोक्षस्य नित्यत्वे "न स पुनरावर्तते" इति श्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः। कर्मकार्यस्यापि तस्य नित्यत्वं किं न स्यादित्याशङ्क्याह—कर्मकार्यस्य चेति। ततः किम्? तत्राह—कर्मभ्यश्चेदिति।
२५ अनित्यमिति च्छेदः। अनित्यत्वे इष्टापत्तिं वारयति—तच्चेति। मुक्तस्यापि पुनः संसारप्रसङ्गादिति भावः। पूर्ववादी प्रकारान्तरेण मोक्षस्य विद्यानैरपेक्ष्यं शङ्कते—काम्येति। मुमुक्षुणा जन्मप्रायणयोरन्तराले सर्वात्मना काम्यनिषिद्धयोरनारम्भान्न तस्य तन्निमित्ता भाविजन्मप्राप्तिः; पूर्वजन्मसु सञ्चितस्य कर्माशयस्य सर्वस्यैव वर्तमानदेहारम्भकत्वाभ्युपगमेनारब्धफलस्य तस्य कर्मण उपभोगेन क्षयात् न तन्निमित्ता च भाविजन्मप्राप्तिः; नित्यनैमित्तिकानां साकल्येनानुष्ठानात्प्रत्यवायानुत्पत्तौ प्रत्यवायनिमित्ता च न जन्मप्राप्तिः; न चान्यज्जन्मनिमित्तमस्ति तस्माद्विद्यान-
३० पेक्षो मोक्ष इत्यर्थः। निराकरोति—तच्च नेति। मुमुक्षोर्वर्तमानदेहारम्भसमये कानिचिदेव कर्माणि वर्तमानदेहमारभन्ते न सर्वाणि, स्वर्गनरकमनुष्यादिविरुद्धफलानां कर्मणामेकदेहारम्भकत्वासम्भवात्; अतः शेषकर्मसम्भवात्तदपि मतं न सम्भवतीत्यर्थः। ननु शेषकर्मसम्भवेऽपि यथावर्णितचरितस्य मुमुक्षोर्ज्ञाननिरपेक्ष एव जन्माभावलक्षणो मोक्षः सिध्यतीति मतं कुतो न सम्भवति? तत्राह—तन्निमित्तेति। शेषकर्मनिमित्तेत्यर्थः। प्रत्युक्तमिति। आद्यवाद इति शेषः। नन्वस्तु शेषकर्मसम्भवः, तथापि तस्य नित्यानुष्ठानेन नाशसम्भवान्न तन्निमित्ता
३५ शरीरोत्पत्तिरिति, तन्न; नित्यानुष्ठानेन दुरितस्य क्षयसम्भवेऽपि न सुकृतस्य तेन क्षयः सम्भवति, नित्यानुष्ठानसञ्चितसुकृतयोरुभयोरपि शुद्धिरूपत्वेन विरोधाभावात्; अतः सञ्चितसुकृतनिमित्ता शरीरोत्पत्तिरपरिहार्येति मत्वाऽऽह—कर्मशेषस्य चेति। इति चेति। इति चाद्यवादे नित्यानुष्ठानस्य सुकृतक्षयहेतुत्वं प्रत्युक्तमित्यर्थः। अतो ज्ञानं विना

---

१. यत्कृतकं तदनित्यमिति न्यायः।

**च । यदुक्तं समस्तवेदार्थज्ञानवतः कर्माधिकारादित्यादि । तच्च न । [1]श्रुतज्ञानव्यतिरेकादुपासनस्य । श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते नोपासनामपेक्षते[2] । उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते मोक्षफलमर्थान्तरप्रसिद्धश्च स्यात् । "श्रोतव्यः" इत्युक्त्वा तद्व्यतिरेकेण "मन्तव्यो निदिध्यासितव्य" इति यत्नान्तरविधानान्मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम् ।**

आनन्दगिरिटीका

५ योगिवाक्यार्थज्ञानवत्त्वमात्रेण कर्मण्यधिकारसम्भवाद्ब्रह्मसाक्षात्कारस्य तत्रानुपयोगित्वान्न समस्तवेदार्थज्ञानवतः कर्माधिकारे प्रमाणमस्तीत्याह—**तच्च नेति** । यद्यपि चाध्ययनविधिप्रयुक्त्या वेदान्तविचारोऽपि कृतो गुरुकुल एव तथाऽपि न समस्तवेदार्थज्ञानवतोऽधिकारः । उपासनासाध्यस्य ब्रह्मसाक्षात्कारस्य पृथग्भावादित्याह—**श्रुतज्ञानेति** । श्रुताद्गुरुकुले विचारिताद्वाक्यात्कर्मानुष्ठानोपयोगि यज्ज्ञानं तावन्मात्रेण कर्मण्यधिक्रियते न ब्रह्मसाक्षात्कारफलमुपासनमपेक्षते [3]व्यतिरेकाभावादित्यर्थः । अध्ययनविधिव्यापारोपरमेऽनुष्ठेयं तथाभूतंब्रह्मोपासनमेव नास्ति, १० मानाभावादिति न वक्तव्यमित्याह—**उपासनं चेति** । एतच्च कर्ममीमांसान्यायाङ्गीकारमात्रेणोक्तम् । वस्तुतश्च श्रोतव्यविधिप्रयुक्त एवोपनिषद्विचारारम्भो भिन्नाधिकारः । कर्मकाण्डविचारोऽप्युत्तरविधिप्रयुक्त एवेति [4]प्रकटार्थे प्रतिष्ठितम् ।

वनमाला

सञ्चितकर्मक्षयासम्भवाज्ज्ञानापेक्ष एव मोक्षो न तन्निरपेक्ष इति भावः । उपनिषदर्थज्ञानस्यापि कर्मशेषत्वात्कर्मसाध्य १५ एव मोक्ष इत्युक्तमनूद्य निराकरोति—**यच्चोक्तमित्यादिना** । **श्रुतज्ञानेति** । गुरुकुले वेदान्तजनितं ज्ञानं श्रुतज्ञानम्, तस्य कर्मशेषत्वेऽपि तदतिरिक्तोपासनस्य मोक्षसाधनस्य सत्त्वान्न कर्मसाध्यो मोक्ष इत्यर्थः । ननु "वेदः कृत्स्नोऽधिगन्तव्यः" इति वचनाद्यथा श्रुतज्ञानं कर्माधिकारिविशेषणतया कर्मशेषस्तथा मननाद्यात्मकमुपासनमपि तच्छेषोऽस्त्विति शङ्कां वारयति—**श्रुतज्ञानमात्रेण हीति** । मात्रपदव्यवच्छेद्यमाह—**नोपासनमपेक्षत इति** । मानाभावादिति शेषः । ननु श्रुतज्ञानादर्थान्तरभूतमुपासनं वेदान्तेषु मोक्षफलकत्वेन न क्वापि विधीयते, अतो नोपासनसाध्यो मोक्ष २० इति वदन्तं प्रत्याह—**उपासनं चेति** । "मन्तव्यो निदिध्यासितव्यः" इत्युपासनविधानानन्तरमुपसंहारे "एतावदरे खल्वमृतत्वम्" इति श्रवणादमृतत्वसाधनतया तत्रोपासनविधिः प्रतीयत इति भावः । ननु मननादिरूपमुपासनमपि श्रुतज्ञानान्नातिरिच्यते ब्रह्मप्रत्ययत्वाविशेषादिति; नेत्याह—**अर्थान्तरप्रसिद्धिश्च स्यादिति** । मनननिदिध्यासनयोर्ब्रह्मप्रत्ययत्वेऽपि श्रुतज्ञानादर्थान्तरत्वं प्रसिद्धमेव भवति, तयोर्विजातीयत्वात्पृथग्विधानाच्चेत्यर्थः । एतदेव विवृणोति—

१. श्रुतज्ञानव्यतिरेकादिति—अनेनोपनिषदर्थोऽपि समावर्तनात्पूर्वं श्रोतव्यः स्वाध्यायविधेः अर्थावबोधपर्यन्तत्वात् उपनिषदामपि स्वाध्यायान्तःपातात् । ततश्च गृहस्थानां वेदान्तविचारेऽधिकारः अत्र भाष्यकारैरेव स्पष्टमभिहितः । मनननिदिध्यासनयोस्तु संन्यासिनामेवाधिकार इति च । इदं मीमांसकमतेनोक्तम् ? वस्तुतस्तु स्वाध्यायविधेरक्षरग्रहणान्तत्वमेव अर्थविचारस्तु क्रतुविधिप्रयुक्तः । तत्र च शमादिषट्कान्तर्गतोपरतेः संन्यासरूपत्वात् संन्यासिनामेव वेदान्तश्रवणेऽप्यधिकार इत्युक्तं भवति । अयमेवार्थः प्रकटार्थे विचारितः । अस्मिन्पक्षे गृहस्थानां वेदान्तविचारेऽधिकारः कथमिति चेत् । आचार्यैर्विधुराधिकरणे विधुराणां "प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु" इत्युक्तत्वात् सर्वेषां गृहिणां तत्राधिकारः सम्भवति ।

२. अपेक्षते—अनेन समावर्तनात् प्रगूर्ध्वं वा वेदान्तश्रवणं सर्वेषामावश्यकमिति सूच्यते ।

३. उपासनाभावे विचाराभावरूपव्यतिरेकाभावात् ।

४. प्रकटार्थे प्रतिपादितमिति—तथा हि ( ब्र० सू० १.१.१ ) स्वाध्यायस्य भाव्यताश्रुतेः नार्थावबोधस्य भाव्यता कल्पनीया, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । न च साक्षात्पुरुषार्थताभावात् स्वाध्यायस्य अभाव्यता, अर्थावबोधेऽपि समानत्वात् । न चैवं विचारानारम्भः अधीतवेदेनाधिगताधिकारा उत्तरविधय एव स्वविषयसन्देहव्युदासाय विचारमारप्स्यन्ते । न च विचारायासं विना उपदेशादेव निर्णयसम्भवः । तस्मान्न विचारः स्वाध्यायविधिप्रयुक्तः अपि तु श्रोतव्यविधिप्रयुक्तः इति ।

**एवं तर्हि विद्यासव्यपेक्षेभ्यः कर्मभ्यः स्यान्मोक्षः। विद्यासहितानां च कर्मणां भवेत्कार्यान्तरारम्भसामर्थ्यम्। यथा स्वतो मरणज्वरादिकार्यारम्भसामर्थ्यानामपि विषदध्यादीनां मन्त्रशर्करादिसंयुक्तानां कार्यान्तरारम्भसामर्थ्यम्, एवं विद्यासहितैः कर्मभिर्मोक्ष आरभ्यत इति चेत्। न। आरभ्यस्यानित्यत्वादित्युक्तो दोषः। वचनादारभ्योऽपि नित्य एवेति चेत्। न। ज्ञापकत्वाद्वचनस्य। वचनं नाम यथाभूतस्यार्थस्य ज्ञापकं नाविद्यमानस्य कर्तृ। न हि ५ वचनशतेनापि नित्यमारभ्यते, आरब्धं वाऽविनाशि भवेत्।**

आनन्दगिरिटीका

केवलं कर्म मोक्षसाधनमिति पक्षं निरस्य विद्यासमुच्चितं मोक्षसाधनमिति पक्षान्तरमाशङ्क्य निषेधति—**एवं तर्हीत्यादिना**। "न स पुनरावर्तते" इति वचनादारभ्योऽपि मोक्षो नित्य इति न शक्यं वक्तुम्। प्रसिद्धपदार्थयोग्यत्वमुपादाय वचनस्य संसर्गज्ञापकत्वात्। न चारभ्यस्य नित्यत्वे योग्यत्वं प्रसिद्धम्। अन्यथा वचनस्य १० कारकत्वप्रसङ्गात्। [1]"अन्धो मणिमविन्दत्" इत्यादिष्वपि योग्यताकल्पनप्रसङ्गादित्याह—**न ज्ञापकत्वादित्यादिना**।

वनमाला

**श्रोतव्य इत्युक्त्वेति। मनननिदिध्यासनयोश्चेति।** चकारोऽवधारणार्थः सन् प्रसिद्धपदेन सम्बध्यते। **वस्तुतस्तु** श्रुतज्ञानस्यापि नास्ति कर्मशेषत्वे मानम्। न चाध्ययनविधिबलाद्गुरुकुलं सम्पादितसमस्तवेदार्थज्ञानमध्यपातिनः १५ तस्यापि कर्मज्ञानवत्कर्माङ्गत्वं प्रतीयते इत्युक्तमिति वाच्यम्; अध्ययनविधेरक्षरावाप्तिमात्रफलकत्वेनार्थाववोधपर्यन्तत्वासिद्धेः। न च तथा सति विचारविध्यभावात्पूर्वोत्तरमीमांसयोरप्रवृत्तिप्रसङ्ग इति वाच्यम्; अर्थज्ञानं विनाऽनुष्ठानासम्भवेन तत्तत्क्रतुविधिभिरेव पूर्वमीमांसाप्रवृत्त्युपपत्तेः, उत्तरमीमांसाप्रवृत्तेः श्रोतव्यविधिप्रयुक्तत्वस्य ब्रह्मजिज्ञासासूत्रे स्फुटत्वात्, "विद्वान्यजते" इति वचनस्य कर्मकाण्डगतस्य प्रकृततत्तत्कर्मविद्वत्तामात्रपरत्वेनात्मविद्वत्तापरत्वाभावात्, आत्मज्ञानस्य कर्मानुष्ठानप्रतिकूलतया वक्ष्यमाणत्वेन तच्छेषत्वानुपपत्तेश्च, "आम्नायस्य २० क्रियार्थत्वात्—" इत्यादिवृद्धवचनजातस्य कर्मविचारप्रकरणगतत्वेन कर्मकाण्डमात्रविषयताया समन्वयसूत्रे स्पष्टत्वाच्च। तस्माच्छ्रुतज्ञानमपि न कर्मशेषः। अत एवात्मज्ञानफलश्रवणमर्थवाद इति शङ्कापि निरालम्बनेति बोध्यम्। इत्थं केवलकर्मभ्यः परं श्रेयः इति पक्षं निरस्य कर्म प्रधानं विद्या चोपसर्जनमिति समुच्चयपक्षमुत्थापयति—**एवं तर्हीति।** ननु नित्यस्य मोक्षस्य कर्मारभ्यत्वं न सम्भवति, कार्यस्यानित्यत्वनियमादित्युक्ते कथं तस्य विद्यासहितकर्मकार्यत्वशङ्का ? तत्राह—**विद्यासहितानां चेति**। चशब्दः शङ्कानिरासार्थः। विद्यालक्षणसहकारिमहिम्ना २५ नित्यस्याप्यारम्भः सम्भवतीति भावः। **कार्यान्तरेति**। नित्यकार्येत्यर्थः। सहकारिसामर्थ्यात्कार्यवैचित्र्यमात्रे दृष्टान्तमाह—**यथेति**। यथा स्वतो मरणरूपकार्यारम्भसामर्थ्यवतोऽपि विषस्य मन्त्रसंयुक्तस्य पुष्टिरूपकार्यान्तरारम्भसामर्थ्यम्, यथा वा दध्नः समयविशेषे ज्वररूपकार्यारम्भसामर्थ्यवतोऽपि तदा गुडशर्करादिसंयुक्तस्य तस्य तृप्तिमात्रारम्भसामर्थ्यम्, यथा वा वेत्रबीजस्य दावदग्धस्य कदल्यारम्भसामर्थ्यम्, एवं प्रकृतेऽपीत्यर्थः। अस्तु सहकारिवैचित्र्यात्कार्यवैचित्र्यम्, तावता आरभ्यस्यापि मोक्षस्यानित्यत्वप्रसङ्गदोषे किमागतमिति दूषयति—**नारभ्यस्येति**। ३० "यत्कृतकं तदनित्यम्" इति न्यायविरोधान्नित्यस्यारम्भो न सम्भवतीत्यर्थः। "न स पुनरावर्तते" इति वचनादारभ्यस्यापि मोक्षस्य नित्यत्वमविरुद्धमिति शङ्कते—**वचनादिति**। वचनस्यानधिगतयोग्यार्थज्ञापकत्वेन पदार्थयोग्यतानाधायकत्वान्न वचनबलादारभ्यस्य नित्यत्वं सिध्यतीति दूषयति—**नेति**। संग्रहवाक्यं विवृणोति—**वचन नामेत्यादिना**। ननु वचनमेवारभ्यस्य मोक्षस्य नित्यत्वं प्रति योग्यतामविद्यमानामप्याधाय पश्चान्नित्यत्वं तस्य ज्ञापयतीति; नेत्याह—**नाविद्यमानस्य कर्त्रिति**। कुत इत्यत आह—**न हीति। नित्यमिति**। आत्मस्वरूपमिति शेषः। ३५ **आरब्धं वेति**। घटादीति शेषः। हि यस्माद्वचनशतेनापि नित्यस्यारम्भो लोके न दृश्यते तस्मान्नाविद्यमानस्य

---

१. अन्धो मणिमविन्दत्। तमनङ्गुलिरावयत्—इत्यादिकं तैत्तिरीयारण्यके (१-११) शुद्धचैतन्यप्रतिपादनप्रकरणे दृश्यते। चैतन्यं सर्वेन्द्रियगुणानुगुण्यभजनशक्तिमत् ज्ञातव्यमित्यर्थः। एवमेव अपाणिपादो जवनो ग्रहीता इत्यपि व्याख्येयम्; ब्रह्मणः स्वकार्ये लौकिकसाधनानपेक्षेत्यर्थः। (वेदभाष्ये)।

एतेन विद्याकर्मणोः संहतयोर्मोक्षारम्भकत्वं प्रत्युक्तम्। विद्याकर्मणी मोक्षप्रतिबन्धहेतुनिवर्तके इति चेत्। न; कर्मणः फलान्तरदर्शनात्। उत्पत्तिसंस्कारविकाराप्तयो हि फलं कर्मणो दृश्यते। उत्पत्त्यादिफलविपरीतश्च मोक्षः। गतिश्रुतेराप्य इति चेत्। "सूर्यद्वारेण" "तयोर्ध्वमायन्" इत्येवमादिगतिश्रुतिभ्यः प्राप्यो मोक्ष इति चेत्। न। सर्वगतत्वाद्गन्तृभिश्चानन्यत्वादाकाशादिकारणत्वात्सर्वगतं ब्रह्म। ब्रह्माव्यतिरिक्ताश्च सर्वे विज्ञानात्मानः। अतो नाऽऽप्यो मोक्षः। गन्तुरन्यद्विभिन्नदेशं च भवति गन्तव्यम्। न हि येनैवाव्यतिरिक्तं यत्तत्तेनैव गम्यते। तद- ५ नन्यत्वप्रसिद्धिश्च, "तत्सृष्ट्वा तदेवानुप्राविशत्" "क्षेत्रज्ञं चापि मां विद्धि" इत्येवमादिश्रुतिस्मृतिशतेभ्यः।

गत्यैश्वर्यादिश्रुतिविरोध इति चेत्। अथापि स्याद्यद्यप्राप्यो मोक्षस्तदा गतिश्रुतीनां, "स एकधा" "स यदि

### आनन्दगिरिटीका

कर्म प्रधानं विद्या चोपसर्जनमिति समुच्चयं निरस्य समसमुच्चयेऽप्यतिदिशति—**एतेनेति**। अनित्यत्वादि-दोषप्रसङ्गेनेत्यर्थः। **मोक्षेति**। मोक्षस्य प्रतिबन्धहेतुरविद्याऽधर्मादिस्तन्निवर्तके विद्याकर्मणी न स्वरूपोत्पादके। ततः १० स्वरूपावस्थानस्य नित्यत्वम्। प्रध्वंसस्य च कृतकस्यापि नित्यत्वं प्रसिद्धमित्यर्थः। "भिद्यते हृदयग्रन्थिः" इत्यादि-श्रुतेः केवलविद्यासाध्यैवाविद्यानिवृत्तिः न तत्र विद्यायाः सहकार्यपेक्षा कर्मफलं त्वन्यदेव प्रसिद्धमित्याह—**न कर्मण इति**। उत्पत्तिः पुरोडाशादेः। संस्कारो व्रीह्यादेः। विकारः सोमस्य। आप्तिर्वेदस्य। कर्मफलं प्रसिद्धम्। आत्म-स्वरूपस्य तु मोक्षस्यानादित्वादनाधेयातिशयत्वादविकार्यत्वान्नित्याप्तत्वाच्च कर्मफलाद्वैपरीत्यमित्यर्थः। **गति-श्रुतेरिति**। अर्चिरादिगतिश्रवणाद्ब्रह्माण्डाद्बहिःस्थितब्रह्मप्राप्तिर्मोक्षः। ततो नित्याप्तत्वमसिद्धमित्यर्थः। गत्वा १५ प्राप्तिः किं संयोगलक्षणा तादात्म्यलक्षणा वा, नोभयथाऽपीत्याह—**न सर्वगतत्वादिति**।

गत्यादिश्रुतेस्तात्पर्यं शङ्कापूर्वकं दर्शयति—**गत्यैश्वर्येत्यादिना**। समुच्चयमभ्युपगम्य कर्मकार्यं किञ्चिन्मोक्षे

### वनमाला

कर्त्रिति योजना। अन्यथा "अन्धो मणिमविन्दत्" इत्यादावपि वचनबलादेव योग्यताप्रसङ्ग इति भावः। समसमुच्चयपक्षमप्यतिदेशेन निराकरोति—**एतेनेति**। अनित्यत्वप्रसङ्गेनेत्यर्थः। २०

प्रतीचो ब्रह्मत्वरूपमोक्षस्य नित्यत्वेन समुच्चयाजन्यत्वेऽपि तदावारकाविद्यानिवृत्तिहेतुत्वमेव समुच्च-यस्यास्त्विति शङ्कते—**विद्याकर्मणी इति**। आवरणरूपप्रतिबन्धहेतोरविद्याया निवृत्तौ विद्यामात्रस्यैवापेक्षितत्वेन कर्मणोऽनपेक्षितत्वान्न समुच्चयाधीना मुक्तिरिति मत्वाऽऽह—**नेति**। कर्मणामविद्यानिवृत्त्यपेक्षया फलान्तरस्यैव लोके प्रसिद्धत्वाच्च न प्रतिबन्धहेतुनिवृत्तौ कर्मापेक्षेत्याह—**कर्मण इति**। तदेव विवृणोति—**उत्पत्तीति**। उत्पत्तिः पुरोडाशादेः, संस्कारो व्रीह्यादेः, विकारः सोमस्याभिषवलक्षणः, आप्तिः पयसः, इत्येवं कर्मणः फलं प्रसिद्धमित्यर्थः। २५ ननु यद्यविद्यानिवृत्तौ न कर्मापेक्षा, कर्मफलं चोत्पत्त्यादिकमेव, तर्हि ब्रह्मस्वरूपमोक्षस्यैवोत्पत्त्याद्यन्यतमत्वमस्तु; नेत्याह—**उत्पत्त्यादिफलविपरीतश्चेति**। ब्रह्मस्वरूपस्य तु मोक्षस्यानादित्वादनाधेयातिशयत्वादविकार्यत्वान्नित्याप्त-त्वाच्च कर्मफलवैपरीत्यम्; एतेषां हेतूनां श्रुतिसिद्धत्वाच्च नासिद्धिशङ्का कार्येति भावः। प्रत्यगात्मतया नित्य-प्राप्तस्यापि ब्रह्मणो गतिश्रुतिमवलम्ब्य प्राप्यत्वमाशङ्कते—**गतीति**। शङ्कां विवृण्वन्गतिश्रुतीरुदाहरति—**सूर्येति**। विरजा निष्कल्मषा ब्रह्मविद इत्यर्थः। **तयेति**। सुषुम्नाख्यया नाड्येत्यर्थः। आदिपदात् "तेऽर्चिषमभिसम्भवन्ति" ३० इत्यादिश्रुतयो गृह्यन्ते। गतिश्रुतीनामन्यविषयत्वमभिप्रेत्य परब्रह्मणो गतिप्राप्यत्वं निराकरोति—**न, सर्वगतत्वादिति**। लोके गन्तुः सकाशादन्यस्य परिच्छिन्नस्य च प्राप्यता प्रसिद्धा; ब्रह्मणस्तु तदुभयाभावान्न प्राप्यतेत्यर्थः। सर्वगतत्वं साधयति—**आकाशादीति**। ब्रह्मणो गन्तृभिर्जीवैरभिन्नत्वं विवृणोति—**ब्रह्माव्यतिरिक्ताश्चेति**। चकारोऽवधारणे। **तेनेति**। सर्वगतत्वादिनेत्यर्थः। ननु यदि सर्वगतं गन्तुरनन्यच्च न प्राप्यम्, तर्हि कीदृशं गन्तव्यम्? अत आह—**गन्तुरिति**। अनन्यस्य गन्तव्यत्वाभावमनुभवेन साधयति—**न हि येनैवेति**। गन्तृभिरनन्यत्वं साधयति— ३५ **तदनन्यत्वप्रसिद्धिश्चेति**। तस्य ब्रह्मणो गन्तृभिरनन्यत्वं च श्रुत्यादिभ्यः सिध्यतीत्यर्थः। ब्रह्मण एव जीवभावेन प्रवेशश्रवणात्क्षेत्रज्ञस्य जीवस्य ब्रह्मत्वश्रवणाच्चेत्यर्थः। "अहं ब्रह्म" इत्यादिश्रुतयः "आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इत्यादिस्मृतयश्च आदिपदग्राह्या विवक्षिताः। गतिश्रुतीनां गतिं पृच्छति—**गत्यैश्वर्यादीति**। यथा

**पितृलोककामो भवति" "स्त्रीभिर्वा यानैर्वा" इत्यादिश्रुतीनां च कोपः स्यादिति चेत्। न। कार्यब्रह्मविषयत्वात् तासाम्। कार्ये हि ब्रह्मणि स्त्र्यादयः स्युर्न कारणे "एकमेवाद्वितीयं" "यत्र नान्यत्पश्यति" "तत्केन कं पश्येत्" इत्यादिश्रुतिभ्यः। विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः। प्रविलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते। न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेषवत्तच्छून्यं चेत्युभयथा द्रष्टुं ५ शक्यते। अवश्यं ह्यन्यतरन्मिथ्या स्यादन्यतरस्य च मिथ्यात्वप्रसङ्गे युक्तं यत्स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम्, "यत्र हि द्वैतमिव भवति" "मृत्योः स मृत्युमाप्नोति" "अथ यत्रान्यत्पश्यति तदल्पम्" "अन्योऽ-**

आनन्दगिरिटीका

न सम्भवतीत्युक्तम्। सोऽपि न सम्भवतीत्याह—**विरोधाच्चेत्यादिना**। यदि कर्त्रादिकारकभेदस्य सत्यत्वांशमपबाध्य

वनमाला

१० ब्रह्मविदो गतिः श्रूयते तथा तस्यैश्वर्यमपि श्रूयते, ब्रह्मणो नित्यप्राप्तत्वाद्यथा तस्य प्राप्यता न सम्भवति तथा परब्रह्मविदो मुक्तस्य निरुपाधिकत्वादैश्वर्यमपि न सम्भवति; ततश्च तुल्यन्यायत्वादैश्वर्यश्रुतीनामपि गतिप्रश्न इति मन्तव्यम्। प्रश्नं प्रपञ्चयति—**अथापि स्यादिति**। गतिश्रुतयः पूर्वमुदाहृता इत्याशयेनैश्वर्यश्रुतीरुदाहरति—**स एकधेत्यादिना**। "स एकधा भवति त्रिधा भवति" इत्यादिश्रुतिर्मुक्तस्यानेकशरीरयोगं दर्शयति; "स यदि पितृलोककामो भवति" इत्यादिश्रुतिस्तु मुक्तस्य सङ्कल्पमात्रसमुत्थान्पित्रादिभोगान्दर्शयति; तथा "स्त्रीभिर्वा" १५ इत्यादिश्रुतिरपि तस्यैश्वर्यमावेदयतीत्यर्थः। "कार्यं बादरिः" इत्यधिकरणन्यायेन तासां श्रुतीनां गतिमाह—**न कार्येति**। ननु सगुणब्रह्मोपासकस्य सत्यलोकस्थकार्यब्रह्मप्राप्तिविषयास्ताः श्रुतयो न निर्गुणब्रह्मविदः परब्रह्मप्राप्ति-विषया इत्यत्र किं विनिगमकमित्याशङ्क्याह—**कार्ये हीति**। कार्ये हिरण्यगर्भाख्ये ब्रह्मणि प्राप्ते सति तल्लोके स्त्र्यादयो विषयाः सन्ति, न कारणत्वोपलक्षिते निर्गुणविद्याप्राप्ये विशुद्धे ब्रह्मणि विषयाः सन्ति, विद्यया अविद्या-तत्कार्यजातस्य सर्वस्य निवृत्तत्वात् निर्गुणमुक्तस्य निरुपाधिकत्वेन भोक्तृत्वायोगाच्चेत्यर्थः। कार्यब्रह्मलोके २० स्त्र्यादिविषयाः सन्तीत्यत्र "स यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति" इत्यादिश्रुतिप्रसिद्धि-द्योतनार्थो हिशब्दः। परममुक्तौ भोगाभावे मानमाह—**एकमेवेत्यादिना**। सजातीयविजातीयस्वगतभेदरहितं ब्रह्मेत्यर्थः। **यत्रेति**। अन्योऽन्यत्पश्यतीत्येवमात्मकं प्रसिद्धं द्वैतं यत्र वस्तुतो नास्ति स भूमेत्यर्थः। **तत्केनेति**। तत्तदा विदेहकैवल्य-समये केन करणेन कं विषयं पश्येदित्यर्थः। एतेन निर्गुणविद्याप्रकरणगतानाम् "स एकधा भवति" "स्त्रीभिर्वा यानैर्वा" इत्याद्यैश्वर्यश्रुतीनां सगुणमुक्तविषयत्वकल्पनमयुक्तमिति शङ्कापि निरस्ता, परममुक्तौ भोगासंभवस्य "तत्केन कम्" २५ इत्यादिश्रुतिसिद्धत्वात्, "मात्रासंसर्गस्त्वस्य भवति" इत्यादिश्रुत्या मुक्तस्य सर्वोपाध्यभावप्रतिपादनेन विषयभोगा-सम्भवाच्च। तथा चैश्वर्यश्रुतीनां प्रकरणे निवेशासम्भवात्कार्यब्रह्मप्राप्तानामैश्वर्यसम्भवाच्च सामर्थ्यानुसारेण प्रकरणमुल्लङ्घ्य सगुणविद्याशेषत्वकल्पनाद्वारा सगुणमुक्तविषयत्वकल्पनं युक्तमेवेति। एवमविद्यानिवृत्तौ कर्मणा-मनुपयोगाद्ब्रह्मभावलक्षणमोक्षस्य कर्मसाध्यत्वाभावाच्च मुक्तौ विद्यैव हेतुर्न विद्याकर्मणोः समुच्चय इति प्रतिपादितम्। इदानीं समुच्चयासम्भवे हेत्वन्तरमाह—**विरोधाच्चेति**। विरोधमेव प्रपञ्चयति—**प्रविलीनेति**। ३० कर्त्रादिकारकलक्षणा विशेषाः प्रविलीना यस्मिन्ब्रह्मणि तत्तथा, निर्विशेषमिति यावत्। तादृशब्रह्मविषया विद्या यथोक्तब्रह्मविपरीतेन कर्त्रादिकारकजातेन साध्यं यत्कर्म तेन विरुध्यते। हि प्रसिद्धमेतदित्यर्थः। ननु ब्रह्मणो निर्विशेषत्वे सिद्धे तद्विषयविद्यया कर्त्रादिद्वैतबाधावश्यंभावात्कर्मानुष्ठानं न सम्भवतीति विद्याकर्मणोर्विरोधः स्यात्, न तु तत्सिद्धमित्याशङ्क्य तस्य निर्विशेषत्वं साधयति—**न ह्येकमित्यादिना**। ब्रह्मणो जगदुपादानत्वश्रुत्यनुरोधेन कर्त्रादिसकलद्वैतास्पदत्वं प्रतीयते "नेति नेति" इत्यादिनिषेधश्रुतिभिस्तस्य सर्वविशेषशून्यत्वं च प्रतीयते; न चैकं ३५ वस्तु परमार्थत उभयवत्तया प्रमाणतो निश्चेतुं शक्यत इत्यर्थः। तत्र विरोधादिति युक्तिसूचनार्थो हिशब्दः। ततः किम्? तत्राह—**अवश्यं हीति**। लोके पुरोवर्तिनि प्रतीतयोः रजतत्वशुक्तित्वयोर्विरुद्धयोरन्यतरस्य मिथ्यात्वदर्शनादिति हिशब्दार्थः। नन्वन्यतरस्य मिथ्यात्वावश्यंभावेऽपि ब्रह्मणो निर्विशेषत्वमेव मिथ्याऽस्तु; तत्राह—**अन्यतरस्य चेति**। स्वाभाविकमनादि यदज्ञानं तद्विषयस्य तद्विषयब्रह्मकार्यस्य द्वैतस्य स्वकारणाज्ञानसहितस्य यन्मिथ्यात्वं तद्युक्त-मित्यर्थः। द्वैतस्य मिथ्यात्वे मानमाह—**यत्र हीत्यादिना**। यत्राविद्याकाले द्वैतशब्दितं जगल्लब्धात्मकं भवति,

सावन्योऽहमस्मि'' ''उदरमन्तरं कुरुते अथ तस्य भयं भवति'' इत्यादिश्रुतिशतेभ्यः। सत्यत्वं चैकत्वस्य ''एकधैवानुद्रष्टव्यम्'' ''एकमेवाद्वितीयम्'' ''ब्रह्मैवेदं सर्वम्'' ''आत्मैवेदं सर्वम्'' इत्यादिश्रुतिभ्यः। न च सम्प्रदानादिकारकभेदादर्शने कर्मोपपद्यते। अन्यत्वदर्शनापवादश्च विद्याविषये सहस्रशः श्रूयते। अतो विरोधो विद्याकर्मणोः। अतश्च समुच्चयानुपपत्तिः।

तत्र यदुक्तं संहताभ्यां विद्याकर्मभ्यां मोक्ष इति। अनुपपन्नं तत्। विहितत्वात्कर्मणां श्रुतिविरोध इति चेत्। ५ यद्युपमृद्य कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते सर्पादिभ्रान्तिविज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्, तर्हि प्राप्तः कर्मविधिश्रुतीनां निर्विषयत्वाद्विरोधः। विहितानि च कर्माणि। स च विरोधो न युक्तः प्रमाणत्वाच्छ्रुतीनामिति चेन्न पुरुषार्थोपदेशपरत्वाच्छ्रुतीनाम्।

आनन्दगिरिटीका

ब्रह्मज्ञानमुपदिश्यते तदा मिथ्यार्थत्वात्कर्मविधीनामप्रामाण्यं स्यादित्याह—विहितत्वादिति। शङ्कां विवृणोति—यदीत्यादिना। अध्ययनविधिगृहीतानां श्रुतीनां पुरुषार्थोपदर्शकत्वेन प्रामाण्यं वक्तव्यम्। न तु भेदस्य सत्यत्वेन। १० ततः प्रसिद्धिसिद्धं कारकादिभेदमर्थक्रियासमर्थमादाय प्रवृत्तानां प्रामाण्यं न विरुध्यत इत्याह—न पुरुषार्थेति।

वनमाला

तदा इतर इतरं पश्यतीति श्रुत्यर्थः। श्रुताविवकारो मिथ्यात्ववाची, न सादृश्यवाची, उपमेयानुपलम्भादिति भावः। य इह ब्रह्मणि नानाभूतं वस्तुतः कल्पितं जगत्परमार्थं पश्यति, स मृत्योर्मरणान्मृत्युं मरणमेव प्राप्नोतीति १५ द्वैतसत्यत्वदर्शिनोऽनर्थपरम्पराप्राप्त्यभिधानादपि तस्य मिथ्यात्वमेव युक्तमित्यर्थः। अथ भूमलक्षणोक्त्यनन्तरं तद्विपरीतस्याल्पस्य लक्षणमुच्यते भूमलक्षणदार्ढ्याय—यत्र जगति अन्यदन्यः पश्यति तदल्पम्; अतो यत्र दर्शनादिद्वैताभावस्तस्य भूमरूपता युक्तेत्यर्थः; द्वैतस्याल्पत्वात्स्वप्नद्वैतवन्मिथ्यात्वमिति भावः। यः परमेश्वरमन्योऽसावन्योऽहमस्मीति चिन्तयति स न परमात्मनस्तत्त्वं वेदेति श्रुत्या जीवस्य परमात्माभेदविरोधिसंसारलक्षणद्वैतस्य मिथ्यात्वमवगम्यत इति भावः। यस्तु स्वस्येश्वरादल्पमपि भेदं पश्यति, तस्य तदानीमेव भयं भवतीति श्रुत्या २० जीवेश्वरभेदोपलक्षितस्य जगतो मिथ्यात्वं भातीति भावः। ''सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद'' इत्यादिश्रुतिसंग्रहार्थमादिपदम्। एकत्वशब्दितस्य निर्विशेषब्रह्मणः सत्यत्वं च युक्तमित्यत्र हेतुत्वेन श्रुतीरुदाहरति—एकधैवेति। एकरूपेणैव ब्रह्म आचार्योपदेशमनु साक्षात्कर्तव्यमित्यर्थः। अत्रैकरूपत्वं निर्विशेषचैतन्यरूपत्वम्, ''प्रज्ञानघन एव'' इति वाक्यशेषदर्शनादिति भावः। ''ब्रह्मैवेदं सर्वम्'' इति सामानाधिकरण्यं ब्रह्मव्यतिरेकेण सर्वं वस्तुतो नास्ति; ततश्च ब्रह्म निर्विशेषमित्येतदभिप्रायकम्; एतदभिप्रायकत्वं चास्य सामानाधिकरण्यस्य भाष्यकारैर्भूम्वाद्यधिकरणे २५ प्रपञ्चितम्; नेह विस्तरभयात्तल्लिख्यते। सर्वमित्यादीत्यादिपदेन ''सत्यं ज्ञानमनन्तं ब्रह्म'' ''तत्सत्यमित्याचक्षते'' ''तत्सत्यं स आत्मा'' इत्यादिश्रुतयो गृह्यन्ते। ननूक्तरीत्या सर्वस्य दृश्यजातस्य चिदेकरसे ब्रह्मण्यध्यस्ततया सर्वाधिष्ठानभूतब्रह्मतत्त्वविद्यया सर्वस्य द्वैतस्य बाधितत्वाद्वस्तुतो जगद्भेदादर्शनेऽपि विदुषः कर्मानुष्ठानं कुतो न सम्भवति, यतो विद्याकर्मणोर्विरोधो भवेदित्याशङ्क्याह—न चेति। सम्प्रदानं कर्मण्युद्देश्या देवता। कर्तृकरणादिसंग्रहार्थमादिपदम्। स्वप्नवज्जगति मायामात्रत्वनिश्चये सति न प्रवृत्तिरुपपद्यत इति भावः। रज्जुतत्त्वसाक्षात्कारेण ३० रज्जावध्यस्तसर्पस्येव ब्रह्मतत्त्वसाक्षात्कारेण ब्रह्मण्यध्यस्तद्वैतस्योपमर्दे युक्तिसिद्धे श्रुतयोऽपि सन्तीत्याह—अन्यत्वदर्शनापवादश्चेति। अधिष्ठानयाथात्म्यज्ञानस्याध्यासनिवर्तकत्वनियमदर्शनरूपयुक्तिसमुच्चयार्थश्चकारः। विद्याविषये ब्रह्मणि विद्यासामर्थ्याद्द्वैतदर्शनबाधः ''तत्केन कं पश्येत्'' इत्यादिश्रुतिषूपलभ्यत इत्यर्थः। तदुक्तं सूत्रकारेण ''उपमर्दं च'' इति। विद्यया कर्मसाधनकारकजातस्योपमर्दं वाजसनेयिन आमनन्तीति सूत्रार्थः। अत इति। कर्मसाधनानां विद्ययोपमर्दितत्वादित्यर्थः। अतश्चेति। विरोधाच्चेत्यर्थः। समुच्चयानुपपत्तौ फलितमाह— ३५ अत्र यदुक्तमिति। मोक्ष इत्यनुपपन्नमित्यनन्तरं तदयुक्तमित्यपि क्वचित्पाठो दृश्यते। तदानीमित्थं योजना-संहताभ्यां विद्याकर्मभ्यां मोक्ष इति कृत्वा केवलविद्याया मोक्षहेतुत्वमनुपपन्नमिति यदुक्तं तदयुक्तमिति।

द्वैतस्य मिथ्यात्वे कर्मश्रुतीनामप्रामाण्यं स्यादिति शङ्कते—विहितत्वादिति। शङ्कां विवृणोति—यद्युपमृद्येत्यादिना। उपमर्दो मिथ्यात्वबोधनम्। विधीयते उपदिश्यते। सर्पादीति। रज्जौ सर्पोऽयमिति भ्रान्तं प्रति

विद्यापदेशपरा तावच्छ्रुतिः संसारात्पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया विद्यया निवृत्तिः कर्तव्येति विद्याप्रकाशकत्वेन प्रवृत्तेति न विरोधः। एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं शास्त्रं विरुध्यत एवेति चेन्न। यथाप्राप्तमेव कारकास्तित्वमुपादायोपात्तदुरितक्षयार्थं कर्माणि विदधच्छास्त्रं मुमुक्षूणां फलार्थिनां च फलसाधनं न कारकास्तित्वे व्याप्रियते। उपचितदुरितप्रतिबन्धस्य हि विद्योत्पत्तिर्नावकल्पते। तत्क्षये च विद्योत्पत्तिः स्यात्ततश्च ५ अविद्यानिवृत्तिस्तत आत्यन्तिकः संसारोपरमः।

अपि चानात्मदर्शिनो ह्यनात्मविषयः कामः। कामयमानश्च करोति कर्माणि। ततस्तत्फलोपभोगाय

आनन्दगिरिटीका

संग्रहवाक्यं विवृणोति—**विद्योपदेशपरा तावदित्यादिना।**

पूर्वं सत्यमिथ्याविषयत्वेन विद्याकर्मणोर्विरोधमादाय समुच्चयो निरस्तः। इदानीं काम्यकामिविषयत्वेन १० विरोधमाह—**अपि चेत्यादिना।**

वनमाला

मिथ्यैव सर्पो न वस्तुतः सर्पोऽस्ति रज्जुरेवैषेत्याप्तेन यथा रज्जुतत्त्वविषयकं विज्ञानमुपदिश्यते तथेत्यर्थः। शुक्त्यादिसंग्रहार्थं द्वितीयमादिपदम्। प्रथमं तु रजतादिसंग्रहार्थमिति विभागः। **निर्विषयत्वादिति।** सत्यविषयरहितत्वादित्यर्थः। कल्पितद्वैतस्य रज्जुसर्पादेरिव कार्याक्षमत्वादिति भावः। विहितत्वादिति हेतुरपि प्रतिपन्न १५ इत्याह—**विहितानि चेति।** कर्मश्रुतिविरोधापादने इष्टापत्तिं वारयति—**स चेति।** तथा च द्वैतसापेक्षकर्मश्रुतीनामद्वैतब्रह्मबोधकविद्याश्रुतीनां च परस्परविरोधादप्रामाण्यप्रसङ्ग इति भावः। विद्याकर्मश्रुतीनां परस्परमविरोधेन पुरुषार्थोपदेशमात्रे प्रवृत्तत्वान्नाप्रामाण्यप्रसङ्ग इति समाधत्ते—**नेत्यादिना।** तत्र प्रथमं विद्याश्रुतीनां कर्मश्रुत्यविरुद्धपुरुषार्थोपदेशे प्रवृत्तिं दर्शयति—**विद्योपदेशेति।** विद्योपदेशपरा तावच्छ्रुतिर्विद्याप्रकाशकत्वेन प्रवृत्तेति सम्बन्धः। श्रुतौ विद्यानिरूपणस्य प्रयोजनमाह—**संसारहेतोरिति। कर्तव्येतीति।** अत्रेतिपदानन्तरं कृत्वेति शेषः। संसार२० हेत्वविद्यानिवर्तिकां विद्यां प्रकाशयन्त्याः श्रुतेराशयं दर्शयति—**संसारादिति।** तथा च मुमुक्षोर्मोक्षसाधनविद्यालक्षणपुरुषार्थोपदेशाय प्रवृत्ता विद्याश्रुतिः, अतो न विद्याश्रुतेः कर्मश्रुत्या विरोध इत्यर्थः। इदानीं विद्याश्रुत्यविरुद्धपुरुषार्थोपदेशपरत्वं कर्मश्रुतीनामाशङ्कापूर्वकं दर्शयति—**एवमपीत्यादिना।** एवमपीत्यस्य विद्याश्रुतेः कर्मश्रुत्या विरोधाभावेऽपीत्यर्थः। **विरुध्यत एवेति।** द्वैतसत्यत्वापहारिण्या विद्याश्रुत्या तत्सत्यत्वपरा कर्मश्रुतिर्विरुध्यत एवेति शङ्कार्थः। श्रेयःसाधनरूपपुरुषार्थोपदेशपरायाः कर्मश्रुतेः कारकादिद्वैतास्तित्वेऽपि तात्पर्याभावान्न विरोध २५ इति परिहरति—**न, यथाप्राप्तमेवेति।** भ्रान्तिप्राप्तमेवेत्यर्थः। **फलेति।** स्वर्गपश्वादिफलार्थिनां फलसाधनं च विदधच्छास्त्रमित्यर्थः। **व्याप्रियत इति।** गौरवादिति भावः। न च द्वैतस्य मिथ्यात्वे शुक्तिरूप्यादिवदर्थक्रियासामर्थ्याभावात्कारकादेः फलसाधनतादिकं न स्यादिति वाच्यम्; वियदादिप्रपञ्चस्य मिथ्यात्वेऽपि शुक्तिरजतादिवैलक्षण्येन यावत्तत्त्वज्ञानमर्थक्रियासामर्थ्याङ्गीकारात्। इदं चारम्भणाधिकरणादौ प्रपञ्चितं तत्रैवानुसन्धेयमिति भावः। ननु मुमुक्षूणां मोक्षसाधनीभूता विद्या शास्त्रेण विधातव्या न तु दुरितक्षयार्थं कर्माणि, विद्यायां मोक्षे वा ३० उपात्तदुरितक्षयस्यानुपयोगादित्याशङ्क्याह—**उपचितेति। प्रतिबन्धस्य हीति।** प्रतिबन्धवतः पुंस इत्यर्थः। "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्यादिशास्त्रप्रसिद्धिद्योतनार्थो हिशब्दः। **ततश्चेति।** विद्योदयादित्यर्थः। चशब्दो विद्यायाः कर्मासमुच्चितत्वरूपकैवल्यार्थः। **तत आत्यन्तिक इति।** तथा च कर्मकाण्डस्य निःश्रेयसपर्यवसायिनो दुरितक्षयस्य स्वर्गादिफलस्य च साधनत्वेन कर्मणामुपदेशे तात्पर्यमिति कर्मश्रुतीनां पुरुषार्थोपदेशपरत्वं प्रदर्शितमिति बोध्यम्। एवं द्वैतमिथ्यात्वसाधनप्रसङ्गप्राप्तं विद्याकर्मश्रुतीनां परस्परविरोधं परिहृत्य प्रकृतायां ३५ विद्याकर्मणोः समुच्चयानुपपत्तौ प्रकारान्तरेण विरोधं हेतुमाह—**अपि चेति।** विद्यावतः कर्मासम्भवं वक्तुं कर्मणः काममूलत्वमाह—**अनात्मदर्शिनो हीति।** अनात्मनि देहादावात्मत्वदर्शिनः स्वव्यतिरिक्तान्कामयितव्यपदार्थान् पश्यतस्तद्विषयः कामो भवति। हि प्रसिद्धमित्यर्थः। ततः किम्? तत्राह—**कामयमानश्च करोतीति।** तदुक्तं भगवता व्यासेन—"यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" इति। कर्मणां संसारफलकत्वाच्च विदुषः कर्मानुष्ठानं न

**शरीराद्युपादानलक्षणः संसारः । तद्व्यतिरेकेणाऽऽत्मैकत्वदर्शिनो विषयाभावात्कामानुपपत्तिरात्मनि चानन्यत्वात् कामानुपपत्तौ स्वात्मन्यवस्थानं मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोधः ।**

**विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते । स्वात्मलाभे तु पूर्वोपचितप्रतिबन्धापनयद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानीति । अत एवास्मिन्प्रकरण उपन्यस्तानि कर्माणीत्यवोचाम । एवं चाविरोधः कर्मविधिश्रुतीनाम् । अतः केवलाया एव विद्यायाः परं श्रेय इति सिद्धम् ।** ५

**एवं तर्ह्याश्रमान्तरानुपपत्तिः । कर्मनिमित्तत्वाद्विद्योत्पत्तेः । गार्हस्थ्ये च विहितानि कर्माणीत्यैकाश्रम्यमेव ।**

आनन्दगिरिटीका

समसमुच्चयं निरस्य गुणप्रधानभावेनापि समुच्चयं निरस्यति—**विरोधादेव चेति** । विद्या चेत्कर्माणि स्वफले नापेक्षते विरुद्धत्वात्त्रिदण्डिधर्मवद्दनुगमनं कथं तर्हि विद्यासन्निधाने कर्मणां पाठ इत्यत आह—**स्वात्मलाभे त्विति** । कर्मणां विद्यासाधनत्वं श्रुत्वा गार्हस्थ्यमेवैकमनुष्ठेयमिति प्रत्यवतिष्ठन्ते कर्मजडाः—**एवं तर्हीति** । श्रुति- १०

वनमाला

सम्भवतीत्याशयेन कर्मफलं दर्शयति—**तत्फलेति** । **संसार इति** । कामिन इति शेषः । विद्यावतस्तु कामाभावान्न कर्मानुष्ठानमित्याह—**तद्व्यतिरेकेणेत्यादिना** । आत्मैकत्वदर्शिनस्तद्व्यतिरेकेण आत्मैकत्वव्यतिरेकेण कामयितव्यविषयाभावादनात्मगोचरकामानुपपत्तिरित्यर्थः । ननु तर्ह्यात्मन्येव कामोऽस्त्वानन्दरूपत्वादात्मनः, तथा च तत्कामनया विदुषोऽपि कर्मानुष्ठानं स्यादिति; नेत्याह—**आत्मनि चेति** । कामस्यात्मान्यविषयत्वादात्मानन्दे च विदुषोऽन्यत्वभ्रान्तेर्निवृत्तत्वादात्मनि कामानुपपत्तिः, तदनुपपत्तौ च विदुषो मुक्तिरेव पर्यवस्यति; तथा च मुक्तस्य न कर्मानुष्ठानप्रत्याशेति भावः । फलितमाह—**अतोऽपीति** । विदुषः कामाभावेन कर्मानुष्ठानासम्भवादपीत्यर्थः । **विरोध इति** । एकदैकत्र पुरुषे सहानवस्थानलक्षण इत्यर्थः । तथा च समुच्चयवादिमते कर्मविद्याश्रुतीनामप्येकदैकपुरुषविषयत्वासम्भवलक्षणविरोधोऽपि तदनिष्टः प्राप्नोतीति भावः । विद्या प्रधानं कर्म चोपसर्जनमिति पक्षोऽपि समप्राधान्यपक्षवदत एव निरस्त इत्याह—**विरोधादेव चेति** । स्वमते कर्मविद्याश्रुतीनां क्रमसमुच्चयपरत्वेनाविरोधं वक्तुं पूर्वोक्तमर्थं स्मारयति—**स्वात्मलाभे त्विति** । स्वात्मलाभे तु स्वोत्पत्तौ तु विद्या कर्माण्यपेक्षत इति योजना । एतदेव विवृणोति—**पूर्वोपचितेति** । कर्मणां विद्याहेतुत्वे मानमाह—**अत एवेति** । विद्योदयहेतुत्वादेवेत्यर्थः । कर्मणां शुद्धिद्वारा विद्याहेतुत्वे फलितमाह—**एवं चेति** । एतेन "विद्यां चाविद्यां च" इति वचनं क्रमसमुच्चयाभिप्रायम्, उपासनाकर्मणोर्यौगपद्येन समुच्चयाभिप्रायं वा भविष्यति । "कर्मणैव हि" इति वचनमपि कर्मणैव चित्तशुद्ध्यादिक्रमेण मुक्तिं प्राप्ता इत्यभिप्रायकं भविष्यति; "तत्प्राप्तिहेतुर्विज्ञानम्" इति वचनमपि क्रमसमुच्चयाभिप्रायमेवेति सूचितमिति ध्येयम् । परमप्रकृतमुपसंहरति—**अत इति** । मोक्षे केवलकर्मसाध्यत्वस्य समुच्चयसाध्यत्वस्य च निरस्तत्वादित्यर्थः । १५ २० २५

कर्मणां विद्यासाधनत्वनिरूपणमुपश्रुत्य लब्धावकाश आश्रमान्तराण्याक्षिपति—**एवं तर्हीति** । यदि कर्माणि विद्योत्पत्तौ निमित्तानि, तर्ह्याश्रमान्तराणां नैष्ठिकवानप्रस्थपारिव्राज्यलक्षणानामनुपपत्तिरननुष्ठेयता स्यादित्यर्थः । विद्योत्पत्तेः कर्मनिमित्तकत्वेऽपि कथमाश्रमान्तरानुपपत्तिः ? अत आह—**गार्हस्थ्ये चेति** । गार्हस्थ्य एवाग्निहोत्रादीनि कर्माणि विहितानि नाश्रमान्तरेषु, अतो गार्हस्थ्यमेकमेवानुष्ठेयमित्यर्थः । गार्हस्थ्यस्यैवानुष्ठेयत्वे हेत्वन्तरमाह—**अतश्चेति** । अत एवानुकूलतरा भवन्तीति योजना । आश्रमान्तराणामनुष्ठानपक्षे सर्वेषामधिकारिणां यावज्जीवं कर्मानुष्ठानालाभाद्यावज्जीवादिश्रुतयो नानुकूलतराः स्युरित्यर्थः । आश्रमान्तरानुष्ठानपक्षेऽपि यावज्जीवादिश्रुतयोऽनुकूला भवन्त्येव, कर्मणां विद्याहेतुत्वेऽपि विद्यामकामयमानैर्गृहस्थैः प्रत्यवायपरिहारार्थं यावज्जीवं कर्मणामनुष्ठानात्, इदानीं तु विद्याकामैरपि विद्योत्पत्तये यावज्जीवं गार्हस्थ्य एव स्थित्वा कर्माण्यनुष्ठेयानीति विशेषलाभादनुकूलतराः स्युरित्युक्तमिति मन्तव्यम् । आदिपदेन "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्याद्या आश्रमान्तरनिषेधश्रुतयो गृह्यन्ते । अत्र किमाश्रमान्तराणामविहितत्वादननुष्ठेयत्वम्, किं वा तेषां प्रतिषेधात्, अथ वा तेषु विद्याहेतुकर्माभावात् ? नाद्यः, श्रुतिस्मृत्योराश्रमान्तराणां विधिदर्शनात् । न द्वितीयः, निषेध- ३० ३५

अतश्च यावज्जीवादिश्रुतयोऽनुकूलतराः स्युः। न। कर्मानिकत्वात्। न ह्यग्निहोत्रादीन्येव कर्माणि। ब्रह्मचर्यं तपः सत्यवदनं शमो दमोऽहिंसेत्येवमादीन्यपि कर्माणि इतराश्रमप्रसिद्धानि विद्योत्पत्तौ साधकतमान्यसङ्कीर्णत्वाद्विद्यन्ते ध्यानधारणादिलक्षणानि च। वक्ष्यति च—"तपसा ब्रह्म विजिज्ञासस्व" इति। जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्याद्विद्योत्पत्तिसम्भवात्कर्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः कर्मसाध्यायां च विद्यायां सत्यां गार्हस्थ्यप्रति-
५ पत्तिरनर्थिकैव। लोकार्थत्वाच्च पुत्रादीनाम्। पुत्रादिसाध्येभ्यश्च "अयं लोकः पितृलोक देवलोक" इत्येतेभ्यो व्यावृत्त-कामस्य नित्यसिद्धात्मलोकदर्शिनः कर्मणि प्रयोजनमपश्यतः कथं प्रवृत्तिरुपपद्यते। प्रतिपन्नगार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकाद्विरक्तस्य कर्मसु प्रयोजनमपश्यतः कर्मभ्यो निवृत्तिरेव स्यात्। "प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि"

आनन्दगिरिटीका

स्मृतिष्वाश्रमान्तराणामपि विहितत्वाविशेषात्तदीयकर्मसु कर्मत्वाविशेषाच्च ग्राम्यधर्मरागिणामेवैतच्चोद्यमित्याह—
१० न कर्मानिकत्वादिति। असङ्कीर्णत्वादिति। हिंसाद्यमिश्रितत्वादित्यर्थः। इतश्च कर्मणो विद्यासाधनत्वेऽपि न गार्हस्थ्य-मावश्यकमित्याह—जन्मान्तरेति। कामिनां गार्हस्थ्यस्यानुष्ठेयत्वेऽपि न सर्वैरनुष्ठेयत्वमित्यत्र हेत्वन्तरमाह—लोकार्थत्वाच्चेत्यादिना। गार्हस्थ्यस्यानावश्यकत्वेन वैकल्पिकमनुष्ठानमुक्तं तत्रातुल्यबलत्वेन विकल्पमाक्षिपति—

वनमाला

श्रुतेर्यावज्जीवादिश्रुतेश्चाविरक्तविषयतया सङ्कोचोपपत्तेः, अन्यथा सांसारिकफलाद्विरक्तस्य "यदहरेव विरजेत्"
१५ इत्यादिसंन्यासविधिविरोधप्रसङ्गात्। न तृतीय इत्याह—न कर्मानिकत्वादिति। विद्याहेतुभूतानां कर्मणां नाना-विधत्वादाश्रमान्तरेष्वपि सन्त्येव विद्यासाधनानि कर्माणि, अतो नाश्रमान्तरानुपपत्तिरित्यर्थः। ननु यानि गार्हस्थ्ये विहितानि तान्येव कर्माणि, नाश्रमान्तरेषु विहितानि ब्रह्मचर्यादीनीत्याशङ्क्याऽऽह—न हीति। न ह्यग्निहोत्रादीन्येव कर्माणि, किं तु ब्रह्मचर्यादीन्यपि कर्माणि भवन्त्येव अनुष्ठेयत्वाविशेषादित्यर्थः। तान्येवाश्रमान्तरेषु श्रुत्यादिसिद्धानि कर्माणि प्रपञ्चयन्विद्योत्पत्तिं प्रति तेषां गार्हस्थ्ये विहितकर्मभ्यः सकाशादतिशयं दर्शयति—ब्रह्मचर्यं तप इत्यादिना।
२० असङ्कीर्णानीति। हिंसानृतवचनादिदोषैरसङ्कीर्णानीत्यर्थः। आश्रमान्तरस्थानां चित्तैकाग्र्यतत्त्वविचारादिकर्मणां विद्यासाधनत्वे मानमाह—वक्ष्यति चेति। "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इत्यादिश्रुतिसंग्रहार्थश्चकारः। इतश्च कर्मणां विद्यासाधनत्वेऽपि न गार्हस्थ्यमावश्यकम्, अतो नैकाश्रम्यनिर्बन्ध इत्याशयेनाह—जन्मान्तरेति। केषाञ्चिज्जन्मान्तरकृतकर्मभ्य एव दारसंग्रहात्प्रागपि विद्योदयसंभवात्तेषां गार्हस्थ्य-प्राप्तिरनर्थिका। ननूत्पन्नविद्यानामपि गार्हस्थ्यप्राप्तिरस्तु; नेत्याह—कर्मार्थत्वाच्चेति। "जाया मे स्यादथ प्रजायेयाथ
२५ वित्तं मे स्यादथ कर्म कुर्वीय" इत्यादिश्रुतिपर्यालोचनया गार्हस्थ्यप्राप्तेः कर्मानुष्ठानार्थत्वस्यैवावगमात्कर्मफल-भूतायां विद्यायां सिद्धायां तत्प्राप्तिरनर्थिकैवेत्यर्थः। कर्मसाध्यायां चेति। कर्मभिः साधनीयायामित्यर्थः। चकारो विदुषः कर्मासम्भवसूचनार्थः। सर्वेषां गार्हस्थ्यनिर्बन्धाभावे हेत्वन्तरमाह—लोकार्थत्वाच्चेति। ननु पुत्रकर्मापर-विद्यानां गार्हस्थ्ये सम्पादनीयानां लोकत्रयार्थत्वेऽपि जन्मान्तरकृतकर्मभिरुत्पन्नविद्येन पुंसां गार्हस्थ्यं प्राप्तव्यमेव, तस्यापि लोकार्थत्वादिति; नेत्याह—पुत्रादीति। "अयं लोकः पुत्रेणैव जय्यः कर्मणा पितृलोको विद्यया देवलोकः"
३० इति श्रुत्या पृथिवीलोकादीनां पुत्रादिसाध्यत्वमवगम्यते। एतेभ्यश्च पुत्रादिसाध्येभ्यो लोकेभ्यो व्यावृत्तकामत्वान्न तस्यात्मदर्शिनः कर्मानुष्ठानोपयोगिनि गार्हस्थ्ये प्रवृत्तिरुपपद्यते। नित्यसिद्ध आत्मैव लोकनं लोक इति व्युत्पत्त्या लोकः लोकनं चैतन्यम्। इदं च नित्यसिद्धात्मलोकदर्शित्वं व्यावृत्तकामत्वे हेतुतयोपात्तम्। तदुक्तं भगवता—"रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति। रसो रागः। एवं ब्रह्मचर्याश्रम एवोत्पन्नविद्यानां न गार्हस्थ्यमपेक्षित-मित्युक्तम्। इदानीं गृहस्थस्य सतो विद्योदयेऽपि गार्हस्थ्यपरित्याग एव न्याय्य इत्याह—प्रतिपन्नेति। विद्यायाः
३५ परिपाकः प्रतिबन्धराहित्यम्; अप्रतिबन्धात्मविद्याबलेन कर्मफलेभ्यो नितरां विरक्तस्येत्यर्थः। निवृत्तिरेवेति। विधिना कर्मपरित्यागरूपसंन्यास एव स्यादित्यर्थः। अरे मैत्रेयि, अस्मात्प्रत्यक्षात्स्थानाद्गार्हस्थ्यात् प्रव्रजिष्यन्नेवास्मि त्यक्त्वेदं गार्हस्थ्यं पारिव्राज्यं करिष्यन्नस्मीति प्रतिज्ञापूर्वकं याज्ञवल्क्यः प्रवव्राजेति विदुषो याज्ञवल्क्यस्य पारिव्राज्ये प्रवृत्तिदर्शनाल्लिङ्गादित्यर्थः। एवमादीत्यादिपदेन "आत्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इत्यादीनि श्रुतिलिङ्गानि गृह्यन्ते। न कर्मानिकत्वादित्यादिना

इत्येवमादिश्रुतिलिङ्गदर्शनात्[1]। कर्मं प्रति श्रुतेर्यत्नाधिक्यदर्शनादयुक्तमिति चेत्, अग्निहोत्रादिकर्म प्रति श्रुतेरधिको यत्नो महांश्च कर्मण्यायासोऽनेकसाधनसाध्यत्वादग्निहोत्रादीनाम्। तपोब्रह्मचर्यादीनां चेतराश्रमकर्मणां गार्हस्थ्येऽपि समानत्वादल्पसाधनापेक्षत्वाच्चेतरेषां न युक्तस्तुल्यवद्विकल्प आश्रमिभिस्तस्येति चेन्न। जन्मान्तरकृतानुग्रहात्।

यदुक्तं कर्मणि श्रुतेरधिको यत्न इत्यादि। नासौ दोषः। यतो जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं कर्म ब्रह्मचर्यादिलक्षणं चानुग्राहकं भवति विद्योत्पत्तिं प्रति। येन जन्मनैव विरक्ता दृश्यन्ते केचित्। केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिणः। तस्माज्जन्मान्तरकृतसंस्कारेभ्यो विरक्तानामाश्रमान्तरप्रतिपत्तिरेवेष्यते, कर्मफलबाहुल्याच्च, पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य कर्मफलस्यासंख्येयत्वात्। तत्प्रति च पुरुषाणां कामबाहुल्यात्तदर्थः श्रुतेरधिको यत्नः कर्मसूपपद्यते। आशिषां बाहुल्यदर्शनादिदं मे स्यादिदं मे स्यादिति। उपायत्वाच्च। उपायभूतानि हि कर्माणि विद्यां प्रतीत्यवोचाम। उपाये चाधिको यत्नः कर्तव्यो नोपेये। ५

### आनन्दगिरिटीका १०

कर्म प्रति श्रुतेरिति। जन्मान्तरकृतानुग्रहादिति परिहारभाष्यं विवृणोति—यदुक्तमित्यादिना। कर्मणि यत्नाधिक्यस्यान्यथासिद्धत्वात्[2] विकल्पविघातकत्वं न सम्भवतीत्यर्थः।

### वनमाला

कर्मणां विद्यासाधनत्वेऽपि यथा विद्याकामेन गार्हस्थ्यमनुष्ठातुं शक्यते तथैवाश्रमान्तराण्यपि यथारुच्यनुष्ठातुं शक्यन्ते, तेष्वपि विद्यासाधनकर्मणां सत्त्वात्। तथा च वचनम् "तस्याश्रमविकल्पमेके समामनन्ति" इति। अत्र च वचने तच्छब्दो ब्रह्मचारिपरः। अनन्तरं च जन्मान्तरकृतेत्यादिना विदुषः पारिव्राज्यमेवेत्युक्तम्। इत्थं गार्हस्थ्यस्यानावश्यकत्वादाश्रमाणां वैकल्पिकमनुष्ठानमुक्तमाक्षिपति—कर्म प्रतीति। श्रुतेरग्निहोत्रादिकर्मसु तात्पर्यातिशयवत्त्वादग्निहोत्रादिधर्मयुक्तं गार्हस्थ्यं प्रबलम्, अतोऽतुल्यत्वाद्गार्हस्थ्यानधिकृतविषयमाश्रमान्तरविधानमित्यर्थः। आक्षेपं विवृणोति—अग्निहोत्रादीति। अधिको यत्नः तात्पर्यातिशयः। "एष आदेशः" इत्यादिवचनपर्यालोचनया श्रुतेर्यत्नाधिक्यावगमादिति भावः। गार्हस्थ्यस्य प्राबल्ये हेत्वन्तरमाह—महांश्चेति। इतश्च तस्य प्राबल्यमित्याह—तपोब्रह्मचर्यादीनां चेति। यानि चाश्रमान्तरस्थानि कर्माणि तान्यपि यथासम्भवं गृहस्थानां सन्त्येव, परं त्वग्निहोत्रादीन्यधिकानि; तथा च गार्हस्थ्यस्य धर्मबाहुल्यात्प्राबल्यमित्यर्थः। इतराश्रमकर्मणामायासाधिक्याभावे हेतुमाह—अनन्येति। ऋत्विग्वित्तादिसाधनापेक्षत्वाभावादित्यर्थः। तस्येति। गृहस्थस्येत्यर्थः। यत्नाधिक्यायासबाहुल्यधर्मबाहुल्यानामन्यथासिद्धत्वाद्गार्हस्थ्यप्राबल्यप्रयोजकत्वमसिद्धमिति मन्वानः कर्मफलभूतायां विद्यायां विरक्तौ वा लब्धायां पुनः कर्मानुष्ठानैकप्रयोजने गार्हस्थ्ये प्रवृत्तिर्विफलेति परिहरति—न जन्मान्तरकृतानुग्रहादिति। संग्रहवाक्यं विवृणोति—यदुक्तमित्यादिना। ब्रह्मचर्यादिलक्षणं चेति। आश्रमान्तरस्थमिति शेषः। जन्मान्तरकृतशुभाशुभकर्मणामस्मिञ्जन्मनि स्वफलोत्पादकत्वे लिङ्गमाह—येनेति। कर्मसु प्रवृत्तौ हेतुं सूचयति—अविरक्ता इति। अत एवाह—विद्याविद्वेषिण इति। विद्यायाः सांसारिकभोगविरोधित्वात्तत्र रागिणां वैमुख्यं युक्तम्। इदं च वैमुख्यमशुभकर्मफलमनर्थपरम्परावहत्वात्। येन जन्मनैव वैराग्यादिकं केषाञ्चिद्दृश्यते तेन जन्मान्तरकृतमप्यनुग्राहकं भवति; यतो जन्मान्तरकृतमप्यनुग्राहकं भवति, तस्माज्जन्मान्तरकृतकर्मजनितसंस्कारेभ्यो विरक्तानामुत्पन्नविद्यानामनुत्पन्नविद्यानां च पारिव्राज्यप्राप्तिरेवेष्यते न गार्हस्थ्यप्राप्तिः, कर्मप्रयोजनस्य सिद्धत्वादित्यर्थः। इदानीं यत्नाधिक्यादेरन्यथासिद्धिमाह— कर्मफलबाहुल्याच्चेति। यद्वा जन्मान्तरकृतानुग्रहादित्यनेन जन्मान्तरकृतानामप्यग्निहोत्रादीनां यतो विद्यां प्रत्यनुग्राहकत्वमतोऽग्निहोत्रादिकर्मसु श्रुतेर्यत्नाधिक्यादिकमुपपद्यत इति यत्नाधिक्यादेरन्यथासिद्धावेको हेतुरुक्तः। हेत्वन्तरमाह—कर्मफलबाहुल्याच्चेति। कामबाहुल्यादित्युक्तमनुभवेन साधयति—आशिषामिति। अभ्युदयफलानामसंख्येयत्वादेव तत्साधनकर्मानुष्ठानोपयोगिनि गृहाश्रमे कर्मबाहुल्यं कर्मणामाया- १५ २० २५ ३० ३५

१. लिङ्गदर्शनात्—अन्यपरा श्रुतिः लिङ्गमित्युक्तेरिदं श्रौतं लिङ्गमेव।

२. अन्यथासिद्धत्वात्: कर्मणि यत्नाधिक्यं विकल्पविघातकं न भवति जन्मान्तरीयेणापि कर्मणा चित्तशुद्धेः सम्भवात् नास्यास्मिन्नेव जन्मनि अनुष्ठेयत्वसूचकत्वमित्यर्थः।

कर्मनिमित्तत्वाद्विद्याया यत्नान्तरानर्थक्यमिति चेत्कर्मभ्य एव पूर्वोपचितदुरितप्रतिबन्धक्षयादेव विद्योत्पद्यते चेत्कर्मभ्यः पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेत्। न। नियमाभावात्। न हि प्रतिबन्धक्षयादेव विद्योत्पद्यते न त्वीश्वरप्रसादतपोध्यानाद्यनुष्ठानादिति नियमोऽस्ति। अहिंसाब्रह्मचर्यादीनां च विद्यां प्रत्युपकारकत्वात्साक्षादेव च कारणत्वाच्छ्रवणमनननिदिध्यासनानाम्। अतः सिद्धान्याश्रमान्तराणि। सर्वेषां चाधिकारो विद्यायां, परं च श्रेयः ५ केवलाया विद्याया एवेति सिद्धम्।

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्॥

ॐ शान्तिः शान्तिः शान्तिः

१० इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षावल्लीभाष्ये द्वादशोऽनुवाकः

### आनन्दगिरिटीका

इदानीं गृहस्थाश्रमकर्मणां बहिरङ्गत्वं संन्यासाश्रमकर्मणां त्वन्तरङ्गविद्यासाधनत्वमिति विशेषं दर्शयितुं चोद्यमुद्भावयति—कर्मनिमित्तत्वादित्यादिना।

१५ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां शीक्षावल्ल्यां द्वादशोऽनुवाकः

### वनमाला

सबाहुल्यं चेति भावः। अग्निहोत्रादीनां विद्यां प्रत्युपायत्वाच्च तत्र यत्नाधिक्यादिकमित्यन्यथासिद्धौ हेत्वन्तरमाह—उपायत्वाच्चेति। उपेयं फलम्। तथा च गार्हस्थ्यप्राबल्ये मानाभावादाश्रमान्तरस्थकर्मणां विद्यां प्रति साधक-२० तमत्वेनाश्रमान्तराणामेव प्राबल्यसम्भवाच्च विरक्तानां कर्मानुष्ठानसामर्थ्ये सत्यपि पारिव्राज्यमेव युक्तमिति भावः। पूर्वं स्वात्मलाभे त्वित्यादावग्निहोत्रादिकर्मणां प्रतिबन्धकदुरितक्षयद्वारा विद्याहेतुत्वमुक्तम्; तदुपश्रुत्य शङ्कते—कर्मनिमित्तत्वादिति। किं तद्यत्नान्तरमित्याकाङ्क्षायां संग्रहं विवृणोति—कर्मभ्य एवेति। श्रवणादिवैयर्थ्यं परिहरति—न, नियमाभावादिति। ईश्वरप्रसादपदेन तद्धेतुभूतोपनिषच्छ्रवणादियत्नो लक्ष्यते, ईश्वरप्रसादस्यानुष्ठे-यत्वाच्छ्रवणादियत्नस्य प्रकृतत्वाच्च। तथा च लोके कर्मकृतात्प्रतिबन्धक्षयादेव विद्या जायते न तु श्रवणाद्यनुष्ठानादिति २५ नियमो नास्ति, नास्माभिस्तथाभ्युपगम्यते चेत्यर्थः। कुत इत्यत आह—अहिंसेति। संन्यासाश्रमकर्मणामहिंसादीनामपि विद्यां प्रत्यन्तरङ्गसाधनत्वेन तैर्विना कर्मभिः क्षीणपापस्यापि विद्योदयासम्भवादित्यर्थः। अहिंसाद्यपेक्षयापि श्रवणादौ विशेषमभिप्रेत्याह—साक्षादेवेति। प्रमाणाद्यसम्भावनादिलक्षणदृष्टप्रतिबन्धनिरासेन विद्यासाधनत्वाच्छ्रवणादेरावश्यक-तेत्यर्थः। उपसंहरति—अतः सिद्धानीति। विहितत्वाविशेषादियुक्तेरित्यतःशब्दार्थः। विद्यायामिति। विद्यासाधन-कर्मसु सर्वेषामाश्रमिणामधिकारः सिद्ध इत्यर्थः। समुच्चयनिराकरणफलमुपसंहृतमपि पुनरुपसंहरति चिन्तासमाप्ति-३० द्योतनार्थम्—परं श्रेय इति। विद्याया इति पञ्चमी।

इति श्रीमत्स्वयंप्रकाशानन्दसरस्वतीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ वनमालाख्यायां तैत्तिरीयोपनिषद्भाष्यव्याख्यायां संहितोपनिषद्भाष्यव्याख्या समाप्ता

## अथ ब्रह्मवल्ल्यां प्रथमोऽनुवाकः

**ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्॥ १॥**
**सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै॥ २॥**
**ॐ शान्तिः शान्तिः शान्तिः** ५

**शं नो मित्र इत्याद्यतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता। इदानीं तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः पठ्यते—शं नो मित्र इति सह नाववत्विति च। शं नो मित्र इत्यादि पूर्ववत्स्पष्टम्। सह नाववतु नौ शिष्याचार्यौ सहैवावतु रक्षतु। सह नौ भुनक्तु भोजयतु। सह वीर्यं विद्यादिनिमित्तं सामर्थ्यं करवावहै निर्वर्तयावहै। तेजस्विनावावयोस्तेजस्विनोरधीतं स्वधीतमस्तु। अर्थज्ञानयोग्यमस्त्वित्यर्थः। मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्याऽऽचार्यस्य वा प्रमादकृतादन्यायाद्विद्वेषः प्राप्तस्तच्छमनायेयमाशीर्मा विद्विषा-** १०

आनन्दगिरिटीका

शान्तिद्वयस्यापौनरुक्त्यमाह—**शं नो मित्र इति।** इदानीं परविद्यार्थिनमप्यवतु साधारण्येन मया पूर्वं प्रार्थितत्वादित्यर्थः। असाधारण्येन परविद्योपसर्गशान्त्यर्थमाह—**सह नाववस्विति।** नावावयोस्तेजस्विनोरधीतं तेजस्व्यस्त्विति योजना।

वनमाला १५

ननु "शं नो मित्रः" इत्यादिशान्तेरादावेव पठितत्वादिदानीं पुनः किमर्थं पठ्यते? तत्राह—**शं नो मित्र इत्याद्यतीतेति।** संहितोपनिषद्यतीतानां विद्यानां प्राप्तौ ये उपसर्गाः विघ्नास्तेषामुपशमनाय "शं नो मित्रः" इत्याद्या शान्तिरादौ पठितेत्यर्थः। पुनः पाठ उत्तरार्थ इत्याह—**इदानीमिति।** यद्यपि पुनः पाठस्यापि पूर्वशेषत्वमेव प्रतीयते "आवोन्माम्" इत्यादिलिङ्गात्, तथाप्यतीतविद्योपसर्गप्रशमनरूपस्य प्रार्थनाप्रयोजनस्य सिद्धत्वादुपक्रमे "शं नो भवत्वर्यमा" इति प्रार्थनालिङ्गाच्च पुनःपाठस्योत्तरविद्यादिशेषत्वमुक्तमिति मन्तव्यम्; तथा च "तन्मामावीत्" २० इत्यादौ तत् वाय्वाख्यमपरं ब्रह्म माम् अपरविद्यार्थिनम् आवीत् अरक्षत् इदानीं परविद्यार्थिनं मामवत्वित्यादिप्रकारेण परब्रह्मविद्याशेषत्वानुगुणमुपपादनं कर्तव्यमिति भावः। 'सह नाववतु" इति शान्ति प्रतीकग्रहणपूर्वकं व्याचष्टे—**सह नाववत्वित्यादिना।** गुरोः कृतार्थत्वाच्छिष्य एव गुरोः स्वस्य च क्षेमं प्रार्थयत इत्याह—**रक्षत्विति।** ब्रह्मेति शेषः। **भोजयत्विति।** पालयत्वित्यर्थः। यथा गुरुर्निरालस्य उपदिशति यथा चाहमुपदिष्टमर्थमप्रतिपत्तिविप्रतिपत्त्यादिरहितो गृह्णामि तथा पालयत्विति भावः। **विद्यानिमित्तमिति।** मम विद्योदयं प्रति निमित्ततया २५ यदावयोः सामर्थ्यमपेक्षितमूहापोहादिलक्षणं तत्सहितावेव निर्वर्तयावहै इत्यर्थः। **अधीतमिति।** आवयोः सम्बन्धि यदधीतमुपनिषद्ग्रन्थजातं तत्तेजस्व्यस्त्विति योजना। अधीतस्य तेजस्वितं सौष्ठवमित्याह—**स्वधीतमिति।** अपेक्षितब्रह्मविद्योपयोगित्वेन तदेव सौष्ठवं निरूपयति—**अर्थज्ञानेति।** ननु शिष्याचार्ययोर्द्वेषो न प्रसज्यते परस्परमत्यन्तहितैषित्वादित्याशङ्क्याह—**विद्येति।** विद्याग्रहणं निमित्तीकृत्य कदाचिद्वैमनस्यरूपो द्वेषोपि प्रसज्यत इत्यर्थः। तस्यापि स्वारसिकत्वं व्यावर्तयति—**प्रमादेति।** अन्यकृतदुर्बोधनादिना शिष्यस्याचार्यविषयेऽनादररूपोऽपराधो भवति, तथा ३० आचार्यस्यापि शिष्यविषये तादृग्विध एवापराधो भवति, इदं च लोके प्रसिद्धमिति भावः। शिष्येण तावत्स्वविषये आचार्यकर्तृकद्वेषोऽवश्यं परिहर्तव्यः, इतरथा अविद्यानिवृत्तिपर्यन्तविद्योदयासम्भवात्; तदुक्तं वार्तिके "स्याज्ज्ञानं फलवद्यस्माच्छान्तान्तःकरणे गुरौ" इति; तथा स्वस्याचार्यविषयकद्वेषोऽपि सम्यक्परिहर्तव्यः, तस्य तद्भक्तिविघटकत्वेन भक्तिहीनस्य तादृशविद्योदयासम्भवात्। तथा च श्रुतिः—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।

**ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां**

वहा इति । मैवेतरेतरं विद्वेषमापद्यावहै । शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमुक्तार्थम् । वक्ष्यमाणविद्याविघ्नप्रशमनार्थं चेयं शान्तिः । अविघ्नेनाऽऽत्मविद्याप्राप्तिराशास्यते तन्मूलं हि परं श्रेय इति ।

संहितादिविषयाणि कर्मभिरविरुद्धान्युपासनान्युक्तानि । अनन्तरं चान्तःसोपाधिकात्मदर्शनमुक्तं व्याहृतिद्वारेण ५ स्वाराज्यफलम् । न चैतावताऽशेषतः संसारबीजस्योपमर्दनमस्तीत्यतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्त्यर्थं विधूतसर्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते—ब्रह्मविदाप्नोति परमित्यादि । प्रयोजनं चास्या ब्रह्मविद्याया अविद्या-

आनन्दगिरिटीका

वृत्तानुवादपूर्वकमानन्दवल्ल्यास्तात्पर्यमाह—**संहितादीत्यादिना** । ननु यथा पूर्वमाप्नोति स्वाराज्यमित्यपरविद्याफलमुक्तं संसारगोचरमेव तथा परविद्याफलमपि "सोऽश्नुते सर्वान्कामान्" इति सर्वविषयसाध्यानन्दान् १० संसारगोचरानेव दर्शयिष्यति कथमात्यन्तिकः संसाराभाव इत्यत आह—**प्रयोजनं चास्या इति** । सर्वकामशब्देन

वनमाला

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इतीति भावः । **उक्तार्थमिति** । त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमनार्थमिति ग्रन्थेनेति शेषः । सह नाववत्विति शान्तेर्वक्ष्यमाणविद्याशेषत्वं निर्विवादमित्याशयेनाह—**वक्ष्यमाणेति** । "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः" १५ इत्यादिवचनैरात्मविद्याप्राप्तौ विघ्नबाहुल्यावगमात्तन्निवृत्तिरवश्यं प्रार्थनीयेत्याह—**अविघ्नेन हीति** । इतरथा तत्प्राप्त्यभावः प्रसिद्ध इति हिशब्दार्थः । ननु मुमुक्षुणा आत्मविद्याप्राप्तिः किमर्थमाशास्यते ? तत्राह—**तन्मूलं हीति** । प्रकृष्टश्रेयसो मोक्षस्यात्मविद्यामूलकत्वे "तरति शोकमात्मवित्" इत्यादिश्रुतिसूचनार्थो हिशब्दः ।

वृत्तानुवादपूर्वकमानन्दवल्ल्यास्तात्पर्यमाह—**संहितादीत्यादिना** । वक्ष्यमाणविद्यावैलक्षण्यार्थमाह—**कर्मभिरविरुद्धानीति** । कर्मभिरविरुद्धमेवान्यदप्युपासनमुक्तमित्याह—**अनन्तरं चेति** । ननु कर्मसमुच्चितेन व्याहृतिशरीर- २० ब्रह्मोपासनेन स्वाराज्यप्रापकेणैव सबीजस्य संसारस्य निवृत्तिसम्भवात्किं निरुपाधिकब्रह्मविद्यारम्भेणेत्याशङ्क्याह—**न चैतावतेति** । कर्मसमुच्चितेनापि सोपाधिकात्मदर्शनेनेत्यर्थः । **अत इति** । सोपाधिकात्मदर्शनस्याधिष्ठानयाथात्म्यदर्शनरूपत्वाभावेनाशेषसंसारबीजोपमर्दने सामर्थ्यरहितत्वादित्यर्थः । ननु निर्विशेषात्मदर्शनादप्यज्ञानस्य निवृत्तिर्न सम्भवति तस्यानादित्वादित्याशङ्क्य विरोधिसन्निपाते सत्यनादेरपि निवृत्तिः सम्भवत्येव, प्रागभावस्यानादेरपि निवृत्तिदर्शनात्, गौरवेण भावत्वविशेषणायोगादित्याशयेनाह—**प्रयोजनं चेति** । ननु विरोधिविद्यावशादविद्या २५ कामवस्थामापद्यते ? असत्त्वावस्थामापद्यत इति ब्रूमः । तथा हि—यथा मुद्गरपातादिरूपविरोधिसन्निपातात्पूर्वं मृदादिदेशेन मुहूर्तादिकालेन जलाहरणादिकार्येण च सम्बन्धयोग्यं सद्घटादिस्वरूपं विरोधिसन्निपाताद्देशकालक्रियाभिः सम्बन्धायोग्यत्वलक्षणमसत्त्वमापद्यते, तथा विद्योदयरूपविरोधिसन्निपातात्पूर्वं चैतन्यरूपदेशेन ईश्वराद्यात्मककालेन संसाररूपकार्येण च सम्बन्धयोग्यं सदविद्यास्वरूपं विरोधिविद्योदयसन्निपाताच्चैतन्यादिना सम्बन्धायोग्यत्वलक्षणमसत्त्वमापद्यते । ननु विरोधिसन्निपाते सति घटादेर्ध्वंसो जायत इति चेत्; किमेतावता ? न हि घटादिरेव ध्वंस- ३० रूपाभावो भवति; अत एव प्रागुत्पत्तेर्नाशादूर्ध्वं च कार्यमसदिति वैशेषिकादिराद्धान्तः । ध्वंसोऽपि जन्मवत्क्षणिको विकारो न पराभिमताभावरूप इति व्यवस्थापितं **शास्त्रसिद्धान्तलेशसंग्रहादौ** । ननु सिद्धान्ते विरोधिसन्निपाते सति कार्यस्य स्वपरिणाम्युपादाने सूक्ष्मावस्थारूपनाशाभ्युपगमान्नष्टस्यापि घटादिकार्यस्य सूक्ष्मरूपतामापन्नस्यास्ति देशादिसम्बन्धयोग्यतेति चेत्, न; सिद्धान्तेऽपि कार्यगतस्थूलावस्थाया विरोधिसन्निपातेन निरुक्तासत्त्वोपगमात् । विद्योदये सत्यविद्यायास्तुच्छत्वापत्तिर्वार्तिककारैरुक्ता—"प्रत्यग्ब्रह्मणि विज्ञाते नासीदस्ति भविष्यति" इति । ३५ पञ्चदश्यामप्युक्तम्—"विद्यादृष्ट्या श्रुतं तुच्छम्" इति । विद्यारूपया तत्त्वदृष्ट्या मूलाविद्यायास्तुच्छत्वापत्तिः श्रुतिसिद्धेति तदर्थः । तस्माद्विद्योदये सति चैतन्यमात्रमवशिष्यते, नाविद्या नापि तत्कार्यमिति संक्षेपः[१] । नन्वविद्या-

१. अयमेवाभिप्रायः लघुचन्द्रिकायां या या प्रमा सा स्वसमानविषयकाज्ञाननाशावृत्तिः इत्यादिना तृतीयमिथ्यात्वप्रकरणे प्रपञ्चितः । तत्रैव द्रष्टव्यः ।

निवृत्तिस्तत आत्यन्तिकः संसाराभावः। वक्ष्यति च—"विद्वान्न बिभेति कुतश्चन" इति। संसारनिमित्ते च सति "अभयं प्रतिष्ठां विन्दते" इत्यनुपपन्नम्। "कृताकृते पुण्यपापे न तपतः" इति च। अतोऽवगम्यतेऽस्माद्विज्ञानात्सर्वात्म-ब्रह्मविषयादात्यन्तिकः संसाराभाव इति। स्वयमेव च प्रयोजनमाह "ब्रह्मविदाप्नोति परमि"त्यादावेव सम्बन्धप्रयोजन-ज्ञापनार्थम्। निर्ज्ञातयोर्हि सम्बन्धप्रयोजनयोर्विद्याश्रवणग्रहणधारणाभ्यासार्थं प्रवर्तते। श्रवणादिपूर्वकं हि विद्याफलम् "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुत्यन्तरेभ्यः। ब्रह्मवित्; ब्रह्मेति वक्ष्यमाणलक्षणं बृहत्तमत्वाद्ब्रह्म ५ तद्वेत्ति विजानातीति ब्रह्मविदाप्नोति परं निरतिशयं तदेव ब्रह्म परम्। न ह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः। स्पष्टं च श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादि।

### आनन्दगिरिटीका

निरतिशयानन्दाभिव्यक्तिर्विवक्षिता। सा च स्वभावानन्दानभिव्यक्तिरूपाविद्यानिवृत्तिरेवेति न संसारगोचरं फलमित्यर्थः। आद्यवाक्यस्यावान्तरतात्पर्यमाह—स्वयमेव चेति। विद्ययैव केवलया मोक्षः साधयितुं शक्यते १० ब्रह्मविदितिविशेषणात्। सम्बन्धज्ञानस्य पुरुषाकाङ्क्षाविषयतया परप्राप्तिः प्रयोजनं विद्याया इति ज्ञापनस्य वा कुत्रोपयोग इत्याशङ्क्य यज्ञादिपरित्यागेन वेदान्तश्रवणादावेव मुमुक्षुणा प्रवर्तितव्यमित्यत्रेत्याह—निर्ज्ञातयोर्हीति। परशब्देनोत्कृष्टमुच्यते कथं ब्रह्मेति व्याख्यायते तत्राऽऽह—न हीति।

### वनमाला

निवृत्तिर्न प्रयोजनम् असत्त्वापत्तिरूपायास्तस्याः सुखदुःखाभावेतरत्वादित्यत आह—ततश्चेति। अविद्यानिवृत्तिवशादेव १५ तत्कार्यसंसारस्य दुःखात्मकस्यात्यन्तिकी निवृत्तिर्भवति; तथा चाविद्यानिवृत्तिद्वारा संसारदुःखनिवृत्तिरूपा मुक्ति-विद्यायाः प्रयोजनमित्यर्थः। तत्र मानमाह—वक्ष्यति चेति। भयोपलक्षितं संसारदुःखं न प्राप्नोति विद्वानित्यर्थः। अत्रैव पुनर्वचनद्वयमाह—संसारेति। विद्ययात्यन्तिकसंसारनिवृत्तौ सत्यामेवाभयप्रतिष्ठावचनं पुण्यपापयोरकरण-करणानुसन्धानप्रयुक्तसन्तापाभाववचनं चोपपन्नमित्यर्थः। साधितं ब्रह्मविद्याप्रयोजनं सप्रमाणमुपसंहरति—अतोऽव-गम्यत इति। उदाहृतवचनजातादित्यतःशब्दार्थः। अस्माद्विज्ञानादिति। विधूतसर्वोपाधीत्यत्र प्रकृतादित्यर्थः। २० एवमानन्दवल्ल्यास्तात्पर्यमुपवर्ण्याद्यवाक्यस्य तात्पर्यमाह—स्वयमेवेति। स्वयमेव श्रुतिः "ब्रह्मविदाप्नोति परम्" इति वाक्येन ब्रह्मविद्यायाः प्रयोजनं सम्बन्धं च किमर्थमाहेत्याशङ्क्याह—आदावेवेति। तत्र "आप्नोति परम्" इत्यनेन प्रयोजननिर्देशः, "ब्रह्मवित्" इत्यनेन ब्रह्मविद्याया निर्देशः, ताभ्यामेव समभिव्याहृताभ्यां विद्याप्रयोजनयोः प्रयोजनप्रयोजनिभावलक्षणसम्बन्धनिर्देश इति विभागः। नन्वादावेव तयोर्ज्ञापनं किमर्थम्? तत्राह—निर्ज्ञातयोर्हीति। मुमुक्षोरुपनिषत्सु स्वप्रयोजनमुक्तिसाधनविद्यासाधनत्वज्ञानं विना उपनिषच्छ्रवणादौ प्रवृत्त्ययोगात्तदर्थमादावेव २५ प्रयोजनादिकं वक्तव्यमित्यर्थः। तत्र वृद्धसम्मतिसूचनार्थो हिशब्दः। तदुक्तं वृद्धैः—"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥" इति। विद्यामुद्दिश्य गुरुमुखात्प्रथमं श्रवणम्, श्रुतस्यार्थस्याप्रतिपत्त्यादिनिरासेन ग्रहणम्, गृहीतस्यार्थस्य धारणम्, धृतस्यार्थस्य युक्तिभिरनुचिन्तनरूपोऽभ्यासः, तदर्थमित्यर्थः। नन्वधीतसाङ्गस्वाध्यायस्य वेदान्तेभ्य एव विद्यारूपफलोदयसम्भवाच्छ्रवणादिकं व्यर्थमिति, नेत्याह—श्रवणादिपूर्वकं हीति। तत्र हिशब्दसूचितं मानमाह—श्रोतव्य इति। प्रमाणप्रमेयासम्भावनयोर्निरासाय श्रवणमनने ३० आवश्यके इति भावः। "पाण्डित्यं निर्विद्य" इत्यादिश्रुतिसंग्रहार्थमादिपदम्। इदानीं प्रतीकग्रहणपूर्वकमक्षराणि व्याचष्टे—ब्रह्मविदित्यादिना। वक्ष्यमाणलक्षणं ब्रह्मात्र ब्रह्मेति पदेनाभिधीयते न जात्यादिकमित्यत्र हेतुमाह—बृहत्तमत्वादिति। ब्रह्मपदेन "बृहि वृद्धौ" इति व्युत्पत्तिबलाद्वृद्धिमद्वस्तु कथ्यते; सा च वृद्धिः सङ्कोचकाभावात् निरतिशयमहत्त्वे पर्यवस्यति; तच्च निरतिशयमहत्त्वं वक्ष्यमाणलक्षण एव ब्रह्मणि सम्भवति नान्यत्रेति भावः। परं निरतिशयमिति। न चोत्कृष्टवाचिना परशब्देन स्वर्गादेरपि ग्रहणसम्भवात्कथं निरतिशयोत्कृष्टं ब्रह्मैवात्र परशब्दार्थः ३५ स्यादिति वाच्यम्; ब्रह्मशब्दस्येव परशब्दस्यापि सङ्कोचकाभावेन परमानन्दरूपतया निरतिशयोत्कृष्टे ब्रह्मण्येव पर्यवसानसम्भवादिति भावः। ब्रह्मवेदनमात्रादब्रह्मप्राप्त्यसम्भवादपि तदेव परशब्दार्थ इत्याह—न ह्यन्यस्येति। लोके कौन्तेयस्य सतो राधेयत्वभ्रमवत आप्तोपदेशजनितात् "कौन्तेयोऽहम्" इति ज्ञानात्कौन्तेय एव प्राप्यो नान्य इति प्रसिद्धिसूचनार्थो हिशब्दः। श्रुत्यन्तरानुसारादप्येवमेवेत्याह—स्पष्टं चेति। तत्प्रकृतं परं ब्रह्म यो वेद स ब्रह्मैव

ननु सर्वगतं सर्वस्याऽऽत्मभूतं ब्रह्म वक्ष्यति। अतो नाऽऽप्यं; प्राप्तिश्चान्यस्यान्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा। अपरिच्छिन्नं सर्वात्मकं च ब्रह्मेत्यतः परिच्छिन्नवदनात्मवच्च तस्याऽऽप्तिरनुपपन्ना। नायं दोषः। कथम्। दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्योः। परमार्थतो ब्रह्मस्वरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिनस्तदासक्तचेतसः [1]प्रकृतसंख्यापूरणस्याऽऽत्मनोऽव्यवहितस्यापि बाह्यसंख्येयविषयासक्त-
५ चित्ततया स्वरूपाभावदर्शनवत्परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणयाऽविद्ययाऽन्नमयादीन्बाह्यानानात्मन आत्मत्वेन प्रतिपन्नत्वादन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते। एवमविद्ययाऽऽत्मभूतमपि ब्रह्मानाप्तं स्यात्। तस्यैवमविद्यया अनाप्तब्रह्मस्वरूपस्य प्रकृतसंख्यापूरणस्याऽऽत्मनेऽविद्ययाऽनाप्तस्य सतः केनचित्स्मारितस्य पुनस्तस्यैव विद्ययाऽऽप्तिर्यथा तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव।

### आनन्दगिरिटीका

१० आप्नोतिशब्दस्यौपचारिकमर्थं दर्शयितुं शङ्कामुखेन मुख्यार्थे बाधकमाह--**ननु सर्वगतमित्यादिना**। परमार्थतो ब्रह्मस्वरूपस्यापि सतो जीवस्याविद्यया ब्रह्मानाप्तं स्यादिति सम्बन्धः। भूतमात्राभिर्भूतांशैः कृता ये बाह्याः परिच्छिन्नाश्चान्नमयादयस्तदात्मत्वदर्शिन इत्यविद्याया विक्षेपकत्वं स्वरूपमुक्तम्। परमार्थं ब्रह्मस्वरूपं नास्तीत्यभावदर्शनमावरणलक्षणं लिङ्गं यस्याः सा तथोक्ता। स्वरूपेऽप्यग्रहणविपर्ययौ भवत इत्यत्र दृष्टान्तमाह--**प्रकृतेति**। प्रकृतसंख्यापूरणस्य दशमस्य नवैव वयं वर्तामह इति विपर्ययः स्वरूपादर्शनं च यथेत्यर्थः। अदर्शन-
१५ निमित्तामनाप्तिं विविच्य दर्शननिमित्तामाप्तिं विवृणोति--**तस्यैवमिति**।

### वनमाला

भवति ह वै प्रसिद्धमेतद्विदुषामिति श्रुत्यन्तरार्थः। आप्नोतीत्स्य विवक्षितमर्थं दर्शयितुमाक्षिपति--**नन्विति**। **वक्ष्यतीति**। आनन्त्यादिवचनेनेति शेषः। ततः किम्? अत आह--**अत इति**। सर्वगतत्वात्सर्वात्मकत्वाच्चेत्यर्थः। एवंभूतस्याप्याप्यत्वं किं न स्यादित्याशङ्क्य तत्र लौकिकव्याप्तिविरोधं मत्वा तामाह--**आप्तिश्चेति**। लोके प्राप्यत्वेन
२० प्रसिद्धग्रामादिवैलक्षण्यं ब्रह्मणो दर्शयति--**अपरिच्छिन्नमिति**। फलितमाह--**अत इति**। उक्तानुपपत्तेरदोषत्वं कथमिति पृच्छति--**कथमिति**। मुख्याप्तेरत्राविवक्षितत्वादनुपपत्तिर्न दोष इत्याशयेनाह--**दर्शनेति**। अदर्शननिमित्तामप्राप्तिं साधयति--**परमार्थत इत्यादिना**। भूतमात्राभिः पञ्चीकृतापञ्चीकृतभूतांशैः कृता ये आत्मस्वरूपापेक्षया बाह्याः परिच्छिन्नाश्चान्नमयादयः कोशाः तेष्वात्मदर्शिनो जीवस्य या अविद्या तया स जीवो नान्योऽहमस्मीत्यभिमन्यत इति योजना। तदासक्तचेतसः तेष्वेवासक्तं चेतो यस्य तथाभूतस्य। आसक्तिरत्र कोशाभिमान-
२५ प्रयुक्तदुःखादिमत्ता विवक्षिता। परमार्थं ब्रह्मस्वरूपं नास्तीत्यभावदर्शनं लक्षणं लिङ्गं यस्याः सा तथा, तयेत्यर्थः। "अन्नमयादीन्" इत्यादिद्वितीया षष्ठ्यर्थे। अन्नमयाद्यात्मभ्योऽन्योऽहमस्मीति नाभिमन्यते कोशव्यतिरिक्तं परमार्थंस्वरूपं न जानातीत्यर्थः। अत्र नाभिमन्यत इत्यनेन स्वरूपभूतेऽपि ब्रह्मणि ग्रहणाभाव उक्तः। अन्नमयाद्यात्मदर्शिन इत्यनेन तस्मिन्देहाद्यात्मत्वगोचरो विपर्यय उक्तः। अविद्ययेत्यनेनावरणसमर्था मूलाविद्या दर्शिता। स्वरूपेऽप्यग्रहणादयो भवन्तीत्यत्र दृष्टान्तमाह--**प्रकृतेति**। प्रकृताया दशसंख्यायाः पूरणे समर्थस्यात्मनः स्वस्य देवदत्तस्य
३० सन्निकृष्टस्यापि स्वापेक्षया बाह्या ये नव संख्येयाः तद्विषयासक्तचित्ततया स्वात्मानं विहाय तेष्वेव पुनः पुनः परिगणनव्यासक्तचित्ततया स्वात्मभूतोऽपि दशमो नास्तीत्यभावदर्शनम्, तद्धेतुभूतं दशमं न जानामीत्यनुभूयमानमावरणम्, नवैव वर्तामह इति विपर्ययश्च यथा दशमस्य स्वरूपेऽपि दृश्यन्ते तथेत्यर्थः। अदर्शननिमित्तां ब्रह्मणोऽनाप्तिमुपसंहरति--**एवमिति**। इदानीं दर्शननिमित्तां तदाप्तिं दृष्टान्तेन विवृणोति--**तस्यैवमिति**। **केनचिदिति**। "दशमस्त्वमसि" इत्याप्तेन स्मारितस्वरूपस्येत्यर्थः। **तस्यैवेति**। यद्दशमस्वरूपमविद्ययानाप्तमासीत्तस्यैवेत्यर्थः।
३५ **श्रुतीति**। श्रुत्युपदिष्टस्य सर्वात्मकस्य ब्रह्मणो यदात्मत्वेन दर्शनं तदेव विद्या, तया आप्तिरनाप्तत्वभ्रमनिवृत्तिरूपा

---

१. नदीमुत्तीर्णानां दशानां मध्ये एको नष्ट इति आत्मानं विहाय गणने कृते बुद्धिरासीत्। तत्र कारणं बाह्यपुरुषासक्तचित्तता।

**ब्रह्मविदाप्नोति परमिति वाक्यं सूत्रभूतं सर्वस्य वल्ल्यर्थस्य, ब्रह्मविदाप्नोति परमित्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारितस्वरूपविशेषस्य सर्वतो व्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूप-निर्धारणाय, अविशेषेण चोक्तवेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतयाऽनन्यरूपेण विज्ञेयत्वाय, ब्रह्मविद्याफलं च ब्रह्मविदो यत्परब्रह्मप्राप्तिलक्षणमुक्तं स सर्वात्मभावः सर्वसंसारधर्मातीतब्रह्मस्वरूपमेव नान्य-दित्येतत्प्रदर्शनायैषर्गुदाह्रियते—तदेषाऽभ्युक्तेति । तत्तस्मिन्नेव ब्राह्मणवाक्योक्तेऽर्थ एषर्गभ्युक्ताऽऽम्नाता । सत्यं ५ ज्ञानमनन्तं ब्रह्मेति ब्रह्मणो लक्षणार्थं वाक्यम् । सत्यादीनि हि त्रीणि विशेषणार्थानि पदानि विशेष्यस्य ब्रह्मणः । विशेष्यं ब्रह्म विवक्षितत्वाद्वेद्यतया । विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि ।**

आनन्दगिरिटीका

आद्यं ब्राह्मणवाक्यं व्याख्यायोत्तरं मन्त्रं संक्षेपतोऽर्थकथनेनावतारयति—**ब्रह्मविदाप्नोतीत्यादिना** । **सर्वतो** व्यावृत्तो यः स्वरूपविशेषस्तत्समर्पणे समर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणायैषर्गुदाह्रियत इति सम्बन्धः । १० बृहत्त्वाद्ब्रह्मेति व्युत्पत्तिबलेनास्ति किमपि महद्वस्त्वित्यविशेषेण प्रतीयते । ततो लक्ष्योद्देशेन लक्षणविधानमिति प्रसिद्धिरुपपद्यते । अव्याकृतादि ब्रह्मशब्दवाच्यतया सजातीयं, घटादि विजातीयम् । तस्मात्सजातीयविजातीय-व्यावर्तकतया सत्यादिलक्षणस्य लक्षणत्वप्रसिद्धिरुपपद्यते । लक्षणाभिधानद्वारेण स्वरूपविशेषप्रतिपादने तात्पर्यमिति वाक्यस्य व्यर्थतादोषः परिहृतः । पूर्वत्र ब्रह्मविदित्यनेनाविशेषेणोक्तं वेदनं यस्य ब्रह्मणस्तस्य यो वेद निहितं गुहायामित्यनेन प्रत्यगात्मतया वेदनं वक्तव्यमित्येवमर्था चर्गुदाह्रियत इत्याह—**अविशेषेण चेति** । आपातप्रतिपन्नं १५ विशेषणविशेष्यभावमादाय पदानि विभजते—**सत्यादीनि हि त्रीणीति** । **विशेषणार्थानीति** । व्यावृत्त्यर्थानि । कुतो विशेषणविशेष्यभावप्रतीतिरित्यत आह—**विशेषणविशेष्यत्वादेवेति** । नीलं महत्सुगन्ध्युत्पलमित्यादौ सत्येव विशेषण-

वनमाला

उपपद्यत इत्यर्थः । इत्थमाद्यं ब्राह्मणवाक्यं व्याख्याय अनेन वाक्येनोत्तरसन्दर्भस्य सङ्गतिमाह—**ब्रह्मविदाप्नोतीति** । **सूत्रभूतमिति** । संग्राहकमित्यर्थः । अनेनाद्यवाक्यस्यैव विवरणरूपत्वादुत्तरग्रन्थस्य व्याख्यानव्याख्येयभावेनानयोः २० सङ्गतिरित्यर्थः । इत्थमाद्यवाक्यविवरणरूपमुत्तरं मन्त्रब्राह्मणवाक्यजातमिति तात्पर्यमुक्त्वा "सत्यं ज्ञानम्" इति मन्त्रं संक्षेपतोऽर्थकथनपूर्वकमवतारयति—**ब्रह्मविदाप्नोति परमित्यनेनेत्यादिना** । **अनिर्धारितेति** । बृहत्त्वाद्ब्रह्मेति व्युत्पत्तिबलेनास्ति किमपि महद्वस्त्विति प्रतीयते, न तु तद्बलेन ब्रह्मणः स्वरूपविशेषोऽपि प्रतीयत इति भावः । सर्वतो व्यावृत्तो यः स्वरूपविशेषस्तत्समर्पणे समर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणायैषा ऋगुदाह्रियत इति सम्बन्धः । ब्रह्मविदित्यनेन अविशेषेण "अस्ति ब्रह्म" "अहं ब्रह्म" इति वेदनद्वयसाधारण्येनोक्तं वेदनं यस्य ब्रह्मणः २५ तस्येत्यर्थः । वक्ष्यमाणं लक्षणं सच्चिदानन्दरूपं यस्य तस्येत्यर्थः । विशेषेणेत्यस्य विवरणमनन्यरूपेणेति । तस्य पर्यवसितमर्थमाह—**प्रत्यगात्मतयेति** । "अहं ब्रह्म" इत्येवमाकारेण ब्रह्मणो विज्ञेयत्वाय चैषा ऋगुदाह्रियत इति सम्बन्धः । **तत्सर्वात्मभाव इति** । सर्वसंसारास्पृष्टब्रह्मस्वरूपभूतसर्वात्मभाव एव नान्यत्स्वर्गादिकमित्यर्थः । इत्थं मन्त्रमवतार्य तदाद्यपादतात्पर्यमाह—**ब्रह्मण इति** । ब्रह्मणः स्वरूपलक्षणार्थकमिदं वाक्यमित्यर्थः । लक्षणवाक्यस्य-पदानि विभजते—**सत्यादीनि हीति** । सत्यादिपदत्रयं विशेषणसमर्पकमित्यर्थः । ब्रह्मपदसमभिव्याहृतानां सत्यादि- ३० पदानां बुभुत्सितं ब्रह्म प्रति विशेषणसमर्पकत्वाभावे ब्रह्मस्वरूपविशेषनिर्णयायोगादिति युक्तिसूचनार्थो हिशब्दः । **वेद्यतयेति** । आद्यवाक्ये वेद्यतयोक्तं ब्रह्म विशेष्यम्; तस्यैव प्राधान्येनात्र वक्तुमिष्टत्वादित्यर्थः । न च लक्षणं सजातीयविजातीयव्यावर्तकम्, विशेषणं तु विशेष्यस्य तत्सजातीयमात्रव्यावर्तकमिति वक्ष्यति, तथा च लक्षण-विशेषणयोर्भेदात्कथं लक्षणार्थं वाक्यमित्युपक्रम्य विशेषणार्थकतया वाक्यं व्याख्यायत इति वाच्यम्; सजातीय-विजातीयव्यावर्तकस्य सतो लक्षणस्य विशेषणस्येव सजातीयव्यावर्तकत्वांशोऽपि विद्यत इत्येतावतात्र विशेषणत्व- ३५ व्यवहारस्वीकारेण समानजातीयमात्रनिवर्तकत्वरूपमुख्यविशेषणत्वस्यात्राविवक्षितत्वात् । न चैवमपि ब्रह्मणः स्वरूपभूतं सत्यादिकं कथं लक्षणम्, व्यावर्तकधर्मस्यैव वादिभिर्लक्षणत्वाभ्युपगमादिति वाच्यम्; गौरवेण धर्मत्वांशस्य तत्र प्रवेशायोगात्, व्यावर्तकमात्रस्य स्वरूपेऽपि सम्भवात् । न च सत्यादेर्लक्ष्यब्रह्मस्वरूपत्वात्कथमेकस्यैव लक्षणत्वं लक्ष्यत्वं च सम्भवतीति वाच्यम्; लक्ष्यस्वरूपस्यापि सतः सत्यादेर्ज्ञातस्य इतरव्यावृत्तिबोधोपयुक्ततया लक्षणत्वम्, सत्यादिस्वरूपस्यैव सतो ब्रह्मण इतरव्यावृत्ततया ज्ञाप्यमानत्वरूपं लक्ष्यत्वमित्येकत्रापि रूपभेदेनोपपत्ते- ४०

सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते । एवं हि तज्ज्ञातं भवति यदन्येभ्यो निर्धारितम् । यथा लोके नीलं महत्सुगन्ध्युत्पलमिति ।

ननु विशेष्यं विशेषणान्तरं व्यभिचरद्विशेष्यते । यथा नीलं रक्तं चोत्पलमिति । यदा ह्यनेकानि द्रव्याण्येकजातीयान्यनेकविशेषणयोगीनि तदा विशेषणस्यार्थवत्त्वम् । न ह्येकस्मिन्नेव वस्तुनि विशेषणान्तरायोगाद्यथाऽसावेक ५ आदित्य इति । तथैकमेव च ब्रह्म न ब्रह्मान्तराणि येभ्यो विशेष्येत नीलोत्पलवत् । न । लक्षणार्थत्वाद्विशेषणानाम् । नायं दोषः । कस्मात् । यस्माल्लक्षणार्थप्रधानानि विशेषणानि न विशेषणप्रधानान्येव । कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्ययोर्वा विशेष इति । उच्यते । समानजातीयेभ्य एव निवर्तकानि विशेषणानि विशेष्यस्य; लक्षणं तु सर्वत एव यथाऽवकाशदात्राकाशमिति । लक्षणार्थं च वाक्यमित्यवोचाम ।

आनन्दगिरिटीका

१० विशेष्यभावे समानाधिकरणतयैकविभक्त्यन्तानि प्रसिद्धान्येतान्यपि च तथाभूतानि नानार्थगतविशेषणविशेष्यभावनिबन्धनानीति गम्यत इत्यर्थः । विशेषणविशेष्यभावस्य फलमाह—एवं हीति ।

विशेषणविशेष्यभावमाक्षिपति—नन्विति । नीलत्वं व्यभिचरदुत्पलं रक्तमपि सम्भवतीति नीलं विशेषणं घटते न तथा सत्यत्वादिकं व्यभिचरद्ब्रह्मान्तरं लोके प्रसिद्धम् । ततः सजातीयस्य व्यवच्छेद्यस्याभावाद्विशेषणविशेष्यभावो न घटत इत्यर्थः । विशेषणविशेष्यभावस्य तात्पर्येणाप्रतिपाद्यत्वादव्याकृतादिशास्त्रीयब्रह्मपदार्थव्यवच्छेदेना- १५ निर्वाच्यविशेषणविशेष्यभावसम्भवात्तद्द्वारेण ब्रह्मलक्षणं विवक्षितमित्याह—नेति । संग्रहवाक्यं विवृणोति—नायं दोष इत्यादिना । सर्वत एवेति । सजातीयाद्विजातीयाच्च । यथां महाभूतत्वेन सदृशभावात्पृथिव्यादेर्विसदृशाच्चाऽऽत्मा-

वनमाला

रित्यन्यत्र विस्तरः । सत्यादिपदार्थानां विशेषणविशेष्यभावे लिङ्गमाह—विशेषणविशेष्यत्वादेवेति । "नीलं महत्सुगन्ध्युत्पलम्" इत्यादौ सत्येव विशेषणविशेष्यभावे समानाधिकरणतयैकविभक्त्यन्तानि नीलादिपदानि २० प्रसिद्धानि; प्रकृते च सत्यादिपदानि तथाभूतानि; ततोऽर्थगतविशेषणविशेष्यभावनिबन्धनानीति गम्यत इत्यर्थः । सत्यादिपदार्थानां विशेषणत्वप्रसाधनफलमाह—सत्यादिभिश्चेति । विशेष्यमाणमिति । सम्बध्यमानमित्यर्थः । निर्धार्यते व्यावर्त्यते । इतरव्यावृत्तिबोधफलमाह—एवं हीति । यदि ब्रह्मान्येभ्यो निर्धारितं स्यादेवं सति तद्ब्रह्म ज्ञातं विशिष्य निर्णीतं भवतीत्यर्थः । बुभुत्सितस्य वस्तुनो विशेषणैर्विशेषतो निर्धारणे हिशब्दसूचितं दृष्टान्तमाह—यथेति । उक्तं विशेषणविशेष्यभावमाक्षिपति—नन्विति । यत्र विशेष्यजातीयं वस्तु विशेषणान्तरं व्यभिचरद्वर्तते २५ तत्र विशेष्यजातीयं विशेष्यते विशेषणैरित्यत्रोदाहरणम्—यथेति । उत्पलजातीयं नीलं रक्तं चास्तीति कृत्वा नैल्येन विशेष्यते "नीलमुत्पलम्" इति यथेत्यर्थः । एतदेव प्रपञ्चयति—यदा हीति । अर्थवत्त्वमिति । स्यादिति शेषः । तत्र व्यतिरेकमाह—न हीति । एकस्मिन्नेव वस्तुनि विशेषणान्तरायोगाद्धेतोर्विशेषणस्यार्थवत्त्वं न हि सम्भवतीत्यर्थः । अत्रोदाहरणमाह—यथाऽसाविति । विशेषणान्तरयोगिन आदित्यजातीयस्यान्यस्याभावादादित्यस्य विशेषणमर्थवन्न भवति यथेत्यर्थः । ततः किम् ? तत्राह—तथैकमेवेति । ब्रह्मणोऽद्वितीयत्वश्रवणादिति भावः । ३० किमत्र सत्याद्यर्थानां समानजातीयमात्रव्यावर्तकत्वरूपं मुख्यविशेषणत्वमाक्षिप्यते किं वा समानजातीयव्यावर्तकत्वमात्ररूपमौपचारिकमपि ? नान्त्यः, तस्येहापि सम्भवात्; न च ब्रह्मणः समानजातीयानां ब्रह्मान्तराणामभावात्कथं तत्सम्भवतीति वाच्यम्; वस्तुतो ब्रह्मान्तराणामभावेऽपि कल्पितानामव्याकृतभूताकाशकालादिलक्षणब्रह्मान्तराणां सत्त्वात्तेषामपि व्यापकत्वरूपवृद्धिमत्त्वेन ब्रह्मशब्दवाच्यत्वोपपत्तेः; तथा च ब्रह्मसमानजातीयानामव्याकृतादीनां व्यावर्त्यानां सत्त्वात्सत्याद्यर्थानां समानजातीयव्यावर्तकत्वमात्ररूपमौपचारिकविशेषणत्वं निष्प्रत्यूहम्[1], यथा बिम्बप्रतिबिम्बभावेनादित्यस्य कल्पितं नानात्वमादाय "अम्बरस्थः सविता सत्य" इति सत्यविशेषणस्य जलादौ कल्पितादित्यव्यावर्तनेनार्थवत्त्वम्; नाद्यः, इष्टापत्तेरित्याशयेनाह—नेति । स्वरूपलक्षणसमर्पकत्वाद्विशेषणपदानामित्यर्थः । संग्रहवाक्यं विवृणोति—नायं दोष इत्यादिना । विशेषणानीति । सत्यादीनि विशेषणपदानि यतो लक्षण-

१. असत्यजडपरिच्छिन्नानां ब्रह्मत्वासम्भवादेव व्यावृत्तिः सम्भवति । अयं तु अभ्युच्चयः लक्षणत्वे वाक्यस्याखण्डार्थत्वात् अर्थादितरव्यावृत्तिः सिद्धा ।

सत्यादिशब्दा न परस्परं सम्बध्यन्ते परार्थत्वाद्विशेष्यार्था हि ते[1]। अत एकैको विशेषणशब्दः परस्परं

आनन्दगिरिटीका

देराकाशस्य व्यावर्तकमवकाशदातृत्वमित्यर्थः। एतदुक्तं भवति—अतिव्याप्त्यादिरहितो व्यावर्तको धर्मो लक्षणमिति न्यायवैशेषिकमीमांसकाः। ब्रह्मपदव्युत्पत्तिबलेन यदविशेषतः प्रतिपन्नं किञ्चिन्महदस्तीति तत्सत्यं ज्ञानमनन्तमनृत-जडपरिच्छेदविरोधिस्वरूपमिति विशेषतः प्रतिपत्तव्यमिति विशेषावगतिशेषभूतं लक्षणं प्रमितिस्तु प्रमाणादेवेति। ५ तार्किकाः पुनर्लक्षणं केवलव्यतिरेक्यनुमानमाचक्षते तदा लक्षणादेव स्वभावविशेषप्रमितिः। यथा गुणवद्द्रव्यमिति लक्षणाद्गुणाश्रयत्वयोग्यस्वभावविशेषस्य प्रमितिः सामान्यप्रतिपन्नस्य द्रव्यपदाभिधेयस्य भवति। यद्वा व्यवहार-सिद्धिः फलं गुणवद्द्रव्यमिति व्यवहर्तव्यं गुणवत्त्वान्न यदेवं न तदेवं यथा रूपं तथा सत्यत्वादिमद्ब्रह्मेति व्यवहर्तव्यं सत्यत्वादिभावान्न यदेवं यथा घट इति। [2]एतच्च खण्डनयुक्त्यसहमानमपि व्यवहाराङ्गं भवतीति नातीव सूक्ष्मेक्षिका कार्या। १०

पुनर्विशेषणविशेष्यभावपक्षमवलम्ब्याऽऽह—**सत्यादिशब्दा इति**। सत्यं ब्रह्मेत्युक्ते जाड्यव्यावृत्तिः परिच्छेद-व्यावृत्तिश्च यद्यपि लभ्यते, जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वाज्ज्ञानं ब्रह्मेत्युक्ते चानृतपरिच्छेदव्यावृत्तिर्लभ्यते स्वप्रकाशस्य बाधाविषयत्वात्परिच्छेदग्राहकप्रमाणाविषयत्वाच्च लक्षणमपि चैकैकं वैकल्पिकमदुष्टं तथाऽपि मन्द-

वनमाला

रूपार्थपराण्येव, न मुख्यविशेषणपराणि, तथा सति ब्रह्मणः सत्यादिविशेषणैः समानजातीयाद्व्यावृत्तिलाभेऽपि प्रकृते १५ विवक्षितायाः सर्वतो व्यावृत्तेरलाभप्रसङ्गात्, ततश्च स्वरूपविशेषनिर्धारणाभावप्रसङ्ग इत्यर्थः। ननु प्रसिद्धविशेषणानां सजातीयमात्रव्यावर्तकत्वं लक्षणस्य तु सर्वतो व्यावर्तकत्वमित्ययं विशेष एव कुतः यतोऽत्र सत्यादीनां लक्षणत्वमुपेत्य विशेषणत्वं प्रतिषिध्यते न विशेषणप्रधानानीत्याक्षिपति—**कः पुनरपि**। अनुभवमाश्रित्याह—**उच्यत इति**। **सर्वत इति**। सजातीयाद्विजातीयाच्चेत्यर्थः। **यथेति**। यथा भूतत्वेन सदृशात्पृथिव्यादेर्विसदृशादात्मादेश्च सकाशादाकाशस्य व्यावर्तकमवकाशदातृत्वमित्यर्थः। ननु सत्यादिवाक्यं विशेषणविशेष्यसंसर्गपरं समानाधिकरणवाक्यत्वान्नीलोत्पल- २० वाक्यदिति, नेत्याह—**लक्षणार्थं चेति**। देवदत्तस्वरूपैक्यपरे "सोऽयं देवदत्तः" इति वाक्ये व्यभिचारात्सत्यत्वादि-विशेषणविशिष्टस्य ब्रह्मणः सत्यादिवाक्यार्थत्वे विशिष्टस्य तस्य परिच्छिन्नत्वेनानन्त्यायोगाद्वाक्यशेषे तस्य वागाद्य-गोचरत्वप्रतिपादनविरोधाच्च, विशिष्टस्य वागादिगोचरत्वनियमात्तस्मान्न नीलोत्पलवाक्यवत् संसर्गपरं सत्यादि-वाक्यं किं त्वखण्डैकरसवस्तुपरमिति मत्वा प्रागेव ब्रह्मणो लक्षणार्थं वाक्यमित्यवोचामेत्यर्थः।

ननु प्राक्सत्याद्यर्थानां त्रयाणामपि ब्रह्मविशेषणत्वमित्युक्तम्; तदयुक्तम्, सन्निधानात्तेषां परस्परविशेषण- २५ विशेष्यभावसम्भवादिति नेत्याह—**सत्यादिशब्दा इति**। हेतुं साधयति—**विशेष्यार्था हि त इति**। आद्यवाक्ये वेद्य-तयोपात्तं ब्रह्म कीदृशमित्याकाङ्क्षायां तत्स्वरूपविशेषसमर्पकत्वेन प्रवृत्तं सत्यादिपदत्रयं ब्रह्मण एव विशेषणम्, सन्निधानादाकाङ्क्षायाः प्रबलत्वाद्विशेष्यस्य प्रधानत्वेन विशेषणानां तदर्थत्वाच्च, प्रधानसम्बन्धस्याभ्यर्हितत्वा-

---

१. गुणानां च पदार्थत्वादसम्बन्धः समत्वात्। ( जै० सू० ३-१-२२ )

२. तथाहि खण्डने विद्यासागरीयसंहिते ( पु० २३६ )—लक्षणानि चानुपपन्नानि ज्ञानाधिकरणादिलक्षण- ३० निरूपणद्वारेण चक्रकाद्यापत्तेः। अत्रोक्तं खण्डनशाङ्करीये—लक्षणेन हि गन्धवत्त्वादिना ज्ञाते लक्ष्ये पृथिवीस्वरूपेऽधिकरणे प्रतिबन्धबलेन व्यवहाररूपमितरभेदरूपं वा साधनीयम्। तत्र लक्षणज्ञानमन्य-लक्ष्यसाधारण्येन भवदप्यकिञ्चित्करमिति व्यावृत्ततया तज्ज्ञानमुपेयं तद्यदि लक्षणव्यावृत्तिः लक्ष्याधीना तदाऽन्योन्याश्रयः लक्ष्यपरतन्त्रलक्षणान्तराधीनत्वे चक्रकं; लक्षणे लक्षणान्तरं तत्रापि लक्षणान्तर-मित्यपरावृत्तौ अनवस्था। एवं जलादिसाधारण्येन ज्ञातायां पृथिव्यां इतरभेदसाधनमकिञ्चित्करम्। ३५ अतः व्यावृत्तायां तस्यां तत्साधनं वाच्यम्। तद्व्यावृत्तिर्यदि प्रकृतलक्षणाधीना तदाऽन्योन्याश्रयः। लक्षणान्तरेण चेत् प्रकृतलक्षणानुपयोगः। तदपि लक्षणं व्यावृत्तायामेव तस्यामित्यनवस्था। तेन खण्डनयुक्त्यसहमानता ज्ञेया।

निरपेक्षो ब्रह्मशब्देन सम्बध्यते। सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेति। सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यं यद्रूपेण निश्चितं यत्तद्रूपं व्यभिचरदनृतमित्युच्यते। अतो विकारोऽनृतं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" एवं सदेव सत्यमित्यवधारणादतः सत्यं ब्रह्मेति ब्रह्म विकारान्निवर्तयति। अतः कारणत्वं प्राप्तं ब्रह्मणः। कारणस्य च कारकत्वं, वस्तुत्वान्मृद्वदचिद्रूपता च प्राप्ताऽत इदमुच्यते ज्ञानं ब्रह्मेति। ज्ञानं
५ ज्ञप्तिरवबोधो भावसाधनो ज्ञानशब्दो न तु ज्ञानकर्तृ; ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह। न हि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्यते। ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तं च। यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम्। ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात्। "यत्र नान्यद्विजानाति स भूमा" "अथ यत्रान्यद्विजानाति तदल्पम्" इति श्रुत्यन्तरात्।

आनन्दगिरिटीका

१० मतिव्युत्पादनाय स्यात्सत्यादिपदार्थव्याख्यानपूर्वकं प्रत्येकं व्यावर्त्यमाह—सत्यमिति यद्रूपेणेत्यादिना। भावसाधन इति। भावव्युत्पत्तिकः। क्रियासामान्यं यद्यप्यन्यत्र भाव उच्यते तथाऽप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पत्त्या लक्ष्यते सत्यादिशब्दसन्निधानादिति द्रष्टव्यम्।

वनमाला

द्विशेषणानां समत्वेन परस्परं गुणप्रधानभावलक्षणविशेषणविशेष्यभावे विनिगमकाभावाच्च। अस्मिन्नर्थे वृद्धसम्मति-
१५ सूचनार्थो हिशब्दः। तदुक्तं जैमिनिना—"आनन्तर्यमचोदना" "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इति। आकाङ्क्षाविरुद्धमानन्तर्यं सन्निधानमचोदना अन्वये कारणं न भवतीत्याद्यसूत्रार्थः। अत इति। परस्पर-सम्बन्धायोगादित्यर्थः। तत्र सत्यपदार्थमाह—यद्रूपेणेति। रज्जुत्वेन रूपेण निश्चितं रज्ज्वात्मकं वस्तु न कदाचिद्रज्जुत्वरूपं परित्यजतीति तत्तेन रूपेण सत्यमित्युच्यते, तथा तदेव रज्ज्वात्मकं वस्तु सर्पत्वेन रूपेण निश्चितं कालान्तरे तद्रूपं परित्यजतीति तेन रूपेण तदनृतमुच्यते। एतदुक्तं भवति—यद्यस्य कादाचित्कं रूपं
२० तत्तस्यानृतं यथा रज्ज्वादेः सर्पादिरूपं यथा वा मृदादेर्घटादिरूपमिति। फलितमनृतशब्दार्थमाह—अत इति। रज्ज्वादौ सर्पादेरिव प्रकृतिषु विकाराणामपि कादाचित्कत्वाविशेषादित्यर्थः। उक्तयुक्तिसिद्धविकारानृतत्वानुवादिनीं श्रुतिमाह—वाचारम्भणमिति। घटशरावादिविकारो नामधेयं नाममात्रम्, अनृतमिति यावत्; तत्र हेतुर्वाचेति; विकारसत्यत्वस्य वागालम्बनमात्रत्वात्, कारणसत्त्वव्यतिरेकेण दुर्निरूपत्वादित्यर्थः। न चैवमर्थकल्पनायां मानाभाव इति वाच्यम्; कारणमात्रसत्यत्वावधारणस्यैव मानत्वात्। "एवं सोम्य स आदेशो भवति" इति दार्ष्टान्तिकश्रुति-
२५ मर्थतः पठति—एवं सदेवेति। आदिश्यत उपदिश्यत इत्यादेशः परमात्मा सच्छब्दवाच्यः एवं मृदादिवत्सत्यं परमार्थो भवति ब्रह्म, विकारस्तु प्रपञ्चो मृद्विकारवदनृत एवेत्यर्थः। एवं विकारस्यानृतत्वं कारणस्य सत्यत्वं च प्रसाध्य सत्यविशेषणफलमाह—अत इति। विकारस्य सत्यत्वाभावादित्यर्थः। ननु सत्यविशेषणेन ब्रह्मणो विकाराद्व्यावृत्ति-सिद्धावतः परिशेषात्कारणत्वं प्राप्तं चेत्; अस्तु, को दोषः ? तत्राह—कारणस्य चेति। कारकत्वमिति। कर्त्रादि-कारकरूपत्वमित्यर्थः। कारणेषु कुलालादिषु कर्त्रादिकारकभावदर्शनादिति भावः। ब्रह्माचेतनं वस्तुत्वान्मृदादिव-
३० दित्याह—वस्तुत्वादिति। ननु ज्ञानविशेषणेन ब्रह्मणः कारकत्वनिवृत्तिर्न लभ्यते कर्तृसाधनज्ञानपदेन तस्य ज्ञानक्रियां प्रति कर्तृकारकत्वावगमादिति, नेत्याह—ज्ञानं ज्ञप्तिरिति। ज्ञानपदस्य ज्ञप्तिपरत्वे हेतुमाह—ब्रह्मेति। ननु ज्ञानस्य सत्यानन्त्याभ्यां सह ब्रह्म प्रति विशेषणत्वेऽपि ब्रह्म ज्ञानकर्तृ किं न स्यादित्याशङ्क्याह—न हीति। ब्रह्मणो ज्ञान-कर्तृत्वे सत्यत्वाद्यनुपपत्तिं प्रपञ्चयति—ज्ञानकर्तृत्वेन हीति। ज्ञानकर्तृत्वं हि ज्ञानं तदनुकूलक्रिया च। न च ज्ञानादि-रूपेण विक्रियमाणस्य ब्रह्मणः सत्यत्वं सम्भवति। विकारजातस्येव विकारिणोऽपि जडत्वनियमात् जडस्य च
३५ चित्यध्यस्तत्वनियमेनानृतत्वावश्यंभावादिति युक्तिसूचनार्थो हिशब्दः। अनन्तं चेति। कथं भवेदित्यनुषङ्गः। तत्र हेतुः—यद्धीति। प्रविभज्यते भिद्यते। ननु ज्ञानकर्तृत्वेऽपि ब्रह्मणो नास्ति कुतश्चित्प्रविभागः, तत्राह—ज्ञानकर्तृत्वे चेति। चशब्दः शङ्कानिरासार्थः। कर्तृत्वस्य कर्मक्रियानिरूपितत्वात्ताभ्यां कर्तुर्भेदाभावे कर्त्रादिव्यवस्थायोगात्, तस्माद्-ब्रह्मणोऽनन्ततायै ज्ञात्रादिद्वैतराहित्यं वक्तव्यमित्यर्थः। तस्य सर्वद्वैतराहित्ये श्रुत्यन्तरमाह—यत्रेति। ज्ञानक्रियाकर्तृ-

नान्यद्विजानातीति विशेषप्रतिषेधादात्मानं विजानातीति चेन्न । भूमलक्षणविधिपरत्वाद्वाक्यस्य । यत्र नान्यत्पश्यतीत्यादि भूम्नो लक्षणविधिपरं वाक्यम् । यथाप्रसिद्धमेवान्योऽन्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति स भूमेति भूमस्वरूपं तत्र ज्ञाप्यतेऽन्यग्रहणस्य प्राप्तप्रतिषेधार्थत्वान्न स्वात्मनि क्रियास्तित्वपरं वाक्यम् । स्वात्मनि च भेदाभावाद्विज्ञानानुपपत्तिः[1] । आत्मनश्च विज्ञेयत्वे ज्ञात्रभावप्रसङ्गः । ज्ञेयत्वेनैव विनियुक्तत्वात् । एक एवाऽऽत्मा ज्ञेयत्वेन ज्ञातृत्वेन चोभयथा भवतीति चेन्न । युगपदनंशत्वात् । न हि निरवयवस्य युगपज्ज्ञेयज्ञातृत्वोपपत्तिः । ५ आत्मनश्च घटादिवद्विज्ञेयत्वे ज्ञानोपदेशानर्थक्यम् । न हि घटादिवत्प्रसिद्धस्य ज्ञानोपदेशोऽर्थवान् । तस्माज्ज्ञातृत्वे सत्यानन्त्यानुपपत्तिः । सन्मात्रत्वं चानुपपन्नं ज्ञानकर्तृत्वादिविशेषवत्त्वे सति । सन्मात्रत्वं च सत्यत्वम्, तत्सत्यमिति श्रुत्यन्तरात् । तस्मात्सत्यानन्तशब्दाभ्यां सह विशेषणत्वेन ज्ञानशब्दस्य प्रयोगाद्भावसाधनो ज्ञानशब्दः । ज्ञानं

आनन्दगिरिटीका

विशेषनिषेधः शेषाभ्यनुज्ञाविषय इति न्यायेन प्रासङ्गिकं स्वज्ञातृत्वे तात्पर्यमाशङ्क्य निषेधति—**नान्यद्विजानातीत्यादिना** । कर्तृत्वं कर्मत्वं चैकक्रियावच्छिन्नं धर्मद्वयं भिन्नाधिकरणं प्रसिद्धम् । स्वात्मनि च भेदाभावान्निरुपपत्तिके स्वज्ञातृत्वे तात्पर्यं कल्पयितुं न शक्यत इत्याह—**स्वात्मनि चेति** । १०

वनमाला

भूतस्य वस्तुतोऽनन्तत्वाभावेऽपि श्रुतिमाह—**यत्रान्यदिति** । यत्रेत्यस्य यदित्यर्थः । शङ्कते—**विशेषप्रतिषेधादिति** । न विजानानीति ज्ञानकर्तृत्वसामान्यनिषेधमकृत्वा अन्यन्न विजानातीत्यन्यविज्ञातृत्वरूपविशेषप्रतिषेधसामर्थ्यात्स्वकर्मकज्ञानकर्तृत्वं भूम्नः श्रुत्यनुमतमिति गम्यते; तथा च यः स्वात्मानं विजानाति स भूमेति वाक्यार्थपर्यवसानाद् ब्रह्मणो द्वैतराहित्ये नेयं श्रुतिर्मानमित्यर्थः । "भूमानं भगवो विजिज्ञासे" इति भूमस्वरूपलक्षणजिज्ञासायां सत्यामिदं वाक्यं प्रवृत्तम्, अतो न स्वज्ञातृत्वपरमिदं वाक्यमिति दूषयति—**नेति** । संग्रहवाक्यं विवृणोति—**यत्र नान्यदित्यादिना** । भूम्नो लक्षणविधिपरमेव वाक्यं न स्वात्मनि क्रियास्तित्वपरमिति सम्बन्धः । बुभुत्सितभूमस्वरूपज्ञानपरमेव तत् न स्वकर्मकज्ञानक्रियाकर्तृत्वसद्भावपरम्, तस्याबुभुत्सितत्वादित्यर्थः । वाक्यस्य स्वज्ञातृत्वपरत्वाभावे फलितं वाक्यार्थमाह—**यथाप्रसिद्धमेवेति** । भ्रान्तिसिद्धमेव ज्ञात्रादिद्वैतमनूद्य तद्यत्र वस्तुतो नास्ति स भूमेति भूमस्वरूपं लक्षणवाक्येन बोध्यते एवमन्यग्रहणस्य प्रतिषेधशेषत्वान्न स्वज्ञातृत्वे वाक्यतात्पर्यग्राहकतेत्यर्थः । विरोधादपि न स्वज्ञातृत्वे भूमलक्षणवाक्यतात्पर्यमित्याह—**स्वात्मनि चेति** । एकक्रियानिरूपितं कर्तृत्वं कर्मत्वं चैकदैकत्र विरुद्धत्वेन प्रसिद्धम्; तथा च स्वात्मनि ब्रह्मणि भेदाभावात्स्वकर्मकज्ञानकर्तृत्वानुपपत्तिरित्यर्थः । ननु तर्हि प्रत्यगात्मरूपस्य ब्रह्मणो ज्ञानकर्मत्वमेवास्तु; तत्राह—**आत्मनश्चेति** । चशब्दः शङ्कानिरासार्थः । १५ २०

नन्वात्मनश्चिज्जडरूपांशद्वयोपेतत्वाच्चिदंशेन ज्ञाता जडांशेन ज्ञेयश्च भविष्यति, अतो न ज्ञात्रभावप्रसङ्ग इति भट्टमतमाशङ्क्य निषेधति—**एक एवेति** । **नेति** । निष्कलश्रुत्या आत्मनो निरवयवत्वावगमात्सावयवस्यानित्यत्वनियमाच्च तन्मतं न युक्तमित्यर्थः । ननु निरवयवस्यापि युगपदेकज्ञानक्रियानिरूपितं कर्तृत्वं कर्मत्वं च किं न स्यादित्याशङ्क्य स्वात्मनि चेत्यत्रोक्तामेवानुपपत्तिं स्मारयति—**न हीति** । स्वात्मनो लौकिकज्ञानकर्मत्वोपगमे तदुपदेशानर्थक्यप्रसङ्गाच्च न स्वज्ञातृत्वे भूमवाक्यस्य "सत्यं ज्ञानम्" इत्यत्र ज्ञानपदस्य च तात्पर्यमित्याह—**आत्मनश्चेति** । **तस्मादिति** । ज्ञातुर्ज्ञेयज्ञानाभ्यां प्रविभक्तत्वादित्यर्थः । ब्रह्मणो ज्ञातृत्वे सत्यत्वानुपपत्तिमप्युक्तां स्मारयति—**सन्मात्रत्वं चेति** । ज्ञानकर्तृत्वादिविशेषवत्त्वं ज्ञानतदनुकूलक्रियादिरूपपरिणामवत्त्वं परिणामिनश्च मिथ्यात्वावश्यंभावाद्बाधायोग्यत्वरूपं सन्मात्रत्वमनुपपन्नमित्यर्थः । ननु सन्मात्रत्वानुपपत्तावपि मन्त्रोक्तसत्यत्वानुपपत्तौ किमागतमित्यत आह—**सन्मात्रं च सत्यमिति** । सद्वस्तु प्रकृत्य "तत्सत्यम्" इति वदता श्रुत्यन्तरेण सन्मात्रसत्ययोरभेदप्रतिपादनात्सन्मात्रत्वानुपपत्तिः सत्यत्वानुपपत्तिरेवेत्यर्थः । ब्रह्मणो ज्ञानकर्तृत्वे सत्यत्वानन्तत्वयोरयोगाज्ज्ञानशब्दस्य भावसाधनत्वमेवेत्युपसंहरति—**तस्मादिति** । ज्ञानपदस्य ज्ञप्तिपरत्वे सिद्धं फलितमाह—**ज्ञानमिति** । यदुक्तं सत्यविशेषणेन ब्रह्मणो विकाराद्व्यावृत्तिसिद्धौ विकारभिन्नत्वात्कारणत्वं प्राप्तम्, कारणस्य च कारकत्वं मृदादिवदचिद्रूपता च प्राप्ता, अत इदमुच्यते ज्ञानं ब्रह्मेतीति, ज्ञानविशेषणफलं तदत्र सिद्धमिति बोध्यम् । ज्ञान- २५ ३० ३५

१. ब्रह्मैव ज्ञाता अतस्तेन ज्ञानानुपपत्तिः । स्वस्य स्वज्ञेयत्वायोगात् ।

ब्रह्मेति कर्तृत्वादिकारकनिवृत्त्यर्थं मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते। ज्ञानं ब्रह्मेतिवचनात्प्राप्तमन्तवत्त्वम्। लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्। अतस्तन्निवृत्त्यर्थमाह—अनन्तमिति। सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वाद्विशेष्यस्य ब्रह्मण उत्पलादिवदप्रसिद्धत्वात्—

"मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः। एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः॥"

५ इतिवच्छून्यार्थतैव प्राप्ता सत्यादिवाक्यस्येति चेन्न लक्षणार्थत्वात्। विशेषणत्वेऽपि सत्यादीनां लक्षणार्थप्राधान्यमित्यवोचाम। शून्ये हि लक्ष्येऽनर्थकं लक्षणवचनं अतो [1]लक्षणार्थत्वान्मन्यामहे न शून्यार्थतेति। विशेषणार्थत्वेऽपि च सत्यादीनां स्वार्थापरित्याग एव।

### आनन्दगिरिटीका

सत्यादीनि व्यावृत्त्यर्थानीत्युक्तं तत्र शङ्कते—सत्यादीनामिति। प्रमाणान्तरसिद्धमुत्पलादि विशेष्यं दृष्टं १० ब्रह्म तु प्रमाणान्तरासिद्धम्। पदमात्रस्याप्रमाणत्वात्सत्यादीनां च व्यावृत्त्यर्थत्वादसदर्थं वाक्यं स्यादित्यर्थः। सिद्धत्वमात्रेण विशेष्यत्वे सम्भवति प्रमाणान्तरविशेषणमनर्थकं, केवलव्यतिरेकाभावात्। मिथ्यार्थस्य रज्जुसर्पादेः सदधिष्ठानत्वदर्शनात्प्रपञ्चस्यापि दृश्यत्वादिहेतुभिर्मिथ्यात्वेनावगतस्य सदधिष्ठानत्वं सम्भाव्यते, तस्य प्रपञ्चाधिष्ठानतया सम्भावितस्य स्वरूपविशेषलक्षणार्थमिदं वाक्यं ततो नासदर्थत्वमित्याह—न लक्षणार्थत्वादिति। विशेषणार्थत्वमभ्युपगम्याऽऽह—विशेषणार्थत्वेऽपि चेति। नीलं महदित्यादिविशेषणपदानि स्वार्थसमर्पणेन तद्विरुद्धव्यावर्तकानि १५ प्रसिद्धानि, तथा सत्यशब्दोऽप्यबाधितसत्त्वे व्युत्पन्नो, ज्ञानशब्दः स्वप्रकाशे विषयसंवेदने, अनन्तोऽयमाकाश इत्यादावनन्तशब्दो व्यापके। ततः स्वार्थसमर्पणेन विरोधिव्यावर्तकत्वान्न [2]व्यावृत्तिमात्रपर्यवसानमित्यर्थः।

### वनमाला

शब्दस्य ज्ञानकर्तृपरत्वनिराकरणपरेण ग्रन्थेनार्थाज्ज्ञायते यत्तज्ज्ञानमिति कर्मव्युत्पत्तिप्राप्तं कर्मकारकत्वमपि स्वात्मनि च भेदाभावादित्यादिना निरस्तम्; एवं ज्ञायतेऽनेनेति व्युत्पत्तिप्राप्तं करणकारकत्वमपि ब्रह्मरूपस्यात्मनो २० न सम्भवति, तस्य करणत्वे ज्ञात्रभावप्रसङ्गात्, इदमपि प्रागात्मनश्च विज्ञेयत्वे ज्ञात्रभावप्रसङ्ग इत्यत्रोक्तप्रायमेव; तथा ज्ञानकर्तृत्वनिराकरणेनाधिकरणकारकत्वमपि निरस्तम्; एवं ज्ञानपदस्य कारकान्तरपरत्वनिराकरणमपि सिद्धवत्कृत्य कर्त्रादीत्यादिग्रहणमिति मन्तव्यम्। निवृत्त्यर्थं चेति। यद्यपि भावसाधनो ज्ञानशब्दो ज्ञप्तिक्रियावाची सा च क्रिया जडरूपा वृत्तिरिति वक्ष्यते, तथापि ज्ञानपदस्य चैतन्यलक्षकत्वं वक्ष्यमाणमभिप्रेत्याचिद्रूपतानिवृत्त्यर्थं चेत्युक्तमिति मन्तव्यम्। ज्ञानपदस्य वाच्यार्थमादाय शङ्कते—ज्ञानं ब्रह्मेति २५ वचनादिति अनन्तमितीति। ब्रह्मणो ज्ञप्तिक्रियारूपत्वे सत्यानन्त्यायोगादानन्त्यसिद्धये ज्ञानपदेन चैतन्यमात्रं लक्षणीयमिति भावः। सत्यादिविशेषणैरनृतादिव्यावृत्तेरुक्तत्वादनृतादिव्यावृत्तिरेव सत्यादिपदवाच्यत्वेनोक्तेति मत्वा शङ्कते—सत्यादीनामिति। ब्रह्मपदमप्यसदर्थकमेव, ब्रह्मणो मानान्तरासिद्धत्वेन तत्सत्त्वे मानाभावादित्याह—विशेष्यस्य चेति। पदचतुष्टयस्याप्यसदर्थकत्वे फलितं सदृष्टान्तमाह—मृगतृष्णेति। न चानृतादिव्यावृत्तेरन्योन्याभावरूपत्वेन शशशृङ्गादिवदसत्त्वाभावात्कथं शून्यार्थकतेति वाच्यम्; सिद्धान्त्यभिमतवाक्यार्थ- ३० निषेधमात्रस्यात्र विवक्षितत्वात्। परिहरति—नेति। ननु व्यावृत्त्यर्थत्वस्योक्तत्वात्कथं लक्षणार्थत्वमित्याशङ्क्य संग्रहवाक्यं विवृणोति—विशेषणत्वेऽपि चेति। चशब्दः शङ्कानिरासार्थः। सत्यादिपदत्रयस्य विशेषणत्वेऽपि व्यावृत्त्यर्थत्वेऽपि न व्यावृत्तेः शाब्दत्वमुपेयते, व्यावृत्तेरार्थिकत्वोपपत्तेः, अतो लक्षणरूपार्थपरत्वमेवेत्युक्तमित्यर्थः। अत एव ब्रह्मपदमपि नासदर्थकमित्याह—शून्ये हीति। विशेषणत्वेऽपि च सत्यादीनां नासदर्थतेत्युक्तमेव प्रपञ्चयति—विशेषणार्थत्वेऽपि चेत्यादिना। सत्यादिपदानां व्यावृत्तिप्रयोजनकत्वेऽपि स्वार्थस्य सन्मात्रादेः परित्यागो नास्त्येव।

३५ १. लक्षणार्थत्वेन लक्षणवाक्यानामखण्डार्थत्वस्य निश्चितत्वादखण्डं सत्यज्ञानादिरूपं ब्रह्म लक्षयति। इतरव्यावृत्तिरार्थिकी।

२. स्वरूपे तात्पर्यम् ; व्यावृत्तिरार्थिकी।

शून्यार्थत्वे हि सत्यादिशब्दानां विशेष्यनियन्तृत्वानुपपत्तिः। सत्याद्यर्थैरर्थवत्त्वे तु तद्विपरीतधर्मवद्भ्यो विशेष्येभ्यो ब्रह्मणो विशेष्यस्य नियन्तृत्वमुपपद्यते, ब्रह्मशब्दोऽपि स्वार्थेनार्थवानेव। तत्रानन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारेण विशेषणम्। सत्यज्ञानशब्दौ तु स्वार्थसमर्पणेनैव विशेषणे भवतः।

तस्माद्वा एतस्मादात्मन इति ब्रह्मण्येवाऽऽत्मशब्दप्रयोगाद्वेदितुरात्मा ब्रह्म। एतमानन्दमयमात्मानमुपसंक्रामतीति च आत्मतां दर्शयति। तत्प्रवेशाच्च। तत्सृष्ट्वा तदेवानुप्राविशदिति च तस्यैव जीवरूपेण शरीरप्रवेशं ५ दर्शयति। अतो वेदितुः स्वरूपं ब्रह्म। एवं तर्ह्यात्मत्वाज्ज्ञानकर्तृत्वं; आत्मा ज्ञातेति हि प्रसिद्धम्। सोऽकामयतेति च

आनन्दगिरिटीका

किञ्च विशेषणस्य व्यावर्तकत्वं सति व्यावर्त्ये घटतेऽतो विशेषणत्वानुपपत्त्यैव सदर्थत्वं वाच्यमित्याह—शून्यार्थत्वे हीति। यच्चोक्तं ब्रह्मशब्दोऽप्रसिद्धार्थ इति तत्राऽऽह—ब्रह्मशब्दोऽपीति। "बृह बृहि वृद्धौ" इति धातोर्ब्रह्मेति शब्दो निष्पन्नो वृद्धौ महत्त्वे वर्तते। तच्च महत्त्वं देशतः कालतो वस्तुतश्चानवच्छिन्नत्वं सङ्कोचक- १० मानान्तराभावान्निरतिशयमहत्त्वसम्पन्ने धर्मिणि पर्यवस्यति। ततो वन्ध्यासुतादिशब्दविलक्षणो ब्रह्मशब्द इत्यर्थः। सत्यादिषु त्रिषु विशेषणेष्ववान्तरभेदमाह—तत्रानन्तेति।

अनन्तमित्यनेन चाऽऽत्मैक्यं ब्रह्मण उक्तमित्यभिप्रेत्यैक्ये शास्त्रतात्पर्यं दर्शयति—तस्माद्वा इत्यादिना। ब्रह्मण आत्मैक्यं चेद्विवक्षितं तर्हि ज्ञानशब्दस्य भावसाधनत्वव्याख्यानं हीयेतेत्याह—एवं तर्हीति। इतश्च भाव-

वनमाला १५

कुत इत्यत आह—शून्यार्थत्वे हीति। सत्यादिपदानां शून्यार्थत्वे स्वार्थपरित्यागे सति विशेष्यं प्रति नियन्तृत्वानुपपत्तिः इतरव्यावृत्तिप्रयोजनकत्वस्य पूर्ववाद्यभिमतस्यानुपपत्तिः सत्यादिपदैर्ब्रह्मणि व्यावर्तकस्वरूपविशेषासमर्पणात् लोके नीलादिपदैरुत्पले नैल्यादिरूपविशेषे समर्पिते सत्येव रक्तादिव्यावृत्तिबोधदर्शनादिति हिशब्दार्थः। एवं व्यतिरेकमुक्त्वाऽन्वयमाह—सत्याद्यर्थैरिति। सत्यादिपदानामिति शेषः। तद्विपरीतेति। सत्यत्वादिधर्मविपरीता अनृतत्वादिधर्माः, तद्वन्तोऽनृतजडपरिच्छिन्नाः पदार्थाः, तेभ्य इत्यर्थः। ब्रह्मणः विशेष्यस्य इति षष्ठ्यौ द्वितीयार्थे। २० यदुक्तं विशेष्यस्य ब्रह्मण उत्पलादिवदप्रसिद्धत्वादसत्त्वमिति, तत्राह—ब्रह्मशब्दोऽपीति। स्वार्थेनेति। वृद्धिमत्त्वेनेत्यर्थः। न च पदमात्रस्याप्रमाणत्वादुत्पलादिवन्मानान्तराप्रसिद्धत्वाच्च न तस्य सत्त्वसिद्धिरिति वाच्यम्, मिथ्यार्थस्य रज्जुसर्पादेः सदधिष्ठानत्वदर्शनात्प्रपञ्चस्यापि दृश्यत्वादिहेतुभिर्मिथ्यात्वेनावगतस्य सदधिष्ठानत्वमनुमीयते, एवं सर्वाधिष्ठानतयानुमानोपस्थिते वृद्धिमति ब्रह्मशब्दस्य शक्तिग्रहाभ्युपगमान्न तस्यासत्त्वशङ्का, न चैवमनुमानादेव ब्रह्मसिद्धेः श्रुत्यादिवैयर्थ्यमिति वाच्यम्, तस्य स्वरूपविशेषावगतेः श्रुत्यधीनत्वाभ्युपगमादिति भावः। ब्रह्मस्वरूप- २५ लक्षणसमर्पकेषु सत्यादिपदेषु त्रिष्ववान्तरभेदमाह—तत्रेति। अनन्तशब्दः परिच्छेदाभावबोधनद्वारा ब्रह्मणो विशेषणं परिच्छिन्नाद्व्यावर्तकमित्यर्थः। सत्यज्ञानशब्दौ त्विति। अनन्तशब्दस्येव सत्यज्ञानशब्दयोरभावबोधद्वारकत्वं नास्तीति विशेषार्थकस्तु-शब्दः। तमेव विशेषं विवृणोति—स्वार्थेति। सच्चिद्रूपत्वलक्षणस्वार्थबोधनद्वारेणैव विशेषणे भवतः अनृतादिव्यावर्तकौ भवतः नाभावसमर्पणद्वारेणेत्यर्थः। अत्र ब्रह्मण्यनन्तपदसमर्पितः परिच्छेदाभावो ब्रह्मस्वरूपमेव, परिच्छेदस्य कल्पितत्वेन कल्पितप्रतियोगिकाभावस्याधिष्ठानानतिरेकादिति मन्तव्यम्। ३०

ननु जीवस्याकल्पिततया तत्प्रतियोगिकभेदरूपस्य परिच्छेदस्याकल्पितत्वादनन्तपदेन कथं तन्निषेध इति चेत्, न; जीवब्रह्मणोर्भेदस्यैवासिद्धेरित्याशयेनाह—तस्माद्वा इति। आत्मशब्दस्य जीववाचित्वादिति भावः। आनन्दमयपदलक्षिते ब्रह्मण्यात्मशब्दप्रयोगाच्चैवमित्याह—एतमिति। आत्मतामिति। ब्रह्मण इति शेषः। ब्रह्मण एव जीवभावे हेत्वन्तरमाह—तत्प्रवेशाच्चेति। ननु प्रवेशश्रवणं जीवभावेनेत्यत्र किं विनिगमकमित्याशङ्क्य श्रुत्यन्तरानुसारादित्याशयेन विवृणोति—तत्सृष्ट्वेति। श्रुतौ तच्छब्दो ब्रह्मपरो। अत इति। ब्रह्मणो जीवभावेन ३५ प्रवेशश्रवणादित्यर्थः। शङ्कते—एवं तर्हीति। यद्युक्तरीत्या जीवात्मैव ब्रह्म तर्हि ब्रह्मण आत्माभिन्नत्वाज्ज्ञानकर्तृत्वं प्राप्तमित्यर्थः। नन्वसङ्गत्वादात्मन एव ज्ञानकर्तृत्वं नास्ति, कुतस्तदभेदाद्ब्रह्मणस्तत्प्रसक्तिरित्याशङ्क्याह—आत्मा ज्ञातेति हीति। जानामीति ज्ञानकर्तृत्वस्यात्मन्यनुभवसिद्धत्वादसङ्गत्वश्रुतिरन्यपरेति भावः। यथा जीवाभिन्नत्व-

**कामिनो ज्ञानकर्तृत्वप्रसिद्धिः। अतो ज्ञानकर्तृत्वाज्ज्ञप्तिर्ब्रह्मेत्ययुक्तमनित्यत्वप्रसङ्गाच्च। यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मणस्तथाऽप्यनित्यत्वं प्रसज्येत पारतन्त्र्यं च। धात्वर्थानां कारकापेक्षत्वात्। ज्ञानं च धात्वर्थोऽतोऽस्यानित्यत्वं, परतन्त्रता च। न, स्वरूपाव्यतिरेकेण कार्यत्वोपचारात्। आत्मनः स्वरूपं ज्ञप्तिर्न ततो व्यतिरिच्यतेऽतो नित्यैव तथाऽपि बुद्धेरुपाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारेण परिणामिन्या ये शब्दाद्याकारावभासास्त आत्म-**
५ **विज्ञानस्य विषयभूता उत्पद्यमाना एवाऽऽत्मविज्ञानेन व्याप्ता उत्पद्यन्ते। तस्मादात्मविज्ञानावभासाश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्मा विक्रियारूपा इत्यविवेकिभिः परिकल्प्यन्ते।**

**यत्तु तद्ब्रह्मणो विज्ञानं तत्सवितृप्रकाशवदग्न्युष्णवच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तत्, न तत्कारणान्तर-**

### आनन्दगिरिटीका

व्युत्पत्तिरसङ्गतेत्याह—**अनित्यत्वप्रसङ्गाच्चेति**। वृत्तिमदन्तःकरणोपहितत्वेनाऽऽत्मनो ज्ञातृत्वं न स्वतः, कार्यत्वं च
१० ज्ञानस्यान्तःकरणवृत्त्युपहितत्वेन ततः आत्माभिन्नत्वेऽपि ब्रह्मणो न ज्ञानकर्तृत्वं नापि कार्यत्वं प्रसज्यत इत्याह—**न स्वरूपेति**।

### वनमाला

वचनानि ब्रह्मणो ज्ञानकर्तृत्वं प्रापयन्ति तथा "सोऽकामयत" इति वचनमपि तत्प्रापयतीत्यत्र हेतुमाह—**कामिन इति**। ब्रह्मणो ज्ञानकर्तृत्वप्राप्तौ फलितं दोषमाह—**अत इति**। "ज्ञानं ब्रह्म" इति वचनात्प्राप्तमन्तवत्त्वमित्यत्रोक्त-
१५ मनित्यत्वप्रसङ्गं प्रपञ्चयन्नितश्च ज्ञप्तिर्ब्रह्मेत्ययुक्तमित्याह—**अनित्यत्वेति**। ननु ब्रह्मणो ज्ञप्तिरूपत्वेऽपि कथमनित्यत्वं ज्ञप्तेर्नित्यचैतन्यरूपत्वादित्याशङ्क्य हेत्वसिद्धिमाह—**यदि नामेति**। यदि नामाभ्युपगम्यत इत्यर्थः। लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्तदतिरिक्तनित्यज्ञानाभावाच्चेति भावः। पारतन्त्र्यं जन्यत्वम्। अनित्यत्वादिप्रसङ्गाज्ज्ञप्तिर्ब्रह्मेत्ययुक्तमित्युपसंहरति—**अतोऽस्येति**। ज्ञानस्येत्यर्थः। आत्मनो नित्यचैतन्यरूपतायाः श्रुतियुक्तिसिद्धत्वाज्ज्ञप्तिर्ब्रह्मेत्यत्रात्मचैतन्यमेव ज्ञप्तिर्विवक्षिता, अतो नानित्यत्वादिप्रसङ्गः; आत्मनश्च "साक्षी चेता केवलो निर्गुणश्च"
२० इति वचनाज्ज्ञानकर्तृत्वमसिद्धम्; जानामीत्यनुभवस्तु बुद्धितादात्म्यकृतः, "ध्यायतीव लेलायतीव" इति श्रुतेः; तथा च नात्माभिन्नत्वाद्ब्रह्मणो ज्ञानकर्तृत्वप्रसङ्गः, कामयितृत्ववचनमपि ब्रह्मणो मायोपाधिप्रयुक्तमेव, न स्वत इत्याशयेन समाधत्ते—**नेति**। ज्ञप्तेरात्मस्वरूपाव्यतिरेके सति तस्यां ज्ञप्तौ कार्यत्वस्योपचारमात्रत्वाज्ज्ञप्तिरूपस्य ब्रह्मणो नानित्यत्वादिप्रसङ्ग इत्यर्थः। उक्तं विवृणोति—**आत्मन इति**। चैतन्यरूपा ज्ञप्तिरात्मनो न भिद्यते मानाभावात्, अतो नित्यात्मस्वरूपत्वादिह विवक्षिता ज्ञप्तिर्नित्यैवेत्यर्थः। ननु तर्हि विषयावभासिकायां ज्ञप्तौ कथं कार्यत्वप्रसिद्धि-
२५ रित्याशङ्क्य कार्यत्वोपचारादित्याह—**तथापीति**। कार्यवृत्तिसंसर्गात्कार्यत्वेनोपचर्यत इति शेषः। वृत्तेः कार्यत्वं साधयति—**बुद्धेरुपाधिलक्षणाया इति**। प्रत्यगात्मोपाधिभूताया इत्यर्थः। **शब्दाद्याकारेति**। शब्दादिविषयगोचराः शब्दाद्यवभासकत्वेन प्रसिद्धाः परिणामास्ते आत्मस्वरूपस्य विज्ञानस्य विषयावभासकचैतन्यस्य विषयभूता उपाधिभूता इत्यर्थः। तथा चोपाधिभूतवृत्तितादात्म्यादात्मस्वरूपभूतायां ज्ञप्तौ कार्यत्वोपचार इति भावः। आत्मविज्ञानस्य विषयभूता ये शब्दाद्याकारावभासाः ते उत्पद्यमानाः सन्त आत्मविज्ञानव्याप्ता एवोत्पद्यन्त इति योजना। अत्र
३० वृत्तीनामात्मविज्ञानेन व्याप्तिर्वृत्तिचैतन्ययोरवभास्यावभासकभावप्रयोजकतादात्म्यसम्बन्धरूपा विवक्षिता। अत एवाह—**तस्मादात्मविज्ञानभास्याश्चेति**। उक्तव्याप्तिस्तच्छब्दार्थः। भावसाधनज्ञानशब्दवाच्यत्वमपि वृत्तीनामेवेत्याह—**विज्ञानेति**। जानातीत्यत्र धात्वर्थत्वमपि तासामेव कारकपारतन्त्र्यादित्याह—**ते धात्वर्थभूता इति**। ननु चक्षुरादिकरणजन्यानां ज्ञानानां वैशेषिकादिभिरात्मधर्मत्वाङ्गीकाराद्बुद्धिधर्मत्वमयुक्तम्, अत आह—**आत्मन एवेति**। आत्मनो विकाररूपाः सन्तस्तस्यैव धर्मा गुणा इति श्रुतितात्पर्यानभिज्ञैः कल्प्यन्ते न तु परमार्थत आत्म-
३५ धर्मत्वं तेषाम् "कामः सङ्कल्पः" इत्यादिश्रुत्या जन्यज्ञानादीनां मनोधर्मत्वप्रतिपादनादात्मनो निर्गुणत्वप्रतिपादनाच्चेत्यर्थः। एवं लौकिकज्ञानस्य कारकपारतन्त्र्यादिकं निरूप्य स्वरूपज्ञानस्य तद्वैपरीत्यमुपपादयति—**यत्त्विति**। तुशब्दः स्वरूपज्ञानस्य वृत्तिवैलक्षण्यार्थः। "सत्यं ज्ञानम्" इत्यत्र ज्ञानपदलब्धं यज्ज्ञानं तत्सवित्रादेः प्रकाशादिकमिव ब्रह्मस्वरूपादात्मनोऽव्यतिरिक्तमात्मस्वरूपमिति यावत्। अतो ब्रह्मणः स्वरूपमेवेत्यर्थः। नन्वात्मस्वरूपत्वेऽपि ज्ञानस्य कथं ब्रह्मस्वरूपत्वं कारकापेक्षस्य तस्य ब्रह्मत्वायोगादित्याशङ्क्याह—**न तत् कारणान्तरेति**। नित्यात्म-

सव्यपेक्षम् । नित्यात्मस्वरूपत्वात् । सर्वभावानां च तेनाविभक्तदेशकालत्वात्कालाकाशादिकारणत्वात् निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेयं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वाऽस्ति तस्मात्सर्वज्ञं तद्ब्रह्म । मन्त्रवर्णाच्च—

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥" इति । ५

"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति" इत्यादिश्रुतेश्च ।

विज्ञातृस्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षत्वाच्च ब्रह्मणो ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिरतो नैव धात्वर्थस्तस्याक्रियारूपत्वात् । अत एव च न ज्ञानकर्तृ, तस्मादेव च न ज्ञानशब्दवाच्यमपि तद्ब्रह्म । तथाऽपि

आनन्दगिरिटीका

नित्यं चेज्ज्ञानं तर्हि तत्र ब्रह्मणः कर्तृत्वाभावे कथं सर्वज्ञत्वमित्यत आह—**सर्वभावानां चेति** । संविद्व्यवधानमेव हि विषयस्य सिद्धिः । सर्वं च संवित्स्वभावेन ब्रह्मणाऽव्यवहितमिति सर्वज्ञं ब्रह्मोपचर्यत इत्यर्थः । नित्यं ज्ञानं ब्रह्मणि विद्यत इत्यत्र मन्त्रसम्मतिमाह—**मन्त्रवर्णाच्चेति** । १०

ब्रह्म अनित्यं ज्ञानत्वाल्लौकिकज्ञानवदित्यादि चोद्यमप्युक्तन्यायेन निरस्तमित्याह—**विज्ञातृस्वरूपेति** । लौकिकज्ञानस्य करणादिसापेक्षत्वादनित्यत्वम् । आत्मस्वरूपं तु ज्ञानं न करणादिसापेक्षं सकलकरणव्यापारोपरमेऽपि सुषुप्ते भावादन्यथा सुषुप्तिसिद्ध्यनुपपत्तेः परामर्शासम्भवप्रसङ्गादतः श्रुतितात्पर्यगम्येऽर्थे न सामान्यतो दृष्टस्य प्रवेश इति भावः । आत्मनः स्वरूपभूतं ज्ञानं कारकसाध्यं धात्वर्थत्वादिति चासिद्धमित्याह—**अत इति** । नित्यात्मस्वरूपत्वादेवेत्यर्थः । **अत एव चेति** । नित्यत्वादेव ज्ञानस्य न तत्र कर्तृत्वमपि ब्रह्मण आपादयितुं शक्यते । लौकिकानित्यज्ञानविलक्षणत्वादेव च ज्ञानशब्दवाच्यमपि ब्रह्म न भवतीत्याह—**तस्मादेव चेति** । कथं तर्हि विज्ञानं ब्रह्मेति प्रयोगस्तत्राऽऽह—**तथाऽपीति** । शब्दस्य प्रवृत्तिहेतवो जात्यादिधर्मा गौः शुक्ल इत्यादौ; तदभावाच्छब्दान्तरे- १५

वनमाला २०

स्वरूपादिति हेत्वर्थः । ननु ज्ञानस्य ब्रह्मरूपत्वे सर्वज्ञत्वश्रुतिविरोधः, तस्याकार्यतया ब्रह्मणस्तत्र कर्तृत्वासम्भवात्; न च बुद्धिवृत्त्युपहितत्वेन स्वरूपज्ञानेऽपि कार्यत्वोपचार उक्त इति वाच्यम्, तावता बुद्ध्युपाधिकस्य जीवस्य ज्ञानकर्तृत्वलाभेऽपि ब्रह्मणस्तदलाभात्; जीवब्रह्मणोरभेदेऽपि कल्पितभेदाभ्युपगमेन धर्मसाङ्कर्यायोगादित्याशङ्क्य ब्रह्मणः सर्वज्ञत्वं सर्वसाक्षित्वरूपमेवास्तु, कर्तृत्वश्रुतेरौपचारिकत्वोपपत्तेरित्याशयेन सर्वसाक्षित्वमुपपादयति—**सर्वभावानां चेत्यादिना** । **तेनेति** । तेन ब्रह्मणा अविभक्तौ विभागरहितौ देशकालौ येषां ते तथोक्तास्तेषां भावस्तत्त्वं तस्मान्न तस्य विप्रकृष्टादिकमस्तीत्यर्थः । सर्वपदार्थानां ब्रह्माविभक्तत्वे हेतुः—**कालाकाशादीति** । सर्वकल्पनाधिष्ठानत्वादित्यर्थः । स्वप्रकाशचिद्रूपतया ब्रह्मणोऽतिस्वच्छत्वान्न तस्याप्रकाश्यं किञ्चित्सूक्ष्ममस्तीत्याह—**निरतिशयेति** । **तस्मात्त्विति** । सर्वपदार्थसंसर्गित्वादित्यर्थः । वस्तुतस्तु जीवस्य बुद्ध्युपाधिवशान्मुख्यज्ञातृत्वादिवद्ब्रह्मणोऽपि मायोपाधिवशान्मुख्यमेव सर्वज्ञत्वं कामयितृत्वादिकं च सम्भवतीति विशेषसंग्रहार्थस्तुशब्दः । तदुक्तं वाक्यवृत्तावाचार्यैरेव—"मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः" इति । कारकनिरपेक्षं स्वरूपज्ञानमस्तीत्यत्र मन्त्रब्राह्मणवाक्यानि प्रमाणयति—**मन्त्रेत्यादिना** । अपाणिर्ग्रहीता अपादो जवनः । परस्य नान्योऽवभासकोऽस्ति, तस्य स्वप्रकाशत्वादित्याह—**न चेति** । अग्रे सृष्टेः पूर्वकाले भवमग्र्यम् । विज्ञातुरात्मनो या विज्ञातिः स्वरूपभूता संवित् तस्या विपरिलोपो विनाशो नास्ति, अविनाशित्वात् नाशसामग्रीशून्यत्वादित्यर्थः । ज्ञप्तेरात्मस्वरूपत्वेन कारकानपेक्षत्वसाधनप्रधानफलमाह—**विज्ञातृस्वरूपेति** । तत् आत्मस्वरूपं ज्ञानम् । न धात्वर्थं इत्यत्र अतःशब्दोक्तं हेतुमाह—**अविक्रियेति** । नित्यत्वादित्यर्थः । कारकसापेक्षक्रियाया एव धात्वर्थत्वादिति भावः । **अत एवेति** । ज्ञानस्य नित्यत्वादेव तत्र ज्ञाने ब्रह्मणः कर्तृत्वमप्यापादयितुमशक्यमित्यर्थः । **तस्मादेव चेति** । तत् ज्ञानस्वरूपं ब्रह्म ज्ञानपदवाच्यलौकिकज्ञानविलक्षणत्वादेव ज्ञानपदवाच्यमपि नेत्यर्थः । कथं तर्हि "ज्ञानं ब्रह्म" इति सामानाधिकरण्यम् ? २५ ३० ३५

**तदाभासवाचकेन बुद्धिधर्मविषयेण ज्ञानशब्देन तल्लक्ष्यते न तूच्यते, शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात्। तथा सत्यशब्देनापि, सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणो बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते सत्यं ब्रह्मेति न तु सत्यशब्दवाच्यमेव ब्रह्म। एवं सत्यादिशब्दा इतरेतरसन्निधावन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्द-वाच्यात्तन्निवर्तका ब्रह्मणो लक्षणार्थाश्च भवन्तीत्यतः सिद्धं "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" "अनिरुक्तेऽ-**
५ **निलयने" इति चावाच्यत्वं नीलोत्पलवदवाक्यार्थत्वं च ब्रह्मणः।**

आनन्दगिरिटीका

णापि वाच्यं न भवतीत्याह—**तथेति**। तथा सत्यशब्देनापि न वाच्यं ब्रह्मेति शेषः। एतत्स्फुटयति—**सर्वविशेषेति**। सत्ता यस्यास्ति तत्सत्यमिति लोकरूढिः। सत्ता चानुगतरूपं सामान्यं व्यावृत्ताः सत्ताविशेषाः। स चायमनु-वृत्तव्यावृत्तभावो न वस्तु परस्परापेक्षसिद्धत्वादतो यस्मिन्नयं व्यावृत्तानुवृत्तभावः कल्पितस्तदव्यावृत्तमननुगतं ब्रह्म
१० लक्ष्यत इत्यर्थः। एवमेकैकस्य शब्दस्यार्थमुक्त्वा वाक्यार्थमाह—**एवं सत्यादीति**। यद्यपि सत्यादिशब्दानां ब्रह्मणा मुख्योऽन्वयस्तथाऽपि [1]अरुणैकहायन्यादिवत्पार्ष्णिकान्वयेनेतरेतरसन्निधावन्योन्यस्य वृत्तिनियामका भवन्ति। [2]ज्ञानेन विशेषणात्सत्यशब्दो न जडे कारणे वर्तते। सत्येन विशेषणाज्ज्ञानशब्दो न विषयसापेक्षे ज्ञाने वर्तते। ज्ञानेन विशेषणाद्नन्तशब्दो ज्ञातृव्यतिरिक्ते वर्तते। ततश्च सत्यादिशब्देन यल्लौकिकं वाच्यं तद्विलक्षणेन भवितव्यमिति सम्भावयन्तः सकललौकिकाध्यासाधिष्ठानं ब्रह्मत्वेन लक्षयन्तीत्यर्थः। ततः किं फलतीत्यत आह—**अतः सिद्धमिति**।

१५ वनमाला

तत्राह—**तथापीति**। वाच्यत्वाभावेऽपीत्यर्थः। **तदाभासेति**। ज्ञानाभासवाचकेनेत्यर्थः। कोऽसौ ज्ञानाभास इत्याकाङ्क्षायां तदेव विवृणोति—**बुद्धीति**। बुद्धिपरिणामरूपवृत्तिज्ञानवाचकेनेत्यर्थः। वृत्तेर्जडायाश्चैतन्यतादात्म्य-मन्तरेण विषयावभासकत्वायोगाज्ज्ञानाभासत्वमिति भावः। पूर्वोक्तं वाच्यत्वाभावमनूद्य तत्र हेत्वन्तरमाह—**न तूच्यत इत्यादिना**। अर्थेषु शब्दानां प्रवृत्तिहेतुत्वेन प्रसिद्धा ये जात्यादयो धर्मास्तद्रहितत्वाद्ब्रह्मण इत्यर्थः।
२० तद्रहितत्वे हेतुमाह—**सत्यानन्तेति**। सामानाधिकरण्यादित्यनन्तरं ब्रह्मशब्दस्येति शेषः। सत्यानन्तपदाभ्यां बाधायोग्यत्वत्रिविधपरिच्छेदराहित्यसमर्पकाभ्यां ब्रह्मणो निर्विशेषत्वावगमादित्यर्थः। अत एव सत्यशब्दस्यापि न वाच्यं ब्रह्मेत्याह—**तथा सत्यशब्देनापीति**। **सर्वेति**। सर्वविशेषरहितस्वरूपत्वादेवेत्यर्थः। कथं तर्हि "सत्यं ब्रह्म" इति सामानाधिकरण्यम्? तत्राह—**बाह्येति**। बाह्यं लोकसिद्धं यत्सत्तासामान्यं सत्ताजातिस्वरूपं तद्वाचकेन सत्यशब्देन बाधायोग्यं वस्तु लक्ष्यत इत्यर्थः। यद्वा पूर्वं विकारेष्वव्यभिचारितया वर्तमाने वस्तुनि रज्ज्वादौ
२५ सत्यशब्दप्रसिद्धेरुक्तत्वात् लौकिकसत्यवस्तुवाचिना सत्यशब्देन परमार्थभूतं वस्तु लक्ष्यते, अतः "सत्यं ब्रह्म" इति सामानाधिकरण्यमुपपद्यत इति बोध्यम्। **न त्विति**। केवलस्य परमार्थवस्तुनः प्रागनुपस्थितत्वेन शक्तिग्रहाभावादिति भावः। सत्यादिपदत्रयव्याख्यानमुपसंहरति—**एवमिति**। नियम्यनियामकभावफलमाह—**सत्यादीति**। स्वस्ववाच्यार्था-न्निवर्तकाश्च भूत्वा ब्रह्मणो लक्षणस्य सच्चिदद्वितीयस्वरूपस्य समर्पका भवन्तीत्यर्थः। लक्षणवाक्यार्थविचारमुप-संहरति—**अतः सिद्धमिति**। निरुक्तं वाच्यम्, तद्भिन्नमनिरुक्तम्। **नीलोत्पलवदिति**। सत्यत्वादिविशेषणविशिष्टस्य
३० ब्रह्मणः सत्यादिवाक्यार्थतायाः "न विशेषणप्रधानान्येव" इत्यत्र "लक्षणार्थं च वाक्यमित्यवोचाम" इत्यत्र च

---

१. अरुणैकहायन्यादिवत्—यद्यप्यत्र यथा सत्यज्ञानानन्तपदानां विशेष्ये ब्रह्मण्येवान्वयः, तथा अरुणैक-हायनीपिङ्गाक्षीणां पृथगेव भावनायामन्वयः न तु परस्परान्वयः कारकाणां परस्परान्वयायोगात् क्रियायामेवान्वयात्। तथापि पार्ष्णिकबोधकाले परस्परामेदो ज्ञायते सामानाधिकरण्यात् या अरुणा सा एकहायनी सा पिङ्गाक्षीति तद्वदित्यर्थः।

३५ २. यत्तु परस्ते ज्ञानमित्यस्य अर्शाद्यजन्तत्वेन ज्ञानगुणकमित्यर्थं इति, तन्न, ज्ञानपदस्य नपुंसकस्य ज्ञाने रूढेः अर्शआदिकल्पनाया अनपेक्षणात् ब्रह्मणः स्वसम्बद्धसर्वभासकत्वेन सर्वज्ञत्वसम्भवाच्च।

वस्तुपरिच्छेदः अन्यवस्तुनः सकाशात् भिन्नत्वमेव स्वारसिकं ततश्च भेदरहितत्वमेव वस्तुपरिच्छेद-राहित्यम्। यत्तु समाभ्यधिकराहित्यनिदानभूतगुणप्रकर्षः वस्तुपरिच्छेदराहित्यमिति परोक्तं तत् परिभाषामात्रं न तु पदार्थः।

**परमे व्योमन्। [1]सोऽश्नुते सर्वान्कामान्सह। ब्रह्मणा विपश्चितेति। [2]तस्माद्वा एतस्मादात्मन**

तद्यथाव्याख्यातं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायाम्। गूहतेः संवरणार्थस्य निगूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः। गूढावस्यां भोगापवर्गौ पुरुषार्थाविति वा तस्यां परमे प्रकृष्टे व्योमन् व्योम्न्याकाशेऽव्याकृताख्ये। तद्धि परमं व्योम "एतस्मिन्खल्वक्षरे गार्ग्याकाशः" इत्यक्षरसन्निकर्षात्। गुहायां व्योम्नीति वा

आनन्दगिरिटीका

वाचकशक्त्या बोधकत्वानङ्गीकारादवाच्यत्वं सकलानिष्टव्यवच्छेदेनैकस्यैव लक्ष्यत्वाभ्युपगमाच्च गुणगुण्यादिसंभेदरूपवाक्यार्थवैलक्षण्यं च ब्रह्मणः सिद्धमित्यर्थः। ५

बुद्धौ कार्ये यदनुगतं परमं व्योमाव्याकृताख्यं तस्मिन्निहितमिति सप्तमीद्वयं वैयधिकरण्येन व्याख्यातम्। व्योमशब्दस्य भूताकाशे रूढिं परित्यज्य किमित्यव्याकृतविषयत्वं व्याख्यायते? तत्राह—तद्धीति। भूताकाशस्य कार्यत्वेनापरत्वादव्याकृताकाशस्य कारणत्वेन परमत्वविशेषणसम्भवाच्छाखान्तरे शतपथे चाक्षरेण ब्रह्मणा सामीप्यावगमादव्याकृतं व्योमशब्देन लक्ष्यत इत्यर्थः। एवं पराभिप्रायेण व्याख्याय स्वाभिप्रायं व्याचष्टे— १०

वनमाला

तात्पर्यतो निरस्तत्वाद्ब्रह्मणो नीलोत्पलवाक्यार्थवैलक्षण्यं च सिद्धमित्यर्थः।

सच्चिदेकरसं ब्रह्म प्रकृतं भेदवर्जितम्। मन्त्रस्य प्रथमे पादे तात्पर्येण निरूपितम्॥

गूहतेरिति। गूहतेः संवरणार्थस्य गुहेति रूपमिति भावः। गुहाशब्दस्यावारकार्थकत्वेऽपि प्रकृते का गुहा विवक्षिता? तत्राह—निगूढा इत्यादिना। ज्ञात्रादिपदार्थानां बुद्धिपरिणामत्वपक्षमाश्रित्य तत्र तेषां निगूढत्वमुक्तम्। बुद्धिनिरोधावसरे ज्ञात्रादिपदार्थानां भेदेनानुपलम्भात्तेषां तत्र निगूढत्वमवगन्तव्यम्। तेषां मायापरिणामत्वपक्षमाश्रित्याह—निगूढाविति। भोगो दुःखादिः, अपवर्गो ज्ञानम्, तदुभयं बुद्धिपरिणामत्वात्तत्र निगूढमित्यर्थः। भूताकाशं व्यावर्तयति—अव्याकृताख्य इति। अव्याकृतमज्ञानम्। तस्य परमत्वे कारणं हिशब्देनाह—तद्धीति। १५

१. परमते "सोऽश्नुते सर्वान् कामान् सह" "ब्रह्मणा विपश्चिता" इति वाक्यद्वयस्य ब्रह्मविद्वैकुण्ठाख्यं ब्रह्मलोकं प्राप्य ब्रह्मणा सह सर्वान् कामाननुभवतीत्यर्थः इत्युक्तम्। अत्र मते कामपदं काम्यन्त इति व्युत्पत्त्या कल्याणगुणान् भुङ्क्त इत्यर्थः। मुक्तस्य सर्वतो विरक्तत्वेन तद्व्यतिरिक्तकाम्यान्तरासम्भवात्। न च भोगानुभवे ब्रह्मणोऽप्राधान्यम्, पुत्रेण सहागतः पिता इत्यादिवदिति शङ्क्यम्। अत्र भोक्तृसाहित्ये स दोष एव, किन्तु भोग्यसाहित्यमेवात्राङ्गीकार्यं ततश्च पयसा सहौदनं भुङ्क्त इतिवत्, ब्रह्मणा सह कामान् भुङ्क्ते इत्यर्थाङ्गीकारादिति वदन्ति। अत्र कामानित्यस्य कल्याणगुणपरत्वं न स्वारसिकम्, तथा सर्वानित्यस्यानन्वयश्च भगवद्गतकल्याणगुणानामसङ्ख्येयत्वात्। सर्वान् भुङ्क्त इत्यस्य असम्भवश्च। ब्रह्मपदस्य भोग्यपरत्वे लक्षणा च। अस्मन्मते तु— २० २५

"सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः॥"

इत्यनेनोपबृंहणेनैकार्थ्यात् "एतस्यैवानन्दस्यानन्यानि भूतानि मात्रामुपजीवन्ति" इत्युक्तेः सर्वानन्दानुभवस्य मुक्ते स्वारस्याच्च। सर्वजीवरूपत्वापत्त्या मुक्तस्य सर्वानन्दानुभवसम्भवाच्च भगवत्पादोक्तमेव युक्तम्। अपि च तेषां यत्रार्थवशेन पादव्यवस्था इति जैमिन्युक्तरीत्या सहेत्यस्य पूर्ववाक्येन योजने अर्थविशेषलाभाच्च तदेव युक्तमिति। अत एव तन्मते पादान्तरस्थेन सह पदेन ब्रह्मपदयोजनमयुक्तम्। ३०

२. "तस्माद्वा एतस्मादात्मनः" इत्यत्रापि परमतव्याख्या न युक्ता, तस्मात् "ब्रह्मविदाप्नोति परमि"त्युक्तात् एतस्मात् "सत्यं ज्ञानमि"त्युक्तात् इति परमतं तदयुक्तं तच्छब्देतच्छब्दयोरर्थभेदानुक्तेः। अस्मद्व्याख्याने तु "एतस्मादात्मन" इति ब्रह्माभिन्नत्वमात्मन इत्युक्तम्। तच्चोत्तरत्र "स यश्चायं पुरुषे यश्चासावादित्ये" इत्यभेदस्य वक्ष्यमाणत्वात्। "उदरमन्तरं कुरुते अथ तस्य भयं भवति" इति जीवब्रह्मभेददर्शनः भयप्राप्त्युक्तेश्च अभेदोपक्षेपः स्वरसः। ३५

**आकाशः सम्भूतः। [1]आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः।**

**सामानाधिकरण्यादव्याकृताकाशमेव गुहा, तत्रापि निगूढाः सर्वे पदार्थास्त्रिषु कालेषु कारणत्वात्सूक्ष्मतरत्वाच्च। तस्मिन्नन्तर्निहितं ब्रह्म। हार्दमेव तु परमं व्योमेति न्याय्यं विज्ञानाङ्गत्वेन व्योम्नो विवक्षितत्वात्।**

**"यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तः पुरुष आकाशो योऽयमन्तर्हृदय आकाशः" इति ५ श्रुत्यन्तरात्प्रसिद्धं हार्दस्य व्योम्नः परमत्वम्। तस्मिन्हार्दे व्योम्नि या बुद्धिर्गुहा तस्यां निहितं ब्रह्म तद्वृत्त्या विविक्ततयोपलभ्यत इति। न ह्यन्यथा विशिष्टदेशकालसम्बन्धोऽस्ति ब्रह्मणः सर्वगतत्वान्निर्विशेषत्वाच्च।**

आनन्दगिरिटीका

**हार्दमेव त्विति।** हृदयावच्छिन्ने भूतकाशे या गुहा तस्यां बुद्धौ साक्षितया निहितमभिव्यक्तं ब्रह्मेति व्याख्यानं युक्तम्। द्रष्टृभेदेन ब्रह्मण आपरोक्ष्यलाभात्। अन्यथा समष्टिरूपेऽव्याकृते मायातत्त्वेऽवस्थितं ब्रह्मेत्युक्ते ब्रह्मणः १० पारोक्ष्यं प्रसज्येत, पारोक्ष्येण च ज्ञानं नापरोक्षसंसाराध्यासनिवर्तकम्। तस्मादपरोक्षद्रष्टृचैतन्याभेदेन ब्रह्मणः स्वहृदये प्रत्यक्षताया विवक्षितत्वाद्धृदयाकाशमेव विज्ञानशेषभूतं विवक्षितमित्यर्थः।

यदुक्तं भूताकाशस्य परमत्वानुपपत्तिरिति तत्राऽऽह—**यो वा इति।** ननु निहितशब्दः स्थितिं ब्रूते कथं विविक्ततया स्फुटतयोपलम्भाभिप्रायेण व्याख्यायते तत्राऽऽह—**न हीति। अन्यथेति।** उपलम्भव्यतिरेकेण।

वनमाला

१५ जगत्कारणत्वादिति हिशब्दार्थः। इतश्चाव्याकृतं परममित्याह—**एतस्मिन्निति।** अक्षरे ब्रह्मणि हे गार्गि कालत्रयापरिच्छिन्नं जगदुपादानमाकाशशब्दितमव्याकृतं साक्षादध्यस्तमिति श्रुत्यर्थः। सन्निकर्षः साक्षात्सम्बन्धः। अज्ञानव्यतिरिक्तपदार्थानामज्ञाते ब्रह्मण्यध्यस्ततया अज्ञानद्वारक एव ब्रह्मणा सन्निकर्ष इति भावः। एवमव्याकृताख्ये परमे व्योम्नि कारणभूते या कार्यभूता बुद्धिगुहा तस्यां निहितं ब्रह्मेति रीत्या "गुहायाम्" "व्योमन्" इति सप्तम्योर्वैयधिकरण्यमुक्तम्। इदानीं तयोः सामानाधिकरण्यमाह—**गुहायामिति।** न बुद्धिरित्येवकारार्थः। अव्या- २० कृतेऽपि गुहाशब्दप्रवृत्तिनिमित्तमाह —**तत्रापीति।** सृष्टिस्थितिसंहारकालेष्वित्यर्थः। ननु बुद्धेः स्वच्छत्वात्तत्र ब्रह्मणो निधानं सम्भवति, कथमव्याकृते तत्सम्भवतीत्याशङ्क्याह—**सूक्ष्मतरत्वाच्चेति।** अतिस्वच्छत्वादित्यर्थः। चशब्दः शङ्कानिरासार्थः। वस्तुतस्तु परमे व्योम्नि या गुहा बुद्धिः तस्यां निहितमिति सप्तम्योर्वैयधिकरण्येन व्याख्यानमेव युक्तम्, बुद्ध्युपहितजीवाभेदेन ब्रह्मण आपरोक्ष्यलाभात् "अहं ब्रह्मास्मि" इत्यादिश्रुत्यन्तरैकार्थ्यलाभात् प्रवेशवाक्येन वृत्तिस्थानीयेनास्य गुहानिहितवाक्यस्यैकार्थ्यलाभाच्च। सामानाधिकरण्यपक्षे त्वव्याकृतस्य विक्षेपशक्ति- २५ मदज्ञानांशरूपस्य परोक्षत्वात्तत्र निहितस्य ब्रह्मण आपरोक्ष्यादिकं न लभ्यते। अनेनैवाभिप्रायेण बुद्धेरेव गुहात्वं स्वीकृत्य तत्र निधानमौपचारिकमिति वक्ष्यतीति मन्तव्यम्। "परमे व्योमन्" इत्यत्र व्योमपदं पराभिप्रायेण व्याख्याय स्वाभिप्रायेण व्याचष्टे—**हार्दमेव त्विति।** भूताकाशमेव व्योमेत्यत्र हेतुः—**न्याय्यमिति।** रूढ्यनुसारस्य न्याय्यत्वादित्यर्थः। परं तूक्तरीत्या बुद्धेरेवात्र गुहात्वात्तदधिकरणत्वलाभाय हार्दमित्युक्तम्। हृदयमध्यस्थमित्यर्थः। परमत्वविशेषणमपि तस्य सम्भवतीति सूचनार्थस्तु-शब्दः। अव्याकृतवारणायावधारणम्। ननु भूताकाशस्य ३० कार्यत्वात्कथं परमत्वं सम्भवति? तत्राह—**विज्ञानाङ्गत्वेनेति।** सगुणब्रह्मोपासनस्थानतया हार्दस्य व्योम्नो गायत्रीविद्यादौ विवक्षितत्वात् कार्यस्यापि तस्योत्कर्षरूपं परमत्वं सम्भवतीत्यर्थः। न हि कारणत्वप्रयुक्त एवोत्कर्ष इति नियमोऽस्ति, भूतकार्यस्यापि सूर्यमण्डलादेः स्वकारणापेक्षयोत्कर्षस्य मूर्तामूर्तब्राह्मणादौ प्रसिद्धत्वादिति भावः। हार्दव्योम्नो विज्ञानाङ्गत्वेन परमत्वमेव साधयति—**यो वै स इति।** पुरुषाच्छरीरात् यो बहिर्धा बहिराकाशः यो वा अन्तः पुरुषे शरीरे आकाशः स इत्युपक्रम्य "योऽयमन्तर्हृदय आकाशः" इति श्रुत्यन्तराद्गायत्रीविद्या- ३५ प्रकरणस्थाद्गायत्रीपदलक्षितब्रह्मोपासनस्थानतया हार्दाकाशस्य ब्रह्मविज्ञानाङ्गत्वबोधकात् हार्दस्य व्योम्नः परमत्वं

१. "आकाशाद्वायुः" इत्यादौ आकाशशरीरकपरमात्मा अर्थः। "तत् तेज ऐक्षत" इत्यत्र तेजआदीनां जडानामीक्षणश्रवणात् इति। तन्न। "अभिमानिव्यपदेशस्तु" इति सूत्रात् ईक्षणस्यानुपपन्नत्वे अभिमानिपरत्वस्यैव स्वारसिकत्वात् तदभिध्यानादेव तु तल्लिङ्गात् स इत्यत्र ब्रह्मण ईक्षणादेव इतरेषामीक्षणमित्युक्तम्। अत एव तत्तद्भावमापन्नं ब्रह्म ऐक्षतेत्युक्तम्।

स एवं ब्रह्म विजानन्किमित्याह—अश्नुते भुङ्क्ते सर्वान्निरवशिष्टान्कामान्भोगानित्यर्थः। किमस्मदादिवत्पुत्रस्वर्गादीन्पर्यायेण नेत्याह। सह युगपदेकक्षणोपारूढानेवैकयोपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपाव्यतिरिक्तया यामवोचाम सत्यं ज्ञानमनन्तमिति। तदुच्यते—ब्रह्मणा सहेति। ब्रह्मभूतो विद्वान्ब्रह्मस्वरूपेणैव सर्वान्कामान्सहाश्नुते, न तथा यथोपाधिकृतेन स्वरूपेणाऽऽत्मना जलसूर्यकादिवत्प्रतिबिम्बभूतेन सांसारिकेण धर्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च कामान्पर्यायेणाश्नुते लोकः। कथं तर्हि, यथोक्तेन प्रकारेण सर्वज्ञेन सर्वगतेन सर्वात्मना नित्यब्रह्मात्मस्वरूपेण धर्मादिनिमित्तानपेक्षांश्चक्षुरादिकरणनिरपेक्षांश्च सर्वान्कामान्सहैवाश्नुत इत्यर्थः। ५

आनन्दगिरिटीका

अविद्यावस्थायां ये सुखविशेषा हिरण्यगर्भाद्युपाधिषु भोग्यत्वेनाभिमतास्तेषां सर्वेषां ब्रह्मानन्दाव्यतिरेकाद्ब्रह्मीभूतो विद्वान्सर्वानेवाऽऽनन्दानश्नुत इत्युपचारेण बहुवचनमित्यर्थः।

वनमाला १०

प्रसिद्धं निश्चितमित्यर्थः। तद्वृत्त्येति। बुद्धिवृत्त्या "तत्त्वमसि" इति श्रुतिजनितया बुद्ध्यादिभ्यः सकाशाद्विविक्ततया गृह्यत इत्यर्थः। यद्वा बुद्धिवृत्त्या बुद्धिसंसर्गेण विविक्ततया स्फुटतया द्रष्टृत्वश्रोतृत्वमन्तृत्वादिरूपेण ब्रह्मोपलभ्यत इत्यर्थः। तथा च गुहानिहितवाक्यं प्रति वृत्तिस्थानीयस्य प्रवेशवाक्यस्यार्थवर्णनावसरे वक्ष्यति—"गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञातृ इत्येवं विशेषवदुपलभ्यते" इति। ननु निहितशब्दः स्थितिं ब्रूते, ततश्च कथमन्यथा निधानं व्याख्यायते? तत्राह—न ह्यन्यथेति। अत्र सम्बन्धपदमाधेयत्वपरम्; तथा च अन्यथा उपलम्भव्यतिरेकेण देशविशेषाद्याधेयत्वरूपं निधानं ब्रह्मणो न ह्यस्तीत्यर्थः। सर्वगतत्वादिति। न चाकाशस्य सर्वगतत्वेऽपि स्वकारणमायादौ स्थितिरस्तीति वाच्यम्; कार्यस्याकाशस्य लोकप्रसिद्ध्या सर्वगतत्वेऽपि वस्तुतः सर्वगतत्वाभावादिति भावः। किं च "यत्राधेयत्वं तत्र सविशेषत्वम्" इति व्याप्तिर्दृश्यते, ब्रह्मणि च व्यापकसविशेषत्वनिवृत्त्या व्याप्याधेयत्वनिवृत्तिरित्याशयेनाह—निर्विशेषत्वाच्चेति। यद्वा विशेषपदमाधारपरम्, ततश्च आधारराहित्यश्रवणाच्च न तस्याधेयत्वमित्यर्थः एवं गुहानिहितवाक्यं व्याख्यायानन्तरवाक्यमाकाङ्क्षापूर्वं व्याचष्टे—स एवमित्यादिना। यो ब्रह्म गुहायां प्रत्यक्तया स्थितम् "अहं ब्रह्म" इति वेद विजानाति स एवं विजानन्किं लभत इत्याकाङ्क्षायामाहेत्यर्थः। भुङ्क्ते अनुभवति। सर्वशब्दस्यासङ्कुचितं साकल्यमर्थतया दर्शयति—निरवशिष्टानिति। कामशब्दस्येच्छापरत्वं व्यावर्तयति—काम्यानिति। तानेव विशिष्य दर्शयति—भोगानित्यर्थ इति। भुज्यत इति व्युत्पत्त्या भोगपदमानन्दपरमिति भावः। सहशब्दमवतारयति—किमिति। यथास्मदादिः पुत्रस्वर्गादीन्पर्यायेण क्रमेण भुङ्क्ते तथैव विद्वानपि किं कामान्भुङ्क्त इति योजना। एकक्षणेति। एकक्षणावच्छिन्नानित्यर्थः। ननु सुखव्यञ्जकानां सत्त्ववृत्तिविशेषाणां क्रमिकत्वात्कथमेकदैवानन्दानामनुभवो विदुषः सिध्यति? तत्राह—एकयेति। वृत्तिकृतानन्दानुभवो नात्र विवक्षित इति भावः। यामिति। "सत्यं ज्ञानम्" इत्यत्र ज्ञानमिति पदेन लक्षणीयतया यामुपलब्धिमवोचाम तया ब्रह्मस्वरूपाव्यतिरिक्तया कामानश्नुत इति योजना। तदुच्यत इति। यत्सर्वकामानामनुभवे यौगपद्यमुक्तं तदेव ब्रह्मणा सहेत्यत्र सहशब्देनोच्यते न साहित्यमित्यर्थः। नन्वत्र तृतीयया साहित्यमेव सहशब्दार्थतया भातीत्याशङ्क्याह—ब्रह्मभूत इति। इत्थंभावे तृतीयेयं न साहित्यप्रतियोगित्ववाचिनीति भावः। पूर्वोक्तव्यतिरेकदृष्टान्तविवरणपूर्वकमुक्तमर्थं प्रपञ्चयति—न तथेत्यादिना। अत्रोपाधिकृतेनेत्याद्या अपि तृतीया इत्थंभावे द्रष्टव्याः; तथा च परमात्मनो जलसूर्यवत्प्रतिबिम्बभूतं घटाकाशवदवच्छिन्नं वा उपाधिकृतं सांसारिकं संसारधर्मकं यत्स्वरूपं तदात्मा लोको यथा धर्मादिसाधनापेक्षान्कामान्पर्यायेणाश्नुत इत्यर्थः। विदुषः कामाशनप्रकारं पृच्छति—कथं तर्हीति। पूर्वोक्तेनैव प्रकारेणेत्याह—यथोक्तेनेति। सर्वज्ञेनेति। सर्वसाक्षिणेत्यर्थः। सर्वगतेन हीति। सर्वप्राणिसुखानुगतेन विदुष आत्मभूतेनेत्यर्थः। सर्वगतत्वादिकं श्रुतिषु प्रसिद्धमिति हिशब्दार्थः। सर्वज्ञादिरूपस्य विद्वदात्मनः सेश्वरसांख्यमत इव ताटस्थ्यं वारयति—नित्यब्रह्मस्वरूपेणेति। धर्मादीति। स्वकीयधर्माद्यनपेक्षानित्यर्थः; यथाश्रुते प्रतिप्राणिवर्तिनां कामानां तत्तद्धर्माद्यपेक्षत्वादसाङ्गत्यापत्तेः। एवमग्रेऽपि। तद्धीति। ब्रह्मणः प्रसिद्धं सर्वसाक्षित्वमेव विपश्चित्त्वम्, नान्यदित्यर्थः। इदं च विशेषणं विदुषो ब्रह्मानन्दानुभवकाले समुद्राम्भसि विप्रुषामिव ब्रह्मानन्देऽन्तर्भूतानां सर्वप्राणिगतानामानन्दानां सर्वसाक्षिचैतन्यरूपेणैवाशनमत्र विवक्षितं न प्रकारान्तरेणेत्येतस्यार्थस्य गमक-

१५

२०

२५

३०

३५

विपश्चिता मेधाविना सर्वज्ञेन तद्धि वैपश्चित्यं यत्सर्वज्ञत्वं तेन सर्वज्ञरूपेण ब्रह्मणाऽश्नुत इति। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः।

सर्व एव वल्ल्यर्थो ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितः। स च सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः। पुनस्तस्यैव विस्तरेणार्थनिर्णयः कर्तव्य इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते तस्माद्वा एतस्मादि-
५ त्यादिः। तत्र च सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तं मन्त्रादौ। तत्कथं सत्यं ज्ञानमनन्तं चेत्यत आह। तत्र त्रिविधं ह्यानन्त्यं देशतः कालतो वस्तुतश्चेति। तद्यथा देशतोऽनन्त आकाशो न हि देशतस्तस्य परिच्छेदोऽस्ति। न तु कालतश्चाऽऽनन्त्यं वस्तुतश्चाऽऽकाशस्य। कस्मात्कार्यत्वात्। नैवं ब्रह्मण. आकाशवत्कालतोऽप्यन्तवत्त्वमकार्यत्वात्। कार्यं हि वस्तु कालेन परिच्छिद्यते। अकार्यं च ब्रह्म। तस्मात्कालतोऽप्यनन्तम्। तथा वस्तुतः। कथं पुनर्वस्तुत आनन्त्यं सर्वानन्यत्वात् भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति। वस्त्वन्तरबुद्धिर्हि प्रसक्ता वस्त्वन्तरान्निवर्तते। यतो यस्य
१०

आनन्दगिरिटीका

वृत्तमनुवदत्युत्तरग्रन्थावतारणाय—सर्व एवेत्यादिना। आकाशादिकारणत्वाभिधानेनाऽऽनन्त्यप्रपञ्चः क्रियत इति समनन्तरग्रन्थतात्पर्यं दर्शयितुं पूर्वोक्तेष्वर्थविशेषमनुवदति—तत्र चेति। वस्तुत आनन्त्यं व्याख्यातुं

वनमाला

मित्याशयेनाह—तेन सर्वज्ञस्वरूपेणेति। ननु यः सत्यज्ञानानन्तलक्षणं ब्रह्म प्रत्यक्त्वेन वेद सोऽर्चिरादिवर्त्मना
१५ ब्रह्मलोकं गत्वा तत्रस्थेन सर्वज्ञेन ब्रह्मणा सह दिव्यान्कामानश्नुत इति ऋज्वर्थ एवात्र किमिति न विवक्षित इति चेत्, न; ब्रह्मणा सहेत्यन्वयस्य "सोऽश्नुते सर्वान्कामान्सह" इत्यत्राध्ययनसम्प्रदायप्राप्तवाक्यविच्छेदाननुगुणत्वात् परब्रह्मविदो गत्युत्क्रान्त्याद्यभावस्य चतुर्थाध्याये साधितत्वात् "अशरीरं वाव सन्तम्" इत्यादिश्रुत्या मुक्तस्य शरीरसम्बन्धप्रतिषेधात् "तत्केन कं पश्येत्" इत्यादिश्रुत्या तस्य विशेषविज्ञानप्रतिषेधाच्च "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुत्या सावधारणया ब्रह्मस्वरूपव्यतिरिक्तस्य प्राप्यत्वप्रतिषेधाच्च; तस्मादत्र ऋज्वर्थाविवक्षेत्यन्यत्र विस्तरः।
२० वृत्तानुवादपूर्वकमुत्तरसन्दर्भमवतारयति—सर्व एवेत्यादिना। तद्वृत्तीति। तस्य सूत्रस्य वृत्तिर्विस्तरतो व्याख्या तत्स्थानीय इत्यर्थः। तत्र सृष्टिवाक्येनानन्त्यं प्राधान्येन प्रपञ्च्यत इति तात्पर्यं दर्शयितुं पूर्वोक्तेष्वर्थविशेषमनुवदति—तत्र चेति। आहेत्यनन्तरम् "तस्माद्वै" इत्यादिश्रुतिरिति शेषः। नन्वन्तशब्दस्य नाशे प्रसिद्धत्वादनन्तत्वं नित्यत्वम्; तच्चाकाशादिकारणत्ववचनाद्ब्रह्मणो न सिध्यति, तस्यान्तवत्त्वेऽप्याकाशादेर्वाय्वादिकारणत्ववदाकाशादिकारणत्वोपपत्तेरित्याशङ्क्य आनन्त्यं विभजते—तत्र त्रिविधं हीति। तथा च त्रिविधे आनन्त्ये यद्वस्तुत
२५ आनन्त्यं तदेव सृष्टिवाक्येन तात्पर्यतो निरूप्यत इति भावः। तत्र देशत आनन्त्यस्य हिशब्दसूचितां प्रसिद्धिमाकाशे दर्शयति—तद्यथेति। न हीति। अवकाशात्मना सर्वत्रावस्थानादित्यर्थः। अभावः परिच्छेदः। ननु किं कालतो वस्तुतश्चानन्त्यमप्याकाशे प्रसिद्धम्? नेत्याह—न त्विति। कालत आनन्त्याभावे हेतुं पृच्छति—कस्मादिति। यद्वा आकाशस्य नित्यत्वमभिप्रेत्य नैयायिकः शङ्कते—कस्मादिति। "आत्मन आकाशः सम्भूतः" इति श्रुतिमाश्रित्य परिहरति—कार्यत्वादिति। तथा च कार्याकाशस्यानित्यत्वात्कालत आनन्त्यं नास्ति। वाय्वादेराकाशसमसत्ताकस्य
३० वस्तुनः सत्त्वाद्वस्तुत आनन्त्यमपि तस्य नास्तीति भावः। ननु नित्यत्वेन प्रसिद्धस्य चेदाकाशस्य कालत आनन्त्यं नास्ति, तर्हि ब्रह्मणोऽपि तन्नास्त्येव, नेत्याह—नैवमिति। नन्वकार्यत्वमसिद्धं ब्रह्मणः कारणत्वादाकाशादिवदिति, नेत्याह—अकार्यं चेति। चशब्दः शङ्कानिरासार्थः। आकाशादेरिव ब्रह्मणः सृष्टिप्रलययोरश्रवणान्मूलकारणस्यापि ब्रह्मणः कार्यत्वे कारणानवस्थाप्रसङ्गेनोक्तकारणत्वानुमानस्याप्रयोजकत्वात् "सर्वगतश्च नित्यः" इत्यादौ नित्यत्वश्रवणात् ब्रह्मण उत्पत्तौ सामग्र्यनिरूपणादेश्च हेतोरकार्यं ब्रह्मेत्यर्थः। तथेति। तथा वस्तुतश्चानन्तं ब्रह्मेत्यर्थः।
३५ ननु वस्तुतो ब्रह्मातिरिक्तस्य जगतः सत्त्वात्तस्य वस्तुत आनन्त्यमसिद्धमित्याक्षिपति—कथं पुनरिति। जगतो ब्रह्मापेक्षया वस्त्वन्तरत्वमसिद्धं कल्पितत्वादित्याशयेनाह—सर्वानन्यत्वादिति। ननु सर्वस्य जगतो ब्रह्मानन्यत्वेऽपि ब्रह्मणस्तत्कृतः परिच्छेदः किं न स्यादित्याशङ्क्याह—भिन्नं हीति। भिन्नस्यान्तत्वं प्रसिद्धमित्युक्तम्, तदेव प्रपञ्चयति—वस्त्वन्तरबुद्धिर्हीति। गोत्वसन्निकर्षदशायां गोत्वरूपस्याश्वत्वाद्यपेक्षया वस्त्वन्तरस्य बुद्धिर्जायते; सा च गोसन्निहितायामश्वादिव्यक्तावपि गौरयमपीत्येवमाकारेण प्रसक्ता सती तत्राश्वत्वं दृष्ट्वा निवर्तते नायं गौरिति

बुद्धेर्विनिवृत्तिः स तस्यान्तः। तद्यथा गोत्वबुद्धिरश्वत्वाद्विनिवर्तत इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति। स चान्तो भिन्नेषु वस्तुषु दृष्टो नैवं ब्रह्मणो भेदः। अतो वस्तुतोऽप्यानन्त्यम्। कथं पुनः सर्वानन्यत्वं ब्रह्मण इत्युच्यते, सर्ववस्तुकारणत्वात्। सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म। कार्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेन्न। अनृतत्वात् कार्यवस्तुनः। न हि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति। यतः कारणबुद्धिर्विनिवर्तेत। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुत्यन्तरात्। तस्मादाकाशादिकारणत्वाद्वस्तुतस्तावदनन्तं ब्रह्म। ५ आकाशो ह्यनन्त इति प्रसिद्धं देशतस्तस्य चायं कारणं तस्मात्सिद्धं देशत आत्मन आनन्त्यम्। न ह्यसर्वगतात्सर्वगतमुत्पद्यमानं लोके किञ्चिद्दृश्यते। अतो निरतिशयमात्मन आनन्त्यं देशतस्तथाऽकार्यत्वात्कालतस्तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतोऽत एव निरतिशयसत्यत्वम्।

तस्मादिति मूलवाक्यसूत्रितं ब्रह्म परामृश्यते। एतस्मादिति मन्त्रवाक्येनानन्तरं यथालक्षितम्। यद्ब्रह्माऽऽदौ

आनन्दगिरिटीका १०

वस्तुनोऽन्तवत्त्वं तावदाह—भिन्नं हीत्यादिना। विस्तरेणोक्तमानन्त्यं संक्षिप्याऽऽह—तस्मात्सिद्धमिति। देशतोऽनवच्छिन्नस्याऽऽकाशस्य कारणत्वाद्व्यापकत्वान्निरतिशयमात्मनो देशत आनन्त्यमकार्यत्वाच्च कालत आनन्त्यं तद्यतो व्यावर्तेत तस्य पृथगसत्त्वात्कार्यस्योपादानादन्यत्र सत्त्वायोगाद्वस्तुतोऽप्यानन्त्यं सिद्धमित्यर्थः। अत इति। निरतिशयानन्त्यादेव सत्यत्वमपि सिद्धमन्तवत एव रज्जुसर्पादिवदसत्यत्वादित्यर्थः।

एवं सृष्टिवाक्यतात्पर्यमुक्त्वा पदानि विभजते—तस्मादित्यादिना। अन्त्यकार्यपर्यन्तं परमात्मनः सर्वत्रो- १५

वनमाला

हि प्रसिद्धमेतदित्यर्थः। ततः किम्? तत्राह—यत इति। उक्तं सामान्यन्यायं स्वयमेवोदाहरणनिष्ठतया योजयति—तद्यथेति। अश्वत्वान्तमिति। गोत्वमश्वत्वान्तमश्वत्वावधिकमनुभूयत इति कृत्वा गोत्वमन्तवद्भवतीत्यर्थः। उक्तस्य वस्तुपरिच्छेदस्य घटत्वादिसाधारण्येन प्रसिद्धिमाह—स चेति। एवं वस्त्वन्तरस्यान्तवत्त्वं प्रसाध्य प्रकृतमाह—नैवमिति। भेदपदं भिन्नवस्तुपरम्। अत इति। परमार्थतो ब्रह्मभिन्नवस्त्वभावादित्यर्थः। सर्वस्यैव जगतो ब्रह्मा- २० नन्यत्वस्य पूर्वमभिहितत्वादिति भावः। सर्वानन्यत्वे हेतुं पृच्छति—कथमिति। "आत्मन आकाशः सम्भूतः" इति सृष्टिवाक्येनोत्तरमाह—उच्यत इति। ननु कालपरमाण्वादीनां नित्यत्वात् सर्ववस्तुकारणत्वमसिद्धमित्याशङ्क्याऽऽह—सर्वेषां हीति। कालादेरपि कार्यत्वं वियदधिकरणन्यायसिद्धमिति सूचनार्थो हिशब्दः। "चिदविद्यासम्बन्धः कालः" विष्णुपुराणोक्तरीत्या "ब्रह्मण एव रूपभेदः कालः" इति पक्षयोः कालस्यानादित्वेन कार्यत्वाभावेऽपि न क्षतिः, आद्यपक्षे कालस्याविद्यावत्कल्पितत्वेन वस्त्वन्तरत्वाभावात्, द्वितीये कालस्य ब्रह्मस्वरूपत्वादेव वस्त्वन्तरत्वा- २५ भावादिति मन्तव्यम्। ब्रह्मवद्ब्रह्मकार्यस्यापि परमार्थत्वं मन्वानः शङ्कते—कार्यापेक्षयेति। आरम्भणाधिकरणन्यायेन परहरति—नानृतत्वादिति। यत इति। यतः पृथक्सत्त्वाद्धेतोः कारणबुद्धिः कार्यान्निवर्तेत तत्पृथक्सत्त्वं कार्यस्य नास्तीत्यर्थः। अत एव "मृद्घटः" "मृच्छरावम्" इति विकारेषु कारणबुद्धिरनुवर्तते, तथा जगत्यपि "सन्घटः" "सन्पटः" इत्यादिरूपेण सद्रूपब्रह्मबुद्धिरनुवर्तते, न हि पृथक्सत्त्वयुक्तयोर्घटपटयोर्मध्ये घटबुद्धिः पटे पटबुद्धिर्वा घटेऽनुवर्तते इति भावः। कार्यस्य कारणात्पृथक्सत्त्वाभावे श्रुतिमाह—वाचारम्भणमिति। वस्तुत ३० आनन्त्यनिरूपणमुपसंहरति—तस्मादिति। देशत इति पाठेऽपि देशपदं वस्तुपरम्। ब्रह्मणो देशत आनन्त्यं कैमुतिकन्यायेन साधयति—आकाशो हीत्यादिना। आकाशस्य देशत आनन्त्यं प्रसिद्धमित्ययमर्थः प्रागेवोक्त इति सूचनार्थो हिशब्दः। ननु सर्वगतमाकाशं प्रति ब्रह्मण उपादानकारणत्वेऽपि कथं तस्याकाशापेक्षयापि महत्त्वं सिध्यति स्वन्यूनपरिमाणद्रव्यस्याप्युपादानत्वसम्भवादित्याशङ्क्यां निराकरोति—न हीति। कार्यद्रव्ये स्वन्यूनपरिमाणद्रव्यारभ्यत्वनियमस्य दीर्घविस्तृतदुकूलाद्यारब्धरज्ज्वादौ व्यभिचारात्सर्वगतस्याकाशादेरसर्वगतादुत्पद्य- ३५ मानतायाः प्रत्यक्षादिसिद्धत्वाभावाच्चौचित्येनाकाशस्य ततोऽप्यधिकपरिमाणादेवोत्पत्तिः सिध्यतीत्यर्थः। "ज्यायानाकाशात्" इत्यादिश्रुत्या च ब्रह्मणो निरतिशयमहत्त्वं सिद्धमित्याशयेन फलितमाह—अत इति। अत एवेति। त्रिविधपरिच्छेदशून्यत्वादेवेत्यर्थः। निरतिशयमिति। त्रैकालिकबाधशून्यत्वलक्षणमित्यर्थः।

इत्थं सृष्टिवाक्यतात्पर्यार्थमानन्त्यं निरूप्याक्षराणि व्याचष्टे—तस्मादित्यादिना। यथालक्षितमिति। परा-

**ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ॥**

इति प्रथमोऽनुवाकः

ब्राह्मणवाक्येन सूत्रितं यच्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तरमेव लक्षितं तस्मादेतस्माद्ब्रह्मण आत्मनः आत्मशब्दवाच्यात्।
५ आत्मा हि तत्सर्वस्य, तत्सत्यं स आत्मेति श्रुत्यन्तरादतो ब्रह्माऽऽत्मा। तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपादाकाशः सम्भूतः समुत्पन्नः। आकाशो नाम शब्दगुणोऽवकाशकरो मूर्तद्रव्याणाम्। तस्मादाकाशात्स्वेन स्पर्शगुणेन पूर्वेण च कारणगुणेन शब्देन द्विगुणो वायुः। सम्भूत इत्यनुवर्तते। वायोश्च स्वेन रूपगुणेन पूर्वाभ्यां च त्रिगुणोऽग्निः सम्भूतः। अग्नेः स्वेन रसगुणेन पूर्वैश्च त्रिभिश्चतुर्गुणा आपः सम्भूताः। अद्भ्यः स्वेन गन्धगुणेन पूर्वैश्चतुर्भिः पञ्चगुणा पृथिवी सम्भूता। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान्। स वा
१० एष पुरुषोऽन्नरसमयोऽन्नरसविकारः। पुरुषाकृतिभावितं हि सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतं रेतो बीजं तस्माद्यो जायते सोऽपि तथा पुरुषाकृतिरेव स्यात्। सर्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात्।

सर्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे चाविशिष्टे कस्मात्पुरुष एव गृह्यते? प्राधान्यात्। किं पुनः प्राधान्यम्। कर्मज्ञानाधिकारः। पुरुष एव हि शक्तत्वादर्थित्वादपर्युदस्तत्वाच्चार्थी विद्वान्समर्थः कर्मज्ञानयोरधिक्रियते—"पुरुषे त्वेवाऽऽविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद
१५

आनन्दगिरिटीका

पादानत्वादाकाशभावापन्नात्परमात्मन एव वायुः सम्भूतोऽत एव तद्गुणस्योत्तरत्रानुवृत्तिर्गुणशब्दप्रयोगोऽपि भेदकल्पनया तत्तन्त्रत्वाभिप्रायेण न वैशेषिकपक्षवत्तत्त्वभेदाभिप्रायेण तत्त्वतो भेदे प्रमाणाभावादिति द्रष्टव्यम्।

पुरुषग्रहणस्य तात्पर्यमाह—**सर्वेषामपीति**। शक्तत्वादिति विधिनिषेधविवेकसामर्थ्योपेतत्वादित्युक्तम्। तत्रैतरेयकश्रुतिसम्मतिमाह—**पुरुषे त्वेवेति**। ब्राह्मण्यादिजातिमति मनुष्यादिदेह आविस्तरामतिशयेन प्रकट आत्मा
२०

वनमाला

भृश्यत इत्यनुषङ्गः। उक्तं सर्वनामद्वयार्थमनुवदन्नेव वाक्यार्थमाह—**यदित्यादिना**। ननु प्रतीच एवात्मशब्दवाच्यत्वात्कथं ब्रह्मण आत्मशब्दवाच्यत्वमित्याशङ्क्याह—**आत्मा हीति**। तत् ब्रह्म सर्वस्य भोक्तृवर्गस्य आत्मा वास्तवं स्वरूपमित्यर्थः। तत्र हिशब्दसूचितं मानमाह—**तत्सत्यमिति**। **आत्मेति**। आत्मशब्दवाच्यमित्यर्थः। आकाशस्य लक्षणं स्वरूपं चाह—**आकाशो नामेत्यादिना**। **तस्माच्चेति**। चकार आत्मसमुच्चयार्थः। तथा च
२५ आकाशतादात्म्यापन्नादात्मनः सकाशादेव वायुः सम्भूत इत्यर्थः। एवमुत्तरत्रापि पूर्वपूर्वभूततादात्म्यापन्नादुत्तरोत्तरभूतस्योत्पत्तिरवगन्तव्या "तदभिध्यानादेव तु" इत्यादौ तथा व्यवस्थापितत्वादिति मन्तव्यम्। अग्निशब्दस्तेजःसामान्यपरः। **पृथिव्या इति**। अन्नपञ्चम्याः प्रकृत्यर्थत्वात्पूर्वत्रापि पञ्चम्यः प्रकृत्यर्था एवेति मन्तव्यम्। ओषधयः सम्भूताः, अन्नं सम्भूतम्, पुरुषः सम्भूत इति सर्वत्र क्रियापदं द्रष्टव्यम्। "अन्नात्पुरुषः" इति वाक्योक्तं पुरुषस्यान्नविकारत्वं व्याख्यातुम् "स वा एषः" इत्युत्तरवाक्यं प्रवृत्तम् अतः न पौनरुक्त्यमिति मन्तव्यम्। रसशब्दितस्य
३० रेतसः पुरुषाकृतिनियामकत्वमाह—**पुरुषाकृतीति**। पितुः पुरुषाकृत्या भावितं संस्कृतं सत् पितुरङ्गेभ्यः सकाशात् सम्भूतमित्यर्थः। **तेज इति**। सर्वेषामङ्गानां सारभूतमित्यर्थः। तथा च श्रुतिः—"यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतम्" इति। **तस्मादिति**। पुरुषाकृतिभाविताद्रेतोरूपाद्बीजादित्यर्थः। पुरुषग्रहणस्य तात्पर्यं वक्तुमाक्षेपमवतारयति—**सर्वेषामपीति**। पश्वादीनामपीत्यर्थः। क्रमेण ब्रह्मविकारत्वं ब्रह्मवंश्यत्वम्। समाधत्ते—**प्राधान्यादिति**। यदि प्राधान्यं भक्षणादिविषये तदा पश्वादीनामेव प्राधान्यं स्यादित्याशयेन शङ्कते—**किं पुनरिति**। कर्मज्ञानाधि-
३५ कारित्वमत्र प्राधान्यम्, तच्च मनुष्यस्यैव न पश्वादीनामित्याह—**कर्मेति**। तदुक्तं सूत्रकारेण—'मनुष्याधिकारत्वात्" इति। अधिकारमेव साधयति—**पुरुष एव हीति**। हिशब्दसूचितान्हेतूनाह—**शक्तत्वादर्थित्वाच्चेति**। विधिनिषेधविवेकसामर्थ्योपेतत्वाच्छास्त्रोक्तस्वर्गादिफलार्थित्वसम्भवादित्यर्थः। अपर्युदस्तत्वादिहेत्वन्तरसंग्रहार्थश्चकारः। पुरुषस्य यथोक्तसामर्थ्याद्युपेतत्वे श्रुतिमाह—**पुरुषे त्वेवेति**। ब्राह्मण्यादिजातिमति मनुष्यदेह एवाविस्तारामति-

लोकालोकौ मर्त्येनामृतमीप्सति इत्येवं सम्पन्नः अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानमि"त्यादिश्रुत्यन्तरदर्शनात् ।

स हि पुरुष इह विद्ययाऽन्तरतमं ब्रह्म संक्रामयितुमिष्टस्तस्य च बाह्याकारविशेषेष्वनात्मस्वात्मभाविता बुद्धिरनालम्ब्य विशेषं कञ्चित्सहसाऽन्तरतमप्रत्यगात्मविषया निरालम्बना च कर्तुमशक्येति दृष्टशरीरात्मसामान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्तः प्रवेशयन्नाह—तस्येदमेव शिरः । तस्यास्य पुरुषस्यान्नरसमयस्येदमेव शिरः ५ प्रसिद्धम् । प्राणमयादिष्वशिरसां शिरस्त्वदर्शनादिहापि तत्प्रसङ्गो मा भूदितीदमेव शिर इत्युच्यते । एवं पक्षादिषु योजना । अयं दक्षिणो बाहुः पूर्वाभिमुखस्य दक्षिणः पक्षः । अयं सव्यो बाहुरुत्तरः पक्षः । अयं मध्यमो देहभाग आत्माऽङ्गानाम् । "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः । इदमिति नाभेरधस्ताद्यदङ्गं तत्पुच्छं प्रतिष्ठा । प्रतितिष्ठत्यनयेति प्रतिष्ठा पुच्छमिव पुच्छमधोलम्बनसामान्याद्यथा गोः पुच्छम् । एतत्प्रकृत्योत्तरेषां प्राणमयादीनां

आनन्दगिरिटीका १०

ज्ञानातिशयदर्शनादित्यर्थः । मर्त्येन ज्ञानकर्मादिसाधनेनाक्षयफलं प्राप्तुमिच्छतीत्यर्थः । येन विवेकज्ञानेन पुरुषस्य प्राधान्यं विवक्षितं तत्पश्वादीनां नास्तीत्याह—अथेतरेषामिति ।

कोशपञ्चकोपन्यासस्य तात्पर्यमाह—स हीत्यादिना। पक्षपुच्छशब्दप्रयोगात्सुपर्णाकारक्लृप्तिं दर्शयति। उत्तरत्र तत्कल्पनया बाह्यविषयासङ्गव्यपोहेन बुद्धेरात्मनि स्थिरीकरणार्थं नोपासनविधानमिह विवक्षितम् । उपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोपक्षयान्मध्ये ग्रन्थस्योपासनविधौ तात्पर्येण च वाक्यभेदप्रसङ्गादत एवाङ्गे स्तुतिः १५

वनमाला

शयेन प्रकट आत्मा ज्ञानाद्यतिशयवानित्यर्थः । एतदेवानुभवेन साधयति—स हीत्यादिना । श्वस्तनं परेद्युर्भाविनम् । लोको भोग्यः, तत्साधनमलोकः । मर्त्येन विनाशार्हेण ज्ञानकर्मादिसाधनेनाक्षयं फलमाप्तुमिच्छतीत्यर्थः । साधितं ज्ञानातिशयमुपसंहरति—एवं सम्पन्न इति । येन ज्ञानाद्यतिशयेन पुरुषस्य प्राधान्यं विवक्षितं तत्पश्वादीनां नास्तीत्याह—अथेतरेषामिति । तेषां बुभुक्षादिविषयकज्ञानमेवास्ति न पूर्वोक्तमित्यर्थः । प्रकृतायामपि ब्रह्मविद्यायां २० पुरुषस्यैवाधिकारित्वाच्चात्र पुरुषग्रहणमित्याशयेनाह—स हीति। ननु यद्यत्र सर्वान्तरं ब्रह्म प्रापयितुमिष्टः पुरुषस्तर्हि तं प्रति तादृशब्रह्मोपन्यास एवोत्तरसन्दर्भे कार्यो न कोशोपन्यास इत्याशङ्क्य तदुपन्यासस्य तात्पर्यमाह—तस्य चेति । विद्याधिकारिणः पुरुषस्येत्यर्थः । चकारोऽवधारणार्थः सन्सप्तम्या सम्बध्यते । चिदात्मापेक्षया बाह्या येऽचिदात्मानः कल्पिताकारविशेषाः कोशास्तेष्वेवानात्मस्वनादिकालमारभ्याहमित्यात्मत्वभावनोपेता बुद्धिः कञ्चिदुपायविशेषमनालम्ब्य सहसा सर्वान्तरप्रत्यगात्मविषया पूर्वमात्मत्वेन गृहीतकोशरूपालम्बनशून्या च कर्तुमशक्येति २५ कृत्वा प्राणमयादिषु शिरआदिमत्त्वेन दृष्टस्थूलशरीरसाम्योपन्यासेन अन्योऽन्तर आत्माऽन्योऽन्तर आत्मेत्यादिनाऽन्तः प्रवेशयन्नाहेत्यर्थः । यथा लोके चन्द्रं बुबोधयिषुः शाखाग्रमालम्ब्य बोधयति "शाखाग्रं चन्द्रः" इति । स च बोद्धा दिगन्तराणि त्यक्त्वा शाखाग्रं पश्यन् तद्द्वारा चन्द्रं पश्यति, तद्वदन्नमयादिषु कोशेषु क्रमेणात्मत्वेनोपदिष्टेषु सत्सु बाह्ये पुत्रादौ पूर्वपूर्वकोशे चात्मत्वबुद्धिं क्रमेण परित्यज्य सर्वकोशाधिष्ठानभूतं सर्वान्तरं ब्रह्माहमस्मीति प्रतिपद्यते मुमुक्षुरित्यर्थः । ब्रह्मविद्योपायविशेषत्वेन कोशपरम्परा शाखाग्रस्थानीयोपदिश्यत इति दृष्टान्तदार्ष्टान्तिकयोः ३० सङ्गतिः । एवं कोशेषु पक्षपुच्छादिमत्त्वोपन्यासात्सुपर्णाकारतयोपास्तयो विधीयन्ते । ता अप्युपास्तयश्चित्तैकाग्र्यद्वारा ब्रह्मविद्याशेषभूता एव न स्वतन्त्राः । तासु फलश्रवणं प्रयाजाद्यङ्गवाक्येषु फलश्रवणवदर्थवादमात्रमित्यादिकं वार्तिकादौ द्रष्टव्यमिति संक्षेपः । अन्नमयस्य प्रसिद्धं शिर एव शिर इत्यत्रावधारणस्य तात्पर्यमाह—प्राणमयादिष्विति । एवमिति । अयमेव दक्षिणः पक्ष इत्यादिप्रकारेणान्नमयपर्याये सर्वत्रावधारणं योजनीयमित्यर्थः । ननु बाह्वोर्दक्षिणत्वादेरनियतत्वात्कथं दक्षिणो बाहुरित्युच्यते ? तत्राह—पूर्वाभिमुखस्येति । श्रौतस्मार्तेषु कर्मसु ३५ पूर्वाभिमुखत्वस्यौत्सर्गिकत्वादिति भावः । आत्मेति । अयं मध्यमो देहभागोऽङ्गानामात्मेत्यवगन्तव्यमित्यत्र श्रुत्यन्तरमाह—मध्यं हीति । मध्यमभागस्य सर्वाङ्गस्पर्शितया सर्वाङ्गव्यापकत्वरूपमात्मत्वं तस्य युक्तमिति हिशब्दार्थः । प्रतिष्ठापदं स्थितिसाधनत्वं वददाधारपरमित्याह—प्रतितिष्ठतीति । नाभेरधोभागे पुच्छदृष्टिकरणे इवशब्दसंगृहीतं सामान्यमाह—अधोलम्बनेति । एतत्प्रकृत्येति । अन्नमयस्य पुरुषविधत्वं शिरआदिमत्त्वलक्षणं प्रकृत्य "तस्य पुरुष-

रूपकत्वसिद्धिः । मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् । तदप्येष श्लोको भवति । तत्तस्मिन्नेवार्थे ब्राह्मणोक्तेऽन्नमयात्मप्रकाशक एष श्लोको मन्त्रो भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये प्रथमोऽनुवाकः

५　　　　आनन्दगिरिटीका

परार्थत्वादिति न्यायेन यथा प्रयाजादिषु फलश्रवणमर्थवादस्तथाऽन्नमयादिप्रतिपत्तेरपि फलश्रवणमर्थवाद एव, तत्तद्बुद्धिस्थिरीकारस्य पूर्वपूर्वबुद्धिविलापनेनाऽऽत्मनः प्रतिपत्तिशेषत्वादिति द्रष्टव्यम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
द्वितीयब्रह्मवल्ल्यां प्रथमोऽनुवाकः

१०　　　　वनमाला

विधताम्, अन्वयं पुरुषविधः" इति वक्ष्यमाणं पुरुषविधत्वं प्राणमयादीनां सिध्यतीत्यर्थः । मूषेति । अन्तः प्रतिमाकारच्छिद्रवती मृन्मयी प्रतिकृतिर्मूषा, तस्यां निषिक्तं द्रुतं ताम्रादिकं यथा प्रतिमाकारं भवति, तथा शिरआदिमत्यन्नमयकोशेऽन्तर्व्याप्य विद्यमानं प्राणमयादिकमपि तदाकारं भवतीत्यर्थः । अत्रान्नमयकोशस्य विराडात्मनोपास्यत्वं विवक्षितमिति मत्वा विराडात्मन्यन्नमयकोशे मन्त्रमवतारयति—तदप्येष इति ।

१५　इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां प्रथमोऽनुवाकः

## अथ वार्तिके ब्रह्मवल्ल्यां प्रथमोऽनुवाकः

प्रमादोत्थादपन्यायाद्गुरुशिष्याभिसङ्गतेः । प्रसक्तो यस्तयोर्द्वेषस्तच्छान्त्यै शान्तिरुच्यते ॥ १ ॥
स्याज्ज्ञानं फलवद्यस्माच्छान्तान्तःकरणे गुरौ । तस्येश्वरेणानन्यत्वाद्भूयः शान्तिरियं ततः ॥ २ ॥
भाव्यं तु परिहाराय तन्मामावीदितीरणम् । आत्मनो ब्रह्मतां यस्मात्स्वतः सिद्धां प्रवक्ष्यति ॥ ३ ॥
कामादयो यदज्ञानात्तज्ज्ञानात्स्यादकामता । अतः परं तदैकात्म्यं वक्ष्यतेऽज्ञानघस्मरम् ॥ ४ ॥
नानागतमनैतिह्यं प्रत्यगेकमविक्रियम् । अनाद्येयमहेयं यन्नमस्तस्मै सदादृशे ॥ ५ ॥ ५
यावन्त्युपासनान्यादावविरुद्धानि कर्मभिः । संहिताविषयादीनि स्युस्तान्यभ्युदयाय तु ॥ ६ ॥
न चैतावदवष्टम्भात्कामकर्मोद्भवत्वतः । सर्वानर्थैकबीजस्य मोहस्यास्ति निराक्रिया ॥ ७ ॥
तस्मात्संसारमूलस्य भृशमुच्छित्तयेऽधुना । यथाभूतार्थबोध्यात्मज्ञानं सम्यक्प्रवक्ष्यते ॥ ८ ॥
नित्यकर्माद्यनुष्ठानाच्छुद्धान्तःकरणः पुमान् । [1]विरक्तश्चाग्रजाल्लाभात्स्वप्नपुत्रादिलाभवत् ॥ ९ ॥

संहितोपनिषदारम्भे साधारणी शान्तिरुदाहृता सम्प्रति तदवसाने सगुणविद्यानामुक्तत्वात्तदसाधारणीं शान्ति- १०
मुदाहरति—प्रमादेति । अपरविद्यार्थिनः शिष्यस्य तदुपदेष्टुराचार्यस्य च परस्परसङ्गतिं निमित्तीकृत्य प्रमाद-
कृतादपराधान्न्यायातिक्रमसम्भवाद्यस्तयोर्मिथो द्वेषः शङ्क्यते तदुपशान्त्यर्थं शं नो मित्र इत्याद्या शान्ति-
रिहोक्तेत्यर्थः ॥ १ ॥

गुरुशिष्ययोर्मिथो द्वेषे स्थितेऽपि को दोषः स्यात्तत्राऽऽह—स्यादिति । गुरौ प्रसन्नचित्ते सत्येव तदुपदिष्टं
ज्ञानं तत्प्रसादादासादितं रागद्वेषादिरहितस्य शिष्यस्य सफलं सम्पद्यते तस्मात्तयोर्द्वेषस्थितिरयुक्तेत्यर्थः । आचार्यस्य १५
बुद्धिप्रसादार्थं शिष्येण प्रयत्नवता भवितव्यमित्यत्र हेतुमाह—तस्येति । सह नाववत्वित्यादिशान्तिपाठस्य तात्पर्य-
माह—भूय इति । यतस्तदपरं ब्रह्म मामाचार्यं चावीदरक्षदित्येवमीरणमिह मध्यमायां शान्तौ दृश्यते । ततः
सगुणविद्याविषयशान्तेरति(प्र)वृत्तत्वादियं शान्तिर्भूयो निर्दिश्यमाना निर्गुणविद्याविषया भविष्यति । तत्रापि भाव्यं
सम्भावितमेवोपसर्गजातमतस्तत्परिहारार्थं पुनः शान्तिरर्थवतीत्यर्थः । कुत्र तर्हि निर्गुणविद्या निगद्यते तत्राऽऽह—
आत्मन इति । आत्मनस्त्वंपदलक्ष्यस्य तत्पदलक्ष्यब्रह्मतां नित्यसिद्धामविद्यातिरोधानव्यावृत्त्यर्थं यतो ब्रह्मविदित्याद्या २०
श्रुतिर्वक्ष्यति । अतो निर्गुणविद्या वल्लीद्वये भविष्यतीत्यर्थः ॥ २-३ ॥

सगुणविद्यामुक्त्वा निर्गुणविद्यां वक्तुमारभमाणो नमस्कारव्याजेन वल्लीद्वयार्थं संक्षिप्य कथयति ॥ ४ ॥

नानागतमिति । कालत्रयानवच्छिन्नं कूटस्थमहेयमनुपादेयं चिदेकतानमात्मतत्त्वं द्वाभ्यां वल्लीभ्यां
प्रतिपाद्यं तस्मै त्रिविधोऽपि प्रह्वीभावो भक्तिश्रद्धाभ्यां भवत्वित्यर्थः ॥ ५ ॥

नमस्कारव्याजेन वल्लीद्वयस्य तात्पर्यमुक्त्वा प्रागुक्तोपासनावशादेवापेक्षितमोक्षसिद्धेरलमात्मज्ञानार्थेनोप- २५
निषदारम्भेणेत्याशङ्क्य पूर्वोक्तान्युपासनान्यनूद्य तेषामभ्युदयफलत्वमेव न मुक्तिफलत्वमित्येतदाह—यावन्तीति॥ ६॥

उक्तानां केवलोपासनानां मुक्तिफलत्वाभावेऽपि कर्मसहितानां तासां मुक्तिफलत्वमित्याशङ्क्याऽऽह—
न चेति। एतावच्छब्देन कर्मोपासनसमुच्चयो गृह्यते तद्बलेन सर्वस्मिन्नर्थे निरपेक्षकारणस्याज्ञानस्य नैव निवृत्तिस्तस्य
संसारकारणकामकर्मप्रसवहेतुत्वात्तस्य सकार्यस्य विरोधिनो ज्ञानादेव निवृत्तिर्युक्तेत्यर्थः ॥ ७ ॥

यतो ज्ञानादेवाज्ञानं निवर्तते ततस्तन्निवर्तकज्ञानार्थत्वेनोपनिषदारम्भः स्यादित्याह—तस्मादिति ॥ ८ ॥ ३०

ज्ञानार्थत्वेनोपनिषदारम्भेऽपि ज्ञानाधिकारी कः स्यादित्याशङ्क्य सर्वकर्मत्यजः संन्यासिनस्तदधिकारं
वक्तुमन्तःकरणशुद्धिवैराग्ययोरधिकारिविशेषणत्वमाह—नित्येति ॥ ९ ॥

---

१. अग्रजात्—अग्रे जाग्रत्यां जायमानात् ।

प्रत्यक्षागमलिङ्गैर्हि यद्यत्कर्मोद्भवं फलम् । तत्क्षयिष्ण्विति विज्ञाय विरक्तो नरकाद्यथा ॥१०॥
अपास्ताशेषदोषं यत्सर्वकामनिरासकृत् । तदनाप्तं तमोमात्रात्प्रसिद्धचैव हि तद्यतः ॥११॥
तदनाप्तिकृदज्ञानध्वस्तयेऽल न कारकम् । प्रत्यग्ज्ञानेऽधिकार्यस्मात्त्यक्तपूर्वोक्तसाधनः ॥१२॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥१३॥
५ त्यज धर्ममधर्मं च तथा सत्यानृते अपि । न्यासो ब्रह्मेति च प्राह तैत्तिरीयश्रुतिस्तथा ॥१४॥
क्षयिष्णुसाध्यं विज्ञाय निःशेषं कर्म साधनम् । तत्त्यागसाधनस्तस्मात्प्रत्यग्ज्ञाने प्रवर्तते ॥१५॥
उत्पत्त्यादि स्वतश्चेत्स्यात्कर्मणा किं प्रयोजनम् । स्वत एव न चेत्तत्स्याद्वद स्यात्कर्मणाऽत्र किम् ॥१६॥
उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते । कर्मण्यपेक्षा तस्यैव घटोत्पत्तौ मृदो यथा ॥१७॥
नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥१८॥
१० कर्तव्यता न साध्यस्य [1]विदितत्वाद्विधीयते । दुःखत्वाच्च न यागस्य ह्युपायस्त्ववबोध्यते ॥१९॥
विजिज्ञासस्व तदिति ब्रह्मज्ञाने प्रवर्तकम् । जिज्ञास्यलक्षणोक्तिः स्याद्यतो वा इति च श्रुतिः ॥२०॥

शुद्धबुद्धेर्वैराग्यं कथं सिध्यतीत्याशङ्क्य कर्मफलस्यानित्यत्वदर्शनादित्याह—प्रत्यक्षेति । कस्यचित्प्रत्यक्षेण कस्यचिद्यत्कृतकं तदनित्यमित्यनुमानेन कस्यचित्तद्यथेहेत्यादिनाऽऽगमेन कर्मफलस्य क्षयदर्शनात्ततो नरकादिव विरक्तो भवतीत्यर्थः ॥ १० ॥

१५ साधनचतुष्टयसम्पन्नस्य संन्यासिनो जिज्ञासोरेव मोक्षसाधनज्ञानेऽधिकारितेत्यत्र हेत्वन्तरमाह—अपास्तेति । मोक्षस्याज्ञानव्यवहितत्वेन नित्यसिद्धत्वाज्ज्ञानार्थिनः संन्यासिनस्तत्राधिकारो भवतीत्यर्थः । तच्च तमः शब्दितमज्ञानं मानायोग्यत्वादनुभवादेव सिध्यतीत्यभिप्रेत्याऽऽह—प्रसिद्धचैवेति ॥ ११ ॥

मोक्षव्यवधिभूतस्याज्ञानस्य कर्मैव निवर्तकं न ज्ञानमित्याशङ्क्य ज्ञानस्य तद्विरोधित्वात्कर्मणस्तदविरोधित्वान्नैवमित्याह—तदनाप्तीति । ज्ञानस्याज्ञाननिवर्तकत्वात्कर्मणस्तदनिवर्तकत्वादस्मादेव हेतोस्त्यक्तकर्मा
२० पूर्वोक्तविशेषणः संन्यासी ज्ञानाधिकारीत्युपसंहरति—प्रत्यगिति ॥ १२ ॥

संन्यासिनो ज्ञानाधिकारित्वे श्रुतिस्मृत्यानुकूल्यं दर्शयति—त्याग इति ॥ १३-१४ ॥

श्रुतिस्मृतिभ्यां फलितमर्थं कथयति—क्षयिष्ण्विति ॥ १५ ॥

किञ्चोत्पत्त्याप्तिविकृतिसंस्कृतीनामन्यतमस्य मोक्षे स्वतः सत्त्वे स्वतोऽसत्त्वे च कर्मवैयर्थ्यात्कर्मत्यजो मुमुक्षुता विवक्षितेत्याह—उत्पत्त्यादीति ॥ १६ ॥

२५ मुक्तौ कर्मानर्थक्ये कुत्र तदर्थवत्त्वं तत्राऽऽह—उत्पत्त्यादौ त्विति ॥ १७ ॥
उत्पत्त्यादि स्वतश्चेत्स्यादित्यादिनोक्तं प्रपञ्चयति—नित्यमिति ॥ १८ ॥

ननु कर्मकाण्डस्य कर्मनियोगनिष्ठत्वेन तत्र प्रामाण्यवज्ज्ञानकाण्डस्यापि ज्ञाननियोगनिष्ठतया तत्र प्रामाण्यं नैयोगिकज्ञानसाध्यत्वान्मुक्तेर्न तत्र कर्मत्यजोऽधिकारः सिध्येदित्याशङ्क्य दृष्टान्तं दूषयति—कर्तव्यतेति । स्वर्गादिफलस्य पुरुषार्थत्वेन स्वानुभवसिद्धत्वान्न तत्र कर्तव्यता वैधी । यागादेरपि वास्तवार्थस्य क्लेशात्मकत्वात्कर्तव्यत्वा-
३० योगान्न तत्र कर्तव्यत्तां वक्तुं शक्यते । अतो यागादेरिष्टसाधनत्वमात्रमज्ञातं कर्मकाण्डेन बोध्यते । तथा ज्ञानकाण्डेन अपि ब्रह्मात्मत्वमज्ञातमेव बोध्यमिति कर्तव्यतापरपर्यायस्य नियोगस्यानवकाशत्वाज्ज्ञानादेव केवलात्कैवल्यमिति कर्मत्यजस्तत्राधिकारसिद्धिरित्यर्थः ॥ १९ ॥

काण्डद्वये नियोगानङ्गीकारे कर्मणि ज्ञाने वा किं प्रवर्तकमित्याशङ्क्य रागस्य प्रवर्तकत्वमभिप्रेत्याऽऽह—विजिज्ञासस्वेति । यस्मिन्ब्रह्मविशेषिते ज्ञाने रागस्य प्रवर्तकत्वमिष्टं तत्र ब्रह्मणो विशेषणस्य किं लक्षणमित्या-

३५ १. अनुभवसिद्धत्वात् ।

कोशप्रत्यक्प्रवेशेन पूर्वपूर्वप्रहाणतः। कारकादिनिषेधेन ह्युपायो ब्रह्मवेदने ॥२१॥
अविद्योद्भूततृष्णेन पुंसा यत्कल्पितं फलम्। अनन्तफलसिद्धयर्थं तदनूक्तिः प्रवृत्तये ॥२२॥
कर्तुः कर्माणि कार्यार्थमनात्मफलदानि हि। पुरोक्तानि यतो नासावन्यथाऽतः प्रवर्तते ॥२३॥
क्षयिष्णु साधनाधीनं फलं बुद्ध्वा वितृष्णतः। कामहेतोरनुच्छित्तेरपरात्परमीप्सति ॥२४॥
साध्यसाधनवद्वाक्यं तद्विरुद्धार्थसिद्धये। प्राह ब्रह्मविदाप्नोति श्रुतिः प्रत्यक्प्रवेशिनी ॥२५॥ ५
शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब। मातेव प्रेरयेद्बालं स[त]दसम्भाव्यसिद्धये ॥२६॥
साध्यसाधनसम्बन्धात्प्रसक्ता येह दोषधीः। सा चैकरूपविज्ञानशिखिप्लुष्टा विनङ्क्ष्यति ॥२७॥
मा भूदण्वपि मे दुःखं सुख्येव स्यामहं सदा। इति स्वतोऽभिलापोऽयं सत्येव विषये भवेत् ॥२८॥

शङ्कयाऽऽह—जिज्ञास्येति। जगदुत्पत्तिस्थितिलयकारणत्वं तस्य तटस्थलक्षणं सच्चिदानन्दात्मकं स्वरूपलक्षणं श्रुत्युक्तमित्यर्थः ॥ २० ॥ १०

यथोक्तस्य ब्रह्मणो ज्ञाने साधनं दर्शयति—कोशेति। पूर्वपूर्वस्यान्नमयादिकोशस्य दृश्यत्वपरिच्छिन्नत्वादिना त्यागेन क्रियाकारकफलात्मकद्वैतनिरासेन कार्यकारणात्मककोशेषु प्रत्यक्त्वेनैवाऽऽत्मनो निश्चयेन पदार्थज्ञानं ब्रह्मज्ञाने साधनमतस्तदुपायचिन्तया न मनः खेदनीयमित्यर्थः ॥ २१ ॥

वल्लीद्वयतात्पर्यादि च दर्शयित्वा प्रतिपदं व्याख्यामारभमाणो ब्रह्मविदाप्नोति परमिति प्रथमं प्रयोजनोपादानस्य तात्पर्यमाह—अविद्येति। स्वात्मभूतमेव नित्यप्राप्तं फलमविद्यातिरोधानादिदं मे स्यादित्युद्भूततृष्णावता १५ मुमुक्षुणा परिच्छिन्नत्वेन प्राप्यत्वेन कल्पितं ब्रह्मज्ञानप्रयोजनं ब्रह्मविदाप्नोति परमित्यनूद्यते। तदनुवादश्च तदुपाये ज्ञाने मुमुक्षुप्रवृत्तिद्वारा परिपूर्णस्य फलस्य स्वरूपभूतस्याऽऽविर्भावाय भविष्यतीत्यर्थः ॥ २२ ॥

मोक्षसाधने मुमुक्षुप्रवृत्त्यर्थं मोक्षफलानुवादेऽपि पुरुषार्थसाधनत्वेन कर्मणां प्रसिद्धत्वात्तेष्वेव मुमुक्षुप्रवृत्तिरित्याशङ्कयाऽऽह—कर्तुरिति। कार्यं साध्यं फलं तत्सिद्धयर्थं यानि कर्माणि क्रियन्ते तानि कर्तुर्निर्वर्तकस्य यदनात्मभूतं फलं स्वर्गपशुपुत्रादि तत्प्राप्तिसाधनान्येव पुरा कर्मकाण्डे प्रोक्तानि। कर्मफलस्य चतुर्विधत्वादात्मस्वभावभूताया २० मुक्तेस्तद्विलक्षणत्वात्, यस्मादेवं तस्मादसौ मुमुक्षुर्न कर्मसु रागेण प्रवर्तते। किंत्वन्यथा कर्मपरिहारद्वारेण मोक्षेच्छया ज्ञाने प्रवृत्तो भवतीत्यर्थः ॥ २३ ॥

मुमुक्षुर्मोक्षेच्छया कर्माणि परित्यज्य ज्ञाने प्रवृत्तो भवतीत्युक्तं प्रपञ्चयति—क्षयिष्ण्विति। साधनसाध्यं फलमैहिकमामुष्मिकं च क्षयशीलं विनाशीति ज्ञात्वा ततः साधनाद्वैराग्यस्य सिद्धत्वात्कर्मभिरेव रागद्वेषादिहेतोरज्ञानस्यानाच्छिन्नत्वादपरात्कर्मफलात्कार्यकारणप्रपञ्चाच्च परं मोक्षं कार्यकारणविलक्षणमाप्तुमिच्छति तया २५ चेच्छया मोक्षौपयिकज्ञानसाधनश्रवणादौ मुमुक्षुर्व्यापृतो भवतीत्यर्थः ॥ २४ ॥

शास्त्रादौ फलसूत्रणमुपपन्नमित्युपसंहरति—साध्येति। कैवल्यं साध्यं निरतिशयफलं साधनं ज्ञानं तदुभयमत्र प्रतिभातीति तद्विशिष्टमिदं ब्रह्मविदाप्नोति परमिति वाक्यं तच्च सूत्रभूतं साध्यसाधनाभ्यां विरुद्धार्थस्य कैवल्यस्य सिद्धयर्थं प्रकृता श्रुतिर्मुक्तिफलोक्तिद्वारेण प्रतीचोच्छां जनयन्ती तत्र प्रविष्टेव हृष्टा यथोक्तं वाक्यं प्राहेति योजना ॥ २५ ॥ ३०

सूत्रे फलकथनं प्रवृत्त्यर्थमित्येतद्दृष्टान्तेन स्पष्टयति—शिखेति। यथा बालमौषधपाने बालाभिप्रेतफलोक्तिद्वारेण माता प्रेरयति तथा ज्ञानातिरिक्तसमस्तसाधनासम्भाव्यमोक्षसिद्धयर्थं श्रुतिर्मुमुक्षुं प्रेरयतीत्यर्थः ॥ २६ ॥

साधनान्तरसाध्यत्वाभावेऽपि ज्ञानसाध्यत्वाभ्युपगमान्मुक्तेरनित्यत्वं प्राप्तमित्याशङ्कयाऽऽह—साध्येति। इहेति मोक्षोक्तिः। साध्यसाधनादिव्यवहारस्याविद्याकृतत्वादसाध्यसाधनमेकरूपं ब्रह्मेति ज्ञाने सत्युक्ताशङ्कानिवृत्तिरित्यर्थः ॥ २७ ॥ ३५

केचित्तु मोक्षमेव नानुमन्यन्ते तदिच्छा तु दूरापास्तेति तत्राऽऽह—मा भूदिति ॥ २८ ॥

अज्ञातमोक्षरूपोऽपि कैवल्याय प्रवर्तते । अलं यथोक्तकामेद्धधिषणो भवभीषितः ॥२९॥
प्रवृत्तिजनकं यस्मात्सर्वत्रैव प्रयोजनम् । श्रुतिर्ब्रह्मविदाप्नोतीत्याह पुंसः प्रलुब्धये ॥३०॥
फलश्रुत्यङ्कुशाकृष्टः श्रवणादौ प्रवर्तते । तत्पूर्वकं यतो ज्ञानं श्रुतिश्चैवमभाषत ॥३१॥
लौकिकी वैदिकी चाथ प्रवृत्तिर्येह काचन । नर्ते प्रयोजनं यस्मात्तदेवातः प्रवृत्तिकृत् ॥३२॥
५ ब्रह्मविद्ब्रह्म वेत्तीति यः स आप्नोति तत्परम् । सत्यादिलक्षणं ब्रह्म वक्ष्यते तदृचा स्फुटम् ॥३३॥
फलोक्तिः परमाप्नोतीत्या[त्मा]त्ता ब्रह्मविदुच्यते। सामर्थ्याद्ब्रह्मविद्या तु परस्यावाप्तिसाधनम् ॥३४॥
स्वर्गं यथाऽग्निहोत्रेण यजमानः प्रसाधयेत् । परावाप्तिं तथा कुर्याद्ब्रह्मविद्ब्रह्मविद्यया ॥३५॥
ब्रह्मैवाऽत्र परं ग्राह्यं तज्ज्ञानं नान्यसिद्धये । अन्यज्ज्ञानं हि नान्यस्य क्वचिदप्याप्तये यतः ॥३६॥
देशकालादिसम्भेदपूर्विकाऽवाप्तिरिष्यते । देशकालाद्यभिन्नस्य कथं सेत्युच्यते यथा ॥
१० सर्वात्मनोऽप्यनाप्तिः स्याद्दशमस्येव मोहजा ॥३७॥
पञ्चस्वन्नमयाद्येषु ह्यहमस्मीति विभ्रमात् ॥३८॥
दशमोऽस्मीत्यतो ज्ञानादज्ञानध्वस्तिवर्त्मना । दशमाप्तिवदाप्तिः स्याद्ब्रह्मणोऽज्ञानहानतः ॥३९॥

यथोक्तेच्छाविषयस्य मोक्षत्वेन ज्ञातत्वं नास्तीत्याशङ्क्याऽऽह—अज्ञातेति । स विषयो यद्यपि मोक्षत्वेन न ज्ञातस्तथाऽपि यथोक्तेच्छा संसाराद्विरक्तस्य मोक्षफलकात्मज्ञानप्रवृत्तिहेतुर्भवतीत्यर्थः ॥ २९ ॥

१५ प्रथममेव प्रयोजनप्रदर्शनस्य तात्पर्यमुक्तमुपसंहरति—प्रवृत्तीति ॥ ३० ॥

फलश्रवणादुपाये प्रवृत्तिरित्येतदेव स्पष्टयति—फलश्रुतिरिति । किमिति श्रवणादौ साधनान्तरं परित्यज्य प्रवर्तते तत्राऽऽह—तत्पूर्वकमिति । श्रवणादिपूर्वकमेव ज्ञानं लभ्यते यतः श्रोतव्य इत्याद्या श्रुतिरेवं श्रवणादिपूर्वकमात्मज्ञानमुक्तवतीत्यर्थः ॥ ३१ ॥

यद्यपि प्रयोजनमनुद्दिश्येत्यादिन्यायेन प्रयोजनाधीना लौकिकी प्रवृत्तिस्तथाऽपि वेदवशादेव वैदिकी
२० प्रवृत्तिरन्तरेणापि प्रयोजनं स्यादित्याशङ्क्याऽऽह—लौकिकीति ॥ ३२ ॥

शास्त्रादौ प्रयोजनोक्तेस्तात्पर्यमुक्त्वा वाक्यं योजयति—ब्रह्मविदिति। किं तद्ब्रह्म वेद्यमित्याशङ्क्याऽऽह—सत्यादीति ॥ ३३ ॥

तत्रैव सूत्रवाक्ये विभागं दर्शयति—फलोक्तिरिति । परस्य ब्रह्मणोऽवाप्तिसाधनं ब्रह्मविद्येति कथमवगम्यते तत्राऽऽह—सामर्थ्यादिति। ब्रह्मविद्विद्वान्परं ब्रह्म प्राप्नोतीत्ययं सम्बन्धो न सिध्यति यदि ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनं
२५ न स्यात्तस्माच्छ्रुत्यर्थानुपपत्त्या साधनत्वसिद्धिरित्यर्थः ॥ ३४ ॥

ब्रह्मज्ञानाद्ब्रह्मप्राप्तिरित्युक्तमर्थं दृष्टान्तेन साधयति—स्वर्गमिति ॥ ३५ ॥

ब्रह्मवित्परमाप्नोति इति परावाप्तेरुक्तत्वात्कथं ब्रह्मविद्यया ब्रह्मप्राप्तिर्व्याख्यायते तत्राऽऽह—ब्रह्मैवेति । तत्र हेतुमाह—तज्ज्ञानमिति । ब्रह्मज्ञानं ब्रह्मणोऽन्यस्य न प्रापकमित्येतदुपपादयति—अन्यज्ज्ञानं हीति । क्वचिदपीति लोकवेदयोरुक्तिः ॥ ३६ ॥

३० ब्रह्मावाप्तिमाक्षिपति—देशेति । उभयत्रादिशब्देन वस्तु गृह्यते । यथोक्तस्य ब्रह्मणो मुख्यावाप्त्ययोगेऽपि यथौपचारिकी सा घटते तथोच्यत इत्याह—उच्यत इति। यथा लोके दशमस्य माणवकस्य दशमत्वानाप्तिरज्ञानहेतुकभ्रान्तिप्रभावादुपलभ्यते तथैव परिपूर्णस्यापि तत्त्वस्य मोहवशादनाप्तिसम्भवात्तन्निवृत्त्या प्राप्तिरुपचरितेत्यर्थः ॥३७॥

मोहवशादप्राप्तिरित्युक्तमंशं विशदयति—पञ्चस्विति । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु कार्यकारणात्मसु प्रत्येकमहमस्मीति मोहजन्याद्विभ्रमात्प्रसिद्धा ब्रह्मानाप्तिरित्यर्थः ॥ ३८ ॥

३५ ब्रह्मानाप्तिरज्ञानादिति दृष्टान्तेनोक्त्वा ज्ञानात्तदाप्तिरित्येतदपि दृष्टान्तेन दर्शयति—दशमोऽस्मीति ॥ ३९ ॥

विभिन्नवेत्तृवेद्यादौ गौणं ब्रह्म यतस्ततः । अभिन्नवेत्तृवेद्यादि ग्राह्यं मुख्यार्थसिद्धये ॥४०॥
अन्यदृष्टाविवातोऽत्र न नियोगो मनागपि । मोहप्रध्वंसमात्रेण निवृत्ते रोगहानिवत् ॥४१॥
कर्तृतां प्रत्यगालिङ्ग्य योऽकर्त्रात्मानमीप्सति । उल्कापिशाचं सोऽभ्येति शीतार्तः पावकेच्छया॥४२॥
करोमीति धिया चैतद्ब्रह्मास्मीति हि लभ्यते । ब्रह्मालाभेऽस्य को हेतुर्न ह्यतोऽन्योऽस्त्यदर्शनात्॥४३॥
तस्मादविद्यासम्भूतकर्तृ प्रत्यगविक्रियम् । अविद्यानर्थतत्कार्यप्रत्याख्यानेन बोध्यते ॥४४॥ ५
कर्तुर्ज्ञातुर्हि या दृष्टिः सामान्याद्यर्थसंश्रया । तत्प्रत्यगात्मदृष्ट्या तां प्रत्याख्यायाऽश्नुते परम्॥४५॥
अशेषानन्दवल्ल्यर्थसूत्रमाद्यमिदं वचः । यस्मात्तस्मात्तदर्थस्य ह्याविष्कृद्ध्युदीर्यते ॥४६॥
विशेषणविशेष[ष्य]त्वात्सत्यादीन्यत एव च । चत्वार्येकविभक्तीनि नीलरक्तोत्पलादिवत् ॥४७॥
वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितम् । तस्माद्विशेष्यं विज्ञेयं ततोऽन्यत्स्याद्विशेषणम् ॥४८॥

मुख्याप्तिं विहाय किमित्याप्तिरौपचारिकी गृह्यते तत्राऽऽह—**विभिन्नेति**। प्रमाता प्रमाणं प्रमेयमित्यादौ १० द्वैते भिन्नेऽपारमार्थिके ब्रह्मणोऽर्थान्तरभूते स्वीकृते ब्रह्म गौणममुख्यं यस्मादापद्यते तस्माद्देशतः कालतो वस्तुतश्चानवच्छिन्नस्य मुख्यस्य ब्रह्मशब्दार्थस्य सिद्ध्यर्थमभिन्नं च वस्तुतो भेदरहितं प्रमात्रादि ग्रहीतव्यं तस्माद्विभागस्याविद्याकृतत्वाद्विद्योत्पत्तौ तन्निवृत्तौ गौण्येव ब्रह्मप्राप्तिरित्यर्थः ॥ ४० ॥

ब्रह्मविदोऽपि ब्रह्मध्याने नियोगाङ्गीकारात्तदधीना ब्रह्मप्राप्तिः स्वर्गादिप्राप्तिवन्मुख्यैवेत्याशङ्क्याऽऽह—**अन्यदृष्टाविति**। यथाऽन्यदृष्टावविद्यायां सत्यां कर्मणि नियोगोऽवगम्यते तथाऽत्र ब्रह्मज्ञाने समुत्पन्ने विरोधित्वादेव १५ मोहस्य प्रध्वंसात्तावन्मात्रेण संसारस्यापि तत्कार्यस्य निवृत्तत्वाद्ध्यानाभ्यासस्यानपेक्षितत्वान्न तत्र नियोगो मनागपि युज्यते। यथौषधप्रयोगेण रोगनिवृत्त्या स्वरूपावस्थानवज्ज्ञानादज्ञानतत्कार्यनिवृत्त्या स्वरूपावस्थानलक्षणो मोक्षो नियोगादृतेऽपि सिध्यत्यतो वेदान्तेषु न नियोगावकाशोऽस्तीत्यर्थः ॥ ४१ ॥

ब्रह्मविदोऽपि भिक्षाटनादौ कर्तृत्वोपलब्धेर्ज्ञानाभ्यासनियोगादेवाकर्तृब्रह्मप्राप्तिरित्याशङ्क्याऽऽह—**कर्तृतामिति**। प्रत्यगात्मनि कर्तृतां परमार्थभूतां गृहीत्वा ब्रह्माकर्त्रभोक्तृस्वरूपत्वेन ग्रहीतुं योऽपेक्षते स पारमार्थिककर्तृत्वादि- २० निवृत्त्ययोगान्नानर्थान्निवर्तते, न च ब्रह्म प्राप्नोति। यथा शीतार्तः शीतापहरणबुद्ध्या वह्निमिच्छन्नुल्कापिशाचमनुगच्छन्न शीतनिवृत्तिं प्रतिपद्यते तस्यानग्नित्वादनर्थं च प्राप्नोति समीपमुपसृतस्य पिशाचेन भक्ष्यत्वसम्भवात्तथाऽत्रापि द्रष्टव्यम्। भिक्षाटनादौ तु ब्रह्मविदो बाधितानुवृत्त्या प्रवृत्तिरित्यर्थः ॥ ४२ ॥

इतोऽपि नास्ति पारमार्थिकं कर्तृत्वं किन्तु कल्पितमेवेत्याह—**करोमीति**। करोमीत्येवमात्मिका धीर्नाम कर्ताऽस्मीति बुद्धिस्तया विशिष्टस्य पारमार्थिकं कर्तृत्वमारूढस्यैतद्ब्रह्माकर्त्रभोक्त्रहमस्मीति यदि लभ्यते तर्हि कर्तृज्ञाने २५ सत्येव ब्रह्मप्राप्त्यङ्गीकारात्कर्तृज्ञानस्य च स्वापादेरन्यत्र सत्त्वाद्ब्रह्मोपदेशमन्तरेण तत्प्राप्तेः सम्भवादस्याऽऽत्मनस्तदलाभे को हेतुरिति पृष्टाः सन्तो हेतुं ब्रूत। स च हेतुर्नोपलभ्यते। न हि कश्चिदपि ब्रह्मालाभे हेतुरतोऽस्माददर्शनादज्ञानादन्यो दृश्यते। तस्मादात्मनि कर्तृत्वाद्यज्ञानकृतमेव न पारमार्थिकमित्यर्थः ॥ ४३ ॥

आत्मनि कर्तृत्वादेरविद्याकृतत्वे फलितमाह—**तस्मादिति** ॥ ४४ ॥

कार्यकारणनिराकरणेन प्रत्यगात्मप्रतिबोधफलं कथयति—**कर्तुरिति**। ज्ञाता प्रमाता तस्य कर्तृत्वं ३० परिणामित्वं तस्य सामान्यविशेषविषया या दृष्टिस्तस्याः स्वरूपभूता या कूटस्थदृष्टिस्तद्रूपेण तां पूर्वोक्तां दृष्टिं निराकृत्य परं ब्रह्म कूटस्थदृष्टिरूपमाप्नोतीत्यर्थः ॥ ४५ ॥

ब्रह्मविदाप्नोति परमिति सूत्रभूतं वाक्यं व्याख्याय तदेषाऽभ्युक्तेत्यस्य वाक्यस्य तात्पर्यमाह—**अशेषेति**॥४६॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र चतुर्णां पदानामेकविभक्तियुक्तत्वे हेतुमाह—**विशेषणेति** ॥ ४७ ॥

तेषु विशेषणविशेष्यत्वविभागं दर्शयति—**वेद्यत्वेनेति** ॥ ४८ ॥ ३५

नीलं महत्सुगन्धीति विशिष्य[शिंष]न्त्युत्पलं यथा । एकाधिकरणान्येवं सत्यादीनि परं महत् ॥४९॥
एवं विभज्यमानं सत्सत्यमित्येवमादिभिः । स्वविशेषविरुद्धेभ्यो धर्मिभ्यः स्यान्निराकृतम् ॥५०॥
एवं च सति तज्ज्ञातं यदन्येभ्योऽवधार्यते । नीलोत्पलादिवद्ब्रह्म नान्यथाऽनवधारणात् ॥५१॥
ननु व्यभिचरद्वस्तु स्याद्विशेष्यं विशेषणैः । ब्रह्मान्तराहृते त्वत्र कुतो ब्रूहि विशेष्यता ॥५२॥
५ विशेषणविशेष्यत्वे सति दोषः प्रसज्यते । लक्ष्यलक्षणतां यातु न दोषोऽत्र मनागपि ॥५३॥
अनेकात्मविशेष्यस्थमागृहीतविशेष्यकम् । सजातीयान्निराकर्तृ विशेषणमिहोच्यते ॥५४॥
सामान्येतरसंयुक्तमनेकगुणसंयुतम् । सम्भव्यसम्भविगुणं विशेष्यं तत्प्रचक्षते ॥५५॥
विशेष्यान्तरशेषं यत्स्वविशेष्यान्यबुद्धिकृत् । परिकल्पितसम्बन्धं लक्षणं भावलक्षणम् ॥५६॥
निरस्यति यथैवैकं तथैवान्यद्विरोधि यत् । स्वात्मनैवैकरूपेण लक्ष्यमत्र निगद्यते ॥५७॥

१० ब्रह्मणो विशेष्यत्वं सत्यादीनां विशेषणत्वमित्येतद्दृष्टान्तेन साधयति—नीलमिति । परं महदित्यत्र महदिति विशेष्यं ब्रह्मोच्यते ॥ ४९ ॥

उक्ते विशेषणविशेष्यत्वे फलितं कथयति—एवमिति । स्वशब्देन ब्रह्मोक्तमस्य विशेषाः सत्यादयस्तैर्यदा ब्रह्म विशेषितं तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्यपरिच्छिन्नेभ्यो निराकृतं ब्रह्म सिध्यतीत्यर्थः ॥ ५० ॥

व्यावृत्तिफलमाह—एवं चेति । यथा नीलमुत्पलं रक्तमुत्पलमित्यादिप्रयोगे व्यक्त्यन्तरेभ्यो व्यावृत्तमुत्पल-
१५ मवगम्यते तथा यदन्येभ्योऽसत्यादिभ्यो व्यावृत्तमवधार्यते तद्ब्रह्मेत्येवं व्यावृत्तत्वे सति सच्चिदेकतानं परिपूर्णं तदिति ज्ञातं भवति व्यावृत्तिश्चेन्न ज्ञायते तदाऽनृतादिभ्यो व्यावृत्त्यसिद्धेर्न ब्रह्म ज्ञातं स्यादित्यर्थः ॥ ५१ ॥

ब्रह्म विशेष्यं सत्यादि विशेषणमित्यत्र शङ्कते—नन्विति । यद्वस्तु व्यक्तिभेदान्मिथो व्यभिचरति तद्विशेषणैर्विशेष्यमिष्यते । यथोत्पलव्यक्तयो भूयस्यो मिथो व्यभिचारिण्यो नीलरक्तादिधर्मैर्विशेष्यन्ते न तथा ब्रह्मणोऽद्वितीयत्वाद्बहुत्वं सम्भवत्यतो ब्रह्मणि विशेषणविशेष्यत्वानुपपत्तिरित्यर्थः ॥ ५२ ॥

२० विशेषणविशेष्यपरत्वाभावाद्वाक्यस्य लक्षणकथनेन ब्रह्मप्रतिपादनपरत्वान्न चोद्यावकाशोऽस्तीति परिहरति—विशेषणेति ॥ ५३ ॥

किं तर्हि विशेषणं तदाह—अनेकेति । एकरसस्य विशेष्यत्वादर्शनादनेकात्मनि नानारसे विशेष्ये स्थितं तत्रैवोपरक्तं समानजातीयाद्व्यावर्तकं व्यवहारभूमौ विशेषणं प्रसिद्धमित्यक्षरार्थः । विशेष्यबुद्ध्युपरक्तमेव विशेष्यव्यावर्तकं विशेषणमित्यर्थः ॥ ५४ ॥

२५ किं तर्हि विशेष्यं तदाह—सामान्येति । सामान्यविशेषसम्बद्धमनेकैः शुक्लत्वादिभिर्गुणैर्युक्तं विशेष्यमित्यर्थः । ते गुणा यदि तत्र नित्यं सम्भवन्ति तदा न तस्य विशेष्यत्वं विशेषाभावात् । यदि सर्वथा तत्र न सम्भवन्ति तदाऽपि न विशेष्यत्वमसतां व्यावर्तकत्वायोगादिति मत्वाऽऽह—सम्भवीति । सजातीयमात्राद्व्यावर्तितं विशेष्यमित्यर्थः ॥ ५५ ॥

सम्प्रति लक्षणस्य लक्षणमाह—विशेष्यान्तरेति । विशेष्यान्तरं विशेष्यादन्यत्तस्य शेषमित्यस्यैवार्थमाह—
३० स्वविशेष्येति । स्वेन विशेष्यं स्वेन लक्ष्यं यत्तस्य सर्वस्मादन्यबुद्धिं व्यावृत्तबुद्धिं करोतीत्यर्थः । लक्ष्येणासम्बद्धस्य लक्षणत्वानुपपत्तेः स्वलक्ष्येण सह परिकल्पितो निष्पन्नः सम्बन्धस्तादात्म्यं यस्य तदेवंविधलक्षणं वस्तु भावलक्षणं पदार्थलक्षणमित्याह—परिकल्पितेति । सजातीयाद्विजातीयाच्च सर्वस्माद्व्यावर्तकं लक्षणमित्यर्थः ॥ ५६ ॥

लक्ष्यलक्षणमधुना कथयति—निरस्यतीति । यथाऽवकाशप्रदमाकाशमित्युक्ते सत्याकाशं स्वलक्षणेनावकाशदानेन सर्वस्माद्व्यावर्त्यते तत्रैकमित्येकजातीयमुच्यते । अन्यदिति । भिन्नजातीयमत एव विरोधीत्युक्तं तथैवाऽऽ-
३५ काशादन्यदपि स्वात्मनैवैकरूपेण स्वलक्षणेन सर्वस्माद्व्यावर्तितं यत्तल्लक्ष्यं विवक्षितं सर्वस्माद्व्यावर्तितं लक्ष्यमित्यर्थः ॥ ५७ ॥

सत्यादयः परार्थत्वादितरेतरनिस्पृहाः । एकैकस्त्वत एवैषा विशेष्यार्थेन बध्यते ॥५८॥
सकृत्प्रमितरूपाद्यद्रूपमन्यत्कदाचन । नैव प्रपद्यते सत्यं तस्मात्कार्यविलक्षणम् ॥५९॥
यावान्कश्चिद्विकारोऽत्र ब्रह्म तस्मान्निवर्तितम् । भजते कारणत्वं तत्तथा चैतन्यधर्मकम् ॥६०॥
तद्दोषद्वयनुत्त्यर्थं ज्ञानं ब्रह्मेत्युदीर्यते । अनेकार्थाभिसम्बन्धात्किमर्थं ज्ञानमुच्यते ॥६१॥
ब्रह्मणो भेदकं यस्मादानन्त्येन च सङ्गतेः । ज्ञप्तिर्ज्ञानमिति न्याय्यमन्यथा दोषदर्शनात् ॥६२॥ ५
तस्मात्सत्यमनन्तं यज्ज्ञानं तदिह गृह्यते । भावसाधनमेवातः स्यादेतद्युक्तिदर्शनात् ॥६३॥
ज्ञानं ब्रह्मेति वचनादन्तवत्त्वमवाप तत् । ज्ञानस्य लौकिकस्येह ह्यन्तवत्त्वसमन्वयात् ॥६४॥
अतस्तत्प्रतिषेधार्थमनन्तमिति शब्द्यते । अन्तः सीमा यथेयत्ता तन्निषेधस्त्वनन्तता ॥६५॥
अनृतादिनिषेधेन सत्यादीनामुपक्षयात् । ब्रह्मणश्चाप्रसिद्धत्वान्मिथ्यार्थं चेद्वचो न तत् ॥६६॥
परमार्थमनालिङ्ग्य न दृष्टं वितथं क्वचित् । तस्माद्वाऽवितथं सर्वं परमार्थैकनिष्ठितम् ॥६७॥ १०
पदात्पदार्थबुद्धिर्न उत्पलादौ प्रजायते । तदभावधियै नालं पदवाक्यार्थरूपतः ॥६८॥

विशेषणादीनां चतुर्णां स्वरूपमुक्त्वा विशेषणविशेष्यत्वपक्षमुपपादयति—सत्यादय इति । सत्यज्ञानानन्ता विशेष्यपारतन्त्र्यादन्योन्यनिरपेक्षत्वान्न मिथः सम्बध्यन्ते । तथा च मिथोऽसम्बन्धात्परतन्त्रत्वाच्चैषां मध्ये प्रत्येकमेव सत्यादि विशेष्यार्थेन ब्रह्मणा सम्बध्यते ततश्च सत्यादिविशेषणानि प्रत्येकं ब्रह्मणा सम्बद्धानि ब्रह्मासत्यादिभ्यो व्यावर्तयन्तीत्यर्थः ॥ ५८ ॥ १५

सत्यशब्दार्थं दर्शयति—सकृदिति ॥ ५९ ॥

सत्यमिति विशेषणेन ब्रह्म कार्यादन्यदिति निर्धार्यते चेत्तस्य कारणत्वं प्राप्तं ततश्च मृदादिवज्जडत्वं प्रसक्तमिति शङ्कते—यावानिति ॥ ६० ॥

कारणत्वं जडत्वमिति प्राप्तं दोषद्वयं निराकर्तुं विशेषणमवतारयति—तद्दोषेति । कर्तृकर्मकरणभावविषयत्वेन ज्ञानशब्दस्यानेकार्थत्वसम्भवात्तदर्थविशेषबुभुत्सया पृच्छति—अनेकार्थेति ॥ ६१ ॥ २०

ब्रह्मविशेषणत्वेन ज्ञानपदप्रयोगाज्ज्ञानमनन्तमित्यनन्तपदसंयोगात्कर्त्रादिविषयत्वे तदयोगाद्भावविषयं ज्ञानपदमित्युत्तरमाह—ब्रह्मण इति । ज्ञानपदस्य ज्ञप्तिविषयत्वं परिहृत्य कर्त्रादिविषयत्वे ब्रह्मविशेषणत्वायोगादानन्त्येन सङ्गतेरसङ्गतत्वाच्च ज्ञप्तिविषयत्वमेव युक्तमित्युपपादयति—अन्यथेति ॥ ६२ ॥

पदद्वयार्थमुपसंहरति—तस्मादिति । ज्ञानपदं भावसाधनमेव स्यादित्यत्रातःशब्दोपात्तं हेतुं दर्शयति—युक्तीति ॥ ६३ ॥ २५

ज्ञानस्य ब्रह्मत्वे तस्य क्षणिकत्वेन ब्रह्मणोऽपि तद्रूपस्य क्षणिकत्वं स्यादिति शङ्कते—ज्ञानमिति ॥ ६४ ॥

कूटस्थं चैतन्यं ज्ञानं न क्रिया ततः शङ्कितदोषस्य निरवकाशत्वमित्यनन्तपदेन परिहरति—अत इति ॥६५॥

विशेषणपक्षे सत्यादिशब्दार्थानामनृतादिनिवृत्त्यर्थत्वाद्विशेष्यस्य च ब्रह्मणो मानान्तरासिद्धत्वात्सत्यादिवाक्यं शून्यार्थनिष्ठं प्राप्तमित्याशङ्कामनूद्य प्रतिषेधति—अनृतादीति ॥ ६६ ॥

न तदित्युक्तं सिद्धान्तं प्रपञ्चयति—परमार्थमिति । निरधिष्ठानभ्रमासम्भवात्तदधिष्ठानस्य परमार्थवस्तुनो वक्तव्यत्वे सत्यादिवचनस्य तदर्थत्वान्न शून्यार्थतेत्यर्थः ॥ ६७ ॥ ३०

सत्यादिपदादसत्यादिप्रतिषेधप्रतीतिमङ्गीकृत्योक्तमिदानीमङ्गीकारं परित्यजति—पदादिति । पदार्थविषया बुद्धिरेव पदादुत्पद्यमाना लोके दृश्यते । न तु पदं वाक्यार्थविषयां बुद्धिमुत्पादयितुमुत्सहते । अनृतनिषेधो जाड्यनिषेधः परिच्छेदनिषेधश्चेत्यस्य सर्वस्य वाक्यार्थरूपत्वात्तथाविधाभावज्ञानार्थं सत्यादिपदं न पर्याप्तं; तथा च परमार्थत्वस्वयंप्रभत्वपूर्णत्वाख्यानर्थान्बोधयन्ति सत्यादीनि पदानीत्यर्थः ॥ ६८ ॥ ३५

प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः । पश्चादभावं जानाति वध्यघातकवत्पदात् ॥६९॥
शब्दात्प्रतीयते तावत्सङ्गतिर्धर्मधर्मिणोः । मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः ॥७०॥
न नीलवदनादाय नीलधीरुपजायते । विशेष्यज्ञानमप्येवं नान्तरेण विशेषणम् ॥७१॥
वाक्यार्थानुभवोऽस्माकं नीलादेरुपजायते । किं नीलमिति चाऽऽकाङ्क्षा सत्येवमुपपद्यते ॥७२॥
५ प्रत्यक्षतोऽवसेयत्वादेवं सर्वस्य वस्तुनः । नैव साधयितुं शक्यं क्षणिकत्वं कथञ्चन ॥७३॥
सति कुम्भे न नाशोऽस्ति नाशोऽपि न तदाश्रयः । अस्ति चेत्पूर्ववद्धर्मी न नष्टः पूर्ववद्घटः ॥७४॥
इष्टो नाशस्य नाशश्चेदस्तु जीव शतं समाः । घटोऽनाशीति मत्पक्षः स च नैवं विहन्यते ॥७५॥

सत्यादिपदेभ्यश्चेदसत्यादिनिषेधानधिगतिः कथं तर्हि तद्धीः सिध्येदित्याशङ्क्याऽऽह—प्रतिपद्येति । यथा [ता]वच्छ्येनमूषकादिना दूषितां भूमिमुपलभ्य तद्विरोधिनो घातकस्य मार्जारादेरभावोऽर्थादवगम्यते तथा सत्यादि-
१० पदात्पदार्थं परमार्थत्वादिकं प्रतीत्य प्रतीतपरमार्थत्वादिविरोधिनोऽसत्यत्वादेरभावोऽर्थापत्त्या ज्ञायते । न हि सत्यादेर-सत्यादेश्चैकाधिकरणत्वं घटते तेन मानान्तरसिद्धत्वादन्यव्यावृत्तेरशब्दार्थतेत्यर्थः ॥ ६९ ॥

अर्थापत्तिसिद्धार्थस्यापि शब्दार्थत्वं किं न स्यादित्याशङ्क्यानन्यलभ्यत्वाभावान्नैवमित्याह—शब्दादिति । सत्यं ब्रह्मेत्यादिना ब्रह्मशब्दसमानाधिकृतसत्यादिशब्दाद्धर्मस्य सत्यादेर्धर्मिणश्च ब्रह्मणस्तादात्म्यरूपा सङ्गतिस्तावदव-गम्यते । तथा च सत्यादिरूपं चेद्ब्रह्म कथं तदसत्यादि स्यादित्यर्थापत्तिरूपान्मानान्तरादसत्याद्यपोहो भासते । ततश्च
१५ तस्यापूर्वत्वाभावान्न शब्दगम्यत्वं युज्यते । यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्तदेवं सत्यादिवाक्यं परमार्थादि-रूपे ब्रह्मणि पर्यवसितमशून्यार्थं सिद्धमित्यर्थः ॥ ७० ॥

सत्यादिवाक्यस्याशून्यार्थत्वे हेत्वन्तरमाह—न नीलवदिति । यथा नीलमित्युक्ते नैल्यविशेषणविशिष्टं वस्तु भाति विशेष्यमन्तरेण विशेषणायोगात्तथा विशेष्यमित्युक्ते विशेषणवद्वस्तु गम्यते तयोर्मिथोबद्धत्वादेवं प्रकृतेऽपि सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेत्युक्ते शून्यनिष्ठत्वं सत्यादिवाक्यस्य नोपपद्यते विशेषणविशेष्ययोर्मिथोबद्धत्वा-
२० दित्यर्थः ॥ ७१ ॥

इतोऽपि सत्यादिवाक्यं शून्यनिष्ठं न भवतीत्याह—वाक्यार्थेति । अन्वितोऽर्थो वाक्यार्थस्तत्रानुभवोऽस्माक-मन्विते पदशक्तिमवगच्छतां नीलमुत्पलमित्यादिपदादुत्पद्यतेऽन्यान्विते शक्तिग्रहे सत्येव नीलमित्युक्ते किं नील-मित्याकाङ्क्षा दृश्यमानोपपद्यते तुच्छे च नीलादिपदार्थे नीलादिपदं स्वार्थशून्यमितरान्वितं नाभिधातुं शक्नोति । तुच्छस्य केनचिदन्वयाभावादतश्चेतरान्विते सङ्गतिसंवेदनसामर्थ्यान्न सत्यादिवाक्यस्य शून्यार्थत्वशङ्केत्यर्थः ॥ ७२ ॥

२५ ज्ञानं ब्रह्मेति सामानाधिकरण्याज्ज्ञानस्य क्षणिकत्वाद्वाक्यस्य शून्यनिष्ठत्वाभावेऽपि क्षणिकवस्तुनिष्ठता दुर्वारेत्याशङ्क्याऽऽह—प्रत्यक्षत इति । न हि क्षणिकत्वं कस्यचिदपि पदार्थस्य कदाचिदपि साधयितुं शक्यं प्रमाणाभावात् । न तावत्प्रत्यक्षमत्र प्रमाणीभवति तेनाज्ञातस्यार्थस्य ज्ञातत्वाभ्युपगमादनधिगतिसमये चाधिमतेर्विरुद्धत्वादवस्थाभेदेन वस्तुनि ज्ञातत्वाज्ञातत्वयोर्वक्तव्यत्वादेवमनुमानादेर्मानान्तरस्यापि वस्तुन्यज्ञाते ज्ञापकत्वाविशेषान्न क्षणिकत्वसाध-कत्वं, दृष्ट्यविपरिलोपश्रुतेश्च नित्यदृष्टिरूपस्य ब्रह्मणोऽक्षणिकत्वान्न सत्यादिवाक्यस्य क्षणिकार्थनिष्ठत्वमित्यर्थः ॥७३॥

३० वस्तुनि नाशस्य दुर्निरूपत्वाच्च क्षणिकत्वायोगान्न क्षणिकार्थनिष्ठता सत्यादिवाक्यस्य सिध्यति । न तावदसति घटे तत्र नाशो वर्तितुमर्हति नैरर्थक्यादाश्रयाभावाच्च । नापि सति घटे तत्र नाशोऽस्ति सत्त्ववन्नाशस्य तदाश्रयत्वायोगादेकत्र सत्त्वासत्त्वयोरपर्यायेण विरुद्धत्वादित्याह—सतीति । यदि नाशे प्रवृत्तेऽपि तदाश्रयत्वेन नाशप्रवृत्तिप्रागवस्थायामिव कुम्भोऽभ्युपगम्येत तर्हि पूर्ववदेव कुम्भस्य नष्टत्वाभावान्नाशात्प्राक्पूर्वोत्तरकालयोर-विशेषो घटे स्यादित्याह—अस्ति चेदिति ॥ ७४ ॥

३५ सति घटे नाशस्य प्रवृत्तत्वेऽपि घटगतं सत्त्वं स्वविरुद्धं दृष्ट्वा पुनर्नष्टः स्यादित्याशङ्क्याङ्गीकरोति—इष्ट इति । नाशस्य नाशाङ्गीकारे घटस्याविनाशित्वपक्षक्षतिर्नास्तीति हेतुमाह—घट इति ॥ ७५ ॥

न नाशो हन्ति नष्टारं गन्तारमिव तद्गतिः । यस्मिन्सत्येव यः सिध्येन्निरुणद्धि स तं कथम् ॥७६॥
लक्षणार्थमिदं वाक्यं यस्मात्पूर्वमुदाहृतम् । विशेषणाश्रयान्नातः शून्यताऽत्र प्रसज्यते ॥७७॥
विशेषणत्वेऽप्येतेषां लक्षणार्थत्वमात्मनि । लक्ष्येऽसति न तादर्थ्यं सत्यादीनां प्रसज्यते ॥७८॥
अतो लक्षणवाचित्वान्न शून्यार्थमिदं वचः । विशेष्यत्वेऽपि नैवं स्यात्स्वार्थासंत्यागकारणात् ॥७९॥
स्वार्थेऽसति न सत्यादेर्विशेष्यार्थे नियन्तृता । नियम्यार्थनियन्तृत्वं स्वार्थे सत्युपपद्यते ॥८०॥　५
स्वेनार्थेनार्थवांश्चात्र ब्रह्मशब्दः सहेतरैः । तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ॥८१॥
स्वार्थार्पणप्रनाड्यैव परिशिष्टौ विशेषणम् । तद्विरोध्यर्थसन्त्यागः सामर्थ्यात्स्यान्न शब्दतः ॥८२॥
गुहायां निहितं यस्मादेतस्मादात्मनस्तथा । ब्रह्मात्मशब्दयोस्तस्मादैकार्थ्यमवसीयते ॥८३॥
विज्ञानात्मातिरेकेण ज्ञाप्यते ब्रह्म चेत्परम् । नियोगगम्यः सन् भेदो वद केन निवार्यते ॥८४॥

किञ्च नाशो न स्वाश्रयं घटं निवर्तयति । तत्क्रियात्वान्न हि गमिक्रिया स्वाश्रयं गन्तारं निवर्तयन्ती दृष्टेत्याह—न नाश इति । नाशस्य स्वाश्रयनिवर्तकत्वाभावं साधयति—यस्मिन्निति ॥ ७६ ॥　१०

सत्यादिवाक्यस्य विशेषणार्थत्वमुपेत्य शून्यार्थत्वं क्षणिकार्थत्वं च नास्तीत्युक्तम् । अधुना स्वरूपलक्षणार्थमिदं वाक्यमित्युक्तत्वान्न शून्यार्थत्वं क्षणिकार्थत्वं वा वाक्यस्याऽऽशङ्कितव्यमित्याह—लक्षणार्थमिति । अत्रेति वाक्यार्थोक्तिः । शून्यताग्रहणं क्षणिकतोपलक्षणार्थम् ॥ ७७ ॥

सत्यमाकाशं ज्ञानं गुणोऽनन्ता पृथिवीत्यत्र सत्यादिपदस्य विशेषणार्थत्वदर्शनादत्रापि तथा स्यादित्याशङ्क्याऽऽह—विशेषणत्वेऽपीति । प्रत्यग्ब्रह्मणि विशेषणविशेष्यत्वस्याबुभुत्सितत्वात्तत्र सत्यादिपदं बुभुत्सितस्वरूपलक्षणार्थमेवेत्यर्थः । वाक्यस्य लक्षणार्थत्वेऽपि शून्यमेव लक्ष्यं किं न स्यादित्याशङ्क्याऽऽह—लक्ष्येऽसतीति ॥ ७८ ॥　१५

वाक्यस्य लक्षणार्थत्वादसतश्चासत्त्वादेव लक्ष्यत्वायोगान्नास्ति वाक्यस्य शून्यार्थत्वाशङ्केत्युपसंहरति—अत इति । सत्यादिभिर्ब्रह्मणो लक्ष्यत्वमङ्गीकृत्य वाक्यस्य नास्ति शून्यार्थतेत्युक्तम् । इदानीं ब्रह्मणः सत्यादिभिर्विशेष्यत्वेऽपि नास्ति वाक्यस्य शून्यार्थत्वं सत्यादिपदानां स्वार्थापरित्यागेन विशेष्यार्थनियामकत्वादित्याह—विशेष्यत्वेऽपीति ॥ ७९ ॥　२०

सत्यादिपदस्य स्वार्थनिष्ठस्यैव विशेष्यार्थनियामकत्वमित्येतदन्वयव्यतिरेकाभ्यां साधयति—स्वार्थेऽसतीति ॥ ८० ॥

किञ्च परमार्थत्वादिसमर्पकैः सत्यादिशब्दैः सह ब्रह्मशब्दोऽस्मिन्वाक्ये बृहद्वस्तुवाचित्वेनार्थवान्लक्ष्यते ततश्च कुतो वाक्यस्य शून्यार्थतेत्याह—स्वेनेति । सत्यादीनि पदानि त्रीणि ब्रह्मणो विशेषणसमर्पकाणीत्यत्रावान्तरविशेषमाह—तत्रेति । सत्यत्वं ज्ञानत्वं पूर्णत्वमितिवदसत्यादिव्यावृत्तिरपि शब्दार्थः स्यादित्याशङ्क्य पूर्वोक्तं स्मारयति—तद्विरोधीति ॥ ८१-८२ ॥　२५

ननु पूर्णत्वेन ब्रह्मणो यदानन्त्यमुच्यते तदयुक्तं ब्रह्मात्मशब्दयोरर्थभेदादात्मना ब्रह्मणः परिच्छेदसिद्धेरिति तत्राऽऽह—गुहायामिति । यो वेद निहितं गुहायामिति वक्ष्यमाणत्वात् ब्रह्मणो बुद्धिसाक्षित्वेनाऽऽत्मत्वावगमात्तस्माद्वा एतस्मादात्मन इति चाऽऽत्मशब्दस्य ब्रह्मणि प्रयोगाद्ब्रह्मात्मशब्दयोरैकार्थ्याध्यवसायान्नाऽऽत्मना परिच्छेदो ब्रह्मणः सम्भवतीत्यर्थः ॥ ८३ ॥　३०

य आत्मनि तिष्ठन्नित्यादिश्रुत्या विज्ञानात्मनो भेदेन परस्य ब्रह्मणो ज्ञापनान्न ब्रह्मात्मशब्दयोरेकार्थत्वसिद्धिरित्याशङ्क्य नियोगतो नियमेन शास्त्रगम्यो भेदो यदीष्टस्तर्हि तस्य निवारणानुपपत्तेर्भेदस्य भ्रान्तिसिद्धस्यानुवादादैक्यमेव शास्त्रार्थः स्यादित्याह—विज्ञानात्मेति ॥ ८४ ॥

न चेदात्मा परं ब्रह्म स्वतः स्यादस्य दुःखिनः । नियोगो वाऽनियोगो वा कं विशेषं करिष्यति ॥८५॥
पश्यतः प्रत्यगात्मानमपविद्धान्यवस्तुनः । अहं ब्रह्मेति चेज्ज्ञानं शास्त्रादन्यत्परं कथम् ॥८६॥
आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः । अनात्मत्वेऽस्य किं तैः स्यादात्मत्वे त्वन्यधीह्नुतिः ॥८७॥
यत्साक्षादित्युपक्रम्य य आत्मेत्युपसंहृतेः । अन्योन्यार्थसमाप्तेश्च व्यतिरेके त्वसम्भवात् ॥८८॥
५ आत्मैव चेत्परं ब्रह्म भवताऽभ्युपगम्यते । आत्मनो ज्ञानकर्तृत्वाज्ज्ञानं स्यात्कर्तृसाधनम् ॥८९॥
पारतन्त्र्यमनित्यत्वं धात्वर्थत्वे प्रसज्यते । तर्कशास्त्रप्रसिद्धेश्च कर्तृतैवाऽऽत्मनो भवेत् ॥९०॥
उच्चैर्बाहुं समुद्धृत्य इत्याहुश्चोद्यचुञ्चवः । यथोदितमिदं सर्वं नैतदेवं भवेत्कुतः ॥९१॥
स्वरूपान्यतिरेकेऽपि कार्यत्वमुपचारतः । बुद्ध्युपाश्रयकार्याणि कल्प्यन्तेऽत्राविवेकतः ॥९२॥

शास्त्रगम्योऽपि जीवब्रह्मभेदस्तत्त्वमसीति चेतो धारयेदिति नियोगावष्टम्भात्तथाविधभावनाप्रभावाद्वा
१० निवर्त्यो भविष्यतीत्याशङ्क्याऽऽह—**न चेदिति**। यद्यात्मनो ब्रह्मत्वं न स्वाभाविकं तदा न तन्नियोगभावनाभ्यां कर्तुं शक्यं न हि वह्नेः शैत्यमन्येन क्रियते नापि जीवब्रह्मभेदो नियोगादिना निवर्तयितुं शक्यते शास्त्रगम्यत्वाभ्युपगमादित्यर्थः ॥ ८५ ॥

जीवब्रह्मभेदस्य शास्त्रगम्यत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह—**पश्यत इति**। नेति नेत्यस्थूलमनण्वित्यादिवाक्यादपाकृतानात्मवर्गस्य प्रत्यगात्मभूतमात्मानं परिशुद्धं पश्यतस्तत्त्वमस्ययमात्मा ब्रह्मेति शास्त्रात्तात्पर्योपेतादहं
१५ ब्रह्मेत्यात्मनि विज्ञानं जायते चेत्परं ब्रह्मात्मनोऽन्यन्न भवेदात्मा वा ब्रह्मणोऽन्यो न स्याद्य आत्मनीत्यादिवाक्यस्यान्यपरत्वात्प्रधानवाक्यविरोधे प्रामाण्यायोगादित्यर्थः ॥ ८६ ॥

नन्वस्थूलत्वादिधर्मकं ब्रह्म स्थूलादिधर्मकस्त्वात्मा तयोर्मिथो विरोधादैक्यासिद्धिरिति तत्राऽऽह—**आत्मन इति**। त्वमर्थादात्मनः सकाशादन्यस्य ब्रह्मणो यद्यस्थूलत्वादयो धर्माः स्वीक्रियन्ते तदा तेषामस्थूलत्वादीनामात्मविशेषणत्वराहित्ये सत्यस्याऽऽत्मनस्त्वंपदार्थस्य तैरस्थूलत्वादिभिर्न किञ्चिद्भवति यदि पुनरस्थूलत्वादीनामात्म-
२० विशेषणत्वं तदाऽऽत्मब्रह्मणोरन्यधीर्भेदबुद्धिस्तस्या निवृत्तिः सेत्स्यत्यात्मब्रह्मणोर्लक्षणाभेदादतो विरुद्धधर्मत्वाभावान्न भेदाशङ्केत्यर्थः ॥ ८७ ॥

यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इत्यत्र ब्रह्मणोपक्रम्याऽऽत्मनोपसंहारदर्शनादपि ब्रह्मात्मनोरैक्यमुपपन्नमित्याह—**यत्साक्षादिति**। ब्रह्मशब्दार्थस्य ब्रह्मणो ब्रह्मशब्दपर्यालोचनायामात्मनि समाप्तेरात्मशब्दपर्यालोचनायां चाऽऽत्मशब्दार्थस्याऽऽत्मनो ब्रह्मणि समाप्तेश्च तयोरैक्यं भेदे समाप्तिश्रुत्योरसम्भवान्न हि तयोर्मिथो भेदे
२५ ब्रह्मशब्दार्थस्याऽऽत्मन्यात्मशब्दार्थस्य च ब्रह्मणि समाप्तिर्युक्तेत्याह—**अन्योन्य इति** ॥ ८८ ॥

अनन्तं ब्रह्मेत्युक्ते तदानन्त्यसमर्थनार्थं ब्रह्मात्मनोरैक्यमुक्तमुपेत्य चोदयति—**आत्मैवेति**। ऐक्यपक्षे ज्ञानं ब्रह्मेत्यत्र जानातीतिज्ञानमिति ज्ञानपदं कर्तृसाधनमात्मनस्तत्कर्तृत्वादतो ज्ञानकर्ताऽऽत्मा ब्रह्मेत्युक्तं भवतीत्यर्थः॥८९॥

ज्ञानपदस्य कर्तृसाधनत्वं भावसाधनत्वे दोषप्रदर्शनद्वारा प्रकटयति—**पारतन्त्र्यमिति**। ज्ञानक्रिया ज्ञानशब्देनोक्ता चेज्ज्ञानस्य परतन्त्रत्वादनित्यत्वाद्ब्रह्मणोऽपि ज्ञानं ब्रह्मेति सामानाधिकरण्यात्तदभेदादनित्यत्वादि-
३० प्रसङ्गात्कर्तृसाधनं ज्ञानपदमित्यर्थः। तर्कशास्त्रावष्टम्भाच्च कर्तृत्वमात्मनः स्वीकर्तव्यमित्याह—**तर्केति** ॥ ९० ॥

ज्ञानकर्ताऽऽत्मैव ब्रह्म नान्यद्ब्रह्मास्तीति पूर्वपक्षमुपसंहरति—**उच्चैरिति**। ज्ञानस्य कार्यत्वमङ्गीकृत्य कर्तृत्वमात्मनः शङ्कितं शिथिलयति—**यथोदितमिति**। ज्ञानस्य कार्यत्वसम्भवे कथं कार्यत्वप्रतीतिरिति पृच्छति—**कुत इति** ॥ ९१ ॥

संवेदनापरपर्यायस्य ज्ञानस्याऽऽत्मस्वरूपाभेदेऽपि कार्यत्वमौपचारिकमित्युत्तरमाह—**स्वरूपेति**। कार्यत्वस्यौप-
३५ चारिकत्वं स्फोरयति—**बुद्धीति**। अत्र हि संवेदने बुद्धिवृत्त्यविवेकात्तद्गतान्येव जन्मविनाशादीनि कार्याणि कल्प्यन्ते। वस्तुतस्तु न तत्र जन्मादयो विकाराः सन्ति तेन कूटस्थे संवेदने कार्यत्वमारोपितमित्यर्थः ॥ ९२ ॥

स्वरूपमात्मनो ज्ञानं न तस्माद्व्यतिरिच्यते । बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यते ॥९३॥
आत्मचैतन्यसंव्याप्ता वृत्तीर्धीः कुरुते यतः । चैतन्यालिङ्गिताः सर्वास्तप्तायोविस्फुलिङ्गवत् ॥९४॥
चैतन्यखचितान्दृष्ट्वा प्रत्ययान्बुद्धिकर्तृकान् । ज्ञानं क्रियत इत्यज्ञाः कूटस्थमपि मन्वते ॥९५॥
आविर्भावतिरोभावौ बुद्धेर्यत्साक्षिकौ नृणाम् । ततोऽन्यं कं समाश्रित्य साक्षिकर्तृत्वमुच्यते ॥९६॥
बुद्धिभावानवच्छिन्नं तादृग्रूपं यथा पुरा । बुद्ध्युत्पत्तावपि तथाऽविक्रियं ह्यनुभूयताम् ॥९७॥ ५
कर्तृकार्यावभासित्वात्कर्तृकार्याभिधायिनः । लक्षयन्ति परं ब्रह्म नाञ्जसा तत्प्रचक्षते ॥९८॥
यत्तु तद्ब्रह्मणो ज्ञानं सर्वानन्यदविक्रियम् । ब्रह्मणोऽव्यतिरिक्तं तत्सर्वप्रत्यक्समाप्तितः ॥९९॥
प्रत्याख्याताखिलानात्मभेदसत्यार्थवाचिना । तथैव सत्यशब्देन लक्ष्यते तत्र तूच्यते ॥१००॥
एवं सत्यादयः शब्दाः स्वार्थासंत्यागिनः परम् । लक्षयन्ति विरुद्धार्थनिवृत्त्याऽज्ञानहानतः ॥१०१॥

यत्त्वात्मनो ज्ञानं प्रति कर्तृत्वमुक्तं तद्दूषयति—स्वरूपमिति । वृत्तिमदन्तःकरणोपाधिकमात्मनि १० कर्तृत्वमारोपितमित्यर्थः ॥ ९३ ॥

कूटस्थमात्मसंवेदनं बुद्धिवृत्त्युपाधिकं कार्यत्वमास्कन्दतीत्युक्तं विवृणोति—आत्मेति । यथा तप्तस्यायसो विस्फुलिङ्गा वह्न्याकारा दृश्यन्ते तथा परिणामिनी बुद्धिरात्मचैतन्येन व्याप्ता सती नानाविधा वृत्तीश्चैतन्याभासव्याप्ता यतो निर्वर्तयत्यतो बुद्धिवृत्त्युपाधिचैतन्यं कार्यत्वेन भातीत्यर्थः ॥ ९४ ॥

यत्तु वृत्तिमदन्तःकरणोपाधिकमात्मचैतन्यं कर्तृत्वेन भातीति तदुपपादयति—चैतन्येति ॥ ९५ ॥ १५

बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यत इत्युक्तमधुना प्रपञ्चयति—आविर्भवेति ॥ ९६ ॥

आत्मनः संविदात्मकस्य कर्तृत्वकार्यत्वयोरारोपितत्वे कूटस्थत्वं फलतीत्याह—बुद्धीति । यथाहि पूर्वं बुद्ध्युपाध्युत्पत्तेस्तदभावेनानवच्छिन्नमेकरूपमेव बुद्ध्यभावसाधकमवतिष्ठते तथा बुद्ध्युत्पत्तावपि तद्भावसाधकमेकरूपमेव चैतन्यमास्थेयं बुद्धिभावाभावयोरपि साधके साक्षिचैतन्ये विशेषस्य दर्शयितुमशक्यत्वादतश्च कूटस्थमेव चैतन्यमनुभवबलादास्थेयं तस्य सर्वविक्रियासाधकत्वादित्यर्थः ॥ ९७ ॥ २०

वाच्यत्वाद्घटादिवदेव सक्रियं ब्रह्म न कूटस्थमित्याशङ्क्याऽऽह—कर्त्रिति । कर्तृकर्मादीनां कारकाणां साक्षित्वेन ब्रह्मणो भासकत्वात्कर्त्रादिवाचिनः सत्यादिशब्दा ब्रह्म परं लक्षयन्ति । न तु साक्षाद्वक्तुमुत्सहन्ते शब्दप्रवृत्तिनिमित्तानां जात्यादीनां ब्रह्मण्यसत्त्वादतो वाच्यत्वं ब्रह्मण्यसिद्धमित्यर्थः ॥ ९८ ॥

ज्ञानशब्दस्य ब्रह्मणि लक्षणया प्रवृत्तिं प्रकटयति—यत्त्विति । ब्रह्मणो यत्तज्ज्ञानं चैतन्यं न च षष्ठीप्रयोगाद्ब्रह्मणस्तद्भिद्यते तद्धि ब्रह्मणः सकाशादव्यतिरिक्तं ज्ञानव्यतिरेके जडत्वाद्ब्रह्मणोऽब्रह्मत्वप्रसङ्गाच्च ब्रह्मात्मकं ज्ञानं २५ सर्वानन्यदद्वितीयं ब्रह्मणः सर्वानन्यत्वादतश्चाविक्रियं विक्रियाहेत्वभावाच्च सर्वत्र प्रत्यक्त्वेन वर्तते तत्र तत्राऽऽत्मत्वेन समाप्तत्वादतो ज्ञानपदं ब्रह्मणि लक्षणयैव वर्तते तत्र जात्यादेरसम्भवादित्यर्थः ॥ ९९ ॥

सत्यपदस्यापि ब्रह्मणि लक्षणयैव प्रवृत्तिं प्रत्याययति—प्रत्याख्यातेति । निरस्तः समस्तोऽनात्मविशेषोऽनृतवर्गो यस्मिन्परमार्थेर्थे तस्य वाचकेन सत्यशब्देनापि ज्ञानशब्देनेव ब्रह्म लक्ष्यते न तु तत्तेन वक्तुं शक्यते निमित्ताभावस्य तुल्यत्वादित्यर्थः ॥ १०० ॥ ३०

सत्यज्ञानशब्दवदानन्दादयोऽपि शब्दा लक्षणयैव ब्रह्म बोधयन्तीत्याह—एवमिति । सर्वे खल्वेते शब्दाः स्वार्थस्य परमार्थत्वं ज्ञानत्वमानन्दत्वं पूर्णत्वमित्यस्य स्वार्थस्यापरित्यागिनो भूत्वा विरुद्धार्थप्रतीतिहेत्वज्ञाननिरासद्वारा विरुद्धस्यार्थस्यानृतजडदुःखपरिच्छेदनिवृत्तिवर्त्मना परं ब्रह्म लक्षयन्ति न तु साक्षादेव ब्रह्म वक्तुं क्षमन्ते प्रागुक्तन्यायविरोधादित्यर्थः ॥ १०१ ॥

निवर्त्यभेदाद्भिन्नोऽर्थोऽसत्याद्यर्थनिवर्तिनाम् । सत्यादीनामतः सिद्धमवाक्यार्थत्वमात्मनः[1] ॥१०२॥
यतो वाचो निवर्तन्ते नेति नेतीति चापरम् । एवं सत्यर्थवत्सर्वमन्यथा तदनर्थकम् ॥१०३॥
कौटस्थ्यं सत्यमित्युक्तं तद्गुणं ज्ञानमुच्यते । स्वतो बोधस्य कौटस्थ्ये ज्ञातुरानन्त्यमेकता ॥१०४॥
ज्ञात्रभेदात्तु तद्ब्रह्म ज्ञानीप्सिततमं परम् । ज्ञातुरन्यस्य चाभावाद्यो वेदेत्युच्यते कथम् ॥१०५॥
५ सत्यादिलक्ष्याज्ज्ञानोत्थाऽसत्याद्यर्थनिषेधधीः । वर्त्मनैवाऽऽप्तमाप्नोति केवलाज्ज्ञानहानतः ॥१०६॥
एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते । निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् ॥१०७॥
तस्मादासन्नकर्तृत्वतिमिरोऽयमविद्यया । सत्यादिलक्षणं ब्रह्म प्रत्यक्स्थमपि नेक्षते ॥१०८॥
अतोऽविद्यानिषेधेन सदा विस्फुरितेक्षणः । पिबञ्ज्ञात्रादि[2] नानात्वं प्रत्यगात्मानमीक्षते ॥१०९॥

सत्यादिशब्दाः स्वार्थासन्त्यागिनश्चेत्स्वार्थानां सत्यादीनां भेदाद्गवानयनादिवाक्यवदस्मिन्नपि सत्यादि-
१० वाक्ये वाक्यार्थः संसर्गः संसृष्टो वा[3] स्यादित्याशङ्क्याऽऽह—निवर्त्येति । सत्यादिशब्दानामसत्याद्यर्थनिवर्तकत्वेनोक्तानां निवर्त्यभेदादेव यद्यपि भिन्नोऽर्थोऽभ्युपगम्यते तथाऽपि विरुद्धार्थपरिहाराय लक्ष्ये ब्रह्मणि तेषां पर्यवसानादात्मनो ब्रह्मणः सत्यादिवाक्यार्थस्य संसर्गसंसृष्टाभ्यामन्यत्वेनैकरस्यं वाक्यादेव सिध्यतीत्यर्थः ॥ १०२ ॥

यत्प्रत्यग्ब्रह्मणः शब्दाविषयत्वं जातिमत्त्वादिविशेषशून्यत्वादुक्तं तथैव तस्मिन्नभ्युपगते सति अविषयत्वस्य निर्विशेषत्वस्य च प्रतिपादकं वाक्यजातमुपपन्नार्थं; ब्रह्मणो विषयत्वे विशेषवत्त्वे चानुपपन्नार्थमप्रमाणमेव तदा-
१५ पद्येतेत्यात्मनो विषयत्वाद्यभावे प्रमाणमाह—यत इति ॥ १०३ ॥

सत्यादिशब्दानां ब्रह्मणि लक्षणया बोधकत्वमुपपाद्य पदार्थत्रयमुक्तमुपसंहरति—कौटस्थ्यमिति । तदेव सत्यं गुणो यस्य ज्ञानस्य तज्ज्ञानं तद्गुणं; सत्यत्वं ज्ञानस्य स्वरूपमित्याह—तद्गुणमिति । सत्यत्वेनोक्तस्य ज्ञानस्य स्वारस्येन कौटस्थ्ये स्थिते त्रिविधमानन्त्यं तस्य सिद्धयतीत्याह—स्वत इति । यथोक्तं ज्ञानं ज्ञातुः साक्षिणो ब्रह्मणः स्वरूपं तस्याऽऽनन्त्यं कीदृगित्यपेक्षायामुक्तम्—एकतेति ॥ १०४ ॥

२० सत्यं ज्ञानमनन्तं ब्रह्मेतिवाक्यमेवं व्याख्याय समनन्तरवाक्यगतं यो वेदेति भागमाक्षिपति—ज्ञात्रभेदादिति। तद्धि प्रकृतं ब्रह्म ज्ञानात्मत्वेन ज्ञेयत्वेन न वर्तते ज्ञानकर्तुः सकाशादभिन्नत्वाभ्युपगमात्, न च तस्य ज्ञानकर्तृत्वं अविक्रियत्वात् । न च ब्रह्मातिरेकेण ज्ञाताऽभ्युपगम्यते । न चैकत्र कर्मकर्तृभावः सम्भवत्यतो यो वेदेत्यनुपपन्न-मित्यर्थः ॥ १०५ ॥

सत्यादिशब्देन यद्ब्रह्म लक्ष्यते तदज्ज्ञानोत्थं यदसत्यादि तन्निषेधिका याऽहं ब्रह्मास्मीत्यविषयाकारा
२५ धीरुत्पद्यते तया प्राप्तमेव ब्रह्माप्राप्तिहेत्वज्ञाननिवृत्त्या प्राप्नोतीत्युपचारादुच्यते । तत्र कर्मकर्तृत्वस्याविवक्षितत्वान्नैव-मिति परिहरति—सत्यादीति ॥ १०६ ॥

नन्वज्ञातं ब्रह्म ज्ञायते, बद्धं च मुच्यते, निवर्तते च निवृत्तमेवाज्ञानं; तथैवाप्राप्तमेव ब्रह्म प्राप्तुं युक्तं तत्राऽऽह—एवमिति । प्राप्तप्राप्तिवदिति यावत् । ब्रह्मैव सन्ब्रह्माप्येति प्रज्ञानं ब्रह्म विमुक्तश्च विमुच्यते । एकमेवा-द्वितीयमित्यादिशास्त्रमत्र प्रमाणमित्यभिप्रेत्याऽऽह—त्रिरिति ॥ १०७ ॥

३० अज्ञानादेः नित्यनिवृत्तत्वे किमिति सर्वदा ब्रह्मणि न प्रतिपत्तिरित्याशङ्क्याऽऽह—तस्मादिति। निवृत्तस्यैवा-ज्ञानादेरनिवृत्तवद्भानादिति यावत् । आसन्नत्वं आरोपितत्वम् ॥ १०८ ॥

अविद्याध्यस्तकर्तृत्वादिकृतं प्रत्यग्ब्रह्मणोऽस्फुरणमिति स्थिते फलितमाह—अत इति ॥ १०९ ॥

१. संसर्गरूपं वाक्यार्थत्वं नेत्यर्थः ।

२. पिबन्=निरस्यन् ।

३५ ३. संसर्ग इति तार्किकमतेन । संसृष्ट इति । अंशत्रयसंसृष्टभावनेति भाट्टाः । विषयनियोज्यसंसृष्टं कार्यमिति प्राभाकराः ।

भूतमात्रोपसंश्लेषसमुत्थं यत आत्मनः । कर्तृभोक्तृत्वविज्ञानं बुद्धौ तन्निहितं ततः ॥११०॥
तमोरजोविनिर्मुक्ततद्वृत्त्या चोपलभ्यते । ब्रह्मातो निहितं बुद्धौमन सैवेति च श्रुतिः ॥१११॥
निगूढमस्यां तद्ब्रह्म कामाविद्याद्युपप्लवात् । प्रत्यग्धियोऽनुपश्यन्ति तस्माद्बुद्धिर्गुहोच्यते ॥११२॥
परमं व्योम हार्दं स्याद्बाह्यात्तत्परमं यतः । श्रुतेर्योऽयं बहिर्धेति तच्च बुद्धेः समाश्रयम् ॥११३॥
गुहायां परमे व्योमन्वस्तुवृत्तमपेक्ष्य वा । सत्यादिलक्षणान्नान्यद्धियः प्रत्यक्प्रतीयते ॥११४॥
सत्याद्यर्थविरुद्धेभ्यः सम्यग्व्यावृत्तधीर्यतिः । धियः प्रत्यक्प्रविश्याथ सत्यात्मानं प्रपश्यति ॥११५॥
तस्मादुपायसिद्ध्यर्थं बुद्धेः प्रत्यक्प्रवेशनम् । गुहायां परमे व्योमञ्श्रुतिरस्मानतोऽन्वशात् ॥११६॥
ज्ञातुर्ज्ञेयं परं ब्रह्म भेदबुद्ध्यपनुत्तये । गुहायां परमे व्योमञ्ज्ञेयं ज्ञातरि शिष्यते ॥११७॥
साध्यसाधनसम्बन्धवर्त्मनैवानुधावतः । साध्यसाधननिर्मुक्तं स्वात्मन्याविशते परम् ॥११८॥

एवं "यो वेदे"ति वाक्यभागे सम्भवत्यपि, निहितशब्दो न सम्भवति कुण्डे बदरवदनाधारत्वाद्ब्रह्मणो बुद्धौ निहितत्वासिद्धेरित्याशङ्क्याऽऽह—भूतमात्रेति। भौतिकमन्तःकरणं भूतमात्राशब्देनात्र गृह्यते। अविद्याध्यस्तबुद्धिसम्बन्धकृतकर्तृत्वादिधर्मवत्त्वादात्मनो बुद्धौ निहितत्वोक्तिरित्यर्थः॥ ११० ॥

सात्त्विकबुद्धिवृत्त्याऽहं ब्रह्मास्मीति वाक्योत्थया ब्रह्मणो दर्शनाद्ब्रह्म बुद्धिस्थमुक्तमिति पक्षान्तरं सप्रमाणमाह—तम इति ॥ १११ ॥

निहितशब्दार्थमित्थमुक्त्वा बुद्धेर्गुहात्वं साधयति—निगूढमिति ॥ ११२ ॥

परमे व्योमन्नित्यस्यार्थमाह—परममिति। हृदयावच्छिन्नं भूताकाशं परमं व्योमेत्यत्र प्रमाणमाह—श्रुतेरिति। उक्ते हृदयाकाशे या गुहा बुद्धिस्तस्यां ब्रह्म नित्यं सन्निहितमिति सप्तम्यर्थं सूचयति—तच्चेति ॥ ११३ ॥

परमे व्योमन्नित्यस्यार्थान्तरमाह—गुहायामिति। अन्तःकरणे कार्यापेक्षया प्रकृष्टं व्योमाव्याकृताकाशमज्ञातं ब्रह्म तत्र कार्यकारणविनिर्मुक्तं शुद्धं ब्रह्म व्यवस्थितमिति वास्तवं वृत्तमपेक्ष्य वाचोयुक्तिरित्यर्थः। वस्तुवृत्तमपेक्ष्योक्तमेव व्यनक्ति—सत्यादीति। अतःकरणात्कार्यभूतात्प्रत्यगान्तरं यदज्ञातं ब्रह्म कारणं तत्र सत्यज्ञानानन्तानन्दात्मकात्परिशुद्धात्कार्यकारणविरुद्धाद्ब्रह्मणोऽन्यन्न प्रामाणिकमस्तीत्यतो बुद्धिगुहायां परमं व्योमाज्ञातं ब्रह्म तत्स्वरूपत्वेन स्थितं तत्र कार्यकारणविलक्षणं ब्रह्म निहितमित्यर्थः॥ ११४ ॥

बुद्धिकारणे ब्रह्मण्यज्ञाते कार्यकारणविनिर्मुक्तस्य ब्रह्मणोऽवस्थानकथनप्रयोजनमाह—सत्यादीति। अनृतजडपरिच्छिन्नदुःखेभ्यः संशयविपर्यासव्यतिरेकेण व्यावृत्तबुद्धिरुत्तमो ज्ञानाधिकारी धियोऽन्तःकरणात्प्रतीचि कारणे ब्रह्मणि प्रविश्य कार्यमात्रस्य तदुपाधिकाभावस्य च तदतिरेकेणाभावमालोच्याज्ञातस्य ब्रह्मणोऽपि कारणस्य कार्यकारणविलक्षणब्रह्माव्यतिरेकेणाभावं ज्ञात्वा सत्यज्ञानानन्तानन्दात्मकं ब्रह्मैव बुद्धिसाक्षिणस्तत्त्वमिति निश्चिनोतीत्यर्थः॥ ११५ ॥

यस्मादेवं बुद्धिकारणे निहितं ब्रह्मेत्युक्ते बुद्धिसाक्षिणो ब्रह्मत्वं सिध्यति तस्माद्बुद्धेः प्रतीचि कारणे कार्यकारणविलक्षणब्रह्मप्रवेशनं निहितं गुहायामित्याद्या श्रुतिरहं ब्रह्मास्मीति प्रतिपत्त्युपायत्वेनानुशास्त्यतो यो वेदेत्याद्या श्रुतिरुपपन्नार्थेत्याह—तस्मादिति ॥ ११६ ॥

सम्प्रति प्रथमव्याख्यानमेवानुसृत्य वाक्यार्थं कथयति—ज्ञातुरिति। आत्मनो बुद्धिसाक्षिणो ज्ञेयं परं ब्रह्मेत्युक्ते तयोर्भेदबुद्धिरुपजायते तन्निवृत्त्यर्थं बुद्धौ बाह्याकाशापेक्षया प्रकृष्टं यदाकाशं तत्र निहितं ब्रह्मेत्युच्यते। तथा च ज्ञेयं ब्रह्म साक्षि(णि)तावन्मात्रमवशिष्यते सोऽपि साक्षी ब्रह्ममात्रमिति न तयोर्भेदशङ्काऽस्तीत्यर्थः॥ ११७ ॥

ज्ञातृज्ञेययोर्जीवब्रह्मणोरभेदे जीवस्य संसारित्वाद्ब्रह्मणोऽपि संसारित्वप्रसङ्गात्तत्प्राप्तिरसमीहिता स्यादित्याशङ्क्याऽऽह—साध्येति। यागादिना स्वर्गादि साध्यमिति साध्यसाधनसङ्गतिद्वारेण प्रवृत्तस्य संसारिणस्तदुभय-

सोऽश्नुते निखिलान्कामान्कर्तृत्वे तदसम्भवम् । आशङ्क्य ब्रह्मणेत्याह युगपत्स्यात्सहेति च ॥११९॥
प्रतीचि न स्यात्तद्ब्रह्म भेदार्था चेत्सहार्थता । सम्भाव्यते पराग्भूतं नापि सत्यादिमत्परम् ॥१२०॥
नापि नोत्सहते वक्तुं निपातत्वात्सहार्थताम् । तस्माद्युगपदर्थस्य वाचकं स्यात्सहेति यत् ॥१२१॥
ज्ञानादसत्याद्युच्छित्तेरात्मनोऽन्यन्न विद्यते । तस्माद्विपश्चिद्ब्रह्मभ्यां[1] कामान्सर्वान्सहाश्नुते ॥
५ ज्ञातुर्हार्दगुहान्तस्थं प्रतीचोऽन्यन्न लभ्यते । सत्यादिमदतो ब्रह्म प्रत्यगात्मैव तद्विदः ॥१२३॥
विपश्चिद्व्यतिरेकेण ज्ञेयत्वाद्यपनुत्तये । सामानाधिकरण्येन ब्रह्मणाऽऽह विपश्चिता ॥१२४॥
एकयाऽक्रमवर्तिन्या व्याप्नोति क्रमवर्तिनः । अवगत्याऽखिलान्कामान्योऽकाम इति च श्रुतिः॥१२५॥
आदावन्ते तथा मध्ये धियोऽनेकशरीरगाः । निर्विशेषैकचिद्व्याप्ता ह्यनन्यानुभवात्मना ॥१२६॥
सर्वप्रवृत्तिहेतूंश्च यस्माद्ब्रह्मविदश्नुते । कामान्ब्रह्मविदस्तस्मान्न प्रवृत्तिरहेतुतः ॥१२७॥

१० विलक्षणं परं ब्रह्म स्वरूपत्वेन यदा प्राप्तं भवति तदा संसारिणोऽपि संसारित्वं निवर्तते तत्कथं तद्द्वारा ब्रह्मणः संसारित्वं शङ्कितुं शक्यमित्यर्थः ॥ ११८ ॥

ब्रह्मात्मैकत्वविदशेषं पुरुषार्थमाप्नोतीत्यस्मिन्नर्थे सोऽश्नुते सर्वान्कामानिति वाक्यैकदेशं व्याचष्टे—**सोऽश्नुत इति**। कर्तृत्वे सर्वपुरुषार्थसिद्धिर्न सम्भवतीत्याशङ्क्य तस्याविद्याध्यारोपितत्वाद्ब्रह्मरूपेण विदुषः सर्वपुरुषार्थसिद्धिरविरुद्धेत्युत्तरवाक्यावष्टम्भेन दर्शयति—**कर्तृत्व इति**। सहशब्दार्थमाह—**युगपदिति** ॥ ११९ ॥

१५ सहशब्दस्य यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याऽऽह—**प्रतीचीति**। सहशब्दस्य मुख्यार्थत्वे सत्यात्मब्रह्मणोर्भेदाद्भेदार्थता सहशब्दस्य स्यादेवं सहशब्दश्रुतिर्भेदार्था ततश्च सहशब्दस्य भेदेनार्थेनाऽर्थवत्तेति चेत्। उच्यते तदाऽऽत्मनि स्वरूपभूतं ब्रह्म न सिध्यति। तथा च तत्त्वमस्यादिवाक्यविरोधाद्युगपदर्थतायाः सहशब्दस्य युक्तत्वादेकस्मिन्नेव क्षणे सर्वान्पुरुषार्थान्ब्रह्मरूपेण ब्रह्मविदनुभवतीत्यर्थः। आत्मनः सकाशाद्ब्रह्मणो भेदे दोषान्तरमाह—**संभाव्यत इति** ॥ १२० ॥

२० सहशब्दस्य युगपदर्थे सामर्थ्याभावान्न तदर्थत्वमित्याशङ्क्याऽऽह—**नापीति**। सहशब्दः सहार्थतां वदन्युगपदर्थं वक्तुं नैव शक्नोतीति न; निपातानामनेकार्थत्वादस्य च निपातत्वादित्यर्थः। फलितमुपसंहरति—**तस्मादिति** ॥ १२१ ॥

सहशब्दस्य युगपदर्थत्वेऽपि यौगपद्यस्य भेदसापेक्षत्वाद्भेदप्रसक्तिरित्याशङ्क्याऽऽह—**ज्ञानादिति**। अहं ब्रह्मास्मीति ज्ञानादज्ञाननिवृत्त्या तत्कार्यासत्यपरिच्छेदादिनिवृत्तेः साक्षात्कृतब्रह्मा ब्रह्मविदात्मरूपेण ब्रह्मरूपेण च २५ सर्वानानन्दान्यौगपद्येनानुभवति। अविद्यावस्थायामुपाध्यवच्छेदाद्विभक्तवदभिक्तेर्बह्वूक्तिरित्यर्थः ॥ १२२ ॥

विपश्चिद्ब्रह्मभ्यामित्युक्तत्वाद्विद्वद्ब्रह्मणोर्भेदः स्यादित्याशङ्क्याऽऽह—**ज्ञातुरिति**। यो वेद निहितं गुहायामिति ब्रह्मणो बुद्धिस्थत्वाभिधानादात्मनश्च तथात्वात्तयोर्भेदगन्धोऽपि नास्तीत्यर्थः ॥ १२३ ॥

विद्वद्ब्रह्मणोर्भेदाभावे हेत्वन्तरमाह—**विपश्चिदिति**। ज्ञेयत्वादीत्यादिशब्देन प्राप्यत्वं ब्रह्मणो गृह्यते॥१२४॥

सर्वान्कामान्समश्नुते इत्यस्यार्थमनूद्य तत्रैवार्थे श्रुत्यन्तरसम्वादं दर्शयति—**एकयेति**। विदुषो विषयसुख-
३० प्राप्तौ सक्रियत्वमाशङ्क्यावगतिं विशिनष्टि—**अक्रमवर्तिन्येति** ॥ १२५ ॥

अवगतेरुक्तं कूटस्थत्वं साधयति—**आदाविति** ॥ १२६ ॥

ब्रह्मविदोऽपि प्रवृत्तिमिच्छतां यथोक्तश्रुतिविरोधः स्यादित्यार्थिकं वाक्यतात्पर्यमाह—**सर्वप्रवृत्तीति**। विदुषा सुखानां कामशब्दितानामाप्तत्वात्तस्य कामाभावात्तन्निबन्धना प्रवृत्तिर्न सिध्यतीत्यर्थः ॥ १२७ ॥

---

१. आत्मब्रह्मरूपाभ्यामित्यर्थः ।

अविद्याहेतवः कामाः काममूलाः प्रवृत्तयः। धर्माधर्मौ च तन्मूलौ देहोऽनर्थाश्रयस्ततः ॥१२८॥
अतोऽविद्यानिरोधे स्यान्निरोधो विदुषः सदा। निःशेषकर्महेतूनां विकाराणां तदैव तु ॥१२९॥
कृत्स्नोपनिषदर्थस्य सूत्रमित्यस्यधात्पुरा। संक्षेपतस्तदर्थश्च सम्यङ्मन्त्रेण वर्णितः ॥१३०॥
अनेन त्वाद्यसूत्रेण यावानर्थोऽत्र सूत्रितः। आसमाप्तेरियं वृत्तिस्तमादित्युच्यतेऽधुना ॥१३१॥
सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम्। स्यामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयम् ॥१३२॥ ५
ननु सत्यमनन्तं च कथं सम्यक्प्रतीयते। देशकालादिहेतुत्वात्तदिदानीं विभाव्यते ॥१३३॥
वस्तुतो देशतश्चैव कालतश्च त्रिधोच्यते। आनन्त्यं ब्रह्मणश्चातः सत्याद्यपि च सिध्यति ॥१३४॥
अनन्तं देशतो व्योम देशवत्प्रकृतित्वतः। कारणेनैकदेशं हि कार्यं नान्यत्र वर्तते ॥१३५॥
कार्यत्वात्कालतो नास्य वस्तुतश्च विहायसः। वस्त्वन्तरस्य सद्भावादानन्त्यं वस्तुतोऽपि न ॥१३६॥
कालाकाशादियोनित्वात्सर्वात्मत्वात्तथाऽऽत्मनः। वस्त्वन्तरस्य चासत्त्वान्मुख्यानन्त्यं परात्मनः ॥१३७॥ १०
कल्पितेन परिच्छेदो न ह्यकल्पितवस्तुनः। कल्पितश्चेह कालादिर्वाचारम्भणशास्त्रतः ॥१३८॥

ब्रह्मविदो विद्ययाऽविद्यानिवृत्त्या कामादिनिवृत्तिरयत्नतः सिध्यतीत्येतदुपपादयति—अविद्येत्या-दिना ॥ १२८-१२९ ॥

तस्माद्वा एतस्मादित्यादेरुत्तरस्य सन्दर्भस्य सम्बन्धं वक्तुं वृत्तं कीर्तयति—कृत्स्नेति। ब्रह्मविदाप्नोति परमिति वाक्यं वल्लीद्वयार्थस्य ब्रह्मणस्तज्ज्ञानस्य तत्फलस्य च सूत्रमिति भाष्यकृदुक्तवान्। तच्च सूत्रितमर्थत्रयं १५ सत्यमित्यादिना मन्त्रेण संशयविपर्ययापोहेन संक्षेपतो व्याख्यातमित्यर्थः ॥ १३० ॥

ब्रह्मविदाप्नोति परमितिसूत्रेण योऽर्थः सूत्रितो यश्च मन्त्रेण संक्षेपतो व्याख्यातस्तस्यार्थस्य प्रपञ्चनार्थं तस्मादित्यादिसमाप्तिपर्यन्तं ग्रन्थजातमिति सम्बन्धं दर्शयति—अनेनेति ॥ १३१ ॥

समुदायतात्पर्यमुक्त्वा मन्त्रोक्तमनुवदति—सत्यमिति ॥ १३२ ॥

कोशपञ्चकविलक्षणं सत्यज्ञानानन्तानन्दात्मकं निर्विशेषं निर्भयं ब्रह्मात्मेत्यात्मब्रह्मणोरैक्ये मन्त्रेणोक्ते २० चोदयति—नन्विति। सर्वपदार्थानां त्रिधा परिच्छिन्नत्वाद्ब्रह्मणोऽपि वस्तुत्वेन विभक्तत्वाद्रज्जुसर्पवदेव सत्यत्वा-योगादसत्यत्वादेव जडत्वादुक्तो मन्त्रार्थो न सिध्यतीत्यर्थः। सर्वजगत्कारणत्वाद्ब्रह्मणस्त्रिविधमानन्त्यं सिध्यत्यतश्च सत्यत्वं ज्ञानत्वं च तस्मिन्नुपपद्यते तच्चानन्त्यं सर्वकारणत्वकृतमनन्तरमेव प्रकटीकर्तव्यमिति परिहरति—देशेति ॥ १३३ ॥

तदिदानीं विभाव्यत इत्युक्तं प्रपञ्चयति—वस्तुत इति। अतःशब्दादुपरिष्टाच्चशब्दः सम्बध्यते परिच्छिन्न- २५ स्यैवासत्यत्वजडत्वदर्शनान्नापरिच्छिन्ने तत्प्राप्तिरित्यर्थः ॥ १३४ ॥

आकाशवदेव ब्रह्मणोऽनन्तत्वं न निरङ्कुशमित्याशङ्क्य वैषम्यमाह—अनन्तमिति। देशवतां पृथिव्यादीना-मुपादानत्वेऽपि कथमाकाशस्य देशतोऽनन्तत्वमित्याशङ्क्य कार्याणां सर्वेषामाकाशेऽन्तर्भावादित्याह—कारणेनेति॥१३५॥

तर्हि तथैव कालतो वस्तुतश्च तस्याऽऽनन्त्यं नेत्याह—कार्यत्वादिति। वस्तुतश्चाऽऽकाशस्य नाऽऽनन्त्य-मित्युक्तं स्पष्टयति—वस्त्वन्तरस्येति। आकाशव्यतिरिक्तस्य ब्रह्मणः सद्भावादित्यर्थः ॥ १३६ ॥ ३०

ब्रह्मण्याकाशाद्वैषम्यं दर्शयन्नाह—कालेति ॥ १३७ ॥

कार्येण कालादिना परिच्छिन्नस्य ब्रह्मणो न युक्तं मुख्यमानन्त्यमित्याशङ्क्य कल्पितत्वात्कालादेर्नैव-मित्याह—कल्पितेनेति। कल्पितत्वमेव कालादेरसिद्धं मानाभावादित्याशङ्क्याऽऽह—कल्पितश्चेति। विकारस्य वाचारम्भणत्वेन मिथ्यात्वाद्विकारत्वाच्च कालादेरपि मिथ्यात्वसिद्धिरित्यर्थः ॥ १३८ ॥

तस्मात्सत्यादियाथात्म्यं तस्मादित्येवमादिना । वक्ष्यते ब्रह्मणः सम्यक्सृष्टिव्याजेन यत्नतः ॥१३९॥
तस्मादित्यादिवाक्योक्तं वैशब्दः स्मरणाय तु । एतस्मादिति मन्त्रोक्तं सत्यादिगुणलक्षितम् ॥१४०॥
तद्विद्विपश्चित्सामर्थ्याच्चदेतद्भ्यां प्रतीयते । आत्मश्रुतेर्न मुख्योऽर्थः प्रतीचोऽन्यत्र लभ्यते ॥१४१॥
मत्तः सर्वमिदं जातं मय्येवान्ते प्रलीयते । अहमेको त्रिभिर्मीदमित्येवं च प्रसिध्यति ॥१४२॥
५ सर्वानन्याविकार्येकमकार्याकारणं परम् । ब्रह्मस्वभावमालम्ब्य सृष्टिर्वक्तुं न शक्यते ॥१४३॥
ब्रह्मणोऽन्यदतः सर्वं कार्यत्वेन विवक्ष्यते । ब्रह्मणोऽकारणत्वाच्च सृष्टौ हेतोरसम्भवः ॥१४४॥
ब्रह्मस्वभावो हेतुश्चेत्सृष्टेस्तत्सन्निधेः सदा । सर्वदा ब्रह्मवत्सर्गो न च देशाद्यसम्भवात् ॥१४५॥
नाभूत्सृष्टिरभूतत्वादभूतं कालहेतुतः । न भविष्यत्यभाव्यत्वादभाव्यं चाक्रियोत्थितेः ॥१४६॥
नेदानीमद्वितीयत्वात्कौटस्थ्यादात्मनः सदा । भविष्यत्यस्त्यभून्नातो वस्तुवृत्तमपेक्ष्य तु ॥१४७॥

१० तस्मादित्यादिना सृष्टिप्रतिपादनात्कार्यकारणप्रपञ्चस्य सत्यत्वसिद्धिरित्याशङ्क्य सृष्टिकथनव्याजेन ब्रह्म-याथात्म्यं सत्यत्वादिलक्षणं श्रुत्या प्रतिपाद्यते न तु सृष्टिरित्याह—**तस्मादिति**। ब्रह्मणस्त्रिविधमानन्त्यं कार्य-कारणयोश्च कल्पितत्वमित्यस्यार्थस्य विवक्षितत्वादिति यावत् ॥ १३९ ॥

तस्मादित्यादिवाक्यस्यैवं तात्पर्यमुक्त्वा पदत्रयार्थं कथयति—**तस्मादितीति** ॥ १४० ॥

प्रकृतस्य ब्रह्मणस्तच्छब्दपरामृष्टस्य प्रत्यक्त्वेन सन्निहितत्वादेतच्छब्देनोपादाने कारणमाह—**तद्विदिति**। १५ ब्रह्मविदाप्नोति परमिति ब्रह्मज्ञानमात्राद्ब्रह्मप्राप्तिश्रवणाद्ब्रह्मणा विपश्चितेति च ब्रह्मविदो विपश्चितो ब्रह्मणा सामानाधिकरण्यश्रवणाद्ब्रह्मात्मनोरैक्यावगमात्पूर्वोक्तसामानाधिकरण्यसामर्थ्यात्तस्मादित्यत्रोक्ताभ्यां तदेतच्छब्दाभ्यां समानाधिकरणाभ्यां ब्रह्मात्मनोरभेदरूपं प्रत्यक्त्वं ब्रह्मणो भाति तेन तस्मिन्नेतच्छब्दप्रयोगोपपत्तिरित्यर्थः। किञ्चास्मिन्वाक्ये ब्रह्मण्यात्मशब्दप्रयोगो दृश्यते। स चाऽऽत्मत्वे सत्येव ब्रह्मणो युज्यते प्रतीचोऽन्यत्राऽऽत्मशब्दप्रयोगा-योगादतो युक्तं ब्रह्मात्मनोरैक्यमित्याह—**आत्मश्रुतेरिति** ॥ १४१ ॥

२० किञ्च ब्रह्मणः सर्ववेदान्तेषु जगत्कारणत्वश्रवणादात्मनश्च "आत्मा वा इदमेक एवाग्र आसीदि"त्यादाविवात्र तदभिधानात्कारणद्वयस्यायुक्तत्वाज्जगत्कारणत्वलिङ्गाद्ब्रह्मात्मनोरैक्यं सिध्यतीत्याह—**मत्त इति** ॥ १४२ ॥

आकाशः सम्भूत इत्यादिश्रुत्युक्तत्वादाकाशादिसृष्टिर्वास्तवीत्याशङ्क्याऽऽह—**सर्वेति** ॥ १४३ ॥

न ब्रह्मस्वभावमनुसृत्य सृष्टिरुच्यते किन्तु कारणानुरोधेनेत्याशङ्क्य कारणं ब्रह्मणोऽन्यदनन्यद्वेति विकल्प्य प्रथमं प्रत्याह—**ब्रह्मणोऽन्यदिति**। अतःशब्देन ब्रह्मातिरिक्तस्य सर्वस्य कार्यत्वे ब्रह्मान्यत्वमेव हेतूक्रियते। तथाच २५ मूलकारणत्वासिद्धिरिति शेषः। तर्हि ब्रह्मैव कारणमिति द्वितीयं पक्षमाशङ्क्याऽऽह—**ब्रह्मण इति**। अकारणत्वं कूटस्थत्वम् ॥ १४४ ॥

कूटस्थस्यापि कारणत्वमयस्कान्तवदित्याशङ्क्य ब्रह्मसत्तासन्निधिसातत्यात् ब्रह्मवदेव जगतः सर्गोऽपि सातत्येन स्यादिति दूषयति—**ब्रह्मेति**। न चास्तु सर्वदा सृष्टिरिति वाच्यं। सर्वं हि जायमानं देशे काले च जायते। न च तथा देशकालादि सम्भवति देशस्य देशान्तराभावात्कालस्य च कालान्तराभावात्, न चावस्थान्तरमवस्थायाः ३० सिध्यत्यनवस्थानादतो न सर्वदा सृष्टिरित्याह—**न चेति** ॥ १४५ ॥

किञ्च भूतकालपरिच्छेद्या वा भविष्यत्कालपरिच्छेद्या वा वर्तमानकालपरिच्छेद्या वा सृष्टिरेष्टव्या? नाऽऽद्यः स्रष्टृत्वेनेष्टस्य ब्रह्मणो ऽङ्गत्वेन भूतकालसम्बन्धाभावादित्याह—**नाभूदिति**। अभूतत्वे ब्रह्मणो हेत्वन्तरमाह—**अभूतमिति**। कालकारणत्वादभूतकालापरिच्छेद्यं ब्रह्म। कारणत्वेन कालान्वयस्य मायात्मकत्वात् ब्रह्मणो घटादिवन्न कालव्याप्यतेत्यर्थः। द्वितीयं दूषयति—**न भविष्यतीति**। ब्रह्मणो भविष्यत्कालापरिच्छेद्यत्वादिति हेतुमाह— ३५ **अभाव्यत्वादिति**। तस्याभाव्यत्वे हेत्वन्तरमाह—**अभाव्यं चेति**। अक्रियोत्थितिरकार्यत्वम् ॥ १४६ ॥

तृतीयं प्रत्याह—**नेदानीमिति** ॥ १४७ ॥

भविष्यत्यस्त्यभूच्चेति यतो वन्ध्यं विशेषणम् । उष्ट्रादिवदणोस्तस्मादविद्यैवात्र कारणम् ॥१४८॥
असतः कारणं नास्ति सतोऽनतिशयत्वतः । कौटस्थ्याज्जन्मनाशानामनवस्था जनेर्जनौ ॥१४९॥
कालत्रयस्याविद्यायाः समुत्थानादहेतुता । कर्मदेवेश्वरादीनामत एवानिमित्तता ॥१५०॥
जनिस्थित्यप्यया ह्येते जगतः स्युः प्रतिक्षणम् । धिया जनयते कर्ता कर्मभिश्चेति हि श्रुतिः ॥१५१॥
अनादिमत्यनिधनाविद्यासन्दूषितात्मनः । ब्रह्मणो जायते व्योम तिमिरादिव चन्द्रमाः ॥१५२॥ ५
नालं क्षणमपि स्थातुं कार्यं तद्ध्रुवता कुतः । रज्ज्वेव भोग्यविद्योत्थं मूढदृष्टेर्ध्रुवायत ॥१५३॥
तिमिरोपप्लुतो यद्वद्भिन्नामिव समीक्षते । चन्द्रिकामात्मनस्तद्वत्कार्यं भिन्नं समीक्षते ॥१५४॥
यद्यद्भूतं यथासंख्यं तत्तत्तावद्गुणं स्मृतम् । पूर्वैर्व्याप्तानि कार्यत्वादुत्तराणि यथाक्रमम् ॥१५५॥
आकाशादेश्च कार्यत्वान्न वाय्वादि प्रजायते । वियद्रूपान्मरुज्जन्म तस्मादात्मन एव तत् ॥१५६॥
पञ्चैव खलु भूतानि व्योमादीन्युपलक्षयेत् । कार्यकारणरूपेण भूतेभ्यो नान्यदिष्यते ॥१५७॥ १०

इदं च हेतुद्वयं पूर्वत्रापि तुल्यं कालत्रयविशेष्यत्वं यतः सृष्टेरश्लिष्टमतो मायामिकैव सृष्टिरिति फलितमाह—भविष्यतीति । यथा करभो रासभो वा परमाणुरिति परमाणोर्विशेषणं निरर्थकं तथा कालत्रयमपि सृष्टिविशेषणं न सिध्यत्यतः सृष्टावविद्यैव कारणमित्युक्तं स्पष्टयति—उष्ट्रादिवदिति ॥ १४८ ॥

किञ्च सदसद्वा जायते ? न तावदसदुत्पद्यते तस्यासत्त्वादेव कारणासम्बन्धेन जन्मायोगात् । नापि सज्जायते तस्य पूर्वमेव सत्त्वाज्जन्मातिशयाभावादतः सृष्टिरपारमार्थिकीत्याह—असत इति । जन्मादिभावविकाराणां जन्माद्यभावात्तेषां कूटस्थत्वाच्च सृष्टिरपारमार्थिकीत्याह—कौटस्थ्यादिति । जन्मनाशग्रहणमितरेषामपि भावविकाराणामुपलक्षणार्थं जन्मादेर्जन्माद्यङ्गीकारे दोषमाह—अनवस्थेति । यथा जन्मनो जन्माभ्युपगमेऽनवस्था, तथा नाशस्य नाशेऽपक्षयस्यापक्षये परिणामस्य परिणामे विवृद्धेर्विवृद्धावस्तित्वस्यास्तित्वे चानवस्थासाम्याज्जन्मादेर्जन्माद्ययोगात्कूटस्थत्वमास्थेयं; न च तथेष्यते ततः सृष्ट्यादि कल्पितमेवेत्यर्थः ॥ १४९ ॥ १५

कालो जगतो हेतुरिति केचित्तत्राऽऽह—कालत्रयस्येति । धर्माधर्मादिकारणमित्यपरे तान्प्रत्याह—कर्मेति । अत एव तेषामविद्यायाः समुत्थानादेवेति यावत् ॥ १५० ॥ २०

कालादेरकारणत्वे ब्रह्मणश्च कूटस्थत्वे मायामयी सृष्टिर्विद्याकर्मवशात्प्रतिक्षणं जगतो भवतीति श्रुत्यन्तरावष्टम्भेन दर्शयति—जनीति ॥ १५१ ॥

सृष्टिश्चेन्मायामयी तर्हि कथमात्मन आकाशः सम्भूत इति प्रत्यग्ब्रह्मणः सकाशादाकाशादिसृष्टिरुपदिश्यते तत्राऽऽह—अनादीति ॥ १५२ ॥ २५

आकाशादेर्ब्रह्मणो जायमानत्वेऽपि प्रध्वंसवदनाशित्वं किं न स्यात्तत्राऽऽह—नालमिति । तर्हि कथमाकाशादेर्ध्रुवत्वबुद्धिस्तत्राऽऽह—रज्ज्वेवेति ॥ १५३ ॥

ब्रह्मकार्यत्वे जगतो ब्रह्माभेदप्रतिभानासम्भवाद्घटस्य मृदो भेदानुपलम्भात्प्रकृते च भेदप्रतीतेर्न ब्रह्मकार्यं जगदित्याशङ्क्याऽऽह—तिमिरेति ॥ १५४ ॥

आकाशो जायमानः स्वगुणेन सह जायते वाय्वादीनि तु स्वकीयैर्गुणैः स्पर्शादिभिराकाशादिपूर्वपूर्वगुणैश्च शब्दादिभिः सह सम्भवन्तीति भाष्योक्तमनुवदति—यद्यदिति । भाष्यार्थं समर्थयते—पूर्वैरिति । पूर्वपूर्वाकाशादिभूतव्याप्तत्वेनोत्तरोत्तरवाय्वादिभूतोत्पत्तेस्तत्तदाकाशादिभूतगुणवत्त्वमुत्तरोत्तरवाय्वादिभूतस्योचितमित्यर्थः ॥१५५॥ ३०

आकाशाद्वायुरित्यादावाकाशादेर्वाय्वादिकारणत्वं श्रूयते तन्न यथाश्रुतं ग्राह्यमनन्वयादनवस्थानाच्च कार्यस्योपादानत्वासम्भवादित्याह—आकाशादेश्चेति। आकाशाद्वायुरित्याद्या श्रुतिस्तर्हि कथमित्याशङ्क्य तत्तद्रूपापन्नं ब्रह्मैवानादि तत्तदुपादानमिति श्रुतेरुपपत्तिमाह—वियद्रूपादिति ॥ १५६ ॥ ३५

"दशैव भूतमात्रे"ति क्वचिदुक्तत्वात्किमिति पञ्चानामेव भूतानामिहोत्पत्तिरुक्तेत्याशङ्क्य पञ्चीकृतापञ्चीकृताभिप्रायेण दशसंख्याव्यपदेशात्पञ्चैव वस्तुतो भूतानीति तेषामेवात्रोत्पत्तिरुक्तेत्याह—पञ्चैवेति । भूतानां पञ्चत्वेऽपि

वाय्वादिषु तु यः शब्दः खस्थं तमविचक्षणाः । वाय्वादीनामिवेक्षन्ते स्रग्गुणानिव भोगिनः ॥१५८॥
चतुर्गुणात्मिका पृथ्वी न चतुर्ष्वपि सा यथा । ब्रह्मात्मकं जगत्सर्वं ब्रह्मैवं न जगन्मयम् ॥१५९॥
सत्यं ज्ञानमनन्तं यत्प्रत्यग्ज्ञायि पुरैकलम् । अनन्यानुभवं ब्रह्म तत्सिद्धं न्यायतः स्फुटम् ॥१६०॥
दिगादिकारणो देवः पञ्चभूतशरीरभृत् । सर्वोऽस्मीत्यभिमानेद्धो विराडेवमजायत ॥१६१॥
५ अस्मात्पूर्वं भवेत्सूत्रं तस्मिन्सति विराडयतः । श्रुत्यन्तरानुरोधाच्च विज्ञानमिति लिङ्गतः ॥१६२॥
व्युत्थाप्यान्नमयादिभ्यो ह्यन्नं प्राणमितीरणात् । उपासनोपदेशाच्च सूत्रमत्र विवक्षितम् ॥१६३॥
कार्योत्पादात्पुरा सूत्रं मृद्वत्सदविभागवत् । कारणं कार्यमुत्पाद्य कार्यतामिव गच्छति ॥१६४॥

तदतिरिक्तमस्ति कार्यं कार्यभेदस्यासंख्यत्वादित्याशङ्क्य कार्यकारणरूपेण वर्तमानभूतपञ्चकातिरेकेण नान्यदस्ति कार्यमित्याह—कार्येति ॥ १५७ ॥

१० आकाशस्य सहजः शब्दो वायोः सहजः स्पर्शस्तत्राऽऽकाशसम्बन्धेन शब्दो दृश्यते तेजसः सहजं रूपं तस्मिन्नाकाशवायुसम्बन्धेन शब्दस्पर्शौ दृश्येते । अपां सहजो रसस्तास्वाकाशादिभूतत्रयसम्बन्धेन शब्दस्पर्शरूपाण्युपलभ्यन्ते । पृथिव्याः सहजो गन्धस्तस्यां पूर्वभूतचतुष्टयसम्पर्कद्वारेण शब्दस्पर्शरूपरसा गृह्यन्ते न स्वत इत्ययुक्तं गृह्यमाणगुणानां तत्र तत्र स्वाभाविकत्वसम्भवादित्याशङ्क्याऽऽह—वाय्वादिष्विति । शब्दग्रहणं स्पर्शादीनामुपलक्षणार्थमेकैकत्रैकैकगुणस्य स्वतो भावादगुणान्तरस्य भूतान्तरसम्पर्कप्रयुक्तत्वान्न स्वाभाविकत्वसिद्धिरित्यर्थः॥१५८॥

१५ ब्रह्मणो भूतकारणत्वे भूतमयत्वेन सविशेषत्वप्रसक्तिरित्याशङ्क्याऽऽह—चतुर्गुणेति । गुणशब्देन भूतान्युच्यन्ते । आकाशादिभूतचतुष्टयकार्यत्वात्पृथिव्या भूतचतुष्टयात्मकत्वेऽपि न भूतचतुष्टयस्य पृथिव्यात्मकत्वं पृथिवीकार्यत्वाभावात् । तथा भूतभौतिकं जगद्ब्रह्मकार्यत्वादशेषमपि ब्रह्मात्मकं तद्व्यतिरेकेण नास्ति । न हि शुक्त्यादिव्यतिरेकेण रजतादि सम्भवति । ब्रह्म तु न जगदात्मकमतत्कार्यत्वात् । न हि शुक्त्यादि रजताद्यात्मकमतो ब्रह्मणो निर्विशेषत्वमविरुद्धमित्यर्थः ॥ १५९ ॥

२० ब्रह्मणः सर्वकारणत्वेन सर्वस्य जगतो ब्रह्मव्यतिरेकेणासत्त्वस्याऽऽरम्भणाधिकरणन्यायेन सिद्धत्वात्प्रतिज्ञातं सत्यत्वादि सिद्धमित्युपसंहरति—सत्यमिति ॥ १६० ॥

पृथिव्या ओषधय इत्योषधीनां पञ्चीकृतपृथिवीकार्यत्वश्रवणात्पञ्चीकृतपञ्चमहाभूतोत्पत्तेरिहोक्तत्वेऽपि पृथगेव विराडात्मोत्पत्तिर्वक्तव्येत्याशङ्क्य पञ्चीकृतमहाभूतशरीरत्वाद्विराजस्तदुत्पत्त्यैवोत्पत्तिः सिद्धेत्याह—दिगादीति ॥ १६१ ॥

२५ तर्हि विराजः सूत्रकार्यत्वात्कारणस्य सूत्रस्योत्पत्तिरुच्यतां तत्राऽऽह—अस्मादिति । सूत्रमत्र विवक्षितमित्यत्रैव हेत्वन्तरमाह—श्रुत्यन्तरेति । "कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चे"ति श्रुत्यन्तरे विराडाधारत्वेन सूत्रस्य विवक्षितत्वादिह सूत्राधारविराट्प्रतीतेः सूत्रमत्र विवक्षितं प्रतिभातीत्यर्थः । "विज्ञानं यज्ञं तनुत" इति विज्ञानपदस्य सूत्रवाचकत्वाच्चात्र सूत्रमभिप्रेतमित्याह—विज्ञानमितीति ॥ १६२ ॥

भृगुवल्ल्या'मन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि'ति प्राणादिशब्दैः सूत्रस्याभिधानाच्च सूत्रमत्राभीष्टमित्याह—
३० व्युत्थाप्येति । "विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासत" इत्यत्र विज्ञानपदेनोक्तस्योपासनोपदेशाच्च सूत्रं पञ्चीकृतभूतोत्पत्तेः पूर्वं विवक्षितमेवेत्याह—उपासनेति । न हि धात्वर्थस्यात्रोपासनमुच्यते ब्रह्मज्येष्ठमिति विशेषणविरोधात् कर्तुरात्मनश्च कर्मत्वायोगात्कारणब्रह्मणश्च विज्ञानपदेनाग्रहणादतो विज्ञानशब्देन सूत्रमेव गृहीतमित्यर्थः ॥ १६३ ॥

पूर्वमेव विराडुत्पत्तेः सूत्रोत्पत्तिरभीष्टा चेत्तत्र पूर्वमेव किमिति कार्यव्यवहारो न बभूवेत्याशङ्क्याऽऽह—कार्येति । विराडुत्पत्तेः पूर्वं कार्यमपि सूत्रं स्वकारणेन सता परमात्मना सह विभागाभावादतिसूक्ष्मत्वात्कार्यव्यवहार-
३५ क्षमं न भवति । तदेव पुनर्विराडात्मकं कार्यमुत्पाद्य मृदिव घटादिकार्यं कार्यतां कार्यव्यवहारं गच्छति तद्व्यवहारक्षमं भवत्येव विराडात्मद्वारा स्थूलतालाभादित्यर्थः ॥ १६४ ॥

कार्येऽसति तु तत्सूत्रं प्रज्ञानघनरूपभृत् । अवच्छिन्नं स्वकार्येण समष्टिव्यष्टितां व्रजेत् ॥१६५॥
वृष्ट्यादिसव्यपेक्षाया भुवः पञ्चगुणात्मिकाः । व्रीहिप्रभृतयः सर्वा भवन्त्योषधयः क्रमात् ॥१६६॥
अदनार्हं तथाऽन्नं च ताभ्यः समभिजायते । जग्धादन्नाद्रसोत्पत्तिः शोणितं जायते रसात् ॥१६७॥
जायते रुधिरान्मांसं मेदसश्च ततो भवः । मेदसोऽस्थीनि जायन्ते मज्जाऽप्यस्थिसमुद्भवा ॥
ततः शुक्रस्य निष्पत्तिर्बीजं मात्रसृजा सह ॥१६८॥ ५
निजाविद्यामहाजालसंवीतधिषणः पुमान् । मोहोत्थानलकामाख्यबडिशापहृताशयः ॥१६९॥
तमसा कामशार्ङ्गेण सङ्कल्पाकर्षणेन सः । रागाख्यविषलेपेन ताडितो विषयेषुणा ॥१७०॥
ग्रहाविष्ट इवानीशश्चोदितो जन्मकर्मणा । योषिदग्निं पतत्याशु ज्योतिर्लोभात्पतङ्गवत् ॥१७१॥
आकृष्य देहात्तच्छुक्रं यथाकर्म यथाश्रुतम् । रेतोवहप्रनाड्याऽथ योनौ पुंसा निषिच्यते ॥१७२॥
तस्य योनौ निषिक्तस्य निमित्तवशवर्तिनः । जायते कललावस्था ततो बुद्बुदरूपिणी ॥१७३॥ १०
बुद्बुदाज्जायते पेशी पेशीतो जायते घनम् । घनादङ्गाभिनिष्पत्तिः केशरोमाणि चाङ्गतः ॥१७४॥
पूर्वजन्मनि यान्यासन् भूतानि करणानि च । तान्येवेहापि देहाय तद्यथेति श्रुतेर्बलात् ॥१७५॥
सर्वात्मनोऽप्यवच्छेदो विराजः सूत्रजन्मनः । इयानस्मीति संमोहात्कामकर्मसमन्वयात् ॥१७६॥

विराडुत्पत्तौ सूत्रे सामान्यविशेषव्यवहारोऽपि सिध्यतीत्याह—कार्येऽसतीति । विराडाख्यं कार्यं चेदसिद्धं तदा तत्सूत्रं क्रियाविज्ञानशक्तिरूपेण स्थितं नोभयविधव्यवहाराय पर्याप्तं; यदा तु विराडुत्पत्त्या तदवच्छिन्नं सूत्रमवतिष्ठते तदा तदुभयविधव्यवहारभाग्भवतीत्यर्थः ॥ १६५ ॥ १५

आकाशादिसृष्टिश्रुतेस्तात्पर्यार्थो दर्शितः । सम्प्रति पृथिव्या ओषधय इत्यस्यार्थमाह—वृष्ट्यादीति । भुवो वृष्ट्यादिसव्यपेक्षत्वं पञ्चीकृतत्वम् ॥ १६६ ॥

औषधीभ्योऽन्नमित्यस्यार्थमाह—अदनार्हमिति । अन्नात्पुरुष इत्युक्तं न हि केवलादन्नात्पुरुषोत्पत्तिर्दृश्यते तत्र रेतोरूपेण परिणतादन्नात्पुरुषोत्पत्तिरिति वक्तुं रेतोजन्मक्रममनुक्रामति—जग्धादिति ॥ १६७-१६८ ॥ २०

उक्तेन क्रमेणोत्पन्नं रेतो मातुः शोणितेन सहितं पुरुषोत्पत्तौ बीजमित्युक्त्वा तस्मात्पुरुषोत्पत्तिक्रमं दर्शयति—निजाविद्येत्यादिना । आत्मन्यनादिरनिर्वाच्याविद्या निजाविद्येत्युच्यते । मोहशब्देनाविवेको गृह्यते ततो जातस्य कामस्यानलत्वं कदाचिदप्यलंप्रत्ययविकलत्वम् ॥ १६९ ॥

तमस्तृतीयो गुणः कामरागयोर्विप्रकृष्टसन्निकृष्टविषयत्वेन भेदः । रागाख्यं विषं, तेन लेपो यस्मिन्निति बहुव्रीहिणा विषयेषुर्विशेष्यते ॥ १७०-१७१ ॥ २५

परवशस्य योषिदनुषङ्गे पश्चात्तनं कृत्यं दर्शयति—आकृष्येति । तच्छुक्रमिति प्रागुक्तप्रकारेण निष्पन्नमित्यर्थः । तयोर्जन्यजनकयोर्वा स्त्रीपुंसयोर्वा यथाकर्म यथाश्रुतं तथा रेतः सर्वेभ्योऽङ्गेभ्यः समाकृष्य रेतोवहया प्रजननेन्द्रियरूपया नाड्या पुरुषेणानन्तरमेव योनौ निषिक्तं भवतीत्यर्थः ॥ १७२ ॥

निमित्तवशवर्तित्वं पूर्वोक्तज्ञानकर्मानुसारित्वम् ॥ १७३ ॥

पेशीतो मांसाद् घनं कठिनं कार्यं ततोऽङ्गं शरीररूपं निर्वर्तते ॥ १७४ ॥ ३०

अनेन क्रमेण जायमानस्य शरीरस्य पूर्वोपात्तदेहारम्भकभूतपञ्चकमेवोपादानं; करणानि च तत्रत्यान्येवात्राभिव्यज्यन्ते । "तद्यथा पेशस्कारी"त्यादिश्रुतेरित्येतमर्थमाह—पूर्वजन्मनीति ॥ १७५ ॥

यदुक्तक्रमेणान्नादुत्पन्नं शरीरं तत्र यः स्थूलो भागः स सूत्रकार्यस्य विराजोऽनवच्छिन्नस्यापि संमोहात्कामकर्मवशादियानेतावन्मात्रोऽस्मीत्यवच्छेदो भवतीत्याह—सर्वात्मन इति ॥ १७६ ॥

**लिङ्गात्मकतया तद्वत्समष्टिव्यष्टिरूपिणः । तदवच्छेदहेतोः स्यादव्यक्तस्य सुषुप्तता ॥१७७॥**
**परात्मनोऽप्यनन्तस्य क्षेत्रज्ञत्वमविद्यया । क्षेत्रज्ञं चापि मां विद्धीत्येवं सत्युपपद्यते ॥१७८॥**
**न जानामीत्यविद्यैकाऽनित्या तत्कारणं मता । स्वप्रसिद्धैव सा सिध्येन्निशौलूकीव वासरे ॥१७९॥**
**प्रमाणोत्पन्नया दृष्ट्या योऽविद्यां द्रष्टुमिच्छति । दीपेनासौ ध्रुवं पश्येद्गुहाकुक्षिगतं तमः ॥१८०॥**
**५ अनात्मेतीह यद्भाति तदविद्याविजृम्भितम् । तस्मादविद्या साऽप्युक्ता विद्या त्वात्मैकरूपिणी ॥१८१॥**
**आत्माग्रहातिरेकेण तस्या रूपं न विद्यते । अमित्रवदविद्येति सत्येवं घटते सदा ॥१८२॥**
**तस्मात्सदसदित्यादिर्विकल्पो मूढचेतसाम् । निरूप्यमाणो निर्वाति न वेद्मीत्यग्रहात्मनि ॥१८३॥**
**तया संवीतचित्तोऽयं त्यक्त्वा देहं पुरातनम् । लिङ्गात्मा प्राविशेद्योनिं कर्मादिमरुतेरितः ॥१८४॥**
**अन्नमम्भस्तथा तेजो भुक्तं प्रत्येकशस्त्रिधा । त्रिवृत्कृतं तथैवैकं परिणामं प्रपद्यते ॥१८५॥**
**१० पुरीषमांसबुद्ध्यंशैर्मूत्रासृक्प्राणरश्मिभिः । तथाऽस्थिमज्जावाग्भागैरन्नाप्तेजांसि कालतः ॥१८६॥**
**मनोबुद्धीन्द्रियाणां स्यात्कर्मशक्तेश्च भारती । प्राणश्च प्राणभेदानामुपलक्षणसिद्धये ॥१८७॥**

तथैव तस्मिन्नेव शरीरे यः सूक्ष्मो भागः सप्तदशकलिङ्गात्मकत्वेन वर्तते स समष्टिव्यष्ट्यात्मकसूत्रस्यावच्छेदकः स्यादित्याह—**लिङ्गेति** । तस्यावच्छेदकद्वयस्य हेतुरव्यक्तं तस्य सौषुप्तं रूपमत्र शरीरेऽवच्छेदो गृह्यतामित्याह—**तदवच्छेदेति** ॥ १७७ ॥

१५ यश्चात्र शरीरे क्षेत्रज्ञाख्यश्चैतन्याभासो गृह्यते स परस्य कार्यकारणविलक्षणस्यावच्छेदो ज्ञायतामित्याह—**परात्मनोऽपीति** । परमात्मैवात्र शरीरे क्षेत्रज्ञो नाऽन्योऽस्तीत्यत्र भगवद्वाक्यमनुकूलयति—**क्षेत्रज्ञं चेति** ॥ १७८ ॥

पूर्वोक्तानामवच्छेदानां किं कारणमित्याशङ्क्य क्षेत्रज्ञत्वमविद्ययेत्युक्तामविद्यां विवृण्वन्नाह—**नेत्यादिना** । क्षेत्रज्ञत्वहेतुरविद्यैव पूर्वोक्तानामवच्छेदानां कारणमित्यर्थः । प्रमाणनिवर्त्यत्वादविद्याया न प्रमाणतः सिद्धिरित्याशङ्क्य स्वप्रसिद्धिरात्मचैतन्यं तद्बलादेवाविद्या सिध्यतीत्याह—**स्वप्रसिद्धचैवेति** । स्वानुभवादविद्यासिद्धिं दृष्टान्तेन २० साधयति—**निशेति** । उलूकस्येयमौलूकी निशा यथा दिवसेऽन्धकारबुद्ध्या रात्रिरुलूकस्य स्वानुभवाद्भात्येवं चिदेकताने वस्तुन्यविद्या स्वानुभवादेव सिध्यतीत्यर्थः ॥ १७९ ॥

यस्तु स्वानुभवमवधीर्य प्रमाणसिद्धामविद्यामाद्रियते तं प्रत्याह—**प्रमाणेति** ॥ १८० ॥

अविद्याया मानसिद्धत्वाभावेऽपि मानसिद्धत्वादनात्मनो नाविद्याकार्यतेत्याशङ्क्य दृश्यत्वादिना तस्याप्यविद्यान्तर्भावमभिप्रेत्याऽऽह—**अनात्मेतीति** । का तर्हि विद्येत्याशङ्क्य विद्या चैतन्यं तदात्मैवेत्याह—**विद्या त्विति** ॥१८१॥

२५ केचित्तु ज्ञानप्रागभावमविद्यामाचक्षते तान्प्रत्याह—**आत्मेति** । आत्मनोऽग्रहो नामाऽऽवरणमाच्छादनं न तदतिरेकेणाविद्याया रूपमस्ति न खल्वभावस्याऽऽच्छादकत्वं सम्भवत्यतो वस्त्वाच्छादकत्वमविद्यायाः स्वरूपमित्यर्थः । **अविद्येति** । नञस्तर्हि कोऽर्थः स्यादित्याशङ्क्य यथाऽमित्राधर्मादौ तदन्यत्वं तद्विरुद्धत्वं वा नञोऽर्थस्तथा विद्यातोऽन्यत्वं विद्याविरुद्धत्वं वा नञोऽर्थो न तदभावत्वमित्याह—**अमित्रवदिति** ॥ १८२ ॥

एवमभावविलक्षणत्वमविद्याया दर्शयित्वा यदनात्मवर्गस्याविद्याविजृम्भितत्वमुक्तं तदुपसंहरति— ३० **तस्मादिति** । सदसदाद्यात्मकमनात्मजातं निरूप्यमाणमविद्यायामेव यस्मात्पर्यवस्यति तस्मादविद्याविलसितं तदेष्टव्यमित्यर्थः ॥ १८३ ॥

आत्माविद्याया वस्त्वाच्छादकत्वेऽपि प्रकृते शरीरजन्मनि किं सिद्धमित्याशङ्क्याऽऽह—**तयेति** । चित्तशब्देन विवेकज्ञानं गृह्यते लिङ्गात्मा लिङ्गोपहितो जीवः ॥ १८४ ॥

योषिद्योनिं प्रविष्टस्यानुशयिनो जीवस्य द्विविधशरीरग्रहणं प्रतिपादयितुं मात्रा भुक्तस्यान्नादेस्त्रिधा ३५ परिणामं दर्शयति—**अन्नमित्यादिना** ॥ १८५-१८६ ॥

योऽणिष्ठस्तन्मन इत्यत्र मनःशब्देन बुद्धीन्द्रियाण्युपलक्ष्यन्ते । योऽणिष्ठः सा वागित्यत्र वाक्पदेनावशिष्टानि

कर्मोत्थभावनाभिस्तु चोद्यते यद्यदिन्द्रियम् । जायते तदहङ्काराद्यथाकर्म यथाश्रुतम् ॥१८८॥
श्रोताऽस्मीत्यभिमानाद्धि जायते श्रवणेन्द्रियम् । परिशिष्टेषु चाप्येवमिन्द्रियेषूपधारयेत् ॥१८९॥
देहोत्पत्तिमनूत्पन्नो व्योमवद्घटजन्मना । अस्त्यादयोऽप्यतो न स्युः सति जन्मनि ते यतः ॥१९०॥
यावद्यावदयं देहो वर्धते गर्भशायिनः । तावत्तावदभिव्यक्तिलिङ्गस्याप्युपजायते ॥१९१॥
समग्रकरणस्याथ नवमे मासि देहिनः । व्यतीतानेकजन्मोत्था व्यज्यन्ते वासनाः क्रमात् ॥१९२॥ ५
आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंस्कृतः । हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ ॥१९३॥
अनुभूताः पुराऽसह्या मया मर्मच्छिदोऽसकृत् । करम्भवालुकास्तप्ता या दहन्त्यशुभाशयान् ॥१९४॥
जाठरानलसन्तप्ताः पित्ताख्यरसविप्लुषः । गर्भाशये निमग्नं ता दहन्त्यतिभृशं तु माम् ॥१९५॥
औदर्यक्रमिवक्त्राणि कूटशाल्मलिकण्टकैः । तुल्यानि वितुदन्त्यार्तं पार्श्वास्थिक्रकचार्दितम् ॥१९६॥
गर्भे दुर्गन्धभूयिष्ठे जाठराग्निप्रदीपिते । दुःखं मयाऽऽप्तं यत्तस्मात्कनीयः कुम्भिपाकजम् ॥१९७॥ १०
पूयासृक्श्लेष्मपायित्वं वान्ताशित्वं च यद्भवेत् । अशुचौ क्रिमिभावश्च तत्प्राप्तं गर्भशायिना ॥१९८॥

—

कर्मेन्द्रियाण्युपलक्षितानि । "योऽणिष्ठः स प्राण" इत्यत्र प्राणशब्देन प्राणादिवृत्तीनामुपलक्षणं विवक्षितमित्याह—मन इति ॥ १८७ ॥

मनआदेश्चैतन्याभासानुविद्धस्यैव जन्मेत्येतदधुना सांख्यपक्षप्रतिक्षेपार्थं कथयति—कर्मोत्थेति ॥ १८८ ॥

साभासादहङ्कारात्तत्तदिन्द्रियजन्मेत्येतदेव विशदयति—श्रोतेति । स्प्रष्टाऽस्मीत्यभिमानाद्धि जायते स्पर्शनेन्द्रियम् । द्रष्टाऽस्मीत्यभिमानात्तु जायते चक्षुरिन्द्रियमित्यादि द्रष्टव्यमित्याह—परिशिष्टेष्विति ॥ १८९ ॥ १५

अन्तःकरणादिवदात्मनोऽपि जन्म स्यादित्याशङ्क्य तस्यौपाधिकं जन्मेत्याह—देहेति । आत्मनः स्वतो जन्मनिरासादितरेऽपि भावविकारास्तस्य निषिद्धा भवन्तीत्याह—अस्त्यादय इति ॥ १९० ॥

देहोत्पत्तिमनूत्पन्न इत्यत्र लिङ्गोत्पत्त्यपेक्षया जीवोत्पत्तिर्विवक्ष्यते चेदसदेव लिङ्गं कथमुत्पद्यतेत्याशङ्क्याऽऽह—यावद्यावदिति ॥ १९१ ॥ २०

लिङ्गोपहितस्य जीवस्य गर्भाशयं प्रविष्टस्य तत्रैव वर्तमानस्य संसारोपवर्णनं वैराग्यार्थं करोति । समग्रेत्यादिना । देहिनो देहलिङ्गवतो धर्माधर्मवशाद्गर्भे प्रविष्टस्य तत्रैव शयानस्य सर्वैरेव करणैरुपेतस्य नवमे दशमे वा मासे जन्मप्राप्तौ तस्मात्पूर्वमेवातीतानेकजन्मप्रवृत्तवासनाभिव्यक्तिर्भवतीत्यर्थः । अथशब्दो मासविकल्पार्थः ॥ १९२ ॥

गर्भस्थस्य वासनात्मकज्ञानोत्पत्त्यनन्तरं तत्कार्यस्य महतः शोकस्य स्वात्मन्युत्पत्तिं दर्शयति—आविर्भूतेति ॥ १९३ ॥ २५

शोकप्रकारमनुवदति—अनुभूता इति । पुरा गर्भप्रवेशात्पूर्वमतीतेषु जन्मस्विति यावत् । मर्मच्छिदो वेदना इति शेषः । या हि करम्भवालुका भृशं तप्ताः सत्योऽशुभाशयान्पापकर्मवतो जनान्दहन्ति ताश्चासकृन्मयानुभूता इति सम्बन्धः ॥ १९४ ॥

पूर्वानुभूतवेदनाभ्यः समधिका वेदना गर्भाशये शयानस्य ममास्तीत्याह—जाठरेति ॥ १९५ ॥ ३०

न केवलं गर्भे वर्तमानस्य मातुरौदर्येणाग्निना दग्धत्वमेव किन्तु दुःखान्तरमपि दुःसहमस्तीत्याह—औदर्येति ॥ १९६ ॥

कुम्भीपाकदुःखापेक्षया गर्भवासदुःखस्याऽऽधिक्यं दर्शयन्गर्भवासस्य हेयत्वमाह—गर्भ इति ॥ १९७ ॥

यद्गर्भे शयनं तदनेकेषु नरकभेदेष्ववस्थानादतिरिच्यते । अतोऽपि गर्भवासनिरासाय प्रयतितव्यमित्याह—पूयेति ॥ १९८ ॥ ३५

गर्भशय्यां समारुह्य दुःखं यादृङ्मयाऽपि तत् । नातिशेते महद्दुःखं निःशेषनरकेषु यत् ॥१९९॥
अस्थियन्त्रविनिष्पिष्टः परीतः कुक्षिवह्निना । क्लेदासृग्दिग्धसर्वाङ्गो जरायुपटसंवृतः ॥२००॥
निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः । यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यधः ॥२०१॥
अकिञ्चिज्ज्ञस्तदा बालो मांसपेशीसमः स्थितः । श्वमार्जारादिदंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ॥२०२॥
५ पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि । पूयं पयोवदश्नाति धिक्पापिष्ठं हि शैशवम् ॥२०३॥
दृप्तोऽथ यौवनं प्राप्य मन्मथज्वरविह्वलः । गायत्यकस्मादुच्चैः स तथाऽकस्माच्च वल्गति ॥२०४॥
आरोहति तरुं वेगाच्छान्तानुद्वेजयत्यपि । कामक्रोधमदान्धः सन्न किञ्चिदपि वीक्षते ॥२०५॥
महापरिभवस्थानं जरां प्राप्याथ दुःखितः । श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यति ॥२०६॥
भग्नदन्तो भग्नदृष्टिः कटुतिक्तकषायभुक् । वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः ॥२०७॥
१० गदायुतसमाविष्टः परिभूतः स्वबन्धुभिः । निःशौचो मलदिग्धाङ्ग आलिङ्गितधरोषितः ॥२०८॥
कासाधोवायुमुरजा सितश्मश्रुकचाम्बरा । श्वासोत्थस्वनवंशा च जाठरध्वनिगेयिका ॥२०९॥
वलीपलितवच्चर्मवरकञ्चुकधारिणी । दण्डतृतीयपादेयं प्रस्खलन्ती मुहुर्मुहुः ॥२१०॥
अग्निपाकिकरुक्माढ्या सूक्ष्मत्वक्पटसंवृता । गुल्फजान्वस्थिसंघर्षचलन्नूपुरघोषिणी ॥२११॥
प्रज्ञां मेधां धृतिं शौर्यं यूनां जग्ध्वा बलं तथा । कृतार्थेव प्रहर्षेण जरायोषित्प्रनृत्यति ॥२१२॥
१५ ततोऽपि मृतिदुःखस्य दृष्टान्तो नोपलभ्यते । यस्माद्बिभ्यति भूतानि प्राप्तान्यपि परां रुजम् ॥२१३॥
ह्रियते मृत्युना जन्तुः परिष्वक्तोऽपि बान्धवैः । सागरान्तर्जलगतो गरुडेनेव पन्नगः ॥२१४॥
हा कान्ते हा धनं पुत्र क्रन्दमानः सुदारुणम् । मण्डूक इव सर्पेण गीर्यते मृत्युना नरः ॥२१५॥

किञ्च सर्वेष्वेव नरकेषु यद्दुःखं महद्दृष्टं तत्र गर्भवासकृताद्दुःखादतिरिच्यते तेनापि गर्भे शयनं परिहर्तव्यमित्याह—**गर्भेति** ॥ १९९ ॥

२० गर्भं प्रविष्टस्य जीवस्य गर्भस्थितिमुपसंहरति—**अस्थीति** ॥ २०० ॥

तस्य जन्मप्रकारं दर्शयति—**निष्क्रामन्निति** ॥ २०१ ॥

जातस्य बाल्यावस्थां विवृणोति—**अकिञ्चिज्ज्ञ इति** ॥ २०२-२०३ ॥

बाल्यानन्तरं यौवनावस्थां प्रपञ्चयति—**दृप्त इति** ॥ २०४-२०५ ॥

यौवनानन्तरं निरतिशयस्य परिभवस्याऽऽस्पदभूतां जरां प्राप्यातिदुःखितो भवतीत्याह—**महापरिभवेति**।
२५ तामेव जरां स्फोरयति—**श्लेष्मणेत्यादिना** ॥ २०६-२०७-२०८-२०९-२१० ॥

अग्निपाकिकशब्देन शरीरे दृश्यमाना मांसग्रन्थयो गृह्यन्ते ॥ २११ ॥

प्रज्ञा—श्रुतग्रहणसामर्थ्यम्। मेधा—गृहीताविस्मरणसामर्थ्या वृत्तिः । धृतिशब्देन—शरीरेन्द्रियावसादप्राप्तौ धैर्यम् । शौर्यं—पराक्रमकृतं बलम् । बलं—शरीरादिसामर्थ्यम् ॥ २१२ ॥

जरानन्तरं मरणावस्थां विवृणोति—**ततोऽपीति** । मृतिदुःखमेव विशिनष्टि—**यस्मादिति** ॥ २१३ ॥

३० बान्धवैरेव मृतिदुःखं परिहर्तुं शक्यमित्याशङ्क्य सदृष्टान्तमाह—**ह्रियत इति** ॥ २१४ ॥

म्रियमाणस्य पुत्रकलत्रादिविषयं दारुणं रोदनं दृष्ट्वा मृत्युर्नाऽऽगमिष्यतीत्याशङ्क्याऽऽह—**हा कान्तेति** ॥ २१५ ॥

मर्मस्तूत्कृत्यमानेषु मुच्यमानेषु सन्धिषु । यद्‌दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः ॥२१६॥
दृष्टावाक्षिप्यमाणायां संज्ञया ह्रियमाणया । मृत्युपाशेन बद्धश्च त्रातारं नोपलप्स्यसे ॥२१७॥
संरुध्यमानस्तमसा महच्छ्वभ्रमिवाऽऽविशन् । उरो घ्नतस्तदा ज्ञातीन्द्रक्ष्यसे दीनचक्षुषा ॥२१८॥
अयःपाशेन कालेन स्नेहपाशेन बन्धुभिः । आत्मानं कृष्यमाणं त्वमभितो द्रक्ष्यसे तदा ॥२१९॥
हिक्किकाबाध्यमानस्य श्वासेन परिशुष्यतः । कृष्यमाणस्य पाशेन न खल्वस्ति परायणम् ॥२२०॥ ५
संसारयन्त्रमारूढो यमदूतैरधिष्ठितः । क्व यास्यामीति दुःखार्तः कालपाशेन योजितः ॥२२१॥

मातापितागुरुसुताः स्वजनो ममेति मायोपमे जगति कस्य भवेत्प्रतिज्ञा ।
एको यदा व्रजति कर्मपुरःसरोऽयं विश्रामवृक्षसदृशः खलु जीवलोकः ॥२२२॥
सायं सायं वासवृक्षं समेताः प्रातः प्रातस्तेन तेन प्रयान्ति ।
त्यक्त्वाऽन्योन्यं तं च वृक्षं विहङ्गा यद्वत्तद्वज्ज्ञातयोऽज्ञातयश्च ॥२२३॥ १०

मृतिबीजं भवेज्जन्म जन्मबीजं तया मृतिः । घटीयन्त्रवदश्रान्तो बम्भ्रमीत्यनिशं नरः ॥२२४॥
द्युपर्जन्यधरामर्त्ययोषिदग्निषु दैवतैः । श्रद्धोडुराजवर्षान्नरेतआख्यं हविर्हुतम् ॥२२५॥
पञ्चम्यामाहुतावेवं पुंवचा जायते पुमान् । क्रमाच्चस्य महानर्थसंसृत्युच्छित्तिरुच्यते ॥२२६॥
इत्याद्या विक्रियाः सर्वा लिङ्गदेहसमाश्रयाः । अतद्वानपि सम्मोहात्तद्वानित्यभिमन्यते ॥२२७॥

यथोक्तमरणावस्थाप्राप्त्यपेक्षया पूर्वमेव स्वस्थावस्थायां तत्प्राप्तिपरिहारार्थं शुभाचरणाय मुमुक्षुभिः स्मर्तव्यं दर्शयति—मर्मस्विति ॥ २१६ ॥ १५

मरणे प्राप्ते शुभाचरणद्वारेण दुःखं परिहर्तव्यमित्याशङ्क्याऽऽह—दृष्टाविति ॥ २१७ ॥
तदा ज्ञातयस्त्रातारो भविष्यन्तीत्याशङ्क्याऽऽह—संरुध्यमान इति ॥ २१८ ॥
किञ्च तस्यामवस्थायां शुभाचरणे नास्ति स्वातन्त्र्यमित्याह—अयःपाशेनेति ॥ २१९ ॥
म्रियमाणस्य मरणावस्थामुपसंहरति—हिक्किकेति । पाशो द्विविधो विवक्षितो मुमूर्षोः ॥ २२० ॥ २०
स्थूलाद्देहान्निष्क्रान्तस्य कर्मफलभोगार्थं गच्छतोऽपि नास्ति स्वच्छन्दतेत्याह—संसारेति ॥ २२१ ॥
मात्रादिजीवलोकोऽस्य तस्यामवस्थायां सहायो भविष्यतीत्याशङ्क्याऽऽह—मातेति ॥ २२२ ॥
उक्तं विश्रामवृक्षसदृशत्वं जीवलोकस्य व्यक्तीकरोति—सायं सायमिति ॥ २२३ ॥
गर्भजन्मबाल्ययौवनजरामरणाद्यवस्थासु जीवस्य वैराग्यार्थं प्रपञ्चितां संसारगतिमुपसंहरति—मृतीति ॥ २२४ ॥

अन्नात्पुरुष इत्युक्तायां पुरुषोत्पत्तौ श्रुत्यन्तरसम्मतिमाह—द्युपर्जन्येति । द्युलोकाग्नौ देवतायजमानप्राणैः श्रद्धा हूयते तस्याश्चाऽऽहुतेः सोमो राजा जायते । ततश्च पर्जन्याग्नौ तैरेव देवैः सोमो हूयते तस्याश्चाऽऽहुतेर्वृष्टिर्जायते । ततश्च पृथिवीलक्षणे तृतीयेऽग्नौ देवा वर्षं जुह्वति वर्षाहुतेश्चान्नं सम्भवति । ततश्च पुरुषाग्नौ चतुर्थे प्रकृता देवास्तदन्नं जुह्वति तस्याश्चान्नाहुते रेतः सम्पद्यते । ततो योषिदग्नौ पञ्चमे यजमानप्राणा रेतः सिञ्चन्ति तदेव पञ्चम्याहुतौ हुतायां पुमानित्येवंवाच्यः सन्पुरुषो जायत इत्यर्थः । स वा एष पुरुषोऽन्नरसमय इत्यादिपञ्चकोशोपन्यासवाक्यस्य तात्पर्यार्थमाह—क्रमादिति । उत्तरेण ग्रन्थेन कोशपञ्चकोपन्यासक्रमेण पूर्वपूर्वस्योत्तरोत्तरस्मिन् प्रविलापनमुक्त्वा कार्यकारणविलक्षणब्रह्मात्मैकत्वज्ञानं सकार्याविद्यानिवर्तकं ब्रह्म पुच्छं प्रतिष्ठेत्यादावुच्यत इत्यर्थः ॥ २२५-२२६ ॥ २५ ३०

समनन्तरवाक्येषु पुरुषग्रहणस्य तात्पर्यं वक्तुं यथोक्तस्य संसारस्योपाधिनिष्ठत्वादात्मनिष्ठत्वाभावात्तस्मिन् वैराग्योपयोगित्वेन तदुपवर्णनमुचितमित्याशङ्क्य परिहरति—इत्याद्या इति । यद्यपि प्रागुक्ता गर्भवासाद्या विक्रियाः शरीरद्वयनिष्ठा नाऽऽत्मनि तिष्ठन्ति तथाऽप्यात्मा वस्तुतो गर्भवासादिविक्रियारहितोऽपि देहद्वयादात्मनो विवेकाग्रहणात् ३५

ज्ञातास्मीत्यभिमानाद्धि चेष्टते ज्ञानकर्मणि । मन्ताऽस्मीति ततो मोहात्कुरुते मानसीः क्रियाः ॥२२८॥
प्राणाद्यात्माभिमानेन कर्मचेष्टां प्रपद्यते । चक्षुराद्यभिमानी च रूपाद्यालोचनापरः ॥२२९॥
तथा देहस्य दाहादौ दग्धोऽस्मीति च मन्यते । श्यामोऽस्मीति च देहस्य श्यामत्वं मन्यतेऽबुधः ॥२३०॥
गोधनाद्यभिमानेन तद्वानस्मीत्यविद्यया । ब्रह्मचारी गृहस्थोऽहं तापसोऽस्मि तथा मुनिः ॥
५　　　　देहलिङ्गात्मसंस्कारान्मन्यते सङ्गकारणात् ॥२३१॥
भिन्नात्मनां तु भूतानां शरीरं कार्यमुच्यते । ममाहमितिसंमोहादनर्थं प्रतिपद्यते ॥२३२॥
सर्वेषां चान्नकार्यत्वे ब्रह्मजत्वे समे तथा । कर्मज्ञानाधिकारित्वात् पुमानेवेह गृह्यते ॥२३३॥
अनेकानर्थनीडेऽस्मिन्निमग्नं ब्रह्मविद्यया । संक्रामयितुमिष्टत्वाद्ब्रह्मान्तरतमं नरम् ॥२३४॥
तरुशाखाग्रदृष्टयैव सोमं यद्वत्प्रदर्शयेत् । निष्कोशं कोशदृष्टयैव प्रतीचि ब्रह्म दर्श्यते ॥२३५॥
१० अनादाविह संसारे वासनारञ्जिता मतिः । प्रतीच्युपायतः कर्तुं शक्या तस्मात्स उच्यते ॥२३६॥
द्वैतास्पृक्प्रत्यगात्मैकः प्रतीचीव परागपि । युष्मदस्मद्विभागाभ्यां भिद्यतेऽविद्यया मृषा ॥२३७॥

अहमेव गर्भवासादिविक्रियावानस्मीत्यात्मानं मोहमाहात्म्यादभिमन्यते तेन तत्र संसारो दृश्यमानो वैराग्यं भावयिष्यतीत्यर्थः ॥ २२७ ॥

कथं देहद्वयेऽहमभिमानः स्यादित्याशङ्क्य बुद्धावहमभिमानमज्ञानकृतं तत्कार्यं च प्रकटयति—**ज्ञातेति** ।
१५ मनस्यहमभिमानमविवेककृतं तत्कार्यं च कथयति—**मन्तेति** ॥ २२८ ॥

प्राणापानादौ कर्तास्मीत्यात्माभिमानं तत्कार्यं चाज्ञानप्रयुक्तमुपन्यस्यति—**प्राणादीति**। इन्द्रियेषु ममाभिमानं तत्कार्यं चाज्ञानकृतं दर्शयति—**चक्षुरादीति** ॥ २२९ ॥

स्थूले देहे मोहादभिमानं तत्कार्यं च प्रकटयति—**तथेति**। देहादात्मनो विवेकग्रहविहीनत्वमबुधत्वम् ॥२३०॥

गवादौ ममाभिमानादविद्यया विद्यमानाद्यत्कार्यं जायते तदुदाहरति—**गोधनादीति**। देहे लिङ्गात्मनि च
२० ये संस्कारा ब्रह्मचारित्वादयः स्नानाचमनादयश्च तानविद्याकृतांस्तयोरेव सङ्गाद्धेतोरात्मनि कल्पयतीत्याह—**ब्रह्मचारीति** ॥ २३१ ॥

किं बहुना । पञ्चभूतमयं शरीरं तस्मिन्नहं ममाभिमानादात्मनो नित्यमुक्तस्यैव संसारो मोहमाहात्म्यात् प्रतिभातीत्युपसंहरति—**भिन्नात्मनामिति** ॥ २३२ ॥

एवमात्मनि संसारं दर्शयित्वा समनन्तरवाक्ये पश्वादिग्रहणं विहाय पुरुषग्रहणस्य तात्पर्यमाह—
२५ **सर्वेषां चेति** ॥ २३३ ॥

कर्मज्ञानाधिकारित्वस्य पुरुषग्रहणहेतुत्वं साधयति—**अनेकेति** । कर्मभिः शुद्धान्तःकरणस्य ब्रह्मज्ञानान्मोक्षोऽत्र विवक्ष्यते तस्मादनेकानर्थाश्रये संसारसागरे पतितं नरं ब्रह्मास्मीति विद्यया सर्वान्तरतमं ब्रह्म प्रापयितुमिष्टत्वाद्यस्य कर्मज्ञानयोरधिकारः सम्भाव्यते तस्यैवात्र ग्रहणं युक्तमित्यर्थः ॥ २३४ ॥

ब्रह्मविद्यया मोक्षस्यात्र विवक्षितत्वे सैव वक्तव्या कोशपञ्चकोपन्यासस्तु वृथेत्याशङ्क्याऽऽह—**तरु-**
३० **शाखेति** ॥ २३५ ॥

ब्रह्मविद्योपायत्वेन कोशपञ्चकोक्तिरित्युक्तमेव व्यक्तीकरोति—**अनादाविति** ॥ २३६ ॥

ब्रह्मविद्योपायत्वेन कोशपञ्चकोपदेशे ब्रह्मकोशयोर्भेदादद्वैतहानिरित्याशङ्क्याऽऽह—**द्वैतास्पृगिति** । यथाऽयं प्रत्यगात्मा प्रतीचि स्वात्मनि भेदस्पर्शमन्तरेणैकोऽवतिष्ठते तथा परागपि कोशापेक्षया द्वैतस्पर्शी न भवतीत्यत्र हेतुमाह—**युष्मदिति** । युष्मत्पञ्चकमस्मत्पञ्चकं चेति कोशदशकरूपेण स्वाविद्यया प्रत्यगात्मनो विभक्तत्वाद्भेदस्य
३५ सर्वप्रकारस्याऽऽत्माविद्याकृतत्वेन मिथ्यात्वान्नाद्वैतहानिरित्यर्थः ॥ २३७ ॥

अस्मद्विभागे पञ्चास्य यथैवान्नमयादयः। तथा तत्प्रत्यगात्मानो युष्मदन्नादयः स्मृताः ॥२३८॥
आध्यात्मिकान्विलाप्याथ यथास्वं प्रत्यगात्मसु। अन्नादीन्पर्युपासीत ह्युत्तरोत्तररूपगान् ॥२३९॥
जग्ध्वा कार्यात्मतामेवं कारणात्मतया स्थितः। आत्मनाऽऽलिङ्गते ब्रह्म वाक्याज्जग्ध्वा च तामपि॥
अन्नं विराडिति ज्ञेयं प्राणात्तदभिवर्धते। ऋग्यजुःसामरूपोऽतो वेदात्माऽन्तर्मनोमयः ॥२४१॥
वेदार्थविषया बुद्धिर्विज्ञानं निश्चयात्मकम्। ज्ञानकर्मभिनिर्वृत्त आनन्दः फललक्षणः ॥२४२॥ ५
त्रीण्येवान्नानि चैतानि प्राजापत्यानि सर्वशः। प्राणो मनस्तथा वाक्च विराडन्नात्मतां गतः ॥२४३॥
चतुर्णां प्रत्यगात्मैवमानन्दमय उच्यते। प्रज्ञानघनरूपत्वात्स्याद्भेदोऽप्यस्य कार्यतः ॥२४४॥
शिरआदिप्रक्लृप्तिस्तु स्यादुपासनकर्मणे। तस्मादेवं चितीरेता मानसीर्याचचक्षिरे ॥२४५॥
शिरो मूर्धा भुजौ पक्षावात्मा कायश्च मध्यमः। शेषं पुच्छमिति ज्ञेयं चितिमेवं विचिन्तयेत् ॥२४६॥

युष्मदस्मद्विभागेन सूचितान्दश कोशानेव दर्शयति—अस्मदिति। यथैवास्य प्रत्यगात्मनोऽस्मद्विभागे १० पञ्चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मयडर्थभूताः कोशा भवन्त्यहंबुद्धिग्राह्यास्तथा तेषां प्रत्यगात्मानोऽन्न-प्राणमनोविज्ञानानन्दाः प्रकृत्यर्थभूता युष्मद्भावेनाभिमतास्तेष्वहंबुद्ध्यभावादेवमस्ति कोशदशकमित्यर्थः ॥ २३८ ॥

कोशपञ्चकस्य प्रकृतिप्रत्ययविभागेन दशधा करणं कुत्रोपयुक्तमित्याशङ्क्याऽऽह—आध्यात्मिकानिति। पूर्वोक्तरीत्या कोशानां दशधा प्रतिपत्त्यनन्तरमाध्यात्मिकान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान्मयडर्थान् प्रकृत्यर्थेषु प्रत्येकं कारणेष्वात्मभूतेष्वन्नप्राणमनोविज्ञानानन्देषु कारणातिरेकेण कार्यं नास्तीति विवेकबुद्ध्या १५ प्रविलाप्य तन्मात्रतया ज्ञात्वा पुनरन्नं प्राणतया प्राणं मनस्त्वेन मनो विज्ञानतया विज्ञानमानन्दशब्दितमूलकारण-मात्रतया निरूपयेदित्यर्थः ॥ २३९ ॥

प्रदर्शितया प्रक्रियया कार्यात्मतां कारणात्मतयोपसंहृत्याज्ञातब्रह्मरूपेण स्थितो विद्वानहं ब्रह्मास्मीति-वाक्योत्थज्ञानेन तामपि कारणात्मतां प्रविलाप्य स्वरूपेण कार्यकारणविलक्षणं ब्रह्म प्राप्नोतीत्येतदाह—जग्ध्वेति ॥ २४० ॥ २०

"अन्नादीन्पर्युपासीते"त्युक्तानन्नादीन्कथयति—अन्नमिति। क्रियाविज्ञानशक्तिमिति सूत्रात्मनि प्राणशब्देन क्रियाशक्तिभागो गृह्यते ततोऽन्नस्योत्पत्तिरित्याह—प्राणादिति। विज्ञानशक्तिभागोऽपि मनो विज्ञानं चेति द्वेधा भिद्यते तत्र सविकल्पकज्ञानोत्पादनशक्तिमदन्तःकरणं मनःशब्दवाच्यमित्याह—ऋग्यजुरिति। अतोऽस्मात्प्राणा-दन्तररिति सम्बन्धः। मनोमयशब्देन मनो गृह्यते ॥ २४१ ॥

प्रकृतिप्रकरणान्निर्विकल्पज्ञानोत्पादनशक्तिमदन्तःकरणं विज्ञानमित्याह—वेदार्थेति। आनन्दशब्देन कारण- २५ मुच्यत इत्यङ्गीकृत्याऽऽह—ज्ञानेति। तत्र प्राणो मनो विज्ञानं चेति कोशत्रयं सूत्रात्मरूपमन्नं विराट्कोश आनन्दः कारणकोश इति संग्रहः ॥ २४२ ॥

एतच्च कोशपञ्चकमुक्तं बृहदारण्यकेऽपीत्याह—त्रीण्येवेति। वाक्शब्देन विज्ञानं गृह्यते। कनीयोऽन्नं करिष्य इत्यत्रान्नशब्देन विराडुच्यते तद्वेदं तर्हीत्यत्र कारणमुक्तमिति चशब्दार्थः ॥ २४३ ॥

यथाऽन्नादीनां चतुर्णां प्रकृत्यर्थानामानन्दः स्वरूपमेवमन्नमयादीनां प्रत्ययार्थानामानन्दमयः प्रत्यगात्मा ३० स्वरूपमित्येतदाह—चतुर्णामिति। तत्र कोशचतुष्टयस्य जीवव्यतिरेकेणाभावादिति हेतुमाह—प्रज्ञानेति। जीवस्य प्रज्ञानघनत्वे कथं शिरःपुच्छादिकल्पनेत्याशङ्क्य कर्मफलभेदादित्याह—स्यादिति ॥ २४४ ॥

"स वा एष पुरुष" इत्यादौ तात्पर्यार्थमुक्त्वा "तस्येदमेव शिर" इत्यादेस्तात्पर्यमाह—शिरआदीति। उपा-सनानुष्ठानार्थं शिरआदिकल्पनामाश्रित्य वृद्धानामपि प्रसिद्धिरित्याह—तस्मादिति ॥ २४५ ॥

तस्येदमेवेत्यादेरक्षरोत्थमर्थं कथयन्पञ्चप्रकारां चितिमेव चिन्तनीयां स्फोरयति—शिर इति ॥ २४६ ॥ ३५

उपासीनश्चितीरेवं विद्वानेता यथाक्रमम् । पूर्वपूर्वप्रहाणेन ह्यन्तरन्तः प्रपद्यते ॥२४७॥
श्रुतेरनतिशङ्क्यत्वात्सम्भाव्येत यथोदितम् । लिङ्गप्रत्यक्षगम्ये हि स्यादाशङ्का नृबुद्धितः ॥२४८॥
स्वभावतो वा सम्प्राप्तमनूद्योपासनं श्रुतिः । नामादाविव भूमानं विधत्ते ज्ञानमात्मनि ॥२४९॥
श्रुत्यन्तराद्वा सम्प्राप्तं मोक्षादर्वाक्फलाय तु । तदनूद्य परं श्रेयः प्राप्तये ज्ञानमुच्यते ॥२५०॥
५ ब्रह्मविद्योडुपेनैव कोशानर्थमहोदधेः । निनीषन्ती परं पारं स वा इत्यभ्यधादथ ॥२५१॥
मूलात्मानं सशब्देन स्पृष्ट्वा तत्स्मृतयेऽथ वै । कोशात्मतां समापन्न एव इत्यभिधीयते ॥२५२॥
अविद्ययाऽतदर्होऽपि रज्जुः सर्पात्मतामिव । कोशपञ्चकतां यातस्तमनुक्रोशतीव हि ॥२५३॥
मयडत्र विकारार्थे निषिद्धोऽसौ परात्मनः । युक्त्यागमाभ्यामन्नस्य कार्यं देहः प्रतीयते ॥२५४॥
इदमेव शिरस्तस्य मा भूदध्यासलक्षणम् । प्राणकोशवदेवेति तस्मादेवावधार्यते ॥२५५॥

१० पञ्चप्रकारचित्युपासनेन किं फलतीत्यपेक्षायामाह—उपासीन इति । पञ्चविधकोशानां चित्यात्मकानां नैरन्तर्येणानुसन्धानादबुद्धिशुद्धयतिशये विवेकबुद्धिर्भवति । तद्बलाच्च पूर्वं पूर्वं कोशमपहायोत्तरमुत्तरं प्रतिपद्यते तदेवं सर्वानपि कोशान्प्रविलाप्याहं ब्रह्मास्मीति ज्ञानान्मोक्षमधिगच्छतीत्यर्थः ॥ २४७ ॥

कथं तर्हि सर्वं वै तेऽन्नमाप्नुवन्तीत्यादि यथाश्रुतं फलमुपासनस्य सम्भवेदेकस्योभयफलत्वासम्भवादित्याशङ्क्य फलद्वयमेकस्योपासनस्य श्रुतिसिद्धत्वादविरुद्धमित्याह—श्रुतेरिति । श्रुतेर्निर्दोषत्वात्तदुक्तेऽर्थे शङ्काभावे कुत्र १५ शङ्कायाः सावकाशत्वमित्याशङ्क्य पुरुषबुद्धिवशात्प्रत्यक्षादिषु करणदोषसम्भवादाशङ्का स्याद्वेदे तु तदभावान्नैवमित्याह—लिङ्गेति ॥ २४८ ॥

पञ्चविधकोशोपासनोपदेशस्य तात्पर्यान्तरमाह—स्वभावतो वेति । यथा छान्दोग्ये सप्तमे प्रपाठके स्वभावतः सिद्धमुपासनमुच्चनीचभावेन नामादिविषयमनूद्य भूमविज्ञानं विधीयते तथा कोशेष्वात्माभिमानिनो यथोक्तध्यानानुष्ठानादेव पूर्वपूर्वस्योत्तरोत्तरस्मिन्विलापनं कृत्वा श्रुतफलविवक्षामन्तरेणैव ब्रह्मात्मैकत्वविज्ञानं २० प्रधानत्वादत्र विवक्षितमित्यर्थः ॥ २४९ ॥

कोशपञ्चकोपन्यासस्यापरं तात्पर्यमाह—श्रुत्यन्तरादिति । यद्धि मोक्षादर्वाचीनं संसारान्तर्भूतं फलं तत्प्राप्तये विराडात्मनः सूत्रात्मनश्च बृहदारण्यकादावुपासनं सिद्धं तदनुवादेन मोक्षफलं ज्ञानमत्रोच्यत इत्यर्थः॥२५०॥

एवं तात्पर्यमुक्त्वा तत्रैवार्थे वाक्यं पदार्थकथनार्थमवतारयति—ब्रह्मविद्येति । निनीषन्तो श्रुतिरिति शेषः । पुरुषस्यैव ज्ञानकर्मणोरधिकारो न पश्वादेरिति निर्धारणानन्तरमित्यथशब्दार्थः ॥ २५१ ॥

२५ तत्र पदत्रयस्यार्थं कथयति—मूलात्मानमिति । कार्यकारणविलक्षणं प्रत्यगात्मानं स्वशब्देन गृहीत्वा तस्यैव सर्वोपनिषत्प्रसिद्धस्य वैशब्देनानुसन्धानं कृत्वा स एव स्वाविद्यया पञ्चकोशात्मकत्वं प्राप्तः सन्नपरोक्षत्वादेपशब्देनोपदिश्यत इत्यर्थः ॥ २५२ ॥

कार्यकारणविलक्षणश्चेत्प्रत्यगात्मा तर्हि कथमसावविद्ययाऽपि पञ्चकोशात्मतां गन्तुमर्हतीत्याशङ्क्याऽऽह—अविद्ययेति ॥ २५३ ॥

३० यथोक्तप्रत्यगात्मनोऽन्नरसमयत्वं कथमित्याशङ्क्याऽऽह—मयडत्रेति । प्रकृते वाक्ये प्रयुक्तो मयड्विकारार्थे प्रयुज्यते । विकारश्च परस्य प्रत्यगात्मनो निरवयवत्वासङ्गत्वादियुक्त्या "न जायते म्रियते वे"त्याद्यागमाच्च निषिद्धत्वान्न सिध्यति । अतः शरीरस्यान्नरसविकारत्वप्रतीतेरात्मनोऽपि तदुपाधित्वात्तथा व्यपदेशसिद्धिरित्यर्थः ॥ २५४ ॥

प्रसिद्धमेव शिरआदिप्रथमकोशे ग्राह्यं न प्राणादिष्विव कल्पनेति दर्शयितुं "तस्येदमेवे"त्यत्रावधारण-३५ मित्याह—इदमेवेति ॥ २५५ ॥

विराट्पिण्डात्मनोरैक्यं श्रुत्यन्तरवशादिह । उपासनोपदेशाच्च जानीयात्पिण्डदेवताम् ॥२५६॥
विराडात्मकतां याते पिण्डेऽध्यात्मावसायिनि । प्राणो वाय्वात्मतामेति प्रध्वस्तघटदीपवत् ॥२५७॥
विद्यादन्नमयेनैव मूषायां द्रुतताम्रवत् । सर्वान्प्राणमयादींस्तान्रचितान्पुरुषाकृतीन् ॥२५८॥
यथोदितानुवादी तु श्लोकोऽप्यत्र निगद्यते । ब्राह्मणोक्तार्थविज्ञानदृढिम्ने हितकाम्यया ॥२५९॥

इति प्रथमोऽनुवाकः

अन्नरसमयशब्देन न प्रसिद्धमेव शरीरं ग्राह्यं किन्तु विराडात्माऽपीत्याह--विराडिति । आत्मैवेदमग्र आसीत्पुरुषविध इत्यादिश्रुत्यन्तरे शरीरविराजोरेकत्वस्य विवक्षितत्वाद्येऽन्नं ब्रह्मोपासत इत्यत्र ध्यानोपदेशाच्छिरआदिकल्पनायाश्च ध्यानार्थत्वाद्विराड्देवताऽत्र ग्रहीतव्येत्यर्थः ॥ २५६ ॥

विराजो देहस्य च किमर्थमेकत्वमुच्यते तत्राऽऽह--विराडात्मकतामिति । उपासनातः शरीरस्य विराडात्मभावे संवृत्ते प्राणोऽपि शरीरान्तर्गतो हिरण्यगर्भो भवति ततश्च तदुपाधिरात्माऽनवच्छिन्नः सिध्यति यथा घटे प्रध्वस्ते कपालादिभावमापन्ने तदन्तर्गतो दीपस्तेजोमात्रतामापद्यते तद्वदित्यर्थः ॥ २५७ ॥

अन्नमयस्य प्रसिद्धमेव शिरआदि प्राणमयादेस्तु कथमित्याशङ्क्याऽऽह--विद्यादिति । यथा मूषायां द्रुतं ताम्रादि प्रक्षिप्तं मूषाकारं भजते तथा शरीरस्य शिरआदिमत्त्वात्तदन्तर्वर्तिप्राणमयादेस्तद्युक्तस्योपासनार्थं पदार्थविवेकसौकर्यार्थं चेयं कल्पनेत्यर्थः ॥ २५८ ॥

तदप्येष श्लोको भवतीत्यस्यार्थमाह--यथोदितेति ॥ २५९ ॥

इति प्रथमोऽनुवाकः

## अथ ब्रह्मवल्ल्यां द्वितीयोऽनुवाकः

**अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवी ँ् श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि-यन्त्यन्ततः। अन्न ँ् हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते। अन्न ँ् हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति।**

५ **अन्नाद्रसादिभावपरिणतात्। वा इति स्मरणार्थः। प्रजाः स्थावरजङ्गमाः प्रजायन्ते। याः काश्चाविशिष्टाः पृथिवीं श्रिताः पृथिवीमाश्रितास्ताः सर्वा अन्नादेव प्रजायन्ते। अथो अपि जाता अन्नेनैव जीवन्ति प्राणान् धारयन्ति वर्धन्त इत्यर्थः। अथाप्येनदन्नमपियन्त्यपिगच्छन्ति। अपिशब्दः प्रतिशब्दार्थे। अन्नं प्रति प्रलीयन्त इत्यर्थः। अन्ततोऽन्ते जीवनलक्षणाया वृद्धेः परिसमाप्तौ। कस्मात्। अन्नं हि यस्माद्भूतानां प्राणिनां ज्येष्ठं प्रथमजम्। अन्नमयादीनां हीतरेषां भूतानां कारणमन्नमतोऽन्नप्रभवा अन्नजीवना अन्नप्रलयाश्च सर्वाः प्रजाः। यस्माच्चैवं**
१० **तस्मात्सर्वौषधं सर्वप्राणिनां देहदाहप्रशमनमन्नमुच्यते।**

**अन्नब्रह्मविदः फलमुच्यते। सर्वं वै ते समस्तमन्नजातमाप्नुवन्ति। के। येऽन्नं ब्रह्म यथोक्तमुपासते। कथमन्नजोऽन्नात्माऽन्नप्रलयोऽहं तस्मादन्नं ब्रह्मेति। कुतः पुनः सर्वान्नप्राप्तिफलमन्नात्मोपासनमित्युच्यते। अन्नं हि भूतानां ज्येष्ठम्। भूतेभ्यः पूर्वं निष्पन्नत्वाज्ज्येष्ठं; हि यस्मात्तस्मात्सर्वौषधमुच्यते। तस्मादुपपन्ना सर्वान्नात्मोपासकस्य सर्वान्नप्राप्तिः। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्त इत्युपसंहारार्थं पुनर्वचनम्। इदानीमन्ननिर्वचनमुच्यते।**

१५ **वनमाला**

**अन्नादिति**। विराडात्मकादित्यर्थः। **स्थावरेति**। व्यष्ट्यन्नमयकोशा इत्यर्थः। कदा लीयन्त इत्याकाङ्क्षाया-माह—**अन्त इति**। विराजोऽस्मदादिकारणत्वे हेतुपरमन्नं हीति वाक्यं हिशब्दयोगादिति मत्वा तदाकाङ्क्षापूर्वक-मवतार्य व्याचष्टे—**कस्मादित्यादिना**। अन्नशब्दितस्य विराजः प्रथमजत्वं फलितमाह—**अन्नमयादीनां हीति**। प्राणमयादीनामन्नविकारत्वाभावेऽप्यन्नोपचितत्वमस्तीति मत्वाऽन्नादिपदं प्रयुक्तम्। अन्नं विराडात्मकं यतः प्रथममेव
२० जातं सत्स्वव्यतिरिक्तानां भूतानां कारणं कारणत्वयोग्यम्, अतोऽन्नप्रभवा इत्यर्थः। प्रथममुत्पन्नस्य पश्चादुत्पद्य-मानकार्यं प्रति कारणत्वयोग्यतासम्भवसूचनार्थो हिशब्दः। **यस्माच्चैवमिति**। चोऽवधारणे। यस्मादन्नजीवना एव प्रजाशब्दवाच्याः प्राणिन इत्यर्थः। **दाहेति**। जाठरकृता क्षुद्दाहः, तत्प्रशामकमित्यर्थः।

उत्तरवाक्यतात्पर्यमाह—**अन्नब्रह्मविद इति**। ननु कथमन्नस्य ब्रह्मत्वं कथं वा तदुपासनमिति पृच्छति—**कथमिति**। उत्तरम्—अन्नज इत्यादि। यस्मादन्नं प्रथमकोशजातस्य जन्मस्थितिप्रलयकारणं तस्मादन्नं ब्रह्म,
२५ तच्चान्नात्मकं ब्रह्माहमस्मीति चिन्तयेत्, उपास्यविराड्देवभावापत्तिं विना सर्वान्नप्राप्त्यसम्भवात् देवभावस्य चाहंग्रहं विना प्राप्तुमशक्यत्वादित्यर्थः। अन्नं हीति पुनर्वचनमन्नब्रह्मविदः सर्वान्नप्राप्तौ हेतुपरमिति मत्वा तदवतारयति—**कुतः पुनरिति**। अन्नस्य ज्येष्ठत्वे हेतुमाह—**भूतेभ्य इति**। भूतेभ्यः पूर्वं निष्पन्नत्वादन्नं ज्येष्ठम्, तच्च ज्येष्ठमन्नं हि यस्माद्भूतानां जन्मजीवनादिकारणं तस्मादन्नं सर्वौषधमुच्यते लोकैरिति योजना। अनेन हि पुनर्वचनेन अन्नदेवतात्मनो विराजः स्वकार्येषु सर्वप्राणिषु व्याप्तिस्तात्पर्येण प्रतिपाद्यते लोके कारणस्य मृदादेः
३० कार्येषु व्याप्तेः प्रसिद्धत्वात्। सा च व्याप्तिर्विराडात्मभावमापन्नस्यान्नब्रह्मविदः सर्वप्राण्यात्मना सर्वान्नात्तृत्वे हेतुर्भवतीति मत्वाह—**तस्मादिति**। अन्नब्रह्मविदो विराडात्मना सर्वप्राणिव्यापित्वादित्यर्थः। अस्य पुनर्वचनस्य अयमभिप्रायो वार्त्तिके स्पष्टमभिहितः—"कार्यं सर्वं यतो व्याप्तं कारणेनात्तृरूपिणा। इति हेतूपदेशाय त्वन्नं हीत्युच्यते
३५ पुनः॥" इति। "ननु अन्नाद्वै प्रजाः प्रजायन्ते" इत्युक्तत्वात्पुनः "अन्नाद्भूतानि जायन्ते" इत्यादिवचनं व्यर्थमित्या-शङ्क्याह—**उपसंहारार्थमिति**। अद्यत इत्यादेस्तात्पर्यमाह—**इदानीमिति**। तच्च निर्वचनमुपास्यस्यान्नरूपप्रजापते-

तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः।
स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः।
तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः।
आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

इति द्वितीयोऽनुवाकः ५

अद्यते भुज्यते चैव यद्भूतैरन्नमत्ति च भूतानि स्वयं तस्माद्भूतैर्भुज्यमानत्वाद्भूतभोक्तृत्वाच्चान्नं तदुच्यते। इति-शब्दः प्रथमकोशपरिसमाप्त्यर्थः।

अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतमं ब्रह्म विद्यया प्रत्यगात्मत्वेन दिदर्शयिषु शास्त्रमविद्या-कृतपञ्चकोशापनयनेनानेकतुषकोद्रववितुषीकरणेनेव तदन्तर्गततण्डुलान्प्रस्तौति तस्माद्वा एतस्मादन्नरसमयादित्यादि। तस्मादेतस्माद्यथोक्तादन्नरसमयात्पिण्डादन्यो व्यतिरिक्तोऽन्तरोऽभ्यन्तर आत्मा पिण्डवदेव मिथ्यापरिकल्पित आत्मत्वेन १० प्राणमयः प्राणो वायुस्तन्मयस्तत्प्रायः। तेन प्राणमयेनान्नरसमय आत्मैष पूर्णो वायुनेव दृतिः।

स वा एष प्राणमय आत्मा पुरुषविध एव पुरुषाकार एव शिरःपक्षादिभिः। किं स्वत एव, नेत्याह। प्रसिद्धं तावदन्नरसमयस्याऽऽत्मनः पुरुषविधत्वम्। तस्यान्नरसमयस्य पुरुषविधतां पुरुषाकारताम् अन्वयं प्राणमयः पुरुषविधो मूषानिषिक्तप्रतिमावन्न स्वत एव। एवं पूर्वस्य पूर्वस्य पुरुषविधतामनूत्तरोत्तरः पुरुषविधो भवति पूर्वः पूर्वश्चोत्त-रोत्तरेण पूर्णः। कथं पुनः पुरुषविधताऽस्येत्युच्यते। तस्य प्राणमयस्य प्राण एव शिरः प्राणमयस्य वायुविकारस्य १५

वनमाला

रद्यत्वात्तृत्वरूपगुणद्वयविधानार्थमिति मन्तव्यम्। यस्मात्प्रकृतं व्रीहियवादिलक्षणं वस्तु भूतैरद्यते तस्मादन्नशब्द-वाच्यं भवति, यस्माच्च तद्भूतान्यत्ति संहरति तस्मादपि तदन्नमुच्यते; अन्नस्य चापथ्यादिरूपस्य प्राणिसंहार-साधनत्वं लोके प्रसिद्धमिति मन्तव्यम्। इत्थमन्नमयकोशं निरूप्य तस्यानात्मत्वसिद्धये प्राणमयकोशवाक्यप्रवृत्तिः, एवमुत्तरत्रापीति तात्पर्यमाह—अन्नमयादिभ्य इति। आत्मभ्य इति। कल्पितात्मभ्य इत्यर्थः। अत एवाह— २० अविद्याकृतेति। यथा लोकोऽनेकतुषकोद्रववितुषीकरणेन कोद्रवतण्डुलान्दर्शयितुं प्रवर्तते तथा प्रत्यगात्मावरण-भूताविद्याकृतपञ्चकोशापनयनेनान्नमयादिभ्य आनन्दमयान्तेभ्य अन्तरतमं ब्रह्म कोशापनयनशब्दितविवेकजनितया विद्यया प्रत्यक्तया दर्शयितुमिच्छु शास्त्रं प्रस्तौति प्रवर्तत इत्यर्थः। तस्माद्वा एतस्माद्यथोक्तादिति। अत्र "अन्नाद्वै प्रजाः प्रजायन्ते" इत्यादौ दूरदेशे भूतकारणत्वेन प्रकृतं वैशब्देन स्मारितं तस्मादित्यनेनानूद्य एतस्मादित्यनेनान्न-मयकोशस्य विराडात्मत्वं प्रबोध्यते। एवमुत्तरत्रापि। तदुक्तं वार्त्तिके—"वैशब्देनैव संस्मार्य दवीयोदेशवर्तिनम्॥ २५ तस्माच्छब्देन वैराजमादायाध्यात्मरूपिणः। एतस्मादिति शब्देन वैराजत्वं प्रबोध्यते॥ कार्याणां कारणात्मत्वमेवं स्यादुत्तरेष्वपि।" इति। कार्याण्याध्यात्मिकाः कोशाः, तेषां विराडाद्यात्मत्वबोधनं च प्रागानन्दमयपर्यायाद्विराडाद्य-भेदेनोपासनसूचनार्थम्; आनन्दमयपर्याये तु तदेतच्छब्दयोरुक्तार्थपरत्वेऽपि न चिन्तनविवक्षास्ति, किं त्वध्यात्माधि-दैवतलक्षणाद्द्विविधादप्यानन्दमयतत्कारणकोशाच्चिदेकरसस्य पुच्छब्रह्मणो विवेकमात्रं विवक्षितम्; तत्पर्याये पक्ष-पुच्छादिकल्पनस्यान्यदेव प्रयोजनमिति वक्ष्यते। यथोक्तादित्यस्य सुपर्णाकारेणोक्तादित्यर्थः। आत्मत्वेन परिकल्पित ३० इति योजना। वायुरिति। अत्र हिरण्यगर्भोपाधिभूते समष्टिकारणात्मनि क्रियाशक्तिमदंशः प्राणो विवक्षित इति मत्वा वायुरित्युक्तम्। तत्रैव ज्ञानशक्तिमदंशभूतं समष्ट्यन्तःकरणं मनोमय इत्यत्र मनःशब्दार्थ इत्यपि बोध्यम्। तत्प्राय इति। तद्विकार इत्यर्थः। अत एवानुवादावसरे वक्ष्यति—वायुविकारस्येति। प्राणमयस्यान्नमयं प्रत्यात्मत्वं तद्व्यापित्वादित्युपपादनार्थम् "तेनैष पूर्णः" इत्युक्तम्। तत्र प्राणेन देहो व्याप्त इत्यत्रानुरूपं दृष्टान्तमाह—वायुनेवेति। शिरःपक्षादिभिरिति। शिरःपक्षपुच्छादिकल्पनालम्बनभूतैरवयवैः पुरुषाकारः प्राण इत्यर्थः। ननु पञ्चवृत्तेः ३५ प्राणस्यामूर्तत्वात्स्वयमेव तस्य पुरुषविधत्वं न सम्भवतीति शङ्कते—किं स्वयमेवेति। "तस्य पुरुषविधताम्" इति श्रुत्या परिहरति—नेत्याहेति। श्रुतिरिति शेषः। नन्वन्नमयस्य वा कथं पुरुषविधत्वम्? तत्राह—प्रसिद्धमिति। प्राणमये उक्तं न्यायं मनोमयादिष्वतिदिशति—एवमिति। कथं पुरुषविधतास्येति। अस्य प्राणमयस्य यद्यपि

प्राणो मुखनासिकानिःसरणो वृत्तिविशेषः शिर एव परिकल्प्यते वचनात्। सर्वत्र वचनादेव पक्षादिकल्पना। व्यानो व्यानवृत्तिर्दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश आत्मा य आकाशस्थो वृत्तिविशेषः समानाख्यः स आत्मेवाऽऽत्मा प्राणवृत्त्यधिकारान्मध्यस्थत्वादितराः पर्यन्ता वृत्तीरपेक्ष्याऽऽत्मा। "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतिप्रसिद्धं मध्यमस्थस्याऽऽत्मत्वम्। पृथिवी पुच्छं प्रतिष्ठा। पृथिवीति पृथिवी देवताऽऽध्यात्मिकस्य प्राणस्य ५ धारयित्री स्थितिहेतुत्वात्। "सैषा पुरुषस्यापानमवष्टभ्य" इति हि श्रुत्यन्तरम्। अन्यथोदानवृत्त्योर्ध्वगमनं गुरुत्वाच्च पतनं वा स्याच्छरीरस्य तस्मात्पृथिवी देवता पुच्छं प्रतिष्ठा प्राणमयस्याऽऽत्मनः। तत्तस्मिन्नेवार्थे प्राणमयात्मविषय एष श्लोको भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये द्वितीयोऽनुवाकः

१० आनन्दगिरिटीका

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यां द्वितीयोऽनुवाकः

वनमाला

पुरुषविधता सिद्धा तथापि कथं पक्षपुच्छादिकल्पनाप्रकार इत्यर्थः। वृत्तिविशेष इति। वृत्तिमतः प्राणस्यावयवित्वेन १५ विवक्षितत्वादिति भावः। ननु प्राणवृत्तौ शिरस्त्वकल्पनायां किं नियामकम्? तत्राह—वचनादिति। उत्तरत्रापि वचनमेव नियामकमित्याह—सर्वत्रेति। यद्वा सर्वपर्यायेष्वपि वस्तुगत्या वचनमेव तत्कल्पने नियामकमित्याह—सर्वत्रेति। आकाशपदेन शरीरमध्याकाशस्थसमानलक्षणायां कारणमाह—प्राणवृत्त्यधिकारादिति। समानस्य मध्यभागत्वरूपात्मत्वकल्पनायां युक्तिमाह—मध्यस्थत्वादिति। इतराः पर्यन्ता वृत्तीरपेक्ष्य मध्यस्थत्वात्समान आत्मेति योजना। ननु मध्यस्थस्यापि कथमात्मत्वम्? तत्राह—मध्यं हीति। पृथिवी देवतेति। न च प्राणवृत्त्यधिकारा- २० विशेषात्पृथिवीशब्देनोदानग्रहणं न्याय्यमिति वाच्यम्; प्रतिष्ठात्वलिङ्गविरोधेन प्रकरणस्यानादरणीयत्वात्। न ह्युदानवृत्तेर्वृत्तिमन्तं प्राणमयं प्रति प्रतिष्ठात्वं सम्भवति। स्थितिहेतुत्वादिति। पृथिवीदेवताया आध्यात्मिकप्राणस्थितिहेतुत्वस्य श्रुत्यन्तरादवगतत्वादित्यर्थः। श्रुतावपानपदं प्राणमयकोशपरम्। अन्यथेति। देवताकृतावष्टम्भनाभावः इत्यर्थः। उदानवृत्तेरूर्ध्वगमनहेतुत्वम् "अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापम्" इत्यादिश्रुत्यन्तरादेव सिद्धमिति मन्तव्यम्, उदानवृत्तेः कालविशेषापेक्षत्वेन सदोर्ध्वगमनप्रसक्त्यभावेऽपि छिन्न- २५ कदलीस्तम्भादेरिव भूमौ पतनं वा प्रसज्यत इत्यर्थः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां द्वितीयोऽनुवाकः

## अथ वार्तिके ब्रह्मवल्ल्यां द्वितीयोऽनुवाकः

अन्नादेव प्रजाः सर्वा जायन्तेऽन्नेन बृंहिताः। वर्धन्ते त्वन्नमेवैताः प्रविलीयन्ति सर्वशः ॥ १ ॥
भूतेभ्यः पूर्वनिष्पत्तेर्ज्येष्ठमन्नं विराड्भवेत्। स वै शरीरी प्रथमस्तथा पौराणिको स्मृतिः ॥ २ ॥
ओषणादग्निरोषः स्याद्धातूनुष्यति येन सः। धानात्तस्याग्नितत्त्वज्ञैरौषधं शब्द्यते सदा ॥ ३ ॥
सर्वेषां जाठराग्न्याख्यं वत्सं चोष्यादिभिः स्तनैः। अन्नं गौर्धयते यस्मात्सर्वौषधमतो भवेत् ॥ ४ ॥
उद्भूतिस्थितिहानिभ्यो जगतोऽन्नं हि कारणम् ॥ ५ ॥ ५
कार्यस्य कारणाद्ब्रह्म तद्ये नित्यमुपासते। आप्नुवन्त्यखिलं तेऽन्नमध्यात्मं दैवतात्मना ॥ ६ ॥
[1]सैषा विराडिति ह्युक्तिमन्नात्तृत्वं हि ताण्डिकैः। कार्यं सर्वं यतो व्याप्तं कारणेनात्तृरूपिणा ॥
इति हेतूपदेशाय ह्यन्नं हीत्युच्यते पुनः ॥ ७ ॥
अद्यतेऽन्नं प्रधानत्वाददितित्वात्तथाऽत्ति च। अन्नान्नादत्वहेतोस्तदन्नं हीत्युच्यते बुधैः ॥ ८ ॥
आप्नोति सर्वकार्याणि कारणात्मतया विराट्। ततोऽप्यन्तः प्रवेशाय तस्मादित्यभिधीयते ॥ ९ ॥ १०

श्लोकाक्षराणि योजयति—अन्नादेवेति ॥ १ ॥

अन्नं हि भूतानां ज्येष्ठमिति कथमन्नस्य ज्येष्ठत्वमुच्यते तत्राऽऽह—भूतेभ्य इति। विराजो भूतापेक्षया पूर्वनिष्पन्नत्वे प्रमाणमाह—स वा इति ॥ २ ॥

अन्नस्य सर्वौषधत्वं श्रुत्योच्यते तत्कथमित्याशङ्क्याऽऽह—ओषणादिति। दहनादिति यावत्। अग्नेरोषत्वं साधयति—धातूनिति। उष्यति दहतीत्यर्थः। अन्नालाभे जाठरोऽग्निर्धातूनेव दहति—तस्याग्नेरन्नेन धानात्पाना- १५ दुपशमनात्तृप्तिसाधनादन्नमौषधमित्येतदाह—धानादिति ॥ ३ ॥

सर्वौषधमित्यस्य संपिण्डितमर्थमाह—सर्वेषामिति। चोष्यादिभिरित्याशब्देन लेह्यभक्ष्यभोज्यानां ग्रहणम्। धयते पाययतीत्यर्थः ॥ ४ ॥

येऽन्नं ब्रह्मोपासत इत्यत्रान्ने ब्रह्मशब्दप्रयोगे निमित्तमाह—उद्भूतीति। अन्नब्रह्मोपासनस्य फलमाह—तद्य इति। तदन्नं विराडात्मकं ये दीर्घकालमादरनैरन्तर्याभ्यामहंग्रहेण ध्यायन्ति ते विराडात्मरूपेण सर्वमेव २० आध्यात्मिकमन्नमाप्नुवन्ति। विराडुपासको हि विराडात्मवदेव सर्वेषामन्नानामत्ता भवतीत्यर्थः ॥ ५-६ ॥

विराजोऽन्नात्तृत्वे प्रमाणमाह—सैषेति। अन्नं हि भूतानामित्यादिपुनर्वचनं किमर्थमित्याशङ्क्याऽऽह—कार्यमिति। उपासकस्य विराडात्मरूपेण सर्वान्नभक्षणसमर्थनार्थमुपास्यस्य विराडात्मनः कार्यव्याप्तिलक्षणो हेतुः पुनर्वचनेन चोच्यते। दृष्टं हि सर्वं कार्यं कारणेन व्याप्तं प्रकृते चात्तृरूपेण विराजा सर्वमन्नं यतो व्याप्यते ततश्चान्नोपासकस्य विराडात्मरूपेण सर्वान्नभक्षणं सम्भवतीतिहेतुकथनार्थमन्नं हीत्यादि पुनर्वचनमुचित- २५ मित्यर्थः ॥ ७ ॥

"अद्यतेऽत्ति चे"त्यादिवाक्यद्वयस्यार्थमाह—अद्यत इति। अदनाद्यमानत्वाच्चान्नमिति ॥ ८ ॥

प्रजापतिरूपमेवोक्तमित्यन्नान्नादत्वेन विराजो व्याप्तिमुक्तामुपसंहरति—आप्नोतीति। प्रकृतात्प्रकृतयर्था-दन्नादन्नमयाच्च प्रत्ययार्थादन्तरवस्थितात्मनि बुद्धिप्रवेशनाय प्राणपर्यायस्य प्रवृत्तिरित्याह—ततोऽपीति ॥ ९ ॥

---

१. सैषा विराडन्नादी ( छा० ४.३.८ )। ३०

वैशब्देनैव संस्मार्य दवीयोदेशवर्तिनम् ॥ १० ॥

तस्माच्छब्देन वैराजमादायाध्यात्मरूपिणः । एतस्मादितिशब्देन वैराजत्वं प्रचोध्यते ॥ ११ ॥

कार्याणां कारणात्मत्वमेवं स्यादुत्तरेष्वपि । ब्रह्मानन्तं भवेदेवं सांख्यराद्धान्त[1]मन्यथा ॥ १२ ॥

पूर्वकार्यातिरेकेण स्वात्मना चान्वयोक्तितः । अन्वयव्यतिरेकाभ्यां यथोक्तार्थः समर्थितः ॥ १३ ॥

५ यथोक्तान्नमयादस्मादन्यः स्यात्तद्विलक्षणः । अन्तरः प्रत्यगित्येतदात्मा चात्मसमन्वयात् ॥ १४ ॥

कोशैश्चतुर्भिः संव्याप्तौ यथैवान्नमयः पुरा । जानीयादुत्तरानेवं त्रिद्व्येकार्थसमन्वयात् ॥ १५ ॥

तेन प्राणमयेनैष पूर्णो रज्ज्वेव पन्नगः । कार्यतोऽन्नमयः क्लृप्तो वाचारम्भणशास्त्रतः ॥ १६ ॥

स वै पुरुषविधो ह्युक्तो योऽयं प्राणमयः स्मृतः । अमूर्तत्वाक्कुतोऽन्वेतद्धेतुस्तस्येति भण्यते ॥ १७ ॥

प्राणस्तस्य शिरःश्रैष्ठ्यात्प्राणो यस्मान्मुखालयः । व्यानोऽस्य दक्षिणः पक्ष उत्तरोऽपान उच्यते ॥ १८ ॥

१० प्रस्ताविते वाक्ये शब्दत्रयस्यार्थमाह—वैशब्देनेति । दूरतरे देशे व्यवस्थितं प्रकृत्यर्थभूतमन्नात्मकं विराडात्मानं वैशब्देन संस्मार्य तत्रैव तस्माच्छब्दं प्रयुज्य तेन वैराजमात्मानं गृहीत्वा पुनरध्यात्मरूपिणो देहस्य प्रत्ययार्थस्य सन्निहितत्वादेतस्मादित्युपादानात्तच्छब्दसमानाधिकृतैतच्छब्देन विराडेकत्वमेतस्य प्रदर्श्यते । पदद्वय-सामानाधिकरण्यस्यैकत्वमन्तरेणायोगादित्यर्थः ॥ १०-११ ॥

यथाऽत्र तदेतच्छब्दाभ्यामध्यात्मदेहस्य विराडैक्यं विवक्ष्यते तथोत्तरत्रापि तदेतच्छब्दाभ्यां कारणेन १५ प्राणादिना कार्यस्य प्राणमयादेरैक्यमभिप्रेतमित्याह—कार्याणामिति । कार्यस्य कारणमात्रत्वे फलितमाह—ब्रह्मेति । उक्तन्यायेन द्वैतप्रपञ्चस्याज्ञातब्रह्ममात्रत्वे तस्य कार्यकारणविलक्षणानवच्छिन्नवस्तुमात्रत्वेन पर्यवसानं सिध्यतीत्यर्थः । जगद्ब्रह्मणोर्भेदे तु सांख्यादीनां सिद्धान्तो निर्णयो यस्मिन्द्वैते तदेव स्यात्ततश्चानेकागमयुक्तिविरोधो भवेदित्याह—सांख्येति ॥ १२ ॥

कार्यस्य कारणात्मत्वं हेत्वन्तरेण साधयति—पूर्वकार्येति । पूर्वस्मादन्नमयादिकार्यादतिरेकेणोत्तरस्य २० प्राणमयादिकारणस्य सिद्धेर्व्यतिरेकसिद्धिः । पूर्वस्य च कार्यस्योत्तरेण कारणेनान्वयात्तदव्यतिरेकादन्वयसिद्धिः । एवमन्वयव्यतिरेकाभ्यां कार्यकारणयोरैक्यं समर्थितमित्यर्थः ॥ १३ ॥

अन्योऽन्तर आत्मेतिशब्दानामर्थमाह—यथोक्तेति ॥ १४ ॥

अन्नमये दर्शितन्यायं प्राणमयादिष्वतिदिशति—कोशैरिति । यथा प्रथमे पर्याये व्यवस्थितोऽन्नमयः प्राणमयमनोमयविज्ञानमयानन्दमयैश्चतुर्भिः कोशैर्व्याप्यते तथा प्राणमयो मनोमयविज्ञानमयानन्दमयैस्त्रिभिर्व्याप्तो २५ मनोमयो विज्ञानमयानन्दमयाभ्यां द्वाभ्यां विज्ञानमयस्त्वेकेनानन्दमयेन व्याप्तः । ततश्च पूर्वपूर्वस्योत्तरोत्तरेण व्याप्ते रज्ज्वा सर्पवत्पूर्वस्य पूर्वस्योत्तरमुत्तरं स्वरूपं सिध्यतीत्यर्थः ॥ १५ ॥

अन्नमयस्य प्राणमयेन व्याप्तत्वे तेनैष पूर्ण इति वाक्यं प्रमाणयति—तेनेति । अन्नमयस्य कल्पितत्वा-सिद्धेरुदाहरणमननुगुणमित्याशङ्क्याऽऽह—कार्यत इति ॥ १६ ॥

स वा एष पुरुषविध एवेत्यस्यार्थमाह—स वा इति । निरवयवत्वात्प्राणमयस्य शिरःपाण्यादिमत्त्वेन पुरुष-३० विधत्वमयुक्तमित्याह—अमूर्तत्वादिति । तस्य पुरुषविधतामित्यादिना परिहरति—हेतुरिति । स्थूलदेहस्य पुरुषा-कारत्वात्तदन्तर्गतस्य प्राणमयस्यापि मूषानिषिक्तद्रुतताम्रवत्पुरुषविधत्वं प्रकल्प्यते ततोऽस्य पुरुषविधत्वे हेतुरनेन वाक्येनोच्यत इत्यर्थः ॥ १७ ॥

तस्य प्राण एव शिर इत्यादेरर्थमाह—प्राणस्तस्येति ॥ १८ ॥

---

१. द्वैतमिति शेषः ।

सामान्यं वीर्यवत्ता स्यादितरस्यातथात्मता । आकाश इति चात्र स्यात्समानोऽम्बरसाम्यतः ॥ १९ ॥
प्राणानां तत्प्रतिष्ठानादात्माऽसौ श्रुतितो भवेत् । पृथिवी देवता पुच्छं सैषेति श्रुतिदर्शनात् ॥ २० ॥
असोराध्यात्मिकस्यैषा स्थितिहेतुः प्रकीर्तितः । अन्नात्मनीवेहाप्याह श्लोकं प्राणमयात्मनि ॥ २१ ॥

इति द्वितीयोऽनुवाकः

कोऽसौ व्यानः स्यादित्युक्ते देहधर्मसामान्यं वीर्यवत्ता व्यानस्य स्यादितिधर्मद्वारा धर्मिणं निर्दिशति— सामान्यमिति । न प्राणादेस्तथाविधधर्मवत्त्वमित्याह—इतरस्येति । आकाश आत्मेत्यत्राऽऽकाशशब्देन समानो गृह्यते समानस्य व्यापकत्वेनाऽऽकाशसदृशत्वादित्याह—आकाश इति चेति ॥ १९ ॥ ५

कुतः समानस्य व्यापकत्वमित्याशङ्क्य "कस्मिन्नु प्राणः प्रतिष्ठित" इति [१]श्रुत्या प्राणादिवृत्तीनां समानप्रतिष्ठत्वावगमात्समानो वृत्तीनामात्मेति दर्शयन्नुत्तरमाह—प्राणानामिति । "पृथिवी पुच्छं प्रतिष्ठे"तिवाक्यमवतारयति—पृथिवीति । प्राणमयस्येतिशेषः । "[२]सैषा पुरुषस्यापानमवष्टभ्ये"ति श्रुतेराध्यात्मिकस्य प्राणस्यैषा पृथिवी देवता पुच्छवत्प्रतिष्ठा स्थितिहेतुरितिवाक्यं योजयति—सैषेति । तदप्येष श्लोको भवतीत्यस्यार्थमाह—अन्नात्मनीवेति ॥ २०-२१ ॥ १०

इति द्वितीयोऽनुवाकः

१. बृहदारण्यके तृतीयाध्याये शाकल्यब्राह्मणे । २. प्र० ३.८ ।

## अथ ब्रह्मवल्ल्यां तृतीयोऽनुवाकः

प्राणं देवा अनु प्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात्सर्वायुष-मुच्यते। सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासते। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मात्प्राण-मयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुष-
५ विधताम्। अन्वयं पुरुषविधः। [1]तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

इति तृतीयोऽनुवाकः

प्राणं देवा अनु प्राणन्ति। देवा अग्न्यादयः प्राणं वाय्वात्मानं प्राणनशक्तिमन्तमनु तदात्मभूताः सन्तः प्राणन्ति प्राणनकर्म कुर्वन्ति प्राणनक्रियया क्रियावन्तो भवन्ति। अध्यात्माधिकाराद्देवा इन्द्रियाणि प्राणमनु प्राणन्ति
१० मुख्यप्राणमनु चेष्टन्त इति वा। तथा मनुष्याः पशवश्च ये ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति। अतश्च नान्नमयेनैव परिच्छिन्नेनाऽऽत्मनाऽऽत्मवन्तः प्राणिनः। किं तर्हि तदन्तर्गतेन प्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिनाऽऽत्म-वन्तो मनुष्यादयः। एवं मनोमयादिभिः पूर्वपूर्वव्यापिभिरुत्तरोत्तरैः सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धैरविद्या-

आनन्दगिरिटीका

पूर्वपूर्वकोशस्योत्तरोत्तरः कोश एवाऽऽत्मेति व्याख्यातमापातदर्शनेन, तदसत्। आत्मशब्दस्यामुख्यार्थत्व-
१५ प्रसङ्गात्प्रकृतपरामर्शकैतच्छब्दकोपाच्च। अतः सर्वकोशाध्यासाधिष्ठानभूतश्चिदात्मैवात्राऽऽत्मशब्देन विवक्षित इति

वनमाला

तदात्मभूता इति। सूत्रात्मभूता इत्यर्थः। अग्न्यादिदेवानां सूत्रात्मविभूतितया तदात्मकतायाः शाकल्य-ब्राह्मणसिद्धत्वादिति मन्तव्यम्। यद्वा सूत्रात्मोपास्त्या तदात्मकतां प्राप्ता इत्यर्थः। अथवा अस्मदादय इवाग्न्याद-योऽपि तदात्मभूताः क्रियाशक्तिमत्प्राणोपाधिकाः सन्त इत्यर्थः। देवशब्दस्य प्रसिद्धिमाश्रित्याग्न्यादिपरत्वमुक्तम्;
२० इदानीमिन्द्रियपरो देवशब्द इति सयुक्तिकमाह—अध्यात्माधिकारात्त्विति। तुशब्दोऽवधारणार्थः सन्निन्द्रियाणीत्यत्र सम्बध्यते। प्राणमयकोशाधिकारादित्यर्थः। मुख्यप्राणमन्विति। तस्मिन्निरुद्धे इन्द्रियाणां प्रवृत्त्यदर्शनादिति भावः। न केवलमिन्द्रियाणामेव प्राणाधीना चेष्टा, अपि तु शरीरादीनामपीत्याह—तथा मनुष्या इति। "प्राणं देवा अनु प्राणन्ति" इत्यादिना केवलदेहात्मवादो निरस्त इति तात्पर्यमाह—अतश्चेति। प्राणाधीनचेष्टाकत्वाच्छरीराणा-मित्यर्थः। तस्य वस्तुतोऽनात्मत्वं सूचयति—परिच्छिन्नेति। आत्मशब्द स्वरूपपरः। नन्वन्नमयातिरिक्तं स्वरूपं
२५ नोपलभ्यत इति शङ्कते—किं तर्हीति। "प्राणं देवा अनु प्राणन्ति" इत्यादिश्रुतिमाश्रित्याह—तदन्तर्गतेति। तस्य पिण्डवत्परिच्छेदं व्यावर्तयन्साधारणपदं व्याचष्टे—सर्वपिण्डेति। सर्वपदमेकैकस्यैव पिण्डस्यावयवसाकल्याभि-प्रायम्। अथवा सूत्रात्मरूपेण प्राणमयस्य सर्वपिण्डव्यापित्वमुक्तमिति मन्तव्यम्। एवमान्तरत्वेन निरूपणीय आत्मा प्राणमय एवेति शङ्कानिरासार्थमुत्तरकोशानामप्यात्मतामाह—एवं मनोमयादिभिरिति। अत्रापि प्राण-मयाद्यन्तर्गतैरिति मनोमयादेर्विशेषणं द्रष्टव्यम्, तदन्तर्गतेति प्राणमयस्योक्तत्वात् प्रतिपर्यायं श्रुतावन्तरशब्द-
३० प्रयोगाच्च। तथा चोत्तरोत्तरकोशेषु पूर्वपूर्वापेक्षयान्तरत्वसूक्ष्मत्वव्यापित्वविशेषणानि तानि यत्र काष्ठां गच्छन्ति, स एव मुख्य आत्मेति ज्ञापनार्थानीति मन्तव्यम्। अविद्योपाधिकस्यानन्दमयशब्दितजीवस्यापि प्रियादिविशिष्टत्वा-कारेण कार्यत्वं मत्वाह—आकाशादीति। कोशानां स्वकारणैराकाशादिभूतैः सह मिथ्यात्वं सूचयति—अविद्या-

१. तस्य यजुरेव शिर इत्यादौ यजुर्विषयकमनोवृत्तिः मनोमयस्य शिर इत्युक्तं मतान्तरे तु वृत्तेः ज्ञानापरपर्यायस्यात्मर्थत्वात् तज्जनकमनोव्यापारः इत्युक्तं तत्र लक्षणा दोषः।

कृतैरात्मवन्तः सर्वे प्राणिनः। तथा स्वाभाविकेनाप्याकाशादिकारणेन नित्येनाविकृतेन सर्वगतेन सत्यज्ञानानन्तलक्षणेन पञ्चकोशातिगेन सर्वात्मनाऽऽत्मवन्तः। स हि परमार्थत आत्मा सर्वेषामित्येतदप्यर्थादुक्तं भवति। प्राणं देवा अनु प्राणन्तीत्युक्तं तत्कस्मादित्याह—प्राणो हि यस्माद्भूतानां प्राणिनामायुर्जीवनम्। "यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः" इति श्रुत्यन्तरात्। तस्मात्सर्वायुषम्। सर्वेषामायुः सर्वायुः सर्वायुरेव सर्वायुषमित्युच्यते प्राणापगमे मरणप्रसिद्धेः। प्रसिद्धं हि लोके सर्वायुष्ट्वं प्राणस्य। अतोऽस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽपक्रम्यान्तः साधारणं प्राणमयमात्मानं ब्रह्मोपासते येऽहमस्मि प्राणः सर्वभूतानामात्माऽऽयुर्जीवनहेतुत्वादिति ते सर्वमेवाऽऽयुरस्मिँल्लोके यन्ति नापमृत्युना म्रियन्ते प्राक्प्राप्तादायुष इत्यर्थः। शतं वर्षाणीति तु युक्तं सर्वमायुरिति श्रुतिप्रसिद्धेः। किं कारणं प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यत इति। यो यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं पुनर्वचनं प्राणो हीत्यादि। तस्य पूर्वस्यान्नमयस्यैष एव शरीरेऽन्नमये भवः शारीर आत्मा। कः। य एष प्राणमयः। ५ १०

## आनन्दगिरिटीका

तात्पर्यमाह—तथा स्वाभाविकेनेति। अर्थादिति। आत्मशब्दसामर्थ्यात्कल्पितस्याधिष्ठानत्वानुपपत्तेश्चेत्यर्थः। असाधारणादिति। व्यावृत्तस्वरूपात्। अपक्रम्य तत्राऽऽत्मबुद्धिं हित्वेत्यर्थः। साधारणमिति। सर्वेन्द्रियसाधारणम्। प्राणकृतेनाशनादिना सर्वेषां पुष्ट्यादिदर्शनादित्यर्थः। सर्वभूतानामात्मेति। सूत्रात्मना पूर्वस्य य आत्मा चिद्धातुरेष एव तस्य प्राणमयस्याऽऽत्मेति योजना। १५

## वनमाला

कृतैरिति। स्वतश्चैतन्यस्वरूपाणां प्राणिनामन्तर्बहिर्भवविनावारकतया पञ्चकोशसद्भावे दृष्टान्तमाह—यथेति। ननु अन्योऽन्तर आत्मा अन्योऽन्तर आत्मेति प्रकृत्य आन्तरत्वोक्तेरानन्दमये परिसमापनादानन्दमय एव परमात्मा, तथा च तस्याविद्याकृतत्वोक्तिरयुक्ता; नेत्याह—तथा स्वाभाविकेनापीति। स्वाभाविकत्वमकल्पितत्वम्। तत्र हेतुं सूचयति—आकाशादीति। सर्वकल्पनाधिष्ठानभूतेनेत्यर्थः। तस्य विनाशित्वपरिच्छिन्नत्वपरिणामित्वानि वारयति—नित्येनेत्यादिना विशेषणत्रयेण। तस्य प्रकरणित्वं सूचयति—सत्येति। आनन्त्यविवरणरूपाणि नित्येन सर्वगतेन सर्वात्मनेत्येतानि त्रीणि विशेषणानि। आत्मवन्तः मुख्यस्वरूपवन्तः। सर्वे प्राणिन इत्यत्र हेतुमाह—स हीति। "अयमात्मा ब्रह्म" इत्यादिश्रुतिभिर्यथोक्तात्मैव परमार्थत आत्मा प्रतीयते यत इत्यर्थः। अर्थादिति। ब्रह्मण्यानन्दमयादान्तरत्वोक्त्यभावेऽपि तं प्रति ब्रह्मणः प्रतिष्ठात्वोक्तिसामर्थ्यादानन्दमयादप्यान्तरत्वं प्रतीयते; तत एतदपि पुच्छवाक्यनिर्दिष्टस्य ब्रह्मणो मुख्यात्मत्वमन्यत्र कथितप्रायमेव भवति, तस्मान्नानन्दमयस्य मुख्यात्मत्वमिति भावः। तत्कस्मादित्याहेति। तत् प्राणस्य सर्वप्राणिचेष्टाहेतुत्वं कस्मादित्याकाङ्क्षायामाहेत्यर्थः। प्राणस्य सर्वभूतजीवनहेतुत्वे कौशीतकिश्रुतिसम्वादमाह—यावद्ध्यस्मिन्निति। "तस्मात्सर्वायुषमुच्यते" इति वाक्येन प्राणस्य सर्वायुष्ट्वे लोकप्रसिद्धिरुच्यत इत्यभिप्रेत्य तां विवृणोति—प्राणापगम इति। "सर्वमेव त आयुर्यन्ति" "ये प्राणं ब्रह्मोपासते" वाक्यद्वयमर्थक्रमेणावतार्य व्याचष्टे—अत इत्यादिना। प्राणमयस्यान्नमयं प्रत्यात्मत्वात्सर्वभूतायुष्ट्वाच्चेत्यतःशब्दार्थः। अस्मादित्यस्य चाक्षुषप्रत्यक्षसिद्धादित्यर्थः। असाधारणादिति। परिच्छिन्नादित्यर्थः। अपक्रम्येति। अपक्रमणमात्मत्वबुद्धिपरित्यागः; तत्र हेतुत्वेन चाक्षुषत्वबाह्यत्वपरिच्छिन्नत्वविशेषणान्युपात्तानीति मन्तव्यम्। सर्वभूतात्मत्वं सूत्रात्मबोध्यम्, तेन रूपेण प्राणमयकोशस्येहोपास्यत्वात्। आयुष्ट्वमुपास्यो गुण इति मत्वाह—आयुरिति। तस्य तद्गुणकत्वे हेतुः—जीवनहेतुत्वादिति। तद्धेतुत्वस्य श्रुत्यनुभवसिद्धत्वादित्यर्थः। प्रागिति। वर्तमानदेहारम्भसमये यावदायुः ससत्यशीत्यादिलक्षणं विधिना कल्पितं तावदायुः प्राप्तायुःशब्दार्थः। सर्वमायुरिति। "सर्वमेव त आयुर्यन्ति" इत्यत्र सर्वशब्दसामर्थ्याच्छतं वर्षाणि यन्तीत्येव युक्तमित्यर्थः। परार्धसंख्यां विहाय शतमित्यत्र हेतुमाह—श्रुतिप्रसिद्धेरिति। "शतायुः पुरुषः" इति श्रुतिप्रसिद्धेरित्यर्थः। आयुष्ट्वगुणकोपासनया आयुरेव प्राप्तव्यमित्यत्र किं विनिगमकमिति पृच्छति—किं कारणमिति। श्रुतिरुत्तरमित्याशयेनाह—प्राणो हीति। नन्वत्र किं नियामकं सूचितं भवतीत्यत आह—यो यद्गुणकमिति। "तं यथा यथोपासते तदेव भवति" इति न्यायेनायुष्ट्वगुणकोपासनादायुःप्राप्तिलक्षणं फलं युक्तमित्येवं विद्याफलप्राप्तौ हेतुसूचनार्थमिदम् "प्राणो हि" इत्यादिपुनर्वचनमित्यर्थः। "तस्यैष एव" इति वाक्यमानन्दमयो ब्रह्मेति वदतां वृत्तिकाराणां मतेन व्याचष्टे—तस्य पूर्वस्येति। अत एवानन्दमयाधिकरणे २० २५ ३० ३५ ४०

तस्माद्वा एतस्मादित्युक्तार्थमन्यत् । अन्योऽन्तरं आत्मा मनोमयः । मन इति सङ्कल्पाद्यात्मकमन्तःकरणं तन्मयो मनोमयो यथाऽन्नमयः । सोऽयं प्राणमयस्याऽभ्यन्तर आत्मा । तस्य यजुरेव शिरः । यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषस्तज्जातीयवचनो यजुःशब्दस्तस्य शिरस्त्वं प्राधान्यात् । प्राधान्यं च यागादौ सन्निपत्योपकारात् । यजुषा हि हविर्दीयते स्वाहाकारादिना । वाचनिकी वा शिरआदिकल्पना सर्वत्र । मनसो हि स्थान-
५ प्रयत्ननादस्वरवर्णपदवाक्यविषया तत्सङ्कल्पात्मिका तद्भाविता वृत्तिः श्रोत्रादिकरणद्वारा यजुःसङ्केतविशिष्टा यजुरित्युच्यते । एवमृगेवं साम च । एवं च मनोवृत्तित्वे मन्त्राणां वृत्तिरेवाऽऽवर्त्यत इति मानसो जप उपपद्यते । अन्यथाऽविषयत्वान्मन्त्रो नाऽऽवर्तयितुं शक्यो घटादिवदिति मानसो जपो नोपपद्यते । मन्त्रावृत्तिश्च चोद्यते बहुशः

आनन्दगिरिटीका

यजुःशब्देन बाह्यो यजुर्वेद उच्यते । तस्य कथमान्तरं मनोमयं प्रति शिरस्त्वमित्याशङ्क्याऽऽह—मनसो
१० हीति । यद्यपि यजुःशब्दो बाह्ये शब्दराशौ रूढस्तथाऽपि श्रुतेरनतिशङ्कनीयत्वात्तत्प्रामाण्याद्विशिष्टमनोवृत्तिर्यजुःसङ्केतविषयभूता यजुर्वेदमधीमह एतत्क्रमका वर्णा यजुर्वेदतयाऽध्येतव्या इत्येवं सङ्कल्परूपा ग्राह्येत्यर्थः । श्रुत्यनुग्राहिकां युक्तिमप्याह—एवं चेति । अन्यथेति । शब्दानां घटादिवद्बाह्यद्रव्यत्वे मनोविषयत्वासम्भवान्मनसो

वनमाला

वृत्तिकारमते स्थित्वा आनन्दमयपर्यायस्थमिदं वाक्यं तस्य पूर्वस्येति पदयोरित्थमेव व्यवहितान्वयप्रदर्शनेन
१५ व्याख्यातमाचार्यैः । विवक्षितार्थस्तु—पूर्वस्यान्नमयस्य कल्पितस्य यः परमार्थरूप आत्मा आकाशादिद्वारा तत्कारणत्वेन प्रकृतः, एष एव तस्य "अन्योन्तर आत्मा प्राणमयः" इति ब्राह्मणोक्तस्य प्राणमयस्य मुख्य आत्मा; अस्य च शारीरत्वं शरीरे साक्षितयोपलभ्यमानत्वादुपपद्यते; एवं च सति प्रकृतप्रधानपरामर्शकैतच्छब्द आत्मशब्दश्च मुख्यार्थौ भवतः, वस्तुतः स्वरूपान्तरव्यवच्छेदकमवधारणं च सङ्गच्छते; शरीरस्वामित्वरूपं मुख्यशारीरत्वं प्राणमयेऽपि न सम्भवतीति मन्तव्यम् । अत एव वार्त्तिके यथाभाष्यमिदं वाक्यं योजयित्वा पश्चादियं योजना मुख्य-
२० त्वेन प्रदर्शिता—"सत्यादिलक्षणो वात्मा गौणो ह्यात्मा ततोऽपरः । सर्वान्तरत्वान्याय्येयं यः पूर्वस्येति हि श्रुतिः ॥" इति । एवमुत्तरपर्यायेष्वपि द्रष्टव्यमिति संक्षेपः । अन्यदिति । मनोमयपदव्यतिरिक्तमित्यर्थः । मयटो विकारार्थत्वे दृष्टान्तः—यथेति । यजुःशब्दस्य प्रसिद्धमर्थमाह—यजुरितीत्यादिना । मन्त्रपदात्पूर्वं य इति शेषः । प्राधान्यादिति । शरीराङ्गाणां मध्ये शिरस इव वेदानां मध्ये यजुषः प्राधान्यादित्यर्थः । सन्निपत्येति । यागादौ स्वरूपोपकार्यङ्गत्वादित्यर्थः । तदेव विवृणोति—यजुषा हीति । शस्त्रात्मिका ऋक् स्तोत्रात्मकं साम च स्तुतिद्वारा आरादुपकारकत्वाद-
२५ प्रधानमिति भावः । ननु देवतोद्देशेन द्रव्यत्यागात्मकस्य यागस्य स्वरूपोत्पत्तिर्मन्त्रं विनापि सम्भवत्येव, परं त्वपूर्वीयस्य तस्य तेन विनोत्पत्तिर्न सम्भवति; तथा च विवक्षितविवेकेन यजुषोऽपि ऋक्सामयोरिवादृष्टार्थत्वपर्यवसानाद्यजुषः प्राधान्यमसिद्धम्, प्रत्युत "वेदानां सामवेदोऽस्मि" इति भगवतोक्तत्वात्तस्यैव प्राधान्यं युक्तमित्यस्वरसात्पूर्वोक्तां वस्तुगतिं स्मारयति—वाचनिकी वेति । ननु यजुःशब्दस्य शब्दराशिविशेषे प्रसिद्धत्वात्तस्य च शब्दराशिविशेषस्य-मनोमयकोशं प्रत्यवयवत्वाभावात्कथं प्रसिद्धयजुषि शिरस्त्वकल्पनम्, पूर्वोत्तरपर्यायेषु प्रायेण
३० कोशावयवेष्वेव शिरस्त्वादिकल्पनादर्शनादित्याशङ्क्य, तर्हि यजुरादौ मनोमयं प्रति शिरआदिदृष्टिर्विधिबलादेव वेदानां मनोवृत्तिविशेषरूपत्वेन तदवयवत्वं कल्प्यतें प्रमाणभूतायाः श्रुतेरनतिशङ्कनीयत्वादित्याशयेनाह—मनसो हीत्यादिना । हिशब्दः प्रसिद्धिद्योतनार्थः अवधारणार्थो वा । तथा च मनसोऽवयवत्वेन प्रसिद्धा वृत्तिरेव यजुरित्युच्यत इति सम्बन्धः । तामेव वृत्तिं विशिनष्टि—स्थानेत्यादिना । ताल्वादिस्थानेषु वाय्वभिघातानुकूलेन प्रयत्नेन जनितो यो नादो ध्वनिः तद्व्यङ्ग्या ये उदात्तादिस्वरयुक्ता वर्णाः ते च पदानि च वाक्यानि च विषया यस्यां वृत्तौ
३५ सा तथोक्ता । तत्सङ्कल्पनात्मिकेति । तेषु वर्णपदवाक्येषु पूर्वोक्तानियताक्षरपादावसानत्वसङ्कल्परूपेत्यर्थः । तद्भाविवेति । यजुर्वेदोऽहमित्याकारोपेतेत्यर्थः । श्रोत्राख्यं करणं द्वारं यस्याः सा तथोक्ता । प्रथमं शब्दराशिविशेषे गृहीतोऽपि सङ्केतः पश्चात्तद्विषयकवृत्तिविशेषविषयतया कल्प्यते, यथा प्रथमं चक्षुरादिशब्दानां गोलकेषु गृहीतोऽपि सङ्केतस्तदतिरिक्तचक्षुरादीन्द्रियविषयतया पश्चात्कल्प्यते तद्वदित्याशयेनाह—यजुःसङ्केतविशिष्टेति । यजुष इव ऋगादेरपि तुल्यन्यायतया मनोवृत्तिविशेषरूपत्वमाह—एवमिति । ऋक्सामग्रहणमथर्ववेदस्याप्युपलक्षणम् । श्रुत्यनु-
४० ग्राहिकां युक्तिमाह—एवं चेति । एवंशब्दार्थमेवाह—मनोवृत्तित्वे मन्त्राणामिति । अन्यथेति । तेषां मानसक्रिया-

कर्मसु । अक्षरविषयस्मृत्यावृत्त्या मन्त्रावृत्तिः स्यादिति चेन्न, मुख्यार्थासम्भवात् । "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्"
इति ऋगावृत्तिः श्रूयते । तत्रर्चोऽविषयत्वे तद्विषयस्मृत्यावृत्तौ च क्रियमाणायां त्रिः प्रथमामन्वाहेति ऋगावृत्ति-
र्मुख्योऽर्थश्चोदितः परित्यक्तः स्यात् । तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुः-
शब्दवाच्यमात्मविज्ञानं मन्त्रा इति । एवं च नित्यत्वोपपत्तिर्वेदानाम् । अन्यथा विषयत्वे रूपादिवदनित्यत्वं च
स्यान्नैतद्युक्तम् । "सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मा" इति च श्रुतिर्नित्यात्मनैकत्वं ब्रुवत्यृगादीनां नित्यत्वे ५
समञ्जसा स्यात् । "ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः" इति च मन्त्रवर्णः ।

## आनन्दगिरिटीका

बाह्येऽर्थेऽस्वातन्त्र्यान्मानसो जपो न स्यादित्यर्थः । इतश्च मनोवृत्तित्वं मन्त्राणां वाच्यमित्याह—मन्त्रावृत्तिश्चेति ।
शब्दानां घटादिवद्बाह्यद्रव्यत्वे मन्त्राणां घटादिवदावृत्तिर्नोपपद्यते क्रियैव ह्यावर्त्यते । आवृत्तिसिद्ध्यनुपपत्त्या
क्रियात्वं वाच्यमित्युक्तं तत्रान्यथाऽप्युपपत्तिमाशङ्कते—अक्षरविषयेति । मन्त्रेभ्यः स्मृतेरन्यत्वादन्याऽऽवृत्तिर्गौणी १०
प्रसज्यतेऽतो नान्यथाऽप्युपपत्तिरित्युक्तमेतत्स्फुटयति—त्रिः प्रथमामित्यादिना । सामिधेन्यः समिधो यदाऽध्वर्युणा
हूयन्ते तदा "प्र वो वाजा अभिद्यवः" इत्येकादशर्चं सूक्तं होता शंसति तासां चर्चां मध्ये प्रथमामृचं सूक्तस्यान्त्यां
चर्चं होता त्रिरनुब्रूयादित्यावृत्तिः श्रूयत इत्यर्थः । मन्त्राणां मनोवृत्तित्वमुक्त्वा मनोवृत्तीनां सदा चिद्व्याप्तत्वेनैव
सिद्धेश्चिदात्मतामाह—तस्मादिति । मन्त्राणां मनोवृत्तित्वेनाऽऽवृत्तिर्घटत इत्युक्तम् । परम्परया चिदात्मत्वेन
नित्यत्वमपि घटत इत्याह—एवं चेति । चैतन्यरूपत्वे सति । अन्यथेति । स्वप्रकाशचिदात्मत्वानङ्गीकारे रूपादि- १५
वद्विषयत्वादनित्यत्वमपि प्रसज्येत । कालिदासादिवाक्यानामप्येतेन न्यायेन नित्यत्वापाताद्युक्त्याभासमेतत् ।
अस्त्वनित्यत्वमिति न वाच्यमित्याह—नैतद्युक्तमिति । "वाचा विरूपनित्यये"ति श्रुत्या नित्यत्वस्याऽऽवेदितत्वाद्वेदा-

## वनमाला

रूपत्वानुपगम इत्यर्थः । मन्त्रो नावर्तयितुं शक्य इत्यत्र हेतुः—अविषयत्वादिति । आवृत्तिविषयत्वादर्शनादित्यर्थः ।
मास्तु मन्त्रावृत्तिरिति वदन्तं प्रत्याह—मन्त्रावृत्तिश्चोद्यत इति । मन्त्राणां घटादिवद्बाह्यद्रव्यत्वे तेषामावृत्तिर्नोप- २०
पद्यते लोके क्रियाया एवावर्त्यत्वदर्शनात् । अत आवृत्तिविध्यनुपपत्त्या मन्त्राणां क्रियात्वं वाच्यमित्युक्तम् ।
तत्रान्यथाप्युपपत्तिं शङ्कते—अक्षरविषयेति । अन्यथोपपत्तिं दूषयति—न, मुख्यार्थेति । ननु कोऽसौ मुख्यार्थः कथं
वा तदसम्भवप्रसङ्ग इत्याकाङ्क्षायामाह—त्रिः प्रथमामित्यादिना तत्रेति । आवृत्तावित्यर्थः । अविषयत्व इति
च्छेदः । नन्वेवम् "स्वाध्यायोऽध्येतव्यः" इत्यादौ वाचनिके जपे च मन्त्राणामुच्चारणं तदावृत्तिश्चावगम्यते; तेषां
मनोवृत्तित्वपक्षे कथमुच्चारणकर्मत्वं सम्भवति ? तथा चाध्ययनविध्यादेर्मुख्यार्थपरित्यागप्रसङ्ग इति चेत्, न; २५
मानसजपविध्यनुसारेण मनोवृत्तिरूपवेदानामध्ययनादेर्बाह्यशब्दद्वारकतया गौणत्वोपपत्तेः । न चात्र विनिगमना-
विरह इति वाच्यम्; मानसजपस्य फलाधिक्यश्रवणेन तस्यैव मुख्यतया न्याय्यत्वात् । अनेनैवाशयेन मानसो जपो
नोपपद्यत इति प्रागुक्तम् । वार्त्तिकेऽप्येतद्दर्शितम्—"भूयोऽल्पीयःफलत्वं च बाह्यमानसयोर्जपे । अतो मानसमुख्यत्व-
मितरस्यास्तु गौणता ॥" इति । नन्वस्मिन्पक्षे कथं वेदानां नित्यत्वनिर्वाहः वृत्तेः क्षणिकत्वादित्याशङ्कां परिहरन्नुप-
संहरति—तस्मादिति । वृत्तिविशेषानुगतं चैतन्यमेव वेदा इत्यर्थः । यया वृत्त्या बाह्यो वेदो विषयीक्रियते तद्वृत्त्यनु- ३०
गतचैतन्येनापि स विषयीक्रियत इति प्रसिद्धवेदविषयकं चैतन्यमेव मुख्यवेदचैतन्यस्य तदुपाधिभूतवृत्तेश्च कल्पित-
तादात्म्यसत्त्वाद्वेदानां सृष्टिप्रलयादिश्रवणं पूर्वोक्तावृत्त्यादिकं सर्वं चैतन्यस्यैव भवतीति न पूर्वग्रन्थविरोधोऽपीति
भावः । येनाभिप्रायेण वेदानां चैतन्यरूपत्वमुपसंहारावसरे दर्शितं तमेवाभिप्रायं प्रपञ्चयति—एवं चेति । चैतन्य-
रूपत्वे सतीत्यर्थः । वेदानां चैतन्यरूपत्वाविशेषेऽप्युपाधिभूतवृत्तिभेदाद्यजुरादिभेद इत्यादिकमूह्यम् । अन्यथेति ।
अन्यथा मनोवृत्तिमात्रत्वे शब्दमात्रत्वे वेदानां विषयत्वशब्दितं जडत्वं प्रसज्येत, सति च विषयत्वे रूपादिवदनित्यत्वं ३५
भवेदित्यर्थः । "अतोऽन्यदार्तम्" इत्यादिश्रुत्या चैतन्यातिरिक्तस्य सर्वस्य विनाशित्वावगमादिति युक्तिसूचनार्थः
चकारः । तत्रेष्टापत्तिं वारयति—नैतद्युक्तमिति । एतद्वेदानित्यत्वं न युक्तम् "वाचा विरूपनित्यया" "अनादिनिधना
नित्या" इत्यादिश्रुतिस्मृतिविरोधप्रसङ्गादित्यर्थः । वेदानां चैतन्यरूपत्वे श्रुत्यन्तरमनुकूलयति—सर्वे वेदा इति ।
यत्र चिदेकरसे आत्मनि एकम् एकतां गच्छन्ति स मानसीनः मनसि साक्षितया वर्तमानः सर्वेषां जनानाम् आत्मा

आदेशोऽत्र ब्राह्मणमतिदेष्टव्यविशेषानतिदिशतीति। अथर्वणा अङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणं च शान्तिकपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति मनोमयात्मप्रकाशकः पूर्ववत्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये तृतीयोऽनुवाकः

५

### आनन्दगिरिटीका

नित्यत्वं युक्तं न भवतीत्यर्थः। वेदानां जडत्वे स्वप्रकाशेनाऽऽत्मनैकत्वं न सम्भवति जडाजडयोर्विरोधादतो मनोवृत्तिव्यापकचिदात्मत्वं सूचितमित्यर्थः। साक्षितया मनसि भवो मानसीनोऽक्षरे परमे व्योमकल्पे ब्रह्मणि ऋचो विधिनिषेधरूपा निषेदुस्तादात्म्येन व्यवस्थिता इति च मन्त्रवर्ण एकत्वं दर्शयतीत्यर्थः। अतिदेष्टव्यविशेषान्कर्तव्यविशेषानिदमेवं कर्तव्यमित्युपदिशतीत्यर्थः।

१० इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यां तृतीयोऽनुवाकः

### वनमाला

वास्तवस्वरूपमित्यर्थः। ऋगादीनां कार्यत्वेनानित्यत्वेऽपि कार्यकारणयोस्तादात्म्यादेकं भवन्तीति वचनं कथञ्चिदुपपद्यते; तेषां नित्यत्वेन स्वरूपैक्ये तु जीवब्रह्मणोरिवैकत्ववचनं मुख्यार्थमेव भवतीत्याशयेनाह—समञ्जसेति। सर्व-
१५ कारणत्वात्परमे विभुत्वादिभिर्व्योमसदृशे अक्षरे नाशरहिते यस्मिन्ब्रह्मणि देवा ब्रह्मादयः सर्वे अधिनिषेदुः उपरिभावेन स्थिताः, सर्वसंसारास्पृष्टे ब्रह्मणि स्वरूपत्वेन स्थिता इति यावत्; तथैव ऋचो वेदास्तस्मिन्स्थिता इति मन्त्रार्थः। अतिदेष्टव्यविशेषान्कर्तव्यविशेषान् इदमेवं कर्तव्यमिति अतिदिशति उपदिशतीत्यर्थः। ननु ब्राह्मणं चेति ब्राह्मणस्यापि प्रतिष्ठात्वेन ग्रहणं न युक्तम् आदेशपदेन ब्राह्मणस्यात्मत्वेन समर्पितत्वादित्याशङ्क्य अत्र ब्राह्मणपदं तद्विशेषपरम् अतो नोक्तदोष इत्याशयेन ब्राह्मणमपि विशिनष्टि—शान्तीत्यादिना। प्रधाना इति पुंलिङ्गनिर्देशो
२० मन्त्रपदाभिप्रायः, तदिति निर्देशः पुच्छपदाभिप्राय इति विभागः। मनोमयात्मप्रकाशक इति। मनोमयावयवयजुरादिप्रकाशक इत्यर्थः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां तृतीयोऽनुवाकः

## अथ वार्तिके ब्रह्मवल्ल्यां तृतीयोऽनुवाकः

प्राणं प्राणन्तमन्वेव देवाः प्राणन्ति न स्वतः ॥ १ ॥
'वर्षसीह यदैव त्वमथेमाः प्राणते प्रजाः । मनुष्याः पशवोऽन्ये च प्राणन्त्यसुसमाश्रयात् ॥ २ ॥
अध्यात्ममधिदैवं च करणान्यधिदैवताः । प्राणस्वरूपमापद्य जहुर्मृत्युमिति श्रुतिः[2] ॥ ३ ॥
घटतेऽसाविदं सर्वं सर्वस्यायुर्यतो ह्यसुः । तस्माच्चं तद्विदः प्राहुः सर्वायुषमनेकशः ॥ ४ ॥
सर्वायुषगुणेनासुं य आत्मानमुपासते । ते तं सर्वायुषं प्राणं प्राप्नुवन्त्यभियोगतः ॥ ५ ॥ ५
तस्य त्वन्नमयस्यैष योऽयं प्राणमयः स्मृतः । भवः शरीरे शारीर आत्मा तेनाऽऽत्मवान्यतः ॥ ६ ॥
सत्यादिलक्षणो वाऽऽत्मा गौणो ह्यात्माऽमुतोऽपरः ।
सर्वान्तरत्वान्न्याय्यैवं यः पूर्वस्येति हि श्रुतिः ॥ ७ ॥
मिथ्यात्मनां हि सर्वेषां सत्यादिगुणलक्षणम् । व्याविद्धाशेषसंसारमात्मानं तं प्रचक्ष्महे ॥ ८ ॥
न ह्यात्मवान्भवेत्सर्पो दण्डाद्यध्यासरूपिणा । आत्मना वितथेनैव सर्पो रज्ज्वात्मनाऽऽत्मवान् ॥ ९ ॥ १०
प्राणाद्ध्येवेत्यतो न्यायाद्वक्ष्यमाणश्रुतीरितात् । व्युत्थाप्यान्नमयं तुच्छं प्राणोऽस्मीतिव्यवस्थितः ।
यस्तं मनोमयात्मानं संक्रामयितुमुच्यते ॥ १० ॥

प्राणं देवा अनुप्राणन्तीत्यादिश्लोकाक्षराणि व्याचष्टे—प्राणमिति ॥ १ ॥

प्राणाधीना देवादीनां वृत्तिरित्यत्र श्रुत्यन्तरमुदाहरति—वर्षसीति ॥ २ ॥

तत्रैवार्थे बृहदारण्यकश्रुतिं दर्शयति—अध्यात्ममिति ॥ ३ ॥ १५

अथैना मृत्युमत्यवहदित्याद्या श्रुतिः श्रुतिशब्देन गृह्यते । तस्मात्सर्वायुषमुच्यत इत्यस्यार्थमाह—घटतेऽसाविति । प्राणविषया निमित्तार्था सप्तमी । प्राणनिमित्तं सर्वं परस्परं वर्धयन्तो वर्तन्ते तेन प्राणः सर्वस्यायुर्भवतीत्यर्थः ॥ ४ ॥

सर्वमेवेत्यादेरर्थमाह—सर्वायुषेति ॥ ५ ॥

नोपासनविधानमस्मिन्प्रकरणे विवक्षितमुपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोपक्षयान्मध्यग्रन्थस्योपासनविधौ तात्पर्ये वाक्यभेदप्रसङ्गादयस्तत्र तत्र फलश्रुतेरर्थवादमात्रतेत्यभिप्रेत्य "तस्यैष एवे"त्यादेरर्थमाह—तस्य त्विति ॥ ६ ॥ २०

पूर्वपूर्वकोशस्योत्तरोत्तरकोशो भवत्यात्मेत्यापातदर्शनेन व्याख्यातं तदयुक्तमात्मशब्दस्यामुख्यार्थत्वप्रसङ्गात् प्रकृतपरामर्शेतच्छब्दव्याकोपाच्चातः सर्वकोशाध्यासाधिष्ठानभूतः चिदात्मैवात्राऽऽत्मशब्देन विवक्षित इत्याह—सत्यादीति । प्रत्यग्भूतस्य परमात्मनो मुख्यात्मत्वात्तस्य सर्वान्तरत्वात्तदभ्यन्तरवस्त्वन्तराभावात्कोशात्मनश्च गौणात्मत्वाद्यः पूर्वस्येति श्रुतेश्चैवमुपपन्नत्वादेष शब्दस्य च प्रकृतपरामर्शिनो दर्शितन्यायेन युक्तत्वाच्चिदात्मैवात्र सत्यादिलक्षणो विवक्षित इत्यर्थः ॥ ७ ॥ २५

कोशपञ्चकस्य कल्पितत्वाच्च परमात्मैवात्राऽऽत्मशब्देन गृह्यत इत्याह—मिथ्यात्मनामिति ॥ ८ ॥

उक्तमर्थं दृष्टान्तेन साधयति—न हीति ॥ ९ ॥

तृतीयपर्यायस्य तात्पर्यमाह—प्राणाद्धीति । "प्राणाद्ध्येव खल्विमानि भूतानि जायन्त" इति भृगुवल्ल्या- ३०

---

१. प्रश्न. २.१० । २. बृ.१.३, १-१६ ।

तस्मादित्यादिवाक्यस्य त्वर्थं पूर्वमवादिषम् । प्राधान्यं यजुषो ज्ञेयं हविःप्रक्षेपकारणात् ॥११॥
स्वाहा स्वधा वषट् चेति सन्निपत्योपकुर्वते ॥१२॥
शिरआदिप्रक्लृप्तिस्तु वाचनिक्यथ वाऽस्त्विह । वचनं बलवद्यस्मात्पौरुषेयी हि कल्पना ॥१३॥
पदवाक्यस्वरस्थाननादवर्णादिसंयुता । यत्नोत्था मानसी वृत्तिर्यजुःसंकेतवर्त्मना ॥१४॥
५ ऐश्वरज्ञानसंदब्धा पदवाक्यानुरञ्जिता । श्रोत्रादिकरणद्वास्था यजुरित्यभिधीयते ॥१५॥
ज्ञानात्मत्वे हि मन्त्राणां घटते मानसो जपः । ज्ञानस्याशब्दरूपत्वादृगावृत्तिर्न सिध्यति ॥
अशक्यत्वान्न चाऽऽवृत्तिर्घटादेरिव शक्यते ॥१६॥
आवृत्तिश्चोद्यते चर्चो श्रुतौ त्रिः प्रथमामिति ॥१७॥
अथर्चो विषयत्वेऽपि स्मृतेरावृत्तिरिष्यते । ऋगर्थविषयायाश्चेन्नैवं गौणी हि सा भवेत् ॥१८॥
१० भूयोऽल्पीयःफलत्वं च बाह्यमानसयोर्जपे । अतो मानसमुख्यत्वमितरस्यास्तु गौणता ॥१९॥

मुक्तेन न्यायेनान्नमयं निरस्य प्राणोऽस्मीति यो व्यवस्थितस्तं मनोमयमात्मानं प्रापयितुं तृतीयकोशप्रवृत्तिरित्यर्थः ॥ १० ॥

तस्मादितिप्रकृत्यर्थमुपादाय तमेव वैशब्देन स्मृत्वा प्रत्ययार्थस्यैतस्मादित्युपादानात्तदेतच्छब्दयोश्च सामानाधिकरण्यात्प्रकृतिप्रत्ययार्थयोरेकत्वावगमात्कार्यस्य कारणव्यतिरेकेणाभावात्कार्यकारणविलक्षणं ब्रह्मैव तत्त्व-
१५ मित्येतदत्र पदत्रये विवक्षितमिति पूर्वमेवोक्तमित्याह—**तस्मादित्यादीति**। अन्यत्वं मनोमयस्य प्राणमयादत्यन्तविलक्षणत्वमन्तरत्वमभ्यन्तरत्वं प्रत्यगात्मत्वं तु परमार्थात्मव्याप्तत्वात्तदतिरिक्तस्वरूपाभावादित्यवधेयम्। तस्य यजुरेव शिर इत्यत्र यजुषः शिरस्त्वं प्राधान्यादित्यादिभाष्योक्तं व्यक्तीकरोति—**प्राधान्यमिति** ॥ ११ ॥

हविषो यजुषाग्नौ प्रक्षेपमेव प्रकटयति—**स्वाहेति** ॥ १२ ॥

कल्पातो वचनस्य बलीयस्त्वमङ्गीकृत्य पक्षान्तरमाह—**शिरआदीति** ॥ १३ ॥

२० यजुःशब्देन बाह्यो यजुर्वेदो गृह्यते तस्य कथमान्तरं मनोमयं प्रति शिरस्त्वमित्याशङ्क्य मनसो हीत्यादिभाष्येणोत्तरमाह—**पदेति**। सा च पदाद्यनुरक्ता विशिष्टा मानसी वृत्तिः श्रोत्रं मनश्चेतिकरणाधीना गृह्यमाणा यजुःसङ्केतमर्हतीति विशिनष्टि—**पदवाक्येति** ॥ १४-१५ ॥

चैतन्योपरक्ता विशिष्टा बुद्धिवृत्तिश्चैतन्यं वा प्रागुक्तबुद्धिवृत्तिविशिष्टं यजुरादिशब्दवाच्यमित्यत्र युक्तिमाह—**ज्ञानात्मत्वे हीति**। यजुरादिमन्त्राणां ज्ञानस्वरूपत्वे तेषां मानसो जपो विधीयमानो युज्यते ज्ञानस्य
२५ शब्दत्वमन्तरेण क्रियात्वादावृत्तियोग्यत्वादित्यर्थः। यदि तु यजुरादिशब्दानां घटादिवद्बाह्यद्रव्यत्वं गृह्यते तदा मनसो बाह्येऽर्थे स्वातन्त्र्याभावात्तेषां मनोविषयत्वायोगान्मानसो जपो न सिध्येदित्याह—**ऋगावृत्तिरिति**। अशक्यत्वं प्रपञ्चयति—**न चेति**। क्रियैवाऽऽवर्त्यते न द्रव्यं शब्दस्य च घटादिवद्द्रव्यत्वेन मानस्यावृत्तिर्युक्तेत्यर्थः ॥ १६ ॥

ऋगादेरावृत्तिरेव मा भूदित्याशङ्क्य त्रिः प्रथमामन्वाह त्रिरुत्तमामितिश्रुतिविरोधान्नैवमित्याह—**आवृत्तिरिति** ॥ १७ ॥

३० आवृत्तिसिद्ध्यन्यथानुपपत्त्या क्रियात्वमृगादेर्वाच्यमित्यत्रान्यथाऽप्युपपत्तिं चोदयति—**अथेति**। मन्त्रेभ्यः स्मृतेरन्यत्वादन्यावृत्तिर्गौणी प्रसज्येतातो नान्यथाऽप्युपपत्तिरित्युत्तरमाह—**नैवमिति** ॥ १८ ॥

किञ्च वाचनिकजपस्याल्पफलत्वं मानसस्य जपस्य साहस्रो मानसः स्मृत इति बहुफलत्वं स्मर्यते। तदपि यजुरादेर्मनोवृत्तित्वे युक्तमित्याह—**भूय इति** ॥ १९ ॥

नाऽऽत्मानं लभते गौणी मुख्यार्थे सति कल्पना । तस्मादीश्वरविज्ञानं यजुर्बुद्ध्याद्युपाश्रयम् ॥२०॥
एवं च सति नित्यत्वं वेदानां घटतेऽञ्जसा । वाचकत्वमशब्दस्य सिद्धं न स्फोटरूपतः ॥२१॥
सर्वे वेदाश्च यत्रैकं भवन्तीति श्रुतेर्वचः । आदेशो ब्राह्मणं विद्याद्यस्मात्स विधिरूपभृत् ॥२२॥
ब्रह्मणो वा परस्येयमाज्ञा ब्राह्मणलक्षणा । तस्मादादेश इत्येवं ब्राह्मणं संप्रचक्षते ॥२३॥
अथर्वाङ्गिरसाभ्यां ये दृष्टाः पुष्ट्यादिकारिणः । एत एव हि मन्त्राः स्युरथर्वाङ्गिरसोऽत्र तु ॥२४॥ ५
मनोमयात्मसाक्ष्यत्र श्लोकः पूर्ववदुच्यते । यथोक्तवेदसिद्ध्यर्थं लिङ्गं श्लोकोऽपि कीर्त्यते ॥२५॥
अभिधाननिवृत्तिर्हि ब्रह्मणो[1] नान्यतो यतः । सदावगमरूपत्वान्मनो यस्मान्निवर्तते ॥२६॥

इति तृतीयोऽनुवाकः

गौणेऽपि जपे का क्षतिरित्याशङ्क्य मुख्यसापेक्षत्वात्तस्य तेनैव चरितार्थत्वादानर्थक्यमित्याह—नाऽऽत्मानमिति । मन्त्राणां मनोवृत्तित्वस्यावश्यकत्वान्मनोवृत्तीनां च सदा चिदात्मव्याप्तत्वेनैव सिद्धेश्चिदात्मत्वमिष्टमित्याह—तस्मादिति ॥ २० ॥ १०

न केवलं मन्त्राणां मनोवृत्तिरेव घटते किन्तु परम्परया चिदात्मत्वे सति नित्यत्वमपि सिध्यतीत्याह—एवं चेति । यदा वेदस्य चिदात्मत्वमुक्तरीत्या सिध्यति तदा तस्य जडं शब्दरूपं परिहाय चिदात्मरूपेणैवावस्थितस्य धर्माद्यर्थंबोधकत्वमपि सिध्यतीतिलाभान्तरमाह—वाचकत्वमिति । ननु स्फोटरूपेणार्थप्रतिपादकत्वेऽपि वेदस्याशब्दस्य बोधकत्वं सिध्यति । स्फोटस्य वर्णेभ्योऽर्थान्तरत्वादित्याशङ्क्य स्फोटस्याप्रामाणिकत्वान्मैवमित्याह—न स्फोटेति ॥ २१ ॥ १५

मनोवृत्तिव्यापकचिदात्मत्वे वेदानामुक्ते प्रमाणमाह—सर्वं इति । यत्र साक्षिभूते चिदात्मनि सर्वे वेदास्तादात्म्येनैकतां गच्छन्ति स मानसीनः साक्षितया मनसि भवो जनानां सर्वेषामात्मेत्यर्थः ॥ २२-२३-२४ ॥

मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुरादिशब्दवाच्यमित्युक्तेऽर्थे मन्त्रमवतारयति—मनोमयेति । तदेव स्पष्टयति—यथोक्तेति ॥ २५ ॥ २०

अवतारितस्य मन्त्रस्य विवक्षितमर्थं दर्शयति—अभिधानेति। वाचां मनसां चाविषयत्वमत्र मनोमयस्योच्यते तच्च परमात्मपरिग्रहे परमुपपद्यते तस्य कूटस्थावगतिरूपस्य वागाद्यगोचरत्वाद्यस्मादेवं तस्माद्ब्रह्मैवात्र ग्राह्यं न शब्दराशिरित्यर्थः ॥ २६ ॥

इति तृतीयोऽनुवाकः

१. ब्रह्मण इति पञ्चमो ।

# अथ ब्रह्मवल्ल्यां चतुर्थोऽनुवाकः

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः
५ पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।

इति चतुर्थोऽनुवाकः

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहेत्यादि । तस्य पूर्वस्य प्राणमयस्यैष एवाऽऽत्मा शारीरः शरीरे प्राणमये भवः शारीरः । कः । य एष मनोमयः । तस्माद्वा एतस्मादित्यादि पूर्ववत् । अन्योऽन्तर आत्मा विज्ञानमयो, मनोमयस्याऽऽभ्यन्तरो विज्ञानमयो मनोमयो वेदात्मोक्तः । वेदार्थविषया बुद्धिर्निश्चयात्मिका विज्ञानं तच्चाध्यवसाय-
१० लक्षणमन्तःकरणस्य धर्मः । तन्मयो निश्चयविज्ञानैः प्रमाणस्वरूपैर्निर्वर्तित आत्मा विज्ञानमयः । प्रमाणविज्ञानपूर्वको हि यज्ञादिस्तायते । यज्ञादिहेतुत्वं च वक्ष्यति श्लोकेन ।

आनन्दगिरिटीका

वाङ्मनसयोर्वाङ्मनसगोचरत्वं नोपपद्यते स्वात्मनि वृत्तिविरोधादतो वाङ्मनोविशिष्टान्मनोमयाद्वाचो

वनमाला

१५ तथा च यतश्चिदेकरसादानन्दान्मनसा सह वाचस्तमप्राप्य निवर्तन्ते तं ब्रह्मणः स्वरूपभूतमानन्दं मनोमयस्य शिरःपक्षादिरूपं विद्वानुपासीनः कदापि न बिभेतीति योजना । यद्वा मनोमयात्मप्रकाशक इति भाष्यं यथाश्रुतमेव । न चैवमब्रह्मस्वरूपस्य मनोमयात्मनः श्लोकप्रतिपाद्यब्रह्मात्मत्वासम्भवादसङ्गतिरिति वाच्यम्; अब्रह्मण्यपि तस्मिन्ब्रह्मत्वमध्यारोप्य श्लोकप्रवृत्त्युपपत्तेः । न चारोपे निमित्तप्रयोजनयोरभाव इति वाच्यम्; ब्रह्मविज्ञानसाधनत्वेन निमित्तेन तस्मिन्ब्रह्मत्वारोपाभ्युपगमादारोपस्य चात्रोपास्यस्य मनोमयकोशस्य स्तुतिरूप-
२० प्रयोजनसम्भवाच्च; तथा च वक्ष्यति—"मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात्तत्र ब्रह्मत्वमध्यारोप्येति"; तथा च अवाङ्मनसगोचरब्रह्मत्वेन स्तुतस्य मनोमयस्य स्वरूपं यजुराद्यवयवोपेतं विद्वानुपासीनः सौत्रं पदं प्राप्य आनन्दमनुभवन्न बिभेति कदाचनेत्यध्याहारेण योजना । अथ वा मन्त्रे ब्रह्मण इति मनस एव निर्देशः मनोमयकोशस्यात्रापरब्रह्मदृष्टिभाक्त्वेन विवक्षितत्वात् वागाद्यगोचरत्वं च तस्यैव विशेषणम्, मनसः साक्षिप्रत्यक्षसिद्धस्याज्ञातत्वाभावेन शब्दगम्यत्वाभावात् स्वस्य स्वविषयत्वाभावेन मनोगोचरत्वाभावाच्च । तथा च अवाङ्मनस-
२५ गोचरस्य मनोमयाख्यस्य ब्रह्मणः स्वरूपं विद्वान् क्रमेणानन्दं प्राप्य न बिभेतीति योजना पूर्ववदेव द्रष्टव्या । वेदात्मनि मनोमय उक्ते सति वेदार्थस्य बुद्धिस्थत्वाद्विज्ञानमय इत्यत्र वेदार्थज्ञानमेव प्रकृत्यर्थं इत्याशयेनाह—वेदात्मोक्त इति । ननु मनोमयावयवत्वेन निर्दिष्टं यजुरादि तदवयवभूतवृत्तिविशेषानुगतं चैतन्यमेव नान्यदित्युक्तम्; तथा च वेदार्थविषयकं निश्चयरूपं विज्ञानमपि चैतन्यमेवेति विज्ञानमयोऽपि वेदात्मा स्यादिति मन्दशङ्कां वारयति—तच्चेति । यद्वा वेदार्थगोचरविज्ञानस्यात्मधर्मत्वाद्वक्ष्यमाणरीत्या तन्मयत्वमन्तःकरणस्य कथमित्याशङ्क्य
३० हेत्वसिद्धिमाह—तच्चेति । धर्म इति । अत्र प्रकृत्यर्थत्वेन विवक्षितं विज्ञानमन्तःकरणधर्म एव न चैतन्यमित्यर्थः । यद्वा अतःकरणस्यैव धर्मो नात्मनः तस्य कूटस्थनित्यत्वादित्यर्थः । तन्मय इति । ननु विज्ञानमयत्वं विज्ञानविकारत्वम्, तच्च कथमन्तःकरणस्य तद्धर्मिणश्चतुर्थकोशत्वेनात्र विवक्षितस्य सम्भवतीत्याशङ्क्याह—निश्चयेति ।

निश्चयविज्ञानवतो हि कर्तव्येष्वर्थेषु पूर्वं या श्रद्धोत्पद्यते सा सर्वकर्तव्यानां प्राथम्याच्छिर इव शिरः। ऋत-सत्ये यथाव्याख्याते एव। योगो युक्तिः समाधानम्। आत्मेवाऽऽत्मा। आत्मवतो हि युक्तस्य समाधानवतोऽङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति, तस्मात्समाधानं योग आत्मा विज्ञानमयस्य। महः पुच्छं प्रतिष्ठा। महः

आनन्दगिरिटीका

मनसा सह निवर्तन्त इत्यर्थः। तस्य च मनोमयस्य ब्रह्मण उपासनफलभूतमाधिदैविकमानन्दं विद्वान्न बिभेति गर्भवासादिदुःखादित्यर्थः। तथाऽध्यवसायलक्षणं लौकिकमपि विज्ञानं ग्राह्यमित्यर्थः। ५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यां चतुर्थोऽनुवाकः

वनमाला

यद्यपि मनोमयकोशोऽप्यन्तःकरणमेव तथापि संशयवृत्त्यवस्थमन्तःकरणं मनोमयो निश्चयवृत्त्यवस्थमन्तःकरणमेव विज्ञानमय इत्यवस्थाभेदेन भेद इति भावः। यद्वा केवलमन्तःकरणं मनोमयः तप्तायःपिण्डवच्चैतन्यतादात्म्यापन्नं तदेव विज्ञानमय इति भेदः। **प्रमाणस्वरूपैरिति**। प्रमारूपैर्विज्ञानैर्विशेषणभूतैस्तद्विशिष्टतया निर्वर्तितो निष्पादितोऽन्तः-करणात्मा धर्मी विज्ञानमयशब्दवाच्यतामापन्नः सन्मनोमयस्याभ्यन्तर आत्मा भवतीत्यर्थः। विशिष्टरूपस्य विशेषणायत्तत्वानुभवाद्विशिष्टस्य विशेषणविकारत्वं सम्भवतीति भावः। निश्चयरूपं वेदार्थविज्ञानमेव प्रकृत्यर्थ इत्यत्र हेत्वन्तरमाह—**प्रमाणविज्ञानेति**। तायते, तनोतेरिदं रूपम्; विस्तार्यत इत्यर्थः। ततः किम्? अत आह— **यज्ञादीति**। "विज्ञानं यज्ञं तनुते" इति मन्त्रेण विज्ञानस्य यज्ञादिहेतुताया वक्ष्यमाणत्वादत्र ब्राह्मणेऽपि विज्ञानं यज्ञानुष्ठानहेतुवेदार्थज्ञानमेवेत्यर्थः। एतेन अन्नमयप्राणमयमनोमयशब्देषु प्रकृत्यर्थतया आधिदैविकानामन्नप्राणमनसां गृहीतत्वात् भृगुवल्ल्यां कोशवाक्यगतान्नप्राणमनोविज्ञानपदोपात्तानामाधिदैविकान्नादीनामिह प्रकृतिभिः प्रत्यभिज्ञाय-मानत्वाच्च विज्ञानमय इत्यत्र प्रकृत्यर्थतया निश्चयावस्थं समष्ट्यन्तःकरणमेव ग्राह्यम्, एवं सति मयडर्थभूतविकारत्व-मप्यस्मदाद्यन्तःकरणस्य मुख्यमेव सम्भवतीति शङ्का निरस्ता; अत्रैकार्थविषयतया प्रवृत्तयोर्मन्त्रब्राह्मणयोः श्रुतस्य विज्ञानपदस्यावश्यमेकार्थताया वक्तव्यत्वान्मन्त्रे च विज्ञानपदस्य वेदार्थज्ञानपरत्वस्य निश्चितत्वात् मन्त्रेणैव प्रकृत्यर्थस्यान्यथा व्याख्याने क्रियमाणे सति पूर्वोक्ताधिदैविकप्रायपाठादेरकिञ्चित्करत्वादिति भावः। यद्वा विज्ञानपदस्याधिदैविकविज्ञानपरत्वमुक्तप्रमाणसिद्धं कृत्वा वेदार्थविज्ञानपरतयापि व्याख्यानं सम्भवतीत्याशयेनास्य भाष्यस्य प्रवृत्तिरुपपादनीया, मन्त्रब्राह्मणयोरेककोशोपास्तिविषयत्वमात्रेण सङ्गत्युपपत्तेः; अत एव कोशवाक्य-विवरणरूपयोर्भाष्यवार्त्तिकयोस्तात्पर्यनिरूपणावसरे **श्रीमदानन्दगिर्याचार्यैरुक्तम्**—"अत्र प्राणो मनो विज्ञानं चेति प्रकृत्यर्थभूतं कोशत्रयं सूत्रात्मरूपमन्नं विराट् कोश आनन्दः कारणकोशः" इति। एतेन तुल्यन्यायतया आनन्दमय इत्यत्रापि प्रकृत्यर्थतया प्रियमोदादिग्रहणं व्याख्यानान्तराभिप्रायमेवेति सूचितं भवति। वस्तुतस्तु—भृगुवल्ल्यां पञ्चमपर्याये सर्वभूतकारणत्वेन वक्ष्यमाणमानन्दरूपं ब्रह्मैव कारणत्वविशिष्टवेषेणानन्दमय इत्यत्र प्रकृत्यर्थः; "आनन्द आत्मा" इत्यत्र च कारणत्वप्रयोजकमायोपहितत्ववेषेण तदेवानन्दपदार्थ इति सर्वमनवद्यम्। **तस्येति**। वेदार्थनिश्चयवतो या पूर्वं श्रद्धोत्पद्यते सा तस्य प्रकृतस्य विज्ञानमयस्य शिर इव शिर इति योजना। श्रद्धां विना वेदार्थानुष्ठानं विफलमिति शास्त्रीयप्रसिद्धिसूचनार्थो विज्ञानवतो हीति हिशब्दः। **यथाव्याख्याते इति**। "ऋतं वदिष्यामि, सत्यं वदिष्यामि" इत्यत्र यथाव्याख्याते एव ऋतसत्ये विज्ञानमयस्य दक्षिणोत्तरपक्षावित्यर्थः। **समाधानमिति**। समाधानं समाधिः, स च तस्य आत्मा मध्यकायः। तत्र दृष्टान्तः—**आत्मेवेति**। प्रसिद्धदेहमध्यकाय इवेत्यर्थः। समाधानस्य प्रसिद्धदेहमध्यकायस्य च किं साम्यम्? अत आह—**आत्मवतो हीति**। यथा आत्मवत आत्मशब्दितमध्यकायवतः प्रसिद्धदेहस्याङ्गानि शिरआदीनि स्वकार्यक्षमाणि भवन्ति हि प्रसिद्धमेतत्, तथा मुमुक्षोर्युक्तस्य श्रद्धा ऋतसत्यानि यथार्थशब्दितब्रह्मप्रतिपत्तिरूपस्वकार्यक्षमाणि भवन्तीत्यर्थः। एतदुक्तं भवति—देहावयवानां मध्ये मध्यकायस्य प्राधान्यं ब्रह्मप्रतिपत्तिसाधनश्रद्धादीनां मध्ये समाधेः प्राधान्यमित्यनेन साम्येन समाधौ मध्यकायत्वदृष्टिरत्र विवक्षितेति। एतच्च यत्र किञ्चिन्नियामकं सम्भाव्यते तत्र न त्यक्तव्यमित्याशयेनोक्तम्। १० १५ २० २५ ३० ३५

इति महत्तत्त्वं प्रथमजम्। "महद्यक्षं प्रथमजम्" इति श्रुत्यन्तरात्। पुच्छं प्रतिष्ठाकारणत्वात्। कारणं हि कार्याणां प्रतिष्ठा। यथा वृक्षवीरुधां पृथिवी। सर्वबुद्धिविज्ञानानां च महत्तत्त्वं कारणम्। तेन तद्विज्ञानमयस्याऽऽत्मनः प्रतिष्ठा। तदप्येष श्लोको भवति पूर्ववत्। यथाऽन्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोका एवं विज्ञानमयस्यापि।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
५ तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये चतुर्थोऽनुवाकः

### वनमाला

वस्तुगतिस्तु प्रागेवासकृद्दर्शिता वाचनिकी वा शिरआदिकल्पना सर्वत्रेति। महत्तत्त्वमिति। समष्ट्यन्तःकरणाभिमानी हिरण्यगर्भ इत्यर्थः। हिरण्यगर्भस्य विराडपेक्षयापि प्रथममुत्पन्नत्वात्प्रथमजत्वम्। तत्र मानमाह—महद्यक्षमिति। यक्षं पूज्यम्। ननु कारणत्वेऽपि कथं प्रतिष्ठात्वम्? तत्राह—कारणं हीति। हिशब्दसूचितां प्रसिद्धिमुदाहरणेन १० दर्शयति—यथेति। नन्वस्मदादिबुद्धिरूपाणां विज्ञानमयकोशानां हिरण्यगर्भः कारणं चेदस्तु तस्य प्रतिष्ठात्वम्, तदेवासिद्धमित्याशङ्क्याह—सर्वबुद्धीति। "आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इत्यादिशास्त्रेण हिरण्यगर्भस्य सर्वभूतकारणत्वमवगम्यते; न च भूतानां स्वतः कार्यत्वमस्ति; अतो भूतशब्दितजीवोपाधिभूतानां लिङ्गशरीराणां ब्रह्मा कारणं सिद्धमिति भावः। फलितमाह—तेनेति। कारणत्वेनेत्यर्थः। पूर्ववदित्युक्तं विवृणोति—यथेति। विज्ञानमयस्यापीति। प्रकाशकः श्लोको भवतीति शेषः।

१५ इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां चतुर्थोऽनुवाकः

## अथ वार्तिके ब्रह्मवल्ल्यां चतुर्थोऽनुवाकः

यद्धि वाचाऽनभ्युदितं मनुते मनसा न यत् । ब्रह्मणोऽविषयत्वं हि श्रुतिर्वाङ्मनसोऽवदत् ॥ १ ॥
नागोचरं ययोरस्ति ब्रह्म मुक्त्वा निरञ्जनम् । ते मनोमयनिर्दिष्टे विद्याद्वाङ्मनसे बुधः ॥
इतीममर्थं चोद्दिश्य श्लोकं श्रुतिरुदाहरत् ॥ २ ॥
ब्रह्मणोऽनवरत्वाच्चु नेह मन्त्राभिधेयता । वृत्तिप्रधानो वेदात्मा वृत्तिमान्स्यादथोत्तरः ॥ ३ ॥
व्यवसायात्मिका बुद्धिर्वृत्तिमानित्युदीर्यते । यज्ञं तनुत इत्येतत्कर्तृत्वे सति युज्यते ॥ ४ ॥ ५
आत्मचैतन्यरूपा धीः कर्त्र्यात्मा न ध्रुवत्वतः । यज्ञारम्भस्य हेतुत्वात्तदभावाद्वृथा यजिः ॥ ५ ॥
श्रद्धाया उत्तमाङ्गत्वं स्मृतिरश्रद्धयेति च ॥ ६ ॥
सत्यं हि श्रदिति प्राहुर्धत्ते धीः प्रत्यगात्मनि । तद्यतस्तां महात्मानः श्रद्धामित्यूचिरे धियम् ॥ ७ ॥
योगो युक्तिः समाधानमात्मा स्यात्तदुपाश्रयात् । श्रद्धादीनि यथोक्तार्थप्रतिपत्तिक्षमाणि च ॥ ८ ॥
महत्तत्त्वं महो ग्राह्यं नीडं कार्यस्य तद्यतः । व्याचष्टे तन्महद्यक्षं श्रुतिः प्रथमजं तु यत् ॥ ९ ॥ १०

इति चतुर्थोऽनुवाकः

ब्रह्मणो वागाद्यगोचरत्वे श्रुत्यन्तरमनुकूलयति—यद्धीति । "यतो वाचो निवर्तन्त" इत्यादिश्रुतिः ॥ १ ॥

ब्रह्मैव वाङ्मनसयोरविषयो व्यतिरिक्तं सर्वं ययोर्विषयत्वेनैव वर्तते ते वाङ्मनसे मनोमयकोशे निर्दिश्येते यजुरादयश्च प्रसिद्धा गृह्यन्ते रूढिप्राबल्यादितिपक्षान्तरमाह—नेत्यादिना ॥ २ ॥

ब्रह्मैव मन्त्रे प्रतिभातीत्याशङ्क्य कोशप्रकरणविरोधान्मैवमित्याह—ब्रह्मण इति । न हि मनसः साक्षि- १५ वेद्यत्वेनानपेक्षस्य वागादिविषयत्वं वृत्तिविरोधाच्च न स्वविषयत्वं सूत्रस्य महत्त्वात्तदात्मके मनसि ब्रह्मशब्दश्चोपपद्यते तस्य ब्रह्मणो मनोमयस्याऽऽनन्दमुपासनाफलं विद्वानुपासनातो ब्रह्मानन्दं च प्राप्य हिरण्यगर्भावस्थायां कदाचिदपि न बिभेतीतिमन्त्राक्षराण्यपि कोशपक्षे निर्वक्ष्यन्तीतिभावः । चतुर्थं पर्यायमुत्थापयति—वृत्तीति ॥ ३ ॥

कोऽसौ वृत्तिमानित्यपेक्षायामाह—व्यवसायेति । विज्ञानशब्देन वृत्तिरेवोच्यते न वृत्तिमानित्याशङ्क्य वाक्यशेषविरोधान्मैवमित्याह—यज्ञमिति ॥ ४ ॥ २०

विज्ञानशब्देन कर्तृग्रहणेऽपि यज्ञादिकर्तृत्वमात्मनः स्यादित्याशङ्क्य बुद्धिरेवाऽऽत्माभासा कर्त्री न त्वात्मा कूटस्थत्वादित्याह—आत्मेति । चिदाभासाया बुद्धेरेव कर्तृत्वं प्रकारान्तरेण प्रतिपादयति—यज्ञेति । कूटस्थत्वादात्मनोऽकर्तृत्वात्तदाभासाया बुद्धेरेव यज्ञानुष्ठानकर्तृत्वात्तत्कर्तृत्वानङ्गीकारे कर्तुरन्यस्याभावाद्यागादिस्वरूपाभावात्तदीयफलारम्भस्य दूरनिरस्तत्वाच्चिदाभासोपरक्ता बुद्धिरेव कर्त्री वक्तव्येत्यर्थः ॥ ५ ॥

एवं विज्ञानशब्दार्थमुक्त्वा "तस्य श्रद्धैव शिर" इत्यस्यार्थमाह—श्रद्धाया इति । शिरसः शरीरावयवाना- २५ मुत्तमत्वाद्बुद्धिवृत्तीनां च श्रद्धायास्तथात्वादश्रद्धया हुतं दत्तमित्यादिस्मृतेश्च श्रद्धाप्राधान्याधिगमादुक्तेन सामान्येन शिरसि कर्तव्या श्रद्धादृष्टिरित्यर्थः ॥ ६ ॥

श्रद्धाशब्दार्थमाह—सत्यं हीति । श्रच्छब्दवाच्यं सत्यवचनं तदात्मनि स्वस्मिन्नेव धत्ते विवेकधीरित्यसौ श्रद्धेत्युक्त्वा यद्वा श्रच्छब्देन सत्यमवितथं ब्रह्मोच्यते तत्प्रत्यगात्मनि शमादिसंस्कृता धीर्धारयत्यतो यथोक्ता धीरेव श्रद्धेत्यर्थः ॥ ७ ॥ ३०

योग आत्मेत्यस्यार्थमाह—योग इति । देहावयवानां मध्यमात्मा तत्र योगदृष्टिः कर्तव्येत्यर्थः । तदेवोपपादयति—तदुपाश्रयादिति । यथा हस्ताद्यङ्गानि देहमध्यमाश्रित्य स्वव्यापारसमर्थानि तथा सत्यादीनि यथोक्तं योगाश्रयाणि सन्ति यथार्थप्रतिपत्तौ समर्थानि भवन्तीत्यनेन सामान्येनात्मनि योगदृष्टिरित्यर्थः ॥ ८ ॥

महः पुच्छं प्रतिष्ठेत्यत्र महःशब्दार्थमाह—महदिति । सूत्रं महत्तत्त्वं तस्य सर्वकार्याश्रयत्वान्महत्त्वमित्यत्र श्रुत्यन्तरं प्रमाणयति—व्याचष्ट इति ॥ ९ ॥ ३५

इति चतुर्थोऽनुवाकः

## अथ ब्रह्मवल्ल्यां पञ्चमोऽनुवाकः

**विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान्कामान्समश्नुत इति।**

**विज्ञानं यज्ञं तनुते।** विज्ञानवान्हि यज्ञं तनोति श्रद्धादिपूर्वकम्। अतो विज्ञानस्य कर्तृत्वं तनुत इति कर्माणि च तनुते। यस्माद्विज्ञानकर्तृकं सर्वं तस्माद्युक्तं विज्ञानमय आत्मा ब्रह्मेति। किंच, विज्ञानं ब्रह्म सर्वे देवा इन्द्रादयो
५ ज्येष्ठं प्रथमजत्वात्सर्वप्रवृत्तीनां वा तत्पूर्वकत्वात्प्रथमजं विज्ञानं ब्रह्मोपासते ध्यायन्ति तस्मिन्विज्ञानमये ब्रह्मण्यभिमानं कृत्वोपासत इत्यर्थः। तस्मात्ते महतो ब्रह्मण उपासनाज्ज्ञानैश्वर्यवन्तो भवन्ति। तच्च विज्ञानं ब्रह्म चेद्यदि वेद विजानाति न केवलं वेदैव तस्माद्ब्रह्मणश्चेन्न प्रमाद्यति। बाह्येष्वेवानात्मस्वात्मभावितत्वात्प्राप्तं विज्ञानमये ब्रह्मण्यात्मभावनायाः प्रमदनं, तन्निवृत्त्यर्थमुच्यते तस्माच्चेन्न प्रमाद्यतीति। अन्नमयादिष्वात्मभावं हित्वा केवले विज्ञानमये ब्रह्मण्यात्मत्वं भावयन्नास्ते चेदित्यर्थः। ततः किं स्यादित्युच्यते—शरीरे पाप्मनो हित्वा। शरीराभिमाननिमित्ता हि
१० सर्वे पाप्मानस्तेषां च विज्ञानमये ब्रह्मण्यात्माभिमानान्निमित्तापाये हानमुपपद्यते। छत्त्रापाय इव च्छायापायः। तस्माच्छरीराभिमाननिमित्तान्सर्वान्पाप्मनः शरीरप्रभवाञ्शरीर एव हित्वा विज्ञानमयब्रह्मस्वरूपापन्नस्तत्स्थान्सर्वान् कामान्विज्ञानमयेनैवाऽऽत्मना समश्नुते सम्यग्भुङ्क्त इत्यर्थः।

### आनन्दगिरिटीका

**प्रथमजत्वादिति।** हिरण्यगर्भाभेदेनेत्यर्थः। आनन्दमयः परमात्मेति वृत्तिकारैरुक्तं तन्निषेधेन व्याचष्टे—
१५

### वनमाला

ननु विज्ञानं नाम वेदार्थविषयो निश्चय इत्युक्तम्, अतस्तस्य कथं कर्तृत्वनिर्देश इत्याशङ्क्य, उपचारादित्याह—**विज्ञानवान्हीति।** "य एवं विद्वान्यजते" इत्यादौ वेदार्थज्ञानवतो यज्ञादिकर्तृत्वं प्रसिद्धमिति सूचनार्थो हिशब्दः। **कर्माणि चेति।** लौकिकानीति शेषः, वैदिककर्मणां यज्ञशब्देन संगृहीतत्वात्। अत्र विज्ञानमयस्य मुख्यं लौकिकवैदिककर्मकर्तृत्वम् विज्ञानस्य तु तदौपचारिकमिति व्यवस्था दर्शिता। स च विज्ञानमयो नानाविधानि
२० कर्माण्युपासनानि च कुर्वन्नपरब्रह्मवज्जगतः कारणं भवति। इयांस्तु विशेषः—विज्ञानमयो ह्यदृष्टद्वारा कारणम्, अपरब्रह्म तु साक्षादेवेश्वरत्वात्कारणमिति। तथा च "विज्ञानं यज्ञं तनुते" इति वाक्योक्तं सर्वकर्मकर्तृत्वं विज्ञानमयकोशे जगत्कारणत्वसाम्यसम्पादनद्वारा अपरब्रह्मारोपे निमित्तमित्याशयेनाह—**यस्मादिति।** विज्ञानपदं कोशपरम्। इतश्च विज्ञानमयोऽपरब्रह्माभेदेनोपास्य इत्याह—**किं च विज्ञानमिति।** विज्ञानमयमित्यर्थः। ज्येष्ठपदं कारणपरं वेत्याह—**सर्वप्रवृत्तीनामिति।** सर्वप्राणिचेष्टानां सूत्ररूपब्रह्मकारणकत्वाद्वा ब्रह्म ज्येष्ठमित्यर्थः। **ध्यायन्तीति।**
२५ पूर्वजन्मनि यजमानावस्थायामिति शेषः। **अभिमानमिति।** अहंबुद्धिमित्यर्थः। पूर्वं ब्रह्मोपासनं देवैरनुष्ठितमित्यत्र देवत्वावस्थायां ज्ञानाद्यैश्वर्यदर्शनं लिङ्गमित्याशयेनाह—**तस्मादिति।** इदानीमुपासनविधिं दर्शयति—**तच्च विज्ञानमिति।** विज्ञानमयमित्यर्थः। अत्र चेच्छब्दः प्रकृतोपासनदौर्लभ्यसूचनार्थः, कथञ्चिदुपासने प्रवृत्तावपि तत्र प्रमादसम्भवस्यावश्यकत्वात्। अप्रमाददौर्लभ्यसूचनार्थो द्वितीयश्चेच्छब्दः। प्रमादप्रसक्तिमाह—**बाह्येष्विति।** विज्ञानमयापेक्षया बाह्यानां मनोमयप्राणमयान्नमयानामपि पूर्वमात्मत्वेन भावितत्वादित्यर्थः। **प्रमदनमिति।** विज्ञानमये
३० ब्रह्मण्यात्मभावनायाः सकाशात्प्रमदनं नाम पूर्वकोशेषु पुनरात्मभावनमित्यर्थः। फलितमाह—**अन्नमयादिष्विति।** सूक्ष्मशरीराभिन्ने ब्रह्मणि विषये क्रियमाणादुपासनात्पाप्महानं भवतीत्यत्र युक्तिमाह—**शरीराभिमाननिमित्ता हीति।** मनुष्यत्वब्राह्मणत्वगृहस्थत्वादिधर्मवति शरीरे "मनुष्योऽहम्" "ब्राह्मणोऽहम्" "गृहस्थोऽहम्" इत्याद्यभिमानं निमित्तीकृत्य मनुष्यादीनां प्रतिषिद्धैः कर्मभिः पाप्मानो भवन्ति। अत्रार्थे लोकवेदप्रसिद्धिद्योतको हिशब्दः। ततः किम्? तत्राह—**तेषां चेति।** चोऽवधारणे। तेषां हानमुपपद्यत इति सम्बन्धः। विज्ञानमयब्रह्मण्येवाहमभि-
३५ मानात्पाप्मनिमित्तस्य शरीरात्माभिमानस्यापाये सतीत्यर्थः। निमित्तापाये नैमित्तिकापाय इत्यत्र दृष्टान्तमाह—**छत्त्रापाय इति।** एवं पाप्महानफलवचनस्योपपत्तिमुक्त्वा तस्यार्थमाह—**तस्मादिति।** शरीरात्माभिमानस्य निमित्तस्य निवृत्तत्वादित्यर्थः। **शरीर एवेति।** जीवद्दशायामेवेति यावत्। **विज्ञानमयेनैवात्मनेति।** इहैव साक्षात्कारेण विज्ञान-

**तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्मानन्दमयः[1]। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्।**

तस्य पूर्वस्य मनोमयस्याऽऽत्मैष एव शरीरे मनोमये भवः शारीरः। कः? य एष विज्ञानमयः। तस्माद्वा एतस्मादित्युक्तार्थम्। आनन्दमय इति कार्यात्मप्रतीतिरधिकारान्मयट्शब्दाच्च। अन्नादिमया हि कार्यात्मानो भौतिका इहाधिकृताः। तदधिकारपतितश्चायमानन्दमयः। मयट्चात्र विकारार्थे दृष्टो यथाऽन्नमय इत्यत्र। तस्मात्कार्यात्माऽऽ- ५ नन्दमयः प्रत्येतव्यः। संक्रमणाच्च, आनन्दमयमात्मानमुपसंक्रामतीति वक्ष्यति। कार्यात्मनां च संक्रमणमनात्मनां दृष्टम्। संक्रमणकर्मत्वेन चाऽऽनन्दमय आत्मा श्रूयते। यथाऽन्नमयमात्मानमुपसंक्रामतीति। न चाऽऽत्मन एवोपसंक्रमणम्। अधिकारविरोधादसंभवाच्च। न ह्यात्मनैवाऽऽत्मन उपसंक्रमणं संभवति। स्वात्मनि भेदाभावात्

आनन्दगिरिटीका

कार्यात्मप्रतीतिरित्यादिना। संक्रामतीत्येतदतिक्रामतीत्यभिप्रायेण व्याख्यातम्। प्राप्त्यभिप्रायं कस्मान्न व्याख्यायत १० इत्यत आह—न चाऽऽत्मन एवेति। अन्नमयादीनामतिक्रमणीयतया प्रकृतत्वादेकस्य कर्तृत्वकर्मत्वासम्भवाच्च प्राप्तिः

वनमाला

मयन्नह्मस्वरूपापन्नो विद्वान्सर्वान्पाप्मनो हित्वा देहपातानन्तरं विज्ञानमयब्रह्मात्मभावेनैव स्थित्वा तल्लोकस्थान् सर्वान्भोग्याननुभवतीत्यर्थः।

अत्रानन्दमयः प्रकरणी पर एव न संसारीति केचित्; तान्प्रत्याह—आनन्दमय इतीति। आनन्दमय इति १५ पदेन कार्यात्मन एव प्रतीतिर्भवति न तु कारणस्य परमात्मन इत्यर्थः। यद्यप्यानन्दमयो न कार्यभूतः अविद्योपाधिकस्य जीवस्यानन्दमयत्वाभ्युपगमेनानादित्वात्, तथापि मयडर्थवर्णनावसरे तस्य प्रियमोदादिविशिष्टतया प्रकृत्यर्थभूतानन्दविकारत्वस्य वक्ष्यमाणत्वात्कार्यात्मेत्युक्तम्। अधिकारं विवृणोति—अन्नादिमया हीति। तेषां कार्यात्मत्वं प्रसिद्धमिति हिशब्दार्थः। नन्वानन्दमय इत्यत्र मयटः प्राचुर्यार्थकत्वाभ्युपगमान्न तस्य मयट्छ्रुत्या कार्यात्मत्वमित्याशङ्क्य द्वितीयहेतुमपि विवृणोति—मयट् चेति। प्राचुर्यार्थत्वपक्षे प्राचुर्यस्य प्रतियोग्यल्पता- २० पेक्षत्वादानन्दप्रचुरस्य ब्रह्मणो दुःखाल्पत्वमपि प्रसज्येत, तस्माद्विकारार्थ एव मयट् न प्राचुर्यार्थ इत्यर्थः। किं च विकारे प्राचुर्ये च मयटो विधानाविशेषात्संशये विकारार्थकमयट्प्रवाहपतितत्वाद्विकारार्थकत्वमेवात्र निश्चीयत इत्याशयेनाह—यथेति। एवमनात्मप्रायपाठाद्विकारार्थकमयट्छ्रुतिबलाच्चानन्दमयः कार्यात्मेत्युपसंहरति—तस्मादिति। संक्रमणाच्चेति। आनन्दमयस्य संक्रमणं प्रति कर्मत्वश्रवणाच्च कार्यात्मत्वमित्यर्थः। हेत्वसिद्धिं परिहरति—आनन्दमयमिति। व्याप्तिमाह—कार्यात्मनां चेति। चोऽवधारणे। अत्र प्रकरणे यत्र यत्र संक्रमणकर्मत्वं २५ तत्र तत्र कार्यात्मत्वमेवेति व्याप्तिर्दृष्टेत्यर्थः। अनात्मनामिति। मुख्यात्मभिन्नानामन्नमयादीनामिति यावत्। हेतोः पक्षधर्मत्वमाह—संक्रमणकर्मत्वेन चेति। तदेव दृष्टान्तेन साधयति—यथेति। आनन्दमयस्य संक्रमणकर्मत्वलिङ्गेनाब्रह्मत्वमुक्तम्। विपक्षे बाधकं वदन्नप्रयोजकत्वशङ्कां निराकरोति—न चात्मन एवेति। संक्रमितुरेवंविदः परब्रह्मस्वरूपत्वादानन्दमयस्यापि ब्रह्मत्वे स्वस्यैव स्वेनोपसंक्रमणमिति प्रसज्जेत, तच्च न युक्तमित्यर्थः। अधिकारेति। संक्रमणकर्तुरेवंविदः सकाशादन्यस्यैवान्नमयादेः संक्रमणकर्मत्वं प्रकृतम्; अत्र स्वस्यैव स्वेनोपसंक्रमणाभ्युपगमे ३०

१. आनन्दमय आनन्दप्रचुरः परमात्मा इति परमतं तत्र च प्राचुर्यस्य विशेष्यत्वे ब्राह्मणप्रचुरो ग्राम इत्यादौ शूद्राल्पत्वदर्शनात् अत्र ब्रह्मणि दुःखाल्पत्वं स्यात्। अपि च प्रियमोदप्रमोदानां विषयजन्यसुखलवानां ब्रह्मण अभ्युपगमे तस्यापि जीवत्वमेव भवेत्। एकस्यैव ब्रह्मणः पुच्छित्वं पुच्छत्वमिति विरुद्धम् अवयवावयवित्वं च दुर्निरूपम्। न च आनन्दत्वेन ब्रह्मत्वेन च तयोर्भेदः सुवचः, आनन्दत्वब्रह्मत्वयोरेव भेदस्य दुर्वचत्वात्। यत्तु आनन्दरूपस्यापि प्रियमोदादिरूपधर्मभूतानन्दप्रचुरत्वेनानन्द- ३५ मयत्वमिति। तन्न, प्रियादिपदानां लोके विषयानन्दविशेषवाचित्वेन क्लृप्तानामन्यार्थकल्पनायोगात् स्वपक्षदौर्बल्यमेवेदम्।

**अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।**

**इति पञ्चमोऽनुवाकः**

आत्मभूतं च ब्रह्म संक्रमितुः, शिरआदिकल्पनानुपपत्तेश्च। न हि यथोक्तलक्षण आकाशादिकारणेऽकार्यपतिते शिर-
५ आद्यवयवरूपकल्पनोपपद्यते। अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽस्थूलमनणु नेति नेत्यात्मेत्यादिविशेषापोहश्रुतिभ्यश्च। मन्त्रोदाहरणानुपपत्तेश्च। न हि प्रियशिरआद्यवयवविशिष्टे प्रत्यक्षतोऽनुभूयमान आनन्दमय आत्मनि ब्रह्मणि नास्ति ब्रह्मेत्याशङ्काभावात् "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्" इति मन्त्रोदाहरणमुपपद्यते। ब्रह्म पुच्छं प्रतिष्ठेत्यपि चानुपपन्नं पृथग्ब्रह्मणः प्रतिष्ठात्वेन ग्रहणम्। तस्मात्कार्यपतित एवाऽऽनन्दमयो न पर एवाऽऽत्मा आनन्द इति विद्याकर्मणोः फलम्। तद्विकार आनन्दमयः। स च विज्ञानमयादन्तरः। यज्ञादिहेतोर्विज्ञान-
१० मयस्यान्तरत्वश्रुतेः। ज्ञानकर्मणोर्हि फलं भोक्त्रर्थत्वादन्तरतमं स्यात्। अन्तरतमश्चाऽऽनन्दमय आत्मा पूर्वेभ्यः।

आनन्दगिरिटीका

संक्रमणं न भवतीत्यर्थः। आनन्दमयस्य परमात्मत्वासम्भवे हेत्वन्तराण्याह—**शिरआदीत्यादिना**। आनन्दमयस्य परमात्मत्वविवक्षायां मन्त्रे तस्यैवासत्त्वाशङ्का वक्तव्या। तदसम्भवाच्च नाऽऽनन्दमयः परमात्मतया प्रतिपाद्यत इत्याह—**मन्त्रोदाहरणानुपपत्तेश्चेति**। न हि मन्त्रोदाहरणमुपपद्यत इति सम्बन्धः। [1]विशिष्टस्य विशेषणकार्यत्वात्सुख्यह-
१५ मित्युपलभ्यमानो भोक्ताऽऽनन्दमय इत्युक्तम्। कथं तस्य विज्ञानमयादान्तरत्वमित्यत आह—**स चेति**। कर्त्रपेक्षया भोक्तृत्वस्योत्तरभावित्वं प्रसिद्धमेव श्रुत्योक्तमित्यर्थः। एतत्स्फुटयति—**ज्ञानकर्मणोर्हीति**। शरीरादिभ्य आनन्द-

वनमाला

कर्तृकर्मणोर्भेदाधिकारविरोध इत्यर्थः। असम्भवं विवृणोति—**न हीति**। एवंविद्ब्रह्मणोर्भेदमाशङ्क्याह—**आत्मभूतं चेति**। अत्र संक्रमणं प्राप्तिर्बाधो वा, उभयथाप्यानन्दमयस्य ब्रह्मत्वे संक्रमणकर्मत्वायोगात्कार्यात्मत्वमेवेति भावः।
२० आनन्दमयस्य कार्यात्मत्वे हेत्वन्तरमाह—**शिरआदीति**। ननु ब्रह्मण्यप्युपासनार्थं शिरआदिकल्पनमुपपद्यत इत्याशङ्क्यानुपपत्तिमेव साधयति—**न हि यथोक्तलक्षण इति**। सत्यज्ञानानन्ताख्यस्वरूपलक्षणवतीत्यर्थः। तटस्थलक्षणमप्याह—**आकाशादीति**। कार्यकोटिप्रविष्ट एवान्नमयादौ शिरआदिकल्पनदर्शनाच्च तद्विलक्षणे ब्रह्मणि न तत्कल्पनमुपपद्यत इत्याशयेनाह—**अकार्यपतित इति**। इत्थं मुमुक्षुज्ञेये निर्विशेषे ब्रह्मण्यनुपास्ये शिरआदिकल्पनमनुपपन्नम्, निर्विशेषत्वे च **यथोक्तलक्षण** इत्यादिनोपक्रमस्वारस्यं प्रमाणत्वेन सूचितम्। तत्रैव वाक्यशेषं श्रुत्यन्तराणि च
२५ प्रमाणयति—**अदृश्य इत्यादिना**। आनन्दमयः कार्यात्मा शिरआदिकल्पनावत्त्वादन्नमयादिवत्, विपक्षे हेतूच्छित्तिरेव बाधिकेति निष्कर्षः। आनन्दमयस्य ब्रह्मत्वे विवक्षिते सति तद्विषयश्लोके तस्यैवासत्त्वाशङ्का वाच्या, सा च न सम्भवति, अतो नानन्दमयो ब्रह्मेत्याह—**मन्त्रोदाहरणेति**। न हि मन्त्रोदाहरणमुपपद्यत इति सम्बन्धः। इतश्च नानन्दमयो ब्रह्मेत्याह—**ब्रह्म पुच्छमिति**। आनन्दमयस्य ब्रह्मत्वे ब्रह्मणोऽवयवित्वेन गृहीतत्वात्पृथक्तस्यैव ब्रह्मणः पुच्छत्वेन प्रतिष्ठात्वेन न ग्रहणमनुपपन्नम् एकत्रावयवावयविभावादिकल्पनस्यानुचितत्वादिति भावः। **तस्मादिति**।
३० उक्तहेतुसमुदायादित्यर्थः। **न पर एवेति**। न साक्षात्परमात्मैवानन्दमय इत्यर्थः। आनन्दमय इत्यत्र प्रकृत्यर्थमाह—**आनन्द इतीति**। आनन्द इति प्रकृत्यंशेनोपासनाकर्मफलभूतं प्रियमोदादिलक्षणं सुखमुच्यते आनन्दपदस्य लोके विषयसुखेषु प्रसिद्धत्वादित्यर्थः। मयडर्थमाह—**तद्विकार इति**। विशिष्टस्य विशेषणविकारत्वात्प्रकृत्यर्थभूतानन्द-विशिष्ट आत्मा तद्विकार इत्यर्थः। आनन्दमयस्य विज्ञानमयादान्तरत्वं श्रुत्युक्तमुपपादयति—**ज्ञानकर्मणोर्हि फलमिति**। तयोः फलशब्दितसुखसाधनत्वं प्रसिद्धमिति हिशब्दार्थः। भोक्त्रर्थत्वादित्यत्र भोक्तृपदं भावप्रधानं सत्फलत्वेन
३५ विवक्षितं सुखरूपं भोगमाह; तथा च कर्तृविज्ञानमयस्य भोक्तृशब्दितफलसाधनत्वाज्ज्ञानकर्मफलभूतं सुखं साधनभूतविज्ञानमयाद्यपेक्षया अन्तरतममित्यर्थः। तथाप्यानन्दमयस्यान्तरत्वे किमायातम्? तत्राह—**अन्तरतमश्चेति**।

---

1. आनन्दः विशेषणं तत्कार्यः आनन्दमयः।

विद्याकर्मणोः प्रियाद्यर्थत्वाच्च। प्रियादिप्रयुक्ते हि विद्याकर्मणी। तस्मात्प्रियादीनां फलस्वरूप.णामात्मसन्निकर्षाद्विज्ञानमयस्याऽऽभ्यन्तरत्वमुपपद्यते प्रियादिवासनानिर्वृत्तो ह्यानन्दमयो विज्ञानमयाश्रितः स्वप्न उपलभ्यते।

तस्याऽऽनन्दमयस्याऽऽत्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः प्राधान्यात्। मोद इति प्रियलाभनिमित्तो हर्षः। स एव च प्रकृष्टो हर्षः प्रमोदः। आनन्द इति सुखसामान्यमात्मा प्रियादीनां सुखावयवानां तेष्वनुस्यूतत्वादानन्द इति परं ब्रह्म। तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधवन्तःकरणवृत्तिविशेषे तमसा ५ अप्रच्छाद्यमाने प्रसन्नेऽभिव्यज्यते। तद्विषयसुखमिति प्रसिद्धं लोके। तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽन-

आनन्दगिरिटीका

साधनेभ्यः सकाशात्साध्येनाऽऽनन्देन विशिष्टोऽन्तरतमः प्रसिध्यतीत्यर्थः। किञ्च प्रियं च तत्साधनं चोद्दिश्य कर्ता विज्ञानकर्मणी अनुतिष्ठति। तत उद्देश्यत्वादस्याऽऽन्तर्यं सिद्धमित्याह—विद्याकर्मणोरिति। प्रियादिविशिष्टस्य स्वप्ने साक्षिणोपलभ्यत्वाच्च न मुख्यात्मत्वमित्याह—प्रियादिवासनेति। १०

यदुक्तं ज्ञानकर्मणोः फलभूत आनन्दमय इति तस्य साध्यत्वमौपाधिकं स्वमतानुसारेणाऽऽह—आनन्द इति। परमिति। कथं तर्हि विषयसुखस्य क्षणिकत्वं सातिशयत्वं च व्यञ्जकवृत्तिनिबन्धनमित्याह—तद्वृत्ति-

वनमाला

चोऽवधारणार्थः। अन्तरतमफलविशिष्टः सन्नानन्दमय आत्मा पूर्वेभ्यो विज्ञानमयान्तेभ्यः कोशेभ्योऽन्तरतमो भवत्येवेत्यर्थः। नन्वानन्दमयो न विद्याकर्मफलविशिष्टः किं तु प्रियादिविशिष्टः "तस्य प्रियमेव शिरः" इत्यादि- १५ श्रवणादित्याशङ्क्याह—विद्याकर्मणोः प्रियाद्यर्थत्वाच्चेति। चशब्दः शङ्कानिवृत्त्यर्थः। प्रियादेः सुखरूपत्वान्न विद्याकर्मफलात्प्रियादेर्भेद इति भावः। तयोः प्रियाद्यर्थत्वं प्रसिद्धमित्याह—प्रियादिप्रयुक्ते हीति। प्रियाद्युद्देश्यके इत्यर्थः। आनन्दमयस्यान्तरत्वप्रतिपादनमुपसंहरति—तस्मादिति। आत्मसन्निकर्षादिति। आत्मविशेषणत्वादिति यावत्। अस्येति। आन्तरैः प्रियादिभिर्विशिष्टस्यात्मन इत्यर्थः। इत्थमानन्दमयस्य विज्ञानमयादभ्यन्तरत्वं प्रसाध्य तस्मादन्यत्वं साधयति—प्रियादिवासनेति। जाग्रति प्रियाद्यनुभवजनिताभिर्वासनाभिर्निर्वर्तितः; वासनाविशिष्ट २० इति यावत्। एवंभूत आनन्दमय आत्मा विज्ञानमयाश्रिते स्वप्ने प्रियादिविशिष्टतयोपलभ्यते। स च विज्ञानमयादन्यः विज्ञानमयस्य जाग्रति यज्ञादिकर्मकर्तृत्वेन व्यवस्थितत्वात् स्वप्ने चात्मनः कर्मकर्तृत्वाभावात् स्वप्ने कर्मकरणादिव्यापारस्य वासनामात्रत्वात्। किं च स्वप्नप्रपञ्चस्य विज्ञानमयशब्दितसाभासान्तःकरणपरिणामत्वाद्विज्ञानमयो विषयत्वेनैवोपक्षीणः; ततो विषयभूताद्विज्ञानमयादानन्दमयस्य स्वप्नद्रष्टुरन्यत्वमावश्यकमित्याशयेन विज्ञानमयाश्रिते स्वप्न इत्युक्तमिति मन्तव्यम्। स एव चेति। लाभनिमित्त एव हर्षो लब्धस्योपभोगादिना प्रकर्षं २५ प्राप्तः सन्प्रमोदशब्दवाच्यो भवतीत्यर्थः। आनन्द इति पदेन सुखसामान्यमुच्यते; तच्च शिरआद्यवयवरूपेण कल्पितानां प्रियादीनामात्मा मध्यकाय इत्यर्थः। आनन्दस्य सामान्यरूपत्वे युक्तिमाह—तेष्विति। प्रियादिषु सुखविशेषेष्वित्यर्थः। ननु सुखसामान्यं नाम किं जातिरूपम्? नेत्याह—आनन्द इतीति। सुखसामान्यवाचिना आनन्द इति पदेन परं सुखरूपतयोत्कृष्टं ब्रह्मोच्यत इत्यर्थः। यथा घटाद्युपहितानि च्छिद्राण्याकाशविशेषाः तेषु स्वरूपेणानुस्यूतमाकाशमाकाशसामान्यमिति प्रसिद्धम्, तथा वृत्तिविशेषोपहितानि ब्रह्मस्वरूपसुखान्येव सुखविशेषाः ३० तेषु स्वरूपेणानुस्यूतं ब्रह्मसुखमेव सुखसामान्यमुच्यते, न जातिरूपमिति भावः। वृत्तिविशेषैरभिव्यक्तं तदुपहितस्वरूपसुखमेव विषयसुखं सदत्र प्रियमोदादिशब्दैरभिधीयत इतीममेवाभिप्रायं प्रकटयति—तद्धीत्यादिना। प्रत्युपस्थाप्यमान इति पदं वृत्तिविशेष इत्यस्य विशेषणम्; उत्पद्यमान इत्यर्थः। समस्तपाठे प्रत्युपस्थाप्यमानाः प्राप्यमाणाः पुत्रमित्रादिविषयविशेषा उपाधयः कारणानि यस्य वृत्तिविशेषस्येति विग्रहः। क्रोधादिवृत्तिवैलक्षण्यरूपं वृत्तेर्विशेषमेवाह—तमसेति। अप्रच्छादनफलमाह—प्रसन्न इति। अभिव्यज्यत इति। निवृत्तावरणं भवतीत्यर्थः। ३५ ततः किमित्यत आह—तद्विषयेति। तद्वृत्तिविशेषोपहितं तेनैवाभिव्यक्तं ब्रह्मस्वरूपसुखमेव लोके विषयजनितं सुखमिति प्रसिद्धं न तु वस्तुगत्या विषयजनितमन्यत्सुखमस्तीत्यर्थः। ननु विषयसुखस्य ब्रह्मानन्दस्वरूपत्वे क्षणिकत्वं न स्यात् ब्रह्मानन्दस्य नित्यत्वादित्याशङ्क्याह—तद्वृत्तीति। स्वरूपसुखव्यञ्जकवृत्तिविशेषोत्पादककर्मणः क्षणिकत्वादित्यर्थः। नन्वेवमपि स्वरूपसुखस्य वृत्तिविशेषेष्वभिव्यक्तस्याप्येकरूपत्वात्कथं विषयसुखेषूत्कर्षतारतम्यमित्या-

वस्थितत्वात्सुखस्य क्षणिकत्वम्। तद्यदा अन्तःकरणं तपसा तमोघ्नेन विद्यया ब्रह्मचर्येण श्रद्धया च निर्मलत्वमापद्यते यावद्यावत्तावत्तावद्विविक्ते प्रसन्नेऽन्तःकरण आनन्दविशेष उत्कृष्यते विपुलीभवति। वक्ष्यति च—"रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति। एष ह्येवाऽऽनन्दयाति। एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति च श्रुत्यन्तरात्। एवं च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते। एवं चोत्कृष्य-
५ माणस्याऽऽनन्दमयस्याऽऽत्मनः परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव यत्प्रकृतं सत्यज्ञानानन्तलक्षणं यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोशा उपन्यस्ताः। यच्च तेभ्योऽभ्यन्तरं येन च ते सर्वे आत्मवन्तस्तद्ब्रह्म पुच्छं प्रतिष्ठा। तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्य अवसानभूतमद्वैतं ब्रह्म प्रतिष्ठा। आनन्दमयस्यैकत्वावसान-

आनन्दगिरिटीका

**विशेषेति।** ब्रह्मण आनन्दस्वभावत्व एव किं प्रमाणमित्यत आह—**वक्ष्यति चेति।** अन्तःकरणशुद्ध्युत्कर्षादिवाऽऽ-
१० नन्दस्य सातिशयत्वमित्यत्र लिङ्गमाह—**एवं चेति।** यदि विषयविशेषजन्यत्वेनाऽऽनन्दोत्कर्षस्तदा निष्कामस्य विषयविशेषोपभोगासम्भवादानन्दोत्कर्षो न श्राव्येत[1]। आत्मस्वभावस्यैवाऽऽनन्दस्य व्यञ्जकान्तःकरणशुद्ध्युत्कर्षादेवोत्कर्ष इत्येवं तु [2]सत्यकामहतत्वोत्कर्षादुत्कर्षः सम्भाव्यत इत्यर्थः। उक्तप्रकारेण विषयानन्दस्य सातिशयत्वे सति तद्विशिष्टस्याऽऽनन्दमयस्याब्रह्मत्वं सिद्धम्। सातिशयत्वेन प्रतिशरीरं भिन्नत्वात्। ब्रह्म तु तदध्यासाधिष्ठानमद्वितीयमित्याह—**एवं चेति। एतस्मिन्नप्यर्थ इति।** आनन्दमयस्य प्रतिष्ठाभूतब्रह्मप्रकाशनपर इत्यर्थः।
१५ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यां पञ्चमोऽनुवाकः

वनमाला

शङ्कयाह—**तद्यदेति।** तमोघ्नत्वविशेषणं दमादिसाधारणं बोध्यम्। विद्यया उपास्त्या। **विविक्त इति।** तमसेति शेषः। अतःकरणशुद्धितारतम्यात्तारतम्योपेतास्तद्वृत्तयो भवन्ति, वृत्तितारतम्याच्च तदभिव्यङ्ग्यमात्मसुखमपि
२० तरतमभावेनाभिव्यज्यत इत्यर्थः। **आनन्दविशेष इति।** वृत्तिविशेषोपहितानन्द इत्यर्थः। विषयसुखानां ब्रह्मसुखावयवत्वे मानमाह—**वक्ष्यति चेति।** सः प्रकृतः परमात्मा रसः सारः आनन्द इत्यर्थः। **अयमिति।** ब्रह्मादिस्तम्बपर्यन्तो लोक इत्यर्थः। **एष ह्येवेति।** आनन्दरूपः पर एव निजेनानन्देनानन्दयतीत्यर्थः। वाजसनेयश्रुतिमाह—**एतस्यैवेति।** आत्मानन्दस्यैवेत्यर्थः। आत्मानं ब्रह्मणः सकाशादन्यत्वेन मन्यमानानि भूतानि प्राणिनो मात्रां लेशमेवानुभवन्तीत्यर्थः। सुखतारतम्यस्य चित्तशुद्धितारतम्यानुरोधित्वे सत्येव वाक्यशेषोऽप्युपपद्यत इत्याशयेनाह—
२५ **एवं चेति।** कामोपशमः शुद्धिः। **वक्ष्यत इति।** "श्रोत्रियस्य चाकामहतस्य" इत्यत्रेत्यर्थः। "ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्यं व्याचष्टे—**एवं चेति।** उक्तरीत्यैवोत्कृष्यमाणस्य उत्कर्षतारतम्योपेतप्रियादिविशिष्टस्यानन्दमयात्मनः परमेव ब्रह्म पुच्छं प्रतिष्ठेति सम्बन्धः। नन्वानन्दमयं प्रति ब्रह्मणः प्रतिष्ठात्वं किमर्थमुपदिश्यते ? तत्राह—**परमार्थेति।** परमार्थस्य ब्रह्मणः सर्वान्तरत्वज्ञानार्थमित्यर्थः। पुच्छशब्दप्रयोगेऽपि ब्रह्मणोऽत्र प्राधान्यसूचनार्थं प्रकरणित्वमाह—**यत्प्रकृतमिति।** ब्रह्मप्रकरणस्य कोशवाक्यैर्विच्छेदमाशङ्क्य तेषां प्रकरणिब्रह्मसम्बन्धित्वमाह—**यस्य चेति।**
३० यस्य ब्रह्मणः सर्वान्तरत्वप्रतिपत्त्यर्थमन्तर्बहिर्भावेन पञ्च कोशाः श्रुत्योपन्यस्ता इत्यर्थः। ननु सर्वान्तरत्वमानन्दमयकोशस्यैव न पुच्छब्रह्मणः तस्यान्तरत्वाश्रवणादित्याशङ्क्याह—**यच्चेति।** अन्नमयादिवदानन्दमयस्यापि कार्यात्मकतायाः प्राक्साधितत्वान्न तस्य सर्वान्तरत्वम्; पुच्छब्रह्मण्यान्तरत्ववाचिपदाभावेऽपि प्रतिष्ठात्वलिङ्गेनानन्दमयान्तकोशजातं प्रत्यान्तरत्वरूपं सर्वान्तरत्वं सिध्यतीति भावः। "आत्मन आकाशः" इत्यादौ ब्रह्मण्येवात्मशब्दप्रयोगात्तदेव कोशानां वास्तवं स्वरूपमित्याह—**येन चेति।** ननु प्रतिष्ठापदेन ब्रह्मण आनन्दमयं प्रत्याधारत्वोक्तौ पुच्छपदेन
३५ पौनरुक्त्यं प्रसज्येत तेनापि तदाधारस्य लक्षणीयत्वादित्याशङ्क्य प्रतिष्ठापदस्यानन्दमयोपलक्षितसर्वद्वैताधारपरत्वमाह—**तदेव चेति। आनन्दमयस्येति।** यदद्वैतं ब्रह्म आनन्दमयस्य प्रतिष्ठा प्रतिष्ठात्वेन श्रुतं तत्सर्वस्यैव द्वैतस्य अवसानभूतमधिष्ठानभूतमिह विवक्षितमित्यर्थः। द्वैतस्य सर्वस्य साधिष्ठानत्वे युक्तिं सूचयति—**अविद्यापरिकल्पितस्येति।** शुक्तिरूप्यादिवन्मिथ्याभूतस्येत्यर्थः। पुच्छवाक्यनिर्दिष्टब्रह्मास्तित्वसाधनपरत्वेन श्लोकमवतारयितुं

---

१. ततश्च उत्तरपर्यायेषु श्रोत्रियस्याकामहस्येत्युक्तिर्न स्यात्।
४० २. अकामहतत्वस्योत्कर्षः अल्पतरकामहतत्वम्।

त्वात्। अस्ति तदेकमविद्याकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा पुच्छं तदेतस्मिन्नप्यर्थं एष श्लोको भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि द्वितीये ब्रह्मवल्लीभाष्ये पञ्चमोऽनुवाकः

वनमाला

तदस्तित्वमुपक्षिपति—एकत्वावसानत्वादस्तीत्यादिना। एकत्वमद्वैतमविद्यापरिकल्पितस्य द्वैतस्याद्वैतावसानत्वाद्धे- ५
तोर्यत्तस्यावसानभूतमद्वैतं ब्रह्म पुच्छप्रतिष्ठाशब्दितं तदेकमस्तीति योजना। ननु पुच्छपदेन ब्रह्मण आनन्दमयं
प्रत्यवयवत्वावगमात्कथं श्लोकस्य तद्विषयत्वं पूर्वपर्यायेषु श्लोकानामवयविकोशविषयत्वदर्शनादिति चेत्, न;
पूर्वत्रापि मनोमयपर्यायस्थस्य "यतो वाचः" इति श्लोकस्य मनोमयावयवभूतयजुरादिविषयत्वेन तथा नियमा-
भावात् पुच्छपदस्यापि प्रियादिविशिष्टानन्दमयाधारमात्रलक्षकस्यावयवपरत्वाभावेन तेन ब्रह्मणोऽवयवत्वप्रतीत्य- १०
भावाच्च। न च ब्रह्मणि पुच्छदृष्टिलक्षकस्य पुच्छपदस्य कथमाधारलक्षकत्वमिति वाच्यम्; अत्र पूर्वपर्यायेष्विवो-
पासनाविधिफलश्रवणयोरभावेनानन्दमयकोशस्यानुपास्यत्वात् प्रियादिषु शिरःपक्षादिकल्पनस्यानन्दमये कार्यात्मत्व-
प्रतिपत्तिमात्रप्रयोजनकत्वोपपत्तेः। एतच्च प्रयोजनं प्रागेव भाष्ये शिरआदिकल्पनानुपपत्तेश्चेत्यादिना प्रपञ्चितम्।
अतोऽत्र पुच्छवाक्यनिर्दिष्टस्य ब्रह्मण एव प्राधान्यात् "असन्नेव स भवति" इति श्लोकस्य तद्विषयत्वे नानुपपत्तिः;
प्रत्युत तस्यानन्दमयविषयत्व एवानुपपत्तिरुक्ता वक्ष्यते चेति संक्षेपः। १५

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां पञ्चमोऽनुवाकः

## अथ वार्त्तिके ब्रह्मवल्ल्यां पञ्चमोऽनुवाकः

विज्ञानं तनुते यज्ञं कर्माण्यन्यानि यानि च । सर्वे च देवा विज्ञानं ब्रह्म ज्येष्ठमुपासते ॥ १ ॥
परमेव हि तद्ब्रह्म बुद्धिकञ्चुकभृत्स्वयम् । घटादाविव विज्ञप्तौ धीरात्मानं ततोऽर्पयेत् ॥ २ ॥
अग्रजं ब्रह्म विज्ञानं देवा अग्न्यादयः सदा । उपासते तदाप्त्यर्थं ते देवा इति च श्रुतिः[1] ॥ ३ ॥
यथोक्तेन प्रकारेण विज्ञानं ब्रह्म वेद चेत् । प्रमाद्यति न चेत्तस्मादुक्तकोशात्मशक्तितः ॥ ४ ॥
५ पाप्मनामाश्रयो यस्माद्रूपनामक्रियात्मकः । देहोऽतस्तत्प्रहाणेन हानिः स्यात्सर्वपाप्मनाम् ॥ ५ ॥
विज्ञानमह[illegible]ति तावन्मात्राभिमान्यतः । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते ॥ ६ ॥
अणिमादिगुणैश्वर्यो बुद्ध्यात्मा कार्यरूपिणः । कार्यं हि कारणव्याप्तमतः कामान्समश्नुते ॥ ७ ॥
ज्ञानकर्मफलोपाधिविज्ञानं प्रत्यगात्मनः । आनन्दमय इत्यत्र भण्यते कर्तृशान्तये ॥ ८ ॥
विज्ञानमयशब्देन कर्ता व्याख्यायि पूर्वया । तस्य प्रत्यक्तया चाथ श्रुत्या भोक्तोच्यतेऽधुना ॥ ९ ॥
१० शुद्धस्यापि स्वतो बुद्धौ प्रियाद्याक[illegible]े । जायते तदुपाधित्वाद्भोक्ताऽऽत्मा स्यादविद्यया ॥ १० ॥

विज्ञानमयस्य महत्तत्वं पुच्छ[illegible]त्प्रतिष्ठात्वेन ध्येयमित्युक्त्वा ब्राह्मणोक्तेऽर्थे मन्त्रमवतारयति—**विज्ञानमिति** ॥ १ ॥

ब्रह्मशब्दार्थमाह—**परमेवेति** । यथोक्तस्य ब्रह्मणो ग्रहणे प्रयोजनमाह—**घटादाविति** । यथा घटादौ विषये धीरात्मानमर्पयन्ती घटादिविषयं प्रकाशयति तथा विज्ञप्तिरूपे ब्रह्मणि धीरात्मानमर्पयन्ती ब्रह्म प्रकाशयति
१५ ततो बुद्ध्युपरक्तं ब्रह्मेत्युक्ते मुमुक्षोर्ब्रह्मप्रतिपत्तिः सुकरा भवतीत्यर्थः ॥ २ ॥

ब्रह्मणो यत्प्रकृतमुपासनं तत्प्रकटयति—**अग्रजमिति** । तत्रैव श्रुत्यन्तरं सम्वादयति—**ते देवा इति** ॥ ३ ॥

प्रकृतस्योपासनस्य पापक्षयः सर्वकामावाप्तिश्चेति द्विविधं फलम् । तत्र पापक्षयं फलं विज्ञानं ब्रह्म चेत्यादिवाक्यव्याख्यानेन कथयति—**यथोक्तेनेति** । प्रकृतोपासनस्य प्रमादप्रसङ्गं दर्शयति—**उक्तेति** । प्रथमजबुद्ध्युपाधिब्रह्मोपासने प्रवृत्तो यद्यात्मबुद्धिं प्राचीने कोशत्रये न करोति तदोपासकस्य शरीराभिमानाभावात्पापक्षयः
२० सिध्यतीत्यर्थः ॥ ४ ॥

शरीरे पाप्मनो हित्वेत्यस्यार्थं प्रपञ्चयति—**पाप्मनामिति** । देहाभिमाननिमित्तत्वात्पाप्मनां देहाभिमानाभावे सर्वपापहानिः सिध्यतीत्यर्थः ॥ ५ ॥

अवशिष्टमुपासनाफलं सर्वान्कामान्समश्नुत इति वाक्यव्याख्यानेन कथयति—**विज्ञानमिति** ॥ ६ ॥

उपासकं हिरण्यगर्भरूपमापन्नं विशिनष्टि—**अणिमादीति** । कामानां विशेषणं कार्यरूपिण इति कामानां
२५ कार्यरूपित्वे कथमुपासकस्य तत्प्राप्तिरित्याशङ्क्याऽऽह—**कार्यं हीति** । उपासकस्य हिरण्यगर्भभावं प्राप्तस्य सर्वकर्मफलकारणत्वात्कारणस्य च कार्यव्यापकत्वादुपासकस्य युक्ता सर्वकामावाप्तिरित्यर्थः ॥ ७ ॥

पञ्चमपर्यायस्य तात्पर्यार्थमाह—**ज्ञानेति** । सुखादि ज्ञानकर्मफल तदात्मकं यदन्तःकरणं तदुपाधि यत्प्रत्यगात्मनो विज्ञानं चैतन्याभासः सोऽत्राऽऽनन्दमयशब्देनोच्यते । आत्मनि यत्कर्तृत्वमुक्तं तन्निवृत्त्यर्थं भोक्तृत्वं तस्य कथ्यत इत्यर्थः ॥ ८ ॥

३० उक्तमेव व्यक्तीकरोति—**विज्ञानेति** ॥ ९ ॥

नित्यशुद्धबुद्धमुक्तस्वभावस्याऽऽत्मनो न भोक्तृत्वमित्याशङ्क्याऽऽह—**शुद्धस्यापीति** । प्रत्यगात्मनः शुद्ध-

---

१. ते देवाः सत्यमेवोपासते ( बृ० ५.५.१ ) ।

अपरे पण्डितम्मन्याः परमेतं प्रचक्षते । इहैवोपरमादूर्ध्वं भृगोश्च वरुणस्य च ॥११॥
अपि चाऽऽनन्दरूपस्य ब्रह्मत्वं बहुशः श्रुतम् । तथा चाऽऽनन्दवल्लीति व्यपदेशोऽपि युज्यते ॥१२॥
कार्याधिकारगत्वात्तु नैतद्ब्रह्म परं भवेत् । अन्नादिमयवत्कार्यं स्यादानन्दमयोऽप्ययम् ॥१३॥
मयट् चात्र विकारार्थे यथैवान्नमयादिषु । वैरूप्यलक्षणो दोषः प्रायोऽर्थत्वे प्रसज्यते ॥१४॥
अपि संक्रमणादस्य कार्यताऽध्यवसीयते । कार्यात्मनां हि संक्रान्तिर्युज्यते कारणात्मनि ॥१५॥ ५
अत्ययो वाऽथ संप्राप्तिः संक्रान्तिः स्यात्परात्मनः । नाऽऽत्मत्वादात्मनः प्राप्तिस्तदु नात्येति कश्चन[1] ॥१६॥
न चाऽऽत्मना स्वमात्मानमुपसंक्रामतीश्वरः । नालं स्वस्कन्धमारोढुं निपुणोऽपीह साधकः ॥१७॥
शिरआद्याकृतेरत्र मूर्तामूर्ताद्यसम्भवात् । असम्भवः परे तत्त्वे [2]नेति नेतीतिशास्त्रतः ॥१८॥
[3]अदृश्येऽनात्म्य इत्येवं पूर्वोत्तरविरुद्धता । न स्यादाकारवत्त्वाद्धि अस्ति नास्तीतिसंशयः ॥१९॥

स्वभावस्यापि बुद्धौ प्रियादिपरिणामोदये सति तदुपरक्ततया चैतन्याभासो जायते तदा तदुपाधित्वादविद्ययाऽऽत्मा भोक्ता स्यादित्यर्थः ॥ १० ॥ १०

आनन्दमयशब्देन चैतन्याभासो जीवो गृह्यत इति स्वसिद्धान्तमुक्त्वा पूर्वपक्षमाह--अपर इति । आनन्दवल्ल्यामानन्दमयशब्देनोक्तस्य भृगुवल्ल्यामानन्दाद्ध्येवेत्यानन्दत्वेन परामर्शात् । भृगुवरुणयोश्च संघेति पञ्चमपर्यायेणैवोपसंहारादानन्दमयस्याब्रह्मत्वे तदयोगादित्युक्तेऽर्थे हेतुमाह--इहैवेति ॥ ११ ॥

आनन्दमयशब्देनोक्तस्याऽऽनन्दशब्देनाभ्यासाच्च तस्य ब्रह्मत्वमिति हेत्वन्तरमाह--अपि चेति । आनन्दवल्लीतिसमाख्यायाश्चाऽऽनन्दमयस्य ब्रह्मत्वं प्राधान्येन व्यपदेशाद्ब्रह्मणः प्रधानत्वाज्जीवस्य तदभावान्मयटश्च प्राचुर्यार्थत्वेनाविरुद्धत्वादित्यभिप्रेत्याऽऽह--तथा चेति ॥ १२ ॥ १५

विकारप्रकरणमाश्रित्य सिद्धान्तयति--कार्येति ॥ १३ ॥

विकारार्थमयट्शब्दश्रुतेश्चाऽऽनन्दमयो न परमात्मेत्याह--मयट् चेति । आनन्दमये मयटो न विकारार्थत्वं किन्तु प्राचुर्यार्थत्वमित्युक्तमाशङ्क्याऽऽह--वैरूप्येति । न चात्रार्थविरोधोऽस्त्यानन्दस्य ब्रह्मत्वेऽपि मयडन्तस्य तस्य ब्रह्मत्वे हेत्वभावात्तस्मात्प्रकरणश्रुतिभ्यां कार्यात्मैवाऽऽनन्दमय इत्यर्थः ॥ १४ ॥ २०

आनन्दमयस्य परमात्मत्वाभावे हेत्वन्तरमाह—अपीति । एतमानन्दमयमात्मानमुपसंक्रामतीति संक्रमणकर्मत्वश्रवणेऽपि कथमानन्दमयस्य कार्यतेत्याशङ्क्याऽऽह—कार्यात्मनामिति ॥ १५ ॥

आनन्दमयस्य परमात्मनः संक्रान्तेरसम्भवमभिधातुं संक्रान्तिं विकल्पयति—अत्ययो वेति । जीवस्य परमात्मनोऽभिन्नत्वान्न परमात्मनि प्राप्तिर्नाम संक्रान्तिः सम्भवतीति द्वितीयं प्रत्यादिशति—नाऽऽत्मत्वादिति । तद्ब्रह्म कश्चिदपि नात्येतीतिश्रुतेर्न ब्रह्मादिक्रमणं जीवस्य घटते ब्रह्माभेदात् । ब्रह्मणः सर्वगतत्वाच्चेति प्रथमं प्रत्याह—तदु नेति ॥ १६ ॥ २५

स्वेनैव स्वस्यातिक्रमो वा प्राप्तिर्वा न सम्भवतीत्युक्तमर्थं दृष्टान्तेन साधयति—न चेति ॥ १७ ॥

इतश्चाऽऽनन्दमयस्य नास्ति ब्रह्मत्वमित्याह—शिरआदीति । आनन्दमये शिरआद्यवयवकल्पनया सविशेषत्वसिद्धेर्ब्रह्मणि च परस्मिन्नेति नेतीतिशास्त्रान्मूर्ताद्यशेषविशेषासम्भवान्न सविशेषस्याऽऽनन्दमयस्य ब्रह्मत्वमित्यर्थः ॥ १८ ॥ ३०

पूर्वापरविरोधप्रसङ्गाच्चाऽऽनन्दमयस्य न ब्रह्मत्वमित्याह—अदृश्य इति । आनन्दमयस्य सविशेषत्वेनास्तित्वस्य प्रसिद्धत्वात्तन्नास्ति नास्तीति संशयायोगाद्ब्रह्मणि च तद्दर्शनान्नाऽऽनन्दमयस्य ब्रह्मत्वमित्याह—न स्यादिति ॥ १९ ॥

---

१. कठ० २-१-९ । २. बृ० ३-९-२६ । ३. तै० २-७ । ३५

कार्यात्माऽयमतो ग्राह्यो यथोक्तन्यायगौरवात् । भृगोरुपरमाच्चेति कार्यात्मत्वेऽपि युज्यते ॥२०॥
आनन्दवल्ल्यां ब्रह्मोक्तं तदुपायविधित्सया । अधीहि भगवो ब्रह्मेत्यवोचद्वरुणं भृगुः ॥२१॥
व्याख्यातत्वादुपेयस्य ह्युपायोऽत्रावशिष्यते । उपायाः कोशाः पञ्चापि यस्मात्तैस्तं प्रपद्यते ॥२२॥
अन्वयव्यतिरेकाभ्यां कोशैरात्मसमीक्षणम् । क्रियते हि यतस्तेषामुपायत्वं प्रतीयते ॥२३॥
५ स्वातन्त्र्यं यत्र कर्तुः स्यात्तत्रैवासौ नियुज्यते । फलं कर्त्रनधीनत्वात्सम्बन्धायैव शक्यते ॥२४॥
पञ्च कोशानतस्तस्मै वाक्यार्थप्रतिपत्तये । स्वतः प्रसिद्धेः शेषस्य ह्युपरेमे भृगुस्ततः ॥२५॥
ब्रह्मताऽऽनन्दरूपस्य केन वा प्रतिषिध्यते ; निरस्ताशेषभेदस्य रूपं तत्परमात्मनः ॥२६॥
प्रियाद्यानन्दरूपाणां भेदो यत्र निवर्तते । अमनोविषयेऽत्यन्तं तमानन्दं प्रचक्ष्महे ॥२७॥
कोशपञ्चक एतस्मिन्निषिद्धेऽज्ञानहेतुके । नाऽऽनन्दमयता न्याय्या धियां वाचामगोचरे ॥२८॥
१० परानन्दस्वभावेन पूर्णा ह्यन्नमयादयः । कार्यात्मानोऽपि तद्धेतोरानन्दमयता भवेत् ॥२९॥

उक्तयुक्तिफलं कथयति—**कार्यात्मेति** । यदुक्तमानन्दमात्रमुक्त्वा—सैषा भार्गवीति भृगुवरुणयोरुपरमणमानन्दमयस्य ब्रह्मत्वं गमयति स्थानप्रामाण्यादिति तत्राऽऽह—**भृगोरिति** ॥ २० ॥

तदेवोपपादयितुं सम्प्रतिपन्नमर्थमाह—**आनन्देति** ॥ २१ ॥

ब्रह्मात्मैक्यज्ञानोपायविधानार्थं भृगुवल्ल्यारम्भ इत्यत्र हेतुमाह—**व्याख्यातत्वादिति** । तमेवोपाय-
१५ मुपन्यस्यति—**उपाया इति** ॥ २२ ॥

कोशानामात्मज्ञानोत्पत्तिहेतुत्वेनोपायत्वमुपपादयति—**अन्वयात** । आनन्दवल्ल्यां ब्रह्मात्मैक्यज्ञानमुपेयमुक्तं भृगुवल्ल्यां तदुपायत्वेनान्नप्राणादिकोशपञ्चकोक्तिद्वारेणान्वयव्यतिरेकाख्यव्यापारो विहितस्तथा चोपायोपेययोः सिद्धत्वाद्वक्तव्यानवशेषादत्रैव भृगोरुपरमणमुचितं न तु पञ्चमपर्यायस्य ब्रह्मविषयत्वादानन्दमयस्य ब्रह्मत्वं शङ्कितव्यमानन्दशब्दस्यात्रापि कोशविषयत्वादित्यर्थः ॥ २३ ॥

२० अन्वयव्यतिरेकाख्यो व्यापारो नात्र विधीयते । "आनन्दो ब्रह्मेति व्यजानादि"तिविज्ञानस्योक्तत्वात्तस्यैव विधेयत्वादित्याशङ्क्याऽऽह—**स्वातन्त्र्यमिति** । ज्ञानस्य विधेयत्वाभावे "ब्रह्मविदाप्नोति परमि"त्यादौ ज्ञानसङ्कीर्तनं किमर्थमिति चेत्तत्राऽऽह—**फलमिति** । अन्वयव्यतिरेकव्यापारस्य साधनत्वमैक्यज्ञानस्य च साध्यत्वमित्येवं साध्यसाधनसम्बन्धसिद्ध्यर्थं प्रकृते वाक्ये फलमैक्यज्ञानलक्षणं विवक्ष्यते न तु विधेयत्वसिद्ध्यर्थं तदुच्यते तत्र कर्त्रधीनत्वराहित्यादेव विध्ययोग्यत्वादित्यर्थः ॥ २४ ॥

२५ यतो ज्ञानस्य विधेयत्वं नोपपद्यतेऽतो वाक्यार्थप्रतिपत्त्युपायत्वे नान्नादीनानन्दान्तान्पञ्च कोशान्भृगवे वरुणेनोक्तान्प्रतिपाद्यावशिष्टस्य ज्ञानस्य स्वतो विधिव्यतिरेकेण वाक्यादेव सिद्धत्वाद्भृगुरुपरतवान्न त्वानन्दमयस्य ब्रह्मत्वं प्रतिपन्नवानित्युपसंहरति—**पञ्चकोशानिति** । ततःशब्देन वक्तव्यशेषाभावः परामृश्यते ॥ २५ ॥

आनन्दो ब्रह्मेति व्यजानादित्यत्राऽऽनन्दशब्दस्य कोशविषयत्वमुक्तमिदानीं तस्य ब्रह्मविषयत्वेऽपि नानुपपत्तिरित्याह—**ब्रह्मतेति** । प्रियमोदादिसर्वविशेषशून्यस्याऽऽनन्दस्यात्राऽऽनन्दशब्देन ग्रहणात्तस्य ब्रह्मत्वात्तदेवानन्द-
३० शब्दवाच्यं न साभासमज्ञानमित्यर्थः ॥ २६ ॥

आनन्दो निर्विशेषो ब्रह्मैवेत्येतदेव प्रकटयति—**प्रियादिति** ॥ २७ ॥

आनन्दो ब्रह्मेत्यत्राऽऽनन्दशब्देनाऽऽनन्दमयो गृह्यते स्थानप्रामाण्यादित्याशङ्क्याऽऽह—**कोशेति** । आनन्दस्य निर्विशेषत्वेन वाङ्मनसयोरगोचरत्वादज्ञानतत्कार्यात्मककोशपञ्चकानन्तर्भावान्न तस्याऽऽनन्दमयत्वमतो नाऽऽनन्दमयस्य स्थानावष्टम्भाद्ब्रह्मत्वं तस्य प्रागुक्तश्रुत्यादिविरुद्धस्याप्रमाणत्वादित्यर्थः ॥ २८ ॥

३५ तेनैष पूर्ण इति वाक्यावष्टम्भेनाऽऽनन्दमयस्याब्रह्मत्वे हेत्वन्तरमाह—**परानन्देति**। यथा कार्यात्मानोऽन्नमयादयश्चत्वारोऽपि कोशा ब्रह्मणा परमानन्दस्वभावेन पूर्णा वर्ण्यन्ते तथाऽऽनन्दमयस्यापि कार्यात्मत्वाविशेषात्तद्धेतोरा-

तस्माज्ज्ञानक्रियाकार्यं प्रियाद्याधारक्तबुद्धिगम् । आनन्दमयमात्मानं श्रुतिः सोपाधिकं जगौ ॥३०॥
प्रियादिवासनारूपो ह्यानन्दमय ईक्ष्यते । विज्ञानमयसंस्थो यः स्वप्ने वै स्वप्नदर्शिभिः ॥३१॥
पुत्रादिविषया प्रीतिर्वासना शिर उच्यते । प्रियलाभनिमित्तोत्थो हर्षो मोदः प्रकीर्तितः ॥३२॥
प्रकर्षगुणसंयुक्तः प्रमोदः स्यात्स एव तु । सुखसामान्यमात्मा स्यादानन्दो भेदसंश्रयात् ॥३३॥
उत्कृष्यमाण आनन्दो निष्ठां यत्राधिगच्छति । तदेकं सकलं ब्रह्म पुच्छं सर्वाश्रयत्वतः ॥३४॥ ५
आनन्दः पर एवाऽऽत्मा भेदसंसर्गवर्जितः । स एव सुखरूपेण व्यज्यते पुण्यकर्मभिः ॥३५॥
यावद्यावत्तमोऽपैति बुद्धौ धर्मसमाहतम् । तावत्तावद्धियः स्वास्थ्यं तावत्तावत्सुखोन्नतिः ॥३६॥
तारतम्यं सुखस्यापि वैचित्र्यादुपपद्यते । पुण्यस्य कर्मणस्तस्मादात्मैवाऽऽनन्द उच्यते ॥३७॥
तस्मात्कामादिहानेन ह्युत्तरोत्तरवृद्धितः । श्रोत्रियस्येतिवाक्येन काष्ठाऽऽनन्दस्य भण्यते ॥३८॥
तत्रैतस्मिन्यथोक्तेऽर्थे श्लोकोऽप्युच्चैर्निगद्यते । मन्त्रद्वारेण वाक्यार्थं कथं नाम प्रपत्स्यते ॥३९॥ १०

इति पञ्चमोऽनुवाकः

नन्देन ब्रह्मणा पूर्णत्वादानन्दमयता न तु ब्रह्मत्वादतो यथा विज्ञानमय आत्माऽऽनन्दमयेन पूर्णस्तथाऽऽनन्दमयोऽपि पुच्छब्रह्मणा पूर्णो न स्वयं ब्रह्मेत्यर्थः ॥ २९ ॥

आनन्दमयस्योक्तप्रकारेण ब्रह्मत्वासम्भवे फलितं निगमयति—तस्मादिति ॥ ३० ॥

स्वप्नावस्थायां प्रत्यगात्मना दृश्यत्वाच्चाऽऽनन्दमयस्य न ब्रह्मत्वमित्याह—प्रियादीति ॥ ३१ ॥ १५

तस्य प्रियमेव शिर इत्यादिवाक्यचतुष्टयार्थं संक्षिप्य दर्शयति—पुत्रादीत्यादिना ॥ ३२-३३ ॥

ब्रह्म पुच्छं प्रतिष्ठेत्यस्यार्थं कथयति—उत्कृष्यमाण इति ॥ ३४ ॥

कर्मफलस्याऽऽनन्दस्य सातिशयत्वान्निरतिशयात्परमानन्दादर्थान्तरत्वमापतेदित्याशङ्क्याऽऽह—आनन्द इति ॥ ३५ ॥

आत्मरूपस्यैवाऽऽनन्दस्य पुण्यकर्मवशात्तत्फलत्वेनाभिव्यक्तिमुक्तां प्रकटयति—यावदिति ॥ ३६ ॥ २०

ब्रह्मानन्दस्यैव कर्मफलत्वे कथं तस्य तारतम्यमित्याह—तारतम्यमिति ॥ ३७ ॥

परमानन्दस्य परमात्माभेदाज्जीवपरयोश्च भेदाभावाद्ब्रह्मविदि निरस्तकामसम्बन्धे ब्रह्मानन्दस्य काष्ठां परिसमाप्तिं सर्वात्मनाऽभिव्यक्तिं श्रुतिरादर्शयतीत्युक्तेऽर्थे लिङ्गमाह—तस्मादिति ॥ ३८ ॥

सर्वस्य प्रतिष्ठाभूते स्वप्रधाने ब्रह्मणि ब्राह्मणोक्ते मन्त्रमवतार्य तदर्थं संक्षिपति—तत्रेति ॥ ३९ ॥

इति पञ्चमोऽनुवाकः २५

## अथ ब्रह्मवल्ल्यां षष्ठोऽनुवाकः

[1]असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति।

असन्नेवासत्सम एव, यथाऽसन् अपुरुषार्थसम्बन्ध्येवं स भवति अपुरुषार्थसम्बन्धी। कोऽसौ ? योऽसदविद्यमानं ब्रह्मेति वेद विजानाति चेद्यदि। तद्विपर्ययेण यत्सर्वविकल्पास्पदं सर्वप्रवृत्तिबीजं सर्वविशेषप्रत्यस्तमितमप्यस्ति तद्ब्रह्मेति वेद चेत्। कुतः पुनराशङ्का तन्नास्तित्वे ? व्यवहारातीतत्वं ब्रह्मण इति ब्रूमः। व्यवहारविषये हि वाचा-
५ रम्भणमात्रेऽस्तित्वभाविता बुद्धिस्तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते। यथा घटादिर्व्यवहारविषय-तयोपपन्नः संस्तद्विपरीतोऽसन्निति प्रसिद्धम्। एवं तत्सामान्यादिहापि स्याद्ब्रह्मणो नास्तित्वप्रत्याशङ्का। तस्मादुच्यते—अस्ति ब्रह्मेति चेद्वेदेति। किं पुनः स्यात्तदस्तीति विजानतस्तदाह—सन्तं विद्यमानब्रह्मस्वरूपेण परमार्थसदात्मापन्न-मेनमेवंविदं विदुर्ब्रह्मविदस्ततस्तस्मादस्तित्ववेदनात्सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः। अथवा यो नास्ति ब्रह्मेति मन्यते स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्याश्रद्दधानतया नास्तित्वं प्रतिपद्यतेऽब्रह्मप्रतिपत्त्यर्थत्वात्तस्य।
१० अतो नास्तिकः सोऽसन्नसाधुरुच्यते लोके। तद्विपरीतः सन्योऽस्ति ब्रह्मेति चेद्वेद स तद्ब्रह्मप्रतिपत्तिहेतुं सन्मार्गं वर्णाश्रमादिव्यवस्थालक्षणं श्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्ततस्तस्मात्सन्तं साधुमार्गस्थमेनं विदुः साधवः। तस्मादस्तीत्येव ब्रह्म प्रतिपत्तव्यमिति वाक्यार्थः।

### वनमाला

असत्सम एव भवतीति। वन्ध्यापुत्रसम एव भवतीत्यर्थः। तदेव साम्यं प्रपञ्चयति—यथेति। ब्रह्मणो
१५ नास्तित्वे स्वयमपि नास्त्येवेति पर्यवस्यति, सर्वेषां तत्स्वरूपत्वात्, तथा च असत्त्वमापन्नस्य ब्रह्मासत्त्ववेदिनो युक्तमेव वन्ध्यापुत्रस्येव भोगाद्यसम्बन्धित्वापादानमिति मन्तव्यम्। तद्विपर्ययेण "अस्ति ब्रह्मेति वेद चेदि"ति सम्बन्धः। तदस्तित्वे लिङ्गं सूचयति—सर्वविकल्पास्पदमिति। सर्वस्य विकल्पस्य द्वैतस्याधिष्ठानमित्यर्थः। विमतं जगत्सदधिष्ठानं कल्पितत्वाद्रज्जुसर्पादिवदिति लिङ्गेन तदस्तित्वसिद्धिरिति भावः। तत्रैव लिङ्गान्तरं सूचयति—सर्वप्रवृत्तिबीजमिति। सर्वसृष्टिकर्त्रित्यर्थः। क्षित्यादिकं चेतनकर्तृकं कार्यत्वाद्घटवदिति रीत्या सर्वजगत्कर्तृत्वेन
२० च तदस्तित्वसिद्धिरिति भावः। सर्वलयाधारत्वेनापि तदस्तित्वं सूचयति—सर्वविशेषेति। सर्वे विशेषाः प्रत्यस्तमिता विलीना यस्मिन्निति विग्रहः। ननु यद्युक्तप्रमाणबलादस्ति ब्रह्म कथं तत्र नास्तित्वाशङ्का हेत्वभावादित्याक्षिप्य समाधत्ते—का पुनरित्यादिना। तदेव प्रपञ्चयति—व्यवहारविषये हीत्यादिना। विकारमात्रे अस्तित्वभावनोपेता लोकबुद्धिः व्यवहारविषये अस्तित्वमिव तद्विपरीते शशशृङ्गादौ नास्तित्वमपि व्यवहारकाले निश्चिनुयादित्यर्थः। अस्मिन्नर्थे हिशब्दसूचितां प्रसिद्धिमुदाहृत्य दर्शयति—यथा घटादिरिति। एवमिति। तैः शशशृङ्गादिभिः सह
२५ इहापि ब्रह्मण्यपि व्यवहारातीतत्वस्य समानत्वादेवं शशशृङ्गादीनामिव ब्रह्मणोऽपि नास्तित्वमिति निश्चयो भवतीत्यर्थः। तस्मादुच्यत इति। यस्माद्ब्रह्मण्यसत्त्वाशङ्का जायते तस्मात्तन्निराकरणार्थमस्तित्वमुच्यत इत्यर्थः। स इति। सर्वप्रत्यग्भूतं ब्रह्मास्तीति श्रुत्युपपत्तिभ्यां यो विजानाति स ब्रह्मवित्त्वेनान्येषां वेदनीयो भवतीत्यर्थः। ननु वस्तुतः सद्रूपे ब्रह्मण्यसत्त्ववेदनमात्राद्वेदितुरसत्त्वं नोपपद्यत इत्यस्वरसादाह—अथ वेति। सन्मार्गस्य नास्तित्व-मेव निश्चिनुयादित्यत्र हेतुमाह—ब्रह्मेति। सन्मार्गेण निष्कामनयानुष्ठितेन प्राप्तव्यं यन्मोक्षरूपं फलं तद्ब्रह्मैव,
३० तदपलापे नास्तिकः स्यादित्यर्थः। तस्मादिति। ब्रह्मनास्तित्ववेदिनो नास्तिकत्वाद्यापत्तेरित्यर्थः। अस्य मन्त्रस्या-

---

१. यच्चासन्नेव स भवतीत्यादिश्लोकाः पुच्छवदानन्दमयविषय इति तन्न। तथा सति आनन्दमयपद-प्रयोगापत्तेः। प्रियादिविशिष्टजीवस्य सद्भावे सन्देहाभावाच्च। अपि चात्र "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"त्यनेन आनन्दमयस्य आनन्दमय एवात्मा इत्युक्तं भवति इदमनन्वितं पूर्वपर्यायार्थविलक्षणं चेति बोध्यम्।

[1]तस्यैष एव शारीर आत्मा । यः पूर्वस्य । [2]अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३ उ ।

तस्य पूर्वस्य विज्ञानमयस्यैष एव शरीरे विज्ञानमये भवः शारीर आत्मा । कोऽसौ ? य एष आनन्दमयः । तं प्रति नास्त्याशङ्का नास्तित्वे । अपोढसर्वविशेषत्वात्तु ब्रह्मणो नास्तित्वं प्रत्याशङ्का युक्ता । सर्वसामान्याच्च ब्रह्मणो यस्मादेवमतस्तस्मात् । अथानन्तरं श्रोतुः शिष्यस्यानुप्रश्ना आचार्योक्तिमन्वेते प्रश्ना अनुप्रश्नाः । ५

सामान्यं हि ब्रह्माऽऽकाशादिकारणत्वाद्विदुषोऽविदुषश्च । तस्मादविदुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते—उतापि । अविद्वानमुं लोकं परमात्मानमितः प्रेत्य कश्चन । चनशब्दोऽप्यर्थे । अविद्वानपि गच्छति प्राप्नोति? किंवा न गच्छति ?

आनन्दगिरिटीका

आनन्दमयस्य प्रकाशकोऽयं श्लोक इति केचन तान्प्रत्याह—तं प्रतीति । सविशेषतया प्रत्यक्षत्वादित्यर्थः । सर्वेषां साधारणत्वाच्च ब्रह्मणो व्यवहार्यत्वं सर्वान्प्रति भवेन्न च दृश्यते ततोऽपि नास्तित्वाशङ्का जायत इत्यर्थः । १०

आकाशादिकारणत्वादिति । भूतविशिष्टसर्वजीवकारणत्वादित्यर्थः । कस्य सामर्थ्येन प्राप्तं प्रश्नान्तरमित्यत

वनमाला

नन्दमयविषयत्वं वृत्तिकाराभिमतं निराकृतमपि दार्ढ्यार्थं पुनर्निराकरोति—तं प्रतीति । आनन्दमयं प्रति या आशङ्का आनन्दमयनास्तित्वगोचरा वृत्तिकारैर्वक्तव्या सा कास्ति नास्त्येव, प्रियादिविशिष्टस्य तस्य प्रत्यक्षसिद्धत्वादित्यर्थः । तस्य स्वाभिमतं पुच्छवाक्यनिर्दिष्टब्रह्मविषयकत्वं निष्प्रत्यूहं ब्रह्मण्यानन्दमयविलक्षणे नास्तित्वशङ्काया उपपादितत्वादित्याशयेनाह—अपोढेति । ननु ब्रह्मणि सर्वव्यवहारापोहोऽसिद्धः विद्वदव्यवहारविषयत्वादित्याशङ्क्याह—सर्वसमत्वाच्चेति । चशब्दः शङ्कानिरासार्थः । ब्रह्मणः सर्वजीवसाधारणत्वात्सर्वान्प्रति तस्य व्यवहार्यत्वं स्यात्, न चैतदस्तीत्यतः सर्वसाधारण्येन व्यवहारविषयत्वाभावात्तत्रासत्त्वशङ्का युक्तेत्यर्थः । यस्मादेवमिति । सर्वसमं ब्रह्मेत्येवंशब्दार्थः । अतस्तस्मादिति । अयमतःशब्दः श्रुतिगत इति बोद्धव्यम् । आचार्योक्तिमिति । ब्रह्मविद्ब्रह्म प्राप्नोति, विद्याप्राप्यं च ब्रह्म सर्वकारणं सर्वात्मकमित्येवमाद्याचार्योपदेशमित्यर्थः । श्रुतावविदुषो ब्रह्मप्राप्तिप्रश्नो दृश्यते, तस्यालम्बनमतःशब्दोपात्तं विवृणोति—सामान्यं हीति । समानमित्यर्थः । विद्वदविदुषोः समानं ब्रह्मेत्यत्र हिशब्दसूचितं हेतुमाह—आकाशादीति । प्रकृतस्याकाशादिकारणभूतब्रह्मणः सर्वप्रत्यक्तया पुच्छवाक्ये प्रतिष्ठापदेनोक्तत्वादित्यर्थः । यद्वा आकाशादिक्रमेण सर्वभूतकारणत्वात्कार्यभूतानां विदुषामविदुषां च साधारणं ब्रह्मेत्यर्थः । जीवानां स्वतः कार्यत्वाभावेऽपि स्थूलसूक्ष्मोपाधिविशिष्टतया कार्यत्वाभ्युपगमादिति भावः । अमुमिति । बुद्ध्यादिसाक्षितया प्रत्यक्षसिद्धस्यापि परमात्मन इन्द्रियागोचरत्वविवक्षया अदःशब्देन परोक्षतया निर्देश इति बोध्यम् । लोकमिति । लोकनं लोक इति व्युत्पत्त्या चैतन्यैकरसमित्यर्थः । इतः प्रेत्येति । मृत्वेत्यर्थः । २५

---

१. तस्यैष एव शारीर इत्यादेः तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीर आत्मा एष आनन्दमयः इति यथाश्रुतार्थः । मतान्तरे तु—तस्य विज्ञानमयान्तस्यात्मभूत एवानन्दमयः आनन्दमयस्याप्यात्मा—ततश्चानन्यात्मत्वमुक्तं भवतीति व्याख्या । अत्र स एव तस्यात्मेति व्यर्थम् । ब्रह्मपुच्छं प्रतिष्ठेत्यनेन तस्य प्रतिष्ठात्वोक्त्यैव सर्वान्तरत्वे सिद्धे अनपेक्षितं च । ३०

२. अथातोऽनुप्रश्नाः—अथ आचार्योपदेशानन्तरम्, अतः ब्रह्मणः सर्वसमत्वात् इमे प्रश्ना इत्यर्थः । अत्र मतान्तरम्—उताविद्वानित्यत्र उतेति छान्दसो दीर्घः अविद्वानितिच्छेदे आद्युदात्तत्वं स्यादित्याहुः । तन्न । आरण्यकस्वरस्य विजातीयत्वात् । अथातः संहिताया इत्यादौ दृष्टत्वात् आरण्यकस्वरविशेषविधायकग्रन्थसद्भावाच्च । अपि च उत अविद्वानित्युक्त्वा आहो विद्वानिति द्वितीयपक्षे विदुष उपादानात् प्रथमपक्षे अविद्वानित्येव साधु । उभयत्र विद्वानिति पदच्छेदे द्वितीयपक्षे विद्वत्पदपौनरुक्त्यात् एकदा विदुष उपादानेनैव अभीष्टसिद्धिः । अपि च अमुं लोकं गच्छति समश्नुते इति उभयोः प्रश्नयोः तुल्यविषयत्वे स्पष्टे प्रथमः गतिविषयः द्वितीयः भोक्तृत्वविषयः इत्यप्यसङ्गतमेव । ३५

इति द्वितीयोऽपि ऽव्योऽनुप्रश्ना इतिं बहुवचनाद्विद्वांसं प्रत्यन्यौ प्रश्नौ। यद्यविद्वान्सामान्यं कारणमपि ब्रह्म न गच्छति ततो विदुषोऽपि ब्रह्मागमनमाशङ्क्यते। अतस्तं प्रति प्रश्न आहो विद्वानिति विद्वान् ब्रह्मविदपि कश्चिदितः प्रेत्यामुं लोकं समश्नुते प्राप्नोति समश्नुते उ इत्येवं स्थितेऽयादेशे यलोपे च कृतेऽकारस्य प्लुतिः समश्नुता उ इत्युकारं च वक्ष्यमाणमधस्तादपकृष्य तकारं च पूर्वस्मादुतशब्दाद्व्यासज्याऽऽहो इत्येतस्मात्पूर्वमुतशब्दं संयोज्य पृच्छ्यत उताऽऽहो ५ विद्वानिति। विद्वान्समश्नुतेऽमुं लोकम्।

किंवा यथाऽविद्वानेव विद्वानपि न समश्नुत इत्यपरः प्रश्नः। द्वावेव वा प्रश्नौ विद्वदविद्वद्विषयौ। बहुवचनं तु सामर्थ्यप्राप्तप्रश्नान्तरापेक्षया घटते। "असद्ब्रह्मेति वेद चेत्" "अस्ति ब्रह्मेति चेद्वेद" इति श्रवणादस्ति नास्तीति संशयस्ततोऽर्थप्राप्तः किमस्ति नास्तीति प्रथमोऽनुप्रश्नः। ब्रह्मणोऽपक्षपातित्वादविद्वान्गच्छति न गच्छतीति द्वितीयः। ब्रह्मणः समत्वेऽप्यविदुष इव विदुषोऽप्यगमनमाशङ्क्यते। किं विद्वान्समश्नुते न समश्नुत इति तृतीयोऽनुप्रश्नः। एतेषां १० प्रतिवचनार्थमुत्तरग्रन्थ आरभ्यते तत्रास्तित्वमेव तावदुच्यते। यच्चोक्तं "सत्यं ज्ञानमनन्तं ब्रह्म" इति, तच्च कथं सत्यत्वमित्येतद्वक्तव्यमितीदमुच्यते सत्त्वोक्त्यैव सत्यत्वमुच्यते। उक्तं हि "सदेव सत्यम्" इति। तस्मात्सत्त्वोक्त्यैव सत्यत्वमुच्यते। कथमेवमर्थताऽवगम्यतेऽस्य ग्रन्थस्य शब्दानुगमादनेनैव ह्यर्थेनान्वितान्युत्तराणि वाक्यानि। "तत्सत्यमित्याचक्षते" "यदेष आकाश आनन्दो न स्यात्" इत्यादीनि।

## आनन्दगिरिटीका

१५ आह—असद्ब्रह्मेतीति। चेच्छब्दात्पाक्षिकसत्त्वावगमसामर्थ्यादित्यर्थः। सत्त्वं चेदुपपन्नं ब्रह्मणस्तावतैव सत्यत्वं सिध्यति सतो बाधासम्भवादित्यर्थः। एवमर्थतेति। सत्त्वोपपादनेन सत्यवस्तुविषयतेत्यर्थः।

## वनमाला

नन्वविद्वानपि किं ब्रह्म गच्छति? किं वा न गच्छति? इति कोटिद्वयोपेतः प्रश्न एक एव यथा विष्णुमित्रो विष्ण्वालयं गच्छति न वेत्यादौ, ततश्च कथं तस्य द्वित्वकल्पनमित्याशङ्क्य बहुवचनानुरोधादित्याह—ऽनुप्रश्ना इतीति। २० अन्यौ द्वाविति। न्यायसाम्यादिति भावः। ननु विदुषो ब्रह्मप्राप्त्यभावशङ्का निरालम्बनेत्याशङ्क्याह—यद्यविद्वानिति। विष्णुमित्रविषयकप्रश्नन्यायमनुसरति—द्वाविति। बहुवचनस्य गतिमाह—बह्विति। पूर्वत्रास्तित्वनास्तित्वरूपकोटिद्वयश्रवणसामर्थ्यप्राप्तं प्रश्नान्तरमपेक्ष्य बहुवचनं भविष्यतीत्यर्थः। तुशब्दोऽस्य पक्षस्य श्रुत्यभिमतत्वरूपविशेषद्योतनार्थः। प्रथमव्याख्याने हि "सोऽकामयत" इत्यारभ्यैव विद्वदविद्वद्विषयप्रश्ननिर्णय एव कर्तव्यतया प्राप्नोति; न चासौ "सोऽकामयत" इत्यारभ्य दृश्यते, तस्मात् "सोऽकामयत" इत्यादेरसङ्गतत्वपरिहारायायमेव २५ पक्षः श्रुत्यभिमत इति गम्यत इति मन्तव्यम्। सामर्थ्यप्राप्तेत्येतदेव विवृणोति—असदित्यादिना। यद्यपि पूर्वत्रासत्त्ववेदने दोषाभिधानेन गुणाभिधानेन च ब्रह्मणः सत्त्वं निर्णीतं निर्णीतत्वाच्च न संशयो नापि तन्मूलकः प्रश्नो घटते, तर्केषु प्रवीणस्य ब्रह्मजिज्ञासोरल्पोपपत्तिमात्रेणापरितुष्यतः श्रुत्युपदर्शितास्तित्वनास्तित्वरूपकोटिद्वयं चोपशृण्वतः संशयो न निवर्तत इति तन्मूलकः प्रश्नः श्रुत्यभिमत इति भावः। अपक्षपातित्वादिति। विद्वदविद्वत्साधारणत्वादित्यर्थः।

३० उत्तरग्रन्थेऽप्यव्यवहितस्य "सोऽकामयत" इत्यादेरवान्तरतात्पर्यमाह—तत्रास्तित्वमेवेति। तावच्छब्दः प्राथम्यार्थः। ननु "ब्रह्मविदाप्नोति परम्" इति सूत्रस्य संक्षेपतो व्याख्यानरूपेण "सत्यं ज्ञानम्" इति मन्त्रेण सह सूत्रं प्रति विस्तरतो व्याख्यानरूपस्यास्य ग्रन्थस्य समानार्थताया वक्तव्यत्वात्केनांशेन मन्त्रस्य "सोऽकामयत" इत्यादिब्राह्मणस्य च विवरणविवरणिभावेन समानार्थत्वमिति जिज्ञासायां तद्दर्शयितुमनुवदति—यच्चोक्तमिति। तत्रेति। तत्र मन्त्र संग्रहेणोक्तं सत्यत्वं कथमित्याकाङ्क्षायामेतद्विस्तरेण वक्तव्यमित्यर्थः। ननु ब्रह्मण्यसत्त्वशङ्का- ३५ निवृत्तिपरे ग्रन्थे सत्त्वमेवोच्यते न सत्य, मित्याशङ्क्य सत्सत्यशब्दयोः पर्यायत्वमुक्तं स्मारयति—उक्तं हीति। हिशब्दस्तयोः पर्यायत्वप्रसिद्धिद्योतकः, तथा च सत्त्वसत्यत्वयोरेकत्वान्नोक्तशङ्कावकाश इत्याशयेनाह—तस्मादिति। एवमर्थतेति। सत्त्वसाधनपरतेत्यर्थः। शब्दानुगमादिति परिहारं विवृणोति—अनेनैवेति। सत्त्वलक्षणेनैवार्थेन, न तु विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिलक्षणेनेत्यर्थः। इत्थं तात्पर्यमुपवर्ण्याक्षराणि व्याचिख्यासुरुत्तरग्रन्थव्यावर्त्यं पूर्वपक्ष-

तत्रासदेव ब्रह्मेत्याशङ्क्यते। कस्मात्? यदस्ति तद्विशेषतो गृह्यते यथा घटादि। यन्नास्ति तन्नोपलभ्यते यथा शशविषाणादि। तथा नोपलभ्यते ब्रह्म। तस्माद्विशेषतोऽग्रहणान्नास्तीति। तन्न, आकाशादिकारणत्वाद्-ब्रह्मणः। न नास्ति ब्रह्म कस्मादाकाशादि हि सर्वं कार्यं ब्रह्मणो जातं गृह्यते। यस्माच्च जायते किंचित्तदस्तीति दृष्टं लोके यथा घटाङ्कुरादिकारणं मृद्बीजादि। तस्मादाकाशादिकारणत्वादस्ति ब्रह्म। न चासतो जातं किंचिद्गृह्यते लोके कार्यम्। असतश्चेन्नामरूपादिकार्यं निरात्मकत्वान्नोपलभ्येत। उपलभ्यते तु, तस्मादस्ति ब्रह्म। असतश्चेत्कार्यं ५ गृह्यमाणमप्यसदन्वितमेव तत्स्यात्। न चैवं तस्मादस्ति ब्रह्म।

तत्र "कथमसतः सज्जायेते"ति श्रुत्यन्तरमसतः सज्जन्मासंभवमन्वाचष्टे न्यायतः। तस्मात्सदेव ब्रह्मेति युक्तम्। तद्यदि मृद्बीजादिवत्कारणं स्यादचेतनं तर्हि, न, कामयितृत्वात्। न हि कामयित्रचेतनमस्ति लोके। सर्वज्ञं हि ब्रह्मेत्य-

आनन्दगिरिटीका

ब्रह्मणः सत्त्वसाधनं नामासत्त्वव्यावृत्तिरेवेत्यभिप्रेत्यासत्त्वशङ्कामुद्भावयति—तत्रासदेवेति। विप्रतिपन्न- १० माकाशादि सत्पूर्वकं कार्यत्वादघटवदिति लौकिकव्याप्त्यवष्टम्भेन सत्कारणं तावत्सिद्धम्। तस्य च देशादिकारणत्वेन देशाद्यनवच्छिन्नत्वाद्ब्रह्मपदवाच्यत्वं सिद्धम्। तस्य विशेषतोऽनुपलम्भेनासच्छङ्का जायते। सा कारणत्वेन व्यावर्त्यतेऽनेन तु कारणत्वात्सत्त्वं साध्यत आश्रयासिद्धिप्रसङ्गादिति भावः। इतोऽपि जगदुपादाने नासत्त्वाशङ्का कार्येत्याह—न चासत इति।

न्यायत इति। असदन्वयादर्शनादिति युक्तित इत्यर्थः। एवमसत्त्वाशङ्कां निरस्याचेतनत्वाशङ्कां प्रधानवादिनः १५ प्रसङ्गान्निराचष्टे—तद्यदीति। यद्यपि सांख्यमते चेतनस्य निर्विकारत्वात्कामयितृत्वमसिद्धं तथाऽपि लौकिकव्याप्तिबलेन कामयितृत्वादचेतनत्वशङ्का निवर्त्यत इत्याह—न हीति। तर्हि लौकिकव्याप्तिबलेनैवानाप्तकामत्वमपि प्राप्त-

वनमाला

मुद्भावयति—तत्रासदेवेति। पूर्वोक्तसंशये सतीत्यर्थः। विशेषत इति। व्यवहारगोचरत्वेनेत्यर्थः। "इदं सर्वमसृजत, यदिदं किं च" इति श्रुत्युक्तं ब्रह्मणो जगत्कारणत्वमवलम्ब्य शङ्कां निराकरोति—तन्नेति। तन्नेति प्रतिज्ञां २० विवृणोति—न नास्ति ब्रह्मेति। आकाङ्क्षापूर्वकं हेतुं विवृणोति—कस्मादित्यादिना। कस्मादित्यनन्तरमाकाशादिकारणत्वादिति शेषः। हेतुं साधयति—आकाशादि हीति। कार्यत्वेनाभिमतमाकाशादिकं सर्वं ब्रह्मणः सकाशाज्जातत्वेन "इदं सर्वमसृजत" इति श्रुत्या गृह्यते, अतो ब्रह्मणि नाकाशादिकारणत्वहेतोरसिद्धिरित्यर्थः। आकाशादेः ब्रह्मकार्यत्वे श्रुत्यन्तरप्रसिद्धिसूचनार्थो हिशब्दः। इदानीं व्याप्तिमाह—यस्माच्चेति। चशब्दोऽवधारणार्थः सन्नस्तीत्यनेन सम्बध्यते। लोके किञ्चिद्यस्माज्जायते तदस्त्येवेति दृष्टमित्यर्थः। यद्भावकार्यं तत्सदुपादानकमिति व्याप्तिनिष्कर्षः। २५ निगमयति—तस्मादिति। उक्तव्याप्तिबलादित्यर्थः, अत्र विमतं जगत्सदुपादानकं कार्यत्वात्सम्मतवदिति सृष्टिश्रुत्यभिमतानुमाननिष्कर्षः। तच्च जगदुपादानभूतं सद्ब्रह्मैव तदतिरिक्तस्य सर्वस्य कल्पितत्वात्तायाः प्रागेव तत्र तत्र साधितत्वात्; तथा च न ब्रह्मण्यसत्त्वशङ्केति भावः। नन्वस्तु ब्रह्मण आकाशादिकारणत्वं मास्तु सत्त्वमित्यप्रयोजकत्वशङ्कां निराचष्टे—न चासत इति। ननु लोके कार्यस्यासज्जन्यत्वाग्रहेऽपि सर्गाद्यकार्यमसदुपादानकमेवास्तु; नेत्याह—असतश्चेति। कार्यमित्यनन्तरं जायेतेति शेषः। कार्यस्य ह्युपादानमात्मा सत्ताप्रदमिति यावत्; ३० तथा च असत उपादानत्वे नामरूपकर्मात्मकस्य जगतो निरात्मकत्वात्सत्ताहीनत्वासत्त्वेन रूपेण जगन्नोपलभ्येतेत्यर्थः। तर्कस्य विपर्यये पर्यवसानमाह—उपलभ्यते त्विति। "सन्घटः" "सन्पटः" इत्येवं सत्त्वेनैव जगदुपलभ्यत इत्यर्थः। फलितमाह—तस्मादिति। हेतोरप्रयोजकत्वासम्भवादित्यर्थः। यद्वा कारणत्वादित्यर्थः। विपक्षे बाधकान्तरप्रदर्शनपूर्वकं पुनस्तदस्तित्वमुपसंहरति—असतश्चेत्कार्यमित्यादिना। असत उपादानभूतात्कार्यं जगज्जायेत चेत्तर्हि यथा जायमानं जगदसदन्वितं जायते तथा गृह्यमाणमप्यसदन्वितत्वेनैव गृह्येतासज्जगदिति, यथा मृद्विकारजातं ३५ मृदन्विततत्वेनैव गृह्यते तद्वत्; न चैवं गृह्यते जगत् तस्माज्जगति सदुपादानकत्वानुमानस्याप्रयोजकत्वाभावात्कारणं ब्रह्मास्तीत्यर्थः। न्यायत इति। असदन्वयादर्शनादियुक्तित इत्यर्थः। तस्मादिति। श्रुत्यन्तरबलादपीत्यर्थः। मान्त्रवर्णिकसत्यत्वविवरणवन्मान्त्रवर्णिकचेतनत्वविवरणमप्यत्र कामयितृत्ववचनेन क्रियत इत्याशयेन तद्वचनाभिप्रायं शङ्कापूर्वकं कथयति—तद्यदीत्यादिना। तद्ब्रह्म। ननु कामस्याचेतनधर्मतायाः श्रुतिस्मृतिसिद्धत्वात्कथं कामेन ब्रह्मणोऽचेतनत्वव्यावृत्तिर्लभ्यत इत्याशङ्क्य लौकिकव्याप्तिबलेनेत्याशयेनाह—न हीति। यद्वा प्रसङ्गात्सांख्यशङ्का- ४०

**वोचाम । अतः कामयितृत्वोपपत्तिः । कामयितृत्वादस्मदादिवदनाप्तकामं चेत्, न । स्वातन्त्र्यात् यथाऽन्यान्परवशीकृत्य कामादिदोषाः प्रवर्तयन्ति न तथा ब्रह्मणः प्रवर्तकाः कामाः । कथं तर्हि, सत्यज्ञानलक्षणाः स्वात्मभूतत्वाद्विशुद्धा न तैर्ब्रह्म प्रवर्त्यते । तेषां तु तत्प्रवर्तकं ब्रह्म प्राणिकर्मापेक्षया । तस्मात्स्वातन्त्र्यं कामेषु ब्रह्मणः । अतो नानाप्तकामं ब्रह्म साधनान्तरानपेक्षत्वाच्च । किंच यथाऽन्येषामनात्मभूता धर्मादिनिमित्तापेक्षाः कामाः स्वात्मव्यतिरिक्तकार्यकरणसाधनान्तरापेक्षाश्च न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वं किं तर्हि स्वात्मनोऽनन्यास्तदेतदाह—**

### आनन्दगिरिटीका

मित्याशङ्क्याऽऽह—**कामयितृत्वादित्यादिना** । जीवानामनाप्तानन्दत्वं परवशत्वान्न तदस्ति ब्रह्मण इत्यर्थः । कथंभूतास्तर्हि ब्रह्मणः कामा इत्याशङ्कायामाह—**सत्यज्ञानलक्षणा इति** । सत्यज्ञान(नं) लक्षणं स्वरूपं येषां ते तथोक्ताः । एतदुक्तं भवति, मायाप्रतिबिम्बितं हि ब्रह्म जगतः कारणं मायापरिणामैरेव कामैः कामयितृ । तेषां च परिणामानामविद्याद्यनभिभूतचिद्व्याप्तत्वात्सत्यज्ञानात्मकत्वं ब्रह्मतादात्म्याच्चाधर्माद्यननुस्पृष्टत्वेन शुद्धत्वम् । ततो जीवकामवैलक्षण्यं सिद्धमिति । तर्हि ब्रह्मणः कामाः पुण्यकारिणामप्यनिष्टफलप्राप्त्यनुकूलाः स्युः स्वातन्त्र्यादित्याशङ्क्याऽऽह—**तेषां त्विति** । कामस्य शरीरादिसम्बन्धजन्यत्वप्रसिद्धेर्ब्रह्मणः शरीरादिमत्त्वप्रसङ्ग इति नाऽऽशङ्कनीयमित्याह—**साधनान्तरानपेक्षत्वाच्चेति** । कामसंस्कारवत्या मायया ब्रह्मतादात्म्यात्तत्परिणामानां कामानां ब्रह्मतादात्म्यान्न शरीरादिनिमित्तापेक्षाऽस्तीत्यर्थः ।

### वनमाला

मुद्भाव्य कामश्रुत्या निराकरोति—**तद्यदीत्यादिना** । तदाह सूत्रकारः—"कामाच्च नानुमानापेक्षा" इति । अनुमानशब्दितं प्रधानं कारणत्वेन नापेक्षितव्यं कारणस्य "सत्यं ज्ञानम्" इति चिद्रूपत्वश्रवणात्कामयितृत्वश्रवणाच्चेति तदर्थः । मन्त्रेऽपि संग्रहेण ब्रह्मणश्चेतनत्वमुक्तमित्याह—**सर्वज्ञमिति** । **अवोचामेति** । मन्त्रगतज्ञानपदविवेचनावसर इत्यर्थः । यद्वा कामयितृत्ववचनादिना ब्रह्मणश्चेतनत्वसिद्धावपि सृष्टेः पूर्वं शरीराद्यभावेन ज्ञानासम्भवात्सृष्ट्यनुकूलकामानुपपत्तिरित्याशङ्क्याह—**सर्वज्ञमिति** । "पश्यत्यचक्षुः" इत्यादिश्रुत्या परमेश्वरज्ञानस्य चैतन्यरूपस्य मायावृत्तिरूपस्य वा करणाद्यनपेक्षत्वश्रवणान्नोक्तशङ्कावकाश इति भावः । **अत इति** । चेतनत्वात् सर्वज्ञत्वाद्वेत्यर्थः । ब्रह्मणः कामयितृत्वे तस्याप्तकामत्वश्रुतिविरोधमाशङ्कते—**कामयितृत्वादिति** । अनाप्तकामत्वे कामयितृत्वं न प्रयोजकम्, आप्तकामानामपि ब्रह्मविदां परानुग्रहार्थं विद्यासम्प्रदायप्रवर्तनादौ कामयितृत्वदर्शनात्; किं तु कामवश्यत्वम्, तच्च ब्रह्मणो नास्ति, अतो नाप्तकामत्वश्रुत्या सह कामयितृत्वश्रुतेर्विरोध इति परिहरति—**न; स्वातन्त्र्यादिति** । ब्रह्मणः कामेषु स्वातन्त्र्यमस्मदादिकामवैलक्षण्योक्तिपूर्वकं प्रपञ्चयति—**यथाऽन्यानित्यादिना** । ननु ब्रह्मकामा दोषरूपा ब्रह्मप्रवर्तकाश्च न भवन्ति चेत्तर्हि ते कथम्भूता यतस्तैर्ब्रह्म न प्रवर्त्यत इति पृच्छति—**कथं तर्हीति** । विशुद्धा इत्युत्तरम् । ब्रह्मकामानां विशुद्धत्वे ब्रह्मैवोपमानमित्याशयेनाह—**सत्यज्ञानलक्षणा इति** । "सत्यं ज्ञानम्" इति मन्त्रोक्तब्रह्मण इव लक्षणं दोषरहितं स्वरूपं तेषां ते तथोक्ताः । तेषां विशुद्धत्वे हेतुमाह—**स्वात्मभूतत्वादिति** । स्वस्य ब्रह्मण आत्मभूता या माया तत्त्वात् तत्परिणामत्वादिति यावत् । आत्मभूतत्वं च मायायास्तादात्म्यापन्नत्वमुपाधित्वं वा । एतदुक्तं भवति—ब्रह्मोपाधिभूतमायाया विशुद्धत्वात्तत्परिणामरूपाणां कामानां विशुद्धत्वं मायाया ब्रह्मवश्यत्वात्कामानामपि तद्वश्यत्वं चेति । ननु तर्हि ब्रह्मणः कामाः पुण्यकारिणामप्यनिष्टफलप्राप्त्यनुकूलाः स्युः स्वातन्त्र्यादित्याशङ्क्याह—**तेषां त्विति** । तुशब्दोऽवधारणार्थः । तद्ब्रह्म प्राणिकर्मापेक्षयैव प्राणिकर्मफलप्रदानां स्वकामानां प्रवर्तकं न प्राणिकर्मानपेक्षया, यथा सेवकानां कर्मापेक्षया राजा स्वकामानां सेवकफलप्रदानां प्रवर्तकस्तथेत्यर्थः । एतेन ब्रह्मणः स्वकामेषु सापेक्षत्वे कथं स्वातन्त्र्यमिति शङ्कापि निरस्ता, लोके सेवापेक्षस्यापि राज्ञः स्वातन्त्र्यप्रसिद्धिदर्शनेन ब्रह्मणोऽपि "सर्वेश्वरः" इत्यादिश्रुतिसिद्धस्वातन्त्र्योपपत्तेरित्याशयेनाह—**तस्मादिति** । कामानां विशुद्धत्वादित्यर्थः । **अत इति** । स्वातन्त्र्यादित्यर्थः । **साधनान्तरेति** । ब्रह्मणः स्वकामेषु स्वकीयसाधनान्तरानपेक्षत्वाच्च नानाप्तकामं ब्रह्मेति प्रतिपत्तव्यमित्यर्थः । साधनान्तरानपेक्षत्वमेव व्यतिरेकोदाहरणेन प्रपञ्चयति—**किं चेत्यादिना** । **अनात्मभूता इति** । अस्वाधीना इत्यर्थः । यद्वा दोषरूपा इत्यर्थः । अथ वा आत्मव्यतिरिक्तसाधनोद्भूता इत्यर्थः । अस्मिन्पक्षेऽस्यैव विवरणम्—**धर्मादीत्यादि** । कामानां साधनापेक्षत्वे हि साधनविलम्बात्कामितार्थालाभप्रसक्त्या ब्रह्मणोऽनाप्तकामत्वं स्यात्, साधनान्तरानपेक्षत्वे तु नायं दोष इति

**[1]सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳसर्वमसृजत।**

**सोऽकामयत स आत्मा यस्मादाकाशः संभूतोऽकामयत कामितवान्। कथं, बहु स्यां बहु प्रभूतं स्यां भवेयम्। कथमेकस्यार्थान्तराननुप्रवेशे बहुत्वं स्यादित्युच्यते। प्रजायेयोत्पद्येय। न हि पुत्रोत्पत्त्येवार्थान्तरविषयं बहुभवनं कथं तर्ह्यात्मस्थानाभिव्यक्तनामरूपाभिव्यक्त्या। यदाऽऽत्मस्थे अनभिव्यक्ते नामरूपे व्याक्रियेते तदा नामरूपे आत्मस्वरूपापरित्यागेनैव ब्रह्मणोऽप्रविभक्तदेशकाले सर्वावस्थासु व्याक्रियेते तदा तन्नामरूपव्याकरणं ब्रह्मणो बहुभवनम्। नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यतेऽल्पत्वं वा। यथाऽऽकाशस्याल्पत्वं बहुत्वं च वस्त्वन्तरकृतमेव। अतस्तद्द्वारेणैवाऽऽत्मा बहु भवति। न ह्यात्मनोऽन्यदनात्मभूतं तत्प्रविभक्तदेशकालं सूक्ष्मं**

आनन्दगिरिटीका

**तद्द्वारेणैवेति। नामरूपशक्त्यात्मकमायापरिणामद्वारेणैव। नामरूपशक्त्यात्मिका जडरूपा मायाऽङ्गीकृता चेत्तर्हि सा प्रधानवत्पृथक्सतीत्यद्वैतहानिरित्याशङ्क्याऽऽह—न हीति। आत्मातिरिक्तं किं स्वतः सिध्यति परतो**

वनमाला

भावः। कार्यं स्थूलशरीरम्, कारणं लिङ्गशरीरम्, स्वात्मव्यतिरिक्तानि कार्यकारणान्येव स्वात्मापेक्षया साधनान्तराणीत्यर्थः। **न तथा ब्रह्मण इति।** कामानामिति शेषः। **किं तर्हीति।** यदि ब्रह्मणः कामाः स्वात्मव्यतिरिक्तसाधनापेक्षा न भवन्ति तर्हि किं तेषां साधनमित्यर्थः। उत्तरमाह—**स्वात्मनोऽनन्या इति।** स्वात्ममात्रसाध्या ब्रह्मणः कामा इत्यर्थः। **तदेतदिति।** तद्विशुद्धत्वेन निरूपितमेतत्स्वात्ममात्रसाध्यत्वेन च निरूपितं कामानां स्वरूपमभिप्रेत्य ब्रह्मणः कामयितृत्वमाह श्रुतिरित्यर्थः। प्रकृते ब्रह्मणि स इति पुंलिङ्गनिर्देशो न सन्निहितब्रह्मपदापेक्षः, किं तु "आत्मन आकाशः सम्भूतः" इत्यादौ व्यवहितात्मपदापेक्ष इत्याशयेनाह—**स आत्मेति।** कामनाप्रकारं प्रश्नपूर्वकं दर्शयति—**कथमित्यादिना।** एकस्य बहुभवनं विरुद्धमिति शङ्कते—**कथमेकस्येति।** नन्वेकस्यापि मृद्वस्तुनो विकारात्मना बहुभवनं दृष्टमित्याशङ्क्याह—**अर्थान्तराननुप्रवेश इति।** यद्यप्यर्थान्तरानुप्रवेशाभावे सत्येकस्य बहुत्वं विरुद्धं तथापि प्रकृते न बहुभवनस्यानुपपत्तिः अर्थान्तरानुप्रवेशेनैव बहुत्वस्य विवक्षितत्वादिति परिहरति—**उच्यत इति।** **उत्पद्येयेति।** पूर्वसिद्धस्य ब्रह्मणः स्वत उत्पत्त्ययोगादाकाशाद्यर्थान्तरानुप्रवेशेनैवोत्पत्तिर्विवक्षिता वाच्या, अतः प्रजायेयेत्येतदर्थान्तरानुप्रवेशेन बहुभवनस्योपपादकमिति भावः। ननु पितुरर्थान्तरभूतैः पुत्रादिभिर्यथा तस्य बहुभवनं तथा किं ब्रह्मणोऽर्थान्तरभूतैराकाशादिविकारैर्बहुभवनं विवक्षितम्? नेत्याह—**न हीति।** अर्थान्तरपदं भिन्नसत्ताकवस्तुपरम्, तत्प्रयुक्तस्य बहुभवनस्यामुख्यत्वेन प्रकृते तद्ग्रहणे हेत्वभावादिति भावः। नन्वसङ्गस्वभावस्य ब्रह्मण आकाशादिविकारतादात्म्यमादायापि बहुभवनं न सम्भवतीत्यभिप्रायेण शङ्कते—**कथं तर्हीति।** वस्तुतस्तदसम्भवेऽपि काल्पनिकं तादात्म्यमादाय तदुपपद्यत इत्याशयेन परिहरति—**आत्मस्थेति।** आत्मनि स्थिते अनभिव्यक्ते ये नामरूपे तयोः सर्गादावभिव्यक्त्या आभिमुख्येन तादात्म्येन व्यक्त्या स्थूलीभावापत्त्या नामरूपाधिष्ठानभूतस्यात्मनो बहुभवनमित्यर्थः। उक्तं विवृणोति—**यदेति।** **आत्मस्वरूपापरित्यागेनैवेति।** कारणभूतात्मतादात्म्येनैव, न ततो भेदेनेत्यर्थः। तमेवापरित्यागं विवृणोति—**ब्रह्मणोऽप्रविभक्तेति।** ब्रह्मणः सकाशादप्रविभक्तौ प्रविभागरहितौ देशकालौ ययोरिति विग्रहः। तन्मात्रावस्था स्थूलभूतावस्था अण्डावस्था तदन्तर्वर्तिविकारावस्था चेत्येताः कार्यगता अवस्थाः सर्वावस्थाशब्देनोच्यन्ते। **नान्यथेति।** अन्यथा विविधपरिणामिविकारतया बहुत्वापत्तिर्नोपपद्यत इत्यत्र हेतुं सूचयति—**निरवयवस्येति।** लोके सावयवस्यैव मृदादेः परिणामित्वदर्शनादिति भावः। अल्पत्वं वेति दृष्टान्तार्थम्। एवं परिणामितया बहुत्वादिकं निरस्य नामरूपोपाधिकृतमेव ब्रह्मणस्तदित्यत्र दृष्टान्तमाह—**यथेति वस्त्वन्तरकृतमिति।** घटाद्युपाधिकृतमित्यर्थः। इदं च ब्रह्मणो नानाजीवभावेन बहुभवने उदाहरण-

---

१. सोऽकामयतेत्यादिना सृष्टिवचनं ब्रह्मणः अस्तित्वे प्रमाणप्रदर्शनपरं भाष्यम्। मतान्तरे तु गुणविशिष्टस्य प्राप्यत्वप्रदर्शनपरम्। तत्र च ब्रह्मगतानां मुक्तप्राप्यगुणानां बहूनामग्रहणात् न्यूनता।

व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वा वस्तु विद्यते। अतो नामरूपे सर्वावस्थे ब्रह्मणैवाऽऽत्मवती, न ब्रह्म तदात्मकम्। ते तत्प्रत्याख्याने न स्त एवेति तदात्मके उच्येते। ताभ्यां चोपाधिभ्यां ज्ञातृज्ञेयज्ञानशब्दार्थादिसर्वसंव्यवहारभाग्ब्रह्म। स आत्मैवंकामः संस्तपोऽतप्यत। तप इति ज्ञानमुच्यते। "यस्य ज्ञानमयं तपः" इति श्रुत्यन्तरादाप्तकामत्वाच्चेतरस्यासम्भव एव तापसः। तत्तपोऽतप्यत तप्तवान्। सृज्यमानजगद्रचनादिविषयामालोचनामकरोदात्मेत्यर्थः। स एव-
५ मालोच्य तपस्तप्त्वा प्राणिकर्मादिनिमित्तानुरूपमिदं सर्वं जगद्देशतः कालतो नाम्ना रूपेण च यथानुभवं सर्वैः प्राणिभिः सर्वावस्थैरनुभूयमानमसृजत सृष्टवान्।

आनन्दगिरिटीका

वा ? नाऽऽद्यः। जाडयहानेरतिरेकहानेश्च। न द्वितीयः। प्रमासंसर्गानिरूपणात्। न च भिन्नदेशकालयोः संयोगादि सम्भवति विषयविषयिभावो वा। नियामकगवेषणात्। न च स्वभाव एव सम्बन्धः। द्वयोः स्वभावयोः सम्बन्धत्वे-
१० नैवोपक्षये सम्बन्ध्यभावप्रसङ्गात्। न हि स्वात्मानं प्रति स्वस्यैव सम्बन्धित्वमात्माश्रयापातात्। तथाविधार्थाभावे व्यवहारमात्रप्रवर्तकत्वे च मिथ्यांव्यवहारापातादनिर्वचनीयवाद एव पर्यस्यतीति भावः। यस्मादात्मातिरिक्तं वस्तु न सम्भाव्यते तस्मादात्मतादात्म्येनैव नामरूपयोः सिद्धिरित्याह—अत इति। तर्हि ब्रह्मणः सप्रपञ्चताप्रसङ्ग इति न वाच्यमित्याह—न ब्रह्मेति। न ब्रह्म तादात्म्यकमजडत्वात्तत्परिहारेणापि सिद्धिसम्भवादित्यर्थः। कथं तर्हि ते ब्रह्मात्मके तत्राऽऽह—ते तदिति। स्वप्नावबुद्धनभोभक्षणवदारोपितस्यानुभवप्रत्याख्यानेन सिद्धयसम्भवादनुभाव्ये
१५ नामरूपे अनुभवात्मकब्रह्मात्मके कथ्येते न त्वैक्याभिप्रायेणेत्यर्थः। न केवलं ब्रह्मणो बहुरूपत्वं मायोपाधिकं सर्वव्यवहारास्पदत्वं चेत्याह—ताभ्यामिति। प्रवेशस्यानिर्वाच्यताद्योतनेन जीवस्य ब्रह्मात्मतायां प्रवेशवाक्यस्य

वनमाला

मिति बोध्यम्। जगदात्मना बहुभवने तु रज्ज्वादेः सर्पदण्डधारादिभावेन बहुभवनमुदाहर्तव्यम्। अतस्तद्द्वारेणैवेति। परिणामितया बहुत्वासम्भवात्स्वाध्यस्तनामरूपद्वारेणैवात्मा बहुत्वमापद्यत इत्यर्थः। नामरूपयोरविभक्तदेशकालत्वं
२० साधयति—न हीति। अन्यदित्यस्य विवरणमनात्मभूतमिति। यत्सूक्ष्मं व्यवहितं विप्रकृष्टं भूतवर्तमानभविष्यदादिरूपं वात्मनोऽन्यज्जगद्वस्तु तत्तस्माद्ब्रह्मणः सकाशात्प्रविभक्तदेशकालं यथा भवति तथा न हि विद्यत इति योजना। कल्पितस्य जगतोऽधिष्ठानब्रह्मतादात्म्यशून्यतयावस्थानायोगादिति भावः। नामरूपयोर्ब्रह्मणि कल्पितत्वे स्थिते फलितमाह—अत इति। ब्रह्मणैवात्मवती इति। ब्रह्मसत्तयैव सत्तावती इत्यर्थः। न स्वतः सत्तावती इत्येवकारार्थः। वैपरीत्यं निषेधति—न ब्रह्मेति। स्वप्रकाशस्य ब्रह्मणो नामरूपात्मके जगत्यध्यस्तत्वेन तत्सत्तया सत्तावत्त्वे स्वीकृते
२५ सति जगदान्ध्यं प्रसज्येत, जगतः स्वतःप्रकाशात्मकत्वाभावादध्यस्तस्य जडत्वनियमेन ब्रह्मणोऽपि स्वप्रकाशत्वासम्भवाच्च; तस्माद्ब्रह्म नामरूपसत्तया सत्तावन्न भवतीत्यर्थः। ब्रह्मणैवात्मवतो इत्युक्तं सहेतुकं विवृणोति—ते तदिति। तत्प्रत्याख्याने ब्रह्मप्रत्याख्याने, ब्रह्मसत्तां विनेति यावत्, ते नामरूपे न स्त एवेति कृत्वा ते तदात्मके ब्रह्मात्मके उच्येते इत्यर्थः। ब्रह्मणो नामरूपोपाधिकबहुभवनं कीदृशमित्याकाङ्क्षामाह—ताभ्यां चेति। ताभ्यामेव न स्वत इत्यर्थः। तत्रायं विभागः—बुद्ध्युपाधिकं ब्रह्म ज्ञातृव्यवहारभाक् बुद्धिवृत्त्युपाधिकं ब्रह्म ज्ञानमिति
३० व्यवहारभाग्, विषयोपाधिकं ब्रह्म ज्ञेयव्यवहारभाक्, नामोपाधिकं ब्रह्म शब्दव्यवहारभाक्, सामान्यतो जडोपाधिकं ब्रह्मार्थव्यवहारभागिति। आदिपदं कर्मादिसंग्रहार्थम्। एवं सर्वव्यवहारभाग्ब्रह्मेत्यर्थः। श्रुत्यन्तरे मयट् स्वार्थिक इति भावः। इतरस्य कायक्लेशादिरूपस्य तपसः सम्भवः एव नास्तीत्यत्र हेत्वन्तरमाह—आप्तकामत्वाच्चेति। इदमुपलक्षणम्; प्राक्सृष्टेर्ब्रह्मणः कायाभावाच्चेत्यपि द्रष्टव्यम्। आलोचनमित्यनेन "तपः आलोचने" इति वैयाकरणप्रसिद्धिरपि प्रकृते तपो ज्ञानमित्यत्र हेतुरिति सूचितं भवति। सृज्यमानजगद्वैचित्र्ये
३५ निमित्तं सूचयति—प्राणिकर्मादिति। उपासनादिलक्षणं श्रुतमादिपदार्थः, "यथाकर्म यथाश्रुतम्" इति श्रुतेः। आनुरूप्यमेव विवृणोति—देशत इत्यादिना। सर्वावस्थैरिति। देवत्वमनुष्यत्वतिर्यक्त्वाद्यवस्थैरित्यर्थः। यत्किंचेदमवशिष्टं जगत् तत्सर्वं सृष्टवानिति योजना। "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य" इत्येषु तच्छब्दा जगत्पराः।

यदिदं किञ्च। [1]तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च।

यदिदं किञ्च यत्किञ्चेदमविशिष्टम्। तदिदं जगत्सृष्ट्वा किमकरोदित्युच्यते—तदेव सृष्टं जगदनुप्राविशदिति। तत्रैतच्चिन्त्यं कथमनुप्राविशदिति। किं यः स्रष्टा स तेनैवाऽऽत्मनाऽनुप्राविशदुतान्येनेति? किं तावद्युक्तम्? क्त्वाप्रत्ययश्रवणाद्यः स्रष्टा स एवानुप्राविशदिति।

ननु न युक्तं, मृद्वच्चेत्कारणं ब्रह्म तदात्मकत्वात्कार्यस्य। कारणमेव हि कार्यात्मना परिणतमित्यतोऽप्रविष्टे ५ इव कार्योत्पत्तेरूर्ध्वं पृथक्कारणस्य पुनः प्रवेशोऽनुपपन्नः। न हि घटपरिणामव्यतिरेकेण मृदो घटे प्रवेशोऽस्ति। यथा घटे चूर्णात्मना मृदोऽनुप्रवेश एवमन्येनाऽऽत्मना नामरूपकार्येऽनुप्रवेश आत्मन इति चेच्छ्रुत्यन्तराच्च "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इति। नैवं युक्तमेकत्वाद्ब्रह्मणः। मृदात्मनस्त्वनेकत्वात्सावयवत्वाच्च युक्तो घटे मृदश्चूर्णात्म-

आनन्दगिरिटीका

तात्पर्यं दर्शयितुं विचारमारभते—तत्रैतच्चिन्त्यमित्यादिना। विमर्शे सति क्त्वाश्रुत्यनुरोधात्स्रष्टुरेव प्रवेश इत्युक्तं १० सिद्धान्तिना। पूर्ववाद्याह—ननु न युक्तमिति। सृष्टिप्रवेशक्रिययोः पूर्वापरकालीनत्वसम्भवे सति कर्त्रैक्यं क्त्वाश्रुत्या बोध्येत न तु प्रवेशस्योत्तरकालता सम्भवति। सृष्टिसमय एवोपादानस्य कार्यात्मनाऽवस्थितत्वादित्यर्थः। एतदेव विवृणोति—कारणमेव हीति। अप्रविष्टे यथा मठादौ देवदत्तस्य प्रवेशो दृष्टस्तथा कार्योत्पत्तेरूर्ध्वं पृथक्प्रवेशो न सम्भवतीत्यर्थः। सिद्धान्त्येकदेशिनां मतमुद्भाव्य पूर्ववादी दूषयति—यथा घट इत्यादिना। स्रष्टुरन्यस्य वा प्रवेशो

वनमाला　　१५

प्रवेशपदार्थनिर्णयप्रयोजनकं विचारमारभते—तत्रैतच्चिन्त्यमित्यादिना। कथंशब्दसूचितं विमर्शमेव विवृणोति—किमिति। किं परमात्मा स्वेनैवात्मनानुप्राविशत्, किं वा स्वविकाराद्यात्मनानुप्राविशदित्यर्थः। तत्र प्रथमं सिद्धान्तमाह—किं तावद्युक्तमित्यादिना। अन्येनात्मना प्रवेश इति स्वमतमुत्थापयितुं प्रथमं पूर्ववादिसिद्धान्तं निराकरोति—ननु न युक्तमित्यादिना। कार्यस्य बुद्ध्यादेरुत्पत्तिप्रभृतिकारणात्मकत्वात्कारणेन व्याप्तत्वात्कार्यभूत-देहाद्युत्पत्तिव्यतिरेकेण कार्ये देहादौ प्रवेश इत्येतन्न युक्तमित्यर्थः। उक्तमेव विवृणोति—कारणमेव हीति। कारणमेव २० कार्यात्मना परिणतमिति प्रसिद्धमित्यर्थः। ततः किम्? अत आह—तत इति। कारणेन कार्यस्य जन्मप्रभृति व्याप्तत्वादित्यर्थः। अप्रविष्टस्येवेति। देवदत्तादेरिति शेषः। उपादानकारणस्य कार्याकारपरिणतिव्यतिरेकेण कार्ये प्रवेशो नास्तीत्यत्र दृष्टान्तमाह—न हीति। एवं ब्रह्मणस्तेनैवात्मनानुप्रवेश इति सिद्धान्तं निराकृत्यान्येनात्मनानुप्रवेश इति स्वमतं दृष्टान्तेनाह—यथा घट इत्यादिना। पार्थिवानि रजांस्यत्र चूर्णशब्दार्थः। घटोपादानभूताया मृदो मृज्जातीयचूर्णात्मना घटे यथानुप्रवेशः तथा परस्यान्येन जीवेनात्मनानुप्रवेश इह विवक्षित इत्यर्थः। अत्रार्थे २५ छन्दोगश्रुतिसम्वादमाह—श्रुत्यन्तराच्चेति। सिद्धान्ती निराकरोति—नैवं युक्तमेकत्वाद्ब्रह्मण इति। परमात्मनो जीवेनैक्याच्चूर्णस्य मृदन्यत्ववज्जीवस्य ब्रह्मान्यत्वं नास्ति, तथा च मृदश्चूर्णात्मनेव ब्रह्मणोऽन्येव जीवेनात्मना प्रवेशकल्पनं न युक्तमेवेत्यर्थः। श्रुत्यन्तरेऽपि जीवस्यान्यत्वाश्रवणात् "तत्त्वमसि" इत्यभेदस्यैव श्रवणाच्च अन्येनात्मनेति वदतः पूर्ववादिनो न तदप्यनुकूलमिति भावः। संग्रहवाक्यं दृष्टान्तवैषम्योक्तिपूर्वकं विवृणोति—

[1] तत्सृष्ट्वा तदेवानुप्राविशत्—इत्यत्र सृष्ट्यनन्तरं तत्र विशेषाभिव्यक्तिरेव प्रवेशो नाम पूर्वमेव ३० ब्रह्मणः सर्वव्यापित्वात् इत्युक्तम्। अत एव सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा अभिवदन् यदास्ते इत्यत्र प्रवेशमर्थसिद्धं मत्वा अभिवदनादिकमेव तत्कार्यमुक्तम्। मतान्तरे तु परमेश्वरस्य प्रवेशः तत्र विशेषाभिव्यक्तिरिति वक्तुं न शक्यं जीवेशभेदात् ईश्वरस्य जीवरूपेण प्रवेशानङ्गीकारात्। अतः गोत्वादेः अभिनवोत्पन्नशिशौ सम्बन्धवत् सम्बन्ध इत्युक्तं तत् प्रवेशपूर्वोत्तरकालयोरविशेषात् अनन्त-पदेनैवोक्तत्वाच्च अनपेक्षितम् सम्बन्धमात्रपरत्वे प्रवेशपदासामञ्जस्यात्। सृष्ट्वा प्राविशत् इत्युत्तर- ३५ कालवाचिक्त्वाप्रत्ययायोगश्च। उत्पत्तिकाले ब्रह्मसम्बन्धाभावप्रसङ्गश्च। यो वेद निहितं गुहाया-मित्यनेन स्पष्टतरमुक्तस्य उपपादनानपेक्षणाच्च। अस्माकं तु प्रवेशः प्रतिबिम्बत्वम् पूर्वमपि यद्यप्यात्मा सर्वत्र विद्यते इदानीं तु बिम्बरूपेण प्रतिबिम्बरूपेण च वर्तत इति विशेषः।

नाऽनुप्रवेशः। मृदश्चूर्णस्याप्रविष्टदेशवत्त्वाच्च न त्वामन एकत्वे सति निरवयवत्वादप्रविष्टदेशाभावाच्च प्रवेश उपपद्यते। कथं तर्हि प्रवेशः स्यात्? युक्तश्च प्रवेशः, श्रुतत्वात्तदेवानुप्राविशदिति। सावयवमेवास्तु तर्हि सावयवत्वान्मुखे हस्तप्रवेशवन्नामरूपकार्ये जीवात्मनाऽनुप्रवेशो युक्त एवेति चेन्नाशून्यत्वात्। न हि कार्यात्मना परिणतस्य नामरूपकार्यदेशव्यतिरेकेणाऽऽत्मशून्यः प्रदेशोऽस्ति यं प्रविशेज्जीवात्मना। कारणमेव चेत्प्रविशेज्जीवात्मत्वं जह्याद्यथा
५ घटो मृत्प्रवेशे घटत्वं जहाति। तदेवानुप्राविशदिति च श्रुतेर्न कारणानुप्रवेशो युक्तः।

कार्यान्तरमेव स्यादिति चेत्—"तदेवानुप्राविशदि" ति जीवात्मरूपं कार्यं नामरूपपरिणतं कार्यान्तरमेवाऽऽपद्यत इति चेन्न। विरोधात्। न हि घटो घटान्तरमापद्यते व्यतिरेकश्रुतिविरोधाच्च। जीवस्य नामरूपकार्यव्यतिरेकानु-

आनन्दगिरिटीका

न सम्भवतीति चेत्कथं तर्हि प्रवेशो वाच्य इति सिद्धान्त्येकदेश्याह—कथमिति। नास्त्येवेति न वक्तव्यमित्याह—
१० युक्तश्चेति। स एवाऽऽह गतिं—सावयवमेवेति। पूर्ववादी दूषयति—नाशून्यत्वादिति। कार्यात्मना परिणतस्य ब्रह्मणो नामरूपात्मकं कार्यमेव देशस्तद्व्यतिरेकेण न ह्यन्यः प्रदेशोऽस्ति। यत्कारणमेव कार्याकारेण परिणतं तत्प्रति कार्यविशेषो जीवात्मा प्रवेक्ष्यतीति न शङ्कनीयमित्याह—कारणमेव चेदिति। कार्यविशेषस्य प्रवेशमङ्गीकृत्य दूषणमुक्तं स न सम्भवति श्रुतिविरोधादित्याह—तदेवेति।

कारणपरामर्शकेन तच्छब्देन कार्यमुपलक्ष्य कार्यान्तरस्य तत्र प्रवेशो विधीयतेऽप्राप्तदेशसम्भवात्। अतो न
१५ श्रुतिविरोध इति सिद्धान्त्येकदेशिमतमुद्भाव्य दूषयति—कार्यान्तरमेवेत्यादिना।

वनमाला

मृदात्मनस्त्वित्यादिना। मृज्जातीयस्य त्वित्यर्थः। सावयवत्वाच्चेति। मूर्ततया प्रवेशयोग्यत्वाच्चेत्यर्थः। चूर्णस्येति। तस्य स्वेनाप्रविष्टदेशवत्त्वाच्चेत्यर्थः। एकत्वे सतीति। एकत्वादित्यर्थः। ननु यदि जीवस्य ब्रह्मानन्यत्वाद्ब्रह्मणश्च स्वतो व्यापकत्वादित्यादियुक्त्वा अन्येनात्मना प्रवेशस्त्वया निराक्रियते, तर्हि तवापि कथं प्रवेशनिर्वाहः
२० तेनैवात्मनानुप्रवेशासम्भवस्याप्युक्तत्वादिति मत्वा पूर्ववादी पृच्छति—कथं तर्हीति। मास्तु प्रवेश इति त्वयापि वक्तुं न शक्यत इत्याह—युक्तश्चेति। तस्मादन्येनात्मनानुप्रवेश इति वदता मयैव प्रवेशनिर्वाहः कर्तव्य इति भावः। कथमित्याशङ्क्याह—पूर्ववादी—सावयवमेवास्तु तर्हीति। यदि ब्रह्मणो निरवयवत्वे प्रवेशायोग्यता तर्हि सावयवमेव ब्रह्मास्तु उपादानत्वान्मृदादिवत्। ततश्च प्रवेशोपपत्तिरित्याह—सावयवत्वादिति। यथा शिरःपाण्यादिमतो देवदत्तस्य हस्तादिरवयवः तथा नामरूपशब्दितकार्यप्रपञ्चाकारेण परिणममानस्य ब्रह्मणोऽप्यवयवविशेषो जीवः, तथा
२५ च देवदत्तस्य हस्तात्मना मुखबिले प्रवेशवत्स्वावयवभूतजीवात्मना ब्रह्मणः शरीरलक्षणकार्ये प्रवेश उपपद्यत इत्यर्थः। उक्तं पूर्ववादिना प्रवेशनिर्वाहं सिद्धान्तो निराकरोति—नाशून्यत्वादिति। प्रवेष्टव्यप्रदेशशून्यत्वाद्ब्रह्मणो नोक्तविधयापि प्रवेशो युक्त इत्यर्थः। उक्तमेव विवृणोति—न हीति। कार्यात्मना परिणतस्य ब्रह्मणस्तावन्नामरूपात्मककार्यदेशे प्रवेशो वक्तुं न शक्यते, मृत्कार्यस्य मृदा तदवयवैरिव च ब्रह्मकार्यस्य सर्वस्य ब्रह्मणा तदवयवजीवैश्च जन्मप्रभृत्येव व्याप्तत्वात्, नापि तदतिरेकेणात्मना शून्यः कश्चित्प्रदेशोऽस्ति यं प्रदेशं स्वावयवभूतेन जीवेनात्मना
३० ब्रह्म प्रविशेदित्यर्थः। निष्कलश्रुत्या विरोधेन ब्रह्मणः सावयवत्वसाधकानुमानानुत्थानाच्चेत्यपि द्रष्टव्यम्। इत्थमन्येनात्मना ब्रह्मणः कार्ये प्रवेश इति वदतः पूर्ववादिनो निरासं श्रुत्वा तदेकदेशी प्रत्यवतिष्ठते—कारणमेव चेत्प्रविशेदिति। नात्र कारणस्य कार्ये प्रवेशः कथ्यते, किं तु कार्यविशेषस्य जीवस्य कारणे, तस्य च परिच्छिन्नत्वात् प्रवेष्टृत्वोपपत्तिरिति चेदित्यर्थः। सिद्धान्ती तमपि निराकरोति—जीवात्मत्वं जह्यादिति। यदि जीवः स्वकारणे प्रविशेत्तदा स्वकीयं जीवात्मत्वमेव जह्यात्परित्यजेदित्यर्थः। जीवस्वरूपस्यैव विलयनप्रसङ्गादिति यावत्। विकारस्य
३५ प्रकृतौ प्रवेशे लय एव स्यादित्यत्रोदाहरणमाह—यथेति। इतश्च न कारणे कार्यस्यानुप्रवेशो युक्त इत्याह—तदेवेति। तच्छब्दोपात्तस्य कार्यस्यैव प्रवेशकर्मत्वश्रवणादित्यर्थः। एवं पूर्ववाद्येकदेशिनि निरस्ते पुनः पूर्ववादी प्रकारान्तरेण प्रवेशनिर्वाहकमाशङ्कते—कार्यान्तरमेव स्यादिति। तदेव विवृणोति—तदेवेति। "तदेवानुप्राविशत्" इत्यत्र नामरूपात्मना परिणतं ब्रह्म जीवात्मरूपं कार्यं सद्देहादिरूपं कार्यान्तरमेवापद्यत इत्ययमर्थो विवक्षितः, "स्थूलोहम्" "कृशोऽहम्" इत्यादिरूपेणाहंशब्दार्थस्य जीवस्य शरीराद्यभेदानुभवादनुभवानुसारेण श्रुत्यर्थवर्णनस्य न्याय्यत्वात्,
४० तथा च ब्रह्मणोऽन्येन जीवेनात्मना प्रवेश इति सिद्धमिति भावः। सिद्धान्ती निराकरोति—न, विरोधादिति।

वादिन्यः श्रुतयो विरुध्येरन् । तदापत्तौ मोक्षासंभवाच्च । न हि यतो मुच्यमानस्तदेवाऽऽपद्यते । न हि शृङ्खलापत्तिर्बद्धस्य तस्करादेः । बाह्यान्तर्भेदेन परिणतमिति चेत्तदेव कारणं ब्रह्म शरीराद्याधारत्वेन तदन्तर्जीवात्मनाऽऽधेयत्वेन च परिणतमिति चेन्न, बहिष्ठस्य प्रवेशोपपत्तेः । न हि यो यस्यान्तस्थः स एव तत्प्रविष्ट उच्यते । बहिष्ठस्यानुप्रवेशः स्यात्प्रवेशशब्दार्थस्यैवं दृष्टत्वात् । यथा गृहं कृत्वा प्राविशदिति । जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्न । अपरिच्छिन्नत्वादमूर्तत्वाच्च । परिच्छिन्नस्य मूर्तस्यान्यस्यान्यत्र प्रसादस्वभावके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात् । न त्वात्मनः, अमूर्तत्वादाकाशादिकारणस्याऽऽत्मनः, व्यापकत्वात् तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वन्तराभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्तः । एवं तर्हि नैवास्ति प्रवेशो न च गत्यन्तरमुपलभामहे । "तदेवानुप्राविशत्" इति च श्रुतेः । ५

आनन्दगिरिटीका

कारणवाचकेन तच्छब्देन कार्यलक्षणायामविवक्षितलक्षणा चेत्प्रसज्येत तर्हि कारणपर एव तच्छब्दोऽस्त्वित्याहान्यः सिद्धान्तैकदेशी—बाह्येति । अस्मिन्पक्षे प्रवेशश्रुतेर्मुख्यार्थो न लभ्येतेत्याह—न बहिष्ठेति । अन्यस्य वेदान्तिनो मतमुद्भाव्य दूषयति—जल इत्यादिना । १०

एवं सिद्धान्तैकदेशीयं निरस्य पूर्ववाद्युपसंहरति—एवं तर्हीति । नैवास्ति प्रवेशो ब्रह्मणस्ततोऽन्यस्यापि

वनमाला

कार्यान्तरस्य कार्यान्तरतापत्तेर्विरुद्धत्वादित्यर्थः । अत्रोदाहरणमाह—न हीति । जीवस्य देवादिभावो वास्तव इति पक्षे विरोधान्तरमाह—व्यतिरेकेति । जीवस्यावस्थात्रये बाल्यादिषु चानुवृत्तिरवस्थात्रयस्य बाल्यादीनां च व्यावृत्तिश्चानुभवसिद्धा; तथा चानुवृत्तिव्यावृत्तिलक्षणाभ्यामन्वयव्यतिरेकाभ्यामेव जीवस्य देहादिभ्यः सकाशाद्यो व्यतिरेकः सिद्धः तदुपोद्बलकतया तं व्यतिरेकमनुवदन्त्यः योऽयं "विज्ञानमयः" इत्याद्याः श्रुतयो विरुध्येरन्नित्यर्थः । अत एव "स्थूलोऽहम्" इत्यादिप्रतीतेरप्रमात्वान्न तदनुसारेण प्रवेशवाक्यार्थकल्पनं युज्यत इति भावः । जीवस्य देहादिभावो वास्तव इत्यत्रैव बाधकान्तरमाह—तदापत्ताविति । जीवस्य देहादिलक्षणकार्यान्तरतापत्तावित्यर्थः । असम्भवमेव विवृणोति—न हीति । यत इति । देहादिलक्षणाद्बन्धादित्यर्थः । दृष्टान्तमाह—न हीति । यथा शृङ्खलया बद्धस्य चोरादेर्या शृङ्खलापत्तिर्विद्यते सैव तस्करादेर्न हि मोक्षो भवति तद्वदित्यर्थः । ननु यदि जीवस्य देहादिभावापत्तौ व्यतिरेकश्रुतिविरोधः प्रसज्येत तर्हि तदविरुद्ध एव प्रवेशोऽस्त्विति पूर्ववादी प्रत्यवतिष्ठते—बाह्यान्तर्भेदेनेति । एतदेव प्रपञ्चयति—तदेवेति । प्रकृतमाकाशादिकारणं ब्रह्मैव प्रथमं जीवं प्रत्याधारभूतदेहाद्याकारेण परिणमते पश्चाद्देहादावाधारे तदाधेयजीवरूपेण च परिणमते; तथा च ब्रह्मणो देहाद्याकारेण परिणतिः सृष्टिः जीवरूपेण परिणतिः प्रवेश इति सृष्टिप्रवेशक्रिययोर्भेदः समानकर्तृकत्वं च सिध्यति, ब्रह्मणोऽन्येन जीवेनात्मना प्रवेश इति स्वाभिमतार्थोऽपि सिध्यतीत्यर्थः । येयं शरीराद्यन्तर्जीवात्मना परिणतिः सा किं ब्रह्मणो मुख्यप्रवेशत्वेन त्वदभिमता किं वौपचारिकप्रवेशत्वेन ? नाद्य इत्याह—न, बहिष्ठेत्यादिना । न द्वितीयः, ब्रह्मणः परिणामित्वस्यासम्भवात् । एतच्च ब्रह्मणः परिणामित्वनिराकरणं स्मृतिपादे विस्तरेण कृतमित्याशयेनात्राचार्येर्न कृतम् । सूचितं चात्रापि संग्रहेण प्राक् "नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यते" इत्यत्र । तस्मादन्येनात्मना ब्रह्मणः प्रवेश इति पूर्ववादिमतमनुपपन्नमेवेति स्थितम् । इत्थं पूर्ववादिनं निराकृत्य सिद्धान्ती स्वैकदेशिनमप्युत्थाप्य निराकरोति—जलसूर्येत्यादिना । यथा सूर्यादेर्जलादौ प्रतिबिम्बभावलक्षणः प्रवेशोऽस्ति, तथा बुद्ध्यादौ ब्रह्मणः प्रतिबिम्बभाव एव प्रवेशपदार्थः "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिश्रुतिषु "आभास एव च" इत्यादिसूत्रेषु च ब्रह्मणः प्रतिबिम्बभावस्य प्रसिद्धत्वेन तस्यैव प्रवेशपदार्थत्वकल्पने बाधकाभावादित्याशयः । अपरिच्छिन्नत्वादिति । व्यापकत्वादित्यर्थः । अमूर्तत्वाच्चेति । मूर्तिरवयवसंस्थानविशेषः, तद्रहितत्वात्, निरवयवद्रव्यत्वादिति यावत् । व्यापकत्वे हेतुं पूर्ववाक्येनाह—आकाशादीति । ननु निरवयवत्वव्यापकत्वादिना प्रसिद्धस्य गगनस्य मेघालोकाद्यवच्छेदेन जलादौ प्रतिबिम्बोदयदर्शनादात्मनोऽपि तथा किं न स्यादित्याशङ्क्याह—तद्विप्रकृष्टेति । लोके बिम्बसूर्याद्यपेक्षया विप्रकृष्टदेशवद्रूपवच्च प्रतिबिम्बोदययोग्यं जलादिकं यथास्ति, न तथा ब्रह्मण प्रतिबिम्बाधारवस्त्वस्ति, बुद्ध्यादेर्व्यापकात्मापेक्षया विप्रकृष्टदेशत्वाभावात् उद्भूतरूपरहितत्वाच्चेत्यर्थः । अत एव पूर्वोदाहृतश्रुतिसूत्राणामनयैव रीत्या प्रतिबिम्बभावपरत्वं निरस्यार्थान्तरे तात्पर्यम् "वृद्धिह्रासभाक्त्वम्" इति सूत्रतद्भाष्ययोर्महता प्रपञ्चेन प्रतिपादितमिति न तद्विरोध इति भावः । प्रतिबिम्बभावलक्षणस्य प्रवेशस्य निराकरणे प्रवेशवाक्यं ४०

(margin line numbers: १५, २०, २५, ३०, ३५)

श्रुतिश्च नोऽतीन्द्रियविषये विज्ञानोत्पत्तौ निमित्तम्। न चास्माद्वाक्याद्यत्नवतामपि विज्ञानमुत्पद्यते। हन्त तर्ह्यनर्थकत्वादपोह्यमेतद्वाक्यं "तत्सृष्ट्वा तदेवानुप्राविशत्" इति। न। अन्यार्थत्वात्। किमर्थमस्थाने चर्चा। प्रकृतो ह्यन्यो विवक्षितोऽस्य वाक्यस्यार्थोऽस्ति स स्मर्तव्यः। "ब्रह्मविदाप्नोति परम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायाम्" इति। तद्विज्ञानं च विवक्षितं प्रकृतं च तत्। ब्रह्मस्वरूपावगमाय चाऽऽकाशाद्यन्नमयान्तं कार्यं प्रदर्शितं
५ ब्रह्मावगमश्चाऽऽरब्धः। तत्रान्नमयादात्मनोऽन्योन्तर आत्मा प्राणमयस्तदन्तर्मनोमयो विज्ञानमय इति। विज्ञानगुहायां प्रवेशितस्तत्र चाऽऽनन्दमयो विशिष्ट आत्मा प्रदर्शितः। अतः परमानन्दमयलिङ्गाधिगमद्वारेणाऽऽनन्दविवृद्ध्यवसान

### आनन्दगिरिटीका

प्रवेशो न सम्भवतीत्युक्तमित्याह—न चेति। इतरस्यापि प्रवेशः कल्पयितुं न शक्यत इत्याह—तदेवानुप्राविशदिति। सा च श्रुतिः स्रष्टुः प्रवेशमाह। सा चास्माकं मीमांसकानां प्रमाणं ततस्तद्विरोधेनान्यस्य प्रवेशकल्पनाऽयुक्तेति
१० भावः। तर्हि श्रुतिशरणतयैव ब्रह्मण एव प्रवेश उच्यतामित्याशङ्क्याऽऽह—न चेति। तस्मादन्धो मणिमविन्ददितिवदर्थशून्यमेवेदं वाक्यमिति निगमयति—हन्तेति। शक्तिगोचरस्यार्थस्यासम्भवादर्थशून्यत्वं तात्पर्यगोचरस्य वा? नाऽऽद्यः। आकाशादेरविप्रकृष्टदेशेऽपि जलेऽमूर्तस्य प्रतिबिम्बभाववदमूर्तस्यापि ब्रह्मणोऽनिर्वाच्याविद्यासु प्रतिबिम्बितस्य सृष्ट्युत्तरकालमन्तःकरणादिषु प्रतिबिम्बभावसम्भवादित्याह—नेति। न द्वितीय इत्याह—अन्यार्थत्वादिति। एतत्स्फुटयति—किमर्थमित्यादिना। अतः परमिति। बुद्धिगुहाप्रवेशादनन्तरमानन्दमय एव विशिष्टोऽर्थो विशेष्यस्य
१५ चिद्धातोर्लिङ्गं विशिष्टस्य विशेष्याव्यभिचारदर्शनात्तदधिगमद्वारेणाऽऽनन्दविवृद्ध्यवसान आत्मा ब्रह्मरूपोऽस्यामेव गुहायामधिगन्तव्य इत्यभिप्रेत्य जले सूर्यप्रवेशवदनिर्वाच्यः प्रवेशोऽभिधीयत इत्यर्थः।

### वनमाला

निर्विषयं स्यादिति सिद्धान्त्येकदेश्याह—एवं तर्हीति। प्रकारान्तरेण प्रवेशवाक्यस्य विषयमाशङ्क्य प्रकारान्तराणां निरस्तत्वादित्याशयेनाह—न चेति। प्रवेशवाक्यस्य निर्विषयत्वमुक्तं श्रुतिवाक्यत्वादित्याह—तदेवेति। प्रवेशादेर-
२० तीन्द्रियत्वेन तत्राज्ञाते श्रुतिप्रामाण्यस्यावाभ्यां स्वीकृतत्वाच्चेत्याह—श्रुतिश्चेति। तर्ह्यस्तु प्रवेशवाक्यादतीन्द्रियार्थबोध इत्याशङ्क्याह—न चास्मादिति। प्रतिबिम्बभावानुपगमे सत्येतद्वाक्यार्थबोधे यत्नवतामप्यस्माकमस्माद्वाक्यादर्थज्ञानं न चोत्पद्यते, तस्मात्प्रतिबिम्बभावनिराकरणे प्रवेशवाक्यं निर्विषयं स्यादित्यर्थः। एवमेकदेशिना प्रवेशवाक्यस्य निर्विषयत्वापादने कृते तच्छ्रुत्वा तटस्थ आह—हन्त तर्हीति। इदानीं सिद्धान्ती प्रवेशवाक्यस्य निर्विषयत्वादिकमपाकरोति—न, अन्यार्थत्वादिति। प्राङ्निराकृतेभ्योऽर्थेभ्यः सकाशादन्यस्य प्रकरणाविरुद्धस्य प्रकरणापेक्षितस्य
२५ चार्थस्य सत्त्वान्न वाक्यस्य निर्विषयत्वप्रसङ्गो न वापोह्यतेत्यर्थः। संग्रहवाक्यं विवृणोति—किमर्थमिति। वाक्यस्य निर्विषयत्वाद्यापादनमस्थाने न युक्तम्, अत इदं किमर्थं क्रियत इत्यर्थः। निर्विषयत्वाद्यापादनस्यायुक्तत्वे हेतुमाह—प्रकृतो हीति। हिशब्दो हेत्वर्थः। प्रकृतस्यात्र स्मर्तुं योग्यस्यार्थान्तरस्य सत्त्वादित्यर्थः। कोऽसौ प्रकृतोऽर्थ इत्याकाङ्क्षायां तं दर्शयति—ब्रह्मविदिति। "ब्रह्मविदाप्नोति" इति सूत्रे "सत्यं ज्ञानम्" इति मन्त्रे च तस्य ब्रह्मणः प्रत्यक्त्वेन विज्ञानं प्रकृतम्, न केवलं प्रकृतं विवक्षितं च तत्। "अहं ब्रह्म" इति ज्ञानस्यैव परप्राप्तिसाधनत्वा-
३० दित्यर्थः। एवं सूत्रमन्त्रयोः प्रकृतस्य ब्रह्मावगमस्य प्रवेशवाक्यपर्यन्तमनुवृत्तिमाह- ब्रह्मस्वरूपेत्यादिना। ब्रह्मावगमश्चेति। "आत्मन आकाशः सम्भूत" इत्यादिवाक्ये यतो ब्रह्मस्वरूपावगमायैव शरीरान्तं कार्यं प्रदर्शितम् अतस्तद्वाक्येऽपि ब्रह्मावगम आरब्धोऽनुवृत्त इत्यर्थः। एवं सृष्टिवाक्येऽनुवृत्तस्य च तस्य विज्ञानमयवाक्येऽनुवृत्तिमाह—तत्रान्नमयादिति। कोशवाक्येषु मध्य इति तत्रशब्दार्थः। स्थूलसूक्ष्मक्रमेण कोशानामान्तरत्वोपदेशस्य सर्वान्तरब्रह्मप्रतिपत्तिशेषत्वाद्विज्ञानशब्दलक्षितायां बुद्धिगुहायां ब्रह्मावगमस्यानुवृत्तिर्युक्ता। अत्र प्रवेशवाक्यपर्यन्तमनुवृत्ति-
३५ कथनावसरे प्राणमये प्रवेशितो मनोमये प्रवेशित इत्यनुक्त्वा विज्ञानमयपर्याये प्रवेशित इत्युक्तेः कोऽभिप्राय इत्याकाङ्क्षायां तमभिप्रायं गुहाशब्दप्रयोगेण सूचयति। एतदुक्तं भवति—"यो वेद निहितं गुहायां परमे व्योमन्" इत्यत्र हार्दाकाशनिष्ठा गुहा का? इत्याकाङ्क्षायां सा गुहा विज्ञानमयपर्याये बुद्धिरूपेण निरूप्यते, अतो बुद्धौ निहितत्वेन ब्रह्मणोऽवगमः सम्पादनीय इति गुहानिहितवाक्यतात्पर्यसूचनार्थं विज्ञानगुहायां प्रवेशित इत्युक्तिरिति। नन्वेवमानन्दमयस्य मुख्यात्मत्वं सिध्येत् "अन्योऽन्तर आत्मानन्दमयः" इति वाक्येन तस्यैव बुद्धिगुहास्थत्वाभिधाना-
४० दित्याशङ्क्याह—तत्रेति। प्रियादिविशिष्ट एवात्मा तत्र प्रवेशितो न शुद्धचिद्धातुः विशिष्टश्चामुख्य आत्मेत्युक्त-

**निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्।**

आत्मा। ब्रह्म पुच्छं प्रतिष्ठा सर्वविकल्पास्पदो निर्विकल्पोऽस्यामेव गुहायामधिगन्तव्य इति तत्प्रवेशः प्रकल्प्यते। न ह्यन्यत्रोपलभ्यते ब्रह्म निर्विशेषत्वाद्विशेषसंबन्धो ह्युपलब्धिहेतुर्दृष्टः। यथा राहोश्चन्द्रार्कविशिष्टसंबन्धः। एवमन्तःकरणगुहात्मसंबन्धो ब्रह्मण उपलब्धिहेतुः। सन्निकर्षादवभासात्मकत्वाच्चान्तःकरणस्य। यथा चाऽऽलोकविशिष्टा घटाद्युपलब्धिरेवं बुद्धिप्रत्ययालोकविशिष्टात्मोपलब्धिः स्यात्तस्मादुपलब्धिहेतौ गुहायां निहितमिति प्रकृतमेव। तद्वृत्तिस्थानीये त्विह पुनस्तत्सृष्ट्वा तदेवानुप्राविशदित्युच्यते। ५

तदेवेदमाकाशादिकारणं कार्यं सृष्ट्वा तमनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञात्रित्येवं

### आनन्दगिरिटीका

बुद्धिगुहायामेव ब्रह्मण उपलब्धिसम्भवात्तत्रैव प्रवेशोऽभिधित्सित इत्याह—न हीति। नन्वन्यत्रोपलब्ध्यनर्हं ब्रह्म बुद्धौ वा कथमुपलभ्यत इत्याशङ्क्योपाधेर्योग्यताविशेषासम्भवादित्याह—विशेषेति। सन्निकर्षादीति। अन्तःकरणसंसर्गादेव देहघटादिषु चैतन्याभिव्यक्तिर्न स्वतः। अन्तःकरणं चाव्यवधानेनैव चैतन्याभिव्यञ्जकमन्वयव्यतिरेकाभ्यामित्यर्थः। यथा चास्वच्छस्वभावके घटादौ मुखं न प्रतिबिम्बते जलादौ स्वच्छस्वभावके प्रतिबिम्बते तथा सत्त्वप्रधानस्यान्तःकरणस्य प्रसादस्वाभाव्याद्घटते तत्र ब्रह्मोपलब्धिरित्याह—अवभासात्मकत्वाच्चेति। किञ्च यथा जाड्यसाम्येऽपि तमोलक्षणावरणाभिभवसमर्थ आलोकोऽङ्गीक्रियते तथा जाड्यसाम्येऽप्यन्तःकरणस्यैव प्रत्ययाकारपरिणतस्याज्ञानलक्षणावरणाभिभवसामर्थ्यमङ्गीकर्तव्यमित्याह—यथा चेति। १० १५

### वनमाला

मित्यर्थः। कथं तर्हि बुद्धिगुहानिहितत्वेन शुद्धब्रह्मावगमसिद्धिरित्याशङ्क्याह—ततः परमिति। आनन्दमयाधिगमानन्तरमित्यर्थः। नन्वानन्दमयाधिगमस्यानन्तर्योक्तिसिद्धविशुद्धब्रह्माधिगमोपायत्वं कथमित्यत आह—आनन्दमयलिङ्गेति। आनन्दमय एव विशिष्टोऽर्थो विशेष्यस्य शुद्धचिद्धातोर्लिङ्गम्, विशिष्टस्य विशेष्याव्यभिचारित्वादर्शनात्। आनन्देति। आनन्दवृद्धेर्वक्ष्यमाणाया अवसानः अवधिभूतः, निरतिशयानन्दरूप इत्यर्थः। प्रतिष्ठाशब्दार्थमाह—सर्वविकल्पेति। सर्वकल्पनाधिष्ठानत्वादेव वस्तुतो निर्विशेषत्वमाह—निर्विकल्प इति। तथा च आनन्दमयरूपलिङ्गाधिगमद्वारेणानन्दवृद्ध्यवसानभूत आत्मा यथोक्तोऽस्यामेवानन्दमयगुहायामेवाधिगन्तव्य इत्यभिप्रेत्य बुद्धौ द्रष्टृत्वादिरूपेणोपलब्धिरेव तस्य ब्रह्मणः प्रवेशत्वेन प्रवेशवाक्ये कल्प्यते गौण्या वृत्त्योपचर्यत इत्यर्थः। तथा च वक्ष्यति—तदनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञातृ इत्येवं विशेषवदुपलभ्यते तदेव तस्य प्रवेश इति। बुद्धावेव प्रवेशकल्पने हेतुमाह—न ह्यन्यत्रेति। बुद्धेः सकाशादन्यत्र ब्रह्मचैतन्यस्यानुपलम्भादित्यर्थः। तत्र हेतुमाह—निर्विशेषत्वादिति। व्यञ्जकपदार्थरूपो या विशेषस्तत्सम्बन्धरहितत्वादित्यर्थः। बुद्धिसम्बन्धस्य ब्रह्मोपलब्धिहेतुत्वं सदृष्टान्तमाह—विशेषसम्बन्धो हीति। व्यञ्जकपदार्थो विशेषपदस्यार्थः। ननु बुद्धावेव ब्रह्मचैतन्यस्योपलब्धिरिति न नियमः, घटः स्फुरति पटः स्फुरतीत्यादिप्रकारेण बुद्धेरन्यत्रापि तस्योपलब्धिदर्शनादित्याशङ्क्याह—सन्निकर्षादिति। वृत्तिद्वारा बुद्धिसम्बन्धादेव तत्राप्युपलब्धिरित्यर्थः। बुद्धेश्चैतन्यव्यञ्जकत्वे युक्तिमाह—अवभासात्मकत्वाच्चेति। प्रकाशात्मकत्वादित्यर्थः। अन्तःकरणस्य प्रकाशात्मकत्वमालोकादेरिव स्वाभाविकमेव, न तु तप्तायःपिण्डादेरिवान्यकृतमिति सूचनार्थश्चकारः। बुद्धिवृत्तेर्घटादिषु चैतन्यव्यञ्जकत्वं सदृष्टान्तमाह—यथा चेति। आदिपदं नीलपीतादिसंग्रहार्थम्। यथा नीलपीताद्युपलब्धिरालोकसम्बन्धकृता तथा विषयेष्वात्मनः स्फुरणरूपेणोपलब्धिरन्तःकरणवृत्तिलक्षणालोकसम्बन्धप्रयुक्तेत्यर्थः। एवमन्वयव्यतिरेकाभ्यां बुद्धेरेव ब्रह्मोपलब्धिसाधनत्वमिति प्रसाध्य प्रकृतमुपसंहरति—तस्मादिति। "मन्त्रे यद्गुहायां निहितमि"ति गुहानिहितत्वं प्रकृतं "तदेव प्राविशदि"त्यनेन पुनरुच्यत इत्यर्थः। तर्हि पौनरुक्त्यं स्यादिति शङ्कां वारयति—वृत्तिस्थानीय इति। वृत्तिर्व्याख्या। तथा च व्याख्यानव्याख्येयभावापन्नयोर्गुहानिहितप्रवेशवाक्ययोर्न पौनरुक्त्यदोष इति भावः। २० २५ ३० ३५

इदानीं प्रवेशशब्दार्थं कथयति—तदेवेदमित्यादिना। यदाकाशादिकारणं प्रकृतं तदेव ब्रह्म इदं प्रत्यक्षादिसन्निधापितं कार्यं सृष्ट्वेत्यर्थः। अनुप्रविष्टमिवेति। गृहादावनुप्रविष्टं देवदत्तादिवस्तु यथा तदन्तरुपलभ्यते तथा ब्रह्मापि

यदिदं किञ्च । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ।

इति षष्ठोऽनुवाकः

विशेषवदुपलभ्यते। स एव तस्य प्रवेशस्तस्मादस्ति तत्कारणं ब्रह्म। अतोऽस्तित्वादस्तीत्येवोपलब्धव्यं तत्। तत्कार्यमनुप्रविश्य, किं ? सच्च मूर्तं त्यच्चामूर्तमभवत्। मूर्तामूर्ते ह्यव्याकृतनामरूपे आत्मस्थे अन्तर्गतेनाऽऽत्मना व्याक्रियेते
५ व्याकृते च मूर्तामूर्तशब्दवाच्ये ते आत्मना त्वप्रविभक्तदेशकाले इति कृत्वाऽऽत्मा ते अभवदित्युच्यते। किंच निरुक्तं चानिरुक्तं च, निरुक्तं नाम निष्कृष्य समानासमानजातीयेभ्यो देशकालविशिष्टतयेदं तदित्युक्तमनिरुक्तं तद्विपरीतं निरुक्तानिरुक्ते अपि मूर्तामूर्तयोरेव विशेषणे। यथा सच्च त्यच्च प्रत्यक्षपरोक्षे, तथा निलयनं चानिलयनं च। निलयनं नीडमाश्रयो मूर्तस्यैव धर्मः। अनिलयनं तद्विपरीतममूर्तस्यैव धर्मः। त्यदनिरुक्तानिलयनान्यमूर्तधर्मत्वेऽपि व्याकृतविषयाण्येव। सर्गोत्तरकालभावश्रवणात्। त्यदिति प्राणाद्यनिरुक्तं तदेवानिलयनं च। अतो विशेषणान्यमूर्तस्य
१० व्याकृतविषयाण्येवैतानि। विज्ञानं चेतनमविज्ञानं तद्रहितमचेतनं पाषाणादि सत्यं च व्यवहारविषयमधिकारान्न परमार्थसत्यमेकमेव हि परमार्थसत्यं ब्रह्म। इह पुनर्व्यवहारविषयमापेक्षिकं सत्यं मृगतृष्णिकाद्यनृतापेक्षयोदकादि

आनन्दगिरिटीका

निलयनं गृहप्रासादादिमूर्तसन्निवेशविशेषोऽवयवसंस्थानविशेषराहित्यमनिलयनम्। अनिरुक्तत्वाद्यमूर्तधर्मश्चेद्ब्रह्मण एव किं न स्यादित्यत आह—**त्यदनिरुक्तानिलयनानीति**।

१५ वनमाला

बुद्धेरन्तरुपलभ्यते चान्तरुपलभ्यमानत्वसाम्यात्प्रवेशशब्दो गौण इत्यर्थः। द्रष्टृत्वादिरूपेणोपलब्धिलक्षणे विवक्षिते प्रवेशे बुद्ध्युपहितचैतन्यरूपस्य जीवस्यैव कर्तृत्वेऽपि जीवब्रह्मणोर्वास्तवैक्यमादाय सृष्टिप्रवेशक्रिययोः समानकर्तृत्वसत्त्वात् यः स्रष्टा स एवानुप्राविशत् क्त्वाप्रत्ययश्रवणादिति सिद्धान्तो निष्प्रत्यूह इति भावः। एवमक्षराणि व्याख्याय प्रवेशवाक्यस्यापि ब्रह्मसत्त्वसाधने उपयोगं कथयति—**तस्मादस्तीति**। तत्प्रकृतमाकाशादिकारणं ब्रह्म अस्ति नास्तीति न,
२० प्रवेष्टृत्वात् असतः प्रवेशादर्शनादित्यर्थः। ब्रह्मणो नास्तित्वाभावे फलितमाह—**अत इति**। पृथिव्यादिभूतत्रयं मूर्तमवशिष्टं भूतद्वयममूर्तमिति विभागो बोध्यः। ब्रह्मैव मूर्तामूर्ते अभवदित्यनेन तयोर्ब्रह्मतादात्म्यमुच्यते, तत्रोपपत्तिमाह—**मूर्तामूर्ते हीति**। प्रागुत्पत्तेरव्याकृतनामरूपतयात्मनि स्थिते मूर्तामूर्ते एव सर्गादौ स्वान्तर्गतेन परमात्मना व्याक्रियेते इत्यर्थः। तयोरव्याकृतनामरूपतया प्रागवस्थाने "तद्धेदं तर्ह्यव्याकृतमासीत्" इति श्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः। ततः किम् ? अत आह—**व्याकृते चेति**। **आत्मना त्विति**। परमात्मना अविभक्तदेशकाले परमात्मना तादात्म्यापन्ने
२५ एव, प्रागुत्पत्तेरात्मनोऽद्वितीयत्वश्रवणादिति भावः। एतदुक्तं भवति—मूर्तामूर्तयोरव्याकृतयोरात्मतादात्म्यात्तयोरेव व्याकृतयोरपि तत्तादात्म्यमुपपद्यत एवेति कृत्वा तत्कारणभूत आत्मा ते मूर्तामूर्ते अभवदिति श्रुत्योच्यत इति। **इदं तदित्युक्तमिति**। यत्त्वया पृष्टं तदिदमिति निर्दिष्टमित्यर्थः। इहेदानीमयं विष्णुमित्र इत्यादिप्रकारेण निरूपितं वस्त्वित्यर्थः। **विशेषण इति**। निरुक्तं मूर्तस्यैवाभेदेन विशेषणम् अनिरुक्तममूर्तस्यैवाभेदेन विशेषणमिति विभागः। **यथेति**। यथा सच्छब्दवाच्यं प्रत्यक्षं भूतत्रयं मूर्तस्याभेदेन विशेषणं त्यच्छब्दवाच्यं च परोक्षं भूतद्वयममूर्तस्याभेदेन
३० विशेषणं तथा निरुक्तानिरुक्ते अपीत्यर्थः। **तथेति**। निलयनं च तथा निरुक्तवन्मूर्तस्यैव धर्म इति सम्बन्धः। **धर्म इति**। तथा च सन्निरुक्तनिलयनानि मूर्तधर्माः, त्यदनिरुक्तानिलयनान्यमूर्तधर्मा इति विभागः कृत इति बोध्यम्। ननु त्यदादीनाममूर्तधर्मत्वे सति ब्रह्मधर्मत्वं प्रसज्येत ब्रह्मणोऽप्यमूर्तत्वादिति, नेत्याह—**त्यदनिरुक्तेति**। **व्याकृतेति**। व्याकृतं कार्यम्, तद्विशेषणान्येव न कारणब्रह्मविशेषणानि, तेषां तद्विशेषणत्वे सर्गात्प्रागपि सत्त्वापत्त्या तदुत्तरकालभावित्वश्रवणविरोधादित्यर्थः। व्याकृतविषयत्वमेव विवृणोति—**त्यदितीत्यादिना**। प्राणो वायुः, आकाशसंग्रहार्थमादिपदम्। **अत इति**।
३५ त्यदनिरुक्तानिलयनशब्दैरभिहितस्य प्राणादेः कार्यत्वादेतान्यमूर्तस्य विशेषणानि व्याकृतविषयाण्येवेति योजना। **सत्यं चेति**। "सत्यं चानृतं च" इत्यत्र सत्यशब्देन व्यावहारिकसत्यमेवोच्यते न तु परमार्थसत्यमित्यत्र हेतुः—**अधिकारादिति**। सच्च त्यच्चेत्यादीनां व्यवहारविषयाणामेव विकाराणां प्रकरणादित्यर्थः। किं च "सत्यं च" इत्यत्र परमार्थसत्यग्रहणे परमार्थद्वयं प्रसज्येत, "सत्यमभवत्" इत्यत्रापि परमार्थसत्यस्य गृहीतत्वात्। भवत्विति चेत्, तत्राह—**एकमेव हीति**। परमार्थसत्यस्याद्वितीयत्वं श्रुतिस्मृतिन्यायसहस्रप्रसिद्धमिति

सत्यमुच्यते। अनृतं च तद्विपरीतम्। किं पुनरेतत्सर्वमभवत्, परमार्थसत्यं किं पुनस्तद्ब्रह्म। "सत्यं ज्ञानमनन्तं ब्रह्मे"ति प्रकृतत्वात्। यस्मात्सत्त्यदादिकं मूर्तामूर्तधर्मजातं यत्किचेदं सर्वमविशिष्टं विकारजातमेकमेव सच्छब्दवाच्यं ब्रह्माभवत्तद्व्यतिरेकेणाभावान्नामरूपविकारस्य, तस्मात्तद्ब्रह्म सत्यमित्याचक्षते ब्रह्मविदः।

अस्ति नास्तीत्यनुप्रश्नः प्रकृतस्तस्य प्रतिवचनविषय एतदुक्तम्—"आत्माऽकामयत बहु स्यामि"ति। स यथाकामं चाऽऽकाशादिकार्यं सत्त्यदादिलक्षणं सृष्ट्वा तदनु प्रविश्य पश्यञ्शृण्वन्मन्वानो विजानन्बह्वभवत्तस्मात्त- ५ देवेदमाकाशादिकारणं कार्यस्थं परमे व्योमन्हृदयगुहायां निहितं तत्प्रत्ययावभासविशेषेणोपलभ्यमानमस्तीत्येवं विजानीयादित्युक्तं भवति। तदेतस्मिन्नर्थे ब्राह्मणोक्त एष श्लोको मन्त्रो भवति। यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशकाः पञ्चस्वपि, एवं सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्रः कार्यद्वारेण भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये षष्ठोऽनुवाकः १०

आनन्दगिरिटीका

"तत्सत्यमित्याचक्षत" इत्यस्योपपत्तिमाह—यस्मादिति। पदानि व्याख्याय प्रकृतानुप्रश्ननिराकरणे प्रकरणस्य तात्पर्यं "सोऽकामयते"त्यादेर्दर्शयति—अस्ति नास्तीत्यादिना। तस्या बुद्धिगुहायाः अहं कर्ता भोक्तेत्यादयस्त एवावभासविशेषास्तैर्व्यज्यमानं विशिष्टस्य विषयत्वेऽपि स्वरूपस्याविषयत्वादित्यर्थः[1]।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां १५
द्वितीयब्रह्मवल्ल्यां षष्ठोऽनुवाकः

वनमाला

द्योतनार्थो हिशब्दः, अतो न परमार्थद्वये इष्टापत्तिरिति भावः। ननु व्यवहारविषयाकाशादिप्रपञ्चस्य कल्पितत्वात्कथं तत्र सत्यशब्दप्रवृत्तिरिति शङ्कां निराकुर्वन्सत्यं च व्यवहारविषयमित्युक्तं विवृणोति—इह पुनरिति। "सत्यं चानृतं च" इत्यत्रेत्यर्थः। आपेक्षिकं सत्यमुच्यत इति सम्बन्धः। किमपेक्षयोदकादिलक्षणस्य सत्यस्यापेक्षिकत्वमित्या- २० काङ्क्षायामाह—मृगतृष्णिकादीति। "सत्यं चानृतं च" इत्यत्र व्यावहारिकं वस्तु सत्यशब्दार्थः प्रातिभासिकं वस्त्वनृतशब्दार्थ इति निष्कर्षः। किं पुनरिति। एतत्प्रकृतं निरुक्तादिकं सर्वं किमिति प्रश्ने सत्यमभवदिति प्रतिवचनम्। तत्र सत्यं विशिनष्टि—परमार्थेति। इदं च विशेषणं सत्यं चेत्यत्र गृहीतसत्यव्यावृत्त्यर्थमिति प्रागेव व्यक्तम्। परमार्थसत्यस्वरूपं प्रश्नपूर्वकं विशिष्य दर्शयति—किं पुनस्तदित्यादिना। यत्सत्यादिशब्दैरुपात्तं यच्चेदं किं चाविशेषितं विशिष्यानुपात्तं तत्सर्वं परमार्थसत्यमभवदिति रीत्या श्रुतौ "यदिदं किं च" इति वाक्यस्य पूर्वेणैक- २५ वाक्यता बोध्या इमामेवैकवाक्यतां प्रदर्शयन् "तत्सत्यमित्याचक्षते" इत्यस्योपपत्तिमाह—यस्मादित्यादिना। पूर्वग्रन्थस्य विवक्षितमर्थं दर्शयितुं तत्र वृत्तमनुवदति—अस्तीत्यादिना। इदानीं तत्र विवक्षितं कथयति—तस्मादिति। श्रुत्या ब्रह्मण्यसत्त्वाशङ्कानिराकरणपूर्वकं सत्त्वप्रतिपादनायैव तस्य भोक्तृभोग्यात्मनावस्थानप्रतिपादनादित्यर्थः। अस्य हेतोरस्तीति विजानीयादित्यनेन सम्बन्धः। तदेवेति। ब्रह्मैवेत्यर्थः। इदंशब्दार्थमेवाह—कार्यस्थमिति। कार्यकरणसङ्घाते साक्षितया स्थितमित्यर्थः। बुद्धौ विशिष्य तस्योपलब्धिमभिप्रेत्याह—परम इत्यादिना। व्योम्नि ३० या गुहा तस्यामिति सप्तम्योर्वैयधिकरण्यम्। हार्दमेवाकाशं परमं व्योमेति च प्रागेव दर्शितम्। मुख्यस्य निधानस्यासम्भवं मनसि निधाय हृदयगुहायां निहितमित्यस्यार्थमाह—तत्प्रत्ययेति। तस्मिन्हृदयगुहाशब्दिते प्रत्यये साक्षिणा प्रतीयमानेऽन्तःकरणे योऽयमात्मचैतन्यस्यावभासमानो विशेषः "पश्यन् शृण्वन्" इत्यादिभाष्येण प्रदर्शितो द्रष्टृत्वादिरूपभेदस्तेन रूपभेदेनोपलभ्यमानं प्रकाशमानं ब्रह्मेत्यर्थः। ननु "असद्वा इदम्" इति श्लोके न सर्वान्तरात्मास्तित्वप्रतिपादकः तदस्तित्ववाचिपदाभावात्, प्रत्युत आकाशादिकारणे वस्तुन्यसच्छब्दश्रवणेन ३५ तदसत्त्वस्यैव प्रतीतेश्चेत्याशङ्क्य विशिनष्टि—कार्यद्वारेणेति। असतः कार्यकारणत्वासम्भवादसच्छब्दनिर्दिष्टस्यापि सत्त्वं कारणस्य सिध्यतीत्याशयः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां षष्ठोऽनुवाकः

[1] सोपाधिकस्यात्मनः पश्यन् शृण्वन् इत्यादौ विषयत्वं न तु शुद्धस्येत्यर्थः।

## अथ वार्तिके ब्रह्मवल्ल्यां षष्ठोऽनुवाकः

असत्समोऽसौ भवति योऽसद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तं तं ब्राह्मणा विदुः ॥ १ ॥

सदप्यात्मस्वरूपेण ब्रह्मासदिति वेद चेत् । सोऽसन्नेवेह भवति कोशात्मत्वाभिमानभाक् ॥ २ ॥

न हि कोशात्मना सत्त्वमृते ब्रह्म समश्नुते । कुतः सर्पात्मना सत्त्वमृते रज्जुं सदात्मिकाम् ॥ ३ ॥

असद्भ्यः खलु कोशेभ्यः सदेकं ब्रह्म वेद चेत् । द्वशे रूपान्तरासत्त्वात्सन्तं तं ब्राह्मणा विदुः ॥ ४ ॥

५ यस्मादेवमतो हित्वा कोशानज्ञानकल्पितान् । निर्विकारमनाद्यन्तं परमात्मानमाश्रयेत् ॥ ५ ॥

यतः कोशातिरेकेण नासत्त्वं विद्यते परम् । [1]मृत्युर्वा असदित्येवं घटते श्रुत्युदीरणम् ॥ ६ ॥

[2]अस्तीत्येवोपलब्धव्यः [3]सदेवेति च शासनम् । ब्रह्मात्मव्यतिरेकेण सत्त्वमन्यत्र दुर्लभम् ॥ ७ ॥

तस्यैष एव शारीरो योऽशरीरः सदेकलः ।
आनन्दान्तस्य पूर्वस्य ह्यात्मा नाऽऽत्मवतः परः[नात्मा ततः परः] ॥ ८ ॥

१० उक्तं ब्रह्मविदाप्नोति परं नाज्ञोऽसदाश्रयः । इत्यस्य निर्णयार्थाय परो ग्रन्थोऽत्रतार्यते ॥ ९ ॥

साधारणं परं ब्रह्म विदुषोऽविदुषश्च चेत् । प्राप्त्यप्राप्ती समे स्यातां नियमे हेत्वसम्भवात् ॥१०॥

कार्यमात्रावबद्धान्तःकरणत्वात्तमस्विनः । न शक्याऽस्तीति धीः कर्तुं स्वतःसिद्धात्मवस्तुनि ॥
अतोऽस्यास्तित्वसिद्ध्यर्थं कल्पनातीतरूपिणः ॥११॥

असन्नेव स भवति । असद्ब्रह्मेति वेद चेदित्यस्य श्लोकभागस्यार्थं प्रपञ्चयति—सदपीति ॥ १-२ ॥

१५ किमित्यात्मनोऽसत्त्वं कोशरूपेण सत्त्वादित्याशङ्क्याऽऽह—न हीति । दृष्टान्ते सर्पो दार्ष्टान्तिके चाऽऽत्मा कर्तृत्वेन सम्बध्यते ॥ ३ ॥

अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरितिश्लोकस्योत्तरार्धं प्रपञ्चयति—असद्भ्य इति । द्वशेरात्मनो ब्रह्मणः सकाशाद्रूपान्तरस्यासत्त्वाद्ब्रह्मणश्च सत्त्वाभ्युपगमादिति हेत्वर्थः ॥ ४ ॥

यतो ब्रह्मरूपेणैवाऽऽत्मनः सत्त्वं न कोशरूपेण कोशानां कल्पितत्वेनासत्त्वादतश्च कोशान्विवेकज्ञानेन

२० विहाय परमात्मानमात्मत्वेन जानीयादित्याह—यस्मादिति ॥ ५ ॥

परमात्मरूपेणापि कोशरूपेणैवाऽऽत्मनोऽसत्त्वं स्यादित्याशङ्क्याऽऽह—यत इति । कोशात्मनैवासत्त्वमित्यत्र प्रमाणमाह—मृत्युर्वेति ॥ ६ ॥

कोशपञ्चकं मृत्युशब्देन विवक्षितं ब्रह्मात्मना तु नाऽऽत्मनोऽसत्त्वमित्यत्रापि प्रमाणमाह—अस्तीत्येवेति । श्लोकार्थमुपसंहरति—ब्रह्मात्मेति ॥ ७ ॥

२५ तस्यैष एव शारीर आत्मा । यः पूर्वस्येत्यस्यार्थमाह—तस्येति ॥ ८ ॥

अथातोऽनुप्रश्ना इत्यादेरुत्तरग्रन्थस्य तात्पर्यमाह—उक्तमिति । ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मविदेव परं ब्रह्म प्राप्नोति नाज्ञोऽविद्वान्कल्पितकोशपञ्चकमात्मत्वेन गतत्वादित्युक्तमस्यैवार्थस्याऽऽक्षेपद्वारा समाधानार्थमुत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ ९ ॥

श्रुत्या विवक्षितमाक्षेपमेव दर्शयति—साधारणमिति । विदुषोऽविदुषश्च साधारणं स्वरूपं यदि परं ब्रह्म

३० तदा द्वयोरपि ब्रह्मप्राप्तिस्तदप्राप्तिर्वा समाने युज्येते न तु विदुषो ब्रह्मप्राप्तिविदुषश्च तदप्राप्तिरिति नियमो नियामकाभावादित्याक्षिप्य नियमसमर्थनार्थमुत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ १० ॥

उत्तरग्रन्थस्यैव तात्पर्यान्तरमाह—कार्यमात्रेति । कोशपञ्चकस्याऽऽत्मत्वेन प्रतिपन्नत्वात्परमात्मा नास्त्येवेतिशङ्कायां तदस्तित्वसाधनायावशिष्टप्रश्नद्वयसमाधानाय च समनन्तरग्रन्थसमुत्थानमित्यर्थः ॥ ११ ॥

---

१. बृ० १-३-२८ । २. क० २-३-१३ । ३. छा० ६-२-१ ।

अथात इत्यनुप्रश्ना वक्ष्यन्ते निर्णयार्थिने ॥१२॥
अथानन्तरमस्यैव साधारण्याप्रमेयतः। आचार्योक्तिमनुप्रश्नाः शिष्यस्य गुरुसन्निधौ ॥१३॥
अप्यविद्वानमुं लोकं प्रेत्य कश्चित्समश्नुते। न चेदविद्वानाप्नोति विद्वानेतीति का प्रमा॥
स्यान्न वेत्यपरः प्रश्नस्त्रित्वाद्धि बहुवागियम् ॥१४॥
[1]प्लुतिश्चात्र विचारार्था विचार्यं वस्त्विदं यतः। एतेषां खलु चोद्यानामुत्तरार्थोत्तरा श्रुतिः ॥१५॥ ५
द्वयोः सद्भावपूर्वत्वादस्तित्वं तावदुच्यते ॥१६॥
घटाङ्कुरादि यत्कार्यं दृष्टं सत्कारणं हि तत्। आकाशादि च नः कार्यं तदप्येवं प्रतीयताम् ॥१७॥
असतश्चेदिदं कार्यं सर्वं स्यादसदन्वितम्। असतः कारणत्वं च निरात्मत्वान्न सिद्ध्यति ॥१८॥
ध्रुवः सन्कुरुते कार्यमयस्कान्तो मणिर्यथा। कारणत्वं भवेदेवं कुर्वतोऽतिशयः कुतः ॥१९॥
साविद्यः प्रत्यगात्मा यो वियद्योनिः पुरोदितः। सोऽकामयत नाविद्यां विना कामोऽस्ति कस्यचित् ॥२०॥ १०
अलातस्यैकरूपस्य वैश्वरूप्यं यथाऽन्यतः। रूपाभिधानभ्रान्त्युत्था बहुतेयं परात्मनः॥
प्रजायेयेत्यतो वक्ति नामरूपात्मना प्रभुः ॥२१॥

एवं तात्पर्यमुक्त्वा पदार्थान्कथयति—अथेति। ब्रह्मात्मैक्यज्ञानस्य फलवत्त्वकथनान्तर्यमथशब्दार्थः। यतो विदुषोऽविदुषश्च साधारणं ब्रह्म यतश्चाप्रमेयमतः प्रश्ना भवन्तीत्यतःशब्दार्थः। आचार्योक्तेरनन्तरमित्यनुशब्दार्थः॥ १२-१३॥ १५

प्रश्नानेव विभज्य कथयति—अपीति। अविद्वान्कश्चिन्मृतः सन्कैवल्यं प्राप्नोत्युत न प्राप्नोतीत्येकः प्रश्नः। आत्मत्वे सत्यपि ब्रह्मणोऽविद्वान्विद्याबलाभावान्न प्राप्नोतीति चेत्तदा विद्वानपि प्राप्नोत्युत नेति द्वितीयः। ब्रह्मप्राप्तेरविद्यानिवृत्तेरतिरेकाद्ब्रह्मास्ति नास्तीति तृतीयः। तेन बहुवचनमित्यर्थः॥ १४॥

प्लुतेर्विचारविषयत्वोक्तिपूर्वकं "सोऽकामयते"त्याद्युत्तरसन्दर्भस्य तात्पर्यमाह—प्लुतिश्चेति॥ १५॥

क्रममतिक्रम्य तृतीयप्रश्नस्य प्राथम्येन निर्णये हेतुमाह—द्वयोरिति॥ १६॥ २०

ब्रह्मणः सत्त्वमनुमानेन साधयति—घटेति। आकाशादि सत्पूर्वकं कार्यत्वाद्घटादिवदिति लौकिकव्याप्त्यवष्टम्भेन सत्कारणं तावदधिगतं तस्य च देशादिकारणत्वेन देशाद्यनवच्छिन्नत्वाद्ब्रह्मत्वं सिद्धमित्यर्थः॥ १७॥

जगत्कारणस्य ब्रह्मणो विशेषतोऽनुपलम्भेनासत्त्वादसदेव कारणं जगतः स्यादित्याशङ्क्याऽऽह—असतश्चेदिति। किञ्च कारणत्वं कार्यपेक्षया नियतप्राक्कालसत्त्वं तन्न शून्यस्य सम्भवतीत्याह—असत इति॥ १८॥ २५

ब्रह्मापि जगतो न कारणं कूटस्थत्वादित्याशङ्क्याऽऽह—ध्रुवः सन्निति। कुर्वत्कारणमित्यङ्गीकरणान्न कूटस्थस्य कारणत्वमित्याशङ्क्याऽऽह—कुर्वत इति। सदा कुर्वच्चेत्कारणं तदाऽतिशयस्य विशेषस्याभावादेकरूपत्वात्कूटस्थस्यैव कारणत्वमापद्येत कदाचित्कुर्वच्चेत्कारणं तर्हि कारणत्वमकुर्वत एव कुर्वद्रूपस्याकुर्वत्कार्यत्वादित्यर्थः॥ १९॥

आकाशादिकारणस्य प्रत्यगात्मनः सद्भावं प्रसाध्य तत्रैवार्थे समनन्तरवाक्यमवतारयति—साविद्य इति। ३० आकाशादिकारणस्याज्ञातस्य प्रत्यगात्मनः सशब्देनोपादाने हेतुमाह—नाविद्यामिति॥ २०॥

अविद्यया कामयितृत्ववत्परस्याऽऽत्मनो बहुभवनमपि तथैवेति दर्शयन्ननन्तरं वाक्यमुत्थापयति—अलातस्येति। तस्य नैश्चल्ये सति तेजोमात्रत्वेनैकरूपस्य बहुरूपत्वदीर्घत्ववक्रत्वादि चलनविशेषाद्यथोत्पद्यते तथा परस्याऽऽत्मनः स्वारस्येनैकरूपस्य नामरूपात्मकाविद्याजनितभ्रान्तिवशाद्बहुभवनं भवति। अतो बहुभवनस्य अविद्यामन्तरेणायोगान्नामाद्यात्मना "प्रजायेये"ति श्रुतिरित्यर्थः॥ २१॥ ३५

---

[1] पा० अष्टा० ८-२-९७।

आत्मस्थे नामरूपे ये देशकालाद्यपेक्षिणी । जगत्कर्मवशादीशाद्व्यज्येते बहुधाऽऽत्मनः ॥२२॥
व्याकृतिर्या तयोर्विष्णोः प्रत्यहं नामरूपयोः । भूयो भवनमेतत्स्यान्मायिनोऽनेकता यथा ॥२३॥
न ह्यनवयवस्यास्य बहुत्वं युज्यतेऽञ्जसा । तस्माद्व्याक्तं बहुत्वं स्याद्व्योम्नो यद्वद्घटादिभिः ॥२४॥
श्रौतं सृष्ट्यादिविषयमीश्वरालोचनं तपः । कार्यत्वाल्लौकिकस्येह तपसोऽसम्भवो भवेत् ॥२५॥
५ यथाश्रुति समालोच्य ससर्ज जगदीश्वरः । यथाक्रमं यथारूपं यथाकर्म यथाकृति ॥२६॥
मायावी जगदुत्पाद्य माययैवेश्वरेश्वरः । सर्पादीन्कल्पितान्स्रग्वत्तदेवानुविवेश सः ॥२७॥
मृद्वच्चेत्कारणं ब्रह्म कार्यं सर्वं तदात्मकम् । तदात्मतातिरेकेण प्रवेशोऽन्यो न विद्यते ॥२८॥
न चान्यः प्राविशद्विष्णोः श्रूयते ह्येककर्तृता । सृष्ट्वा जगत्तदेवानुप्राविशच्चेति हि श्रुतिः ॥२९॥
कपालाद्यात्मना कुम्भं मृद्वच्चेत्प्राविशज्जगत् । मृदोऽनेकात्मकत्वात्तु घटते नैकतो दृशोः ॥३०॥
१० अनाप्तदेशवन्मृद्वत्प्रवेशो व्यापिनः कथम् । प्रवेशश्रवणात्तर्हि परिच्छिन्नं प्रकल्पताम् ॥३१॥
मुखे हस्तादिवच्चायं प्रवेशोऽपि घटिष्यति । अमूर्तस्यापि नैवं स्यात्कार्यव्यापित्वहेतुतः ॥३२॥

व्यापि वाऽव्यापि वा कार्यं व्याप्नोत्येव हि कारणम् ।
न ह्यात्मशून्यो देशोऽस्ति यं जीवेनाऽऽविशेत्परः ॥ ३३ ॥

अविद्यया बहुभवनं परस्य प्रपञ्चयति—आत्मस्थ इति । जगच्छब्देन प्राणिजातं गृह्यते । वार्तिकद्वयेऽपि
१५ नामरूपशब्देनाविद्योच्यते ॥ २२-२३ ॥

परिणामित्वाद्ब्रह्मणो मुख्यमेव बहुभवनं नाविद्याकृतमित्याशङ्क्याऽऽह—न हीति ॥ २४ ॥

स तपोऽतप्यतेत्यत्र तपःशब्दार्थमाह—श्रौतमिति । किमिति तपःशब्देन प्रसिद्धमेव कृच्छ्रादि नोच्यते तस्य कार्यत्वेन वर्णाश्रमादिसर्गोत्तरकालत्वाद्ब्रह्मणि चासम्भवादित्याह—कार्यत्वादिति ॥ २५ ॥

स तपस्तप्त्वेत्यादेरर्थमाह—यथाश्रुतीति ॥ २६ ॥

२० तत्सृष्ट्वेत्यादेरर्थं कथयति—मायावीति ॥ २७ ॥

जगत्सृष्ट्वाऽत्र प्रविष्टं स्रष्टृ ब्रह्मेत्युक्तं प्रवेशमाक्षिपति—मृद्वदिति ॥ २८ ॥

कार्यस्योपादानाव्यतिरेकादुपादानस्य ब्रह्मणोऽप्रविष्टदेशाभावात्प्रवेशो न सिध्यति चेत्तर्हि ब्रह्मणोऽन्यस्य कस्यचित्प्रविष्टत्वमेष्टव्यमित्याशङ्क्य सृष्टिप्रवेशयोरेककर्तृत्वश्रुतिविरोधान्नैवमित्याह—न चेति ॥ २९ ॥

यथा घटस्य समवायिकारणमेव कपालचूर्णादिर्घटे प्रवेशे सति तदात्मना घटं प्रविशतीति व्यपदिश्यते तथा
२५ जगतः समवायिकारणमेव ब्रह्म जगदुत्पाद्य तत्र प्रविष्टमिति व्यपदेशः सिध्यतीति शङ्कते—कपालादिति । वैषम्य-प्रदर्शनेन प्रत्यादिशति—मृद इति ॥ ३० ॥

वैषम्यमेव स्फोरयति—अनाप्तेति । प्रवेशश्रुत्या परिच्छिन्नत्वं स्रष्टुरिष्यतामित्याशङ्कते—प्रवेशेति ॥३१॥

परिच्छिन्नत्वाङ्गीकारेऽपि कथं प्रवेशोपपत्तिरित्याशङ्क्याऽऽह—मुख इति । मूर्तस्य मूर्तान्तरे प्रवेश-दर्शनात्परस्य चामूर्तत्वान्न कार्ये प्रवेशो युज्यते । तस्य कार्यव्यापित्वादव्याप्तकार्यदेशाभावादित्युत्तरमाह—
३० अमूर्तस्येति ॥ ३२ ॥

तस्य परिच्छिन्नत्वाङ्गीकारात्कथं कार्यव्यापित्वमित्याशङ्क्याऽऽह—व्यापि वेति । समवायिकारणं परिच्छेदे अपरिच्छेदे च स्वकार्यं व्याप्नोत्येव तथा च सृष्ट्वा प्रविष्ट इत्येतदनिष्टमित्यर्थः । परस्य व्यापित्वेऽपि जीवस्या-व्यापित्वात्तेनाऽऽत्मनाऽऽस्य कार्ये प्रवेशः स्यादित्याशङ्क्याऽऽह—न हीति ॥ ३३ ॥

अथ कारणरूपेण कार्यमीशः समाविशेत् । अहं ब्रह्मेतिवज्जह्यात्कार्यं कार्यात्मतां तथा ॥३४॥
मतं जीवात्मकं कार्यं याति कार्यान्तरं यदि । विरोधान्नैवमप्येतन्नैति कुम्भः शरावताम् ॥३५॥
नामरूपादिकार्याच्च व्यतिरेकानुवादिनि । श्रुतिः कुप्येत मोक्षश्च तदाप्तौ सुदुर्लभः ॥३६॥
जलार्कवत्प्रवेशश्चेन्नापरिच्छिन्नरूपतः । अमूर्तत्वाच्च नास्यैवं प्रवेश उपपद्यते ॥३७॥
एवं तर्हि प्रवेशोऽस्य श्लिष्यते न कथञ्चन । न च गत्यन्तरं विद्मो येन वाक्यं समर्थ्यते ॥३८॥ ५
आनर्थक्यादिदं तर्हि त्यज्यतां शिशुवाक्यवत् । प्रवेशवाक्यं नैवं तद्गत्यन्तरसमाश्रयात् ॥३९॥
ब्रह्मवित्परमाप्नोतीत्युक्त्वा सत्यादिलक्षणम् । प्रावेशयद्गुहां तच्च तदनात्मत्वशान्तये ॥४०॥
अब्रह्मत्वनिवृत्त्यर्थं ब्रह्मात्मेतिविशेषणम् । तन्निवृत्ताववाक्यार्थं कैवल्यं प्रतिपद्यते ॥४१॥
यस्मादेवं फलं तस्माज्ज्ञानमत्र विवक्षितम् । गुहायामद्वयं ब्रह्म तस्मान्निहितमुच्यते ॥४२॥
तद्रूपानुगमायान्नमयान्तं कार्यमाह हि ॥४३॥ १०
पूर्वपूर्वातिरेकेण त्रीन्कोशानतिलङ्घ्य च । विज्ञानमयरूपायां गुहायां दर्शितः परः ॥४४॥

यथा कार्यं कारणरूपेण पर्यवस्यति तथेश्वरो जगदुत्पाद्य तत्र प्रविशतीत्यभ्युपगमान्न प्रवेशानुपपत्तिरिति चोदयति—अथेति । यथाऽहं ब्रह्मास्मीत्यत्राहङ्कर्तृत्वनिरासेनात्मनो ब्रह्मत्वं बोध्यते तथा यथोक्ते प्रवेशे कार्यस्य कार्यात्मतात्यागः स्यात्तथा सति न कार्ये प्रवेशः सिध्यतीत्युत्तरमाह—अहमिति ॥ ३४ ॥

परमात्मकार्यस्य जीवस्याहङ्कारादिकार्यात्मकत्वं परस्य प्रवेशो नामेति पुनः शङ्कते—मतमिति । घटस्य १५ शरावत्वादर्शनादन्यस्यान्यभावासम्भवान्न जीवस्याहङ्काराद्यात्मत्वमिति दूषयति—विरोधादिति ॥ ३५ ॥

किञ्च जीवस्य परमात्मकार्यस्याहङ्कारादिकार्यभावे सत्यनेन जीवेनाऽऽत्मनाऽनुप्रविश्येति नामरूपक्रियात्मक-कार्यातिरेकं जीवस्यानुवदन्ती श्रुतिर्विरुध्येतेत्याह—नामेति। कार्यस्य जीवस्य कार्यान्तरापत्तौ तस्य ब्रह्मभावो मोक्षोऽपि दुर्लभो भवेत्स्वरूपनाशमन्तरेणान्यस्यान्यभावासम्भवादतोऽपि यथोक्तप्रवेशानुपपत्तिरित्याह—मोक्षश्चेति ॥ ३६ ॥

प्रकारान्तरेण प्रवेशमाशङ्क्य प्रत्यादिशति—जलार्कवदिति ॥ ३७ ॥ २०

यथोक्तानां प्रवेशप्रकाराणामन्यतमोऽपि प्रकारो दर्शितरीत्या नोपपद्यते चेत्तर्हि परस्याऽऽत्मनो न कथञ्चिदपि प्रवेशो युज्यत इत्युपसंहरति—एवं तर्हीति । प्रवेशवाक्यं तर्हि प्रागुक्तान्प्रकारान्परिहाय प्रकारान्तरेण समर्थ्यता-मित्याशङ्क्याऽऽह—न चेति ॥ ३८ ॥

कथं तर्हि प्रवेशवाक्यस्य प्रामाण्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति—आनर्थक्यादिति । प्रवेशवाक्यं न त्याज्यं तस्य गत्यन्तरसम्भवादिति सिद्धान्तयति—नैवमिति ॥ ३९ ॥ २५

ब्रह्मात्मनोरेकत्वज्ञानार्थं प्रवेशस्याप्रतिपाद्यस्यैव कल्पितत्वान्नोक्तदोषाणामवकाशोऽस्तीति गत्यन्तरमेव स्फोरयति—ब्रह्मविदिति ॥ ४० ॥

"यो वेद निहितं गुहायामि"ति गुहाप्रवेशवचनं ब्रह्मणोऽनात्मत्वनिवृत्त्यर्थमिति यथोच्यते तथैव "अयमात्मा ब्रह्मे"ति ब्रह्मणो विशेष्यत्वमात्मनोऽप्यब्रह्मत्वशङ्कानिवृत्त्यर्थमित्याह—अब्रह्मत्वेति । ब्रह्मणोऽनात्मत्वनिवृत्तिरात्म-नश्चाब्रह्मत्वनिवृत्तिर्यदा विशेषणसामर्थ्याल्लभ्यते तदा सिद्धमर्थं कथयति—तन्निवृत्ताविति ॥ ४१ ॥ ३०

मोक्षफलस्यैक्यज्ञानस्यात्र विवक्षितत्वे तादर्थ्येन मन्त्रे ब्राह्मणे च प्रवेशकल्पनेत्याह—यस्मादिति ॥ ४२ ॥

कथमेकत्वज्ञानमत्र विवक्षितमित्युच्यते कोशपञ्चकोपन्यासस्यापीह दर्शनादित्याशङ्क्याऽऽह—तद्रूपेति । ब्रह्मात्मैकत्वस्वरूपानुगमस्तदवगतिस्तदर्थमानन्दमयाद्यन्नमयान्तं कोशपञ्चकमिहोपन्यस्यते तस्मादैक्यज्ञानमेवात्र विवक्षितं कोशपञ्चकवचनस्य तदुपायत्वादित्यर्थः ॥ ४३ ॥

प्रवेशवचनमेकत्वज्ञानार्थमित्युक्तं प्रपञ्चयति—पूर्वपूर्वेति । पूर्वस्मादन्नमयाद्बाह्यादतिरेकेणानन्तरं प्राणमयं ३५ ततोऽपि चातिरेकेण मनोमयं ततश्चातिरेकेण विज्ञानमयं गृहीत्वा त्रीन्कोशान्पूर्वोक्तानेवमतिक्रम्य विज्ञानमयरूपा या बुद्धिलक्षणा गुहा तत्र परमात्मा प्रविष्टो दर्शितस्तथा च जीवपरयोरैक्यं सिध्यतीत्यर्थः ॥ ४४ ॥

तत्राऽऽनन्दमयो यस्माल्लक्ष्यते राहुचन्द्रवत् । मानुषादधि यत्रेदं सुखं निष्ठां प्रपद्यते ॥
उत्कृष्यमाणं क्रमशस्तद्ब्रह्मासीति बोधयेत् ॥४५॥
विकल्पयोनावेतस्यां निर्विकल्पोऽधिगम्यते । तस्मात्तस्यां प्रवेशोऽस्य कल्प्यते नाञ्जसोच्यते ॥४६॥
प्रकाशात्मक एतस्मिन्द्रष्टृश्रोत्रादिलक्षणम् । मोहादीक्षामहे यस्मात्प्रविष्टस्तेन कल्प्यते ॥४७॥
५ [१]तस्यैष एव शारीर आत्मेत्येवं ब्रुवाणया । ऐकात्म्यमुच्यते श्रुत्या ह्यप्रविष्टाप्रविष्टयोः ॥४८॥
प्रवेशहेतुदोषाणामध्यस्तानां परात्मनि । [२]यदाहीत्यादिना ध्वंस एवं सत्युपपद्यते ॥४९॥
अप्रविष्टस्वभावस्य प्रवेशस्तेन कल्प्यते । क्षेत्रज्ञेश्वरहानेन ह्यैकात्म्यं स्यात्कथं त्विति ॥५०॥
मूर्तामूर्तात्मकं कार्यं यत्सृष्ट्वा प्राविशत्प्रभुः । रजतं शुक्तिकेवाऽऽत्मा तदात्मैवाभवन्मृषा ॥५१॥
मूर्तं भूतत्रयं सत्स्यादितरत्त्यदिहोच्यते । अव्याकृतादाशरीरादेतावद्वस्तु नापरम् ॥५२॥
१० समानेतरजातीयान्निर्धार्येदंतयोच्यते । यन्निरुक्तं तदत्र स्यादनिरुक्तमितोऽन्यथा ॥५३॥

कोशान्तरं परित्यज्य बुद्धावेव परस्य प्रवेशवचने हेतुमाह—तत्रेति । ब्रह्मात्मैकत्वज्ञानस्यात्र विवक्षितत्वादाचार्यो योग्यं शिष्यं दृष्ट्वा त्वं ब्रह्मेत्युपदिशेदित्याह—मानुषादिति ॥ ४५ ॥

एकत्वज्ञानाय प्रवेशकल्पनेत्युक्तमेव प्रकारान्तरेण प्रकटयति—विकल्पेति । एषा हि बुद्धिर्विकल्पयोनिः सर्वविकल्पाश्रयत्वात्तत्र प्रत्यगात्मप्रवेशे सत्येव निर्विकल्पः सर्वविद्यातत्कार्यविनिर्मुक्तोऽहं ब्रह्मास्मीति यस्मात्परो १५ ज्ञातुं शक्यते तस्मात्तत्र प्रवेशकल्पना भवत्यैक्यज्ञानार्थेत्यर्थः ॥ ४६ ॥

आत्मनो दर्शनश्रवणादिविशेषज्ञानस्यान्तःकरणद्वारा चक्षुःश्रोत्रादिकृतत्वाच्च तस्य तत्र प्रवेशो भवतीत्याह—प्रकाशात्मक इति । एतस्मिन्नित्यन्तःकरणमुच्यते तस्य च प्रकाशात्मकत्वं ज्ञानाकारपरिणामाङ्गीकरणात्तत्र द्रष्टा श्रोतेत्यादिरूपं मोहात्प्रतीयते तस्य च परिशुद्धस्य परमात्ममात्रत्वादैक्यसिद्ध्यर्थत्वेनैव प्रवेशकल्पनेत्यर्थः ॥४७॥

इतश्चात्र ब्रह्मात्मनोरेकत्वं विवक्षितमित्याह—तस्येति । यो हि परमात्माऽसन्नेव स भवतीत्यादिश्लोके २० निर्दिश्यते तस्य सन्निधानादेषशब्देन परामृष्टुं शक्यत्वादसावेव परमात्मा तस्य पूर्वोक्तस्य कोशपञ्चकस्य शारीर आत्मेत्युक्ते जीवब्रह्मणोरेकत्वमेव सिध्यति परस्यैव कोशपञ्चकानुप्रवेशेन जीवभावादित्यर्थः ॥ ४८ ॥

जीवब्रह्मणोरेकान्तेनैकत्वे प्रवेशनिमित्तकार्तृत्वादिदोषाणां ब्रह्मण्यध्यारोपितानां यदाहीत्यादिवाक्योत्थज्ञानात् निवृत्तिः सिध्यतीति फलितमाह—प्रवेशेति ॥ ४९ ॥

जीवब्रह्मणोरेकत्वे ब्रह्मणोऽसंसारित्वात्तदभेदाज्जीवेऽपि भातसंसारस्य कल्पितत्वादेकत्वज्ञानान्मोक्षोपपत्तेरे- २५ कत्वज्ञानाय प्रवेशकल्पना युक्तेत्युपसंहरति—अप्रविष्टेति । तेनेत्युक्तं प्रवेशकल्पनाकारणमेव स्फोरयति—क्षेत्रज्ञेति ॥५०॥

तदनुप्रविश्य सच्च त्यच्चाभवदित्यस्य तात्पर्यार्थमाह—मूर्तेति । यत्कार्यं मूर्तामूर्तात्मकं भूतपञ्चकं तदविद्यया सृष्ट्वा परमात्मा प्राविशत्प्रविश्य चायमात्मा तत्तदात्मैव मिथ्या संवृत्तः । यथा शुक्तिका मिथ्यारजतं भवति तद्वदित्यर्थः ॥ ५१ ॥

पृथिव्यापस्तेजश्चेति भूतत्रयं मूर्तं सच्छब्दवाच्यं वायुराकाशश्चेति भूतद्वयममूर्तं त्यच्छब्दवाच्यमित्यवान्तर- ३० विभागमाह—मूर्तमिति । प्रतीचो भूतपञ्चकात्मकत्वकथनेऽपि कार्यान्तरं पृथगवशिष्टमस्तीत्याशङ्क्याव्याकृतादर्वागन्त्यकार्यपर्यन्तं सर्वं भूतपञ्चकात्मकमित्याह—अव्याकृतादिति ॥ ५२ ॥

निरुक्तं चानिरुक्तं चेत्यस्यार्थमाह—समानेति । सजातीयाद्विजातीयाच्च पृथक्कृत्य येन विशेषेणेदन्तया वस्तु निर्दिश्यते स विशेषो निरुक्तशब्देनोच्यते । सजातीयविजातीयाभ्याममव्यावर्तको विशेषस्त्वनिरुक्तशब्दवाच्यो भवतीत्यर्थः ॥ ५३ ॥

---

३५　१. तै० २.६ ।　२. तै० २.७ ।

साक्षात्परोक्षरूपे तु मूर्तामूर्ते पुरोदिते । निरुक्तेतररूपे ये तयोरेव विशेषणे ॥५४॥
निलयो मूर्तधर्मः स्यादुत्तरोऽमूर्तसंश्रयः । विज्ञानं चेतनं विद्यादविज्ञानमचेतनम् ॥५५॥
व्यावहारिकमेवात्र सत्यं स्यादधिकारतः । पारमार्थिकसत्यस्य वाक्यान्ते समुदीरणात् ॥५६॥
मृगतृष्णादिवन्मिथ्या तदिहानृतमुच्यते । इत्येतदभवत्स्रष्टा ह्यविद्योत्थमविद्यया ॥५७॥
प्रत्याख्यानेन सर्वस्य सत्यदाद्यात्मकस्य हि । व्यावृत्ताखिलनानात्वमहं ब्रह्मेति बोध्यते ॥५८॥
नैतदस्ति न नास्तीदं द्वयोर्मोहोद्भवत्वतः । [1]न सत्तन्नासदित्येवं प्राह विश्वेश्वरोऽपि हि ॥५९॥
आविर्भावतिरोभावौ बुद्धेर्यत्साक्षिकाविह । तमेकमन्तरात्मानं विद्यादव्यभिचारिणम् ॥६०॥
तस्मादस्ति परं ब्रह्म यस्याविद्याविकल्पिताः । सन्तीव सत्तामालम्ब्य कार्यकारणलक्षणाः ॥६१॥
विवादगोचरापन्नं यत्किञ्चिद्रचनात्मकम् । तत्सर्वं बुद्धिमत्पूर्वं तदात्मत्वाद्घटादिवत् ॥६२॥
तत्रैतस्मिन्यथोक्तेऽर्थे श्लोकः पूर्ववदुच्यते । श्रुत्युक्तार्थानुवादी तु द्रढिम्ने पुंधियोऽधुना ॥६३॥ १०

इति षष्ठोऽनुवाकः

निरुक्तानिरुक्तयोः स्वातन्त्र्यं व्यावर्तयति—साक्षादिति । भूतत्रयमपरोक्षं सच्छब्दवाच्यं भूतद्वयं परोक्षं त्यच्छब्दवाच्यमित्युक्तयोरेव निरुक्तानिरुक्ते यथाक्रमं विशेषणे स्यातामित्यर्थः ॥ ५४ ॥

निरुक्तानिरुक्तयोरुक्तन्यायं निलयनं चानिलयनं चेत्यत्रापि योजयति—निलय इति । विज्ञानं चाविज्ञानं चेत्यस्यार्थमाह—विज्ञानमिति ॥ ५५ ॥ १५

सत्यं चानृतं च सत्यमभवदित्यत्र प्रथमसत्यशब्दार्थमाह—व्यावहारिकमिति । सत्यदादिव्यावहारिकपदार्थोक्तिप्रकरणे सत्यमित्युक्तत्वादनृतसन्निधानाच्चेति हेतुमाह—अधिकारत इति । तत्रैव हेत्वन्तरमाह—पारमार्थिकेति ॥ ५६ ॥

अनृतशब्दार्थमाह—मृगतृष्णादीति। "सच्च त्यच्चे"त्यादिवाक्यानामुक्तमर्थमुपसंहरति—इत्येतदिति ॥५७॥

प्रत्यगात्मनोऽविद्यया समस्तजगदात्मत्वमित्युक्ते फलितमर्थं कथयति—प्रत्याख्यानेनेति । सर्वविशेषनिराकरणेन सर्वस्याऽऽत्मभूतमखण्डं वस्तु "यदा ह्येवे"त्यादिना बोध्यते तदेवं सत्युपपन्नं भवतीत्यर्थः ॥ ५८ ॥ २०

सत्यदाद्यात्मकस्य जगतो यदि कल्पितत्वं तर्हि ब्रह्मणोऽपि कल्पितत्वं सदन्तर्भावादित्याशङ्क्याऽऽह—नैतदिति। न तावदत्र सत्त्वं निषेध्यं तस्य सिसाधयिषितत्वादतो व्यभिचारित्वात्कार्यकारणयोरब्रह्मत्वं श्रुतिस्मृत्योरभिप्रेतमित्यर्थः ॥ ५९ ॥

ज्ञानात्कार्यवत्कारणस्यापि व्यभिचारे कस्याव्यभिचारः स्यादित्याशङ्क्याऽऽह—आविर्भावेति ॥ ६० ॥ २५

सर्वानात्मकल्पना कूटस्थब्रह्मचैतन्याधीनेत्युक्त्या प्रकृतं ब्रह्मणोऽस्तित्वं सिद्धमिति फलितमाह—तस्मादिति ॥ ६१ ॥

प्रकृते ब्रह्मणोऽस्तित्वे सम्भावनाहेतुत्वेनानुमानमारचयति—विवादेति । यत्किञ्चिद्विशिष्टरचनात्मकं तत्सर्वं बुद्धिमत्पूर्वकं यथा घटघटिकादि तथाऽभिमतं जगदपि चेतनपूर्वकं विशिष्टरचनात्मकत्वात्सम्मतवदित्यर्थः ॥ ६२ ॥

ब्रह्मणः सत्त्वे ब्राह्मणानुमानाभ्यामुक्ते तदप्येष श्लोको भवतीतिमन्त्रमवतारयति—तत्रेति ॥ ६३ ॥ ३०

इति षष्ठोऽनुवाकः

---

1. गी० १३.१२ ।

## अथ ब्रह्मवल्ल्यां सप्तमोऽनुवाकः

**असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान ँ् स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति ।**

**असद्वा इदमग्र आसीत् । असदिति व्याकृतनामरूपविशेषविपरीतरूपमविकृतं ब्रह्मोच्यते । न पुनरत्यन्त-मेवासत् । न ह्यसतः सज्जन्मास्ति । इदमिति नामरूपविशेषवद्व्याकृतं जगदग्रे पूर्वं प्रागुत्पत्तेर्ब्रह्मैवासच्छब्दवाच्यमा-सीत् । ततोऽसतो वै सत्प्रविभक्तनामरूपविशेषमजायतोत्पन्नम् । किं ततः प्रविभक्तं कार्यमिति पितुरिव पुत्रः ?**
५ **नेत्याह । तदसच्छब्दवाच्यं स्वयमेवाऽऽत्मानमेवाकुरुत कृतवत् । यस्मादेवं तस्मात्तद्ब्रह्मैव सुकृतं स्वयं कर्त्रुच्यते । स्वयं कर्तृ ब्रह्मेति प्रसिद्धं लोके सर्वकारणत्वात् । यस्माद्वा स्वयमकरोत्सर्वं सर्वात्मना तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते । सर्वथाऽपि तु फलसम्बन्धादिकारणं सुकृतशब्दवाच्यं प्रसिद्धं लोके । यदि पुण्यं यदि वाऽन्यत्सा प्रसिद्धिर्नित्ये चेतनवत्कारणे सत्युपपद्यते । तस्मादस्ति तद्ब्रह्म सुकृतप्रसिद्धेः ।**

आनन्दगिरिटीका

१० **सुकृतमिति ।** क्तप्रत्ययः सुष्ठु क्रियत इति कर्माभिधायकोऽपि च्छान्दस्या प्रक्रियया सुष्ठु करोतीति कर्तरि व्याख्यातः ।

वनमाला

असदिति पदेनाव्याकृतं ब्रह्मोच्यत इति सम्बन्धः । तत्रासच्छब्दप्रयोगे हेतुमाह—**व्याकृतेति** । व्याकृतौ व्यक्तीकृतौ नामरूपात्मकौ विशेषौ यस्य जगतस्तस्मिन्सच्छब्दस्य प्रसिद्धत्वात्तद्विपरीते कारणे ब्रह्मण्यसच्छब्दप्रयोग
१५ इत्यर्थः । नन्वसत्पदस्य शून्यवाचित्वमेव किं न स्यात् ? तत्राह—**न पुनरिति** । तत्र हेतुः—**न हीति** । हि यस्मादसतः सकाशात्सतः कार्यस्य जन्म लोके नास्ति तस्मादत्र सज्जन्महेतुत्वेन श्रूयमाणमसदत्यन्तासन्न भवतीत्यर्थः । **इदमिति** पदस्यार्थमाह—**नामरूपेति** । **तत इति** । कारणादित्यर्थः । **स्वयमिति** । स्वयमन्यानधिष्ठितं सदात्मानमेव जगदात्मना कृतवदित्यर्थः । **यस्मादेवमिति** । यस्माद्ब्रह्म स्वयमेव कृतवदित्यर्थः । सूपसर्गस्य शोभनवाचिनः स्वयंशब्दनिर्दिष्टम-परतन्त्रत्वलक्षणं शोभनमर्थः । कर्मार्थकस्यापि क्तप्रत्ययस्य च्छान्दस्या प्रक्रियया कर्तृत्ववाचित्वस्वीकारात्कृत-
२० मित्यस्य कर्त्रर्थः । तथा च तस्मादिति हेतुवचनानुसारेण स्वयं कर्तृत्ववेषेण ब्रह्मैव सुकृतमित्युच्यत इत्यर्थः । ननु ब्रह्मण एव स्वयं कर्तृत्वात्सुकृतशब्दवाच्यत्वमित्ययुक्तं ब्रह्मान्यस्यापि कस्यचित्स्वयं कर्तृत्वसम्भवादित्याशङ्क्याह—**स्वयमिति** । लोकशब्दिते शास्त्रे समस्तजगत्कारणत्वाद्ब्रह्मैव स्वयमन्यानधिष्ठिततया जगत्कर्त्रीति प्रसिद्धं नान्यत्, अतो नातिप्रसङ्ग इति भावः । "तदात्मानं स्वयमकुरुत" "तस्मात्तत्सुकृतमुच्यते" इति वाक्यद्वयं पुनरपि योजयन्प्रकारान्तरेण ब्रह्मणः सुकृतशब्दवाच्यत्वमाह—**यस्माद्वेति** । यद्वा ब्रह्म स्वयमात्मानमेव सर्वं जगदकरोत्
२५ यस्मादात्मानमेव सर्वजगदात्मनाऽकरोत्तस्मात्तदेव कारणं ब्रह्म पुण्यरूपेणाप्यवस्थितं सत्सुकृतमुच्यत इति योजना । "असद्वा इदमग्र आसीत्" इति प्रकृतश्लोके "तस्मात्तत्सुकृतमुच्यते" इति भागस्य ब्रह्मणः सुकृतशब्दवाच्यत्वसाधने न तात्पर्यं वैफल्यात्, किं तु ब्रह्मास्तित्वसाधन एव तात्पर्यं तत्परतयैवास्य श्लोकस्यावतारितत्वादित्याशयेन सुकृतशब्दवाच्येऽनास्थां प्रदर्शयन्ब्रह्मास्तित्वसाधने उपयोगं सुकृतवाक्यस्य दर्शयति—**सर्वथापि त्वित्यादिना** । यदि प्रसिद्धिबलात्पुण्यं सुकृतशब्दवाच्यं यदि वास्मदुक्तरीत्या ब्रह्म उभयथापि सुकृतशब्दवाच्यं स्वर्गादिसम्बन्धादिकारणं
३० लोकशब्दिते शास्त्र प्रसिद्धमित्यर्थः । तत्र पुण्यस्य फलसम्बन्धतत्साधनदिव्यदेहादिसम्बन्धकारणत्वं कर्मकाण्डे प्रसिद्धम्, स्वयं कर्तृतया सुकृतशब्दवाच्यस्य ब्रह्मणोऽपि फलसम्बन्धादिकारणत्वम् "श्रुतत्वाच्च" इति सूत्रोदाहृत-श्रुतिप्रसिद्धमिति विभागः । फलदातृत्वस्य श्रुतिसिद्धत्वादुपपत्तेश्च ब्रह्मैव फलदातृ, न कर्म आशुतरविनाशित्वादिति सूत्रार्थः । ततः किम् ? अत आह—**सा प्रसिद्धिरिति** । सुकृतशब्दवाच्यपुण्यस्य सा फलसम्बन्धादिकारणत्वप्रसिद्धिः आशुतरविनाशिनो जडस्य पुण्यकर्मणः स्वतः फलदातृत्वायोगान्नित्ये सर्वज्ञे ब्रह्मणि सत्येवोपपद्यत इत्यर्थः । ब्रह्मणः
३५ सुकृतशब्दवाच्यत्वपक्षे तु सा ब्रह्मणि फलसम्बन्धादिकारणत्वप्रसिद्धिस्तस्यासत्त्वे नोपपद्यत इति बहिरेव द्रष्टव्यम् ।

**यद्वै तत्सुकृतम्। रसो वै सः। रस ँ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति।**

इतश्चास्ति। कुतः? रसत्वात्। कुतो रसत्वप्रसिद्धिर्ब्रह्मण इत्यत आह—यद्वै तत्सुकृतम्। रसो वै सः। रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके। रसमेवायं लब्ध्वा प्राप्याऽऽनन्दी सुखी भवति। नासत आनन्दहेतुत्वं दृष्टं लोके। बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते ५ विद्वांसो नूनं ब्रह्मैव रसस्तेषाम्। तस्मादस्ति तत्तेषामानन्दकारणं रसवद्ब्रह्म। इतश्चास्ति। कुतः? प्राणनादिक्रियादर्शनात्। अयमपि हि पिण्डो जीवतः प्राणेन प्राणित्यपानेनापानिति। एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्यकरणैर्निर्वर्त्यमाना दृश्यन्ते। तच्चैकार्थवृत्तित्वेन संहननं नान्तरेण चेतनमसंहतं सम्भवति। अन्यत्रादर्शनात्। तदाह—यद्यदि। एष आकाशे परमे व्योम्नि गुहायां निहित आनन्दो न स्यान्न भवेत्को ह्येव लोकेऽन्यादपानचेष्टां कुर्यादित्यर्थः। कः प्राण्यात्प्राणनं वा कुर्यात्तस्मादस्ति तद्ब्रह्म। यदर्थाः कार्यकरणप्राणनादिचेष्टास्तत्कृत एव १०

आनन्दगिरिटीका

**एकार्थवृत्तित्वेनेति।** एकप्रयोजनसाधनत्वेन परस्परायत्ततेत्यर्थः। **अन्यत्रेति।** गृहप्रासादादिषु स्वतन्त्रं

वनमाला

उपसंहरति—**तस्मादिति।** सुकृतस्य फलसम्बन्धादिकारणत्वप्रसिद्धेरित्यर्थः। **रसत्वादिति।** आनन्दत्वादिति यावत्। यत्सुकृतशब्दवाच्यत्वेन प्रसिद्धं ब्रह्म तदेव रसः। विधेयापेक्षया पुंलिङ्गनिर्देशः। रसशब्दो ब्रह्मानन्दे गौण इति १५ मत्वा गुणज्ञानाय मुख्यार्थमाह—**रसो नामेति।** तृप्तिपदं तुष्टिपरम्। एवं ब्रह्मानन्दोऽपि सत्त्वप्रधानेऽन्तःकरणेऽभिव्यक्तः सन्प्राणिनामानन्दकर इति प्रागभिहितम्; तथा चानन्दकरत्वसाम्याद्रसशब्दो ब्रह्मानन्दे गौण इति भावः। **रसमिवायमिति।** अयं लोकः प्रसिद्धरससदृशमात्मानन्दं वृत्तिद्वारा लब्ध्वेत्यर्थः। **सुखी भवतीति।** तथा चानन्दकरत्वादानन्दरूपं ब्रह्मास्तीति भावः। ननु ब्रह्मणः सत्त्वाभावेऽप्यानन्दहेतुत्वमस्तु, नेत्याह—**नासत इति।** ननु विषयाणामेवानन्दहेतुत्वं न ब्रह्मानन्दस्येत्याशङ्क्य विषयशून्यानामप्यानन्ददर्शनान्मैवमित्याह—**बाह्येति।** बाह्यत्वं २० साधनविशेषणम्। निरीहाः समस्तकरणचेष्टावर्जिताः, समाधिनिष्ठा इति यावत्। निरेषणाः नीरागा विद्वांसः, साक्षात्कृतब्रह्मतत्त्वा इति यावत्। तेषामानन्दकारणं ब्रह्मैवेति निश्चीयत इत्याह—**नूनमिति।** एवं विषयाभावेऽप्यानन्ददर्शनाद्विषयानुसन्धानस्थलेऽपि विषयाणां वृत्तिविशेषद्वारा स्वरूपानन्दव्यञ्जकत्वमेव, नाविद्यमानानन्दस्वरूपोत्पादकत्वमिति प्रागावेदितम्; अतः सर्वप्राण्यानन्दहेतुत्वादस्ति तदानन्दकारणं ब्रह्मेत्युपसंहरति—**तस्मादिति।** तेषामित्युपलक्षणम्, सर्वप्राणिनामित्यर्थः। **इतश्चेति।** वक्ष्यमाणहेतोरपि ब्रह्मास्ति। तमेव हेतुमाकाङ्क्षा- २५ पूर्वकमाह—**कुत इत्यादिना।** हेतुं साधयति—**अयमपि हीति।** अपिशब्दोऽनुक्तसमुच्चयार्थः सन्नाधिदैविकादिपिण्डसंग्रहार्थः। अध्यात्माधिभूताधिदैविकेषु पिण्डेषु प्राणनादिक्रिया प्रत्यक्षानुमानादिप्रसिद्धेति सूचनार्थो हिशब्दः। मृतदेहं व्यावर्तयति—**जीवत इति।** "को ह्येवान्यात्कः प्राण्यात्" इति श्रुतौ प्राणापानग्रहणमुपलक्षणमित्याशयेनाह—**इत्येवमिति।** **संहतैरिति।** यथा मृद्दारुतृणादीनि गृहप्रासादादिभावेन संहन्यन्ते तथा शरीरभावेन कार्यकरणानि संहन्यन्त इति भावः। ततः किमित्यत आह—**तच्चैकार्थेति।** कार्यकरणानामेकस्य चेतनस्यार्थं प्रयोजनं प्रति ३० साधनत्वेन मेलनमित्यर्थः। **असंहतमिति।** संहतकार्यकरणव्यतिरिक्तमित्यर्थः। **अन्यत्रेति।** गृहप्रासादादिषु स्वतन्त्रं चेतनं स्वामिनमन्तरेण संहननस्यादर्शनात्कार्यकरणसङ्घातेऽपि तद्विलक्षणः स्वामी चेतनोऽस्तीति निश्चीयते। स च चेतनः प्रतिशरीरं भेदेऽनन्यथासिद्धप्रमाणाभावात्सर्वात्मकं ब्रह्मैवेति तदस्तित्वसिद्धिरित्यर्थः। इतश्चेत्यादिना प्रसाधितेऽर्थे वाक्यमवतारयति—**तदाहेति।** तत्कार्यकरणचेष्टाशेषित्वेन ब्रह्मणोऽस्तित्वमाह श्रुतिरित्यर्थः। ननु "आकाश आनन्दो न स्यात्" इत्यत्राकाशानन्दपदयोः सामानाधिकरण्यमुचितम्, योगेन निरूढ्या वा आकाशपदस्य ३५ ब्रह्मण्यपि प्रयोगसम्भवात्, अत एव "आकाशस्तल्लिङ्गात्" इत्यधिकरणे अत्रत्याकाशपदस्यानन्दत्वरूपब्रह्मासाधारणगुणश्रवणाद्ब्रह्मपरत्वमाचार्यैरेव दर्शितम्; तथापि गुहानिहितवाक्यानुसारात् रूढ्यनुसाराच्च वैयधिकरण्यमुक्तमिति मन्तव्यम्। **न भवेदिति।** सन्न स्यादित्यर्थः। **अपानचेष्टां** निःश्वासमिति यावत्। **यदर्था इति।**

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।
अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते[1] ।

चाऽऽनन्दो लोकस्य । कुतः ? एष ह्येव पर आत्माऽऽनन्दयात्यानन्दयति सुखयति लोकं धर्मानुरूपम् । स एवात्मा आनन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः ।

५ भयाभयहेतुत्वाद्विद्वदविदुषोरस्ति तद्ब्रह्म । सद्वस्त्वाश्रयणेन ह्यभयं भवति नासद्वस्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते । कथमभयहेतुत्वमित्युच्यते—यदा ह्येव यस्मादेष साधक एतस्मिन्ब्रह्मणि किंविशिष्टेऽदृश्ये दृश्यं नाम द्रष्टव्यं विकारो दर्शनार्थत्वाद्विकारस्य । न दृश्यमदृश्यमविकार इत्यर्थः । एतस्मिन्नदृश्येऽविकारेऽविषयभूतेऽनात्म्ये अशरीरे यस्माददृश्यं तस्मादनात्म्यं यस्मादनात्म्यं तस्मादनिरुक्तम् । विशेषो हि निरुच्यते । विशेषश्च विकारः । अविकारं च ब्रह्म । सर्वविकारहेतुत्वात्तस्मादनिरुक्तम् । यत एवं तस्मादनिलयनं निलयनं नीड आश्रयो न
१० निलयनमनिलयनमनाधारं तस्मिन्नेतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः । अभयमिति क्रियाविशेषणम् । अभयामिति वा लिङ्गान्तरं परिणम्यते । प्रतिष्ठां स्थितिमात्मभावं विन्दते लभते ।

आनन्दगिरिटीका

गृहाद्यनारभ्यं स्वामिनमन्तरेण संहननस्यादर्शनात्कार्यकरणसङ्घातेऽपि विलक्षणः स्वामी शरीरोपचयादिभिरुपचयादिरहितोऽवगम्यते । स च चेतनत्वेन भेदाभावाद्ब्रह्मैवेति तदस्तित्वसिद्धिरित्यर्थः ।

१५ वनमाला

कार्यकरणानां प्राणनाद्युपलक्षिताः सर्वाश्चेष्टा यदर्थाः यस्यासंहतस्य चेतनस्य भोगार्थाः स चेतनोऽस्त्येव अन्यथा भोक्तुरभावेन कार्यकरणचेष्टानां वैयर्थ्यप्रसङ्गात् तस्य च चेतनस्य वस्तुगत्या ब्रह्मत्वादस्ति तद्ब्रह्मेत्युक्तम् । तत्कृत एव चेति । आत्मानन्दकृत एव लोकस्यानन्दश्चेत्यर्थः । ननु परस्यैवानन्दरूपत्वादानन्दहेतुत्वमयुक्तम् आनन्दभेदाभावादित्याशङ्क्याह—स एवेति । अविद्ययेति । भ्रान्त्या नानात्वेनानुभूयत इत्यर्थः । "यदा ह्येवैषः" इत्यादेस्तात्पर्य-
२० माह—भयाभयेति । नन्वसतः सकाशादेव भयनिवृत्तिरस्तु; नेत्याह—सद्वस्त्वाश्रयण इति । लोके श्रीरामादेः सत एव भयनिवृत्तिहेतुत्वप्रसिद्धेरसतः शशशृङ्गादेस्तदप्रसिद्धेश्च असद्ब्रह्माश्रयणाद्भयनिवृत्तिर्नोपपद्यत इत्यर्थः । ब्रह्मणो विद्वदभयहेतुत्वे मानं प्रश्नपूर्वकं दर्शयति—कथमित्यादिना । विकार इति । अध्यस्तमिति । यावत् । अविषयीभूत इति । सर्वदृश्यवर्जित इति यावत् । आत्म्यपदेनात्मीयं शरीरमुच्यत इत्याशयेनाह—अशरीर इति । यस्माच्चेति । चशब्दोऽवधारणार्थः । यस्माद्धेतोरनात्म्यं ब्रह्म तस्मादेव हेतोरनिरुक्तमपीत्यर्थः । अत्रात्म्यनिरुक्तनिलयनानां
२५ दृश्यविशेषत्वाद्दृश्यसामान्यनिषेधस्य "व्यापकनिवृत्त्या व्याप्यनिवृत्तिः" इति न्यायेनात्म्यनिरुक्तनिलयननिषेधहेतुत्वमत्र विवक्षितमिति मन्तव्यम् । विशेषो हीति । स विशेषः पदार्थ इत्यर्थः । निरुच्यते समानासमानजातीयेभ्यो निष्कृष्योच्यत इत्यर्थः । घटादिरत्रोदाहरणम् । यत एवमिति । यतः अदृश्यत्वाद्धेतोरनिरुक्तं ब्रह्म तस्मादेव हेतोरनिलयनम् आधाररहितमित्यर्थः । यद्वा यथाश्रुतानुरोधेन पूर्वपूर्वनिषेधस्यैवोत्तरोत्तरनिषेधहेतुत्वं बोध्यम् । एवं व्याख्यातानि पदान्यनूद्य वाक्यार्थमाह—तस्मिन्नेतस्मिन्नित्यादिना । सर्वकार्यपदं दृश्यमात्रोपलक्षणार्थम्, अन्यथा
३० मूलाविद्यादिवैलक्षण्यसिद्ध्यभावप्रसङ्गादिति बोध्यम् । क्रियाविशेषणमिति । अभयं यथा भवति तथा विन्दत इति लाभक्रियाविशेषणमित्यर्थः । प्रतिष्ठाविशेषणं वेत्याह—अभयामिति वेति । आत्मभावमिति । सर्वविशेषरहितं

१. यत्तु उदरमन्तरं कुरुत इत्यत्र अल्पमपि ध्यानविच्छेदं करोतीत्यर्थः इति । तन्न । आत्मनि अन्तरं भेद एव । ध्यानपदाध्याहारे तु ध्यानेऽवकाशं विच्छेदं इत्यर्थो भवेत् तत्र ध्यानपदाध्याहार एव दोषः । वस्तुतस्तु "अभयं प्रतिष्ठां विन्दते" इत्यस्य भयराहित्यहेतुभूतां प्रतिष्ठामत्यन्ताभेदं विन्दत इत्यर्थ एव
३५ युक्तः अभयपदप्रयोगात् "द्वितीयाद्वै भयं भवती"ति शाखान्तरवचनात् । यस्मात् अभयं यथा तथा ब्रह्माभेदं प्राप्नोतीत्यर्थः । यत्तु ब्रह्मैकत्ववादिनामस्माकं ब्रह्मणि नानात्वनिषेधो न प्रतिकूल इति । तन्न । नह्यत्र ब्रह्मनानात्वं प्रतिषिध्यत इति ब्रूमः अपि तु जीवब्रह्मभेदः । निषिध्यत इति ब्रूमः तन्न तस्य सम्मतम् । ततः इदं परमतापरिज्ञानमूलम् ।

**अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति ।**

इति सप्तमोऽनुवाकः

**अथ तदा स तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति । स्वरूपप्रतिष्ठो ह्यसौ यदा भवति तदा नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति । अन्यस्य ह्यन्यतो भयं भवति नाऽऽत्मन एवाऽऽत्मनो भयं युक्तं तस्मादात्मैवाऽऽत्मनोऽभयकारणम् । सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु तच्चायुक्तमसति भयत्राणे ५ ब्रह्मणि । तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति । कदाऽसावभयं गतो भवति साधकः ? यदा नान्यत्पश्यत्यात्मनि चान्तरं भेदं न कुरुते तदाऽभयं गतो भवतीत्यभिप्रायः । यदा पुनरविद्यावस्थायां हि यस्मादेषः अविद्यावानविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत्पश्यत्यात्मनि चैतस्मिन्ब्रह्मणि उदपि, अरमल्पमप्यन्तरं छिद्रं भेददर्शनं कुरुते । भेददर्शनमेव हि [1]अन्तरकरणम्, अल्पमपि भेदं पश्यतीत्यर्थः । अथ तस्माद्भेददर्शनाद्धेतोरस्य भेददर्शिन आत्मनो भयं भवति । तस्मादात्मैवाऽऽत्मनो भयकारणमविदुषस्तदेतदाह । तद्ब्रह्म त्वेव भयं भेददर्शिनो १० विदुष ईश्वरोऽन्यो मत्तोऽहमन्यः संसारीत्येवं विदुषो भेददृष्टमीश्वराख्यं तदेव ब्रह्माल्पमप्यन्तरं कुर्वतो भयं भवत्येकत्वेनामन्वानस्य । तस्माद्विद्वानप्यविद्वानेवासौ योऽयमेकमभिन्नमात्मतत्त्वं न पश्यत्युच्छेदहेतुदर्शनाद्ध्युच्छेद्याभिमतस्य भयं भवति । अनुच्छेद्यो ह्युच्छेदहेतुस्तत्रासत्युच्छेदहेतावनुच्छेद्ये न तद्दर्शनकार्यं भयं युक्तम् । सर्वं च जगद्भयवद्-**

आनन्दगिरिटीका

दासोऽहं तस्य देवस्य ममाऽऽराध्यः परमेश्वर इति भेदं विद्वान्कथमज्ञ इत्युच्यते तत्राऽऽह—**असौ** १५ **योऽयमिति** । यथा चन्द्रभेदं पश्यन्नप्यविद्वानुच्यतेऽतत्त्वदर्शित्वात्तथेत्यर्थः । कथं तर्हि तस्य भयसम्भावनेत्यत आह—**उच्छेदेति** । संहर्ता हि परमेश्वरो मां संहरिष्यति नरके वा निक्षेप्स्यतीति पश्यतो भयं भवतीत्यर्थः । **ब्रह्मैवोच्छेद-**

वनमाला

ब्रह्माहमिति साक्षात्काराभिव्यङ्ग्यमिति शेषः । **अदर्शनादिति** । **वस्तुत इति** शेषः । **विदुषोऽपि** बाधितद्वैतदर्शनाभ्युपगमादिति मन्तव्यम् । अभयप्राप्तिमेव विवृणोति—**स्वरूपप्रतिष्ठो हीति** । यत्र यस्मिन्स्वरूपे स्थितो विद्वान्वस्तुतोऽन्यन्न २० पश्यति अन्यन्न शृणोति अन्यन्न विजानाति च, तादृशस्वरूपप्रतिष्ठोऽसौ विद्वान् तदा विद्याकाले भवतीति मन्तव्यमित्यर्थः, अद्वितीयं ब्रह्मैव तदा भवतीति यावत् । तत्र "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिप्रसिद्धिसूचनार्थो हिशब्दः । ननु विदुषोऽन्यदर्शनाभावेऽपि कथं भयनिवृत्तिरित्यत आह—**अन्यस्य हीति** । ननु स्वस्मादपि स्वस्य भयं किं न स्यादित्याशङ्क्याह—**नात्मन इति** । तथा सति "द्वितीयाद्वै भयं भवति" इति श्रुतिविरोधप्रसङ्गादनुभवविरोधप्रसङ्गाच्चेति भावः । **अनात्मैवेति** । स च विदुषो वस्तुतो नास्ति, अतः २५ "अथ सोऽभयं गतो भवति" इति वचनमुपपन्नमिति भावः । यदुक्तं विद्वदभयहेतुत्वादस्ति ब्रह्मेति तदनुभवेन साधयति—**सर्वत इति** । **ब्राह्मणा** ब्रह्मविदः । **भयहेतुष्विति** । शरीरप्रतिकूलेषु सर्पव्याघ्रादिष्वित्यर्थः । उक्तमर्थं संक्षिप्य प्रश्नपूर्वकमाह—**कदाऽसावित्यादिना** । **तैमिरिकेति** । यथा तैमिरिको दुष्टनेत्रः पुरुषो वस्तुत एकस्मिन्नेव चन्द्रे चन्द्रभेदं पश्यति तथा एतस्मिन्नेवात्मस्वरूपे ब्रह्मण्यविद्यया कल्पितं भेदरूपं वस्तु यदा पश्यतीत्यर्थः । अविद्याप्रत्युपस्थापितभेदवस्तुदर्शनमेवाक्षरव्याख्यानपूर्वकं विवृणोति—**उदित्यादिना** । नन्वत्रान्तरशब्दितस्यात्मब्रह्मभेदस्य ३० अनादित्वादन्तरं कुरुत इत्यनुपपन्नमित्याशङ्क्याह—**भेददर्शनमिति** । इतश्चान्तरपदं भेददर्शनपरमेव न भेदपरमित्याह—**भेददर्शनमेव हीति** । **अल्पमपीति** । उपास्योपासकभावोपेतमपीत्यर्थः । **आत्मन इति** । भेदेन दृष्टादीश्वरादित्यर्थः । उक्तमर्थं संक्षिप्याह—**तस्मादिति** । स्वरूपभूतोऽपि परमात्मा तद्भेददर्शिनो भयकारणमित्युक्तं भवतीत्यर्थः । अस्मिन्नर्थे उत्तरवाक्यमवतार्य व्याचष्टे—**तदेतदाहेति** । **विद्वानपीति** । य एकरूपमद्वितीयमात्मनस्तत्त्वं न पश्यति, सोऽयं विद्वानपि सकलवेदशास्त्रविदपि अविद्वानेव भयमध्यस्थत्वादित्यर्थः । नन्वविदुषः स्वस्येश्वराद्भेदं ३५ पश्यतोऽपि कथं भयसम्भावना ? तत्राह—**उच्छेदेति** । उच्छेदो नाशपीडादिः, तत्कारणवस्तुज्ञानादुच्छेद्यत्वेनाभिमतस्य प्राणिवर्गस्य भयं भवतीत्यर्थः । तच्च सर्वोच्छेदहेतुभूतं वस्तु ब्रह्मैवेत्याशयः । कुत इत्यत आह—**अनुच्छेद्यं**

१. भयकारणम् इत्यपि पाठः ।

दृश्यते। तस्माज्जगतो भयदर्शनाद्गम्यते नूनं तदस्ति भयकारणमुच्छेदहेतुरनुच्छेद्यात्मकं यतो जगद्बिभेतीति। तदेतस्मिन्नप्यर्थ एष श्लोको भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये सप्तमोऽनुवाकः

५　　आनन्दगिरिटीका

हेतुः कुत इत्यत आह—अनुच्छेद्यो हीति। उच्छेदहेतोरप्युच्छेद्यत्वेऽनवस्थाप्रसङ्गान्नित्यत्वं वक्तव्यं तच्च ब्रह्मणो नान्यस्य सम्भाव्यत इत्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यां सप्तमोऽनुवाकः

१०　　वनमाला

हीति। उच्छेदहेतोरप्युच्छेद्यत्वे तस्य तस्यान्य उच्छेदहेतुर्वक्तव्य इत्यनवस्थाप्रसङ्गान्नित्यत्वं वक्तव्यम्; तच्च ब्रह्मणोऽन्यत्र न सम्भाव्यते, "अतोऽन्यदार्तम्" इति श्रुत्या तदतिरिक्तस्य सर्वस्य नाशप्रतिपादनादिति भावः। एवं भेददर्शिनः प्राणिवर्गस्य भयकारणं ब्रह्मेति वदतो वाक्यसन्दर्भस्य ब्रह्मास्तित्वसाधने तात्पर्यमादौ संगृहीतं प्रपञ्चयति—तन्नासतीति। तस्मादुच्छेदहेतुदर्शनकार्यं भयं जगतो दृश्यमानं स्वयमनुच्छेद्यस्वभावे परेषामुच्छेद-
१५ हेतावसति न युक्तमिति योजना। ननु तद्दर्शनकार्यं भयं जगतो नास्तीति वदन्तं प्रत्याह—सर्वं चेति। अनुच्छेदात्मकमिति। नित्यमिति यावत्। यत इति। यतो जगद्बिभेति तद्भयकारणमस्ति नूनं निश्चय इत्यर्थः।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यां सप्तमोऽनुवाकः

## अथ वार्तिके ब्रह्मवल्ल्यां सप्तमोऽनुवाकः

यदिदंशब्दधीगम्यं प्रागसत्तदभूज्जगत् । असच्छब्देन चात्र स्याद्ब्रह्मैवानामरूपकम् ॥ १ ॥
नामरूपात्मकं कार्यमनात्मत्वात्स्वतो ह्यसत् । यत्सदेकं परं ब्रह्म ततो वै सदजायत ॥ २ ॥
सत्यं ज्ञानमनन्तं यत्तदुपेतमविद्यया । स्वात्मनैव स्वमात्मानं सत्त्यद्रूपमचीक्लृपत् ॥ ३ ॥
यस्मात्स्वयमिदं सर्वमकरोन्निपुणः प्रभुः । सुकृतं प्रभुमेवातो महात्मानः प्रचक्षते ॥ ४ ॥
यदि वेश्वरनिर्वृत्तं कार्यं सुकृतमुच्यते । निष्ठासंश्रवणात्साक्षान्न तु कर्तेश उच्यते ॥ ५ ॥ ५
लोकेऽपि स्वामिना साक्षाद्यत्कृतं कर्म यत्नतः । तदेव सुकृतं प्राहुर्न तु भृत्यैस्तथा कृतम् ॥ ६ ॥
यद्वै तत्सुकृतं प्रोक्तं सत्त्यदादिस्वभावकम् । नीरसस्यास्य कार्यस्य रसोऽसौ परमः स्मृतः ॥ ७ ॥
रसः सारोऽमृतं ब्रह्म आनन्दो ह्लाद उच्यते । निःसारं तेन सारेण सारवल्लक्ष्यते जगत् ॥ ८ ॥
रसस्यातीन्द्रियस्यास्य त्वानन्दत्वं कुतो न्विति । अतस्तत्प्रतिपत्त्यर्थं रसं हीत्युत्तरं वचः ॥ ९ ॥
एतस्मादपि हेतोस्तदस्तीत्यभ्युपगम्यताम् । इतश्चास्ति परं ब्रह्म रसत्वस्य प्रसिद्धितः ॥१०॥ १०
तृप्तिहेतू रसो नाम मधुराम्लादिलक्षणः ॥११॥
अन्नादिरसलाभेन यथा तृप्ताः समासते । आनन्दिनः कामहीना निरीहाः साध्यसिद्धये ॥१२॥
अपविद्धैषणास्तद्वद्बाह्योपादानवर्जिताः । निःसम्बोधं परानन्दं प्राप्ताः संन्यासिनोऽमलाः ॥१३॥

असद्वा इदमग्र आसीदित्यस्यार्थमाह—यदिति । इदंशब्देनेदंधियाऽवगम्यमानं यदिदानीं जगदनुभूयते तत्प्रागवस्थायामसदभूदित्यर्थः । असच्छब्दस्य शून्यविषयत्वं व्यावर्तयति—असच्छब्देनेति । शून्यस्य जगज्जन्म- १५ हेतुत्वायोगादित्यर्थः ॥ १ ॥

जगतः स्वतःसत्त्वसम्भवात्ततो वै सदजायतेत्ययुक्तमित्याशङ्क्याऽऽह—नामेति । सत्त्वं तुच्छव्यावृत्तत्वम् ॥२॥

तदात्मानं स्वयमकुरुतेत्यस्यार्थमाह—सत्यमिति ॥ ३ ॥

तस्मात्तत्सुकृतमुच्यत इति वाक्यस्यार्थमाह—यस्मादिति ॥ ४ ॥

तत्सुकृतमिति स्रष्टृब्रह्मविषयत्वेन व्याख्यायार्थान्तरमाह—यदि वेति ॥ ५ ॥ २०

ईश्वरेण कृतं सुकृतमित्यत्र लोकप्रसिद्धिं दर्शयति—लोकेऽपीति ॥ ६ ॥

यद्वै यत्सुकृतमित्यादेरर्थमाह—यद्वै तदिति ॥ ७ ॥

रसशब्दार्थं दर्शयन्नुक्तमेव विशदयति—रस इति ॥ ८ ॥

रसस्याऽऽनन्दत्वमुक्तमुपपादयितुमनन्तरवाक्यमादत्ते—रसस्येति ॥ ९ ॥

"रसं ही"त्यादिवाक्यस्यार्थान्तरमाह—एतस्मादिति । न केवलं कारणत्वादेव ब्रह्मास्ति किन्तु ब्रह्मणो २५ रसत्वस्य श्रुतिसिद्धत्वाच्च तदस्तीत्युक्तमेव प्रपञ्चयति—इतश्चेति ॥ १० ॥

प्रसिद्धरसशब्दार्थकथनमुखेन ब्रह्मणि रसत्वस्य सत्त्वसाधकत्वं साधयति—तृप्तिहेतुरिति । असतस्तृप्ति- हेतुत्वायोगाद्ब्रह्मणश्च रसत्वेन तृप्तिहेतुत्वादस्ति ब्रह्मेत्यर्थः ॥ ११ ॥

तदेव स्पष्टयितुं दृष्टान्तमाह—अन्नादीति ॥ १२ ॥

दार्ष्टान्तिकं दर्शयति—अपविद्धेति ॥ १३ ॥ ३०

नूनं तेषां परं स्वास्थ्यं चेतांस्याह्लादयन्त्यलम् । प्रह्लादचेतसां यानि तानि लिङ्गानि तेषु हि ॥१४॥
उपाग्नि पामनस्येव सुखसंसक्तचेतसः । लिङ्गं कण्डूयमानस्य लक्षयाम्यात्मवेदिषु ॥१५॥
अज्ञातानन्दतत्त्वानामनुमानमिदं भवेत् । साक्षात्कृतात्मतत्त्वानां प्रत्यक्षतममेव तत् ॥१६॥
बाह्येन्द्रियाणामध्यात्मं संहतिर्येह लक्ष्यते । एकार्थवृत्तिरूपेण सा दृष्टाऽसंहते सति ॥१७॥
५ अतः साक्षेपमाहेयं को ह्येवान्यादिति श्रुतिः । आकाशे परमे व्योम्नि ह्यानन्दो न भवेद्यदि ॥१८॥
आब्रह्मस्तम्बलोकेऽस्मिन्पुण्यकर्मानुरूपतः । आनन्दः परमो यस्मादानन्दयति नः सदा ॥१९॥
सोऽयं लौकिक आनन्दो निष्ठां साधनसम्पदा । यत्र प्रपद्यते भूम्नि सोऽस्त्यानन्दः परो रसः ॥२०॥
अस्तित्वे हेतवः सम्यग्ब्रह्मणोऽभिहिता यतः । [1]उताविद्वानिति प्रश्नः श्रुत्याऽऽविष्क्रियतेऽधुना ॥२१॥
विद्वानेवैति तद्ब्रह्म ह्यभयं भयहेतु यत् । तमोमात्रावरुद्धत्वात्तत्प्राप्तेर्नान्यदस्ति हि ॥२२॥

१० विषयोपभोगविहीनानां विशेषविज्ञानरहितं परमानन्दं प्राप्तानां परमहंसपरिव्राजकानां परमं स्वास्थ्यमस्तीतिरिस्थिते किं सिध्यतीत्याशङ्क्याऽऽह—नूनमिति । तत्र गमकमाह—प्रह्लादेति ॥ १४ ॥

तान्येव लिङ्गानि दृष्टान्तोपन्यासेन स्पष्टयति—उपाग्नीति । अग्निसमीपे वर्तमानस्य पाम्ना व्याधिविशेषेण संयुक्तस्य विशेषतोऽग्निसन्तापपूर्वकं लिङ्गादिकण्डूयने प्रवृत्तस्य जायमाने सुखे संसक्तान्तःकरणस्य परमं स्वास्थ्यं प्राप्तस्य यदिन्द्रियबुद्ध्यादिप्रसन्नत्वमुपलभ्यते तदेव विषयरसानाघ्रातचेतःस्वात्मवेदिषु परमहंसपरिव्राजकेषु
१५ लक्ष्यते—तस्मादस्ति यथोक्तरीत्या तृप्तिकारणं ब्रह्मेत्यर्थः ॥ १५ ॥

प्रत्यक्षस्याऽऽत्मसम्वेद्यस्य सुखस्य पुरुषार्थत्वाभ्युपगमादानन्दस्य प्रागुक्तलिङ्गानुमेयत्वे पुमर्थत्वासिद्धिरित्याशङ्क्याविद्वद्दृष्ट्याऽनुमानोपन्यासाद्विद्वद्दृष्ट्या चाऽऽनन्दस्य प्रत्यक्षत्वान्नैतदित्याह—अज्ञातेति ॥ १६ ॥

"रसं ही"त्यादिवाक्यमेवं व्याख्याय "को ही"त्यादिवाक्यमवतारयितुं भूमिकां करोति—बाह्येन्द्रियाणामिति। या हि व्यवहारभूमौ शयनासनादोनामेकस्मिन्भोगाख्येऽर्थे संहृत्य वृत्तिरूपेण संहतिर्दृष्टा सा शयनादिभिरसहते
२० शेषिणि देवदत्ते सत्येव भवतीत्युपलब्धं तथा च वायुभेदानामिन्द्रियाणां बुद्ध्यादेश्चाध्यात्मं शरीरे संहतिरालक्ष्यमाणा कस्मिंश्चिदसंहते सत्येव भवितुमर्हति विमता संहतिरसंहतचेतनार्था विशिष्टसंहतित्वात्सम्प्रतिपन्नशयनादिसंहतिवद्यदर्थेयं संहतिस्तदस्ति ब्रह्मेत्यर्थः ॥ १७ ॥

उक्तेऽर्थे वाक्यद्वयमवतारयति—अत इति । संहतेरसंहतार्थत्वस्यानुमानसिद्धत्वादिति यावत् । सप्तम्यन्तं पदं छित्वा श्रुतिं योजयति—आकाश इति । यदि हृदयावच्छिन्ने सर्वदोषरहिते व्योम्नि भूताकाशरूपे समस्तबुद्धि-
२५ वृत्तिसाक्षिभूतो निरतिशयसुखात्मकः प्रत्यगात्मा न भवेत्तदा प्राणापानादिसंहतिद्वारा चेष्टा न सिध्येदित्यर्थः । अथवा प्रथमान्तमाकाशपदमानन्दसमानाधिकरणं ततश्चाऽऽकाशाभिधानः परमानन्दः परमात्मस्वभावो यदि न स्यात्तदा प्राणादिसंहतिद्वारा प्रवृत्तिरनुपपन्नेत्यर्थः ॥ १८ ॥

एष ह्येवानन्दयातीत्यस्यार्थमाह—आब्रह्मेति । सातिशयस्य लौकिकानन्दस्य निरतिशयब्रह्मानन्दव्यतिरेकेणायोगात्तेन भवितव्यमित्यर्थः ॥ १९ ॥

३० तदेव पञ्चयति—सोऽयमिति । साधनसम्पदेत्यत्र लब्धात्मकः सन्नित्यध्याहरणोयम् ॥ २० ॥

"यदा ही"त्यनन्तरवाक्यस्य सङ्गतिं वक्तुं वृत्तं कीर्तयति—अस्तित्व इति । "सोऽकामयते"त्यारभ्यातीतेन ग्रन्थेन ब्रह्मणोऽस्तित्वे यतो बाधविधुरा हेतवो दर्शितास्ततोऽस्ति नास्तोति प्रश्नस्योत्तरं सिद्धमित्यर्थः । परिशिष्टप्रश्नद्वयनिर्णयार्थत्वेनोत्तरग्रन्थमवतारयति—उतेति ॥ २१ ॥

तत्र विद्वानेव तद्ब्रह्म प्राप्नोतीत्यस्यार्थस्य समर्थनार्थं "यदा ही"त्यादि "अथ सोऽभयं गतो भवती"त्येतदन्तं
३५ वाक्यमित्याह—विद्वानेवैति । विद्वानेव ब्रह्म प्राप्नोतीत्यत्र हेतुमाह—तमोमात्रेति। ब्रह्मप्राप्तेस्तमोमात्रव्यवहितत्वमसिद्धं देशकालादेरपि तद्व्यवधानत्वादित्याशङ्क्याऽऽह—नान्यदिति ॥ २२ ॥

१. तै० २.६ ।

व्यवधानं हि यद्यस्मात्तत्तन्मोहैकहेतुकम् । यस्माच्चस्मादविद्यैव मोक्षाप्तेर्व्यवधिर्भवेत् ॥२३॥
अविद्यासाक्ष्यपि प्रत्यक्सदाऽनस्तमितोदितः । अविद्यया व्यवहितस्तद्बलेनैव तद्वचः ॥२४॥
विद्वत्त्वाव्यतिरेकेण यदि तत्प्राप्तिरुच्यते । चोद्यमेतत्तदा युक्तं न त्वेवं सति युक्तिमत् ॥२५॥
या तु साधारणी प्राप्तिरात्मत्वाद्ब्रह्मणः स्वतः । विदुषोऽविदुषो वाऽसावस्माभिर्न नियम्यते ॥२६॥
अतोऽविद्यानिषेधेन सर्वदाऽवाप्तरूपिणः । प्राप्तिः स्यादात्महेतुत्वादिति पूर्वमवादिषम् ॥२७॥ ५
अतः परीक्ष्यते श्रुत्या तदिदानीं प्रयत्नतः । विद्वानेवैति नाविद्वान्यदा हीत्येवमाद्यया ॥२८॥
विषयानुपातिनी या तु ह्यशेषकरणाश्रया । लौकिकत्वात्पदार्थस्य दृशिरत्राभिधीयते ॥२९॥
विशेषवद्भवेद्दृश्यं तद्धि दर्शनमर्हति । नित्या दृष्टिरभावो वा नैव दर्शनमर्हति ॥३०॥
दृश्यान्वयि हि यद्वस्तु तदात्म्यमिति भण्यते । स्वतो ह्यस्याऽऽत्मदारिद्र्यादर्हार्थे लभते च यत् ॥३१॥
स्याद्वा जाग्रदवस्थेयं दृश्यत्वेन प्रसिद्धितः । कोशत्रयमिहात्म्यं स्यादात्मार्थत्वसमन्वयात् ॥३२॥ १०

अविद्यातिरिक्तं मोक्षव्यवधानं नास्तीत्येतदुपपादयति—व्यवधानं हीति ॥ २३ ॥

आत्मनः स्वयंप्रकाशस्याविद्यासाधकस्य कथमविद्याऽपि व्यवधानं स्यादित्याशङ्क्याऽऽह—अविद्येति । आत्मनो यथोक्तलक्षणस्यैवाविद्याव्यवहितत्वमविद्याबलादेवोच्यते । तस्मादात्मविद्यावशाद्ब्रह्मात्मप्राप्तिर्विदुष एवेत्यर्थः ॥ २४ ॥

ब्रह्मणः सर्वस्वरूपत्वादविदुषोऽपि तत्प्राप्तिः स्यादित्याशङ्क्य किं संसारहेत्वविद्यानिरासेन ब्रह्मप्राप्तिः १५ अविदुषोऽपि स्यादित्युच्यते किं वा ब्रह्मणः स्वरूपत्वेन प्राप्तिरविदुषोऽपि समानेति विकल्प्याऽऽद्यं दूषयति—विद्वत्त्वेति । ज्ञानस्य ब्रह्मप्राप्त्यवकारणत्वे स्यादविदुषोऽपि ब्रह्मप्राप्तिरिति चोद्यते । ज्ञानादनर्थहेत्वज्ञाननिवृत्तिद्वारा ब्रह्मप्राप्तिरित्यङ्गीकारे तु नाविदुषो ब्रह्मप्राप्तिचोद्यमुल्लसतीत्यर्थः ॥ २५ ॥

द्वितीयमङ्गीकरोति—या त्विति ॥ २६ ॥

ज्ञानादनर्थहेत्वज्ञाननिराकरणे ब्रह्मप्राप्तिर्विद्वदसाधारणीत्यत्र "ब्रह्मविदाप्नोति परम्" इतिवाक्यं प्रमाणयति— २० तत इति । तत्त्वज्ञानं पञ्चम्या परामृश्यते । आत्महेतुत्वादिति । ब्रह्मणः सर्वप्रत्यगात्मत्वाद्धेतोरित्यर्थः ॥ २७ ॥

यतो विदुष एवाविद्यानिवृत्त्या ब्रह्मप्राप्तिर्नाविदुषः सम्भवत्यतस्तदेव वस्तुनिरूपणद्वारेण प्रतिपाद्यते समनन्तरवाक्येनेत्युत्तरवाक्यमादत्ते—अत इति ॥ २८ ॥

तस्मिन्वाक्ये पदानि व्याकुर्वन्नदृश्यपदार्थस्य दृश्याधीनत्वात्तस्य च दृशिनिबन्धनत्वाद्दृशिशब्दार्थमाह—विषयेति । अदृश्य इत्यत्र दृशिशब्देन विषयविषयं चक्षुःश्रोत्रादिजन्यं सर्वं ज्ञानमुच्यते । पदार्थस्य लौकिकत्वेन २५ अपूर्वत्वायोगादित्यर्थः ॥ २९ ॥

दृश्यशब्दार्थमाह—विशेषवदिति । सविशेषस्य वस्तुनः सर्वदर्शनयोग्यत्वादित्युक्तेऽर्थे हेतुमाह—तद्धीति । न कूटस्थबोधो नापि शून्यं दृश्यं तयो साधारणदर्शनयोग्यत्वाभावादिति व्यावर्त्यमंशं दर्शयति—नित्येति । अदृश्यं यथोक्तदृश्यरहितं तस्मिन्ब्रह्मणीत्यदृश्यशब्दार्थः ॥ ३० ॥

आत्मशब्दार्थं कथयति—दृश्येति । सामान्यमात्म्यशब्दवाच्यं तस्य व्यक्तिपरतन्त्रत्वात्तदतिरेकेण स्वरूपा- ३० भावादात्मानमर्हतीत्यात्म्यमिति यत्प्रत्ययार्थमाह—स्वतो हीति । अनात्म्यमिति निःसामान्यं ब्रह्म तस्मिन्नित्यर्थः ॥३१॥

दृश्यशब्देन पञ्चीकृतपञ्चमहाभूतात्मको विराडात्मा जागरितशब्दवाच्योऽन्नमयकोशो गृह्यते ततश्च समस्तमेव स्थूलं कार्यं दृश्यशब्दवाच्यमिति पक्षान्तरमाह—स्याद्वेति । आत्म्यशब्देनापि प्राणमयमनोमयविज्ञानमयाख्यं सूत्रमपञ्चीकृतपञ्चमहाभूतात्मकं विवक्ष्यते । तथा च सर्वमेव सूक्ष्मं कार्यमात्म्यशब्दवाच्यं तस्याऽऽत्मशेषत्वादित्याह—कोशत्रयमिति ॥ ३२ ॥

**पञ्चमोऽत्र निरुक्तः स्यात्पारिशेष्यात्फलात्मकः । अत्यानन्दमयं ब्रह्म त्वनिरुक्तं परं पदम् ॥३३॥**
**निलीयते जगद्यस्मिन्निलीनं जायते यतः । निलयं तत्परं ब्रूमः कोशपञ्चककारणम् ॥३४॥**
**सच्चत्यच्चादि वाऽपेक्ष्य निषेधोऽयमिहोच्यते । प्राप्तिर्ह्यभवदित्युक्त्या चारु प्राप्तनिषेधनम् ॥३५॥**
**मूर्तामूर्तौ हि राशी द्वौ सच्चत्यच्चादिनोदितौ । [1]श्रुत्यन्तरेण सं गानाचयोरेवास्त्वपह्नुतिः ॥३६॥**
५ **अस्मिन्पक्षे तु निलयो वासनानिलयो भवेत् । एवं च [2]नेति नेतीति साक्षात्स्यादूब्रह्मदर्शनम् ॥३७॥**
**भावाभावात्मिका बुद्धिर्यत आत्मापचारिणी । भावाभावनिषेधेन प्रतीचि स्थाप्यते ततः ॥३८॥**
**दृश्यादिप्रतिषेधोक्त्या प्रतीचि ब्रह्म बोध्यते । न तदन्यत्तदन्यस्य परमार्थात्मता कुतः ॥३९॥**
**न नञर्थो विकल्पो वा परमार्थमकल्पितम् । असंप्रविश्य संसिद्धिं लभते क्वचिदन्यतः ॥४०॥**
**दृश्यादि गुणहीनस्य स्वत आत्मत्वकारणात् । वेत्ति विन्दत इत्यस्मादैकार्थ्यादुपसंहृतिः ॥४१॥**

१० आनन्दमयकोशः शरीरद्वयावच्छिन्नो ज्ञानकर्मफलात्मकश्चैतन्याभासो जीवोऽत्र पारिशेष्यान्निरुक्तशब्द-वाच्यो भवतीत्याह—**पञ्चम इति**। कार्यकारणविनिर्मुक्तं त्वंपदलक्ष्यं चिन्मात्रमनिरुक्तशब्दवाच्यमित्याह—**अत्यानन्देति**। तस्मिन्ननिरुक्ते त्वंपदलक्ष्यात्मके चिन्मात्रे ब्रह्मणीत्यर्थः ॥ ३३ ॥

अज्ञातं ब्रह्म सर्वस्यापि जगतः कारणं निलयनशब्दवाच्यमित्याह—**निलीयत इति**। अनिलयनशब्देन तत्पदलक्ष्यं नित्यशुद्धबुद्धमुक्तस्वभावं लक्ष्यं त्वंपदार्थस्वरूपभूतं ब्रह्मोच्यते। तस्मिन्ननिरुक्तेऽनिलयने ब्रह्मणीति १५ सामानाधिकरण्यात्तत्त्वमर्थयोरैक्यं लक्ष्ययोर्विवक्षितमित्यर्थः ॥ ३४ ॥

अदृश्यादिवाक्यस्यार्थान्तरमाह—**सच्चेति**। "सच्च त्यच्चाभवदि"त्यादिना ब्रह्मणि साविद्यस्य जगतः सर्वस्य प्राप्तिरुच्यते। तस्य च प्राप्तस्यादृश्यादिवाक्ये निषेधः क्रियते। वाक्यस्य निषेधरूपत्वात्प्राप्तनिषेधस्य च युक्तत्वादित्यर्थः ॥ ३५ ॥

निषेधपक्षे श्रुत्यन्तरेण "नेति नेती"त्यादिना सहैकवाक्यत्वसिद्धिरिति लाभान्तरमाह—**मूर्तेति** ॥ ३६ ॥

२० निषेधपक्षे च मूलकारणं निलयनशब्देन न गृह्यते किन्तु वासनानां निलयत्वादन्तःकरणं सवासनं निलय-शब्दवाच्यं ततश्च सवासनमन्तःकरणमनिलयनशब्देन निषिध्यते। अदृश्यादिपदैरेव मूर्तामूर्तप्रतिषेधेन कारणस्यापि निषिद्धत्वान्निराकाङ्क्षब्रह्मप्रतिपत्तिसिद्धिरित्यभिप्रेत्याऽऽह—**अस्मिन्निति**। सर्वप्रतिषेध्यानामुक्तन्यायेन प्रतिषिद्धत्वे सति वाक्यार्थज्ञानं निराकाङ्क्षं सिध्यतीति फलितमाह—**एवं चेति** ॥ ३७ ॥

ननु प्रत्यगात्मप्रतिपत्त्यैव पुरुषार्थपरिसमाप्तिसम्भवात्कार्यकारणप्रपञ्चप्रतिषेधो वृथेत्याशङ्क्यानात्म-२५ प्रपञ्चस्याऽऽत्मन्यनर्थहेतुत्वान्निषेधेन ततो व्यावर्त्यात्मन्येव बुद्धिः स्थिरीकर्तव्या ततोऽनात्मनिषेधोऽर्थवानित्याह—**भावाभावेति**। प्रत्यगात्मन्यन्तःकरणे प्रविष्टे सति तस्य ब्रह्मतत्त्वबुद्ध्या पुरुषार्थपरिसमाप्तिरित्यर्थः ॥ ३८ ॥

अदृश्यादिवाच्यस्य निषेधपरत्वे प्रतीयमाने कुतो वस्तुपरत्वमित्याशङ्क्याऽऽत्मब्रह्मणोरैक्यं स्वतःसिद्धं निषेधमुखेन बोध्यतेऽतो निषेधस्य वस्तुसिद्धौ द्वारत्वान्न निषेधपरं वाक्यं किन्तु वस्तुपरमित्याह—**दृश्यादीति**। प्रतीचि ब्रह्म बोध्यमिति निर्देशादात्मनोऽर्थान्तरं ब्रह्मेत्याशङ्क्याऽऽह—**न तदिति**। तद्धि ब्रह्म नाऽऽत्मनोन्यद्भवितु-३० मलमात्मनोऽन्यस्य मिथ्यात्वादूब्रह्मणोऽप्यन्यत्वे तत्प्रसङ्गादूब्रह्मात्मनोरैक्यमेवेत्यर्थः ॥ ३९ ॥

आत्मनोऽन्यस्य नास्ति परामर्थत्वमिति कल्पितत्वाभिधानात्कल्पिताकल्पितयोर्भेदः स्यादित्याशङ्क्याह—**नेत्यादिना**। शून्यस्य कल्पितस्य वा कूटस्थानुभवादन्यत्र सत्त्वोपलब्ध्योरसिद्धेः सच्चिदेकतानं कूटस्थं तत्त्वमास्थेय-मित्यर्थः ॥ ४० ॥

"ब्रह्मविदाप्नोति परमि"तिविदिनोपक्रम्य "अभयं प्रतिष्ठां विन्दत" इति विन्दतिनोपसंहारे श्रुतेरभिप्राय-३५ माह—**दृश्यादीति**। अदृश्यादिवाक्योक्तस्य ब्रह्मणः स्वारस्येनाऽऽत्मस्वरूपत्वात्तस्य वेदनव्यतिरेकेण लाभायोगाद्वेति विन्दत इत्यनयोरेकार्थत्वाद्धेतोर्वेत्तीत्युपक्रम्य विन्दत इत्युपसंहारे न कश्चिद्दोषोऽस्तीत्यर्थः ॥ ४१ ॥

---

१. बृ० ४.४.२२ ।　　२. बृ० ३.९.२६ ।

दृश्यादिगुणहीनेऽस्मिन्निरविद्यो यदाऽभयम् । साक्षाद्वेति तदैवायमभयं विन्दते परम् ॥४२॥
ब्रह्म पुच्छं प्रतिष्ठेति यदभाणि पुरा सकृत् । तेनैकवाक्यतार्थाय प्रतिष्ठामिति भण्यते ॥४३॥
अथाधुना यथाऽविद्वान्प्रेत्य नैति परं पदम् । व्याख्यायते तथा स्पष्टं यदा ह्रीत्येवमाद्यया ॥४४॥
सदा लब्धात्मकस्यापि यतोऽज्ञानमनाप्तिकृत् । अवाद्युच्चैरतः श्रुत्या विद्वानेतीति सादरम् ॥४५॥
यस्मादेवं ततोऽविद्वाल्लँभते न तमीश्वरम् । अविद्याव्यवधानाद्धि लब्ध एव न लभ्यते ॥४६॥ ५
यदा ह्येवैष आत्मैको दृश्यत्वादिविवर्जितः । एतस्मिन्वर्तमानोऽपि वञ्चितोऽविद्ययैव हि ॥४७॥
हस्तप्राप्तमपि द्रव्यमप्राप्तमिव मन्यते । मोहादेवमनाप्तिः स्यादात्मनोऽपि ममाऽऽत्मनः ॥४८॥
अविद्यया तदोद्धृत्य रज्ज्वा रज्जुमिव स्वयम् । अहित्वेनाद्वयाद्बोधात्कुरुते कर्तृभोक्तृभिः ॥४९॥
अरं छिद्रं भिदाऽन्यत्वं वेद्यवेत्तृत्वलक्षणम् । यस्मादुत्कुरुते मोहादात्मनो ब्रह्मणः स्वतः ॥५०॥
अन्योऽसावीश्वरो मत्तस्तस्माच्चाहमनीश्वरः । इति च्छिद्रयतोऽच्छिद्रं छिद्रेऽनर्थो भवेद्भयम् ॥५१॥ १०
निर्भयोऽपि स्वतोऽविद्वानेकं सन्तमनेकधा । प्रकल्प्याविद्ययाऽऽत्मानं तमेव भयमाप्नुयात् ॥५२॥

अभयं विन्दत इत्यस्यार्थमाह—दृश्यादीति । निर्विशेषे ब्रह्मणि प्रकृते यदा साक्षादहमस्मीतिप्रत्यगभेदमवगच्छति तदैव विद्वान्निरविद्यः सन्नभयं कैवल्यं लब्ध्वा कृतकृत्यो भवतीत्यर्थः ॥ ४२ ॥

प्रतिष्ठापदप्रयोगे ब्रह्मज्ञानफलं ब्रह्मैव नान्यदितिप्रदर्शनमभिसंहितमित्याह—ब्रह्मेति । ब्रह्मविद्याप्राप्तेः अनन्तरं सा विद्वानभयं ब्रह्म प्राप्य कृतकृत्यो निर्विण्णो भवतीत्यथ सोऽभयं गतो भवतीति वाक्यमर्थाद्व्याख्यातमिति भावः ॥ ४३ ॥ १५

विद्वान्ब्रह्म प्राप्नोत्युत नेतिप्रश्ने प्राप्नोत्येव विद्वान्ब्रह्मेति निर्धारितम् । इदानीमविद्वानपि ब्रह्म प्राप्नोति न वेतिप्रश्नं प्रत्याह—अथेति ॥ ४४ ॥

ज्ञानस्य ब्रह्मप्राप्तिहेतुत्वविधानादज्ञस्य ब्रह्मप्राप्तिरयुक्तेत्येतदुपपादयति—सदेति ॥ ४५ ॥

विद्यावतो ब्रह्मलाभे सिद्धे फलितमाह—यस्मादिति । "अविद्वान्न लभते ब्रह्मे"त्ययुक्तं तस्याऽऽत्मत्वेन सदा लब्धत्वादित्याशङ्क्याऽऽह—अविद्येति ॥ ४६ ॥ २०

यदा ह्येवैष एतस्मिन्नितिवाक्याक्षराण्यपेक्षितं पूरयन्योजयति—यदा ह्येवेति । ततश्च स्वरूपमप्राप्तमिव पश्यतीतिशेषः ॥ ४७ ॥

आत्मत्वेन प्राप्तमेव ब्रह्म मोहव्यवहितत्वादप्राप्तवद्भवतीत्येतद्दृष्टान्तेन स्पष्टयति—हस्तेति । ममाऽऽत्मनोऽपि ब्रह्मणः प्रत्यग्भूतस्य मोहादनाप्तिरिति सम्बन्धः ॥ ४८ ॥ २५

एवममिद्यया वञ्चितत्वे किं स्यादित्याह—अविद्ययेति । यदाऽयमात्मा प्रागुक्तेन न्यायेनाविद्यया वञ्चितो वर्तते तदा यथा रज्जुः स्वाविद्यया स्वात्मानमहित्वेन करोति तथाऽयमप्यात्मा स्वाविद्यया स्वमात्मानमद्वयाद्बोधाद्-ब्रह्मणः सकाशात्पृथक्कृत्य कर्तृभोक्तृत्वरूपेण करोतीत्यर्थः ॥ ४९ ॥

उदरमन्तरं कुरुत इत्यस्यार्थमाह—अरमिति । यदाऽऽत्मन्यविद्यया कर्तृत्वादिकमारोप्य पश्यति तदा ब्रह्मात्मनोर्भेदं यस्मान्मन्यते तस्मान्मिथ्याज्ञानी भवतीत्यर्थः ॥ ५० ॥ ३०

मिथ्याज्ञानफलं कथयन् "अथ तस्ये"त्यादिवाक्यस्यार्थमाह—अन्योऽसाविति ॥ ५१ ॥

आत्मब्रह्मणोर्भेदं पश्यतः संसारभयप्राप्तिरित्येतदेव प्रपञ्चयति—निर्भयोऽपीति । विभागेन दृष्टमात्मानं तच्छब्देन परामृशति ॥ ५२ ॥

भयहेतोर्द्वितीयस्य हिशब्देन परिग्रहात् । [1]द्वितीयाद्वै भयं हीति श्रुतिरुच्चैरतोऽन्वगात् ॥५३॥
ईशितव्याद्विभक्तो यद्यस्मादीशो भयङ्करः । इति कल्पयतस्तस्मादभयं जायते भयम् ॥५४॥
अहो बलमविद्याया अतिशेते न कश्चन । अग्न्यादिभयहेतोर्या ब्रह्मणोऽपि भयङ्करी ॥५५॥
निर्भयो भयकृदेव ईश्वराणामपीश्वरः । भयं तस्यापि जनयेन्नाज्ञानस्यास्त्यगोचरः ॥५६॥
५ यज्ज्ञात्वा विन्दते विद्वानभयं हीत्यवादिषम् । तत्त्वेवाभयकृद्ब्रह्म स्यान्मोहादात्मनो भयम् ॥५७॥
निषिद्धदृश्यत्वाद्येकमभयं मोहनिह्नवात् । यत्तस्यैव भयं तत्स्यादविद्यावशवर्तिनः ॥५८॥
अपि वालाग्रमात्रेण विदुषः प्रत्यगात्मनः । भिन्नं ब्रह्मेति संमोहादात्मैवास्य भयं भवेत् ॥
व्याख्यानं वा पुरोक्तस्य च्छिद्रस्य क्रियतेऽनया ॥५९॥
अमन्वानस्य तद्ब्रह्म विदुषोऽपि भयङ्करम् ॥६०॥
१० वेद्यवेत्तृत्वशून्यत्वाद्विद्वत्ताऽपि तमोमयी । रजतत्वादिवच्छुक्तावमन्वानो भवेदतः ॥६१॥
[2]यस्यामतं तस्य मतं मतं यस्य न वेद सः । [3]विदिताविदिताभ्यां तदन्यदेवेति हि श्रुतिः ॥६२॥
अन्यदेव हि तद्वेद्यादवेद्यादन्यदेव तत् । वेद्यवेत्तृद्वयाच्चान्यदिति श्रुत्यनुशासनम् ॥६३॥

यदा हीत्यत्र हिशब्देन द्योतितमर्थं कथयति—भयहेतोरिति । द्वितीयदर्शिनो भयमवश्यंभावीत्येतद् इहोच्यते तदेव श्रुत्यन्तरेऽपि दर्शितमित्याह—द्वितीयादिति । यतो द्वितीयं भयकारणमतः श्रुतिरेवमनु-
१५ शास्तीत्यर्थः ॥ ५३ ॥

तत्त्वेवेत्यादिवाक्यमवतारयितुं भूमिकां करोति—ईशितव्यादिति । यस्मान्मद्विच्छेदादीशितव्याज्जीवाद् विभक्तत्वेन दृष्टः सन्नीश्वरो विभागदर्शिनो भयङ्करो भवति तस्मादभयमेव ब्रह्म विभागेन परिकल्प्य विभक्तं पश्यतस्तदेव भयं जायते भेददर्शनस्य भयकारणत्वादित्यर्थः ॥ ५४ ॥

ब्रह्मैवाभयमात्मा चेत्कुतस्तस्य भयमित्याशङ्क्याविद्यासामर्थ्यादित्याह—अहो इति ॥ ५५ ॥

२० अविद्यासामर्थ्यं प्रपञ्चयति—निर्भय इति ॥ ५६ ॥

उक्तेऽर्थे तत्त्वमेव भयमिति वाक्यभागं विभजते—यज्ज्ञात्वेति ॥ ५७ ॥

तदेव स्पष्टयति—निषिद्धेति ॥ ५८ ॥

विदुषोऽमन्वानस्येतिभागं योजयति—अपीति । प्रत्यगात्मनः सकाशादीषन्मात्रेणापि भिन्नं ब्रह्मेति पश्यतः सम्मोहवशवर्तिनो मोहादात्मैव भयं भवतीत्यर्थः । अविद्याया नास्ति दुष्करमित्येवं परत्वेन "तत्त्वेवे"त्यादिवाक्यं
२५ व्याख्याय व्याख्यानान्तरमाह—व्याख्यानं वेति ॥ ५९ ॥

व्याख्यानप्रकारमेव प्रकटयति—अमन्वानस्येति । यथा शुक्त्यादौ रजतत्वादि तमोमयं वस्तुतो नास्ति तथा ब्रह्मण्यात्मनि विद्वत्ताऽपि तमोमयी वस्तुतो न विद्यते ब्रह्मात्मनो वेद्यवेत्तृत्वविभागशून्यत्वादतश्चावेद्यं ब्रह्मात्मत्वेनामन्वानो यो भवेत्तस्यैकत्वेन ब्रह्मामन्वानस्यावेद्यमेव तद्वेद्यतया भिन्नत्वेन पश्यतोऽपि भयङ्करमापद्यते । अन्यथादर्शित्वादित्यर्थः ॥ ६०-६१ ॥

३० वेद्यवेत्तृत्वशून्ये ब्रह्मेत्यत्र श्रुत्यन्तरमुदाहरति—यस्येति ॥ ६२ ॥

उदाहृतश्रुत्यन्तरस्य विवक्षितमर्थमाह—अन्यदेवेति ॥ ६३ ॥

---

१. बृ० १.४.२ । २. के० २.३ । ३. के० १.३ ।

वेद्यावेद्यात्मता यस्माच्छब्दाद्यर्थानुपातिनी । वेद्यवेत्तृत्वमप्येवमन्यथा तदसंगतेः ॥६४॥

व्युत्थाप्य वेद्याद्विद्याया वेत्तुश्चाज्ञानकल्पितात् । तदन्येभ्यश्च जानीयादहं ब्रह्मेतिवाक्यतः ॥६५॥

इति सप्तमोऽनुवाकः

ब्रह्मात्मनो वेद्यत्वमवेद्यत्वं वेत्तृत्वं च नास्तीत्यत्र श्रुतिमुदाहृत्य तत्रैव श्रुतिसिद्धेऽर्थे युक्तिं समुच्चिनोति—वेद्येति । ज्ञानोदये वेद्यरूपता जडेषु शब्दार्थेष्वनुप्रविश्य वर्तते ज्ञानानुदये च तदविषयत्वमवेद्यात्मत्वं तेष्वेव तिष्ठति । ५ एवमेव वेद्येष्वर्थेषु वेत्तृत्वं ज्ञानकर्तृत्वं च साभासान्तःकरणस्य परिणामवतो जडस्यैव युज्यते यस्मादात्मनः संविदेकतानस्याजडस्य वेद्यत्वादि नोपपद्यते तस्मात्तस्य कूटस्थदृष्टिरूपस्य सिद्धमविषयत्वमित्यर्थः । यद्यात्मनो वेद्यत्वाद्यभ्युपगम्येत तदा तस्य कूटस्थाद्वयदृष्टिब्रह्मत्वं शास्त्रसिद्धमसम्बद्धमापद्येतातो न तस्य वेद्यत्वादीत्युक्तामेव युक्तिं व्यनक्ति—अन्यथेति ॥ ६४ ॥

आत्मनः सर्वविशेषविलक्षणत्वे कथं प्रतिपत्तव्यतेत्याशङ्क्याऽऽह—व्युत्थाप्येति । वेद्यं विद्यावेत्तेति त्रयम- १० वेद्यमविद्याऽवेत्तेति च त्रयं तस्मादेतस्मादज्ञानकल्पितादशेषात्पृथक्कृत्याऽऽत्मानं तत्त्वमस्यादिवाक्यादहं ब्रह्मास्मीति विद्याद्भेदेन तु सविशेषतया दृष्टं ब्रह्म भयावहं भवतीत्यर्थः ॥ ६५ ॥

इति सप्तमोऽनुवाकः

## अथ ब्रह्मवल्ल्यामष्टमोऽनुवाकः

**भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च ।**
**मृत्युर्धावति पञ्चम इति । सैषानन्दस्य मीमाँ्सा भवति ।**

**भीषा भयेनास्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । वातादयो हि महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्येष्वायासबहुलेषु नियताः प्रवर्तन्ते । तद्युक्तं प्रशास्तरि ५ सत्यन्यस्मिन्नियमेन तेषां प्रवर्तनं तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म । यतस्ते भृत्या इव राज्ञोऽस्माद्ब्रह्मणो भयेन प्रवर्तन्ते । तच्च भयकारणमानन्दं ब्रह्म । तस्यास्य ब्रह्मणः आनन्दस्यैषा मीमांसा विचारणा भवति । किमानन्दस्य मीमांस्यमित्युच्यते--किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदाहोस्वित्स्वाभाविक इत्येवमेषाऽऽनन्दस्य मीमांसा ।**

**तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टः । स य एष निर्दिश्यते [1]ब्रह्मानन्दानुग-**

१०

### आनन्दगिरिटीका

तच्च भयकारणं ब्रह्माऽऽनन्दरूपमुक्तं यदेष आकाश आनन्दो न स्यादिति । तत्राऽऽनन्दश्च लोके जन्यः प्रसिद्धस्ततो विचारमारभते--तस्यास्येत्यादिना ।

ब्रह्मानन्दस्य चेन्मीमांसा प्रस्तुता किमर्थस्तर्हि सार्वभौमानन्दाद्युपन्यासस्तत्राऽऽह--**तत्र लौकिक इत्यादिना।** लौकिक आनन्दः क्वचित्काष्ठां प्राप्तः सातिशयत्वात्परिमाणवदिति ब्रह्मानन्दानुमानार्थो लौकिकोपन्यास इत्यर्थः ।

१५

### वनमाला

**अस्मादिति ।** प्रकृताद्ब्रह्मण इत्यर्थः। **अग्निश्चेन्द्रश्च** स्वस्वकार्यमनुतिष्ठत इत्यर्थः। **धावतीति ।** समाप्तायुषः प्रतीति शेषः। **पञ्चमः** पञ्चत्वसंख्यापूरक इत्यर्थः। श्लोकस्य भयकारणब्रह्मास्तित्वे तात्पर्यं दर्शयति--**वातादयो हीति । महार्हा इति ।** पूज्यतमा इत्यर्थः। यदा वाय्वादीनामपि भयकारणं ब्रह्म तदान्येषां किमु वक्तव्यमित्याशयेन श्रुतौ वातादय उदाहृताः, तमाशयं प्रकटयितुं महार्हत्वादिविशेषणमिति मन्तव्यम् । ननु स्वयं दिगीश्वराणामपि २० तेषां नियता प्रवृत्तिः स्वत एवास्तु यथेश्वरस्य सृष्ट्यादौ नियता प्रवृत्तिरनन्यायत्ता तद्वदिति; नेत्याह--**तद्युक्तमिति।** बहूनां दिक्पालानां प्रायेण तुल्यैश्वर्याणां विरुद्धेषु कार्येषु प्रवर्तमानानां विनिगमनाविरहादिना लोकवदेव कलहप्रवृत्तेरावश्यकत्वान्नियतं तेषां प्रवर्तनमसत्यन्यस्मिन्नियन्तरि न युक्तमित्यर्थः। **यत इति ।** यतस्ते वातादयो राज्ञो भृत्या इव बिभ्यति तत्तेषां नियन्तृ ब्रह्मास्तीति योजना। ननु सैषा ब्रह्मणो मीमांसा भवतीति वक्तव्यं तस्यैव भयादिहेतुत्वेन प्रकृतत्वात् नानन्दस्येत्याशङ्कां वारयन्मीमांसावाक्यमवतारयति--**यस्मादित्यादिना । आनन्दं २५ ब्रह्मेति ।** "यदेष आनन्दो न स्यात्" इति ब्रह्मण एवानन्दरूपत्वस्योक्तत्वान्नासङ्गतिरिति भावः। नन्वानन्दस्वरूपस्य दुःखादिस्वरूपवत्प्रसिद्धत्वादानन्दस्वरूपं न विचारणीयमिति मत्वा शङ्कते--**किमानन्दस्येति ।** ब्रह्मस्वरूपतया श्रुत आनन्दो विषयानन्दवज्जन्यो नित्यो वेति संशयनिवृत्त्यर्था मीमांसेत्याह--**उच्यत इति ।** स्रक्चन्दनादिर्विषयः, तदनुभविता पुरुषो विषयी, तयोः सम्बन्धेनेत्यर्थः ।

ननु ब्रह्मानन्दस्य चेन्मीमांसा प्रस्तुता किमर्थस्तर्हि मानुषाद्यानन्दोपन्यासः ? तत्राह--**तत्र लौकिक इति ।** ३० बाह्यसाधनानि विषयाः, आध्यात्मिकानि साधनानि देहमधिकृत्य वर्तमानानि यौवनादीनि, तेषां द्विविधानां

---

१. आनन्दमीमांसायाम् । ब्रह्मानन्दानुगमार्थं=ब्रह्मानन्दानुमानार्थम् । अनुमानं टीकायां प्रदर्शितम् । अत्र प्रथमपर्याये अकामहतश्रोत्रियप्रत्यक्षत्वं नोक्तम् । यतः मनुष्यानन्दभुक् तत्राकामहतश्चेति विरुद्धम् । द्वितीयादिपर्यायेषु तु प्रथमादिपर्याये अकामहतः द्वितीयादौ कामनावांश्च यः तस्य द्वितीयपर्यायानन्दः अनुभूयत एव । यथा लक्षाधिकारिणः सुखे वितृष्णः द्विलक्षं कामयमानः तद्वत्पुरुषानन्दं प्राप्नोति ।
३५ प्रत्यक्षसिद्धमेतत् ।

युवा स्यात्साधुयुवाऽध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः ॥१॥

मार्थम्। अनेन हि प्रसिद्धेनाऽऽनन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते। लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रा, अविद्यया तिरस्क्रियमाणे विज्ञान उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसम्बन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः सम्पद्यते, स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते शतगुणोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति। ५

निरस्ते त्वविद्याकृते विषयविषयिविभागे विद्यया, स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैतो भवतीत्येतमर्थं विभावयिष्यन्नाह—युवा प्रथमवयाः। साधुयुवेति साधुश्चासौ युवा चेति यूनो विशेषणम्। युवाऽप्यसाधुर्भवति

आनन्दगिरिटीका

विषयेभ्यो व्यावृत्ता व्यावृत्तविषया अविषयब्रह्मात्मैकत्वदर्शिनस्तद्बुद्धिगोचर इत्यर्थः। प्रकारान्तरेण ब्रह्मानन्दानुगममाह—लौकिकोऽपीत्यादिना। १०

वनमाला

साधनानां सम्पत्तिर्मेलनं निमित्तं यस्यानन्दस्य स तथा। अत एवानन्दस्योत्कर्षो निर्दिश्यते "स एको मानुषः" इत्यादिनेति शेषः। ब्रह्मानन्दानुगमार्थमिति। लौकिक आनन्दः क्वचित्काष्ठां प्राप्तः सातिशयत्वात्परिमाणवदित्यानन्दतारतम्यावधित्वेन निरतिशयस्वाभाविकानन्दरूपब्रह्मानन्दानुमानार्थं लौकिक आनन्दो निर्दिश्यत इत्यर्थः। १५ अनुगममेव विशदयति—अनेन हीति। ब्रह्मानन्दस्य विषयानुसन्धानविमुखविद्वद्बुद्धिविषयत्वाच्च न विषयविषयिसम्बन्धजनितत्वमित्याशयेनाह—व्यावृत्तेति। व्यावृत्ता निवृत्ता विषया यस्या बुद्धेः सकाशात्सा तथा। प्रकारान्तरेण लौकिकानन्दानां ब्रह्मानन्दावगमोपायत्वमभिप्रेत्याह—लौकिकोऽपीति। मात्रा अवयवः। लौकिकानन्दानां हिरण्यगर्भानन्दादर्वाक्तारतम्येन निकर्षः, मानुषानन्दादूर्ध्वं तारतम्येनोत्कर्ष इति व्यवस्था। तत्र लौकिकानन्दस्य ब्रह्मानन्दमात्रारूपत्वं प्रपञ्चयन्नादौ तत्र निकर्षप्रयोजकमाह—अविद्ययेति। तिरस्क्रियमाणे विज्ञान इति। विवेके २० तारतम्येनाभिभूयमान इत्यर्थः; तथा च विवेकाभिभव एको निकर्षप्रयोजक इति भावः। तत्र प्रयोजकान्तरं सूचयति—उत्कृष्यमाणायां चेति। कामक्रोधादिलक्षणैः स्वकार्यविशेषैर्निबिडायामित्यर्थः। कर्मापकर्षतारतम्यमप्यपकर्षप्रयोजकमित्याशयेनाह—कर्मवशादिति। यथाविज्ञानं विभाव्यमान इति सम्बन्धः। विषयापकर्षादिकमपि तत्र प्रयोजकमित्याशयेनाह—विषयादीति। चलः क्षणिकः, अनवस्थितः अनेकरूपः, अपकर्षतारतम्योपेत इति यावत्। सम्पद्यते, ब्रह्मानन्दो लौकिकः सम्पद्यत इत्यर्थः। योऽयं ब्रह्मानन्दस्य विषयविशेषादिकृतवृत्त्युपहितो भागः एष एव २५ मात्राशब्दितो लौकिकानन्द इति भावः। स एवेति। व्यावृत्तविषयबुद्धिगम्य इत्यत्र अकामहतविद्वच्छ्रोत्रियप्रत्यक्षगम्यत्वेन प्रकृतो ब्रह्मानन्द एव मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिषु ब्रह्मण आनन्द इत्यन्तासु शतगुणोत्तरोत्कर्षेण विभाव्यत इति सम्बन्धः। उत्तरोत्तरमानन्दोत्कर्षे पूर्वोक्तानामविद्यादीनामपकर्षतारतम्यं प्रयोजकमाह—अविद्याकामकर्मापकर्षेणेति। अकामहतेति। अकामहतविद्वच्छ्रोत्रियपदानां कर्मधारयः। "श्रोत्रियस्य चाकामहतस्य" इत्यत्राकामहतत्वं सातिशयमिति वक्ष्यति, तद्वदत्रापीति शङ्कानिरासार्थं विद्वत्पदम्, तच्च ब्रह्मसाक्षात्कारवत्परमिति ३० मन्तव्यम्। ब्रह्मण इत्यस्य विवरणम्—हिरण्यगर्भस्येति।

मात्राभूतेन लौकिकानन्दजातेनावगन्तव्यं ब्रह्मानन्दं दर्शयति—निरस्ते त्विति। साधनसम्पत्तिकृतवृत्तिविशेषोपहितस्वरूपानन्दो विषयः, तदनुभविता जीवो विषयी, तयोर्विभागो मूलाविद्याप्रयुक्तः, तस्मिन्नविद्याकृते ब्रह्मात्मैक्यविद्यया निरस्ते सति य आनन्दः समाधावभिव्यज्यते स एव स्वाभाविकः परिपूर्ण एकरूपो ब्रह्मानन्द इत्यवगतो भवतीत्यर्थः। एतदुक्तं भवति—यथोक्ताः सर्वे लौकिकानन्दा यस्य मात्राः समुद्राम्भस इव विप्रुषः, ३५ स स्वाभाविक आनन्दो विद्वत्प्रत्यक्षसिद्धोऽस्ति, स एव ब्रह्मानन्द इत्येवं मात्रारूपलौकिकानन्दैर्नित्यो ब्रह्मानन्दो विदितो भवतीति। एतमर्थमिति। अद्वैतानन्दावगमोपायभूतं लौकिकानन्दं विभावयिष्यन्प्रदर्शयिष्यन्नाह श्रुतिरित्यर्थः। प्रथमवया इति। पूर्ववया इत्यर्थः। साधुर्यथोक्तकारी। आशुतम इति। भोग्येषु वस्तुषु यथाकालम्

**स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितॄणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः। स एक आजानजानां देवानामानन्दः ॥२॥**

५ साधुरप्ययुवाऽतो विशेषणं युवा स्यात्साधुयुवेति। अध्यायकोऽधीतवेदः। आशिष्ट आशुतमः। दृढिष्ठो दृढतमः। बलिष्ठो बलवत्तमः। एवमाध्यात्मिकसाधनसम्पन्नः। तस्येयं पृथिव्युर्वी सर्वा वित्तस्य वित्तेनोपभोगसाधनेन दृष्टार्थेनादृष्टार्थेन च कर्मसाधनेन सम्पन्ना पूर्णा राजा पृथिवीपतिरित्यर्थः। तस्य च य आनन्दः स एको मानुषो मनुष्याणां प्रकृष्ट एक आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। मानुषानन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति। मनुष्याः सन्तः कर्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वाः।
१० ते ह्यन्तर्धानादिशक्तिसम्पन्नाः सूक्ष्मकार्यकरणाः। तस्मात्प्रतिघातात्पत्वं तेषां द्वन्द्वप्रतिघातशक्तिः साधनसम्पत्तिश्च। ततोऽप्रतिहन्यमानस्य प्रतीकारवतो मनुष्यगन्धर्वस्य स्याच्चित्तप्रसादः। तत्प्रसादविशेषात्सुखविशेषाभिव्यक्तिः। एवं पूर्वस्याः पूर्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ प्रसादविशेषतः शतगुणेनाऽऽनन्दोत्कर्ष उपपद्यते। प्रथमं त्वकामहताग्रहणं मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनाऽऽनन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो

### आनन्दगिरिटीका

१५ मनुष्यगन्धर्वानन्दस्योत्कृष्टत्वे निमित्तमाह—ते ह्यन्तर्धानादीति। प्रथममकामहताग्रहणस्य तात्पर्यमाह—**प्रथममिति**। यदि प्रथमपर्याय एवाकामहतो गृह्येत तदा तस्यैव सार्वभौमानन्देन तुल्य आनन्दः स्यात्तदा च व्याघातो भवेत्। मानुषानन्दे निस्पृहो मानुषानन्दभोगभागो चेति। ततो मनुष्यगन्धर्वानन्देन तुल्यमानन्दं तस्य दर्शयितुं प्रथमपर्याये तदग्रहणमित्यर्थः। अवृजिनत्वमपापत्वं यथोक्तकारित्वं तत्साधुपदाल्लभ्यत इत्यर्थः।

### वनमाला

२० अविलम्बेन प्रवृत्तिमानिति यावत्। **दृढतम इति**। युद्धादिषु प्रवृत्तौ मनोधैर्यवानित्यर्थः। **बलवत्तम इति**। कायिकबलातिशयविशेषवानित्यर्थः। "युवा स्यात्" इत्यादेः पिण्डितार्थमाह—**एवमाध्यात्मिकेति**। आत्मानं देहमधिकृत्य यानि साधनानि सम्भाव्यन्ते तैः सर्वैः सम्पन्न इत्यर्थः। वित्तस्य दृष्टार्थत्वमेव विवृणोति—**उपभोगेति**। अदृष्टार्थत्वविवरणम्—**कर्मेति**। **मनुष्याः सन्त इति**। अस्मिन्कल्पे मनुष्याः सन्त इत्यर्थः। तेषामानन्दोत्कर्षे हेतुमाह—**ते हीति**। आकाशगमनादिशक्तिसंग्रहार्थमादिग्रहणम्। उक्तशक्त्यादिसम्पत्तिः शास्त्रप्रसिद्धेति सूचनार्थो हिशब्दः।
२५ कार्यकरणानां सूक्ष्मत्वं प्रायेण शीतोष्णादिद्वन्द्वाभिघातायोग्यत्वम्। **तस्मादिति**। सूक्ष्मकार्यकरणवत्त्वादित्यर्थः। **द्वन्द्वेति**। अल्पानां द्वन्द्वानां प्राप्तावपि तेषां प्रतिघाते निवारणे या शक्तिः या च स्रक्चन्दनादीनामानन्दसाधनानां सम्पत्तिः सा चास्तीत्यर्थः। फलितमाह—**अत इति**। प्रसादो विक्षेपराहित्यम्, शुद्धिविशेष इति यावत्। मनुष्यगन्धर्वाणां स्वरूपं वार्त्तिके दर्शितम्—"सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः। नृत्तगीतादिकुशला गन्धर्वाः स्युर्नृलौकिकाः॥" इति। देवगन्धर्वादीनामपि यथोक्तसामग्र्युत्कर्षतारतम्यकृतचित्तप्रसादविशेष आनन्दोत्कर्षतारतम्य-
३० प्रयोजक इत्यतिदिशति—**एवमिति**। भूमिः पदम्, देवगन्धर्वत्वाद्यवस्थेति यावत्। "स एको मानुष्य आनन्दः" इत्यत्र प्रथमपर्याये "श्रोत्रियस्य चाकामहतस्य" इति कुतो न पठ्यते? तत्राह—**प्रथममिति**। **मनुष्येति**। मनुष्यस्य सार्वभौमस्य यो विषयभोगः विषयानन्दः तद्गोचरकामरहितस्य मनुष्यगन्धर्वानन्दप्राप्तिसाधनसम्पत्तिं विनैव तमानन्दमत्रैव लोके कामयमानस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणितेन मनुष्यगन्धर्वानन्देन तुल्यः सन्नानन्दो भवतीति वक्तव्यमित्येतदर्थमित्यर्थः। मानुषानन्दे कामाभावप्रयोजकविवेकोपयोगित्वेन मनुष्यगन्धर्वानन्दे कामोप-
३५ योगिगुणदर्शनोपयोगित्वेन च साङ्गाध्ययनवत्त्वरूपं श्रोत्रियत्वमुपात्तमिति मन्तव्यम्। ननु मनुष्यगन्धर्वस्य नृत्तगीतादिसामग्रीविशेषमहिम्ना यो हर्षविशेषो भवति स कथमत्रैवाकामहतश्रोत्रियस्य भवेदिति चेत्, अत्राहुः—मा भूदयं हर्षविशेषः तस्य क्षणिकस्य मुख्यानन्दत्वाभावात्, कस्तर्हि तस्य मुख्यानन्दः? उच्यते—मनुष्यगन्धर्वस्य स्वोचितविषयप्राप्त्या तदिच्छायां शान्तायां नृत्तगीतादिजनितहर्षविशेषेषु च शान्तेषु या तृप्तिरनुगच्छति सैव

**श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः॥३॥**

वक्तव्य इत्येवमर्थम्। साधुयुवाऽध्यायक इति श्रोत्रियत्वावृजिनत्वे गृह्येते। ते ह्यविशिष्टे सर्वत्र। अकामहतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय विशेष्यते। अतोऽकामहतग्रहणम्, तद्विशेषतः शतगुणमुखोत्कर्षोपलब्धेरकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम्। व्याख्यातमन्यत्। देवगन्धर्वा जातित एव। चिरलोकलोकानामिति पितॄणां विशेषणम्। चिरकालस्थायी लोको येषां पितॄणां ते चिरलोकलोका इति। आजान इति देवलोकस्तस्मिन्नाजाने जाता आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः। ५

कर्मदेवा ये वैदिकेन कर्मणाऽग्निहोत्रादिना केवलेन देवानपियन्ति। देवा इति त्रयस्त्रिंशद्धविर्भुजः। इन्द्रस्तेषां

वनमाला १०

मुख्य आनन्दः, तथा च स्मर्यते—"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥" इति। स च तृप्तिरूपो मुख्यानन्दो मनुष्यगन्धर्वेण समानः श्रोत्रियस्य सम्भवति। न चास्य श्रोत्रियस्य मनुष्यगन्धर्वानन्दे कामनावत्त्वान्न तृष्णाक्षय इति वाच्यम्, तथापि मनुष्यगन्धर्वाणां तत्पर्यायपठितश्रोत्रियस्य च मानुषानन्दगोचरतृष्णाक्षयसाम्येन तृप्तिलक्षणानन्दसाम्ये बाधकाभावादिति। मनुष्यगन्धर्वपर्याये पठितस्य श्रोत्रियस्य मनुष्यगन्धर्वानन्दगोचरकामनावत्त्वम् "मनुष्यविषयभोग" इति भाष्ये मनुष्यग्रहणसूचितम्, वार्त्तिकेऽपि स्पष्टमेव दर्शितम्—"मार्त्याद्भोगाद्विरक्तस्य ह्युत्तराह्लादकामिनः।" इति। एवमुत्तरत्रापि तत्तत्पर्यायपठितस्य श्रोत्रियस्य तत्पूर्वपूर्वभूम्यन्तानन्देषु कामानभिभूतत्वं तत्तद्भूमिगतानन्दकामनावत्त्वं चोहनीयम्। ननु सार्वभौमस्य अश्रोत्रियत्वात्पूर्वे वयस्यतिक्रान्तमर्यादत्वाच्च न तस्य मानुषानन्दः सम्पूर्ण इत्याशङ्कावारणायोक्तं स्मारयति—साध्विति। साधुपदाद्यथोक्तकारित्वरूपमवृजिनत्वं गृह्यते, ततो न तस्यातिक्रान्तमर्यादत्वाशङ्का, तथा अध्यायकपदाच्छ्रोत्रियत्वं गृह्यत इत्यर्थः। एवम् "श्रोत्रियस्य चाकामहतस्य" इति प्रतिपर्यायं श्रुतस्य श्रोत्रियस्यापि यथोक्तकारित्वरूपमवृजिनत्वमपेक्षितम्, अन्यथा अधीतसाङ्गस्वाध्यायत्वेन श्रोत्रियस्यापि तस्य यथोक्तकारिभिः श्रोत्रियैः निन्द्यमानस्य मनुष्यगन्धर्वादितुल्यानन्दप्राप्त्यसम्भवप्रसङ्गात्, अत एव श्रुत्यन्तरे तदपि पठ्यते—"यश्च श्रोत्रियोऽवृजिनोऽकामहतः" इति। ननु द्वितीयपर्यायमारभ्य श्रुतानां श्रोत्रियाणां मध्ये कस्यचिन्मनुष्यगन्धर्वानन्देन तुल्य आनन्दः कस्यचित्तु देवगन्धर्वानन्देनेत्यादिलक्षणो विशेषः किंकृतः श्रोत्रियत्वावृजिनत्वाकामहतत्वानामानन्दसाधनानामेकरूपत्वादिति; नेत्याह—ते हीति। हिशब्दोऽवधारणार्थः। सर्वत्र सर्वेषु श्रोत्रियेषु श्रोत्रियत्वावृजिनत्वे एवाविशिष्टे तुल्ये, न त्वकामहतत्वमपि, तत्तु तत्तत्पर्यायगतस्य श्रोत्रियस्य विशिष्यते भिद्यते। तद्भेदे हेतुः—विषयेति। मनुष्यगन्धर्वपर्यायस्थश्रोत्रियस्य मानुषानन्दमात्रे कामाभावः तस्य तदतिरिक्तानन्देषु सर्वत्र साभिलाषत्वात्, तथा देवगन्धर्वपर्यायस्थस्य श्रोत्रियस्य मानुषानन्दे मनुष्यगन्धर्वानन्दे च विषये कामाभावः तस्य तदतिरिक्तानन्देषु सर्वत्र साभिलाषत्वात्। एवमुत्तरत्रापि। एतदुक्तं भवति—कामस्य विषयबाहुल्यरूपोत्कर्षे सति तन्निवृत्तिरूपस्याकामहतत्वस्यापकर्षरूपो विशेषो भवति, कामस्य विषयाल्पत्वरूपापकर्षे सति तन्निवृत्तिरूपस्याकामहतत्वस्य उत्कर्षरूपो विशेषो भवतीति। तथा चाकामहतत्वोत्कर्षादुत्तरोत्तरमानन्दोत्कर्षः श्रोत्रियाणामिति स्थितम्। एवं यावद्यावदकामहतत्वोत्कर्षस्तावत्तावच्छ्रोत्रियानन्दोत्कर्ष इति श्रुत्यर्थे स्थिते फलितं श्रुतितात्पर्यमाह—अत इति। तद्विशेषत इति। अकामहतत्वविशेषतः श्रोत्रियेष्वानन्दोत्कर्षोपलब्ध्या सर्वात्मना कामोपशमे सति सर्वोत्कृष्टः परमानन्दः प्राप्तो भवेदिति यतः प्रतिभाति अतः अकामहतग्रहणं निरतिशयस्याकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थमिति गम्यत इत्यर्थः। "ते ये शतं मनुष्यगन्धर्वाणामानन्दाः" इत्यादिपदजातं न व्याख्येयं प्रथमपर्यायव्याख्यानेन गतार्थत्वादित्याशयेनाह—व्याख्यातमन्यदिति। जातित इति। जन्मत इत्यर्थः। एतदुक्तं भवति—कल्पादावेव देवलोके जाता गायका देवगन्धर्वा इति। कर्मदेवत्वं विवृणोति—ये वैदिकेनेति। केवलेनेति। उपासनासमुच्चयरहितेनेत्यर्थः। देवानपियन्ति देवैश्चन्द्रादिभिरधिष्ठिताल्लोकान्यान्तीत्यर्थः। "ते ये शतं प्रजापतेरा- १५ २० २५ ३० ३५

**श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः। [1]स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य ॥४॥**

स्वामी। तस्याचार्यो बृहस्पतिः। प्रजापतिर्विराट्त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलव्यापी। यत्रैत
५ आनन्दभेदा एकतां गच्छन्ति। धर्मश्च तन्निमित्तो ज्ञानं च तद्विषयमकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भो ब्रह्मा, तस्यैष आनन्दः श्रोत्रियेणावृजिनेनाकामहतेन च सर्वतः प्रत्यक्षमुपलभ्यते। तस्मादेतानि त्रीणि साधनानीत्यवगम्यते। तत्र श्रोत्रियत्वावृजिनत्वे नियते अकामहतत्वं तूत्कृष्यत इति प्रकृष्टसाधनताऽवगम्यते। तस्य

आनन्दगिरिटीका

त्रयस्त्रिंशत्—अष्टौ वसव, एकादश रुद्रा, द्वादशाऽऽदित्या, इन्द्रः, प्रजापतिश्चेति। यदर्थं मीमांसाऽऽरब्धा
१० तस्य निरतिशयानन्दस्य सिद्धौ वाक्यतात्पर्यं दर्शयितुमाह—तस्याकामहतत्वेति। तस्य ब्रह्मणो हिरण्यगर्भस्य आनन्दस्तदुपासकप्रत्यक्षो यस्य मात्रा स एष परमानन्दः स्वाभाविक इति सम्बन्धः। हिरण्यगर्भानन्दस्य मात्रात्वे

वनमाला

नन्दाः, स एको ब्रह्मण आनन्दः" इत्यत्रानन्दस्य परिमाणकथनलिङ्गेन ब्रह्मशब्दस्य हिरण्यगर्भपरत्वमाह—समष्टीत्यादिना। समष्टिव्यष्टिरूपः व्याप्यव्यापकरूपः। तत्र कार्यात्मना व्याप्यः कारणात्मना व्यापक इत्यर्थः।
१५ तदीयव्याप्तेरवधिमाह—संसारेति। ब्रह्माण्डव्यापीत्यर्थः। यत्रैत इति। यत्र हिरण्यगर्भे प्रकृता आनन्दविशेषाः परिमाणत एकत्वमिव गच्छन्ति सांसारिकानन्दोत्कर्षसर्वस्वं यत्रेत्यर्थः। तन्निमित्त इति। तस्यानन्दोत्कर्षसर्वस्वभूतस्य फलस्य निमित्तभूतो धर्मश्च यत्र निरवधिक इत्यर्थः। तद्विषयमिति। यथोक्तफलतन्निमित्तधर्मादिविषयकं ज्ञानं च यत्र निरतिशयमित्यर्थः। अकामहतत्वं चेति। हिरण्यगर्भस्य तावत्पूर्वभूमिषु नास्ति कामना, स्वभूम्यपेक्षया तासामत्यन्तनिकृष्टत्वात्; स्वभूमावपि नास्ति कामना, तस्याः प्राप्तत्वात्, अप्राप्तवस्तुगोचरत्वात्कामनायाः,
२० अतस्तस्याकामहतत्वमपि निरतिशयमित्यर्थः। तथा च स्मृतिः—"ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्॥" इति। ननु मानुषानन्दोऽस्माकं प्रसिद्ध एव, मनुष्यस्य प्रत्यक्षत्वेन मुखप्रसादादिलिङ्गैस्तदीयानन्दस्योत्प्रेक्षितुं शक्यत्वात्, अन्ये त्वस्माकमप्रसिद्धा इति कथं तद्द्वारा ब्रह्मानन्दानुगमसिद्धिः अप्रसिद्धेन अप्रसिद्धबोधनायोगात्, अतोऽन्यैरप्यानन्दैः प्रसिद्धैरेव भवितव्यम्, तेषां प्रसिद्धमाश्रित्य ब्रह्मानन्दानुगम इत्ययमर्थः प्रागाचार्यैरेव दर्शितः "अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते" इत्यादिना।
२५ नैष दोषः, मनुष्यगन्धर्वाद्यानन्दानां प्रसिद्धिसम्पादनायैव प्रतिपर्यायं मनुष्यलोकस्थश्रोत्रियप्रत्यक्षत्वकथनात्। इममेवाभिप्रायं प्रकटयितुं हिरण्यगर्भानन्दस्य तत्पर्यायस्थश्रोत्रियप्रत्यक्षत्वमाह—तस्यैष आनन्द इति। हिरण्यगर्भाद्यानन्दस्य ब्रह्मानन्दावगमोपायत्वसिद्ध्युपयोगितया प्रसिद्धत्वकथनपरेण "श्रोत्रियस्य चाकामहतस्य" इति वाक्यजातेनान्यदपि सिध्यतीत्याह—तस्मादिति। मनुष्यस्य सतः श्रोत्रियस्य श्रोत्रियत्वादित्रितयमहिम्ना हिरण्यगर्भादितुल्यानन्दकथनात्त्रीण्यप्येतान्यानन्दप्राप्तौ साधनानीति गम्यत इत्यर्थः। त्रिषु मध्ये विशेषमाह—तत्रेति।
३० सर्वेषां श्रोत्रियाणां श्रोत्रियत्वावृजिनत्वे नियते साधारणे, अकामहतत्वमेवोत्कृष्यमाणं सदानन्दोत्कर्षे कारणमित्यतः प्रकृष्टसाधनता अकामहतत्वस्यावगम्यत इत्यर्थः। यदुक्तं प्रकारान्तरेण ब्रह्मानन्दानुगमप्रदर्शनाय लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रेति, तमेव प्रकारान्तरेण ब्रह्मानन्दानुगममिदानीं लौकिकानन्दानां ब्रह्मानन्दमात्रात्वप्रदर्शनपूर्वकं दर्शयति—तस्येत्यादिना। तस्य ब्रह्मण इति सम्बन्धः। आनन्द इत्यनन्तरमपिशब्दोऽध्याहर्तव्यः। स च पूर्वोक्ता-

---

१. स एको ब्रह्मण आनन्द इति हिरण्यगर्भानन्द उक्तः सोऽपि अकामहतश्रोत्रियप्रत्यक्षः। मतान्तरे
३५ तु श्रोत्रियस्याकामहतस्येति मुक्तस्य सर्वे आनन्दा इत्यर्थः कृतः। तत्र उत्तरोत्तरपर्यायेषु आनन्दोत्कर्षप्रतिपादनविरोधः। तेन हि सातिशय आनन्दो लक्ष्यते, न च मुक्तानन्दस्य सातिशयत्वं ते मन्यन्ते। अतः कृच्छ्रेण तत्समर्थनम्।

## [1]स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।

अकामहतत्वप्रकर्षतश्चोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्दो यस्य परमानन्दस्य मात्रैकदेशः 'एतस्यैव आनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'' इति श्रुत्यन्तरात् स एष आनन्दो यस्य मात्रा समुद्राम्भस इव विप्रुट् प्रविभक्ता यत्रैकतां गता स एष परमानन्दः स्वाभाविकोः, अद्वैतत्वादानन्दानन्दिनोश्चाविभागोऽत्र।

तदेतन्मीमांसाफलमुपसंह्रियते—स यश्चायं पुरुष इति। यो गुहायां निहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्नमयान्तं तदेवानुप्रविष्टः स य इति निर्दिश्यते। कोऽसावयं पुरुषे। यश्चासावादित्ये यः परमानन्द श्रोत्रिय-प्रत्यक्षो निर्दिष्टो यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति स यश्चासावादित्य इति निर्दिश्यते। स एको ५

आनन्दगिरिटीका

श्रुत्यन्तरं प्रमाणयति—एतस्यैवेति। न केवलं हिरण्यगर्भानन्द एव मात्रा यश्च प्रागुपन्यस्तः सार्वभौमाद्यानन्दः स एष यस्य मात्रा प्रविभक्ता नानात्वमापन्ना सती यत्र निरतिशयानन्देऽकामहतब्रह्मवित्प्रत्यक्षे कैवल्य एकतां गतेति योजना। अकामहतप्रत्यक्षत्वाभिधानाद्भेदप्राप्तिं निरस्यति—आनन्दानन्दिनोश्चेति। प्रत्यक्षत्वाभिधानमज्ञान-संशयादिव्यवधानाभावाभिप्रायं न तु विषयविषयिभावाभिप्रायम्। ''अदृश्येऽनात्म्ये'' ''उदरमन्तरं कुरुत'' इत्यादिना निषेधादित्यर्थः। १०

मीमांसया निरतिशयानन्दं ब्रह्मास्तीति निर्धारितम्। तस्याकामहतप्रत्यक्षत्वाभिधानादभेदसिद्धिः। न हि परमानन्दः परस्य प्रत्यक्षो भवति। तस्मान्निरतिशयानन्दब्रह्मैकत्वं जीवस्य ''ब्रह्मविदाप्नोति परमि''त्युपक्रान्तं १५

वनमाला

नन्दानामनुक्तानां च संग्रहार्थं इति मन्तव्यम्। सर्वेषामेव लौकिकानन्दानां ब्रह्मानन्दैकदेशत्वे मानमाह—एतस्यैवेति। अन्यानीति। ब्रह्मणः सकाशादात्मानमन्यत्वेन मन्यमानानि भूतानि प्राणिन इत्यर्थः। लौकिकानन्दस्य परमानन्द-मात्रात्वे मानसिद्धे फलितमाह—स एष इति। पूर्वोक्तो लौकिकानन्दो यस्य मात्रा यस्मादुपाधितो भिन्नो यत्रैवोपाधि-विलये पुनरेकतां गच्छति स आनन्दः स्वाभाविको नित्योऽस्तीत्यत्र हेतुमाह—अद्वैतत्वादिति। ''अथ यदल्पं तन्मर्त्यम्'' इति श्रुत्या परिच्छिन्नस्यानित्यत्वप्रतिपादनादद्वैतत्वं नित्यत्वसाधने समर्थमिति मन्तव्यम्। ननु ब्रह्मा-नन्दस्याद्वैतत्वमसिद्धम् ''रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'' इत्यानन्दानन्दिभावेन ब्रह्मानन्दजीवयोर्भेदावगमादित्यत आह—आनन्दानन्दिनोश्चेति। चशब्दः शङ्कानिरासार्थः। अत्रेत्यस्य विद्याकाल इत्यर्थः। ततश्चाविद्याकाल एवाविद्यिको भेदो न विद्याकाले विद्यया भेदकोपाधेरविद्याया निरस्तत्वादित्यर्थः। एतदुक्तं भवति—ब्रह्मानन्द-जीवयोरविद्याकल्पितो विभागो न वास्तवः, अतो ब्रह्मानन्दस्य नाद्वैतत्वहानिरिति। २० २५

एवम् ''सैषानन्दस्य मीमांसा भवति'' इत्युपक्रम्य श्रुत्या मात्राभूतसातिशयानन्दोपन्यासद्वारा सूचितया ''लौकिकानन्दः क्वचित्काष्ठां प्राप्तः सातिशयत्वात्'' ''लौकिकानन्दो यस्य मात्रा समुद्राम्भस इव विप्रुट्'' इत्यादि-लक्षणया मीमांसया ''अस्त्यद्वितीयः परमानन्दः'' इति निर्णयः कृत इति प्रदर्श्य इदानीमुत्तरवाक्यतात्पर्यमाह—तदेतदिति। तदेतत् ब्रह्मानन्दस्याद्वितीयत्वस्वाभाविकत्वादिलक्षणं मीमांसाफलं मीमांसया निर्णीतमित्यर्थः। ''स यश्चायम्'' इत्यत्र स इति शब्देन गुहानिहितवाक्ये तद्वृत्तिस्थानीये प्रवेशवाक्ये च निर्दिष्टः प्रत्यगात्मा निर्दिश्यत इत्याह—यो गुहायामिति। आकाशे या गुहा तस्यामित्यन्वयः। योऽन्नमयान्तमाकाशादिकार्यं सृष्ट्वा तदेव कार्यमनुप्रविष्ट इत्यर्थः। अयमित्यनेन तस्यापरोक्षत्वमुच्यत इत्याशयेनाह—कोऽसावित्यादिना। पुरुष इति। शरीर इत्यर्थः। श्रोत्रियप्रत्यक्ष इति। यद्यपि लौकिकानन्दानामेव पूर्वत्र श्रोत्रियप्रत्यक्षत्वं निर्दिष्टं न परमानन्दस्य, तथापि तत्र परमानन्दस्याकामहतविद्वच्छ्रोत्रियप्रत्यक्षत्वमर्थान्निर्दिष्टमिति तदभिप्रायोऽयं ग्रन्थः, अकामहतत्वस्य निरति-शयोत्कर्षे सति विदुषः परमानन्दप्राप्तेः प्रागुपपादितत्वादिति मन्तव्यम्। यो विद्वत्प्रत्यक्षत्वेन ब्रह्मादिसर्वभूतोप-जीव्यानन्दानुगम्यत्वेन च प्रकृतः परमानन्द, सोऽसावादित्यदेवताधेयत्वेन निर्दिश्यत इत्यर्थः। स एक इति। ३० ३५

---

१. ''स यश्चायं पुरुषे यश्चासावादित्ये स एक'' इति स्फुटतरं जीवब्रह्मैक्यं प्रतीयते। मतान्तरे तु हृदयाकाशे स्थितः आदित्यस्य नारायण एवेत्यर्थं इत्युक्तम्। तन्न, हृदयाकाशे ब्रह्मान्तरसद्भावे प्रमाणाभावात् अप्रसक्तप्रतिषेधापत्तेश्च हृदयाकाशे ईश्वरोपासनविधिर्हि आदित्यस्थमेव ध्येयत्वेन विधत्ते नान्यम्।

भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत्। ननु तन्निर्देशे स यश्चायं पुरुष इत्यविशेषतोऽध्यात्मं न युक्तो निर्देशः, यश्चायं दक्षिणेऽक्षन्निति तु युक्तः प्रसिद्धत्वात्। न पराधिकारात्। परो ह्यात्माऽत्राधिकृतः "अदृश्येऽनात्म्ये" "भीषाऽस्माद्वातः पवते" "सैषाऽऽनन्दस्य मीमांसे"ति। न ह्यकस्मादप्रकृतो युक्तो निर्देष्टुं परमात्मविज्ञानं च विवक्षितम्। तस्मात्पर एव निर्दिश्यते स एक इति। नन्वानन्दस्य मीमांसा प्रकृता तस्या अपि फलमुपसंहर्तव्यम्। अभिन्नः स्वाभाविक आनन्दः
५ परमात्मैव न विषयविषयिसम्बन्धजनित इति। ननु तदनुरूप एवायं निर्देशः—"स यश्चायं पुरुषे यश्चासावादित्ये स एक" इति भिन्नाधिकरणस्थविशेषोपमर्देन। नन्वेवमप्यादित्यविशेषग्रहणमनर्थकम्। नानर्थकम्। उत्कर्षापकर्षा-

आनन्दगिरिटीका

मीमांसया च सिद्धमुपसंह्रियत इत्यर्थः। आदित्यग्रहणस्याऽऽधिदैविकोपाधिलक्षणार्थस्याविवक्षितत्वं दर्शयितुं चोद्यमुद्भावयति--नन्विति। "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" इत्यादौ श्रुत्यन्तरे
१० मण्डलस्थस्य दक्षिणाक्षिस्थेनैक्यस्य प्रसिद्धत्वादिहाप्यादित्यस्थैक्यनिर्देशे दक्षिणाक्षिग्रहणं युक्तमित्यर्थः। अध्यात्म-मधिदैवतं च लिङ्गात्मोपासनविवक्षायां तथा स्यान्नेह तद्विवक्षितमित्याह--न परेति। य एव चिद्धातुर्निरति-

वनमाला

"स यश्चायं पुरुषे" इति वाक्यनिर्दिष्टस्य बुद्ध्यवच्छिन्नजीवरूपानन्दस्य "यश्चासावादित्ये" इति वाक्ये आदित्यान्तःस्थत्वेन निर्दिष्टस्य मायावच्छिन्नपरमानन्दस्य च "स एकः" इति वाक्येनोपाधिद्वयनिरसनपूर्वकं
१५ स्वाभाविकमभिन्नत्वमुपदिश्यते। अस्मिन्नर्थे इत्थमक्षरयोजना—सः द्विविधोऽप्यानन्दो वस्तुत एक एवेति। भिन्न-प्रदेशस्थयोर्घटाकाशाकाशयोराकाशस्वरूपेण यथैकत्वमिति दृष्टान्तार्थः। ननु "स यश्चायं पुरुषे" इति सामान्यतः शरीरस्थत्वेनात्मनो निर्देशो न युक्तः प्रसिद्धिविरोधादिति शङ्कते—नन्विति। तन्निर्देश इति। तस्यात्मनोऽध्यात्म-निर्देशे विवक्षिते सतीत्यर्थः। कथं तर्हि निर्देशः कर्तव्य इत्याकाङ्क्षायामाह—यश्चायं दक्षिण इति। "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" इति श्रुत्यन्तरे दक्षिणाक्षिग्रहणस्य प्रसिद्धत्वात्तदैकरूप्यायात्रापि
२० तथा निर्देश एव युक्त इत्यर्थः। तत्र सोपाधिकस्य ब्रह्मण उपासनार्थं स्थानविशेषनिर्देशेऽपि नात्र तदपेक्षेति परिहरति—न पराधिकारादिति। निरुपाधिकात्मप्रकरणादित्यर्थः। हेतुं साधयति—परो हीत्यादिना। ननु परस्य प्रकृतत्वेऽपि "यश्चासावादित्ये" इत्यादौ सोपाधिकमुपास्यमेव निर्दिश्यतामिति; नेत्याह—न ह्यकस्मादिति। परमात्मनि प्रकृते सति "स यश्चायम्" इत्यादौ प्रकृतपरमात्माकर्षकसर्वनामश्रुतिषु च सतीषु कथमकस्माद्धेतुं विनात्र सोपाधिको निर्देष्टुं युक्तः तस्याप्रकृतत्वादित्यर्थः। ननु तर्हि परस्यैव ध्यानार्थमादित्यादिस्थाननिर्देशोऽत्रास्तु;
२५ नेत्याह—परमात्मविज्ञानं चेति। चशब्दः शङ्कानिरासार्थः। निरुपाधिकस्य "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादौ ध्याननिषेधादत्र तद्ध्यानविवक्षायां मानाभावाच्चेत्यर्थः। उपसंहरति—तस्मादिति। पराधिकारात्पर एव निर्दिश्यते नापरः, अतो नाक्षिस्थाननिर्देशापेक्षेत्यर्थः। इतश्चात्र पर एव निर्दिश्यत इत्याह सिद्धान्ती—नन्वा-नन्दस्येति। फलस्वरूपमेव कथयति—अभिन्नस्वभावक इत्यादिना। न च मीमांसाफलस्यानुपसंहारे कानुपपत्तिरिति वाच्यम्, मीमांस्यत्वेनोपक्रान्तस्यानन्दस्य "स यश्चायम्" इत्यादावद्वितीयत्वेनोपसंहाराभावे चरमपर्यायनिर्दिष्टे
३० विषयविषयिसम्बन्धजनिते सातिशये हिरण्यगर्भानन्द एव मीमांसापर्यवसानापत्त्या तदद्वितीयत्वनिर्णयालाभ-लक्षणाया अनुपपत्तेः सत्त्वात्। सिद्धान्त्येव स्वपक्षे पुरुष इत्याद्यविशेषतो निर्देशस्यानुकूल्यमाह—ननु तदनुरूप एवेति। "स यश्चायम्" इति वाक्यं जीवानुवादकम्, आदित्यवाक्यमीश्वरानुवादकम्, "स एकः" इति तु तयोर्भिन्नाधिकरणस्थयोरुपाधिविशेषनिरसनद्वारा एकत्वबोधकमिति रीत्या निर्देशस्यानुरूप्यम्। ते च भिन्ने अधिकरणे आदित्यः शरीरं चेति मन्तव्यम्। अत्रोपासनविवक्षाभावे सत्यादित्यग्रहणं विफलम्, "तत्त्वमसि" इत्यादा-
३५ विवेश्वरस्य शब्दान्तरेणैव निर्देशसम्भवादिति मत्वा शङ्कते—नन्वेवमपीति। उक्तरीत्या परमात्मनिर्देशादेरावश्य-कत्वेऽपीत्यर्थः। आदित्यदेवताया उत्कृष्टोपाधिकत्वात्तदन्तःस्थत्वेन परमात्मनो निर्देशे तस्याप्युत्कृष्टोपाधिकत्वेनार्था-दुत्कर्षो निर्दिष्टो भवति; तथा च "स यश्चायम्" इत्यनेन निकृष्टमात्मानमनूद्य "यश्चासावादित्ये" इत्यनेनोत्कृष्ट-मीश्वरं चानूद्य "स एकः" इत्यनेन तयोर्निरुपाधिकपरमानन्दस्वरूपेणैकत्वे बोधिते सत्युपाधितत्कृतोत्कर्षापकर्षाणाम-पोहो भवति। एवमुत्कर्षप्रत्यायनद्वारा तदपोहप्रयोजनकत्वादादित्यग्रहणं नानर्थकमिति परिहरति—नानर्थकमिति।

**स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमा-**

पोहार्थत्वात्। द्वैतस्य हि मूर्तामूर्तलक्षणस्य पर उत्कर्षः सवित्रभ्यन्तर्गतः स चेत्पुरुषगतविशेषोपमर्देन परमानन्दमपेक्ष्य समो भवति न कश्चिदुत्कर्षोऽपकर्षो वा तां गतिं गतस्येत्यभयं प्रतिष्ठां विन्दत इत्युपपन्नम्।

अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः। कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्योऽस्त्येव तदाकाशादि-कारणं ब्रह्मेत्यपाकृतोऽनुप्रश्न एकः, द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ, तत्र विद्वान्समश्नुते न ५ समश्नुत इत्यनुप्रश्नोऽन्त्यस्तदपाकरणायोच्यते। मध्यमोऽनुप्रश्नोऽन्त्यापाकरणादेवापाकृत इति तदपाकरणाय न यत्यते।

स यः कश्चिदेवं यथोक्तं ब्रह्मोत्सृज्योत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमस्मीत्येवं वेत्तीत्येवंवित्। एवंशब्दस्य प्रकृतपरामर्शार्थत्वात्। स किम्? अस्माल्लोकात्प्रेत्य दृष्टादृष्टेष्टविषयसमुदायो ह्ययं लोकस्तस्मादस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वैतं यथाव्याख्यातमन्नमयमात्मानमुपसंक्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं

आनन्दगिरिटीका १०

शयानन्द उत्कृष्टोपाधौ प्रतिबिम्बितः स एव निकृष्टोपाधौ शिरःपाण्यादिमति पुरुषे प्रतिबिम्बित इति परमानन्दमपेक्ष्य समत्वं विशिष्टयोः स्वभावैक्यं विवक्षितमित्यर्थः। वृत्तानुवादपूर्वकमुत्तरग्रन्थमवतारयति—**अस्ति नास्तीति**। सन्दिग्धं सप्रयोजनं च विचारमर्हति।

वनमाला

उत्कर्षस्यापकर्षनिरूपकत्वादुत्कर्षापोहे निकर्षापोहोऽपि भवतीति मत्वा निकर्षापोहोऽप्यादित्यग्रहणप्रयोजनत्वेनोक्त १५ इति मन्तव्यम्। आदित्यदेवतोपाधेरुत्कृष्टत्वे मानमाह—**द्वैतस्य हीति**। अत्र सवितृशब्दो मण्डलपरः तदन्तर्गतश्च समष्टिलिङ्गदेहोऽपि विवक्षितः। तत्र मण्डलात्मकः सविता मूर्तस्य पर उत्कर्षः सार इति यावत्, तथा तदन्तर्गतो लिङ्गात्मा अमूर्तस्य पर उत्कर्षः, तदुभयमादित्यदेवतोपाधिभूतं मूर्तामूर्तलक्षणस्य द्वैतस्य सारभूतमित्येतद्वाजसनेयके प्रसिद्धमिति द्योतनार्थो हिशब्दः। ननु ब्रह्मात्मैकत्वविज्ञानेनोत्कर्षाद्यपोहे सति किं फलतीत्याशङ्क्याह—**स चेदिति**। सवित्रादिद्वारा बुद्धिस्थः सर्वोत्कृष्टः परमेश्वरः इत्यर्थः। तथा च सोपाधिक ईश्वरः स्वोपाधिभूतं विशेषं परित्यजन् २० शरीरगतलिङ्गात्मकजीवोपाध्युपमर्देनेन परमानन्दमपेक्ष्य परमानन्दस्वरूपेण सम एकत्वमापन्नो भवति चेदित्यर्थः। ततः किमित्यत आह—**न कश्चिदिति**। निर्विशेषपरमानन्दब्रह्मणा सहैकत्वलक्षणाम् "स एकः" इति वाक्ये प्रकृतां गतिं गतस्य विदुषः सगुणमुक्तस्येवोत्कर्षो वा संसारिण इवापकर्षो वा न कश्चिदस्तीति सिध्यतीत्यर्थः। ननु निकर्षस्य हेयत्वेऽपि परममुक्तस्योत्कर्षः किमिति हेयः, सूर्यादेरिवोत्कर्षं प्राप्तस्यापि तस्य कृतार्थत्वसंभवात्, तथा चोत्कर्षापोहप्रयोजनकमादित्यग्रहणमसङ्गतमिति; नेत्याह—**अभयमिति**। मुक्तस्योत्कर्षप्राप्त्युपगमे तत्प्रयोजकेन २५ उपाधिनापि भवितव्यम्, तथा च सोपाधिकस्य मुक्तस्य परमानन्दरूपादीश्वराद्भेदावश्यम्भावात्सूर्यवाय्वादेरिव भयमावश्यकमित्येकत्वज्ञानेन मुक्तिं प्राप्तस्य "अभयं प्रतिष्ठां विन्दते" इति वचनमनुपपन्नमेव स्यात्, ततो न विदुष उत्कर्षप्राप्तिरिष्टेति तदपोहप्रयोजनकमादित्यग्रहणं सङ्गतमेवेति भावः।

वृत्तानुवादपूर्वकमुत्तरग्रन्थमवतारयति—**अस्ति नास्तीत्यादिना**। व्याख्यातो निराकृत इत्यर्थः। कथं निराकृत इत्याकाङ्क्षायामाह—**कार्येति**। कार्यं च रसलाभश्च प्राणनं चाभयप्रतिष्ठा च भयदर्शनं च, एतान्येवोप- ३० पत्तय इत्यर्थः। **विषयाविति**। अवशिष्टाविति शेषः। **उच्यत इति**। "स य एवंवित्" इत्यादिना ब्रह्मप्राप्तिर्विदुष उच्यत इत्यर्थः। ननु तर्हि मध्यमोऽनुप्रश्नो विशिष्येत; नेत्याह—**मध्यम इति**। विदुषो ब्रह्मप्राप्तिप्रतिपादनेनान्त्य-प्रश्नापाकरणे कृते सति अर्थादविदुषस्तत्प्राप्तिर्नास्तीति निर्णयलाभान्मध्यमप्रश्नो निराकर्तव्यत्वेन नावशिष्यते, अतो न तदपाकरणाय श्रुत्या प्रयत्नः कृत इत्यर्थः। इदमुपलक्षणम्; अविदुषो ब्रह्मप्राप्तिप्रश्नस्यातिफल्गुत्वाच्च तदपाकरणाय श्रुत्या न यत्यत इत्यपि द्रष्टव्यम्। वेदनस्योत्कर्षादिरहिताद्वितीयस्वप्रकाशब्रह्मविषयकत्वलाभे हेतुमाह— ३५ **एवंशब्दस्येति**। लोकशब्दस्य प्रत्यक्षसिद्धभोग्यमात्रपरत्वं व्यावर्तयति—**दृष्टादृष्टेति**। "अस्माल्लोकात्प्रेत्य" इत्यनेन सर्वस्मात्कर्मफलाद्वैराग्यं विवक्षितमित्याह—**निरपेक्षो भूत्वेति**। अत्र येन क्रमेणैव वेदनं प्राप्तं तत्क्रमानु-वादपूर्वकमेवं वेदनफलमुच्यत इति प्रतीयते, तां प्रतीतिमाश्रित्य व्याख्यानमिदम्; विवक्षितं तु व्याख्यानं करिष्य-

**त्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति ॥५॥**

**इति अष्टमोऽनुवाकः**

न पश्यति, सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः। ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम्। अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति। अथ एवंविददृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते।

¹तत्रैतच्चिन्त्यम्—कोऽयमेवंवित्कथं वा संक्रामतीति। किं परस्मादात्मनोऽन्यः संक्रमणकर्ता प्रविभक्त उत स एवेति। किं ततः? यद्यन्यः स्याच्छ्रुतिविरोधः। "तत्सृष्ट्वा तदेवानुप्राविशत्" "अन्योऽसावन्योऽहमस्मीति। न स वेद" "एकमेवाद्वितीयम्" "तत्त्वमसि" इति। अथ स एवाऽऽनन्दमयमात्मानमुपसंक्रामतीति, कर्मकर्तृत्वानुपपत्तिः। परस्यैव च संसारित्वं पराभावो वा। यद्युभयथा प्राप्तो दोषो न परिहर्तुं शक्यत इति व्यर्था चिन्ता। अथान्य-

आनन्दगिरिटीका

अत्र च कस्मिन्पक्षे को दोषः को वा लाभ इत्याह—**किं तत इति**। उभयत्रानुपपत्ति संशयकारणमाह—**यद्यन्यः स्यादिति**। चोद्यमुखेन संशयव्यावृत्ति प्रयोजनमाह—**यद्युभयथेत्यादिना**। एतदेव मम विचारारम्भकस्य

वनमाला

माणचिन्तावसाने भविष्यतीति मन्तव्यम्। एवं विरक्तो भूत्वा प्रथमं पुमान्किं करोति? तत्राह **एतमिति। यथोक्तमिति**। "स वा एष पुरुषोऽन्नरसमयः" इत्यत्रान्नरसविकारत्वेनोक्तमित्यर्थः। विषयजातमित्यनेन व्यष्टिपिण्डव्यतिरिक्तः समष्टिपिण्डात्मा विराडुच्यते। विराजं व्यष्टिपिण्डव्यतिरिक्तं न पश्यति चेत्कथं तर्हि पश्यतीत्याकाङ्क्षायां तद्दर्शयन्नुपसंक्रामतीत्यस्यार्थमाह—**सर्वमिति**। समष्टिस्थूलात्मानं विराजमन्नमयात्मानं पश्यति समष्टिव्यष्ट्यात्मकमन्नलक्षणं ब्रह्माहमिति पश्यतीति यावत्। **तत इति**। विराडात्मकादन्नमयकोशादान्तरमित्यर्थः। **एतमिति**। "अन्योन्तर आत्मा प्राणमयः" इत्यत्र प्रकृतमित्यर्थः। **अविभक्तमिति**। सूत्रात्मना एकीभूतमित्यर्थः। अत एव सर्वपिण्डव्यापित्वरूपं सर्वान्नमयात्मस्थत्वविशेषणं प्राणमयस्योपपद्यते। तथा चान्नमयात्मदर्शनान्तरं तद्धित्वा यथोक्तं प्राणमयात्मानं पश्यतीत्यर्थः। एवमुत्तरत्रापि योजनीयम्। **उपसंक्रामतीति**। एवं क्रमेणानन्दमयमात्मानमुपसंक्रम्यानन्तरमानन्दमयं प्रति पुच्छप्रतिष्ठाभूतमुत्कर्षादिरहितं सत्यज्ञानानन्तलक्षणं ब्रह्माहमस्मीति पश्यंस्तदेव प्राप्नोतीति भावः। **अथेति**। एवंविदेवं वेदनानन्तरमित्यर्थः।

**तत्रैतच्चिन्त्यमिति**। "स य एववित्" इत्यत्र "उपसंक्रामति" इत्यत्र च एवंवित्स्वरूपं संक्रमणस्वरूपं च विचारणीयमित्यर्थः। कोऽयमेवंविदित्युक्तं विवृणोति—**किमिति**। अन्य इत्यस्य विवरणं प्रविभक्त इति। पक्षद्वयेऽप्यनुपपत्त्यभावात्संशयो न घटत इति मत्वा पृच्छति—**किं तत इति**। पक्षद्वयेऽप्यनुपपत्तिं संशयकारणभूतामाह—**यद्यन्यः स्यादित्यादिना**। "अन्योऽसौ" इत्यनया श्रुत्या जीवपरभेदचिन्तनस्याज्ञानप्रयुक्तत्वप्रतिपादनात्तयोः स्वाभाविकमन्यत्वमेतच्छ्रुतिविरुद्धं चेत्यर्थः। **आनन्दमयमिति**। उपसंक्रमणस्य प्राप्तिरूपत्वमाश्रित्येदमुदाहरणम्; तथा च एवंवित्परयोरभेदे तयोः प्राप्तिं प्रति कर्तृकर्मभावो नोपपद्यत इत्यर्थः। किं च, तयोरभेदपक्षे किं जीवस्य परस्मिन्नन्तर्भावः किं वा परस्य जीवे? नाद्यः, तथा सति परव्यतिरेकेण जीवाभावादचेतनानां संसारित्वासम्भवाच्चानुभूयमानं संसारित्वं परमात्मन एव प्रसज्येतेत्याह—**परस्यैवेति**। द्वितीये दोषमाह—**पराभावो वेति**। जीवनियन्तृत्वेन श्रुतिसिद्धस्य परस्याभावः प्रसज्येतेत्यर्थः। पक्षद्वयेऽप्यपरिहार्यं दोषं श्रुत्वा मध्यस्थश्चिन्तामाक्षिपति—**यद्युभयथेति**। जीवस्य परस्मादन्यत्वेऽनन्यत्वे चेत्यर्थः। नन्वभेदपक्षे प्राप्तो दोषो वक्ष्यमाणरीत्या परिहर्तुं

---

१. **उपसंक्रमणविचारः**—एतमन्नमयं प्राणमयं मनोमयं विज्ञानमयमानन्दमयं चात्मानमुपसंक्रामतीति श्रुतिः। सर्वत्रात्मभावत्याग एव उपसंक्रमणं न प्राप्तिरिति सिद्धान्तः। मतान्तरे तु अन्नमयादिशरीरकं ब्रह्म प्राप्नोतीत्यर्थः इत्युक्तम्। तत्रान्नमयशरीरकं ब्रह्म इहैव प्राप्तमेवेति ईश्वरोपासनाप्राप्यत्वनिर्देशानुपपत्तिः। परमते आनन्दमयस्य ब्रह्मत्वात् तच्छरीरकब्रह्मान्तराभावात्। आनन्दमयमात्रे केवलानन्दमयं प्राप्नोतीत्यर्थकरणे प्रायपाठपरित्यागश्च।

तरस्मिन्पक्षे दोषप्राप्तिस्तृतीये वा पक्षेऽदुष्टे स एव शास्त्रार्थ इति व्यर्थैव चिन्ता, न, तन्निर्धारणेनार्थवत्वात्सत्यं प्राप्तो दोषो न शक्यः परिहर्तुमन्यतरस्मिंस्तृतीये वा पक्षेऽदुष्टेऽवधृते व्यर्था चिन्ता स्यान्न तु सोऽवधृत इति तदवधारणार्थत्वादर्थवत्येवैषा चिन्ता। सत्यमर्थवती चिन्ता। शास्त्रार्थावधारणार्थत्वात्। चिन्तयसि च त्वं, न तु निर्णेष्यसि, किं न निर्णेतव्यमिति वेदवचनं? न, कथं तर्हि? बहुप्रतिपक्षत्वादेकत्ववादी त्वं, वेदार्थपरत्वाद्बहवो हि नानात्ववादिनो वेदबाह्यास्त्वत्प्रतिपक्षा अतो ममाऽऽशङ्कां न निर्णेष्यसीत्येतदेव मे स्वस्त्ययनं यन्मामेकयोगिनमनेकयोगिबहुप्रतिपक्षमात्थ। अतो जेष्यामि सर्वानारभे च चिन्ताम्। ५

स एव तु स्यात्तद्भावस्य विवक्षितत्वात्। तद्विज्ञानेन परमात्मभावो ह्यत्र विवक्षितो "ब्रह्मविदाप्नोति

आनन्दगिरिटीका

स्वस्त्ययनं कल्याणं यन्मामेकत्ववादिनं त्वमात्थ ब्रूषेऽप्रतिपन्नवस्तुवादित्वादनेकत्ववादिनोऽप्येकस्य वस्तुनः समतत्वादनेकवस्तुवादिनश्च बहवः प्रतिपक्षः सन्ति ममेत्यर्थतोऽपि कल्याणमनेकत्वस्यान्योन्याश्रयादिदोषदुष्टत्वात्पूर्वपक्षनिराकरणेन सिद्धान्तोपपत्तेश्चेत्यर्थः। १०

विचारारम्भमुपपाद्य सिद्धान्तमुपक्रमते—स एव तु स्यादिति। औपाधिकभेदभिन्नोऽप्येवंवित्स्वतः पर एव स्यादित्यर्थः। अविद्याध्यारोपितान्नब्रह्मत्वव्यावृत्तिरेव ब्रह्मप्राप्तिर्विवक्षितेति फलवाक्यस्यैवमर्थता कथमवगम्यते न

वनमाला

शक्यत इति वदन्तं चिन्तारम्भवादिनं प्रति मध्यस्थ एवाह—अथान्यतरस्मिन्निति। परापरयोर्वास्तवौ भेदाभेदाविति पक्षान्तरं निर्दुष्टं मन्यमानस्य भास्करादेरभिप्रायमनूद्य तस्मिन्नपि पक्षे चिन्तावैयर्थ्यमाह—तृतीये वेति। अदुष्ट इतिच्छेदः। सिद्धान्ती चिन्तावैयर्थ्यं निराकरोति—न, तन्निर्धारणेनेति। तेषां पक्षाणामन्यतमस्यादुष्टत्वनिर्धारणेनेत्यर्थः। चिन्तां विना निर्धारणासम्भवादिति भावः। संग्रहवाक्यं तटस्थोक्तानुवादपूर्वकं विवृणोति—सत्यमित्यादिना। न शक्य इत्यत्र यदिशब्दोऽध्याहर्तव्यः। पुनरपि मध्यस्थश्चिन्तावैयर्थ्यमाह—सत्यमर्थवतीति। नं तु निर्णेष्यसीति। त्वया निर्णेतुमशक्यमित्यभिसन्धिः। अभिसन्धिमानेव तटस्थं निराकरोति—किमिति। निर्णयस्याशक्यत्वमसिद्धमित्यारम्भवादिनोऽपि गूढोऽभिसन्धिः। यथाश्रुतमुपालम्भं तटस्थः परिहरति—नेति। वेदवचनं न भवतीत्यर्थः। आरम्भवादी न तु निर्णेष्यसीत्यत्र हेतुं पृच्छति—कथं तर्हीति। यदि न वेदवचनं तर्हि कथं न निर्णेष्यसीति वदसीत्यर्थः। निर्णयस्याशक्यत्वे स्वाभिसंहिते हेतुमाह—बह्विति। अद्वैतस्यैव वेदार्थत्वात्तत्साधनपरस्त्वमेक एव, भेदवादिनः पुनरसंख्याताः, कथं तेषु जीवत्सु तव निर्णयसिद्धिरित्यर्थः। "शतमप्यन्धानां न पश्यति" इति न्यायमाश्रित्यारम्भवादी परिहरति—एतदेवेति। एकयोगिनमिति। एकत्ववादिनमित्यर्थः। अनेकयोगिनो नानात्ववादिनो बहवः प्रतिपक्षा यस्य स तथा, तमित्यर्थः। त्वदीयं यदेकत्ववादीत्यादिवचनमेतदेव मम स्वस्त्ययनं निर्णयसामर्थ्यसूचकमित्यर्थः। नानात्ववादिनां बहुत्वेऽपि न तेषां प्राबल्यशङ्का, नानात्वस्य मानशून्यतायास्तत्र तत्रोक्तत्वाद्वक्ष्यमाणत्वाच्चेति भावः। तेषां दौर्बल्याभिप्राये स्थिते फलितमाह—अत इति। एवमात्मैकत्वस्य वादिविप्रतिपत्त्या सन्दिग्धत्वात्तन्निर्णयस्य मुक्तिफलकत्वाच्च विषयप्रयोजनवतीमात्मतत्त्वगोचरां चिन्तामारभते—आरभे च चिन्तामिति। १५ २० २५ ३०

भेदपक्षं भेदाभेदपक्षं चावधारणतुशब्दाभ्यां क्रमेण निराकुर्वन्नेव सिद्धान्तमाह—स एव तु स्यादिति। न तावज्जीवब्रह्मणोर्भेदोऽस्ति मानाभावात्। न चाभेदे परस्यैव संसारित्वं पराभावो वा स्यादिति वाच्यम्, चिदात्मनः परमार्थत एकत्वेऽपि बुद्ध्युपहितश्चिदात्मा जीवः बुद्धिकारणीभूताविद्योपहितश्चिदात्मा परमेश्वर इत्येवं भेदकल्पनया संसारित्वासंसारित्वव्यवस्थोपपादनसम्भवात्; तथा च श्रुतिः—"कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति। एतेन नाहमीश्वर इति भेदप्रत्यक्षस्य सुखदुःखादिवैचित्र्यादेश्च जीवेश्वरभेदसाधकत्वं निरस्तम्, औपाधिकभेदेनैवोक्तप्रत्यक्षाद्युपपत्त्या वास्तवभेदसाधने तत्प्रत्यक्षादेः सामर्थ्याभावात्। अत एव तयोर्वास्तवौ भेदाभेदाविति पक्षोऽपि निरस्तः, एकत्र वस्तुतो भेदाभेदयोर्विरुद्धत्वाच्च। तस्माद्वस्तुतो जीवः पराभिन्नः, "अन्योऽसौ" इत्यत्र भेददृष्टेर्निन्दितत्वात् "एकमेवाद्वितीयम्" "तत्त्वमसि" इत्याद्यभेदश्रुतेश्चेति भावः। एवंवित्पर एव स्यादित्यत्र हेत्वन्तरमाह—तद्भावस्य त्विति। तुशब्दश्चार्थः सन्पञ्चम्यां सम्बध्यते। विवृणोति—तद्विज्ञानेनेति। ३५

परमि"ति। न ह्यन्यस्यान्यभावापत्तिरुपपद्यते। ननु तस्यापि तद्भावापत्तिरनुपपन्नैव। न। अविद्याकृततादात्म्यापोहार्थत्वात्। या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यते साऽविद्याकृतस्यान्नमयादिविशेषात्मन आत्मत्वेनाध्यारोपितस्यानात्मनोऽपोहार्था। कथमेवमर्थताऽवगम्यते? विद्यामात्रोपदेशात्। विद्यायाश्च दृष्टं कार्यमविद्यानिवृत्तिस्तच्चेह विद्यामात्रमात्मप्राप्तौ साधनमुपदिश्यते। मार्गविज्ञानोपदेशवदिति चेत्, तदात्मत्वे विद्यामात्रसाधनोपदेशोऽहेतुः।
५ कस्मात्? देशान्तरप्राप्तौ मार्गविज्ञानोपदेशदर्शनात्। न हि ग्राम एव गन्तेति चेत्। न, वैधर्म्यात्। [1]तत्र हि ग्राम-

आनन्दगिरिटीका

पुनरप्राप्तप्राप्तिरित्याह—**कथमिति**। परिहरति—**विद्यामात्रेति**। अन्यथाऽप्युपपत्तिं शङ्कते—**मार्गेति**। गन्तुः स्वतो ग्रामत्वाभावेऽपि यथा मार्गज्ञानोपदेशः सार्थकस्तथा जीवस्य स्वतो ब्रह्मत्वाभावेऽपि विद्योपदेशः, अभ्यासद्वारेण ब्रह्मप्राप्तिहेतुत्वादित्यर्थः। त्वं ग्रामोऽसीति न तत्रोपदेशः। अत्राभेदोपदेशः प्रतीयतेऽत उपदेशवैषम्यान्न दृष्टान्तो युक्त
१० इत्याह—**न वैधर्म्यादिति**।

वनमाला

परब्रह्मविज्ञानेनेत्यर्थः। ननु परस्यैवंविद्भिन्नत्वेऽपि "ब्रह्मविदाप्नोति परम्" इत्यत्र विवक्षिता परभावापत्तिरेवंविदः किं न स्यादिति; नेत्याह—**न हीति**। अन्यस्य स्वरूपे स्थिते नष्टे वा अन्यात्मकत्वं न ह्युपपद्यत इत्यर्थः। अभेदपक्षेऽप्यनुपपत्तितौल्यमाशङ्कते—**नन्विति**। यद्यपि ब्रह्मस्वरूपस्य सतो ब्रह्मविदस्तद्भावापत्तिर्मुख्या न सम्भवति,
१५ तथाप्यौपचारिकी सा सम्भवतीत्याह—**न, अविद्याकृतेति**। अविद्याकृतो योऽयमतदात्मभावस्तदपोह एवार्थः पुरुषार्थः तत्स्वरूपत्वात्तद्भावापत्तेः न तद्भावानुपपत्तिरित्यर्थः। हेतुं विवृणोति—**या हीत्यादिना**। उपदिश्यते "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुत्येति शेषः। **अध्यारोपितस्येति**। एतेन संग्रहवाक्यगतातदात्मभावशब्देन प्रत्यगात्मन्यभेदेनाध्यस्तोऽन्नमयादिरनात्मा विवक्षित इति सूचितम्। अन्नमयादेरविद्याकृतत्वविशेषणेन विद्यया अविद्यापोहद्वारा तत्कृतान्नमयादेरपोह इति सूचितम्, प्रत्यगात्मन्यध्यस्तस्य कार्यवर्गस्य साक्षाद्विद्यापोह्यत्वाभावात्;
२० तदुक्तं पञ्चपादिकायाम्—"यतो ज्ञानमज्ञानस्यैव निवर्तकम्" इति। देवदत्तस्य ग्रामादिप्राप्तिवदत्र मुख्यां प्राप्तिं विहायामुख्यप्राप्त्यर्थकता फलवाक्यस्य केन हेतुनावगम्यत इति पृच्छति—**कथमिति**। परप्राप्तिसाधनत्वेन "ब्रह्मवित्" इति विद्यामात्रोपदेशात्सकार्याविद्यानिवृत्तिरेव परप्राप्तिरिति गम्यत इत्याह—**विद्यामात्रेति**। नन्वप्राप्तप्राप्तिरपि विद्यामात्रफलं किं न स्यादिति; नेत्याह—**विद्यायाश्चेति**। चशब्दः शङ्कानिरासार्थः अवधारणार्थो वा। लोके शुक्तितत्त्वादिगोचरविद्यायाः सकार्याविद्यानिवृत्तिरेव कार्यत्वेन दृष्टा, नाप्राप्तप्राप्तिरपीत्यर्थः। ननु सर्वमस्येदं दृष्टं
२५ भवति "य एवं वेद" इत्यादाविव "ब्रह्मवित्" इत्यत्रापि विदेर्विद्यावृत्तिरूपोपास्तिवाचित्वाद्विद्यामात्रोपदेशोऽसिद्ध इति; नेत्याह—**तच्चेहेति**। विदेरुक्तोपास्तिपरत्वे लक्षणाप्रसङ्गाद्विद्यामात्रमेव तदर्थ इति नासिद्धिशङ्का, उदाहृतश्रुतौ च 'यां देवतामुपास्ते" इत्युपक्रमानुसारादिलिङ्गबलाल्लक्षणा न दुष्यतीति विशेष इति भावः। ननु "ब्रह्मविदाप्नोति परम्" इत्युपदेशस्य "मार्गविदाप्नोति ग्रामम्" इत्युपदेशतुल्यत्वाद्यथा तत्र मार्गविदः क्रियाद्वारा ग्रामप्राप्तिः अवाप्यो ग्रामश्च मार्गविदो गन्तुः सकाशादन्यः, तथात्रापि ब्रह्मविद्यावतो विद्यावृत्तिलक्षणोपास्तिद्वारा
३० परप्राप्तिः प्राप्तव्यं परं च ब्रह्मविदः सकाशादन्यत्स्यात्; तथा चाविद्यानिवृत्तिरूपापरप्राप्तिरनुपपन्ना, उपास्तेरविद्यानिवर्तकत्वाभावादिति शङ्कते—**मार्गेति**। शङ्कामेव विवृणोति—**तदात्मत्व इति**। अविद्यानिवृत्तिमात्ररूपे परात्मभाव इत्यर्थः। "ब्रह्मविदाप्नोति" इत्यत्र ब्रह्मविद्या "अहं ब्रह्म" इत्याकारा विवक्षिता, गुहानिहितत्ववचनेन प्रवेशवाक्येन च तथा निर्णीतत्वात्; अत एव प्राप्यं परं ब्रह्मापि ब्रह्मविदो न भिन्नम्; तथा चोपदेशवैषम्यान्नायं दृष्टान्तो युक्त इत्याह—**नेति**। **तत्र हीति**। यः प्राप्तव्यो ग्रामः तद्विषयं ज्ञानं न ह्युपदिश्यते
३५ "त्वं ग्रामोऽसि" इत्यनुक्तेरित्यर्थः। **न तथेहीति**। प्राप्तव्यं यत्परं ब्रह्म तद्विषयमेव ज्ञानम् "ब्रह्मवित्" इत्युपदिश्यते, न तद्व्यतिरेकेण तदावृत्तिलक्षणस्य साधनान्तरस्य तद्विज्ञानस्य वात्रोपदेशोऽस्ति, "वेद" इत्यस्य साधनान्तरादिपरत्वे

१. ब्रह्मप्राप्तिः ब्रह्मविद्यानिवृत्तिरूपा ब्रह्मविद्यासाध्यत्वात् इत्युक्ते या यद्विद्यासाध्या सा तदविद्यानिवृत्तिः प्राप्तौ मार्गोपदेशप्राप्ये ग्रामे व्यभिचारः तन्निवृत्तये ब्रह्माभेदोपदेशप्राप्यत्वात् इति हेतुः कार्यः, मार्गोपदेशे तु नाभेदोपदेश प्राप्यतेति न व्यभिचारः।

विषयं विज्ञानं नोपदिश्यते, तत्प्राप्तिमार्गविषयमेवोपदिश्यते विज्ञानं; न तथेह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तरविषयं विज्ञानमुपदिश्यते। उक्तकर्मादिसाधनापेक्षं ब्रह्मविज्ञानं परप्राप्तौ साधनमुपदिश्यत इति चेत्। न, नित्यत्वात् मोक्षस्येत्यादिना प्रत्युक्तत्वात्। श्रुतिश्च "तत्सृष्ट्वा तदेवानुप्राविशदि"ति कार्यस्थस्य तदात्मत्वं दर्शयति। अभयप्रतिष्ठोपपत्तेश्च। यदि हि विद्यावान्स्वात्मनोऽन्यन्न पश्यति ततोऽभयं प्रतिष्ठां विन्दत इति स्याद्भयहेतोः परस्यान्यस्याभावात्। ५

अन्यस्य चाविद्याकृतत्वे विद्ययाऽवस्तुत्वदर्शनोपपत्तिस्तद्धि द्वितीयस्य चन्द्रस्य असत्त्वं यदतैमिरिकेण चक्षुष्मता न गृह्यते। नैवं न गृह्यत इति चेन्न सुप्तसमाहितयोरग्रहणात्। सुषुप्तेऽग्रहणमन्यासक्तवदिति चेत्। न,

आनन्दगिरिटीका

यदि विदुषः सकाशादन्य ईश्वरो भयहेतुर्नास्ति का तर्हि गतिर्व्यतिरिक्तेश्वरदर्शनस्येत्याशङ्क्याऽऽह—अन्यस्य चेति। कल्पितभेदविशिष्टरूपेणेश्वरस्याविद्याकृतत्वे मिथ्यात्वे सति विद्यया तत्रावस्तुत्वदर्शनमुपपद्यते। १० ईश्वरो मम प्रशास्तेति मिथ्यैतद्, यतस्तस्य मम चैकात्म्यमेव परमार्थमिति विद्वद्दृष्ट्या विशिष्टस्यासत्त्वमित्यर्थः। दृष्टान्तेन वैषम्यं शङ्कते—नैवमिति। यथा चन्द्रैकत्वदर्शनाद्द्वितीयश्चन्द्रो न गृह्यते नैवं ब्रह्मविदा न गृह्यते व्यतिरिक्तेश्वरः। प्रतिनियतप्रपञ्चावभासस्य भोजनादिप्रवृत्त्यनुपपत्त्या जीवन्मुक्तस्याप्यभ्युपगमात्प्रपञ्चप्रतिनियमस्य चेश्वराधीनत्वाभ्युपगमादित्यर्थः। यद्यपि जागरे व्यतिरेकाभासदर्शनं विदुषस्तथाऽपि न तद्भयकारणं न हि मायावी स्वविरचितव्याघ्राभासाद्बिभेति। अविदुषोऽपि व्यतिरेकदर्शनं न सदातनमित्याह—न सुप्तेति। सुषुप्ते व्यतिरेकाग्रहणमसत्त्वसाधकं न भवतीत्याह—सुषुप्त इति। यथेषुकार इष्वासक्तमनस्तया तदव्यतिरिक्तं विद्यमानमपि न पश्यति सुषुप्तेऽपि निद्रासुखासक्ततया सदपि द्वितीयं न पश्यति न त्वभावादित्यर्थः। अनासक्तस्य तद्व्यतिरिक्तादर्शनेऽपि तद्दर्शनमेवास्ति सुषुप्ते तु न किञ्चिदज्ञासिषमिति प्रत्ययात्सुखस्याप्यात्मतादात्म्यादज्ञानस्य च व्यक्तिरिक्तत्व- १५

वनमाला

लक्षणाप्रसङ्गादिति भावः। ननु "ब्रह्मविदाप्नोति परम्" इत्यत्र विद्यामात्रश्रवणेऽपि न तन्मात्रं परप्राप्तिसाधनत्वेनोपदिश्यते, किं तु संहितोपनिषदुक्तैः कर्मज्ञानैः समुच्चितमेव ब्रह्मविज्ञानम्, अतो विद्यमात्रपदेशोऽसिद्ध इति पुनः शङ्कते—उक्तकर्मादीति। अविद्यानिवृत्तिमात्रे मोक्षे ब्रह्मविज्ञानव्यतिरिक्तसाधनापेक्षाभावात्समुच्चयवादिना ब्रह्मभावलक्षणोऽन्यो वा मोक्षो ज्ञानकर्मसमुच्चयजन्यो वाच्यः, तत्र चानित्यत्वप्रसङ्गदोषः प्रागेवोक्त इत्याह—न नित्यत्वादिति। "ब्रह्मविदाप्नोति" इत्यत्र समुच्चयोपदेशो न विवक्षित इति प्रतिज्ञार्थः। प्रयुक्तत्वादिति। समुच्चयपक्षस्येति शेषः। एवम् "तद्भावस्य तु विवक्षितत्वात्" इत्यादिना एवंवित्पर एव स्यादित्यत्र परप्राप्तिवचनं प्रमाणमित्युपपादितम्। तत्रैव हेत्वन्तरमाह—श्रुतिश्चेति। कार्यस्थस्येति। देहादिसङ्घातलक्षणे कार्ये साक्षित्वेन स्थितस्य प्रत्यगात्मनो ब्रह्मस्वरूपत्वं दर्शयतीत्यर्थः। एवंवित्पर एवेत्यत्र हेत्वन्तरमाह—अभयेति। अभयप्रतिष्ठावचनोपपत्तिमेव प्रपञ्चयति—यदि हीति। यदा एवंवित्स्वस्माद्भिन्नमीश्वरं न पश्यति ततस्तदा सकलजगद्भयहेतोः परमेश्वरस्य स्वस्मादन्यस्याभावाद्विदुषोऽभयं प्रतिष्ठां विन्दत इति फलवचनमुपपन्नं स्यादिति योजना। विदुषः सकाशात्परमेश्वरस्यान्यत्वे तस्मादस्य भयावश्यम्भावादभयप्रतिष्ठावचनोपपत्तये तयोरनन्यत्वं निश्चीयत इति निष्कर्षः। नन्वीश्वरस्यानन्यत्वेऽपि राजादेरन्यस्य सत्त्वात्कथमभयसिद्धिरित्याशङ्क्य जीवपरान्यत्ववद्राजादिजगदप्यसदेवेत्याह—अन्यस्य चेति। राजादिप्रपञ्चस्याप्यन्यत्वेन प्रतीयमानस्योक्तवक्ष्यमाणश्रुतिन्यायैरविद्याकृतत्वे सिद्धे सति विदुषो विद्यया सर्वं जगदवस्त्वेवेति दर्शनमुपपद्यते, तथा च न जगतोऽपि विदुषो भयप्रसक्तिरित्यर्थः। एतदुक्तं भवति—श्रुत्यादिप्रमाणजनितया तत्त्वदृष्ट्या द्वैतस्याग्रहणादसत्त्वमिति। अस्मिन्नर्थे दृष्टान्तमाह—तद्धीति। दृष्टान्तवैषम्यमाशङ्कते—नैवमिति। यथा तिमिराख्यदोषरहितचक्षुष्मता द्वितीयश्चन्द्रो न गृह्यते एवं द्वैतं विदुषा न गृह्यत इति न, किं तु गृह्यत एव, अन्यथा विदुषः शास्त्रार्थोपदेशादौ प्रवृत्त्यभावप्रसङ्गादित्यर्थः। व्यवहारकाले विदुषा तदग्रहणेऽपि समाध्यवस्थायामग्रहणादविद्वत्साधारण्येन सुषुप्तावग्रहणाच्च न वैषम्यमित्याशयेन परिहरति—न सुषुप्तेति। सुषुप्त्यादौ द्वैताग्रहणं द्वैतासत्त्वप्रयुक्तं न भवतीति शङ्कते—सुषुप्त इति। यथा इषुकार इष्वासक्तमनस्तया इषुव्यतिरिक्तं विद्यमानमपि न पश्यति, एवं विद्यमानमेव द्वैतं सुषुप्तौ समाधौ च न पश्यतीत्यर्थः। २० २५ ३० ३५

सर्वाग्रहणात्। जाग्रत्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवेति चेत्। न, अविद्याकृतत्वाज्जाग्रत्स्वप्नयोः, यदन्यग्रहणं जाग्रत्स्वप्नयोस्तदविद्याकृतमविद्याभावेऽभावात्।

सुषुप्तेऽग्रहणमप्यविद्याकृतमिति चेत्। न, स्वाभाविकत्वात्। द्रव्यस्य हि तत्त्वमविक्रिया परानपेक्षत्वाद् विक्रिया न तत्त्वं परापेक्षत्वात्। न हि कारकापेक्षं वस्तुनस्तत्त्वं सतो विशेषः कारकापेक्षो विशेषश्च विक्रिया।

५　　आनन्दगिरिटीका

निर्वचनादतस्तात्त्विकद्वितीयाभावादेवाग्रहणमित्याह—न सर्वाग्रहणादिति। सुषुप्ते चेदनुपलम्भादसत्त्वं तर्हि जाग्रत्स्वप्नयोरुपलम्भाद्द्वैतस्य सत्त्वं किं न स्यादित्याह—जाग्रदिति। अनात्मादावात्मत्वादिबुद्धिरविद्या तद्भाव एव द्वैतोपलम्भान्नोपलम्भमात्रं सत्त्वसाधकमन्यथा शुक्तिरूप्यादेरपि सत्त्वप्रसङ्गादित्याह—नाविद्येति।

पूर्ववाद्याह—सुषुप्त इति। सुषुप्ते द्वितीयस्याग्रहणमपि लयरूपाविद्याकृतं न तु भेदाभावनिबन्धनमतो १० यदुक्तं सुषुप्ते सर्वात्मकब्रह्मभूतो जीवः स्वव्यतिरिक्तमभावादेव न पश्यतीति तदसदित्यर्थः। सतोऽपि द्वितीयस्याविद्यावशादग्रहणमिति कोऽर्थः। किं ग्रहणप्रागभावो जायत उताप्रकाशारोपः किंवाऽग्रहणाकाराविकृतस्वरूपावस्थानम्? नाऽऽद्यः। प्रागभावस्यानादित्वाभ्युपगमात्। न द्वितीयः। परैर्द्वितीयस्यास्वप्रकाशतास्वाभाव्याभ्युपगमेनाप्रकाशारोपानभ्युपगमादप्रकाशारोपे च सर्वस्य स्वप्रकाशब्रह्मात्मताया अभ्युपगन्तव्यत्वेनास्मत्समीहितसिद्धिप्रसङ्गात्। न तृतीय इत्याह—न स्वाभाविकत्वादिति। अविकृतस्वरूपावस्थानं नाविद्याकार्यमनागन्तुकत्वादित्यर्थः। १५ एतत्स्फुटयति—द्रव्यस्य हीत्यादिना। सन्मात्रं द्रव्यमुच्यते स्वातन्त्र्यसिद्ध्यभिप्रायेण, न वैशेषिकाभिप्रायेण क्रियावद्गुणवत्समवायिकारण द्रव्यं मानाभावादिति द्रष्टव्यम्। अविक्रियेति। विक्रियाभावोपलक्ष्यं स्वरूपमनपेक्ष्य

वनमाला

दृष्टान्तवैषम्येन निराकरोति—न, सर्वाग्रहणादिति। इषुकारस्य हि सर्वाग्रहणं नास्ति इषुग्रहणस्यैव सत्त्वात्, सुषुप्त्यादौ तु न कस्यापि विशेषस्य ग्रहणमस्ति, अतो द्वितीयचन्द्रस्यैव द्वैतस्य कदाचिदग्रहणादसत्त्वमेव वक्तव्य- २० मित्यर्थः। ननु द्वैतस्य सुषुप्त्यादौ चेदनुपलम्भादसत्त्वं तर्हि जाग्रदादावुपलम्भात्सत्त्वमेव किं न स्यादिति शङ्कते—जाग्रदिति। उपलभ्यमानत्वमात्रं न सत्त्वप्रयोजकम्, तथा सति शुक्तिरूप्यद्वितीयचन्द्रादेरपि सत्त्वप्रसङ्गात्, किं तु बाधायोग्यत्वादिकमन्यदेव सत्त्वप्रयोजकम्, तच्च द्वैतस्य नास्ति "नेह नानास्ति किञ्चन" इत्यादौ सहस्रशो बाधदर्शनादित्यभिप्रेत्य द्वैतस्य शुक्तिरूप्यादेरिवान्वयव्यतिरेकाभ्यामविद्याकार्यत्वं दर्शयति—न, अविद्याकृतत्वादिति। संग्रहं विवृणोति—यदन्यग्रहणमिति। यदन्यत्वेन गृह्यमाणं जगदित्यर्थः। अन्वयमाह—अविद्याभाव इति। २५ मुक्तावविद्याया अभावे जगतोऽभावादिति व्यतिरेको बहिरेव द्रष्टव्यः। न चात्र मानाभावः शङ्कनीयः, "सत्किञ्चिदवशिष्यते" इत्यादेर्मुक्तिप्रतिपादकशास्त्रस्य मानत्वात्। नन्वविद्यायां सत्यां गृह्यमाणं द्वैतं यद्यसत्तर्हि सुषुप्ते स्वयमेव प्रकाशमानमद्वैतमपि परमार्थं न स्यात्, तदाप्यविद्यायाः सत्त्वादिति मत्वा शङ्कते—सुषुप्तेऽग्रहणमपीति। न विद्यते ग्रहणं स्वेनान्येन वा यस्य तदग्रहणम्, स्वयंज्योतिःस्वभावमद्वैतमिति यावत्। अविद्याकालीनस्याप्यद्वैतस्य न कल्पितत्वम् अन्यानपेक्षस्वभावत्वादिति परिहरति—नेति। संगृहीतमर्थं दृष्टान्तपूर्वकं विवृणोति—द्रव्यस्य ३० हीत्यादिना। लोके प्रसिद्धस्य मृदादिद्रव्यस्य अविक्रिया यत्कुलालादिकारकैरविकृतं मृत्स्वरूपमस्ति तत्तस्य तत्त्वम् अनृतविलक्षणं स्वरूपम् उक्तकारकानपेक्षत्वात्, तस्यैव मृदादिद्रव्यस्य या विक्रिया घटादिविकारावस्था सा तस्य अतत्त्वम् अनृतं रूपमित्यर्थः। ननु मृद्वस्तुनः कारकापेक्षमपि विकाररूपं वास्तवं किं न स्यादिति चेत्; नेत्याह—न हीति। कारकापेक्षं विकारजातं वस्तुनो मृदादेस्तत्त्वं वास्तवं रूपं न भवति कादाचित्कत्वाच्छुक्तिरूप्यादिवदित्यर्थः। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतिप्रसिद्धिसंग्रहार्थो हिशब्दः। एवं ३५ जगत्कारणस्य ब्रह्मणः परानपेक्षस्वभावत्वान्मृदादिद्रव्यस्येव सत्यत्वमभिप्रेत्य मृदादिविकारस्येव ब्रह्मविकारस्य जगतोऽनृतत्वमाह—सत इति। ननु सतः सत्सामान्यरूपस्य ब्रह्मणो विशेषो नाम कः यस्य कारकापेक्षत्वेन मिथ्यात्वमुच्यते? तत्राह—विशेषश्च विक्रियेति। विक्रिया विकारात्मकं जगदित्यर्थः। अयमेव मिथ्याभूतो विशेषः प्रत्यक्षादिना गृह्यते, न केवलं परमार्थसत्यमद्वैतमित्याशयेनाह—जाग्रदिति। ग्रहणपदं गृह्यमाणार्थकम्। एवं

जाग्रत्स्वप्नयोश्च ग्रहणं विशेषः। यद्धि यस्य नान्यापेक्षं स्वरूपं तत्तस्य तत्त्वं यदन्यापेक्षं न तत्तत्त्वम्। अन्याभावे अभावात्। तस्मात्स्वाभाविकत्वाज्जाग्रत्स्वप्नवन्न सुषुप्ते विशेषः।

येषां पुनरीश्वरोऽन्य आत्मनः कार्यं चान्यत्तेषां भयानिवृत्तिर्भयस्यान्यनिमित्तत्वात्सतश्चान्यस्याऽऽत्महानानुपपत्तिः। न चासत आत्मलाभः। सापेक्षस्यान्यस्य भयहेतुत्वमिति चेन्न तस्यापि तुल्यत्वात्। यदधर्माद्यनुसहायीभूतं नित्यमनित्यं वा निमित्तमपेक्ष्यान्यद्भयकारणं स्यात्तस्यापि तथाभूतस्याऽऽत्महानाभावाद्भयानिवृत्तिरात्महाने वा ५ सदसतोरितरेतरापत्तौ सर्वत्रानाश्वास एव।

आनन्दगिरिटीका

सिद्धत्वादित्यर्थः। ग्रहणादिविक्रिया न स्वाभाविकी परापेक्षत्वात्स्फटिकलौहित्यवदित्यर्थः। यदुक्तमनपेक्ष्य सिद्धत्वादविक्रियत्वमिति तत्स्फुटयति--यद्धीति।

एवं स्वमते चित्सत्ताव्यतिरिक्तेश्वरस्य भयहेतोरभावादभयं विदुषः सम्भवतीत्युपपाद्य द्वैतीयपक्षे तदसम्भव- १० माह--येषामिति। सतोऽन्यस्य स्वरूपे स्थिते नष्टे वा मा भूद्ध्वंसो व्याघातादनवस्थानाच्च तद्ध्वंसत एव भयस्योत्पादेऽभयप्राप्तिर्भविष्यतीत्याशङ्क्याऽऽह--न चासत इति। व्यतिरिक्तेश्वरस्य सत्तामात्रेण न भयहेतुत्वं किन्तु प्राणिकृतधर्माधर्माद्यपेक्षस्य, मुक्तस्य तु तदभावादभयं भविष्यतीत्याशङ्क्य नैतत्सांख्येन वाच्यम्। अधर्मादेरपि सतस्तेनात्यन्तासत्त्वानङ्गीकारान्नैयायिकादिमतेऽपि सति हेतौ कार्यात्यन्ताभावस्य दुरवधारणत्वात्तेनापि न वाच्यमित्याह--न तस्यापीति। किञ्च सच्चेदसत्त्वमापद्यतेऽधर्मादिकं तर्ह्यात्मन्यपि कः प्रश्वासस्तस्मात्स्वभाव- १५ वैपरीत्यं सतोऽसत्त्वगमनं कस्यापि मते न घटत इत्याह--सदसतोरिति।

वनमाला

द्रव्यस्य हीत्यादिना प्रपञ्चितमर्थं संक्षिप्याह--यद्धि यस्येति। अन्याभाव इति। यद्यपि मृदादेः कारकापेक्षं घटादिरूपं कारकाभावेऽपि तिष्ठति तथापि शुक्त्यादेरज्ञानादिसापेक्षं रजतादिरूपं तदभावे न तिष्ठति, तथा सद्रूपस्य ब्रह्मणोऽपि मूलाविद्यादिसापेक्षं जगद्रूपं तदभावे न तिष्ठतीति प्रायिकाभिप्रायेण तदुक्तिः। विवक्षितार्थस्तु--यद्धि यस्य कादाचित्कं २० रूपं न तत्तस्य तत्त्वं यथा शुक्त्यादे रूप्यादि, यथा वा मृदादेर्घटादि; यद्धि यस्याव्यभिचारिरूपं तत्तस्य वास्तवं रूपम्, परं तु मृदादिस्वरूपमापेक्षिकसत्यम्, ब्रह्म तु पारमार्थिकसत्यं कदापि व्यभिचाराभावादिति। इममेव विभागमभिप्रेत्य परमार्थसत्यस्य ब्रह्मणो लौकिकसत्यं मृदादिश्रुतौ दृष्टान्तत्वेनोपादीयते। एतेनानाद्यज्ञानादेरपि मिथ्यात्वं व्याख्यातम्, अज्ञानादेरपि चैतन्ये कादाचित्कत्वात्। न च हेत्वसिद्धिः, अज्ञानतत्सम्बन्धजीवत्वादीनां विद्यया निवृत्तिश्रवणादित्यन्यत्र विस्तरः। उपसंहरति--तस्मादिति। यथा जाग्रत्स्वप्नयोरनुभूयमानो विशेषः २५ कादाचित्कत्वादविद्याकृतः तथा सुषुप्ते सुषुप्त्यादिसाधकत्वेन प्रकाशमानं सदद्वयं वस्तु नाविद्याकृतं अन्यानपेक्ष- स्वभावत्वादित्यर्थः। एवं स्वमते भयहेतोरन्यस्य परस्याभावादभयं प्रतिष्ठां विन्दत इत्युपपाद्य एवंवित्परस्मादन्य इति पक्षे तदसम्भवमिदानीमाह--येषामित्यादिना। येषां मते परमार्थत एव जीवादन्यः परो जगच्चान्यत्, तेषां मते विदुषो भयनिवृत्तिर्न स्याद्भयहेतोरन्यस्येश्वरस्य सत्त्वादित्यर्थः। ननु परमार्थतोऽन्यस्यापि सत ईश्वरस्य विद्यया नाशसम्भवात्स्यादेव भयनिवृत्तिरिति; नेत्याह--सतश्चेति। चशब्दः शङ्कानिरासार्थः। आत्महानं स्वरूप- ३० नाशः। तत्र दृष्टान्तमाह--न चासत आत्मलाभ इति। यथा शशशृङ्गादेरसत आत्मलाभशब्दितोत्पत्तिर्न सम्भवति तथैवेश्वरस्य परमार्थसतो नाशो नोपपद्यत इत्यर्थः। न च परमार्थस्यापि पटादेर्नाशो दृष्ट इति वाच्यम्, पटादौ परमार्थत्वासम्प्रतिपत्तेः भिन्नेश्वरवादिभिरीश्वरनाशेन विदुषो भयनिवृत्त्यनभ्युपगमाच्चेति भावः। नन्वीश्वरस्य प्राणिकर्मसापेक्षस्यैवास्माभिर्भयहेतुत्वमुपेयते न सत्तामात्रेण, विदुषस्तु कर्माभावादभयं भविष्यतीति शङ्कते-- सापेक्षस्येति। निराकरोति--न तस्यापीति। ईश्वरं प्रति सहायभूतस्य धर्मादेरपि त्वया परमार्थसत्यत्वाभ्युपगमात् ३५ ईश्वरस्येवात्महानं न सम्भवति; तथा चास्मिन्नपि पक्षे विदुषो भयानिवृत्तिदोषस्य तुल्यत्वान्नायं परिहारो युक्त इत्यर्थः। संग्रहं विवृणोति--यद्धर्मादीति। नित्यमनित्यं वा यदन्यद्धर्मादिलक्षणं निमित्तमपेक्ष्यान्यद्ब्रह्म भयकारणं स्यात्तस्यापि तथाभूतस्येश्वरवत्परमार्थभूतस्य धर्मादेरात्मनाशाभावादित्यर्थः। निमित्तपदव्याख्यानम्--सहायभूत- मिति। नित्यमिति सांख्यमताभिप्रायम्, तन्मते धर्मादेः प्रकृतिपरिणामस्य प्रकृत्यात्मना नित्यत्वाभ्युपगमात्। परमार्थसतोऽपि धर्मादेरात्महानोपगमे बाधकमाह--आत्महाने वेति। यथा शशशृङ्गादेरसतः सत्त्वापत्तावसत्स्वभाव- ४०

**एकत्वपक्षे पुनः सनिमित्तस्य संसारस्याविद्याकल्पितत्वाददोषः। तैमिरिकदृष्टस्य हि द्वितीयचन्द्रस्य नाऽऽत्मलाभो नाशो वाऽस्ति। विद्याविद्ययोस्तद्धर्मत्वमिति चेन्न, प्रत्यक्षत्वात्। विवेकाविवेकौ रूपादिवत्प्रत्यक्षावुपलभ्येते अन्तःकरणस्थौ। न हि रूपस्य प्रत्यक्षस्य सतो द्रष्टृधर्मत्वम्। अविद्या च स्वानुभवेन रूप्यते मूढोऽहमविविक्तं मम विज्ञानमिति। तथा विद्याविवेकोऽनुभूयते। उपदिशन्ति चान्येभ्य आत्मनो विद्यां बुधः। तथा चान्येऽवधारयन्ति। ५ तस्मान्नामरूपपक्षस्यैव विद्याविद्ये नामरूपे च नाऽऽत्मधर्मौ। "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति**

आनन्दगिरिटीका

स्वमतं निगमयति—**एकत्वपक्ष इति**। अविद्याकल्पितं भयं विद्यया निवर्तत इति वदता विद्याविद्ययोरात्मधर्मत्वमिष्टं ततो धर्मोत्पादविनाशयोर्विकारित्वमनित्यत्वं च प्रसज्येतेति शङ्कते—**विद्याविद्ययोरिति**। कल्पितयोर्विद्याविद्ययोरात्मनि भयाभयहेतुत्वसम्भवान्नाऽऽत्मधर्मत्वे प्रमाणमस्ति प्रत्युत वेद्यत्वाद्रूपादिवदात्मधर्मत्वं नास्तीत्यनु- १० मातुं शक्यत इत्याह—**न, प्रत्यक्षत्वादिति**। चिन्मात्रतन्त्राऽनादिरनिर्वाच्याऽविद्याऽन्तःकरणरूपेण परिणमते तच्चान्तःकरणं तामससात्त्विकावस्थाभेदेन भ्रान्तिसम्यग्ज्ञानाकारेण परिणमते तस्मिन्प्रतिबिम्बितश्चिद्धातुः स्वोपाधिधर्मेणैव

वनमाला

वैपरीत्यं तथा सतः परमार्थस्यापि नाशेनासत्त्वापत्तौ सत्स्वभाववैपरीत्यमापद्येत, एवं सदसतोरितरेतरतापत्तावुपगम्यमानायामात्माकाशादावपि त्वत्पक्षे आश्वासो न स्यात्, आत्माकाशादेरप्यसत्त्वप्रसङ्गात् इत्यर्थः, तस्मादीश्वरस्य १५ तत्सहायभूतधर्मादेश्च नाशासम्भवादभयवचनं भिन्नेश्वरवादे न सम्भवतीति स्थितम्। स्वमते तु नोक्तदोष इत्याह—**एकत्वपक्ष इति**। निमित्तमविद्या, तया सहैव जीवेश्वरविभागादिलक्षणस्य संसारस्य भ्रान्तिसिद्धत्वाद्विद्यया तन्निवृत्तौ सत्यामभयं विदुषः सम्भवतीति स्वमते भयनिवृत्त्यनुपपत्तिदोषो नास्तीत्यर्थः। ननु जीवपरयोरेकत्वपक्षेऽपि पूर्वमसतः संसारस्याविद्यादिकारणवशात्सत्त्वापत्तिर्विद्यया चासत्त्वापत्तिरिति स्वभाववैपरीत्यप्रसङ्गदोषस्तुल्य इत्याशङ्क्याह—**तैमिरिकदृष्टस्य हीति**। दोषवता पुरुषेण दृष्टस्य द्वितीयचन्द्रादेरनिर्वचनीयत्वाद्वस्तुत उत्पत्तिर्विनाशो २० वा नास्ति, हि प्रसिद्धमित्यर्थः। अयं भावः—चन्द्रद्वित्वादिवदनिर्वचनीयस्य स्थूलसूक्ष्मात्मनानादिकालमारभ्यानुवर्तमानस्य संसारस्याविद्यादिकारणबलेन सर्गादावात्मलाभोपगमेऽपि नासतः सत्त्वापत्तिः असत उत्पत्त्यनुपगमादुत्पन्नस्यापि संसारस्यात्मवत्सत्त्वानुपगमाच्च; अत एव विद्याबलात्संसारस्यासत्त्वापत्तावपि न सताऽसत्त्वापत्तिरूपस्वभाववैपरीत्यं संसारस्य सत्त्वानभ्युपगमादेवेति। ननु संसारकारणभूताया अविद्याया आत्मधर्मत्वमेवाभ्युपगन्तव्यं धर्म्यन्तरानुपलम्भात्, तथा तन्निवर्तिकाया विद्याया अपि तत्सामानाधिकरण्यलाभायात्मधर्मत्वमेवोपेय- २५ विद्यादिधर्मवता पुरुषेण निर्धर्मकस्य परस्याभिन्नत्वमिति पक्षः कथं सम्भाव्यत इति मन्वानः शङ्कते—**विद्याविद्ययोरिति**। किं तयोरात्मधर्मत्वं काल्पनिकं विवक्षितं वास्तवं वा? आद्ये न परापरयोरेकत्वानुपपत्तिरिति मत्वा द्वितीयं निराकरोति—**न, प्रत्यक्षत्वादिति**। प्रत्यक्षत्वं साक्षिप्रत्यक्षविषयत्वम्, दृश्यत्वमिति यावत्। तथा च विद्याविद्ययोर्दृश्यत्वाद्दृग्रूपात्मधर्मत्वं तयोर्वस्तुतो न सम्भवतीत्यर्थः। तयोः स्वरूपकथनपूर्वकं हेतुं साधयति—**विवेकेति**। सर्वदृश्यविविक्तात्मतत्त्वगोचरा तत्त्वमस्यादिश्रुतिजनिता वृत्तिर्विवेकः तन्निवर्त्या मूलाविद्या अविवेकः। ३० ननु दृश्ययोरपि तयोर्द्रष्टृधर्मत्वं किं न स्यादित्याशङ्क्य अन्यत्रादर्शनादित्याह—**न हीति**। विद्याविद्ययोः प्रत्यक्षत उपलभ्यमानत्वं प्रपञ्चयति—**अविद्या चेत्यादिना**। चकारोऽवधारणार्थः। किमात्मतत्त्वं जानासीति गुरुणा पृष्टेन शिष्येण आत्मतत्त्वविषये मूढ एवाहं मम स्वरूपभूतं विज्ञानमविविक्तं विविच्य न ज्ञातमित्येवं स्वानुभवेन सिद्धा मूलाविद्या निरूप्यते, तथा विद्योपदेशे प्रवृत्तेन गुरुणा प्रथमं स्वकीया विद्यानुभूयते, पश्चादनुभवसिद्धां तां शिष्येभ्य उपदिशति, शिष्याश्च तां गृहीत्वा उपपत्तिभिरवधारयन्तीत्यर्थः। विद्याविद्ययोर्दृश्यत्वे नास्ति विवादावसर ३५ इत्याशयः। तयोरात्मधर्मत्वनिराकरणमुपसंहरति—**तस्मादिति**। आत्मधर्मत्वासम्भवान्मूढोऽहं विद्वानहमित्यनुभवानुसारेण नामरूपान्तर्भूतान्तःकरणस्यैव विद्याविद्ये धर्मत्वेनावशिष्येते। तदुक्तं प्रागेवान्तःकरणस्थाविति। ननु वृत्तिरूपाया विद्याया अन्तःकरणधर्मत्वेऽपि नाविद्यायास्तद्धर्मत्वम्, अविद्याकार्यस्यान्तःकरणस्याविद्याश्रयत्वायोगादिति चेत्; नायं दोषः, अविद्यायाश्चैतन्याश्रितत्वेऽपि प्रतीतितः कामादिपरिणाम्यन्तःकरणधर्मत्ववर्णनस्यात्र विवक्षितत्वात्, जीवचैतन्यस्याविद्यावत्त्वेऽपि वस्तुतस्तद्राहित्यान्न ब्रह्मैक्यानुपपत्तिरित्यावेदितमधस्तादिति संक्षेपः। ४० ननु विद्याविद्ययोर्नामरूपान्तर्गतान्तःकरणधर्मत्वेऽपि नामरूपयोरेवात्मधर्मत्वमस्तु; नेत्याह—**नामरूपे चेति**। नामरूपे

श्रुत्यन्तरात्। ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते न परमार्थतो विद्यमाने। अभेदे "एतमानन्दमयमात्मानमुपसंक्रामति" इति कर्मकर्तृत्वानुपपत्तिरिति चेन्न। विज्ञानमात्रत्वात्संक्रमणस्य। न जलूकादिवत्संक्रमणमिहोपदिश्यते किं तर्हि विज्ञानमात्रं संक्रमणश्रुतेरर्थः।

ननु मुख्यमेव संक्रमणं श्रूयत उपसंक्रामतीति चेत्। न। अन्नमयेऽदर्शनात्। न ह्यन्नमयमुपसंक्रामतो बाह्यादस्माल्लोकाज्जलूकावत्संक्रमणं दृश्यतेऽन्यथा वा। मनोमयस्य बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्यावृत्त्याऽऽत्मसंक्रमणमिति चेत्। न। स्वात्मनि क्रियाविरोधादन्योऽन्नमयमन्यमुपसंक्रामतीति प्रकृत्य मनोमयो विज्ञानमयो वा स्वात्मानमेवोपसंक्रामतीति विरोधः स्यात्। तथा नाऽऽनन्दमयस्याऽऽत्मसंक्रमणमुपपद्यते। तस्मान्न ५

आनन्दगिरिटीका

भ्रान्तः सम्यग्दर्शीति च व्यवह्रियते न तत्त्वतो विद्याविद्यावत्त्वमित्याह—ते च पुनरिति। उक्तन्यायेन ब्रह्मवित्तत्त्वतो ब्रह्माभिन्न इत्युक्तम्। तत्र परोक्तमुद्भाव्य निरस्यति—अभेदे "एतमित्यादिना। नाऽऽनन्दमयः परमात्मा न च तत्र प्रवेशः संक्रमणं किंत्वविषयब्रह्मात्मताज्ञानेनाऽऽनन्दमयस्याऽऽत्मतया भ्रान्तिगृहीतस्यातिक्रमणं बाधोऽत्र विवक्षित इत्यर्थः। १०

अन्यथा वेति। नोडे पक्षिप्रवेशवद्वेत्यर्थः। यद्यप्यन्नमये मुख्यं संक्रमणं न सम्भवति तथाऽपि मनोबुद्ध्योर्बहिर्विषये प्रवृत्तयोस्ततो व्यावृत्त्य स्वरूपेऽवस्थानं संक्रमणं दृष्टं तथा दुःखिन आनन्दमयस्य स्वरूपेऽवस्थानं संक्रमणं भविष्यतीत्याह—मनोमयस्येति। स्वरूपावस्थानस्यानागन्तुकत्वात्प्रक्रमविरोधाच्च न तन्मुख्यं संक्रमणमित्याह— १५

वनमाला

चिदात्मनः कल्पितधर्माविव न वास्तवधर्मौ, चिदात्मनि तयोः शतशो निषेधोपलम्भात् तयोरर्थान्तरत्वाच्चेति भावः। नामरूपे आत्मधर्मौ न भवत इत्यक्षरार्थः। तयोश्चिदात्मनः सकाशादर्थान्तरत्वे श्रुतिमाह—नामरूपयोरिति। ते नामरूपे यदन्तरा यस्माद्भिन्ने तन्नामरूपनिर्वहित्राकाशं ब्रह्मेत्यर्थः। नामरूपशब्दितस्य प्रपञ्चस्यात्मनि कल्पितधर्मत्वं सदृष्टान्तमाह—ते च पुनरिति। उदयास्तमयवर्जिते सवितरि यथा तौ कल्प्येते तथेत्यर्थः एवं बहुप्रपञ्चे- २० नैवंवित्पर एवेति साधितम्। तत्र पूर्वोक्तामनुपपत्तिमुद्भाव्य निराकरोति—अभेद इत्यादिना। नेति। न तावदानन्दमयः परमात्मा तस्य कार्यात्मतायाः प्रागेवोक्तत्वात्, नापि तत्प्राप्तिः संक्रमणं प्राप्तेः संक्रमणार्थताया निरसिष्यमाणत्वात्, किं तु ब्रह्मात्मैकत्वविज्ञानमात्रकृता भ्रमनिवृत्तिरत्र संक्रमणम्, अतो नोक्तानुपपत्तिरित्यर्थः। संग्रहं विवृणोति—न जलूकावदित्यादिना। संक्रमणस्य प्राप्तिरूपत्वनिराकरणार्थमाशङ्कामुद्भावयति—नन्विति। "आनन्दमयमात्मानमुपसंक्रामति" इत्युपसंक्रमणं श्रूयते; तच्चान्नमय इवानन्दमयेऽपि मुख्यमेव किं न स्यादिति शङ्कार्थः। २५ दृष्टान्तासिद्ध्या निराकरोति—नेति। संग्रहं विवृणोति—न मुख्यमेवेत्यादिना। आनन्दमयपर्याये संक्रमणं मुख्यं न भवत्येवेति प्रतिज्ञार्थः। न हीति। बाह्यात्पुत्रभार्यादिलक्षणादस्मादपरोक्षाल्लोकाद्भोगोपायभूतात्प्रेत्य अन्नमयमुपसंक्रामतस्तत्त्वविदो जलूकावदन्नमये संक्रमणं न हि दृश्यत इत्यर्थः। यथा एकतृणस्थाया जलूकायास्तृणान्तरप्राप्तिरूपं सक्रमणं दृश्यते, नैवमेवंविदः शरीरस्थस्यान्नमयसंक्रमणं दृश्यत इति यावत्। अतो नानन्दमयेऽपि संक्रमणं प्राप्तिरिति भावः। ब्रह्मविदः शरीरस्थत्वादेव प्रकारान्तरेण संक्रमणमपि निरस्तमित्याशयेनाह—अन्यथा वेति। ३० नीडे पक्षिप्रवेशवद्वान्नमये संक्रमणं न दृश्यत इत्यर्थः। नन्वेवंवित्परयोरभेदेऽपि तस्य प्रवेशादिरूपं परं प्रति संक्रमणं सम्भवति, मनोमयविज्ञानमययोरात्मसंक्रमणस्य तथाविधस्य दृष्टत्वादिति मन्वानः शङ्कते—मनोमयस्येति। संशयात्मकवृत्तिमदन्तःकरणं मनोमयः निश्चयात्मकवृत्तिमदन्तःकरणं विज्ञानमय इति विभागः। दृष्टान्तासिद्ध्या निराकरोति—नेति। तत्र संशयनिश्चयरूपयोर्वृत्त्योरेव बहिर्विषयदेशे चक्षुरादिद्वारा निर्गमनं पुनः स्वाश्रयं प्रत्यागमनरूपं संक्रमणं च दृश्यते, न तु साक्षान्मनोमयविज्ञानमययोर्बहिर्निर्गमनं स्वात्मानं प्रत्यागमनरूपं च ३५ संक्रमणं दृश्यते, न च सम्भवति, स्वात्मनि स्वस्यैव प्रवेशादिक्रियाया विरुद्धत्वादित्यर्थः। मनोमयो मनोमयमेवोपसंक्रामति विज्ञानमयो विज्ञानमयमेवोपसंक्रामतीत्यर्थकल्पनं प्रक्रमविरुद्धं चेत्याह—अन्य इति। एवंविदित्यर्थः। एवं दृष्टान्तं निरस्य दार्ष्टान्तिकं निराकरोति—तथेति। आनन्दमय एव सन्नेवंविदानन्दमयं स्वात्मानमुपसंक्रामति

प्राप्तिः संक्रमणं नाप्यन्नमयादीनामन्यतमकर्तृकं पारिशेष्यादन्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं ज्ञानमात्रं च संक्रमणमुपपद्यते। ज्ञानमात्रत्वे चाऽऽनन्दमयान्तःस्थस्यैव सर्वान्तरस्याऽऽकाशाद्यन्नमयान्तं कार्यं सृष्ट्वाऽनुप्रविष्टस्य हृदयगुहाभिसम्बन्धादन्नमयादिष्वनात्मस्वात्मविभ्रमः संक्रमणेनाऽऽत्मविवेकविज्ञानोत्पत्त्या विनश्यति। तदेतस्मिन्नविद्याविभ्रमनाशे संक्रमणशब्द उपचर्यते न ह्यन्यथा सर्वगतस्याऽऽत्मनः संक्रमणमुपपद्यते। वस्त्वन्तराभावाच्च।
५ न च स्वात्मन एव संक्रमणम्। न हि जलूकाऽऽत्मानमेव संक्रामति। तस्मात्सत्यं ज्ञानमनन्तं ब्रह्मेति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभवनसर्गप्रवेशरसलाभाभयसंक्रमणादि परिकल्प्यते ब्रह्मणि सर्वव्यवहारविषये न तु परमार्थतो निर्विकल्पे ब्रह्मणि कश्चिदपि विकल्प उपपद्यते।

## आनन्दगिरिटीका

नेति। ज्ञानमात्रत्वे वा संक्रमणस्य किं फलतीत्यत आह—**ज्ञानमात्रत्वे चेति**। मुख्यासम्भवे गौणार्थग्रहणं न्याय्य-
१० मेवातोऽधिष्ठानयाथात्म्यप्रतिपत्त्या विशिष्टस्याध्यस्तस्य बाधनमेव संक्रमणं फलतीति भावः। इतश्च न मुख्यं संक्रमणमन्वेषणीयमित्याह—**वस्त्वन्तराभावाच्चेति**। संक्रमणस्यौपचारिकत्वं व्याख्याय प्रकरणस्य महत्तात्पर्यमुपसंहारच्छलेनाऽऽह—**तस्मादिति**।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां ब्रह्मवल्ल्यामष्टमोऽनुवाकः

१५
## वनमाला

प्राप्नोति प्रविशतीति वा नोपपद्यते, स्वात्मनि क्रियाविरोधात्प्रक्रमविरोधाच्चेत्यर्थः। संक्रमणस्य प्राप्त्यादिरूपत्वनिराकरणमुपसंहरति—**तस्मादिति**। ननु स्वात्मनि क्रियाविरोधादानन्दमयसंक्रमणमानन्दमयकर्तृकं न भवति चेत्, तर्हि अन्नमयाद्यन्यतमकर्तृकमस्तु; नेत्याह—**नापीति**। "आनन्दमयमात्मानमुपसंक्रामति" इत्यत्रान्नमयाद्यन्यतमस्य कर्तृत्वेनाश्रवणादिति भावः। फलितमाह—**पारिशेष्यादिति**। प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः
२० परिशेषः, परिशेष एव पारिशेष्यम्, तस्मादित्यर्थः। एतदुक्तं भवति—आनन्दमयसंक्रमणे तावदहमनुभवगोचरः कर्तेति निर्विवादम्; तच्च कर्तृत्वमन्नमयादिष्वपि प्रसक्तम्। अन्नमयादीनामप्यहमनुभवगोचरत्वात्; तत्प्रतिषेधे सत्यहमनुभवगोचरादन्यत्र स्तम्भादिषु तत्कर्तृत्वाप्रसक्तेः शिष्यमाणे चिदात्मन्येवंवित्त्वेन प्रकृते बुद्ध्युपाधिसम्बन्धात् आनन्दमयसंक्रमणकर्तृत्वमस्तीति प्रमारूपः सम्प्रत्ययो भवति तादृशसम्प्रत्ययरूपात्परिशेषात्कोशपञ्चकव्यतिरिक्तकर्तृकमानन्दमयसंक्रमणमित्युपपद्यते; एवमन्नमयादिसंक्रमणेऽप्येवंविदेव कर्ता, तस्यैव सर्वत्र संक्रमणे कर्तृत्वेन
२५ प्रकृतत्वादिति। **ज्ञानमात्रं चेति**। तत्त्वज्ञानमात्रकृतं भ्रान्तिनाशरूपमेव संक्रमणमिति चोपपद्यत इत्यर्थः। ननु संक्रमणशब्दस्य भ्रमनाशे प्रसिद्ध्यभावात्कथमुपपत्तिरित्याशङ्क्याह—**ज्ञानमात्रे चेति**। ज्ञानमात्रकृते विभ्रमनाशे संक्रमशब्द उपचर्यते न मुख्यस्तत्र, अतो न प्रसिद्ध्यपेक्षेति भावः। एतदेव विशदयति—**आनन्दमयेत्यादिना**। वस्तुतः सर्वान्तरस्य ब्रह्मणो जगत्सृष्ट्वानुप्रविष्टत्वेन श्रुतस्य बुद्धितादात्म्याद्योऽयमन्नमयादिष्वात्मत्वभ्रमो मूलाविद्याकृतः, स मुमुक्षोः कोशविवेकक्रमेणात्मतत्त्वसाक्षात्कारोत्पत्त्या समूलो विनश्यति। ततः किम्? अत आह—
३० **तदेतस्मिन्निति**। एतदुक्तं भवति—तत्तत्कोशगोचरविभ्रमनाशस्तत्र तत्र संक्रमो विवक्षित इति। एवमुपचारे नियामिकां मुख्यार्थानुपपत्तिमुक्तां स्मारयति—**न ह्यन्यथेति**। **सर्वगतस्येति**। पूर्णत्वेनात्मानं मन्यमानस्य विदुष इत्यर्थः। **वस्त्वन्तरेति**। अत्रोपसंक्रमणकर्मत्वेन श्रुतानामन्नमयादीनामप्राप्तग्रामादीनामिवात्यन्तभिन्नत्वविप्रकृष्टत्वाद्यभावाच्चेत्यर्थः। नन्वत्यन्तभेदविप्रकर्षाद्यभावेऽपि मुख्यप्राप्यता किं न स्यादित्याशङ्क्याह—**न च स्वात्मन एवेति**। न हि रज्जोः स्वाध्यस्तसर्पसंक्रमणं मुख्यं दृष्टमित्यर्थः। यद्वा विदुषः स्वव्यतिरिक्तवस्त्वभावाच्च न विद्वत्कर्तृकं
३५ संक्रमणं मुख्यं सम्भवतीत्याह—**वस्त्वन्तरेति**। स्वात्मकर्मकमेव तर्हि मुख्यसंक्रमणमस्तु; नेत्याह—**न च स्वात्मन एवेति**। तत्रोदाहरणमाह—**न हीति**। इत्थमेवंवित्परयोरभेदसाधनेन संक्रमणमौपचारिकमिति व्याख्याय प्रकरणस्य महातात्पर्यमुपसंहारव्याजेनाह—**तस्मादिति**। आनन्दमीमांसासंग्रहार्थमादिग्रहणम्। संव्यवहारविषयत्वयोग्यं

तमेतं निर्विकल्पमात्मानमेवं क्रमेणोपसंक्रम्य विदित्वा न बिभेति कुतश्चनाभयं प्रतिष्ठां विन्दत इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति। सर्वस्यैवास्य प्रकरणस्याऽऽनन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनायैष मन्त्रो भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरोयोपनिषदि द्वितीयब्रह्मवल्लीभाष्येऽष्टमोऽनुवाकः[1]

वनमाला

यदज्ञातं ब्रह्म, तस्मिन्ब्रह्मणि सर्गादिकं लोकभ्रान्तिसिद्धमुपदिश्यते शुद्धब्रह्मप्रतिपत्त्यर्थमेव, न तु श्रुत्या तात्पर्येण प्रतिपाद्यते, सर्गादेर्मायामात्रत्वादित्यर्थः। "यतो वाचः" इति मन्त्रो विद्याफलविषय इत्याह—तमेतमिति। एवं विदित्वा क्रमेण कोशानुपसंक्रम्येति योजना। यद्यपि कोशानामुपसंक्रमणं नाम भ्रमनिवृत्तिरूपो बाध इत्युक्तम्, स च बाधस्तत्त्वज्ञानबलेन युगपदेव सम्भवति रज्जुतत्त्वज्ञानबलेनेव तत्राध्यस्तसर्पधारादीनाम्; तथापि तत्त्वप्रतिपत्त्युपायभूते कोशविवेचने क्रमस्य प्रागुक्तत्वात्तत्फलप्राप्तावपि स एव क्रमोऽनूदितः श्रुत्येति मन्तव्यम्। न केवलं विद्याफलविषय एवायं मन्त्रः, किं तु कृत्स्नवल्ल्यर्थोपसंहारपरश्चेति तात्पर्यान्तरमाह—सर्वस्यैवेति।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायामानन्दवल्ल्यामष्टमोऽनुवाकः

१. आनन्दमयाधिकरणे—आनन्दमयो जीव इति सिद्धान्तयित्वा आनन्दमयाधिकारे "ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मशब्दः आनन्दमयावयवत्वेन न ब्रह्म बोधयति अपि तु स्वप्नप्राधान्येन ब्रह्म बोधयतीत्युक्तम्। यत्तु आनन्दमयाधिकारेण "आनन्द आत्मा" इति मध्यस्वरूपमात्मेत्युक्त्वा ब्रह्मणः पुच्छत्वं वर्णयितुरद्वैतिन एकस्यैवानन्दस्यावयवित्वमवयवत्वं चाननुरूपमापद्येत। उपाधिभेदेन रूपभेदेन वा एकस्यैवोभयोपपादने विशिष्टाद्वैतकल्पनेऽपि न दोष इति। तन्न। "आनन्द आत्मा" इति हि विषयानन्दसामान्यमुक्तं न तु ब्रह्मस्वरूपम्। प्रियमोदादि सह पाठात्। अतो नास्माकमेकस्यैव पुच्छत्वं पुच्छित्वञ्चेति बोध्यम्।

## अथ वार्तिके ब्रह्मवल्लयामष्टोऽनुवाकः

यथोक्तबोधविरहादीश्वराणामपीश्वराः । प्रतीचो ब्रह्मणो भीताः स्वकर्माणि प्रकुर्वते ॥ १ ॥
वातादयो महावीर्याः स्वतन्त्रा बाहुशालिनः । तेऽपि भीताः प्रवर्तन्ते ब्रह्मणोऽपि महत्तमाः ॥ २ ॥
यस्माद्ब्रह्मण आनन्दाद्भीता वातादयोऽवशाः । स्वकर्मसु प्रवर्तन्ते भृत्याः स्वामिभयादिव ॥
तस्याऽऽनन्दस्य मीमांसा विचारः क्रियतेऽधुना ॥ ३ ॥
५ उत्कर्षेतरहीनोऽसौ य आनन्दोऽधिगम्यते ॥ ४ ॥
दृष्टः सातिशयस्तावदानन्दः कर्महेतुकः । आब्रह्मनरपर्यन्ते लोकेऽस्माभिः प्रमाणतः ॥ ५ ॥
उत्कृष्यमाणो यत्रायं परां निष्ठां प्रपद्यते । अनापन्नादिमध्यान्तं तद्ब्रह्मेत्यवधारयेत् ॥ ६ ॥
ब्रह्मादिनरपर्यन्तं पुण्यकर्मानुरूपतः । उपजीवति लोकोऽयं यस्याऽऽनन्दस्य विप्रुषम् ॥ ७ ॥
उत्तरोत्तरवृद्धयैवं मनुष्यादधि तं वयम् । प्रतिपद्यामहे साक्षादानन्दं स्वात्मनि स्थितम् ॥ ८ ॥
१० विषयेन्द्रियसम्बन्धसमुत्थो वा भवेदयम् । लौकिकानन्दवत्तस्याद्वा सर्वसाधननिस्पृहः ॥ ९ ॥
तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनः । सम्पन्निमित्तो यो दृष्टः संपेति स इहोच्यते ॥१०॥

ब्राह्मणोक्तेऽर्थे "तदप्येष श्लोको भवती"ति मन्त्रमवतार्य "भीषाऽस्मादि"त्यादि श्लोकाक्षराणि व्याचष्टे—**यथोक्तेति** ॥ १ ॥

उक्तमेव प्रपञ्चयति—**वातादय इति** ॥ २ ॥

१५ सैषाऽऽनन्दस्य मीमांसा भवतीतिवाक्यं व्याचष्टे—**यस्मादिति** ॥ ३ ॥

यो विचारेणाऽऽनन्दोऽधिगम्यतेऽसावुत्कर्षापकर्षरहितः सर्वविशेषवर्जितो निरतिशयो भवतीतिविचार-सिद्धानन्दस्य स्वरूपं कथयति—**उत्कर्षेति** ॥ ४ ॥

ब्रह्मानन्दस्य निरतिशयत्वे कथं प्राणिनिष्ठानन्दस्य सातिशयत्वप्रतीतिरित्याशङ्क्य कर्मफलभूतानन्दस्य सातिशयत्वं प्रतिभातीत्याह—**दृष्ट इति** ॥ ५ ॥

२० ब्रह्मादिषु मनुष्यपर्यन्तेषु सातिशयश्चेदानन्दो दृश्यते तर्हि ब्रह्मानन्दोऽपि सातिशयः स्यादानन्दत्वा-विशेषादित्याशङ्क्य निरतिशयानन्दं ब्रह्माहमस्मीतिनिर्धारणार्थं ब्रह्मानन्दस्य निरतिशयत्वमाश्रयितव्यमित्याह—**उत्कृष्यमाण इति** ॥ ६ ॥

तर्हि सातिशयानन्दो निरतिशयानन्दश्चेत्यानन्दभेदप्रसक्तिरित्याशङ्क्य "[1]एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्त्तो"ति श्रुत्या परिहरति—**ब्रह्मादीति** । स एव ब्रह्मानन्दः शुभकर्मजनितबुद्धिवृत्त्यवच्छिन्नः सातिशयः, २५ अनवच्छिन्नो निरतिशय इति न भेदप्रसक्तिरित्यर्थः ॥ ७ ॥

कल्पितेन सातिशयानन्देन निरतिशयानन्दस्याकल्पितस्य प्रतिपत्तिरित्युपायोपेयभावमुपन्यस्यति—**उत्तरोत्तरेति** । वक्ष्यमाणेन प्रकारेण मनुष्यादारभ्योपरिष्टाद्ब्रह्मपर्यन्तमुत्तरोत्तरभूमौ शतगुणाभिवृद्धिद्वारेण निरति-शयानन्दं स्वात्मनि पर्यवसितं स्वरूपत्वेनापरोक्षतया प्रतिपद्यामहे तेन विचारद्वारा निरतिशयानन्दप्रत्यग्भूतब्रह्म-प्रतिपत्तिरित्यर्थः ॥ ८ ॥

३० विचारस्वरूपं दर्शयति—**विषयेति** ॥ ९ ॥

सैषाऽऽनन्दस्येत्यत्राऽऽनन्दशब्दार्थमाह—**तत्रेति** ॥ १० ॥

---

१. बृ० ४.३.३२ ।

उत्कृष्यमाणेनानेन ह्यस्मद्गोचरवर्तिना । असाधनमसाध्यं तमानन्दं व्याचचक्ष्महे ॥११॥
निष्ठां सातिशयं यस्मात्स्वतोऽनतिशयात्मनि । गच्छदीक्षामहे यस्मादेवमानन्द ईक्ष्यताम् ॥१२॥
येयं सातिशया संख्याऽसंख्येयार्थावसायिनी । यथैवमस्मदानन्दः स्यात्परानन्दनिष्ठितः ॥१३॥
आविष्करिष्यन्त्याहात इममर्थं श्रुतिः स्वयम् । बहिष्प्रवणदृष्टीनां स्वतोऽसामर्थ्यदर्शनात् ॥१४॥
युवा प्रथमवयाः स्याद्यूनः साधुयुवेति किम् । पञ्चविंशाब्दिकः साधुरिति साधुयुवोच्यते ॥१५॥ ५
मिथः सव्यभिचारित्वात्साधुयौवनयोरतः । विशेषणमिदं तस्मात्पुनः साधुयुवेति हि ॥१६॥
अध्येति सर्वमध्येयमतोऽध्यायक उच्यते । क्षिप्रकार्यतिशायित्वादाशिष्ठोऽसौ भवेदतः ॥१७॥
समग्राशेषचार्वङ्गो दृढिष्ठः परिकीर्त्यते । अभिभूय यतः सर्वान्बलिनो वर्तते ततः ॥
बलिष्ठस्तेन विद्वद्भिः कीर्त्यते पृथुकीर्तिभिः ॥१८॥
यावदाध्यात्मिकं किञ्चित्पुंभिरापेक्ष्यते क्वचित् । दृष्टादृष्टेष्टभोगाय तेन सर्वेण संयुतः ॥१९॥ १०
तस्येयं पृथिवी सर्वा पूर्णा वित्तस्य चेद्भवेत् । इति साधनमुक्तं स्याद्दृष्टादृष्टार्थकर्मणः ॥२०॥
बाह्यैराध्यात्मिकैश्चैव संपन्नः साधनैः पुमान् । लभते यमसौ ह्लादं नरानन्दः स उच्यते ॥२१॥

किमिति कर्मफलं सुखमानन्दशब्देनोच्यते निरतिशयानन्दब्रह्माहमस्मीतिप्रतिपत्तेरेवाभिप्रेतत्वादित्याशङ्क्याऽऽह—**उत्कृष्यमाणेनेति** ॥ ११ ॥

सातिशयानन्देन निरतिशयानन्दस्य प्रतिपत्तिमेव दृष्टान्तेन स्पष्टयति—**निष्ठामिति** । सातिशयं परिमाणादीतिशेषः । द्वितीयो यस्माच्छब्दस्तस्मादित्यस्मिन्नर्थे द्रष्टव्यः ॥ १२ ॥ १५

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपमर्थं समर्थयते—**येयमिति** ॥ १३ ॥

उक्तस्यैव निरतिशयानन्दस्य प्रतिपादकत्वेन "युवा स्यादि"त्यादिश्रुतिमवतारयति—**आविष्करिष्यन्तीति** । यतः सातिशयानन्देनाऽऽनन्दो निरतिशयो गम्यतेऽतश्चेममेव निरतिशयानन्दाख्यमर्थं सातिशयानन्दद्वारेण प्रकटीकरिष्यन्ती श्रुतिर्युवा स्यादित्याद्याहेतियोजना । ननु निरतिशयानन्दस्य स्वप्रकाशप्रत्यगात्मभूतस्य स्वारस्येन समधिगतिसम्भवादनर्थिका सातिशयानन्दोक्तिरिति चेन्नेत्याह—**बहिरिति** ॥ १४ ॥ २०

एवं तात्पर्यमुक्त्वा युवशब्दार्थमाह—**युवेति** । साधुयुवेत्यत्र यूनः साधुरिति विशेषणं किमर्थमिति पृच्छति—**यून इति** । तत्रोत्तरं वक्तुं प्रथमं प्रथमवयस्त्वं पूर्वोक्तं प्रकटयति—**पञ्चविंशेति** । साधुश्चासौ युवा चेति व्युत्पत्त्या साधुरितिपूर्वोक्तस्य यूनो विशेषणमिति तावदाह—**साधुरिति** ॥ १५ ॥

इदानीं प्रश्नस्योत्तरमाह—**मिथ इति** । युवत्वं परित्यज्य स्थविरे साधुत्वं दृश्यते । साधुत्वं विधूयोन्मादवति पञ्चविंशाब्दिके यथेष्टचेष्टाविशिष्टे युवत्वमुपलभ्यते । अतः साधुयौवनयोरन्योन्यव्यभिचारित्वाद्यूनः साधुरितिविशेषणमर्थवद्भवति तस्माद्विशेषणवैयर्थ्यचोद्यं नास्तीति ॥ १६ ॥ २५

अध्यायकशब्दार्थमाह—**अध्येतीति** । आशिष्ठशब्दार्थमाह—**क्षिप्रेति** । क्षिप्रकारिषु मध्ये स्वयमतिशयवत्त्वादिति यावत् । अतःशब्दस्तु पञ्चम्या सम्बध्यते ॥ १७ ॥

दृढिष्ठशब्दार्थमाह—**समग्रेति** । बलिष्ठशब्दं योजयति—**अभिभूयेति** । तेन बलातिरेकेणेति यावत् ॥ १८ ॥ ३०

युवेत्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह—**यावदिति** ॥ १९ ॥

बाह्योपकरणैरपि सम्पन्नत्वमनन्तरवाक्यावष्टम्भेन दर्शयति—**तस्येति** । यदि यथोक्तवित्तसम्पत्तिस्तदा बाह्यसाधनसम्पत्तिरित्यर्थः । वाक्यत्रयार्थमुपसंहरति—**इतीति** । साधनमित्याध्यात्मिकं बाह्यं चेत्युभयं साधनं गृह्यते ॥२०॥

स एको मानुष आनन्द इत्यस्यार्थमाह—**बाह्यैरिति** ॥ २१ ॥

य एते शतमानन्दा मानुषाणां समाहृताः । नरगन्धर्वकाणां स्यात्तावानेकः प्रमाणतः ॥२२॥
सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः । नृत्यगीतादिकुशला गन्धर्वाः स्युर्नृलौकिकाः ॥२३॥
भूयोद्वन्द्वप्रतीघातशक्तिसाधनसम्पदा । नारगन्धर्विको भूयानानन्दो मानुषादधि ॥२४॥
आविरिञ्चाद्भवेदेवं पूर्वस्मादुत्तरोऽधिकः । सहस्रदशभागेन ह्युत्तरोत्तरतः क्रमात् ॥२५॥
५ श्रोत्रियोऽधीतवेदः स्यात्साध्वाचारः प्रसिद्धितः । कामानुपहतात्माऽपि स्यादकामहतस्तथा ॥२६॥
मार्त्याद्भोगाद्विरक्तस्य ह्युत्तराह्लादकामिनः । सहस्रदशभागेन मानुषाद्गुणतो भवेत् ॥२७॥
इत्येतस्य प्रसिद्ध्यर्थमादावग्रहणं कृतम् । अकामहत इत्यस्य हेतोरानन्दवृद्धये ॥२८॥
श्रोत्रियावृजिनत्वे द्वे सर्वत्रैव समे अपि । कामानुपहतत्वस्य वृद्धौ ह्लादो विवर्धते ॥२९॥
यतोऽकामहतत्वं स्यात्सर्वातिशयिनोऽञ्जसा । सुखस्य प्राप्तये तस्मात्तदेवोत्कृष्टिकृद्भवेत् ॥३०॥
१० तस्माद्यथोदितानन्दप्राप्तये साधनत्रयम् । श्रोत्रियावृजिनत्वे द्वे तथाऽकामहतात्मता ॥३१॥

ते ये शतमित्यादिवाक्यद्वयस्यार्थमाह—य एत इति ॥ २२ ॥

मनुष्यानन्दापेक्षया शतगुणितो मनुष्यगन्धर्वाणामानन्दो भवतीत्यत्र कारणं वक्तुं मनुष्यगन्धर्वस्वरूप-माह—सुगन्धिन इति ॥ २३ ॥

तेषामानन्दाधिक्ये विवक्षितं कारणमाह—भूयोद्वन्द्वेति । भूयसां द्वन्द्वानां प्रतीघाते प्रतिक्षेपे शक्तिश्च
१५ साधनानि च तेषां सम्पदा सामग्र्येति यावत् ॥ २४ ॥

यथा मानुषानन्दान्मनुष्यगन्धर्वानन्दस्य शतगुणमाधिक्यं साधनबहुत्वादुक्तमेवं हिरण्यगर्भपर्यन्तं पाठ-क्रमानुसारेणोत्तरोत्तरभूमौ पूर्वपूर्वापेक्षया शतगुणितः सन्नानन्दः साधनबहुत्वमेव प्रयोजकीकृत्य प्रवृत्तोऽस्तीत्यति-दिशति—आविरिञ्चादिति ॥ २५ ॥

श्रोत्रियस्य चाकामहतस्येत्यस्यार्थमाह—श्रोत्रिय इति । तस्य साध्वाचारत्वविशेषणं कुतो लब्धमित्या-
२० शङ्क्याधीतस्वाध्याये स्वाचारवति वृद्धानां श्रोत्रियत्वप्रसिद्धेरित्याह—प्रसिद्धित इति ॥ २६ ॥

प्रथमे पर्याये श्रोत्रियत्वादेरग्रहणे कारणमाह—मार्त्यादिति । मनुष्यसम्बन्धिनः सुखभोगाच्छर्दितान्नादि-वद्विरक्तस्य तदपेक्षयोत्तरत्र च मनुष्यगन्धर्वानन्दे तत्प्राप्तिसाधनानुष्ठानव्यतिरेकेणात्रैव प्राप्तिमिच्छतो मानुषा-नन्दाच्छतगुणतो मनुष्यगन्धर्वेण तुल्यः सन्नानन्दो भवेदित्येतस्यार्थस्य प्रतिपत्त्यर्थमकामहतत्वादेरग्रहणं प्रथमे पर्याये कृतं ततश्च मानुषाद्भोगाद्वैराग्यहेतोर्मनुष्यगन्धर्वेण तुल्यानन्दलाभान्मानुषाद्विरक्तस्य मनुष्यापेक्षया सुख-
२५ विवृद्धिसिद्ध्यर्थं "श्रोत्रियस्य चाकामहतस्ये"त्यादौ नोक्तं यदि प्रथमपर्याय एवाकामहतो गृह्यते तदा तस्य सार्वभौमा-नन्देनाऽऽनन्दः समः स्यात् । ततश्च व्याघातो मानुषानन्दे विरक्तो मानुषानन्दभोगभागी चेति ततो मनुष्यगन्धर्वा-नन्देन तुल्यमानन्दं मनुष्यानन्दाद्विरक्तस्य दर्शयितुं प्रथमपर्याये श्रोत्रियत्वादेरग्रहणमित्यर्थः ॥ २७-२८ ॥

श्रोत्रियत्वमवृजिनत्वमकामहतत्वमित्येतानि त्रीणि सुखप्राप्तौ साधनानि तेष्ववान्तरविशेषमाह—श्रोत्रियेति। अपिशब्दो द्विशब्देन सर्वशब्देन च सम्बध्यते । एवशब्दस्तु समशब्देन सम्बन्धनीयः । कथं तर्हि सुखवृद्धिरित्या-
३० शङ्क्याऽऽह—कामेति ॥ २९ ॥

तदेव स्पष्टयति—यत इति। निरतिशयानन्दप्राप्तौ निरतिशयाकामहतत्वं यतो हेतुस्तस्मादानन्दस्यावान्तरो-त्कर्षोऽपि तस्यैवाकामहतत्वस्यावान्तरोत्कर्षाधीनः स्यादित्यर्थः ॥ ३० ॥

श्रोत्रियत्वादीनां त्रयाणामवान्तरविशेषमुक्त्वा साधारणं रूपमाह—तस्मादिति । श्रुतत्वाविशेषादित्यर्थः । अवृजिनत्वं यथोक्तकारित्वं तदत्रानुक्तमपि श्रुत्यन्तरसिद्धं संगृह्यते ॥ ३१ ॥

तुल्ये आब्रह्मणः पूर्वे उत्कर्षस्तूत्तरस्य च । अकामहततैवातः पूर्वाभ्यां साधनं परम् ॥३२॥
चिरकालस्थितिर्येषु पितृलोकेषु ते स्मृताः । चिरलोकलोकास्तेऽपि स्युः पितृश्राद्धादिकारिणः ॥३३॥
आजानो देवलोकः स्यात्तज्जा आजानजाः स्मृताः । स्मार्तकर्मकृतस्तत्र जायन्ते देवभूमिषु ॥३४॥
कर्मणैव त्वविद्वांसो ये जाताः सुरसद्मसु । कर्मदेवांस्तु तान्विद्याद्देवांश्चोत्तरमार्गगान् ॥३५॥
त्रैलोक्यदेहश्चात्र स्याद्विराडेव प्रजापतिः । समष्टिव्यष्टिरूपश्च ब्रह्मेह परिगृह्यते ॥३६॥ ५
त एते सर्व आनन्दा यत्रैकत्वं व्रजन्ति नः । कामश्च तन्निमित्तोऽत्थो ज्ञातं यच्च द्वयात्मकम् ॥३७॥
तथाऽकामहत्वं च निष्ठां यत्र प्रपद्यते । तमानन्दं विजानीयाद्ब्रह्मत्मनाऽनेन वाक्यतः ॥३८॥
आनन्दानन्दिनोश्चात्र न भेदः स्यान्मनागपि । श्रुत्यैवापोदितो यस्माच्छिद्रं कुर्वन्मनागपि ॥३९॥
न साधनमयं किञ्चित्स्वात्मसिद्धावपेक्षते । स्वतःसिद्धेरविद्याया हानमात्रमपेक्षते ॥४०॥
गुरुभारावसन्नस्य भारापनयतो यथा । उत्कृष्यते क्रमात्स्वास्थ्यं स्वात्मन्येवं तमःक्षयात् ॥४१॥ १०
अथेदानीं परीक्षाया अद्वैतानन्दलक्षणम् । उपसंह्रियते साक्षात्फलं साधननिस्पृहम् ॥४२॥

यदुक्तं श्रोत्रियावृजिनत्वे द्वे सर्वत्रैवेत्यादि तदेव स्पष्टयति—**तुल्ये इति**। श्रोत्रियत्वावृजिनत्वयोस्तुल्यत्व-मुत्कर्षश्चाकामहतत्वस्येति स्थिते फलितमाह—**अकामहततेति** ॥ ३२ ॥

स एकः पितॄणां चिरलोकलोकानामानन्द इत्यत्र पितॄणां चिरलोकलोकत्वं विशेषणं तदुपपादयति—**चिरकालेति**। के ते चिरकालं पितृलोकेषु वसन्ति तानाह—**तेऽपीति** ॥ ३३ ॥ १५

स एक आजानजानां देवानामित्यादावाजानशब्दार्थमाह—**आजान इति**। केषां देवलोके जातत्वमित्युक्ते वापीकूपतटाकादिसुकृतकारिणामित्याह—**स्मार्तेति** ॥ ३४ ॥

स एकः कर्मदेवानामित्यादौ कर्मदेवशब्दार्थमाह—**कर्मणैवेति**। कर्मशब्देनाग्निहोत्रादि केवलं कर्म गृह्यते। स एको देवानामित्यादौ देवशब्दार्थमाह—**देवानिति**। देवाः समुच्चयकारिणो देवयानमार्गगामिनो देवान्विद्यादिति-सम्बन्धः ॥ ३५ ॥ २०

स एकः प्रजापतेरानन्द इत्यादौ प्रजापतिशब्दार्थमाह—**त्रैलोक्येति**। स एको ब्रह्मण आनन्द इत्यत्र ब्रह्मशब्दस्य सूत्रात्मविषयत्वमाह—**समष्टीति** ॥ ३६ ॥

तथाऽपि कथं निरतिशयानन्दसिद्धिरित्याशङ्क्याऽऽह—**त एत इति**। यत्र हि हिरण्यगर्भानन्दात्परस्मिन् आनन्दे गणनं व्यावर्तते यत्र चाऽऽनन्दाः सातिशयाः सर्वे पर्यवस्यन्ति यत्र च कामः सातिशयविषयः सहेतुको ज्ञानाद्बाध्यते ज्ञानं च सातिशयं सर्वं यस्य ज्ञानान्निवर्तते तमानन्दमनतिशयं ब्रह्मात्मत्वेन सातिशयेन निरतिशयस्यानु- २५ मानमित्युक्त्वाऽनुमानानुगृहीतेन तत्त्वमस्यादिवाक्येनाहमस्मीति जानीयादित्यर्थः ॥ ३७-३८ ॥

कर्मफलानन्दतद्वतोरिव ब्रह्मानन्दतद्वतोरपि भेदात्कथं यथोक्तमानन्दं ब्रह्मात्मत्वेन जानीयादित्या-शङ्क्याऽऽह—**आनन्देति**। अत्रेति ब्रह्म गृह्यते ब्रह्मणि स्वल्पमात्रस्यापि भेदस्याभावे हेतुमाह—**श्रुत्यैवेति** ॥ ३९ ॥

ब्रह्मानन्दस्यापि कर्मफलानन्दवदेव साधनसव्यपेक्षत्वाद्भिन्नतेत्याशङ्क्याऽऽह—**न साधनमिति**। प्रत्यग्भूतस्य ब्रह्मानन्दस्य स्वतःसिद्धत्वेन सर्वेषामनन्दरूपता किमिति न भातीत्याशङ्क्याविद्यावृतत्वादित्याह—**अविद्याया** ३० **इति** ॥ ४० ॥

स्वरूपत्वेन प्राप्तस्यैवाऽऽनन्दस्याविद्यानिवृत्तिमपेक्ष्याभिव्यक्तिरित्युक्तं दृष्टान्तेन स्फोरयति—**गुरुभारेति**॥४१॥

स यश्चायमित्यादिवाक्यत्रयस्य तात्पर्यमाह—**अथेति**। "सैषाऽऽनन्दस्य"त्यादौ सातिशयानन्दद्वारा निरति-शयानन्दमनुमाय यद्ब्रह्म निरतिशयानन्दात्मकं निर्धारितं तदत्राऽऽत्मत्वेन संक्षिप्य प्रतिपाद्यत इत्यर्थः ॥ ४२ ॥

निर्धूताशेषसंसारः सत्यमित्यादिनोदितः । व्युत्थाप्यासत्यज्ञानादेर्बुद्धौ चाऽऽत्मनि दर्शितः ॥४३॥
निष्कृष्याविद्योत्सङ्गस्थाचत्साक्षिणमनात्मनः । साक्षात्तेनैव तं विद्मः प्रात्यक्ष्यात्सोऽयमित्यतः ॥४४॥
अकामहत इत्येवं निरविद्योऽभिधीयते । तस्यामसत्यां तद्ब्रह्म स्वमेवानुभूयते ॥४५॥
अज्ञातं ज्ञायते यत्र प्रमातृत्वाद्यनिह्नवात् । तत्र मानान्तरापेक्षा न स्वतोऽवगमात्मके ॥४६॥
५ प्रमैवाऽऽत्मात्मिका यत्र त्वनन्यानुभवात्मिका । नात्र मानान्तरापेक्षा सैवानस्तमितोदिता ॥४७॥
आधेयार्थप्रधानेयं सप्तमी पुरुषात्परा । [1]योऽयमित्यादिना तद्वच्छ्रुतिरेवं प्रवादिनी ॥४८॥
अकामहतधीगम्यो योऽयं बुद्धेः सदेक्षकः । अयं पुरुष इत्यत्र स एव त्वभिधीयते ॥४९॥
प्रध्वस्तास्माद्विभागश्च रोचिष्णुर्यश्च भास्करे । [2]सूर्य आत्मेति मन्त्रोऽपि योऽसाविति च साक्ष्यथ ॥
क्षेत्रज्ञेश्वरभेदेन ह्यभिन्नं वस्त्वविद्यया । तस्मात्तद्धानतश्चैक्यं घटेतरखयोरिव ॥५१॥
१० मूर्तामूर्तात्मकस्यास्य ह्युत्कर्षः परमो रविः । स्वान्तर्गतेन तस्यैक्यं तन्निमित्तनिषेधतः ॥५२॥

न केवलं विचारफलोपसंहारार्थमिदं वाक्यं किन्तु सत्यज्ञानादिमन्त्रार्थोपसंहारार्थमपीत्याह—निर्धूतेति । यो हि परमात्मा सत्यज्ञानादिवाक्येन सत्यादिलक्षणो दर्शितः स एव "यो वेद निहितं गुहायामि"ति बुद्धौ चाऽऽत्मनि बुद्धिस्वरूपे प्रविष्टो निर्दिष्टः । स एव चात्र "स यश्चायमि"त्यादावुपसंह्रियत इत्यर्थः ॥ ४३ ॥

सत्यज्ञानादिवाक्यार्थस्यात्रोपसंहारे किं फलतीत्यपेक्षायामाह—निष्कृष्येति । अविद्योत्सङ्गस्थादविद्या-
१५ कार्यादहङ्कारादेरनात्मनः सकाशात्तत्साक्षिणं विविच्य गृहीत्वा तेनैव सत्यज्ञानादिरूपेण ब्रह्मणा तमात्मानं साक्षादेव विद्म इति योजना । "सत्यं ज्ञानमि"त्यत्रैकत्वेनोपक्रम्य "स यश्चायमि"त्यादौ तेनैवोपसंह्रियते । प्रथमवाक्यगतमयं-शब्दं व्याकरोति—प्रात्यक्ष्यादिति । बुद्धिसाक्षिणः स्वयंप्रकाशत्वेनापरोक्षत्वादयमिति स निर्देशार्हो भवतीत्यर्थः । अतः-शब्दस्य पूर्वपञ्चम्या सम्बन्धः ॥ ४४ ॥

श्रोत्रियस्य चाकामहतस्येत्यन्त्ये पर्याये ज्ञानान्निरस्ताविद्यस्य प्रत्यगात्मनः सन्निहितत्वादपि ब्रह्माऽऽत्मा
२० प्रत्यगात्मैवायंशब्देन निर्दिश्यत इत्याह—अकामहत इत्येवमिति । विद्यया निरविद्यत्वं चेदुच्यते कथं तर्हि ब्रह्म-सिद्धिरिति तत्राऽऽह—तस्यामिति ॥ ४५ ॥

ब्रह्म स्वयमेव सिध्यतीत्ययुक्तं तस्य वस्तुत्वेन घटादिवन्मानान्तरसापेक्षत्वानुमानादित्याशङ्क्य जडत्वो-पाधेर्मैवमित्याह—अज्ञातमिति ॥ ४६ ॥

साधनव्याप्तिपरिहारार्थं न स्वतोऽवगमात्मक इत्युक्तं तत्प्रपञ्चयति—प्रमैवेति । श्रुतिः स्वविषयमात्मानम-
२५ विषयत्वेनैव बोधयन्ती तद्गताविद्यानिवर्तकत्वेन तत्र प्रविशतीति भावः ॥ ४७ ॥

वाक्यद्वयेऽपि सप्तमीप्रयोगस्याऽऽधारप्रधानत्वाभावान्नोपासनापरत्वमाधेयात्मब्रह्मपरत्वात्तु तयोरेकत्वपरत्वं पुरुषग्रहणस्याऽऽदित्योपलक्षणत्वादित्यभिप्रेत्याऽऽह—आधेयेति । आधारार्थत्वं परित्यज्याऽऽधेयप्रधाना सप्तमी न दृष्टेत्याशङ्क्य "योऽयं विज्ञानमयः प्राणेषि"त्यत्राऽऽधेयात्मप्रधाना सप्तमी दृष्टेत्याह—योऽयमित्यादिनेति ॥ ४८ ॥

स यश्चायं पुरुष इतिवाक्यस्य त्वंपदलक्ष्यमर्थमुक्तमुपसंहरति—अकामेति ॥ ४९ ॥

३० यश्चासावादित्य इतिवाक्यस्य तत्पदलक्ष्यार्थविषयत्वमाह—प्रध्वस्तेति । आदित्यमण्डले परमात्मा सन्निहितोऽस्तीत्यत्र श्रुतिस्मृती प्रयाणयति—सूर्य इति ॥ ५० ॥

स एक इतिवाक्यस्य तात्पर्यार्थमाह—क्षेत्रज्ञेति । अभिन्नमेव वस्तुतो वस्तु क्षेत्रज्ञश्चेश्वरश्चेत्यविद्यया भिन्नं यस्माद्भासते तस्मादविद्यानिरासद्वारा घटाकाशमहाकाशयोरिव जीवेश्वरयोरैक्यमत्र बोध्यमित्यर्थः ॥ ५१ ॥

आदित्याधारं तत्पदार्थमुक्त्वा त्वंपदार्थं चान्तःकरणाधारमुपदिश्य तयोरैक्यकथने फलितमाह—मूर्तेति ।
३५ भूतपञ्चकस्य प्रधानं कार्यं तद्गतेन लिङ्गेन सहाऽऽदित्यमण्डलं तत्र सन्निहितस्य ब्रह्मणस्तत्पदार्थस्य साक्षिणा

१. बृ. ४.३.७ । २. ऋ. १.११५.१, माध्यं ७.४२ ।

अनूद्य स य इत्येवमपकृष्टं नृबुद्धिगम् । उत्कृष्टेनेश्वरेणाथ विशिनष्टयहिरज्जुवत् ॥५३॥
उत्कृष्टो यदपेक्ष्येशस्तत्तावद्बाध्यते बलात् । जहाति पश्चादुत्कर्षमपकृष्टाश्रयो हि सः ॥५४॥
नाऽऽदित्यस्थस्तदोत्कर्षो नापकृष्टिस्तथाऽऽत्मनि । हित्वोभयमवाक्यार्थं नेति नेतीति विन्दते ॥५५॥
उत्कृष्टिर्वाऽपकृष्टिर्वा नेह स्वात्मनि विद्यते । तमोपहृतदृष्टीनामुत्कर्षेतरवीक्षणम् ॥५६॥
अविद्यैव यतो हेतुरुत्कृष्टयादेर्न वस्त्वतः । जग्धायां विद्यया तस्यां नानात्वं विनिवर्तते ॥५७॥ ५
अतिशेते यतः सर्वानानन्दानाग्रजादधि । विकल्पभूमेर्व्यावृत्तेरैक्यं स्वात्मरविस्थयोः ॥५८॥
सत्यं ज्ञानमिति ह्यस्मादसत्याद्यर्थवारणात् । भेदाश्रयस्य व्यावृत्तेरैक्यं स्वात्मरविस्थयोः ॥५९॥
कार्येण रसलाभेन प्राणनाद्युपपत्तिभिः । अस्तीत्यपाक्रियैतस्य प्राहुर्भाष्यकृतः स्वयम् ॥६०॥
प्रश्नयोरस्ति नास्तीति व्याख्यातत्वादथाधुना । आहो विद्वानमुं लोकमित्यस्यापाक्रियोच्यते ॥६१॥

त्वंपदार्थेनैक्यमध्यारोपितोत्कर्षापकर्षकारणाविद्यानिराकरणेनात्र बोध्यते ततश्चाऽऽदित्याधारत्वात्तदर्थस्योत्कृष्टत्वं १० त्वमर्थस्य चान्तःकरणाधिकरणत्वेन रागादिकलुषितत्वान्निकृष्टत्वमित्याशङ्का न कर्तव्येत्यर्थः ॥ ५२॥

तत्त्वंपदार्थयोरेकत्वबोधनप्रकारमत्राभिप्रेतं प्रकटयति—अनूद्येति । यथा यः सर्पः सा रज्जुरित्युच्यते तथा बुद्धिस्थमपकृष्टत्वेन कल्पितं त्वंपदार्थमनूद्याऽऽदित्यमण्डलस्थेन प्रकृष्टतया कल्पितेन तत्पदार्थेनैक्यमत्र बोध्यते तथा चोत्कर्षापकर्षहीनं सच्चिदानन्दात्मकं वस्तु परिशिष्टं भवतीत्यर्थः ॥ ५३ ॥

विशेषणफलं विशदयति—उत्कृष्ट इति । ईश्वरो हि जीवगतमपकृष्टत्वमपेक्ष्य स्वयमुत्कृष्टो व्यपदिश्यते । १५ तच्च जीवगतमपकृष्टत्वं जीवानुवादेन तस्य ब्रह्मणा विशेष्यत्वे व्यावर्तते । ब्रह्म हि जीवस्य विशेषणं तद्गतमपकृष्टत्वं बलादेव बाधते । उत्कृष्टस्य निकृष्टं प्रति विशेषणत्वायोगाज्जीवगतापकर्षनिवृत्तौ च ब्रह्म स्वगतमुत्कर्षं परित्यजति । तस्यापकर्षसापेक्षत्वादित्यर्थः ॥ ५४ ॥

उत्कर्षापकर्षनिवृत्तावात्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं सिध्यतीत्युत्कर्षापकर्षनिवृत्त्यनुवादेन तत्फलं कथयति—नेत्यादिना । विशेषणविशेष्यत्वावस्था जीवब्रह्मणोस्तदेति परामृश्यते ॥ ५५ ॥ २०

उत्कृष्टत्वापकृष्टत्वयोर्वस्तुत्वे कुतो निवृत्तिरित्याशङ्क्याऽऽह—उत्कृष्टिरिति ॥ ५६ ॥

उत्कर्षादेरविद्याकार्यत्वे फलितमाह—अविद्यैवेति ॥ ५७ ॥

ज्ञानफलमपकर्षाद्यनर्थनिवृत्तिरेव न भवति किन्तु निरतिशयानन्दप्राप्तिरपीत्याह—अतिशेत इति । अग्रजो हिरण्यगर्भो ब्रह्मा तत्पर्यन्ता ये केचिदानन्दास्तान्कर्मफलभूतानशेषानतिशेते यस्मादुपरिष्टाद्व्यवस्थितो निरतिशयो ब्रह्मानन्दस्तस्मादात्मन्यन्तःकरणे साक्षित्वेनावस्थितस्य त्वंपदलक्ष्यस्याऽऽदित्यमण्डलेऽवस्थितस्य ब्रह्मणस्तत्पदलक्ष्यस्य २५ निरतिशयानन्दात्मकस्य वाक्यादैक्यमास्थेयं तज्ज्ञानाच्च सर्वविकल्पाश्रयस्याज्ञानस्य व्यावृत्तेरनर्थनिवृत्त्युपलक्षितं निरतिशयसुखमाविर्भवतीत्यर्थः ॥ ५८ ॥

यदुक्तं ब्रह्मात्मनोरैक्यं तदेव साधयति—सत्यमिति । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यस्माद्वाक्याद्ब्रह्मणः सत्यादिरूपत्वविधानादसत्यादेरर्थस्य निवारणाज्ज्ञानत्वविधानादज्ञानस्य भेदादिकारणस्य निराकरणाद्ब्रह्मात्मनोरैक्यं युक्तमित्यर्थः ॥ ५९ ॥ ३०

सम्प्रति भाष्यकारीयं व्याख्यानमनुवदति—कार्येणेति । "सोऽकामयते"त्यादिना प्रागुक्तोपपत्त्यनुरोधेन ब्रह्मास्तीत्यस्यार्थस्य सिद्धत्वादस्ति नास्तीत्येतस्य प्रश्नस्य व्याख्यातत्वादपाकृतत्वादनन्तरमवशिष्टयोः प्रश्नयोर्याऽपाक्रिया कर्तव्या तदवसरे प्राप्ते सति "आहो विद्वानि"त्यादिर्यो द्वितीयः प्रश्नस्तस्यैतस्यापाक्रिया "स यश्चायमि"त्यादिनोच्यते । "विद्वानेव ब्रह्म प्राप्नोती"त्युक्ते चार्थादविद्वान्न प्राप्नोतीत्युताविद्वानित्यादिप्रश्नोऽपि निर्णीतो भवतीति स्वयं भाष्यकृतः प्राहुरिति वार्तिकयोरक्षरयोजना ॥ ६०-६१ ॥ ३५

तद्वाणीभानुसंप्लुष्टबहुलाज्ञानधीरहम् । यदाहीत्यादिना मन्ये उतेत्यादेर्विनिर्णयम् ॥६२॥
उताविद्वानमुं लोकमितिप्रश्नविनिर्णयात् । अस्ति नास्तीति सिद्धः स्यात्प्रश्नयोरपि निर्णयः ॥६३॥
विद्वत्ताव्यतिरेकेण फलं भिन्नं यथा तथा । अकामहततायास्तु परानन्दो न भिद्यते ॥६४॥
अनेकजन्मसंसिद्धः स यः कश्चिद्धवेदिह । यथोदितार्थवित्साक्षादस्माद्रागेतरात्मकात् ॥६५॥
५ लोकादाध्यात्मिकात्प्रेत्य यश्च स्यादाधिभौतिकः। तदुत्क्रान्तेर्भवेद्धेतुरन्नसृष्टिस्थितिक्षयः[१] ॥६६॥
लोकादस्मात्समुत्क्रम्य ह्येवंविदितिवाचकः । सर्वशेषमितिन्यायं [यं] तद्व्याख्यानाय चोत्तरम् ॥
गत्वेहान्नमयात्मानं तत्कार्यं यद्वदत्यगात् । अन्नेनान्नमयं तद्वद्विद्वान्प्राणमयात्मना ॥६८॥

इदानीं स्वव्याख्यानं दर्शयति—तद्वाणीति ॥ ६२ ॥

उताविद्वानित्यादिप्रश्नस्योत्तरं "यदा ह्येवैष एतस्मिन्नि"त्यादिना शब्देनैवोच्यते न त्वर्थादिति स्थिते १० लाभान्तरमाह—उताविद्वानिति। उताविद्वानित्यादिना प्रश्नयोरुभयोर्विनिर्णयादस्ति नास्तीत्यस्यापि प्रश्नस्य निर्णयलाभात्त्रयाणामपि प्रश्नानामत्रैव निर्णयः सिद्धः स्यादिति योजना। असतोऽर्थस्य ज्ञानाज्ञानाभ्यां मुक्तिबन्धयोः अयोगाद्यदाहीत्यादि वाक्यं त्रयाणामपि प्रश्नानां भवत्युत्तरमित्यर्थः ॥ ६३ ॥

स यश्चायमित्यादिवाक्येन ब्रह्मात्मनोरेकत्वमुक्तं तज्ज्ञानफलं समूलानर्थनिवृत्तिरनतिशयानन्दश्चेतिभावाभावात्मकं मिथो भिन्नमित्याशङ्क्याऽऽह—विद्वत्तेति। विद्वत्ता विदुषो भावो ब्रह्मत्वं तस्याव्यतिरेकेण पूर्णत्वेन १५ हेतुना तस्माद्ब्रह्मभावाद्विद्वद्रूपात्फलं यथा भिन्नं न भवति तस्याद्वितीयत्वान्नकारस्तूपरिष्टात्ततोऽत्रानुषज्यते तथैवाकामहततायाः समूलानर्थनिवृत्तेः सकाशात्परमानन्दो न भिद्यते समस्तानर्थनिवृत्त्युपलक्षितस्य ब्रह्मणो निरतिशयानन्दत्वस्य निर्धारितत्वात्तस्मादैक्यज्ञानफले नास्ति भेदशङ्केत्यर्थः ॥ ६४ ॥

स य एवंविदित्यादेरर्थमाह—अनेकेति। अनेकेष्वतिक्रान्तेषु जन्मसु ज्ञानसाधनानुष्ठानद्वारा क्षपितज्ञानोत्पत्तिप्रतिबन्धकः संसिद्धो लब्धज्ञानसामग्रीको मनुष्याणां सहस्रेषु कश्चिदेव योऽत्र संसारमण्डले यथोक्तार्थे सर्वानर्थरहिते २० निरतिशयानन्दे ब्रह्मात्मन्यहमस्मीति साक्षादेव वेदिता सम्भावितः सोऽस्मादनुभवारूढादाध्यात्मिकाद्देहादनेकानर्थकलुषितादाधिभौतिकादाधिदैविकाच्च सर्वस्मादेव कोशपञ्चकात्प्रेत्य ज्ञानबलात्तत्राभिमानं परित्यज्याभये निर्विशेषे स्वात्मनि प्रतिष्ठां प्राप्नोतीत्यर्थः ॥ ६५-६६ ॥

विद्वान्देहाभिमानं परित्यज्य किं करोतीत्यपेक्षायामाह—लोकादिति। एवंविदित्ययंशब्दो वाचको यस्य स विद्वानेवंविच्छब्दवाच्यो देहादभिमानतः स्वीकृतादध्यात्मादिभेदभिन्नात्तत्त्वज्ञानबलमवलम्ब्य समुत्क्रम्य तत्राभि- २५ मानमपबाध्यासङ्गोदासीनः स्थितः सर्वत्र वक्ष्यमाणोपसंक्रमणे शेषत्वेन कर्तेत्येवमभ्युपगन्तुं युक्तं सर्वत्रोपसंक्रमणकर्ता विद्वानेवेत्येतस्यार्थस्य व्याख्यानार्थमन्नमयमित्यादिवाक्यमित्यर्थः ॥ ६७ ॥

व्याख्यानप्रकारं प्रकटयति—गत्वेत्यादिना। अत्र सर्वत्रेत्थंभावे तृतीया। उत्क्रमणं कोशपञ्चकेऽभिमानापबाधः संक्रमणं कोशपञ्चकस्यैव बाध इति भेदः। पदार्थपरिशोधनावस्थायां प्रथमं विराडात्मानमात्मत्वेन प्राप्य तत्कार्यं पुत्रपौत्रादिकं सर्वं तन्मात्रत्वेनापबाध्य यथाऽन्नमयोऽस्मीत्यवतिष्ठते तथैवान्नमयमपि प्राणमयमात्रत्वेन ३० बाधित्वा प्राणमयमात्मरूपेण विद्वान्वर्तते प्राणमयस्यापि पुनरभ्यन्तरमात्मानं मनोमयं प्राप्य तेनाऽऽत्मना बाह्यं प्राणमयं स्वसामर्थ्यादेव जहाति यथा कल्पितः सर्पो रज्जुं प्राप्य तत्स्वभावसामर्थ्यादेव सर्पत्वं मुञ्चत्येवमेव पूर्वस्य मनोमयस्य विज्ञानमयात्मना प्रहाणं विज्ञानमयस्य च पूर्वस्याऽऽनन्दमयात्मनाऽवस्थानं तस्य चाऽऽनन्दमयस्य पुच्छब्रह्ममात्रत्वेन स्थितिरिति पदार्थविवेककुशलो निरूपयति। तथा निरूपणानन्तरं वाक्याद्वाक्यार्थं प्रतिपद्य कोशपञ्चकमपबाध्य निर्भये ब्रह्मणि तिष्ठतीत्यर्थः ॥ ६८ ॥

---

३५ १. अन्नसृष्ट्यादयो यतो भवन्ति तद्ब्रह्म भवेदित्यर्थः ।

तस्यापि ह्यन्तरात्मानमही रज्जुमिव स्वतः। मनोमयात्मना बाह्यमुपसंक्रामतीश्वरः॥
पूर्वपूर्वप्रहाणं स्यादुत्तरोत्तरगामिभिः॥६९॥
दृश्याद्दृश्यादिहीनेऽथ प्रतिष्ठां विन्दतेऽभयम्॥७०॥
योऽसावेवंविदित्युक्तः परस्मात्किमसौ भवेत्। स्वतो भिन्नोऽथ वाऽभिन्नो यदि वोभयलक्षणः॥७१॥
भेदे[1]श्रुतिविरोधः स्यादन्योऽसाविति निन्दनात्। कर्मकर्तृत्वमेकस्य दोषोऽभेदेऽपि विद्यते॥७२॥ ५
परस्य दुःखिता चैवं पराभावः प्रसज्यते। तस्मान्निर्धारणार्थोऽयं विचारः क्रियतेऽधुना॥७३॥
निश्चितं हि परिज्ञानं फलवत्स्यात्प्रसिद्धितः॥७४॥
नान्यस्यान्यात्मता यस्माद्ध्वंसे वाऽध्वंस एव वा। तस्मादनन्यो विज्ञेयः परस्मादात्मनो बुधः॥७५॥
अनन्यश्चेद्ब्रह्मविद्विद्वान्भूतत्वाद्भवतीति किम्। बाढं प्राप्तं परं ब्रह्म नानात्माऽऽप्नोति येन तत्॥७६॥
दशमाप्तिवदज्ञानात्स्वरूपादिव वर्ण्यते। विद्यया तदवाप्नोति यदनाप्तमविद्यया॥७७॥ १०
तमोहृत्यतिरेकेण नेह ग्रामाद्यवाप्तिवत्। तत्प्राप्तिसाधनं ज्ञानं ग्राममार्गप्रबोधवत्॥७८॥
इत्येवं चेन्न वैधर्म्यान्न हि तत्रोपदिश्यते। गन्तव्यविषयं ज्ञानं यथा सत्यादिलक्षणम्॥७९॥

वाक्यार्थज्ञानमुपसंहरति—दृश्येति॥ ६९-७०॥

स य एवंविदित्यादेरित्थं पदार्थव्याख्यानं कृत्वा विचारमवतारयति—योऽसाविति। ब्रह्मविद्ब्रह्मणः सकाशाद्भिन्नो वा स्यादभिन्नो वा भिन्नाभिन्नो वेति विमर्शनार्थः। स्वतः स्वभावादुपाधिपरामर्शमन्तरेणेति १५ यावत्॥ ७१॥

तत्त्वमस्यादिवाक्यविरोधो भेदनिन्दाश्रुतिविरोधश्चेति भेदपक्षे दोषं सूचयति—भेद इति। उपसंक्रमणमतिक्रमणं प्राप्तिर्वा द्विधाऽप्यानन्दमयं परमात्मानमुपादाय कर्मकर्तृत्वविरोधमभेदपक्षे दर्शयति—कर्मेति॥ ७२॥

जीवपरयोरभेदे जीवस्य संसारित्वात्परोऽपि संसारी स्यात्। ततश्च परासत्त्वमित्यभेदपक्षे दोषान्तरमाह—परस्येति। विद्वच्छब्देनाऽऽत्ममात्रमत्र गृह्यते। भेदाभेदपक्षे तु विरोधोऽतिस्फुटत्वान्नोद्भाव्यते। पक्षत्रयेऽपि दोषस्य २० सत्त्वाददुष्टपक्षनिर्धारणार्थं विचारः कर्तव्य इत्याह—तस्मादिति॥ ७३॥

अदुष्टपक्षनिर्धारणं किमर्थमित्याशङ्क्याऽऽह—निश्चितं हीति। प्रसिद्धितो निश्चितस्य ज्ञानस्य फलवत्ताया वृद्धव्यवहारे प्रसिद्धत्वादित्यर्थः॥ ७४॥

"ब्रह्म वेद ब्रह्मैव भवती"तिश्रवणादन्यो जीवो ज्ञानद्वारा ब्रह्म प्राप्नोतीत्यभ्युपगमाद्भेदपक्षे प्राप्ते सिद्धान्तमाह—नान्यस्येति। न हि नष्टस्यानष्टस्य वाऽन्यस्यान्यभावो युज्यते। घटे नष्टेऽनष्टे च पटभावानुपलम्भात्तस्मादात्मा २५ सदा ब्रह्मैव न ततोऽन्यो भवतीत्यर्थः॥ ७५॥

जीवस्य सदा ब्रह्मभावे "ब्रह्म वेद ब्रह्मैव भवती"तिश्रुतिरनुपपन्नेति शङ्कते—अनन्यश्चेदिति। तत्रानन्यत्वमन्यस्यान्यभावानुपपत्तेरेवाङ्गीकरोति—बाढमिति॥ ७६॥

शङ्कितश्रुतिविरोधं दृष्टान्तेन निराचष्टे—दशमेति। यथा दशमो माणवकः स्वस्वरूपादविद्यया विभक्तवद्भातीति तदवाप्तिर्ज्ञानादुच्यते तथा जीवोऽपि ब्रह्मस्वरूपादज्ञानाद्विभक्तवद्भातीति ज्ञानात्तद्भावो वर्ण्यते ३० शास्त्रेणेत्यर्थः। ब्रह्मण्यप्राप्तिरविद्याकृता विद्याकृता तन्निवृत्तिरेव प्राप्तिरित्युक्तमेव व्यक्तीकरोति—विद्ययेति॥ ७७॥

ग्रामादिप्राप्तिवद्ब्रह्मण्यपि प्राप्तिर्मुख्यैव किं न स्यादित्याशङ्क्य प्रत्यग्भूतत्वाद्ब्रह्मणस्तत्राज्ञाननिवृत्त्यतिरेकेण नास्ति प्राप्तिरित्याह—तमोहृतीति। यथा ग्रामस्य मार्गज्ञानं गमनद्वारेणैव प्राप्तिसाधनमेवं ब्रह्मज्ञानमपि स्वाभ्यासद्वारेणैव ब्रह्मप्राप्तिसाधनमिति ब्रह्मणि मुख्यावाप्तिः सिध्यतीति शङ्कते—तत्प्राप्तीति। उपदेशवैषम्योपन्यासेन परिहरति—न वैधर्म्यादिति। यथा सत्यज्ञानानन्तानन्दात्मकं ब्रह्म तत्त्वमसीतिप्राप्यं ब्रह्माधिकृत्य ज्ञानमुपदिश्यते ३५

१. बृ. १.४.१०।

कर्मापेक्षं परप्राप्तौ ज्ञानं स्यादिति चेन्न तत् । मुक्तौ न कर्मणः कार्यं यस्मादण्वपि विद्यते ॥८०॥
बुद्धं यस्मात्स्वतस्त्वमतः शुद्धं स्वतो भवेत् । अतो मुक्तं स्वतो ब्रह्म वद स्यात्कर्मणाऽत्र किम् ॥८१॥
स्रष्टृप्रवेष्टोश्चैकत्वादभिन्नः स्यात्परादबुधः । विपश्चिद्व्यतिरेकेण यदीशोऽन्यो न विद्यते ॥
ततः स्यादभयप्राप्तिर्द्वितीयाद्वै भयश्रुतेः ॥८२॥
५ द्वितीयं चेदविद्योत्थमेकं वस्तु स्वतो यदि । न स वेदैकधैवेति विभागोक्तिस्तदा भवेत् ॥८३॥
यदि तैमिरिकादन्यैर्द्वितीयो नेक्ष्यते शशी ॥८४॥
चन्द्र एक इति ज्ञानं तदा स्यात्पारमार्थिकम् । तद्गृह्यते द्वितीयं चेन्न सुषुप्तेऽग्रहः श्रुतेः ॥८५॥
न चेहान्यमनस्ता स्यात्सर्वेषामग्रहो यतः । अस्त्येवैतद्द्वितीयं चेद्ग्रहणात्स्वाप्नबोधयोः ॥८६॥
अविद्योत्थानतो नैवं तदा तद्भावभावतः । द्वयाबोधः सुषुप्तेऽपि स्वज्ञानादिति चेन्न तत् ॥
१० स्वाभाविकत्वात्तस्यापि निमित्तस्यानपेक्षणात् ॥८७॥
अन्यापेक्षं हि यद्रूपं न तत्तस्य स्वतो भवेत् । विक्रियाऽविक्रिया त्वस्य तत्त्वमन्यानपेक्षणात् ॥८८॥

न तथा दृष्टान्ते गन्तव्यं ग्रामं विषयीकृत्य ज्ञानमुपदिश्यमानं दृश्यते । तत्प्राप्तिमार्गस्तु तत्रोपदिश्यते तेन तत्र गमनद्वारा मुख्या प्राप्तिः । इह तु ज्ञानादज्ञाननिवृत्त्या प्राप्तिरौपचारिकीत्यर्थः ॥ ७८-७९ ॥

उपदेशवैषम्येऽपि ज्ञानस्य कर्मापेक्षस्य ब्रह्मप्राप्तिहेतुत्वात्तत्प्राप्तेर्मुख्यत्वसिद्धिरिति शङ्कते—**कर्मापेक्षमिति ।**
१५ मोक्षे कर्मकार्यस्य कस्यचिदपि वक्तुमशक्यत्वान्न तत्र कर्मापेक्षा ज्ञानस्येति दूषयति—**न तदिति** ॥ ८० ॥

चतुर्विधमपि कर्मकार्यं मुक्तौ नास्तीत्येतदेव साधयति—**बुद्धमिति** ॥ ८१ ॥

विद्वद्ब्रह्मणोर्भेदपक्षं निराकृत्याभेदपक्षे समर्थिते प्रमाणमाह—**स्रष्ट्रिति** । मोक्षान्यथानुपपत्त्याऽपि तयोरैक्यमास्थेयमित्याह—**विपश्चिदिति** ॥ ८२ ॥

अभेदस्य पारमार्थिकत्वं भेदस्य भ्रांतत्वमित्यभ्युपगमे सति "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति
२० न स वेदे"ति भेददर्शनं तस्याप्यविद्याकृतत्वेन भेदस्यावस्तुत्वोक्तिः "एकधैवानुद्रष्टव्यमि"त्यभेदविधानं चोपपद्यतेऽतोऽपि जीवपरयोरैक्यमभ्युपगन्तव्यमित्याह—**द्वितीयमिति** ॥ ८३ ॥

यथा चन्द्रैकत्वज्ञाने सत्यदर्शनाच्चन्द्रद्वित्वस्य भ्रान्तिदर्शनसिद्धत्वं तथा द्वैतं न कदाचिदपि न गृह्यते तस्मादभ्रान्तद्वैतमिति शङ्कते—**यदीति** । न हि निर्दष्टदृष्टिभिर्द्वितीयश्चन्द्रो दृश्यते तेन दोषजन्यभ्रान्तिविषयत्वाद्द्वितीयश्चन्द्रो मिथ्येति युक्तं चन्द्रैक्यज्ञानस्य निर्दोषकरणजन्यत्वेन सम्यक्त्वाच्चन्द्रैक्यं पारमार्थिकं न तथा द्वितीयं
२५ कदाचिन्न गृह्यते तस्माद्द्वैतस्य परमार्थत्वायोगादद्वैतस्यैव परमार्थतेत्यर्थः । न तावत्सुषुप्त्यवस्थायां द्वैतस्य ग्रहोऽस्ति "न तु तद्द्वितीयमस्ती"तिश्रुतेरतो द्वैतस्य कदाचिद्ग्रहेऽपि कदाचिदग्रहाद्व्यभिचाराद्युक्तं मिथ्यात्वमिति दूषयति—**न सुषुप्त इति** ॥ ८४-८५ ॥

सुषुप्ते विद्यमानस्यैव द्वैतस्यान्यमनस्कत्वादग्रहणं न त्वभावादित्याशङ्क्याऽऽह—**न चेति** । यदि सुषुप्ते द्वैतस्याग्रहणादसत्त्वं तर्हि जाग्रत्स्वप्नयोर्ग्रहणात्तस्य सत्त्वं किं न स्यादिति शङ्कते --**अस्त्येवेति** ॥ ८६ ॥

३० अज्ञोऽहमिति स्फुटतराविद्याप्रतिभाने द्वैतप्रतिभानात्तदभावे च तत्प्रतिभानाभावादविद्याकृतं द्वैतं न परमार्थतोऽस्तीति परिहरति—**अविद्येति** । यथाऽन्धकारावृतो घटादिर्विद्यमानोऽपि तदावृतत्वान्नोपलभ्यते तथा द्वैतमपि विद्यमानमेव सुषुप्त्यवस्थायामज्ञानावृतत्वादनुपलब्धमिति शङ्कते—**द्वयेति** । सौषुप्तस्याग्रहणस्य निमित्तनिरपेक्षत्वेन स्वभावतः सिद्धत्वान्न तत्र द्वैताग्रहणमावृतत्वप्रयुक्तमिति दूषयति—**न तदिति** ॥ ८७ ॥

किञ्च ग्रहणस्य विक्रियात्वेन हेतुकृतत्वादस्वाभाविकत्वात्तद्विषयस्यापि द्वैतस्य दृश्यत्वादेव रज्जुसर्पादिवत्
३५ कल्पितत्वात्तस्य सुषुप्ते ग्रहणाभावादविक्रियत्वमेवास्य स्वाभाविकं रूपमित्यभिप्रेत्याऽऽह --**अन्यापेक्षं हीति** ॥ ८८ ॥

स्वप्नवन्न सुषुप्तोऽतः स्वत एवाद्वयत्वतः । [1]द्रष्टुर्दृष्टेर्न लोपः स्यात्सत्यमेवं श्रुतेर्वचः ॥८९॥
आत्मनोऽन्यो भवेद्येषामीश्वरः कारणात्तथा । कार्यं भयानिवृत्तिः स्यादन्यहेतुत्वसंश्रयात् ॥९०॥
अन्यस्य भयहेतुत्वमधर्मापेक्षयेति चेत् । मैवं तस्यापि तुल्यत्वान्निवृत्तेः स्यादसम्भवः ॥९१॥
निर्निमित्तं भयं चेत्स्यान्न तस्यास्ति निवारणम् । ध्वंसेन वा निवृत्तिः स्यादात्मनो नेष्यते तथा ॥९२॥
एकत्वपक्षे त्वेतेषां दोषो नान्यतमो भवेत् । भयस्याज्ञानहेतुत्वात्तन्निवृत्तौ निवर्तते ॥९३॥ ५
अन्यहेतुः स्वतो वा स्याद्भयं नोभयथाऽपि हि । स्वातन्त्र्याभावादन्यस्मिन्स्वात्मन्यज्ञानं च नेष्यते ॥९४॥
अनिवर्त्य स्वमात्मानं न भयस्य निराक्रिया । निवृत्तावपि नैव स्यान्निवृत्त्यैव समाप्तितः ॥९५॥
अविद्यामात्रहेतौ तु सर्वमेतत्समञ्जसम् । तस्यामसत्यां तन्न स्यात्सत्यामेव हि भीर्यतः ॥९६॥
यदज्ञानाद्भयं यत्स्यात्तज्ज्ञानात्तत्कुतो भवेत् । रज्जुसर्पादिवत्तस्मादविद्यैव भयोद्भवः ॥९७॥

यथा स्वाप्नं रूपं मिथ्या तथा सौषुप्तमपि रूपं मिथ्यैवेति युक्तमवस्थावच्छिन्नत्वाविशेषादित्याशङ्क्याऽऽह— १० स्वप्नवदिति । अन्यापेक्षामन्तरेण सौषुप्तमात्मरूपं परमार्थतोऽद्वितीयत्वान्न स्वप्नतुल्यमित्यर्थः । विनाशमेव "अपीतो भवती"तिश्रवणादात्मैव सुषुप्ते नास्तीत्याशङ्क्य विनाशश्रुतेर्विशेषविज्ञानविनाशाभिप्रायत्वान्मैवमित्याह— द्रष्टुरिति ॥ ८९ ॥

एवं जीवेश्वरयोरभेदपक्षं प्रसाध्य भेदपक्षे दोषान्तरमाह—आत्मन इति । जीवेश्वरयोर्भेदे कार्यकारणयोश्च भिन्नत्वे भेदेन दृष्टादीश्वराज्जीवस्य भयं भवेदन्यस्य हेतोरुपलब्धस्य भयहेतुत्वाद् "द्वितीयाद्वै भयं भवती"त्यादि- १५ श्रुतेरित्यर्थः ॥ ९० ॥

ईश्वरस्यान्यत्वेऽपि सहायीभूताधर्माद्यभावान्न भयहेतुरिति शङ्कते—अन्यस्येति । सहकार्यभावादीश्वरस्य भयं प्रत्यकारणत्वमित्येव नोपपद्यते सहायीभूताधर्मादेरपि जीवगतस्य जीवत्वादौ कारणे सति सत्त्वस्य तुल्यत्वान्निवृत्तेर-सम्भवो यस्माद्भवतीति दूषयति—मैवमिति ॥ ९१ ॥

संसारभयस्य निमित्तनिरपेक्षत्वान्न तस्येश्वरकृतत्वमिति शङ्कते—निर्निमित्तमिति । तर्हि संसारभयं सदा २० स्यादिति दूषयति—न तस्येति । किञ्च स्वाभाविकं भयमात्मन्यभ्युपगम्यते चेत्तस्याऽऽत्मनिवृत्त्यैव निवृत्तिः स्यान्न चाऽऽत्मनो निवृत्तिर्वैदिकैरिष्यते तस्माद्भेदपक्षे मोक्षस्यैवानुपपत्तिरित्याह— ध्वंसेन वेति । वाशब्दश्चार्थे ॥ ९२ ॥

अभेदपक्षे यथोक्तसर्वदोषराहित्यमित्याह—एकत्वेति । सर्वदा संसारित्वं न कदाचिन्मुक्तत्वं बन्धहेतोर्मोक्ष-हेतोश्चाऽऽनर्थक्यं शास्त्रविरोधश्चेत्येतेषामिति यावत् । तत्र हेतुं सूचयति—भयस्येति ॥ ९३ ॥

किञ्च भेदपक्षे भयस्यान्यकृतत्वमात्मकृतत्वं वा ? इति विकल्प्योभयथाऽपि तन्निवृत्तिर्न सम्भवतीत्याह— २५ अन्येति । अन्यस्मिन्भयनिमित्ते स्वीकृते सत्यात्मनः स्वातन्त्र्याभावादन्यनिमित्तं संसारभयं सदा स्यादेवेत्यन्यहेतुत्व-पक्षे भयान्निवृत्तिं साधयति—स्वातन्त्र्येति । आत्महेतुत्वपक्षे तु भयस्याऽऽत्मनाशानङ्गीकारात्तत्कृतं भयं सदा सम्भाव्यत इत्याह—स्वात्मेति ॥ ९४ ॥

कुलालकृतस्य घटस्य कुलालनाशमन्तरेण नाशवदात्मकृतस्य भयस्याऽऽत्मनाशादृतेऽपि नाशः स्यादित्या-शङ्क्याऽऽत्मनो प्रति निरपेक्षहेतुत्वान्नैवमित्याह—अनिवर्त्येति । तर्हि स्वात्मनिवृत्त्या भयनिवृत्तिरित्याशङ्क्याऽऽत्मनो ३० निवृत्त्या भयनिवृत्तावपि निवृत्तिरूपेणैवाऽऽत्मनः समाप्तत्वाद्भयनिवृत्तिफलेन फलितत्वायोगान्नैतद्युक्तमित्याह— निवृत्ताविति ॥ ९५ ॥

त्वत्पक्षेऽपि यथोक्तं सर्वं समानमित्याशङ्क्यैकत्वपक्षे त्वेतेषामित्यत्रोक्तं स्मारयति—अविद्येति ॥ ९६ ॥

विदुषोऽपि भयदर्शनान्नाविद्याहेतुत्वं भयस्येत्याशङ्क्याऽऽह—यदज्ञानादिति । विदुषो भयस्य बाधितानु-वृत्त्या मानेऽपि वस्तुतस्तदसम्भवे फलितमाह—रज्जुसर्पेति ॥ ९७ ॥ ३५

१. बृ. ४.३.२३ ।

विद्याविद्यात्मकं ब्रह्म मतं चेन्न विरोधतः। पृथक्च दृश्यमानत्वादात्मनो घटरूपवत् ॥ ९८ ॥
प्रत्यक्षेण हि दृश्येते विद्याविद्ये मनोगते। न तयोरात्मधर्मत्वं तस्माच्च नामरूपयोः ॥ ९९ ॥
अन्तरा नामरूपे ये ब्रह्मबाह्ये तयोर्हि तत्। न स्तो ब्रह्मणि ते भानावुदयास्तमयाविव ॥१००॥
कर्मकर्तृकतैकस्य दोषः स्यादिति चेन्न तत्। संक्रान्तेर्ज्ञानमात्रत्वात्तद्धि भेदनिरासि नः ॥१०१॥
५ सुखदुःखादिसंबद्धमात्माऽऽत्मानं न वेत्ति चेत्। भवतो मुमुक्षुता कस्माद्धिसम्भादेतदुच्यताम् ॥१०२॥
जाग्रत्स्वप्नसुषुप्तेषु वस्तुवृत्तानुरोधतः। श्यामः सुखी न वेद्मीति वेत्त्यात्मानं प्रसिद्धितः ॥१०३॥
कार्यकारणहानाच्च न विभागः परात्मनि। अभावात्कर्मकर्त्रादेर्बोध एवावशिष्यते ॥१०४॥
कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे। कारकत्वमविद्योत्थं स्वतश्चाकारकात्मता ॥१०५॥
यद्धि यस्य स्वतो रूपं न तत्प्राप्तावपेक्षते। क्रियामन्यनिमित्तत्वादपेक्षा कर्त्रपह्नवे ॥१०६॥
१० नैवेहान्नमयात्मानं जलूकावत्परोऽञ्जसा। उपसंक्रामतीत्यस्माद्गौणी संक्रान्तिरिष्यते ॥१०७॥

आत्मन्यविद्यया भयप्रतीतिर्विद्यया च तन्निवृत्तिरित्यङ्गीकारे विद्याविद्ये च तत्र स्वीकृते स्यातामित्याशङ्क्य तयोरात्मनि स्वरूपत्वं धर्मत्वं वा ? इति विकल्प्याऽऽद्यमनूद्य दूषयति—**विद्येति**। तयोरात्मत्वाभावे हेत्वन्तरमाह—**पृथक् चेति** ॥ ९८ ॥

कल्पान्तरं प्रत्याह—**प्रत्यक्षेणेति**। विद्या कादाचित्कं ज्ञानमविद्या मिथ्याज्ञानमग्रहणं च तयोर्मनोनिष्ठत्वानु-
१५ भवात्तदुपादानभूतानाद्यनिर्वाच्याज्ञानगतत्वमेव साश्रययोर्विद्याविद्ययोरित्याह—**तस्मादिति**। नामरूपशब्देनानाद्यज्ञानमुच्यते ॥ ९९ ॥

नामरूपयोर्ब्रह्मणश्च मिथो विलक्षणत्वे प्रमाणमाह—**अन्तरेति**। ये नामरूपे ते ब्रह्मणः सकाशाद्बाह्ये विलक्षणे तयोश्च नामरूपयोस्तद्ब्रह्मान्तरा विलक्षणमित्यर्थः। विलक्षणत्वेऽपि नामरूपयोर्ब्रह्मणि सङ्गतिमाशङ्क्य असङ्गत्वश्रुतिविरोधान्नैवमित्याह—**न स्त इति** ॥ १०० ॥

२० यत्तु जीवब्रह्मणोरभेदश्चेदेतमानन्दमयमात्मानमुपसंक्रामतीत्यत्र कर्मकर्तृत्वविरोधः स्यादिति तदनूद्य दूषयति—**कर्मेति**। अत्र हि वाक्ये संक्रान्तेरहं ब्रह्मास्मीतिज्ञानमात्रत्वात्तस्य च ब्रह्मात्मन्यध्यस्तसकार्यविद्यानिवर्तकत्वात्प्राप्तायां विद्यायां कर्मकर्तृत्वविरोधाशङ्का नास्तीति दूषणमेव प्रपञ्चयति—**संक्रान्तेरिति** ॥ १०१ ॥

ब्रह्मात्मनि नित्यमुक्ते संसारस्यैवाभावात्कुतस्तन्निवृत्तिर्विद्याफलमित्याशङ्क्य ब्रह्मव्यतिरिक्तसंसार्यभावाद्ब्रह्मणः संसाराभावे मुमुक्षोरभावान्मोक्षशास्त्रानर्थक्यं स्यादित्याह—**सुखेति** ॥ १०२ ॥

२५ न केवलं मोक्षशास्त्रानुपपत्त्यैव ब्रह्मणि संसारसिद्धिः। किन्तु स्वानुभववशादपीत्याह—**जाग्रदिति**। वस्तुवृत्तानुरोधतः प्रसिद्धित इति सम्बन्धः। वस्तुनो वृत्तं स्वरूपभूतं चैतन्यं तदनुसारात्प्रसिद्धिः स्वानुभवस्तद्वशादिति यावत् ॥ १०३ ॥

ब्रह्मात्मन्युपपत्तेरनुभावाच्च संसारसमारोपमुक्त्वा कर्मकर्तृविरोधाभावे हेत्वन्तरमाह—**कार्येति**। आत्मनि कर्मकर्तृकारणादिविभागाभावे किमवशिष्टं भवतीत्याशङ्क्याऽऽह—**अभावादिति** ॥ १०४ ॥

३० किञ्च कूटस्थस्याऽऽत्मनः स्वाभाविकत्वात्कर्तृत्वादेरविद्याकृतत्वात्तन्निवृत्त्या निवृत्तेन कर्मकर्तृत्वविरोधाशङ्काऽस्तीत्याह—**कारकाणीति** ॥ १०५ ॥

आत्मरूपमेव कूटस्थत्वं क्रियापेक्षमित्याशङ्क्याऽऽह—**यद्धीति**। विक्रियायामुत्पत्त्यादिरूपायां क्रियाया निमित्तत्वादितिहेतुमाह—**अन्येति**। तर्हि त्वत्पक्षे कर्मशास्त्रमनर्थकमित्याशङ्क्य बुद्धिशुद्धिद्वारेण सर्वजगन्निर्माणकारणाज्ञानापनोदिज्ञानप्राप्तौ कर्मापेक्षेत्यवैयर्थ्यं कर्मकाण्डस्येत्याह—**अपेक्षेति** ॥ १०६ ॥

३५ किमित्युपसंक्रमणं गौण्या वृत्त्या ज्ञानमात्रमिति व्याख्यातं प्रसिद्धमेवोपसंक्रमणं कस्मान्न स्यादित्याशङ्क्याऽऽह—**नैवेति** ॥ १०७ ॥

बहिः प्रवृत्तेः संक्रान्तिः प्रत्यावृत्त्येति चेन्मतम् । मनोमयादिवन्नैवं विरुद्धा स्वात्मनि क्रिया ॥१०८॥
स्फुरन्ती न जलूकाऽपि स्वात्मानं स्वात्मनाऽञ्जसा। उपसंक्रामतीत्यत्र निर्भागत्वाच्चथाऽपि न ॥१०९॥
तस्मात्प्राप्तिर्न संक्रान्तिर्न च कोशात्मकर्तृका । पञ्चकोशातिरिक्तात्मकर्तृका परिशिष्यते ॥११०॥
कोशातिरिक्तरूपस्य सर्वान्तरतमात्मनः । अक्रियस्यैव संक्रान्तिर्नभोवत्स्यात्परात्मनः ॥१११॥
गुहाश्रयाभिसम्बन्धो योऽविद्याविभ्रमाद्भवेत् । आत्मज्ञानाद्भ्रमध्वस्तौ संक्रान्तिरिति गीरियम् ॥ ५
तस्मात्सत्यमनन्तं यत्सर्वदाऽविकलेक्षणम् । तदस्मीति प्रबोधार्थं बहु स्यामिति कल्प्यते ॥११३॥
पञ्चकोशातिवर्त्यात्मा ज्ञानभानूदयात्क्रमात् । जग्ध्वा पञ्चापि कोशांस्तान्निर्वात्यात्मनि दीपवत् ॥
तदेतस्मिन्यथोक्तेऽर्थे श्लोको मन्त्रोऽपि विद्यते । अशेषानन्दवल्ल्यर्थसारस्यास्य प्रकाशकः ॥११५॥

इत्यष्टमोऽनुवाकः

यथा मनो बुद्धिर्वा स्ववृत्तिद्वारेण विषयपर्यन्तं गत्वा तस्मात्प्रत्यावृत्य स्वात्मानमेवोपसंक्रामति तथाऽऽत्माऽपि १० मनोद्वारेण देहादौ बहिर्भूत्वा ततो निष्क्रम्याऽऽत्मानमेव प्रविशतीति मुख्या संक्रान्तिरत्र सम्भवतीति शङ्कते—बहिरिति । कर्मकर्तृभावस्यैकत्र विरुद्धत्वान्न हि तदिति दूषयति—नैवमिति ॥ १०८ ॥

विरोधमेव दृष्टान्तेन स्पष्टयति—स्फुरन्तीति । जलूकायाः सावयवत्वादेकेनांशेन संक्रमणे कर्तृत्वमंशान्तरेण कर्मत्वं चाविरुद्धमित्याशङ्कामङ्गीकृत्य नैवमात्मनि सम्भवति निरवयवत्वादित्याह—अत्रेति ॥ १०९ ॥

आत्मनि मुख्यसंक्रान्तेरतिक्रमणस्य प्राप्तेर्वा यथोक्तन्यायेनायुक्तत्वाद्वाक्यार्थज्ञानमेवात्र संक्रमणं न च १५ तत्कोशपञ्चककर्तृकं पञ्चानां कोशानामचेतनत्वाज्ज्ञानकर्तृत्वायोगादित्युपसंहरति—तस्मादिति । तर्हि किङ्कर्तृका यथोक्ता संक्रान्तिरित्याशङ्क्याऽऽह—पञ्चकोशेति । कार्यकारणात्मककोशपञ्चकव्यतिरिक्तकूटस्थचिन्मात्रब्रह्मकर्तृका संक्रान्तिरहं ब्रह्मास्मीतिज्ञानरूपा वाक्यकृता स्वीकृता न च कूटस्थस्याज्ञानमन्तरेण कर्तृत्वमित्यज्ञाने ज्ञानान्निवृत्ते तदुत्थं कर्तृत्वमपि निवृत्तमेवेत्यात्मनः स्वेन निर्विशेषात्मनाऽवस्थानसिद्धिरित्यर्थः ॥ ११० ॥

आकाशमवकाशं ददातीतिवदात्मनो ज्ञानकर्तृत्वं कूटस्थस्याज्ञानोत्थमास्थेयमिति साधयति—कोशेति॥१११॥ २०

आत्मनि संक्रमणमौपचारिकं न मुख्यमित्यत्रैव हेत्वन्तरमाह—गुहाश्रयेति । गुहा बुद्धिराश्रयो यस्य आभासस्य तद्वता साभासेन कोशपञ्चकेनाऽऽत्मनो यः सम्बन्धोऽविद्याकृतविभ्रमप्रयुक्तो भवति स पुनर्वाक्योत्थात्मज्ञानात्तदज्ञाननिवृत्त्या तदुत्थविभ्रमध्वस्तौ कोशपञ्चकातिक्रमणादात्मा ब्रह्मैव भवतीत्यतः संक्रान्तिरित्यौपचारिको व्यपदेश इत्यर्थः ॥ ११२ ॥

ब्रह्मात्मनि कर्तृत्वं वास्तवमेव सृष्टिश्रुतिवशादेष्टव्यमित्याशङ्क्य प्रदर्शितप्रकारेण ज्ञानोत्पत्त्यर्थत्वेन सृष्टि- २५ प्रवेशादेरारोपितत्वान्नैवमित्याह—तस्मादिति ॥ ११३ ॥

ज्ञानफलमिदानीमुपसंहरति—पञ्चकोशेति ॥ ११४ ॥

निरतिशयानन्दरूपं निःशेषानर्थनिवृत्त्युपलक्षितं ब्रह्म तदज्ञानादात्मा संसरति तज्ज्ञानाच्च मुक्तो भवतीत्यस्मिन्ब्राह्मणोक्तेऽर्थे "तदपि एष श्लोको भवती"ति मन्त्रमवतारयति—तदेतस्मिन्निति ॥ ११५ ॥

इत्यष्टमोऽनुवाकः ३०

## अथ ब्रह्मवल्ल्यां नवमोऽनुवाकः

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एत ँ ह वाव न तपति । किमह ँ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मान ँ स्पृणुते । उभे ह्येवैष एते आत्मान ँ स्पृणुते[1] । य एवं वेद । इत्युपनिषत् ।**

ब्रह्मविदिदमेकवि ँ शतिरन्नादन्नरसमयात्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छ ँ षड्वि ँ शतिः प्राणं यजुर्ऋक्सामा-
५ देशोऽथर्वाङ्गिरसः पुच्छं द्वावि ँ शतिर्यतः श्रद्धर्त ँ सत्यं योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो
ब्रह्म पुच्छं द्वावि ँ शतिरसन्नेवाष्टावि ँ शतिरसत्षोडश भीषाऽस्मादेकपञ्चाशद्यतः कुतश्चैकादश ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्ल्यां नवमोऽनुवाकः**

**यतो यस्मान्निर्विकल्पाद्यथोक्तलक्षणादद्वयानन्दादात्मनो वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानान्यप्राप्याप्रकाश्यैव निवर्तन्ते स्वसामर्थ्याद्-**
**१० धीयन्ते । मन इति प्रत्ययो विज्ञानम् । तच्च यत्राभिधानं प्रवृत्तमतीन्द्रियेऽप्यर्थे तदर्थे च प्रवर्तते प्रकाशनाय । यत्र च विज्ञानं तत्र वाचः प्रवृत्तिः । तस्मात्सहैव वाङ्मनसयोरभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र । तस्माद्ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो यस्मादप्रत्ययविषयादनभिधेयाददृश्यादिविशेषणात्सहैव मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते तं ब्रह्मण आनन्दं श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्याऽऽत्मभूतं**

### वनमाला

१५ "अदृश्येऽनात्म्ये" इत्यादिनिषेधश्रुतिमभिप्रेत्याह—**निर्विकल्पादिति** । सर्वविशेषरहितादित्यर्थः । "सत्यं ज्ञानमनन्तम्" इति लक्षणवाक्यमभिप्रेत्याह—**यथोक्तलक्षणादिति** । आनन्त्यविवरणपराम् "आत्मन आकाशः सम्भूतः" इति सृष्टिश्रुतिमभिप्रेत्याह—**अद्वयादिति** । यद्वा विशेष्यमाह—**अद्वयादिति** । ब्रह्मण इत्यर्थः । मन्त्रे "आनन्दं ब्रह्मणः" इति भेदनिर्देशः "राहोः शिरः" इतिवदौपचारिक इति मत्वाह—**आनन्दात्मन इति** । आनन्द-स्वरूपादित्यर्थः । "आनन्दादात्मनः" इति व्यस्तपाठेऽप्ययमेवार्थः। अभिधानानि वाचकपदानि । तेषां मुख्यविषयत्व-
२० माह—**द्रव्यादीति** । गुणादिसंग्रहार्थमादिग्रहणम् । सविशेषवस्तुविषयाणीति निष्कर्षः । ननु तेषां निर्विशेषे ब्रह्मणि प्राप्तेरप्रसक्तत्वात्कथं प्रतिषेध इत्याशङ्क्याह—**वस्तुसामान्यादिति** । वस्तुत्वसामान्यादित्यर्थः । नन्वप्रकाश्येत्यनुप-पन्नम् उपनिषच्छब्दैरवश्यं निर्विकल्पस्य ब्रह्मणः प्रकाशनीयत्वात् अन्यथा "तं त्वौपनिषदम्" इत्युपनिषत्प्रकाश्यत्व-श्रुतिविरोधप्रसङ्गादित्याशङ्क्य प्राप्तिनिषेधश्रुतेस्तात्पर्यमाह—**स्वसामर्थ्याद्धीयन्त इति** । सामर्थ्यं शक्तिः, तद्विषयत्व-मेवात्र निषिध्यते, न लक्षणाविषयत्वमपि; अतो न श्रुत्यन्तरविरोध इति भावः । मनसा सहाप्राप्येति सम्बन्धाद्ब्रह्मणि
२५ मनःप्रकाश्यत्वमपि निषिध्यते, स्वप्रकाशस्य तस्य मनःप्रकाश्यत्वायोगात् । तत्र सहशब्देन वाचां मनसश्च सहभाव उच्यते । तमुपपादयति—**मन इतीत्यादिना** । मन इति पदेन प्रत्ययोऽभिधीयते, स च प्रत्ययो ज्ञानसामान्यरूपो न भवति, किं तु वाच इत्यनेन समभिव्याहाराच्छब्दशक्तिजनितं विज्ञानं पर्यवस्यति । ततः किमत आह—**तच्चेति** । यत्र शब्दशक्तिविषयत्वं प्रथममेव प्रवृत्तमस्ति तत्र तदनु शब्दशक्तिजनितविज्ञानप्रकाश्यत्वमपि भवति; यत्र च तादृश-ज्ञानप्रकाश्यत्वं तत्र च शब्दशक्तिविषयत्वमप्यस्त्येवेति कृत्वा सहभाव उक्त इति निष्कर्षः। तदुक्तं वार्तिके—"उदपादि
३० च यच्छब्दैर्ज्ञानमाकारवद्धियः। स्वतो बुद्धं तदप्राप्य नाम्ना सह निवर्तते॥" इति। धियः अन्तःकरणस्य परिणामरूपं सप्रकारं यज्ज्ञानं शब्दैः शक्त्या उत्पादितम्, तदित्यर्थः । स्वतो बुद्धमित्यस्य स्वप्रकाशमित्यर्थः । **अतीन्द्रियेऽपीति** । जगत्कारणाद्यतीन्द्रियार्थेऽपीत्यर्थः । **तस्मादिति** । उक्तरीत्या सहैव प्रवृत्तिदर्शनादित्यर्थः । एवं वाङ्मनसयोः सहैव प्रवृत्तिमुक्त्वा निवृत्तिरपि सहैवेत्याह—**तस्मादित्यादिना** । **अप्रत्ययविषयादिति** । प्रत्ययविषयत्वायोग्यादित्यर्थः । **अनभिधेयादिति** । शब्दशक्त्ययोग्यादित्यर्थः । उभयत्र हेतुं सूचयति—**अदृश्यादिविशेषणादिति** । निर्विशेषत्वात्
३५ स्वप्रकाशत्वाच्चेत्यर्थः । **सर्वप्रकाशनसमर्थेनेति** । अग्नितप्तायःपिण्डवच्चैतन्यव्याप्तं वृत्तिज्ञानं समस्तस्य सविशेषस्य प्रकाशने समर्थमपि स्वप्रकाशब्रह्मप्रकाशने सामर्थ्याभावान्निवर्तत इति भावः । शब्दशक्तिजनितविज्ञानस्य निर्विशेष-ब्रह्मगोचरत्वयोग्यताराहित्यात्तदप्रकाश्यैव निवृत्तिरित्यपि मन्तव्यम् । अस्यानन्दस्य पारोक्ष्यवारणाय विद्वत्प्रत्यक्षत्व-

---

१. "उभे ह्येवैष एते आत्मानं स्पृणुते" इत्यत्र स्पृणुते = पश्यतीत्यर्थः। धातूनामनेकार्थत्वादिति सायणाचार्याः।

विषयविषयिसम्बन्धविनिर्मुक्तं स्वाभाविकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान्यथोक्तेन विधिना न बिभेति कुतश्चन निमित्ताभावात्। न हि तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति भिन्नं यतो बिभेति। अविद्यया यदोदरमन्तरं कुरुते। अथ तस्य भयं भवतीति ह्युक्तम्। विदुषश्चाविद्याकार्यस्य तैमिरिकदृष्टद्वितीयचन्द्रवन्नाशाद्भयनिमित्तस्य न बिभेति कुतश्चनेति। युज्यते। मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात्। तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति भयमात्रं प्रतिषिद्धमिहाद्वैतविषये न बिभेति कुतश्चनेति भयनिमित्तमेव प्रतिषिध्यते। ५

नन्वस्ति भयनिमित्तं साध्वकरणं पापक्रिया च। नैवम्। कथमित्युच्यते—एतं यथोक्तमेवंविदम्। ह वावेत्यवधारणार्थौ। न तपति नोद्वेजयति न सन्तापयति। कथं पुनः साध्वकरणं पापक्रिया च तपतीत्युच्यते—किं कस्मात्साधु शोभनं कर्म नाकरवं न कृतवानस्मीति पश्चात्सन्तापो भवत्यासन्ने मरणकाले। तथा किं कस्मात्पापं प्रतिषिद्धं कर्माकरवं कृतवानस्मीति च नरकपतनादिदुःखभयात्तापो भवति। ते एते साध्वकरणपापक्रिये एवमेनं न तपतो यथाऽविद्वांसं तपतः। १०

कस्मात्पुनर्विद्वांसं न तपत इत्युच्यते—स य एवंविद्वानेते साध्वसाधुनी तापहेतू इत्यात्मानं स्पृणुते प्रीणयति बलयति वा परमात्मभावेनोभे पश्यतीत्यर्थः। उभे पुण्यपापे हि यस्मात् एष विद्वानेते आत्मानमात्मरूपेणैव

वनमाला

माह—श्रोत्रियस्येति। अवृजिनत्वं पापराहित्यम्। आनन्दमीमांसावाक्यनिर्दिष्टश्रोत्रियनिरासायात्राकामहतत्वं निरङ्कुशमित्याशयेनाह—सर्वेषणेति। सातिशयानन्दवैलक्षण्यं प्रकृतानन्दस्य दर्शयति—विषयेति। विषयादिसम्बन्धजनितत्वाभावेऽपि गगनादेरिवोत्पत्तिमाशङ्क्याह—स्वाभाविकमिति। अनादिमित्यर्थः। अनादेरप्यविद्यादेरिव नाशमाशङ्क्याह—नित्यमिति। सर्वेषु शरीरेषु तस्यैक्यमाह—अविभक्तमिति। अत एवास्यानन्दस्य परमत्वमित्याशयेनाह—परमानन्दमिति। यथोक्तेनेति। अन्योऽन्तर आत्मान्योऽन्तर आत्मेत्याद्युक्तेन प्रकारेण यथोक्तमानन्दमात्मत्वेन साक्षात्कृतवानित्यर्थः। भयनिमित्ताभावात्कुतोऽपि न बिभेतीत्युक्तमेव विशदयति—न हीति। विदुषो भयनिमित्तं वस्त्वन्तरं नास्तीत्यत्र युक्तिमाह—अविद्ययेत्यादिना। ततः किम्? अत आह—विदुषस्त्विति। भयनिमित्तस्य अविद्याकार्यस्य नाशादिति सम्बन्धः। अधिष्ठानयाथात्म्यगोचरविद्यया अध्यस्तवस्तुनाशे दृष्टान्तमाह—तैमिरिकेति। तैमिरिकदृष्टस्य द्वितोयचन्द्रस्य चन्द्रैकत्वविद्यया नाशवदित्यर्थः। ननु विशुद्धब्रह्मप्रतिपादकोऽयं मन्त्रः कथमब्रह्मणि मनोमये उदाहृतः कथं वा तत्र भयनिमित्तनिषेधमकृत्वा भयमात्रनिषेधः कृत इत्याशङ्क्याह—मनोमये चेति। मनोमयशब्दवाच्यस्यास्मदादिमनसो ब्रह्मविज्ञानसाधनत्वात्तत्र मनसि ब्रह्मत्वमध्यारोप्य मनोमये चायं मन्त्र उदाहृत इति नोदाहरणानुपपत्तिरिति भावः। तत्स्तुत्यर्थमिति। मनोमयोपासनस्य ब्रह्मविद्याशेषत्वेन फलस्याविवक्षितत्वात्तदुपासनस्य साक्षाद्भयनिमित्तनिरसने सामर्थ्याभावाच्च मनोमयोपासनस्तुतये यत्र भयमात्रं निषिद्धमित्यर्थः। प्रकृत तद्वैषम्यमाह—इह त्विति। अद्वैते विद्याविषये ब्रह्मणि द्वैतावशेषासम्भवाद्भयनिमित्तनिषेध उपपद्यत इत्यर्थः। भयनिमित्तनिषेधमाक्षिपति—नन्वस्तीति। परिहरति—नैवमिति। विदुषः साध्वकरणं पापकरणं च भयकारणमस्तीत्येवं न वक्तव्यमित्यर्थः। तत्र हेतुं पृच्छति—कथमिति। श्रुत्या हेतुमाह—उच्यत इत्यादिना। यथोक्तमिति। "आनन्दं ब्रह्मणो विद्वान्" इत्यादिपूर्वग्रन्थे प्रकृतमित्यर्थः। कथं पुनरिति। साध्वकरणादिकं कथं सन्तापयत्सदेवं विदमेव न सन्तापयतीति प्रश्नार्थः। अहमेवमिति। अविदुषामासन्ने मरणकाले एवं श्रुत्युक्तप्रकारेण सन्तापो भवतीति योजना। एवमविदुषां पापकरणनिमित्तकोऽपि पश्चात्सन्तापो भवतोत्याह—तथेति। विदुषस्तदभावमाह—ते एते इति। एवंशब्दार्थमेव विवृणोति—यथेति। पुण्यपापयोरात्ममात्रत्वेन दर्शनं विदुषः सन्तापाभावे हेतुरिति प्रश्नपूर्वकमाह—कस्मात्पुनरित्यादिना। एते इति सर्वनाम्नः प्रकृतसाध्वकारणादिपरत्वं व्यावर्तयति—साध्वसाधुनी इति। तापहेतू इतीति इतिशब्दः प्रकारवचनः। अकरणकरणद्वारा तापहेतुत्वेनोक्ते इत्यर्थः। नन्वत्र एते आत्मानमिति सामानाधिकरण्यात्पुण्यपापयोरात्माभिन्नत्वं भाति, ततश्चात्माभिन्नत्वकृतं पुण्यपापयोः प्रीणनं बलनं वा वाक्यार्थः स्यात्; न च तत्सम्भवति, तयोः प्रीत्यादिमत्त्वायोगात्; न चात्मनः पुण्यपापाभिन्नत्वबोधनद्वारा तत्कृतं प्रीणनादिकमात्मनो भवतीति वाक्यार्थ इह विवक्षित इति वाच्यम्, आत्मनि तापककर्मात्मकत्वस्य प्रीत्यादिहेतुत्वासम्भवात्, तस्य प्रीतिबलनहेतुत्वोक्तावपि भयनिवृत्तिहेतुत्वानभिधानाच्चेत्याशङ्क्य विवक्षितं वाक्यार्थमाह—परमात्मभावेनोभे पश्यतीत्यर्थ इति। "स य एवं विद्वानेते आत्मानं स्पृणुते' इति वाक्योक्तं पुण्य- ४०

(margin line numbers: १५, २०, २५, ३०, ३५)

पुण्यपापे स्वेन विशेषरूपेण शून्ये कृत्वाऽऽत्मानं स्पृणुत एव। को? य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद तस्याऽऽत्मभावेन दृष्टे पुण्यपापे निर्वीर्ये अतापके जन्मान्तरारम्भके न भवत इतीयमेवं यथोक्ताऽस्यां वल्ल्यां ब्रह्मविद्योपनिषत्सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः। परं श्रेयोऽस्यां निषण्णमिति।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।

ॐ शान्तिः शान्तिः शान्तिः

५

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि द्वितीयब्रह्मवल्लीभाष्ये नवमोऽनुवाकः

आनन्दगिरिटीका

साध्वसाधुनी स्तः प्रकाशेते चेति सत्प्रकाशमात्रमात्मतत्त्वमेव तयोः स्वरूपं ततोऽतिरिक्तं यदर्थानर्थहेतुत्वं
१० नामविशेषरूपं तन्न वस्तु सत्प्रकाशान्यत्वेनासत्त्वादप्रकाशमानत्वाच्चेत्यभिप्रेत्याऽऽह—स्वेन विशेषरूपेणेति। आत्मैवाविद्यया साध्वसाधुरूपेण प्रतिपन्न आसीत्। इदानीं तु ये साध्वसाधुनी ममार्थानर्थहेतू बभूवतुस्ते आत्मैवेति ज्ञानेन स्वात्मानं साध्वसाधुकरणेन प्रीणयत्येव लोकदृष्ट्या निष्पद्यमाने पुण्यपापे दृष्ट्वा हृष्यति च विद्वान्न बिभेतीत्याह—स्पृणुत एवेति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
१५ ब्रह्मवल्ल्यां नवमोऽनुवाकः

वनमाला

पापयोरात्ममात्रत्वदर्शनमुत्तरवाक्येनानूद्य तस्य विदुषि तापाभावहेतुत्वं प्रतिपाद्यते हिशब्दयुक्तत्वादुत्तरवाक्यस्येत्याशयेनाह—उभे इत्यादिना। एवकारमात्मपदेन योजयति—आत्मस्वरूपेणैवेति। पश्यतीति शेषः। ननु ज्योतिष्टोमकलञ्जभक्षणादिलक्षणं कर्मास्ति प्रकाशत इत्यनुभवानुरोधात्पुण्यपापयोः सर्वानुगतः सच्चिदंश इतरव्यावृत्तो
२० जडांशश्चास्ति, तथा च चिज्जडोभयरूपयोस्तयोः कथं चिदेकरसात्मभावेन दर्शनमित्याशङ्क्याह—स्वेनेति। स्वीयं यद्विशेषरूपं जडांशः तेन हीने कृत्वा अनुसन्धायेत्यर्थः। आत्मानं स्पृणुत एवेति। पुण्यपापे चिदंशाभिप्रायेणात्मरूपेणैव पश्यतीत्यर्थः। एष एते उभे आत्मानमेव स्पृणुत इत्युक्तम्, तत्र एतच्छब्दार्थं पृच्छति—क इति। श्रुत्योत्तरमाह—य इति। एवमित्यस्य व्याख्यानम्—यथोक्तमिति। "सत्यं ज्ञानम्" इत्यादिमन्त्रब्राह्मणजातेन यथानिरूपितमित्यर्थः। यथोक्तं स्वरूपमेव संक्षिप्याह—अद्वैतमानन्दमिति। यः सर्वात्मकमानन्दरूपं ब्रह्मात्मत्वेन वेद स पुण्यपापे
२५ अप्यात्मस्वरूपेणैव पश्यतीत्यर्थः। तस्येत्यतः प्राक्तस्मादिति शेषः, हि यस्मादित्युपक्रमात्। ननु नास्तिकतमस्य मरणकाले सन्निहितेऽपि नास्ति साध्वकरणादिकृतः सन्तापः, तावता पारलौकिकं भयं तस्य परिहृतं न भवति; तथा सर्वात्मैकत्वदर्शिनः पुण्यपापयोरप्यात्मभावं पश्यतो मास्त्विदानीं भयम्, पारलौकिकं तु कर्मनिमित्तं भयं भविष्यतीत्यविज्ञातमेव; नेत्याह—निर्वीर्ये इति। भर्जितबीजवदिति भावः। निर्वीर्यत्वफलमाह—जन्मारम्भके न भवत इति। अतो न विदुषः पारलौकिकभयप्रसक्तिरित्यर्थः। इत्युपनिषदित्यस्यार्थमाह—इतीत्यादिना। इतिशब्द-
३० परामृष्टा यथोक्ता ब्रह्मविद्या उपनिषत्परमरहस्यम्, तच्च परमरहस्यमस्यां वल्ल्यां दर्शितमित्यन्वयः। परमरहस्यत्वे हेतुः—यस्मादेवं तस्मादिति। यस्माद्यथोक्ता विद्या एवं मुक्तिफला तस्मादित्यर्थः। इतरासां सर्वासां विद्यानां रहस्यभूतानामपि न मुक्तिफला तस्मादित्यर्थः। इतरासां सर्वासां विद्यानां रहस्यभूतानामपि न मुक्तिफलकत्वम्, अतो न परमत्वमिति भावः। उपनिषत्पदस्यार्थान्तराभिप्रायेणाह—परं श्रेय इति। अस्यां विद्यायां सत्यामस्य विदुषः परं श्रेयो ब्रह्मस्वरूपभूतम् उप सामीप्येन प्रत्यक्त्वेन निषण्णं नितरां स्थितं भवति यतः, अत इयं विद्या
३५ उपनिषदित्यर्थः। इतिशब्दो ब्रह्मवल्लीविवरणसमाप्त्यर्थः।

इति श्रीमत्स्वयंप्रकाशानन्दसरस्वतीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ वनमालाख्यायां तैत्तिरीयोपनिषद्भाष्यव्याख्यायां ब्रह्मवल्लीभाष्यव्याख्या समाप्ता

## अथ वार्तिके ब्रह्मवल्ल्यां नवमोऽनुवाकः

यतो वाचो निवर्तन्ते तद्ब्रह्मेति प्रतीयताम् ॥ १ ॥
शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसम्भवात् । शब्दार्थासम्भवं प्राह ह्यप्राप्येत्यादराच्छ्रुतिः ॥ २ ॥
तस्माल्लक्षणवाचीनि सत्यादीनि पुराऽब्रवम्[1] । विशेषणविशेष्याणां निषेधात्कोशशायिनाम् ॥ ३ ॥
निर्ममं निरहङ्कारं ब्रह्मैवाऽऽत्मेत्युपास्महे । द्रव्यादिविषये यानि प्रयुक्तानि प्रयोक्तृभिः ॥
। स्वार्थहेतोर्निवृत्त्यैव निवर्तन्ते वचांस्यतः ॥ ४ ॥ ५
न मावृयायिनो यस्मात्प्रत्यया बुद्धिकर्तृकाः । तन्निवृत्तौ निवर्तन्ते तस्माचो मनसा सह ॥ ५ ॥
यतो वाचोऽभिधानानि प्रयुक्तान्युपलब्धये । सर्वाण्यनभिधायैव निवर्तन्तेऽवबोध्य च ॥ ६ ॥
उदपादि च यच्छब्दैर्ज्ञानमाकारवद्धियः । स्वतो बुद्धं तदप्राप्य नाम्ना सह निवर्तते ॥ ७ ॥
माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति । सुषुप्त इव निद्राया दुर्बलत्वाच्च बाध्यते ॥ ८ ॥
दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः । शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥ ९ ॥ १०

शब्दातिरिक्तप्रमाणागम्यं ब्रह्माहमस्मीति प्रतिपत्तव्यमित्यस्मिन्नर्थे यत इत्यादिवाक्यमाकाङ्क्षां पूरयन् योजयति—यत इति ॥ १ ॥

अप्राप्येत्यत्र विवक्षितमर्थं कथयति—शब्दप्रवृत्तीति । षष्ठीगुणक्रियाजातिरूढयः शब्दप्रवृत्तिहेतवः । शब्दार्थासम्भवः । शब्दवाच्यत्वासम्भवः ॥ २ ॥

कथं तर्हि ब्रह्मणः शब्दप्रमाणकत्वमित्याशङ्क्योपक्रमे दर्शितं स्मारयति—तस्मादिति । वाच्यत्वा- १५
सम्भवादिति यावत् ॥ ३ ॥

लक्षणावृत्त्या बोधकशब्दवशादुत्पन्नज्ञानात्प्रत्यक्त्वेनैव ब्रह्मप्रतिपत्तिरिति विशेषं दर्शयति—निर्ममिति । यत इत्यादिवाक्यस्यार्थं पूर्वोक्तमुपसंहरति—द्रव्यादीति । यानि लोके द्रव्यगुणाद्यनात्मविषये श्रोतृबुद्धिसिद्ध्यर्थं प्रयोक्तृभिर्वृद्धैर्वचांसि प्रयुक्तानि प्रतीयन्ते तानि स्वार्थे प्रवृत्तिहेतोः षष्ठ्यादेर्निवृत्त्यैव ब्रह्मणो निवर्तन्ते तस्मान्न ब्रह्म वाच्यतेत्यर्थः ॥ ४ ॥ २०

मनसा सहेतिभागस्यार्थमाह—नेत्यादिना । प्रत्यया विपरिणामा बुद्धिकर्तृकाः सर्वे बुद्धितद्वृत्तिसाक्षिणि मातरि यस्माद्गन्तुं न पारयन्ति तस्मात्तेषां प्रत्ययानां साक्षिणः सकाशान्निवृत्तौ तज्जनकाः शब्दाः स्वकार्य-भूतैर्मनःशब्दितैस्तैरेव प्रत्ययैः सह निवर्तन्ते । अतः शब्दतज्ज्ञानयोरविषयो ब्रह्मेत्यर्थः ॥ ५ ॥

तर्हि कुतो ब्रह्मणः शास्त्रप्रमाणकत्वमित्याशङ्क्य लक्षणावृत्त्या ब्रह्मणि शास्त्रस्य बोधकत्वमित्युक्तं स्मारयति—यत इति । वाचकत्वाभावेऽपि लक्षणया बोधमाधायैव निवृत्तेर्न शब्दप्रमाणकत्वहानिरिति शेषः ॥ ६ ॥ २५

ज्ञानेन सह शब्दानां निवृत्तिमुक्त्वा शब्देन सह ज्ञानस्य निवृत्तिं दर्शयति—उदपादिति ॥ ७ ॥

ब्रह्मणः शब्दतज्जन्यज्ञानाविषयत्वे कथं तद्गताविद्यानिवर्तकत्वं शब्दस्य सिध्यतीत्याशङ्क्याऽऽह—माहात्म्यमिति । तत्त्वमस्यादिवाक्यस्याऽऽत्मविषयत्वमन्तरेण तद्गताविद्यानिवर्तकत्वे दृष्टान्तमाह—सुषुप्त इति । यथा सुषुप्ते पुरुषे देवदत्तोत्तिष्ठेत्यादिस्तद्बोधकः शब्दस्तविषयीकुर्वन्नेव तद्गतनिद्राया निवर्तको दृश्यते तथाऽत्रा-पीत्यर्थः ॥ ८ ॥ ३०

अविद्याया दुर्बलत्वाच्च प्रत्यगात्मनि शब्दोत्थविद्या तद्बाधिकेत्याह—दुर्बलत्वादिति । दार्ष्टान्तिकं प्रपञ्च-यति—दुर्बलत्वादिति । बोधैकरसस्याऽऽत्मत्वात्तत्राविद्याया दुस्थत्वाद्विषमन्त्रादिषु दृष्टत्वादेव शब्दसामर्थ्यस्य अचिन्त्यत्वादात्मनो विषयीकरणमन्तरेण तदाकारज्ञानोदयमात्रेण तत्राविद्यां शब्दो निवर्तयतीत्यर्थः ॥ ९ ॥

---

१. ब्रह्म० अनु० १, श्लो० ५० ।

अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥१०॥
जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो वचसाऽज्ञाने ब्रह्मास्मीति भवेन्मतिः ॥११॥
नाभेदः क्रिययोरत्र क्रियातत्फलभेदतः । किं पूर्वमिति चोद्यस्य नात्रातः सम्भवो भवेत् ॥१२॥
अविद्याघातिनः शब्दादहं ब्रह्मेतिधीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥१३॥
५ अवशिष्टं स्वतो बुद्धं शुद्धं मुक्तं ततो भवेत् । नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥१४॥
अलौकिकत्वाद्बोधस्य स्वतश्चावगमात्मनः । बोध्ये हि लौकिकेऽपेक्षा परतोऽवगतौ तथा ॥१५॥
नद्यास्तीरे फलानीव प्रत्यक्षाद्यनपेक्षतः । किमिवेहान्यमानेषु तवापेक्षाऽभिधाश्रुतेः ॥१६॥
प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा । यत्सानिध्यात्प्रसिध्यन्ति तत्सिद्धौ किमपेक्ष्यते ॥१७॥
जाग्रत्स्वप्नसुषुप्तेषु घटोऽयमितिसंविदः । व्यवधानं न चेहास्ति तद्भावाभावसाक्षितः ॥१८॥
१० इदमेवमिदं नैवमितिबुद्धिर्विभागभाक् । अनात्मिकाऽऽत्मवत्यत्र येनासौ किमपेक्षते ॥१९॥

सुषुप्तदृष्टान्तं पूर्वोपदिष्टं प्रपञ्चयति—अगृहीत्वैवेति । सुषुप्ते हि स्थाने पार्श्वस्थैर्बोधिताः सुषुप्तास्तत्काले शब्दार्थयोः सम्बन्धं पूर्वविदितमपि स्मरणेनाप्रतिपद्यैव शब्दोत्थज्ञानान्निद्रां परित्यज्योत्तिष्ठन्तीत्यर्थः ॥ १० ॥

सुषुप्तिकाले सम्बन्धास्मरणे शब्दास्मरणं कारणमाह—जाग्रद्वदिति । यथा सुषुप्तिकाले सम्बन्धस्मरणमन्तरेण फलवती शब्दार्थप्रतिपत्तिर्दृश्यते तथाऽखण्डैकरसवाक्यार्थान्वयित्वमाद्यर्थे सम्बन्धग्रहणादृत एव शबले
१५ त्वमाद्यर्थे शक्तिग्रहणमात्रेण लक्षणावृत्त्या प्रत्यग्भूते ब्रह्मण्यविषये शब्दो बुद्धिं जनयति तया बुद्ध्या ध्वस्ते सत्यज्ञाने ब्रह्माहमस्मीत्यनुभवो भवतीत्याह—ध्वस्त इति ॥ ११ ॥

ज्ञानस्य कारणत्वादज्ञानध्वंसस्य कार्यत्वात्कार्यकारणयोश्च पूर्वापरीभावस्य व्यवस्थितत्वाच्चोद्याभासस्य निरवकाशत्वमित्याह—नेत्यादिना ॥ १२ ॥

ज्ञानस्याज्ञाननिवर्तकत्वेऽपि निवर्तकान्तरं तस्य मृग्यमित्याशङ्क्याऽऽह—अविद्येति ॥ १३ ॥

२० सकार्याविद्यानिवृत्तौ किमवशिष्यते तदाह—अवशिष्टमिति । यथोक्तस्य वस्तुनोऽवशिष्टत्वे तत्र नियोगभावनयोरन्यतरापेक्षा मानान्तरापेक्षा वा नावतरतीति विचारान्तरं प्रस्तौति—नात इति । भावनाशब्देन नियोगोऽपि गृह्यते नित्यत्वादुक्तस्य मुक्तिरूपस्य वस्तुनो नियोगभावनयोरपेक्षा न युक्ता बुद्धत्वान्मानान्तरं प्रत्यपि नापेक्षा तत्र सिध्यतीत्यर्थः ॥ १४ ॥

मानान्तरायोग्यत्वाच्चोक्ते वस्तुनि तदपेक्षा नास्तीत्याह—अलौकिकत्वादिति । तत्रैव हेत्वन्तरं पूर्वोक्तं
२५ स्मारयति—स्वतश्चेति । मानान्तरापेक्षा तर्हि कुत्रेत्याशङ्क्य मानान्तरयोग्ये स्वप्रकाशत्वरहिते च तदपेक्षेत्याह—बोध्ये हीति ॥ १५ ॥

उक्तस्य वस्तुनो मानन्तरापेक्षाभावं व्यतिरेकदृष्टान्तेन स्फोरयति—नद्या इति । यथा "नद्यास्तीरे फलानि सन्ती"ति लौकिकाभिधाश्रुतेराप्तप्रयुक्ताया मूलप्रमाणापेक्षा दृश्यते न तथा तत्त्वमस्याद्यभिधाश्रुतेरन्यमानेषु तवापेक्षा युक्ता तदर्थे प्रत्यक्षाद्यपेक्षाया वक्तुमशक्यत्वादतो वस्तु तन्मानं चानपेक्षमित्यर्थः ॥ १६ ॥

३० किञ्च सर्वसाधकत्वात्पूर्वोक्तस्य वस्तुनो नास्ति मानान्तरापेक्षत्वमित्याह—प्रमाता चेति ॥ १७ ॥

यथा घटोऽयमितिसंविदो देशकालज्ञानबुद्धिवृत्तिलक्षणं व्यवधानमस्ति न तथा जागरिताद्यवस्थात्रये प्रत्यगात्मनः सिद्धौ किञ्चिद्व्यवधानमुपलभ्यतेऽतो व्यवधानभावाभावसाक्षित्वादात्मनः सदाभानान्न तत्र मानान्तरापेक्षेत्याह—जाग्रदिति ॥ १८ ॥

किञ्चेदं कर्तव्यमिदं न कर्तव्यमित्येवंप्रकारा बुद्धिर्भागभागिनी स्वारस्येन स्वरूपशून्या येन चिदात्मना
३५ स्वरूपवत्यालक्ष्यते नासावात्मा भावनां नियोगं मानान्तरं वा किञ्चिदपेक्षितुं क्षमते तस्य सर्वप्रकारबुद्धिसत्ताप्रदत्वादित्याह—इदमिति ॥ १९ ॥

कर्त्रादिव्यापृतेः पूर्वमसङ्कीर्णं उपाधिभिः। अविक्षिप्तो ह्यसंसुप्तोऽनुभवः किमपेक्षते ॥२०॥
अभिधेयं न यद्वस्तु प्रत्ययश्च न ढौकते। नियुक्तोऽपि नियोगेन कथं तद्द्रष्टुमर्हति ॥२१॥
अपि मानान्तरप्राप्तं वस्तुवृत्तं निवर्तयेत्। नियोगार्थानुरोधेन यदि वस्त्ववबोध्यते ॥२२॥
भाव्यतेऽसन्नपीहार्थः प्रसिद्धेर्लोकवह्निवत्। ब्रह्मणस्त्वप्रसिद्धत्वात्तथाऽप्यत्र सुदुर्लभम् ॥२३॥
क्रियतेऽलौकिकोऽप्यर्थः पदार्थान्वयरूपतः। अवाक्यार्थात्मकं ब्रह्म तथाऽप्यत्र सुदुष्करम् ॥२४॥ ५
प्रमाणमप्रमाणं च प्रमाभासस्तथैव च। कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥२५॥
प्रमाण्यमेतत्पृष्ठेन कस्मान्नेत्यभिधाश्रुतिः। नियोगस्यापि मानत्वं नानापेक्ष्य प्रमामिमाम् ॥२६॥
पश्येदात्मानमित्यादि वाक्यं यत्स्याद्विधायकम्। ज्ञानकर्तव्यतायां तन्नियोज्यपुरुषं प्रति ॥२७॥
स्वव्यापारेऽनपेक्ष्यैव वस्तुवृत्तं वचो यतः। नियुङ्क्ते पुरुषं तस्माद्वस्तुवृत्तं सुदुर्लभम् ॥२८॥
स्वशक्त्यननुरूपं चेत्कार्यं वाक्यशतैरपि। नियुक्तोऽपि न तत्सिद्धावलं शक्ये स हीश्वरः ॥२९॥ १०

कर्त्रादिकारकव्यापारात्पूर्वमेव स्वापादावात्मनः सद्भावोपलब्धेश्च न तत्सिद्धौ नियोगभावनामानान्तरेष्वपेक्षाऽस्तीत्याह—कर्त्रादीति ॥ २० ॥

किञ्चाऽऽत्मनो नियोगापेक्षा न स्वसत्तासिद्धये युक्ता तदीयसत्ताया नित्यत्वान्न च तद्दर्शनाय नियोगापेक्षा सम्भवतीत्याह—अभिधेयमिति ॥ २१ ॥

अपि च वैधज्ञानानुरोधेन यदि वस्तुसिद्धिरिष्यते तदा तत्त्वमस्यादिवाक्यं द्रष्टव्यादिवाक्यपेक्षया मानान्तरं १५ तेनावगतं यत्प्रत्यग्भूतं ब्रह्म तदयं वादी निराकुर्यान्नियोगानुरोधेन वस्तुबोधने तत्त्वमस्यादिवाक्यस्यापि नियोगसिद्धावेवोपक्षीणत्वादन्यपरस्य प्रत्यक्षादिविरोधे वस्तुनि मानत्वानुपपत्तेरित्याह—अपि मानान्तरेति ॥ २२ ॥

ब्रह्मज्ञाने विध्यसम्भवे हेत्वन्तरमाह—भाव्यत इति। यद्यप्यसन्नपि द्युलोकस्याग्नित्वलक्षणोऽर्थो व्यवहारभूमौ "असौ वाव लोको गौतमाग्निरि"ति श्रुत्या भाव्यते द्युलोकोऽग्निश्चेति पदार्थयोरत्र प्रसिद्धत्वात्तथाऽपि ब्रह्मणोऽभिप्रेतस्य नित्यशुद्धत्वादिलक्षणस्य लोकवदग्निवच्चाप्रसिद्धत्वादत्र ब्रह्मज्ञाने विधानमतिदुर्लभमनुपपन्न- २० मित्यर्थः ॥ २३ ॥

अतश्च ब्रह्मज्ञानं विधातुमशक्यमित्याह—क्रियत इति। यद्यपि नियोगो भावना वेत्यलौकिकोऽप्यर्थः कर्तुं शक्यते पदार्थान्वयद्वारा संसृष्टरूपत्वात्तथाऽपि ब्रह्मावाक्यार्थात्मकमखण्डैकरसमतो न तज्ज्ञाने विधानं सुकरमित्यर्थः ॥ २४ ॥

अवाक्यार्थात्मकं ब्रह्मेत्ययुक्तं ब्रह्मणःऽसम्भावितत्वादित्याशङ्क्याऽऽह—प्रमाणमिति। प्रमाणादिसाधकत्वेन २५ नित्यदृष्टिस्वभावस्य ब्रह्मणः सिद्धत्वात्तदसम्भावना नास्तीत्यर्थः ॥ २५ ॥

वेदान्तेषु ज्ञाननियोगानङ्गीकारे कथं प्रामाण्यमित्याशङ्क्य पूर्वोक्तकूटस्थानुभवस्थिताविद्यातत्कार्यनिवर्तकज्ञानकारणत्वेन वेदान्तप्रामाण्यं नियोगमन्तरेणाविरुद्धं सिध्यतीत्याह—प्रामाण्यमिति। किञ्च नियोगस्य संसर्गाक्षेपकत्वेन तत्प्रामाण्यं त्वयेष्यते न च जडस्य नियोगस्य यथोक्तमनुभवमन्तरेण मानत्वमनुमन्तुं शक्यते तस्मान्नियोगसाधनत्वेन प्रागुक्तानुभवस्याभ्युपगन्तव्यत्वादलं ज्ञाननियोगाङ्गीकारेणेत्यभिप्रेत्याऽऽह—नियोगस्येति ॥ २६ ॥ ३०

किञ्च वेदान्तेषु विध्यभ्युपगमे विधिवाक्याद्वाक्यान्तराद्वा ब्रह्मसिद्धिरिति विकल्प्य विधायकस्य वाक्यस्य विधावेव चरितार्थत्वान्न वस्तुनि मानतेत्याद्यं दूषयति—पश्येदिति ॥ २७ ॥

पुरुषव्यापारे वस्तुवृत्तमनपेक्ष्यैव पुरुषस्य प्रवर्तकत्वाद्विधायकं वाक्यं वस्तुनः साधकं न भवतीत्येतदेव साधयति—स्वव्यापार इति ॥ २८ ॥

ज्ञानस्य विधेयत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह—स्वशक्तीति। यद्धि ज्ञानाख्यं कार्यं पुरुषस्य कर्तुंम- ३५ कर्तुमन्यथा कर्तुमशक्यं तत्र द्रष्टव्यादिवाक्यैरनेकैर्नियुक्तोऽपि पुरुषो न ज्ञानसिद्धौ स्वातन्त्र्यमवलम्बते। ज्ञानस्य

अभिधाश्रुतितः सिद्धौ व्यापृच्छेत प्रयत्नतः । विधिवाक्यानुगामित्वान्नार्थस्पृक्स्यात्स्वतन्त्रतः ॥३०॥
स्वमांसान्यपि खादन्ति नियोगानतिलङ्घिनः ॥३१॥
जहत्यपि प्रियान्प्राणाञ्शक्यार्थत्वात्ततोऽपि हि । अशक्ये विनियुक्तोऽपि कृष्णलाञ्श्रपयेदिति ॥३२॥
सर्वात्मनाऽप्यसौ कुर्वन्कुर्यात्तस्करकन्दुवत् ॥३३॥
५ न चोपासान्तराधीनो ब्रह्मज्ञानोदयो भवेत् । [1]तं यथा [2]तं तमेवेति न्यायद्वन्धश्रुतेः स्मृतेः ॥३४॥
नार्थस्पृग्भावना चेत्स्याद्ब्रह्मधीजन्मने न सा । स्वभ्यस्ता राजती नो धीः शुक्तिकाज्ञानजन्मने ॥३५॥
द्रष्टव्यश्चेद्धवेदात्मा स्यान्नियोगस्तदाऽऽत्मनि । निषेधाद्दर्शनस्येह न नियोगोऽस्त्यतः परे ॥३६॥
नियोगानुप्रवेशेन वस्तुतत्त्वं प्रबोध्यते । न हि विध्यनपेक्षस्य प्रामाण्यमनुवादिनः ॥३७॥
नैवं यतः क्रियैवेह चोदनाभिर्विधीयते । स्वव्यापारे यतस्ताभिर्नियोक्तुं शक्यते पुमान् ॥
१० द्रव्यस्वरूपेऽसाध्यत्वात्कथं ताभिः प्रवर्त्यते ॥३८॥

प्रमाणवस्तुपरतन्त्रस्य पुरुषाधीनत्वाभावाद्यागादौ हि पुरुषः स्वाधीने स्वतन्त्रो भवति तस्माद्विधिघटनायोग्यत्वाद् ज्ञानस्य न तत्र विधिरस्तीत्यर्थः ॥ २९ ॥

तत्त्वमस्यादिवाक्याद्विधिवाक्यातिरिक्ताद्वस्तुसिद्धिरिति द्वितीयं कल्पमुत्थापयति––अभिधेति । अभिधा-श्रुतेरपि विध्यनुसारित्वान्न स्वातन्त्र्येण वस्तुसाधकत्वमिति दूषयति––विधीति ॥ ३० ॥

१५ ज्ञानस्य पुरुषतन्त्रत्वाभावात्तत्कर्तुं पुरुषो न शक्नोतीत्यत्र वैधर्म्यदृष्टान्तमाह––स्वमांसानीति । यथा "कृष्णलाञ्श्रपयेदि"ति विक्लित्तिफलके कृष्णलपाके सर्वथैवाशक्ये नियुक्तोऽपि बुद्धिपूर्वकारी न प्रवर्तते तथा ततोऽपि कृष्णलपाकादशक्ये ज्ञाने नियुक्तो विवेकी तदशक्यत्वबुद्ध्या नैव तत्र प्रवर्तितुं प्रभवति ततः स्वानधीने ज्ञाने न युक्तो विधिरिति साधर्म्यदृष्टान्तेन स्पष्टयति––ततोऽपीति ॥ ३१-३२ ॥

यदि पुनः सर्वात्मना कर्तुमशक्यमपि ज्ञानमसौ नियोज्यो नियोगबलादेव कुर्यात्तदाऽयं सामर्थ्यमनपेक्ष्य २० नियोगमेवानुरुध्य कुर्वन्केवलक्लेशभागी भूत्वा स्वापेक्षितं पुरुषार्थं न प्रतिपद्यत इति सदृष्टान्तमाह––सर्वात्मनेति । कश्चिच्चौर्यं कृत्वा स्वकीयचौर्यसंवरणार्थं सन्निहितं कन्दुगृहं प्रविष्टो गृहस्वामिना ( कन्दुना ) कन्दुकर्मणि नियुक्तस्तत्कर्मण्यशक्ये विनियुक्तत्वात्तत्कुर्वन्राजपुरुषैस्तस्करमन्वेषमाणैस्तत्र झटिति समागतैरुक्ते कर्मण्यकुशलतां समालोच्य तस्करोऽयमिति ज्ञात्वा गृहीतो व्यर्थक्लेशभागी यथा तस्करकन्दुः संवृत्तस्तथा ब्रह्मज्ञाने नियुक्तोऽपि तस्य कर्तुमशक्यत्वात्तत्कुर्वन्व्यर्थक्लेशभागी भवेदित्यर्थः ॥ ३३ ॥

२५ ज्ञाने विध्यभावेऽपि वैधोपासनातो ज्ञानं भवतीत्याशङ्क्य श्रुतिस्मृतिभ्यामुपासनस्य ज्ञानातिरिक्तफल-श्रवणान्नैवमित्याह––न चेति । न्यायशब्देन तत्क्रतुन्यायो गृह्यते ॥ ३४ ॥

किञ्चोपासनस्यार्थसाधकत्वे ज्ञानानतिरेकादर्थासंस्पर्शित्वं वक्तव्यं ततश्च ज्ञानसाधनत्वासिद्धिरित्याह–– नार्थेति । उपासनस्यार्थास्पर्शित्वेऽप्यभ्यासप्रकर्षाद्भवति सम्यग्धीहेतुतेत्याशङ्क्याऽऽह––स्वभ्यस्तेति ॥ ३५ ॥

द्रष्टव्यश्रुतेरात्मज्ञाने तदुपासने वा नियोगः स्यादित्याशङ्क्य न दृष्टेरित्यादिना दर्शनादिविषयत्व-३० निषेधान्नाऽऽत्मज्ञाने तदुपासने वा नियोगोऽस्तीत्याह––द्रष्टव्यश्चेदिति । आत्मनीत्यात्मज्ञाने तदुपासने वेत्यर्थः । दर्शनस्येत्युपासनस्याप्युपलक्षणमतः परे दर्शनादेरगोचरे वस्तुनि दर्शनादौ न नियोगोऽस्तीत्यर्थः ॥ ३६ ॥

नियोगानभ्युपगमे वेदान्तानामनुवादकत्वेनाप्रामाण्यप्रसङ्गान्नियोगद्वारैव तेषां वस्तुबोधकत्वमिति शङ्कते–– नियोगेति ॥ ३७ ॥

किं वेदान्तेष्वात्मनि तज्ज्ञाने वा विधिर्विवक्ष्यते ? नाऽऽद्य इत्याह––नैवमिति । विधिव्यवहारभूमौ क्रियाया

३५ १. श. १०.५.२.२० । २. गी. ८.६ ।

न चापीहाऽऽत्मविज्ञानं चोदनाभिर्विधीयते । स्वाध्यायोऽध्येतव्य इति ह्येतस्मात्तस्य सिद्धितः ॥३९॥
कर्मावबोधो न यथा नियोगान्तरमीक्षते । तथैवाऽऽत्मावबोधोऽपि न नियोगान्तराद्भवेत् ॥४०॥
स्यादेतदात्मबोधस्य नियोगविरहाद्यदि । पुमर्थकारिता पुंभिर्लभ्यते न तु लभ्यते ॥४१॥
नियोगैकाधिगम्यत्वाज्ज्ञानकार्यस्य नान्यतः । प्रमान्तरादिदं सिध्येन्नापि स्यादभिधानतः ॥४२॥
नैतदेवं यतो नेह ज्ञेयार्थव्याप्तिमात्रतः । फलान्तरं प्रबोधस्य किंचित्सम्भाव्यतेऽण्वपि ॥४३॥ ५
अन्तरेण नियोगं च स्वात्मबोधस्य सिद्धितः । स्वाध्यायोऽध्येतव्य इति ब्रूहि स्यात्किं नियोगतः ॥
नैवं यतोऽन्यदेवेदं विज्ञानान्तरमात्मनि । सोपायं कार्यमित्येवं चोद्यते केवलं परम् ॥४५॥
शब्दाज्जनितविज्ञानाद्व्यतिरिक्तं परात्मगम् ॥४६॥
न हि शब्दसमुत्थेन ब्रह्म ज्ञानेन शक्यते । तस्यावाक्यार्थरूपत्वात्परिच्छेत्तुं घटादिवत् ॥४७॥
नानापदार्थसंसर्गलक्षणोऽयं यतः स्मृतः । वाक्यार्थो वाक्यविद्भिर्हि प्रमावाक्यं च नो मतम् ॥ १०
तस्य चाविषयत्वात्तु ब्रह्मावाक्यार्थरूपभृत् ॥४८॥
विज्ञानान्तरगम्यं तदभ्युपेयं बलादपि । न चेद्वाक्योत्थविज्ञानग्राह्यं ब्रह्माभ्युपेयते ॥
नाऽऽम्नायार्थो भवेत्तर्हि नैवं वेदार्थ एव च ॥४९॥

एव कर्तव्यत्वेन विधिभिरभिधानान्नाऽऽत्मनि विधिशङ्केत्यर्थः । साध्येऽर्थे नियोगस्य सावकाशत्वादात्मनि सिद्धेऽर्थे तस्य निरवकाशत्वमित्येतदुपपादयति—स्वव्यापार इति ॥ ३८ ॥ १५

न द्वितीय इत्याह—न चेति । किं शाब्दमात्मज्ञानं विधेयं किं वा ज्ञानान्तरं प्रथममपि स्वोत्पत्त्यर्थं स्वफलार्थं वा विधीयते ? नाऽऽद्य इत्याह—स्वाध्याय इति ॥ ३९ ॥

शाब्दस्याऽऽत्मविज्ञानस्याध्ययनविध्यनुरोधादेवोत्पत्तेरुपपत्तेस्तदर्थं नास्ति विध्यन्तरापेक्षेत्येतदेव दृष्टान्तेन साधयति—कर्मेति ॥ ४० ॥

आत्मज्ञानस्य विधेयत्वमन्तरेण फलवत्त्वं चेन्न तस्य विधेयत्वं सिध्येन्न चान्तरेण विधेयत्वं फलवत्त्वं २० तस्य लभ्यते तेन तस्य फलसिद्ध्यर्थं विधेयतेति कल्पान्तरमुत्थापयति—स्यादेतदिति ॥ ४१-४२ ॥

ज्ञेयनिश्चयस्य ज्ञानफलत्वात्तस्य च ज्ञानोत्पत्तिनान्तरीयकत्वान्न फलाय ज्ञाने विधिरिति परिहरति—नैतदिति ॥ ४३ ॥

ज्ञानं चेदुत्पद्यते तदा ज्ञेयाभिव्याप्तिरूपं फलं विधिमन्तरेण सिध्यतु तदुत्पत्तिरेव विध्यभावे कथं सिध्येदित्याशङ्क्य न चापीत्यत्रोक्तं स्मारयति—अन्तरेणेति ॥ ४४ ॥ २५

न वयं शाब्दज्ञानं विधेयं ब्रूमः किन्तु ज्ञानान्तरमेव शमदमाद्युपायसहितं विधेयमिति मतान्तरमुत्थापयति—नैवमिति ॥ ४५ ॥

असंसृष्टापरोक्षवस्तुगोचरत्वं केवलत्वं ज्ञानान्तरमेव विशदयन्परत्वं स्फोरयति—शब्दादिति ॥ ४६ ॥

शाब्दज्ञानेनैव ब्रह्मणः सिद्धत्वादनर्थकं ज्ञानान्तरविधानमित्याशङ्क्याऽऽह—न हीति ॥ ४७ ॥

कथमवाक्यार्थरूपत्वं ब्रह्मणः स्यादित्याशङ्क्याखण्डैकरसत्वाङ्गीकारादित्याह—नानेति । ब्रह्मणि वाक्यं ३० प्रमाणमित्यभ्युपगमादवाक्यार्थत्वं तस्यासिद्धमित्याशङ्क्य वाक्यं ब्रह्मणि प्रमाणमित्येतदङ्गीकृत्य वाक्यार्थत्वं तस्य निरस्यति—प्रमेति ॥ ४८ ॥

अवाक्यार्थत्वे ब्रह्मणः सिद्धे शाब्दज्ञानातिरिक्तज्ञानगम्यत्वं तस्य बलादेव प्राप्नोतीति फलितमाह—विज्ञानान्तरेति । ब्रह्मणो वाक्योत्थज्ञानाविषयत्वे वेदवाक्यं तत्र प्रमाणमित्यङ्गीकारो विरुध्येतेति शङ्कते—

कथं वेदार्थतैतस्य न चेद्वाक्यार्थ इष्यते ॥५०॥
पुंव्यापारानधीनत्वान्न नियोगादयं भवेत् । पदार्थानन्वयान्नापि वाक्योत्थो बोध आत्मनि॥५१॥
तदन्वयेऽपि नैवायं वाक्यार्थत्वं समश्नुते । सामान्यमात्रवाचित्वे पदानां संक्षयो यतः ॥५२॥
पदार्थव्यतिरेकेण न चावाक्यार्थवाचकः । अतोऽवाक्यार्थरूपोऽयं योऽहं ब्रह्मेति निश्चयः ॥५३॥
५ नियोगानुप्रवेशेन वस्तुतत्त्वमितीरितम् । यत्तस्य परिहाराय श्लोकोऽस्माभिर्यथोदितः ॥५४॥
इदं ज्ञेयमिदं ज्ञानं ज्ञाताऽस्मीति विभागतः । सर्वदा दर्शनात्तावन्नाविद्याऽस्यैषु विद्यते ॥५५॥
चिन्मात्रव्यतिरेकेण सर्वप्रत्ययसाक्षिणः । रूपान्तरं न सम्भाव्यं प्रमाभासात्तथा ह्रुतिः ॥५६॥
हानोपादानहीनोऽयं तत्साक्षित्वात्स्वतो ध्रुवः । द्रष्ट्रादिसाक्षिताऽप्यस्य तत्कारणसमाश्रयात् ॥५७॥

न चेदिति । वेदवाक्योत्थज्ञानाभ्याससाध्यसाक्षात्कारलक्षणज्ञानगम्यत्वाद्वेदार्थत्वं ब्रह्मणः सिध्यतीति परिहरति—
१० नैवमिति ॥ ४९ ॥

उक्तमेव सैद्धान्तिकं चोद्यमनुवदति—कथमिति ॥ ५० ॥

वेदोत्थज्ञानगम्यत्वेन वेदार्थत्वमिति भवन्नियोगाद्भवदाज्ञाबलान्नायमर्थः सिध्येदयमस्य वाक्यस्यार्थ इत्यस्यार्थस्य पुरुषव्यापारसाध्यत्वाभावादिति पूर्ववादी परिहरति—पुंव्यापारेति । धर्मस्य वाक्योत्थज्ञानगम्यत्वेन वाक्यार्थत्ववद्ब्रह्मणोऽपि स्यादित्याशङ्क्याऽऽह—पदार्थेति । पदस्यार्थत्वेन पदानन्वयाद्ब्रह्मणोऽपदार्थत्वाद्धर्म-
१५ वैलक्षण्यान्न वाक्यजन्यज्ञानगम्यमित्यर्थः ॥ ५१ ॥

पदेन पदार्थतया ब्रह्मणोऽन्वयेऽपि न तस्य वाक्यगम्यत्वं पदस्य सामान्यमात्रविषयत्वाद्वाक्यस्य विशेषविषयत्वाद्ब्रह्मणश्च सामान्यत्वेऽपि विशेषत्वाभावादित्याह—तदन्वयेऽपीति । वस्तुतस्तु ब्रह्म त्वया सामान्यविशेषभावशून्यमभ्युपगतं तत्र कुतः शब्दप्रवृत्तिरित्यर्थः ॥ ५२ ॥

किञ्च पदवाच्यादर्थाद्व्यतिरेकेण ब्रह्मणोऽपदार्थत्वादपदार्थस्य चावाक्यार्थत्वादवाक्यार्थस्य ब्रह्मणो वाचको
२० बोधकः शब्दो नास्ति । न च लक्षणया शब्दो ब्रह्म बोधयति । सर्वथा वाच्यत्वरहितस्य लक्ष्यत्वायोगादतो न ब्रह्मणि शब्दप्रवृत्तिरित्याह—पदार्थेति । यस्मादेवं शाब्दज्ञानाविषयो ब्रह्म तस्मादवाक्यार्थरूपमशाब्दं ज्ञानान्तरम् असंसृष्टापरोक्षकारं विधेयं तच्च शाब्दज्ञानाभ्यासोपायसाध्यापरोक्षज्ञानलक्षणमिति तद्गम्यं ब्रह्म वेदप्रमाणकमुपचारादित्युपसंहरति—अत इति । योऽहं ब्रह्मास्मीत्यसंसृष्टापरोक्षाकारो निश्चयोऽभ्यासादुत्पद्यते स यद्यपि शाब्दो बोधो न भवति तथाऽपि तथाविधबोधाभ्यासप्रचयप्रसूतत्वात्तद्गम्ये ब्रह्मणि शास्त्रं प्रमाणमिति शक्यमेवं
२५ वक्तुमित्यर्थः ॥ ५३ ॥

नियोगानुरोधाद्वस्तुसिद्धिर्न वेदप्रसादादिति त्वदीयचोद्यस्य "यतो वाचो निवर्तन्त" इत्यादिश्लोकेनोक्तं समाधानमिति सिद्धान्तमाह—नियोगेति ॥ ५४ ॥

कथमस्य श्लोकस्य यथोक्तचोद्यपरिहारहेतुत्वमित्याशङ्क्य तत्सिद्ध्यर्थमनात्मप्रपञ्चस्य कल्पितत्वं साधयति—इदमिति । ज्ञेयादित्रितयस्यासङ्कीर्णत्वेन सदा भासनादस्याऽऽत्मनस्तद्विषयाज्ञानाभावात्तस्मिन्नज्ञातत्वायोगात्तस्य
३० प्रमाणगम्यत्वासिद्धेः सर्पादिवदविद्याविजृम्भितत्वमित्यर्थः ॥ ५५ ॥

चिदात्मनोऽपि सदासिद्धत्वाविशेषात्प्रमाणागम्यत्वात् ज्ञातत्वमन्तरेण तदयोगादविद्याविजृम्भितत्वं तुल्यमित्याशङ्क्याऽऽह—चिन्मात्रेति । प्रत्यगात्मनः सर्वकल्पनाधिष्ठानत्वादविद्याकल्पितत्वं रूपान्तरमसम्भाव्यमित्यर्थः । आत्मा चिद्रूपश्चेत्कथं यथावदस्फुरणमित्याशङ्क्याज्ञानादित्याह—प्रमाभासादिति । ह्रुतिरित्यस्फूर्तिरुच्यते ॥ ५६ ॥

३५ कल्पितत्वं जगतो वदता प्रत्यगात्मनोऽधिष्ठानत्वेनाकल्पितत्वं स्वयंप्रभत्वं चोक्तम् । इदानीं तस्य कूटस्थत्वमाह—हानेति । कूटस्थस्य कथं साक्षित्वमित्याशङ्क्य हानोपादानाद्यात्मकस्य द्वैतस्य कारणं साभासमज्ञानं तदवष्टम्भादस्य साक्षित्वमित्याह—द्रष्ट्रादीति ॥ ५७ ॥

इदं वेद्मि न वेद्मीदमिति बुद्धिर्विवर्तते । प्रत्यभिज्ञाश्रया सा स्याद्द्रष्टैवोभयरूपभाक् ॥५८॥
निर्विभागात्मकत्वात्तु सर्वकोशातिवर्तिनः । रूपं नानात्मवन्न्याय्यं प्रत्यभिज्ञासमाश्रयम् ॥५९॥
प्रतिस्मृत्यान्यतः प्राप्तं रूपं यत्पारिणामिकम् । ज्ञाता प्रत्यभिजानाति प्रत्यक्षार्थोपसंस्कृतः ॥६०॥
बुद्धेः स्यादपराधोऽयं यद्बाह्यार्थानुकारिता ।प्रत्यक्त्वं[1] चिन्निभत्वं च कौटस्थ्याज्ञायमात्मनि॥६१॥
अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु । बाह्यं निरस्य धीरूपं चिन्मात्रात्मावभासया ॥ ५
। धियोपलक्ष्यावाक्यार्थं[2] सर्वदाऽव्यभिचारतः ॥६२॥
व्यभिचारिणश्च बाधेन तत्त्वमस्यादिरूपिणी । दहन्त्यखिलमज्ञानं बोधयत्येव केवलम् ॥६३॥
सामानाधिकरण्यादेर्घटेतरखयोरिव । व्यावृत्तेः स्यादवाक्यार्थः साक्षाद्ब्रह्मस्तत्त्वमर्थयोः॥६४॥

अज्ञानादात्मनः साक्षित्वमित्युक्ते ज्ञानाज्ञानयोरेकाश्रयत्वादात्मन्यज्ञानसम्बन्धवज्ज्ञानसम्बन्धस्यापि वक्तव्यतया निर्विशेषत्वहानिरित्याशङ्क्याऽऽह—**इदमिति** । बुद्धिरहंवृत्तिः सैव ज्ञानाज्ञानरूपेण भातीति नाऽऽत्मनः १० सविशेषत्वप्रसिद्धिरित्यर्थः । अहंवृत्तेरात्माश्रयत्वादात्मनि सविशेषत्वं दुष्परिहरमित्याशङ्क्य प्रत्यभिज्ञावृत्तेरन्तःकरणाश्रयत्वात्प्रत्यभिज्ञाशब्दितान्तःकरणाश्रयाऽहंवृत्तिरित्यङ्गीकारान्नाऽऽत्मनि सविशेषत्वशङ्केत्याह—**प्रत्यभिज्ञेति**। अहंवृत्तेरन्तःकरणाश्रयत्वे साभासमन्तःकरणमेव ज्ञानाज्ञानरूपभागभ्युपगन्तव्यमित्याह—**द्रष्टैवेति** ॥ ५८ ॥

ज्ञानाज्ञानयोरात्मगतत्वेन प्रतिभानादात्माश्रयत्वमेष्टव्यमित्याशङ्क्याऽऽह—**निर्विभागेति** । अन्तःकरणस्य इवाऽऽत्मनो नानाविधं रूपं नोपपद्यते सर्वकोशातिवर्तित्वादतो यदन्तःकरणं साभासं प्रत्यभिज्ञाशब्दितं तदेव ज्ञाना- १५ ज्ञानविकल्पार्हमित्यर्थः ॥ ५९ ॥

प्रत्यगात्मनो ज्ञानाज्ञानविकल्पाश्रयत्वं न्यायशून्यमित्युक्तं प्रकटयति—**प्रतिस्मृत्येति** । अहंकर्ता परिणामी साभासो ज्ञातेत्युच्यते स च पूर्वप्रवृत्तप्रत्ययानुभवप्रसूतार्थसंस्कारसंस्कृतो विषयद्रष्टृत्वेन प्राप्तं पारिणामिकं रूपं प्रतिस्मृत्य तदनुस्मरणपूर्वकं सोऽयमिति वा सोऽहमिति वा प्रत्यभिजानाति । ततश्च साभासान्तःकरणगतानुसन्धानप्रत्ययवदज्ञानादेरपि तद्गतत्वेन कूटस्थानुभवनिष्ठत्वाभावात्तत्र कल्पनया प्रतीतिरित्यर्थः ॥ ६० ॥ २०

केचित्तु प्रत्यगात्मैव ज्ञातेत्याचक्षते तान्प्रत्याह—**बुद्धेरिति**। विषयाकारेणाऽऽत्माकारेण च परिणामो बुद्धेरेव सिध्यति । न त्वात्मनि परिणामो युज्यते । तस्य कूटस्थत्वादित्यर्थः ॥ ६१ ॥

प्रत्यगात्मनो नियोगगम्यत्वनिराकरणेन केवलशब्दगम्यत्वप्रतिपादनार्थं स्वयंप्रकाशत्वं निर्विशेषत्वं कूटस्थत्वं ज्ञेयादिद्वैतस्य कल्पितत्वेनाद्वितीयत्वं चोक्तम्। इदानीं केवलशब्दगम्यत्वं प्रतीचः साधयति—**अन्वयेत्यादिना**। मननशब्दितान्वयव्यतिरेकाख्यश्रौतयुक्त्यवष्टम्भाद्बुद्धिग्राह्यं बुद्ध्याकारं बाह्यं सर्वमनात्मजातमवस्थात्रये व्यभि- २५ चारित्वान्निराकृत्य चिन्मात्रस्य सदैवाव्यभिचारित्वात्केवलचिदाकारज्ञानेनावाक्यार्थात्मकं वाक्यार्थान्वियायोग्यं तदेव चिन्मात्रं त्वंपदार्थरूपं गृहीत्वा व्यवस्थितस्य मुमुक्षोस्तत्त्वमस्यादिवाक्योत्था ब्रह्माहमित्येवंरूपा बुद्धिवृत्तिरात्मगतमज्ञानं तत्कार्यं च स्वोदयनान्तरीयकत्वेन दहन्ती त्वमर्थस्य ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं सकलविशेषशून्यं बोधयत्येवेत्यङ्गीकाराद्युक्तं ब्रह्मणः शब्दैकगम्यत्वमित्यर्थः ॥ ६२-६३ ॥

ब्रह्मात्मनोरन्योन्यान्वयः शब्दबोध्यश्चेन्न शब्दादवाक्यार्थधीरित्याशङ्क्याऽऽह—**सामानाधिकरण्यादेरपि** । ३० यथा घटाकाशो महाकाश इत्यत्र विरुद्धांशनिराकरणेनाऽऽकाशमात्रं बोध्यते तथा तत्त्वमसीत्यत्र तत्त्वंपदयोः सामानाधिकरण्यात्तदर्थयोश्च वाच्ययोर्विशेषणविशेष्यभावात्पदतदर्थयोश्च लक्ष्यलक्षणभावात्तत्त्वमर्थयोर्विरुद्धांशव्यावृत्तेः अवाक्यार्थोऽखण्डैकरसलक्षणो वाक्यादेव साक्षात्प्रतिपन्नः स्यादित्यर्थः ॥ ६४ ॥

---

१. आत्माकारेण परिणामित्वमित्यर्थः ।
२. केवलचिदाकारज्ञानेन गृहीत्वा ।

वाक्यादेवमवाक्यार्थो यस्मात्साक्षात्प्रसिध्यति । अन्यदेवेदमित्यादि सर्वं स्यात्तुषकण्डनम् ॥६५॥
अज्ञानमन्यथाज्ञानं संशयज्ञानमेव च । घटादावेव तद्दृष्टं न ज्ञातृज्ञानसाक्षिषु ॥६६॥
अज्ञानादि त्रयं तावत्प्रत्ययेऽपि न विद्यते । तस्य ह्यव्यवधानेन प्रत्यक्षाज्ञान्यमानता ॥६७॥
ज्ञातुरव्यवधानेन संशयो निश्चयोऽपि वा । प्रत्ययः प्रथते यस्मान्न मानान्तरकाङ्क्षयतः ॥६८॥
५ अज्ञानादि त्रयं तावज्ज्ञातर्यपि न विद्यते । किमङ्ग सर्वदाऽलुप्तचक्षुष्यात्मनि केवले ॥६९॥
निर्धूताशेषभेदोऽयमवाक्यार्थात्मकस्तथा । सुषुप्ते गम्यतेऽस्माभिर्नानृतं श्रुतिगौरवात् ॥७०॥
सर्वदा चाऽऽत्मरूपत्वाद्व्यभिचारादनात्मनः । ब्रह्मात्मनि स्वतः सिद्धं ज्ञानं मोहापनोदि यत् ॥७१॥
ज्ञाताज्ञातविभागोऽस्मिञ्ज्ञानाज्ञानात्मता तथा । ज्ञात्रज्ञातृत्वमप्येवं स्वतः सिद्धेर्न साक्षिणः ॥७२॥
स्वव्यापारे नियोगोऽपि नियुङ्क्ते पुरुषं बलात् । यथाभूतार्थता बुद्धेर्वास्तवी न तु पौरुषी ॥७३॥
१० इदमेवमदो नेति यथैवार्थमृते विधिम् । वेत्ति तत्त्वमसीत्येवं किं न वेत्यभिधाश्रुतेः ॥७४॥

शब्दादेव वाक्यार्थप्रतिपत्तावित्थं सम्भवन्त्यां ज्ञानान्तरस्य शाब्दज्ञानातिरिक्तस्य विधेयत्ववचनमनुचितमिति फलितमाह—वाक्यादिति ॥ ६५ ॥

शाब्दज्ञानादेवावाक्यार्थसिद्धावपि ज्ञानान्तरमज्ञानादिनिवृत्त्यर्थं विधेयमित्याशङ्क्याऽऽह—अज्ञानमिति॥६६॥

अज्ञानादि त्रितयं ज्ञाने नास्तीत्येतदादौ संक्षेपविस्तराभ्यां वार्तिकद्वयेन दर्शयति—अज्ञानादिति । १५ वक्ष्यमाणकैमुतिकन्यायद्योतनार्थोऽपि शब्दः ॥ ६७-६८ ॥

प्रमातर्यपि न त्रितयमस्ति तस्याप्यव्यवधानेन साक्षिप्रत्यक्षत्वादित्याह—अज्ञानादि त्रयमिति । यत्तु साक्षिणि त्रयं नास्तीति प्रतिज्ञातं तदिदानीं कैमुतिकन्यायेन साधयति—किमङ्गेति । प्रमात्रादेरप्यात्मप्रसादादेव सिद्धत्वात्तत्रापि नाज्ञानादि त्रयं सम्भाव्यते किमुत साक्षिण्यात्मनीति ततो नाज्ञानादिनिवृत्त्यर्थं ज्ञानान्तरं विधेयं शाब्दादेव प्रमाणज्ञानादात्मनि प्रातिभासिकाज्ञानादिनिवृत्तिरित्यर्थः ॥ ६९ ॥

२० निर्विशेषस्यावाक्यार्थात्मकस्य ब्रह्मात्मनः सुषुप्त्यवस्थायामनुभूयमानत्वाच्च तत्सिद्धये ज्ञानान्तरं न विधेयमित्याह—निर्धूतेति । न च सौषुप्तं यथोक्तं वस्तु प्रतिज्ञातं मिथ्येति वक्तव्यं तत्प्रतीतेः "यद्वै तन्न पश्यती"त्यादिश्रुतिमूलत्वादित्याह—नानृतमिति ॥ ७० ॥

यत्तु ज्ञानान्तरमज्ञानादिनिवृत्त्यर्थमात्मनि विधेयमित्याशङ्क्य निराकृतं तत्रैव हेत्वन्तरमाह—सर्वदा चेति। आत्मस्वरूपचैतन्यस्यैव वाक्योत्थबुद्धिवृत्त्यभिव्यक्तस्याज्ञानादिनिवर्तकत्वात्कुतो ज्ञानान्तरे विध्यपेक्षेत्यर्थः ॥ ७१ ॥

२५ ननु जगतो ज्ञाताज्ञातज्ञानाज्ञानात्मकस्याऽऽत्मनि वस्तुतो विद्यमानत्वात्तन्निवृत्त्यर्थं वैधज्ञानापेक्षेति चेन्नेत्याह—ज्ञातेति । ज्ञाताज्ञातज्ञानाज्ञानात्मकस्य जगतः स्वतः साक्षिणः सकाशादेव सिद्धेः सत्त्वोपलब्ध्योः साक्ष्यधीनत्वेन तस्य कल्पितत्वान्न तत्र परमार्थतो द्वैतं सिध्यति । तथैव साक्षिणः साक्षित्वमपि वस्तुभूतं नास्ति । तथा च वस्तुतो जगतः साध्यसाधनात्मकस्य निवृत्त्यर्थं ज्ञानविधिर्न सम्भवतीत्यर्थः ॥ ७२ ॥

प्रमाणज्ञाने नास्ति विधिरित्यत्र हेत्वन्तरमाह—स्वव्यापार इति । विधिर्हि पुरुषस्य व्यापारे स्वसामर्थ्यात् ३० पुरुषं प्रवर्तयति । प्रमाणज्ञानं तु प्रमाणवस्तुपरतन्त्रत्वान्न विधियोग्यमतोऽपि न विधेयमित्यर्थः । ज्ञानस्य यथार्थबोधकत्वार्थं विधेयत्वमेष्टव्यमित्याशङ्क्य निराचष्टे—यथाभूतेति ॥ ७३ ॥

किञ्च कर्मकाण्डाद्विधिव्यतिरेकेण कर्मवाक्यार्थज्ञानवद्ब्रह्मकाण्डादपि विधिव्यतिरेकेण ब्रह्मज्ञानं सम्भवति अविशेषादित्याह—इदमिति ॥ ७४ ॥

क्रियायां विधिसम्पातः कर्त्रादिषु न सिद्धितः[1] । न चानेकार्थतैकस्य वाक्यस्य भवतेष्यते ॥७५॥
प्रत्यक्षादेव भेदोऽयमभिधाननियोगयोः । तस्य चेद्व्यभिचारित्वं व्यर्थं सर्वज्ञभाषितम्[2] ॥७६॥
कर्तुः क्रियायां स्वातन्त्र्यं वस्तुवृत्ते ह्यनीश्वरः । वस्तुवृत्तं च नो मुक्तिः क्रियातश्चेदनित्यता ॥७७॥
यथावस्तु हि या बुद्धिः सम्यग्ज्ञानं तदेव नः । पौरुषायासमात्रोत्थमज्ञानं रजतादिवत् ॥७८॥
वस्तुमात्रानुरोधित्वात्सम्यग्ज्ञानस्य दुष्करम् । नियोगानुप्रवेशेन वस्तुतत्त्वावबोधनम् ॥७९॥ ५
नियोगानुप्रवेश वा हेतोर्व्याप्तिः प्रदर्श्यताम् । गमकत्वमृते व्याप्तिं नैव हेतोः प्रसिध्यति ॥८०॥
विधिशून्यस्य वाक्यस्य प्रामाण्यं प्रत्यगात्मनि । येषां प्रकाश्यत इति न तेषां मतिरीदृशी ॥८१॥
प्रकाश्यत्वाश्रयश्चायं व्यापारः सर्व एव च । तस्मिन्नसति तन्मिथ्या यदेतद्भवतेरितम् ॥८२॥

आत्मतज्ज्ञानयोर्विधेयत्वाभावे हेत्वन्तरमाह—क्रियायामिति । किञ्च ज्ञानस्य विधेयत्वे वाक्यस्य ज्ञानविधिपरत्वात्तस्मादेव वस्तुसिद्धेरयोग्यत्वाद्वाक्यान्तरं वस्तुबोधकमेष्टव्यमित्याह—न चेति ॥ ७५ ॥ १०

विधायकमेव सर्वं वाक्यं न वस्तुबोधकमस्तीत्याशङ्क्याऽऽह—प्रत्यक्षादेवेति । नियोगशब्देन विधायकं वाक्यं गृह्यते । तत्त्वमस्यादेरभिधानवाक्यस्य विधायकवाक्यस्य च श्रोत्रेन्द्रियेण भेदग्रहणाद्विधायकमेव सर्वं वाक्यमिति न शक्यं वक्तुम् । केवलवस्तुबोधिनोऽपि तत्त्वमस्यादिवाक्यस्य प्रत्यक्षत्वादित्यर्थः । प्रत्यक्षं व्यभिचारि भ्रान्तमित्याशङ्क्य [3]"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमि"ति प्रत्यक्षलक्षणसूत्रस्य तद्भाष्यस्य च यद्व्यभिचरति न तत्प्रत्यक्षं यन्न व्यभिचरति तत्प्रत्यक्षमित्यस्य विरोधान्नैवमित्याह—तस्य चेदिति ॥ ७६ ॥ १५

वस्तुनि तज्ज्ञाने च विधिर्नास्तीत्युक्तम् । इदानीं वस्तुनि विध्यभावे हेत्वन्तरमाह—कर्तुरिति । क्रियायां पुरुषस्य स्वातन्त्र्यात्तत्र युक्तो विधिः । वस्तुस्वरूपे तु पुरुषस्यानैश्वर्यान्न तत्र विधिः सम्भवतीत्यर्थः । वस्तुनि विध्यभावेऽपि मुक्तेर्वैधक्रियासाध्यत्वमित्याशङ्क्य तस्या वस्तुस्वरूपत्वान्नैवमित्याह—वस्तुवृत्तं चेति । वस्तुत्वेऽपि क्रियासाध्यत्वे तस्या विवक्षिते नित्यत्वानुपपत्तिरित्याह—क्रियातश्चेदिति ॥ ७७ ॥

वस्तुनि विधेयत्वं निराकृत्य तज्ज्ञानस्य विधेयत्वे दूषणान्तरमाह—यथावस्त्विति । प्रमाणवस्तुतन्त्रं ज्ञानं न विधेयम् । विधेयत्वे तु पुरुषतन्त्रत्वेन रजतादिज्ञानवदप्रमाणमेव स्यादित्यर्थः ॥ ७८ ॥ २०

सम्यग्ज्ञानस्य मानवस्त्वनुरोधित्वान्नियोगानुप्रवेशद्वारा वस्तुस्वरूपबोधनं वेदान्तानां दुष्करमित्युपसंहरति—वस्तुमात्रेति ॥ ७९ ॥

किञ्च वेदान्तेषु नियोगानुप्रवेशो वाक्यत्वं प्रमाणत्वं वा हेतू कर्तुं न शक्यते । परपक्षे प्रत्यक्षादौ च व्याप्त्यभावादित्याह—नियोगेति । यद्यपि परपक्षरूपे वाक्ये नियोगानुप्रवेशाभावाद्वाक्यत्वस्य न व्याप्तिः प्रत्यक्षादौ च प्रमाणत्वेऽपि नियोगानुप्रवेशाभावात्प्रमाणत्वस्य न व्याप्तिरस्ति तथाऽपि हेतुद्वयस्य गमकत्वे का क्षतिरित्याशङ्क्य व्याप्तिमन्तरेण गमकत्वस्याप्रसिद्धत्वान्नैवमित्याह—गमकत्वमिति ॥ ८० ॥ २५

वेदान्तेषु त्वयाऽपि क्वचित्क्वचिन्नियोगाङ्गीकारान्नियोगनिराकरणमस्थाने सम्भ्रममात्रमित्याशङ्क्याऽऽह—विधिशून्यस्येति । उपनिषद्वाक्यस्य विधिविधुरस्य प्रत्यगात्मविषये प्रकाश्यते प्रतिपाद्यते प्रामाण्यमिति येषां मतं तेषां वेदान्तेषु नियोगोऽस्तीत्येवंप्रकारा मतिर्न भवति । तत्र क्वचित्क्वचिन्नियोगाङ्गीकारस्तु श्रवणादिक्रियाविषयो ज्ञानविषयनियोगनिषेधाविरोधीत्यर्थः ॥ ८१ ॥ ३०

किञ्च शाब्दज्ञाने वा तदभ्यासे वा तदुत्थे ज्ञानान्तरे वा विधिव्यापारो ब्रह्मणो ज्ञानगम्यत्वसापेक्षत्वात् तदभावे न सम्भवतीत्याह—प्रकाश्यत्वेति ॥ ८२ ॥

---

१. तदसिद्धित इत्यर्थः । २. सर्वज्ञः=मीमांसाभाष्यकारशबरस्वामी ।
३. मी० सू० १.१.४ । ३५

[1]अस्थूलाशब्दतावादिप्रकाश्यत्वादि कुप्यति । नियोगानुप्रवेशेन यदि वस्तु प्रकाश्यते ॥८३॥
न चाप्रमाणता तस्य नियोगोत्सङ्गसंश्रयात् । एवमप्यप्रमाणं चेन्नियोगोऽविषयो भवेत् ॥८४॥
अदृश्यं पश्य इत्येवं नियुक्तोऽपि न शक्नुयात् । शक्नुयात्सनियोगाच्चेत्कुर्याच्चस्करकन्दुवत् ॥८५॥
विदितेतरातिरेकित्वाद्ब्रह्मरूपानुवादिभिः । नियोगगर्भवचनैः पश्येदिति विरुध्यते ॥८६॥
५ [2]विज्ञातारमरे केन विजानीयादिति श्रुतिः । [3]न दृष्टेरिति दृश्यत्वं नियोगैरेव वार्यते ॥८७॥
सदावगतिरूपस्य ज्योतिश्चक्रावभासिनः । स्वयंज्योतिःस्वभावस्य न्याय्यं तस्मान्न दर्शनम् ॥८८॥
द्रष्ट्रा चेद्दृश्यते दृश्यं प्रत्यक्षाविषयः कथम् । कर्मकर्तृत्वमेकस्य दोषो ब्रह्मात्मदर्शने ॥८९॥
अदृष्टं तदकर्मत्वात्कौटस्थ्यान्नापि दृष्टिकृत् । जन्यादिविक्रियाषट्कनिषेधोऽप्येवमर्थवान् ॥९०॥
प्रमातृत्वादिभेदेन यत्स्वरूपं प्रतीयते । तत्प्रकाश्यत इत्याहुरप्रकाशस्वरूपतः ॥९१॥
१० प्रमातैव प्रमेयं चेत्प्रमाणं प्रमितिस्तथा । स्वरूपाच्चैकरूपत्वान्न तदेभिर्निरुच्यते ॥९२॥

किञ्चास्थूलाशब्दतावादिना वाक्येन ब्रह्मणः सर्वविशेषनिषेधद्वारेण प्रतिपाद्यत्वं तत्फलं च विधेयज्ञानगम्यत्वे विरुध्येत तस्मादस्थूलादिवाक्यविरोधो ब्रह्मात्मनो विधेयज्ञानबोध्यत्वे स्यादित्याह—अस्थूलेति ॥ ८३ ॥

किञ्चास्थूलादिवाक्ये नियोगानुप्रवेशे तस्य नियोगनिष्ठत्वेन स्वरूपे प्रामाण्यं न स्यान्न च प्रमाणस्य सतोऽन्यसंश्रयादप्रामाण्यं युक्तमित्याह—न चेति । नियोगाननुप्रवेशेऽपि वाक्यं विधिरहितवाक्यत्वादनाप्तवाक्यवत् १५ अप्रामाण्यमेवेत्याशङ्क्यामनूद्य दूषयति—एवमपीति । विधिरहितवाक्यस्याप्रमाणत्वे ब्रह्मणस्तद्गम्यत्वाभावादन्यस्य च तत्र प्रमाणस्यानिष्टत्वात्तदसिद्धौ तद्विषयज्ञानासिद्धेर्ज्ञाननियोगो निर्विषयो निरवकाशः स्यादिति दूषणभागस्यार्थः॥८४॥

अविषयत्वेऽपि ब्रह्मणस्तज्ज्ञाने नियोगः स्यादित्याशङ्क्य वस्त्वन्यथाकरणे पुरुषस्यासामर्थ्यान्नैवमित्याह—अदृश्यमिति । नियोगसामर्थ्यादविषयमपि विषयीकर्तुं पुरुषः शक्ष्यतीत्याशङ्क्याशक्येऽर्थे प्रवृत्तस्य प्रयासवैफल्यमित्युक्तं स्मारयति—न शक्नुयादिति ॥ ८५ ॥

२० यत्तु नियोगसहितवचनैर्ब्रह्म पश्येदित्युच्यते तद् "अन्यदेव तद्विदितादि"त्यादिवाक्यैर्ब्रह्मणोऽविषयत्ववादिभिर्विरुध्यते । ततोऽपि न ब्रह्मज्ञानस्य विधेयत्वमित्याह—विदितेति ॥ ८६ ॥

नियोगसहितवाक्यैर्ब्रह्मणो विषयत्वनिषेधाच्च तज्ज्ञानस्य विधेयत्वासिद्धिरित्याह—विज्ञातारमिति ॥ ८७ ॥
इतश्च ब्रह्मणो दृश्यत्वानुपपत्तेर्न तज्ज्ञानस्य विधेयत्वसिद्धिरित्याह—सदेति ॥ ८८ ॥

द्रष्ट्रात्मना रूपादिजगतो दृश्यत्वात्तस्य चाहमितिप्रत्यक्षविषयत्वादविषयत्वस्यैवाभावादात्मज्ञाने विधिः २५ सम्भवतीति शङ्कते—द्रष्ट्रा चेदिति । ब्रह्मात्मनो दर्शनकर्मत्वे कर्त्रन्तराभावात्कर्मकर्तृविरोधः स्यादिति दूषयति—कर्मेति ॥ ८९ ॥

ब्रह्मात्मनश्चेदेकस्योभयरूपत्वमयुक्तं तर्हि कर्मत्वं कर्तृत्वमेव वा स्यादित्याशङ्क्याऽऽह—अदृष्टमिति । ब्रह्मात्मनो न कर्मत्वं नापि कर्तृत्वमित्यत्र हेत्वन्तरमाह—जन्यादीति ॥ ९० ॥

आत्मनो दर्शनकर्मत्वाभावे कस्य दर्शनकर्मत्वमित्याशङ्क्याऽऽह—प्रमातृत्वादिति । अप्रकाशस्वरूपत्वं ३० जडत्वम् ॥ ९१ ॥

यत्तु पूर्ववादिना प्रमेयत्वं द्रष्टुरुपदिष्टं तदनूद्य दूषणान्तरमाह—प्रमातैवेति । प्रमेयस्य प्रमातृत्वे प्रमाणतत्फलयोरपि साक्षिमात्रत्वं स्यादित्यर्थः । यदि साक्षिस्वरूपाच्चैतन्यमात्रान्मेयत्वादेरेकत्वं तदा मेयत्वादेः चिन्मात्रत्वेनाद्वयत्वादेभिर्मेयत्वादिशब्दैर्मेयत्वादिर्नोच्यते । मेयत्वादेश्चैतन्यातिरिक्तस्याभावादतो न मेयत्वादि साक्षिणो युक्तमिति फलितमाह—स्वरूपादिति ॥ ९२ ॥

---

३५ १. अस्थूलमनणु……बृ० ३.८.८, अशब्दमस्पर्शं……क० १.३.१५ ।
२. बृ० ४.५.१५ ।　　३. बृ० ३.४.२ ।

प्रामाण्यमनुवादानां न चेत्स्वविषये मतम् । पयोगुणस्य सम्बन्धो न प्राप्नोति जुहोतिना ॥९३॥
स्वर्गेणैवाभिसम्बन्धः पयसश्चेदनुत्तरम् । स्वर्गस्य सिद्धये नालं द्रव्यमात्रं पयो यतः ॥९४॥
प्रणयः साधनत्वं च प्राप्तं तस्मादनूद्यते । विशिष्टोपाश्रयं द्रव्यमतोऽलं पशुसिद्धये ॥९५॥
गोदोहनस्य भिन्नत्वाद्भिन्नं चेत्साधनं मतम् । प्राप्ता प्रणयतीत्यस्य साध्यभेदाद्विभिन्नता ॥९६॥
हानोपादानशून्यत्वादप्रामाण्यं मतं यदि । ब्रह्मास्मीति परिज्ञानमप्रमाणं प्रसज्यते ॥९७॥ ५
आत्मत्वादनुपादेयमनन्यत्वादहेयता । अभिधाश्रुतेश्चेदेतत्किमन्यत्प्रार्थ्यते विधेः ॥९८॥
अनूक्तेरपि[1] मानत्वं नैव ध्वाङ्क्षैर्विलुप्यते । नियोगाननुप्रविष्टत्वाद्यथैवेहाभिधाश्रुतेः ॥९९॥

किञ्च पदानामर्थवादानां चानुवादशब्दितानां स्वार्थे प्रामाण्यमेष्टव्यमन्यथा पयोद्रव्यस्य दधिद्रव्यस्य च जुहोतिना सम्बन्धो न सिध्येत्तत्तत्पदेन तत्तदर्थस्यासिद्धत्वात्तथा च "पयसा जुहोति" "दध्ना जुहोती"त्यादिवाक्यम् अप्रमाणमापद्येतातश्च पदप्रामाण्ये विधिरहितवाक्यस्य किमु वक्तव्यं प्रामाण्यमित्यभिप्रेत्याऽऽह—प्रामाण्यमिति॥९३॥ १०

पयोदध्यादेर्जुहोतिना सम्बन्धो न भवति किन्तु स्वर्गेणेति शङ्कते—स्वर्गेणैवेति । अनुवादाप्रामाण्ये दध्यादिगुणस्य जुहोतिना सम्बन्धो न सिध्यतीति मच्चोद्यस्य स्वर्गेण सम्बन्धो दध्यादेरित्युत्तरं न भवति । अनुवादाप्रामाण्ये स्वर्गेणापि दध्यादिगुणस्य सम्बन्धासिद्धेरित्युत्तरमाह—अनुत्तरमिति । पयोदध्यादेः स्वर्गेण सम्बन्धमङ्गीकृत्यानुत्तरमित्युक्तं न च तस्य क्रियाद्वारमन्तरेण सम्बन्धोऽस्तीत्याह—स्वर्गस्येति ॥ ९४ ॥

पदानां पदार्थस्मारकत्वेऽपि पदार्थस्मृतीनामधिगतपदार्थासाधारण्येन तत्र प्रामाण्योपपत्तेस्तद्धेतूनां तेषामपि १५ प्रामाण्यं दुरपह्नवमित्यभिप्रेत्य द्रव्यस्य क्रियाद्वारेणैव पुमर्थसाधनत्वमित्येतत्प्रसङ्गेन "चमसेनापः प्रणयेदि"त्यत्र विवक्षितं विशेषं दर्शयति—प्रणय इति । अतःशब्दो यस्मादर्थे । यस्माद्गोदोहनद्रव्यं स्वर्गसाधनीभूतदर्शपूर्णमास-क्रत्वर्थविशिष्टमपां प्रणयनमुपाश्रित्य पशुकामस्य पशुसिद्धये समर्थीभवति तस्माद्दर्शपूर्णमासप्रकरणे चमसेनापः प्रणयेदित्यत्र प्रणयनस्यापूर्वसाधनत्वं च प्राप्तमेव पशुकामवाक्येऽनूद्यते । तच्चोभयमाश्रित्य गोदोहनद्रव्यं पश्वर्थे विधीयते । क्रियोपरागमन्तरेण द्रव्यस्य पुमर्थसाधनत्वानुपपत्तेरित्यर्थः ॥ ९५ ॥ २०

चमसात्प्रणयतिकारकात्तथाविधस्य गोदोहनस्य भिन्नत्वात्प्रणयनाख्यमपि साधनं भिद्येतेति शङ्कते—गोदोहनस्येति । यदि गोदोहनचमसभेदात्प्रणयतिभेदस्तदा स्वर्गपशुसाध्यभेदादपि प्रणयतिभेदः स्याज्ज्योतिष्टोमदर्श-पूर्णमासवदुभयथाऽप्याश्रित्य विधानप्रक्रिया बाध्येतेति दूषयति—प्राप्तेति ॥ ९६ ॥

अनुवादप्रामाण्यं प्रसङ्गप्राप्तमेवं परिसमाप्याभिधाश्रुतिप्रामाण्यं प्रकृतं प्रतिपादयितुं पूर्वपक्षयति—हानेति । प्रवर्तकं निवर्तकं वाक्यं प्रमाणं दृष्टमुभयरूपत्वविरहे नास्ति प्रामाण्यं वाक्यस्येत्यभ्युपगमेऽपि किं स्यादित्याशङ्क्य २५ वेदान्तानां प्रवर्तकत्वविरहितत्वात्तेभ्यो जातमहं ब्रह्मास्मीति ज्ञानमप्रमाणं स्यादित्याह—ब्रह्मेति ॥ ९७ ॥

वेदान्तेभ्यो ब्रह्मात्मैकत्वज्ञाने सति कर्तव्यप्रवृत्तिनिवृत्त्योरभावे सर्वकर्तव्यतानिवृत्त्या कृतकृत्यत्वसिद्धेर्विध्य-पेक्षामन्तरेण तत्त्वमस्यादिश्रुतेरनतिशयपुरुषार्थहेतुज्ञानजनकत्वात्प्रामाण्यसिद्धिरित्युत्तरमाह—आत्मत्वादिति ॥९८॥

अभिधाश्रुतेर्विध्यपेक्षामन्तरेणेत्थं प्रामाण्येऽपि यदनुवादशब्दितानां च स्वार्थे प्रामाण्यमुक्तं तन्न सिध्यति तेषां नियोगाननुप्रविष्टत्वादित्याशङ्क्याऽऽह—अनूक्तेरिति । यथाऽभिधाश्रुतेः स्वार्थे प्रामाण्यं नियोगानुप्रवेशमन्तरेण ३० सम्भवतीत्युक्तं तथैवानूक्तिशब्दितानां पदानामर्थवादानां च स्वार्थे मानत्वं नियोगानुप्रविष्टत्वावष्टम्भेन काकोपमैः मीमांसकैर्न निवारयितुं शक्यते । पदानामर्थवादानां च नियोगनिरपेक्षमेव स्वार्थं प्रतिपाद्य पश्चात्कैमर्थक्यवशेन नियोगानुप्रवेशाभ्युपगमादित्यर्थः ॥ ९९ ॥

---

१. अनुवादस्यापीत्यर्थः ।

एवं च सति दृष्टान्तो भवतां नोपपद्यते । नियोगादेव विज्ञानमित्येवं नियमः कुतः ॥१००॥
वादानुवादयोरर्थो यदि भिन्नः प्रतीयते । अगतार्थाधिगन्तृत्वादस्त्वनूक्तेः प्रमाणता ॥१०१॥
अन्वक्षं[1] भिन्नरूपा धीरिह वादानुवादयोः । अपूर्वाधिगतिः पूर्वमिह बुद्धाववबोधनम् ॥१०२॥
मृगतोयादिवन्मिथ्या [2]यद्यनूक्तेर्भवेन्मतिः । विधेर्निर्विषयत्वं वः सर्वत्रैव प्रसज्यते ॥१०३॥
५ स्वाभिधेयं निराकाङ्क्षो ह्यनुवादः प्रबोधयेत् । तत्र चेदप्रमाणं स्यात्स्यात्तदुच्चारणं वृथा ॥१०४॥
साकाङ्क्षत्वानुवादत्वे कुतश्चावगते त्वया । अप्रामाण्यान्न चेत्ताभ्यां विधेयप्रक्षयाद्विधेः ॥१०५॥
स्वशब्दानभिधेयं यच्चदेवापेक्षते पदम् । स्वार्थे तदप्रमाणं चेद्वाक्यार्थस्यान्वयः कुतः ॥१०६॥
अप्रमाणमिति ज्ञानं कस्मादज्ञायि कथ्यताम् । विद्यमानोपलम्भानि न ह्यभावं प्रमिण्वते ॥१०७॥
परस्वभावविध्वंसवर्त्मनैवाऽऽत्मवस्तुनः । वक्ष्यत्यवगतिं चोर्ध्वं विधिनैवेति दुस्थितम् ॥१०८॥

१० अनुवादस्यापि नियोगातिरेकेण प्रामाण्ये सिद्धे नियोगानुप्रविष्टमेव वाक्यं प्रमाणमित्यत्र दृष्टान्तो नास्तीति फलितमाह—एवं चेति । दृष्टान्ताभावे च नियोगनिष्ठादेव वाक्यात्प्रमा भवतीतिनियमासिद्धिरित्याह—नियोगादिति ॥ १०० ॥

किञ्च वादानुवादयोरर्थैक्ये वादवदनुवादस्यापि प्रामाण्याभ्युपगमध्रौव्यादर्थभेदे वक्तव्ये प्रामाण्यमविशिष्टमेष्टुं शक्यमित्याह—वादेति ॥ १०१ ॥

१५ अनूक्तिशब्देन पदान्यर्थवादवाक्यानि च गृहीतानीत्यङ्गीकृत्योक्तमेव प्रपञ्चयति—अन्वक्षमिति ॥ १०२ ॥

किञ्च पदोत्था बुद्धिर्मिथ्या चेन्नियोगस्य निर्विषयत्वं स्याद्यागाद्यनुवादेन तस्मिन्नियोगाभ्युपगमात्पदजन्यबुद्धेर्मिथ्यात्वे च तदयोगादित्याह—मृगतोयेति ॥ १०३ ॥

अन्यापेक्षामन्तरेण स्वार्थबोधकत्वाच्च पदस्य प्रामाण्यमप्रत्याख्येयमित्याह—स्वाभिधेयमिति । विपक्षे दोषमाह—तत्र चेदिति ॥ १०४ ॥

२० किञ्च पदस्य साकाङ्क्षत्वमनुवादत्वं चेष्यते तच्चोभयं पदाद्वा विधेर्वा ज्ञातव्यमिति पृच्छति—साकाङ्क्षत्वेति । ताभ्यां साकाङ्क्षत्वानुवादत्वाभ्यां विशिष्टात्पदादेव तद्गतमुभयं ज्ञायते चेत्तन्न युक्तं पदप्रामाण्यानङ्गीकारादन्यथा तत्प्रामाण्यप्रसङ्गादित्याह—अप्रामाण्यादिति । न च विधिवशादेव साकाङ्क्षत्वमनुवादत्वं च पदगतं ज्ञातव्यं तस्य विधेयार्थप्रतिपादनोपक्षीणत्वादित्याह—विधेयेति । नञ्पदमत्राप्यनुषज्यते ॥ १०५ ॥

"स्वाभिधेयं निराकाङ्क्षो ह्यनुवादः प्रबोधयेदि"त्यत्र पदस्य निराकाङ्क्षत्वमुक्तं साधयति—स्वशब्देति ।
२५ वाक्यार्थप्रतिपत्तिजननार्थं पदं स्वशब्दानभिधेयं पदार्थान्तरमपेक्षते । स्वार्थे तु पदं निराकाङ्क्षमेवेत्यतः स्वाभिधेयं निराकाङ्क्षो बोधयेदिति युक्तमेवेत्यर्थः । पदस्य पदार्थे निराकाङ्क्षप्रामाण्याभावे वाक्यार्थप्रतिपत्तिरयुक्ता स्यादित्याह—स्वार्थ इति ॥ १०६ ॥

पदमप्रमाणमिति पदस्य प्रमाणत्वाभावज्ञानं प्रत्यक्षादिभ्यो वा पदादेव वा सिध्यतीति पृच्छति—अप्रमाणमितीति । प्रथमं प्रत्याह—विद्यमानेति ॥ १०७ ॥

३० द्वितीये पदप्रामाण्यमप्रतिहतमित्यभिप्रेत्याभिधाश्रुतेर्विध्यनपेक्षं प्रामाण्यमित्यत्र हेत्वन्तरमाह—परस्वभावेति । अन्नप्राणमनोविज्ञानानामनात्मस्वभावानां प्रतिषेधद्वारेणैवाऽऽत्मवस्तुनो ब्रह्मणोऽवगतिमुत्तरत्र भृगुवल्ल्यां श्रुतिर्वक्ष्यति । अतोऽपि विधिं विनैवावगतिरित्यस्यार्थस्य स्थितत्वादभिधावाक्यमेवात्र प्रमाणमित्यर्थः ॥ १०८ ॥

---

१. प्रत्यक्षम् ।

३५ २. अनूक्तेरिति—सोमादिपदार्थस्येत्यर्थः ।

व्यावृत्तिः परतोऽभावो न च तस्येन्द्रियेण हि । सम्बन्धोऽस्ति ततो भेदः प्रमाणैर्नोपलभ्यते ॥१०९॥
प्रमाभावस्वरूपत्वान्नाप्यभावाद्धि देष्यते । संवित्त्यभावो नैवेह प्रकाशयति किञ्चन ॥११०॥
इति स्वाभिमतं सर्वं तेन चास्य विरुद्धता । वस्तुवृत्तानुरोधेन व्यापारः फलवानिह ॥१११॥
न कुलालवशाद्व्योम शरावायाप्यलं यतः । आत्मज्ञानं प्रसिद्धं चेद्विधेरेव विधिः कुतः ॥
अथाप्रसिद्धं नितरां विधिर्नैवोपपद्यते ॥११२॥
कैवल्यकारिता बुद्धेर्नियोगादेव चेद्भवेत् । नियोगार्थावगतये नियोगोऽन्योऽपि मृग्यताम् ॥
तत्त्वमस्यादिवाक्योत्थं विज्ञानं स्वफलं स्वतः । अतोऽवगम्यतेऽस्माभिस्तृप्त्याख्यफलवद्भुजेः॥११४॥
स्वाध्यायोऽध्येतव्य इति विध्यन्तरमृते यथा । विध्यर्थावगमस्तद्वदस्त्विहाप्यभिधाश्रुतेः ॥११५॥
नियोगविरहादस्य यद्यर्थावगमो मृषा । इहापि तदमानत्वमभिधानश्रुतेरिव ॥११६॥
भवेद्विध्यनुकूला वा अभिधा यदि वा विधिः । अभिधावर्त्मयायी स्यात्तत्र दोषगुणाविमौ ॥११७॥
स्याद्द्युलोकाग्निवज्ज्ञानं यदि विध्यनुरोधिनी । अभिधाश्रुतिरदृष्टार्था सम्यग्ज्ञानं तु दुर्लभम् ॥११८॥

अन्नप्राणादिनिराकरणेन वस्तुसिद्धिर्विधिवादिना नेष्यते किन्तु ततो भिन्नत्वेन तत्सिद्धिरिष्टेति चेत्तत्रान्नादेः वस्तुनो भेदो व्यावृत्तिभावोऽभावो वा ? भावश्चेत्पृथक्त्वादिरूपस्य तस्य परस्पराश्रयत्वादिदुष्टत्वादप्रामाणिकत्वमित्यभिप्रेत्य द्वितीयं प्रत्याह--**व्यावृत्तिरिति**। अभावस्येन्द्रियसंयोगाभावे तत्पूर्वकस्य[1] प्रमाणान्तरस्यापि तत्र न प्रवृत्तिरित्याह--**तत इति** ॥ १०९ ॥

अभावात्मनो भेदस्याभावप्रमाणादेव[2] सिद्धिरित्याशङ्क्य प्रमाणाभावाद्वा संविदभावाद्वा तत्सिद्धिरिति विकल्प्याऽऽद्यं दूषयति--**प्रमेति** । प्रमाणाभावस्य प्रमाणत्वं व्याहतमित्यर्थः । न द्वितीयः । प्रकाशाभावस्य प्रकाशकत्वविरोधादित्याह--**संवित्तीति** ॥ ११० ॥

किञ्च प्रमाणाभावः संविदभावो मेयाभावश्चेत्यभावमात्रमेव प्राभाकरैर्नाभ्युपगम्यते । तथा चाभावात् अभावात्मनो भेदस्य सिद्धिरिति स्वोक्तविरुद्धमित्याह--**इति स्वाभिमतमिति**। अन्नप्राणादिभ्यो भिन्नत्वेनाऽऽत्मवस्तुनो बोधनं मतः श्रुत्या नोपपद्यतेऽस्तन्निषेधेनैवाभिधायकवाक्यस्याऽऽत्मबोधने व्यापारः स्यादित्याह--**वस्तुवृत्तेति**॥१११॥

अभिधाश्रुतिजनितस्य ज्ञानस्य स्वतोऽप्रमाणत्वात्तत्प्रामाण्याय ज्ञाने विधिरित्याशङ्क्याऽऽकाशं स्वतः शरावभवनायोग्यं कुलालवशान्न शरावो भवति तथा स्वतोऽप्रमाण्यस्य विधिवशात्प्रामाण्यायोगान्नैवमित्याह--**नेत्यादिना** । किञ्चाऽऽत्मज्ञानस्य प्रसिद्धत्वेऽप्रसिद्धत्वे च न तत्र विधिः सम्भवतीत्याह--**आत्मज्ञानमिति** ॥ ११२ ॥

ज्ञानस्य मोक्षसाधनत्वसिद्धये ज्ञाने विधिः स्यादिति शङ्कते--**कैवल्येति**। तर्हि नियोगस्यापि पुमर्थसाधनत्वाभ्युपगमान्नियोगात्पुमर्थसिद्धये नियोगे नियोगान्तरमन्वेष्टव्यमिति निराचष्टे--**नियोगार्थेति** ॥ ११३ ॥

अतिप्रसङ्गपरिहारार्थं वाक्योत्थं ज्ञानं स्वारस्येनैव पुमर्थं साधयतीति फलितमाह--**तत्त्वमस्यादीति** ॥११४॥

अभिधाश्रुतेः स्वार्थबोधकत्वं विधिव्यतिरेकेण नास्तीत्याशङ्क्याध्ययनविधिदृष्टान्तेन परिहरति--**स्वाध्याय इति** ॥ ११५ ॥

नियोगमन्तरेणाभिधावाक्यादर्थावगमो मिथ्येत्याशङ्क्याध्ययनविधिवाक्यादपि तर्हि विध्यन्तरमन्तरेण वाक्यार्थप्रतिपत्तिर्मिथ्या स्यादित्याह--**नियोगेति** ॥ ११६ ॥

वेदान्तवाक्ये विध्यभ्युपगमेऽपि किं विधेरभिधानुगुणत्वं किं वाऽभिधाया विध्यनुगुणत्वमिति विकल्पयति--**भवेदिति**। तत्राभिधाश्रुतेर्विध्यनुगुणत्वे त्वत्पक्षसिद्धिर्मत्पक्षासिद्धिश्च विधेरभिधाश्रुत्यनुगुणत्वे त्वत्पक्षासिद्धिर्मत्पक्षसिद्धिश्चेत्यभिप्रेत्याऽऽह--**तत्रेति** ॥ ११७ ॥

अभिधाया विध्यनुगुणत्वे सूचितं दोषं विशदयति--**स्यादिति** ॥ ११८ ॥

---

१. प्रत्यक्षपूर्वकत्वादितरेषां प्रमाणानाम् । २. अनुपलब्धिप्रमाणादेव ।

अथाभिधानुरोधी स्यान्नियोगोऽयं तथाऽपि च । अभिधानुविधायित्वाद्विध्यर्थोऽत्र सुदुर्लभः ॥११९॥
प्राक्तु वाक्यार्थविज्ञानात्तन्निविष्टपदार्थयोः । अन्वयव्यतिरेकाख्यविवेकाय विधिर्भवेत् ॥१२०॥
वाक्यार्थप्रतिपत्तौ हि पदार्थाज्ञानमेव च । प्रतिबन्धो यतस्तस्मादन्वयाद्यवलोकनम् ॥१२१॥
वाक्यार्थज्ञानकाले यः पदार्थो नैव विद्यते । कर्तव्यः कारकापेक्षो विधेयः स न संशयः ॥१२२॥
५ विपरीतस्ततो यस्तु वाक्यादेवावगम्यते । नित्योऽकर्मविमुक्तः सन्न विधेयः कथञ्चन ॥१२३॥
स्वसिद्धेः कारणं नान्यज्ज्ञानमज्ञानहानये । यस्मादपेक्षते तस्मान्न निदिध्यासनाय तत् ॥१२४॥
सिद्धमप्यात्मकार्यस्य कारणं सिद्धये न चेत् । विध्यपेक्षं तदेव स्यान्न स्वसिद्धिप्रकाशकम् ॥१२५॥
तस्मात्कूटस्थविज्ञानं प्रत्याख्याताखिलद्वयम् । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥१२६॥
ब्रह्मणो ब्राह्मणस्येति भेदश्चात्रौपचारिकः । राहोः शिरोवन्मुख्यस्तु नैव स्यान्निर्गुणत्वतः ॥१२७॥
१० महिमा ब्राह्मणस्यैष हानिवृद्धिविवर्जितः । स्वतः सिद्धेर्विजानंस्तं न बिभेति कुतश्चन ॥१२८॥
विद्वान्सन्न बिभेतीति विद्याकालं भवेत्फलम् । न तु स्वर्गादिवत्प्राप्यं भुञ्जानस्तृप्यतीतिवत् ॥१२९॥
यतोऽविद्यातिरेकेण प्रतिबन्धो न विद्यते । तन्नाशानन्तरां मुक्तिं विद्वानिति ततोऽवदत् ॥१३०॥

विधेरभिधानुरोधित्वेऽपि सूचितं दोषं प्रकटयति—अथेति ॥ ११९ ॥

आत्मज्ञाने विध्यभावेऽपि वेदान्तेषु विध्यभावे मुमुक्षूणां प्रवृत्तिर्यादृच्छिकी स्यादित्याशङ्क्य पदार्थविवेके १५ विध्यभ्युपगमान्नैवमित्याह—प्राक्त्विति ॥ १२० ॥

वाक्यार्थज्ञानस्यापेक्षितत्वात्तत्प्रतिबन्धनिवृत्त्यर्थं विधावर्थ्यमाने किमिति पदार्थपरिशोधने विधिरित्याशङ्क्याऽऽह—वाक्यार्थेति ॥ १२१ ॥

कर्मकाण्डे विधेयमंशं यागादिकं दर्शयति—वाक्यार्थज्ञानेति ॥ १२२ ॥

कर्मकाण्डवज्ज्ञानकाण्डेऽपि किञ्चिद्विधेयं भविष्यतीत्याशङ्क्य ज्ञानं वा तद्विषयो वा निदिध्यासनं वाऽत्र २० विधेयमिति विकल्प्य ज्ञाने विधेर्निरस्तत्वात्तद्विषये च ब्रह्मात्मभावे नित्यसिद्धे विधेरसम्भवान्न कल्पद्वयमित्याह—विपरीत इति ॥ १२३ ॥

ज्ञानस्य निदिध्यासनापेक्षस्याज्ञाननिवर्तकत्वात्तस्य तच्छेषत्वान्निदिध्यासनं निधेयमितिकल्पान्तरं प्रत्याह—स्वसिद्धेरिति । ज्ञानस्य स्वोत्पत्तिमात्रेणाज्ञाननिवर्तकत्वान्निदिध्यासनशेषत्वाभावान्न तस्य विधेयत्वमित्यर्थः ॥१२४॥

उक्तमेव प्रपञ्चयति—सिद्धमपीति । कारणमज्ञाननिवृत्तौ ज्ञानं तद्यदि लब्धात्मकमपि स्वफलस्याज्ञान-२५ निवृत्तिलक्षणस्य प्राप्तये न भवति तर्हि तदेव निदिध्यासनविध्यपेक्षं स्वसिद्धेः स्वफलस्य प्रागुक्तस्य प्रकाशकं साधकमित्येतन्न स्यात् । [1]"न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते" इतिन्यायादित्यर्थः ॥ १२५ ॥

विधेयज्ञानात्पुरुषार्थसिद्धिरिति वक्तुमशक्यत्वाद्वाक्योत्थज्ञानादेव परिपूर्णपुरुषार्थसिद्धिरिति वाक्याद्वयोपादानपूर्वकं विचारफलमुपसंहरति—तस्मादिति ॥ १२६ ॥

"आनन्दं ब्रह्मणो विद्वानि"तिभेदनिर्देशादानन्दब्रह्मणोर्गुणगुणीभावः स्यादित्याशङ्क्याऽऽह—ब्रह्मण इति । ३० ब्रह्मविदो ब्राह्मणस्य ब्रह्मीभूतस्य स्वरूपभूतमानन्दं साक्षात्कुर्वतो भयहेत्वभावान्नास्ति भयमित्यस्यार्थस्यात्र विवक्षितत्वाद्ब्रह्मणि गुणगुणिभावस्याभावाद्भेदस्यात्र राहोः शिरोवत्कल्पितत्वाद्वस्तुतोऽभावादर्थशून्या षष्ठीत्यर्थः ॥१२७॥

विद्वानित्यादेरर्थं विवृणोति—महिमेति ॥ १२८ ॥

विद्वान्न बिभेतीति विद्यातत्फलयोः समानकालत्वनिर्देशस्य तात्पर्यमाह—विद्वानिति ॥ १२९ ॥

ज्ञानोदयनान्तरीयकत्वेन मुक्तिव्यवधानस्याज्ञानस्य निवृत्तेश्च ज्ञानसमानकाला मुक्तिर्वक्तव्येत्याह—३५ यत इति ॥ १३० ॥

---

१. श्लो० वा० चोदनासूत्रे–४७ ।

भयहेतुर्द्वयं यस्मात्तच्चाविद्यासमुद्भवम् । प्लुष्टायां विद्यया तस्यां न कुतश्चन भीर्भवेत् ॥१३१॥
परमात्मधियैतस्मिन्प्रत्यगात्मनि केवले । निरस्तायामविद्यायां भयं नास्ति कुतश्चन ॥१३२॥
निर्धूतपदवाक्यार्थमित्येवं प्रतिपत्तये । यतो वाचो निवर्तन्त इत्येवं वचनं श्रुतेः ॥१३३॥
तथा मनोविकल्पानां निषेधाय परात्मनि । धिया सहेत्यतो वक्ति श्रुतिर्याथात्म्यबोधिनी ॥१३४॥
निषिध्य 'नायमात्मेति भिन्नमात्मोपलम्भनम् । अनन्यानुभवं ब्रह्म [२]यमेवेत्याह न श्रुतिः ॥१३५॥ ५
प्रत्यग्ब्रह्मावसायित्वाद्भेदानां रज्जुसर्पवत् । उदाहारि[३] ततः श्रुत्या ह्ययं श्लोको मनोमये ॥१३६॥
विद्वानेव परं ब्रह्म आत्मनाऽऽत्मानमद्वयम् । न बिभेत्येकलोऽद्वन्द्वो भयहेतोरसम्भवात् ॥१३७॥
ननु साध्वक्रियाहेतुः पापानुष्ठानमेव च । इत्येतस्य निषेधार्थमेतं हेत्युच्यतेऽधुना ॥१३८॥
नैतमेवंविदं यस्माद्धावेतीहावधारणे । न तपत्यन्तकाले तमकर्तृत्वात्मवेदिनम् ॥१३९॥
क्रियाफलस्य सर्वस्य कर्तृगामित्वकारणात् ॥१४०॥ १०
धिङ्मां योऽहं शुभं कर्म जीवन्नाकरवं क्वचित् । अकार्षं च सदा पापं ह्यतो भयमुपस्थितम् ॥१४१॥
अस्माद्धेतोर्महांस्तापोऽविद्यासंवीतचेतसाम् । जायते मृतिकाले हि हिक्किकावशवर्तिनाम् ॥१४२॥
फलस्यायं स्वभावो हि यत्स्वकर्त्रनुगामिता । अतो न तपतो ज्ञोत्थावकर्तारं शुभाशुभौ ॥१४३॥
कस्मान्न तपतस्तौ चेद्धर्माधर्मौ विपश्चितम् ; कौटस्थ्याददृयत्वाच्च प्लुष्यत्येव शुभाशुभे ॥१४४॥

इतोऽपि ज्ञानतत्फलयोरेककालत्वं युक्तमित्याह—भयेति ॥ १३१ ॥ १५

उक्तमेवार्थं विवृणोति—परमात्मेति ॥ १३२ ॥

एवं मन्त्रं व्याख्याय तदीयपूर्वार्धस्य तात्पर्यार्थमाह—निर्धूतेति ॥ १३३-१३४ ॥

प्रत्यगात्मा न पदार्थो न वाक्यार्थो नापि विकल्पज्ञानानां विषयो भवतीत्यस्मिन्नेवार्थे "नायमात्मा प्रवचनेन लभ्य" इत्यादिश्रुत्यन्तरसम्वादं दर्शयति—निषिध्येति ॥ १३५ ॥

यदि कोशपञ्चकातिरिक्तप्रत्यग्ब्रह्मविषयोऽयं श्लोकस्तर्हि किमिति मनोमयकोशे यथोक्तश्लोकस्योदाहरणम् २० इत्याशङ्क्य कोशपञ्चकस्य प्रत्यगात्मातिरेको नास्तीति प्रतिपादनायेत्याह—प्रत्यगिति ॥ १३६ ॥

द्वैतस्य भयकारणत्वात्तस्य चाविद्याकार्यत्वाद्विद्ययाऽविद्यानिवृत्तौ भयहेतोरभावाद्विद्वानभयं ब्रह्मैव भवतीति मन्त्रार्थमुपसंहरति—विद्वानिति । अद्वयमात्मानमवगच्छतीति शेषः ॥ १३७ ॥

एतं हेत्यादिवाक्यस्य व्यावर्त्यामाशङ्कामाह—नन्विति । हेतुर्विदुषोऽपि भयस्येति शेषः । तत्रोत्तरत्वेन वाक्यमवतारयति—इत्येतस्येति ॥ १३८ ॥ २५

अवतारितस्य वाक्यस्यार्थमाह—नैतमिति । यस्मादेवंविदमकर्तृत्वाभोक्तृत्वोपलक्षितब्रह्मात्मवेदिनं निषिद्धसेवनं विहिताकरणं चान्तकाले नैव तपति प्रकृते वाक्ये "वावे"तिनिपातस्यावधारणे प्रयुक्तत्वात्तस्मान्निषिद्धसेवनादि विदुषोऽपि भयकारणमस्तीत्येवं न शङ्कितव्यमित्यर्थः ॥ १३९ ॥

विहितानुष्ठानं निषिद्धानुष्ठानं च विदुषोऽकर्तुरपि किमिति भयकारणं न भवतीत्याशङ्क्याऽऽह—क्रियेति । किमहमित्यादिवाक्यद्वयं योजयति—धिगिति ॥ १४०-१४१ ॥ ३०

पुण्यस्याकरणात्पापस्य करणाच्च महद्भयं कदा केषां चेत्यपेक्षायामाह—अस्मादिति ॥ १४२ ॥

पुण्यपापयोर्मरणकाले तापकत्वं विशेषाभावाद्विदुषोऽपि भविष्यतीत्याशङ्क्याऽऽह—फलस्येति ॥ १४३ ॥

विदुषोऽपि पुण्यपापयोरतापकत्वे हेत्वन्तरं वक्तुं पृच्छति—कस्मादिति । विवक्षितं हेत्वन्तरमुदाहरति—कौटस्थ्यादिति । वस्तुसामर्थ्यादेव सर्वप्रकारविक्रियाविरहितत्वाद्द्वैताभावोपलक्षितपूर्णस्वभावत्वाच्च विद्योदय-

१. क० १.२.२३ । २. क० १.२.२३ । ३. तै० २.४ । ३५

स य एवं यथोक्तार्थं विद्वानेते शुभाशुभे ॥१४५॥
साधुकर्मक्रिया या च पापानुष्ठानमेव च । अकर्ताऽस्मीतिविज्ञानहुताशेनाञ्जसा द्रुतम् ॥१४६॥
दग्ध्वा निरन्वये कृत्वा ह्यात्मानं स्पृणुते यतः । स्पृणोतिर्बलकर्माऽयमात्मानं बलयत्यतः ॥१४७॥
अविद्यासंश्रयादात्मा बलीयानपि दुर्बलः । अविद्या राजयक्ष्माऽस्य कार्श्यमेति तया यतः ॥
५ ध्वस्तायां विद्यया तस्यामात्मानं बलयत्यतः ॥१४८॥
बोधेनैव निरस्तायां निद्रायां स्वप्नदर्शनम् । बुद्धात्मशेषतामेति तथेहैकलशेषताम् ॥१४९॥
अथवा एष एवोभे सत्याद्दश्यादिलक्षणः । शुभाशुभे यतस्तस्मादात्मानं बलयत्ययम् १५०॥
लिङ्गदेहाश्रितं कार्श्यं तच्च कर्मनिबन्धनम् । कर्म कर्त्रादिसम्भूतं कर्त्राद्यज्ञानहेतुकम् ॥१५१॥
अहं ब्रह्मेत्यतो ज्ञानाद्ध्वस्तायां प्रत्यगात्मनि । कार्श्यहेतावविद्यायामेकत्वाद्बलयत्ययम् ॥१५२॥
१० स्वतो बुद्धं स्वतः शुद्धं स्वतो मुक्तं यथोदितम् । वेदैवं यः स्वमात्मानं फलं तस्येदृशं स्मृतम् ॥१५३॥
इतीत्युक्तपरामर्शो ब्रह्मणोऽद्वयरूपिणः । साक्षात्तद्बोधहेतुत्वाद्वल्ली ह्युपनिषद्भवेत् ॥१५४॥
विद्यैवोपनिषज्ज्ञेया तयैवोपेत्य निर्द्वयम् । विन्दते निर्भयात्मानं तस्मादुपनिषत्स्मृता ॥१५५॥
इमां वल्लीं तु तादर्थ्यात्परब्रह्मविदो गुणात् । सदोपनिषदित्यूचुस्त्यक्तसर्वैषणाः शुभाम् ॥१५६॥

इति नवमोऽनुवाकः

१५ नान्तरीयकत्वेन विद्वानविद्यया सह पुण्यपापे दग्ध्वा स्वस्थोऽवतिष्ठते । तथा च पुण्यपापयोर्नास्ति विदुषि तापकत्वमित्यर्थः ॥ १४४॥

उक्तेऽर्थे स य इत्यादिवाक्यं योजयति—स य इति । यथोक्तार्थं सत्यज्ञानादिलक्षणमेवमुक्तेन प्रकारेण प्रत्यगात्मतया यो विद्वानवतिष्ठते स पुनरविद्याकार्ये शुभाशुभे दग्ध्वाऽऽत्मानं स्पृणुते बलयतीत्यर्थः । शुभाशुभे दग्ध्वेत्युक्तमेव व्यनक्ति—साधुकर्मेति । यस्मादात्मानं विद्वानुक्तरीत्या स्पृणुते तस्मान्नास्ति तस्मिन्धर्मादिस्तापकत्व-
२० मिति शेषः । स्पृणुते इति क्रियापदस्य विवक्षितमर्थमाह—स्पृणोतिरिति । अत इत्यहं ब्रह्मेतिज्ञानादित्यर्थः ॥ १४५-१४६-१४७ ॥

आत्मनो बलस्य स्वाभाविकत्वात्किं विद्याकृतेन बलेनेत्याशङ्क्याऽऽह—अविद्येति । आत्मबलस्य स्वाभाविकत्वेऽप्यविद्याकृतदौर्बल्यस्य विद्यया निरसने स्वाभाविकबलाभिव्यक्तेर्विद्याधीनमस्य बलमभीष्टमित्यर्थः ॥ १४८ ॥

अविद्यातत्कार्ययोर्विद्यया निरस्तयोरात्मनः सकाशाद्भेदेनावस्थानमाशङ्क्य दृष्टान्तेन निराचष्टे—
२५ बोधेनेति ॥ १४९ ॥

एते पुण्यपापे विद्यया दग्ध्वाऽऽत्मानं बलयतीतिपूर्ववाक्यस्यार्थो व्याख्यातः । सम्प्रति "उभे ह्ये"त्यादिसमनन्तरवाक्यस्यार्थं कथयति—अथवेति । उक्तलक्षणो विद्वान्विद्याबलादुभे पुण्यपापे स्वात्मानमेव करोतीति कुतस्तयोस्तापकत्वाशङ्केत्यर्थः ॥ १५० ॥

वाक्यद्वयार्थमुपसंहरति—लिङ्गदेहेति ॥ १५१-१५२ ॥

३० य एवं वेदेत्यस्यार्थमाह—स्वत इति । ईदृशमविद्यानिरासद्वारेण बलात्मकमिति यावत् ॥ १५३ ॥

"इत्युपनिषदि"त्यत्रेतिशब्दार्थमाह—इतीत्युक्तेति । उपनिषच्छब्दस्यौपचारिकमर्थं कथयति—साक्षादिति ॥ १५४॥
मुख्यमुपनिषच्छब्दार्थं कथयति—विद्यैवेति ॥ १५५ ॥

वल्ल्यामुपनिषच्छब्दप्रवृत्तिमौपचारिकीमुक्तामुपसंहरति—इमामिति ॥ १५६ ॥

इति नवमोऽनुवाकः

३५ इति ब्रह्मवल्लीवार्तिकटीका समाप्ता

## अथ भृगुवल्ल्यां प्रथमोऽनुवाकः

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः

भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तँ होवाच । [1]यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । ५

इति प्रथमोऽनुवाकः

सत्यं ज्ञानमनन्तं ब्रह्माऽऽकाशादिकार्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं विशेषवदिवोपलभ्यमानं यस्मात्तस्मात्सर्वकार्यविलक्षणमदृश्यादिधर्मकमेवाऽऽनन्दं तदेवाहमिति विजानीयादनुप्रवेशस्य तदर्थत्वात्तस्यैवं विजानतः शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवत इत्येवमानन्दवल्ल्यां विवक्षितोऽर्थः । परिसमाप्ता च ब्रह्मविद्या । अतः परं ब्रह्मविद्यासाधनं तपो वक्तव्यमन्नादिविषयाणि चोपासनान्यनुक्तानीत्यत इदमारभ्यते— १०

### आनन्दगिरिटीका

वृत्तानुवादपूर्वकमुत्तरवल्लीसम्बन्धमाह—सत्यं ज्ञानमित्यादिना । तप इति । पदार्थविवरणं वाक्यार्थज्ञान-

### वनमाला

वृत्तानुवादपूर्वकमुत्तरवल्लीमवतारयति—सत्यं ज्ञानमित्यादिना । अनुप्रविष्टशब्देन विवक्षितमर्थमाह—विशेषवदिवेति । सांसारिकधर्मजातं विशेषः, तस्यावास्तवत्वज्ञापनार्थं इवकारः, तथा च श्रुतिः—"ध्यायतीव लेलायतीव" इति । प्रवेशवाक्येन ब्रह्मणो जीवभावोक्तेस्तात्पर्यमाह—यस्मादिति । यस्माद्ब्रह्मैव संसारित्वेनोपलभ्यत इत्युक्तं तस्मादहं यथोक्तं ब्रह्मैवेति विजानीयादिति तात्पर्यतः प्रदर्शितं भवति । जीवभावेनानुप्रवेशकथनस्य अहं ब्रह्मेति ज्ञानैकप्रयोजनकत्वादित्यर्थः । न हि ब्रह्मैव संसारित्वं प्राप्तमिति ज्ञानात्किञ्चित्प्रयोजनं लभ्यते प्रतीयमान-संसारित्वनिरसनपूर्वकमहं ब्रह्मेति ज्ञानविवक्षायां तु मुक्तिः प्रयोजनं लभ्यत इति जीवस्य ब्रह्मत्वज्ञान एव प्रवेश-वाक्यस्य तात्पर्यम् । एतेनाभेदबोधकवाक्याभावादत्राहं ब्रह्मास्मीति ज्ञानमविवक्षितमिति शङ्कापि निरस्ता वेदितव्या, तात्पर्यतो गुहानिहितवाक्यस्य प्रवेशवाक्यस्य चाभेदज्ञानपरत्वात् । अभेदज्ञानफलमप्युक्तमनुवदति—तस्यैवमिति । "इत्युपनिषत्" इत्युपसंहारवाक्यार्थमप्यनुवदति—परिसमाप्ता च ब्रह्मविद्येति । नन्वेवं वक्तव्यानव-शेषणादुत्तरवल्ली व्यर्था; नेत्याह—अतः परमिति । विद्योक्त्यनन्तरमित्यर्थः । न च काशपञ्चकविवेचनरूपस्य २०

---

१. अत्र "यतो वा इमानि भूतानि" इत्यादिवाक्येन जगज्जन्मस्थितिलयकारणत्वं लक्षणमुक्तम्, तेनोपादानत्वं लक्ष्यते । अत्र जन्माद्यधिकरणे "जन्माद्यस्य यत" इत्यनेन सूत्रेण सूचितम्, तथा हि— जगज्जन्मस्थितिभङ्गस्य ब्रह्मस्वरूपलक्षणत्वायोगात् तस्य मिथ्यात्वेन सत्यब्रह्मप्रतिपत्तिर्न सम्भवतीति प्राप्ते यथा शाखाग्रं चन्द्रः प्रकृष्टप्रकाशश्चन्द्र इति वाक्याभ्यां लक्षणद्वयप्रतिपत्तिस्तथा यज्जगज्जन्माद्यु-पादाननिमित्तकारणं तद्ब्रह्मेति मिथ्याभूतेनापि यद्रजतं सा शुक्तिरितिवत् सत्यब्रह्मलक्षणं सम्भवति । "यतो वा इमानि भूतानी"त्यादिवाक्यं ब्रह्म न लक्षयति उत लक्षयति ? इति संशये एकस्योपाद-निमित्तोभयकारणत्वस्य दृष्टान्ताभावेनानुमातुं शक्यत्वात् । आगमस्याननुगुणत्वम् । एककारणत्वमात्रोक्तो वस्तुपरिच्छेदादलक्षणत्वमिति प्राप्ते पौरुषेयतया शङ्कितदोषमनुमानं तस्यापौरुषेयतया निरस्ता-प्रामाण्यशङ्कतया प्राबल्यात् च तेनोभयकारणत्वं सुखादिदृष्टान्तेन लक्षणत्वमुच्यते । ततश्च वस्तु-परिच्छेदाभावाल्लक्षस्य ब्रह्मत्वसम्भवः । २५ ३०

आख्यायिका विद्यास्तुतये, प्रियाय पुत्राय पित्रोक्तेति—भृगुर्वै वारुणिः। वैशब्दः प्रसिद्धानुस्मारको भृगुरित्येवं नामा प्रसिद्धोऽनुस्मर्यते। वारुणिर्वरुणस्यापत्यं वारुणिर्वरुणं पितरं ब्रह्म विजिज्ञासुरुपससारोपगतवान्। अधीहि भगवो ब्रह्मेत्यनेन मन्त्रेण। स च पिता विधिवदुपसन्नाय तस्मै पुत्रायैतद्वचनं प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। अन्नं शरीरं तदभ्यन्तरं च प्राणमत्तारमुपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचमित्येतानि ब्रह्मोपलब्धौ
५ द्वाराण्युक्तवान्। उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच ब्रह्मणो लक्षणम्। किं तत्? यतो यस्माद्वा इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते। येन जातानि जीवन्ति प्राणान्धारयन्ति वर्धन्ते। विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति, अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते। उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहति भूतानि, तदेतद्ब्रह्मणो लक्षणम्। तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व। यदेवंलक्षणं ब्रह्म

आनन्दगिरिटीका

१० साधनमित्यर्थः। **अधीहीति**। अध्यापय स्मारय। "इक् स्मरणे" इति धातुपाठादित्यर्थः। **ब्रह्मोपलब्धाविति**। लक्ष्यत्वमर्थविवेकाय द्वाराणि शरीरादिचेष्टान्यथानुपपत्त्या हि साक्षिभूतश्चिद्धातुर्विविच्यत इति भावः।

वनमाला

वक्ष्यमाणस्य तपसोऽपि प्रागभिहितत्वात्पुनस्तदुक्तिर्व्यर्थेति वाच्यम्, तस्यैव तपसो ब्रह्मलक्षणमुखेन कर्तव्यत्वरूपविशेषकथनपूर्वकमुत्तरवल्ल्याः प्रपञ्चार्थत्वेन पौनरुक्त्याभावात्। इतश्च न पौनरुक्त्यमित्याशयेनाह—**अन्नादीति**।
१५ ननु तर्हि तपआदिकमेव वक्तव्यं न त्वाख्यायिकापि; तत्राह—**आख्यायिकेति**। नन्वाख्यायिकया कथं स्तुतिलाभः? तत्राह—**प्रियायेति**। पिता प्रियाय पुत्राय प्रशस्तामेव विद्यामुपदिशेन्नान्यामिति रीत्या विद्यायाः प्रकर्षो लभ्यत इत्यर्थः। हे भगवन्! ब्रह्माधीहि स्मर उपदिशेति यावदिति मन्त्रार्थः। **अत्तारमिति**। शरीरेऽन्नशब्दप्रयोगात्तदभ्यन्तरस्य प्राणस्यात्तृत्वमुपचारेणोक्तमिति मन्तव्यम्। यद्वा अन्नशब्देन विराडात्मकं शरीरं विवक्षितम्, तदभ्यन्तरः प्राणश्च सूत्रात्मरूपो हिरण्यगर्भो विवक्षित इति कृत्वा प्राणस्यात्तृत्वमुक्तमिति मन्तव्यम्। ननु अन्न-
२० प्राणयोरुक्तिः "अन्नं ब्रह्मेति व्यजानात्" "प्राणो ब्रह्मेति व्यजानात्" इति करिष्यमाणे विचार उपयुज्यते, रूपाद्युपलब्धिसाधनानां चक्षुरादीनामुक्तिः क्वोपयुज्यते? तत्राह—**ब्रह्मोपलब्धौ द्वाराणीति**। अत्र मनःशब्देन "मनो ब्रह्मेति व्यजानात्" इत्यत्र वक्ष्यमाणमाधिदैविकं मनो गृह्यते। एतच्च "विज्ञानं ब्रह्मेति व्यजानात्" इत्यत्र वक्ष्यमाणस्याधिदैविकविज्ञानस्याप्युपलक्षणम्। वागादीनां चक्षुरादीनां च यथायथं प्राणादिकोशेष्वन्तर्भूतानां ब्रह्मोपलब्धिद्वारत्वं विवक्षितमिति न चक्षुरादिकथनवैयर्थ्यमिति भावः। उक्तानुवादपूर्वकम् "यतो वै" इत्यादेरतात्पर्यमाह—**उक्त्वा**
२५ **चेत्यादिना**। निर्विशेषस्य ब्रह्मणो धर्मरूपं लक्षणं न सम्भवतीत्याक्षिपति—**किं तदिति**। काल्पनिकं धर्मरूपं जगत्कारणत्वं तस्य लक्षणं विवक्षितम्, अतो नासम्भव इति श्रुत्या परिहरति—**यत इति**। प्रयन्तीत्यस्य विवरणं अभिसंविशन्तीति। तत्राभीत्युपसर्गार्थमाभिमुख्यं विवृणोति—**तादात्म्यमेवेति**। ब्रह्मणि लीयन्त इत्येव विवक्षितार्थः। अत्र ब्रह्मणो भूतलयाधारत्वश्रवणात्प्रकृतित्वरूपं कारणत्वं विवक्षितमित्याशयेनाह—**उत्पत्तीति**। प्रकृतिरेव हि विकाराणामात्मा स्वरूपमिति स्थापितमारम्भणाधिकरणे, अतो यदात्मकतामित्युक्तम्। यद्यपि ब्रह्मादिस्तम्बपर्यन्तानां
३० भूतानां स्वत उत्पत्त्यादयो न सन्ति, तथापि स्थूलसूक्ष्मोपाधिविशिष्टत्वाकारेण तेषामपि ते सन्तीति भावः। नन्वत्र महाभूतानामाकाशादीनां ग्रहणं कुतो न क्रियते प्राणिष्विवाकाशादिष्वपि भूतशब्दस्य प्रसिद्धत्वात्? अत एव "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र भूतशब्देन महाभूतानां ग्रहणमाचार्यैरेव कृतम्, तथा जन्मादिसूत्रे द्विविधान्यपि भूतानि गृहीतानि; तथा च कथमत्र प्राणिनामेव ग्रहणमिति चेत्, उच्यते–भूतशब्दस्योभयत्र रूढत्वेऽपि प्राणधारणकर्तृवाचिजीवन्तीत्युपपदानुसारेण प्राणिरूढेरेवोन्मेषो न महाभूतविषयरूढेरिति नात्राकाशादि-
३५ ग्रहणप्रसक्तिः "सर्वाणि ह वा इमानि भूतानि" इत्यत्र च "अस्य लोकस्य का गतिः" इति पृथिवीलोकादिकारणप्रश्नानुसारेण महाभूतरूढेरेवोन्मेषो न प्राणिरूढेः, जन्मादिसूत्रे च जगत्कारणवाक्यानां सर्वेषामेवोदाहरणत्वाद् वाक्यान्तरानुसारेण द्विविधान्यपि भूतानि गृहीतानीति न किञ्चिदवद्यम्। अत्र विवक्षितं लक्षणमाह—**तदेतदिति**। भूतकारणत्वमित्यर्थः। श्रुतौ तद्ब्रह्म तद्विजिज्ञासस्वेत्यर्थक्रमो बोध्यः। यद्वा, ननु ब्रह्म जिज्ञासवे कथं जगत्कारणं जिज्ञास्यत्वेनोपदिश्यते? तत्राह श्रुतिः—**तद्ब्रह्मेति**। अस्मिन्पक्षे यथाश्रुत एवार्थक्रमः। ननु विजिज्ञासस्वेति पित्रा
४० न वक्तव्यम्, स्वरूपविशेषजिज्ञासायाः प्रागेव सिद्धत्वादित्याशङ्क्याह—**यदेवंलक्षणमिति**। अन्नादेर्ब्रह्मोपलब्धि-

तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः। श्रुत्यन्तरं च—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम्" इति ब्रह्मोपलब्धौ द्वाराण्येतानीति दर्शयति।

स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणं च श्रुत्वा पितुस्तपो ब्रह्मोपलब्धिसाधनत्वेनातप्यत तप्तवान्। कुतः पुनरनुपदिष्टस्यैव तपसः साधनत्वप्रतिपत्तिर्भृगोः? सावशेषोक्तेः। अन्नादिब्रह्मणः प्रतिपत्तौ द्वारं लक्षणं च यतो वा इमानीत्याद्युक्तवान्। सावशेषं हि तत्साक्षाद्ब्रह्मणोऽनिर्देशात्। अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्यं जिज्ञासवे ५ पुत्रायेदमित्थंरूपं ब्रह्मेति। न चैवं निरदिशत्किं तर्हि सावशेषमेवोक्तवान्। अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति। तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात्, सर्वेषां हि नियतसाध्यविषयाणां साधनानां

आनन्दगिरिटीका

न केवलं त्वमर्थज्ञानं वाक्यार्थज्ञानसाधनं किन्तु तत्पदार्थज्ञानमपीत्यभिप्रेत्य तदर्थस्य ब्रह्मणो लक्षण-मुक्तवानित्यर्थः। सावशेषोक्तेरिति। पदार्थोपलक्षणस्यैवाभिधानादखण्डवाक्यार्थस्याप्रतिपादनात्पदार्थभेदज्ञानाच्च १० पुरुषार्थासम्भवात् "उदरमन्तरं कुरुत" इति निन्दितत्वादतो वाक्यार्थावगतिपर्यन्तं तात्पर्येण लक्ष्यपदार्थविचारणं आवृत्त्याऽनुष्ठितवानित्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां तृतीयभृगुवल्ल्यां प्रथमोऽनुवाकः

वनमाला १५

द्वारत्वमन्यत्रापि प्रसिद्धमित्याह—श्रुत्यन्तरमिति। षष्ठ्यन्तप्राणादिशब्दोपात्तस्य कार्यकरणसङ्घातजातस्याधिष्ठान-तया सत्तास्फूर्तिप्रदं द्वितीयान्तप्राणादिशब्दोपात्तं प्रत्यगात्मानं ये श्रुतिन्यायाभ्यां विदुः ते सृष्टेः पूर्वकालेऽपि स्थितं कूटस्थं ब्रह्म आत्मत्वेन निचिक्युर्जानीयुः नेतरे प्रत्यगात्मस्वरूपज्ञानरहिता इति श्रुत्यन्तरार्थः। योऽन्नादेरधिष्ठानतया सत्ताप्रकाशरूपः प्रत्यगात्मा स ब्रह्मैवेत्येवंप्रकारेण ब्रह्मोपलब्धिद्वारत्वं तत्रावगम्यत इति भावः। पितुरिति पञ्चमी। तस्माच्छ्रुत्वेति योजना। ननु पित्रा तपसा ब्रह्म विजिज्ञासस्वेत्यनुक्तत्वात्कथं तपसि ब्रह्मविज्ञानसाधनत्वं भृगुणा २० विनिश्चितम्? न हि तन्निश्चयं विना तत्र प्रवृत्तिस्तस्य सम्भवतीति शङ्कते—कुतः पुनरिति। परिहरति—सावशेषोक्तेरिति। सावशेषोक्तेस्तपसि ब्रह्मविज्ञानसाधनत्वप्रतिपत्तिर्भृगोरभूदित्यर्थः। गुरूक्तार्थानुवादपूर्वकं तदुक्तेः सावशेषत्वं साधयति—अन्नादीत्यादिना। ब्रह्मणः प्रतिपत्तौ द्वारभूतमन्नादिकम् "अन्नं प्राणम्" इत्यादिनोक्तवान् इत्यर्थः। सावशेषं हि तदिति। यद्भूतजन्मादिकारणं तद्ब्रह्म, तत्प्रतिपत्तौ चान्नादिद्वारमित्येतादृशमुपदेशनं सावशेषमिति। अत्र हिशब्दोक्तं हेतुमाह—साक्षादिति। त्वं ब्रह्मेत्यपरोक्षतया ब्रह्मणो निर्देशाभावादित्यर्थः। २५ नन्वेतावता कथं गुरूक्तेः सावशेषत्वं सिध्यति तत्राह—अन्यथा हीति। सावशेषत्वाभावे हीत्यर्थः। स्वरूपेणैवेति। प्रत्यक्त्वेनैवेत्यर्थः। वस्तुतः प्रत्यगात्मस्वरूपत्वाद्ब्रह्मण इति भावः। भृगोर्वास्तवस्वरूपज्ञाने ताटस्थ्यं वारयति—जिज्ञासव इति। गुरोर्वास्तवस्वरूपबोधने उपेक्षां वारयति—स्वपुत्रायेति। निर्देशस्वरूपमेव दर्शयति—इदमित्थं-रूपमिति। इदं त्वया पृष्टं ब्रह्म इत्थंरूपं तव देहे बुद्ध्यादिसाक्षितयोपलभ्यमानचैतन्यरूपमिति निर्देष्टव्यमिति योजना। ननु तथैव पित्रा निर्दिष्टं ब्रह्म; नेत्याह—न चैवमिति। अनुपलम्भादिति भावः। ननु तर्हि कीदृशं ३० ब्रह्मोक्तवानिति पृच्छति—किं तर्हीति। परोक्षतयैव ब्रह्मोक्तवानित्याह—सावशेषमेवेति। इत्थं सावशेषोक्तेरिति हेतुं प्रसाध्य तेन तपसि ब्रह्मज्ञानसाधनत्वप्रतिपत्तिप्रकारमाह—अत इति। सावशेषोक्तेरित्यर्थः। साधनान्तरमिति। स्वस्मिन्विधिवदुपसदनादिलक्षणं यत्साधनमस्ति तदपेक्षयान्यत्साधनमित्यर्थः। ननु परोक्षतया ब्रह्मोपदेशस्य वस्तुतः सावशेषत्वेऽपि तस्य तत्सावशेषत्वं शिष्येण कथं ज्ञातम्; प्रत्यगात्मैव ब्रह्मेति ज्ञानं विना तदुपदेशस्य सावशेषत्वज्ञाना-सम्भवादिति चेत्; नैवम्, ब्रह्मवित्सभायां तदीयव्यवहारादिना सामान्यतो जीवो ब्रह्मेति ज्ञात्वा तदैक्यापरोक्ष्याय ३५ गुरूपसदनसम्भवेन परोक्षोपदेशस्य सावशेषत्वज्ञानसम्भवात्। ननु ब्रह्मात्मैक्यसाक्षात्कारं प्रति चित्तगतप्रतिबन्ध-निवृत्तिद्वारा तत्सम्पादनसमर्थं साधनान्तरं ममापेक्षते पिता नूनं निश्चय इत्यनेन प्रकारेण स्वस्यानुष्ठेयं सामान्यतः साधनान्तरं निश्चितमित्यस्तु, तच्च साधनान्तरं तप एव पितुराशयस्थमिति कथं निश्चितमित्याशङ्क्य योग्यता-विशेषादित्याह—तपोविशेषेति। तपोरूपसाधनविशेषेत्यर्थः। सर्वेति। सर्वेषां ज्ञानसाधनानां मध्ये तपसो ज्ञानं

तप एव साधकतमं साधनमिति हि प्रसिद्धं लोके। तस्मात्पित्राऽनुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः। तच्च तपो बाह्यान्तःकरणसमाधानं तद्द्वारकत्वाद्ब्रह्मप्रतिपत्तेः।

"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः। तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते॥" इति स्मृतेः।

स च तपस्तप्त्वा।

५ इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्ये प्रथमोऽनुवाकः

वनमाला

प्रत्यतिशयितसाधनत्वेन ब्रह्मविद्व्यवहारे प्रसिद्धत्वादित्यर्थः। संग्रहवाक्यं विवृणोति—सर्वेषां हीति। साध्यपदं ज्ञानपरम्, तस्य नियतत्वमैकान्तिकफलत्वम्; तेन नियतसाध्येन सह साधनतया सम्बद्धानामित्यर्थः। तस्मादिति।
१० सावशेषोक्त्यादिलिङ्गादित्यर्थः। तपसः स्वरूपं दर्शयति—तच्चेति। समाधानमिति। उदाहरिष्यमाणस्मृतिगतस्यैकाग्र्यपदस्य व्याख्यानं समाधानमिति। तत्र बाह्यकरणानां समाधानं विषयेभ्यो व्यावृत्तत्वरूपं विवक्षितम्, अन्तःकरणस्य समाधानं तत्त्वे स्थापनमिति विभागः। स्मृतौ तपसः परमत्वविवरणमुत्तरार्धम्। तपः सर्वधर्माणां मध्ये वस्तुगत्या ज्यायो भवति; स च तपोरूपो धर्मः पर इति विद्वद्भिरप्युच्यत इति तदर्थः। परमार्थस्तु श्रुतौ स्मृतौ च तपःपदं भाष्यगतसमाधानपदं च तत्त्वचिन्तापरम्, न समाधिपरम्, "तप आलोचने" इति स्मरणात्
१५ महावाक्यार्थज्ञानं प्रति त्वंपदार्थशोधनरूपस्यालोचनस्यैव साधकतमत्वाच्च, अत्र गुरूपदिष्टस्य ब्रह्मलक्षणस्यापि क्रमेण कोशेभ्यः सकाशादात्मतत्त्वस्य विवेचन एवोपयोगाच्च ब्रह्म जिज्ञासोर्भृगोर्जिज्ञासिते ब्रह्मणि विचारं विना जिज्ञासानिवर्तकनिर्णयायोगाच्च। अत एव "तद्विजिज्ञासस्व" इति श्रुतिमूलके जिज्ञासासूत्रे ब्रह्म जिज्ञासोर्विचार एव कर्तव्यत्वेनोपदिष्टः। अत एव चात्र भाष्यवार्त्तिके प्रथमं यथाश्रुतभाष्यादिकमनुरुध्य पश्चात्तपःशब्दो विचारपरत्वेनोपपत्तिपूर्वकं योजितः। तथा च वार्त्तिकम्—

२० "अन्वयव्यतिरेकादिचिन्तनं वा तपो भवेत्। अहं ब्रह्मेति वाक्यार्थबोधयालमिदं यतः॥"[१] इति।

सूतसंहितायां परमेश्वरेणाप्युक्तम्—

"कोऽहं मुक्तिः कथं केन संसारं प्रतिपन्नवान्॥ इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः।"[२] इति।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां भृगुवल्ल्यां प्रथमोऽनुवाकः

---

१. तै० वा०—३ भृगु०, अनु० १, श्लो० १९। २. सू० सं०—२ ज्ञान०, अध्या० १४, श्लो० ४-५।

## अथ वार्तिके भृगुवल्ल्यां प्रथमोऽनुवाकः

सत्यं ज्ञानमनन्तं यद्ब्रह्मोक्तं प्रत्यगात्मनि । तदभिन्नं परं ज्ञानमुक्तं मोहापनोदि यत् ॥ १ ॥
अभिधित्सुरथेदानीं यथोक्तज्ञानसिद्धये । यत्साधकतमं तस्य प्राप्त्यै प्रववृते श्रुतिः ॥ २ ॥
गुरुद्वारैव विद्येयमाचार्याद्धेति नः [1]श्रुतिः । शिष्योपाध्यायरूपेयमत आख्यायिकोच्यते ॥ ३ ॥
अधीहि भगवो ब्रह्मेत्येतन्मन्त्राभिशब्दितम् । अन्तर्णीतणिजर्थस्य ह्यधीहीति भवेद्यतः ॥ ४ ॥
जिज्ञासुः परमं ब्रह्म श्रद्धाभक्तिपुरःसरः । उपसीदेद्गरीयांसं मन्त्रेणानेन शुद्धधीः ॥ ५ ॥ ५
मोक्षादर्वाक्षु भोगेषु व्यावृत्तकरणो भृगुः । अध्यापय परं ब्रह्मेत्यपृच्छद्वरुणं गुरुम् ॥ ६ ॥
अन्नं प्राणमितीत्यादि वरुणो भृगवेऽवदत् । देहकारणमन्नं स्यात्प्राणः प्राणादिकारणम् ॥
चक्षुः श्रोत्रं मनो वाक्च करणान्युपलब्धये ॥ ७ ॥
अन्वयव्यतिरेकोक्तिर्ब्रह्मणो वोपलब्धये ॥ ८ ॥
अनिर्देश्यस्य वा भूम्नो लक्षणस्य प्रवृत्तये । अन्नं प्राणमितीत्यादि [2]प्रत्यग्धर्मोपदिश्यते ॥ ९ ॥ १०
[3]प्राणस्य प्राणमित्येवं श्रुतिरप्याश्रिता भवेत् । कर्मश्रुतिश्च ब्रह्मत्वे वाचमित्यादि युज्यते ॥१०॥

पूर्वोत्तरवल्ल्योः सङ्गतिकीर्तनार्थं वृत्तं सङ्कीर्तयति—सत्यमिति । यद्ब्रह्म सत्यज्ञानाद्यात्मकं तत्प्रत्यगात्मनि स्वरूपभूतं "यो वेद निहितं गुहायामि"त्यत्रोक्तं तेन च ब्रह्मणा प्रत्यग्भूतेनाभिन्नमेकीभूतं यत्परं ज्ञानं तदेव मोहनिवर्तकमिति चोक्तम् । स्वरूपज्ञानस्यैव वाक्योत्थबुद्धिवृत्त्यवच्छिन्नस्याज्ञाननिवर्तकत्वादित्यर्थः ॥ १ ॥

आनन्दवल्लीतात्पर्यार्थमनूद्य भृगुवल्लीतात्पर्यार्थमाह—अभिधित्सुरिति । सकार्याज्ञाननिवर्तकस्य ब्रह्मात्मैकत्वज्ञानस्य साधनोपन्यासार्थं भृगुवल्लीप्रवृत्तिरित्यर्थः ॥ २ ॥ १५

किमित्येषा वल्ली शिष्याचार्यक्रमेणोपन्यस्यते तत्राऽऽह—गुरुद्वारेति ॥ ३ ॥

आख्यायिकातात्पर्यं दर्शयित्वा वाक्यद्वयाभिप्रायमुक्त्वा तृतीयं वाक्यमुपसदनमन्त्रप्रदर्शनार्थमित्याह—अधीहीति । अध्यापयेत्यस्मिन्नर्थे भवत्यधीहीति पदम् । यथाश्रुतार्थस्यात्रासम्भवादित्याह—अन्तर्णीतेति ॥ ४ ॥

उक्तार्थे मन्त्रस्य विनियोगं दर्शयति—जिज्ञासुरिति ॥ ५ ॥ २०

यथोपसदने बुद्धिशुद्धिरधिकारिविशेषणं तथा वैराग्यमपीत्याह—मोक्षादिति । अध्यापय स्मारय ज्ञापयेति यावत् ॥ ६ ॥

तस्मा एतदित्यादिवाक्यद्वयमुत्थापयति—अन्नमिति । अन्नप्राणचक्षुरादिशब्दानामसङ्कीर्णमर्थं कथयति—देहेति । प्राणादीन्पञ्च वृत्तिभेदान्करोतीति प्राणादिकारणो वृत्तिमान्वायुरेवेत्यर्थः ॥ ७ ॥

ब्रह्म मां ज्ञापयेति प्रष्टे भृगवे किमित्यन्नादिसङ्कीर्तनमित्याशङ्क्यान्नप्राणादि व्यभिचारित्वादनात्मा स्रगादिवदात्मा त्वव्यभिचारीत्येवंविधान्वयव्यतिरेकयोर्ब्रह्मज्ञानोपायत्वेन कथनार्थमन्नादिसङ्कीर्तनं क्रियते । न हि तदन्नादिना विनाऽन्वयव्यतिरेकवचनमुचितमित्याह—अन्वयेति । वाशब्दो वक्ष्यमाणविवक्षया प्रयुज्यते ॥ ८ ॥ २५

अन्नप्राणादिसङ्कीर्तनं ब्रह्मस्वरूपविवक्षयेति पक्षान्तरमाह—अनिर्देश्यस्येति ॥ ९ ॥

प्रत्यगात्मस्वरूपलक्षणार्थत्वेन प्राणादिसङ्कीर्तने श्रुत्यन्तरमपि संगृहीतं भवतीत्याह—प्राणस्येति । प्राणादिशब्देन प्रत्यग्भूतब्रह्मग्रहणे प्राणं वाचमित्यादिद्वितीयाश्रवणमन्यशेषत्वमन्तरेण मुख्यार्थं सिध्यतीति द्वितीयपक्षस्य गमकमाह—कर्मेति ॥ १० ॥ ३०

---

१. छा० ४.९.३ । २. प्रत्यग्धर्मा=प्रत्यगात्मा । ३. श० १४.७.२.२१ ।

अन्नादयः पदार्था वा अन्वयव्यतिरेकयोः। इहोच्यन्ते प्रवृत्त्यर्थं सौकर्यं स्यात्कथं न्विति ॥११॥
उत्पत्तिस्थितिनाशेषु ब्रह्मादिस्थावरावधि। नात्येति ब्रह्मरूपं यत्तद्ब्रह्मेति प्रतीयताम् ॥१२॥
विजिज्ञासस्व तद्ब्रह्म यदेवं लक्षणं भवेत्। अनुत्पन्नमहीनं च जगदुत्पत्तिहानिभिः ॥१३॥
तपश्चचार तच्छ्रुत्वा भृगुर्ब्रह्मोपलब्धये। प्रतिपेदे तपोऽनुक्तं सावशेषोक्तिकारणात् ॥१४॥
५ शृङ्गग्राहिकयोक्त्वाऽपि ह्यन्नं ब्रह्मेति लक्षणम्। पितोवाच यतस्तस्मात्तपो भेजे स्वयं भृगुः ॥१५॥
ब्रह्म साक्षान्न निर्दिष्टं लक्षणोक्तेरतो भृगुः। नूनमाकाङ्क्षते योग्यं साधनं ब्रह्मवित्तये ॥१६॥
तपोविशेषादित्सा स्यात्तत्साधनतमत्वतः। [1]'यद्दुस्तरं यद्दुरापमिति स्मृत्यनुशासनात् ॥१७॥
मनसश्चेन्द्रियाणां चेत्येवमाध्यात्मिकं तपः। इह न्याय्यं प्रसिद्धं तु ह्यारादुपकारोति नः ॥१८॥
अन्वयव्यतिरेकादिचिन्तनं वा तपो भवेत्। अहं ब्रह्मेतिवाक्यार्थबोधायालमिदं यतः ॥१९॥
१० कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति। प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥
व्यासः [2]प्राहात एवेदं मुमुक्षोर्मुक्तये तपः ॥२०॥
यतो वा इति चैवं स्यादुक्तमेवं परं तपः ॥२१॥

प्रथमपक्षमुपसंहरति—अन्नादय इति ॥ ११ ॥

तं होवाचेत्यादिवाक्यतात्पर्यमाह—उत्पत्तीति। यत्पृष्टं ब्रह्म तस्य लक्षणं "यतो वा" इत्यादिनोच्यते। १५ जगदुत्पत्तिस्थितिलयकारणं ब्रह्मेति ब्रह्मणस्तटस्थलक्षणमित्यर्थः ॥ १२ ॥

तद्विजिज्ञासस्वेत्यादेर्विवक्षितमाह—विजिज्ञासस्वेति ॥ १३ ॥

स तपोऽतप्यतेत्यस्यार्थमाह—तप इति। पित्राऽनुक्तस्य तपसो ज्ञानसाधनत्वेन ग्रहणे कारणमाह—प्रतिपेद इति ॥ १४ ॥

सावशेषोक्तिकारणादित्युक्तं प्रकटयति—शृङ्गेति। "अन्नं प्राणमि"त्यादिना ब्रह्म प्रत्यक्त्वेन साक्षादुक्त्वाऽपि २० "यतो वा इमानी"ति ब्रह्मलक्षणं तटस्थत्वेन द्योतकमुक्तवान्। अतस्तस्य प्रत्यक्तया प्रतिपत्तिसाधनमनुक्तमपि तपः स्वयमेव भृगुरवगतवानित्यर्थः ॥ १५ ॥

यद्यन्नं प्राणमित्यादिना साक्षादेव ब्रह्म प्रत्यक्त्वेन पित्रा निर्दिष्टं तर्हि "यतो वा इमानी"त्यादिना लक्षणोक्तिः अविवक्षिता स्यात्। अतो ब्रह्मणः प्रत्यक्त्वेन साक्षात्प्रतिपत्तिसिद्धये योग्यं साधनं प्रायेण काङ्क्षते पितेति तपश्चरणं कल्पितवान्भृगुरित्याह—ब्रह्मेति ॥ १६ ॥

२५ ब्रह्मप्रतिपत्तौ योग्यं साधनं पितुराकाङ्क्षितमस्तु तथाऽपि भृगोस्तपोविशेषान्वेषणा कुतः स्यात्? इत्याशङ्क्याऽऽह—तपोविशेषेति। तपसः साधकतमत्वं सप्रमाणं प्रकटयति—यद्दुस्तरमिति ॥ १७ ॥

तपःशब्दार्थमाह—मनसश्चेति। इहेत्यध्यात्माधिकारो गृह्यते। कृच्छ्रचान्द्रायणादेरनुपयोगं व्यावर्तयति—प्रसिद्धं त्विति ॥ १८ ॥

तपःशब्दस्य प्रकृतोपयोगित्वेनार्थान्तरमाह—अन्वयेति। वाक्यतात्पर्यपर्यालोचनं साधनविशेषानुसन्धानं ३० फलविशेषचिन्तनं चाऽऽदिशब्देन गृह्यते ॥ १९ ॥

अन्वयव्यतिरेकव्यापारस्य वाक्यार्थबोधं प्रत्यन्तरङ्गसाधनत्वे प्रमाणमाह—कोऽहमिति ॥ २० ॥

उत्पत्त्यादिभाक्त्वाद्भूतानामनात्मत्वं ब्रह्मणस्तु तद्राहित्यादात्मत्वमित्येवमन्वयव्यतिरेकरूपं तपो विवक्षितत्वाल्लक्षणवाक्यमपि प्रवृत्तमित्याह—यत इति ॥ २१ ॥

इति प्रथमोऽनुवाकः

---

३५ १. मनु० ११.२३८।
२. अहं कस्य कुतो वाहं (वापि) कः को मे ह भवेदिति।
प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥ (म० भा० शा० ३४७.९)

## अथ भृगुवल्ल्यां द्वितीयोऽनुवाकः

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

इति द्वितीयोऽनुवाकः

अन्नं ब्रह्मेति व्यजानाद्विज्ञातवान्। तद्धि यथोक्तलक्षणोपेतम्। कथम्? अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः। स एवं तपस्तप्त्वाऽन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च पुनरेव संशयमापन्नो वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। कः पुनः संशयहेतुरस्येत्युच्यते। अन्नस्योत्पत्तिदर्शनात्। तपसः पुनः पुनरुपदेशः साधनातिशयत्वावधारणार्थः। यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति यावच्च जिज्ञासा न निवर्तते तावत्तप एव ते साधनम्। तपसैव ब्रह्म विजिज्ञासस्वेत्यर्थः। ऋज्वन्यत्। ५ १०

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्ये द्वितीयोऽनुवाकः

### आनन्दगिरिटीका

स च तपस्तप्त्वेति। कुत्रेदं पित्रोक्तं लक्षणं क्वेदं लक्षणं वर्तते परिपूर्णं भवतीत्येकाग्रेण चेतसां पर्यालोच्यान्नं ब्रह्मेति व्यजानात्। अद्यते भुज्यत उपलभ्यते सर्वैरिति सर्वप्रतिपत्तृसाधारणं स्थूलदेहकारणं भूतपञ्चकं १५

### वनमाला

तद्धीति। अन्नं हीत्यर्थः। अन्नाद्ध्येवेति। इदं वाक्यमानन्दवल्लीगतेन "अन्नाद्वै प्रजाः प्रजायन्ते" इति वाक्येन समानार्थमिति नास्य व्याख्याने व्याप्रियते। तस्मादिति। ब्रह्मलक्षणोपेतत्वादित्यर्थः। "तद्विज्ञाय" इत्यस्यार्थमाह--स एवमिति। उपपत्त्या चेति। अन्नशब्दितस्य विराजः श्रुतिषूपास्यत्वश्रवणादब्रह्मण उपास्यत्वायोगादित्याद्युपपत्त्या चेत्यर्थः। उपपत्त्या चान्नं ब्रह्मेति विज्ञायेति योजना। उत्पत्तिदर्शनादिति। ब्रह्मणस्तावत् २० उत्पत्तिर्नास्ति तस्य नित्यत्वश्रवणात् अन्नस्य च हिरण्यगर्भादुत्पत्तेः श्रुतिषु दर्शनात्पृथिव्यादिस्थूलभूतात्मकस्यान्नस्य भूतकारणत्वस्यापि दर्शनाच्चेत्यादिकमालोचयतस्तस्यान्नं ब्रह्म न वेति संशय उत्पन्न इत्यर्थः। असकृत् "तपसा ब्रह्म विजिज्ञासस्व" इत्युपदेशस्य तात्पर्यप्रदर्शनपूर्वकमाह--तपस इत्यादिना। निरतिशयमिति। सम्पूर्णमित्यर्थः। तावत्तप एवेति। विचारं विना जिज्ञासानिवृत्त्ययोगादिति भावः। श्रुतौ "तपो ब्रह्म" इति वाक्यं विधित्सितस्य तपसो ब्रह्मत्वेन स्तुत्यर्थमिति मन्तव्यम्। प्रथमपर्यायस्थम् "तद्विज्ञाय" इत्यादिवाक्यव्याख्यानमन्यत्राप्यतिदिशति--एवं २५ सर्वत्रेति। "प्राणो ब्रह्मेति व्यजानात्" इत्यादिवाक्यमभिप्रेत्याह--ऋज्वन्यदिति। स एव ऋज्वर्थः प्रदर्श्यते, तथा हि--स तपः अतप्यत, अन्नस्य सूत्रात्मरूपप्राणपरतन्त्रस्य न ब्रह्मलक्षणं निरपेक्षं सम्भाव्यते प्राणस्य तु स्वातन्त्र्यादिसत्त्वात्तत्सम्भवतीत्यादिलक्षणं विचारं कृतवान्। एवं तपः कृत्वा प्राणो ब्रह्मेति निश्चितवान्, तन्निश्चयोपयोगित्वेन प्राणे ब्रह्मलक्षणं च योजितवानित्याशयेनाह--श्रुतिः "प्राणाद्ध्येवे"त्यादिना। अन्नस्य प्राणाधीनत्वादन्नाज्जायमानानि भूतानि प्राणादेव जायन्त इत्ययमर्थो युक्त एवेति द्योतनार्थो हिशब्दः। तद्विज्ञाय लक्षणोपपत्तिभ्यां ३०

आनन्दगिरिटीका

विराट्संज्ञकमन्नशब्देनोच्यते। तस्य स्थूलभौतिककारणत्वात्। "यतो वा इमानि भूतानी"तिलक्षणस्य यत्र योजयितुं शक्यत्वात्तद्ब्रह्मेति प्रतिपन्नवानित्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
५ भृगुवल्ल्यां द्वितीयोऽनुवाकः

वनमाला

प्राणो ब्रह्मेति विज्ञाय पुनरेव प्राणब्रह्मणि संशयमापन्नो वरुणं पितुरमुपगतवान्। संशयकारणं तु प्राणस्यापि मनःपारतन्त्र्यं ज्ञानशक्तिराहित्यादिकमूहनीयम्। इत्थं प्राणब्रह्मणि संशयमापन्नो मुख्यं ब्रह्मान्यदन्वेषमाणो भृगुः पुनर्विचारं कृतवान्—प्राणस्य मनसा निरोधदर्शनेन प्राणपेक्षया मनसः स्वातन्त्र्याज्ज्ञानशक्तिमत्त्वात्, अत एव
१० मनसि ब्रह्मलक्षणसम्भवाच्च आधिदैविकं समष्ट्यन्तःकरणमेव ब्रह्मेति निश्चितवान्। एवं "मनो ब्रह्मे"ति विज्ञाय पुनस्तत्रापि संशयमापन्नो वरुणमुपगतवानित्यादि समानम्। संशयकारणं त्वस्मदादिमनोवदाधिदैविकमनोऽपि करणकोटिप्रविष्टत्वाद्विज्ञानशब्दितकर्तृपरतन्त्रं भवति। न हि परतन्त्रस्य ब्रह्मलक्षणं मुख्यं सम्भवतीत्यादिदोषदर्शनमिति बोध्यम्। एवं मनसि ब्रह्मलक्षणायोगात्कर्तरि च स्वातन्त्र्येण तद्योगादित्यादिविचारं कृत्वा विज्ञानमाधिदैविकं महत्तत्त्वं ब्रह्मेति निश्चितवानित्यादि समानम्। पुनश्च विज्ञानब्रह्मण्यपि तस्य जन्मनाशादिश्रवणलिङ्गेन
१५ संशयमापन्नो वरुणमुपगतवानित्याद्यूहनीयम्।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां भृगुवल्ल्यां द्वितीयोऽनुवाकः

## अथ वार्तिके भृगुवल्ल्यां द्वितीयोऽनुवाकः

उक्तलक्षणसम्पन्नं तपस्तप्त्वा प्रयत्नवान् । अन्नं ब्रह्मेति भूतानामुत्पत्त्यादिसमन्वयात् ॥ १ ॥
उक्तान्यन्नमयादीनि यानि येषां तु कारणम् । अन्नादि प्रतिपत्तव्यं न हि कार्येऽस्ति लक्षणम् ॥ २ ॥
शुक्लं ह्यन्नमयाद्येतदन्नादेरुपजायते । कार्यप्रविलयश्रुत्या[1] कारणानन्दमेत्यतः ॥ ३ ॥
कार्याणि कारणेष्वेवं तानि चैवोत्तरोत्तरम् । प्रविलाप्य परानन्दं यायाद्वाचामगोचरम् ॥ ४ ॥
अन्नं ब्रह्मेति विज्ञाय कार्यत्वं तस्य वीक्ष्य सः । संशयोच्छित्तये भूयो गत्वाऽपृच्छद्गुरुं भृगुः ॥ ५ ॥ ५
अन्नादेर्ब्रह्मणश्चैवं दोषं दृष्ट्वा सकार्यताम् । भूयो भूयः परं ब्रह्म पप्रच्छाऽऽतृष्णिवर्तनात् ॥ ६ ॥
यावत्साक्षात्परं ब्रह्म करविन्यस्तबिल्ववत् । न वेत्ति निर्बुभुत्सुः सन्न तावद्विनिवर्तते ॥ ७ ॥
विजिज्ञासस्व तद्ब्रह्म तपसेति पुनः पुनः । ब्रुवञ्ज्ञापयतीहास्मांस्तपसैवाऽऽत्मवीक्षणम् ॥ ८ ॥

इति द्वितीयोऽनुवाकः

स तपस्तप्त्वेत्यादेरर्थं कथयति—उक्तेति । अन्वयव्यतिरेकाख्यं तपो ब्रह्मज्ञानसाधनत्वेन निर्धार्य गुरुणोक्तं १० लक्षणमन्नस्यास्तीति सम्भाव्य "अन्नं ब्रह्म" इति प्रतिपन्नवान्भृगुरित्यर्थः । अन्ने ब्रह्मलक्षणसम्पत्तिमेव साधयति—भूतानामिति ॥ १ ॥

आनन्दवल्ल्यामुक्तानां मयडर्थानां कारणान्यन्नादिशब्दवाच्यानीत्याह—उक्तानीति । कार्यत्वादन्नमयादेः सर्वभूतोत्पत्त्यादिहेतुत्वासम्भवादित्युक्तेऽर्थे हेतुमाह—न हीति ॥ २ ॥

कार्यत्वमन्नमयादेरुपपादयति—शुक्लमिति । अग्रं कार्यं शुक्लमिति पर्यायाः । अन्नमयादेरुक्तकार्यत्वे १५ फलितमाह—कार्येति ॥ ३ ॥

कार्याणां प्रविलयद्वारेण कारणभूतमानन्दमेति विद्वानिति वदता कार्यकारणविलक्षणं तत्त्वं मुक्तोपसृत्य-मित्येतदुपेक्षितमित्याशङ्क्याऽऽह—कार्याणीति । अन्नमयादीन्मयडर्थान्नादिषु प्रकृतिषु प्रविलाप्यान्नं प्राणे प्राणं मनसि मनो विज्ञाने विज्ञानं समस्तजगत्कारणे ब्रह्मण्यानन्दे तच्चाज्ञातं कारणं कार्यकारणविलक्षणे नित्यशुद्धत्वादि-लक्षणे ब्रह्मणि प्रत्यगात्मनि ज्ञानबलात्प्रविलाप्य तद्रूपेण विद्वान्पर्यवस्यतीत्यर्थः ॥ ४ ॥ २०

तद्विज्ञायेत्यादेस्तात्पर्यमाह—अन्नमिति ॥ ५ ॥

यथाऽन्नस्य ब्रह्मत्वविज्ञानानन्तरमपि तस्य कार्यत्वोपलम्भान्नैराकाङ्क्ष्याभावात्पुनरपि वरुणं प्राप्याधीहि भगवो ब्रह्मेति भृगुरप्राक्षीत्तथैव प्राणस्य मनसो विज्ञानस्य च ब्रह्मत्वं ज्ञात्वाऽपि तत्र तत्र कार्यत्वप्रतीत्या निराकाङ्क्षत्वासम्भवात्पुनरपि गुरुं गत्वा भृगुराकाङ्क्षाशान्त्यर्थं पृष्टवानेव ब्रह्मेत्याह—अन्नादेरिति । प्राणादेः इत्यर्थः । एवमित्याद्यं पर्यायं दृष्टान्तयति ॥ ६ ॥ २५

तर्हि प्रश्नस्यापर्यवसानमित्याशङ्क्य तत्त्वसाक्षात्कारानन्तरमाकाङ्क्षोपरमात्प्रश्नपरिसमाप्तिरित्याह—यावदिति ॥ ७ ॥

भृगुराकाङ्क्षोपशान्तिपर्यन्तं प्रश्नाभ्यासेऽपि "तपसा ब्रह्म विजिज्ञासस्वे"ति पुनः पुनर्वचनं वरुणस्य केनाभिप्रायेणेत्याशङ्क्याऽऽह—विजिज्ञासस्वेति ॥ ८ ॥

इति द्वितीयोऽनुवाकः ३०

---

१. कार्यप्रविलयस्मृत्या इत्यपि पाठः ।

## अथ भृगुवल्ल्यां तृतीयोऽनुवाकः

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानिभूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

इति तृतीयोऽनुवाकः

५ 

## अथ भृगुवल्ल्यां चतुर्थोऽनुवाकः

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

इति चतुर्थोऽनुवाकः

१०

## अथ भृगुवल्ल्यां पञ्चमोऽनुवाकः

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

इति पञ्चमोऽनुवाकः

१५

### आनन्दगिरिटीका

विराज उत्पत्तिदर्शनाच्छ्रुतिस्मृतिषु लक्षणं तत्र सम्पूर्णं न भवतीति पुनस्तपोऽतप्यत। विचार्य च तत्कारणं क्रियाशक्तिविशिष्टतया प्राणशब्दलक्ष्यं हिरण्यगर्भं सङ्कल्पाध्यवसायशक्तिविशिष्टतया च मनोविज्ञानशब्दलक्ष्यं ब्रह्मेति व्यजानात्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां

२० भृगुवल्ल्यां तृतीयोऽनुवाकः

## अथ भृगुवल्ल्यां षष्ठोऽनुवाकः

**आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन्प्रतिष्ठिता। य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान्कीर्त्या।**

इति षष्ठोऽनुवाकः

एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्यञ्शनैः शनैरन्तरनुप्रविश्यान्तरतममानन्दं ब्रह्म विज्ञातवांस्तपसैव साधनेन भृगुस्तस्माद्ब्रह्म विजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपःसाधनमनुष्ठेयमिति प्रकरणार्थः। ५

अधुनाऽऽख्यायिकातोऽपसृत्य श्रुतिः स्वेन वचनेनाऽऽख्यायिकानिर्वृत्तमर्थमाचष्टे—सैषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन्हृदयाकाशगुहायां परम आनन्देऽद्वैते प्रतिष्ठिता परिसमाप्ताऽन्नमयात् आत्मनोऽधिप्रवृत्ता। य एवमन्योऽपि तपसैव साधनेनानेनैव क्रमेणानुप्रविश्याऽऽनन्दं ब्रह्म वेद स एवं विद्याप्रतिष्ठानात्प्रतितिष्ठत्यानन्दे परमे ब्रह्मणि, ब्रह्मैव भवतीत्यर्थः। १०

आनन्दगिरिटीका

तस्यापि कार्यत्वाल्लक्षणं परिपूर्णं न भवतीति विचार्य तत्कारणं स्वातन्त्र्येण निश्चित्य सर्वैः प्रार्थ्यमानतयाऽऽनन्दशब्दवाच्यं मायाविशिष्टं ब्रह्मेति विज्ञाय विशिष्टस्य विशिष्टान्तरात्मत्वानुपपत्तेः कारणत्वोपलक्षितं विशुद्धानन्दं ब्रह्मेति विज्ञातवानित्यर्थः। १५

वनमाला

"आनन्दो ब्रह्मेति व्यजानात्" इत्यादि व्याख्यातुमुपक्रमते—एवं तपसेत्यादिना। विशुद्धात्मेति। विशुद्धान्तःकरण इत्यर्थः। अत्र विशुद्धिरन्नप्राणादिषु ब्रह्मलक्षणस्य साकल्येन दर्शनविरोधिदोषदर्शनरूपा विवक्षिता प्रकृतत्वात् इति बोध्यम्। शनैः शनैरन्तरनुप्रविश्येति। आध्यात्मिककोशानामिवाधिदैविकानामन्नप्राणादिकोशानामप्युत्तरोत्तरस्य पूर्वपूर्वापेक्षया क्रमेणान्तरत्वं निश्चित्येत्यर्थः। आन्तरतममिति। सर्वान्तरतममित्यर्थः। स्थूलसूक्ष्मकारणात्मकस्य सर्वस्य दृश्यजातस्य विचारेणैव मिथ्यात्वं तदधिष्ठानभूतस्य प्रत्यगानन्दस्य सर्वान्तरत्वं सर्वकारणत्वं च निश्चित्य तदेवानन्दरूपं ब्रह्माहमिति साक्षात्कृतवानित्यर्थः। भृगोस्तपसैव ज्ञानमुत्पन्नमिति वदन्त्याः श्रुतेस्तात्पर्यमाह—तस्मादिति। तपसैव ज्ञानोदयदर्शनादित्यर्थः। समाधानपदं विचारपरमिति प्रागुक्तमत्राप्यनुसन्धेयम्। प्रकरणार्थ इति। तपसा भृगोर्ज्ञानमुत्पन्नमिति यथाश्रुतार्थे प्रयोजनाभावेन प्रकरणस्य तत्र तात्पर्यायोगादिति भावः। श्रुतौ—"आनन्दं प्रयन्त्यभिसंविशन्तीति", तस्माद्युक्तमानन्दस्येदं लक्षणमित्यभिप्रायः। "सैषा भार्गवी" इत्यादिवचनं न पितुर्न वा पुत्रस्येत्यसङ्गतिमाशङ्क्याह—अधुनेति। आख्यायिकातोऽपसृत्येति। कथारूपत्वं परित्यज्येत्यर्थः। सा पूर्ववल्ल्यां प्रकृता। एषा अस्यां वल्ल्यां सन्निहिता। विदिता प्राप्ता। व्योमस्वरूपमाह—हृदयाकाश इति। हृदयाकाशाख्ये परमे व्योम्नि या गुहा बुद्धिः तस्यां य आनन्दः तस्य कारणत्वादद्वैतत्वम्; तस्मिन्प्रतिष्ठितेत्यर्थः। ननु कस्मादारभ्य प्रवृत्ताया विद्यायाः प्रत्यगानन्दे परिसमाप्तिरुच्यते ? तत्राह—अन्नमयादिति। "अन्नं ब्रह्म" इत्यारभ्य पूर्वपूर्वप्रहाणेनोपरि प्रवृत्तेत्यर्थः। तथा चान्नमयादिकोशजातादान्तरतममानन्दरूपमद्वितोयं वस्तु ब्रह्मेत्ययमर्थ आख्यायिकायां निष्पन्न इत्यनया श्रुत्या दर्शितं भवतीति भावः। "य एवं वेद" इत्यादेरर्थमाह—य एवमन्योऽपीत्यादिना। अनेनैव क्रमेणेति। अन्नादिषु ब्रह्मलक्षणयोजनारूपेणैव प्रकारेणेत्यर्थः। अनुप्रविश्येति। अन्नादिषु ब्रह्मत्वबुद्धिपरित्यागपूर्वकं सर्वान्तरमानन्दं कारणत्वेन सम्भाव्य तमानन्दं ब्रह्मभूतमात्मत्वेन यो वेदेत्यर्थः। विदुषो ब्रह्मानन्दे प्रतिष्ठारूपफलकीर्तने तत्क्रतुन्यायं सूचयति—विद्याप्रतिष्ठानादिति। विद्याया ब्रह्मानन्दे प्रतिष्ठितत्वात्तादृशमानन्दं विद्वानपि तत्र प्रतितिष्ठतीति युक्तमित्यर्थः। विवक्षितमर्थं दर्शयति—ब्रह्मैवेति। नन्वश्रुतं

२० २५ ३० ३५

दृष्टं च फलं तस्योच्यते—अन्नवान्प्रभूतमन्नमस्य विद्यत इत्यन्नवान्। सत्तामात्रेण तु सर्वो ह्यन्नवानिति विद्याया विशेषो न स्यात्। एवमन्नमत्तीत्यन्नादो दीप्ताग्निर्भवतीत्यर्थः। महान्भवति। केन महत्त्वमित्यत आह—प्रजया पुत्रादिना पशुभिर्गवाश्वादिभिर्ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा। महान्भवति कीर्त्या ख्यात्या शुभप्रचारनिमित्तया।

५ इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्ये षष्ठोऽनुवाकः

### आनन्दगिरिटीका

प्रभूतत्वविशेषणश्रुतं कथं निक्षिप्यत इत्याशङ्क्याऽऽह—सत्तामात्रेणेति। अत्र सत्तामात्रे विवक्षिते श्वसूकरादिरपि शरीरस्थित्याक्षिप्तान्नेनान्नवानिति विद्यायाः फलविशेषो नोक्तः स्यादतस्तद्बलात्प्रभूतत्वविशेषणं
१० निक्षिप्तमित्यर्थः। एतच्च दृष्टफलं ब्रह्मविदो जीवन्मुक्तस्याप्यविद्यालेशवशाद्द्वैताभासं पश्यतो नानुपपन्नं यस्येश्वरस्यानुग्रहादविदुषामप्यन्नादिसमृद्धिर्दृश्यते किमुत तदात्मतत्त्वं साक्षादनुभवतामिति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां भृगुवल्ल्यां षष्ठोऽनुवाकः

### वनमाला

१५ प्रभूतत्वविशेषणं कथं निक्षिप्यते ? तत्राह—अन्यथेति। प्रभूतत्वविशेषणं विना अन्नसामान्यमात्रेणैवान्नवत्त्वे विवक्षिते सति सर्वोऽपि जन्तुः शरीरस्थित्याक्षिप्तेनान्नेनान्नवानेवेति कृत्वा विद्याबलाद्विदुषोऽन्ने विशेषो न स्यात्, अतः प्रभूतत्वविशेषणमावश्यकमित्यर्थः। ननु सर्वोऽपि जन्तुरन्नमत्त्येव; तत्राह—दीप्ताग्निरिति। अन्नवत्त्वं दीप्ताग्नित्व विना व्यर्थमिति भावः। ननु कृतकृत्यस्य ब्रह्मविदो नेदं फलं भवितुमर्हति, न वा ब्रह्मविद इदं फलं नियमेन दृश्यते, न वा चित्रायागफलन्यायेनास्मिञ्जन्मन्यनुपलभ्यमानस्यामुष्मिकत्वं कल्पयितुं शक्यते तस्य
२० पुनर्जन्माभावात्, तस्मादसङ्गतमिदं फलवचनमिति चेत्; उच्यते—यथा भूमविद्यायां "स एकधा भवति" इत्यादिना सगुणविद्याफलं भूमविद्याफलत्वेन सङ्कीर्त्यते भूमविद्यास्तुत्यर्थम्, तथा वक्ष्यमाणान्नान्नादत्वोपासनफलं प्रकृतब्रह्मविद्याफलत्वेन सङ्कीर्त्यते तत्स्तुत्यर्थमित्यदोषः। एतच्च व्रतोपदेशस्यान्नस्तुत्यर्थत्ववर्णनेन भाष्ये वर्णितप्रायमेवेति मन्तव्यम्।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां भृगुवल्ल्यां षष्ठोऽनुवाकः

## अथ वार्तिके भृगुवल्ल्यां षष्ठोऽनुवाकः

अन्वयव्यतिरेकाभ्यामेव स शनकैर्भृगुः । तपसैव परं ब्रह्म विजज्ञौ प्रत्यगात्मनि ॥ १ ॥
यस्मादेवमतः कार्यं संसारं प्रजिहासुभिः । प्रत्यग्ब्रह्मावबोधाय सदा निष्कल्मषं तपः ॥ २ ॥
व्युत्थायाऽऽख्यायिकारूपात्तन्निर्वचमथाधुना । श्रुतिः स्वेनैव रूपेण व्याचष्टेऽर्थं प्रयत्नतः ॥ ३ ॥
भृगुणा विदिता यस्माद्भार्गवीयं भवेदतः । वारुणी वरुणोक्तत्वाद्विद्या स्याद्ब्रह्मवेदनात् ॥ ४ ॥
युष्मदस्मद्विभागोऽयं यत्र व्यावर्ततेऽञ्जसा । स आत्मा तत्परं व्योम तत्र विद्या प्रतिष्ठिता ॥ ५ ॥ ५
आत्मता ब्रह्मणो यत्र आत्मनो ब्रह्मता तथा । अहं ब्रह्मेत्यवाक्यार्थमेवं[1] वाक्यात्प्रपद्यते ॥ ६ ॥
अन्योऽपि भृगुवत्तप्त्वा तप ऐकाग्र्यलक्षणम् । कोशान्निरस्य पञ्चापि प्रतिष्ठां लभते पराम् ॥ ७ ॥
ब्रह्म पुच्छं प्रतिष्ठेति[2] वल्ल्योक्तं पूर्वया तु यत् । तस्यामेव प्रतिष्ठायां विद्वान्सम्प्रतितिष्ठति ॥ ८ ॥
अन्नाद्युपासकानां वा फलमेतदिहोच्यते । न्याय्यं नावाप्तकामानामन्नादिफलकीर्तनम् ॥ ९ ॥
भूयोऽन्नवान्दीप्ताग्निर्महांश्च स्यात्प्रजादिभिः । शान्तिदान्त्यादिहेतुस्त्विह ब्रह्मवर्चसमुच्यते ॥१०॥ १०

इति षष्ठोऽनुवाकः

आनन्दो ब्रह्मेति व्यजानादित्यादेस्तात्पर्यमाह—अन्वयेति ॥ १ ॥

अन्वयव्यतिरेकाख्येन तपसा प्रत्यगात्मनि प्रतिष्ठितं ब्रह्म वाक्येन ज्ञातुं शक्यमिति स्थिते फलितमाह—यस्मादिति ॥ २ ॥

सैषेत्यादि वाक्यद्वयमवतारयति—व्युत्थायेति ॥ ३ ॥ १५

भार्गवीत्यादि पदत्रयं व्याचष्टे—भृगुणेति ॥ ४ ॥

आनन्दाद्ध्येवेत्यादिदर्शनादानन्दशब्दस्य कारणविषयत्वात्कार्यकारणविलक्षणब्रह्मविषयत्वासिद्धिरित्याशङ्क्य "परमे व्योमन्प्रतिष्ठिते" इत्यत्र व्योमशब्दस्य कार्यकारणविनिर्मुक्तप्रत्यगात्मविषयत्वान्मैवमित्याह—युष्मदिति ॥५॥

यथोक्तस्य ब्रह्मात्मैकत्वस्यालौकिकत्वादसिद्धिरित्याशङ्क्याऽऽत्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं वेदान्तवाक्यादेव सिध्यतीत्याह—आत्मतेति ॥ ६ ॥ २०

य एवं वेद प्रतितिष्ठतीत्यस्यार्थमाह—अन्योऽपीति ॥ ७ ॥

कार्यकारणविलक्षणब्रह्मत्वेन परां प्रतिष्ठामेव प्रकटयति—ब्रह्मेति ॥ ८ ॥

अन्नवानित्यादिना प्रकृतस्यैव विज्ञानस्य स्तुत्यर्थं सगुणविद्याफलकीर्तनमङ्गीकृत्य फलान्तरमाह—अन्नाद्येति । यदेतदन्नाद्युपासकानामन्नवत्त्वादिफलं तदिह ब्रह्मविद्यायाः स्तुत्यर्थमुच्यते । सगुणविद्याफलेन निर्गुणविद्यायाः स्तुतिसम्भवादित्यर्थः । मुख्यमेव ब्रह्मविदोऽन्नादिफलकीर्तनं किं न स्यादित्याशङ्क्याऽऽह—न्याय्यमिति ॥९॥ २५

अन्नवानित्यादि व्याचष्टे—भूयोऽन्नवानिति ॥ १० ॥

इति षष्ठोऽनुवाकः

---

1. अवाक्यार्थम् = संसर्गरूपवाक्यार्थभिन्नम् । २. तै० २.५ ।

## अथ भृगुवल्ल्यां सप्तमोऽनुवाकः

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।

इति सप्तमोऽनुवाकः

५ किञ्चान्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्, तस्माद्गुरुमिवान्नं न निन्द्यात्; तदस्यैव ब्रह्मविदो व्रतमुपदिश्यते। व्रतोपदेशोऽन्नस्तुतये, स्तुतिभाक्त्वं चान्नस्य ब्रह्मोपलब्ध्युपायत्वात्। प्राणो वा अन्नम्, शरीरान्तर्भावात्प्राणस्य। यद्यस्यान्तःप्रतिष्ठितं भवति, तत्तस्यान्नं भवतीति। शरीरे च प्राणः प्रतिष्ठितस्तस्मात्प्राणोऽन्नं शरीरमन्नादम्। तथा शरीरमप्यन्नं प्राणोऽन्नादः। कस्मात्प्राणे शरीरं प्रतिष्ठितम्, तन्निमित्तत्वाच्छरीरस्थितेः। तस्मात्तदेतदुभयं शरीरं प्राण श्चान्नमन्नादश्च। येनान्योन्यस्मिन्प्रतिष्ठितं तेनान्नम्। येनान्योन्यस्य प्रतिष्ठा तेनान्नादः। तस्मात्प्राणः शरीरं

१०

### आनन्दगिरिटीका

अन्नमपकृष्टं प्राप्तं न निन्द्यात्। "यदृच्छया चोपपन्नमद्याच्छ्रेष्ठमुतावरम्" इत्युक्तत्वात्। ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठानार्थम्। एवं वाक्यार्थज्ञाने लक्ष्यपदार्थानुसन्धानं मुख्यं साधनं तत्फलं चोपसंहृत्याधुना विचारासमर्थस्य मन्दाधिकारिणोऽन्नान्नादरूपेण प्राणाद्युपासनं गौणं साधनं विधत्ते—प्राणो वा अन्नमित्यादिना।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां

१५ भृगुवल्ल्यां सप्तमोऽनुवाकः

### वनमाला

न निन्द्यादिति। अपकृष्टमन्नं प्राप्तं न निन्द्यादित्यर्थः, "यदृच्छया चोपपन्नमद्याच्छ्रेष्ठमुतावरम्" इति स्मृतिदर्शनात्। ननु ब्रह्मविदः कर्तव्याभावात्कथं तस्यानुष्ठेयतया व्रतमुपदिश्यते? तत्राह—व्रतोपदेश इति। ननु विदुषा निरसनीयस्यान्नस्य कथं स्तुत्यर्थत्वम्? तत्राह—स्तुतिभाक्त्वं चेति। शरीरमनआदिरूपेण परिणतिद्वारा अन्नस्य
२० विद्यासाधनत्वादित्यर्थः। प्रसङ्गात्काम्यान्युपासनान्याह—प्राणो वा इत्यादिना। तेषां सकामानां प्रजादिफलसम्पादकत्वेऽपि निष्कामनयऽनुष्ठितानां चित्तैकाग्र्यद्वारा विद्यासाधनत्वाद्विद्याप्रकरणे सङ्गतिरिति वा मन्तव्यम्। ननु प्राणस्य कथमन्नत्वमित्याशङ्क्य प्रसिद्धान्नसादृश्यादित्याशयेनाह—शरीरेऽन्तर्भावादिति। एतदेव विवृणोति—यद्यस्येति। तत्तस्यान्नमितीह विवक्षितमित्यर्थः। "प्राणो वा अन्नम्" इत्यत्र हेतुप्रतिपादकत्वेन "शरीरे प्राणः प्रतिष्ठितः" इति वाक्यमाकृष्य योजयति—शरीरे चेति। तस्मादिति। प्राणस्य शरीरे प्रतिष्ठितत्वादित्यर्थः।
२५ "प्राणे शरीरं प्रतिष्ठितम्" इति वाक्यसङ्गत्यर्थं श्रुतावपेक्षितं पूरयति—तथेति। प्राणे शरीरस्यान्तर्भावाभावेऽपि प्राणाधीनस्थितिकत्वमात्रेणान्नत्वविवक्षेति भावः। "प्राणो वा अन्नम्" इत्यादेः फलितार्थकथनपरम् "तदेतदन्नम्" इति वाक्यं व्याचष्टे—तत्तस्मादिति। उभयमिति। प्रकृतत्वाविशेषादिति भावः। श्रुतावपेक्षितं पूरयति—अन्नादं चेति। यत उभयमप्यन्नमन्नादं च तस्मादन्नमन्ने प्रतिष्ठितम् अन्नादश्चान्नादे प्रतिष्ठित इति पर्यवसितार्थ इति भावः। उभयोरप्यन्नत्वे अन्नादत्वे च श्रुत्युक्तं नियामकं विशदयति—येनेति। फलितं स्वयमुपसंहरति—तस्मादिति।

चोभयमन्नमन्नादं च। स य एवमेतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठत्यन्नान्नादात्मनैव। किञ्चान्नवानन्नादो भवतीत्यादि पूर्ववत्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्ये सप्तमोनुवाकः

वनमाला　　५

उभयोरन्नान्नादत्वगोचरमुपासनं विधत्ते—स य इति। अन्नान्नादात्मनेति। शरीरप्राणात्मनैवेत्यर्थः। प्रतितिष्ठति, चिरं जीवतीति यावत्।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां भृगुवल्ल्यां सप्तमोऽनुवाकः

## अथ वार्तिके भृगुवल्ल्यां सप्तमोऽनुवाकः

अन्नमेव　गुरुन्यायमुत्तरज्ञानहेतुतः। अन्नं न निन्द्यात्तेनाऽऽदौ व्रतं स्यात्तदुपासितुः ॥ १ ॥　१०

अन्योन्यस्थितिहेतुत्वादन्नान्नादत्वमुच्यते　। शरीरप्राणयोरेवमुत्तरेष्वपि　निर्णयः ॥ २ ॥

इति सप्तमोऽनुवाकः

अन्नं न निन्द्यादित्यादेरर्थमाह—अन्नमिति। अन्नस्योपभुक्तस्योक्तवक्ष्यमाणज्ञानहेतुत्वेन गुरुवदनिन्दनम् अन्नोपासकस्याऽऽवश्यकमित्यर्थः ॥ १ ॥

प्राणो वा अन्नमित्यादेरर्थं संक्षिपति—अन्योन्येति। "प्राणो वा अन्नम्"। "शरीरमन्नादम्" इति प्राण-　१५ शरीरयोरन्नान्नादत्वमुक्तम्। तत्र "प्राणे शरीरं प्रतिष्ठितम्" इत्यादिना हेतुरुच्यते। अन्नवत्त्वादिसङ्कीर्तनं तु सर्वत्र पूर्ववन्नेतव्यमित्यर्थः। आपो वा अन्नम्। ज्योतिरन्नादम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। इति पर्याय-द्वयेऽपि यथोक्तन्यायमतिदिशति—एवमिति। अब्ज्योतिःपृथिव्याकाशेष्वन्नान्नादत्वमन्योन्यस्थितिहेतुत्वादिति निर्णेतव्यम्। अन्नवत्त्वादिफलसङ्कीर्तनं तु पूर्ववदेव तत्रापि नेतव्यमित्यर्थः ॥ २ ॥

इति सप्तमोऽनुवाकः　　२०

### अथ भृगुवल्ल्यामष्टमोऽनुवाकः

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।

इत्यष्टमोऽनुवाकः

५ अन्नं न परिचक्षीत न च परिहरेत् । तद्व्रतं पूर्ववत्स्तुत्यर्थम् । तदेवं शुभाशुभकल्पनयाऽपरिह्रियमाणं स्तुतं महीकृतमन्नं स्यात् । एवं यथोक्तमुत्तरेष्वप्यापो वा अन्नमित्यादिषु योजयेत् । अप्सु ज्योतिः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्येऽष्टमोऽनुवाकः

वनमाला

१० शरीरप्राणोभयमन्नान्नादत्वगुणकमुपासीनस्यान्नापरिहाराख्ये व्रते विवक्षिते सत्यर्थादन्नस्तुतिरपि पूर्ववल्लभ्यत इत्याशयेनाह—पूर्ववत्स्तुत्यर्थमिति । आर्थिकस्तुतिलाभप्रकारमेव दर्शयति—तदेवेति । तदेवान्नमपरिह्रियमाणं सत्स्तुतं स्यादिति सम्बन्धः । स्तुतमित्यस्य विवरणम्—महीकृतमिति । लोको ह्यन्ने शुभाशुभशब्दितौ गुणदोषौ कल्पयित्वा गुणवदन्नमुपादत्ते दोषवदन्नं परिहरति, तथा न परिहरेदिति व्रतोपदेशः । अत्राशुभपदमन्नगतावरत्वरूपदोषपरं न शास्त्रीयदोषपरम्, तस्मिन्सति परिहारावश्यम्भावादिति मन्तव्यम् । "प्राणो वा अन्नम्" इत्यादि-
१५ वाक्यव्याख्यानप्रकारमन्यत्रातिदिशति—एवं यथोक्तमिति । "आपो वा अन्नम्, ज्योतिरन्नादम्" इत्यत्र शरीरादिसङ्घातान्तःप्रविष्टमेव जलं तेजश्च गृह्यते प्राणशरीरसमभिव्याहारात् । एवम् "पृथिवी वा अन्नम्, आकाशोऽन्नादः" इत्यत्रापि पृथिव्याकाशयोः शरीरादिसङ्घातान्तःप्रविष्टयोरेव ग्रहणं विवक्षितमिति मन्तव्यम् ।

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां भृगुवल्ल्यामष्टमोऽनुवाकः

### अथ वार्तिके भृगुवल्ल्यामष्टमोऽनुवाकः

२० प्राप्तं न परिचक्षीत त्वन्नव्रतमिदं भवेत् ॥ १ ॥

इत्यष्टमोऽनुवाकः

शरीरप्राणयोरन्नान्नादत्वोपासकस्य प्राप्तान्नाप्रत्याख्यानं व्रतमिति "अन्नं न परिचक्षीते"त्यादिवाक्यद्वयस्यार्थमाह—प्राप्तमिति ॥ १ ॥

इत्यष्टमोऽनुवाकः

## अथ भृगुवल्ल्यां नवमोऽनुवाकः

अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।

इति नवमोऽनुवाकः

अब्ज्योतिषः अन्नान्नादगुणत्वेनोपासकस्य अन्नस्य बहूकरणं व्रतम्। ५

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्लीभाष्ये नवमोऽनुवाकः

## अथ वार्तिके भृगुवल्ल्यां नवमोऽनुवाकः

अन्नं सुबहु कुर्वीत तथैवेहोत्तरं व्रतम् ॥ १ ॥

अपां ज्योतिषश्चान्नान्नादत्वोपासकस्यान्नबहुकरणं व्रतमिति "अन्नं बहु कुर्वीत" त्यादेरर्थमाह— १० अन्नमिति ॥ १ ॥

इति नवमोऽनुवाकः

## अथ भृगुवल्ल्यां दशमोऽनुवाकः

न कञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नँ राद्धम्। मुखतोऽस्मा अन्नँ राध्यते। एतद्वै मध्यतोऽन्नँ राद्धम्। मध्यतोऽस्मा अन्नँ राध्यते। एतद्वा अन्ततोऽन्नँ राद्धम्। अन्ततोऽस्मा अन्नँ राध्यते ॥१॥
य एवं वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः।
५ विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति ॥२॥

तथा पृथिव्याकाशोपासकस्य वसतौ वसतिनिमित्तं कञ्चन कञ्चिदपि न प्रत्याचक्षीत, वसत्यर्थमागतं न निवारयेदित्यर्थः। वासे च दत्तेऽवश्यं ह्यशनं दातव्यम्। तस्माद्यया कया च विधया येन केन च प्रकारेण बह्वन्नं प्राप्नुयाद्बह्वन्नसंग्रहं कुर्यादित्यर्थः। यस्मादन्नवन्तो विद्वांसोऽभ्यागतायान्नार्थिनेऽराधि संसिद्धमस्मा अन्नमित्याचक्षते, न नास्तीति प्रत्याख्यानं कुर्वन्ति, तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः। अपि चान्नदानस्य माहात्म्य-
१० मुच्यते। यथा यत्कालं प्रयच्छत्यन्नं, तथा तत्कालमेव प्रत्युपनमते।

कथमिति तदेतदाह—एतद्वा अन्नं मुखतो मुख्ये प्रथमे वयसि, मुख्यया वा वृत्त्या पूजापुरःसरमभ्यागताय अन्नार्थिने राद्धं संसिद्धं प्रयच्छतीति वाक्यशेषः। तस्य किं फलं स्यादित्युच्यते—मुखतः पूर्वे वयसि मुख्यया वा वृत्त्याऽस्मा अन्नदाय अन्नं राध्यते यथादत्तमुपतिष्ठत इत्यर्थः। एवं मध्यतो मध्यमे वयसि मध्यमेन चोपचारेण। तथाऽन्ततोऽन्ते वयसि जघन्येन चोपचारेण परिभवेन तथैवास्मै राध्यते संसिध्यत्यन्नम्।

१५ य एवं वेद य एवमन्नस्य यथोक्तं माहात्म्यं वेद तद्दानस्य यथोक्तं फलमुपनयेत्। इदानीं ब्रह्मण उपासनप्रकार उच्यते—क्षेम इति वाचि। क्षेमो नामोपात्तपरिरक्षणम्। ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठित-मित्युपास्यम्। योगक्षेम इति, योगोऽनुपात्तस्योपादानम्। तौ हि योगक्षेमौ प्राणापानयोः सतोर्भवतो यद्यपि, तथाऽपि न प्राणापाननिमित्तावेव किं तर्हि ब्रह्मनिमित्तौ। तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठित-मित्युपास्यम्। एवमुत्तरेष्वन्येषु तेन तेनाऽऽत्मना ब्रह्मैवोपास्यम्। कर्मणो ब्रह्मनिर्वर्त्यत्वाद्धस्तयोः कर्मात्मना ब्रह्म
२० प्रतिष्ठितमित्युपास्यम्। गतिरिति पादयोः। विमुक्तिरिति पायौ। इत्येता मानुषीर्मनुष्येषु भवा मानुष्यः समाज्ञाः, आध्यात्मिक्यः समाज्ञा ज्ञानानि विज्ञानान्युपासनानीत्यर्थः।

### वनमाला

तथेति। अन्नान्नादत्वगणकत्वेन पृथिव्याकाशद्वयोपासकस्य स्वगृहे वासार्थमागतं न निवारयेदित्येतद्व्रत-मित्यर्थः। बह्वन्नसंग्रहे वसत्यर्थमागतानामप्रत्याख्यानरूपं व्रतमेको हेतुरुक्तः, तत्रैव विद्वदाचाररूपं हेत्वन्तरमाह—
२५ यस्मादिति। एवं संगृहीतमन्नं सर्वदा पूजापुरःसरमेवार्थिभ्यो देयं नान्यथा "श्रद्धया देयम्" इत्यादिदर्शनादित्या-शयेनाह—अपि चान्नदानस्येति। तत्र मानं पृच्छति—कथमितीति। श्रुत्योत्तरमाह—तदेतदाहेति। मुख्यामेव वृत्तिं विवृणोति—पूजेति।

यथोक्तमिति। कार्यकरणसङ्घातोपचयादिद्वारा ब्रह्मविद्यासाधनत्वरूपमित्यर्थः। फलं च वेदेति सम्बन्धः। श्रुतौ "य एवं वेद" इत्यस्यापेक्षितं पूरयति—तस्येति। यथोक्तम् अन्नदानादिफलमित्यर्थः। "प्राणो वा अन्नम्"
३० इत्यारभ्य ब्रह्मोपासनान्युक्तानीति सूचयति—इदानीमिति। उपात्तपरिरक्षणमिति। स्थितपरिपालनमित्यर्थः। योगक्षेम इतीति। प्राणे योगरूपेण अपाने क्षेमरूपेण च ब्रह्म प्रतिष्ठितमित्युपास्यमिति विभागः। प्राणापानयोर्योग-क्षेमरूपेण ब्रह्मदृष्ट्यालम्बनत्वे हेतुमाह—तौ हीति। ननु यदि प्राणापानाधीनौ योगक्षेमौ तर्हि तावेव प्राणापानयो-र्द्रष्टव्यौ न तु ब्रह्मेत्याशङ्क्याह—तथापीति। प्राणापाननिमित्तकत्वेऽपीत्यर्थः। ब्रह्मनिमित्ताविति। ब्रह्मनिमित्ताव-पीत्यर्थः। ब्रह्मणः सर्वफलदातृत्वस्य शास्त्रसिद्धत्वादिति भावः। ब्रह्मनिर्वर्त्यत्वादिति। ब्रह्मणः कारयितृत्वादिति
३५ भावः। विमुक्तिर्विसर्गः। मानुष्य इत्यस्य पर्यवसानमाह—आध्यात्मिक्य इति।

**यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठे-त्युपासीत। प्रतिष्ठावान्भवति। तन्मह इत्युपासीत। महान्भवति। तन्मन इत्युपासीत। मानवान्भवति ॥३॥**

**तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपासीत। ब्रह्मवान्भवति। तद्ब्रह्मणः परिमर इत्युपासीत पर्येणं म्रियन्ते। द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः।**

अथानन्तरं दैवीर्देव्यो देवेषु भवाः समाज्ञा उच्यन्ते। तृप्तिरिति वृष्टौ। वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्-ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यम्। तथाऽन्येषु तेन तेनाऽऽत्मना ब्रह्मैवोपास्यम्। तथा बलरूपेण विद्युति। यशोरूपेण पशुषु। ज्योतीरूपेण नक्षत्रेषु। प्रजातिरमृतममृतत्वप्राप्तिः पुत्रेण ऋणविमोक्षद्वारेणाऽऽनन्दः सुखमित्येतत्सर्वमुपस्थनिमित्तं ब्रह्मैवानेनाऽऽत्मनोपस्थे प्रतिष्ठितमित्युपास्यम्। सर्वं ह्याकाशे प्रतिष्ठितमतो यत्सर्व-माकाशे तद्ब्रह्मैवेत्युपास्यम्। तच्चाऽऽकाशं ब्रह्मैव। तस्मात्तत्सर्वस्य प्रतिष्ठेत्युपासीत। प्रतिष्ठागुणोपासनात्प्रतिष्ठा-वान्भवति। एवं पूर्वेष्वपि यद्यत्तदधीनं फलं तद्ब्रह्मैव तदुपासनात्तद्वान्भवतीति द्रष्टव्यम्। श्रुत्यन्तराच्च— १० "तं यथा यथोपासते तदेव भवति" इति। तन्मह इत्युपासीत। महो महत्त्वगुणवत्तदुपासीत। महान्भवति। तन्मन इत्युपासीत। मननं मनः। मानवान्भवति मननसमर्थो भवति। तन्नम इत्युपासीत। नमनं नमो नमन-गुणवत्तदुपासीत। नम्यन्ते प्रह्वीभवन्त्यस्मा उपासित्रे कामाः काम्यन्त इति कामा भोग्या विषया इत्यर्थः। तद्ब्रह्मेत्युपासीत। ब्रह्म परिवृढतममित्युपासीत। ब्रह्मवांस्तद्गुणो भवति। तद्ब्रह्मणः परिमर इत्युपासीत। ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन्पञ्च देवता विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः। अतो वायुः परिमरः १५ श्रुत्यन्तरप्रसिद्धेः। स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरस्तमाकाशं वाय्वात्मानं ब्रह्मणः

आनन्दगिरिटीका

उपासनमपि फलानभिसन्धिनाऽनुष्ठितं बुद्धिशुद्धिद्वारेण ब्रह्मज्ञानायोपकरोतीत्युक्तं मुख्याधिकारिणस्तु अपवादायोपकरिष्यति। यत्र वागादौ यत्फलं कार्यं क्षेमादीत्यर्थः।

महानिति। प्रजादिभिः। ब्रह्मवानिति। स्थूलभोगसाधनवान्विराडिवेत्यर्थः। श्रुत्यन्तरप्रसिद्धेरिति। २० य एवमेताः पञ्च देवता "वायुर्वाव संवर्गः" इत्यादिश्रुत्यन्तराद्ब्रह्मणः संहर्तृत्वं वायुद्वारकमिति वायुर्ब्रह्मणः परिमरः। संहारसाधनमित्यर्थः। तत्कथं परिमरगुणतयाऽऽकाशोपासनं सिध्यतीत्यत आह—स एष इति।

वनमाला

पुत्रेणेति। पुत्रजन्मना पितृऋणमोक्षद्वारेण या पितुरमृतत्वप्राप्तिः सा अत्रामृतपदेन विवक्षितेत्यर्थः। उपस्थनिमित्तमिति। यस्मादेतत्सर्वमुपस्थहेतुकं तस्मादनेनैव रूपेण ब्रह्म तत्र स्थितमित्युपास्यमित्यर्थः। इदमुपासनम् २५ "विमुक्तिरिति पायौ" इत्यत्रैव द्रष्टव्यम्। आध्यात्मिकत्वात्। सर्वं हीति। हि यस्मात्सर्वमाकाशे प्रतिष्ठितं तस्माद्यत्सर्वमाकाशे वर्तते तत्सर्वरूपेणाकाशे ब्रह्मैव प्रतिष्ठितमित्युपास्यमित्यर्थः। "तत्प्रतिष्ठा" इत्यत्र ब्रह्माभिन्न-माकाशमुपास्यं केवलस्याकाशस्योपास्यत्वायोगादित्याशयेन तस्य ब्रह्माभिन्नत्वमाह—तच्चेति। सर्वाश्रयत्वेन प्रकृत-मित्यर्थः। तस्मात्तदिति। व्यापकत्वनिर्लेपत्वनिरवयवत्वसूक्ष्मत्वसर्वाश्रयत्वादिरूपलक्षणसाम्येनाकाशस्य ब्रह्माभिन्नत्व-सम्भवात्तद्ब्रह्मभूतमाकाशमित्यर्थः। प्रतिष्ठावानिति। अन्नपानादिभिः स्थितिमानित्यर्थः। ननु "क्षेम इति वाचि" ३० इत्यादौ फलाश्रवणात्कथं तदुपासनेषु प्रवृत्तिरित्याशङ्क्याह—यद्यत्रेति। यत्र वागादौ यत्फलं कार्यं क्षेमादिकं श्रुतं तद्रूपेण ब्रह्मैवोपास्यमित्युक्तमित्यर्थः। ततः किम्? अत आह—तदुपासनादिति। क्षेमादिगुणेन ब्रह्मोपासनात्क्षेमादि-मानेव भवत्यौचित्यादिति द्रष्टव्यमित्यर्थः। अत्रार्थे श्रुतिमप्याह—श्रुत्यन्तराच्चेति। तदेवेति। तदनुरूपमेव फलं भवतीत्यर्थः। "तन्महः" इत्यादौ तत्पदं ब्रह्मपरम्; तथा च वार्तिकम्—"तद्ब्रह्म मह इत्येवमुपासीत ततः फलम्" इत्यादि। ३५

परिवृढतममिति। विराडात्मकमित्यर्थः। ब्रह्मवानिति। ब्रह्मणो विराजो यो गुणो भोगः तद्वान्भवतीत्यर्थः। परस्येति। परस्य मायोपाधिकस्य ब्रह्मणः स्वरूपतयोक्तं यदाकाशं तदाकाशं परिमरत्वगुणकमुपासीतेत्यर्थः। आकाशस्य परिमरत्वगुणोपपादनाय प्रथमं वायोः परिमरत्वमाह—परिमर इत्यादिना। श्रुत्यन्तरेति। वायुं प्रकृत्य

**परिमर इत्युपासीत। पर्येनमेवंविदं प्रतिस्पर्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्त्यतो विशेष्यन्ते द्विषन्तः सपत्ना इति। य एनं द्विषन्तः सपत्नास्ते परिम्रियन्ते प्राणाञ्जहति। किञ्च ये चाप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि ते च परिम्रियन्ते।**

**"प्राणो वा अन्नं शरीरमन्नादमि"त्यारभ्याऽऽकाशान्तस्य कार्यस्यैवान्नान्नादत्वमुक्तम्। उक्तं नाम; किं तेन?**
५ **तेनैतत्सिद्धं भवति—कार्यविषय एव भोज्यभोक्तृत्वकृतः संसारो न त्वात्मनीति। आत्मनि तु भ्रान्त्योपचर्यते।**

**नन्वात्माऽपि परमात्मनः कार्यं ततो युक्तस्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्याकाशादिकारणस्य ह्यसंसारिण एव परमात्मनः कार्येऽनुप्रवेशः श्रूयते। तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एवासंसारी। सृष्ट्वाऽनुप्राविशदिति समानकर्तृ[क]त्वोपपत्तेश्च। सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्ता ततः क्त्वाप्रत्ययो युक्तः। प्रविष्टस्य तु भावान्तरापत्तिरिति चेत्। न। प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात्। "अनेन**

१० आनन्दगिरिटीका

एवं मन्दाधिकारिगोचरमुपासनजातमध्यारोपावस्थायामुपदिश्यापवाददृष्टिमभिप्रेत्याऽऽह—**प्राणो वा अन्नमित्यादिना**। भोक्तृत्वादिलक्षणः संसारः कार्यगोचर इति वदतैव जीवस्यानौपाधिकं संसारित्वमिष्टं तस्यापि कार्यत्वात् इति भागवतानां मतमुद्भाव्य दूषयति—**नन्वात्माऽपीत्यादिना**। छान्दोग्यश्रुत्यनुसारेण विकारात्मना प्रवेशमाशङ्क्य वाक्यशेषविरोधमाह—**अनेन जीवेनेत्यादिना**। भ्रान्त्या देहादिभावमापन्नस्य जीवस्य ब्रह्म-

१५ वनमाला

"तमेताः पञ्च देवता अपियन्ति" इत्यादिश्रुत्यन्तरप्रसिद्धेरित्यर्थः। इदानीमाकाशस्य परिमरत्वं साधयति—**स एवायमिति**। वायुं प्रत्याकाशस्य कारणत्वाद्वाय्वनन्यत्वमित्यर्थः। तं वाय्वात्मानमाकाशं ब्रह्मणः स्वरूपभूतं परिमरत्वगुणकमुपासीतेत्यर्थः। सपत्ना द्विविधाः—द्विषन्तोऽद्विषन्तश्च; ततः सपत्नानां द्विषन्त इति विशेषणमित्याह—**द्विषन्त इत्यादिना**। **अद्विषन्तोऽपि चेति**। एनमद्विषन्तोऽपीत्यर्थः।

२० प्राणशरीरादेरन्नान्नादत्वनिरूपणस्य विवक्षितं तात्पर्यं कथयितुं व्यवहितं तदनुवदति—**प्राणो वा अन्नमित्यादिना**—"आपो वा अन्नम्, ज्योतिरन्नादम्" इत्यत्र आपः शरीरारम्भिका विवक्षिताः, ज्योतिश्च जाठरं शरीरारम्भकं वा विवक्षितम्। एवं पृथिव्याकाशावपि शरीरारम्भकावेव विवक्षितौ, प्राणशरीरसमभिव्याहारेण अबादीनामाध्यात्मिकत्वावगमात्; ततश्च शरीरप्राणादीनां प्रत्यगात्मोपाधिभूतानामेव "प्राणो वा अन्नम्" इत्यादिना भोगसाधनत्वरूपमन्नत्वं भोक्तृत्वरूपमन्नादत्वं चोक्तमित्यर्थः। **उक्तं नाम, किं तेनेति**। उक्तमस्तु नाम, तेनोक्तेन
२५ किं तव प्रयोजनं सिध्यति यदर्थं तदिहानूदितमित्यर्थः। तदुक्तिसिद्धं प्रयोजनं कथयति—**तेनैतदिति**। भोक्तृभोग्यभावादिरूपः सर्वोऽपि संसारः कार्यात्मकोपाधिधर्म एव नात्मधर्म इत्यात्मनो नित्यमुक्तत्वं सिध्यतीत्यर्थः। ननु यदि संसारस्य कार्यनिष्ठत्वं श्रुत्यभिमतं तदा जीवात्मापि शरीरप्राणादिवत्कार्यविशेष एवेति तस्य स्वाभाविकः संसारो न भ्रान्तिसिद्ध इति शङ्कते—**नन्वात्मापीति**। आत्मा कार्यं विभक्तत्वादाकाशादिवदित्यर्थः। आगमबाधितमनुमानम् इत्याशयेन निराकरोति—**नेति**। असंसारिणः परस्यैव जीवरूपेण प्रवेशश्रवणात्परजीवयोरेकत्वमवगम्यते, ततो
३० नात्मनः कार्यत्वमित्यर्थः। संग्रहं विवृणोति—**तत्सृष्ट्वेत्यादिना**। न केवलमसंसारिणो जीवरूपेण प्रवेशश्रवणात् लिङ्गात्परेतरात्मनोरेकत्वनिश्चयः, किं तु क्त्वाश्रुतिबलादपीत्याह—**सृष्ट्वेति**। स्रष्टा तावत्परमात्मेति निर्विवादम्; प्रविष्टस्य च "पश्यञ्शृण्वन्मन्वानः" इत्यादौ संसारित्वश्रवणात्प्रवेशे जीवः कर्ता सिद्धः, तथा च क्त्वाश्रुत्या तयोरेकत्वं निश्चीयते, इतरथा कर्त्रैक्याभावेन क्त्वाश्रुतिविरोधप्रसङ्गादित्यर्थः। यदुक्तमसंसारिण एव प्रवेशश्रवणात्परेतरात्मनोरेकत्वमिति, तत्र शङ्कते—**प्रविष्टस्येति**। प्रविष्टस्य बुद्ध्यादिकार्येषूपादानतया सृष्टिसमय एव
३५ सिद्धस्य परस्य जीवरूपभावान्तरात्मना परिणतिरेव प्रवेशो विवक्षितः, अतो न प्रवेशलिङ्गात्तयोरेकत्वसिद्धिरित्यर्थः। अस्य चोद्यस्य प्रागेव निरासपूर्वकं प्रवेशपदस्यार्थान्तरपरत्वेन व्याख्यातत्वान्नैवमिति परिहरति—**न, प्रवेशस्येति**। ननु जीवरूपेण परिणामं विनैव परस्य बुद्धिसम्बन्धात्संसारित्वेन भानमेव प्रवेशपदार्थ इति पूर्वग्रव्याख्यानमयुक्तमिति शङ्कते—**अनेनेति। धर्मान्तरेणेति**। जीवरूपविकारान्तरात्मनैव प्रवेशो न त्वविकृतस्यैव परस्य, अन्यथा जीवेनेति विशेषणवैयर्थ्यापत्तेरित्यर्थः। यदि जीवेनेति विशेषणबलाज्जीवस्य ब्रह्मविकारत्वं तत्राभिप्रेतं स्यात्तदा वाक्यशेष-

'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ॥ ४ ॥

जीवेने''ति विशेषश्रुतेर्धर्मान्तरेणानुप्रवेश इति चेत् । न । ''तत्त्वमसी''ति पुनस्तद्भावोक्तेः । भावान्तरापन्नस्यैव तदपोहार्था सम्पदिति चेत् । न । ''तत्सत्यं स आत्मा तत्त्वमसी''ति सामानाधिकरण्यात्[२] । दृष्टं जीवस्य संसारित्वमिति चेत् । न । उपलब्धुरनुपलभ्यत्वात्[३] । संसारधर्मविशिष्ट आत्मोपलभ्यत इति चेत् । न । धर्माणां धर्मिणोऽव्यतिरेकात्

आनन्दगिरिटीका ५

व्यतिरिक्तस्यैव ब्रह्मदृष्टिः उपदिश्यते संसारित्वापोहार्था । मातृबुद्धिरिव परयोषिति रागापोहार्था । अतस्तत्त्वमसीत्युपदेशस्यान्यार्थत्वान्न जीवस्य पारमार्थिकमसंसारिब्रह्मात्मत्वमित्याशङ्क्य तद्दूषयति—भावान्तरापन्नस्येत्यादिना । अबाधिततत्पदमुख्यसामानाधिकरण्यविरोधादब्रह्मणि जीवे ब्रह्मत्वसम्पादनार्थत्वं कल्पयितुं न शक्यत इत्यर्थः । संसारित्वग्राहकप्रत्यक्षविरोधादबाधित्वमसिद्धमित्याह—दृष्टमिति । सर्वप्रमाणानामनुग्राहकस्तर्क इष्यते । आत्मनश्च संसारधर्मवत्त्वस्य तर्कापरिशुद्धत्वात्तत्प्रत्यक्षस्य भ्रान्तत्वान्न शास्त्रज्ञानबाधकत्वं सम्भवतीत्याह—नेति । सुखादेरुपलभ्यत्वान्नोपलब्धृधर्मत्वं सम्भवति रूपादिवदित्यर्थः । संसारित्वग्राहकं यद्यपि प्रत्यक्षप्रमाणं न भवति तथाऽपि संसारधर्मविशिष्ट आत्मा स्वचैतन्येनोपलभ्यत इति स्वानुभवविरोधान्न शाब्दमसंसारित्वज्ञानं प्रमाणमिति चेन्नैतदपि १०

वनमाला

विरोधः प्रसज्येतेति दूषयति—न, तत्त्वमसीतीति । जीवस्याकाशादिवद्विकारत्वे तस्य ब्रह्मैक्योपदेशविरोध इत्यर्थः । अभेदोपदेशस्यान्यथासिद्धिमाशङ्कते—भावान्तरेति । जीवलक्षणं भावान्तरं विकारान्तरमापन्नस्यैव सतः परस्य संसारित्वप्राप्तौ तदपोहार्था जीवपरयोरभेदध्यानलक्षणा सम्पत् ''तत्त्वमसि'' इत्युपदिश्यते, न पुनर्जीवस्य ब्रह्मविकारत्वविरुद्धमैक्यमुपदिश्यते, अतो न वाक्यशेषविरोध इत्यर्थः । ''तत्त्वमसि'' इति वाक्यस्य सम्पदुपासनापरत्वे मानाभावाज्जीवस्य विकारत्वे नाशापत्त्या ''न जीवो म्रियते'' इति वाक्यशेषविरोधाद्वास्तवस्य संसारस्य सम्पदापोहासम्भवाच्च ''तत्त्वमसि'' इत्यैक्योपदेश एव ''सोऽयं देवदत्त-'' इतिवदिति परिहरति—न, तत्सत्यमिति । ननु जीवस्य ब्रह्मत्वं संसारित्वानुभवविरुद्धम्, अतो जीवस्य विकारत्वाभावेऽपि ब्रह्मभिन्नत्वात्सम्पत्परमेव ''तत्त्वमसि'' इति वाक्यमित्याशयेन शङ्कते—दृष्टमिति । आत्मनः संसारोपलब्धृत्वान्न संसारधर्मकत्वमुपलभ्यमानस्य नीलपीतादेरुपलब्धृधर्मत्वादर्शनादित्यर्थः । संसारस्य रूपादिवैलक्षण्यं शङ्कते—संसारधर्मेति । ''अहं सुखदुःखादिमान्'' इति संसारस्यात्मधर्मत्वमनुभूयते; स चानुभवो बाधकाभावात्प्रमैव; ''गौरोऽहम्'' ''नीलोऽहम्'' इत्याद्यनुभवस्तु जीवस्य देहव्यतिरिक्तत्वसाधकश्रुतियुक्तिबाधितः, अतो न रूपादितुल्यत्वं संसारस्येत्यर्थः । आत्मनि संसारस्यापि असङ्गत्वादिश्रुतिबाधितत्वस्य समानत्वान्नात्मनः संसारित्वं परमार्थम्; अतो नाभेदश्रुत्यनुपपत्तिरित्याशयेन—परिहरति—नेति । किं चात्मधर्मत्वेनाभिमतस्य सुखदुःखादेरात्मना सहाभेदो भेदो वा ? आद्ये न संसारस्यात्मधर्मतयोपलभ्यमानता सिध्यतीत्याह—धर्माणामिति । अव्यतिरेकादिति । अव्यतिरेकाभ्युपगमादित्यर्थः । अभेदपक्षे धर्माणामुपलब्धिकर्तृकोटिप्रविष्टत्वादुपलब्धिकर्मत्वानुपपत्तिरित्यर्थः । भेदपक्षे न संसारस्यात्मधर्मत्वं सिध्यति । तयो सम्बन्धानिरूपणात् समवायस्य सूत्रकारेणैव निरस्तत्वादित्यन्यत्र विस्तरः । अभेदे कर्तृकर्मभावानुपपत्तिरित्यत्र १५ २० २५

१. अत्र परैः ''स यश्चायं पुरुषे यश्चासावादित्ये स एक'' इत्यत्र यो नारायणः सर्वत्र जीवसमूहे अस्ति यश्चादित्योपलक्षितदेवेषु स एक इत्यर्थं इत्युक्तम् । तदपि नियाम्यभेदेन नियामकभेदस्याप्रसक्तत्वात् अप्राप्तप्रतिषेधरूपं वाक्यवैयर्थ्यमापादयति । एतन्मते ''एतत्साम गायन्नास्त'' इति गानकर्ता ब्रह्मा । अत एव ''अहमस्मि प्रथमजा ऋतस्य'' इत्युक्तमित्याहुः—''अहमन्नमदन्तमद्मि'' इति अन्नात्तॄन् जीवान् संहरामीत्यर्थः । अद्वैते तु जीवन्मुक्तस्य गानमिति बहु शोभते ब्रह्मणः स्वरूपमुपदिश्य तज्ज्ञातुः एतादृश सर्वात्मानुभवो भवतीत्यर्थकरणे प्रकृतोपयोगोऽस्माकमपीदृशानि मन्त्रदर्शनानिभ वन्तीति स्तुतिसम्भवात् । प्रकृतानुगुण्यञ्च । ब्रह्मा गायतीत्युक्ते ब्रह्मविदां न तेनोपयोगः न वा स्तुतिः ब्रह्मवेदनस्य भवेत् । ३० ३५

२. इदानीमेव ब्रह्मासीति तदर्थात् ।

३. कर्तृकर्मविरोधात् उपलब्धृधर्मत्वेनानुपलम्भात् ।

**स य एवंवित्। अस्मान्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुप-संक्रम्य।[1] इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्।[2] एतत्साम गायन्नास्ते। हा३वु हा३वु हा३वु ॥५॥**

कर्मत्वानुपपत्तेः। उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्। त्रासादिदर्शनाद्दुःखित्वाद्यनुमीयत इति चेत्। न। ५ त्रासादेर्दुःखस्य चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वम्। कापिलकाणादादितर्कशास्त्रविरोध[3] इति चेत्। न। तेषां मूलाभावे वेदविरोधे च भ्रान्तत्वोपपत्तेः। श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वमेकत्वाच्च। कथमेकत्व-मित्युच्यते—"स यश्चायं पुरुषे यश्चासावादित्ये स एक" इत्येवमादि पूर्ववत्सर्वम्।

अन्नमयादिक्रमेणाऽऽनन्दमयमात्मानमुपसंक्रम्यैतत्साम गायन्नास्ते। "सत्यं ज्ञानमि"त्यस्या ऋचोऽर्थो व्याख्यातो

### आनन्दगिरिटीका

१० युक्तं कर्मत्वकर्तृत्वविरोधादित्यर्थः। प्रत्यक्षविरोधाभावेऽप्यनुमानविरोधो भविष्यतीत्याह—**त्रासादिति**। त्रासादि साश्रयं कार्यत्वाद्घटवदन्यस्याऽऽश्रयस्यासम्भवादात्मैव तदाश्रयोऽनुमीयत इति न वाच्यमुपलभ्यो नोपलब्धुर्धर्मो रूपादिवदिति व्याप्त्यन्तरविरोधादध्यासादपि कार्यदर्शनसम्भवादित्यर्थः। जीवस्य ब्रह्मात्मत्वं प्रतिपादयतः शास्त्रस्य तर्कशास्त्रविरोधादप्रामाण्यमाशङ्क्य दूषयति—**कापिलेत्यादिना**। तर्कशास्त्रस्य श्रुतेश्च विरुद्धाव्यभिचारित्वेन[4] प्रामाण्यसंशयोऽपि नाऽऽशङ्कनीय इत्याह—**श्रुत्युपपत्तिभ्यां चेति**। किञ्च तार्किकेणापीश्वराधीनं जीवस्य सुखित्व १५ दुःखित्वं च निरूपणोयं न तन्निरूपयितुं शक्यते। स्वात्मनीश्वरस्य सुखदुःखहेतुत्वासम्भवादित्यभिप्रेत्याऽऽह—**एकत्वाच्चेति**। "स य" इत्यादिपदव्याख्यानमुपेक्ष्योपसंक्रमणसामगानयोरेककर्तृ[क]त्वमन्वयप्रदर्शनेन दर्शितमिदानीं वल्लीसमाप्तिपर्यन्तस्य ग्रन्थस्य तात्पर्यं वृत्तकीर्तनेनाऽऽह—**सत्यं ज्ञानमित्यादिना**। अविद्यालेशवशेन द्वैतावभासमनु-

### वनमाला

दृष्टान्तमाह—**उष्णेति**। "तत्त्वमसि" इत्यभेदोपदेशस्यात्मनि संसारित्वग्राहकप्रत्यक्षविरोधं परिहृत्य तत्र तद्ग्राहकानु-२० मानविरोधमाशङ्क्य परिहरति—**त्रासादिदर्शनादित्यादिना**। त्रासादेस्तदनुमेयदुःखादेश्च दृश्यत्वेन वस्तुतो द्रष्टृ-धर्मत्वासम्भवस्य प्रागेवोक्तत्वादित्याशयेनाह—**न, त्रासादेरिति**। "तत्त्वमसि" इत्यभेदोपदेशस्य शास्त्रान्तरविरोध-माशङ्क्य निराकरोति—**कापिलेत्यादिना**। कापिलादिशास्त्रे हि प्रतिशरीरं वस्तुत आत्मभेदः, तेषां च परमार्थ एव ब्रह्मभेदः, संसारित्वं च तेषां वास्तवमित्यादिप्रक्रिया दृश्यते; ततो निष्प्रपञ्चब्रह्मात्मैक्यं प्रतिपादयत आगमस्य तर्कशास्त्रविरोधादप्रामाण्यं स्यादिति शङ्कार्थः। कापिलादितर्कशास्त्राणां मूलप्रमाणशून्यत्वस्य तर्कपादे प्रतिष्ठा-२५ पितत्वात्पौरुषेयाणां तेषां वेदवत्स्वतःप्रामाण्यायोगाच्चेत्याशयेनाह—**मूलाभाव इति**। श्रुतिविरोधे स्मृत्यप्रामाण्यस्य पूर्वतन्त्रे व्यवस्थापितत्वाच्च न तद्विरोधाच्छ्रुत्यप्रामाण्यप्रसङ्ग इत्याशयेनाह—**वेदविरोधे चेति**। भ्रान्तत्वम् अप्रामाण्यम्। उपपादितमर्थमुपसंहरति—**श्रुत्युपपत्तिभ्यां चेति**। एवमविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशादिश्रुत्या दृश्यत्वाद्युपपत्त्या च निश्चितमसंसारित्वमात्मन इत्यर्थः। **एकत्वाच्चेति**। आत्मनः परेणैकत्वाच्चासंसारित्वं परस्यासंसारित्वादित्यर्थः। एकत्वे मानं पृच्छति—**कथमिति**। उत्तरश्रुतिरेव मानमित्याशयेनाह—**उच्यत इति**।

३० **उपसंक्रम्येति**। विद्यया कोशेष्वात्मत्वभ्रममपोह्येति यावत्। उपसंक्रम्येत्यस्य व्यवहितेन सम्बन्धमाह—**एतत्सामेति**। "इमाँल्लोकान्" इत्यादेः सङ्गतिकथनाय व्यवहितमनुवदति—**सत्यमित्यादिना**। "सत्यं ज्ञानम्" इति

१. उपसंक्रमणेन ब्रह्मसाक्षात्कारस्तेन जीवन्मुक्तिस्ततश्च सर्वात्मकत्वानुभवश्चेमाँल्लोकानित्यादिना प्रपञ्च्यते।

२. "एतत् साम गायन्नास्त" इत्येतत् सर्वेषां कामानामानन्दानां युगपदनुभवस्य प्रथमखण्डप्रोक्तस्योपपादन-मिति भाष्यकाराः, मतान्तरे तु तद्वैयर्थ्यं स्पष्टमेवाहमादिशब्दानां तत्तच्छरीरकपरमात्मपरत्वमङ्गीकृतं ३५ तैस्तथा च नेयं मुक्तप्रभावोक्तिः अपि तु परमेश्वरस्येति स्थितम्। तथा च "एतत् साम गायन्नास्त" इति वाक्यं विरुध्येत। इदं गानं परमात्मन इत्ययुक्तम् "उपसंक्रम्य अनुसञ्चरन् गायन्नास्त" इति उपसंक्रमणसमानकर्तृकत्वविरोधात्।

३. तन्मते दुःखादेरात्मधर्मत्वोपगमात्।

४. परस्परविरुद्धार्थव्याप्यहेतुप्रतिपादकत्वेन।

विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति। तस्य फलवचनस्यार्थविस्तारो नोक्तः। के ते किंविषया वा सर्वे कामाः कथं वा ब्रह्मणा सह समश्नुत इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते—तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम्। प्राणादेराकाशान्तस्य च कार्यस्यान्नान्नादत्वेन विनियोगश्चोक्तः। ब्रह्मविषयोपासनानि च। ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषया एते दर्शिताः। एकत्वे पुनः कामकामित्वानुपपत्तिः। भेदजातस्य सर्वस्याऽऽत्मभूतत्वात्। तत्र कथं[1] युगपद्ब्रह्मस्वरूपेण सर्वान्कामान् एवंवित्समश्नुत इत्युच्यते। सर्वात्मत्वापत्तेः। कथं सर्वात्मत्वापत्तिरित्याह—पुरुषादित्यस्थात्मैकत्वविज्ञानेन अपोह्योत्कर्षापकर्षावन्नमयाद्यात्मनोऽविद्याकल्पितान्क्रमेण संक्रम्याऽऽनन्दमयान्तान्सत्यं ज्ञानमनन्तं ५

आनन्दगिरिटीका

भवन्विद्वान्सर्वस्याऽऽत्माऽहमिति मन्यमानोऽणिमाद्यैश्वर्यभुजां योगिनां यत्कामान्नत्वं कामरूपत्वं च ममैवेति पश्यन्युगपत्सर्वान्विषयानन्दानश्नुते इत्युपचर्यत इत्याह—सर्वात्मत्वापत्तेरिति। प्रथमजो हिरण्यगर्भोऽप्यहम्। १०

वनमाला

मन्त्रस्य पूर्वार्धार्थो विस्तरेण व्याख्यात इत्यर्थः। "स य एवंवित्" इत्यादिना विदुषो वागाद्यगोचरब्रह्मानन्दप्राप्तेरुक्तत्वादर्थाद्ब्रह्मवल्ल्यामपि सर्वात्मकब्रह्मभावापत्तिप्रयुक्ता सर्वकामाप्तिः संग्रहेणोक्तैवेति मत्वाऽऽह—विस्तरेणेति। इत्थं वृत्तमनूद्याकाङ्क्षापूर्वकम् "इमाँल्लोकान्" इत्यादिकमवतारयति—के त इत्यादिना। तत्र कामानां स्वरूपे आकाङ्क्षां दर्शयति—के त इति। कामानां कारणे तां दर्शयति—किंविषया इति। साहित्ये कामानामशने च तां दर्शयति—कथं वेति। इत्याकाङ्क्षायां सत्यामेतद्विद्याफलं विस्तरेण वक्तव्यमित्याशयेनोत्तरं वाक्यजातं पठ्यत इत्यर्थः। एवमुत्तरग्रन्थस्य व्यवहितया आनन्दवल्ल्या सङ्गतिमुक्त्वा अव्यवहितभृगुवल्ल्यापि सङ्गतिं वक्तुम् "भृगुर्वै वारुणिः" इत्यादौ वृत्तं कीर्तयति—तत्रेत्यादिना। अन्नान्नादत्वेनेति। अन्नान्नादभावेनोपासने उपयोगश्चोक्त इत्यर्थः। "क्षेम इति वाचि" इत्यादावुक्तमनुवदति—ब्रह्मविषयेति। तेषूपासनेषु विवक्षितान्फलविशेषानपि कामशब्देनानुवदति—ये चेति। प्रतिनियता इति। तत्तदुपासनभेदेन व्यवस्थिता इत्यर्थः। तेषां मुक्तिवैलक्षण्यं सूचयति—अनेकेति। नानाविधोपायसाध्या इत्यर्थः। अत एव तेषामविद्याकालिकत्वमाह—आकाशादीति। आकाशादयो ये अविद्यायाः कार्यभेदास्तद्विषयास्तत्साध्या एव ते अविद्यावस्थायां दर्शिताः, न तु विद्यावस्थायाम्, विद्यावस्थायां त्वत्रापि वल्ल्याम् "स एकः, स य एवंवित्" इत्यादौ पूर्वोक्तमेव "सोऽश्नुते सर्वान्कामान्सह" इति फलं तात्पर्यतो दर्शितमिति भावः। इत्थमस्यामपि वल्ल्यां वृत्तानुवादेन फलवचनानुवृत्तिं सूचयित्वा तत्रानुपपत्तिमुद्भावयति—एकत्वे पुनरिति। स्वस्य ब्रह्मणा एकत्वे साक्षात्कृते सति कामयितव्यस्याकाशादिभेदजातस्य तत्साध्यकामजातस्य च सर्वस्यात्मव्यतिरेकेणाभावात्पूर्वावस्थायामिव पुनः कामान्प्रति कामित्वानुपपत्तेरित्यर्थः। एवमेकत्वे कामित्वानुपपत्तौ सत्यां फलितमाह—तत्र कथमिति। एकत्वं कामित्वानुपपत्तिर्विद्यावस्था वा तत्रशब्दार्थः। अविद्यालेशवशेन प्रपञ्चाभासमनुभवन्विद्वान् "सर्वस्यात्माहम्" इति मन्यमानोऽणिमाद्यैश्वर्यभुजां योगिनां यत्कामान्नित्वं कामरूपित्वं चास्ति तन्ममैवेति पश्यन्युगपत्सर्वान्विषयानन्दानश्नुत इत्युपचर्यते। विवक्षितं तु विद्याफलं सर्वात्मकब्रह्मभावमात्रम्। अत एव श्रुत्यन्तरम्—"ब्रह्मैव भवति" इति। अतो न फलवचने त्वदुक्तानुपपत्तिर्दोष इत्युत्तरग्रन्थतात्पर्येण समाधत्ते—उच्यत इति। तत्राहेति। श्रुतिरिति शेषः। पूर्वग्रन्थेऽपि विदुषः सार्वात्म्यमर्थसिद्धमिति दर्शयन् "स यश्चायम्" इत्यादौ वृत्तं कीर्तयति—पुरुषेत्यादिना। पुरुषस्थस्य जीवात्मन आदित्यस्थस्य परमात्मनश्चोत्कर्षापकर्षौ तत्प्रयोजकोपाधी च निरस्यैकत्वविज्ञानेनाविद्याकल्पितानन्नमयादीनानन्दमयान्ताननात्मनः क्रमेणोपसंक्रम्य सत्यज्ञानादिलक्षण फलभूतमद्वैतमापन्नः सर्वात्मा सन्निति योजना। अद्वैतस्य ब्रह्मणः फलभूतत्वसिद्धये सुखरूपत्वमाह—आनन्दमिति। तस्य तदर्थमेवानर्थास्पृष्टत्वमाह—अजममृतमभयमिति। तस्य परमार्थत्वमाह—स्वाभाविकमिति। तदर्थं निर्विशेषत्वमाह—अदृश्यादीति। सविशेषस्य दृश्यत्वनियमेन मिथ्यात्वादिति भावः। तस्य विकारत्वजडत्वपरिच्छेदान्व्यावर्तयति—सत्यं ज्ञानमनन्तमिति। ननु विदुषः सर्वलोकसञ्चारो न नियत इत्याशङ्क्याह—आत्मत्वेनानुभवन्निति। एतत्प्रकृतं ब्रह्म समत्वात्साम। समत्वमेवाह—सर्वानन्यत्वरूपमिति। सर्वव्यापिस्वरूपभूतमित्यर्थः। १५ २० २५ ३० ३५

१. "सर्वान् कामान् सहे" इत्येतन्निरूप्यते इत्यर्थः।

अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः। अहँ श्लोककृदहँ श्लोककृदहँ श्लोककृत्। अहमस्मि प्रथमजा ऋता३स्य। पूर्वं देवेभ्यो अमृतस्य ना३भाइ। यो मा ददाति स इदेव मा३ऽऽवाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवाम्। सुवर्न ज्योतीः। य एवं वेद। इत्युपनिषत् ॥६॥

५ भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व त्रयोदशान्नं प्राणो मनो विज्ञानं द्वादश द्वादशाऽऽनन्दो दशान्नं न निन्द्यादन्नं न परिचक्षीतान्नं बहु कुर्वीतैकादशैकादश न कञ्चनैकषष्टिर्दश

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि तृतीयायां भृगुवल्ल्यां दशमोऽनुवाकः

ब्रह्माद्वृष्ट्याविषमकं स्वाभाविकमानन्दमजममृतमभयमद्वैतं फलभूतमापन्न इमाँल्लोकान्भूरादीननुसञ्चरन्निति व्यवहितेन सम्बन्धः। कथमनुसञ्चरन्? कामान्नी कामतोऽन्नमस्येति कामान्नी। तथा कामतो रूपाण्यस्येति कामरूपी। अनुसञ्चरन्
१० सर्वात्मनेमाँल्लोकानात्मत्वेनानुभवन्। किम्? एतत्साम गायन्नास्ते। समत्वाद्ब्रह्मैव साम सर्वानन्यरूपं गायञ्शब्दयन्नात्मैकत्वं प्रख्यापयँल्लोकानुग्रहार्थं तद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति।

कथं? हा३वु हा३वु हा३वु। अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम्। कः पुनरसौ विस्मय इत्युच्यते—अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च। किञ्चाहमेव श्लोककृत्। श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्ता चेतनावान्। अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना सङ्घातकृत्। त्रिरुक्तिः
१५ विस्मयख्यापनार्था। अहमस्मि भवामि। प्रथमजाः प्रथमजः प्रथमोत्पन्नः। ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिरमृतत्वस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः।

वनमाला

स्वानुभवसिद्धस्यात्मैकत्वस्य तज्ज्ञानफलस्य कृतार्थत्वस्य च ख्यापनं निष्फलमित्याशङ्क्याह—लोकानुग्रहार्थमिति। आत्मैकत्वज्ञानं विना न संसारदावानलशान्तिः, अतो यत्नतस्तत्सम्पादनीयं सर्वैरिति ज्ञापनं लोकानुग्रहः।
२० गानप्रकारमेव प्रश्नपूर्वकमाह—कथमित्यादिना। हावुशब्दो विस्मयार्थः अभ्यासस्तु तत्रातिशयार्थ इति मत्वाऽऽह—अत्यन्तेति।

क इति। किंकृत इत्यर्थः। सार्वात्म्यप्राप्तिकृतो विदुषो विस्मय इत्याह—उच्यत इति। ननु नित्यशुद्धादिरूपस्य विदुषः कथमन्नान्नादरूपेण सार्वात्म्यमित्याशङ्क्य विक्षेपशक्तिमदविद्यालेशमहिम्नेत्याशयेनाह—निरञ्जनोऽपि सन्निति। अन्नं भोग्यजातम्, अन्नादो भोक्ता, तयोः सङ्घातो नाम भोक्तृभोग्यभावलक्षणः सम्बन्धः, तत्कर्ता,
२५ सर्वकर्मफलदातेति यावत्। तत्र सामर्थ्यं सूचयति—चेतनावानिति। सर्वज्ञ इत्यर्थः। अथवेति। अथ वा अन्नस्यैव सङ्घातकृदिति योजना। नन्वनेकेषां मृत्तृणकाष्ठादीनां गृहप्रासादादिरूपेण सङ्घातकरणं दृष्टम्, तत्कथमेकस्यान्नस्य अदनीयस्य सङ्घातकरणमित्याशङ्क्य विशिनष्टि—अनेकात्मकस्येति। शरीरेन्द्रियादिरूपेण परिणतिद्वारा अनेकात्मकस्य तस्य संहतिकरणमुपपन्नमित्यर्थः। शरीरप्राणादीनां मेलनरूपं सङ्घातं किमर्थमयं करोति? तत्राह—पारार्थ्येनेति। परस्य चेतनस्यार्थो भोगादिः तत्सिद्ध्यर्थत्वेनेत्यर्थः। ननु शरीरादिरूपेण परिणतस्यान्नस्य परार्थत्वे सिद्धे सति
३० तादर्थ्येन संहतिकरणमित्युपपद्यते, तदेव कुतः सिद्धम्? अत आह—परार्थस्येति। तद्विशदयति—अन्नादार्थस्य सत इति। भोक्त्रर्थस्य सत इत्यर्थः। जडस्य शरीरप्राणादेरिव काष्ठतृणादेरिव स्वार्थत्वायोगाच्चेतनार्थत्वं वक्तव्यमिति भावः। सत्यस्येति सच्च त्यच्च सत्यम्, सन्मूर्तं त्यदमूर्तमिति मूर्तामूर्तात्मकस्य ऋतशब्दितस्य जगत उत्पत्तेः पूर्वमेवोत्पन्नो हिरण्यगर्भश्चाहमस्मीत्यर्थः। देवेभ्यश्च पूर्वमिति। हिरण्यगर्भोत्पत्त्यनन्तरमिन्द्रादिदेवेभ्यः पूर्वमुत्पन्नो विराट्पुरुषश्चाहमस्मीत्यर्थः। अमृतस्य नाभिश्चाहमस्मीति श्रुतौ योजनां मत्वा विवृणोति—अमृतत्वस्येति। सर्वेषां
३५ मुमुक्षूणां प्राप्तव्यं यदमृतत्वं तन्मत्संस्थं मत्स्वरूपमेव मम परमानन्दस्वरूपत्वादित्यर्थः। ननु मां ददातीत्यनुपपन्नम्,

यः कश्चिन्मा मामन्नमन्नार्थिभ्यो ददाति प्रयच्छत्यन्नात्मना ब्रवीति स इदित्थमेवमविनष्टं यथाभूतमावा अवतीत्यर्थः। यः पुनरन्यो मामदत्त्वार्थिभ्यः काले प्राप्तेऽन्नमत्ति तमन्नमदन्तं भक्षयन्तं पुरुषमहमन्नमेव सम्प्रत्यद्मि भक्षयामि। अत्राऽऽहैवं तर्हि बिभेमि सर्वात्मत्वप्राप्तेर्मोक्षात्। अस्तु संसार एव यतो मुक्तोऽप्यहमन्नभूत अद्यः स्यामन्नस्य।

एवं मा भैषीः संव्यवहारविषयत्वात् सर्वकामाशनस्य। अतीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणम् ५ अविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वांस्तस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेत्यतो न भेतव्यं मोक्षात्।

एवं तर्हि किमिदमाह—अहमन्नमहमन्नाद इत्युच्यते—योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्यभूतः स संव्यवहारमात्रमेव न परमार्थवस्तु। स एवंभूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्याकार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते। अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादोऽहमन्नाद इत्यादि। अतो भयादि-दोषगन्धोऽप्यविद्यानिमित्तः अविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः सम्भजनीयं ब्रह्मादि- १० भिर्भवन्तीति वाऽस्मिन्भूतानीति भुवनमभ्यभवामभिभवामि परेणेश्वरेण स्वरूपेण।

आनन्दगिरिटीका

प्लुतिस्तावद्गानार्था। देवेभ्यः स्वव्यष्टिरूपेभ्यः पूर्वं विराड्रूपमेवेत्यर्थः। आवा इति। लोण्मध्यमपुरुषैकवचनम्।

वनमाला

चिदेकरसस्य विदुषो देयत्वायोगादित्याशङ्कां वारयति—अन्नात्मनेति। "अहमन्नम्" इति प्रागुक्तत्वादन्नात्मना १५ स्थित्वा तथाऽब्रवीदित्यर्थः। इत्थमित्यस्य व्याख्यानम्—यथाभूतमिति। अन्नभूतमित्यर्थः। अन्नभूतं मां यो ददाति स एवं ददत्सन्मामविनष्टं यथा भवति तथाऽवतीत्यर्थः। दातुरन्नं वर्धत इत्यभिप्रायः। अदत्त्वेति। लोभादिनेति शेषः। प्रत्यद्मीति। भक्षयामीत्यर्थः। वैश्वदेवावसाने प्राप्तेभ्योऽतिथिभ्यो यथाशक्त्यन्नमदत्वा भुञ्जानस्य गृहस्थस्य नरकपातो भवेदिति विवक्षितार्थः, अन्नभूतं मामदत्वा भक्षयन्तमहमपि भक्षयामीत्युक्तत्वात्। मुक्तं प्रत्यदनीयतया अन्नभूतो यो नास्तिकः तस्यान्नस्यैव सतो मुक्तोऽप्यदनीयो भवत्येवान्नभूतत्वात्, तथा च नास्तिकैर्व्याघ्रादिभि- २० रिवाद्यस्य मुक्तस्य संसारादपि तीव्रतरं दुःखं प्रसज्येत। तथा च तदपेक्षया संसार एव श्रेयानिति मुमुक्षुः शङ्कते—अत्राहेति।

परिहरति—मा भैषीरिति। सर्वकामाशनशब्दितस्यान्नान्नादभावलक्षणस्य सर्वात्मभावस्य संव्यवहार-विषयत्वात्कल्पनामात्रत्वान्न मुक्तस्य भयलेशोऽप्यस्तीत्यर्थः। अन्नादिभावस्य संव्यवहारविषयत्वेऽपि कथं मुक्तस्य भयाभाव इत्याशङ्क्य संग्रहवाक्यं विवृणोति—अतीत्यायमित्यादिना। विद्वद्दृष्ट्या वस्तुतो भयहेतोरभावान्न तस्य २५ भयमित्यर्थः। अयं विद्वानविद्याकृतं सर्वं विद्ययाऽतीत्य बाधित्वा ब्रह्मत्वमापन्नो वर्तत इति योजना। ननु यदि मुक्तो ब्रह्मभावमापन्न एवोक्तरीत्या, तर्हीदम् "अहमन्नादः" इत्यादिवचनं केनाभिप्रायेण प्रवृत्तमिति पृच्छति—एवं तर्हि किमिति। ब्रह्मभावलक्षणमुक्तिस्तुत्यभिप्रायेणेदं वचनं प्रवृत्तमिति परिहरति—उच्यत इति। प्रथममन्नादिभावस्य संव्यवहारविषयत्वादित्युक्तं मिथ्यात्वं साधयति—योऽयमित्यादिना। न परमार्थेति। वाचारम्भणादिश्रुतेर्दृश्यत्वादि-युक्तेश्चेति भावः। इदानीं स्तुत्यभिप्रायकत्वमन्नादिवचनस्य विवृणोति—स एवंभूतोऽपीति। ब्रह्मनिमित्तः ब्रह्म- ३० कारणकोऽन्नानादभावलक्षणः प्रपञ्चो व्यवह्रियमाणोऽपि ब्रह्मव्यतिरेकेण वस्तुगत्याऽसन्निति कृत्वा निश्चित्य स्थितस्य विदुषो योऽयं विद्याफलभूतो ब्रह्मभावः तस्य स्तुत्यर्थमन्नादिवचनेन सार्वात्म्यं सर्वकामाशनरूपमुच्यते, न त्वन्नादि-भावस्तस्य मुख्य इत्यर्थः। उपसंहरति—अत इति। विद्याबलादविद्योच्छेदाद्ब्रह्मभूतस्य विदुषो नास्त्यविद्यानिमित्तो भयदुःखादिदोषलेशोऽपीत्यर्थः। एवं मोक्षस्यापुरुषार्थत्वशङ्कां निराकृत्य पुनर्विदुषः स्तुत्यर्थमुपक्षिप्तं सर्वात्मभाव-मेवानुसरन्नुत्तरवाक्यमादत्ते—अहं विश्वमिति। भुवनमिति। भूरादिलोकजातमित्यर्थः। ईश्वरेणेति। सर्व- ३५

सुवर्नं ज्योतीः सुवरादित्यो नकार उपमार्थे। आदित्य इव सकृद्विभातमस्मदीयं ज्योतीर्ज्योतिः प्रकाश इत्यर्थः। इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानम्। तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तमोमिति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ
५ तैत्तिरीयोपनिषदि भृगुवल्लीभाष्ये दशमोऽनुवाकः

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।

ॐ शान्तिः शान्तिः शान्तिः।

आनन्दगिरिटीका

पौनःपुन्येनेत्येवं सर्वाख्यातेषु निपातयत इत्यवतीति व्याख्यातम्। अभिभवामि, उपसंहरामीत्यर्थः। ईश्वरात्मता-
१० ज्ञानेनाहंबाधेऽद्वैतं ततो नास्ति भयकारणमित्यर्थः। नकार इवार्थे।

तैत्तिरीयकभाष्यस्य शाङ्करस्य द्रढीयसः। स्फुटार्थबोधकामेभ्यो निरमायि सुटिप्पणम्॥ १॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाङ्करभाष्यटीकायां
भृगुवल्ल्यां दशमोऽनुवाकः

वनमाला

१५ जगत्संहर्तृरुद्ररूपेण अहमेवाभिभवामि संहरामीत्यर्थः। सुवर्नं इत्यत्र नकार इवार्थ इत्याशयेनाह—आदित्य इवेति। असकृदिति। सदेत्यर्थः। ज्योतिःपदं चैतन्यप्रकाशपरम्। "इत्युपनिषत्" इत्यस्यार्थमाह—इतीयमिति। विहिता निरूपिता। "य एवं वेद" इत्यत्र एवंशब्दार्थमाह—भृगुवदिति। वेद, सम्पादयतीत्यर्थः। यथोक्तमिति। ब्रह्मभाव-लक्षणमित्यर्थः। मङ्गलार्थम् ओङ्कारमुच्चारयति—ओमितीति।

अन्नप्राणमनोबुद्धिसुखैः पञ्चभिरुज्ज्वला। भगवत्यर्पिता जीयाद्वनमाला कृतिर्मम॥ १॥
२० नारायणपदद्वन्द्वं नारदादिभिरादृतम्। नमामि शतशो नित्यं नमतां मुक्तिदायकम्॥ २॥

इति श्रीमत्स्वयंप्रकाशानन्दसरस्वतीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ वनमालाख्यायां
तैत्तिरीयोपनिषद्भाष्यव्याख्यायां भृगुवल्लीभाष्यव्याख्या समाप्ता

## अथ वार्तिके भृगुवल्ल्यां दशमोऽनुवाकः

वसत्यर्थं तथाऽऽयातं प्रत्याचक्षीत नैव तम्। वसते चान्नदानार्थं कुर्यादन्नं गृही बहु ॥ १ ॥
एतद्वै मुखत इति सत्कारोक्तिस्त्रिधा भवेत्। वयोऽवस्था त्रिधा वा स्यादन्नदानविवक्षया ॥ २ ॥
राद्धं सिद्धं भवेदन्नं पात्रेभ्यो यस्य तस्य तु। यथासत्कारवयसी अन्नदानफलं भवेत् ॥ ३ ॥
गृहिणो ह्यन्नवन्तोऽपि यत आचक्षते सदा। अराधि सिद्धमेवान्नमतिथ्यर्थं न संशयः ॥
यत एवमतः कार्यं बह्वन्नं यत्नतः सदा ॥ ४ ॥ ५
अपि चान्नस्य माहात्म्यमिदमन्यद्यथावयः ॥ ५ ॥
यथाश्रद्धं यथाकालं यथासत्कारमेव च। अन्नं ददद्वाप्नोति तत्तथैव न संशयः ॥ ६ ॥
उपात्तरक्षणं क्षेमो ब्रह्मैतद्वाचि संश्रितम्। क्षेमहेतुर्यतो वाक्यं तदुपासीत वाच्यतः ॥ ७ ॥
अप्राप्तप्रापणं योगः क्षेमश्चोभयरूपभृत्। प्राणापानाश्रयं ब्रह्म तदुपासीत तौ यतः ॥ ८ ॥
योगक्षेमात्मकं ब्रह्म प्राणापानसमाश्रयम्। कर्मेति हस्तयोस्तद्वदुपासीताप्रमादवान् ॥ ९ ॥ १०
तथा गतिरिति ध्येयं पादयोर्ब्रह्म सर्वदा। विमुक्तिरिति पायौ च समाज्ञा मानुषीः स्मृताः ॥१०॥
मनुष्यविषया यस्मादाज्ञा विष्णोरियं ततः। समाज्ञा मानुषीस्त्वेवं सदैवाऽऽचक्षते बुधाः ॥ ११ ॥

पृथिव्याकाशयोरन्नान्नादत्वोपासकस्य वसत्यर्थमागतस्याप्रत्याख्यानं व्रतमिति "न कञ्चन वसतावि"त्यादेरर्थमाह—वसत्यर्थमिति। तस्मादित्यादिवाक्यस्य तात्पर्यार्थमाह—वसते चेति ॥ १ ॥

उत्तममध्यमाधमभेदेनान्नसत्कारोक्तिस्त्रिधा भवति। तत्कथनार्थमेतद्वै मुखतोऽन्नमित्यादिवाक्यमित्याह— १५
एतदिति। अन्नदानविवक्षया सत्कारोक्तेस्त्रैविध्यमुक्त्वा तद्विवक्षयैव बाल्ययौवनवार्धकरूपा वयसोऽवस्था त्रिविधा विवक्षितेति पक्षान्तरमाह—वयोवस्थेति ॥ २ ॥

तेष्वेव वाक्येष्वक्षरार्थं संगृह्णाति—राद्धमिति ॥ ३ ॥

तस्मादित्यादिवाक्येनान्नस्य बहुकरणमित्युक्तम्। तत्र हेतुत्वेनाराधीत्यादिवाक्यं सम्बध्यते। तथा च हेतुहेतुमद्भावेन वाक्यद्वयं नेतव्यमित्याह—गृहिणो हीति ॥ ४ ॥ २०

एतद्वै मुखतोऽन्नमित्यादिवाक्यषट्कस्य पूर्वोक्तमेवार्थं संक्षिप्यानुवदति—अपि चेति ॥ ५-६ ॥
क्षेम इति वाचीत्यस्यार्थमाह—उपात्तेति ॥ ७ ॥
योगक्षेम इति प्राणापानयोरित्यस्यार्थमाह—अप्राप्तेति ॥ ८ ॥

कथं प्राणापानाश्रयत्वं यथोक्तस्य ब्रह्मणः सिद्धमित्याशङ्क्याऽऽह—योगेति। जीवतो योगक्षेमाविति कृत्वा प्राणापानाश्रयौ योगक्षेमौ विवक्ष्येते। तस्मात्प्राणापानात्मना व्यवस्थितब्रह्मदृष्ट्या योगक्षेमावुपास्याविरयर्थः। कर्मेति २५
हस्तयोरित्यस्यार्थं सूचयति—कर्मेति ॥ ९ ॥

गतिरिति पादयोरित्यस्यार्थमाह—तथेति। विमुक्तिरिति पायावित्यस्यार्थं सूचयति—विमुक्तिरिति। मूत्रपुरीषविसर्गो विमुक्तिः। तद्रूपेण ब्रह्म पायौ व्यवस्थितमिति ध्येयमित्यर्थः। इति मानुषीरित्यादेरर्थं वक्तुं वाक्यमुपादत्ते—समाज्ञा इति ॥ १० ॥

तदेव व्याचष्टे—मनुष्येति ॥ ११ ॥ ३०

अथ दैवीः समाज्ञास्तु उपासीत यथाक्रमम् । वृष्टौ तृप्तिरिति ध्येयं तृप्तेर्वृष्टिसमन्वयात् ॥१२॥
तेन तेनाऽऽत्मना तद्वदुच्चरेष्वपि चिन्तयेत् । ब्रह्मोपस्थ उपासीत प्रजात्यादिगुणात्मकम् ॥१३॥
प्रजातिः पुत्रपौत्रादिरमृतत्वं ततः पितुः । आनन्दः पुरुषार्थोऽत्र सोऽप्युपस्थाश्रयो भवेत् ॥१४॥
आकाशे सर्वमित्येवं ब्रह्मोपास्यं समाहितैः । सर्वाश्रयं तदाकाश उपासीनस्य शिष्यते ॥१५॥
५ तत्प्रतिष्ठेत्युपासीत प्रतिष्ठावानसौ भवेत् । उपासनानुरूपं स्यात्फलं यादृगिदं तथा ॥१६॥
तद्ब्रह्म मह इत्येवमुपासीत ततः फलम् । प्रजादिभिर्महान्स स्यात्तं यथेति श्रुतिस्तथा ॥१७॥
तन्मन इत्युपासीत मनस्वी मानवान्भवेत् । प्रह्वीभावो नमोर्थः स्यात्फलं तस्येदमुच्यते ॥
नम्यन्तेऽस्य यथाकामं विषया भोगकारिणः ॥१८॥
यस्तु ब्रह्मेति तद्ब्रह्म ह्युपासीत यथोदितम् ॥१९॥
१० फलं तस्य तदेव स्यादिति पूर्वमवादिषम् । ब्रह्मणो ब्राह्मणस्यैव परिमरं ब्रह्म तत्तदा ॥२०॥
विद्युद्वृष्टिः शशी भानुरग्निश्चेति यतः श्रुतिः । वायौ म्रियन्त इत्याह परिमरस्तेन कीर्त्यते ॥२१॥
अनन्यश्चायमाकाशो वायुना ब्रह्मणा च खम् । द्विषन्तश्चाद्विषन्तश्च म्रियन्ते तस्य शत्रवः ॥२२॥

अथ दैवीरित्यस्यार्थमाह—अथेति । तृप्तिरिति वृष्टावित्यस्यार्थमाह—वृष्टाविति ॥ १२ ॥

बलमिति विद्युतीत्यादिवाक्येषूक्तन्यायमतिदिशति—तेनेति । बलरूपेण विद्युति यशोरूपेण पशुषु ज्योती-
१५ रूपेण नक्षत्रेषु व्यवस्थितं ब्रह्मेत्युपासनानि कर्तव्यानीत्यर्थः । प्रजापतिरित्यादि व्याचष्टे—ब्रह्मेति ॥ १३ ॥

आदिशब्दार्थं कथयति—प्रजातिरिति । सन्तानाविच्छित्त्या शुद्धयादिद्वारेण पितुर्ज्ञानोत्पत्त्या भवत्य-
मृतत्वम् । आनन्दश्च वैषयिकं सुखमुपस्थबलादिति प्रसिद्धम् । तथा च प्रजात्यादिगुणविशिष्टं ब्रह्मोपस्थे व्यवस्थित-
मिति ध्यातव्यमित्यर्थः ॥ १४ ॥

सर्वमित्याकाश इत्यस्यार्थमाह—आकाश इति । सर्वाश्रयत्वादाकाशस्य सर्वप्रपञ्चात्मना ब्रह्माऽऽकाशे
२० व्यवस्थितमित्युपासीनस्य सर्वात्मत्वमेव फलं "तं यथा यथे"त्यादिश्रुतिसिद्धमित्याह—सर्वाश्रयमिति ॥ १५ ॥

आकाशात्मना व्यवस्थितं ब्रह्म प्रतिष्ठागुणविशिष्टमित्युपासकस्य प्रतिष्ठैव फलमिति तत्प्रतिष्ठेत्यादेरर्थ-
माह—तत्प्रतिष्ठेतीति । प्रतिष्ठागुणकब्रह्मोपासने दर्शितन्यायं सर्वोपासकेषु दर्शयति—उपासनेति ॥ १६ ॥

तन्मह इत्यादेरर्थं कथयति—तद्ब्रह्मेति ॥ १७ ॥

तन्मन इत्यादेरर्थमाह—तन्मन इति । आकाशात्मकं ब्रह्म मनोगुणविशिष्टमित्युपासकस्य मनस्वित्वं
२५ फलमित्यर्थः । तन्नम इत्यादेरर्थमाह—प्रह्वीभाव इति ॥ १८ ॥

तद्ब्रह्मेत्यादेरर्थमाह—यस्त्विति ॥ १९ ॥

यथोदितमित्याकाशात्मत्वं ब्रह्मणो निर्दिश्यते । "तं यथा यथे"ति श्रुतिमाश्रित्य फलश्रुतिं व्याचष्टे—फलमिति ।
पूर्वत्र महत्त्वं प्रजादिभिरुक्तम् । इह तु विद्ययेति विशेषः । तद्ब्रह्मण इत्यादिवाक्यस्यार्थं दर्शयति—ब्रह्मण इति ।
तदाकाशात्मकं ब्रह्मणो ब्राह्मणस्य परिमरगुणविशिष्टमुपासकस्य तस्यामुपासनायां वक्ष्यमाणं सिध्यतीत्यर्थः ॥ २० ॥

३० कथमाकाशस्य परिमरत्वमित्याशङ्क्य वायोरादौ संवर्गश्रुत्यवष्टम्भेन परिमरत्वं दर्शयति—विद्युदिति ॥२१॥

वायोरेव परिमरत्वेऽपि किमायातमाकाशस्येत्याशङ्क्याऽऽह—अनन्यश्चेति । अयमाकाशो वायुना सहानन्यो
भवति । तत्कारणत्वेन तदात्मत्वात् । आकाशश्च ब्रह्मणो न भिद्यते तत्कार्यत्वेन ततोऽतिरेकाभावात् । तेनाऽऽकाशो
ब्रह्मणः परिमर इति ब्रह्म परिमरगुणकमित्यर्थः । तथागुणकं ब्रह्मेत्युपासकस्य फलमाह—द्विषन्तश्चेति ॥ २२ ॥

प्राणो वा अन्नमित्यादिवियदन्तस्य पूर्वया । अन्नान्नादत्वं श्रुत्योक्तं कार्यत्वात्संहतस्य हि ॥
अन्नान्नादत्वमस्यैव कथं नाम प्रतीयते ॥२३॥
मा भूद्ब्रह्मणि तत्सक्तिर्मनोवाचामगोचरे ॥२४॥
अविद्याविषयस्तस्माद्भोक्तृभोज्यादिलक्षणः । व्यवहारोऽवसेयः स्यान्न तु सत्यादिलक्षणे ॥२५॥
अविद्योत्थं द्वयाभासं भोज्यभोक्तृत्वलक्षणम् । यत्र हि द्वैतमित्याद्या श्रुतिर्नः प्रत्यपीपदत् ॥२६॥ ५
[1]यत्र त्वस्येति विध्वस्तसर्वाविद्यादिलक्षणे । निषेधति सदाऽविद्याध्यस्तं द्वैतमिहाऽऽत्मनि ॥२७॥
एकत्वाच्च न संसारः क्रियाकारकलक्षणः । कुतस्तदिति चेत्तत्र स यश्चायमितीर्यते ॥२८॥
सह ब्रह्मणेति यच्चोक्तं निर्णयस्तस्य साम्प्रतम् । कथं नु सकलान्कामानश्नुते युगपद्बुधः ॥
प्रतिपत्तयेऽस्यार्थस्य श्रुतिः प्रववृते परा ॥२९॥
न सहार्थे तृतीयेयं न्यायोऽत्र प्राक्समीरितः । यतोऽतोऽत्र तृतीयेयं ग्राह्येत्थम्भूतलक्षणा ॥३०॥ १०
हेत्वर्था वा भवेदेषा तृतीया ब्रह्मणेति या । सर्वकामाशनं यस्माद्ब्रह्मणैवोपपद्यते ॥३१॥
निरात्मकस्य सर्वस्य ब्रह्माऽऽत्मा येन तत्परम् । सत्यज्ञानादिरूपत्वाच्चदेतदधुनोच्यते ॥३२॥

"पर्येणमि"त्यादिवाक्यद्वयस्यार्थमुक्त्वा [2]"प्राणो वा अन्नमि"त्यारभ्य [3]"आकाशोऽन्नाद" इत्यन्तेन ग्रन्थेनान्नान्नादव्यवहारस्य प्राणादिगतत्वदर्शनस्याभिप्रायं प्रकटयति—प्राणो वा इति ॥ २३ ॥

अस्यैवेत्यवधारणार्थं कथयति—मा भूदिति ॥ २४ ॥ १५

व्यवहारविशेषस्याविद्याकृतत्वं न वास्तवत्वमित्युपसंहरति—अविद्येति। प्रत्यगविद्याविलसितत्वेनानात्मगतः संसारो नाऽऽत्मनि सम्भवति । आत्मन्यविद्ययाऽध्यस्तो भातीत्यर्थः ॥ २५ ॥

यदविद्योत्थत्वं संसारस्योक्तं तत्र प्रमाणमाह—अविद्योत्थमिति ॥ २६ ॥

अविद्यामन्तरेण वस्तुतरत्वात्मनि संसारो नास्तीत्यत्रापि श्रुतिमुदाहरति—यत्र त्विति ॥ २७ ॥

आत्मनि संसारस्याविद्याकल्पितत्वे श्रुतिमुक्त्वा तत्रैवोपपत्तिमुपन्यस्यति—एकत्वाच्चेति । आत्मनो २० ब्रह्माभिन्नत्वेन तत्र भातसंसारस्य स्यादेव कल्पितत्वं न चाऽऽत्मनो ब्रह्माभिन्नत्वं मानाभावादिति शङ्कते—कुत इति । आत्मनो ब्रह्मणा सहैकत्वे प्रमाणत्वेन वाक्यमवतारयति—तत्रेति ॥ २८ ॥

वाक्यत्रयमात्रस्य तात्पर्यमुक्त्वा समनन्तरसन्दर्भस्य समस्तस्यैव तात्पर्यमाह—सहेति । "सोऽश्नुते सर्वान् कामान्सहे"ति यदुक्तं तन्निर्णयार्थं "स यश्चायमि"त्यादिरुत्तरो ग्रन्थः "सर्वोऽपी"त्यर्थः । तदेव प्रश्नद्वारा प्रकटयति—कथमिति ॥ २९ ॥ २५

सर्वकामावाप्तिर्विदुषो ब्रह्मरूपेणोक्ता तत्प्रपञ्चनार्थः "स यश्चायमि"त्यादिरुत्तरो ग्रन्थ इत्युक्तमेव व्यक्तीकर्तुं "ब्रह्मणा विपश्चिते"ति तृतीयार्थमविवक्षितमपाकृत्य विवक्षितं कथयति—नेत्यादिना । विदुषो ब्रह्मणश्च भेदासम्भवो न्यायः ॥ ३० ॥

अर्थान्तरं तृतीयाया दर्शयति—हेत्वर्थेति । तमेव हेतुरूपमर्थं स्फोरयति—सर्वकामेति । सर्वस्य ब्रह्ममात्रत्वाद्ब्रह्मणा हेतुना ब्रह्मविदः सर्वकामाशनमुपपन्नमित्यर्थः ॥ ३१ ॥ ३०

सर्वस्य ब्रह्ममात्रत्वं साधयति—निरात्मकस्येति । सर्वस्य प्रपञ्चस्य ब्रह्माऽऽत्मा स्वरूपं यस्मादिष्यते तस्मात्तस्य स्वतो रूपहीनस्य ब्रह्ममात्रत्वं युक्तमित्यर्थः। सत्यज्ञानानन्तानन्दात्मकत्वेन परमार्थत्वं ब्रह्मणो यस्मादिष्टं

---

१. मा० बृ० २.४.१६ । २. तै० ३.७ । ३. तै० ३.९ ।

स यश्चायमिति ह्युक्तिरन्नान्नादादिकस्य हि । ग्रन्थस्य ग्रसनार्थाय ब्रह्मविद्यापरस्य तु ॥३३॥
संक्रम्य विद्यया सर्वानविद्योत्थाननात्मनः । आत्मनाऽऽत्मानमापन्नः सत्याद्दश्यादिलक्षणम् ॥
उत्कृष्टीतरहीनः सन्निमाँल्लोकान्क्रियोद्भवान । कामान्नी कामरूपी सन्नुपाधीननुसञ्चरन् ॥३५॥
न हि सञ्चरणं साक्षाद्ब्रह्मणोऽस्त्यविकारिणः । यत्र हि [1]ध्यायतीवेति तथा च श्रुतिशासनम् ॥३६॥
५ सर्वात्मत्वादिमाँल्लोकान्पश्यन्नात्मतया बुधः । एतद्ब्रह्म समं साम गायन्नास्ते कृतार्थतः ॥३७॥
द्वेधा भिन्नमिदं सर्वमन्नमन्नाद एव च । सत्याद्दश्यादिरूपात्मा अहमेवैतदीक्ष्यताम् ॥३८॥
तयोः श्लोकश्च सम्बन्धो भोज्यभोक्तृत्वलक्षणः । अहमेव यथोक्तात्मा न मत्तोऽन्यस्ततोऽस्ति हि ॥३९॥
क्रियाकारकनिर्मुक्तं पश्यन्नात्मानमात्मनि । त्रिरहो इति भवेत्स्तोभो विस्मयार्थश्च स स्मृतः ॥४०॥
त्रिरुक्तिश्चाऽऽदरार्थेयमहमन्नमितीष्यते । अश्रद्दधानलोकस्य प्रतिपत्त्यर्थमुच्यते ॥४१॥
१० मूर्तामूर्तात्मकस्यास्य ह्यन्नान्नादत्वरूपिणः । अतद्वानग्रजोऽहं वै [2]न तदश्नाति हि श्रुतिः ॥४२॥

तस्माद्ब्रह्माऽऽत्मा सर्वस्य प्रपञ्चस्येत्येतदुपपादयति—सत्येति । सर्वस्य प्रपञ्चस्याऽऽत्मा ब्रह्मेत्यत्र वाक्यमवतारयति—तदेतदिति ॥ ३२ ॥

स यश्चायमित्यादेरुत्तरस्य ग्रन्थस्य तात्पर्यान्तरमाह—स यश्चेति । अन्नान्नादत्वेन प्रस्तुतस्य समस्तस्य प्रपञ्चस्य ग्रसनं ज्ञानबलेन बाधनम् । तदर्थं च "स यश्चायमि"त्यादिकस्योत्तरग्रन्थस्य ब्रह्मविद्यापरस्योक्तिरत्र क्रियते १५ तस्माज्ज्ञानबाध्यं द्वैतमद्वैतं पारमार्थिकमित्यर्थः ॥ ३३ ॥

एवं तात्पर्यं प्रदर्श्याक्षरार्थं कथयति—संक्रम्येति । "स यश्चायमि"त्यादिवाक्योत्थब्रह्मात्मैकत्वज्ञानात्कोशपञ्चकमनात्मभूतमुपमृद्याऽऽत्मनाऽऽत्मानमद्वितीयं सत्यज्ञानादिरूपमप्रपञ्चं ब्रह्म प्रतिपन्नो विद्वानास्ते कृतार्थतयेत्यर्थः॥३४॥

इमाँल्लोकान्कामान्नीत्यादेरक्षरार्थमाह—उत्कृष्टीति । प्रकृतो हि विद्वान्ब्रह्मभूतः सन्नुत्कर्षापकर्षहीनो बाधितानुवृत्त्या प्रतिभासमानानुपाधीननुसञ्चरन्नास्त इति सम्बन्धः ॥ ३५ ॥

२० परमार्थतोऽनुसञ्चरणमित्याशङ्क्य श्रुतियुक्तिविरोधान्मैवमित्याह—न हीति ॥ ३६ ॥

विदुषोऽक्रियस्य कथं लोकानुसञ्चरणमित्याशङ्क्य गत्यर्था बुद्ध्यर्था इतिन्यायादनुसञ्चरणमनुभवमात्रमित्यङ्गीकृत्य "एतत्सामे"त्यादि व्याचष्टे—सर्वात्मत्वादिति ॥ ३७ ॥

अहमन्नमहमन्नाद इत्यादि सामद्वयं तस्यार्थमाह—द्वेधेति । अन्नान्नादविभक्तं समस्तं जगत्सत्यादृश्याद्यात्मकमात्मरूपमेवेति द्रष्टव्यमिति विदुषो वचनमित्यर्थः ॥ ३८ ॥

२५ अहं श्लोककृदिति सामान्तरं व्याकरोति—तयोरिति । भोक्ता भोज्यं तयोः सम्बन्धश्चाहमेवेत्यर्थः ॥३९॥

यथोक्तं जगदात्मत्वेन कोऽनुभवतीत्यपेक्षायां विद्वानेवेति वक्तुं तं विशिनष्टि—क्रियेति । हाऽ३वु हाऽ३वु हाऽ३वु । इति स्तोभत्रयम् । तस्यार्थमाह—त्रिरिति ॥ ४० ॥

अहमन्नमित्यादावभ्यासत्रितयमस्ति तस्य तात्पर्यमाह—त्रिरुक्तिरिति । अन्नग्रहणमन्नादश्लोककृतोरुपलक्षणम् ॥ ४१ ॥

३० अहमस्मीत्यादिवाक्यस्यार्थमाह—मूर्तेति । ऋतं सत्यं भूतपञ्चकं तस्य मूर्तामूर्तरूपस्यान्नान्नादात्मकस्य प्रसिद्धस्य समस्तस्य प्रपञ्चस्य प्रथमजोऽग्रे विद्यमानोऽहं वस्तुतस्तद्विलक्षणोऽस्मीत्यत्र प्रमाणमाह—न तदिति । कार्यात्कारणाच्च ब्रह्मभूतस्य विदुषो विलक्षणत्वात्तद्रूपस्य च तद्व्यतिरेकेणाभावाद्युक्तं विदुषो द्विधाभूतात्प्रपञ्चात्तदस्पर्शित्वेनाग्रे स्थितत्वमित्यर्थः ॥ ४२ ॥

---

१. बृ० ४.३.७ । २. बृ० ३.८.८ ।

देवेभ्यः पूर्वमेवाहं नाभिरस्म्यमृतस्य च। कारणत्वाद्भवेन्नाभिर्मन्निष्ठा वाऽमृतात्मता ॥४३॥
अदत्त्वाऽन्नं तु पात्रेभ्यो यो मामश्नाति घस्मरः। अहमन्नमदन्तं तं प्रत्यद्मीहान्नवन्नरम् ॥४४॥
यो मां ददाति पात्रेभ्यो देशकालसमन्वितम्। ददद्दित्थमसावन्नं मामवत्येव सर्वदा ॥४५॥
सत्यज्ञानादिरूपोऽहमविद्योत्थमशेषतः। अहं ह्यभिभवाम्येको दिनकृच्छार्वरं यथा ॥४६॥
ध्यानैकतानिबिडाहितचेतसोऽजं प्रध्वस्तकृत्स्ननिजमोहसमस्तदोषम्। ५
प्रत्यक्तया शुभधियो यतयोऽभ्युपेत्य यं देवमेकममलं प्रविशन्ति सोऽव्यात् ॥४७॥

पूर्वं देवेभ्य इत्यस्यार्थं कथयति—देवेभ्य इति। ऋतशब्देनोपाधीनां गृहीतत्वाद्देवशब्देन चैतन्याभासानां जीवानां ग्रहणात्तेभ्योऽहमाभासाभासिविभागविकलः शुद्धः सन्नग्रे स्थितोऽस्मीत्यर्थः। अमृतस्येत्यादेरर्थमाह—नाभिरिति। प्रसिद्धममृतं गृहीत्वा प्रत्यगात्मनस्तदाश्रयत्वं नाभित्वं साधयति—कारणत्वादिति। अमृतशब्दस्य कैवल्यार्थत्वं गृहीत्वा कैवल्यस्य ब्रह्मणः स्वरूपं प्रत्यगात्मैवेत्यर्थान्तरमाह—मन्निष्ठेति ॥ ४३ ॥ १०

अहमन्नमन्नमदन्तमित्यादेरर्थं कथयति—अदत्त्वेति ॥ ४४ ॥

देशकालपात्रानुरूपमन्नदानमकुर्वन्प्रत्यवायीत्युक्त्वा तदनुसारेणान्नदानं कुर्वन्नभ्युदयभागी भवतीत्येतदाह—यो मामिति ॥ ४५ ॥

यो मां ददातीत्यादिना सविशेषरूपस्योक्तत्वाद्ब्रह्म सप्रपञ्चं प्राप्तमित्याशङ्क्य तन्निवृत्त्यर्थम् "अहं विश्वम्" इत्यादेरर्थमाह—सत्येति। कार्यकारणविरही प्रत्यगात्माऽहमित्युच्यते। स चाविद्यामविद्याकार्यं च सर्वं वाक्योत्थबुद्धिवृत्त्यभिव्यक्तः सन्नभिभवति बाधत इत्यर्थः। वाक्योत्थबुद्धिवृत्त्यभिव्यक्तोऽपि प्रत्यगात्मा कर्म ज्ञानाभ्यासं वा सहकारित्वेनोपादायाज्ञानमज्ञानकार्यं वा परिहरिष्यति न स्वातन्त्र्येणेत्याशङ्क्य "सुवरि"त्यादिवाक्यस्य तात्पर्यमाह—अहं हीति। एषा तावदुपनिषदेवं प्रवृत्ता। यश्चैतामुपनिषदमुक्तेन प्रकारेण प्रतिपद्यते स विद्वान्यथोक्ते परमानन्दे निर्भये ब्रह्मणि तन्मात्रत्वेन प्रतिष्ठितो निर्वृणोतीत्यर्थः ॥ ४६ ॥ १५

इदानीं वल्लीद्वयस्यार्थं संक्षिप्य रक्षणव्याजेन दर्शयन्नुपसंहरति—ध्यानेति। परमात्मनि प्रत्ययप्रवाहो ध्यानं तस्यैकतानं नामैकविस्तारः सजातीयप्रत्ययनिष्ठत्वं तस्य च निबिडत्वं विजातीयप्रत्ययानन्तरितत्वेन नैरन्तर्यं तत्र ध्यानस्यैकताने निबिडे विशेषणत्रयवति विषयेभ्यः सर्वेभ्यो व्यावर्त्याऽऽहितं तदेकनिष्ठमापादितं चेतो येषां ते ध्यानैकताननिबिडाहितचेतसः श्रवणमनननिदिध्यासनाभ्यासवन्तो यतयो मुख्याः संन्यासिनो यं प्रविशन्ति सोऽव्यादिति सम्बन्धः। मुक्तोपसृप्यं परमात्मानं जन्मादिसमस्तविक्रियाशून्यत्वेन कूटस्थं दर्शयति—अजमिति। तस्यैव निराकृतस्वाविद्यातत्कार्यत्वेन नित्यशुद्धत्वमाह—प्रध्वस्तेति। पुनरुन्मज्जनायोग्यत्वेन ध्वंसगतो विशेषो वाक्योत्थबुद्धिवृत्तिवशादखण्डो दण्डायमानो निजे स्वात्मन्याश्रयविषये च वर्तमानो मोहो नैसर्गिकस्तज्जन्यदोषश्च कर्तृत्वादिः समस्तः संसारो यत्र तं परमात्मानमिति योजना। तस्यैव शास्त्रयुक्तिसिद्धं स्वयंप्रभत्वमाह—देवमिति। तस्यैव सर्वप्रकारभेदशून्यत्वेनाद्वितीयत्वमाह—एकमिति। प्रध्वस्तेत्यादिना नित्यशुद्धत्वस्योक्तत्वान्नित्यमुक्तत्वं कथयति—अमलमिति। केन मार्गेण संन्यासिनो यथोक्तं परमात्मानं प्रविशन्तीत्यपेक्षायां पदार्थपरिशोधनद्वारेण प्रकृतपरमात्मानमभ्युपेत्याऽऽभिमुख्येन प्रत्यगात्मत्वेन वाक्याज्ज्ञात्वा तेन ज्ञानमार्गेण तं प्रविशन्तीत्याह—प्रत्यगिति। येषां यतीनां ज्ञानप्राप्तिद्वारा परमात्मप्रवेशस्तान्यथोक्तज्ञानप्राप्तियोग्यान्विशिनष्टि—शुभेति। वर्णाश्रमानुरोधिशुभकर्मानुष्ठानापेक्षया निर्मलान्तःकरणविवेकवैराग्यद्वारेण सर्वकर्मसंन्यासिनो भूत्वा शमदमादिसाधनसामग्रीसम्पन्ना मोक्षमेवापेक्षमाणा यथोक्ततत्त्वज्ञानद्वारा यं प्रविशन्ति सोऽव्यात्। आत्मप्रदानेन मुमुक्षून्ब्रह्मनिष्ठान्परिरक्षतादित्यर्थः ॥ ४७ ॥ २० २५ ३०

**तैत्तिरीयकसारस्य वार्तिकामृतमुत्तमम् । मस्करीन्द्रप्रणीतस्य भाष्यस्यैतद्विवेचनम् ॥४८॥**

**मुमुक्षुसार्थवाहस्य भवनामभृतो यतेः । शिष्यश्चकार तद्भक्त्या सुरेशाख्यो महार्थवित् ॥४९॥**

**इति दशमोऽनुवाकः**

आशीर्वादव्याजेन वल्लीद्वयार्थं संक्षिप्योपसंहृत्य प्रकृतं वार्तिकमिदानीमुपसंहरति—**तैत्तिरीयकेति।** मस्करो ५ वैणवो दण्डः। तदुपेतानां संन्यासिनां श्रेष्ठो भगवान्भाष्यकारः। तेन प्रणीतं यत्तैत्तिरीयकशाखासारस्योपनिषदो भाष्यं तस्यैतद्विवेचनम्। वार्तिकामृतं सर्वदोषरहितं निरतिशयपुरुषार्थसाधनम्। सुरेशाख्यो यतिश्चकारेति सम्बन्धः ॥ ४८ ॥

सम्प्रदायपूर्वकत्वेनास्य वार्तिकस्य विद्वदुपादेयत्वं सूचयति—**मुमुक्षुसार्थवाहस्येति।** मुमुक्षवो मोक्षमेव अपेक्षमाणाः साधनचतुष्टयविशिष्टाः संन्यासिनस्तेषां सार्थः समूहस्तं वहति तत्र निर्वाहकत्वेन वर्तते भगवन्भाष्य- १० कारस्तस्य यतीनामग्रेसरस्य भवस्य भगवतो महादेवस्य नाम शङ्कराख्यं बिभ्रतस्तेनैव नाम्ना सर्वत्र प्रख्यातस्य सुरेश्वरसंज्ञया लोके विख्यातो यतिः शिष्योऽभूत्। स च तस्यैवाऽऽचार्यस्याऽऽज्ञां परिपालयन्नाचार्यभक्तिमेव पुरस्कृत्य यथोक्तं वार्तिकं चकारेति योजना। भक्तिमात्रेण कृतस्य वार्तिकस्य कथं त्रिद्वद्भिरुपादेयत्वं तत्राऽऽह— **महार्थविदिति।** महान्तं बहुप्रकारमबाधितं चार्थं वेत्तीति तथोच्यते। तथा च तेन प्रणीतमिदं वार्तिकामृतं वृद्धैः श्रद्धेयमेवेत्यर्थः ॥ ४९ ॥

१५　परापरगुरून्नत्वा सम्प्रदायानुसारतः। व्याकृतं संग्रहेणैव तैत्तिरीयकवार्तिकम् ॥ १ ॥
सा चेयं व्याक्रिया प्रीतिं भगवत्येव कुर्वती। चिराय वर्ततां कृष्णे तृष्णां त्यक्त्वाऽन्यगामिनीम् ॥ २ ॥

**इति दशमोऽनुवाकः**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिता
तैत्तिरीयकवार्तिकटीका समाप्ता

२०　समाप्तेयं कृष्णयजुर्वेदीया
तैत्तिरीयोपनिषत्
सटीकवार्तिकयुक्तटीकाद्वययुक्तशाङ्करभाष्यभूषिता

ॐ

ऋग्ब्राह्मणारण्यकान्तर्गतद्वितीयारण्यकस्था

# ऐतरेयोपनिषत्

## अथ प्रथमोऽध्यायः

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

#### उपोद्घातः

**परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन। सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता। "एतत्सत्यं ब्रह्म प्राणाख्यम्" "एष एको देवः" "एतस्यैव प्राणस्य सर्वे देवा विभूतयः" "एतस्य प्राणस्याऽऽत्मभावं**

### श्रीमदानन्दगिर्याचार्यकृता टीका

[1]आत्मा वा इदमित्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्तयति—**परिसमाप्तमिति**। तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्य तत्फलोपसंहारादित्याह—**सैषेति**। परा गतिः परं गन्तव्यं प्राप्तव्यं फलमित्यर्थः। ५ उपसंहारमेव वाक्योदाहरणेन दर्शयति—**एतदिति**। तत्र सह सर्वेण भोज्येन संयुक्तोऽध्यात्माधिदैवलक्षणः प्राणः सत्यैकशब्दवाच्यो भवतीति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः। अनेन प्राण एक एवेत्युक्तमित्याह—**एष इति**। तर्हि वागग्न्यादयो देवाः क इत्याशङ्क्य "[2]तस्य वाक्तन्तिरथातो विभूतयोऽस्य पुरुषस्य" इत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह—**एतस्यैवेति**। एवं सर्वात्मकप्राणस्याऽऽत्मत्वेन विज्ञानात्कर्मसहितात्सर्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं "प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद" इत्यनेन १० वाक्येनोपसंहृतमित्याह—**एतस्येति**। तथा च ज्ञानसहितेन कर्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्य

---

१. धर्मकोशग्रन्थमालायां "वायी" इति प्रसिद्धक्षेत्रस्थ विद्यालयमुद्रितायामैतरेयोपनिषदमधिकृत्य तत्सम्पादकैः श्रीलक्ष्मणशास्त्रिजोशीत्येतैः टिप्पण्यामुच्यते—ऐतरेयोपनिषत् न केवलम् "आत्मा वा" इत्यारभ्य "अमृतः समभवत्" इत्येवन्ता परन्तु ऐतरेयारण्यकस्थद्वितीयतृतीयारण्यकावपि उपनिषत्त्वेन सग्राह्यौ। व्याख्यातौ च श्रीशङ्करभगवत्पादैः "तथा च एष पन्था एतत्कर्म एतत्सत्यम्" इत्यारभ्यैवोपनिषत्प्रारभ्यते इत्युक्तम्। १५

परन्तु विविच्यमाने "आत्मा वा" इत्यारभ्यैव भगवत्पादैः व्याख्याता इत्यकामेनाङ्गीकर्तव्यं भवति यतः—"तस्यास्यकर्मकाण्डेन सम्बन्धोऽभिधीयते" इत्यारभ्य "ब्रह्मविद्याप्रतिप्रत्यर्था उपनिषदारभ्यते" इत्यन्तं बृहदारण्यकोपनिषद्भाष्यादौ स्थितम्। न हि तदेवात्राप्युक्तं तैरिति युज्यते उपनिषद्भेदेन भिन्नभिन्नरीत्यैवोपोद्घातरचनादर्शनात्। २०

अपि च आनन्दाश्रममुद्रिते ऐतरेयभाष्ये स्थितः "कथं पुनरकर्मसम्बन्धिकेवलात्मविज्ञानविधानार्थमुत्तरो ग्रन्थ इति गम्यते" इत्यारभ्य "अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते" इत्येवन्तः "आत्मा वा" इत्यतः पूर्वमुपलभ्यमानः ग्रन्थभागः धर्मकोषसम्पादितपुस्तके दूरनिरस्त एव। न चायं भागः अप्रामाणिक इति शङ्क्यम्। श्रीमदानन्दगिर्याचार्यैर्व्याख्यातत्वात्। अपि च "त्रय आत्मानः" इत्यारभ्य "यावदयम्" इत्यादिवाक्यात् पूर्वभावि सर्वं भाष्यं त्रिचतुरपुट- २५ परिमितमानन्दगिरिटीकोपष्टब्धं त्यक्तमेवानेन महाभागेन। तस्मात् धर्मकोशस्थभाष्यमसम्पूर्णमेवेति निर्णीयास्माभिः आनन्दाश्रमपाठः भारते सर्वत्र प्रसिद्ध एव स्वीकृतः।

२. तस्य वाक्तन्तिः प्रसारितरज्जुवत् सर्वसामान्या वाक् सा दीर्घरज्जुस्थानीया। प्रत्येकपशुबन्धनपाशवत् नामानि दामस्थानीयानि। तया वाचा सर्वं जगत् सितम्=बद्धम्।

गच्छन्देवता अप्येति" इत्युक्तम् । सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः । एष मोक्षः । स चायं यथोक्तेन ज्ञानकर्मसमुच्चयसाधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नास्तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थं "आत्मा वा इदमि"त्याद्याह। कथं पुनरकर्मसम्बन्धिकेवलात्मविज्ञानविधानार्थं उत्तरो ग्रन्थ इति गम्यते? अन्यार्थानवगमात्। तथा च पूर्वोक्तानां देवतानामग्न्यादीनां संसारित्वं दर्शयिष्यत्यशनायादिदोषवत्त्वेन "तमशनापिपासाभ्यामन्ववार्जदि"त्यादिना।
५ अशनायादिमत्सर्वं संसार एव परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः । भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं;

असिद्धेस्तत्सिद्धयर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः। अत्रान्तरे सर्वात्मकसूत्रात्मप्राप्तिव्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति—सोऽयमिति । एतस्यैव विषयादिमतः सुखरूपत्वेन पुरुषार्थत्वान्मोक्षत्वं न निर्विषयस्य केवलात्मस्वरूपावस्थानस्येत्याह—एष इति । अयमपि चेन्मोक्षः केवलात्मज्ञानेन साध्यते तदा तदारम्भोऽर्थवानित्याशङ्क्य सविशेषेणैव साधनेन सिद्धिर्युक्तेत्याह—स चेति । आत्मनः
१० सविशेषत्वेन केवलात्मविद्याया अभावादपि न तस्या हेतुत्वमित्याह—नातः परमिति । तन्मतं प्रदर्श्य तन्निराकरणार्थत्वेन केवलात्मविद्यावाक्यमवतारयति—तानिति । केवलात्मज्ञानेति निर्विशेषात्मविषयत्वमकर्मिनिष्ठत्वं कर्मानङ्गत्वलक्षणं कर्मासम्बन्धित्वं च कैवल्यमिह विवक्षितमित्यर्थः ।

ननु "आत्मा वा इदम्" इत्यादि कथं केवलात्मविषयं "स इमाँल्लोकानसृजत" इति लोकसृष्टिप्रतीतेः । तस्याश्च सविशेषहिरण्यगर्भादिकर्तृकत्वेन पुराणेषु प्रसिद्धेः । ताभ्यो गामानयदित्यादिव्यवहाराणां लोके सविशेष-
१५ विषयत्वप्रसिद्धेः । पूर्वत्र "अथातो रेतसः सृष्टिः" "प्रजापते रेतो देवाः" इत्यत्र प्रजापतिशब्दितस्य हिरण्यगर्भस्य प्रस्तुतत्वाच्च तस्य तद्विषयत्वस्यौचित्यादित्यात्मगृहीतिरित[1]यधिकरणपूर्वपक्षन्यायेन शङ्कते—कथमिति । सविशेषविषयत्वे सत्यात्मविद्यायाः कर्मसम्बन्धोऽप्यसिद्ध इत्यभिप्रेत्योक्तमकर्मसम्बन्धीति । "[2]आत्मा वा इदमेक एवाग्र आसीत्" इत्यद्वितीयात्मोपक्रमात् । "एष ब्रह्मैष इन्द्र." इत्याद्यनुक्रम्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्" इति प्रज्ञानशब्दितप्रत्यगात्माधिष्ठानत्वेन तद्व्यतिरेकेण ब्रह्मशब्दितहिरण्यगर्भादिप्रपञ्चस्याभावमुक्त्वा प्रज्ञानं
२० ब्रह्मेत्यद्वितीयात्मनोपसंहारात् "स एतमेव पुरुषं ब्रह्म ततमपश्यत्" इति मध्ये परामर्शाद्ब्रह्मात्माद्वितीयत्वस्य मानान्तरागम्यत्वेनापूर्वत्वादमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदिति स्वर्गशब्दितनिरतिशयसुखात्मकब्रह्मणैक्येन स्थितस्य तदंशभूतवैषयिकसर्वानन्दप्राप्तिलक्षणफलोक्तेः । सृष्ट्याद्यर्थवादात् । "स एतमेव सीमानं विदार्येतया द्वारा प्रापद्यत" इति प्रवेशोक्तेः । "तस्य त्रय आवसथास्त्रयः स्वप्नाः" इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च निर्विशेषाद्वितीयात्मपरत्वावगमनेन ग्रन्थस्यार्थान्तरशङ्कानवकाशाल्लोकादि-
२५ सृष्ट्युक्तेश्चाध्यारोपापवादाभ्यामुक्तात्मप्रतिपत्त्यर्थमात्मन्यध्यारोपात्परमात्मैवेहाऽऽत्मशब्देन गृह्यत इतरवत्। यथेतरेषु सृष्टिश्रवणेषु "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्येवमादिषु परस्याऽऽत्मनो ग्रहणं यथा वेतरस्मिँल्लौकिक आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति । कुतः । वाक्यार्थदर्शनात् । आत्मगृहीतिरितरवदुत्तरादित्यधिकरणसिद्धान्तन्यायेन केवलात्मपरत्वनिश्चयान्न सविशेषपरत्वमुत्तरग्रन्थस्येत्याह—अन्यार्थेति । यच्चैष एव मोक्ष इत्युक्तं तत्राऽऽह—तथा चेति । तथा संसारित्वं च दर्शयिष्यतीत्यन्वयः । तं
३० हिरण्यगर्भस्य स्थूलं रूपं वैराजं पिण्डमशनायापिपासाभ्यां संयोजितवानीश्वर इति श्रुत्यर्थः । आशनायादिमत्त्वेऽपि निरतिशयसुखवत्त्वेन देवताभावस्य मोक्षत्वं स्यादित्यत आह—अशनायादीति। अशनायादेर्दुःखनियतत्वान्निरतिशयसुखवत्त्वं तस्यासिद्धमिति संसारित्वमित्यर्थः । यच्च निर्विशेषात्मस्वरूपावस्थानस्य विषयादिरहितत्वेन न मोक्षत्वमिति तदसत् । तस्य योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यशनायाद्यत्ययश्रुतेस्तन्नियतदुःखाप्रसक्तेः । स्वतश्च "आनन्दो ब्रह्मेति व्यजानात्" इति श्रुत्यन्तरादमुष्मिन्स्वर्गे लोक इतीहाप्यानन्दरूपतावगमात्स्वर्गशब्दस्य

---

३५ १. आत्मगृहीतिरितरवदुत्तरात् ( ब्र० सू० ३-३-१६ ) ।

२. "आत्मा वा इदमग्र आसीदि"त्यनेन हिरण्यगर्भं इह प्रतिपद्यते न शुद्धं ब्रह्म लोकसृष्टिसमाम्नानात् तत्सृष्टेः प्रजापतिकर्तृकत्वात् इति पूर्वपक्षः तन्न्यायेनेत्यर्थः । ऐतरेयकस्य शुद्धब्रह्मतात्पर्यकत्वे षड्विधतात्पर्यलिङ्गान्याह—आत्मा वेति । आत्मगृहीत्यधिकरणसिद्धान्तन्यायः—उक्ततात्पर्यलिङ्गवत्त्वं च निर्गुण एव न सविशेषे ।

न त्वत्राकर्म्येवाधिक्रियते। विशेषाश्रवणात्। अकर्मिण आश्रम्यन्तरस्येहाश्रवणात्। कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्य अनन्तरमेवाऽऽत्मज्ञानं प्रारभ्यते। तस्मात्कर्म्येवाधिक्रियते।

न च कर्मासम्बन्ध्यात्मविज्ञानं पूर्ववदन्त उपसंहारात्। यथा कर्मसम्बन्धिनः पुरुषस्य सूर्यात्मनः स्थावर-जङ्गमादिसर्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च "सूर्य आत्मे"त्यादिना, तथैव "एष ब्रह्मैष इन्द्रः" इत्याद्युपक्रम्य सर्वप्राण्यात्मत्वम् "यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रमि"त्युपसंहरिष्यति। तथा च संहितोपनिषदि—"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते" इत्यादिना कर्मसम्बन्धित्वमुक्त्वा "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्युपसंहरति। तथा तस्यैव "योऽयमशरीरः प्रज्ञात्मे"त्युक्तस्य "यश्चासावादित्य एकमेव तदिति विद्यादि"त्येकत्वमुक्तम्। इहापि "कोऽयमात्मे"त्युपक्रम्य प्रज्ञात्मत्वमेव "प्रज्ञानं ब्रह्मे"ति दर्शयिष्यति। तस्मान्नाकर्मसम्बन्ध्यात्मज्ञानम्।

पुनरुक्त्यानर्थक्यमिति चेत् कथं "प्राणो वा अहमस्म्यृषे" इत्यादिब्राह्मणेन "सूर्य आत्मा" इति मन्त्रेण च निर्धारितस्याऽऽत्मन "आत्मा वा इदम्" इत्यादिब्राह्मणेन "कोऽयमात्मे"ति प्रश्नपूर्वकं पुनर्निर्धारणं पुनरुक्तमनर्थकमिति चेत्, न। तस्यैव धर्मान्तरविशेषनिर्धारणार्थत्वान्न पुनरुक्ततादोषः। कथम्, तस्यैव कर्मसम्बन्धिनो जगत्सृष्टिस्थिति-संहारादिधर्मविशेषनिर्धारणार्थत्वात्। केवलोपास्त्यर्थत्वाद्वा। अथवाऽऽत्मेत्यादिपरो ग्रन्थसन्दर्भ आत्मनः कर्मिणः कर्मणोऽन्यत्रोपासनाऽप्राप्तौ कर्मप्रस्तावेऽविहितत्वात्केवलोऽप्यात्मोपास्य इत्येवमर्थः। भेदाभेदोपास्यत्वाद्धेक एवाऽऽत्मा कर्मविषये भेददृष्टिभाक्। स एवाकर्मकालेऽभेदेनाप्युपास्य इत्येवमपुनरुक्तता।

सुखसामान्यवाचित्वात्। "अनन्ते स्वर्गे लोके" "ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः" इत्यादिश्रुतिषु ब्रह्मानन्दे स्वर्गशब्दप्रयोगाच्च। तस्य विषयाभावेऽपि पुरुषार्थत्वान्मोक्षत्वमित्याह—परस्य त्विति। एवं निर्विशेषात्मविद्याया मोक्षसाधनत्वमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमरूपं कैवल्यं न सम्भवतीति वदन्संन्यासमाक्षिपति—भवत्विति। विशेषाश्रवणमेव स्फोटयति—अकर्मिण इति। संन्यासिन इत्यर्थः। न केवलं विशेषाश्रवणं किन्तु सन्निधानात्कर्मिणः प्रतीतेः कर्मसम्बन्धित्वनियमश्रवणं चास्तीत्याह—कर्म चेति। तथा च तद्द्वारा कर्मी सन्निहित इत्यर्थः। तस्मादिति। ततो न कर्मत्यागरूपसंन्यासाश्रमोऽस्तीत्यर्थः।

एवमात्मविद्यां केवलां कर्मासम्बन्धिनीमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमो निराकृतः। इदानीमङ्गीकारं परित्यजति—न चेति। पूर्वत्र कर्मसम्बन्धिज्ञानविषयस्य सर्वात्मत्वोक्तेरेष ब्रह्मेत्यादिनाऽत्रापि सर्वात्मत्वोक्तेस्तेनैव लिङ्गेनास्याप्यात्मज्ञानस्य कर्मसम्बन्धित्वानुमानाद्वक्ष्यमाणस्याऽऽत्मज्ञानस्य न कर्मासम्बन्धित्वमित्यर्थः। संग्रहवाक्यं विवृणोति—यथेत्यादिना। कर्मसम्बन्धिन इति। तस्य "एष हीमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति" इत्यादिना सूर्यात्मत्वमुक्त्वा तस्य सर्वात्मत्वं "तस्माच्छर्तचिन इत्याचक्षत एतमेव सन्तम्" इत्यादिना "प्राणऋच इत्येवं विद्यात्" इत्यन्तेन "प्राणो वै सर्वाणि भूतानि च" इत्यनेन चोक्तमित्यर्थः। जगतो जङ्गमस्य तस्थुषः स्थावरस्य सूर्य आत्मेति मन्त्रार्थः। प्रज्ञानेत्रमिति। प्रज्ञाशब्दितब्रह्मनेतृकमित्यर्थः। [1]सन्दंशन्यायेनाप्यस्य कर्म-संम्बन्ध्यात्मविषयत्वमिति वदन्सर्वात्मत्वलिङ्गस्य कर्मसम्बन्ध्यात्मनियतत्वमाह—तथा चेति। तथा संहितोपनिषदि चेति चकारान्वयः। महत्युक्थे बृहतीसहस्राख्ये शस्त्र एतं प्रकृतमात्मानमृग्वेदिनो विचारयन्तीति श्रुत्यर्थः। संहितोपनिषदि प्रज्ञात्मेत्युक्तस्याऽऽत्मनो "यो यज्ञस्योल्बणं पश्येदि"त्यादिवाक्यपर्यालोचनया कर्मसम्बन्धप्रतीतेरस्यापि प्रज्ञात्मत्वोक्त्या च कर्मसम्बन्धावगमात्तज्ज्ञानस्य कर्मसम्बन्धित्वमित्याह—तथा तस्येति। शङ्कामुपसंहरति—तस्मादिति।

शङ्कावाद्येव सिद्धान्त्याशङ्कामाशङ्कते—पुनरुक्तीति। संग्रहवाक्यं विवृणोति—प्राणो वा इत्यादिना। पूर्वोत्तरब्राह्मणयोरेकार्थत्वे वक्ष्यमाणमपि प्राणात्मविषयं स्यात्तच्च निर्धारितमिति पुनरुक्तमित्यर्थः। स एवाऽऽशङ्कां परिहरति—न तस्येति। तमेव प्रश्नपूर्वकं विवृणोति—कथमित्यादिना। जगत्सृष्टीति। "स इमाँल्लोकानसृजत" इत्यादिश्रवणादित्यर्थः। प्रकारान्तरेण पुनरुक्तिं परिहरति—केवलेति। एतं परिहारं वाशब्दार्थं वदन्विवृणोति—अथवेति। कर्मणोऽन्यत्रेति। कर्माङ्गत्वं तदङ्गावस्थाद्याश्रयत्वं च विनेत्यर्थः। अप्राप्ताविति च्छेदः। अप्राप्तौ हेतुमाह—कर्मप्रस्ताव इति। अविहितत्वादिति च्छेद उत्तरत्र हेतुः। न चैवं स्वोक्तकर्मसम्बन्धित्वनियमत्यागापत्तिः।

---

१. सन्दंशन्यायेन—एकाङ्गानुवादेन विधीयमानयोः द्वयोरन्तरालपतितत्वं सन्दंशः तेन अभिक्रमणादीनां प्रयाजाङ्गत्वसिद्धिः।

**"विद्यां चाविद्यां च यस्तद्वेदोभय्ँ सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽऽमृतमश्नुते ॥" इति। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छत्ँ समाः" इति च वाजिनाम्। न च वर्षशतात्परमायुर्मर्त्यानाम्। येन कर्मपरित्यागेनात्मानमुपासीत। दर्शितं च "तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति" इति। वर्षशतं चाऽऽयुः कर्मणैव व्याप्तम्। दर्शितश्च मन्त्रः "कुर्वन्नेवेह कर्माणि" इत्यादिः। तथा "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत"**
५ **इत्याद्याश्च। "तं यज्ञपात्रैर्दहन्ति" इति च। [1]ऋणत्रयश्रुतेश्च। तत्र पारिव्राज्यादिशास्त्रं "व्युत्थायाथ भिक्षाचर्यं चरन्ती"त्यात्मज्ञानस्तुतिपरोऽर्थवादोऽनधिकृतार्थो वा।**

**न। परमार्थविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं "कर्मिण एव चाऽऽत्मज्ञानं कर्मसम्बन्धि च" इत्यादि। तन्न। परं ह्याप्तकामं सर्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाने कृतेन कर्तव्येन वा प्रयोजनमात्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात्करोतीति चेत्। न। नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगं**

१० कर्माङ्गाश्रितत्वमात्रस्य त्यागेऽपि कर्मसम्बन्धित्वस्य सविशेषविषयत्वलक्षणस्य कर्मसमुच्चितत्वलक्षणस्य वाऽत्यागादङ्गीकारवादेनास्य पक्षस्योक्तेर्वाऽस्मिन्नपि पक्षे कर्मिनिष्ठत्वं नियतमिति भावः। अत्रैव पक्षे विशेषान्तरमाह—**भेदेति**। **भेदबुद्धीति**। इदन्तयोपास्य इत्यर्थः। **अभेदेनेति**। अहन्तयेत्यर्थः।

आत्मा वा इदमित्यादिषट्कस्य स्वपक्षेऽर्थवत्त्वमुक्त्वा तस्य कर्मत्यागेनाऽऽत्मज्ञानार्थत्वपक्षे बहुश्रुतिविरोधमाह—**विद्यामित्यादिना**। अविद्याशब्देनात्र तत्कार्यं कर्मोच्यते। ननु "कुर्वन्नेवे"ति मन्त्रे वर्षशतस्य कर्मनियतत्वोक्तावपि
१५ तदनन्तरं संन्यासः स्यादित्यत आह—**न चेति**। 'शतायुर्वै पुरुषः" इति श्रुतेरित्यर्थः। इहापि बृहतीसहस्राख्यस्य शस्त्रस्य षट्त्रिंशतमक्षराणां सहस्राणीत्युक्त्वा तावन्ति पुरुषायुषोऽह्नां सहस्राणीत्युक्तत्वाद्वत्सरशतमेवाऽऽयुरित्याह—**दर्शितं चेति**। भवन्तीत्यनन्तरमितिशब्दो द्रष्टव्यः। पुरुषायुषस्याह्नामिति पाठः साधुः। पुरुषायुषोऽह्नामिति तु समासान्तविधेरनित्यत्वाभिप्रायेण कथञ्चिन्नेयः। पुरुषायुष चेद्वर्षशताधिकं नास्ति तर्हि तन्मध्य एव कर्मसंन्यासः स्यादत आह—**वर्षशतं चेति**। तत्र मानमाह—**दर्शितश्चेति**। ननु पुराणेषु शताधिकस्याऽऽयुषो दशरथादेः
२० श्रुतत्वाच्छतवर्षानन्तरं कर्मसंन्यासः स्यादित्याशङ्क्य शतायुः श्रुतिविरोधेन तस्यार्थवादत्वात्तथाऽङ्गीकारेऽपि जीवनकालस्य सर्वस्यापि कर्मणा व्याप्तत्वश्रुतेर्नैवमित्याह—**तथा यावज्जीवमिति**। "जीर्णो वा विरमेदि"ति वचनाज्जरानन्तरं संन्यासः स्यादित्याशङ्क्य यज्ञपात्रैर्दहनविधानान्नेत्याह—**तं यज्ञपात्रैरिति**। ननु यावज्जीवादिवाक्यानां प्रतिपन्नगार्हस्थ्यविषयत्वं वक्तव्यम्। अन्यथा ब्रह्मचारिणोऽपि तद्विधिप्रसङ्गात्ततश्च गार्हस्थ्यात्पूर्वं कर्मत्यागः स्यादत आह—**ऋणेति**। "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति श्रुतेः। "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे
२५ निवेशयेत्" इति स्मृतेश्चेत्यर्थः। ततश्च तदपाकरणार्थं तेनापि गार्हस्थ्यमेव प्रतिपत्तव्यं न सन्यास इत्यर्थः।

"यदहरेव विरजेत्तदहरेव प्रव्रजेत्" "व्युत्थायाथ भिक्षाचर्यं चरन्ति" "ब्राह्मणः प्रव्रजेद्गृहात्" इत्यादिश्रुतिस्मृत्योः का गतिरित्यत आह—**तत्रेति**। **ज्ञानस्तुतीति**। सर्वसंन्यासेनाप्यात्मा ज्ञातव्य इति ज्ञानस्तुतिः प्रतीयत इति तत्पर इत्यर्थः। विधित्वेऽपि कर्मानधिकृतान्धपङ्ग्वादिविषयत्वमेवेत्याह—**अनधिकृतेति**। तस्मान्नाकर्मिनिष्ठा विद्या किंतु कर्मिनिष्ठा तत्सम्बन्धिनी चेति स्थितम्। तदेतत्सिद्धान्ती परिहरति—**नेति**। एवं हि कर्मिनिष्ठा विद्या
३० स्यात्। यदि विदुषोऽपि कर्मानुष्ठानं स्यात्तदपि प्रयोजनार्थितया वा स्यात्काम्य इव नियोगबलाद्वा [2]प्राभाकरमत इव नित्यकर्माणि। तत्र नाऽऽद्य इत्याह—**परमार्थेति**। संग्रहवाक्यं विवृण्वन्निषेध्याध्याहारपूर्वकं नञर्थं विवृणाति—**यदुक्तमित्यादिना**। **कर्मसम्बन्ध चेति**। कर्माङ्गोक्थ्याद्याश्रयमित्यर्थः। परमार्थेति वाक्यांशं विवृणोति—**परमिति**। अर्थप्राप्त्यर्थमनर्थनिवृत्त्यर्थं वा कर्म स्यान्नोभयमपीति वक्तुं विशेषणद्वयम्। दोषपदेन रागद्वेषाभावेनापि प्रवृत्त्यभावं सूचयति। प्रागनुष्ठितकर्मणाऽप्यसम्बन्धे कर्तव्येन दूरापास्त इति वक्तुं कृतेनेत्युक्तम्। द्वितीयं शङ्कते—**फलादर्शनेऽ-**
३५ **पीति**। ममेदं कार्यमिति बोद्धा हि नियोगस्य विषयो नियोज्यः। कार्ये स्वकीयत्वज्ञानं च तज्जन्यफलार्थिनो न

---

१. ऋणत्रयश्रुतिः—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इत्युक्ता।

२. प्रभाकरमत इवेति। नित्यानां फलं नास्ति तथापि "यावज्जीवमग्निहोत्रं जुहुयादि"त्यादिनियोगबलात् अकरणे प्रत्यवायः करणे पण्डापूर्वं जायते ननु फलमिति प्रभाकरमतम्।

चाऽऽत्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके न तु तद्विपरीतनियोगाविषयब्रह्मात्मत्वदर्शी । ब्रह्मात्मत्वदर्श्यपि संश्चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिन्न नियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्तव्यं प्राप्नोति । तच्चानिष्टम् । न च स नियोक्तुं शक्यते केनचित् ।

आम्नायस्यापि तत्प्रभवत्वात् । न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते नापि बहुवित्स्वाम्यविवेकिना भृत्येन । आम्नायस्य नित्यत्वे सति स्वातन्त्र्यात्सर्वान्प्रति नियोक्तृत्वसामर्थ्यमिति चेत्, न । उक्तदोषात् । तथाऽपि ५ सर्वेण सर्वदा सर्वमविशिष्टं कर्म कर्तव्यमित्युक्तो दोषोऽप्यपरिहार्य एव । तदपि शास्त्रेणैव विधीयत इति चेत् । यथा कर्मकर्तव्यता शास्त्रेण कृता तथा तदप्यात्मज्ञानं तस्यैव कर्मिणः शास्त्रेण विधीयत इति चेन्न । विरुद्धार्थबोधकत्वानुपपत्तेः । न ह्येकस्मिन्कृताकृतासम्बन्धित्वं तद्विपरीतत्वं च बोधयितुं शक्यम् । शीतोष्णतामिवाग्नेः । न चेष्टयोगचिकीर्षाऽऽत्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता सर्वप्राणिनां तद्दर्शनाच्छास्त्रकृतं चेत्तदुभयं गोपालादीनां न दृश्येताशास्त्रज्ञत्वात्तेषाम् । यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यम् । तच्चेत्कृतकर्तव्यता- १० विरोध्यात्मज्ञानं शास्त्रेण कृतं कथं तद्विरुद्धां कर्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इव च भानौ । न बोधयत्येवेति चेत्, न । "स म आत्मेति विद्यात्" "प्रज्ञानं ब्रह्मे"ति चोपसंहारात् । "तदात्मानमेवावेत्तस्व-

चाऽऽत्मनोऽसङ्गित्वज्ञानिनो ममेदमिति बुद्धिर्भवति । अतो न तस्य नियुक्तत्वमित्याह--न नियोगेति । तदेवोपपादयति--इष्टेति । ममेदं कार्यमिति बोधाभावेऽपि चेन्नियुज्येत तर्हि राजसूयादिकं ब्रह्मणादिना कर्तव्यं स्यादग्निष्टोमादिकं च सर्वदा कर्तव्यं स्यान्निर्निमित्तत्वाविशेषादित्याह--ब्रह्मात्मत्वेति । न कश्चिन्न नियुक्त इति । नन्वद्वयेन सर्वोऽपि नियुक्त १५ एवेत्यर्थः । किञ्च नियोक्ताऽप्यस्य किं यः कश्चन पुरुषो वेदो वा ? आद्ये विदुष ईश्वरात्मत्वज्ञानात्सर्वनियोक्तृत्वेन स्वनियोज्येनान्येनास्य नियोज्यत्वं स्यात्तच्च विरोधान्न सम्भवतीत्याह--न च स इति । तस्यैव सर्वनियोक्तृत्वादित्यर्थः ।

नन्वन्यस्य नियोज्यत्वाभावेऽप्याम्नायेन विद्वान्नियोज्यः स्यादिति द्वितीयमाशङ्क्य तस्याऽऽम्नायस्येश्वरतामापन्नस्य स्वविज्ञानपूर्वकत्वात्स्ववचनेन स्वस्य नियोज्यत्वमेकत्र कर्मकर्तृत्वविरोधान्न सम्भवतीत्याह--आम्नायस्यापीति । किञ्च व्याकरणादेस्तत्कर्तृपाणिन्यादिज्ञैकदेशार्थविषयत्वदर्शनेन वेदस्यापीश्वरजन्यस्येश्वरज्ञैकदेशविषयत्वेन २० अल्पज्ञत्वादप्यधिकज्ञेश्वरनियोक्तृत्वमयुक्तमित्याह--नापि बहुविदिति । अविवेकिनेत्यल्पज्ञेनेत्यर्थः । अचेतनत्वाद्वा तस्याविवेकित्वम् । भृत्येन न नियुज्यत इत्यनुषङ्गः । ननु वेदस्येश्वरज्ञानपूर्वकत्वपक्षे पूर्वोक्तदोषानुषङ्गेऽपि तस्य नित्यत्वपक्षे नायं दोष इति शङ्कते--आम्नायस्येति । तस्याचेतनस्य नियोक्तृत्वं न सम्भवति तस्य चेतनधर्मत्वादित्युत्तरमाह--नेति । नियोक्तृत्वमभ्युपेत्यापि दोषमाह--उक्तदोषादिति । तदेव विवृणोति--तथाऽपीति । अनियोज्यस्यापि चेत्कर्तव्यं विदुषस्तर्हि सर्वं शिष्टं विहितं सर्वेणापि कर्तव्यम् । सङ्कोचे हेत्वभावादित्यर्थः । २५ असङ्गिब्रह्मात्मत्वज्ञानस्य कर्मकर्तव्यतायाश्च शास्त्रेण कृतत्वादुभयोरपि शास्त्रयोः प्रामाण्याविशेषात्कदाचिदात्मज्ञानं कदाचित्कर्मानुष्ठानं च स्यादिति शङ्कते--तदपीति । तदेव विवृणोति--यथेति । स्वाभाविकाकर्त्रात्मबोधेन सकृदुत्पन्नेनैव कर्तृताबोधबाधनान्न पुनः शास्त्रेण कर्तृत्वबोधः सम्भवतीत्याह--नेति । कृताकृतेत्यत्र कृतमिदानीमकृतमितः परं कर्तव्यं यत्तदुच्यते ।

एवं तावन्नियोगाविषयाकर्त्रात्मदर्शित्वाद्विदुषः प्रयोजनार्थित्वाभावाच्च विदुषो न कर्मेत्युक्तम् । इदानीं स्वत ३० इष्टानिष्टसंयोगवियोगरूपप्रयोजनार्थिताभावेऽपि विदुषः "स्वर्गकामो यजेते"ति शास्त्रेणैव साऽप्याधीयत इत्याशङ्क्य स्वभावतः प्राप्तप्रयोजनार्थितानुवादेन तदुपायमात्रं शास्त्रेण बोध्यते न तु साऽप्याधीयते । अन्यथाऽशास्त्रज्ञानां तदर्थिता न स्यादित्याह--न चेष्टेति । अत्र चिकीर्षाशब्देन फलेच्छामात्रमुच्यते न तु कर्तुमिच्छा फले तदयोगादिति । ननु कृताकृतासम्बन्धित्वं तद्विपरीतत्वं च विरुद्धत्वान्न बोधयति चेच्छास्त्रं र्तहि कृताकृतासम्बन्धित्वमेव मा बोधीत्याशङ्क्य तस्य मानान्तरासिद्धत्वेनावश्यं शास्त्रबोध्यत्वे वक्तव्ये तद्विपरीतस्य मानान्तरसिद्धस्यैव न ३५ शास्त्रबोध्यत्वं विरुद्धत्वादित्याह--यद्धीति । चेदिति निश्चयार्थे । कृतेति । इदं कृतमिदं कर्तव्यमिति ज्ञानविरोधीत्यर्थः । कर्तव्यतां तज्ज्ञानमित्यर्थः ।

विध्यभावेन वेदान्तानां न तादृगात्मबोधकत्वमित्याशङ्क्य पुरुषस्य कर्तव्याभिमुखीकरणार्थत्वाद्विधेरिहाऽऽत्मज्ञानाभिमुखीकरणार्थं विधिस्वरूपस्यार्थवादस्य सत्त्वात्स्वरूपबोधकस्य तत्परवाक्यस्यापि सत्त्वाच्च नैवमित्युत्तरमाह--न बोधयत्येवेत्यादिना । उपसंहारादित्यनेन तत्सहचरितमात्मा वा इदमित्याद्युपक्रमादितात्पर्यलिङ्गं सूचयति । ४०

**मसी"त्येवमादिवाक्यानां तत्परत्वात्। उत्पन्नस्य च ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्नं भ्रान्तं वेति शक्यं वक्तुम्। त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत् "नाकृतेनेह कश्चन" इतिस्मृतेः। य आहुर्विदित्वा ब्रह्म व्युत्थानमेव कुर्यादिति तेषामप्येष समानो दोषः प्रयोजनाभाव इति चेत्, न। अक्रियामात्रत्वाद्व्युत्थानस्य। अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्मः। सर्वप्राणिनां तद्द(दद)र्शनात्। प्रयोजनतृष्णया च प्रेर्यमाणस्य ५ वाङ्मनःकायैः प्रवृत्तिदर्शनात्। "सोऽकामयत जाया मे स्यात्" इत्यादिना पुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति "उभे ह्येते साध्यसाधनलक्षणे एषणे एव" इति वाजसनेयिब्राह्मणेऽवधारणात्।**

**अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्तलक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तेः क्रियाभावमात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्मकं तच्च विद्यावत्पुरुषधर्म इति न प्रयोजनमन्वेष्टव्यम्। न हि तमसि प्रविष्टस्योदित आलोके यद्गर्तपङ्ककण्टकाद्यपतनं तत्किंप्रयोजनमिति प्रश्नार्हम्। व्युत्थानं तर्ह्यर्थ- १० प्राप्तत्वान्न चोदनार्हमिति गार्हस्थ्ये चेत्परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्वत आसनं न ततोऽन्यत्र गमनमिति चेत्,**

ज्ञानोत्पत्त्यनुवादिकाण्वश्रुतिबलादप्यनुत्पत्तिशङ्का न कार्येत्याह—**तदात्मानमिति**। तदिति जीवरूपेणावस्थितं ब्रह्मेत्यर्थः। छान्दोग्यबलादप्येवमेवेति वदन्गतिसामान्यन्यायं दर्शयति—**तत्त्वमसीति**। अनेन "तद्धास्य विजज्ञावि"ति वाक्यशेषोऽप्युपलक्ष्यते। अयमात्मा ब्रह्मेत्यादिरादिशब्दार्थः। कर्त्रात्मबोधककर्मकाण्डविरोधादुत्पन्नमपि ज्ञानं भ्रान्तमित्याशङ्क्य तस्य यथाप्राप्तकर्त्रात्मानुवादेनोपायमात्रपरत्वान्न वस्तुपरवेदान्तजन्यज्ञानबाधकत्वमित्याह— १५ **उत्पन्नस्येति**। **नानुत्पन्नमिति**। वाक्यश्रवणानन्तरमकर्ताऽऽत्माऽहमिति ज्ञानस्यानुभवसिद्धत्वान्नाहमकर्तेति विपरीतज्ञानादर्शनाच्च नोभयं वक्तुं शक्यमित्यर्थः।

विदुषः प्रयोजनाभावान्न कर्मणि प्रवृत्तिरित्युक्तं तर्हि तत्त्यागेऽपि प्रयोजनाभावात्तत्रापि न प्रवृत्तिः स्यादिति शङ्कते—**त्यागेऽपीति**। तस्य विदुषः कृतेन कर्मणाऽर्थो नास्ति, अकृतेन कर्माभावेनापीह लोके नार्थोऽस्तीति गीतासु स्मरणात्त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेदित्यन्वयः। शङ्कामेव विवृणोति—**य आहुरिति**। २० कर्मत्यागस्य व्यापारात्मकत्वे व्यापारस्य क्लेशात्मकत्वात्तदनुष्ठानं प्रयोजनापेक्षं स्यात्। न त्वेतदस्ति। किन्तु क्रियाभावमात्रमौदासीन्यरूपम्। तस्य च स्वास्थ्यस्वरूपत्वात्स्वत एव प्रयोजनत्वान्न प्रयोजनान्तरापेक्षत्वमिति परिहरति—**नेति**। त्यागस्यान्यत्र क्लृप्तव्यापारहेतुजन्यत्वाभावान्न व्यापारत्वमिति वक्तुमन्यत्र क्लृप्तव्यापारहेतुमाह—**अविद्येत्यादिना**। यद्वा विदुषः कथं यत्नं विना व्युत्थानमौदासीन्यमात्रेण सिध्यतीत्याशङ्क्य क्रियाहेत्वभावात्क्रियाभाव इति वक्तुं तद्धेतुमाह—**अविद्येत्यादिना**। **प्रयोजनस्य भाव इति**। प्रयोजनस्य तृष्णेत्यर्थः। तस्या २५ वस्तुधर्मत्वे विदुषोऽपि तृष्णा स्यादिति तन्निषेधति—**न वस्तुधर्म इति**। न वस्तुस्वभाव इत्यर्थः। वस्तुधर्मत्वे हि विदुषामविदुषां च सुप्तमूर्च्छितादीनां सा स्यान्न त्वेतदस्ति। हेतुमाह—**सर्वेति**। तद्दर्शनादिति पाठे वस्तुस्वभावाज्ञानिनां गोपालादीनामपि तृष्णादर्शनान्न वस्तुधर्म इति कथञ्चिद्योज्यम्। तृष्णाया अविद्याजन्यत्वमुक्त्वा तस्या व्यापारहेतुत्वमाह—**प्रयोजनेति**। दर्शनादिति पञ्चम्यविद्याकामदोषनिमित्ताया इत्युत्तरत्र हेतुत्वेन सम्बध्यते। न केवलं दर्शनमेव किन्तु श्रुतिरप्यस्तीत्याह—**सोऽकामयतेति**। सोऽकामयतेत्यादिना "उभे ह्येते एषणे एवे"ति वाक्येन ३० च पुत्रवित्तादि काम्यमेवेति वाजसनेयिब्राह्मणेऽवधारणादित्यन्वयः। **पाङ्क्तलक्षणमिति**। जायापुत्रदैवमानुषवित्तद्वयकर्मभिः पञ्चभिर्योगात्पाङ्क्तलक्षणं कर्मेत्यर्थः। उभे इत्यस्यार्थमाह—**साध्यसाधनेति**।

एवं क्रियाहेतुं प्रदर्श्य तदभावादेव विदुषः क्रियाभावोऽयत्नसिद्ध इत्याह—**कामेति**। **पाङ्क्तलक्षणाया इति**। जायापुत्रदैववित्तमानुषवित्तकर्मभिः पञ्चभिर्लक्ष्यते साध्यत इति वैदिकी प्रवृत्तिः पाङ्लक्षणेत्युच्यते। पञ्चसंख्यायोगेन गौण्या वृत्त्या पङ्क्तिच्छन्दःसम्बन्धोपचारात्। "पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ" इति श्रुतेरित्यर्थः। ३५ पाङ्क्तलक्षणाया इत्यनन्तरमनुपपत्तेरित्यनुषङ्गः। व्युत्थानमित्यनन्तरमयत्नसिद्धमिति शेषः। एवं च क्रियाभावस्यौदासीन्यात्मकस्य पुरुषस्वभावत्वेनायत्नसिद्धत्वे सति न प्रयोजनापेक्षेत्याह—**तच्चेति**। **पुरुषधर्म इति**। पुरुषस्वभाव इत्यर्थः। अज्ञानकार्यस्याज्ञाननिवृत्तावयत्नत एव निवृत्तिरित्यत्र दृष्टान्तमाह—**न हीति**। व्युत्थानस्य पुंव्यापाराधीनत्वाभावे विधेरनवकाशाद्विदुषो नियमेन व्युत्थानं न सिध्यतीति शङ्कते—**व्युत्थानं तर्हीति**। **ततोऽन्यत्र गमनमिति**। पारिव्राज्यस्वीकार इत्यर्थः। किं गार्हस्थ्यशब्देन गृहस्थोऽहमित्यभिमानपुरःसरं पुत्रवित्ताद्यभिमान

न। कामप्रयुक्तत्वाद्गार्हस्थ्यस्य। "एतावान्वै काम" इति। "उभे ह्येते एषणे एवे"त्यवधारणात्। कामनिमित्तपुत्रवित्तादिसम्बन्धनियमाभावमात्रं न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते। ततो न गार्हस्थ्य एवाकुर्वत आसनमुत्पन्नविद्यस्य। एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा।

अत्र केचिद्गृहस्था भिक्षाटनादिभयात्परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः। भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वासनमिति। न। स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत्। स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षुकत्वमेव। शरीरधारणार्थायां भिक्षाटनादिषु प्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादिश्रुतिनियुक्तत्वात्प्रत्यवायपरिहारायेति। एतन्नियोगाविषयत्वेन विदुषः प्रत्युक्तमशक्यनियोगत्वाच्चेति। यावज्जीवादिनित्यचोदनानर्थक्यमिति चेत्, न। अविद्वद्विषयत्वेनार्थवत्त्वात्। १० यत्तु भिक्षोः शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत्प्रवृत्तेर्न [1]प्रयोजकम्। आचमनप्रवृत्तस्य पिपासापगमवन्नान्य-

उच्यत उत गृहस्थलिङ्गधारणम्? नाऽऽद्यः। विद्ययाऽविद्याकार्याभिमाननिवृत्तेरित्याह--न कामेति। न द्वितीयः। लिङ्गेऽप्यभिमानराहित्यस्य तुल्यत्वात्। न चैवं पारिव्राज्यलिङ्गेऽप्यभिमानाभावात्तस्याप्यसिद्धिरिति वाच्यम्। सर्वतोऽप्यभिमानराहित्येन सर्वसम्बन्धराहित्यं हि परमहंसपरिव्राजो लक्षणं न लिङ्गधारणम्। "न लिङ्गं धर्मकारणम्" इति स्मृतेः। ततश्च लिङ्गेऽप्यभिमानशून्यस्य पारिव्राज्यं सिद्धमित्याह--कामनिमित्तेति। गार्हस्थ्य १५ इति। अभिमानात्मक इत्यर्थः। तर्हि गुरुशुश्रूषादावप्यभिमानो न स्यादित्याशङ्क्येष्टापत्तिरित्याह--एतेनेति।

ननु यथा पुत्रादिसम्बन्धनियमरहितस्यापि त्वन्मते देहधारणार्थिनो भिक्षोः परिग्रहव्यावर्तनार्थो भिक्षाटनादिरेवेति नियमोऽङ्गीक्रियते तथा गृहस्थस्याप्यभिमानशून्यस्यैव सतो देहधारणार्थं गृह एवास्त्वासनं न भिक्षुकत्वमविशेषादिति शङ्कते--अत्र केचिद्गृहस्था इति। तेषां न न्यायो मूलं किन्तु दृष्टभयादिकमेव मूलमित्युपहसन्नाह--भिक्षाटनादिति। परिभवः पामरैः क्रियमाणस्तिरस्कारः। सूक्ष्मेति। काक्वा व्यतिरेकेण स्थूलदृष्टय इत्यर्थः। २० भिक्षाटनादीत्यादिशब्देन प्राक्प्रणीतमयाचितमित्यादयो गृह्यन्ते। देहधारणमात्रार्थिनो भिक्षोरिति पूर्वेणान्वयः। सिद्धान्ती तस्यैवंभूतस्य स्त्रीपरिग्रहोऽस्ति वा न वा? इति विकल्प्याऽऽद्ये दूषणमाह--न स्वेति। स्वगृहविशेषशब्देन स्त्रीविशेषो गृह्यते। द्वितीये स्त्रीपरिग्रहवत एव द्रव्यपरिग्रहाधिकारात्तदभावेऽर्थाद्द्रव्यपरिग्रहनिवृत्तेस्तदभावे प्रकारान्तरेण जीवनसिद्धेरर्थाद्भिक्षाटनादिनियम एव सिध्यतीत्याह--स्वगृहेति। न च पुत्रादिपरिगृहीतेन जीवनमस्त्विति शङ्क्यम्। तैरपि स्वस्य स्वत्वेन सम्बन्धाभावे तदीयस्यापि परकीयद्रव्यतुल्यत्वेन तत्रापि भिक्षुत्व- २५ नियमादिति। अन्ये तु भिक्षोरपि भिक्षाटनादौ सप्तागारानसंक्लृप्तानित्यादिनियमः शौचादौ च चातुर्गुण्यादिनियमश्च प्रत्यवायपरिहारार्थं यथेष्यते तथा यावज्जीवादिश्रुतिबलात्प्रत्यवायपरिहारार्थं नित्यकर्मणि नियमेन प्रवृत्तिरित्याहुस्तदनुवदति--शरीरधारणार्थायामिति। अकुर्वत एव गृहेऽवस्थानं पूर्वमते शङ्कितम्। अस्मिन्मते त्वग्निहोत्राद्यनुष्ठानमपि कर्तव्यमिति शङ्कते। तथा पूर्वं परिग्रहव्यावृत्त्यर्थो भिक्षाटनादिविषयो दृष्टशरीरधारणप्रयोजनो नियमो दृष्टान्तत्वेनोक्तः। इह तु स भिक्षाटनादिगतसप्तागारत्वादिविषयोऽदृष्टार्थो दृष्टान्तत्वेनोक्त इति भेदः। दूषयति-- ३० एतदिति। तस्य सर्वनियोक्त्रीश्वरात्मत्वाच्च न नियोज्यत्वमित्याद्युक्तमित्याह--अशक्येति।

तर्हि तच्छ्रुतेरप्रामाण्ये भिक्षाटनादिनियमविधेरपि तत्स्यादित्यभिप्रायेण शङ्कते--यावज्जीवेति। अविदुषि नियोज्ये तत्प्रामाण्यं घटत इति नोक्तदोष इत्याह--नेति। तदुक्तप्रतिबन्दीं परिहर्तुमनुवदति--यस्त्विति। दूषयति--तत्प्रवृत्तेरिति। आचमनविधिनाऽऽचमने प्रवृत्तस्याऽऽर्थिको यः पिपासापगमस्तस्य यथा नान्यप्रयोजनार्थत्वं प्रयोजनं प्रयुक्तिस्तदर्थत्वं नाऽऽचमनप्रवृत्तिप्रयोजकत्वम्। तद्वज्जीवनार्थं भिक्षादौ प्रवृत्तस्य यस्तत्र नियमः स न भिक्षादिप्रवृत्तेः ३५ प्रयोजक इत्यर्थः। एतदुक्तं भवति। नियोज्यत्वाभावात्किल ब्रह्मविदो नियमविध्यनुपपत्तिराशङ्क्यते। तन्न युज्यते। कथम्। नियोज्यो हि नियोगसिद्ध्यर्थमपेक्ष्यते नियोगश्च प्रवृत्तिसिद्ध्यर्थम्। प्रवृत्तिश्चेदन्यतः सिद्धा किं नियोगेन।

---

१. न प्रयोजकमिति--यथा प्रायत्यार्थमाचमनं तत्प्रयुक्तं तेनाचमनेन पिपासापगमोऽर्थात् भवति न तु पिपासापगमः आचमनप्रयोजकः तद्वद् क्षुधानिवृत्तये भिक्षाटनं क्रियते। तत्र नियमो यः श्रुतः स आषनुङ्गिकः।

प्रयोजनार्थत्वमवगम्यते । न चाग्निहोत्रादीनां तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोपपत्तिः । अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेत्, न । तन्नियमस्य पूर्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थप्राप्तस्य व्युत्थानस्य पुनर्वचनाद्विदुषः कर्तव्यत्वोपपत्तिः ।

अविदुषाऽपि मुमुक्षुणा पारिव्राज्यं कर्तव्यमेव । तथा च "शान्तो दान्तः" इत्यादिवचनं प्रमाणम् । ५ शमदमादीनां चाऽऽत्मदर्शनसाधनानामन्याश्रमे त्वनुपपत्तेः । "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्" इति च श्वेताश्वतरे विज्ञायते । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति च कैवल्यश्रुतिः । "ज्ञात्वा नैष्कर्म्यमाचरेत्" इति च स्मृतेः । "ब्रह्माश्रमपदे वसेत्" इति च । ब्रह्मचर्यादिविद्यासाधनानां च साकल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्येऽसम्भवात् । न चासम्पन्नं साधनं कस्यचिदर्थस्य साधनायालम् । यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्माणि तेषां परं फलमुपसंहृतं देवताप्ययलक्षणं संसारविषयमेव ।

१० अत एव दर्शपूर्णमासनियोगादेवावहनने नियमेन प्रवृत्तिसिद्धौ तत्र न पृथङ्नियोगोऽङ्गीक्रियते । तदभावे च न नियोज्यापेक्षेति ब्रह्मविदो नियोज्यत्वाभावेऽपि न नियमविध्यनुपपत्तिरिति । अग्निहोत्रादिप्रवृत्तेस्त्वन्यतोऽसिद्धत्वेन तद्विधित एव तत्र प्रवृत्तेर्वक्तव्यत्वेन तत्सिद्धयर्थं तत्र नियोगे वाच्ये तस्य तत्र नियोज्यापेक्षेति वैषम्यमाह--न चाग्निहोत्रेति। नियमविधौ नियोज्यानपेक्षायामपि तस्य क्लेशात्मकत्वात्प्रयोजनापेक्षा वाच्या । तदभावान्न नियमः सिध्यतीति शङ्कते--अर्थप्राप्तेति । तन्नियमस्यापि पूर्ववासनावशादेव प्राप्तत्वात्तत्रापि न नियमविधेरवकाशो येन १५ प्रयोजनापेक्षा स्यादिति परिहरति--न तदिति । यद्यपि नियतेन वाऽनियतेन भिक्षाटनादिना जीवनं सिध्यति तथापि विद्योत्पत्तेः पूर्वं विद्यासिद्धयर्थं नियमस्यानुष्ठितत्वात्तद्वासनाप्राबल्याद्विद्योत्पत्त्यनन्तरमपि नियम एव प्रवर्तते नानियमे। तद्वासनानां नियमवासनाभिरत्यन्तमभिभूतत्वेन पुनस्तदुद्बोधनस्य यत्नसाध्यत्वात्ततस्तत्र न प्रवर्तत इति नियमोऽप्यर्थसिद्ध इत्यर्थः । एतेन प्रत्यवायपरिहारार्थत्वमपि नियमानुष्ठानस्य निरस्तं तस्य विदुषः प्रत्यवायाप्रसक्तेरिति । एवमुक्तरीत्या व्युत्थानस्य विधिं विना स्वतः प्राप्तत्वेऽपि सति तत्कर्तव्यताविधिमपि "विदित्वा व्युत्थाये"त्यादिकमनु- २० मोदते विद्वानित्याह--अर्थप्राप्तस्येति । विधितः कर्तव्यत्वोपपत्तिरित्यर्थः । न च विधेः प्रयोजनाभावोऽप्रवर्तकत्वादिति वाच्यम्। प्रैषोच्चारणाभयदानादिवैधमुख्यधर्मप्राप्त्यर्थत्वेन विधेरर्थवत्त्वात् । न च तस्यापि वैयर्थ्यं शङ्क्यम् । विदुषि परमहंसे लोकसंग्रहार्थत्वात् । तस्य तु संग्रहस्य पूर्वाभ्यस्तमैत्रीकरुणादिवासनाप्राप्तत्वेन ब्रह्मविद्योपदेशादाविव प्रयोजनानपेक्षणात् । यद्वा प्रारब्धकर्माक्षिप्तदेहेन्द्रियादिप्रतिभासेनाविचारितयावज्जीवादिश्रुतिजनितकर्मकर्तव्यताभ्रान्तौ तन्निवर्तनेन वा विदुषो व्युत्थानविधेरर्थवत्त्वोपपत्तिरिति भावः ।

२५ एवं विदुषो व्युत्थानसाधनेन विद्याया अकर्मिनिष्ठत्वं साधितम् । तेनैव च तस्याः कर्मासम्बन्धोऽप्यर्थात् साधितः । इदानीं विविदिषोरपि व्युत्थानं प्रसाधयन्विद्यायाः कर्मिनिष्ठत्वं कर्मसम्बन्धित्वं च दूरापास्तमित्याह--अविदुषाऽपीति । तत्र श्रुतिमाह--तथा चेति । "उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदि"ति श्रुतिशेषः । तत्रोपरतशब्देन संन्यासो विहित इति भावः । शमादिशाधनानां पौष्कल्येनानुष्ठानस्य गृहस्थादिष्वसम्भवात्तद्विधिनाऽप्यर्थादाक्षिप्यते संन्यास इति श्रुतार्थापत्तिमप्याह--शमदमादीनां चेति । चशब्द उपरम- ३० समुच्चयार्थः । नेदं विद्वद्विषयम् । तस्य साधनविधिवैयर्थ्यात् । किन्तु विविदिषुविषयमिति वक्तुमात्मदर्शनसाधनानामित्युक्तम् । अत्याश्रमिभ्य इति । ब्रह्मचर्यादीन्हंसान्तानाश्रमधर्मवत आश्रमानतिक्रम्य वर्तते परमहंस इति सोऽत्याश्रमिशब्देनोच्यत इति तद्विधिरत्र प्रतीयत इत्यर्थः । ऋषिसङ्घजुष्टं मन्त्रसमूहैर्ज्ञानिसमूहैर्वा सेवितं तत्त्वं प्रोवाचेत्यर्थः । न कर्मणेति । त्यागस्य साक्षादमृतत्वसाधनत्वाभावेनामृतत्वसाधनं ज्ञानं त्यागेनाऽऽनशुः प्राप्तवन्तः इत्यभिधानेन ज्ञानसाधनत्वेन त्यागोऽत्र विहित इत्यर्थः । ज्ञात्वेति । आपाततो ब्रह्म ज्ञात्वा निश्चयार्थं नैष्कर्म्यं ३५ कर्मत्यागरूपं संन्यासमाचरेदिति स्मृत्यर्थः । ब्रह्मेति । ब्रह्मज्ञानसाधनीभूत आश्रमो ब्रह्माश्रमः । संन्यास इत्यर्थः । किञ्च "एकाकी यतचित्तात्मा" इत्याद्युपक्रम्य "ब्रह्मचारिव्रते स्थितः । मनः संयम्य मच्चितो युक्त आसीत मत्परः" इत्यन्तेन ब्रह्मचर्यादिसाधनविधिबलादप्यर्थात्संन्यासविधिरित्याह--ब्रह्मचर्यादीति ।

ननु गृहस्थस्याप्यृतुकालमात्रगमनलक्षणं ब्रह्मचर्यं कदाचिद्ध्यानकाल एकाकित्वादिकं च सम्भवतीत्याशङ्क्य तस्यापुष्कलसाधनत्वात्ततो ज्ञानासिद्धेर्ध्यानकाले पत्नीसम्बन्धाप्रसक्तेस्तद्विधिवैयर्थ्याच्च नैवमित्याह--

यदि कर्मिण एव परमात्मविज्ञानमभविष्यत्संसारविषयस्यैव फलस्योपसंहारो नोपापत्स्यत। अङ्गफलं तदिति चेन्न। तद्विरोध्यात्मवस्तुविषयत्वादात्मविद्यायाः। निराकृतसर्वनामरूपकर्मपरमार्थात्मवस्तुविषयं ज्ञानममृतत्वसाधनम्। [1]गुणफलसम्बन्धे हि निराकृतसर्वविशेषात्मवस्तुविषयत्वं विज्ञानस्य न प्राप्नोति तच्चानिष्टम्। "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यधिकृत्य क्रियाकारकफलादिसर्वव्यवहारनिराकरणाद्विदुषः। तद्विपरीतस्याविदुषो "यत्र हि द्वैतमिवे"त्युक्त्वा क्रियाकारकफलरूपस्यैव संसारस्य दर्शितत्वाच्च वाजसनेयिब्राह्मणे। तथेहापि देवताप्ययं ५ संसारविषयं यत्फलमशनायादिमद्वस्त्वात्मकं तत्फलमुपसंहृत्य केवलसर्वात्मकवस्तुविषयं ज्ञानममृतत्वाय वक्ष्यामीति प्रवर्तते। ऋणप्रतिबन्धश्चाविदुष एव मनुष्यपितृदेवलोकप्राप्तिं प्रति, न विदुषः। "सोऽयं मनुष्यलोकः पुत्रेणैव" इत्यादिलोकत्रयसाधननियमश्रुतेः। विदुषश्चर्णप्रतिबन्धाभावो दर्शित आत्मलोकार्थिनः "किं प्रजया करिष्यामः" इत्यादिना। तथा "एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः" इत्यादि। "एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः" इति च कौषीतकिनाम्। १०

अविदुषस्तर्ह्यृणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेत्। न। प्राग्गार्हस्थ्यप्रतिपत्तेरृणित्वासम्भवादधि-

न चेति। अतो न कर्मिनिष्ठत्वं कर्मसम्बन्धित्वं चाऽऽत्मज्ञानस्येत्यर्थः। यत्तु कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्याऽऽत्मज्ञानं प्रारभ्यत इत्यादिना कर्मसम्बन्धित्वमुक्तं तत्राऽऽह—यद्विज्ञानेति। तथा च पूर्वोक्तं कर्मसम्बन्धिज्ञानं संसारफलकमन्यदेव। तच्चोपसंहृतमिति न तत्परमात्मज्ञानमित्यर्थः।

ननु पूर्वोक्तमेव परमात्मज्ञानं तच्च कर्मसम्बन्ध्येवेत्याशङ्क्य तस्य संसारफलकत्वेनोपसंहारात्परमात्मज्ञानस्य च मुक्तिफलकत्वान्न तत्परमात्मज्ञानमित्याह—यदि कर्मिण एवेति। कर्मिनिष्ठत्वेनोक्तज्ञानमेव परमात्मज्ञानं चेदित्यर्थः। परमात्मज्ञानाङ्गभूतपृथिव्यग्न्यादिदेवताज्ञानस्य तत्संसारफलं नाङ्गिनः परमात्मज्ञानस्येति न तस्य मुक्तिफलत्वविरोध इति शङ्कते—अङ्गेति। परमात्मज्ञानस्याङ्गसम्बन्धफलसम्बन्धादिसर्वविशेषरहितनिर्विशेषवस्तुविषयत्वान्न तस्याङ्गादिसम्बन्धित्वं येन तदङ्गविषयत्वमुक्तफलस्य स्यादिति परिहरति—न तदिति। तदेव स्पष्टयति—निराकृतेत्यादिना। तच्चानिष्टमिति। "आत्मा वा" इत्यादिभिरुपक्रमादिलिङ्गैरात्मनो निर्विशेषत्वसिद्धेरित्यर्थः। २० वाजसनेयिब्राह्मणे च परमात्मविदः सर्वसम्बन्धशून्यत्वमुक्त्वाऽविदुषः संसारफलोक्तेश्चेह संसारफलकस्यातीतस्य ज्ञानस्य न परमात्मज्ञानत्वं वक्ष्यमाणस्य निर्विशेषवस्तुविषयस्यैव परमात्मज्ञानत्वं मुक्तिफलत्वं चेत्याह—यत्रेत्यादिना। तथेहापीति वाक्ये फलपदद्वयपाठ एकं पदं निष्पाद्यत्वार्थकं निष्पाद्यत्वादपि संसारविषयं संसारान्तर्गतमिति वक्तुम्।

एवं कर्मासम्बन्धित्वं ज्ञानस्योक्त्वा यावज्जीवादिश्रुतेः कर्मत्यागो न सम्भवतीति यत्पूर्ववादिनोक्तं तत्र २५ यावज्जीवादिश्रुतेरविद्वद्विषयत्वमुक्तम्। ऋणश्रुतेरिदानीं गतिमाह—ऋणेति। ऋणस्यानपाकृतस्य मनुष्यादिलोकप्राप्तिं प्रति प्रतिबन्धकत्वात्तदर्थिनोऽविदुष एवर्णापाकरणं कर्तव्यं न मुमुक्षोः। मुक्तिं प्रति तस्याप्रतिबन्धकत्वादित्यर्थः। नन्वृणस्य मुक्तिं प्रत्यपि प्रतिबन्धकत्वमस्तु विशेषाभावात्। "अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" इति स्मृतेश्चेत्याशङ्क्याऽऽह—सोऽयमिति। "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" इति श्रुतेः पुत्रादीनां मनुष्यलोकादिहेतुत्वावगमात्पुत्रादिभिरपाकर्तव्यानां पुत्राद्यभावरूपाणामृणानां ३० पुत्रादिसाध्यलोकप्राप्तिं प्रति प्रतिबन्धकत्वमेव युक्तम्। ऋणानपाकरणे पुत्रादिसाधनाभावेन साध्यलोकाभावात्। न मुक्तिं प्रति, तस्यास्तदभावरूपपुत्रादिसाध्यत्वाभावात्। स्मृतेश्च रागिणं प्रति संन्यासनिन्दार्थवादमात्रत्वादित्यर्थः। न केवलमुक्तन्यायतो मुक्तिं प्रत्यप्रतिबन्धकत्वं किन्तु श्रुतितोऽपीत्याह—विदुषश्चेति। श्रुतित्रयेण क्रमेण प्रजाध्ययनकर्मणामननुष्ठितानामप्रतिबन्धकत्वं दर्शितम्। कावषेया इत्यनन्तरं किमर्था वयमध्येष्यामह इति शेषो द्रष्टव्यः।

शङ्कते—अविदुषस्तर्हीति। यद्यप्यविदुषोऽपि लोकत्रयं प्रत्येव प्रतिबन्धकत्वान्मुक्तिं प्रति प्रतिबन्धकत्वा- ३५ भावादृणस्यानपाकरणीयत्वान्मुमुक्षोः पारिव्राज्यसम्भवादाशङ्का न सम्भवति तथाऽपि विद्वांस आहुरित्युक्तिश्रवण-

---

१ गुणफलसम्बन्धः—यथाऽग्निहोत्रप्रकरणे "दध्नेन्द्रियकामस्य जुहुयादि"ति। अत्राग्निहोत्रसाधनं पयआदिकं; दध्ना चेत् तत् क्रियते तदा तत्फलमिन्द्रियं लभ्यते तद्वत्।

कारानारूढोऽप्यृणी चेत्स्यात्सर्वस्यर्णित्वमित्यनिष्टं प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि "गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इत्यात्मदर्शनोपायसाधनत्वेनेष्यत एव पारिव्राज्यम्। यावज्जीवादिश्रुतीनामविद्वदमुमुक्षुविषये कृतार्थता। छान्दोग्ये च केषाञ्चिद्द्वादशरात्रमग्निहोत्रं हुत्वा तत ऊर्ध्वं परित्यागः श्रूयते। यत्त्वनधिकृतानां पारिव्राज्यमिति। तन्न। तेषां पृथगेव "उत्सन्नाग्निरनग्निको वे"त्यादिश्रवणात्सर्वस्मृतिषु
५ चाविशेषेणाऽऽश्रमविकल्पः प्रसिद्धः समुच्चयश्च।

यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यशास्त्रार्थत्वे गृहे वने वा तिष्ठतो न विशेष इति तदसत्। व्युत्थानस्यैवार्थप्राप्तत्वान्नान्यत्रावस्थानं स्यात्। अन्यत्रावस्थानस्य कामकर्मप्रयुक्तत्वं ह्यवोचाम। तदभावमात्रं व्युत्थानमिति च।

मात्रेणेयं शङ्का। यद्वा परिहारान्तरं वक्तुमियं शङ्का द्रष्टव्या। गृहस्थस्यैवर्णप्रतिबन्धकत्वं तस्यैव तन्निराकरणाधिकारात्। ततश्च गार्हस्थ्यप्रतिपत्तेः प्राग्ब्रह्मचर्य एव मुमुक्षोः पारिव्राज्यं सम्भवतीति परिहरति —नेति। यद्यप्युप-
१० नयनानन्तरमेवर्ष्यृणनिवर्तनेऽधिकारः सम्भवतीति प्राग्गार्हस्थ्येत्ययुक्तं तथाऽपि विविदिषासंन्यासेऽधीतवेदस्यैवाधिकार इत्यधीतवेदस्यैव गार्हस्थ्यप्रतिपत्तेः प्रागिति द्रष्टव्यम्। ननु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति जायमानमात्रस्यर्णवत्त्वं प्रतीयत इत्याशङ्क्यर्णित्वोक्तेः प्रयोजनं न साक्षात्किञ्चिदस्ति किन्तु ब्रह्मचर्यादिकर्तव्यताज्ञापनम्। न चाधिकारानारूढस्तत्कर्तुं शक्नोति जायमानमात्रस्यासामर्थ्यात्। किञ्च ब्राह्मणग्रहणात्क्षत्त्रियादेर्ऋणाभावप्रसङ्गः। द्विजात्युपलक्षणत्वेऽधिकार्युपलक्षणत्वमेव
१५ न्याय्यम्। अतो जायमानपदमधिकारं लक्षयतीति जायमानोऽधिकारी सम्पद्यमान इति तदर्थः। ततश्च ततः प्राङ्नर्णसम्बन्ध इत्याह अधिकारेति। अनिष्टमिति। ब्रह्मचारिणोऽप्यृणित्वे ब्रह्मचर्य एव मृतस्य नैष्ठिकस्य च लोकप्रतिबन्धः स्यात्तच्चानिष्टम्। "अष्टाशीतिसहस्राणो"त्यारभ्य "तदेव गुरुवासिनामि"त्यादिपुराणे लोकप्राप्त्युक्तेरित्यर्थः। न केवलं गार्हस्थ्यात्प्रागेव संन्याससिद्धिः किन्तु विधिबलाद्गृहस्थस्यापि तदस्तीत्याह—प्रतिपन्नेति। आत्मदर्शनेति। आत्मदर्शने य उपायाः श्रवणादयस्तत्साधनत्वेनेत्यर्थः। न चर्णश्रुत्या प्रव्रज्याविधेर्विरोधः। तस्या
२० अवदानार्थवादमात्रत्वेन स्वार्थे तात्पर्याभावात्। अन्यथा "तदवदानैरेवावदयते तदवदानानामवदानत्वमि"त्यवदानमात्रनिरस्यत्वोक्त्या ब्रह्मचर्यादीनामप्यननुष्ठेयत्वप्रसङ्गादिति भावः। एवमपि यावज्जीवादिश्रुतिविरोधः संन्यासश्रुतेरित्याशङ्क्याऽऽह—यावज्जीवेति। विरक्तमुमुक्षुमात्रविषयिण्या संन्यासश्रुत्या यावज्जीवादिसामान्यश्रुतेरमुमुक्षुविषये सङ्कोच इत्यर्थः। अग्निहोत्रविषयकयावज्जीवादिश्रुतेर्नानयैव सङ्कोचः किन्तु श्रुत्यन्तरेणैव द्वादशरात्रानन्तरमग्निहोत्रत्यागविधायिना सा पूर्वमेव सङ्कोचितेति न तां विरोद्धुं शक्नोतीत्याह—छान्दोग्य इति। केषाञ्चिच्छाखिनां
२५ "त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयादथाप्रवसन् तत्रैव सोमेन पशुना वेष्ट्वाऽग्नीनुत्सृजति" इति श्रूयत इत्यर्थः।

ननु पारिव्राज्यश्रुतिरप्यनधिकृतविषये सङ्कोचितेत्याह—यत्त्विति। वचनान्तरेणैव तेषां तद्विधेर्नास्या अनधिकारी विषयः किन्त्वधिकार्येवेति परिहरति—तन्नेति। उत्सन्नाग्निर्नष्टाग्निः निरग्निरपरिगृहीताग्निरिति भेदः। स्मृत्युपबृंहितत्वादपि पारिव्राज्यश्रुतिर्बलीयसीत्याह—सर्वस्मृतिषु चेति। अत एव "ब्रह्मचर्यवान्प्रव्रजति" "बुद्ध्वा
३० कर्माणि यमिच्छेत्तमावसेत्" 'ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः। य इच्छेत्परमं स्थानमुत्तमां वृत्तिमाश्रयेत्॥" इत्यादिषु स्मृतिषु विकल्पः प्रसिद्धः। "अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्"॥ इत्यादिषु समुच्चयश्च सिद्ध इत्यर्थः।

एवं विविदिषासंन्यासं प्रसाध्य पूर्वप्रसाधितविद्वत्संन्यासे शङ्कामनुवदति—यत्त्विति। पूर्वत्र गृह एवास्त्वासनमिति शङ्का निरस्ता। इह तु गृहे वा वने वाऽस्त्वासनमित्यनियमशङ्कां निराकर्तुं सा पुनरनूद्यते।
३५ यथेष्टचेष्टामधिकां परिहर्तुं चेति द्रष्टव्यम्। यद्यप्यर्थप्राप्तस्यापि पुनर्वचनादित्यत्र विद्वद्व्युत्थानस्यापि शास्त्रार्थत्वमुक्तमेव तथाऽप्यशास्त्रार्थत्वमुक्तमङ्गीकृत्याप्याह—तदसदिति। यदि व्युत्थानवद्गार्हस्थ्यमप्यर्थप्राप्तं स्यात्स्यादेवमनियमो न त्वेतदस्तीत्याह—व्युत्थानस्यैवेति। अन्यत्रेति। गार्हस्थ्य इत्यर्थः। नन्वन्यत्रावस्थानवद्व्युत्थानस्यापि कामादिप्रयुक्तत्वमनुष्ठेयत्वादित्याशङ्क्याऽऽह—तदभावेति। कामाद्यभावमात्रमेव व्युत्थानमित्युक्तत्वात्तस्य नानुष्ठेयत्वमित्यर्थः।

यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तमत्यन्तमूढविषयत्वेनावगमात्। तथा शास्त्रचोदितमपि कर्माऽऽत्मविदोऽप्राप्तं गुरुभारतयाऽवगम्यते किमुतात्यन्ताविवेकनिमित्तं यथाकामित्वम्। न ह्युन्मादतिमिरदृष्टयुपलब्धं वस्तु तदपगमेऽपि तथैव स्यादुन्मादतिमिरदृष्टिनिमित्तत्वादेव तस्य। तस्मादात्मविदो व्युत्थानव्यतिरेकेण न यथाकामित्वं न चान्यत्कर्तव्यमित्येतत्सिद्धम्।

यत्तु—[1]"विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह" इति न विद्यावतो विद्यया सहाविद्याऽपि वर्तत इत्ययमर्थः। कस्तर्ह्येकस्मिन्पुरुष एकदैव न सह सम्बध्येयातामित्यर्थः। यथा शुक्तिकायां रजतशुक्तिकाज्ञाने एकस्य पुरुषस्य। "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाते"ति हि काठके। तस्मान्न विद्यायां सत्यामविद्यासम्भवोऽस्ति। "तपसा ब्रह्म विजिज्ञासस्व" इत्यादिश्रुतेः तपआदिविद्योत्पत्तिसाधनं गुरूपासनादि च कर्माविद्यात्मकत्वादविद्योच्यते। तेन विद्यामुत्पाद्य मृत्युं काममतितरति। ततो निष्कामस्त्यक्तैषणो ब्रह्मविद्ययाऽमृतत्वमश्नुते इत्येतमर्थं दर्शयन्नाह—"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति। यत्तु पुरुषायुः सर्वं कर्मणैव व्याप्तं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः" इत्यविद्वद्विषयत्वेन परिहृतमितरथाऽसम्भवात्। यत्तु वक्ष्यमाणमपि पूर्वोक्ततुल्यत्वात्कर्मणाऽविरुद्धमात्मज्ञानमिति तत्सविशेषनिर्विशेषात्मतया प्रत्युक्तमुत्तरत्र व्याख्याने च दर्शयिष्यामः। अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते।

एवमनियमशङ्कां निरस्य व्युत्थानस्याशास्त्रार्थत्वे यथेष्टचेष्टामाशङ्क्य निराकरोति—यथाकामित्वमिति। चेष्टामात्रमेव कामादिप्रयुक्तम्। निषिद्धचेष्टा तु शास्त्रार्थज्ञानशून्यात्यन्तमूढविषया। तदुभयं च विदुषो नास्तीति चेष्टामात्रमेवाप्रसक्तं निषिद्धचेष्टा तु दूरापास्तेत्यर्थः। एतदेव विवृणोति—तथेति। तथा हीत्यर्थे तथाशब्दः। गुरुभारतयाऽतिक्लेशतया यतोऽवगम्यतेऽतोऽप्राप्तमित्यन्वयः। अविवेकादिनिमित्तापगमे नैमित्तिकापगम इत्यत्र दृष्टान्तमाह—न हीति। उन्मादहृष्ट्युपलब्धं गन्धर्वनगरादि तिमिरदृष्ट्युपलब्धं द्विचन्द्रादीति विवेकः। न चान्यदिति। वैदिकं कर्मेत्यर्थः। ननु विद्ययाऽविद्यायाः सहभावश्रवणाद्विदुषोऽपि तन्मूलकामादिकं स्यादेवेति तन्निमित्ता यथेष्टचेष्टा स्यादित्यत आह—यत्त्विति। यत्तु विद्यां चेति वचनं तस्य नायमर्थं इति तस्येतिशब्दाध्याहारेण वाक्यं योज्यम्। एकस्मिन्निति। कालभेदेन स्थितयोरप्येकस्मिन्पुरुषे साहित्यं तदर्थ इत्यर्थः। नन्विदं साहित्यं न स्वरसं किन्त्वेककाले साहित्यं स्वरसमित्याशङ्क्य श्रुत्यन्तरे विद्याविद्ययोः साक्षात्साहित्यस्यासम्भवोक्तेरुक्तमेव साहित्यं ग्राह्यमित्याह—दूरमेते इति। विषूची विष्वग्गमने विरुद्धे इत्यर्थः। अस्मिन्नपि मन्त्रे "अविद्यया मृत्युं तीर्त्वे"त्युत्तरार्धपर्यालोचनयाऽविद्याया विद्योत्पत्तिहेतुत्वावगमात्तयोः कालभेदेनैव सहत्वमित्याह—तपसेत्यादिना। यद्वा गुरूपासनतपसो अविद्येत्युच्यते। तयोश्च श्रवणकालेऽनुष्ठेयत्वाद्विद्योत्पत्तिकाल एकस्मिंस्तयोः साहित्यमस्तीत्यर्थान्तरमाह—तपसेति। अस्मिन्नर्थे मन्त्रशेषोऽप्यनुगुण इत्याह—तेन विद्यामिति। साक्षादविद्याया मृत्युत्वेन मृत्युतरणहेतुत्वानुपपत्तेरविद्याशब्देन तपआदिकमेवोच्यते। विद्याव्यवधानं चार्थात्कल्प्यत इत्यर्थः। अविद्वद्विषयत्वेनेति। जिजीविषेदिति जीवितेच्छारूपाविद्याकार्येण तस्याः सूचनादित्यर्थः। परिहृतमिति। यावज्जीवादिश्रुतिन्यायेन परिहृतप्रायमित्यर्थः। यद्वा तृतीयस्य चतुर्थपादे नाविशेषादिति सूत्रेण परिहृतमित्यर्थः। असम्भवादिति। विरोधेन विद्यया सहासम्भवादित्यर्थः। उदाहृतश्रुतिस्मृत्यसम्भवादिति वा। प्रत्युक्तमिति। निर्विशेषात्मज्ञानस्य कर्त्रादिकारकोपमर्दकत्वेन विरुद्धत्वादुपमर्दं चेति सूत्रेणाविरुद्धत्वं प्रत्युक्तमित्यर्थः। तस्माद्वक्ष्यमाणविद्याया अकर्मनिष्ठत्वं कर्मासम्बन्धित्वं केवलात्मविषयत्वं च सिद्धमिति पूर्वोक्तकर्मभिर्विद्यया च शुद्धसत्त्वस्यात एव केवलात्मस्वरूपावस्थानलक्षणमोक्षसिद्ध्यर्थं केवलात्मविद्याऽऽरभ्यत इत्युपसंहरति—अत इति।

---

१. यत्तु "विद्यां चाविद्यां चे"ति—ईशभाष्ये यद्यपि उपासनकर्मणोः समुच्चयोऽस्यार्थ इत्युक्तं तथापि विद्यापदमुख्यार्थभूतब्रह्मविद्याया ग्रहणेऽपि न दोषः, क्रमिकसमुच्चयपरत्वाद्वचनस्य। तेन न ज्ञानकर्मसमुच्चयावसरः। यद्वा तप आदि अविद्या, तेन ज्ञानसमुच्चये न कापि क्षतिः।

केचित्तु—"नम उक्तिं विधेम" इत्युपसंहारं काण्वशाखीये दृष्ट्वा ईशभाष्ये विद्यापदं सगुणविद्यापरतया व्याख्यातम्। अत्र तु माध्यन्दिनपाठमनुसृत्य विद्यापदं मुख्यब्रह्मविद्यापरतया व्याख्यातम्। तत्र हि उपनिषदन्ते "योऽसावादित्ये सोऽसावहम्। ओं खं ब्रह्म" इत्युपसंहारात् निर्गुणविद्यापरा इयमुपनिषदिति स्पष्टम्।

**ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु मामवतु वक्तारमवतु वक्तारम्।**

**ॐ शान्तिः शान्तिः शान्तिः**

५ **ॐ आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किंचन मिषत्।**

**आत्मेति। आत्माऽऽप्नोतेरत्तेरततेर्वा परः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजरोऽमरोऽमृतोऽभयोऽद्वयो वा इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत्। किं नेदानीं स एवैकः ? न। कथं तर्ह्यासीदित्युच्यते। यद्यपीदानीं स एवैकस्तथाऽप्यस्ति विशेषः। प्रागुत्पत्तेरव्याकृतनामरूपभेदमात्मभूतमात्मैकशब्दप्रत्ययगोचरं जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्द-**
१० **प्रत्ययगोचरं चेति विशेषः।**

**यथा सलिलात्पृथक्फेननामरूपव्याकरणात्प्राक्सलिलैकशब्दप्रत्ययगोचरमेव फेनं यदा सलिलात्पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनं चेत्यनेकशब्दप्रत्ययभाक्सलिलमेवेति चैकशब्दप्रत्ययभाक् च फेनं भवति तद्वत्।**

नन्वात्मनः सविशेषत्वप्रतीतेस्तद्विरोधात्कथं कैवल्यमित्याशङ्क्य विशेषस्य सर्वस्याऽऽत्मनि मायया कल्पितत्वान्न वास्तवनिर्विशेषत्वविरोध इति तदर्थं माययाऽऽत्मनः सकाशात्सृष्टिं वक्तुं सृष्टेः पूर्वमात्मनो निर्विशेषरूपं
१५ दर्शयितुमात्मा वा इत्यादि वाक्यम्। तत्राऽऽत्मशब्दार्थमाह—**आत्मेति**। आत्मेति पदेन सर्वज्ञादिरूप आत्मोच्यत इत्यन्वयः। अद्वय इत्यनन्तरमुच्यत इति शेषः। नन्वात्मशब्देन कथमुक्तलक्षण आत्मोच्यत इत्याशङ्क्याऽऽत्मशब्दस्य स्मृत्युक्तव्युत्पत्तिबलाद्रूढ्या चेत्याह—**आप्नोतेरिति**। वाशब्दश्चार्थ आदानं च समुच्चिनोति। तथा च स्मृतिः—

"यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते॥" इति।

अत्राऽऽप्तिर्ज्ञानं व्याप्तिश्चोच्यते। सत्तास्फुरणाभ्यां सर्वं व्याप्नोतीति सर्वज्ञत्वं सर्वशक्तित्वं चोच्यते।
२० सत्ताप्रदानेनोपादानत्वसूचनात्सर्वशक्तित्वमत्तीत्यनेन संहर्तृत्वमततीत्यनेन त्रिविधपरिच्छेदराहित्यमुच्यत इति। अशनायादिवर्जितत्वादिति विषयादानेन रूढ्या च प्रत्यगभेदश्चोच्यत इत्युक्तरूप आत्मपदेनोच्यत इत्यर्थ.। अभिव्यक्तनामरूपव्यावर्तनेनाऽऽत्ममात्रवधारणार्थो वैशब्द इत्याह—**वा इति**। **यदुक्तमिति**। पूर्वत्र प्राणशब्दितप्रजापतिरूपत्वेन यदुक्तमित्यर्थः। यदुतेति पाठः साधुः। तत्रोतेति पदेन प्रत्यक्षादिप्रसिद्धमुच्यते। नन्वग्र इति विशेषणादासीदिति भूतत्वोक्तेश्च पूर्वमेवाऽऽत्ममात्रमिदानीं त्वात्समात्र न भवति किन्तु ततः पृथक्सदिति प्रतीयत
२५ इति नाद्वितीय आत्मेति शङ्कते—**किं नेदानीमिति**। जडस्य मायिकस्य कदाचिदपि स्वतः सत्त्वायोगादात्मनोऽद्वितीयत्वस्य न विरोध इत्याह—**नेति**। तर्ह्यात्ममात्रत्वस्येदानीमपि सत्त्वे भूतत्वोक्तेः का गतिरिति पृच्छति—**कथ तर्ह्यासीदिति**। इदमुपलक्षणमग्र इत्यपि कथमिति द्रष्टव्यम्। जगतः कालत्रयेऽप्यात्मव्यतिरेकेणाभावो यद्यपि तथाऽपि तथा बोधने बोध्यस्य प्रत्यक्षादिविरोधशङ्कयोक्तमात्मतत्त्वं बुद्धौ नाऽऽरोहेत्। अतः प्रागुत्पत्तेरासीदित्युच्यते बोध्यस्य चित्तमनुसृत्य तदपि जगतो नामरूपाभिव्यक्त्यभावमपेक्ष्यैव न त्विदानीमात्ममात्रत्वाभावाभिप्रायेणेत्युत्तर-
३० माह—**यद्यपीत्यादिना**। अव्याकृतो नामरूपभेदो यस्मिन्नात्मनि तथाविधात्मभूतमित्यर्थः। **आत्मैकशब्दप्रत्ययगोचरमिति**। यद्यपि प्रागुत्पत्तेर्वाग्बुद्ध्योरभावेन शब्दप्रत्ययौ तावपि न स्तस्तथाऽपीदानीं तदानींतनात्मतत्त्वं सुप्तादुत्थितः सुप्तिकालीनात्मतत्त्वमिव प्रमाणान्तरेण ज्ञात्वा तदानीमात्मैक एवाऽऽसीदिति वदति प्रत्येति चेति। तथोक्तेश्वरस्य वाऽऽत्मैकशब्दप्रत्ययौ स्त इति द्रष्टव्यम्। **अनेकशब्देति**। अविवेकिनां घटादिशब्दप्रत्ययगोचरं घटः सन्नित्यात्मशब्दपर्यायसच्छब्दगोचरं चेत्यर्थः। गोचरशब्दस्य भावप्रधानत्वमङ्गीकृत्य गोचरत्वं यस्येति बहुव्रीहिणा
३५ नपुंसकत्वं द्रष्टव्यम्। **आत्मैकशब्देति**। विवेकिनामित्यर्थः।

उक्तमर्थं दृष्टान्तेन विशदयति—**यथेति**। अत्राऽऽत्मशब्दव्युत्पत्तिबलात्सर्वज्ञादिशब्दोपलक्षितः सत्यज्ञानानन्तरूपोऽखण्डैकरस आत्मोपक्षिप्तः। तस्यैवार्थस्य दृढीकरणार्थमेकादिपदानि। तत्रैक इत्यात्मान्तराभाव

**नान्यत्किञ्चन न किञ्चिदपि मिषन्निमिषद्व्यापारवदितरद्वा। यथा सांख्यानामनात्मपक्षपाति स्वतन्त्रं प्रधानम्। यथा च काणादानामणवो न तद्वदिहान्यदात्मनः किञ्चदपि वस्तु विद्यते। किं तर्ह्यात्मैवैक आसीदित्यभिप्रायः।**

उच्यते। एवेत्यनेन वृक्षादावेकत्वेऽपि शाखादिभिर्नानात्मत्ववदेकस्याप्यात्मनो नानात्मत्वाभाव उच्यत इति। स्वसजातीयभेदस्वगतभेदनिराकरणार्थत्वेन पदद्वयमित्यभिप्रेत्य विजातीयभेदनिराकरणार्थत्वेन नान्यत् किञ्चनेति पदं व्याचष्टे—नान्यदिति। ननु जडप्रपञ्चस्य कारणीभूता जडा माया वर्तत इति कथं विजातीयभेदनिषेध इत्यत आह—**मिषदिति**। मायायाः सत्त्वेऽपि तदानीं व्यापाराभावाद्व्यापारवतोऽन्यस्य निषेधः सम्भवतीत्यर्थः। ननु निर्व्यापाराया अपि तस्या अन्यस्याः सत्त्व आत्मशब्दोक्तं तस्याखण्डैकरसत्वं न सिध्येदित्यत आह—**इतरद्वेति**। निर्व्यापारं वेत्यर्थः। ननु माया तथाविधाऽस्तीति पुनः पूर्वोक्तदोषः स्यादित्याशङ्क्य मिषदित्यनेन स्वतन्त्रं स्वतःसत्ताकमुच्यते। तथाविधस्य च निषेध इति व्यतिरेकदृष्टान्तेनाऽऽह—**यथेति**। **अनात्मपक्षपातीति**। आत्मशक्तितयाऽऽत्मन्येवान्तर्भूतमात्मपक्षपातीत्युच्यते। तद्भिन्नमित्यर्थः। शक्तित्वेऽपि प्राभाकराणामिव तस्याः स्वतः सत्त्वं स्यान्नेत्याह—**स्वतन्त्रमिति**। यथा सांख्यानां प्रधानमशक्तिभूतं स्वतःसत्ताकमस्ति, काणादानां च तथाविधा अणवः सन्ति, तथाविधमात्मव्यतिरिक्तं मिषदित्यनेनानूद्य निषिध्यते। माया तु न तथाभूतेति नोक्तदोष इत्यर्थः। दीपिकायां तु धातूनामनेकार्थत्वेन मिषदिति धातोरासीदित्यर्थमुक्त्वा नान्यत्किञ्चिनाऽऽसीदिति वाक्यार्थ उक्तः। तदयं वाक्यार्थः—इदं जगदग्रे सजातीयविजातीयस्वगतभेदरहितात्मैवाऽऽसीदिति। अनेनात्मनोऽद्वितीयत्वं जगतस्तथाविधात्ममात्रतया मृषात्वं च सूचितम्। अनेनाग्रे जगत आत्ममात्रत्वोक्तेर्न किञ्चित्प्रयोजनमात्मैक एवाऽऽसीन्नान्यत्किञ्चनेत्येतावतैवाखण्डत्वसिद्धेरित्याशङ्का निरस्ता। जगन्मृषात्वसूचनस्यैव प्रयोजनत्वात्। न चैवमर्थभेदे वाक्यभेदः स्यादिति वाच्यम्। अखण्डत्वसम्भावनार्थमेव जगदनिर्वचनीयत्वस्येदं जगदखण्डात्मैवेति विशिष्टवेषेणोक्तत्वात्। विशेषणानां चार्थात्सिद्धेः "सोमेन यजेत" त्यत्रेवेति। अत्रार्थद्वयस्यापि सूचितत्वादेवान्तेऽपि तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदादेः स्वप्नत्वेन मृषात्वमुक्त्वा स एतमेव पुरुषं ब्रह्म ततममपश्यदित्यात्मशब्दोक्तं ततमत्वं त्रिविधपरिच्छेदराहित्यलक्षणमखण्डत्वं वक्ष्यति। न चेदमात्मैवाऽऽसीदिति सामानाधिकरण्येनाऽऽत्मनो जगद्वैशिष्ट्यमेव प्रतीयते न तु जगतो मृषात्वमिति वाच्यम्। आत्मैक एवेति पदैरुक्तेऽखण्डैकरसे तद्विपरीतजगत्प्रतीतेरतस्मिंस्तद्बुद्धिरूपत्वेन मृषात्वसिद्धेर्जगद्वैशिष्ट्यस्य घटः सन्नित्यादिरूपेण प्रत्यक्षसिद्धत्वेन प्रयोजनाभावेन च तत्प्रतिपादनस्यानुपपत्तेश्च मृषात्वमेव तदर्थः। मिषदित्यनेन स्वातन्त्र्यनिषेधेन स्वतःसत्तानिषेधादपि मृषात्वसिद्धेश्च। स्वतःसत्तावत्त्वे स्वव्यापारे स्वातन्त्र्यमेव स्यात्। न चानेन प्रकारेणेदानीमपि मृषात्वस्याऽऽत्माखण्डत्वस्य च वक्तुं शक्यत्वादग्र इति विशेषणं व्यर्थमिति वाच्यम्। इदानीमात्मभिन्नतया पृथक्सत्त्वेन च प्रतीयमानत्वेन तस्य सहसाऽऽत्ममात्रत्वे बोधिते विरोधिप्रतीत्या तस्य बुद्ध्यनारोहः स्यादिति गुडजिह्विकान्यायेनाऽऽदौ पृथङ्नामरूपानभिव्यक्तिदशायामात्ममात्रत्वं बोध्यते। तस्मिन्बोधिते पश्चात्तन्न्यायेनेदानीमपि स्वयमेवाऽऽत्ममात्रत्वं ज्ञास्यतीत्यभिप्रायेणाग्र इति विशेषणोपपत्तेः। यद्वा वाजसनेयके—"तद्धेदं तर्ह्यव्याकृतमासीत्" इति सृष्टेः प्राक्कार्यस्यानभिव्यक्तनामरूपावस्थबीजभूताव्याकृतात्मतोच्यते, इह त्वात्ममात्रता। तत्र श्रुत्योर्विरोधपरिहारायोपसंहारे कर्तव्य इहाव्याकृतपदमुपसंह्रियते। तत्र चाऽऽत्मपदमितीदमग्रेऽव्याकृतमासीत्तच्च सदाऽऽत्मैवाऽऽसीदिति वाक्यं सिध्यति। तत्राव्याकृतशब्देन "तम आसीत्तमसा गूढमग्रे" "मायां तु प्रकृतिं विद्यात्" इत्यादिषु जगद्बीजावस्थायां तमआदिशब्दप्रयोगात्तमोरूपा मायोच्यते, तेन कार्यस्याग्रेऽनभिव्यक्तनामरूपात्मकमायात्मकत्वं सिध्यति। तस्याश्चाऽऽत्मतादात्म्योक्त्या सांख्यमतवत्स्वतन्त्रत्वनिरासेन तत्र कल्पितत्वं सिध्यति। तयोः कार्यकारणभावाद्यभावेन प्रकारान्तरेण तादात्म्यानिर्वाहात्ततश्चाऽऽत्मनोऽखण्डत्वं तद्भिन्नस्य मृषात्वं चाऽऽत्मनः परिणममानाविद्याधिष्ठानत्वेन विवर्तोपादानत्वं तस्याश्च परिणामित्वं च सूचितं भविष्यति। कार्यस्य च मृषात्वार्थमेवाव्याकृतात्मत्वमुच्यते। तस्याव्याकृतस्याऽऽत्मतादात्म्येन मायात्वेन च मृषात्वादिदानीं तु नानभिव्यक्तनामरूपबीजात्मत्वमित्यग्र इति विशेषणमप्यर्थवत्। तदभिप्रेत्यैव भाष्ये प्रागुत्पत्तेरनभिव्यक्तनामरूपभेदात्मभूतमात्मैकशब्दप्रत्ययगोचरं जगदिदानीं तु व्याकृतनामरूपभेदवत्त्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरं चेति विशेष इतीदानींतनाभिव्यक्तनामरूपबीजात्मत्वमेवाग्रशब्दस्य व्यावर्त्यमुक्तम्। न च साक्षादिदानीमेव मायात्मत्वेन मृषात्व-

**स ईक्षत लोकान्नु सृजा इति ॥१॥**

**स सर्वज्ञस्वाभाव्यादात्मैकः सन्नीक्षत लोकान्नु सृजा इति। ननु प्रागुत्पत्तेरकार्यकरणत्वात्कथमीक्षितवान्? नायं दोषः। सर्वज्ञस्वाभाव्यात्। तथा च मन्त्रवर्णः—"अपाणिपादो जवनो ग्रहीता" इत्यादिः। केनाभिप्रायेणेत्याह—लोकानम्भःप्रभृतीन्प्राणिकर्मफलोपभोगस्थानभूतान्नु सृजै सृजेऽहमिति ॥ १ ॥**

५ मुच्यतामिति वाच्यम्। इदानीं प्रत्यक्षादिविरोधेन तथा बोधयितुमशक्यत्वादित्युक्तत्वान्नामरूपाभिव्यक्तेः सृष्टेः पूर्वमभावेनेदानीमेव विद्यमानत्वेन कादाचित्कत्वादपि रज्जुसर्पादिवन्मृषात्वमिति वक्तुमपि प्रागव्याकृतत्वोक्तिरर्थवतीति न किञ्चिदवद्यम्। अथवा जगदधिष्ठानं किञ्चित्सद्रूपं सम्भावयितुमिदमग्र आसीदित्युच्यते। असम्भाविते तस्मिन्नखण्डत्वोक्तेर्निर्विषयत्वप्रसङ्गात्। अनेनासतः शशविषाणादेरिव सद्रूपेणोत्पत्त्यसम्भवात्कार्यस्य प्रागवस्था सदात्मिका काचित्सम्भाविता। तस्याश्चाचेतनत्वे कार्याकारेण स्वतोऽप्रवृत्तेरतिरिक्तचेतनाधिष्ठानाङ्गीकारे च
१० गौरवात् उपादानाधिष्ठानत्वयोरेकस्मिन्नेवाऽऽत्मनि घटसंयोगादाविव सम्भवाच्च चेतनत्वमात्मैवेत्यनेन सम्भाव्यते। एवं सम्भाविते ह्यधिष्ठानाभिन्न उपादानकारण आत्मन्यखण्डैकरसत्वं तस्य वक्तुमेक एव नान्यत्किञ्चनेति पदानि। अस्मिन्पक्षे चेदमग्र आत्मैवाऽऽसीदित्यंशेन सम्भावितं कार्यस्य प्राग्रूपमनूद्य यदात्मकमिदमासीत्स एक एव नान्यत्किञ्चनेत्यखण्डैकरसत्वं विधीयत इति न कस्यचिदप्यानर्थक्यम्। अत एव छान्दोग्ये "सदेव सोम्येदमग्र आसीत्" इत्यस्य सद्रूपकारणसम्भावनार्थत्वादेव तत्सिद्धयर्थं तद्धैक आहुरित्यादिनाऽसत्कारणवादो निरस्तः।
१५ अन्यथाऽसिद्धस्य सतोऽद्वितीयत्वमात्रविवक्षायां तस्याप्रस्तुतत्वप्रसङ्गात्। अस्मिन्नपि व्याख्याने कारणस्याद्वितीयत्वादेव च तदन्यस्य मृषात्वमपि सिध्यति। कार्यस्य मृषात्वे तन्निरूपितं कारणत्वमपि तथेति तथाविधात्मज्ञानान्मुक्तिरपि वक्ष्यमाणा सिध्यतीति न किञ्चिदवद्यम्। दीपिकायां त्विदमात्मैवाऽऽसीदिति सामानाधिकरण्यं बाधायां यश्चोरः स स्थाणुरितिवदिदानीं जगद्विशिष्टात्मप्रतिभासेन तत्र बाधानुपपत्त्या स्थितिकालं परित्यज्याग्रशब्देन सृष्टेः प्राचीन काल उपादीयते। सृष्टप्रपञ्चबाधया सिद्धस्याखण्डैकरसत्वस्य स्पष्टीकरणार्थमेकादिशब्दा इति न कस्याप्यानर्थक्य-
२० मित्युक्तम्। तत्राग्रशब्दस्य न प्रयोजनमारोप्यप्रतीतिदशायामेव यश्चोरः स स्थाणुरित्यादौ बाधदर्शनेनेहापि जगत्प्रतीतिदशायामेव तद्बाधनस्य न्याय्यत्वात्सृष्टेः प्रागप्रतीतस्य बाधानुपपत्तेश्च। किञ्च कालत्रयनिषेधो हि बाधः प्राक्काल एव निषेधे बाध एव न स्यात्। न हि पाकरक्ते घटे पूर्वं न रक्तो घट इति प्रत्ययं बाधं मन्यन्ते। अत एव भाष्ये प्रागुत्पत्तेरव्याकृतनामरूपभेदात्मभूतं जगदासीदिति जगतः कारणात्मना सत्त्वैवोक्ता न तु बाध इति। न च सृष्टेः प्राक्कालाभावेनाग्र इति कथं कालसम्बन्धयोग इति वाच्यम्। प्राक्काले घटशरावादिकं मृदेवाऽऽसी-
२५ दित्यादिवाक्येषु कालसम्बन्धेनैव बोधनस्य व्युत्पन्नत्वेनेहापि तथैव बोधयितुं कालसम्बन्धारोपोपपत्तेः। यथा देवदत्तस्य शिर इत्यादाववयवावयविभेदेन बोधनस्य दृष्टत्वेन राहोः शिर इत्यादावपि तत्कल्पनम्। यथा वा पूर्वकालेऽपि काल आसीदित्यादौ कालान्तरसम्बन्धारोपणं तद्वत्। दीपिकायां तु पररीत्या परो बोधनीय इति न्यायेन परमते कालस्य नित्यत्वेन प्रागपि सत्त्वात्तद्रीत्या कालसम्बन्ध उक्त इत्युक्तम्। न चाऽऽत्मा वा आसीदिति सत्तावैशिष्ट्यमेव प्रतीयते कर्तुः क्रियाश्रयत्वादिति वाच्यम्। सविता प्रकाशत इत्यादौ कर्तृवाचिप्रत्ययस्य साधुत्वमात्रार्थत्वेन सवितुः प्रकाश-
३० रूपत्वप्रत्ययवदात्मन एव सद्रूपत्वप्रतीतेः। अतिरिक्तसत्ताजात्यभावाच्च। अन्यथा सत्ताऽऽसीदित्यादावगतेरिति सर्वं सुस्थम्।

एवं सूत्रितमात्मनोऽखण्डैकरसत्वं साधयितुमुपक्षिप्तं प्रपञ्चस्य मृषात्वं तदध्यारोपापवादाभ्यां दृढीकर्तुमध्यायशेषः। तत्राप्यध्यारोपार्थं स जातो भूतानीत्यतः प्राक्तनस्तदादिरपवादार्थः। तत्रापि वाचारम्भणन्यायेनाऽऽत्मातिरिक्तस्य विकारत्वेन मृषात्वं वक्तुं सृष्टिवाक्यम्। तत्र स्रष्टुरात्मनः सम्भावितं चेतनत्वं दृढीकर्तुमीक्षणमाह—
३५ स सर्वज्ञेति। नन्वेकस्याखण्डस्य कथमीक्षणं साधनाभावादित्याशङ्क्य न तस्य साधनापेक्षेत्यभिप्रेत्यैकः सन्नपि सर्वज्ञस्वाभाव्यादीक्षतेत्युक्तम्। अत्राऽऽडागमाभावश्छान्दसः। इममेवाभिप्रायं शङ्कापरिहाराभ्यां स्पष्टीकरोति—नन्विति। तत्र करणानीन्द्रियाणि कार्यं शरीरमिति विवेकः। तद्रहितस्यापि सार्वज्ञ्ये श्रुतिमाह—तथा चेति। अपादो जवनोऽपाणिर्ग्रहीतेत्यन्वयः। पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति मन्त्रशेषः। न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव

**स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापोऽदोऽम्भः**

एवमीक्षित्वाऽऽलोच्य स आत्मेमाँल्लोकानसृजत सृष्टवान् । यथेह बुद्धिमांस्तक्षादिरेवंप्रकारान्प्रासादादीन्सृजे इतीक्षित्वेक्षानन्तरं प्रासादादीन्सृजति तद्वत् । ननु सोपादानस्तक्षादिः प्रासादादीन्सृजतीति युक्तं; निरुपादानस्त्वात्मा कथं लोकान्सृजतीति ? नैष दोषः । सलिलफेनस्थानीये आत्मभूते नामरूपे अव्याकृते आत्मैकशब्दवाच्ये व्याकृत-फेनस्थानीयस्य जगत उपादानभूते सम्भवतः । तस्मादात्मभूतनामरूपोपादानभूतः सन्सर्वज्ञो जगन्निर्मिमीत ५ इत्यविरुद्धम् । अथवा, यथा विज्ञानवान्मायावी निरुपादान आत्मानमेवाऽऽत्मान्तरत्वेनाऽऽकाशेन गच्छन्तमिव निर्मिमीते तथा सर्वज्ञो देवः सर्वशक्तिर्महामाय आत्मानमेवाऽऽत्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततरम् । एवं च सति कार्यकारणोभयासद्वाद्यादिपक्षाश्च न प्रसज्यन्ते सुनिराकृताश्च भवन्ति ।

श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिरादिशब्दार्थः । ननु स्वाभाविकनित्यचैतन्येन कथं कादाचित्केक्षणमिति । अत्र केचित्सर्गादौ प्राणिकर्मभिरेका सृज्याकाराऽविद्यावृत्तिरुत्पद्यते । तस्यामात्मचैतन्यं प्रतिबिम्बते तदेवेक्षणं १० तच्चाऽऽदिकार्यत्वात्स्वपरनिर्वाहकमिति न तत्रापीक्षणान्तरापेक्षा सर्वैरपि प्रथमकार्येऽनवस्थापरिहारायैवमेव वक्तव्य-मित्याहुः । अपरे तु प्राणिकर्मवशात्सृष्टिकालेऽभिव्यक्त्युन्मुखीभूतानभिव्यक्तनामरूपावच्छिन्नं सत्स्वरूपचैतन्य-मेवौन्मुख्यस्य कादाचित्कत्वात्कादाचित्कमीक्षणमित्याहुः । अन्ये त्वीक्षणवाक्यस्य कारणस्याचैतन्यव्यावृत्तिपरत्वा-दीक्षणे तात्पर्याभावाच्च न तत्र भूयानाग्रहः कर्तव्य इत्याहुः । नुशब्दो वितर्कार्थं इति मनसि निधायाऽऽह—न्विति । लोडर्थस्य विध्यादेः स्वात्मन्यसम्भवाल्लोटो लडर्थत्वमाह—सृज इति । अहमितीत्यस्येक्षतेति पूर्वेणान्वयः । १५

ईक्षणस्य पूर्वकालीनत्वं वदन्सृष्टिहेतुत्वमाह—एवमिति । अत्रेक्षणपूर्वकसृष्ट्युक्तेः प्रयोजनं स्रष्टुश्चेतनत्व-सिद्धिरेवेत्यभिप्रेत्य तथाविधस्य तक्षणश्चेतनत्वमुदाहरति—यथेति ।

नन्वीक्षितुस्तक्षादेर्दार्वाद्युपादानकारणसहितत्वात्प्रासादादिस्रष्टृत्वं युक्तम् । इह त्वात्मा वा इदमेक एवेत्युक्तस्याद्वितीयत्वेनोपादानकारणान्तराभावात्स्रष्टृत्वं न युक्तमिति शङ्कते—नन्विति । न च बहु स्यां प्रजायेय तदाऽऽत्मानं स्वयमकुरुतेति श्रुत्याऽऽत्मन एवोपादानत्वान्नोपादानान्तरापेक्षेति वाच्यम् । वियदादेर्व्यावहारिकत्वेन २० घटादिवत्परिणामत्वात्तस्य परिणाम्युपादानं वक्तव्यम् । न चाऽऽत्मा तथा भवितुमर्हति । तस्य निरवयवत्वेना-परिणामित्वादिति भावः । तत्र वियदादेः परिणामत्वमङ्गीकृत्य तत्रानभिव्यक्तनामरूपावस्थं बीजभूतमव्याकृतं तद्धेदं तर्ह्यव्याकृतमासीत्तम आसीत्, मायां तु प्रकृतिं विद्यादित्यादिश्रुतिसिद्धं परिणाम्युपादानमस्तीत्याह—नैष इति । आत्मभूत इत्यनेनानभिव्यक्तनामरूपशब्दिताव्याकृतस्याऽऽत्मन्यध्यस्तत्वेन परिणममानाविद्याधिष्ठान-त्वेनाऽऽत्मनो विवर्तोपादानत्वं तयोरात्ममात्रत्वेन मृषात्वादात्मनोऽद्वितीयत्वं च न विरुध्यत इति दर्शयति— २५ नामरूपे इति । तदाश्रयमव्याकृतमित्यर्थः ।

इदानीं घटादिष्वपि विवर्ततैव परिणामो नाम विवर्तादन्यो नास्त्येव विवर्त इति परिणाम इति च पर्याय इत्यारम्भणाधिकरणन्यायेन विवर्ततया सिद्धे विकारेऽप्यात्मकृतेः परिणामादिति सूत्रकारेण परिणामशब्दप्रयोगाच्च सिद्धं तत्र च सत एवोपादानत्वम् । माया तु सहायमात्रमित्यभिप्रेत्याऽऽत्मनि चैवं विचित्राश्च हीति सूत्रावष्टम्भेन परिहारान्तरमाह—अथवेति । विज्ञानवानिति । आकाशेन गच्छन्तमिव स्थितमात्मान्तरं स्रक्ष्यामीति ज्ञानवानित्यर्थः । ३० इदं च विशेषणमीक्षणस्य स्रष्टृत्वस्य च शुक्तिरजतादौ विवर्तेऽदर्शनात्कार्यस्य तत्तुल्यत्वेन तदुभयं न स्यादिति शङ्कानिरासार्थं तन्निरासश्च मायाविनिर्मिते विवर्ते तदुभयदर्शनादिति । निरुपादान इति । स्वव्यतिरिक्तोपादान-रहित इत्यर्थः । सर्वशक्तित्वे हेतुमाह—महामाय इति । आत्मान्तरत्वेनेति । आत्मभिन्नत्वेनेत्यर्थः । युक्ततरमिति । इन्द्रो मायाभिः पुरुरूप ईयते, मायया ह्यन्यदिव भवति बहु स्यां प्रजायेय वाचाऽऽरम्भणं विकारः अपागादग्नेरग्नित्व-मित्यादिबहुश्रुतिसम्मतत्वादित्यर्थः । एवं च सतीति । सत एवाऽऽत्मनः कार्यकारणरूपेणावस्थानाङ्गीकारान्निर्हेतुक- ३५ मेव कार्यमुत्पद्यत इति यदृच्छावादिनाम्, असदेव कार्यमुत्पद्यत इति नैयायिकानाम् । उभयमप्यसदिति शून्यवादिनां पक्षः । आदिशब्देन सदेव कार्यमुत्पद्यत इति सांख्यादीनां परिणामपक्ष उक्तः । अत्र पक्षशब्देन तत्तत्पक्षोक्तदोषा लक्ष्यन्ते । तत्रासत्कारणपक्षे दध्याद्यर्थिनां दुग्धाद्यन्वेषणं न स्यादिति दोषः । असत्कार्यपक्षे त्वसतः सत्त्वापत्तिः शशविषाणादेरप्युत्पत्तिप्रसङ्गश्च दोषः । परिणामवादे च तस्य पूर्वमेव कारणे सत्त्वात्कुलालादिकारकव्यापारादि-

**परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः ॥२॥**
**स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥३॥**

**अम्भो मरीचीर्मरमाप इति। आकाशादिक्रमेणाण्डमुत्पाद्याम्भःप्रभृतींल्लोकानसृजत। तत्राम्भःप्रभृतीन्स्वयमेव व्याचष्टे श्रुतिः। अदस्तदम्भःशब्दवाच्यो लोकः परेण दिवं द्युलोकात्परेण परस्तात्सोऽम्भःशब्दवाच्योऽम्भोभरणात्।**
५ **द्यौः प्रतिष्ठाऽऽश्रयस्तस्याम्भसो लोकस्य। द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः। एकोऽप्यनेकस्थानभेदत्वाद्बहुवचनभाङ्मरीचय इति। मरीचिभिर्वा रश्मिभिः सम्बन्धात्। पृथिवी मरो म्रियन्तेऽस्मिन्भूतानीति या अधस्तात्पृथिव्यास्ता आप उच्यन्त आप्नोतेर्लोकाः। यद्यपि पञ्चभूतात्मकत्वं लोकानां तथाऽप्यब्बाहुल्यादब्नामभिरेवाम्भो मरीचीर्मरमाप इत्युच्यन्ते ॥ २ ॥**

**सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतांश्चतुरो लोकान्सृष्ट्वा स ईश्वरः पुनरेवेक्षत—इमे न्वम्भःप्रभृतयो**

१० वैयर्थ्यं पूर्वमसत्त्वे कारणस्यैवावस्थान्तरापत्तिलक्षणपरिणामत्वानुपपत्तिः। उत्पत्त्यनन्तरमसत्त्वे ततो व्यवहारासिद्धिरपरोक्षत्वानुपपत्तिश्चेति दोषः। उभयासत्त्वे चोभयपक्षोक्तदोषास्ते विवर्तवादे न प्रसज्यन्त इत्यर्थः। यद्वाऽस्माभिर्विवर्तवादस्याङ्गीकारात्परिणामादिपक्षाङ्गीकारे परपक्षाङ्गीकारलक्षणो दोषो भवेदिति यच्छङ्क्यते तन्न सम्भवतीत्याह—**एवं च सतीति।** **सुनिराकृताश्चेति।** विवर्तवादस्यैव परिग्रहेण पक्षान्तरेषु दोषसूचनाद-द्वितीयात्मनस्तद्विपरीतप्रपञ्चाकारताभिधायिन्या बहु स्यामिति श्रुत्या विवर्तवादस्यैव परिगृहीतत्वेन पक्षान्तराणां
१५ श्रुतिबाह्यत्वाच्च ते निराकृता भवन्तीत्यर्थः।

लोकानां भौतिकत्वादण्डान्तर्वर्तित्वाच्च भूतसृष्टितत्पञ्चीकरणाण्डसृष्ट्यनन्तरं तत्सृष्टिरिति गुणोपसंहारन्यायमाश्रित्याऽऽह—**आकाशादीति।** **स्वयमेव व्याचष्ट इति।** तेषां लोकेष्वप्रसिद्धत्वादित्यर्थः। द्युलोकात्परस्ताद्ये महरादयो लोका यश्च तस्याम्भसो लोकस्याऽऽश्रयो द्युलोकस्ते सर्वेऽम्भःशब्देनोच्यन्ते। वृष्ट्यम्भसस्तत्र विद्यमानत्वादित्याह—**अद इत्यादिना।** **अन्तरिक्षं मरीचय इत्यस्यार्थमाह—द्युलोकादिति।** मरीचिशब्देन सूर्यकिरणसम्बन्धा-
२० दन्तरिक्षलोकं लक्षयित्वा तस्यैकत्वेऽपि प्रदेशभेदाद्बहुवचनमित्युक्तम्। इदानीं बहूनां मरीचीनां लक्षकत्वात्तत्कृतं बाहुल्यं गङ्गायां घोष इत्यत्र लक्षकगतस्त्रीत्वमिवेत्याह—**मरीचिभिर्वेति।** न तु मरीचिशब्देनान्तरिक्षलोकस्वीकारे मरीचिसम्बन्धो निमित्तान्तरमुच्यत इति भ्रमितव्यम्। एतद्भिन्नस्य निमित्तान्तरस्य पूर्वमनुक्तत्वेन विकल्पार्थकवाशब्दायोगात्। **आप उच्यन्त इति।** अधोलोकवासिभिर्जीवैराप्यमानत्वादाप्नोतेर्धातोरर्थयोगात्ते लोका आप इत्युच्यन्त इत्यन्वयः। ननूक्तानां लोकानां पञ्चभूतसम्बन्धाविशेषाद्भूतान्तरेण पृथिव्यादिनोपरितनलोका लक्ष्यन्तामन्तरिक्षस्य
२५ मरीचिव्यतिरिक्तपदार्थान्तरेण मेघादिनाऽपि सम्बन्धात्तेन स लोकः पृथिव्यास्ततोऽधोलोकानां च मरणाप्तिव्यतिरिक्तगमनादिक्रियान्तरेणापि योगात्क्रियान्तरेण ते लक्ष्यन्तामिति शङ्कते—**यद्यपीति।** **भूतात्मकत्वमिति।** भूतसम्बन्धित्वमित्यर्थः। इदमुपलक्षणं मेघादिपदार्थान्तरसम्बन्धोऽपि वर्तत इत्यपि द्रष्टव्यम्। अम्भआदीनामेव तेषु लोकेषु प्राचुर्यात्तैरेव ते लोका लक्षणीयाः प्राचुर्येण व्यपदेशा भवन्तीति न्यायादिति परिहरति-**तथाऽपीति।** अब्बाहुल्यादित्युपलक्षणं मरीच्यादीनामपि बाहुल्यादित्यपि द्रष्टव्यम्। अब्नामभिरित्यत्रापि मरीच्यादिनामभिरित्यपि द्रष्टव्यम्।
३० यथाश्रुतेऽबात्मकत्वेनाम्भआदिशब्दलक्षकत्वानुक्तेर्लोकानां शङ्कानुपपत्तेर्मरीच्यादीनामब्नामत्वाभावादप्शब्दस्याप्याप्तिक्रियार्थत्वोक्तेरब्नामत्वाभावेनाब्नामभिरिति परिहारानुपपत्तेश्चेति। उपरितनलोकाद्वृष्टिद्वारेणाऽऽगतमम्भ एवास्माभिः साक्षादुपलभ्यते न तु भूतान्तरमित्यस्मद्दृष्ट्याऽब्बाहुल्यमुपरितनलोकानामूर्ध्वलोकगामिप्राण्यपेक्षयाऽधोलोकगामिनां प्राणिनां पुराणेषु बाहुल्योक्तेर्बहुभिराप्यन्तेऽधोलोका इत्यधोलोकेषु तत्कर्तृकाप्तेरपि बाहुल्यं पृथिव्यामतिशीघ्रं प्राणिनां मरणात्तस्यापि तत्र बाहुल्यमन्तरिक्षस्य तु मरीचिबाहुल्यं प्रसिद्धमेवेति ज्ञेयम्। **अम्भो मरीचीर्मरमाप**
३५ **इत्युच्यन्त इति।** एतैर्नामभिरुच्यन्त इत्यन्वयः।

अत्र "आत्मा वा" इत्युक्तात्मज्ञानेन संसारी मोचयितव्यत्वेन विवक्षितः। असंसारिणो मोक्षानुपपत्तेः। संसारश्च संसरणाधिकरणलोकांस्तदुपाधिभूतं लिङ्गशरीरं तदभिमानिनो देवांस्तदधिष्ठानं स्थूलशरीरं संसाररूपाशनायादींस्तदभिमानिनं तद्भोक्तारमन्तरेण नोपपद्यत इति तस्य सर्वस्य सृष्टिम् "अयमावसथ" इत्यन्तेन ग्रन्थेन क्रमेण वक्ष्यन्संसरणाधिष्ठानलोकसृष्टिमुक्त्वा तत्पालयितृदेवतासृष्ट्युक्तिव्याजेन समष्टिस्थूलशरीरस्य समष्टिलिङ्ग-
४० शरीरस्य तदभिमानिनां देवानां च सृष्टिं वक्तुमारभते—**स ईक्षतेति।** तद्व्याचष्टे—**सर्वप्राणीति।** फलस्य तदुपादानस्य

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम्। मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतोरेतस आपः ॥४॥ ५

इति प्रथमाध्याये प्रथमः खण्डः

मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः। तस्मादेषां रक्षणार्थं लोकपालाँल्लोकानां पालयितॄन्नु सृजै सृजेऽहमिति। सोऽद्भ्य एवाप्प्रधानेभ्य एव पञ्चभूतेभ्यो येभ्योऽम्भःप्रभृतीन्सृष्टवान्स्तेभ्य एवेत्यर्थः। पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय, मृत्पिण्डमिव कुलालः पृथिव्या, अमूर्छयन्मूर्छितवान् संपिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः॥ ३॥ १०

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत्। तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः। "यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः। तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाऽभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत। यथा पक्षिणोऽण्डं निरभिद्यतैवम्। तस्मान्निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्तत तदधिष्ठाताऽग्निस्ततो वाचो लोकपालः। तथा नासिके निरभिद्येताम्। नासिकाभ्यां प्राणः प्राणाद्वायुरिति सर्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी कर्णौ त्वग्घृदयमन्तःकरणाधिष्ठानं मनोऽन्तःकरणं नाभिः सर्वप्राणबन्धनस्थानम्। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युः। यथाऽन्यत्र तथा शिश्नं निरभिद्यत प्रजननेन्द्रियस्थानमिन्द्रियं रेतो रेतोविसर्गार्थत्वात्सह रेतसोच्यते आपोरेतस इति॥ ४॥ १५

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतावैतरेयोपनिषद्भाष्ये प्रथमाध्याये प्रथमः खण्डः

तत्साधनस्य चाधिष्ठानभूतानित्यर्थः। अव्ययानामनेकार्थत्वान्नुशब्दस्तुशब्दार्थं वैलक्षण्यं लोकानामाहेत्याह—इमे न्विति। अहमितीत्यस्येक्षतेति पूर्वेणान्वयः। २०

समष्टिलिङ्गशरीरस्य तदभिमानिनां विराडवयवजन्यत्वात्तदर्थं विराट्सृष्टिमाह—एवमीक्षित्वेति। यद्यपि लोकोत्पत्तेः पूर्वमेवाण्डोत्पत्तिरुक्ता "अण्डमुत्पाद्याम्भःप्रभृतीँल्लोकानसृजते"ति भाष्येण तथाऽपि सैवोत्पत्तिरिहानूद्यते लोकपालसृष्ट्यर्थमिति न विरोध इति भावः। अद्भ्य एवेत्येवकारार्थमाह—येभ्य इति। कुलालः पृथिव्याः सकाशान्मृत्पिण्डमिवेत्यन्वयः। स्वावयवेति। भूतानां परस्परावयवसंयोजनमतिश्लिष्टसंयोगस्तेनेत्यर्थः।

विराडुत्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्पत्तिमाह—तं पिण्डमित्यादिना। तपःशब्देनाभिध्यानशब्दितं ज्ञानमुच्यते न कृच्छ्रादीत्यत्र श्रुतिमाह—यस्येति। यस्य तपो ज्ञानमेव न कृच्छ्रादीत्यर्थः। २५

ततो वाचो लोकपालोऽग्निर्वागधिष्ठाता निरवर्ततेत्यन्वयः। यद्यपि वागादिकरणजातमपञ्चीकृतभूतकार्यं न मुखादिगोलककार्यं तथाऽपि मुखाद्याश्रये तदभिव्यक्तेर्मुखाद्वागित्युक्तम्। नासिकाभ्यां प्राण इत्यत्र प्राणशब्देन प्राणवृत्तिसहितं घ्राणेन्द्रियमुच्यते। अधिष्ठानमिति। गोलकमित्यर्थः। त्वग्गोलकम्। लोमेति लोमसहचरितं स्पर्शनेन्द्रियमुच्यते। ओषधिवनस्पतय इत्योषध्याद्यधिदेवता वायुरुच्यते। "चित्तं तु चेतो हृदयं" "हृदयज्ञं चाहृदयज्ञं चे"त्यादौ हृदयशब्दस्यान्तःकरणार्थत्वदर्शनान्मनःशब्देनापि तस्यैवाभिधाने पौनरुक्त्यमित्यत आह—हृदयमिति। अन्तःकरणाधिष्ठानं हृदयकमलमुच्यत इत्यर्थः। सर्वप्राणबन्धनस्थानमिति। गुदमूलमित्यर्थः। अपानशब्देन पाय्विन्द्रियलक्षणायां सम्बन्धमाह—अपानेति। ननु शिश्नं निरभिद्यतेति पर्याये शिश्नरेतसोरुत्पत्त्यभिधाने स्त्रीयोन्यादेरुत्पत्तिरनुक्ता स्यादित्याशङ्क्य शिश्नशब्देनोपस्थेन्द्रियस्थानं लक्ष्यते रेत इति तद्विसर्गार्थत्वेन तत्सहितमुपस्थेन्द्रियमप्शब्देन तल्लक्षितपञ्चभूतोपाधिकः प्रजापतिश्चोच्यत इत्याह—यथेति। यथाऽन्यत्र पर्यायान्तरे स्थानं करणं देवता चेति त्रयमुक्तमेवमिहापि शिश्नादिशब्दैस्त्रयमप्युच्यत इत्यर्थः। रेत इति। इन्द्रियमुच्यत इत्यन्वयः। तल्लक्षणायां सम्बन्धमाह—सह रेतसेति। रेतसा सहितं तत्सम्बद्धमित्यर्थः। सम्बन्धमुपपादयति—रेतोविसर्गार्थत्वादिति। ३० ३५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां प्रथमाध्याये प्रथमः खण्डः

**ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् । तमशनापिपासाभ्यामन्ववार्जत् ।
ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥१॥**

ता एता अग्न्यादयो देवता लोकपालत्वेन सङ्कल्प्य सृष्टा ईश्वरेणास्मिन्संसारार्णवे संसारसमुद्रे महत्यविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहेऽनादावनन्तेऽपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे
५ पञ्चेन्द्रियार्थतृष्णमारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाऽहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन्पतितवत्यः ।

तस्मादग्न्यादिदेवताप्ययलक्षणाऽपि या गतिर्व्याख्याता ज्ञानकर्मसमुच्चयानुष्ठानफलभूता, साऽपि नालं संसारदुःखोपशमायेत्ययं विवक्षितोऽर्थोऽत्र । यत एवं, तस्मादेवं विदित्वा, परं ब्रह्माऽऽत्माऽऽत्मनः सर्वभूतानां च, यो
१० वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन, सर्वसंसारदुःखोपशमनाय वेदितव्यः । तस्मात् 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं" यदेतत्परब्रह्मात्मज्ञानम् । "नान्यः पन्था विद्यतेऽयनाय" इति मन्त्रवर्णात् ।

तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं पिण्डमात्मानमशनायापिपासाभ्यामन्ववार्जदनु-

एवं समष्टीनामिन्द्रियाणां तदभिमानिदेवतानां चोत्पत्तिमुक्त्वाऽथ तासां देवतानां भोगयोग्याल्पव्यष्टिदेहसृष्टिं तेषु देवतानां भोगार्थं व्यष्टिरूपेण प्रवेशं च विवक्षुस्तदुपोद्घातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति—ता एता
१५ इति । तच्छब्दार्थमाह—अग्न्यादय इति । एतच्छब्दार्थमाह—लोकपालत्वेनेति । अशनायादिसृष्ट्युपयोगित्वेनैतासां स्वरूपाज्ञानपूर्वकं संसारे ब्रह्माण्डरूपे पतितत्वमासक्तत्वं तन्मात्रत्वाभिमानेन यद्बद्धत्वं तदाह—अस्मिन्निति । अर्णवसादृश्यमाह—अविद्येत्यादिना । अविद्यादिप्रभवं दुःखमेव दुष्प्रवेशनगुणेनोदकमिवोदकं यस्मिंस्तीव्ररोगादय एव भयङ्करत्वेन ग्राहा नक्रादयो यस्मिंस्तत्त्वज्ञानमन्तरेण विनाशाभावादनन्तेऽज्ञानामुत्तरावध्यभावेनापारे विश्रामस्थानाभावेन निरालम्बे । समीचीनविश्रमस्थानाभावेऽपि तदाभासोऽस्तीत्याह—विषयेन्द्रियेति । विषयेन्द्रियसम्बन्ध-
२० जनितसुखलेशरूपो विश्रामो यस्मिन्पञ्चेन्द्रियाणामर्थेषु विषयेषु शब्दादिषु या तृट् तृष्णा सैव मारुतस्तत्कृतो यो विक्षोभस्तेनोत्थितान्यनर्थशतानि विषयसम्पादनादिनानाक्लेशास्त एवोर्मयो यस्मिन्महारौरवादय एवानेके निरया नरकविशेषास्तद्गतानां गर्भवासतन्निष्क्रमणबाल्यादयो मरणान्ता येऽनेके निरया दुःखजनकत्वात्तद्गतानां च यानि हा हेत्यादीनि कूजितानि स्वल्पध्वनय आक्रोशनानि महाध्वनयस्तदुद्भूतो महारवो यस्मिन् । महापातकाद्यनेकनिरयेति पाठे महापातकजन्या निरया इति द्रष्टव्यम् । संसारार्णवस्यैवंभूतत्वे तस्य तरणासम्भावान्मोक्षशास्त्रानर्थक्य-
२५ मित्याशङ्क्याविवेकिनां तथात्वेऽपि विवेकिनां तत्तरणोपायोऽस्तीत्याह—सत्येति । सत्यादयो य आत्मगुणास्त एव पाथेयं पथ्यशनं तेन पूर्णं ज्ञानमेवोडुपं प्लवो यस्मिन् । सत्सङ्गो गुरुसम्पत्तिः सर्वत्यागः संन्यासस्तावेव मार्गो ज्ञानोडुपप्रवृत्तिहेतुर्यस्मिन्मोक्षे सति पुनः संसारार्णवस्पर्शाभावात्स एव तीरवत्तीरं यस्मिन्नेतस्मिन्प्रत्यक्षसिद्धेऽर्णव इत्यर्थः । अत्र पतनं नामाऽऽत्मस्वरूपाज्ञानेन संसारेऽहमभिमानेन सक्तत्वम् ।

ननु संसारार्णवपतितत्वं वक्ष्यमाणाशनायादियोग इत्यादिः सर्वोऽपि बन्धस्तदभिमानिनो जीवस्य वक्तव्यो
३० न देवतानाम् । न च तासामपि तत्राभिमानोऽस्तीति तदुक्तमिति शङ्कनीयम् । तथाऽपि प्राधान्यतोऽभिमानिनं जीवं विहायाप्राधान्यतोऽभिमानिनीषु तदुक्तेरभिप्रायो वक्तव्य इत्यत आह—तस्मादिति । यस्मात्संसारार्णवपतितत्वं तासां तस्मादित्यर्थः । महारौरवाद्यनेकनिरयगतिरिवेति पाठ उक्तनिरयगतिर्यथा दुःखोपशमाय नालं तथा साऽपि नालमिति पूर्णेणान्वयः । तद्विवक्षाया अपि प्रयोजनमाह—यत एवमिति । एवं विदित्वेति । नालमिति विदित्वेत्यर्थः । आत्मनः सर्वभूतानां चाऽऽत्मा य "आत्मा वा इदमि"त्यादिना जगदुत्पत्त्यादिहेतुत्वेन यः प्रकृतः स परं ब्रह्म वेदितव्य
३५ इत्यन्वयः । नन्वेष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यमित्युपक्रम्योक्थमुक्थमिति वा इत्यादिना कर्मसम्बन्धिसगुणब्रह्मात्मज्ञानस्यैवोक्तत्वात्तस्यैव मोक्षसाधनत्वं नोक्तकेवलात्मज्ञानमात्रस्येत्याशङ्क्यैष पन्था इत्यादिना ब्रह्मात्मविज्ञानमेवोक्तं न कर्मसमुच्चितं ज्ञानं तस्योक्तवाक्येन संसारहेतुत्वावगमेन सत्यत्वायोगादित्याह—तस्मादेष पन्था इति । यस्मात्कर्मसहितस्य प्राणविज्ञानस्य संसारफलत्वं तस्मादेष पन्था इत्यनेन यदेतद्ब्रह्मात्मविज्ञानं तदेवोक्तमित्यन्वयः । "तमेव

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ।
ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥
ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति ।
पुरुषो वाव सुकृतं ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥
[1]अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः ५

गमितवान्संयोजितवानित्यर्थः । तस्य कारणभूतस्याशनायादिदोषवत्त्वात्तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वम् । तास्ततोऽशनायापिपासाभ्यां पीडयमाना एनं पितामहं स्रष्टारमब्रुवन्नुक्तवत्यः । आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व । यस्मिन्नायतने प्रतिष्ठिताः समर्था सत्योऽन्नमदाम भक्षयाम इति ॥ १ ॥

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गां गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत्पिण्डं समुद्धृत्य १० मूर्च्छयित्वाऽऽनयद्दर्शितवान् । ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन् । न वै नोऽस्मदर्थमधिष्ठानायान्नमत्तुमयं पिण्डोऽलं न वै । अलं पर्याप्तोऽत्तुं न योग्य इत्यर्थः । गवि प्रत्याख्याते ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति पूर्ववत् ॥ २ ॥

सर्वप्रत्याख्याने ताभ्यः पुरुषमानयत्स्वयोनिभूतम् । ताः स्वयोनिपुरुषं दृष्ट्वाऽखिन्नाः सत्यः सुकृतं शोभनं कृतमिदमधिष्ठानं बतेत्यब्रुवन् । तस्मात्पुरुषो वाव पुरुष एव सुकृतं सर्वपुण्यकर्महेतुत्वात् । स्वयं वा स्वेनैवाऽऽत्मना स्वमायाभिः कृतत्वात्सुकृतमुच्यते । ता देवताः ईश्वरोऽब्रवीदिष्टमासामिदमधिष्ठानमिति मत्वा सर्वे हि स्वयोनिषु १५ रमन्ते । अतो यथायतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशतेति ॥ ३ ॥

तथाऽस्त्वित्यनुज्ञां प्रतिलभ्येश्वरस्य नगर्यामिव बलाधिकृतावयोऽग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं

विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यनेनापि केवलात्मविज्ञानव्यतिरिक्तपथनिषेधादप्युक्तमेव ज्ञानं पन्था इत्याह—नान्य इति । एष पन्था इति ब्रह्मात्मज्ञानमुपक्रम्य मध्ये प्राणविज्ञानोक्तिस्तु प्राणोपासनया चित्तैकाग्र्ये सति तत्फलाच्च वैराग्ये सत्येष पन्था इत्युपक्रान्तं मुख्यं ज्ञानं वक्तुं शक्यमित्यभिप्रायेणेति भावः । २० यद्यप्येतद्वाक्यव्याख्यानावसरे कर्ममार्गोऽपि पथिशब्दार्थत्वेनोक्तस्तथाऽपि ज्ञानमार्गोपायत्वेन स उक्तो न प्राधान्येनेति भावः । ननु पिण्डस्याशनायादियोगे देवतानां कथं तद्वत्त्वं येन तासामन्नादनार्थमायतनप्रश्नः स्याद्यस्मिन्प्रतिष्ठिता इत्यनेनेत्यत आह—तस्येति ।

पितामहमिति । स्वजनकपिण्डजनकमित्यर्थः । अधिष्ठानमिति । शरीरमित्यर्थः । ननु विराड्देह एवाऽऽयतनं वर्तत इत्याशङ्क्य तस्यातिप्रौढत्वात्तमापूर्य तत्र स्थातुं वयमसमर्था अन्नं च तद्देहपर्याप्तं सम्पादयितुमसमर्था २५ अतोऽस्मद्योग्यं व्यष्टिदेहं सृजस्वेत्युक्तवत्य इत्याह—यस्मिन्निति । यद्यप्यस्मदादिव्यष्टिदेहं विनाऽपि चरुपुरोडाशादिहविरदनमस्ति तथाऽपि तदपि हविरदनं व्यष्टिदेवतादेहमन्तरा नास्तीति भावः । व्यष्टिदेहसृष्टिमाह—ताभ्य इति । मूर्छयित्वेति । निविडतया परस्परावयवसंयोजनेन सृष्ट्वेत्यर्थः । न योग्य इति । गोशरीरस्योपरिदन्तानामभावेन दूर्वादिमूलस्योत्खातुमशक्यत्वादित्यर्थः । अश्वमिति । तस्योभयतोदन्तत्वेनोक्तदोषाभावादित्यर्थः । न वै नोऽयमलमिति । अश्वस्यापि विवेकज्ञानाभावादयोग्यत्वादित्यर्थः । ३०

गवाश्वग्रहणस्य सर्वतिर्यग्देहोपलक्षकत्वमभिप्रेत्योक्तम्—सर्वेति । स्वयोनिभूतमिति । स्वयोनिभूतविराट्पुरुषदेहसजातीयमित्यर्थः । यस्मात्स्वकीयपरितोषद्योतकेन सुकृतं बतेत्यनेन शब्देन पुरुषदेहमुक्तवत्यस्तस्मात्तस्येदानीमपि सुकृतत्वमित्याह—तस्मादिति । स्वयं वेति । ईश्वरेण स्वेनैव कृतं भृत्यादिकृतापेक्षया सुकृतं सुष्ठु कृतमित्यर्थः । पृषोदरादित्वात्स्वयमितिस्थाने सुशब्द इत्यर्थः । एवं व्यष्टिदेहसृष्टिमुक्त्वा तत्र करणानां देवतानां च व्यष्टिरूपेण प्रवेशमाह—ता देवता इति । इष्टत्वे हेतुमाह—सर्वे हीति । आयतनमिति । गोलकरूपं स्थानमित्यर्थः । ३५

१. अत्र ब्रह्मसूत्रद्वितीयाध्यायचतुर्थपादे विचारितम्—किं प्रकृताः प्राणाः इन्द्रियाणि स्वमहिम्नैव स्वस्मै

**श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥**

५ **तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति। ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवतः ॥ ५ ॥**

**इति प्रथमाध्याये द्वितीयः खण्डः**

१० **मुखं प्राविशत्तथोक्तार्थमन्यत्। वायुर्नासिके आदित्योऽक्षिणी दिशः कर्णावोषधिवनस्पतयस्त्वचं चन्द्रमा हृदयं मृत्युर्नाभिमापः शिश्नं प्राविशन् ॥ ४ ॥**

**एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्यावशनायापिपासे तमीश्वरमब्रूतामुक्तवत्यावावाभ्यामधिष्ठानमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स ईश्वर एवमुक्तस्ते अशनायापिपासे अब्रवीत्। न हि युवयोर्भावरूपत्वाच्चेतनावद्वस्त्वनाश्रित्यान्नात्तृत्वं सम्भवति। तस्मादेतास्वेवाग्न्याद्यासु वां युवां देवतास्वध्यात्माधिदेवता-**
१५ **स्वाभजामि वृत्तिसंविभागेनानुगृह्णामि। एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षणः स्यात्तस्यास्तेनैव**

राज्ञोऽनुज्ञां प्रतिलभ्य बलाधिकृतादयः सेनापत्यादयो नगर्यां यथा प्रविशन्ति तद्वदीश्वरस्यानुज्ञां प्रतिलभ्याग्निः प्राविशदित्यन्वयः। यद्यपि वागभिमान्यग्निर्न तु वागेव तथाऽपि तस्य वाचं विना प्रत्यक्षमनुपलब्धेस्तस्या अपि देवतां विना स्वविषयग्रहणसामर्थ्याभावात्तयोरेकलोलीभावेनाभेदोक्तिरित्याह—**वागेवेति**। यद्यपि देवतानामेवेश्वरेण प्रवेशश्चोदितस्तथाऽपि करणैर्विना तासां साक्षाददनादिभोगासम्भवात्तेषामपि प्रवेशोऽर्थाच्चोदित एवेति
२० तेषामपि स उक्तः।

अशनायापिपासयोरपि व्यष्टिदेहेऽपि करणाधिष्ठातृदेवतासम्बन्धं वक्तुं तयोः प्रश्नमवतारयति—**एवमिति**। निरधिष्ठाने सत्याविति कारणीभूते विराड्देहेऽधिष्ठानविशेषो यदि स्यादशनायापिपासयोरग्न्यादीनां मुखादय इव तदा व्यष्टिदेहेऽपि तदेव स्यात्तयोरधिष्ठानं तेषामिव न त्वेतदस्ति। अतो निरधिष्ठाने ते इत्यर्थः। विधत्स्वेत्यनन्तरं यस्मिन्प्रतिष्ठिते अन्नमदावेति शेषः। तत्राधिष्ठानविशेषस्तावद्युवयोः कारणे समष्टिदेहेऽभावादिहापि नास्त्येव कारण-
२५ पूर्वकत्वात्कार्येऽप्यधिष्ठानस्यादनं तु युवयोर्धर्मरूपत्वाद्धर्मिणमनाश्रित्य धर्मस्य स्वातन्त्र्यायोगाच्चेतनावद्धर्मीभूतदेवतागतमेवान्नादनं युवयोरित्याह—**स ईश्वर इति**। **भावरूपत्वादिति**। धर्मरूपत्वादित्यर्थः। धर्मिणोऽप्यन्नेतनस्य भोक्तृत्वादर्शनाच्चेतनावद्वस्त्वित्युक्तम्। **अध्यात्मेति**। अध्यात्मदेवता व्यष्टिदेहगतदेवता अधिदेवताः समष्टिविराड्देहगता हृत्रिर्भृज्जोऽग्न्यादयः प्रसिद्धास्तास्वित्यर्थः। **वृत्तीति**। भोगैकदेशदानेनेत्यर्थः। एतदेव स्पष्टीकरोति। **एतासु भागिन्याविति**। साक्षाद्देवतासु भागवत्त्वायोगाद्देवताभागेन भागवत्त्वमंशवत्त्वमुक्तमिति व्याचष्टे—**यद्देवत्य**
३० **इति**। यद्देवत्यो यद्देवतासम्बन्धी यो भागः स्यात्तस्या देवतायाः सम्बन्धिना तेनैव भागेनेत्यर्थः। हविरादीत्यादिशब्देन तत्तदिन्द्रियविषयोऽपि गृह्यते। करोमीत्यनन्तरमुक्त्वेति शेषः। उक्तमर्थमिदानींतनव्यवहारेण दृढीकर्तुं

---

स्वस्मै कार्याय प्रभवन्ति उत तत्तदभिमानिदेवताधिष्ठिता प्रभवन्ति इति संदिह्य तेषां स्वकार्यशक्तियोगात् स्वमहिम्नैव प्रभवन्तीति प्राप्ते सिद्धान्तः—ज्योतिराद्यधिष्ठानं तु तदामननात् (ब्र. सू. २.४.१४) इति। अयमर्थः—ज्योतिरादिभिः अग्न्याद्यभिमानिदेवताभिः अधिष्ठितं वागादिकरणजातं स्वकार्येषु
३५ प्रवर्तते। तदामननात्। "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति। अग्नेश्चायं वाग्भावः मुखे प्रवेशश्च देवतात्मनोऽधिष्ठातृत्वमङ्गीकृत्योच्यते। देवतासम्बन्धं विना अग्नेर्वाचि सम्बन्धाभावात् मुखे प्रवेशस्य असम्भवदुक्तिकत्वाच्चेति।

**स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥**

**सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत। या वै सा मूर्तिरजायतान्नं वै तत् ॥ २ ॥**

भागेन भागिन्यौ भागवत्यौ वां करोमीति सृष्ट्यादावीश्वर एवं व्यदधाद्यस्मात्तस्मादिदानीमपि यस्यै कस्यै च देवतायै देवताया अर्थाय हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यावेव भागवत्यावेवास्यां देवतायामशनाया-पिपासे भवतः ॥ ५ ॥ ५

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतावैतरेयोपनिषद्भाष्ये
प्रथमाध्याये द्वितीयः खण्डः

स एवमीश्वर ईक्षत। कथम्? इमे नु लोकाश्च लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः। अतो नैषां स्थितिरन्नमन्तरेण तस्मादन्नमेभ्यो लोकपालेभ्यः सृजै सृज इति। एवं हि लोक ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु तद्वन्महेश्वरस्यापि सर्वेश्वरत्वात्सर्वान्प्रति निग्रहानुग्रहेऽपि स्वातन्त्र्यमेव ॥ १ ॥ १०

स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्वोक्ता अप उद्दिश्याभ्यतपत्। ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्तिर्घनरूपं धारणसमर्थं चराचरलक्षणमजायतोत्पन्नमन्नं वै तन्मूर्तिरूपं या वै सा मूर्तिरजायत ॥ २ ॥

तस्मादित्यादिवाक्यं तद्व्याचष्टे—यस्मादिति। यस्मात्सृष्ट्यादावेवं व्यदधात्तस्मादित्यर्थः। हविर्ग्रहणमुपलक्षणमधि-दैवतं हविर्गृह्यतेऽध्यात्मदेवतायै शब्दादिविषयो गृह्यत इति योज्यम्। भागिन्यावेवेति। यद्यपि शब्दादिविषयेण हविषा चाग्न्यादिदेवतातृप्तौ तयोर्नाश एव दृश्यते न तु तद्भागेन भागित्वं तथाऽपि तयोः सर्वात्मना नाशे पुनः १५ कालान्तरे ते न स्याताम्। अतः स्वरूपेण स्थितयोरेव तयोः कदाचिदिन्द्रियदेवतानां विषयोन्मुखतया प्रेरकत्वरूपं कार्योन्मुख्यं कदाचित्तदभावरूपोपशान्तिरित्यभ्युपगन्तव्यम्। तथा च हविषा देवतातृप्तावशनायापिपासयोरपि तृप्तिरुपशान्तिर्दृश्यत इति तद्भागेन भागवत्त्वमुक्तमित्यर्थः। न च चक्षुरादिना रूपादिग्रहणदशायामशनायापिपासयोर्न शान्तिर्दृश्यत इति न सर्वत्र भागवत्त्वं तयोरिति शङ्क्यम्। क्षुत्पिपासार्तस्यान्नपानदर्शनश्रवणादिनाऽन्नपानप्रत्यासत्ति-परितोषेण मनसि तृष्णा शान्तेव भाति। न तु यथापूर्वं बाधत इति चक्षुरादिष्वपि तयोर्भागवत्त्वमित्युक्तं २० सात्प्रणीयदीपिकायाम्। वस्तुतस्त्वशनायापिपासाशब्देनेन्द्रियाणां स्वस्वविषयगोचरौ तृष्णाकामावुच्येते। अन्नमदा-मेत्यत्राप्यन्नादनं स्वस्वविषयग्रहणमेव चक्षुरादीन्द्रियदेवतानां मुख्यादनासम्भवात्। तथा च रूपादिविषयग्रहणेन तत्तद्विषयगोचरयोस्तयोः शान्तिरस्तीति सर्वेन्द्रियेष्वपि तयोर्भागवत्त्वं युक्तमिति। न चेन्द्रियदेवतातृप्तिव्यतिरेकेण न तयोः पृथक्तृप्तिर्दृश्यत इति वाच्यम्। इन्द्रियदेवतानां स्वस्वविषयोन्मुखतया प्रेरकत्वरूपकार्योन्मुख्यनिवृत्तिरूपोप-शान्तिरेव पृथक्तयोस्तृप्तिरस्तीत्युक्तत्वात्। यद्यप्यर्णवप्रवेशनमशनायादिमत्त्वं तन्निमित्तमन्नादनमित्यादि सर्वं कार्य- २५ करणसङ्घातपञ्जराध्यक्षस्य जीवस्य भोक्तुरेव नेन्द्रियदेवतानामशनायापिपासादि तथाऽपि तस्य वस्तुतोऽभोक्तृ-ब्रह्मभूतस्य स्वतो भोक्तृत्वायोगादिन्द्रियदेवताद्युपाधिकृतमेव तस्य भोक्तृत्वादिसर्वसंसार इति वक्तुं तेष्वेव तमारोप्य श्रुत्योच्यत इति न दोषः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां
प्रथमाध्याये द्वितीयः खण्डः ३०

एवं भोगसाधनसृष्टिमुक्त्वा भोग्यसृष्टिं वक्तुमारभते—स एवमिति। नुशब्दोक्तं वितर्कं स्पष्टीकरोति—लोका इत्यादिना। पूर्ववल्लोकलोकपालप्रार्थनां विना स्वयमेवान्नं स्रष्टुं वितर्कितवानित्युक्तेः प्रयोजनमीश्वरत्व-ज्ञापनमित्याह—एवं हीति।

अप इति। पञ्चभूतानीत्यर्थः। अभ्यतपदिति। एतेभ्यो भूतेभ्यो मनुष्यादीनामन्नभूता व्रीह्यादयो जायन्तां मार्जारादीनामन्नभूतानि मूषकादीनि जायन्तामिति पर्यालोचनं सङ्कल्पं कृतवानित्यर्थः। मूर्तिशब्देन करचरणादि- ३५ मतोऽभिधाने व्रीह्यादेरग्रहणं स्यादत आह—घनरूपमिति। कठिनमित्यर्थः। नन्वमूर्तानामपि वायुचन्द्रकिरणादीनां

तदेनत्सृष्टं पराङत्यजिघांसत्तद्वाचाऽजिघृक्षत्
तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥३॥
तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥४॥
तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाऽग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥५॥
५ तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥६॥
तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥७॥
तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥८॥
तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥९॥
तदपानेनाजिघृक्षत्तदावयत् सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥१०॥

१० तदेनदन्नं लोकलोकपालानामर्थेऽभिमुखे सृष्टं तद्यथा मूषकादिर्मार्जारादिगोचरे सन्मम मृत्युरन्नाद इति मत्वा परागञ्चतीति पराङ्सदत्तूनतीत्याजिघांसदतिगन्तुमैच्छत्पलायितुं प्रारभतेत्यर्थः। तमन्नाभिप्रायं मत्वा स लोकलोकपालसङ्घातः कार्यकारणलक्षणः पिण्डः प्रथमजत्वादन्यांश्चान्नादानपश्यंस्तदन्नं वाचा वदनव्यापारेणाजिघृक्षद्ग्रहीतुमैच्छत्तदन्नं नाशक्नोन्न समर्थोऽभवद्वाचा वदनक्रियया ग्रहीतुमुपादातुम्। स प्रथमजः शरीरी यद्यदि हैनद्वाचाऽग्रहैष्यद्गृहीतवान्स्यात्सर्वोऽपि लोकस्तत्कार्यभूतत्वादन्नमभिव्याहृत्य हैवान्नमत्रप्स्यत्तृप्तोऽभविष्यत्। न चैतदस्त्यतो १५ नाशक्नोद्वाचा ग्रहीतुमित्यवगच्छामः पूर्वजोऽपि ॥ ३ ॥

समानमुत्तरम्। तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन्पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत्तदावयत्तदन्नमेवं जग्राहाशितवान्। तेन स एषोऽपानवायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत्। यद्वायुर्यो वायुरन्नायुरन्नबन्धनोऽन्नजीवनो वै प्रसिद्धं स एष यो वायुः ॥ ४-१० ॥

सर्पादीन्प्रत्यन्नत्वमस्तीति तत्संग्रहार्थमाह—धारणसमर्थं चेति। शरीरधारणसमर्थमित्यर्थः। चरेति। चरं मूषकाद्य-२० चरं व्रीह्यादीत्यर्थः। या वै सा मूर्तिरजायतान्नं वै तदिति पूर्वेणान्वयः। तच्छब्दार्थमाह—मूर्तिरूपमिति।

शब्दादिभोक्तृत्वमिन्द्रियदेवतोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तेषां शब्दादिभोगमुक्त्वेदानीमन्नपानभोक्तृत्वमप्यपानवृत्तिमत्प्राणोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तस्याभोक्तृत्वं परिशेषान्निर्धारयितुमाह—तदेनदिति। सृष्टं तत्पराङ्सदत्यजिघांसदित्यन्वयः। उक्तार्थे दृष्टान्तमाह—यथेति। पराङ्पदं व्युत्पादयति—परागञ्चतीति। मत्वेत्यनन्तरं परागञ्चति तद्वदिति शेषः। अतिगन्तुमैच्छदिति। यद्यपि व्रीह्याद्यचेतनान्नस्य २५ नैवमिच्छा सम्भवति तथाऽपि भोक्तृशरीरान्तनं प्रविष्टं किन्तु बहिरेव स्थितमित्यत्र तात्पर्यम्। कार्यकरणलक्षणः पिण्डस्तदन्नं वाचाऽजिघृक्षदित्यन्वयः। नन्विदानीमिव प्रथममेवापानेनैवान्नजिघृक्षा तस्य किमिति नाऽऽसीदित्याशङ्क्य तस्येदानींतनशरीरापेक्षया प्रथमजत्वात्तदानीं चापानेनान्नादत्वस्यानिश्चयात्तस्य वागादिनाऽन्नजिघृक्षा युक्तेत्याह—प्रथमजत्वादिति। अस्मदाद्यपेक्षयेत्यर्थः। यस्मिन्प्रतिष्ठिता अन्नमदामेत्युपक्रान्तस्य व्यष्टिशरीरस्य समष्टिपिण्डापेक्षया प्रथमजत्वाभावादपश्यन्नजानन्नित्यर्थः। वदनक्रियया प्रथमजस्य पिण्डस्य कारणस्यान्नग्रहणा-३० सामर्थ्यं कार्यगतासामर्थ्येन द्रढयति—स प्रथमज इति। अत्र प्रथममन्नपदं गृहीतवान्स्यादित्यत्र कर्मत्वेन सम्बध्यते। तत्कार्यभूतत्वादिति। तदनन्तरभूतत्वादित्यर्थः। इदानींतनशरीरस्य पूर्वकालीनव्यष्टिशरीरकार्यत्वाभावादिति। अभिव्याहृत्येति। वाचकशब्देनाभिधायेत्यर्थः। पूर्वजोऽपीत्यस्य नाशक्नोदिति पूर्वेणान्वयः।

प्राणेन घ्राणेनाभिप्राण्याऽऽघ्रायेत्यर्थः। अपानेनेति। मुखच्छिद्रेणान्तर्गच्छता वायुनेत्यर्थः। अन्नात्तृत्वमपि श्वसनवृत्तिमतः प्राणस्य धर्मो नाऽऽत्मनः स्वत इत्येतत्तदेनत्सृष्टं पराङित्यादिनोक्तं सन्दर्भस्य प्रयोजनमुपसंहरति—३५ तेन स एष इति। येन कारणेनापानेनान्नमशितवांस्तेनेत्यर्थः। अपानवृत्तिमतः प्राणस्यान्नग्राहकत्वं प्रसिद्ध्या दृढीकर्तुमन्नायुरिति वाक्यं व्याचष्टे—अन्नायुरिति। अन्नमदामेत्यादिश्रुत्यन्तरे प्राणस्यान्नयुष्ट्वं प्रसिद्धमित्यर्थः।

**स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति। स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥११॥**

स एवं लोकलोकपालसङ्घातस्थितिमन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थितिसमां स्वामीवेक्षत—कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्यकरणसङ्घातकार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात्परार्थं सत्। यदि वाचाऽभिव्याहृतमित्यादि, केवलमेव वाग्व्यवहरणादि, तन्निरर्थकं न कथञ्चन भवेद्बलिस्तुत्यादिवत्। पौरबन्धादिभिः प्रयुज्यमानं स्वाम्यर्थं सत्तत्स्वामिनमन्तरेणासत्येव स्वामिनि तद्वत्। तस्मान्मया परेण स्वामिनाऽधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा। यदि नामैतत्संहत-कार्यस्य परार्थत्वं परमर्थिनं मां चेतनमन्तरेण भवेत्पुरपौरकार्यमिव तत्स्वामिनम्। अथ कोऽहं किंस्वरूपः कस्य वा स्वामी? यद्यहं कार्यकरणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेय, राजेव पुरमाविश्याधिकृतपुरुष-कृताकृतावेक्षणम्, न कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत्। विपर्यये तु, योऽयं वागाद्यभिव्याहृतादीदमिति

एवं भोगादिकरणभूतानां लोकानां भोगायतनस्य समष्टिव्यष्टिशरीरस्य भोगोपकरणानां वागादीनां समष्टिशरीरे लोकपालत्वेन व्यष्टिशरीरे करणाधिष्ठातृत्वेन च स्थितानां देवतानां भोगे प्रेरकयोरशनायापिपास-योस्तत्प्रयुक्तस्य करणनिष्ठस्य शब्दादिविषयग्रहणलक्षणस्य भोगस्यापानवृत्तिमत्प्राणनिष्ठस्यान्नपानग्रहणलक्षणस्य च भोगस्याऽऽत्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधायेदानीं संसारिणं भोक्तारं दर्शयितुं स्रष्टुरीश्वरस्य विचारं दर्शयितुं स ईक्षतेति वाक्यं तद्व्याचष्टे—स एवमिति। पुरस्य पौराणां पुरवासिनां तत्पालयितॄणां राजनियुक्ताधिकारिणां स्थितिसमां तत्तुल्यामन्ननिमित्तामन्नाधीनां सङ्घातस्थितिं कृत्वेत्यन्वयः। लोकादीन्सृष्ट्वेत्यपि द्रष्टव्यम्। कृत्वेत्युपलक्षणं पदार्थानुक्त्वा वाक्यार्थमाह—यदिदमिति। वक्ष्यमाणमिति। वाचाऽभिव्याहृतमित्यादिना वक्ष्यमाणमभिव्याहरणादिक-मित्यर्थः। हेतुगर्भितमिदं शब्दार्थस्य विशेषणम्। परार्थं सदिति। परार्थत्वात्परमर्थिनं मामृते कथं स्यादित्यस्यैवार्थस्य कथंशब्दसूचितं व्यतिरेकमाह—यदीति। केवलं भोक्तृरहितव्यवहरणादि तत्तन्न कथञ्चन भवेत्कथञ्चिदपि न भवेदित्यन्वयः। तत्र हेतुः—निरर्थकमिति। अर्थयत इत्यर्थः। पचाद्यच् अर्थयिता पुरुषस्तद्रहितमित्यर्थः। अर्थयिता हि पुरुषः स्वस्य प्रयोजनसिद्ध्यर्थं वागादिकं प्रेरयति। तदभावे प्रेरकाभावाद्वाग्व्यवहारादिकं न भवेदित्यर्थः। यद्वाऽर्थः प्रयोजनमर्थिनोऽभावे तस्यार्थत्वाभावान्निष्प्रयोजनं सत्तन्न भवेत्प्रयोजनप्रयुक्तत्वात्सर्वप्रवृत्तेरिति। तत्र दृष्टान्तः—बलिस्तुत्यादिवदिति। एतदेव विवृणोति—पौरेति। अत्र यथाशब्दो द्रष्टव्यः। यथा पौरादिभिः प्रयुज्यमानं बलिस्तुत्यादिकं स्वामिनमन्तरेण न भवेत्तद्वदित्यन्वयः। स्वामिनमन्तरेणेति। अस्य व्याख्यानमसत्येवेति। विचारस्य फलमाह—तस्मादिति। परेणार्थादन्येन स्वामिनाऽर्थिना वागादिव्यवहारकृतोपकारभाजाऽधिष्ठात्रा वागादि-प्रेरकेण। अधिष्ठातृत्वं चायस्कान्तवच्चेतनस्य सन्निधानमात्रमेव साक्षितया न व्यापार इत्याह—कृतेति। कृताकृत-योस्तत्फलस्य चेत्यर्थः। फलसाक्षित्वमेव भोक्तृत्वमपीत्याह—भोक्त्रेति। राज्ञेत्यस्येतिपदाध्याहारेणेक्षतेति पूर्वेणान्वयः।

एवं वाग्व्यवहरणादिकार्यसिद्ध्यर्थं मया प्रवेष्टव्यमित्युक्त्वाऽऽत्मस्वरूपबोधार्थं च मया प्रवेष्टव्यमिति वक्तुं स ईक्षत यदि वाचाऽभिव्याहृतमित्याद्यथ कोऽहमित्यन्तं वाक्यं तत्प्रवेशप्रयोजनकथनार्थत्वेन कथं न्विदमितिवाक्यतुल्यत्वात्स ईक्षत कतरेणेति वाक्येन व्यवहितमपीहैवाऽऽकृष्य व्याचष्टे—यदि नामेति। संहतस्य वागादिलक्षणस्य कार्यस्य परार्थत्वं परोपकाररूपाभिव्याहरणादिकारित्वं परार्थिनमुपकारभाजमन्तरेण भवेदित्यर्थः। अनेन यदि वाचैव केवलयाऽभिव्याहृतं भवेदित्येवकाराध्याहारेण वाक्यं योजितम्। एवमुत्तरत्रापि यदि प्राणेनैवाभिप्राणितं भवेदित्यादि द्रष्टव्यम्। अभिप्राणितमाघ्रातमभ्यपानितमन्तर्गतं भक्षितमित्यर्थः। उक्तमेव वाक्यार्थं स्पष्टीकरोति—यद्यहमित्यादिना। अयं सन्निति। अयमात्माऽस्ति स चैवंरूपश्चेति नाधिगच्छेदित्यर्थः। अप्रवेशे स्वस्याधिगमो न स्यादित्युक्त्वा प्रवेशे तु सोऽस्तीति प्रवेशफलमाह—विपर्यये त्विति। प्रविश्याभि-व्याहृताद्युपलम्भे त्वित्यर्थः। वेदनरूपः संश्चेत्यधिगन्तव्योऽहं स्यामित्यन्वयः। वेदनरूपत्वमुपपादयति—योऽयमिति। योऽयं वागाद्यभिव्याहृतादि वेद स वेदनरूप इत्यधिगन्तव्यः स्यामित्यन्वयः। न च वेदितुः कथं वेदनरूपत्वमिति

**स एतमेव सीमानं [1]विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् ।**

**वेद स सन्वेदनरूपश्चेत्यधिगन्तव्योऽहं स्याम् । यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि । यथा स्तम्भकुडचादीनां प्रासादादिसंहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदिति । एवमीक्षित्वाऽतः कतरेण प्रपद्या इति । प्रपदं च मूर्धा चास्य सङ्घातस्य प्रवेशमार्गावनयोः कतरेण मार्गेणेदं कार्यकारणसङ्घातलक्षणं पुरं प्रपद्ये प्रपद्येयमिति(द्येयेति) ॥ ११ ॥**

५ **एवमीक्षित्वा न तावन्मद्भृत्यस्य प्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गेण प्रपदाभ्यामधः प्रपद्ये ।**

वाच्यम् । वेदितुरवेदनरूपत्वे तस्य वेदनान्तरकर्मत्वं वाच्यम् । तस्मिन्वेदने वेदितैव कर्ता चेदेकस्मिन्वेदितरि कर्तृत्वं कर्मत्वं च विरुद्धं प्रसज्येत । अन्यो वेदिता कर्ता चेत्तस्याप्यन्यो वेदितेत्यनवस्था स्यादिति वेदितुर्वेदनरूपत्वं सिध्यति । अत एव श्रुत्यन्तरे यो वेदेदं जिघ्राणीति स आत्मेति घ्रातृघ्रेयघ्राणवेदनस्याऽऽत्मत्वमुक्तमिति भावः । तस्य वेदनरूपत्वे प्रमाणमुक्त्वाऽस्तित्वे प्रमाणमाह—**यदर्थमिति** । संहतानां वागादीनामभिव्याहृतादि यदर्थं सोऽन्यो १० वागादिभिरसंहतः संश्चेत्यधिगन्तव्य इति पूर्वेणान्वयः । संहतानामसंहतपरार्थत्वे दृष्टान्तमाह—**यथेति** । एतदुक्तं भवति । वागाद्यभिव्याहृतादि स्वासंहतपरार्थं भवितुमर्हति । संहतत्वात्कुड्यादिवत्प्रासादादिवच्चेति । तद्वदित्यनन्तर श्रुतिगतं स ईक्षतेति पदं द्रष्टव्यम् । भाष्ये तु स्पष्टतया त्यक्तम् । प्रयोजनद्वयवशात्प्रवेशस्य कर्तव्यत्वे सिद्धे प्रवेश-द्वारस्य विचारस्यावसर इतीदानीं स ईक्षत कतरेणेति वाक्यं व्याचष्टे—**एवमीक्षित्वेति** । **अत इति** । यतः प्रवेशस्य वागादिव्यवहारसिद्धिर्मत्स्वरूपबोधश्चेति प्रयोजनद्वयसिद्धयर्थं कर्तव्यत्वमत इत्यर्थः । अन्तरिति पाठे शरीरस्यान्तः १५ प्रपद्या इत्यन्वयः । कतरेणेति पदं गृहीत्वा तद्व्याख्यातुं मार्गद्वयं दर्शयति—**प्रपदं चेति** । इदानीं गृहीतं पदं व्याख्याति—**अनयोः कतरेणेति** । प्रपद्या इत्यनन्तरं श्रौतं स ईक्षतेति पदं द्रष्टव्यम् ।

अनन्तरं स ईक्षत यदि वाचेत्यादिवाक्यं पूर्वमेव व्याख्यातमिति तदुत्तरं स एतमेव सीमानमिति वाक्यं व्याख्यातुं तदपेक्षितमाह—**एवमीक्षित्वेति** । पर्यालोच्येत्यर्थः । भृत्यस्य प्रवेशमार्गेण स्वामिनः प्रवेशोऽनुचित इत्यनेनैव मार्गेण प्रवेशं निश्चितवानित्याह—**न तावदिति**। **अस्येति**। पिण्डस्येत्यर्थः। प्रपद्येयमित्यनन्तरं निश्चित्येति

---

२० १. अत्र परेषां व्याख्या—"एतया द्वारा प्रापद्यत" इत्यत्र स्रष्टा परमात्मा जीवशरीरकतया प्राविशत् । "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्याद्यनुसारादिति, तन्न । प्रवेशश्रुतिः तैत्तिरीयके "तत्सृष्ट्वा तदेवानुप्राविशत्" तथा बृहदारण्यकप्रथमे "स एष इह प्रविष्टः" ऐतरेयके च "एतया द्वारा प्रापद्यत" इति त्रिषु स्थलेषु दृष्टा स्पष्टमीश्वरस्यैव प्रवेशमाचष्टे पृथक् जीवप्रवेशः कुत्रापि न श्रूयते । तेन ईश्वर एव जीवरूपेण प्रविष्टः इति व्याख्यातम् "अनेन जीवेनात्मनानुप्रविश्य" इति छान्दोग्य-
२५ श्रुतिरपि जीवरूपेणेत्यर्थे सुलभयोजना वर्तते । तत्र "आत्मना" इत्युक्तेः स्वस्वरूपाभिन्नेनेत्यर्थः । "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिश्रुत्यनुसारेण जीवब्रह्माभेदस्य ज्ञानादित्यर्थः ।

परमते तु शरीरवाचकपदानां शरीरिपरत्वपरिभाषामभ्युपगम्यापि इयं न व्याख्यातुं शक्या । अत्र प्रवेष्टृशरीरिवाचकस्य शरीरपरत्वायोगात् । पृथक् जीवप्रवेशस्य कुत्राप्यनुक्तत्वात् । परमात्मनः पूर्वमेव शरीरस्थत्वात् जीवशरीरकप्रवेशस्य जीवप्रवेशे पर्यवसानादिति तात्पर्यवर्णनमपि न शोभनं,
३० "जीवेनात्मना" इति श्रुतेः जीवरूपेण प्रवेश इत्यर्थकत्वात् जीवशरीरक इति कथमपि व्याख्यातुमशक्यत्वात् । समानकर्तृकत्वे क्त्वास्मरणाच्च प्रकृते तद्विरोधः ।

तस्मान्मुख्यार्थ एवैताः श्रुतीर्व्याकुर्वते सते । भगवत्पादसंज्ञाय गुरवेऽस्तु नमस्सदा ॥

माध्वमते—मूर्धन्यनाड्या ब्रह्मवायुसमन्वितः नारायणः शरीरे प्रविवेश । पुनः रूपान्तरेण प्रपदाभ्यां प्रविवेश । तस्य अक्षिकण्ठं हृत् इति त्रयः आवसथाः एते च स्वप्नाः स्वयं विष्णुना आप्तत्वात् त्रिषु
३५ स्थानेषु अनिरुद्धादिरूपेण नारायणो वर्तते । स च जीवस्य अवस्थात्रयदाता । अत्र प्रपदाभ्यां प्राणः प्रविष्ट इति पूर्वं मूल एवोक्तमिति तदंशे मूलविरोधः । यदि नारायणः शरीरे प्रविष्टः तस्यैव जागराद्यवस्थाः तद्वांश्च जीवः तर्हि स एवेति स्पष्टम् । तथा चानिरुद्धादीनामत्र न प्रसक्तिः । स्वप्न-शब्दस्य रूढ्यर्थपरित्यागो महान् दोषः । स जातो भूतानि व्यैख्यत् मत्स्यादिरूपेण अपश्यत् किमिहान्यं

[1]तस्य त्रय आवसथास्त्रयः स्वप्नाः, अयमावसथोऽयमावसथोऽयमावसथ इति ॥१२॥

किं तर्हि, पारिशेष्यादस्य मूर्धानं विदार्य प्रपद्येयमिति लोक इवेक्षितकारो स स्रष्टेश्वरः एतमेव मूर्धसीमानं केशविभागावसानं विदार्य छिद्रं कृत्वैतया द्वारा मार्गेणेमं लोकं कार्यकारणसङ्घातं प्रापद्यत प्रविवेश।

सेयं हि प्रसिद्धा द्वाः। मूर्ध्नि तैलादिधारणकाले तद्रसादिसंवेदनात्। सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नाऽऽनन्दहेतूनि। इदं तु ५ द्वारं परमेश्वरस्यैव केवलस्येति तदेतन्नान्दनं नन्दनमेव नान्दनमिति दैर्घ्यं छान्दसम्। नन्दत्यनेन द्वारेण गत्वा परस्मिन्ब्रह्मणीति।

तस्यैवं सृष्ट्वा प्रविष्टस्य जीवेनाऽऽत्मना राज्ञ इव पुरं त्रय आवसथाः—जागरितकाल इन्द्रियस्थानं दक्षिणं चक्षुः। स्वप्नकालेऽन्तर्मनः। सुषुप्तिकाले हृदयाकाश इत्येतद्वक्ष्यमाणा वा त्रय आवसथाः। पितृशरीरं मातृगर्भाशयः

शेषः। एवमपेक्षितमुक्त्वा स एतमिति वाक्यं व्याचष्टे—इति लोक इवेति। एवमोक्षित्वा मूर्धानं विदार्य १० प्रपद्येयमिति निश्चित्येमं सङ्घातं प्रापद्यतेत्यन्वयः।

ननु नव वै पुरुषे प्राणाः सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ। नवद्वारे पुरे देहीत्यादिषु द्वारनवकं प्रसिद्धं न तु मूर्धनि द्वारान्तरमित्याशङ्क्य प्रत्यक्षत"स्तयोर्ध्वमायन्नमृतत्वमेती"ति श्रुतितश्च तस्य द्वारस्य प्रसिद्धेर्नैवमिति वक्तुं सैषेति वाक्यं तद्व्याचष्टे—सेयमिति। प्रत्यक्षतः प्रसिद्धिं सैषेति पदाभ्यां दर्शयति—मूर्ध्नीति। मूर्धनि चिरं विषवृक्षतैलादिधारणकाले तिक्तादितद्रससंवेदनं दृश्यत इति सा द्वाः प्रत्यक्षतः प्रसिद्धेत्यर्थः। न केवलं द्वारः १५ प्रत्यक्षत एव प्रसिद्धिः किन्तु तस्या विद्रतिरिति नाम्नाऽपि प्रसिद्धिरित्याह—विदृतिरिति। अनेनेश्वरेण स्वप्रवेशार्थमसाधारणतया विदारितत्वान्न भृत्यस्थानीयचक्षुरादिप्रवेशद्वारैः सह नव वै पुरुषे प्राणा इत्यादिपूर्वोक्तश्रुतिषु परिगणितमित्युक्तम्। श्रौतप्रसिद्धिं वक्तुं तदेतन्नान्दनमिति वाक्यं तत्रैतदेव नान्दनं नान्यानीत्युक्तमिति कृत्वा व्याचष्टे—इतराणि त्विति। समृद्धीनीति। सम्यगृद्धिरानन्दो येषु तानीति विग्रहः। हेतुशब्दं भावप्रधानं स्वीकृत्याऽऽनन्दं प्रति हेतुत्वं येषामिति बहुव्रीहिणा हेतूनीति नपुंसकत्वं द्रष्टव्यम्। नन्दत्यनेन द्वारेण गत्वेति। अनेन तयोर्ध्वमायन्न- २० मृतत्वमेतीति श्रुतौ प्रसिद्धिर्दर्शिता।

ईश्वरस्यैवं प्रवेशमुक्त्वा तस्य पूर्वोक्तकार्यकरणसङ्घातोपाधिकं संसारमाह—तस्येति। एवं पुरं सृष्ट्वा जीवेनाऽऽत्मना प्रविष्टस्य तस्य राज्ञ इव त्रय आवसथाः क्रीडास्थानानीत्यन्वयः। तान्येवाऽऽह—जागरितेति। चक्षुरिति। चक्षुर्गोलकमित्यर्थः। मन इति। मनसोऽधिकरणं कण्ठस्थानमित्यर्थः। कण्ठे स्वप्नं समादिशेदिति श्रुतेः। हृदयाकाश इति। हृदयावच्छिन्नभूताकाश इत्यर्थः। यद्यपि ब्रह्मण्येव सुषुप्तौ जीवो वर्तते सता सोम्य तदा २५ सम्पन्न इति श्रुतेस्तथाऽपि ब्रह्मणोऽपि हृदयाकाशेऽवस्थानात्तत्सम्पन्नोऽपि तत्रैव वर्तत इति तथोक्तम्। अन्यथा हृदयाकाशशब्देनैव दहराधिकरणन्यायेन ब्रह्माभिधाने तस्य त्रयः स्वप्ना इति वक्ष्यमाणस्वप्नतुल्यत्वानुपपत्तिरित्यत

---

वावदिषत् असुरनिहन्त्.रं भूतेषु चेष्टाप्रदं मदन्यं कं वदिष्यति" इति मत्वा भूमौ प्रादुर्भूतः प्रेरणेच्छया जीवेषु प्रविष्टः "स एतमेव स्वरूपं ततमं अवतारगमपश्यत्" इति। एतत्सर्वमौपनिषदमुख्यार्थविरुद्धम्। "अभिव्यैख्यत्" इत्यस्य अपश्यत् इति अशब्दार्थत्वम्। भूमौ प्रादुर्भूत इत्यध्याहार- ३० कल्पनमधिकम् "एतदेवावतारमि"ति अवतारस्याप्रकृतत्वात् न समञ्जसं, स्वयमेवावतरणात् अन्यस्याप्रसक्तेः एतद्वाक्यवैयर्थ्यं च। अत एव प्लुतिसूचितमाश्चर्यं च अकाण्डताण्डवायितम्।

१. "तस्य त्रय आवसथास्त्रयः स्वप्ना" इत्यनेन जाग्रदवस्थाया अपि स्वप्नत्वमुक्तम्। ततश्च जागरितोपलभ्यमानपदार्थानामपि मिथ्यात्वमुक्तं भवति। यत्तु परिष्कारकृता स्वप्नार्थानां मिथ्यात्वेऽपि स्वप्नज्ञानं सत्यमेवेति। तत्र केवलज्ञानसत्यत्वेऽपि मिथ्यास्वप्नार्थविशिष्टरूपेण मिथ्यात्वात्। अपि च स्वप्न- ३५ सादृश्येन जागरितज्ञानसत्यत्वं स्वप्नार्थसादृश्येन जागरितोपलब्धार्थमिथ्यात्वं च भवतैवाङ्गीकृतं भवति। ज्ञानसत्यत्वं विषयमिथ्यात्वं च योगाचारमतं त्वयैवाभ्युपगतम्। अपि च ज्ञानसत्यत्वे "सत्यं ज्ञानमि"ति श्रुत्या ब्रह्मसत्यत्वं स्वीकृतं जगन्मिथ्यात्वं चेति वेदान्तिमतप्रवेशः।

**स जातो भूतान्यभिव्यैख्यत् [1]किमिहान्यं वावदिषदिति।**
**[2]स एतमेव पुरुषं ब्रह्म ततममपश्यत्। इदमदर्शमिती३ ॥१३॥**

स्वप्न शरीरमिति। त्रयः स्वप्ना जाग्रत्स्वप्नसुषुप्त्याख्याः। ननु जागरितं प्रबोधरूपत्वान्न स्वप्नः। नैवम्। स्वप्न एव। कथम्? परमार्थस्वात्मप्रबोधाभावात्स्वप्नवदसद्वस्तुदर्शनाच्च। अयमेवाऽऽवसथश्चक्षुर्दक्षिणं प्रथमः। मनोऽन्तरं
५ द्वितीयः। हृदयाकाशस्तृतीयः। अयमावसथ इत्युक्तानुकीर्तनमेव तेषु ह्ययमावसथेषु पर्यायेणाऽऽत्मभावेन वर्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यतेऽनेकशतसहस्रानर्थसन्निपातजदुःखमुद्गराभिघातानुभवैरपि ॥१२॥

स जातः शरीरे प्रविष्टो जीवात्मना भूतान्यभिव्यैख्यद्व्याकरोत्। स कदाचित्परमकारुणिकेनाऽऽचार्येणाऽऽत्म-

एव पक्षान्तरमाह—वक्ष्यमाणा वेति। तानेवाऽऽह—पितृशरीरमिति। नन्वात्मा वा इदमेक एवेत्यद्वितीयत्वेनोक्तस्य कथमावसथयोग इत्याशङ्क्याऽऽवसथानां मृषात्वान्न पारमार्थिकाद्वितीयत्वायोग इति वक्तुं त्रयः स्वप्ना इत्युक्तं
१० तद्व्याचष्टे—त्रयः स्वप्ना इति। स्वप्नतुल्या इत्यर्थः। जाग्रदित्युपलक्षणं पित्रादिशरीरत्रयं चेत्यपि द्रष्टव्यम्। तेषां स्वप्नतुल्यत्वं नास्तीति शङ्कते—नन्विति। अत्रापि शरीरत्रयमित्युपलक्षितं तत्प्रबोधस्य स्वप्नप्रबोधतुल्यत्वात्स्वप्नत्व-मेवेत्याह—नैवमिति। तथा प्रसिद्धिर्नास्तीति शङ्कते—कथमिति। अविवेकिनां तथा प्रसिद्ध्यभावेऽपि विवेकिनां तल्लक्षणज्ञत्वात्तथा प्रसिद्धिरस्तीत्याह—परमार्थेति। वस्तुतत्त्वतिरोधानेनासद्वस्तुप्रतिभासः स्वप्न इति तल्लक्षणम्। जागरितमपि तथाभूतमेव ब्रह्मस्वरूपतिरोधानादविद्यमानजगत्प्रतीतेश्चेत्यर्थः। अन्तरं यन्मनस्तद्द्वितीय आवसथ
१५ इत्यन्वयः। अयमावसथ इत्यादिनाऽर्थान्तरं नोच्यते। प्रासादभूमिकावदुपर्यधोभावेन स्थिता एव चक्षुरादयोऽङ्गुल्या निर्दिश्य प्रदर्श्यन्ते बाह्यावसथभ्रान्तिवारणायेत्याह—अयमावसथ इत्युक्तानुकीर्तनमेवेति। नन्वावसथशब्दस्य गृह-विशेषवाचिनः कथमक्ष्यादिषु प्रयोग इत्याशङ्क्याऽऽवसथस्थस्येवैषु स्थितस्य दीर्घनिद्रादर्शनात्तेषु सुखं सुप्तस्येव शीघ्रप्रबोधादर्शनाद्गौण्या वृत्त्याऽऽवसथत्वमाह—तेषु ह्ययमिति। स्वाभाविक्याऽविद्ययेत्यन्वयः अनुभवैरित्यनन्तर-मित्येत आवसथा उच्यन्त इति शेषः।
२० ननु जागरितादिकं भूतकार्यस्य कार्यकारणसङ्घातस्य धर्मो न त्वात्मनः। तद्भिन्नस्यापि तस्मिंस्तादात्म्या-भिमानात्तद्धर्मवत्त्वमिति वक्तुं स जात इति वाक्यं तद्व्याचष्टे—स जात इति। भूतान्येवाऽऽभिमुख्येन तादात्म्येन व्याकरोद्व्यक्तं ज्ञातवानुक्तवांश्च मनुष्योऽहं काणोऽहं सुख्यहमित्यादिप्रकारेणेत्यर्थः। तथा च श्रुत्यन्तरम्—"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ननु व्यतिरिक्तात्मज्ञाने सति कथमुक्ततादात्म्यभ्रम इत्याशङ्क्याऽऽह श्रुतिः—किमिहान्यमिति। इहास्मिञ्शरीरेऽन्यं व्यतिरिक्तमात्मानं वावदिषत्किमिति काक्वा
२५ नोक्तवानित्यर्थः। न ज्ञातवानित्यपि द्रष्टव्यम्। इतिशब्दो यस्मादित्यर्थे यस्मादेवं तस्मादभिव्यैख्यदित्यध्यारोप-प्रकरणसमाप्त्यर्थो वा। इदं वाक्यं भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात्पतितं वा।

एवमध्यारोपं प्रदर्श्य तस्यापवादार्थं स एतमित्यादिवाक्यं तद्व्याचष्टे—स कदाचिदित्यादिना। यद्वा स जात इत्यादिरपवादस्तस्मिन्पक्ष एवं योजना। भूतानि व्याकरोद्विविच्याकरोत्। किमेषां स्वतः सत्ताऽस्ति नेति

१. किमिहान्यं वावदिषदिति—अत्र टीकायां सः जीवभावापन्नो भूतानि व्याकरोत् व्यक्तं ज्ञातवान्
३० मनुष्योऽहं काणोऽहं सुख्यहमिति। कुतः इहास्मिन् शरीरे अन्यं शरीरादिव्यतिरिक्तं शुद्धात्मानं नोक्तवान् इत्यर्थः। उत्तरमन्त्रे च गुरुणा उपदिष्टे "एतमेव ब्रह्म अपश्यत्" इति अत्र मतान्तरपरिष्कर्ता "व्यक्तं न ज्ञातवान् इत्यानन्दगिरिः" इत्युक्तं तन्न, यत सर्वत्र मुद्रितपुस्तकेषु न ज्ञातवानित्येव वर्तते।

२. "स एतमेव पुरुषं ततममं ब्रह्मापश्यत्" इति जीवस्य ब्रह्माभेददर्शनमुच्यते। यत्तु परेण एतमेव जीवशरीरकं पुरुषशब्दितं वासुदेवं ब्रह्मापश्यदिति व्याख्यानं तन्न, यथाश्रुतार्थत्यागात्। पुरुषशब्दस्य
३५ वेदे "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलमि"त्यत्र शिवे प्रयोगात्। पुरि शेते इति व्युत्पत्या जीवेऽपि प्रयोगात्। बृहदारण्यके च "स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात्पुरुष" इति प्रदर्शितव्युत्पत्तेः जीव एवोपपन्नत्वात्। तथा च "पुरुषं जीवं ब्रह्मापश्यदि"ति साक्षात्कारात् इदमदर्शमिति समनन्तरं तस्य आश्चर्यपूर्वकः आनन्दश्च सम्यगुपपद्यते।

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम। तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः, परोक्षप्रिया इव हि देवाः ॥१४॥

इति तृतीयः खण्डः

ज्ञानप्रबोधकृच्छब्दिकायां वेदान्तमहावाक्यभेर्यां तत्कर्णमूले ताड्यमानायामेतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरिशयानमात्मानं ब्रह्म बृहत्ततमं तकारेणैकेन लुप्तेन ततमं व्याप्ततमं परिपूर्णमाकाशवत्प्रत्यबुध्यतापश्यत्। कथम्? इदं ब्रह्म ममाऽऽत्मनः स्वरूपमदर्शम्। दृष्टवानस्मि। अहो इति विचारणार्था प्लुतिः पूर्वम् ॥ १३ ॥ ५

यस्मादिदमित्येवं यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यदपरोक्षेण तस्मादिदं पश्यतीतीदन्द्रो नाम परमात्मा। इदन्द्रो ह वै नाम प्रसिद्धो लोक ईश्वरः। तमेतमिदन्द्रं सन्तमिन्द्र इति परोक्षेण परोक्षाभिधानेनाऽऽचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात्प्रत्यक्षनामग्रहणभयात्। तथा हि परोक्षप्रियाः परोक्षनामग्रहणप्रिया इव ह्येव हि यस्माद्देवाः। किमुत सर्वदेवानामपि देवो महेश्वरः। द्विर्वचनं प्रकृताध्यायपरिसमाप्त्यर्थम् ॥ १४ ॥ १०

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतावैतरेयोपनिषद्भाष्ये प्रथमाध्याये तृतीयः खण्डः

विचारितवानित्यर्थः। विचार्य च किमन्यमात्मव्यतिरिक्तं स्वतःसत्ताकं वावदिषद्वदिष्यामि न किञ्चिदप्यात्मव्यतिरिक्तं वक्तुं शक्नोमीति निश्चितवानित्यर्थः। एवं पदार्थशोधनवतो वाक्यार्थज्ञानमाह—स इति। "आचार्यवान्पुरुषो वेदे"ति श्रुतेस्तेन विना स्वतो वाक्यार्थज्ञानं न सम्भवतीत्यभिप्रेत्याऽऽह—परमेति। वेदान्तेति। उपनिषत्काण्डस्य भेरीस्थानत्वं तत्त्वमसीत्यादिवाक्यानां प्रबोधजनकशब्दत्वमिति ज्ञेयम्। पुरिशयानमिति। मूर्धन्यया द्वारा प्रविश्येति शेषः। लुप्तेनेति। तेन सहेत्यर्थः। किं परोक्षतया ज्ञातमिति पृच्छति—कथमिति। तस्य कृतार्थताप्रख्यापकेन वाक्येन तस्यापरोक्षत्वमाह—इदमिति। इती३ इति प्लुतेरर्थमाह—अहो इति। विचारणार्था प्लुतिः। पूर्वमिति विचारणार्थे प्लुतेर्विहितत्वात्। प्लुत्या सम्यग्ब्रह्म ज्ञातं न वेति विचार्य सम्यग्ज्ञातमिति निश्चित्याहो इति स्वस्य कृतार्थत्वं प्रख्यापितवानित्यर्थः। १५

तस्येदन्द्रनामप्रसिद्ध्याऽपि तस्य ज्ञानस्यापरोक्षत्वमिति वक्तुं तस्मादिदन्द्र इति वाक्यं तद्व्याचष्टे—तस्मादिति। तस्मात्सर्वान्तरं ब्रह्मेदं नित्यमेवापरोक्षेण प्रत्यगात्मेत्येवमपश्यदित्यन्वयः। कथमिदन्द्रनामत्वमत आह—इदन्द्रो ह वा इति। नन्विन्द्रो मायाभिरित्यादाविन्द्र इति प्रसिद्धो न त्विदन्द्र इत्यत आह—तमेवमिति। इदन्द्रस्यैव सतः परोक्षत्वार्थमक्षरलोपेनेन्द्र इत्याहुरित्यर्थः। परोक्षोक्तेः प्रयोजनमाह—पूज्येति। २०

पूज्यानां परोक्षतयैव नाम वक्तव्यमित्यत्र प्रमाणमाह—तथा हीति। देवा इति। पूज्या इत्यर्थः। अत एवाऽऽचार्या उपाध्याया इत्युक्तामेव प्रीतिं कुर्वन्ति लोके न तु विष्णुमित्रादिनामग्रहण इति भावः। नाम्नः परोक्षत्वं नाम यथार्थनाम्नो रूपान्तरकरणेन स्वरूपाच्छादनमिति ज्ञेयम्। २५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां प्रथमाध्याये तृतीयः खण्डः

---

अत्र परस्य शरीरप्रवेशः, ततः तस्य आवसथनिर्देशः ततः "स जातो भूतान्यभिव्यैख्यदि"त्युक्त्वा "स एतमेव पुरुषमि"त्यनेन स जीवभावापन्न एतं स्रष्टृत्वेन व्यवस्थितं पुरुषमात्मानमेव ब्रह्मापश्यत् इति जीवब्रह्माभेदः स्पष्टं प्रतीयते। एवंस्थिते एतमेव नारायणं ब्रह्मापश्यदिति व्याख्यानमप्रकृतार्थमुक्तम्। तस्मादिन्द्र इति यः दृष्टवान् तमेवाचष्टे स च जीवः "तमेव इन्द्र इत्याचक्षते" इत्युक्त्या जीवस्यैवेन्द्रपदबोध्यत्वं स्पष्टम्। जीवस्यैव द्रष्टृत्वेन प्रकृतत्वात्। ३०

यत्तु टिप्पणकारेण "परमात्मैवान्तः प्रविश्य परमात्मा इदमपश्यत् एतस्मात् प्रवेशादनन्तरं लोकः मां कथं द्रक्ष्यति" इति सन्दिह्य ब्रह्मणा व्याप्तं, ब्रह्मात्मकमश्यत् ईदृशविशिष्टदर्शनानुगुणोऽस्मत्प्रवेशः इति निश्चिकाय इति देशिकमतनिरूपणं तत् ईश्वरस्य स्वयमेव "यः सर्वज्ञः सर्ववित्" इति सर्वज्ञत्वे सिद्धे अपूर्ववत् एतादृशदर्शनमप्रसक्तमनतिप्रयोजनकं च तस्मादिदं न शोभनम्। पुरुषोऽत्र नारायणपरो नेत्यत्र "पुरुषे ह वा अयमादितो गर्भः" इत्यत्र जीवे पुरुषपदप्रयोगोऽपि प्रायपाठन्यायेन साक्षी। ३५

# अथ द्वितीयोऽध्यायः

**अस्मिश्चतुर्थेऽध्याय[1] एष वाक्यार्थः—जगदुत्पत्तिस्थितिप्रलयकृदसंसारी सर्वज्ञः सर्वशक्तिः सर्ववित्सर्वमिदं**
**जगत्स्वतोऽन्यद्वस्त्वन्तरमनुपादायैवाऽऽकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्वाणि च प्राणादिमच्छरीराणि**
**स्वयं प्रविवेश। प्रविश्य च स्वमात्मानं यथाभूतमिदं ब्रह्मास्मीति साक्षात्प्रत्यबुध्यत। तस्मात्स एव सर्वशरीरेष्वेक**
**एवाऽऽत्मा नान्य इति। अन्योऽपि "सम आत्मा ब्रह्मास्मीत्येवं विद्या॒दि"त्या"त्मा वा इदमेक एवाग्र आसीदि"ति।**
५ **"ब्रह्म ततममि"ति चोक्तम्। अन्यत्र च। सर्वगतस्य सर्वात्मनो बालाग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य**
**प्रापद्यत पिपीलिकेव सुषिरम्।**

**नन्वत्यल्पमिदं चोद्यं बहु चात्र चोदितव्यम्। अकरणः सन्नीक्षिताऽनुपादाय किञ्चिल्लोकानसृजताद्भ्यः**
**पुरुषं समुद्धृत्यासूर्छयत्। तस्याभिध्यानान्मुखादि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषां चाशनाया-**
**पिपासादिसंयोजनं, तदायतनप्रार्थनं, तदर्थं गवादिप्रदर्शनं तेषां यथायतनप्रवेशनं सृष्टस्यान्नस्य पलायनं वागादि-**
१० **भिस्तज्जिघृक्षा। एतत्सर्वं सीमाविदारणप्रवेशसममेव। अस्तु तर्हि सर्वमेवेदमनुपपन्नम्। न। अत्राऽऽत्मावबोधार्थ-**

अस्मिन्नध्याय आत्मैकत्वलोकलोकपालसृष्ट्यशनायापिपासासंयोजनादीनां बहूनामर्थानामुक्तत्वात्सर्वेषामपि
विवक्षितत्वशङ्कावारणाय विवक्षितमर्थमाह—**अस्मिन्निति**। सर्वेष्वपि शरीरेष्वेक एवाऽऽत्मा स एव परमेश्वर इति
वक्ष्यमाणोऽर्थ एतच्छब्दार्थः। **वाक्यार्थ इति**। विवक्षित इति शेषः। कथमयमेवार्थो विवक्षित इत्याशङ्क्य पूर्व-
सन्दर्भपर्यालोचनयेत्याह—**जगदित्यादिना**। यद्यपि लोकादिसृष्ट्याऽन्नसृष्ट्या चोत्पत्तिस्थिती एवोक्ते तथाप्युत्पत्ति-
१५ स्थित्युक्त्याऽर्थात्प्रलयोऽप्युक्तप्राय इति प्रलयकृदित्युक्तम्। लोकपालादीनामेव भोक्तृत्वोक्त्याऽसंसारीत्युक्तमित्यर्थः।
सामान्यतः सर्वं जानातीति सर्वज्ञः। विशेषतः सर्वप्रकारेणापि सर्वं वेत्तीति सर्ववित्। सृष्ट्वेत्यन्तेन
जगतस्तत्कार्यत्वात्तद्व्यतिरेकेण नास्तीत्युक्त्वा प्रत्यगात्मनस्तदभेदमाह—**स्वात्मेति**। न केवलं प्रवेशोक्त्यैव तदभेदः
किं तु तदभेदज्ञानोक्तेश्चेत्याह—**प्रविश्य चेति**। यस्मात्सर्वशरीरेष्वेकस्यैव प्रवेश उक्तः। यस्माच्च प्रविष्टस्य
ब्रह्मतया ज्ञानमुक्तं तस्मात्सर्वशरीरेष्वेक एवाऽऽत्मा स च सर्वज्ञ ईश्वर एव नान्य इत्येष वाक्यार्थो विवक्षित इति
२० पूर्वेणान्वयः। "सम आत्मेति विद्यादि"ति संहितोपनिषद्गतवाक्यशेषोऽप्येतमेवार्थमाहेत्याह—**अन्योऽपीति**। **सम इति**।
सर्वभूतेष्वेक इत्यर्थः। स ईक्षतेत्यादिसन्दर्भादयमर्थः प्रतीयत इत्युक्तं पूर्वमिदानीमुपक्रमोपसंहाराभ्यामप्येष एवार्थः
प्रतीयत इत्याह—**आत्मा वा इति**। सदेव सोम्येदमग्र आसीत्तदेतद्ब्रह्मापूर्वमित्यादौ चाद्वितीयत्वमुक्तमित्याह—
**अन्यत्र चेति**। प्रवेशवाक्यादात्मन एकत्वमुक्तं तदयुक्तं तस्यैवासङ्गतार्थत्वादिति शङ्कते—**सर्वगतस्येति**।
अशरीरत्वाद्विदारयितृत्वं सर्वगत्वात्प्रवेशश्च न सङ्गच्छत इत्यर्थः।

२५ किं प्रतीयमानार्थेऽसङ्गतत्वमुत विवक्षितार्थे? आद्ये सर्वस्याप्यसङ्गतार्थत्वेन सर्वस्याप्यप्रामाण्यं स्यात्।
न च वेदस्य तद्युक्तमित्यभिप्रेत्याऽऽह—**नन्विति**। चक्षुरादिकरणैरीक्षणं प्रसिद्धं मृदाद्युपादानवत एव स्रष्टृत्वं
हस्ताभ्यामेव समुद्धरणसंमूर्छने इत्यशरीरस्य तदसङ्गतम्। शस्त्रादिना मूर्तेन विदारणं न त्वमूर्तात् ध्यानात्, मुखा-
दिभ्योऽग्न्याद्युत्पत्तौ तस्य दाहादिः स्यात्। मूर्तस्यैवान्येन संयोजनं कर्तुं शक्यं नाशनायादेरमूर्तस्य। अग्न्यादीनां
शरीरसृष्टेः पूर्वं प्रार्थनाया अयोगस्तदा गवादिशरीराभावात्। स्वयं चाशरीरत्वादानयनायोगः। तेषामशरीरत्वाद-
३० मूर्तत्वात्प्रवेशानुपपत्तिः। अन्नस्याचेतनस्य पलायनानुपपत्तिः। वागादीनां हस्तादिवद्वस्त्वादानासामर्थ्यात्तैर्जिघृक्षानुप-
पत्तिरिति सर्वमसङ्गतार्थमित्यर्थः। तर्हि सर्वमप्रमाणमस्त्विति कश्चिच्छङ्कते—**अस्त्विति**। विवक्षितार्थेऽपि "विषं
भुङ्क्ष्व" "स प्रजापतिरात्मनो वपामुदखिददि"त्यादीनामिव प्रामाण्यसम्भवेनाप्रामाण्यं न कस्यचिदपि युक्तम्।
विवक्षितार्थे च नासङ्गतिरिति द्वितीयं दूषयति—**नेति**। लोके स्वयमेव द्वारं कृत्वाऽनेकेषु गृहेषु प्रविष्टस्य
देवदत्तस्यैकत्वदर्शनात्तद्वदात्मन एकत्वमिति बोधयितुं विदारणप्रवेशने उच्येते। न तु सोऽर्थो विवक्षितः।
३५ विवक्षितात्मैकत्वबोधद्वारतयोक्तत्वात्प्राशस्त्यार्थद्वारतयोक्तवपोत्खननादिवदर्थवाद इत्यर्थः। असत एव प्रवेशादेर-

1. आरण्यकक्रमेण पूर्वः चतुर्थोऽध्यायः।

मात्रस्य विवक्षितत्वात्सर्वोऽयमर्थवाद इत्यदोषः। मायाविवद्वा, महामायावी देवः सर्वज्ञः सर्वशक्तिः सर्वमेतच्चकार सुखावबोधनप्रतिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्च इति युक्ततरः पक्षः। न हि सृष्ट्याख्यायिकादिपरिज्ञानात् किञ्चित्फलमिष्यते। ऐकात्म्यस्वरूपपरिज्ञानात्त्वमृतत्वं फलं सर्वोपनिषत्प्रसिद्धम्। स्मृतिषु च गीताद्यासु "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरमि"त्यादिना।

ननु त्रय आत्मानः—भोक्ता कर्ता संसारी जीव एकः सर्वलोकशास्त्रप्रसिद्धः। अनेकप्राणिकर्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन, पुरप्रासादादिनिर्माणलिङ्गेन तद्विषयकौशलज्ञानवांस्तत्कर्ता तक्षादिरिव, ईश्वरः सर्वज्ञो जगतः कर्ता द्वितीयश्चेतन आत्माऽवगम्यते। "यतो वाचो निवर्तन्ते" "नेति नेती"त्यादिशास्त्रप्रसिद्ध औपनिषदः पुरुषस्तृतीयः। एवमेते त्रय आत्मानोऽन्योन्यविलक्षणाः। तत्र कथमेक एवाऽऽत्मा अद्वितीयोऽसंसारीति ज्ञातुं शक्यते? तत्र जीव एव तावत्कथं ज्ञायते? नन्वेवं ज्ञायते श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञातेति। ५ १०

ननु विप्रतिषिद्धं ज्ञायते यः श्रवणादिकर्तृत्वेनामतो मन्ताऽविज्ञातो विज्ञातेति च। तथा "न मतेर्मन्तारं

होक्तिरित्यङ्गीकृत्य तस्य गुणार्थवादत्वं वपोत्खननादिवाक्यवदित्युक्त्वा "अग्निर्हिमस्य भेषजमि"त्यादिवद्भूतार्थवादत्वमङ्गीकृत्याऽऽह—मायावीति। माययाऽघटितमपि सर्वमुपपद्यतेऽघटितघटकत्वात्तस्या इत्यर्थः। अनेन सृष्ट्यादेरघटितार्थत्वाद्गन्धर्वनगरादिवन्मृषात्वमेवेति स्पष्टीकर्तुमघटितमपि सृष्ट्यादिकं श्रुत्या दर्शितमित्युक्तम्। नन्वात्मावबोधश्चेद्विवक्षितस्तर्हि साक्षादेव स उच्यतां किमनेन वृथा प्रपञ्चनेनेत्यत आह—सुखेति। अवबोधनं प्रतिपादनम्। सुखेन वक्तुः प्रतिपादनार्थं सुखेन श्रोतुः प्रतिपत्त्यर्थं चेत्यर्थः। ननु लोकसृष्ट्यादेर्मानान्तरागोचरत्वेनापूर्वत्वात्तत्परत्वमेवाऽऽख्यायिकाया अस्त्वित्याशङ्क्यापूर्वत्वेऽपि तत्प्रतिपत्त्या फलाभावात्फलवत्त्वज्ञाते श्रुतेस्तात्पर्यनियमात्। अन्यथा रुद्ररोदनादेरप्यपूर्वत्वेन तत्रापि तात्पर्यापत्तेर्न सृष्ट्यादौ तात्पर्यमित्याह—न हीति। आत्मप्रतिपत्तौ तु फलदर्शनात्तत्परत्वमेव युक्तमित्याह—ऐकात्म्येति। सर्वेति। एतावदरे खल्वमृतत्वं तमेवं विद्वानमृत इह भवति विद्वानमृतः समभवदित्यादिषु ज्ञानादमृतत्वं प्रसिद्धमित्यर्थः। "समं सर्वेषु भूतेष्वि"त्यनेनैकात्म्यमुक्त्वा "समं पश्यन्हि सर्वत्र न हिनस्त्यात्मनाऽऽत्मानमि"ति ज्ञानादमृतत्वमुक्तमित्याह—स्मृतिषु चेति। यज्ज्ञात्वाऽमृतमश्नुत इत्यादिरादिशब्दार्थः। १५ २०

"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः"॥ इत्यैकात्म्यमुक्त्वा "स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप"। इत्यादिविष्णुपुराणमाद्यशब्दार्थः।

आत्मैक्यमेवास्याध्यायस्यार्थ इत्युक्त्वैतदेव स्थिरीकर्तुमाशङ्कते—नन्विति। जीव ईश्वरो निर्विशेषब्रह्म चेति त्रय आत्मान इत्यर्थः। तत्र जीवोऽहं कर्तेति लोक "एष हि द्रष्टा स्प्रष्टा" "यजेत स्वर्गकाम" इत्यादिशास्त्रे च प्रसिद्ध इत्याह—भोक्तेति। एक इति। त्रयाणां मध्य एक इत्यर्थः। यो लोकदेहनिर्माणेन लिङ्गेनावगम्यते सर्वज्ञ ईश्वरः स द्वितीय इत्याह—अनेकेति। अनेकेषां विचित्राणां च प्राणिनां यान्यनेकानि विचित्राणि कर्मफलानि तदुपभोगयोग्यानि यान्यनेकानि विचित्राण्यधिष्ठानानि स्थानविशेषास्तद्वन्तो लोका देहाश्च तेषां निर्माणेन लिङ्गेनेत्यर्थः। इदं विशेषणं कर्तुः सर्वज्ञतार्थम्। यथाशास्त्रप्रदर्शितेनेति। "स इमाँल्लोकानसृजते"त्यादिशास्त्रप्रदर्शितलिङ्गेनेत्यर्थः। अनुमाने दृष्टान्तमाह—पुरेति। अचेतनं प्रधानं स्वयमेव विचित्रजगदाकारेण परिणमते न तु सर्वज्ञोऽधिष्ठाता कश्चिदिति सांख्याः, तन्निरासायाऽऽह—चेतन इति। चेतनानधिष्ठितस्याचेतनस्य स्वतः प्रवृत्त्यदर्शनादवश्यं सर्वज्ञश्चेतनोऽधिष्ठाताऽङ्गीकार्य इत्यर्थः। तृतीयमाह—यत इति। एकस्यैव रूपभेदेन भेद इत्याशङ्क्याह—एवमिति। अन्योन्येति। अन्योन्यविरुद्धधर्मवत्त्वाद्दहनतुहिनवद्भिन्ना इत्यर्थः। तत्र जीवस्य यत्कर्तृत्वभोक्तृत्वादिना वैलक्षण्यमुक्तं तदसिद्धम्। तस्य मानान्तराविषयत्वेन तद्धर्मवत्तया प्रमातुमशक्यत्वात्। अतो न भेद इत्यभिप्रायेण परिहरति सिद्धान्ती—तत्र जीव एवेति। कथमिति। तस्य ज्ञेयत्वाभावे कर्तृत्वादिधर्मविशिष्टतयाऽपि स ज्ञातुमशक्य इत्यर्थः। अविज्ञाताभिप्रायः प्रश्नप्रकारं मत्वा शङ्कते—नन्विति। आदेष्टा वर्णात्मकशब्दवक्ता। आघोष्टा ध्वन्यात्मकशब्दवक्तेत्यर्थः। २५ ३० ३५

पूर्ववाक्ये स एषोऽश्रुतोऽमतोऽविज्ञात इति विज्ञेयत्वस्य प्रतिषेधात्तस्मिंस्तद्विरुद्धं ज्ञेयत्वमित्याह—ननु विप्रतिषिद्धमिति। यः श्रवणादिकर्तृत्वेन ज्ञायते स एवामतोऽविज्ञातश्चेत्येतद्विप्रतिषिद्धमित्यन्वयः। श्रुत्यन्तर-

मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया" इत्यादि च। सत्यं विप्रतिषिद्धम्। यदि प्रत्यक्षेण ज्ञायेत सुखादिवत्। प्रत्यक्षज्ञानं च निवार्यते "न मतेर्मन्तारमि"त्यादिना। ज्ञायते तु श्रवणादिलिङ्गेन तत्र कुतो विप्रतिषेधः?

ननु श्रवणादिलिङ्गेनापि कथं ज्ञायते यावता यदा शृणोत्यात्मा श्रोतव्यं शब्दं तदा तस्य श्रवणक्रिययैव वर्तमानत्वान्मननविज्ञानक्रिये न सम्भवत आत्मनि परत्र वा। तथाऽन्यत्रापि मननादिक्रियासु। श्रवणादिक्रियाश्च
५ स्वविषयेष्वेव। न हि मन्तव्यादन्यत्र मन्तुर्मननक्रिया सम्भवति।

ननु मनसा सर्वमेव मन्तव्यम्। सत्यमेवम्। तथाऽपि सर्वमपि मन्तव्यं मन्तारमन्तरेण न मन्तुं शक्यम्। यद्येवं किं स्यात्? इदमत्र स्यात्—सर्वस्य योऽयं मन्ता स मन्तैवेति न स मन्तव्यः स्यात्। न च द्वितीयो मन्तुर्मन्ताऽस्ति यदा स आत्मनैव मन्तव्यस्तदा येन च मन्तव्य आत्माऽऽत्मना, यश्च मन्तव्य आत्मा, तौ द्वौ प्रसज्येयाताम्। एक एवाऽऽत्मा द्विधा मन्तृमन्तव्यत्वेन द्विशकलीभवेद्वंशादिवदुभयथाऽप्यनुपपत्तिरेव। यथा

१० विप्रतिषिद्धं चेत्याह—तथा न मतेरिति। मतेर्मनोवृत्तेर्मन्तारं साक्षिणमित्यर्थः। आदिपदेनामतो मन्ताऽविज्ञातो विज्ञातेत्यादिसंग्रहः। श्रुत्योः प्रामाण्याविशेषाद्विप्रतिषेधानुपपत्तेः प्रत्यक्षेणाविज्ञेयत्वं लिङ्गेन विज्ञेयत्वं चोच्यते ताभ्यामिति शङ्कते पूर्ववादी—सत्यमिति।

आत्मनि युगपज्ज्ञानद्वयायोगाच्छ्रवणादिकाले मननविज्ञानयोरसम्भवाच्छ्रवणादिना मननविज्ञानरूपमात्मविषयकमन्यविषयकं वाऽनुमितिज्ञानं न सम्भवतीत्याह सिद्धान्ती—ननु श्रवणादीति। श्रवणक्रिययैव सह
१५ वर्तमानत्वाच्छ्रवणक्रियाधारत्वादात्मनि विषये परविषये वा तस्य मननविज्ञानक्रिये न सम्भवत इत्यर्थः। अत्र प्रकरणे मननविज्ञानशब्दाभ्यामनुमितिरुच्यत आत्मनस्तद्विषयत्वस्यैवेह शङ्कावादिनोक्तत्वादिति। तर्हि श्रवणमननयोर्युगपदसम्भवेऽन्यविषयमननक्रिययाऽऽत्मा मन्तव्य इत्याशङ्क्य विजातीयक्रियाद्वयवत्सजातीयक्रियाद्वयमपि युगपन्न सम्भवतीत्याह—तथेति। मननादिक्रियास्विति। मननादिक्रियान्तरमपि न सम्भवतीति शेषः। ननु मननादिक्रिया हि लिङ्गम्। न च लिङ्गं करणमतीतलिङ्गेनाप्यनुमितिदर्शनात्। किन्तु लिङ्गज्ञानं करणम्। न च तस्याप्यनु-
२० मितिकाले सत्त्वनियमः। पूर्वक्षणसत्त्वमात्रेण करणत्वोपपत्तेरिति तयोर्यौगपद्याभावेऽपि न दोष इति चेत्। न। श्रवणमननादिलिङ्गविज्ञानस्य साक्षिरूपस्य स्वतो विशेषाभावेन श्रवणादिरूषितत्ववेषेणैव तस्यानुमापकत्वस्य वक्तव्यत्वेन तत्सत्ताया अपि तत्काले वक्तव्यत्वादिति भावः। ननु तर्हि बाह्यगोचरश्रवणादिक्रियया मन्तुरनुमानं मा भूत्। किन्तु बाह्यगोचरश्रवणादिक्रियैवाऽऽत्मानमपि विषयीकरिष्यतीत्यत आह—श्रवणादिक्रियाश्चेति। स्वविषयगोचरा एव न तु स्वाश्रयगोचरा इत्यर्थः। किञ्च न मतेर्मन्तारं मन्वीथा इत्यात्मनो मन्तव्यत्व-
२५ निषेधान्मन्तर्यात्मनि न मननक्रिया सम्भवतीत्याह—न हीति। अन्यत्रेति। आत्मनीत्यर्थः। कुठारादिक्रियाया दारुणोऽन्यत्र व्यापारादर्शनादित्यर्थः।

ननु "मनसो वशे सर्वमिदं बभूवे"ति श्रुतेः सर्वस्य मनोविषयत्वादात्मनोऽपि मन्तव्यत्वमेवेति शङ्कते—ननु मनसेति। एवमपि मनसः करणत्वात्क्रियायाश्च कर्तारमन्तराऽनुपपत्तेर्मन्ताऽवश्यमङ्गीकर्तव्य इति वदन्नाह सिद्धान्ती—सत्यमेवमिति। तथाऽपीति। "न मन्वीथा" इति विशेषश्रुत्या मन्तव्यत्वनिषेधात्। अभ्युपगम्योच्यत इति सूचयत्यपि-
३० शब्दः। अस्तु मन्तुरावश्यकत्वं तावता तव किं स्यादिति शङ्कते—यद्येवमिति। एवं सत्यात्मनो मन्तव्यत्वाभावः सिध्यतीत्याह—इदमिति। कुत एतदिति चेत्तत्र वक्तव्यं किमात्मनो मनने स्वयमेव मन्तोतान्यो वा? इति विकल्प्याऽऽद्यं दूषयति—सर्वस्येति। एकत्र कर्तृकर्मभावस्य विरोधान्मन्तुर्मन्तव्यत्वं न सम्भवतीत्यर्थः। द्वितीये स मन्ताऽनात्माऽऽत्मा वा? इति विकल्प्याऽऽद्य आह—न चेति। द्वितीय इत्यनन्तरमनात्मेति शेषः। अनात्मनोऽचेतनस्य मन्तृत्वानुपपत्तेरित्यर्थः। द्वितीयमनुवदति—यदेति। अस्मिन्पक्ष एकस्मिञ्शरीर आत्मद्वयं स्यादित्याह—तदेति।
३५ चशब्दौ परस्परसमुच्चयार्थौ। येन चाऽऽत्मनाऽऽत्मा मन्तव्यो यश्चाऽऽत्मा मन्तव्य इत्यन्वयः। तृतीयान्तप्रथमान्तयच्छब्दाभ्यामुक्तौ द्वावात्मानौ स्यातामित्यर्थः। एतद्दोषपरिहारायैकस्यैवाऽऽत्मन एकांशेन मन्तृत्वमंशान्तरेण मन्तव्यत्वमित्युक्तौ सावयवत्वं स्यादित्याह—एक एवेति। अस्तु को दोष इत्याशङ्क्याऽऽत्मभेदे तयोरेकमत्यायोगाद्विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत। सावयवत्वे अनित्यत्वेन कृतहानादिकं स्यादिति दोषमाह—उभयथेति। भिन्नयोरपि समानस्वभावयोर्दीपयोः कर्तृकर्मभावादर्शनादात्मभेदपक्ष आत्मशकलभेदपक्षे वा तयोः समानस्वभावत्वादभिन्नपक्ष

प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपपत्तिः समत्वात्तद्वत् । न च मन्तुर्मन्तव्ये मननव्यापारशून्यः कालोऽस्त्यात्ममननाय । यदाऽपि लिङ्गेनाऽऽत्मानं मनुते मन्ता, तदाऽपि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा, यश्च तस्य मन्ता, तौ द्वौ प्रसज्येयाताम् । एक एव वा द्विधेति पूर्वोक्तो दोषः । न प्रत्यक्षेण नाप्यनुमानेन ज्ञायते चेत्कथमुच्यते "सम आत्मेति विद्यादि"ति । कथं वा श्रोता मन्तेत्यादि ?

नन्वु श्रोतृत्वादिधर्मवानात्माऽश्रोतृत्वादि च प्रसिद्धमात्मनः किमत्र विषमं पश्यसि ? यद्यपि तव न विषमं तथाऽपि मम तु विषमं प्रतिभाति । कथम् ? यदाऽसौ श्रोता तदा न मन्ता यदा मन्ता तदा न श्रोता । तत्रैवं सति पक्षे श्रोता मन्ता, पक्षे न श्रोता नापि मन्ता । तथाऽन्यत्रापि च । यदैवं तदा श्रोतृत्वादिधर्मवानात्माऽश्रोतृत्वादिधर्मवान्वेति संशयस्थाने कथं तव न वैषम्यम् ? यदा देवदत्तो गच्छति तदा न स्थाता गन्तैव । यदा तिष्ठति तदा न गन्ता स्थातैव तदाऽस्य पक्ष एव गन्तृत्वं स्थातृत्वं च न नित्यं गन्तृत्वं स्थातृत्वं वा तद्वत् । ५

अत्र काणादादयः पश्यन्ति । पक्षप्राप्तेनैव श्रोतृत्वादिनाऽऽत्मोच्यते श्रोता मन्तेत्यादि । संयोगजत्वम- १०

इव कर्तृकर्मभावो न सम्भवतीत्यनुपपत्त्यन्तरमाह—यथेति । किञ्च "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्" इति श्रुत्या करणानां बहिर्विषयत्वनियमस्याऽऽत्मविषयत्वाभावस्य चोक्तत्वात् । "यन्मनसा न मनुत" इति श्रुतेश्च मनसो बहिर्विषये मन्तव्य एव व्यापारो नाऽऽत्मनीत्याह—न च मन्तुरिति । न चैवं सति "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" "मनसैवानुद्रष्टव्य"मित्यादीनां का गतिरिति वाच्यम् । मनसो बहिर्विक्षेपाभावेनैकाग्र्ये सत्यात्मा स्वयमेव प्रकाशत इति तदर्थत्वात् । अन्यथा पूर्वोक्तन्यायोपबृंहिताऽमतोऽविज्ञात इत्यादिबहुश्रुतिव्याकोपः स्यादिति भावः । एवमात्मनः साक्षान्मनसा मन्तव्यत्वपक्ष एकस्मिञ्शरीर आत्मभेदस्तस्य शकलीभावो वा स्यादित्युक्तदोषमनुमितिविषयत्वपक्षेऽप्याह—यदाऽपीति । एवममतोऽविज्ञात इति श्रुत्या न्यायोपबृंहितया सर्वात्मना ज्ञेयत्वाभाव इति स्थितम् । तत्र पूर्ववादी शङ्कते—न प्रत्यक्षेणेति । कथमिति । ज्ञेयत्वप्रतिपादकश्रुतेः श्रोतृत्वादिधर्मवत्त्वप्रतिपादकश्रुतेश्चानुपपत्तिरित्यर्थः । १५

तत्र विद्यादिति श्रुताविवतरनिषेधे सति स्वप्रकाशत्वेन स्वतः स्फुरणमेवोच्यते न तु कर्मतया वेद्यत्वमिति परिहारं वक्ष्याम इत्यभिप्रेत्य श्रोतृत्वादिश्रुतौ परिहारमाह—नन्विति । तत्र किं धर्मवत्त्वप्रतिपादनस्य का गतिरिति पृच्छ्यते किं वा श्रोतृत्वादिप्रतिपादनेनाश्रोतृत्वादिकमसिद्धमित्युच्यते वा ? इति विकल्प्य, नाऽऽद्यः । नित्यमेव श्रोतृत्वादिधर्माङ्गीकारादित्याह—श्रोतृत्वादीति । "न श्रोता न मन्ते"त्यादिश्रुतेर्नित्यमेवाश्रोतृत्वादेरपि प्रामाणिकत्वान्न द्वितीयोऽपीत्याह—अश्रोतृत्वादीति । उभयोरविरोधं चोत्तरत्र वक्ष्याम इति भावः । एवं च श्रोता मन्ता न श्रोता न मन्तेति चोभयश्रवणे सति श्रोतृत्वादिधर्मवानेवेत्यन्यतरपरिग्रहवैषम्यं तव न युक्तमित्याह—किमत्रेति । नन्वश्रोतृत्वश्रुतेरन्यपरत्वोपपत्तेर्न वैषम्यमित्याशङ्क्य कालभेदेनोभयोरपि दर्शनादन्यतरस्यान्यपरत्वे हेत्वभावाच्छ्रोतैवेत्यङ्गीकारे वैषम्यं स्यादेवेत्याह—यद्यपीति । अश्रोतृत्वादि प्रसिद्धमनात्मन इति पाठे नन्विति वाक्यमपि शङ्कान्तर्गतमेव । श्रोतेत्यादिश्रुत्या श्रोतृत्वादिधर्मवानात्मा ननु तत्कथं स्यादित्यन्वयः । ननु न श्रोतेत्यादिश्रुतेरश्रोतृत्वादिधर्मवत्त्वमात्मन इत्याशङ्क्य लोकेऽप्रसिद्धेर्नैवमिति स एवाऽऽह—अश्रोतृत्वादीति । उभयोरप्यात्मधर्मत्वश्रवणे समानेऽन्यतरस्यानात्मधर्मत्वाभिधानमयुक्तमिति सिद्धान्ती दूषयति—किमत्रेति । ननु लोकप्रसिद्धिबलादनात्मधर्मत्वानिश्चयान्न वैषम्यमित्याशङ्क्य निराकरोति—यद्यपीति । अश्रोतृत्वादेरात्मधर्मत्वेऽपि प्रसिद्धेरविशेषाच्छ्रुत्यनुरोधेनोभयोरप्यात्मधर्मत्वमिति प्रश्नपूर्वकमाह—कथमिति । इतरत्सर्वं समानम् । त्वया हि कादाचित्कज्ञानेन नित्यमेव श्रोतृत्वादिकमङ्गीक्रियते तदयुक्तमित्याह—यदाऽसाविति । न मन्तेत्यनन्तरं न तु नित्यमेव श्रोता मन्ता वेति शेषः । तथाऽन्यत्रापि । द्रष्टृत्वविज्ञातृत्वादावप्येवमेव कादाचित्कत्वमित्यर्थः । श्रोतृत्वादेः पाक्षिकत्वं दृष्टान्तेन स्पष्टीकरोति—यदेति । तदाऽस्येत्यत्र यदैवमिति पदमध्याहृत्य व्यवस्था तदाऽस्य पक्ष एव गन्तृत्वमिति वाक्यं योज्यम् । तद्वदिति । तथैव श्रोतृत्वादिकमपि न नित्यमित्यर्थः । २० २५ ३० ३५

अत्रान्तरेऽविदिताभिप्रायाः काणादादय उभयमपि कादाचित्कमेवास्त्विति चोदयन्तीत्याह—अत्रेति । ननु सिद्धान्तिनाऽपि श्रोतृत्वाश्रोतृत्वयोरङ्गीकारादस्य सिद्धान्तात्कथं भेद इत्याशङ्क्य तन्मते नित्यसाक्षिणो नित्यमेव श्रोतृत्वं कादाचित्कज्ञानस्य मृषात्वेन तदभावेन च नित्यमेवाश्रोतृत्वम् । अस्मन्मते तु कादाचित्कज्ञानेनैव श्रोतृत्वादिकमिति विशेषमाह—संयोगजत्वमिति । ज्ञानस्य कादाचित्कत्वेऽयौगपद्ये च यथाक्रमं प्रमाणमाह— ४०

यौगपद्यं च ज्ञानस्य ह्याचक्षते। दर्शयन्ति चान्यत्रमना अभूवं नादर्शमित्यादि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति च न्याय्यम्। भवत्वेवं किं तव नष्टं यद्येवं स्यात्? अस्त्वेवं तवेष्टं चेत्। श्रुत्यर्थस्तु न सम्भवति। किं न श्रोता मन्तेत्यादि-श्रुत्यर्थः? न। न श्रोता न मन्तेत्यादिवचनात्।

ननु पाक्षिकत्वेन प्रत्युक्तं त्वया। न, नित्यमेव श्रोतृत्वाद्यभ्युपगमात्। "न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते"
५ इत्यादिश्रुतेः। एवं तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे प्रत्यक्षविरुद्धा युगपज्ज्ञानोत्पत्तिरज्ञानाभावश्चाऽऽत्मनः कल्पितः स्यात्। तच्चानिष्टमिति। नोभयदोषोपपत्तिरात्मनः श्रुत्यादिधर्मवत्त्वश्रुतेः। अनित्यानां मूर्तानां च चक्षुरादीनां दृष्ट्याद्यनित्यमेव संयोगवियोगधर्मिणाम्। यथाऽग्नेर्ज्वलनं तृणादिसंयोगजत्वात्तद्वत्।

न तु नित्यस्यामूर्तस्यासंयोगविभागधर्मिणः संयोगजदृष्ट्याद्यनित्यधर्मवत्त्वं सम्भवति। तथा च श्रुतिः—"न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्याद्या। एवं तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टिर्नित्या चाऽऽत्मनः। तथा च
१० द्वे श्रुती श्रोत्रस्यानित्या नित्याऽऽत्मस्वरूपस्य। तथा द्वे मती विज्ञाती बाह्याबाह्ये। एवं ह्येव। तथा चेयं श्रुतिरुपपन्ना भवति "दृष्टेर्द्रष्टा श्रुतेः श्रोते"त्याद्या। लोकेऽपि प्रसिद्धं चक्षुषस्तिमिरागमापाययोर्नष्टा दृष्टिर्जाता दृष्टिरिति चक्षुर्दृष्टेर·

दर्शयन्ति चेति। युगपदिति। यदि मनो न स्यात्तर्हि चक्षुरादीन्द्रियाणां युगपदेव रूपादिभिः सम्बन्धे युगपदेव सर्वेन्द्रियैः सर्वविषयकज्ञानानि स्युः। सामग्र्याः सत्त्वात्। न च तथाऽस्ति। अतः क्रमेण तत्तदिन्द्रियसंयोग्यणु-परिमाणं मनोऽङ्गीकर्तव्यम्। तथा च युगपत्सर्वेन्द्रियैर्मनःसंयोगाभावात्सामग्र्यभावान्न युगपत्सर्वविषयकं ज्ञानम्।
१५ अतो युगपद्रूपादिसर्वविषयकज्ञानानुत्पत्तिलिङ्गेन मनोऽस्तीति वदन्तो युगपत्सर्वज्ञानानुत्पत्तिरित्युक्तवन्त इत्यर्थः। इममर्थं न्याय्यं पश्यन्तीति पूर्वेणान्वयः। काणादादिमते सिद्धान्तिना प्रदर्शिते सति तर्हि काणादादिरीत्या श्रुतिद्वयोप-पत्तेरात्मनि श्रोतृत्वादिधर्मवत्त्वसिद्धेश्च तथैवास्त्विति पूर्वपक्षी तटस्थो वा सिद्धान्तिनं प्रति शङ्कते—भवत्विति। यद्येवं न्याय्यं स्यादेवमेव भवतु किं तव नष्टमित्यर्थः। आत्मनः कादाचित्कज्ञानेन श्रोतृत्वादिधर्मवत्त्वस्य श्रुत्यनभि-मतत्वान्न तन्न्याय्यमिति सिद्धान्ती तं पक्षं दूषयति—अस्त्वेवमिति। ननु "श्रोता मन्ते"ति श्रुत्या तद्धर्मवत्त्व-
२० प्रतिपादनादनभिमतत्वमसिद्धमिति शङ्कते—किं नेति। न श्रोतेत्यादिश्रुत्याऽविशेषतः कालत्रयेऽपि श्रोतृत्वादिधर्म-राहित्यप्रतिपादनात्तद्धर्मवत्त्वमनभिमतमेवेत्युत्तरमाह—न, न श्रोतेति।

यदाऽसौ श्रोतेत्यादिना श्रोतृत्वादेः पाक्षिकत्वस्य त्वयैवोक्तत्वात्काणादपक्षप्रदर्शनवेलायां च कादाचित्क-ज्ञानेन तदुपपादनात्पाक्षिकश्रोतृत्वादितदभावविषयतया श्रुतिद्वयस्योपपत्तिं शङ्कते—नन्विति। अपाक्षिकत्वेन श्रोतृत्वतदभावयोः श्रुतिभ्यां स्वरसतः प्रतीतेः पाक्षिकत्वेन तत्सङ्कोचो न युक्त इति स्वाभिप्रायं विवृण्वन्नाह
२५ सिद्धान्ती—न नित्यमेवेति। ननु श्रुतेरनित्यत्वे सति तद्घटितं श्रोतृत्वमप्यनित्यमिति सङ्कोच आवश्यकोऽत आह—न हीति। श्रुतेः श्रोतृत्वस्य चानित्यत्ववचनं श्रुतिविरुद्धमित्यर्थः। श्रुतिमत्यादीनां नित्यत्वे युगपत्सर्वं ज्ञानं स्यात्कदाचिदपि कस्यचिदपि ज्ञानस्याभावो न स्यात्। श्रुत्यादिशब्दितानां सर्वेषां ज्ञानानां नित्यत्वात्। न चेष्टापत्तिः। प्रत्यक्षविरोधात्। अतो न हि श्रोतुः श्रुतेरित्यादिश्रुतेरन्यपरत्वं वक्तव्यमिति शङ्कते—एवं तर्हीति। इतिशब्दः शङ्कासमाप्त्यर्थः। परिहरति—नोभयेति। युगपज्ज्ञानोत्पत्तिरज्ञानाभावश्चेत्युभयदोषस्योपपत्तिः सम्भवो
३० नास्तीत्यर्थः। श्रोतृत्वादेर्नित्यत्वे कथमुभयदोषाभाव इत्याशङ्क्याऽऽत्मस्वरूपभूतसाक्षिरूपश्रुत्यादेर्नित्यत्वेऽपि वृत्ति-रूपकादाचित्कश्रुत्यादेरप्यभ्युपगमादुक्तदोषाभाव इति परिहरन्नित्यश्रोतृत्वादिकं दर्शयति—आत्मन इति। आत्मनः स्वरूपभूतं यच्छ्रुत्यादि श्रोत्रजन्यवृत्तिसाक्षिरूपं तद्वशाच्छ्रोतृत्वादितद्धर्मवत्त्वस्य श्रोता मन्तेत्यादिना श्रुतेरित्यर्थः। अनित्यश्रुत्यादिकं तर्हि कथमित्याशङ्क्य तद्दर्शयति—अनित्यानामिति। तेषामनित्यत्वमाह—मूर्तानामिति। दृष्ट्या-देरनित्यत्वे हेतुमाह—संयोगेति। संयोगजन्यत्वाद् दृष्ट्यादेरनित्यत्वमित्यर्थः। ज्वलनमित्यनन्तरमनित्यमित्यनुषङ्गः।
३५ ननु यद्यनित्यं दृष्ट्याद्यभ्युपगम्येत तर्हि तदेवाऽऽत्मनोऽपि धर्मोऽस्तु किं नित्यदृष्ट्यादिनेत्यत आह—न त्विति। नित्यत्वादमूर्तत्वममूर्तत्वात्संयोगादिधर्मरहितत्वं ततः संयोगजदृष्ट्याद्यसम्भव इत्यत आत्मनो नित्य-दृष्ट्याद्यभ्युपगन्तव्यमित्यर्थः। श्रुतितोऽपि नित्यदृष्ट्यादिसिद्धिरित्याह—तथा चेति। नित्यानित्यदृष्टिद्वयाङ्गीकारे गौरवमिति शङ्कते—एवं तर्हीति। श्रुतिप्रामाण्याद्द्वैविध्याङ्गीकारे गौरवं प्रामाणिकमित्याह—एवं ह्येवेति। तथा चेति। चोऽवधारणे। तथैवेत्यर्थः। दृष्टेर्द्रष्टेति। दृष्टिविषयदृष्टिमानिति तदर्थः। तत्र विषयविषयिभावस्यैक-

नित्यत्वम् । तथा च श्रुतिमत्यादीनाम्। आत्मदृष्ट्यादीनां च नित्यत्वं प्रसिद्धमेव लोके । वदति ह्युद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति । तथाऽवगतबाधिर्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि ।

यदि चक्षुःसंयोगजैवाऽऽत्मनोऽनित्या दृष्टिस्तन्नाशे नश्येत्तदोद्धृतचक्षुः स्वप्ने नीलपीतादि न पश्येत् । "न हि द्रष्टुर्दृष्टेरि"त्याद्या च श्रुतिरनुपपन्ना स्यात् । "तच्चक्षुः पुरुषे येन स्वप्ने पश्यती"त्याद्या च श्रुतिः ।

नित्याऽऽत्मनो दृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका । बाह्यदृष्टेश्चोपजनापायाद्यनित्यधर्मवत्त्वात्तद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वमनित्यत्वादिभ्रान्तिनिमित्तं लोकस्येति युक्तम्। यथा भ्रमणादिधर्मवदलातादिवस्तुविषयदृष्टिरपि भ्रमतीव तद्वत्। तथा च श्रुतिः—"ध्यायतीव लेलायतीवे"ति । तस्मादात्मदृष्टेर्नित्यत्वान्न यौगपद्यमयौगपद्यं वाऽस्ति।

बाह्यानित्यदृष्ट्युपाधिवशात्तु लोकस्य तार्किकाणां चाऽऽगमसम्प्रदायवर्जितत्वादनित्याऽऽत्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव । जीवेश्वरपरमात्मभेदकल्पना चैतन्निमित्तैव । तथाऽस्ति नास्तीत्याद्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैकं भवन्ति तद्विषयाया नित्याया दृष्टेर्निर्विशेषायाः । १०

स्मिन्नसम्भवाद्दृष्टिद्वयं प्रतीयत इति दृष्टिद्वैविध्ये सत्येवेयं श्रुतिरुपपद्यते नान्यथेत्यर्थः । तिमिररोगस्याऽऽगमे नष्टा दृष्टिरपाये च जाता दृष्टिरिति प्रतीतेर्जन्मनाशयोगिन्यनित्या दृष्टिरेका तदीयजन्मनाशसाक्षिभूता द्वितीया दृष्टिरस्तीति लोकेऽपि प्रतीयत इत्याह—लोकेऽपीति । चक्षुर्दृष्टेरित्युपलक्षणमात्मदृष्टेर्नित्यत्वं च प्रसिद्धमित्यपि द्रष्टव्यम् । श्रुतिमत्यादीनामिति । अनित्यत्वं नित्यत्वं च प्रसिद्धमित्यनुषङ्गः । आत्मदृष्ट्यादीनां नित्यत्वे हेत्वन्तरमाह—आत्मदृष्ट्यादीनां चेति । स्वप्ने चक्षुषोऽभावेऽपि सत्त्वान्न सा चक्षुर्जन्येति नित्यैवेत्यर्थः । चक्षुः स्वप्नेऽप्यनुपरतमिति यदि कश्चिद्ब्रूयात्तं प्रत्युक्तम्—उद्धृतचक्षुरिति । तस्य चक्षुःसत्त्वशङ्कैव नास्तीत्यर्थः । अवगतेति । अवगतं निश्चितं बाधिर्यं यस्येत्यर्थः । न च स्वप्नदृष्ट्यादेश्चक्षुराद्यजन्यत्वात्कथं दृष्टिश्रुत्यादिशब्दवाच्यत्वमिति वाच्यम् । रूपादिविषयकापरोक्षज्ञानस्यैव दृष्ट्यादिशब्दवाच्यत्वादिति भावः । १५

उक्तमर्थं विपर्यये बाधकोक्त्या द्रढयति—यदीति । न पश्येदिति । दर्शनहेतोश्चक्षुषोऽभावादित्यर्थः । न चेदं दर्शनं स्मृतिरिति वाच्यम् । तथा सति सन्निहितत्वेनापरोक्षावभासो न स्यात् । न च तदंशे भ्रम इति वाच्यम् । २० बाधकाभावात्पूर्वमननुभूतभ्रात्रादिदर्शनं न च स्यादिति भावः । इदमुपलक्षणं सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शहेतुभूतः सुषुप्तिकालीनानुभवोऽपि नित्योऽभ्युपगन्तव्यः । तदानीं सर्वकरणानामभावेनानित्यानुभवाभावादित्यपि द्रष्टव्यम् । न केवलं प्रत्यक्षस्यानुपपत्तिः श्रुतिरप्यनुपपन्ना स्यादित्याह—न हि द्रष्टुरिति । न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यत इत्यादिराद्या चेत्यनेन गृह्यते । तच्चक्षुरिति । चष्ट इति चक्षुर्द्रष्टा साक्षी पुरुष आत्मनि शरीरे वा येन स्वप्ने पश्यति तच्चक्षुः साक्षीत्याद्या चानुपपन्ना स्यादित्यनुषङ्गः । स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यतीत्यादिरादिशब्दार्थः । २५

नन्वात्मदृष्टेर्नित्यत्वे कथं तत्रानित्यत्वप्रतीतिः कथं वाऽस्य लोकस्यानित्यैव सर्वाऽपि दृष्टिरिति निश्चयश्चेत्याशङ्क्य ग्राह्यानित्यदृष्टिगतमनित्यत्वादि सर्वं ग्राहिकायां नित्यदृष्टौ भासते । ग्राह्याय:पिण्डगतवर्तुलत्वादिधर्माणां ग्राहकाग्न्यादौ भानदर्शनादतो लोकस्य तथा प्रतीतिरुपपद्यत इत्याह—नित्येत्यादिना । तद्वदवभासत्वमिति । ग्राह्यवदवभासमानत्वमित्यर्थः । ग्राह्यधर्मस्य ग्राहके भानं दृष्टान्तेन स्पष्टयति—यथा भ्रमणादीति । ३० आदिशब्देन गमनादि गृह्यते । द्वितीयेन धात्रत्पक्ष्यादि । ध्यायतीवेति । ग्राह्यबुद्धिगतं ध्यानादिकं ग्राहके साक्षिणि भासत इति श्रुत्यर्थः । एवं च यत्पूर्ववादिना युगपदनेकज्ञानोत्पत्तिः प्रत्यक्षविरुद्धा स्यादित्युक्तं तत्परिहृतमित्याह—तस्मादिति । तस्मादित्यस्यार्थमाह—आत्मदृष्टेरिति । अनेकनिरूप्यत्वाद्यौगपद्यस्य तदभावरूपत्वादयौगपद्यस्यैकस्यां दृष्टौ तदुभयमपि नास्तीत्यर्थः ।

नन्वात्मदृष्टेर्नित्यत्वे कथं परीक्षाकुशलानां नैयायिकानां सर्वस्य लोकस्य च भ्रमः स्यादित्याशङ्क्य ३५ "न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः । नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" इत्यादिश्रुतेः स्वबुद्ध्या ज्ञातुमशक्यत्वावगमात्सम्प्रदायपरम्परयैव ज्ञातव्यत्वावगमाच्च तेषां तद्रहितत्वाद्भ्रमो युक्त इत्याह—बाह्यानित्येति । न केवलं ज्ञानभेदकल्पनैव तेषां भ्रमः किन्त्वात्मभेदकल्पनाऽप्येतन्मूलो भ्रम एवेत्याह—जीवेश्वरेति। एतन्निमित्तेति। ज्ञानानित्यत्वतद्भेदकल्पनानिमित्तैव, नित्यानित्यज्ञानवतोर्जीवेश्वरयोर्विचित्र-

**अस्ति नास्ति एकं नाना गुणवदगुणं जानाति न जानाति क्रियावदक्रियं फलवदफलं सबीजं निर्बीजं सुखं दुःखं मध्यममध्यं शून्यमशून्यं परोऽहमन्य इति वा सर्ववाक्प्रत्ययागोचरे स्वरूपे यो विकल्पयितुमिच्छति स नूनं खमपि चर्मवद्वेष्टयितुमिच्छति सोपानमिव च पद्भ्यामारोढुम्। जले खे च मीनानां वयसां च पदं दिदृक्षते। "नेति नेति" "यतो वाचो निवर्तन्त" इत्यादिश्रुतिभ्यः। "को अद्धा वेद"त्यादिमन्त्रवर्णात्।**

५ **कथं तर्हि तस्य स म आत्मेति वेदनं ? ब्रूहि केन प्रकारेण तमहं स म आत्मेति विद्याम्। अत्राऽऽख्यायिकामाचक्षते। कश्चित्किल मनुष्यो मुग्धः कैश्चिदुक्तः कस्मिंश्चिदपराधे सति धिक्त्वां नासि मनुष्य इति। स मुग्धतयाऽऽत्मनो मनुष्यत्वं प्रत्याययितुं कञ्चिदुपेत्याऽऽह। ब्रवीतु भवान्कोऽहमस्मीति। स तस्य मुग्धतां ज्ञात्वाऽऽह। क्रमेण बोधयिष्यामीति। स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इत्युक्त्वोपरराम। स तं मुग्धः प्रत्याह। भवान्मां बोधयितुं प्रवृत्तस्तूष्णीं बभूव किं न बोधयतीति। तादृगेव तद्भवतो वचनम्। नास्यमनुष्य इत्युक्तेऽपि मनुष्यत्व-**
१० **मात्मनो न प्रतिपद्यते यः, स कथं मनुष्योऽसीत्युक्तोऽपि मनुष्यत्वमात्मनः प्रतिपद्येत।**

ज्ञानवतां च जीवानां परमात्मनश्चैकत्वं न सम्भवतीति युक्त्याभासेन तैर्भेदकल्पनादित्यर्थः। किञ्चाऽऽत्मनैवायं ज्योतिषाऽऽस्ते। अयमात्मा ब्रह्म सर्वानुभूः प्रज्ञानघन एवेत्यादिश्रुतिभ्य आत्मन एव नित्यदृष्टिरूपत्वादात्मनश्च सर्वाः प्रजा यत्रैकं भवन्तीत्यादिना सर्वकल्पनानां तन्मात्रत्वेन तद्व्यतिरेकेणाभावोक्तेर्निर्विशेषत्वात्तद्रूपाया अपि दृष्टेर्निर्विशेषत्वात्तस्यामस्तीत्याद्याः सर्वाः कल्पना भ्रान्तिनिमित्ता एवेत्याह—तथाऽस्तीति। यावन्तो वाग्भेदा
१५ नामविशेषा मनसो भेदा रूपविशेषा यत्राऽऽत्मन्येकं भवन्ति सर्वे वेदा यत्रैकं भवन्ति सर्वाः प्रजा यत्रैकं भवन्तीत्यादिश्रुतेस्तद्विषयायास्तत्स्वरूपाया अत एव नित्याया निर्विशेषाया दृष्टेरस्तीत्यादिकल्पनाऽऽस्तिकानाम्। नास्तीति कल्पना शून्यवादिनाम्। अस्ति नास्तीति कल्पना दिगम्बराणाम्। अन्येषां च यथायथं सावयवत्वादिकल्पना। सा सर्वाऽपि तथा भ्रान्तिनिमित्तैवेति पूर्वेणान्वयः।

ननु ते ते तार्किका आत्मनोऽस्तित्वादींस्तर्केण साधयन्ति। अतो न तेषां भ्रान्तिनिमित्तत्वमित्याशङ्क्य
२० श्रुतिविरुद्धत्वादसङ्ग आत्मन्यनुपपत्तेस्तेषां कल्पनानां सत्त्वे मोक्षानुपपत्तेश्च तेषां तार्किकाणां कल्पना न प्रमाणपथमारोहतीत्याह—अस्ति नास्तीति। सुषुप्तौ न जानात्यन्यत्र जानातीति कादाचित्कज्ञानवत्त्वकल्पना वैशेषिकादीनाम्। आत्मा परलोकं प्रति गच्छतीति केषाञ्चित्क्रियावत्त्वकल्पना। इहैव स्थित्वा शरीरान्तरं गृह्णातीत्यन्येषाम्। देहात्मवादे क्षणिकविज्ञानवादे वाऽफलं परलोकस्थायिनोऽभावात्। अन्येषां फलवत्। देहात्मक्षणिकवादिपक्ष एव कर्मतद्वासनानामाश्रयाभावात्परलोके निर्बीजं, नित्यात्मवादिनां सबीजं, दुःखमसुखरूपं वैशेषिकादिवादे यद्वा
२५ विज्ञानवादे सोपप्लवचित्तसन्ततिरूपस्य संसारिणो हेयत्वाङ्गीकाराद्दुःखरूपत्वमात्मनः। शरीरमध्य एव वर्तत इति दिगम्बराणां मते मध्यम्। अन्येषां तु तद्बहिरप्यस्तीत्यमध्यम्। परोऽहमिति मत्तः परोऽयमहं ततोऽन्य इति प्रत्यक्परागभेदादिकल्पना अस्तीत्याद्याः परोऽयमहमन्य इत्यन्ताः कल्पना वाक्प्रत्ययागोचरे वाङ्मनसागोचरे यो विकल्पयितुमिच्छतीत्यन्वयः। आरोढुमित्यत्र खमित्यनुषङ्गः। जले मीनानां खे वयसामित्यन्वयः। वाङ्मनसभेदा आत्मनि न सन्ति तदगोचरश्चाऽऽत्मेत्यत्र क्रमेण श्रुतिद्वयमाह—नेति नेतीति। वाङ्मनसागोचरत्वे श्रुत्यन्तरमाह—
३० को अद्धेति। अद्धा साक्षात्को वेदेति मनोगोचरत्वं क इह प्रवोचदिति वागगोचरत्वं च निषेधतीत्यर्थः।

वाङ्मनसागोचरत्वे श्रवणमननयोरसम्भवादात्मनो वेदनं न सम्भवतीति शङ्कते—कथमिति। तर्हि माऽस्त्वात्मवेदनमित्याशङ्क्य श्रुतेरनतिशङ्क्यत्वादात्मवेदननिषेधायोगात्तत्रोपायं पृच्छामीत्याह—ब्रूहीति। केन प्रकारेण स म आत्मेति विद्यां तं प्रकारं ब्रूहीत्यन्वयः। नेति नेतीत्यादिश्रुत्युदाहरणेनैवेतरनिषेधेनैव तस्य स्वप्रकाशस्य बोध इति वेदनप्रकारस्योक्तत्वात्प्रकारान्तरासम्भवादनेनैव प्रकारेणाविषयतया वेदितव्य इति मत्वा सोपहास-
३५ मुत्तरमाह—अत्राऽऽख्यायिकामिति। मुग्ध इति। मूढ इत्यर्थः। स्थावरादीति। न त्वं स्थावरादिरूप इत्यर्थः। नन्वितरनिषेधेन तद्भेदज्ञानेऽपि त्वमेवंभूत इत्यनभिधानेऽहमेवंभूत इति ज्ञानाभावात्तदर्थं विधिमुखेन बोधनं कार्यमत आह—नासीति। अपरोक्षतया प्रतीयमाने वस्तुनि विपर्ययेण गृहीते विपर्ययनिरासमात्रे यत्नः कार्यो न तु स्वरूपबोधे तस्य स्वयमेव प्रतीतेः तथाऽपि नेत्र बोद्धुं शक्नोति तर्ह्यतिमूढत्वादुपदेशानर्ह एव स इत्यर्थः।

( अपक्रामन्तु गर्भिण्यः )

**पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः। तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति। तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥**

**तस्माद्यथाशास्त्रोपदेश एवाऽऽत्मावबोधविधिर्नान्यः। न ह्यग्नेर्दाह्यं तृणाद्यन्येन केनचिद्दग्धुं शक्यम्। अतएव शास्त्रमात्मस्वरूपं बोधयितुं प्रवृत्तं सदमनुष्यत्वप्रतिषेधेनेव नेति नेतीत्युक्त्वोपरराम। तथा "अनन्तरमबाह्यम् अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्"। "तत्त्वमसि" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्येवमाद्यपि च।** ५

**यावदयमेवं यथोक्तमिममात्मानं न वेत्ति तावदयं बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्याविद्योपाधिधर्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्यन्तेषु देवतिर्यङ्नरस्थानेषु पुनः पुनरावर्तमानोऽविद्याकामकर्मवशात्संसरति। स एवं संसरन्नुपात्तदेहेन्द्रियसङ्घातं त्यजति। त्यक्त्वाऽन्यमुपादत्ते। पुनः पुनरेवमेव नदीस्रोतोवज्जन्ममरणप्रबन्धाविच्छेदेन वर्तमानः काभिरवस्थाभिर्वर्तत इत्येतमर्थं दर्शयन्त्याह श्रुतिर्वैराग्यहेतोः—** १०

**अयमेवाविद्याकामकर्माभिमानवान्यज्ञादिकर्म कृत्वाऽस्माँल्लोकाद्धूमादिक्रमेण चन्द्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्यान्नभूतः पुरुषाग्नौ हुतः। तस्मिन्पुरुषे ह वा अयं संसारी रसादिक्रमेणाऽऽदितः प्रथमतो रेतोरूपेण गर्भो भवतीत्येतदाह। यदेतत्पुरुषे रेतस्तेन रूपेणेति।**

अतः प्रकृत आत्मनो नित्यापरोक्षस्याहं मनुष्य इत्यादिनाऽऽरोपितरूपेण प्रतीतेस्तस्य नेति नेति यतो वाचो निवर्तन्त इतीतरनिषेधे कृते स्वप्रकाशस्य स्वयमेव प्रतीतिसम्भवादयमेवोपदेशप्रकारो नान्य इत्युपसंहरति—तस्मादिति। ननु शास्त्रं विनाऽप्यन्यतो विधिमुखेनाऽऽत्मावबोधोऽस्त्वित्यत आह—न ह्यग्नेरिति। शास्त्रैकसमधिगम्यत्वादात्मनो न हेत्वन्तरेण बोधः सम्भवतीत्यर्थः। शास्त्रीयोऽप्यवबोधप्रकारोऽयमेव नान्य इतीतरनिषेधमात्रेणोपरमान्निश्चीयत इत्याह—अत एवेति। इत्यनुशासनमितिपदेनार्थादनुशासनान्तरनिषेधादप्येवमेवेत्याह—तथाऽनन्तरमिति। तत्त्वमसीत्यत्रापि तत्पदार्थसामानाधिकरण्येन त्वंपदार्थे कर्तृत्वादिनिषेधेनैव तस्य ब्रह्मत्वबोध इत्याह—तत्त्वमसीति। तत्केन कं पश्येदिति दर्शनक्रियाकर्मत्वनिषेधादप्यवेद्यतयैवाऽऽत्मनो ज्ञानमित्याह—यत्र त्वस्येति। एवमाद्यपीति। वेद्यत्वं निषेधतीति शेषः। १५ २०

तस्मादात्मनः कर्तृत्वादिधर्मवत्तया प्रमाणेन ज्ञातुमशक्यत्वात्तद्धर्मवत्त्वप्रतीतेरज्ञानमूलत्वेन भ्रमत्वात्संसारित्वेन प्रतीतस्य वस्तुतो ब्रह्ममात्रत्वादनेनैव न्यायेनेश्वरस्यापि सर्वज्ञत्वादिकोपाधिकल्पनस्य भ्रमत्वाद्भेदे मानाभावात्तस्यापि वस्तुतो ब्रह्ममात्रत्वान्न त्रय आत्मनः किन्त्वात्मैक एवाखण्डैकरस इत्यभिप्रेत्यैवंभूतस्य कथं संसारप्रतीतिरित्याशङ्क्याऽऽत्मनः संसारस्याज्ञानत औपाधिकत्वमुत्तराध्यायसंगत्युपयोगितयाऽऽह—यावदयमिति। बाह्यानित्यदृष्टिलक्षणमिति। प्रत्यगात्मनो बाह्यमन्तःकरणवृत्ति वृत्तिवृत्तिमतोरभेदादन्तःकरणमित्यर्थः। २५

एवमध्यारोपापवादाभ्यामात्मतत्त्वं निरूप्योक्तात्मतत्त्वज्ञाने वैराग्यं हेतुरिति तदर्थं जीवावस्थाः प्रपञ्चयन्नर्थात्तस्य त्रय आवसथा इत्युपक्षिप्तं शरीरत्रयं च प्रपञ्चयितुं पञ्चमाध्यायमवतारयन्भूमिकां करोति—स एवमिति। यावदयमित्यारभ्य वोत्तराध्यायस्य भूमिका। इदानीमध्यायमवतारयति—स एवमिति। इत्येतमर्थमिति। इति जिज्ञासायामवस्थारूपमर्थमित्यर्थः। वैराग्यहेतोरिति। वैराग्यार्थमित्यर्थः। जीवावस्थारूपस्य जन्मत्रयस्यात्यन्तबीभत्सारूपत्वात्तद्विचारे वैराग्यं भवतीति भावः। पुरुषे ह वा अयमित्यत्रेदंशब्दार्थमाह—अयमित्यादिना। यो मूर्धानं विदार्य प्रविश्य स्थितः सोऽयमित्युच्यत इत्यर्थः। यज्ञादीति। अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्यादिना पञ्चाग्निविद्यायामयमर्थः प्रसिद्धः। अन्नभूत इति। व्रीह्याद्यन्नसंश्लिष्टः पुरुषाग्नौ हुतः पुरुषेण भक्षित इत्यर्थः। तस्मिन्निति। येन पुरुषेण भक्षितस्तस्मिन्नित्यर्थः। पुरुषे ह वा अयं संसार्यादितः प्रथमतः स्त्रीगर्भप्रवेशात्पूर्वं गर्भो भवतीति प्रथममन्वयः। पुरुषे स्त्रियामिव गर्भो न दृश्यत इत्याशङ्क्य भक्षितस्यान्नस्य रसादिक्रमेण रेतोरूपेण परिणामे सति तत्संश्लिष्टस्यापि तथैव रेतःसंश्लेषेण रेतोभावे सति तेन रूपेण पुरुषस्य शरीरे विद्यमानस्तस्य स गर्भ इत्याह—रसादीति। रसादीत्यादिशब्देन शोणितमांसादि गृह्यते। रसादिक्रमेण यदेतत्पुरुषे रेतस्तेन रूपेण गर्भो भवतीत्येतदाहेति पश्चादन्वयः कार्यः। ३० ३५

**तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति। साऽस्यैतमात्मानमत्र गतं भावयति ॥२॥**

**सा भावयित्री भावयितव्या भवति, तं स्त्री गर्भं बिभर्ति। सोऽग्र एव कुमारं**

तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्योऽङ्गेभ्योऽवयवेभ्यो रसादिलक्षणेभ्यस्तेजः साररूपं शरीरस्य सम्भूतं ५ परिनिष्पन्नं तत्पुरुषस्याऽऽत्मभूतत्वादात्मा। तमात्मानं रेतोरूपेण गर्भीभूतमात्मन्येव स्वशरीर एवाऽऽत्मानं बिभर्ति धारयति। तद्रेतः यदा यस्मिन्काले भार्यर्तुमती तस्यां योषाग्नौ स्त्रियां सिञ्चत्युपगच्छन्। अथ तदेनदेतद्रेत आत्मनो गर्भभूतं जनयति पिता। तदस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरूपेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः, तदेतदुक्तं पुरस्ताद्"सावात्माऽमुमात्मानमि"त्यादिना ॥ १ ॥

तद्रेतो यस्यां स्त्रियां सिक्तं सत्तस्या आत्मभूयमात्माव्यतिरेकतां यथा पितुरेवं गच्छति प्राप्नोति १० यथा स्वमङ्गं स्तनादि तथा तद्वदेव। तस्माद्धेतोरेनां मातरं स गर्भो न हिनस्ति पिटकादिवत्। यस्मात्स्तनादि स्वाङ्गवदात्मभूयं गतं तस्मान्न हिनस्ति न बाधत इत्यर्थः। साऽन्तर्वत्न्येतमस्य भर्तुरात्मानमत्राऽऽत्मन उदरे गतं प्रविष्टं बुद्ध्वा भावयति वर्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारमनुकूलाशनाद्युपयोगं च कुर्वती।

सा भावयित्री वर्धयित्री भर्तुरात्मनो गर्भभूतस्य भावयितव्या रक्षयितव्या च भर्त्रा भवति। न ह्युपकार-प्रत्युपकारमन्तरेण लोके कस्यचित्केनचित्सम्बन्ध उपपद्यते। तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्ति १५ धारयत्यग्रे प्राग्जन्मनः। स पिताऽग्र एव पूर्वमेव जातमात्रं कुमारं जन्मनोऽध्यूर्ध्वं जन्मनो जातं कुमारं जातकर्मादिना पिता भावयति ॥ २ ॥

स पिता यद्यस्मात्कुमारं जन्मनोऽध्यूर्ध्वमग्रेजातमात्रमेव जातकर्मादिना यद्भावयति तदात्मानमेव भावयति पितुरात्मैव हि पुत्ररूपेण जायते। तथा ह्युक्तं "पतिर्जायां प्रविशती"त्यादि। तत्किमर्थमात्मानं पुत्ररूपेण जनयित्वा

ननु तस्य गर्भत्वमप्रसिद्धमित्याशङ्क्य स्त्रियेव तस्य पुरुषेण भृतत्वाद्गौण्या वृत्त्या गर्भत्वमिति वक्तुं २० तदेतदित्यादि बिभर्तीत्यन्तं वाक्यम्। तद्व्याचष्टे—तच्चैतदिति। रसादिलक्षणेभ्य इति। रसादिधातुसमुदाय-रूपत्वाच्छरीरस्य तेषां तदवयवत्वं चरमधातुत्वाच्छरीरस्य साररूपत्वं चेत्यर्थः। आत्मभूतत्वादिति। आत्माभिमान-विषयशरीरभूतत्वादात्मानं गर्भीभूतं बिभर्तीति वक्ष्यमाणानुषङ्गेण वाक्यं पूरणीयम्। उक्तमर्थं श्रुत्यक्षरारूढं करोति—आत्मनीति। अत आत्मानमित्यस्य न पुनरुक्तिदोषः। एवं पितृशरीररूपमावसथं तत्र रेतोरूपेणावस्थां चोक्त्वा मातृदेहरूपावसथं तत्र गर्भरूपेणावस्थां च दर्शयितुं पितृशरीरान्निर्गमनरूपं जन्म दर्शयति—तद्रेत इति। २५ यदेत्युक्तं कालं विशदयति—भार्येति। पञ्चाग्निविद्यायां योषा वाव गौतमाग्निरित्यादिनाऽयमर्थो दर्शित इति वक्तुं योषाग्नावित्युक्तम्। उपगच्छन्निति। भार्यां सङ्गच्छन्नित्यर्थः। अस्य रेतोरूपेण स्थानान्निर्गमनमित्यन्वयः। रेतो भार्यायां सिञ्चतीत्यत्र वाक्यान्तरं संवादयति—तदेतदिति।असावात्मा पुरुषोऽमुमात्मानं स्वीयं रेतोरूपमात्मानमस्मा आत्मने भार्यारूपाय प्रयच्छतीति श्रुत्यर्थः।

ननु स्त्रीशरीरे प्रविष्टं पुरुषस्य रेतः स्त्रिया उपद्रवकारि स्याच्छरीरलग्नवाणवदित्याशङ्क्योक्तं तत्स्त्रिया ३० इत्यादि तदेतद्व्याचष्टे—तद्रेतो यस्यामिति। पिटका व्रणरूपग्रन्थिविशेषास्तद्वन्न हिनस्तीति व्यतिरेकेण दृष्टान्तः। अक्षरार्थमुक्त्वा पिण्डितार्थमाह—यस्मादिति। अत्र प्रसङ्गात्स्त्रिया सावधानेन गर्भरक्षणं कर्तव्यमिति विधत्ते—सेति। भावयति भावयेदित्यर्थः। पालनोपायमाह—गर्भविरुद्धेति।

तस्याप्यन्तर्वत्नीरक्षणं विधत्ते—सा भावयित्रीति। चशब्दस्य सेत्यत्र सम्बन्धः। साऽपीत्यर्थः। तस्या भावयितव्यत्वे हेतुमाह—न हीति। स्त्रीपुरुषयोः परस्परोपकारकत्वमुक्त्वा तयोः पुत्रसाध्यवक्ष्यमाणपुण्यकर्म-३५ प्रतिनिधिरूपप्रत्युपकारसिद्ध्यर्थं पुत्रं प्रत्युपकारकत्वमाह—तमिति। अग्र इत्यत्रैकोऽग्रशब्दो जन्मनः पूर्वकालं वदति। द्वितीयो जननकालम्। अधिशब्दोऽनन्तरकालं वदतीति व्याचष्टे—अग्रे प्राग्जन्मन इत्यादिना। पूर्वमेवेत्यस्य विवरणं जातमात्रमिति। जायमानमित्यर्थः। जातकर्मादिनेति। जन्मनः प्राक्सीमन्तादिना जननकाले सुखनिष्क्रमणार्थ-मन्त्रजलप्रोक्षणादिनाऽनन्तरं जातकर्मादिनेत्यर्थः।

पित्रा जातकर्मादिकं कर्तव्यमित्यभिधाय तत्स्तौति—स पितेति। प्रविशतीत्यादीति। गर्भो भूत्वा स

जन्मनोऽग्रेऽधि भावयति । स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्यै । एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ॥ ४ ॥

भावयतीति ? उच्यते—एषां लोकानां सन्तत्या अविच्छेदायेत्यर्थः । विच्छिद्येरन्हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्युः केचन । एवं पुत्रोत्पादनादिकर्माविच्छेदेनैव सन्तताः प्रबन्धरूपेण वर्तन्ते हि यस्मादिमे लोकाः तस्मात्तदविच्छेदाय तत्कर्तव्यं न मोक्षायेत्यर्थः । तदस्य संसारिणः कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्रेतोरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः ॥ ३ ॥ ५

अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने, पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधीयत इत्यर्थः । तथा च सम्प्रत्तिविद्यायां वाजसनेयके पित्राऽनुशिष्टो 'ऽहं ब्रह्माहं यज्ञ" इत्यादि प्रतिपद्यते इति । १०

अथानन्तरं पुत्रे निवेश्याऽऽत्मनो भारमस्य पुत्रस्येतरोऽयं यः पित्रात्मा कृतकृत्यः कर्तव्याद्वृणत्रयाद्विमुक्तः कृतकर्तव्य इत्यर्थः । वयोगतो गतवया जीर्णः सन्प्रैति म्रियते । स इतोऽस्मात्प्रयन्नेव शरीरं परित्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानः कर्मचितं पुनर्जायते । तदस्य मृत्वा प्रतिपत्तव्यं यत्तत्तृतीयं जन्म । ननु संसरतः पितुः

मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायत इति मन्त्रशेषः । मोक्षप्रकरणे पुत्रोत्पादनस्य विधानात्पुत्रोत्पादनं मोक्षसाधनमित्यभिप्रायेण पृच्छति—तत्किमर्थमिति । "न कर्मणा न प्रजया धनेने"त्यादिश्रुतेर्मोक्षप्रकरणे पुत्रोत्पादनोक्तिर्वैराग्यार्थेत्यभिप्रेत्य प्रकृतंश्रुत्योत्तरमाह—उच्यत इति । अत्र लोकशब्देन लोकसाधनीभूताः पुत्रपौत्रादयो गृह्यन्ते । तेषां सन्तत्या इत्यर्थः । पुत्रोत्पादनेनैवोक्तानां लोकानां सन्ततत्वं प्रसिद्धमिति वक्तुमेवं सन्तता हीति वाक्यं तद्व्याचष्टे—एवमिति । स्वेन पुत्रोत्पादने विधितः कृते सति स्वपुत्रोऽपि तथा तत्पुत्रोऽपि तथेत्येवं लोकसन्ततिर्भवतीत्यर्थः । पुत्रोत्पादनस्य लोकसन्ततिरेव प्रयोजनमिति वदन्त्या श्रुत्या तस्य मोक्षसाधनत्वं निरस्तमित्याह—न मोक्षायेत्यर्थ इति । एवं प्रसङ्गाद्गर्भधारणादिविधिमुक्त्वा प्रकृतं वैराग्यार्थं द्वितीयं जन्म दर्शयति—तदस्येति । १५ २०

एवं पितृशरीरेऽत्यन्ताशुचावत्यन्ताशुचिरेतोरूपेणावस्थानं ततोऽपि निर्गमनं ततो मातुरुदरे मलमूत्राक्रान्ते विष्ठाकृमिवदवस्थानं ततो योनिद्वारा निर्गमनं चेत्याद्यत्यन्तकष्टमित्युक्त्वा जन्मानन्तरमपि न स्वातन्त्र्यं किन्तु पितृनियोगात्तत्पारतन्त्र्येण सर्वदा कर्मानुष्ठातव्यमिति वदन्पुत्रेण कर्तव्यं पितुरुपकारं दर्शयति सोऽस्येति वाक्यं तद्व्याचष्टे—अस्येति । पितुर्द्वावात्मानौ देहौ स्वदेहः पुत्रदेहश्चेति । तत्र पुत्रस्योपयोगमाह—सोऽयमिति । पुत्रस्य प्रतिनिधित्वमन्यत्राप्युक्तमित्याह—तथा चेति । सम्प्रत्तिः सम्प्रदानं स्वकर्तव्यस्य पुत्रे स्थापनं यत्रोच्यते सा सम्प्रत्तिविद्येत्यर्थः । यदा तु प्रैष्यन्मन्यते स्वस्य परलोकगमनं निश्चिनोति, "अथ पुत्रमाह—त्वं ब्रह्म त्वं यज्ञस्त्वं लोक" इति । मयाऽध्येतव्यं ब्रह्म वेदस्त्वं त्वयाऽध्येतव्यम्, मया कर्तव्योऽयं यज्ञस्त्वं त्वया कर्तव्यः, मया सम्पाद्यो लोकस्त्वं त्वया सम्पाद्यः, इत्येवं पित्राऽनुशिष्टः सन्पुत्रोऽहं ब्रह्माहं यज्ञोऽहं लोक इति प्रतिपद्यते । अहं ब्रह्माध्येष्ये यज्ञान्करिष्ये लोकं सम्पादयिष्यामीति स्वीकरोतीत्युक्तमित्यर्थः । अनेन स्वशरीरतृतीयावस्थोक्ता । २५ ३०

ननु किमर्थं पुत्रं प्रतिनिदधाति स्वयमेव करोत्वित्याशङ्क्य स्वस्य मरणात्कर्तुमशक्तेरित्यभिप्रायेणोक्तमथास्यायमिति तद्व्याचष्टे—अथेति । एवकारार्थं मध्ये विलम्बाभावं दर्शयति—तृणजलूकेति । तृणजलूका तृणस्यान्तं गत्वा तृणान्तरमाक्रम्याऽऽत्मानं देहं पूर्वस्मात्तृणादुपसंहरति पूर्वंतृणं मुञ्चति । एवमेवायमात्मा देहान्तरं परिगृह्य पूर्वदेहं मुञ्चतीति मध्ये विलम्बाभावः श्रुत्यन्तर उक्त इत्यर्थः । कर्मचितं देहान्तरमुपाददानः पुनर्जायत इत्यन्वयः । यद्यपि देवयानपितृयाणमार्गाभ्यां गच्छतां लोकान्तर एव शरीरग्रहणमुक्तमुभयव्यामोहात्तत्सिद्धेरिति सूत्रे । "आकाशाच्चन्द्रमसमेष सोमो राजे"ति श्रुतेः । न तु पूर्वदेहत्यागकाल एव । तथाऽपि सविज्ञानो भवति सविज्ञानमेवान्ववक्रामती"ति श्रुतौ वासनामयं भाविशरीरमुत्क्रान्तिकाल एव गृह्णातीत्युक्तत्वात्तदभिप्रायं तृणजलूकानिदर्शनमिति द्रष्टव्यम् । तदस्येति । यन्मृत्वा प्रतिपत्तव्यं तदस्य तृतीयं जन्मेत्यन्वयः । यस्य जन्मद्वयमुक्तं तस्यैव तृतीयं ३५

**तदुक्तमृषिणा—गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्। इति। गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥**

सकाशात्प्रेतोरूपेण प्रथमं जन्म। तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तम्। तस्यैव तृतीये जन्मनि वक्तव्ये प्रेतस्य पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते? नैष दोषः। पितापुत्रयोरैकात्म्यस्य विवक्षितत्वात्। सोऽपि पुत्रः स्वपुत्रे ५ भारं निधायेतः प्रयन्नेव पुनर्जायते यथा पिता। तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः। पितापुत्रयोरेकात्मकत्वात् ॥ ४॥

एवं संसरन्नवस्थाभिव्यक्तित्रयेण जन्ममरणप्रबन्धारूढः सर्वो लोकः संसारसमुद्रे निपतितः कथञ्चिद्यदा श्रुत्युक्तमात्मानं विजानाति यस्यां कस्याञ्चिदवस्थायां तदैव मुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तु तदृषिणा मन्त्रेणाप्युक्तमित्याह—गर्भे नु मातुर्गर्भाशय एव सन्। न्विति वितर्के। अनेकजन्मान्तरभावनापरिपाकवशादेषां १० देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वा विश्वानि सर्वाण्यन्ववेदमहमहो अनुबुद्धवानस्मीत्यर्थः। शतमनेकं बह्व्यो मा मां पुर आयसीरायस्यो लोहमय्य इवाभेद्यानि शरीराणीत्यभिप्रायः। अरक्षन्रक्षितवत्यः। संसारपाशनिर्गमनादधोऽध श्येन इव जालं भित्त्वा जवसाऽऽत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि अहो। गर्भ एव शयानो वामदेव ऋषिरेवमुवाचैतत् ॥ ५ ॥

जन्म वक्तव्यम्। औचित्यात्। अन्यथाऽस्य पितुः पूर्वजन्मद्वयस्यानुक्तत्वेनेदमस्य पितुस्तृतीयं जन्मेत्यनन्वया-१५ पत्तेरिति शङ्कते—नन्विति। प्रेतस्येति। म्रियमाणस्येत्यर्थः। यत्कुमारं भावयत्यात्मानमेव तद्भावयति सोऽस्यायमात्मेति च पितापुत्रयोरभेदस्योक्तत्वात्पुत्रस्योक्तं जन्मद्वयं पितुरेव तस्यैव च तृतीयं जन्मोच्यते नान्यस्येति न तृतीयत्वविरोध इत्याह—नैष दोष इति। यद्वा पितुर्मरणानन्तरं पुनर्जन्मेत्युक्तेः पुत्रस्याप्येवमेव ज्ञातुं शक्यत इत्यभिप्रायेण पितुरित्युक्तमित्याह—सोऽपि पुत्र इति। यथा पितेत्यनन्तरं ततश्च पुत्रस्यैव तृतीयं जन्मोक्तमिति शेषः। एवं च तदस्य तृतीयं जन्मेति वाक्ये तच्छब्देन तत्प्रकारकत्वमुच्यते। अस्येति पुत्र उच्यते। अस्य पुत्रस्य २० तत्प्रकारकं तृतीय जन्मेति वाक्यार्थ इति भावः। ननु पर्यायद्वयोक्तं जन्म यथा पुत्रगतमेवैवं तृतीयपर्यायोक्तमपि साक्षात्पुत्रगतमेवोच्यतां किं तयोरेकात्मत्वविवक्षयेत्याद्यपरिहारे दोषमाशङ्क्याऽऽह—तदन्यत्रोक्तमिति। अयं भावः—पुत्रस्य पितरं प्रत्युपकारप्रदर्शनार्थं तत्प्रतिनिधित्वे उक्ते पिता स्वयमेव कर्म करोतु किं प्रतिनिधिनेत्याशङ्किते तत्परिहारार्थं पितुर्मरणाभिधानं प्रसक्तमिति मरणानन्तरं वक्तव्यं तृतीयं जन्म लाघवार्थं तस्मिन्नेवोक्तमिदं जन्मत्रयं सर्वेषां पूर्वेषामप्यस्तीति प्रदर्शयितुं च पुत्रे वक्तव्यमपि तृतीयं जन्म पितर्युक्तमिति।

२५ पूर्वाध्यायेऽध्यारोपप्रकरणोक्तमावसथत्रयं वैराग्यार्थमिह प्रपञ्च्य तस्मिन्नेवाध्याये तस्य संसारस्य निवर्त्यत्वेन तदपवादार्थं यत्तत्त्वज्ञानमुक्तं स एतमेवेत्यादिना तत्सफलं प्रपञ्चयितुं तदुक्तमृषिणेत्यादिग्रन्थः। तत्र तच्छब्दार्थमाह—एवमित्यादिना। एतद्वस्त्विति। संसारसमुद्रे पतनं ततस्तत्त्वज्ञानाच्च तन्निवृत्तिरित्येतद्वस्त्वित्यर्थः। आहेति। ब्राह्मणमिति शेषः। भावनेति। आत्मानात्मविवेकभावनेत्यर्थः। वागग्न्यादीनामिति। उक्तानि जन्मानि शरीरग्रहणरूपाणि तदुपलक्षितः सर्वोऽपि संसारो वागादिकरणतदधिष्ठातृदेवतादिसङ्घातस्य लिङ्गशरीरस्यैव न त्वसङ्गस्य ३० व्यापिनो ममेत्यर्थः। अनेन पदार्थविवेकपूर्वकमात्मज्ञानमुक्तम्। यद्वा सर्वज्ञादात्मनः सकाशादेवैषां जन्मानीत्यन्ववेदम्। एतज्जन्महेतुभूतं मूलकारणमात्मानं ज्ञातवानस्मीत्यर्थः। यद्यपि गर्भे श्रवणादिज्ञानसामग्री नास्ति तथाऽपि पूर्वजन्मकृतश्रवणादिसामग्रीवशादेव प्रतिबन्धनिवृत्तौ सत्यां गर्भेऽपि ज्ञानोत्पत्तिः सम्भवतीति भावः। इतः पूर्वकालीनं बन्धं दर्शयति—शतमिति। अभेद्यानीति। तत्त्वज्ञानमन्तरा तत्प्रवाहाविच्छेदादित्यर्थः। अधोऽध इति। अधो लोकेष्वेवं निकृष्टलोकेष्वेवारक्षन्नित्यर्थः। यद्वाऽध इति श्रौतं पदमथेत्यर्थे व्याचष्टे—अधोऽथेति। अथानन्तरमिदानी-३५ मित्यर्थः। मन्त्रद्रष्टुरभिप्रायमाह—अहो इति। इदमाश्चर्यं मम संवृत्तमित्यभिप्रायेण मन्त्रमुक्तवानित्यर्थः। मन्त्रद्रष्टुर्नामनिर्देशपूर्वकं तस्य तात्पर्यं वक्तुं गर्भ एवैतदित्यादि ब्राह्मणम्। तद्व्याचष्टे—गर्भ इत्यादिना। एतत्पूर्वब्राह्मणोक्तमर्थजातमेवं मन्त्रोक्तप्रकारेणोवाचेत्यन्वयः।

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ ६ ॥

( यथास्थानं गर्भिण्यः )

[1]इति द्वितीयोऽध्यायः

स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वानस्माच्छरीरभेदाच्छरीरस्याविद्यापरिकल्पितस्याऽऽयसवदनिर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धस्य परमात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदाच्छरीरोत्पत्तिबीजाविद्यानिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः। ऊर्ध्वः परमात्मभूतः सन्नधोभावात्संसारादुत्क्रम्य ज्ञानावद्योतितामलसर्वात्मभावमापन्नः सन्नमुष्मिन्यथोक्तेऽजरेऽमरेऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तेऽबाह्ये प्रज्ञानामृतैकरसे प्रदीपवन्निर्वाणमत्यगमत्स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपेऽमृतः समभवदात्मज्ञानेन पूर्वमाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वेत्यर्थः। द्विर्वचनं सफलस्य सोदाहरणस्याऽऽत्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम् ॥ ४ ॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतावैतरेयोपनिषद्भाष्ये द्वितीयोऽध्यायः

ज्ञानस्याव्यभिचरितफलत्वज्ञापनाय वामदेवेन ज्ञानफलं प्राप्तमिति वक्तुं स एवं विद्वानिति वाक्यं तद्व्याचष्टे—**स वामदेव इति**। शरीरस्य पुनरुत्पत्तिशङ्कां वारयति—**शरीरोत्पत्तीति**। तत्त्वज्ञानेनाविद्यादिनाशादित्यर्थः। **परमात्मभूतः सन्निति**। ऊर्ध्वशब्दस्योपरितनवाचित्वात्परमात्मवस्तुन एव कदाचिदप्यधोभावरूपनिकर्षाभावेन निरङ्कुशोपरितनभावादूर्ध्वशब्दार्थत्वमित्यर्थः। प्रसिद्धं स्वर्गलोकं वारयति—**अमुष्मिन्यथोक्त इति**। इन्द्रियागोचरत्वेनामुष्मिन्निति निर्देशः। स्वर्गशब्दस्य निरतिशयसुखसामान्यवाचित्वाद्ब्रह्मानन्दस्यैव तथाविधत्वात्तस्यैव मुख्यं स्वर्गत्वम्। वैषयिकस्य तु स्वर्गत्वमापेक्षिकमित्यर्थः। उक्तस्य स्वर्गस्य ब्रह्मरूपस्य स्वस्माद्भेदमाशङ्क्याऽऽह—**स्वस्मिन्निति**। आत्मशब्दस्यान्तःकरणाद्यर्थत्वं वारयति—**स्वे स्वरूप इति**। अमुष्मिन्स्वर्गे मर्त्यदेहादिभावं विहाय स्वात्मभावेनैव स्थित इत्याह—**अमृत इति**। उक्तस्वर्गलोके सर्वकामावाप्तिरिति भ्रमं वारयति—**पूर्वमिति**। जीवन्मुक्तिदशायामाप्तकामतया सर्वात्मत्वेनेत्यर्थः। **सोदाहरणस्येति**। उदाहरणं वामदेव इत्यर्थः।

इति श्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमदानन्दज्ञानकृतावैतरेयोपनिषद्भाष्यटीकायां द्वितीयोऽध्यायः

---

१. इमामुपनिषदं विषयीकृत्य ब्रह्मसूत्रतृतीयाध्यायतृतीयपादे "आत्मगृहीतिरितरवदुत्तरात्" इत्यधिकरणे विचारितम्। "आत्मा वा इदमेक एव अग्र आसीदि"त्यत्र न परमात्मा ग्राह्यः, अपि तु हिरण्यगर्भो ग्राह्यो वाक्यान्वयदर्शनात्। लोकसृष्टिवचनम् "इमान् लोकानसृजत" इत्युक्तंहिरण्यगर्भस्यैव अन्यत्रोपनिषत्सु दृश्यते, यथा बृहदारण्यके "आत्मैवेदमग्र आसीत् पुरुषविध" इत्यत्र। अत्रैव पूर्वम् "अथातो रेतसः सृष्टिः प्रजापते रेतो देवा" इति। यत्र पञ्चभूतसृष्टिरुच्यते तत्रात्मा ब्रह्मैव यथा तैत्तिरीयके "आत्मन आकाशः सम्भूत" इति। इति पूर्वपक्षः। सिद्धान्तस्तु परमात्मैवेह ग्राह्यः प्रागुत्पत्तेः आत्मनः एकत्वावधारणात् यथा—"सदेव सोम्येदमग्र आसीदि"त्यादौ। लोकसृष्टिवचनं तु पञ्चभूतानि त्रिराजं च सृष्ट्वेत्यध्याहृत्य योजनीयमिति।

# अथ तृतीयोऽध्यायः

[1]कोऽयमात्मेति वयमुपास्महे। कतरः स आत्मा, [2]येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥

ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया श्रुत्याऽवद्योत्यमानां ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्म जिज्ञासवोऽनित्यात्साध्यसाधनलक्षणात्संसारादाजीव-
५ भावाद्व्याविवृत्सवो विचारयन्तोऽन्योन्यं पृच्छन्ति कोऽयमात्मेति। कथं ? यमात्मानमयमात्मेति साक्षाद्वयमुपास्महे कः स आत्मेति। यं चाऽऽत्मानमयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत्तमेव वयमप्युपास्महे को नु खलु

पूर्वस्मिन्नध्याये जन्मत्रयनिरूपणेन वैराग्यं निरूपितं ज्ञानोत्पत्त्यर्थम्। न च पदार्थशोधनं विना वैराग्यमात्रेण ज्ञानोत्पत्तिरिति पदार्थशोधनपूर्वकं वाक्यार्थं कथयितुं षष्ठोऽध्याय इत्यभिप्रेत्य पदार्थशोधनेऽधिकारिणं दर्शयन्वाक्यमवतारयति—ब्रह्मविद्येति। वामदेवाद्याचार्येति। आदिशब्देन 'तद्यो यो देवानां प्रत्यबुध्यत स एव
१० तदभवदि"त्यादिनोक्ता देवादयो गृह्यन्ते। अधुनेति। पूर्वोक्तरीत्या वैराग्योत्पत्त्यनन्तरमित्यर्थः। आजीवभावादिति। संसारस्य हेतुभूताविद्यातत्कार्येष्वात्मभावसहिताद्व्यावर्तितुं संसारं परित्यक्तुमिच्छन्त इत्यर्थः। विचारप्रकारमेव वाक्यान्वयेन स्पष्टीकर्तुं पृच्छति—कथमिति। नन्वयमात्मेति विशेषतो निश्चये स क इति प्रश्नानुपपत्तिः। तद्विचारेण वा न किञ्चित्प्रयोजनमित्याशङ्क्याऽऽत्मानं विशिनष्टि—यं चेति। उपास्महे उपासितुं प्रवृत्ता इत्यर्थः। वामदेवो यमात्मानमुपास्यामृतोऽभवद्वयमपि तमात्मानमुपासितुं प्रवृत्ताः स क इति प्रश्नार्थ इत्यर्थः। उपासनं

---

१५ १. "कोऽयमात्मेति वयमुपास्महे। कतरस्स आत्मा" इत्यत्र कतरपदं कीदृग्गुणक इत्यर्थकमथवा कतमः देहेन्द्रियमनः प्राणिदिषु इत्यर्थकमिति परेषां व्याख्यानं तन्न, द्वयोर्मध्ये कतरः इति "किं यत्तदोर्द्वयोरेकतरस्य निर्धारणे डतरच्" (पा० अ०) इति सूत्राल्लभ्यते। नायमार्थः प्रकृतासम्बद्धः। प्रकृते हि प्रपदाभ्यामेकः प्राणः शरीरं प्रविष्टः मूर्धानं विदार्य परमात्मा प्रविष्टः तयोर्मध्ये कतरः ? इति प्रश्नस्य प्रकृते सङ्गतत्वात् देहेन्द्रियादीनामनात्मत्वनिर्धारणस्याप्रकृतत्वात् देहे प्रविष्टस्य इदमदर्शमि-
२० त्याद्युक्त्यैव देहादिव्यतिरेकस्य सिद्धत्वेन तत्र संशयाभावात्। उत्तरत्रापि च "येन वा पश्यति" इत्यादिना एकं करणं दर्शनादिना अनेकभेदमापन्नं मनआख्यमुच्यते। मनश्च प्राण एव क्रियाशक्तिमत्त्वेन प्राण इति ज्ञानशक्तिमत्त्वेन च मन इति एकमेव वस्तु भेदेन व्यवह्रियते "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण" इति कौषीतकोपनिषदि श्रवणात्।

२. मतान्तरे "येन वा पश्यती"त्यादिना चक्षुरादीनामनात्मत्वमुक्तं "संज्ञानमि"त्यादिना धर्मभूत-
२५ ज्ञानस्यानात्मत्वम् "एतद्ब्रह्मैष इन्द्रः" इत्यादिना देवानामनात्मत्वम् "इमानि पञ्चमहाभूतानि" इत्यादिना जडवर्गस्याब्रह्मत्वं स्थावरान्तस्य। "सर्वाण्येतानि प्रज्ञानस्य नामधेयानि" इत्यस्य तच्छेषभूतानीत्यर्थः इति व्याख्याय "प्रज्ञानं ब्रह्म" इत्यस्य प्रकृष्टज्ञानरूपं ब्रह्मेत्यर्थः।

वस्तुतस्तु नेदं व्याख्यानमृजु। "येन वा पश्यति" इत्यादेः येन चक्षुर्भूतेन पश्यति घ्राणभूतेन जिघ्रति इत्यर्थः मनस एव तत्तदिन्द्रियजन्यवृत्तिरूपतया परिणामात् "तदेतद्धृदयं मनश्चैतत्" इति
३० सङ्गच्छते। तन्मते तु एकेन मनसा दर्शनादिव्यवहारः श्रुत्युक्तो न व्याख्यातः। न च "प्रज्ञया वाचं समारुह्ये"त्यादिकौषीतकिवाक्यमपि सङ्गच्छते तेषाम्। "मनसा ह्येव पश्यति मनसा शृणोति" इति च। तेन च प्राणस्यानात्मत्वमुक्तं भवति प्राणमनसोरेकत्वात्। "संज्ञानमाज्ञानमि"त्यादेस्तु संज्ञानादिवृत्तयः येन जीवचैतन्येन अधिष्ठिताः उपाधिभूताः तत्प्रतिबिम्बयुक्ताः तदुपहितस्य ब्रह्मणः नामधेयानि। नामधेयस्य नामार्थोपलब्धिहेतुत्वाद् नामधेयत्वम्। अत्र तेषु नामधेयत्वं गौणम्। एवं संज्ञानादिपदलक्षितं
३५ ज्ञानादिभ्यः पृथक्त्वेन निर्णीतं प्रज्ञानं शुद्धजीवचैतन्यं ब्रह्म इति ऋग्वेदीयमहावाक्यार्थः।

**स आत्मेति। एवं जिज्ञासापूर्वमन्योन्यं पृच्छतामतिक्रान्तविशेषविषयश्रुतिसंस्कारजनिता स्मृतिरजायत। "तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्"। "स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत" अत्र द्वे ब्रह्मणी इतरेतरप्रातिकूल्येन**

नामोप सामीप्येनैक्येन तस्यैव निरुपचरितसामीप्यत्वादैक्येनापरोक्षीकृत्याऽऽसनं तद्रूपेणावस्थानं यत्तदुच्यते। यद्वाऽहं सुखीत्यादिव्यवहारेषु तमेव वयमप्युपास्महे तमेवाऽऽत्मत्वेन स्वीकृत्य स्थिताः। अनात्मनोऽहमिति प्रतीत्यनुपपत्तेः स आत्मा क इति विचारार्थः। न चायमात्मेति निश्चये विचारायोगः। तस्यैव कार्यकरणसङ्कीर्णत्वेन ५ विचारोपपत्तेरिति। ननु भूतानां व्याकरणार्थं यः प्रविष्टः स एवाऽऽत्मेति निर्धारणसम्भवाद्विचारानुपपत्तिरित्याशङ्क्यैवमपि द्वयोः प्रविष्टत्वेन स्मर्यमाणत्वान्न निर्धारणमिति वक्तुं द्वयोः प्रविष्टत्वं स्मृतमित्याह—एवं जिज्ञासेति। अतिक्रान्तेति। अतिक्रान्तौ पूर्वमुक्तौ यौ विशेषौ देहे प्रविष्टौ प्राणात्मानौ तद्विषया श्रुतिजन्यानुभवजन्यसंस्कारजनिता स्मृतिरित्यर्थः। तामेव स्मृतिं स्वरूपतो दर्शयति—तं प्रपदाभ्यामिति। तमिमं पुरुषं शरीरं प्रपदाभ्यां पादाग्राभ्यां ब्रह्मापरब्रह्मरूपः प्राणः प्रविष्ट इत्यर्थः। अन्यस्य प्रवेशे श्रुतिमाह—स एतमिति। श्रुतिभ्यां १० लब्धमर्थमाह—एतमेवेति। अत्रेति श्रुतिभ्यामित्यध्याहृत्येति श्रुतिभ्यामितरेतरप्रातिकूल्येनेतरेतराभिमुखतयैतमेव पुरुषशरीरं प्रतिपन्ने प्रविष्टे द्वे ब्रह्मणी इति स्मृतिरजायतेत्यन्वयः। न त्वेतमेवेत्यनेनैतमेव पुरुषं ब्रह्म ततमम-

---

मतान्तरे तु प्रकृष्टज्ञानवत् सर्वज्ञं ब्रह्मेत्यर्थकरणात् न किञ्चिदत्र नूत्नमुक्तं "यः सर्वज्ञ" इत्यादिना, अत्रैव च जगत्सृष्ट्या नारायणः सर्वज्ञ इति ज्ञातत्वात् नात्र किञ्चिदपूर्वं ज्ञाप्यते। "कतरस्स आत्मा" इति प्रकृत्य "प्राणाख्यमनो वा ब्रह्मरन्ध्रद्वारा प्रविष्टः पुरुषो वा" इति प्रथमनिर्दिष्टसंज्ञया निराकरणात्। १५ अस्मन्मते तु "येन वा पश्यती"त्यादिना प्राणाख्यमनो भिन्नत्वमुक्त्वा तस्यैव च जीवाभेदः प्रतिपाद्यत इति विशेषः "एष ब्रह्मैष इन्द्र" इत्यादिना परस्य इन्द्राभेदः प्रतिपादितो भवति। अनेन ब्रह्मादिभेदः परस्य प्रतिपाद्यत इति परेषां व्याख्या कथं युज्यते। सामानाधिकरण्येनाभेदस्यैव प्राप्तेः। तत्तच्छरीरकत्वमर्थमुक्त्वा तद्भेदः अर्थात् सिध्यतीत्युक्तौ तत्तत्पदस्य तत्तच्छरीरकत्वार्थमेवासिद्धम्। न हि असिद्धेनासिद्धस्य साधनं युज्यते। "इमानि पञ्चभूतानि" इत्यादिना जडभेदः प्रतिपाद्यते इत्युक्तमपि २० चिन्त्यम्। चेतनस्य ईक्षितुः उपक्रान्तत्वात् तत एव तद्भेदसिद्धेः वैयर्थ्यात्। अस्माकं तु बाधायां सामानाधिकरण्यात् यद्भूतं तद्ब्रह्मैवेति अद्वितीयत्वप्रतिपादनद्वारा तत्पदार्थशोधने उपयुज्यते।

माध्वमते तु—"पुरुषे ह वाऽयमादितो गर्भो भवति" इत्यत्र विष्णुरेव पुरुषे अन्नपरिणामरेतसि तिष्ठति गर्भे शिशुः जीवः तस्मिंश्च विष्णुः स्थितः इत्यादिना विष्णोरेवोत्पत्तिरुक्तेति व्याख्याय नात्र जीवोत्पत्तिमात्रमुच्यते ज्ञातत्वात् पश्वादिभिरपि। "गर्भे नु सन्" इति मन्त्रे देवजन्मोक्तेश्च। अतः २५ सर्वेषां जन्महेतुप्राप्तिः, अत्र देवानां दुःखासम्बन्धः। विष्णोः स्वातन्त्र्यं च। "प्रैती"त्यपि विष्णोः देहान्तरगमनसद्भावादुपपद्यते। "गर्भे" इत्यादिमन्त्रे विष्णुरेवोक्तः अहमित्यपि विष्णुवाचीत्यादि। विष्णुः, शश्च यश्च इयः तस्य इनः स्वामी विष्णुः। तं स्वामिनं ज्ञात्वा गर्भवासवन्निरदीयं श्येनः= निष्क्रान्तोऽस्मि इति व्याख्या। इयं तु न सम्यक्, अन्यत्र "अहं मनुरभवं सूर्यश्चे"ति सर्वात्मकत्वानुभवस्य "वामदेवः प्रतिपेदे" इत्युक्तेः अत्रापि स एवानुभवो वक्तव्यः। अतः विष्णुं स्वामिनं ज्ञात्वा ३० इत्यध्याहारोऽसङ्गतः। अत एवेशावास्ये "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोह" इत्यत्र सर्वात्मत्वमेव शोकमोहनिर्वर्तकतया प्रोक्तम्। यदपि "अमृतः समभवत्" इत्यस्य सर्वान् कामान् भुक्तवानित्यर्थः सम्भवो भोगः "तां समभवत्ततो मनुष्या अजायन्त" इत्यादौ भोगार्थत्वदर्शनात्तस्य। तन्न, तत्र सम्भवः उत्पत्तिरेव जायायां सम्भवो नाम स्वयमेव उत्पत्तिः भर्तुः अतो नायमर्थः। ३५ भगवत्पादोक्तस्तु ऋजुः।

कोऽयमात्मेति—अत्र येन प्रेरितः सन् जीवः पश्यतीत्युक्त्वा हृदयमनश्शब्दयोः विष्णुपरत्वमुक्तम्। हृद्गतत्वात् हृदयं मन्तृत्वात् मनः आज्ञानमित्यादि पदानि च विष्णुपराणि। इत्यादि तत्सर्वं मुख्यार्थेन व्याख्यानसम्भवेऽयुक्तम्।

प्रतिपन्ने इति। ते चास्य पिण्डस्याऽऽत्मभूते। तयोरन्यतर आत्मोपास्यो भवितुमर्हति। योऽत्रोपास्यः कः स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छुर्विचारयन्तः।

पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत्। कथं? द्वे वस्तुनी अस्मिन्पिण्ड उपलभ्येते अनेकभेदभिन्नेन करणेन येनोपलभते यश्चैक उपलभते करणान्तरोपलब्धविषयस्मृतिप्रतिसन्धानात्। तत्र न ५ तावद्येनोपलभते स आत्मा भवितुमर्हति। केन पुनरुपलभत इति। उच्यते। येन वा चक्षुर्भूतेन रूपं पश्यति येन वा शृणोति श्रोत्रभूतेन शब्दं येन वा घ्राणभूतेन गन्धानाजिघ्रति येन वा वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति।

पश्यदिति वाक्यं द्वे ब्रह्मणी इत्यनेन द्वे ब्रह्मणी वेदितव्ये इति वाक्यं च द्वयोः प्रवेशे मानतयोपन्यस्तमिति भ्रमितव्यम्। आद्यवाक्ये द्वयोः प्रवेशाप्रतीतेः। द्वितीये च शब्दब्रह्मपरब्रह्मणोरभिधानेन तयोर्द्वयोः प्रवेशे मानत्वा- १० योगादिति। तथाऽपि तयोर्द्वयोः कथमात्मत्वशङ्केत्यत आह—ते चेति। तयोरन्यतरेण विना शरीरस्थित्यभावात् तयोरात्मत्वशङ्केत्यर्थः। एवं विचारापेक्षितमात्मद्वयस्मृतिमुक्त्वा विचारमाह—तयोरन्यतर इति। "आत्मा वा इदमेक एवे"त्येकस्यैव ज्ञेयत्वोपक्रमान्न द्वयोरुपास्यत्वमित्यर्थः। कः स आत्मेति। य उपास्य आत्मा स क इत्यन्वयः। पप्रच्छुरिति। कतरः स आत्मेति वाक्येनेति शेषः।

एवं विचारे क्रियमाणेऽतिपरिशुद्धान्तःकरणत्वात्तेषां प्रपदाभ्यां प्रपन्ने करणत्वेनानात्मत्वनिश्चयो मूर्ध्ना १५ प्रविष्ट उपलब्धृत्वेनाऽऽत्मत्वनिश्चयश्चाभूदित्याह—पुनरित्यादिना। विशेषेति। विचारणास्पदप्राणात्मद्वयविषयै- कस्मिन्करणत्वेनापरस्मिन्नुपलब्धृत्वेन प्रकारेण विशेषरूपा मतिरजायतेत्यर्थः। ननु द्वयोः सत्त्व इयं विशेषमतिः स्यात्तदेव नास्तीति शङ्कते—कथमिति। चक्षुषा पश्यामीत्यादिप्रकारेण द्वयोः प्रतीतेर्नैवमित्याह—द्वे इति। येनोपलभते यश्चोपलभते ते द्वे उपलब्धिकर्तृकरणे वस्तुनी उपलभ्येते इत्यन्वयः। तत्र किं करणमित्यत आह— अनेकेति। चक्षुःश्रोत्राद्यनेकभेदभिन्नेनेत्यर्थः। अनेन यदनेकात्मकचक्षुरादिकरणसङ्घातात्मकं प्राणस्वरूपं तत्संहतत्वात् २० परार्थमिति परशेषत्वेन करणमित्युक्तम्। उपलब्धरि त्वनेकात्मकत्वाभावान्न परार्थत्वेन शेषत्वम्। किन्तु शेषित्व- मेवेति वक्तुमेक एवेत्युक्तम्। अनेन करणस्य परार्थत्वं परं शेषिणमन्तराऽनुपपन्नं सत्परं व्यतिरिक्तमुपलब्धारं गमयतीति तस्मिन्नपि तत्प्रमाणमित्युक्तम्। इदानीं करणानामेवोपलब्धृत्वं तद्व्यतिरिक्तोपलब्धा नास्तीति वदन्तं नास्तिकं प्रति प्रमाणान्तरमाह—करणान्तरेति। पूर्वं चक्षुषा रूपं दृष्ट्वा पश्चादुद्धृतचक्षुः स्मरति रूपमद्राक्ष- मिति। तथा योऽहमद्राक्षं स एवेदानीं स्पृशामीति प्रतिसन्दधाति। तदुभयं व्यतिरिक्तोपलब्धुरभावे न स्यात्। २५ अन्यानुभूतेऽन्यस्य स्मृतिसन्धानयोरदर्शनादित्यर्थः। एवमनेकात्मकस्य करणत्वमुक्त्वा तत एव तस्याऽऽत्मत्वं नास्तीत्याह—तत्र न तावदिति। तयोर्मध्य इत्यर्थः। अर्हतीत्यनन्तरं किन्तु परिशेषादुपलब्धाऽऽत्मा भवितुमर्हतीति वक्ष्यमाणान्वयेन वाक्यं पूरणीयम्। एवमर्थमुपवर्ण्य तमर्थं श्रुत्यक्षरारूढं कर्तुं पृच्छति—केन पुनरिति। श्रुत्यारूढं करोति—उच्यत इति। येनेति तृतीयया करणत्वं चक्षुरादेरुक्तमित्यर्थः। वाक्करणेति। वाग्रूपकरणेनेत्यर्थः। वाचमिति करणं नोच्यते तस्य येनेत्यनेनोक्तत्वात्किन्तु वक्तव्यमुच्यत इत्याह—नामात्मिकामिति। साध्विति। ३० गौरितीदं नाम साधु गावीति नामासाध्विति व्याकरोति व्याकरणेन व्यक्तीकरोतीति चार्थः।

---

एतदपि तैरेवोक्तम्—"मुक्त्यन्तरमेव हि अनुपचरितसर्वकामावाप्तिः मुख्य एवार्थः स्वीकार्यः" इति। अस्मन्मते तु सर्वकामावाप्तिः ब्रह्मानन्दमनुभवतां स्वतःसिद्धैव "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः सर्वजीवानन्दानां ब्रह्मानन्दांशरूपत्वात्। परेषां तु नेदं सम्भवदुक्तिकं जीवानां भेदात् तत्तज्जीवगतसकलानन्दानां मुक्तेनानुभवासम्भवात्। यत्तु "एष ब्रह्मैष इन्द्रः" इत्यादेः ३५ सर्वं जगत् विष्णोर्वशे सर्वदा तिष्ठतीति व्याख्यातम्। तदपि यथाश्रुतार्थत्वेनोपपादनसम्भवे क्लिष्टत्वान्नाद्रियते। एवमेव—कतरः=आनन्दमयः। इतराणि चेतराणि चेतराणि मानुषबीजानि, इतराणि देवबीजानि प्रज्ञानेत्रोऽलोकः, अलोकः मुक्तसमुदायः इत्यादि व्याख्यानमपि अशब्दार्थ- रूपमेव।

**यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥**

किं पुनस्तदेकमनेकधा भिन्नं करणमिति, उच्यते—यदुक्तं पुरस्तात् "प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमाः" तदेवैतद्धृदयं मनश्चैकमेतदनेकधा। एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्रभूतेन शृणोति घ्राणभूतेन जिघ्रति वाग्भूतेन वदति जिह्वाभूतेन रसयति स्वेनैव ५ विकल्पनारूपेण मनसा विकल्पयति हृदयरूपेणाध्यवस्यति। तस्मात्सर्वकरणविषयव्यापारकमेकमिदं करणं सर्वोपलब्ध्यर्थमुपलब्धुः। तथा च कौषीतकिनाम्—"प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति" इत्यादि। वाजसनेयके च—"मनसा ह्येव पश्यति मनसा शृणोति" "हृदयेन हि रूपाणि जानाति" इत्यादि। तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम्। तदात्मकश्च प्राणो "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण" इति ब्राह्मणम्। करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसम्वादादौ। १० तस्माद्यत्पद्भ्यां प्रापद्यत, तद्ब्रह्म तदुपलब्धुरुपलब्धिकरणत्वेन गुणभूतत्वान्नैव तद्वस्तु ब्रह्मोपास्यात्मा भवितुमर्हति। पारिशेष्याद्यस्योपलब्धुरुपलब्ध्यर्था एतस्य हृदयस्य मनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः, स उपलब्धोपास्य आत्मा नोऽस्माकं भवितुमर्हतीति निश्चयं कृतवन्तः।

तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषय-

ननु चक्षुरादीनां करणत्वेऽपि प्रपदाभ्यां प्रविष्टस्य प्राणस्य करणत्वे किमायातमित्याशङ्कते—किं पुनस्तदिति। १५ तत्र प्राणस्यैव करणत्वं वक्तुं तावद्धृदयमनःशब्दवाच्यस्य चक्षुरादिभेदभिन्नत्वमाह—उच्यत इति। यदेतद्धृदयमित्यत्र यच्छब्दार्थमाह—यदुक्तमिति। रेत इति। सारभूतं वीर्यमित्यर्थः। प्रजानां रेतो हृदयमित्यादिषु मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति तदेवैतत्त्वया पृष्टं करणमित्यर्थः। तदेवैकमेव सच्चक्षुरादिभेदेनानेकधाभूतमिति श्रुतिगतद्वितीयैतच्छब्दार्थमाह—एकमेतदनेकधेति। अत्र येनचक्षुरादिना दर्शनादिक्रियां करोति सङ्घातात्मकः पुरुषः, तच्चक्षुरादिकं प्रजानां रेतो हृदयमित्यादिषु "मनसश्चन्द्रमा" इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति करणं २० तदेतत्त्वया पृष्टमेतदेवैकं सदनेकधा भिन्नं चेति श्रुतिगतयेनेतितृतीयान्तयदितिप्रथमान्तयच्छब्दद्वयस्यैतदितिप्रथमान्तैतच्छब्दद्वयस्य चान्वयो दर्शितः। एकस्यैवानेकात्मकत्वं विशदयति—एतेनेत्यादिना। सर्वकरणेति। सर्वाणि करणानि विषयाश्च व्यापारो यस्येतिविग्रहः। करणानां विषयाणां च हृदयशब्दवाच्यबुद्धिव्यापारकत्वे श्रुतिमाह—तथा चेति। प्रज्ञया चिदाभासयुक्तया बुद्ध्या वाचं करणं समारुह्य बुद्धेर्वागात्मना परिणामे सति तद्बुद्धिद्वारा स्वयमप्यात्मा वागभिमानी भूत्वाऽनन्तरं वाचोऽपि बुद्धिव्यापाररूपाया नामात्मना वक्तव्यशब्दरूपेण परिणामे सति २५ वाचा वाग्द्वारा सर्वाणि नामान्याप्नोति तत्स्फुरणात्मना स्वयमपि वर्तत इति श्रुत्यर्थः। एवं प्रज्ञया चक्षुरित्यादिष्वप्यर्थो द्रष्टव्यः। अत्र बुद्धेर्वागाद्यात्मना परिणामो वागादेश्च नामात्मना परिणाम उक्त इत्यर्थः। "मनसा ह्येव पश्यती"त्यत्र मनसः साक्षाद्दर्शनादिकरणत्वायोगाच्चक्षुरादिभावमापन्नस्य दर्शनादिकरणत्वमुक्तमिति भावः। एवं हृदयेन हीत्यत्रापि द्रष्टव्यम्। आदिशब्देन हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति रूपाणां हृदयशब्दितबुद्ध्यात्मकत्वमुक्तं संग्राह्यम्। एवं हृदयस्य सर्वकरणात्मत्वमुक्त्वेदानीं तस्य प्राणात्मत्वमाह—तदात्मकश्चेति। ३० एवं हृदयमनोद्वारा प्राणस्य सर्वकरणात्मकत्वमुक्त्वा साक्षादेव प्राणस्य तदाह—करणसंहतीति। तव वयं स्मो न शक्ष्यामस्त्वदृते जीवितुम्। इतरे चक्षुरादयः प्राणा इत्येवाऽऽख्यायन्त इत्यादिप्राणसंवादस्थवचनबलात्करणसंहतिरूपत्वं करणसमूहरूपत्वं प्राणस्यावगतमित्यर्थः। आदिशब्देन संवर्गविद्यादिगतं "प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रतिबुध्यते प्राणादधि पुनर्जायन्ते" इत्यादिवाक्यं ग्राह्यम्। करणस्यानात्मत्वमुक्तमुपसंहरति—तस्मादिति। ब्रह्मेति। ब्रह्मत्वेनोपास्य ज्ञातव्य आत्मेत्यर्थः। तर्हि कस्तथा ज्ञातव्य इत्यत आह— ३५ पारिशेष्यादिति। वक्ष्यमाणा इति। संज्ञानमित्यादिना वक्ष्यमाणा इत्यर्थः।

येन वा पश्यतीत्यादि मनश्चैतदित्यन्तं प्राणस्य करणत्वेनानात्मत्वार्थमित्युक्त्वा संज्ञानमित्यादि वश इत्यन्तमन्तःकरणवृत्तिद्वारा तद्व्यतिरिक्तमुपलब्धारं दर्शयितुमाह—तदन्तःकरणेति। निर्विशेषस्य कथं वृत्तिविषयत्व-

**विषयास्ता इमा उच्यन्ते—संज्ञानं संज्ञप्तिश्चेतनभावः। आज्ञानमाज्ञप्तिरीश्वरभावः। विज्ञानं कलादिपरिज्ञानम्। प्रज्ञानं प्रज्ञप्तिः प्रज्ञता। मेधा ग्रन्थधारणसामर्थ्यम्। दृष्टिरिन्द्रियद्वारा सर्वविषयोपलब्धिः। धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति। धृत्या शरीरमुद्वहन्तीति हि वदन्ति। मतिर्मननम्। मनीषा तत्र स्वातन्त्र्यम्। जूतिश्चेतसो रुजादिदुःखित्वभावः। स्मृतिः स्मरणम्। सङ्कल्पः शुक्लकृष्णादिभावेन सङ्कल्पनं रूपादीनाम्। ५ क्रतुरध्यवसायः। असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः। कामोऽसन्निहितविषयाकाङ्क्षा तृष्णा। वशः स्त्रीव्यतिकराद्यभिलाषः। इत्येवमाद्या अन्तःकरणवृत्तयः प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि भवन्ति संज्ञानादीनि। सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति नस्वतः साक्षात्। तथा चोक्तं "प्राणन्नेव प्राणोनाम भवती"त्यादि ॥ २ ॥**

मन्यथा कथं तदुपलब्ध्यर्थता तासां स्यादत आह—**बाह्यान्तर्वर्तिविषयेति**। तर्हि तासामन्यविषयत्वे ततो बाह्यान्त- १० विषयप्रतीतिरेव स्यान्नाऽऽत्मन इत्यत आह—**उपलब्ध्यर्था इति**। निर्विशेषत्वेनाविषयत्वेन चैतस्य साक्षादिदन्तया ज्ञानासम्भवेऽपि संज्ञानाद्यन्तःकरणवृत्तिसाक्षितयाऽविषयत्वेनैव तस्योपलब्धिः सम्भवतीत्यर्थः। अविषयत्वार्थं प्रज्ञान-रूपस्येति विशेषणम्। प्रकृष्टा ज्ञप्तिः स्वप्रकाशचैतन्यं तस्य विषयत्वे स्वप्रकाशत्वव्याहतिरित्यर्थः। **ब्रह्मण इति** विशेषणं निर्विशेषत्वार्थम्। सविशेषत्वे हि तस्य परिच्छेदेन ब्रह्मत्वं न स्यादित्यर्थः। नन्वसङ्गस्य कथमन्तःकरण-वृत्तिसम्बन्धः स्यादत आह—**अन्तःकरणोपाधिस्थस्येति**। असङ्गस्याप्यन्तःकरणप्रतिबिम्बद्वारा तद्वृत्तिसम्बन्धः १५ इत्यर्थः। **चेतनभाव इति**। यया वृत्त्या चेतन इत्युच्यते जन्तुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनी संज्ञानमित्यर्थः। कलादिपरिज्ञानं चतुःषष्टिकलादिजन्यं लौकिकं ज्ञानमित्यर्थः। **प्रज्ञतेति**। तात्कालिकप्रतिभेत्यर्थः। ययोत्तम्भनं भवति सा वृत्तिर्धृतिरित्यन्वयः। शरीराद्युत्तम्भकस्य वृत्तिविशेषस्य धृतित्वे लौकिकं व्यवहारं मानमाह—**धृत्येति**। **तत्र स्वातन्त्र्यमिति**। मनस ईशा मनीषेति व्युत्पत्तेरित्यर्थः। **रुजादिदुःखित्वभाव इति**। रोगादिजन्यदुःखित्व-प्राप्तिरित्यर्थः। **सङ्कल्पनमिति**। सामान्येन प्रतिपन्नानां रूपादीनां शुक्लादिरूपेण सम्यक्कल्पनमित्यर्थः। **जीवन-** २० **क्रियेति**। जीवनप्रयत्न इत्यर्थः। **स्त्रीव्यतिकरेति**। स्त्रीसम्पर्क इत्यर्थः। इतिशब्दस्य प्रदर्शनार्थत्वमाह—**इत्येवमाद्या इति**। एवमाद्या वृत्तयः प्रज्ञानस्य नामधेयानि भवन्तीत्युत्तरेणान्वयः। अत्र प्रज्ञानशब्देन पूर्ववत्प्रज्ञता वृत्तिरूपा नोच्यते। तस्याः संज्ञानादिनामवत्त्वानुपपत्तेः। किन्तु शुद्धचैतन्यमुच्यत इत्याह—**प्रज्ञप्तिमात्रस्येति**। नन्वन्तः-करणवृत्तीनां शब्दरूपत्वाभावात्कथं प्रज्ञाननामधेयत्वमित्याशङ्क्य नामधेयस्य नामार्थोपलब्धिहेतुत्वात्संज्ञानादि-वृत्तीनामपि प्रज्ञानोपलब्धिहेतुत्वात्तेन गुणेन तन्नामधेयत्वमुपचारादुच्यते न मुख्यया वृत्त्येत्याह—**उपलब्धुरुप-** २५ **लब्ध्यर्थत्वादिति**। उपलब्धुरुपलब्ध्यर्थत्वं वा कथमित्याशङ्क्य तदुपाधित्वादित्याह—**शुद्धेति**। यत उपाधिभूता उपलब्ध्यर्था अतो गौण्या वृत्त्या नामधेयानि भवन्तीत्यर्थः। यद्वा श्रुतौ संज्ञानादिशब्दैर्न वृत्तय उच्यन्ते किन्तु संज्ञानादिशब्दा एव लक्षणयाऽभिधीयन्ते गामुच्चारयतीत्यत्रेव। तथा च संज्ञानादिशब्दाः संज्ञानादिवृत्तिविशिष्ट-प्रज्ञानस्य नामधेयानि सन्ति, तद्द्वारा शुद्धस्यैव प्रज्ञानस्य लक्षणया नामधेयानीत्याह—**तदुपाधिजनितेति**। वृत्त्युपाधिजनितो गुणो वृत्त्युपहितरूपं तन्नामधेयानि सन्ति सर्वाण्येवैतानि संज्ञानादीनि संज्ञानादिशब्दाः प्रज्ञानस्यैव ३० नामधेयानि भवन्तीत्यन्वयः। **प्राणन्नेवेति**। प्राणनक्रियां कुर्वन्प्राणो नाम भवतीत्यनेन प्राणवृत्त्युपाधिकमात्मनः प्राणनामवत्त्वमुक्तम्। यद्यपि संज्ञानादिनाम्नां तत्र नौपाधिकत्वमुक्तं तथाऽपि तुल्यन्यायतयैतेषामप्यौपाधिकत्वमुक्त-प्रायमिति भावः। एतदुक्तं भवति—संज्ञानादिशब्दाः प्रकाशात्मकवस्तुवाचिनः। न च साक्षादन्तःकरणवृत्तीनां जडानां प्रकाशात्मकत्वं सम्भवतीति प्रकाशात्मकवस्तुन्यध्यासादेव तासां प्रकाशात्मकत्वमिति कल्पयन्तोऽधिष्ठानभूतमति-रिक्तं प्रकाशं गमयन्तः पर्यवसानगत्या प्रकाशात्मनः प्रज्ञानस्यैव नामधेयानीति। अत्र संज्ञानादीनामनिरुद्धत्वेन ३५ जडानां वृत्तीनां प्रकाशात्मकवस्तुवाचकसंज्ञानादिनामत्वानुपपत्तेस्तद्व्यतिरिक्तः कश्चित्प्रकाशरूपोऽस्तीत्युक्तम्। तथा संज्ञानादिशब्दवाच्यत्वोक्त्या तत्प्रज्ञानं विज्ञानं प्रज्ञानमित्यत्रेव प्रज्ञतारूपा वृत्तिर्न भवतीत्युक्तम्। तस्याः संज्ञानादिवाच्यत्वानुपपत्तेः। तथा संज्ञानादीनि सर्वाण्येकस्य प्रज्ञानस्य नामानीत्युक्त्या च तत्प्रज्ञानमेकं सर्व-वृत्त्यनुगतमित्युक्तं तदनेकत्वे तद्वृत्तिगतानां प्रज्ञानानां तत्तन्नामकत्वेन सर्वनामकत्वानुपपत्तेः। प्रज्ञानस्येत्येक-वचनानुपपत्तेश्च। अतो येन वा पश्यतीत्यादिना नामधेयानि भवन्तीत्यन्तेन सर्वकरणतद्वृत्तिव्यतिरिक्तः ४० स्वप्रकाशात्मकः सर्वसाक्षी सर्ववृत्त्यनुगत एक आत्मा शोधितः।

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम् । सर्वं तत्प्रज्ञानेत्रम् । प्रज्ञाने प्रतिष्ठितम् । प्रज्ञानेत्रो लोकः । प्रज्ञा प्रतिष्ठा । प्रज्ञानं ब्रह्म ॥ ३ ॥**

स एष प्रज्ञानरूप आत्मा ब्रह्मापरं सर्वशरीरस्थप्राणः प्रज्ञात्माऽन्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगत- ५ सूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा । एष एवेन्द्रो गुणाद्देवराजो वा । एष प्रजापतिर्यः प्रथमजः शरीरी । यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः । स प्रजापतिरेष एव । येऽप्येतेऽग्न्यादयः सर्वे देवा एष एव । इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नान्नादत्वलक्षणान्येतानि । किञ्चेमानि च क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मिश्राणि । इवशब्दोऽनर्थकः ।

सर्पादीनि, बीजानि कारणानीतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि । कानि तानि ? उच्यन्ते । १० अण्डजानि पक्ष्यादीनि । जारुजानि जरायुजानि मनुष्यादीनि । स्वेदजानि यूकादीनि । उद्भिज्जानि च वृक्षादीनि । अश्वा गावः पुरुषा हस्तिनोऽन्यच्च यत्किञ्चेदं प्राणिजातम् । किं तत् ? जङ्गमं यच्चलति पद्भ्यां गच्छति । यच्च पतत्रि । आकाशेन पतनशीलम् । यच्च स्थावरमचलं सर्वं तदशेषतः प्रज्ञानेत्रं प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव नीयतेऽनेनेति

एवं शोधितस्याऽऽत्मनः प्रतिशरीरं नानात्वं वारयितुमेष ब्रह्मेत्यादि वाक्यं तद्व्याचष्टे—स एष इत्यादिना। एष इत्यस्यार्थमाह--प्रज्ञानरूप आत्मेति । प्रज्ञानं ब्रह्मेति मुख्यब्रह्मताया वक्ष्यमाणत्वादिह मूर्धद्वाराऽनुप्रविष्टं १५ समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भःप्राणःप्रज्ञात्मादिशब्दैस्तत्र तत्रोक्तमपरं ब्रह्मोच्यत इत्याह—अपरमित्यादिना। सर्वशरीरेत्यनेन समष्टिस्थूलशरीरमुच्यते । अतःकरणोपाधिष्वित्यनेनापि समष्टिलिङ्गशरीरमुक्तम् । आद्याभ्यां प्राणप्रज्ञात्मशब्दाभ्यां क्रियाशक्तिज्ञानशक्तिमत्त्वमुक्तम् । द्वितीयाभ्यां तु तत्र तत्र तथा निर्दिष्ट इत्युच्यत इत्यपौनरुक्त्यम् । ननूक्तप्रज्ञानात्मैवापरं ब्रह्मेत्यत्र किं प्रमाणमित्याशङ्क्य प्रवेशवाक्यं प्रमाणमिति वक्तुमेष इन्द्र इति वाक्यं व्याचष्टे--एष इति । गुणादिति । इदमदर्शमिति श्रुत्युक्तगुणयोगादित्यर्थः। प्रवेशवाक्ये प्रविष्टस्येन्द्रत्वा- २० भिधानाद्धिरण्यगर्भस्यापीन्द्रत्वोक्तौ प्रविष्टत्वप्रत्यभिज्ञानात्प्रवेष्टुरेव प्रविष्टसर्वरूपत्वादभेदः सिध्यतीति भावः। न तु पारमैश्वर्यगुणयोगात्प्रज्ञानात्मेन्द्रः परमेश्वर इत्यर्थो ग्राह्यः। प्रज्ञानात्मनः परमेश्वराभेदस्य प्रज्ञानं ब्रह्मेत्यनेन वक्ष्यमाणत्वात्परमेश्वरत्वगुणवत्त्वप्रतिपादनस्य च प्रकरणविरोधात् । न च हिरण्यगर्भाद्यात्मत्ववन्मायाविशिष्ट- परमेश्वरात्मत्वमनेनोच्यत इति वाच्यम्। तथा सति भाष्योक्तगुणादितिहेत्वनन्वयादेष ब्रह्मैष इन्द्र एष प्रजापतिरिति पूर्वोत्तरपर्यायेष्विव गुणयोगाभावेऽप्युपपत्तेश्चेति। अस्य व्याख्यानस्य क्लिष्टत्वं मनसि निधायार्थान्तरमाह—देवराजो २५ वेति । प्रजापतेर्हिरण्यगर्भाद्भेदमाह—यः प्रथमज इति । स लिङ्गशरीराभिमान्ययं तु स्थूलशरीराभिमानीति भेद इत्यर्थः । तत्राद्भ्य एव पुरुषं समुद्धृत्यामूर्छयन्मुखं निरभिद्यतेत्यादि वाक्यं प्रमाणमाह—यत इति । देवग्रहणं मनुष्यादीनामुपलक्षणम् । तथा च सर्वे जीवात्मान एष एवेत्यर्थः । एवमेष ब्रह्मेत्यादिवाक्येष्वैक्ये सामानाधिकरण्यं गृहीत्वा सर्वभूतस्थस्याऽऽत्मन एकत्वमुक्त्वा सजातीयभेदं निराकृत्य तदुपाधीनां भूतभौतिकानामपि बाधायां सामानाधिकरण्यमाश्रित्याऽऽत्मव्यतिरेकेणाभावं तस्य विजातीयभेदनिराकरणार्थं वक्तुमिमानि चेत्यादिवाक्यं ३० तद्व्याचष्टे —इमानि चेति । एतान्यन्नान्नादत्वेन पूर्वमुक्तानीति वक्तुं विशिनष्टि—अन्नेति ।

सर्पादीनां न केवलं क्षुद्रमिश्रत्वं किन्तु सर्पान्तरादीन्प्रति बीजत्वं चेत्याह—कारणानि चेति । द्वैराश्येनेति । स्थावरजङ्गमभेदेन निर्दिश्यमानानीत्यर्थः। स्वेदजानि जङ्गमान्युद्भिज्जानि स्थावराणीत्याह—उच्यन्त इति । जङ्गममित्यस्य व्याख्या यच्चलतीति । स्थावराणामपि वाय्वादिना चलनमस्तीत्याशङ्क्याऽऽह--पद्भ्यामिति । स्थावरमचलमित्यनन्तरं सर्वं तदेष एवेति शेषः। तत्सर्वमेष एवेत्यत्र हेतुं वक्तुं सर्वं तत्प्रज्ञानेत्रमित्यादि प्रतिष्ठेत्यन्तं ३५ वाक्यं तद्व्याचष्टे—सर्वमित्यादिना । नीयतेऽनेनेति । अनेन प्रज्ञानेन सत्तां नीयते सत्तां प्राप्यते । सत्तावत्क्रियत इत्यर्थः। यद्वा स्वस्वव्यापारेषु प्रवर्त्यत इति वा । नन्वेवंभूतं ब्रह्मैवेत्युपनिषत्सु प्रसिद्धं न तु प्रज्ञानमित्याशङ्क्य वस्तुतः प्रज्ञानस्यैव तत्र तत्र ब्रह्मशब्देनाभिधानान्न दोष इत्युक्तं प्रज्ञानं ब्रह्मेति । यद्वा कोऽयमात्मेत्यारभ्यैत सर्वे

नेत्रं प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम्। प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रयमित्यर्थः। प्रज्ञानेत्रो लोकः पूर्ववत्। प्रज्ञाचक्षुर्वा सर्व एव लोकः। प्रज्ञा प्रतिष्ठा सर्वस्य जगतः। तस्मात्प्रज्ञानं ब्रह्म। तदेतत्प्रत्यस्तमित-सर्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेति नेतीति सर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसम्बन्धेन सर्वज्ञमीश्वरं सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति।
५ तदेव व्याकृतजगद्बीजभूतबुद्ध्यात्माभिमानलक्षणहिरण्यगर्भसंज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिम-द्विराद्प्रजापतिसंज्ञं भवति। तदुद्भूताग्न्याद्युपाधिमद्देवतासंज्ञं भवति। तथा विशेषशरीरोपाधिष्वपि ब्रह्मादि-स्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणः। तदेवैकं सर्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा। "एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम्॥" इत्याद्या स्मृतिः॥ ३॥

१० देवा इत्यन्तं त्वंपदार्थशोधनार्थमिमानि चेत्यादि प्रतिष्ठेत्यन्तं तत्पदार्थशोधनार्थम्। तत्र पक्षे प्रकृष्टं ज्ञानं प्रज्ञातमिति तत्पदार्थो ब्रह्मैवोच्यते पञ्चभूतादि स्थावरान्तं सर्वं तत्प्रज्ञानेत्रं ब्रह्मनेत्रमित्यर्थः। प्रज्ञासत्तयैव सर्वस्यापि सत्तावत्त्वं साधयितुं प्रज्ञाने प्रतिष्ठितमित्युक्तम्। तद्व्याचष्टे—प्रज्ञाने ब्रह्मणीति। न केवलं प्रज्ञासत्तयैव सत्त्वं सर्वस्य किन्तु प्रवृत्तिरपि तदधीनैवेत्याह—प्रज्ञानेत्र इति। पूर्ववदिति। नीयते प्रवर्त्यतेऽनेनेति व्युत्पत्तेर्नेत्रं प्रवर्तकमित्यर्थः। लोक इति। सर्वं जगदित्यर्थः। यद्वा पूर्वं नेत्रशब्देन सर्वस्य सत्ताव्यापारहेतुत्वमुक्तमिदानीं सर्वस्य स्फुरणहेतुत्वम-
१५ मेवेत्युच्यत इत्याह—प्रज्ञाचक्षुर्वेति। चक्षुरिति स्फुरणमित्यर्थः। जगत इव प्रज्ञानस्यापि स्फुरणप्रतिष्ठयोरन्याधीनत्व-माशङ्क्य तस्य स्वप्रकाशत्वात्स्वमहिमप्रतिष्ठितत्वेनाऽऽश्रयान्तराभावाच्च नैवमित्याह—प्रज्ञाप्रतिष्ठेति। यद्वा सर्वस्य जगतः सत्तास्फूर्त्योः प्रज्ञानाधीनत्वादुत्पत्त्यादिष्वप्यवस्थासु प्रज्ञाने प्रतिष्ठितत्वेन तदुपादानत्वाच्च वाचारम्भण-न्यायेन प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञानमेव सर्पादि रज्ज्वादिरिव पर्यवसानभूमिरित्याह—प्रज्ञा प्रतिष्ठेति। प्रतिष्ठा ध्रुवं पर्यवसानभूमिः परिशिष्टं वस्त्वित्यर्थः। एवं च प्रज्ञानस्य प्रत्यगात्मनो निर्विशेषत्वादिकं सिद्धमित्याह—
२० तस्मादिति। प्रज्ञानस्यैव परिशिष्टत्वेन परमार्थसत्यत्वादित्यर्थः। ब्रह्मशब्दार्थमाह—प्रत्यस्तमितेति। अस्मिन्पक्षे ब्रह्मशब्देन प्रत्यगात्मनो निर्विशेषत्वादिकमेव सामानाधिकरण्येन समर्थ्यते। ब्रह्मशब्दस्यापि निर्विशेषत्वादिक-मेवार्थः। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। बृंहतेर्धातोरर्थानुगमादिति शारीरक-भाष्य उक्तत्वान्न तु प्रत्यग्ब्रह्मणोरैक्यमनेन वाक्येनोच्यते। "आत्मा वा इदमेक एवाग्र आसीदि"त्यात्माद्वितीयत्वे-नैवोपक्रमाद्ब्रह्मपदार्थानुपक्रमाच्च। एवं चाऽऽत्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इत्ययं पक्षोऽत्र स्फुटीकृत
२५ इति द्रष्टव्यम्। यदा त्विमानि च पञ्चमहाभूतानीत्यारभ्य तत्पदार्थशोधनार्थत्वेन व्याख्यायते तदा तत्पदार्थशोधना-नन्तरं वाक्यार्थकथनार्थं प्रज्ञानं ब्रह्मेति वाक्यमिति व्याख्येयम्। अत्र च पक्षेऽत्रत्यप्रज्ञानशब्देन प्रज्ञानस्य नामधेया-नीत्यत्रत्येन च प्रत्यगात्मोच्यते अत्र ब्रह्मशब्देन च जगत्कारणत्वोपलक्षितं चैतन्यमुक्तमिति द्रष्टव्यम्। तस्मादिति चोभयोर्निर्विशेषचिद्रूपत्वाविशेषादित्यर्थः। ननु प्रज्ञानस्य ब्रह्मत्वोपदेशे किं सिध्यतीत्याशङ्क्य तस्य निर्विशेषत्वादिकं सिध्यतीति फलितार्थकथनपरत्वेन व्याख्येयं प्रत्यस्तमितेति। अन्यत्समानम्। उपाधिविशेषमिति। उपाधिकृतकर्तृत्व-
३० भोक्तृत्वदुःखित्वादिविशेषमित्यर्थः। तस्य पुरुषार्थत्वमाह—शान्तमिति। परितृप्तं परमानन्दरूपमित्यर्थः। निर्विशेषत्वे मानमाह—नेतीति। सर्वेति। "यतो वाचो निवर्तन्ते" "आनन्दं ब्रह्मणो विद्वानि"ति श्रुतिर्निर्विशेषानन्दत्वे मानमित्यर्थः। नन्वेवंभूतस्य प्रज्ञानस्य कथं सर्वज्ञादिस्तम्बान्तनानाविधभेद इत्याशङ्क्य नानाविधोपाधिसम्बन्धा-दित्याह—तदत्यन्तेत्यादिना। विशुद्धोपाधिसम्बन्धाविशेषेऽप्यन्तर्यामिहिरण्यगर्भप्रजापतीनां सर्वज्ञाद्भेदमाह—सर्वसाधारणेति। व्याकृते सर्वजगत्कारणसमष्टिबुद्ध्यात्मत्वाभिमान एव लक्षणमुपाधिर्यस्य तदित्यर्थः। अन्तरण्डेति।
३५ अण्डोपाधिकं विराट् तदन्तर्भूतप्रथमशरीरोपाधिकः प्रजापतिरित्यर्थः। तदुद्भूतेति। तस्मादण्डादुद्भूता इमेऽग्न्या-दीनामुपाधयः समष्टिवागादयस्तदुपाधिमत्प्रज्ञानमग्न्यादिदेवतासंज्ञं भवतीत्यर्थः। आदिशब्देन व्यष्टिवागाद्यभिमानिनो गृह्यन्तेऽसुरादयश्च। व्यष्टिमनुष्यादिशरीरोपाधिषु मनुष्यादिसंज्ञं भवतीत्याह—तथेति। अपीत्यनन्तरं तत्तत्संज्ञं भवतीति शेषः। उपसंहरति—ब्रह्मादीति। अत्रैवमिति शेषः। एवं ब्रह्मादिस्तम्बेति योज्यम्। ननु सांख्यादि-भिर्जीवानामेव नानात्वमुच्यते, अन्यैश्च जीवेश्वरनानात्वं; जगत्कारणं चान्यथाऽन्यथाप्याहुस्तत्कथमेकस्यैव ब्रह्मणो
४० नानारूपत्वमत आह—तदेवैकमिति। अस्मिन्नर्थे प्रमाणमाह—एतमेक इति॥ ३॥

**स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥**

**इति तृतीयोऽध्यायः**

**[1]ॐ वाङ्मे मनसि .................... । ॐ शान्तिः शान्तिः शान्तिः**

स वामदेवोऽन्यो वैवं यथोक्तं ब्रह्म वेद प्रज्ञेनाऽऽत्मना येनैव प्रज्ञेनाऽऽत्मना पूर्वे विद्वांसोऽमृता अभूवंस्तथा अयमपि विद्वानेतेनैव प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्येत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदित्योमिति ॥ ४ ॥ ५

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्कृतावैतरेयोपनिषद्भाष्ये तृतीयोऽध्यायः

एवं तावत्कोऽयमात्मेत्यारभ्य प्रज्ञानं ब्रह्मेत्यन्तेन विचारपुरःसरमात्मतत्त्वं निर्धारितम् । आत्मा करण-सङ्घातात्मकप्राणव्यतिरिक्तः संज्ञानादिसर्वान्तःकरणवृत्त्यतिरिक्तस्तदनुगतः स्वप्रकाशः सर्वशरीरेष्वेकः सर्वप्रपञ्चा-धिष्ठानभूत अद्वितीयः प्रज्ञानं ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभाव इति। इदानीमेवंभूतब्रह्मात्मविदः फलं वक्तुं स एतेनेत्यादि-श्रुतिवाक्यम् । तत्रैतच्छब्देनैकवचनान्तेन प्रकृतानामपि कोऽयमात्मेत्येवं विचारयतां बहूनां परामर्शायोग्यत्वादि-दानीन्तनस्य विदुषश्च स इति भूतवाचिना परामर्शायोग्यत्वात्पूर्वाध्यायोक्तो वामदेवः परामृश्यत इत्याह—स वामदेव इति । ब्रह्मविदः फलमित्यस्य वाक्यस्य तात्पर्याद्वामदेवादिपुरुषविशेषे तात्पर्याभावाद्यः कश्चन ग्राह्यइत्याह—अन्यो वेति। एवमिति। कोऽयमात्मेत्युक्तप्रकारेणैतं प्रज्ञानरूपं यथोक्तं ब्रह्म प्रज्ञानेनाऽऽत्मना वेदेत्यर्थः। एतेनेवेत्येतच्छब्दोक्तं प्रकृतत्वं व्यक्तीकरोति—येनैवेति। येनैव प्रज्ञेनाऽऽत्मना ब्रह्म विद्वांसः पूर्वेऽमृता अभूवंस्तेनैतेनैव प्रज्ञेनाऽऽत्मना यथोक्तं ब्रह्म वेद वामदेवोऽन्यो वा सोऽमृतोऽभवत् । तथाऽयमपीदानींतनोऽपि विद्वानेतेनैव प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्या मृतः समभवदित्यन्वयः। अत्रोत्क्रमणं पक्षिणो नीडादिवोर्ध्वंगमनं न सम्भवति किन्तु देहात्मभावत्यागेन प्रज्ञानात्मभाव एवेत्यभिप्रेत्य प्रज्ञानात्मनोत्क्रम्येत्युक्तम्। प्रज्ञानात्मना विद्वानिति वाऽन्वयः। उक्तमात्मतत्त्वमङ्गीकारवाचिनोङ्कारेण स्वानुभवप्रकटनेन दृढीकुर्वन्—ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान् माङ्गलिकावुभौ ॥ इति स्मृतेरोङ्कारेण ब्रह्मात्मानुसन्धानलक्षणं मङ्गलं कर्तुमोमित्युक्तमिति ॥ ४ ॥ १० १५ २०

इति श्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानकृतावैतरेयोपनिषद्भाष्यटीकायां तृतीयोऽध्यायः

---

१. श्रीमद्विद्यारण्यविरचितायामैतरेयोपनिषद्दीपिकायां शान्तिमन्त्रार्थः व्याख्यातः—यथोक्ततत्त्वविद्याप्रतिपादक-ग्रन्थपाठे प्रवृत्ता मदीया वाक्सर्वदा मनसि प्रतिष्ठिता । मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति । मनश्च मदीयं वाचि प्रतिष्ठितम् । यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते । एवमन्योन्यानु-गृहीते वाङ्मनसे विद्यार्थंग्रन्थं साकल्येनावधारयितुं शक्नुतः । मनसः सावधानत्वाभावे सुप्तोन्मत्तप्रलापादि-वद्यत्किंचिदसङ्गतं ब्रूयात् । तथा च वाचः पाटवाभावे सति गद्गदरूपया वाचा विवक्षितं सर्वं यथावन्नोच्चार्यते । अतस्तयोरन्योन्यानुकूल्यमस्त्वित्येवं प्रार्थ्यते । आविःशब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते । प्रज्ञानशब्देन व्यव-हृतत्वात्तस्याऽऽविर्भूतरूपत्वम् । तथाविध हे आत्मन्मे मदर्थमाविरेधि । अविद्यावरणापनयेन प्रकटीभव । हे वाङ्मनसे मे मदर्थं वेदस्य यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्याऽऽणीस्थ आनयनसमर्थे भवतम् । मे श्रुतं मया श्रोत्रेणावगतं ग्रन्थतदर्थजातं मा प्रहासीर्मा परित्यजतु विस्मृतं मा भूदित्यर्थः । अनेनाधीतेन ग्रन्थेन विस्मरण-रहितेनाहोरात्रान्संदधामि संयोजयामि । अहनि रात्रौ चाऽऽलस्यं परित्यज्य निरन्तरं पठामीत्यर्थः । अस्मिन्पठिते ग्रन्थ ऋतं परमार्थभूतं वस्तु वदिष्यामि । विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः । ऋतं मानसं सत्यं वाचिकं मनसा वस्तुतत्त्वं विचार्य वाचा वदिष्यामीत्यर्थः । तन्मया वक्ष्यमाणं ब्रह्मतत्त्वं मां शिष्यमवतु सम्यग्बोधेन पालयतु । तथा तद्ब्रह्मतत्त्वं वक्तारमाचार्यमवतु बोधकत्वसामर्थ्यप्रदानेन पालयतु । पुनरप्यवतु मामित्युक्तिः फलविषया । पूर्वं साधनकालेशिष्याचार्ययोः पालनं प्रार्थितम् । इदानीं फलकालेऽपि प्रार्थ्यते । तत्र शिष्यस्याविद्याकार्यनिवृत्तिः फलम् । आचार्यस्य तु तादृशशिष्यदर्शनेन विद्यासम्प्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम् । अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिह्रियन्ते । विद्योत्पत्तेरूर्ध्वमसम्भावनाविपरीतभावनोत्पादका विघ्नाः परिह्रियन्ते । अवतु वक्तारमित्यभ्यासोऽध्यायसमाप्त्यर्थो द्वितीयारण्यकसमाप्त्यर्थश्च । २५ ३० ३५

# परिशिष्टानि

१. मन्त्रानुक्रमणिका

२. माण्डूक्यकारिकासूची

३. तैत्तिरीयवार्तिकश्लोकसूचिका

४. उपनिषच्छब्दवाक्यकोषः

५. आकरग्रन्थनिदेशिका

६. संस्थानस्य प्रकाशनपत्रिका

ई० १–१५, के० १७–५४, कठ० ५५–१२६, मु० १२७–१६१, प्र० १६३–२०५, मां० २०७–३६२
तै० ३६३–६२८, ऐ० ६२९–६७५

## मन्त्रानुक्रमणिका


अ

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ १४३
अग्निर्यथैको भुवन प्रविष्टः ११२
अग्निर्वाग्भूत्वा ६४७
अग्ने नय सुपथा राये १४
अङ्गुष्ठमात्रः पुरुषो ज्योतिः १०७
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा १२५
अङ्गुष्ठमात्रः पुरुषो मध्ये १०६
अजीर्यताममृतानामुपेत्य ७१
अणोरणीयान्महतो महीयान् ८५
अतः समुद्रा गिरयश्च सर्वे १४५
अत्रैष देवः स्वप्ने १८४
अथ कवन्धी कात्यायनः १६४
अथ यदि द्विमात्रेण मनसि १९२
अथर्वणे यां प्रवदेत १३०
अथ वायुमब्रुवन् ३०, ५२
अथ हैनं कौसल्यः १७४
अथ हैनं भार्गवो वैदर्भिः १७०
अथ हैनं शैव्यः सत्यकामः १८९
अथ हैनं सुकेशा भारद्वाजः १९४
अथ हैनं सौर्यायणी गार्ग्यः १८०
अथाऽऽदित्य उदयन् १६४
अथाध्यात्ममधरा हनुः ३८५
अथाध्यात्मं यदेतत् ३२, ५३
अथेन्द्रमब्रुवन् ३१, ५२
अथैकयोर्ध्व उदानः १७७
अथोत्तरेण तपसा १६७
अनुपश्य यथा पूर्वे ६०
अनेजदेकं मनसो जवीयो ६
अन्तेवास्युत्तररूपम् ३८५
अन्धं तमः प्रविशन्ति ९, ११
अन्नं न निन्द्यात् ६१०
अन्नं न परिचक्षीत ६१२
अन्नं बहु कुर्वीत ६१३
अन्नं ब्रह्मेति व्यजानात् ६०३
अन्नं वै प्रजापतिस्ततः १६९
अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ७३
अन्यत्र धर्मादन्यत्राधर्मात् ८१
अन्यदेवाऽऽहुर्विद्यया १०
अन्यदेवाऽऽहुः सम्भवात् १२
अमात्रश्चतुर्थोऽव्यवहार्यः २४९
अरण्योर्निहितो जातवेदाः १०४
अरा इव रथनाभौ कला २०५
अरा इव रथ नाभौ प्राणे १७२
अरा इव रथ नाभौ संहता १४८
अविद्यायामन्तरे ७५, १३७
अविद्यायां बहुधा १३८
अव्यक्तात्तु परः पुरुषः ११९
अशब्दमस्पर्शमरूपमव्ययम् ९८
अशरीरं शरीरेषु ८६
असद्वा इदमग्र आसीत् ५३६
असन्नेव स भवति ५१६
असुर्या नाम ते लोकाः ६
अस्तीत्येवोपलब्धव्यः १२३
अस्य विस्रंसमानस्य ११०
अहमन्नमहमन्नमहमन्नम् ६२०
अहोरात्रो वै प्रजापतिः १६९
अहं वृक्षस्य रेरिवा ४१७

आ

आत्मन एष प्राणो जायते १७५
आत्मानं रथिनं विद्धि ९१
आत्मानं वा प्रविभज्य १७४
आत्मा वा इदमेक एवाग्र ६४०
आदित्यो ह वै प्राणो १६५
आदित्यो ह वै बाह्यः १७७
आनन्दो ब्रह्मेति व्यजानात् ६०७
आप्यायन्तु ममाङ्गानि १७
आविः सन्निहितं गुहाचरम् १४६
आशाप्रतीक्षे सङ्गतम् ६१
आसीनो दूरं व्रजति ८५

इ

इन्द्रस्त्वं प्राण तेजसा १७३
इन्द्रियाणां पृथग्भावम् ११९
इन्द्रियाणि हयान्याहुः ९१
इन्द्रियेभ्यः परा ह्यर्था ९३
इन्द्रियेभ्यः परं मनः ११९
इष्टापूर्तं मन्यमाना १३८
इह चेदवेदीदथ २९, ३५
इह चेदशकद्बोद्धुम् ११८

ई

ईशावास्यमिदं सर्वम् १

उ

उत्तिष्ठत जाग्रत प्राप्य ९७
उत्पत्तिमायतिं स्थानम् १७९
उपनिषदं भो ब्रूहि ३३, ५३
उशन्ह वै वाजश्रवसः ५५

ऊ

ऊर्ध्वमूलोऽवाक्शाख एषः ११६
ऊर्ध्वं प्राणमुन्नयत्यपानम् १०९

ऋ

ऋग्भिरेतं यजुर्भिः १९३
ऋतञ्च स्वाध्यायप्रवचने च ४१४
ऋतं पिबन्तौ सुकृतस्य लोके ८९

ए

एको वशी सर्वभूतान्तरात्मा ११३
एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः ८०
एतत्तुल्यं यदि मन्यसे ७०
एतदालम्बनं श्रेष्ठम् ८३
एतद्ध्येवाक्षरं ब्रह्म ८२
एतस्माज्जायते प्राणः १४२
एतेषु यश्चरते भ्राजमानेषु १३६
एष तेऽग्निर्नचिकेतः ६६
एष ब्रह्मैष इन्द्रः ६७३
एष सर्वेश्वर एष सर्वज्ञः २२५
एष सर्वेषु भूतेषु ९६
एष हि द्रष्टा स्प्रष्टा १८७
एषोऽग्निस्तपत्येष सूर्यः १७२
एषोऽणुरात्मा चेतसा १५६

ई० १–१५, के० १७–५४, कठ० ५५–१२६, मु० १२७–१६१, प्र० १६३–२०५, मां० २०७–३६२
तै० ३६३–६२८, ऐ० ६२९–६७५


एह्येहीति तमाहुतयः १३७

**ओ**

ओमिति ब्रह्म ४११
ओमित्येतदक्षरमिदं सर्वम् २१२

**क**

कामस्याप्तिं जगतः ७९
कामान्यः कामयते मन्यमानः १५७
काली कराली च १३६
क्रियावन्तः श्रोत्रिया: १६०
कुर्वन्नेवेह कर्माणि ५
कुर्वाणा चीरमात्मनः ३८९
केनेषितं पतति प्रेषितम् १७, ३५
कोऽयमात्मेति ६६८

**ग**

गता: कलाः पञ्चदश १५९

**ज**

जागरितस्थानो बहिष्प्रज्ञः २१८
जागरितस्थानो वैश्वानरः २४६
जानाम्यहं शेवधिः ७९
जिह्वा सन्धानम् ३८५

**त**

तच्चक्षुषाऽजिघृक्षत् ६५०
तच्छिश्नेनाजिघृक्षत् ६५०
तच्छ्रोत्रेणाजिघृक्षत् ६५०
तत्त्वचाऽजिघृक्षत् ६५०
तत्प्राणेनाजिघृक्षत् ५६०
तत्रापरा ऋग्वेदो यजुर्वेदः १३१
तत्स्त्रिया आत्मभूयम् ६६४
तदपानेनाजिघृक्षत् ६५०
तदभ्यद्रवत्तमभ्यवदत् ३०, ५२
तदभ्यद्रवत्तमभ्यवक्षत् ३०, ५२
तदुक्तमृषिणा गर्भे नु ६६६
तदेजति तन्नैजति ७
तदेतदिति मन्यन्ते ११५
तदेतत्सत्यमृषिरङ्गिराः १६१
तदेतत्सत्यं मन्त्रेषु १३५
तदेतत्सत्यं यथा सुदीप्तात् १४१
तदेनत्सृष्टम् ६५०
तद्ध तद्वनं नाम ३२, ५३
तद्धैषां विजज्ञौ तेभ्यः ३०, ५१
तद्वै ह वै तत्प्रजापति १६९
तन्नम इत्युपासीत् ६१५
तन्मनसाऽजिघृक्षत् ६५०
तपसा चीयते ब्रह्म १३३
तपःश्रद्धे ये ह्युपवसन्त्यरण्ये १३८
तमब्रवीत्प्रीयमाणः ६५
तमभ्यतपत्तस्य ६४५
तमशनायापिपासे ६४८
तस्माच्च देवा बहुधा १४४
तस्मादग्निः समिधः १४३
तस्मादृचः साम १४४
तस्मादिदन्द्रो नाम ६५५
तस्माद्वा इन्द्रोऽतितराम् ३१, ५२
तस्माद्वा एतस्मादन्न ४८९
तस्माद्वा एते देवा ३१, ५२
तस्मिंस्त्वयि किं वीर्यम् ३०, ५२
तस्मै तृणं निदधौ ३०, ५२
तस्मै स विद्वानुपसन्न १४०
तस्मै स होवाच इह १९५
तस्मै स होवाच एतत् १९०
तस्मै स होवाच द्वे १३१
तस्मै स होवाच प्रजा १६४
तस्मै स होवाच यथा १८१
तस्मै स होवाचाऽऽकाशः १७१
तस्मै स होवाचाति १७५
तस्मै तपो दमः कर्मेति ३४, ५३
तस्यैष आदेशो यदेतत् ३२, ५३
तं दुर्दर्शं गूढमनुप्रविष्टम् ८०
तं ह कुमारं सन्तं ५८
ता एता देवताः ६४६
तान्वरिष्ठः प्राण उवाच १७१
तान्ह स ऋषिरुवाच १६४
तान्होवाचैतावदेवाहम् २०५
ताभ्यो गामानयत्ता ६४७
ताभ्यः पुरुषमानयत्ता ६४७
तां योगमिति मन्यन्ते १२१
त्रिणाचिकेतस्त्रयमेतत् ६६
त्रिणाचिकेतस्त्रिभिरेत्य ६५
तिस्रो मात्रा मृत्युमत्यः १९३
तिस्रो रात्रीर्यदवात्सीः ६२
तेऽग्निमब्रुवञ्जातवेद ३०, ५२
तेजो यत्ते रूपम् १३
तेजो ह वा उदानः १७८
ते तमर्चयन्तस्त्वं हि २०५
तेषामसौ विरजो १७०

**द**

दिव्यो ह्यमूर्तः पुरुषः १४१
दूरमेते विपरीते विषूची ७४
देवपितृकार्याभ्यां न ४२१
देवानामसि वह्नितमः १७३
देवैरत्रापि विचिकित्सितं किल ६९
देवैरत्रापि विचिकित्सितं पुरा ६९
द्वा सुपर्णा सयुजा सखाया १५१

**ध**

धनुर्गृहीत्वौपनिषदम् १४७

**न**

न कञ्चन वसतौ ६१४
न चक्षुषा गृह्यते १५५
न जायते म्रियते वा ८३
न तत्र चक्षुर्गच्छति २१, ३९
न तत्र सूर्यो भाति ११५, १५०
न नरेणावरेण प्रोक्तः ७७
न प्राणेन नापानेन मर्त्यः ११०
न वित्तेन तर्पणीयो मनुष्य ७१
न सन्दृशे तिष्ठति रूपम् १२०
न साम्परायः प्रतिभाति ७५
नाचिकेतमुपाख्यानम् ९९
नान्तःप्रज्ञं न बहिष्प्रज्ञम् २३५
नायमात्मा प्रवचनेन ८७, १५७
नायमात्मा बलहीनेन लभ्यः १५८
नाविरतो दुश्चरितान्नाशान्तो ८७
नाहं मन्ये सुवेदेति २६, ४३
नित्योऽनित्यानाम् ११४
निलयनं चानिलयनं च ५२७

ई० १–१५, के० १७–५४, कठ० ५५–१२६, मु० १२७–१६१, प्र० १६३–२०५, मा० २०७–३६२
तै० ३६३–६२८, ऐ० ६२९–६७५

नैव वाचा न मनसा प्राप्तुम् १२२
नैषा तर्केण मतिरापनेया ७८
नो इतराणि ४२२

प

पञ्चपादं पितरम् १६८
परमेवाक्षरं प्रतिपद्यते स १८८
पराचः कामाननुयन्ति १०१
पराञ्चि खानि व्यतृणत् १००
परीक्ष्य लोकान् कर्मचितान् १३९
पायूपस्थेऽपानं चक्षुः श्रोत्रे १७६
पातोदका जग्धतृणा ५९
पुरमेकादशद्वारम् १०८
पुरुष एवेदं विश्वं कर्म १४५
पुरुषे ह वा अयम् ६६३
पूर्णमदः पूर्णमिदम् १
पूषन्नेकर्षे यम सूर्य १३
पृथिवी च पृथिवीमात्रा १८७
पृथिव्यन्तरिक्षं द्यौर्दिशो ४०८
प्रजापतिश्चरति गर्भे १७३
प्रणवो धनुः शरो ह्यात्मा १४७
प्रतिबोधविदितम् २६, ४४
प्र ते ब्रवीमि तदु मे ६४
प्लवा ह्येते अदृढा यज्ञरूपा १३७
प्राणस्येदं वशे सर्वम् १७४
प्राणाग्नय एवैतस्मिन्पुरे १८२
प्राणो ब्रह्मेति व्यजानात् ६०६
प्राणो ह्येष यः सर्वभूतैः १५३
प्राणं देवा अनु प्राणन्ति ४९४

ब

बहूनामेमि प्रथमः ६०
बृहच्च तद्दिव्यम् १५५
ब्रह्मविदाप्नोति परम् ४४०
ब्रह्म ह देवेभ्यो विजिग्ये २९, ४६
ब्रह्मा देवानां प्रथमः १२७
ब्रह्मैवेदममृतं पुरस्तात् १५०

भ

भद्रं कर्णेभिः १२७, १६३, २०७
भयादस्याग्निस्तपति ११८
भिद्यते हृदयग्रन्थिः १४९
भीषाऽस्माद्वातः पवते ५४८
भूर्भुवः सुवरिति वा एताः ३९१
भृगुर्वै वारुणिः ५९७

म

मनसैवेदमाप्तव्यम् १०६
मनो ब्रह्मेति व्यजानात् ६०६
मह इति ब्रह्म ३९७
मह इत्यादित्यः ३९६
महतः परमव्यक्तम् ९५
मासो वै प्रजापतिस्तस्य १६८
मृत्युप्रोक्तां नाचिकेतः १२५

य

य इदं मध्वदं वेद १०३
य इमं परमं गुह्यम् ९९
य एवं विद्वान् प्राणम् १७९
य एवं वेद ६१४
य एष सुप्तेषु जागर्ति १११
यच्चक्षुषा न पश्यति २४, ४२
यच्चित्तस्तेनैष प्राणम् १७८
यच्छेद्वाङ्मनसी प्राज्ञः ९७
यच्छ्रोत्रेण न शृणोति २४, ४२
यतश्चोदेति सूर्योऽस्तम् १०४
यतो वाचो निवर्तन्ते ५०२
यतो वाचो निवर्तन्ते ५७८
यत्तदद्रेश्यमग्राह्यम् १३२
यत्प्राणेन न प्राणिति २४, ४२
यत्र सुप्तो न कञ्चन कामम् २२४
यथाऽऽदर्शे तथाऽऽत्मनि ११८
यथा नद्यः स्यन्दमानाः १०९
यथा पुरस्ताद्भविता ६२
यथा सम्राडेवाधिकृतान् १७५
यथोर्णनाभिः सृजते १३३
यथोदकं दुर्गे वृष्टम् १०७
यथोदकं शुद्धे शुद्धम् १०७
यदर्चिमद्यदणुभ्योऽणु च १४६
यदा त्वमभिवर्षस्यथेमाः १७३
यदा पञ्चावतिष्ठन्ते १२०
यदा पश्यः पश्यते रुक्मवर्णम् १५३
यदा लेलायते ह्यर्चिः १३५
यदा सर्वे प्रभिद्यन्ते १२४
यदा सर्वे प्रमुच्यन्ते १२३
यदा ह्येवैष एतस्मिन्नदृश्ये ५३८
यदिदं किञ्च जगत्सर्वम् ११७
यदि मन्यसे सुवेदेति २४, ४२
यदुच्छ्वासनिःश्वासौ १८२
यदेतद्धृदयं मनः ६७१
यदेवेह तदमुत्र यदमुत्र १०४
यद्वाचाऽनभ्युदितम् २२, ४४
यद्वै तत्सुकृतम् ५३७
यन्मनसा न मनुते २३, ४२
यश इति पशुषु ६१५
यशो जनेऽसानि स्वाहा ३९०
यश्छन्दसामृषभः ३८८
यस्तु विज्ञानवान्भवति ९२
यस्तु विज्ञानवान्भवति ९२
यस्तु विज्ञानवान्भवति ९२
यस्तु सर्वाणि भूतानि ७
यस्त्वविज्ञानवान्भवति ९२
यस्मिन्निदं विचिकित्सन्ति ७२
यस्मिन् द्यौः पृथिवी १४७
यस्मिन् सर्वाणि भूनानि ८
यस्य ब्रह्म च क्षत्रं च ८८
यस्याग्निहोत्रम् १३६
यस्यामतं तस्य मतम् २६, ४३
या ते तनूर्वाचि प्रतिष्ठिता १७४
या प्राणेन सम्भवति १०४
ये तत्र ब्राह्मणाः संमर्शिनः ४२३
येन रूपं रसं गन्धम् १०२
ये ये कामा दुर्लभाः ७०
येयं प्रेते विचिकित्सा ६७
योनिमन्ये प्रपद्यन्ते १११
यो वा एतामेवं ३४, ५४
यं यं लोकं मनसा १५६
यः पुनरेतं त्रिमात्रेण १९२
यः पूर्वं तपसो जातम् १०३

ई० १-१५, के० १७-५४, कठ० ५५-१२६, मु० १२७-१६१, प्र० १६३-२०५, मा० २०७-३६२, तै० ३६३-६२८, ऐ० ६२९-६७५


यः सर्वज्ञः सर्वविद् १४८
यः सर्वज्ञः सर्वविद्यस्य १३४
यः सेतुरीजानानाम् ९०

**ल**

लोकादिमग्निं तमुवाच तस्मै ६४

**व**

वाङ्मे मनसि ६४०, ६७५
वायुरनिलममृतमथेदम् १४
वायुर्यथैको भुवनं प्रविष्टः ११३
वायुः सन्धानम् ३८४
विज्ञानसारथिर्यस्तु ९३
विज्ञानात्मा सह देवैश्च १८९
विज्ञानं ब्रह्मेति व्यजानात् ६०६
विज्ञानं यज्ञं तनुते ५०६
विद्यां चाविद्यां च ११
विश्वरूपं हरिणं जातवेदसम् १६६
वेदमनूच्याचार्यः ४२०
वेदान्तविज्ञानसुनिश्चितार्थाः १५८
वैश्वानरः प्रविशत्यतिथिः ६१
व्रात्यस्त्वं प्राणैकर्षिरत्ता १७४

**श**

शतायुषः पुत्रपौत्रान् ६९
शतं चैका च हृदयस्य १२४
शान्तसङ्कल्पः सुमना ६२
शीक्षां व्याख्यास्यामः ३८१
शौनको ह वै महाशालः १३०
श्रवणायापि बहुभिर्यो न ७६
श्रेयश्च प्रेयश्च मनुष्यमेतः ७४
श्रोत्रस्य श्रोत्रं मनसः २०, ३७
श्रोत्रियस्य चाकामहतस्य ५५१
श्रोत्रियस्य चाकामहतस्य। तेये ५५२
श्वो भावा मर्त्यस्य ७१

शं नो मित्रः शं ३६३, ४२७, ४३९

**स**

स इमाँल्लोकान् ६४३
स ईक्षत कथम् ६५१
स ईक्षते मे नु लोकाः ६४४
स ईक्षते मे लोकाः ६४९
स ईक्षांचक्रे १९९
स एको मनुष्यगन्धर्वं ५५०
स एतमेव सीमानम् ६५२
स एतेन प्रज्ञेन ६७१
स एवं विद्वान् ६६७
स एष वैश्वानरः १६६
स जातो भूतानि ६५४
स तस्मिन्नेवाऽऽकाशे ३१, ५२
सत्यमेव जयते नानृतम् १५४
सत्येन लभ्यस्तपसा १५४
स त्वमग्निं स्वर्ग्यमध्येषि ६३
स त्वं प्रियान्प्रियरूपांश्च ७४
स पर्यगाच्छुक्रमकायमव्रणम् ८
सप्तप्राणाः प्रभवन्ति १४५
स प्राणमसृजत प्राणात् २०३
समाने वृक्षे पुरुषः १५२
सम्भूतिं च विनाशं च १२
स य एवंवित् ६१८
स य एषोऽन्तर्हृदयः ४०२
स यथा सोम्य वयांसि १८७
स यथेमा नद्यः स्यन्दमानाः २०४
स यदा तेजसाऽभिभूतो १८६
स यद्येकमात्रमभिध्यायीत १९१
स यश्चायं पुरुषे ५५३
स यो ह वै तत्परमं ब्रह्म १६०
सर्वे वेदा यत्पदमामनन्ति ८२
सर्वं ह्येतद्ब्रह्मायमात्मा २१७
स वेदैतत्परमं ब्रह्म धाम १५६
सह नाववतु १७, ३५, ५५, १२६, ४३९, ५९७
सह नौ यशः ३८३
स होवाच पितरं ततः ५९
संप्रात्यैनमृषयः १५८
संवत्सरो वै प्रजापतिः १६६
सा ब्रह्मेति होवाच ३१, ५२
सा भावयित्री भावयितव्या ६६४
सुकेशा च भारद्वाजः १६३
सुवरादित्ये। मह इति ४०३
सुषुप्तस्थानः प्राज्ञः २४७
सूर्यो यथा सर्वलोकस्य ११३
सोऽकामयत। बहु स्याम् ५२१
सोऽपोऽभ्यतपत् ६४९
सोऽभिमानादूर्ध्वमुत्क्रमत १७२
सोऽयमात्माऽध्यक्षरम् २४६
सोऽस्यायमात्मा ६६५
स्वप्नस्थानस्तैजस उकारः २४७
स्वप्नस्थानोऽन्तः प्रज्ञः २२३
स्वप्नान्तं जागरितान्तम् १०२
स्वर्गे लोके न भयं किञ्चन ६३

**ह**

हन्त त इदं प्रवक्ष्यामि १११
हन्ता चेन्मन्यते हन्तुं ८४
हिरण्मयेन पात्रेण १३
हिरण्मये परे कोशे १५०
हृदि ह्येष आत्मा १७६
हंसः शुचिषद्वसुः १०९

आगमप्रकरणम् २२६-२५२, वैतथ्यप्र० २५३-२७९, अद्वैतप्र० २८०-३१६, अलातप्र० ३१७-३६२

# माण्डूक्यकारिकासूची


अ

अकल्पकमजं ज्ञानम् ३०७
अकारो नयते विश्वम् २४९
अजमनिद्रमस्वप्नमनाम ३०९
अजमनिद्रमस्वप्नं प्रभातं ३१५
अजातस्यैव धर्मस्य ३१९
अजातस्यैव भावस्य २९८
अजातेस्त्रसतां तेषाम् ३३८
अजातं जायते यस्मात् ३३२
अजाद्वै जायते यस्य ३२२
अजेष्वजमसंक्रान्तम् ३५८
अजे साम्ये तु ये केचिद् ३५७
अजः कल्पितसंवृत्या ३४९
अणुमात्रेऽपि वैधर्म्ये ३५८
अतो वक्ष्याम्यकार्पण्यम् २८१
अदीर्घत्वाच्च कालस्य २५३
अद्वयं च द्वयाभासं चित्तम् ३४४
अद्वयं च द्वयाभासं मनः ३०६
अद्वैतं परमार्थो हि २९७
अनादिमायया सुप्तः २४३
अनादेरन्तवत्त्वं च ३३२
अनिमित्तस्य चित्तस्य ३५०
अनिश्चिता यथा रज्जुः २६३
अन्तःस्थानात्तु भेदानाम् २५५
अन्यथा गृह्णतः स्वप्नः २४३
अपूर्वं स्थानिधर्मो हि २५७
अभावश्च रथादीनाम् २५४
अभूताभिनिवेशाद्धि ३५१
अभूताभिनिवेशोऽस्ति ३४९
अमात्रोऽनन्तमात्रश्च २५२
अलब्धावरणाः सर्वे ३५९
अलाते स्पन्दमाने वै ३४०
अवस्त्वनुपलम्भं च ३५४
अव्यक्ता एव येऽन्तस्तु २६१
अशक्तिरपरिज्ञानम् ३२४
असज्जागरिते दृष्टवा ३३५
असतो मायया जन्म ३०५
अस्ति नास्त्यस्ति नास्तीति ३५२
अस्पन्दमानमलातम् ३३९
अस्पर्शयोगो वै नाम दुर्दर्शः ३११
अस्पर्शयोगो वै नाम सर्व ३१८

आ

आत्मसत्यानुबोधेन ३०७
आत्मा ह्याकाशवज्जीवैः २८१
आदावन्ते च यन्नास्ति २५६
,, ,, ,, ३३३
आदिबुद्धाः प्रकृत्यैव ३५६
आदिशान्ता ह्यनुत्पन्नाः ३५७
आश्रमास्त्रिविधा हीन २९५

इ

इच्छामात्रं प्रभोः सृष्टिः २३४

उ

उत्पादस्याप्रसिद्धत्वात् ३३५
उत्सेक उदधेर्यद्वत् ३१३
उपलम्भात्समाचारादस्ति ३३७
उपलम्भात्समाचारान्माया ३३८
उपायेन निगृह्णीयात् ३१३
उपासनाश्रितो धर्मः २८०
उभयोरपि वैतथ्यम् २५९
उभे ह्यन्योन्यदृश्ये ते ३४५

ऋ

ऋजुवक्रादिकाभासम् ३३९

ए

एतैरेषोऽपृथग्भावैः २७०
एवं न चित्तजा धर्माः ३४२
एवं न जायते चित्तम् ३३९

ओ

ओङ्कारं पादशो विद्यात् २५१

क

कल्पयत्यात्मनाऽऽत्मानम् २५९
कारणाद्यद्यनन्यत्वम् ३२१
कारणं यस्य वै कार्यम् ३२१
कार्यकारणबद्धौ तौ २४१
काल इति कालविदः २६७
कोट्यश्चतस्र एतास्तु ३५३
क्रमते न हि बुद्धस्य ३५९

ख

ख्याप्यमानामजातिं तैः ३१९

ग

ग्रहणाज्जागरितवत् ३३५
ग्रहो न तत्र नोत्सर्गः ३११

घ

घटादिषु प्रलीनेषु २८३

च

चरञ्जागरिते जाग्रद् ३४५
चित्तकाला हि येऽन्तस्तु २६०
चित्तं न संस्पृशत्यर्थम् ३३०
चित्तस्पन्दितमेवेदम् ३४७

ज

जरामरणनिर्मुक्ताः ३२०
जाग्रच्चित्तेक्षणीयास्ते ३४५
जाग्रद्वृत्तावपि त्वन्तः २५८
जात्याभासं चलाभासम् ३३८
जीवं कल्पयते पूर्वम् २६२
जीवात्मनोरनन्यत्वम् २९१
जीवात्मनोः पृथक्त्वं यत् २९२
ज्ञाने च त्रिविधे ज्ञेये ३५५
ज्ञानेनाऽऽकाशकल्पेन ३१७

त

तत्त्वमाध्यात्मिकं दृष्ट्वा २७८
तस्मादेवं विदित्वैनम् २७७
तस्मान्न जायते चित्तम् ३३१
तैजसस्योत्वविज्ञाने २४८
त्रिषु धामसु यत्तुल्यम् २४८
त्रिषु धामसु यद्भोज्यम् २३१

द

दक्षिणाक्षिमुखे विश्वः २२७
दुःखं सर्वमनुस्मृत्य ३१३

आगमप्रकरणम् २२६–२५२, वैतथ्यप्र० २५३–२७९, अद्वैतप्र० २८०–३१६, अलातप्र० ३१७–३६२


दुर्दर्शमतिगम्भीरम् ३६०
द्रव्यं द्रव्यस्य हेतुः स्यात् ३४१
द्वयोर्द्वयोर्मधुज्ञाने २९०
द्वैतस्याग्रहणं तुल्यम् २४२

**ध**

धर्मा य इति जायन्ते ३४३

**न**

न कश्चिज्जायते जीवः ३१५
" " " ३४७
न निरोधो न चोत्पत्तिः २७१
न निर्गता अलातात्ते ३४०
न निर्गतास्ते विज्ञानात् ३४०
न भवत्यमृतं मर्त्यम् २१९
" " " ३१९
न युक्तं दर्शनं गत्वा ३३४
नाऽऽकाशस्य घटाकाशः २८८
नाजेषु सर्वधर्मेषु ३४४
नाऽऽत्मभावेन नानेदम् २७६
नाऽऽत्मानं न परांश्चैव २४१
नास्त्यसद्धेतुकमसत् ३३६
नाऽऽस्वादयेत्सुखं तत्र ३१४
निगृहीतस्य मनसो ३०८
निमित्तं न सदाचित्तम् ३३०
निवृत्तस्याप्रवृत्तस्य ३५१
निवृत्तेः सर्वदुःखानाम् २४१
निश्चितायां यथा रज्ज्वाम् २६३
निस्तुतिर्निर्नमस्कारः २७८
नेह नानेति चाऽऽम्नायात् ३०१

**प**

पञ्चविंशक इत्येके २६८
पादा इति पादविदः २६५
पूर्वापरापरिज्ञानम् ३२५
प्रकृत्याऽऽकाशवज्ज्ञेयाः ३५६
प्रज्ञप्तेः सनिमित्तत्वमन्यथा ३२८
प्रज्ञप्तेः सनिमित्तत्वमिष्यते ३२९
प्रणवो ह्यपरं ब्रह्म २५१
प्रणवं हीश्वरं विद्यात् २५२
प्रपञ्चो यदि विद्येत २४४
प्रभवः सर्वभावानाम् २३२
प्राण इति प्राणविदः २६४
प्राणादिभिरनन्तैश्च २६४
प्राप्य सर्वज्ञतां कृत्स्नाम् ३५३

**फ**

फलादुत्पद्यमानः सन् ३२३

**ब**

बहिष्प्रज्ञो विभुर्विश्वो २२६
बीजाङ्कुराख्यो दृष्टान्तः ३०४
बुद्ध्वाऽनिमित्ततां सत्याम् ३५०

**भ**

भावैरसद्भिरेवायम् २७४
भूततोऽभूततो वाऽपि २९९
भूतं न जायते किञ्चित् ३१९
भूतस्य जातिमिच्छन्ति ३१९
भोगार्थं सृष्टिरित्यन्ये २३४

**म**

मकारभावे प्राज्ञस्य २४८
मन इति मनोविदः २६५
मनसो निग्रहायात्तम् ३१२
मनोदृश्यमिदं द्वैतम् ३०६
मरणे सम्भवे चैव २८९
मायया भिद्यते ह्येतत् २९८
मित्राद्यैः सह संमन्त्र्य ३३४
मृल्लोहविस्फुलिङ्गाद्यैः २९४

**य**

यथा निर्मितको जीवः ३४७
यथा भवति बालानाम् २८८
यथा मायामयाद्बीजात् ३४४
यथा मायामयो जीवः ३४७
यथा स्वप्नमयो जीवः ३४७
यथा स्वप्ने द्वयाभासं चित्तम् ३४४
यथा स्वप्ने द्वयाभासं स्पन्दते ३०५
यथैकस्मिन्घटाकाशे २८३
यदा न लभते हेतून् ३४९
यदा न लीयते चित्तम् ३१५
यदि हेतोः फलात् सिद्धिः ३२४
यं भावं दर्शयेद्यस्य २६९
यावद्धेतुफलावेशस्तावत् ३४२
यावद्धेतुफलावेशः संसारः ३४३
युञ्जीत प्रणवे चेतः २५१
योऽस्ति कल्पितसंवृत्या ३४८

**र**

रसादयो हि ये कोशाः २८९
रूपकार्यसमाख्याश्च २८७

**ल**

लये सम्बोधयेच्चित्तम् ३१४
लीयते हि सुषुप्ते तत् ३०९
लोकाँल्लोकविदः प्राहुः २६८

**व**

विकरोत्यपरान्भावान् २६०
विकल्पो विनिवर्तेत २४५
विज्ञाने स्पन्दमाने वै ३४०
विपर्यासाद्यथा जाग्रद् ३३७
विप्राणां विनयो ह्येषः ३५३
विभूतिं प्रसवं त्वन्ये २३३
विश्वस्यात्वविवक्षायाम् २४८
विश्वो हि स्थूलभुङ्नित्यम् २३१
वीतरागभयक्रोधैः २७७
वेदा इति वेदविदः २६६
वैतथ्यं सर्वभावानाम् २५३
वैशारद्यं तु वै नास्ति ३५७

**स**

स एष नेति नेतीति ३०३
सङ्घाताः स्वप्नवत्सर्वे २८९
सतो हि मायया जन्म ३०४
सप्रयोजनता तेषाम् २५६
" " " ३३३
सम्भवे हेतु फलयोः ३२३
सम्भूतेरपवादाच्च ३०१
सर्वस्य प्रणवो ह्यादिः २५१
सर्वाभिलाषविगतः ३१०
सर्वे धर्मा मृषा स्वप्ने ३३३
सवस्तु सोपलम्भं च ३५४
संवृत्या जायते सर्वम् ३४३
सांसिद्धिकी स्वाभाविकी ३२०
सुखमाव्रियते नित्यम् ३५२
सूक्ष्म इति सूक्ष्मविदः २६६
सृष्टिरिति सृष्टिविदः २६९

स्थूलं तर्पयते विश्वम् २३१
स्वतो वा परतो वाऽपि ३२६
स्वप्नजागरितस्थाने २५५
स्वप्नदृक्चित्तदृश्यास्ते ३४५
स्वप्नदृक्प्रचरन्स्वप्ने ३४४
स्वप्ननिद्रायुतावाद्यौ २४२
स्वप्नमाये यथा दृष्टे २७०
स्वप्नवृत्तावपि त्वन्तः २५८
स्वप्ने चावस्तुकः कायः ३३४
स्वभावेनामृतो यस्य धर्मः २९९
स्वभावेनामृतो यस्य भावः ३२०
स्वसिद्धान्तव्यवस्थासु २९६
स्वस्थं शान्तं सनिर्वाणम् ३१५

ह

हेतुर्न जायतेऽनादेः ३२७
हेतोरादिः फलं येपाम् ३२२
हेतोरादिः फलं येषाम् ३२३
हेयज्ञेयाप्यवाक्यानि ३५५

## तैत्तिरीयवार्तिकश्लोकसूचिका


अ

अकामहत इत्येवम् २।८।४५
अकामहतधीगम्यो २।८।४९
अकारादिर्भवेद्वर्णः १।२।५२
अकिञ्चिज्ज्ञस्तदा बालो २।१।२०२
अक्षितोऽक्षीणरूपत्वात् १।१०।१५८
अगृहीत्वैव सम्बन्धम् २।९।१०
अग्निपाकिकरुक्माढ्या २।१।२११
अग्निहोत्राद्यनुष्ठानम् १।११।१६८
अग्रजं ब्रह्म विज्ञानम् २।५।३
अज्ञातं ज्ञायते यत्र २।८।४६
अज्ञातमोक्षरूपोऽपि २।१।२९
अज्ञातानन्दतत्त्वानाम् २।७।१६
अज्ञानमन्यथाज्ञानम् २।९।६६
अज्ञानादित्रयं तावज् २।९।६९
अज्ञानादित्रयं तावत् २।९।६७
अणिमादिगुणैश्वर्यो २।५।७
अतः परीक्ष्यते श्रुत्या २।७।२८
अतः साक्षेपमाहेयम् २।७।१८
अतस्तत्प्रतिषेधार्थम् २।१ ६५
अतिशेते यतः सर्वान् २।८।५८
अतो लक्षणवाचित्वात् २।१।७९
अतोऽविद्यानिरोधे स्यात् २।१।१२९
अतोऽविद्यानिषेधेन सदा २।१।१०९
अतोऽविद्यानिषेधेन सर्वदा २ ७.२७
अत्ययो वाऽथ सम्प्राप्तिः २।५।१६
अथ कारणरूपेण २।६।३४
अथ दैवीः समाज्ञास्तु ३।१०।१२
अथर्चोऽविषयत्वेऽपि २।३।१८
अथर्वाङ्गिरसाभ्यां ये २।३।२४
अथवा एष एवोभे २।९।१५०
अथात इत्यनुप्रश्ना २।६।१२
अथाधुना यथाऽविद्वान् २।७।४४
अथानन्तरमस्यैव २।६।१३
अथाभिधानुरोत्री स्यात् २।९.।११९
अथेदानीं परीक्षाया २।८।४२

अदत्त्वान्नं तु पात्रेभ्यो ३।१०।४४
अदनाहं तथाऽन्नं च २।१।१६७
अदृश्यं पश्य इत्येवम् २।९।८५
अदृश्येऽनात्म्य इत्येवम् २।५।१९
अदृष्टं तदकर्मत्वात् २।९।९०
अद्यतेऽन्नं प्रधानत्वात् २।२।८
अधिलोकमधिज्योतिः १।३।६०
अधीहि भगवो ब्रह्म ३।१।४
अध्यात्मदेवताः सर्वाः १।१।४०
अध्यात्ममधिदैवं च २।३।३
अध्याप्य निखिलं वेदं १।११।१६६
अध्येति सर्वमध्येयम् २।८।१७
अनन्तं देशतो व्योम २।१।१३५
अनन्यश्चायमाकाशो ३।१०।२२
अनन्यश्चेद्भवेद्विद्वान् २।८।७६
अनात्मेतीह यद्भाति २।१।१८१
अनादाविह संसारे २।१।२३६
अनादिमध्यनिधना २।१।१५२
अनाप्तदेशवन्मृद्वत् २।६।३१
अनारब्धफलानीह १।१।१२
अनारब्धेष्टकार्याणाम् १।१।१५
अनित्यफलदायित्वम् १।१।२५
अनिर्देश्यस्य वा भूम्नो ३।१।९
अनिवर्त्यस्वमात्मानम् २।८।९५
अनुज्ञानुकृतिस्तद्वत् १।८।१३९
अनुभूताः पुराऽसह्या २।१।१९४
अनूक्तेरपि मानत्वम् २।९।९९
अनूद्य स य इत्येवम् २।८।५३
अनृतादिनिषेधेन २।१।६६
अनेकजन्मसंसिद्धः २।८।६५
अनेकात्मविशेष्यस्थ २।१।५४
अनेकानर्थनीडेऽस्मिन् २।१।२३४
अनेन त्वाद्यसूत्रेण २।१।१३१
अन्तरा नाम रूपे ये २।८।१००
अन्तरिक्षं च वायुश्च १।५।१०३
अन्तरेण नियोगं च २।९।४४

१. शीक्षाध्यायः ३६३-४३८, २. ब्रह्मवल्ली ४३९-५९६, ३. भृगुवल्ली ५९७-६२८


अन्नं प्राणमितीत्यादि ३।१।७
अन्नं ब्रह्मेति विज्ञाय ३।२।५
अन्नं विराडिति ज्ञेयम् २।१।२४१
अन्नं सुब्रह्म कुर्वीत ३।९।१
अन्नमम्भस्तथा तेजो २।१।१८५
अन्नमेव गुरुर्न्याय्यम् ३।७।१
अन्नादयः पदार्था वा ३।१।११
अन्नादिरसलाभेन २।७।१२
अन्नादेर्ब्रह्मणश्चैवम् ३।२।६
अन्नादेव प्रजाः सर्वाः २।२।१
अन्नाद्युपासकानां वा ३।६।९
अन्यद्दृष्टाविवातोऽत्र २।१।४१
अन्यदेव हि तद्वेद्याद् २।७।६३
अन्यस्य भयहेतुत्वम् २।८।९१
अन्यहेतुः स्वतो वा स्यात् २।८।९४
अन्यापेक्षं हि यद्रूपं २।८।८८
अन्योन्यस्थितिहेतुत्वात् ३।७।२
अन्योऽपि भृगुवत्तप्त्वा ३।६।७
अन्योऽसावीश्वरो मत्तः २।७।५१
अन्वक्षं भिन्नरूपा धीः २।९।१०२
अन्वयव्यतिरेकादि ३।१।१९
अन्वयव्यतिरेकाभ्यां कोशैः २।५।२३
अन्वयव्यतिरेकाभ्यां जाग्रत् २।९।६२
अन्वयव्यतिरेकाभ्यामेव ३।६।१
अन्वयव्यतिरेकोक्तिः ३।१।८
अपरे पण्डितम्मन्याः २।५।११
अपविद्धद्वये तत्त्वे १।१।७
अपविद्धैषणा यस्मात् १।४।७५
अपविद्धैषणास्तद्वत् २।७।१३
अपास्ताशेषदोषं यत् २।१।११
अपि चाऽऽनन्दरूपस्य २।५।१२
अपि चान्नस्य माहात्म्यम् ३।१०।५
अपि मानान्तरप्राप्तम् २।९।२२
अपि वालाग्रमात्रेण २।७।५९
अपि संक्रमणादस्य २।५।१५
अप्यविद्वानमुं लोकम् २।६।१४
अप्रमाणमिति ज्ञानम् २।९।१०७
अप्रविष्टस्वभावस्य २।६।५०
अप्राप्तप्रापणं योगः ३।१०।८
अब्रह्मत्वनिवृत्यर्थम् २।६।४१
अभिधाननिवृत्तिर्हि २।३।२६
अभिधाश्रुतितः सिद्धो २।९।३०
अभिधित्सुरथेदानीम् ३।१।२
अभिधेयं न यद्वस्तु २।९।२१
अमन्वानस्य तद्ब्रह्म २।७।६०
अमृतत्वैकहेतोः स्याम् १।४।७२
अमृतेभ्योऽसौ वेदेभ्यः १।४।७०
अमृतोऽमरणधर्मा स्याद् १।६।११५
अयं लोकोऽग्निर्ऋग्वेदः १।५।१०२
अयः पाशेन कालेन २।१।२१९
अरं छिद्रं भिदाऽन्यत्वम् २।७।५०
अर्थज्ञानप्रधानत्वात् १।२।५०
अलातस्यैकरूपस्य २।६।२१
अलौकिकत्वाद्बोध्यस्य २।९।१५
अवशिष्टं स्वतो बुद्धम् २।९।१४
अविद्ययाऽतदर्होऽपि २।१।२५३
अविद्यया तदोद्धृत्य २।७।४९
अविद्याघातिनः शब्दात् २।९।१३
अविद्यामात्रहेतौ तु २।८।९६
अविद्याविषयस्तस्माद् ३।१०।२५
अविद्यासंश्रयादात्मा २।९।१४८
अविद्यासाक्ष्यपि प्रत्यक् २।७।२४
अविद्याहेतवः कामाः २।१।१२८
अविद्यैव यतो हेतुः २।८।५७
अविद्योत्थं द्वयाभासम् ३।१०।२६
अविद्योत्थानतो नैवम् २।८।८७
अविद्योद्भूततृष्णेन २।१।२२
अशेषानन्दवल्ल्यर्थ २।१।४६
असतः कारणं नास्ति २।१।१४९
असतश्चेदिदं कार्यम् २।६।१८
असत्समोऽसौ भवति २।६।१
असद्भ्यः खलु कोशेभ्यः २।६।४
असोराध्यात्मिकस्यैषा २।२।२१
अस्तित्वे हेतवः सम्यग् २।७।२१
अस्तीत्येवोपलब्धव्यः २।६।७
अस्थियन्त्रविनिष्पिष्टः २।१।२००
अस्थूलाशब्दतावादि २।९।८३
असमत्तो ब्रह्मणा ये स्युः १।१।१७५

